ॐ

श्रीमद्वाजसनेयिमाध्यन्दिन-

# शतपथ-ब्राह्मणम् ।

श्रीमत्त्रयीभाष्यकार-सायणाचार्यविरचित-
वेदार्थ-प्रकाशाख्यभाष्यसमेतम् ।

उपर्युक्तभाष्यानुपलब्धिस्थाने-
सर्वविद्यानिधानकवीन्द्राचार्यसरस्वती-
श्रीहरिस्वामिभाष्यसमेतं च ।
बहुभिर्विद्वद्भिः परिशोधितं च ।

तत्र

दशमैकादश-द्वादश-त्रयोदश-चतुर्दशाद्यप्रवर्ग्य-काण्डात्मकः द्वादश-काण्डीयषष्ठाध्यायान्तोऽशीतिपथ-संज्ञकस्तदुत्तरं परिशेष-संज्ञकश्च, उत्तरक्रतुसौत्रामण्यश्वमेधादिनिरूपकः

## चतुर्थो भागः ४.

मुद्रक और प्रकाशक-

गंगाविष्णु श्रीकृष्णदास,

मालिक-"लक्ष्मीवेङ्कटेश्वर" स्टीम्-प्रेस,

कल्याण-बम्बई.

संवत १९९७, शके १८६२. सन् १९४०.



SHRIMAD-VAJSANEYI-MADHYANDIN-

# SHATPATH - BRÂHMANAM

## WITH VEDARTHAPRAKASH COMMENTARY

*By*

SHRIMAT-TRAYIBHASHYAKAR SAYANACHARYA,

*and*

SARVAVIDYANIDHANA KAVINDRACHARYA SARASWATI

SHRI HARI SWAMI



Edited by several learned persons



## Part IV

Chapters 10, 11, 12, 13 and 14, dealing Ûttarkratu Sautramani Ashvamedha Yagyas etc. etc.



*Printed and Published by*

GANGAVISHNU SHRIKRISHNADASS,

PROPRIETORS,

LAXMI VENKATESHWAR STEAM PRESS,

KALYAN-BOMBAY.

SAMVAT 1997, SHAKE 1862, SAN 1940.

श्रीशः शरणम् ।

# अथाग्निरहस्यनामके दशमे काण्डे

## विषयानुक्रमणिका प्रारभ्यते ।




| ऋा० | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| | **तत्र प्रथमोऽध्यायः ।** | |
| १ | अग्निचयनमहाव्रतसामबृहदुक्थानां नियमेन सहप्रयोज्यत्वात्तानि त्रीण्येवं सहभावनीयानीति वक्तुं प्रथममग्निबृहदुक्थयोरनुवदनं, संवत्सरात्मकाग्नेः पूर्वं चयनं बृहदुक्थस्यान्ते शंसनमिति यदुक्तं तस्य प्रशंसनं, सोपपत्तिकं प्रजापतेः संवत्सररूपत्वाभिधानं, चीयमानाग्नेः संवत्सरप्रजापत्युभयरूपत्वस्याभिधानं, तत्र यावत्य इष्टका यजुर्मन्त्रैरुपहितास्तावत्य एव प्रजापत्यवयवात्मना प्रतिसंहिता इत्यपि प्रतिपादनं, एवं चित्यमग्निं प्रशस्य स्तोत्रशस्त्रयोः प्रशंसनं, तत्र पूर्वभाविग्रहग्रहणं प्रशंसितुं ग्रहे सिच्यमानचमसस्य प्रशंसनं, अध्वर्युकर्तृकं रसग्रहणमभिधाय तस्य महाव्रतमहदुक्थत्वयोरुपपादनं, पूर्वं प्रजापते रससंयुक्तता स्यादन्यथा रसाभावेन शरीरमदृढं भवेदित्याशंक्य तस्याः शंकाया रसस्थापनेन व्युदसनं, अग्नौ रसस्याप्ययनस्य प्रशंसनं, चित्याग्नेर्मिथुनरूपेण प्रशंसनं, उक्ताया मिथुनत्वसम्पत्तेः स्त्रीपुंसयोः शरीरे प्रदर्शनं, एवं मिथुनरूपेणाप्ययनप्रकारं प्रदर्श्य पुनश्चित्याग्निं मिथुनरूपेण स्तोतुं प्रकारान्तरेण प्रतिज्ञापूर्वकं मिथुनत्वस्य प्रतिपादनं, मिथुनपरम्पराऽऽवेदितुः फलनिरूपणं, उक्तेऽर्थे मन्त्रसंवादप्रदर्शनं, यदर्थमन्त्ररूपत्वमुक्तं तस्य प्रदर्शनं, " अन्नस्यामृतभागो वायुमप्येति " इति यदुक्तं तस्य प्रकृते योजनं, चेत्यादि. | १–७ |
| २ | पूर्वं महाव्रतयज्ञे सहप्रयुक्तानि अग्निचयनमहाव्रतसामबृहदुक्थशस्त्राणि त्रीण्यपि पक्ष्याकाराण्यधिदैवं पृथिव्यन्तरिक्षद्युलोकात्मकानि—अध्यात्मं मनः—प्राणवाग्रूपाणि चेत्यादिनिरूपणं ज्योतिष्टोमे एवैतेषां त्रयाणां सम्पादनप्रकारोपवर्णनं, तत्रोक्तानां भूम्यादिलोकानामग्न्यादेश्चाभेदविवक्षया तदात्मकताप्रतिपादनं, एतेषामेव त्रयाणामध्यात्मत्वं प्रदर्श्य प्रकारान्तरेण प्रशंसनं, पुनः प्रकारान्तरेणैतेषां त्रयाणां प्रशंसनं, प्रथमसंस्थारूपज्योतिष्टोमाग्निष्टोमं महाव्रतयज्ञात्मना स्तोतुं तत्रैवाग्निचयनादित्रयस्योपात्तेर्ब्रह्मवादिप्रश्नोत्तराभ्यां प्रदर्शनं चेत्यादि. | ७–११ |
| ३ | प्रजापतेः प्राणेभ्यः सृष्टिनिर्माणकरणप्रतिपादनं, प्रजाः सृष्टवतः प्रजापतेः शरीरस्य मर्त्यामृतत्वं प्रतिपाद्य तत्र मर्त्यशरीरद्वारा मृत्योर्भयेन मृज्जलरूपेण भूमौ प्रवेशननिरूपणं, भूप्रवेशस्यैव मृत्युदेवप्रश्नप्रतिवचनाभ्यां निरूपणं, अऽग्निचयने पञ्चेष्टकाचितयः पञ्चपुरीषचितयश्च ताः प्रजापतेर्मर्त्यामृतशरीराणीति प्रतिपादनं, उभय्यः पञ्चापि तन्वश्चित्याग्नेरेवेति वक्तुं प्रजापतेस्तदात्मकत्वप्रतिपादनं, | |

ब्रा० विषयाः पृष्ठाङ्काः

मर्त्यशरीराणाममृतत्वकरणप्रदर्शनं, अमृतशरीरद्वयेनैकस्य मर्त्यशरीरस्यामृतीकरणस्य चित्याग्नौ प्रदर्शनं, यदि द्वाभ्यामेकस्यामृतीकरणं चेत्पञ्चम्याः पुरीषचितेरुपरि चित्यन्तराभावात्तस्या अमृतत्वं न स्यादित्याशंक्य सर्वासामुपरि विकर्णीस्वयमातृण्णे इष्टके उपधाय हिरण्यशकलैः सम्प्रोक्ष्य तत्राहवनीयाग्नेराधानमित्येवं रूपां सप्तमीं चितिं संपाद्य ततः पञ्चमीसप्तमीभ्यामिष्टकाचितिभ्यां तन्मध्यस्थितायाः पुरीषचितेरमृतीकरणं सम्पद्यत इति समाधानकथनं, यजमानस्यापि स्वस्यामृतीभवनरूपं फलं सम्पद्यत इति प्रतिपादनं,, चित्याग्नेर्न्यूनातिरेकपरिहाराय मन्त्रेणोपस्थानं देवाः कृतवन्त इत्ययमर्थः श्रुत्या स्वयमेव देवकर्तृकाज्ञानपुरःसरं निरूप्यत इत्यभिधानं, मन्त्रगताग्नीन्द्रविश्वदेवपदैः प्रतिपाद्याभिः सवनदेवताभिः सवनत्रयव्यापिचित्याग्नेः संस्कृतत्वस्याभिधानं, अनया ऋचोपस्थाने पूर्वोक्तासर्वकरणादि दोषपरिहारो भवतीति कथनं, ऋग्गतस्यानुष्टुप्छन्दसो वाग्रूपेण प्रशंसनं, उपस्थानकालमभिधाय तत्साधनभूतस्य मन्त्रस्य सार्थवादं साभिप्रायं व्याख्यापकब्राह्मणातिदेशसहितं प्रदर्शनं चेत्यादि. १२–१६

४ अनन्तरातीतब्राह्मणे यत्प्रजापतेर्मर्त्यामृतभेदेन द्वैविध्यमुक्तं तद्द्वयोर्मर्त्यामृतयोरर्थं वक्तुं तत्स्मारणं, षण्णामिष्टकाचितीनां प्रजापतेरमृतशरीरगतप्राणापानव्यानोदानसमानवाग्रूपत्वस्य षण्णां पुरीषचितीनां प्रजापतेर्मर्त्यशरीरगतमज्जास्थिस्नायुवसामांसमेदोऽसृक्त्वग्रूपत्वस्य च प्रतिपादनं, चितिद्वयगतां संख्यामनूद्य सम्भूय तस्याः संवत्सररूपाग्न्यात्मना प्रशंसनं, विकर्ण्यादीष्टकाहिरण्यशकलाहवनीयनिधानस्य हिरण्मयरूपत्वेन प्रशंसनं, हिरण्यशकलाहवनीयनिधानं प्रजापतेर्हिरण्मयरूपमित्युक्तं तत्र गुरुशिष्ययोः संवादेन विवादं प्रदर्श्य तत्र विवादे आचार्यः शाण्डिल्यो रूपमित्येव सोपपत्तिकं निश्चितवानित्याद्यभिधानं, शाण्डिल्येनोक्तेऽर्थे श्रुतेरनुमोदनप्रदर्शनं, चित्याग्निमभिलक्ष्याहवनीयाग्नेः प्राङ्मुखत्वेन प्रणयनस्य प्रशंसनं, प्रणीतेऽग्नौ हूयमानानां समिधां देवानामन्नरूपत्वेन प्रशंसनं, अग्निचितः पक्षिभक्षणवर्जननियमं सहेतुकमनूद्य तस्य सहेतुकमेव दूषणकथनं, अग्निचयनसाध्यस्य फलस्य वेदनादिप्रश्नोत्तराभ्यां निरूपणं, उक्तार्थज्ञस्य फलाभिधानं चेत्यादि. १७–२२

५ अग्निचयनकर्मणः संक्षेपत अग्न्याधानादिसर्वयज्ञात्मकत्वप्रतिपादनं,उक्तयज्ञवीर्याणां मीमांसाकरणं, तत्र शतशब्दस्यापरिमितार्थत्वप्रतिपादनं, उक्तार्थं वेदितुः फलनिरूपणं चेति. २३–२६

इति प्रथमोऽध्यायः।

अथ द्वितीयोऽध्यायः।

१ चित्याग्निविषयकविचारः—तत्र प्रथमं चित्याग्नेः पक्षिरूपत्वस्य पक्षपुच्छयोः प्रमाणस्य च विधानं, तत्र चित्याग्नेरङ्गुलिपरिमाणस्य सार्थवादं प्रदर्शनं, सप्तपुरुषाष्टपुरुषादिपरिमाणानामग्नीना-

| ब्रा० | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| | अङ्गुलीभिः परिमाणं न शक्यमित्यरत्नि परिमाणस्य विधानं, अङ्गुलिगतायाः संख्यायाः प्रशंसनं, पक्षपुच्छकरणे कस्यचिद्विशेषस्य विधानं, पक्षयोर्निर्णसनं विधाय तत्र प्रदेशं चाभिधाय निर्णमनकरणप्रकारस्य निरूपणं, निर्णाम इष्टकोपधानं विधाय तस्य पक्षिपक्षमध्यगतनाडीत्वेन प्रशंसनं, पक्षयोर्वक्रत्वनिरूपणं, पञ्चेष्टकाचित्युपधानानन्तरमात्ममध्ये पक्षद्वये च ऋज्वालिखितदक्षिणावृत्सव्यावृतः सहस्रत्रयसंख्याका इष्टका उपधेयाः सन्ति तासामुपधानस्य प्रशंसनं, तासामुपधाने कालप्रदेशयोः प्रदर्शनं, त्रिविधेष्टकागतां त्रित्वसंख्यामनूद्य तस्याः प्रशंसनं चेत्यादि. | २७–३१ |
| २ | चित्याग्नेः सप्तपुरुषप्रमाणताया विधानं, अत्रार्थे मन्त्रसंवादप्रदर्शनं, यज्ञार्हस्य यज्ञेन यजनकरणे मन्त्रसंवादप्रदर्शनं, उक्तं मंत्रं प्रतिपदमनूद्य तस्य व्याख्यानं, सृष्ट्यादौ प्रजापतिव्यतिरिक्तस्य यष्टव्यदेवजातस्य विरहात्सूर्य एव पक्ष्यात्मकप्रजापतिरूपेण यष्टव्य इत्यमुमर्थं प्रतिपादयितुं तात्पर्योपेतं मंत्रान्तरप्रदर्शनं, तस्य चित्याग्नेः सप्तपुरुषात्मकत्वाभिधानं समस्थितेन प्रपदोच्छ्रितेन वा यजमानेनोर्ध्वबाहुना चित्याग्नेर्मानं कुर्यादिति सार्थवादं पुरुषप्रमाणविधानं, पक्षौ अरत्नी च प्रशस्य पुच्छे वितस्तिप्रमाणोपधानविधानमर्थादवशिष्टस्याधिकस्यार्धपुरुषप्रमाणस्य विधानं, पुच्छे पक्षप्रमाणान्न्यूनप्रमाणकरणस्य प्रतिष्ठाहेतुत्वेन प्रशंसनं, अरत्निवितस्तिप्रमाणं सम्भूय तत्प्रशंसनं चेत्यादि. | ३२–३५ |
| ३ | प्राकृतस्य सप्तविधस्याग्नेर्वैकृतेष्वन्त्यस्यैकशतविधस्याग्नेश्च वेदिमानम्–तत्र महावेदेर्मानं विधातुं प्राचीनवंशगतवेदेर्मानस्य सेतिकर्तव्यताकस्य विधानं, पूर्वं गार्हपत्यादारभ्य प्राञ्चः सप्त प्रक्रमा गार्हपत्याद्भविष्यत आहवनीयस्य पूर्वार्धात्प्राञ्चस्त्रयः प्रक्रमास्ते दश व्याम एकादशस्तामेकादशसंख्यामनूद्य तस्यास्त्रिष्टुबात्मना प्रशंसनं, व्यामैकादशप्रक्रमकृताया वेदेर्महावेदियोनित्वेन प्रशंसनं, महावेदेर्मानविधानं, नवतिप्रक्रमवेदेः सप्तविधाग्नेश्च संख्यासम्पत्तेर्वेदवादिविचारमुखेन प्रदर्शनं, अष्टविधनवविधादिपुरुषप्रमाणानामेकशतविधपर्यन्तानामग्नीनां व्यामैकादशप्रक्रमा प्राकृती वेदिः किं पुरुषसंख्यया वर्धयितव्या आहोस्विन्न वेति संशयं व्युदसितुं सहेतुकयोः पूर्वोत्तरपक्षयोः प्रतिपादनं, उक्तस्य योनिभूताया वेदेरुत्तरत्र वर्धमानाभावस्यैव पुनर्व्यतिरेकमुखेन प्रदर्शनं, सप्तविधप्राकृताग्निवेदेरावृत्तिविशेषणस्य विधानं, अग्निमानं वक्तुं सर्वेषां सप्तविधाद्येकशतपर्यन्तानामग्नीनामिष्टकोपधानप्रदेश एतावान्महावेदिषु भवतीति सङ्ग्रहेण प्रदर्शनं, अग्निविषयकवेदिमानस्योपसंहारः, चित्याग्नेः प्रकारान्निरूपयितुं प्रतिज्ञाकरणं, तत्राष्टनवतिपुरुषप्रमाणस्याग्नेरेतावदात्मपक्षपुच्छप्रमाणमिति प्रदर्शनं, एकशतविधाग्नेः सविशेषं प्रकारप्रदर्शनं, एतस्यैकशतपुरुषप्रमाणस्याग्नेर्नवतिप्रक्रमाया वेद्याः संख्यासम्पत्तेः प्रदर्शनं, अस्तु प्रतिपुरुषं पञ्चदशसंख्यया षट्सु षट्सु पुरुषेषु नवतिसंख्यासम्पत्तिः न त्वधिकेषु | |

| ब्रा० | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| | त्रयोदशपर्यायाणामन्तिमेषु त्रयोदशसु पुरुषेषु—इत्येवंरूपं वेदवादिविचारमुद्भाव्य तत्रापि पूर्ववत्सप्तमपुरुषस्य वेदिगतपञ्च-संख्ययैव सम्पत्तेः प्रदर्शनं प्रकारान्तरेण सम्पत्तेः प्रदर्शनं, सर्वेषां चित्याग्नीनां सप्तविध एव प्राकृत एकशतविध एवान्तिम इति सिद्धान्तयितुं पूर्वपक्षं प्रतिपाद्य तस्य सकारणं दूषणं चेत्यादि. | ३९–४३ |
| ४ | एकशतविधस्याग्नेः सर्वकामरूपत्वेनादित्यात्मना प्रशंसनं, तस्य सप्तविध-प्राकृताग्निसंख्यायाः सम्पत्तिप्रकारनिरूपणं, सप्तविधस्य चैकशतविधसंख्यासम्पत्तेः प्रदर्शनं, अग्निविधाविषयकविचारस्योप-संहारश्चेति. | ४४–४७ |
| ५ | **चयनमीमांसा**—तत्र पूर्वं चयनविषयिणी मीमांसा क्रियत इति प्रतिज्ञाकरणं, तत्रादौ चयनकालस्य सार्थवादं विधानं, प्रकारान्तरेण तस्य कालस्य प्रशंसनं, तापश्चितेऽग्नौ उपसत्संख्यायाः प्रदर्शनं, उपसत्सु प्रवर्ग्यचरणस्य प्रशंसनं. न केवलमत्रैव तापश्चितीषु किन्तु यत्र यत्राऽधिका न्यूना वा उपसदस्तत्र तत्र प्रवर्ग्य-चरणेनादित्यस्थापनं कृतं भवतीति निरूपणम्. **चितिपुरीषाणां मीमांसा**—तत्र तापश्चिताख्ये क्रतावुपसदां मध्येऽनुष्ठातव्यस्य चयनस्येष्टकाचितिपुरीषनिवपनयोरनुष्ठानप्रकारनिरूपणं, पञ्चम्याश्चिताविष्टकोपधाने विशेषाभिधानं, पुरीषचितौ विशेषप्रदर्शनं, सर्वमासगतसंख्यायाः सम्भूय प्रशंसनं, पुरीषचितेरतिरिक्तेषु त्रिष्वहःसु क्रमेण कर्तव्यस्य शतरुद्रियस्योपवसथ्यप्रयोगस्य सोमाभिषवस्य चाभिधानं, तेष्वहःसु यत्प्रवर्ग्योपसदामनुष्ठानं तेन तस्य संसर्पाहस्पतिसंज्ञकस्य त्रयोदशमासात्मकस्य सम्बन्धिष्वहोरात्रेषु आदित्यात्मकस्य सप्तमर्तोः स्थापनं कृतं भवतीति प्रतिपादनं, उक्तत्रयोदशमाससाहित्येन पूर्वोक्तायाः संख्यायाः प्रशंसनं, तत्र सुत्यानां संख्याया विधानं, तत्र तापश्चिते कर्तव्यमग्निविशेषं प्रदर्श्य तत्प्रशंसनं, संवत्सरं सोमयागकरणाशक्तौ विश्वजिता सर्वपृष्ठेनातिरात्रेण यजेतेति पक्षान्तरप्रदर्शनं, तत्र दक्षिणाविधानं, एतस्य यज्ञकरणस्य सर्वप्राप्तिहेतुत्वेन प्रशंसनं चेति. | ४८–९४ |
| ६ | संवत्सररूपप्रजापतेरेकशतविधत्वस्य सोपपत्तिकं सम्पादनं, पुनस्तस्यैव संवत्सररूपस्यैकशतविधस्य सप्तविधाग्निना सम्पत्तेर्हेतुभिः प्रदर्शनं, प्रकारान्तरेणैतस्याः सम्पत्तेरभिधानं, सप्तविधाद्येकशतपर्यन्ताग्निचयनस्य सूर्यलोकः फलमिति प्रतिपादनं, अर्चिषोऽमृतफलत्वस्य सवितृसम्बन्धित्वस्य च प्रदर्शनं, सवितैव सर्वाभ्यः प्रजाभ्यो नानारूपं कामं ददातीत्यर्थस्य दाशतय्या मन्त्रसंवादेन दृढीकरणं, उक्तमन्त्रस्याभिप्रायाविष्करणं, एतदुक्तमर्थजातं पश्यन्त्या वाचोऽमृतत्वफलसाधनत्वस्य प्रदर्शनं, शतवर्षजीवनस्य पुण्यलोकहेतुत्वं तदर्वाचीनेषु वर्षेषु मरणस्यालोक्यत्वं चेत्येतन्निरूपणं, तत्रैतादृशेषु वर्षेषु मरणमहोरात्रार्धमासाद्यात्मकलोकहेतुः न त्वमृतत्वफलप्रापकमित्याद्यभिधानं, शतवर्षजीवनस्य सूक्ष्ममेव फल- | |

| ब्रा० | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| | मिति निगमनं, बहुभिर्यज्ञैरेकमहरेका रात्रिरपि मिताऽत एकदिनजीवनमेकरात्रिजीवनमपि बहुयज्ञफलं किमुत शतवर्षाणि जीवनवतोऽमृतत्वप्राप्तिरिति वक्तव्यमित्यभिधानं, एवमग्नेरमृतत्वं फलमित्युक्त्वा एकशतविधस्याग्नेः संवत्सराख्यधारणं नियतमित्यभिधानं, अधियज्ञस्यैकशतविधत्वस्य सोपपत्तिकं बहुभिः प्रकारैः प्रतिपादनं, तेषामेव मेकशतविधानां सर्वेषां यज्ञानां अध्यात्मस्यैकशतविधत्वस्य प्रकारद्वयेन निरूपणं, यदुक्तमेकशतविधं विधत्ते इत्यत्राधिदैवाधियज्ञाध्यात्मत्रयविषये संवत्सरचित्याग्निपुरुषा इति तत्र तेषां संवत्सरचित्याग्निपुरुषाणां पञ्चविधत्वस्य निरूपणं, तत्रान्नादिपञ्चकस्याधियज्ञरूपेणाध्यात्मरूपेण चार्थप्रदर्शनं, अन्नादिपञ्चकेन निवर्त्याशनायादिपञ्चकस्य प्रदर्शनं, अन्नादिपञ्चकं विदुषां फलाभिधानम्, एके "प्राणोऽग्निः प्राणोऽमृतम्" इति समाम्नातत्वादमृतशब्दस्य प्राणोऽर्थ इति मत्वा तस्यैवोपासनं चित्याग्नौ मन्यन्ते तन्मतस्यानुवादपुरःसरं निराकरणं, तत्र प्राणस्यानित्यत्वाभिधानाय यजुर्मन्त्रस्य संवादप्रदर्शनं, तस्मादुक्त एवार्थः सम्यगिति निगमनं चेति। | ९४–९३ |

इति द्वितीयोऽध्यायः।

## अथ तृतीयोऽध्यायः।

| ब्रा० | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| १ | सुपर्णचित्याग्नेर्मध्यदक्षिणोत्तरभागत्रये लोमत्वेन स्तुतास्त्रिसहस्रसंमिताः परित्यज्यावशिष्टानां सप्तसहस्राणां शिरःप्रभृतिपादपर्यन्तमुपहितानामेव शरीररूपत्वेन स्थितानामिष्टकानां गायत्र्यादिसप्तच्छन्दोवीर्यरूपत्वेन प्रशंसनं, अथवाऽष्टमकाण्डे चरमचितौ "छन्दस्या उपदधाति" इति सप्तानां छन्दसामुपधानमभिहितं तेषां छन्दसां चित्याग्नेश्चक्षुरादिसप्तावयवत्वेन प्रशंसनं, तत्र प्रसङ्गाच्छन्दःप्रशंसनद्वारा अन्धमूकमूढबधिरनपुंसकादीनां दुश्चिकित्समूलरोगराजयक्ष्मादिपरिगृहीतानां च यजमानानां कर्मण्यनधिकारादग्निचयनमपि न स्यादिति संसूचनं, सप्तानां छन्दसां प्रकारान्तरेण सम्भूय प्रशंसनं, उक्तछन्दःप्रशंसनं वेदितुः फलनिरूपणं चेति। | ६४–६७ |
| २ | चित्याग्नेः शिरोग्रीवादीनां छन्दोमयत्वस्य वेदवादिप्रश्नोत्तराभ्यां निरूपणं, यदुक्तमग्नेः शिरोग्रीवादिपरिकल्पनेन छन्दोदेवतास्वरूपत्वं तदेतत्पुण्यलोकसाधनमात्मविद्यैवेति प्रशंसनं चेति। | ६८–६९ |
| ३ | अग्नेः सर्वदेवतासमष्टिरूपप्राणवाय्वात्मकत्वस्य धीरमहाशालनाम्नोर्महर्ष्योः संवादेन प्रतिपादनं, तत्रादौ विद्याविषये गुरुशिष्यप्रतिपत्तिः कार्येति तस्याः प्रतिपादनं, उपास्याग्नेरध्यात्माधिदेवतभेदेन सर्वात्मकत्वस्य विशदीकरणं, तेषामग्न्यादीनां वाय्वाधीनताप्रदर्शनं, उक्तार्थं वेदितुः फलाभिधानं चेति। | ७०–७२ |
| ४ | प्रष्टृप्रतिवक्तृनिर्देशपुरःसरं—अग्निवाय्वादित्यपुरुषाणां—ओषधिवनस्पत्युदकचन्द्रपशूनां च बहुविधनामव्यपदेश्यत्वेन प्रशंसनं, तत्रापि पुरुषस्यानेकरूपत्वेनानेकैः प्रश्नप्रतिवचनैः प्रशंसनं चेति। | ७३–७५ |

| ब्रा० | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| ९ | यजुस्तद्विधायकब्राह्मणयोर्निर्वचनपुरःसरं—अधिदैवाध्यात्मभेदेनार्थविवरणं, एतमुक्तमर्थं वेदितुः फलाभिधानं, प्रसङ्गाद्विद्वन्निन्दकस्य दोषं प्रदर्श्य तत्स्तावकस्य फलप्रदर्शनं, यजुःशब्दस्य वायुप्राणरूपोऽर्थ उक्तस्तस्य ज्येष्ठब्रह्मात्मना प्रशंसनं, उक्तार्थं वेदितुरपि ज्येष्ठत्वरूपं फलं भवतीत्यभिधानं, अपूर्वापरवद्गुणद्वयविशिष्टस्य ब्रह्मण उपासनस्य फलाभिधानं, पुरुषादधिकं वस्तु दिशस्ता उपासितव्या इति सोपपत्तिकमभिधानं, यजुर्मन्त्रब्राह्मणप्रसङ्गादुपनिषदोऽर्थस्य तत्त्वरूपं वेदितुरानन्दावाप्तिरूपफलस्य च प्रदर्शनं, तत्र प्रसङ्गादुक्तं देवानामानन्दात्मत्वमुपजीव्य यजुरात्मकवायोरानन्दात्मत्वपरिज्ञानफलस्य पुरावृत्तकथनेन प्रदर्शनं, एवं वायुप्राणरूपत्वेन प्रशंसितस्य यजुष उपांश्वनुष्ठानस्य विधानं, उपांशुत्वेनाननुष्ठाने दोषकथनं, उपांशुत्वं प्रशस्य निरुक्तत्वस्य प्रशंसनं चेत्यादि. | ७६–८३ |


इति तृतीयोऽध्यायः ।

## अथ चतुर्थोऽध्यायः ।


| ब्रा० | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| १ | प्रजापतेर्भोक्तृत्वस्याहवनीयरूपत्वेनाभिधानं अन्नेन संस्कारप्रकारनिरूपणं, तत्र चित्याग्निरूपस्यान्नस्य प्रजापतिशरीरात्मकत्वमित्येतस्यार्थस्योपपादनं, अन्नसंस्काराद्युक्तस्यार्थस्याधुनातनानुष्ठातरि नियोजनं, चित्याग्नेरुपरि—उख्याग्निनिधानमन्त्रे "वौषट्" इत्यक्षरद्वयं श्रूयते तस्य यथाक्रममग्निपरत्वप्रदर्शनं, अन्नस्य शरीरसम्मितत्वस्यान्वयव्यतिरेकाभ्यां प्रदर्शनं, अग्निचित्याग्निद्वन्द्वस्य यजुःसामर्ग्वेदत्रयपरिभाषासिद्धार्क्यमहाव्रतोक्थनामभिर्व्यपदेश्यत्वस्य तत्तन्नामावयवनिर्वचनद्वारा प्रदर्शनं, एतस्याग्निद्वयस्य चेन्द्राग्न्यात्मना स्तोतुमादाविन्द्राग्निसृष्टेरभिधानं, तत्र प्रथमेष्टकाचितावुपधेययो रुक्मपुरुषयोरिन्द्राग्न्यात्मना प्रशंसनं, इष्टकापुरीषचितिद्वयमिन्द्राग्न्यात्मना प्रशस्य तत्रेष्टकानां पाके पुरीषस्यापाके च कारणाभिधानं, एवं विभिन्नयोरुक्मपुरुषयोरिष्टकापुरीषचित्योरिन्द्राग्नित्वेनोक्तयोरैक्यस्येष्टकासम्पत्त्याऽक्षरसम्पत्त्या चोपपादनं, अक्षरगतैकत्वस्य मन्त्रसंवादेन दृढीकरणं, उक्तमग्नेरिन्द्राग्न्यात्मकत्वमुपजीव्य वर्णत्रयात्मना तत्प्रशंसनं. उक्तं वर्णत्रयात्मकत्वमुपजीव्य कर्मणः श्रीयशोऽन्नादत्वलक्षणफलस्य पुरावृत्तकथनेन प्रदर्शनं, उक्तस्य श्रीयशःप्रभृतिकफलस्य संवादेन दृढीकरणं,एतदर्थं वेदितुः फलकथनं, प्रजापतिरूपाहवनीयाग्नेस्तत्र हूयमानमहाव्रतीयग्रहरसस्य च यद्द्वन्द्वं तस्य पूर्ववदर्क्यमहाव्रतोक्थनामत्रयेणाभिधेयत्वं वक्तुं ग्रहग्रहणस्य स्तुतशस्त्रपठनस्य वषट्कारान्ते तद्रसहोमस्य च क्रमेण प्रदर्शनं, तदिदमग्निरसद्वयमेकं सदपि त्रेधाऽर्क्यादिनामत्रयेणाम्नायत इत्यभिधानं, प्रजापतिरूपस्याग्नेः सप्तदशावयवत्वं प्रतिपाद्य तयोः सावित्रवैश्वकर्मणहोमयोः कलाष्टकद्वयात्मना प्रशंसनं, तेषामेव कलापरपर्यायाक्षराणां शरीरे संस्थानवर्णनं, तत्र प्रसङ्गादेतस्मै प्राणायैताः कला अन्नमभिहरन्ति यदा चैताः कला अन्न- | |

| ग्रा० विषयाः | पृष्ठाङ्काः |
|---|---|
| मग्निर्हर्तुमनीश्वरा भवन्ति तदाऽयं प्राणः एता एव कला जग्ध्वोत्क्रामतीत्याद्यभिधानं, अग्न्यात्मकस्य प्रजापतेर्मोक्तुः सप्तादशात्मकत्वमुक्तं तद्भोग्यस्याप्यन्नस्य सप्तदशसंख्योपेतत्वस्याभिधानं, यथा पूर्वं देवाः सप्तदशाय प्रजापतये संस्कृतवन्तस्तथाऽयमध्वर्युः स्तोत्रशस्त्रान्ते अस्मिन्नग्नावेतं सोमरसादिकं वषट्कृते जुहोतीति प्रतिपादनं, तत्र वौषडित्यक्षरद्वयस्याग्न्यन्नरूपत्वप्रदर्शनं, अधियज्ञं प्रजापतिसौम्याध्वरयोर्द्वन्द्वस्य अधिदैवमादित्यचन्द्रमसोर्द्वयस्य—अध्यात्मम्प्राणान्नयोर्द्वयस्य चाक्र्यादिनामत्रयभाक्त्वमिति प्रतिपादनं, अधिदैवाध्यात्मद्वयेन समुदितार्थस्योपसंहारश्चेत्यादि- | ८४—९३ |
| २—संवत्सररूपप्रजापतेरग्नीषोमात्मकत्वमभिधाय यावन्ति मे ज्योतींषि तावत्यो मे इष्टका विधेया इति प्रजापतेरुक्तेः प्रतिपादनं, श्रुत्या च लोकोपकाराय ज्योतिःशब्दार्थस्तत्संख्या च स्वयमेवोच्यत इत्यभिधानम्, उक्ताया अहोरात्रसंख्याया इष्टकासु प्रदर्शनं, संवत्सररूपस्याग्नेः पक्षगततिथ्यर्द्धमासमुहूर्तान्दर्शयितुमुपोद्घातकथनं, विभक्तयोर्द्वयोरात्मनोः पूर्वोक्तानां अहोरात्रसंख्याकानां परिश्रितामिष्टकानां च विभज्य प्रदर्शनम्, एवमुत्तरत्र त्रिचतुःप्रभृतिचतुर्विंशतिपर्यन्तात्मविभागेषु तत्तदात्मसंख्याया विंशत्यधिकसप्तशतसंख्याकानामेव परिश्रिद्यजुष्मतीनां विभज्य प्रदर्शनं, तत्र त्रिप्रभृत्यात्मान्तरकल्पने कारणाभिधानं, सहैव तत्र तत्र सप्तैकादशत्रयोदशचतुर्दशसप्तदशैकोनविंशत्येकविंशतिद्वाविंशतित्रयोविंशतिधाऽत्मान्तरव्यूहनं न कृतमित्यभिधानं, चतुर्विंशतिधा व्यूहनोत्तरमात्मविभागो नास्तीति कथनं, उक्तव्यूहपञ्च—दशकस्य पञ्चदशतिथ्यात्मना प्रशंसनं, चतुर्विंशतिविभागानामर्द्धमासात्मना प्रशंसनं, मुहूर्तानां प्रदर्शनपूर्वकं मुहूर्तशब्दनिर्वचनं, लोकम्पृणाशब्दनिरुक्तिसहितं लोकम्पृणेष्टकानां मुहूर्तपरत्वस्य कथनं, सूर्य एवादौ अहोरात्रादिसंवत्सरान्तकालेन सर्वं वस्तु पचत्यनन्तरमयमग्निरमुना सूर्येण पक्वं वस्तु पचतीति भरद्वाजमुनिसंवादसहितं निरूपणं, प्रतिमासगतमुहूर्ताः संवत्सरे सम्भूयैतावन्तः स्युरिति तत्परिगणनं, त्रय्याः सर्वभूतात्मकत्वस्य छन्दःप्रभृतिसर्वाश्रयत्वस्य प्रतिपादनं, त्रय्याः सर्वभूतात्मकत्वादेव त्रयीमेव विद्यामात्मानमभिसंस्करवै इति प्रजापतिर्विचार्य द्वादशबृहतीसहस्रसम्मिता ऋचो विभक्तवानिति प्रतिपादनम्, ऋचां न्यूनाधिकसंख्यायाः संशयस्य निराकरणं, त्रिंशता विभागैर्विभक्तानां द्वादशसहस्रबृहतीनामृचामष्टशताधिकदशसहस्रसम्मितपंक्तित्वं सम्पाद्य तत्र ऋचां त्रिंशत्तमे भागे तत्रापि पंक्तिष्ववस्थानस्य प्रशंसनम् , ऋग्वेदवद्यजुःसामवेदयोरपि विभागस्य पंक्तित्वसम्पादनस्य च प्रदर्शनं, वेदत्रयगतानां सकलानां पंक्तीनां सम्भूयाशीत्यात्मना सम्पादनम्, उक्तरीत्या प्रजापतेः संवत्सरात्मकत्वं स्पष्टमुक्तमिति प्रदर्शनं, यदुक्तं प्रजापतेः संवत्सरस्याहोरात्रमुहूर्तात्मकत्वं वेदत्रयरूपत्वं च तस्य सर्वस्य प्रजापतिकर्तृ- | |

ब्रा० विषयाः पृष्ठाङ्काः | ब्रा० विषयाः पृष्ठाङ्काः

कोपधानवचनव्याजेन विभज्य प्रदर्शनं, "हन्त त्रयीमेव विद्यामात्मानमभिसंस्करवै" इति प्रजापतिना प्रतिज्ञातस्य नियमनम्, एवमग्निं चितवतः प्रजापतित्वस्य निदर्शनं, यत्प्रजापतेरुखायां सिक्ते स्वात्मनि संवत्सरमन्त्ररूपे परिश्रिद्यजुष्मतीष्टकोपधानेनादित्ये प्रतिष्ठितत्वं तस्य सर्वस्येदानीन्तने यजमाने नियोजनं, फलं च तस्य तद्भवतीत्यभिधानं, उक्तमर्थजातं विदुषः फलाभिधानं, ज्ञानपूर्वकमनुष्ठानं केवलं च ज्ञानमित्युभयार्थप्रदर्शनं चेत्यादि. ९४-१०४

३ संवत्सररूपप्रजापतेर्मृत्युरूपत्वं प्रतिपाद्य तद्रूपोपासकस्य फलप्रतिपादनं, संवत्सररूपप्रजापतेरन्तकरूपत्वमभिधाय तद्रूपोपासकस्य फलाभिधानं, चयनस्यामृतत्वफलवद्यज्ञक्रतूनाममृतत्वं फलमिति निरूपणं, यथाविध्यनुष्ठितचयनस्याप्येतदेवामृतत्वं फलमिति वक्तुं तद्वीपरीतानुष्ठाने फलं न सेत्स्यतीति पुरावृत्तकथनं, देवकृतं तादृशमनुष्ठानमिदानीन्तनानुष्ठानेन सममिति संवादेन प्रदर्शनं, अमृतत्वप्राप्त्यर्थं देवानां तपःकरणप्रदर्शनं, इदानीन्तनानामग्निचितां शरीरसाहित्येनामृतत्वाभावस्य प्रश्नप्रतिवचनाभ्यां प्रदर्शनं, कर्म कुर्वतां विदुषामविदुषां च शरीरपरित्यागोत्पत्ती समाने कुतः कर्मविद्याभ्यां ज्ञाने विशेष इत्याशंक्योभयेषां फलव्यतिरेकस्य प्रदर्शनं, चयनस्यामृतत्वं फलमुक्तं; तत्रामृतशब्दस्यार्थविवरणं, देवाः फलसाधनत्वेन यदकार्षुस्तदेवेदानीन्तनैरपि कृतमिति साधनगतैकत्वस्य प्रदर्शनं, चयनेन "संवत्सरं प्रजापतिमग्निमाप्नोति" इति यदुक्तं तस्यैव पुनर्विशदीकरणं, परिश्रिदादिभी रात्र्यहरादिप्राप्तेरेव क्रमेण विवरणं, तत्र परिश्रितां संख्यायाः स्थानविशेषेण तद्विभागस्य चाभिधानं, यजुष्मतीनां संख्यायाः पञ्चस्वपि चितिषु तद्विभागस्य च प्रदर्शनं, पञ्चचितिगतानां यजुष्मतीनां सर्वासां सम्भूय परिगणनम्, एतासामेवाहरर्द्धमासर्तुरूपताया विभज्य प्रदर्शनं. एवं सम्पादनस्य प्रयोजनकथनम्, लोकम्पृणाभिर्मुहूर्तप्राप्तेः संख्यासाम्यादुपपादनं तासामुपधानप्रदेशसंख्याविशेषस्य च प्रदर्शनं, अत्र केचनाहवनीय एव सकला अपि लोकम्पृणा उपधेया इत्याहुस्तेषां मतमनूद्य तस्य दूषणम्, "अग्निं चिनुते" इत्यत्रैकवचनान्ताग्निशब्दव्यवहारः कथमित्याशंक्य तस्योपपादनं, केषांचिन्मतेन दोषनिरूपणं, भूमिकारचनापूर्वकं निर्ऋतिदेवत्यानां तिसृणामिष्टकानामप्यत्रैव सन्दर्शनं कर्तव्यमित्यनिष्टमापाद्य तस्य सकारणं निराकरणं, आसां नैर्ऋतीनां तिसृणामिष्टकानां सप्तत्यधिकशतोत्तरैकादशसहस्रसम्मितेष्टकाभ्यो नातिरेकेनोपधानमित्यस्यार्थस्य प्रश्नोत्तराभ्यां निरूपणं, विदित्वाऽनुष्ठातुः केवलवेदितुश्च फलप्रतिपादनं चेत्यादि. १०४-११६

४ प्रजापत्यात्मकसमष्टिरूपं सहस्ररूपोपासनम्—तत्र संवत्सररूपस्याग्नेस्तदवयवानां च सहस्ररूपत्वेनोपासनस्य तत्फलस्य च प्रदर्शनं तत्रादौ प्रजापतिवृत्तान्तेन सहस्रप्रसङ्गस्याभि-

ब्रा० विषयाः पृष्ठाङ्काः

धानं, सहस्रोपासनायाः प्रसङ्गमुक्त्वा तदुपायस्य कथनं, यतः सहस्रसंवत्सरावरोधे मनुष्यस्य विद्यैव साधनमतस्तस्या उपासनाया अभिधानम्, उपासनायाः फलनिरूपणं, सर्वेषु व्यापारेष्वप्येतदुपासनं कर्तुं युज्यत इत्यभिधानं, विदुषः किञ्चिदपि व्यापारमात्रं व्यर्थं न भवतीत्यर्थे मन्त्रपादसंवादमुक्त्वा तस्य व्याख्यानं चेत्यादि. ११७–११९

९ व्यष्टिरूपाग्निविषयकमुपासनम्–तत्र रहस्यार्थानामुपदेशा वक्ष्यन्त इति प्रतिज्ञापूर्वकं वाय्वादित्यरूपेणाग्न्युपासनस्य ससम्प्रदायमभिधानं, संवत्सरे शिरःपक्षपुच्छावयवाग्न्युपासनायाः सोपपत्तिकं फलसहितमभिधानं, प्रकारान्तरेणापि पञ्चचितिरूपसम्पत्तेस्तथैव तदुपासनायाश्च प्रदर्शनं चेति. ११९–१२१

इति चतुर्थोऽध्यायः।

## अथ पञ्चमोऽध्यायः।

१ त्रयीमयादित्याग्न्युपासनं ब्राह्मणम्–तत्र पूर्वं तस्याग्नेस्त्रयीमयत्वस्य प्रदर्शनं, वाचस्त्रिविध्यादग्निरपि तया चितस्त्रिविध इत्यभिधानं, चित्याग्नेरवयवभूतानां त्रेधाविहितानामिष्टकानां लिङ्गत्रयाभिधेयत्वस्य प्रदर्शनम्, एवं त्रेधाविहित आत्माऽपि लिङ्गत्रयाभिधेय इत्युक्त्वाऽनेन त्रेधाविहितेनात्मना त्रिविधेष्टकाचितेन त्रेधाविहितमग्निवायुसूर्यात्मना त्रिविधं दैवममृतमादित्यमाप्नोति तद्यदीष्टकानां लिङ्गत्रयशब्दाभिधेयत्वं तर्हि तथैव कथमिष्टकाशब्दस्य लिङ्गत्रयव्यवहारो नास्तीत्याशंक्य वाग्रूपत्वेन तस्याः शंकायाः परिहरणं, वाच आदित्यरूपत्वस्याभिधानम्, एतस्योपासनस्य फलनिरूपणं, यदुक्तं विद्ययाऽस्यादित्यस्योर्ध्वमग्निश्चितो भवतीति तस्य विशदीकरणं चेत्यादि. १२२–१२७

२ मण्डलपुरुषोपासनं ब्राह्मणम्–तत्र सूर्यमण्डलार्चिःपुरुषत्रयस्याधिदैवाधियज्ञाध्यात्मपरत्वेनार्थस्य प्रतिपादनं, तत्राप्यधिदैवतया चयनगतमहदुक्थमहाव्रताग्नित्रयं क्रमेण मण्डलार्चिःपुरुषरूपत्वेनोपासनीयमित्यभिधानं, तत्र प्रसङ्गान्मण्डलस्थपुरुषस्य मृत्युरूपत्वमर्चिषोऽमृतरूपत्वं–पुरुषार्चिषोरुभयोर्मण्डलमेव प्रतिष्ठा–अस्मिन्नर्थे मन्त्रसंवादं प्रदर्श्य तस्य प्रतिपदमनूद्य व्याख्यानं चेत्यादिविशेषकथनम्, अधियज्ञतया चयनगतरुक्मपुष्करपर्णहिरण्मयपुरुषाणां मण्डलार्चिःपुरुषरूपत्वेनैवोपासनमित्यभिधानम्, अध्यात्मतयाऽपि मण्डलादित्रयस्याधियज्ञिकरुक्मपुष्करपर्णहिरण्मयपुरुषत्रयस्य च दक्षिणाक्षिगतशुक्लकृष्णवर्णद्वयतदन्तर्वर्तिपुरुषेषु तादात्म्येनोपासनमित्यभिधानं, तत्राक्षिद्वयगतपुरुषद्वन्द्वस्य मिथुनत्वमुपपाद्य तत्प्रशंसनं, मिथुनात्मना स्तुतस्य पुरुषद्वयस्य स्त्रीपुँलिङ्गेन्द्रेन्द्राणीशब्दाभ्यां विश० दीकरणं, प्रसङ्गात्स्त्रीसमीपे भोजनाकरणरूपं व्रतमभिधाय तदनुतिष्ठतां वीर्यवत्पुत्रोत्पत्तिरूपं फलं भवतीति प्रदर्शनम्, इन्द्रेन्द्राणीनाम्नोः स्त्रीपुरुषयोः सङ्गमस्य स्थानलक्षणानां प्रतिपादनं, तत्र प्रसङ्गादेतद्दिव्यमिथुनवृत्तान्तविदुपासकस्य "स्वपन्तं पुरुषं न प्रबोधयेत्" इति

| ब्रा० विषयाः | पृष्ठाङ्काः |
|---|---|
| धर्मविशेषकथनं, एवं प्रासङ्गिकं परिसमाप्य मण्डलस्थपुरुषात्मनोपासनीयस्य दक्षिणाक्षिपुरुषस्य मृत्युरूपत्वप्राणरूपत्वयोरभिधानं, तस्मिन्नेव मुख्येऽक्षिपुरुषरूपे प्राणे सर्वेषां प्राणानामप्ययस्य सोपपत्तिकं विशदीकरणं, दक्षिणाक्षिपुरुषस्य मृत्युत्वमुपजीव्य प्रश्नप्रतिवचनपूर्वकं मृत्युगतैकत्वबहुत्वान्तिकत्वदूरत्वानां मीमांसाकरणं, मृत्योरन्नात्तृत्वस्य मन्त्रसंवादपूर्वकमभिधानम्, उक्तमन्त्रस्याधिदैवाध्यात्मपरत्वेन व्याख्यानम्, एवमधिदैवमध्यात्मं च यः पुरुषः परमात्मोपास्यत्वेनाभिहितस्तस्य प्रशंसार्थं नानारूपैरुपासनस्य विधानं, प्रागीरितरुक्माद्युपजीव्योपासनान्तरस्य विधानं, विहितस्य बहुविधोपासनस्य फलनिरूपणं चेत्यादि. | १२९-१५४ |
| २ मानसाग्न्युपासनं ब्राह्मणम्—तत्र प्रथमं सर्वेषामिन्द्रियाणां मध्ये मनसः प्रामुख्यात्तत्सम्पाद्यमग्निं प्रस्तोतुं मनसः स्वरूपस्य तत्सृष्टेश्च प्रतिपादनं, सृष्टिप्राक्काले सदसद्विलक्षणसद्भावस्य मन्त्रसंवादेन दृढीकरणं, उक्तस्य सद्विलक्षणत्वस्य मनसि प्रदर्शनं, सकलपुरुषवर्तिमनोवाक्प्राणचक्षुःश्रोत्रकर्माग्निवृत्ति सम्पाद्यचित्याग्निविषयाणामुपासनानां विधानं, तत्र तत्तत्पर्यायादौ तस्य तस्योत्पत्तेः स्वरूपस्य चाभिधानं कर्मणाऽग्निसृष्टेः स्पष्टीकरणम्, एतेषां मनश्चित्प्रमुखाग्नीनां सर्वेषां स्वतन्त्रविद्यामयत्वमाख्यातुमुपोद्बलकानां श्रुतिलिङ्गवाक्यानामुदाहरणं चेत्यादि. | १५५-१६१ |
| ३ चित्याग्नौ लोकदृष्ट्युपासनं ब्राह्मणम्—तत्र भूम्यन्तरिक्षद्यौरादित्यनक्षत्रच्छन्दःसंवत्सरात्मनां परिश्रिद्यजुष्मतीसूददोहसां पुरीषाहुतिसमिल्लोकम्पृणादीनां च सम्पादनद्वारा सोपपत्तिकं चित्याग्निरूपत्वं प्रतिपाद्य तद्रूपेणोपासनस्य विधानं, तत्र प्रतिपर्यायं तत्तत्पर्यायोक्तमर्थं वेदितुः फलनिरूपणं, तथा नक्षत्रच्छन्दः संवत्सरात्मपर्यायेषु सम्पन्नां संख्यां प्रशंसितुं बृहतीसम्पादनम्, अप्स्वग्नित्वेनोपासनस्य विधित्सया अपां सर्वदेवभूतात्मकत्वस्य निरूपणम्, उक्तेषु पर्यायेषु "अथ या अमूः षट्त्रिंशत्" इत्युक्तं तस्य विभागकथनम्, एवं षट्त्रिंशदिष्टकामयो हिरण्मयः पुरुष आत्मा सर्वभूतदेवात्मनामपामन्यात्मना ध्येयानां मध्ये वर्तत इत्यभिधानं, तादृग्रूप आत्मा सर्वैर्ज्ञानेन लभ्यो न कर्मशतैरिति मन्त्रसंवादेन प्रतिपादनम्, उक्तमन्त्रस्य तात्पर्यकथनम्, अब्रूपाग्नेः पुरीषाहुतिसमिल्लोकम्पृणादीनां सम्पादनम्, उक्तस्य देवात्मत्वस्य मन्त्रसंवादेनोपपादनम्,उक्तमन्त्रस्य तात्पर्यकथनमुपासकस्य फलकथनं च, पूर्ववदत्रापि सम्पन्नां संख्यां प्रशंसितुं बृहतीसम्पादनं चेत्यादि. | १६२-१७४ |
| ५ चित्याग्नेः सर्वदिग्गतमुखत्वपृथक्छिरस्त्वयोर्निरूहणाभावस्य प्रतिपादनं, तत्रैकैकदिग्गतमुखत्वे दोषमुद्भावयितुं तेषां पक्षाणां पुरावृत्तकथनेनानुवादकरणं, तेषु यथाक्रमं सुश्रवकर्तृकं दोषाणामभिधानम्, अग्निचित्कश्चिदुक्तदोषपरिजिहीर्षया सकलदिङ्मुखमग्निं चितवानित्यभिधानं, विपरीतानुष्ठानेऽन्येन चोदिते स्वयमपि यथाविधि कृतमित्युक्तं तद्वचन- | |

| ब्रा० | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| | मात्रेण कर्म साङ्गं न भवतीति मत्वा स्वानुष्ठानप्रकारेणाग्नेः सकलदिगभिमुखत्वस्य विशदीकरणं, पक्षिरूपस्य चित्याग्नेरिष्टकोपधानक्रमेण कूर्मपशुशिरःपरोक्षमाहवनीयाग्निरेव प्रत्यक्षं शिरः—न तु पक्षपुच्छवत्पृथक्छिरसः करणमिति वक्तुं पृथक्करणपक्षस्य पुरावृत्तकथनेन निन्दाकरणं, शिरसः प्राणरूपत्वमेव मतं तत्रैव दोषान्तरस्य समुच्चयप्रदर्शनम्, एवं शिरसः पृथक्करणपक्षो निन्दितो यदि तर्हि पक्षिरूपोऽग्निः शिरोरहितः स्यादितीमामाशङ्कां परिहर्तुमिष्टकाग्निरेव परोक्षमपरोक्षं च शिरः सम्पादनीयमित्यभिधानं, यथा तिष्ठतः पुरुषस्य पादबाह्वादयोऽवयवा उत्तरोत्तरक्रमेणावस्थिताः सन्तो मूर्धान्तं यन्ति—एवमेवास्य चित्याग्नेरवयवरूपेष्टकासन्निवेशस्य प्रदर्शनं, प्रत्यक्षतमस्य शिरसः प्रदर्शनं चेत्यादि. | १७४–१७७ |
| | इति पञ्चमोऽध्यायः। | |
| | **अथ षष्ठोऽध्यायः।** | |
| १ | **वैश्वानराग्न्युपासनं ब्राह्मणम्**—तत्र सुखावबोधार्थया विद्यासम्प्रदायप्रदर्शनार्थया चाख्यायिकया वैश्वानरविद्यायाः सविस्तरं निरूपणं, तस्यां च विशेषतोऽरुणसहितानां सत्ययज्ञप्रभृतीनां पञ्चानामप्यृषीणां कैकेयमश्वपतिं राजानं प्रति शिष्यभावेनोपसदनस्य प्रतिपादनं, ततस्तेषां प्रश्नोत्तराभ्यामरुणसत्ययज्ञादीनामृषीणां क्रमेण वैश्वानरस्य पृथिव्युदकाकाशवाय्वादित्यद्यौरूपं तदेकदेशमात्रपरिज्ञानं वर्तत इति प्रदर्शनं प्रतिपर्यायं तत्तदेकदेशमात्रपरिज्ञानस्य फलप्रदर्शनं च, परं चैतेषां वैश्वानरस्य तत्तदेकदेशमात्रपरिज्ञानं न युक्तमिति मत्वा तेभ्योऽरुणसत्ययज्ञादिभ्योऽश्वपतिकर्तृकस्य पादादिमूर्द्धान्तावयवसम्पूर्णस्य वैश्वानरपुरुषस्योपदेशप्रदानस्य प्रतिपादनं, यथोक्तं वैश्वानराग्निं विदुषः फलाभिधानं चेत्यादि. | १७९–१८६ |
| २ | **पुरुषस्याग्न्यर्कोक्थविधत्वोपासनं ब्राह्मणम्**—तत्रादावग्निविधोपासनं, तत्र जगतोऽन्नरूपं द्वितयं प्रतिपाद्य तत्र "योऽत्ता सोऽग्निरेव" तस्मिन्नग्नौ "यत्किञ्च वस्त्वभ्यादधति" तदन्नमर्थादाहुतिरित्यभिधाय च तयोरन्नाहुत्योरधिदैवस्याध्यात्मस्य चार्थस्य निरूपणं, प्रसङ्गादाहुतिशब्दस्य निरुक्तिकथनम्, एवमग्निशब्दोपजीवनेनाग्निविधः पुरुष उक्तो भवतीति प्रदर्शनम्। **अर्कविधोपासनम्**—तत्रार्कशब्दोपजीवनेन प्रतिज्ञापूर्वकं पूर्ववदग्न्याहुत्योरर्थद्वयं प्रदर्श्य पुनरप्येतयोरर्कवाच्ययोरग्न्याहुत्योरधिदैवाध्यात्मपरत्वेन अर्थद्वयस्य प्रदर्शनम् एवमर्कशब्दोपजीवनेनार्कविधः पुरुष उक्तो भवतीति निगमनम्. **उक्थविधोपासनम्**—तत्रोक्थशब्दोपजीवनेन प्रतिज्ञापूर्वकं पूर्ववदग्न्याहुत्योरर्थद्वयं प्रदर्श्य पुनरप्येतयोरुक्थवाच्ययोरग्न्याहुत्योरधिदैवाध्यात्मपरत्वेनार्थद्वयस्य प्रतिपादनम्, एवमुक्थशब्दोपजीवनेनोक्थविधः पुरुष उक्तो भवतीति निगमनं, पर्यायत्रयेणोक्ताया अग्निविधादिपुरुषसम्पत्तेर्निगमनं, यथोक्तं पुरुषं विदुषः फलाभिधानं, प्रसङ्गात्प्राणाग्न्यादित्यचन्द्रमोज्योतीरूपोपासनस्य तत्फलस्य चाभिधानं चेत्यादि. | १८७–१८९ |

| ब्रा० विषयाः | पृष्ठाङ्काः |
|---|---|
| ३ शाण्डिल्याग्न्युपासनं ब्राह्मणम्—तत्र ब्रह्मात्मविषयः क्रतुः कर्तव्य इत्यभिप्रायप्रदर्शनद्वारा सत्यं ब्रह्म मनोमयत्वादिगुणविशिष्टमात्मानमुपासीत—एतदेव च क्रतुकरणमित्याद्यर्थनिरूपणेन शाण्डिल्यविद्यायाः सविस्तरं प्रतिपादनं चेति. | १९०—१९१ |
| ४ अश्वावयवेषु विराडवयवोपासनं ब्राह्मणम्—तत्र चाश्वमेधकर्मसम्बन्धिनोऽश्वस्यावयवेषु विराडवयवानि यथायथं सम्पाद्य तद्रूपेणोपासनस्य प्रदर्शनं चेति. | १९३—१९४ |
| ५ उपास्यस्य हिरण्यगर्भस्य स्वरूपप्रतिपादकं ब्राह्मणम्—तत्राश्वमेधक्रतूपयोगिकाग्निविषयं दर्शनं वक्तुं तत्स्तुत्यर्थतया तदुत्पत्तिप्रस्तावस्याभिधानं, तत्रापि सृष्टेः प्रारम्भे नैव किञ्चनासीत्सर्वमशनायारूपमृत्युनाऽऽवृतमासीत्तस्मान्मृत्योः सकाशात्स्वकीयार्चनत एवापामुत्पत्तिरित्याद्यर्थनिरूपणं, प्रसङ्गात्तत्रार्कस्यार्कत्वं प्रतिपाद्य तद्वेदितुः फलनिरूपणं, अद्भ्यः सकाशात्पृथिवीद्वाराऽग्न्युत्पत्तेरभिधानम्, एवमुत्पन्नो विराट् स्वस्वरूपानुपमर्दनेनाग्न्यादित्यवाय्वात्मनाऽऽत्मानं त्रेधा विभक्तवानित्यभिधायास्य विराजोऽग्नेरर्कनाम्नोऽश्वस्येव संस्काराथ दर्शनस्याभिधानम्, एतद्गुणोपासनफलनिरूपणं, यो मृत्युरबादिप्रतिपाद्येमं विराजमसृजत स केन व्यापारेणेत्याकांक्षायां तद्व्यापारस्य निरूपणं, पीठिकापूर्वकमृगादिसृष्टेरभिधानम्, प्रसङ्गान्मृत्योरदितित्वप्रसिद्धेरभिधानम्, एतद्गुणोपासनफलनिरूपणं, उपोद्घातपूर्वकमश्वाश्वमेधयोर्निर्वचनं, स तस्मिन्नेव शरीरे गतमनाः सन्किमकरोदित्यपेक्षायां तद्व्यापरस्य निरूपणम्, " उषा वा—नैवेह " इत्यादिनाऽश्वाग्न्योरुपासनं विहितम्—इदानीं तदुभयात्मकमेकमेवेति विशिष्टोपासनं विधातुं प्रधानविधेरुन्नयनं, पशुविषयकदर्शनस्याभिधानं, फलावस्थः प्रजापतिरित्थमश्वमेधोपासनमकरोदित्यत्राधुनिकानामाचारस्य प्रमाणीकरणं, कल्पितबाह्यपशुहेतुकोमयविधस्यापि क्रतोः फलरूपेण प्रत्यक्षत्वस्याभिधानं, कोऽसौ क्रतुफलात्मकः सविता मण्डलं देवता वेति संदेहे तत्स्वरूपस्य प्रतिपादनम्, एवं क्रतोरादित्यत्वमुक्त्वा तदङ्गस्याग्नेरादित्यत्वस्य भूरादिलोकानां तच्छरीरावयवत्वस्य चाभिधानम्, उभयोरेकत्वमनूद्य मृत्य्वात्मना सूत्रेण सहैकत्वस्य प्रदर्शनम्, एवंभूताश्वमेधोपासकस्य फलनिरूपणम्, अग्निरहस्यविद्यासम्प्रदायप्रवर्तकमुनिवंशकथनं चेत्यादि. | |

इति षष्ठोऽध्यायः ।

**इत्यग्निरहस्यं नाम दशमं काण्डं समाप्तम् ।**

## इति माध्यंदिनशतपथब्राह्मणस्य पूर्वार्द्धं परिसमाप्तम् ॥



श्रीशः शरणम् ।

# अथैकादशे सङ्ग्रहापरपर्यायेऽष्टाध्यायीसंज्ञके काण्डे

## विषयानुक्रमणिका प्रारभ्यते ।




ब्रा० विषयाः पृष्ठाङ्काः

### तत्र प्रथमोऽध्यायः ।

१ आधानस्य स्वामिमतकालस्य विसर्जनद्वारा यज्ञादीनां संवत्सराद्यात्मना निरूपणम्, अमावास्यायाः संवत्सरात्मके यज्ञे प्रवेशद्वारात्मना चन्द्रस्य च तद्वारपिधायकत्वात्मना प्रशंसनम्, अमावास्यायामाधानकर्तव्यताया विधानम्, उक्तद्वारादिकल्पनोपजीवनेनामावास्याधानस्य सदृष्टांतं सनिगमनमुपपादनम्, उक्तामावास्याधानप्रशंसार्थं आपस्तम्बतैत्तिरीयशाखान्तरगतं नक्षत्राधानमनूद्य तस्य दूषणं, आधानोपक्रमस्य विवक्षितामावास्याविशेषस्य प्रदर्शनं, तस्मिन्नह्नि चन्द्रो भूम्यां वसति तदुपजीविनो देवाद्या अपीमं लोकमधिवसन्तीत्यभिधानं, एतेनामावास्यातिशयेन तस्यामाधानमतिप्रशस्तमित्युक्त्वा तस्योक्तार्थस्य निगमनं, उक्तामावास्यायां ऋक्षविशेष सम्बन्धरूपगुणस्य विधानं फलविशेषेहेत्वभिधानं च, इत्थममावास्याधानं बहुशः प्रशस्य तन्निगमनं, इत्यमाधानेन गार्हपत्याद्यग्निस्वरूपसिद्धौ तन्निष्पाद्यानां दर्शपूर्णमासानामनियमेन प्रारंभे प्राप्ते तस्य नियमनं चेत्यादि. १—६

६ एवमाधानस्यामावास्यालक्षणं प्रारंभकालं नियम्य दर्शपूर्णमासयोरप्युपवसथकालस्य निर्णिनीषयाऽऽदौ च तत्रत्यानामाहुतीनां संख्याविशेषमुपजीव्य स्तोतुमुपोद्घातकथनं, एवमग्नेर्यज्ञयोनित्वप्रदर्शनद्वारा तत्सकाशाद्यज्ञस्योत्पत्तिमुपोद्घातत्वेन प्रतिपाद्य तत्रत्यानामाहुतीनामग्नेरुत्पद्यमानानां दशसंख्यासम्पादनस्य सप्रयोजनं निरूपणं, सहेतुकां न्यूनां नवसंख्यामुपजीव्य प्रशंसनं, प्रधानानन्तरभाविस्विष्टकृद्यागापेक्षयाऽधिकामेकादशसंख्यामुपजीव्य प्रशंसनं, इत्थमिष्टिविषये स्विष्टकृतः सम्पत्तिमभिधाय पशुयागविषयो विशेषो विद्यत इत्यभिप्रेत्य तद्विशेषमुपजीव्य प्रशंसनं, दर्शपूर्णमासयोरनुयाजसंख्योपजीवनेन सम्पत्तेरभिधानम्, इत्थमेकैकं प्रशस्य स्विष्टकृदनुयाजानां सम्भूय प्रशंसनम्, एवमेकेन न्यूनत्वं चतुर्भिरतिरिक्तत्वं च प्रतिपाद्य तद्द्वारा प्रशस्याधुना द्वाभ्यां न्यूनत्वं पञ्चभिरतिरिक्तत्वं च प्रतिपाद्य तद्द्वारा प्रशंसनं, प्रकृतायाः सम्पत्तेर्निगमनं, यावज्जीवं दर्शपूर्णमासाभ्यां यजेत त्रिंशतं वा वर्षाणीति पक्षद्वयं तस्य प्रतिपादनं, तत्राजिप्राप्तियोग्यस्य कालस्य विधानं, संवत्सरात्मकयज्ञसम्बन्धिनीनां रात्रीणामाप्तये पञ्चदश वर्षाणि पुनरह्नामाप्तये च पञ्चदश वर्षाणि ताभ्यां यष्टव्यमिति विधानम्, एवमुक्ताहोरात्रविभागेन संवत्सरप्राप्तिमनूद्य सोपपत्तिकं तत्प्रशंसनम्, उक्तार्थं विदित्वा यष्टुः फलप्रतिपादनं, प्रतिपादितस्यार्थस्य निगमनं चेत्यादि. ६—११

| ब्रा० | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| ३ | पौर्णमासयागे दर्शयागे च निवृत्ते क्रमेणानुनिर्वाप्यस्य हविषोऽनुष्ठानप्रकारसहितं विधानं, वैमृधस्य हविषोऽनुनिर्वपणमनूद्य तत्प्रशंसनं, दर्शयागे विहितमनुनिर्वाप्यं हविरनूद्य तत्प्रशंसनम्, अनुनिर्वाप्यपक्षस्य निगमनम्, अनुनिर्वाप्याभावपक्षस्याभिधानम्, उक्तस्य प्रयोजनस्यानुनिर्वाप्यमन्तरेणापि सिद्धिं वक्तुं तस्यानुवदनं, दर्शयागेऽनुनिर्वाप्यस्यापि प्रयोजनस्यार्थवादपुरःसरं समर्थनं, इममेव पक्षमुपोद्बलयितुमनुनिर्वाप्यपक्षे दोषप्रदर्शनं, अनुनिर्वाप्यस्योपसंहरणं, अनुनिर्वाप्यरहितयोरेवैतयोरनुष्ठानस्य पापहतिहेतुत्वेन प्रजातिहेतुत्वेन च प्रशंसनं, अनुनिर्वापपक्षे तस्य प्रातिस्विकं यत्किञ्चिद्दक्षिणात्वेन दातव्यमिति शङ्कासमाधानसहितं विधानं, प्रकृतस्यार्थस्योपसंहरणं, वर्तिष्यमाणप्रयोगजातस्य विषयप्रदर्शनं चेत्यादि. | १२-१५ |
| ४ | **दर्शयागे पुरस्ताच्चन्द्रदर्शने नैमित्तिकी त्रिहविष्काऽभ्युदयेष्टिः**-तत्र अभ्युदयनिमित्तस्य कर्मणो विधित्सया तन्निमित्तस्य संभावनाया आदौ कथनं, एवं निमित्तसंभावनामुक्त्वा चन्द्रदर्शने सति कालविशेषोपजीवनेन कर्तव्याया व्रतचर्याया निरूपणं तत्कालविधानं च, उक्तव्रतचर्याकरणाशक्तौ हविर्निर्वापोत्तरकाले च कर्तव्यप्रकारनिरूपणं, उभयत्राप्युक्तात्प्रकारात्प्रकारान्तरकथनं, तत्र तयोश्चर्वाधारतया उपसर्जनत्वमयुक्तमित्यभिधानं, विहितांकी नैमित्तिकीमभ्युदयेष्टिमनूद्य प्रयोजनकथनेन तस्याः प्रशंसनं, अस्यामभ्युदयेष्टौ यथाशक्ति दक्षिणां दद्यादिति विधानं, चन्द्रोदये दोषदर्शनान्निर्दिष्टपक्षकथनं चेत्यादि. | १६-१८ |
| ५ | **दर्शयागे पश्चाच्चन्द्रदर्शने नैमित्तिकी त्रिहविष्काऽभ्युदितेष्टिः**-तत्र दर्शयागे पश्चाच्चन्द्रदर्शने पूर्ववन्नैमित्तिक्यास्त्रिहविष्काभ्युदितेष्टेर्विधित्सया तन्निमित्तस्य सम्भावनाया आदावुपपादनं, चन्द्रगतं दोषमुपन्यस्य तद्धेतुत्वेन चन्द्रदर्शनात्प्रागेवोपवसथः शुद्धायाममायां कार्य इति प्रतिपादनं, दर्शयागस्यातिक्रांतकालत्वे दोषमुपन्यस्य तत्रानुष्ठानप्रकारनिरूपणं, अस्या इष्टेस्त्रिहविष्कत्वं प्रतिपाद्य क्रमेण तेषां हविषां प्रदर्शनं, तानि हवींषि क्रमेणानूद्य तेषु देवतासम्बन्धादिकस्योपपादनं, अस्या इष्टेः फलप्रदर्शनं, अस्यामिष्टौ चोदकप्राप्तेष्वङ्गेषु विशेषस्य विधानं, तत्र आज्यभागयोः स्विष्टकृति च याज्याऽनुवाक्यासु यथाकाम्यत्वस्य प्रदर्शनं, दक्षिणाद्रव्यं विधाय तस्य प्रशंसनं, अन्यदपि द्रव्यं देयमिति प्रदर्शनं, एतावदेवेति दक्षिणाद्रव्यस्य नियमो नाभिप्रेत इति कथनं, उक्तनिमित्ताभावेऽपि पशुकामनयैषेष्टिः कार्येति विधानं चेत्यादि. | १९-२३ |
| ६ | **सृष्टिब्राह्मणम्**-तत्र दर्शपूर्णमासयोः सर्वात्मकलक्षणवैराजपदप्राप्तिसाधनत्वस्य विवक्षया तदुपोद्घातत्वेनाख्यायिकया सृष्टेः प्रतिपादनं, तत्राप्यखिलजगत्कारणमयस्य प्रजापतेरुपादानस्याण्डस्योत्पत्तेरभिधानं, तस्मादण्डात्संवत्सरेऽतीते प्रजापतेरुत्पत्तेरभिधानं, एतद्दृष्टान्तेनाधुनातनलौकिक्याः सर्वसृष्टेः साधारण्येन संवत्सरसाध्यत्वप्रतिपादनं, स | |

| ब्रा० | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| | प्रजापतिरुत्पत्त्यनंतरं संवत्सरेऽतीते व्याजिहीर्षया यत् "भूर्भुवः स्वः" इति भाषितवांस्तस्माद्व्याहृतित्रयाद्भूरादिवाच्यलोकत्रयं सृष्टमभूदित्यादिप्रतिपादनं, प्रजापत्युक्तेः कुमारोक्तेश्चान्यदपि साम्यमस्तीति कार्यकारणभावपुरःसरं प्रतिपादनं, हेमन्तशिशिरयोः समासाभिप्रायेण पञ्चसंख्यर्तुसृष्टेरभिधानं, ततः प्रजापतेः सहस्रायुष्ट्वं सदृष्टान्तं सकारणमुपपाद्य तस्मिन्नेवायुषि तत्कर्तृकदेवासुरसृष्टेरभिधानं, तत्रासुरान्दृष्ट्वा पापा एते मया सृष्टा इति विचार्य प्रजापतिना तदानीमेव ते पराभवं प्रापिता इति यथायथमुपपादनं, उक्तार्थदार्ढ्याय ऋचः संवादप्रदर्शनं, प्रकृतां सृष्टिमनुसन्धायाहोरात्रसमुदायरूपस्य संवत्सरस्य सृष्टेरभिधानं, एतद्वेदितुः फलाभिधानं, संवत्सरप्रजापत्योरैकात्म्यस्य प्रतिपादनं, प्रजापतेरधिदेवतानां सृष्टेरभिधानं ततस्ता अधिदेवता अपि पुरुषार्थं साधयितुं प्रजापतिवद्वृत्तिरे तत एतं दर्शपूर्णमासयागं दृष्ट्वा तेन सार्वात्म्यमकामयन्तेत्यभिधाय तस्य सार्वात्म्यस्याबात्मकत्वद्वारोपपादनं, इत्थं परमेष्ठी स्वयं सार्वात्म्यं प्राप्य पितुरपि तत्प्राप्तये एतेनायाजयदित्यभिधानं, प्राणरूपताप्राप्तिर्वाग्रूपताप्राप्तिश्च दर्शपूर्णमासयोः फलमिति प्रतिपादनं, अन्नादादिरूपफलप्राप्तिहेतुताया अभ्यभिधानं, उक्तमर्थजातं सम्भूयानूद्येदानीन्तनयजमानस्यापि दर्शपूर्णमासयागेन तादृग्फलप्राप्तिर्भवतीत्यभिधानं, प्रागादिचतसृणां मुख्यदिशां द्युलोकादीनां च सृष्टिमभिधाय तेषामुभयेषां प्रयाजाज्यभागस्विष्टकृदनुयाजरूपाभिरेकादशभिराहुतिभिर्जयो जात इत्यभिधानं, चतुर्भिः पत्नीसंयाजयागैराग्नेय्याद्यवान्तरदिशां जयो जात इति सहेतुकं प्रतिपादनं, इडया जेतव्यं प्रतिपाद्योक्ताया आधिदैविक्याः सम्पत्तेर्निगमनं, दर्शपूर्णमासयोरध्यात्मसम्पत्तेरभिधानं, तत्र पञ्चप्रयाजानां प्राणपञ्चकत्वं—आज्यभागयोश्चक्षुर्द्वितयत्वं—स्विष्टकृतः पायुरूपत्वं—त्रयाणामनुयाजानामण्डाभ्यां सह शिश्नरूपत्रितयत्वं—चतुर्णां पत्नीसंयाजानां बाहुद्वयोरुद्वयरूपत्वं—याज्याऽनुवाक्यानां हविषां च क्रमेण धातुद्वयरूपत्वं—मांसस्य हवीरूपत्वं चेत्यादिकस्य सोपपत्तिकमभिधानम्, अस्या अधिदैवाध्यात्मसम्पत्तेः फलनिरूपणं, तान्येतानि प्रयाजानुयाजादीनि प्राच्योदीच्यान्यंगजातानि तत्प्रतिनियतावयवरूपतया यज्ञशरीरनिष्पादकानीति सर्वेष्टितन्त्रसाधारणानीति प्रतिपाद्यान्येषां प्रधानहविषामावापोद्वारयोग्यतायाः प्रतिपादनं, उक्तानामङ्गाहुतीनां सम्भूय यज्ञपुरुषावयवभूतषोडशकलारूपत्वेन प्रशंसनं चेत्यादि | २४—३८ |
| ७ | दर्शपूर्णमासयागीयव्रतोपायनमीमांसा—तत्र प्रतिज्ञापूर्वकं दर्शपूर्णमासयागे व्रतोपायनविषये मीमांसाकरणं, तत्राशनानशनयोर्दोषं प्रदर्श्य तदा किं कुर्यादित्यपेक्षाय ामारण्यमोषध्यादिकमश्नीयादिति स्थापनम्, एतदारण्याशनमपि पूर्वपक्षीकृत्य तत्र सम्भवत्पक्षान्तराण्युपन्यस्य तद्दूषणम्, अशनपक्षे दोषस्य दुष्परिहारत्वादनशनपक्षोक्तदोष एव | |

| ब्रा० | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| | परिशिष्यत इत्यभिधानं, अस्यापि दोषस्य प्रश्नपूर्वकं स्वयं श्रुत्यैव परिहारः क्रियत इत्यभिधानं, पर्वरात्रौ विहितं स्वयं होममनूद्य तस्य प्रशंसनं चेत्यादि. | ३९—४० |
| ८ | उक्तविधं व्रतमुपेयुषो यजमानस्य हवीरूपताप्रतिपादनद्वारा तस्मिन्निष्क्रयण-हेतुतां दर्शपूर्णमासयागस्य प्रतिपादयितुमाख्यायिकया यज्ञोत्पत्तेरभिधानं, तत्रासुराणां कृत्यप्रतिपादनं, प्रसङ्गादतिमानो न कर्तव्य इति सकारणमसुरदृष्टान्तेन प्रतिपादनम्, इत्थमसुरैः कृतमुक्त्वा देवैः कृतस्य प्रदर्शनं, तत्र सहेतुकं प्रजापतियज्ञयोस्तादात्म्यव्यवहारस्योपपादनम्, इत्थमाख्यायिकया सिद्धमर्थं प्रकृते योजयित्वा तस्य दृष्टान्तेन सकारणमुपपादनं, कृत्स्नयज्ञस्य निष्क्रयणप्रकारस्य सोपपत्तिकं निरूपणं, तत्र प्रसङ्गादन्वाहार्यनामनिर्वचनम्, उक्तार्थस्य निगमनं, निष्क्रीतस्य यज्ञस्योपयोगकथनं चेत्यादि. | ४१—४३ |

इति प्रथमोऽध्यायः ।

## अथ द्वितीयोऽध्यायः ।

| ब्रा० | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| १ | विशिष्टजन्महेतुतया सामिधेनीप्रशंसनद्वारा पुरुषस्य जन्मत्रयनिरूपणं, जन्मनस्त्रित्वं प्रदर्श्य तस्मिन्नर्थे प्रसिद्धिप्रदर्शनं, यज्ञादेव पुनर्जन्मत्रयं प्रदर्श्य सामिधेनीसंख्याद्वारा प्रथमस्य जन्मनः समर्थनं, द्वितीयं तृतीयं च जन्म समर्थ्यैतस्य यज्ञसम्बन्धिजन्मत्रयस्य पूर्वोक्तजन्मत्रयदृष्टान्तेन निगमनं, तासां सामिधेनीनां आद्योत्तमयोस्त्रिरावृत्तिं विधाय तस्याः प्रशंसनम्, एवमभ्यस्ताभिः सह ताः पञ्चदश सामिधेन्यो भवन्ति ताश्चाघारादिसमिष्टयजुरन्तानां पञ्चदशाहुतीनां क्रमेणानुवाक्यास्थानीयास्तथाऽत्या मंत्रा निगदाश्च याज्यास्थानीया इत्यभिधाय तद्वाराऽऽसामाहुतीनामितरयागवद्याज्याऽनुवाक्यावत्त्वसम्पादनं चेत्यादि. | ४१—४७ |
| २ | प्रसङ्गादनुवाक्यायाज्ययोश्छन्दोविशेषं विधाय तत्प्रशंसनं, वषट्कारानन्तरभाविनं होमविधिमनूद्य सकारणं तत्प्रशंसनं, यजमानस्याहुतिशरीरत्वं प्रतिपाद्य तत्प्रसङ्गादाहुतिनामनिर्वचनं चेत्यादि. | ४८—४९ |
| ३ | सामिधेन्यनन्तरभाविनौ आघारौ नामरूपात्मना स्तोतुं तत्सृष्टेराख्यायिकया प्रतिपादनं, तस्यां चाग्निवाय्वादित्यानां पृथिव्यन्तरिक्षद्युलोकानां च ब्रह्मणः सकाशात्सृष्टिमभिधाय तेषामुभयेषां परस्परमधिष्ठात्रधिष्ठेयभावसम्बन्धस्य सोपपत्तिकं प्रदर्शनं, तदेव स्रष्टृ ब्रह्म "तत्सृष्ट्वा तदेवानुप्राविशत्" इति न्यायेन सर्वं जगन्नामरूपाभ्यां व्याप्नोदित्यभिधानं, तत्र तयोर्नामरूपयोः स्वरूपं गुणं च प्रतिपाद्य तद्वेदनस्य प्रशंसनं, यक्ष्यगुणेऽप्येवं योज्यमित्यभिधाय तत्र नामरूपयोर्मध्ये रूपस्यैव ज्यायस्त्वप्रतिपादनम्, एतद्वेदितुः फलनिरूपणम्, एतन्नामरूपोपलक्षितव्यापकब्रह्मस्वरूपप्राप्तिरेवामृतत्वकारणमित्यभिधानम्, अत्रापि दर्शपूर्णमासयोर्ब्रह्मप्राप्त्युपायतया नामरूपात्मकावाघारौ क्रियेते इति प्रकृतानुसरणम्, एतत्सिद्ध्यै मनसोरूपतादात्म्यस्य प्रतिपादनं, नामरूपात्मकस्य प्रपञ्चस्य मध्ये प्रथमाघारेण रूपप्राप्तिरुक्ता तथैव द्वितीयाघारेण नामावाप्तिरपि भवतीत्यभिधानं, | |

| ब्रा० | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| | इत्थं नामरूपावाप्तिद्वारा यजमानस्य कृत्स्नजगत्प्राप्तिरेव भवतीति प्रतिपादनम्, शंयुवाकान्ते समन्त्रकस्याभिमर्शनस्य विधित्सयाऽऽदौ तन्निमित्तस्य प्रतिपादनम्, न्यूनातिरिक्तरूपदोषस्य शमनाय समन्त्रकस्याभिमर्शनस्य विधानं, तत्रोक्तमन्त्रस्य व्याख्यानम्, उक्तार्थस्य निगमनं चेत्यादि. | ४९–९३ |
| ४ | अनयोराधारयोर्दर्शपूर्णमासात्मना स्तवनद्वारा अधिदैवमध्यात्मं च दर्शपूर्णमासयोः प्रतिपादनम्, एवं दर्शपूर्णमासौ चन्द्रादित्यात्मकौ इत्युक्त्वा तयोर्द्यावापृथिव्यहोरात्ररूपत्वस्याभिधानम्, अधिदैवार्थस्य निगमनं, प्रतिज्ञापूर्वकमध्यात्मस्यार्थस्य मीमांसाकरणं, तत्र दर्शपूर्णमासयोः प्राणोदानत्वयोरन्नादान्नप्रदत्वयोश्च सोपपत्तिकमभिधानम्, एतद्वेदितुः फलनिरूपणम्, एतयोर्मनोवाग्रूपताऽभिधानम्, इत्थमधिदैवमध्यात्मं देहमध्ये भेदेन द्वैविध्यदर्शनस्य प्रयोजनकथनम्, एतत्प्रयोजनमधिकृत्याक्षेपसमाधानयोः प्रतिपादनम्, अत्र विषये केषांचिच्छाखिनां मतमुपन्यस्य तन्निराकरणम्, उक्तस्य चरुपक्षायुक्तत्वस्य निगमनं, दर्शपूर्णमासयोः समापनहेतुतयाऽप्याघारयोः प्रशंसनं चेत्यादि. | ९४–९७ |
| ५ | दर्शपूर्णमासावश्वमेधात्मना स्तोतुं प्रस्तावकथनम्, उक्तमर्थं प्रतिपादयितुं चन्द्रमसोऽश्वमेधत्वेन निरूपणं, चन्द्रमसो मेध्याश्वसादृश्यस्य प्रश्नपूर्वकं सम्पादनम्, एवमन्यस्याप्यङ्गजातस्य सम्पादनं, तत्र विवर्तननिमित्तेष्टेर्विधित्सयाऽस्य चन्द्रात्मकस्याश्वस्य विवर्तनस्य सम्पादनं, विवर्तननिमित्तेष्टेर्विधानं, पूर्णमासयागस्याश्वमेधयागरूपताऽभिधानम्, अस्याश्वमेधस्य संवत्सरकालीनत्वस्याप्यभिधानम्, इत्थमश्वमेधरूपतामग्निहोत्रदर्शपूर्णमासयोर्यागयोः प्रतिपाद्य तत्र विदुष एवाधिकार इति प्रतिपादनम्, उक्ताया अग्निहोत्रदर्शपूर्णमासयागयोरश्वमेधसम्पत्तेर्निगमनं चेत्यादि. | ९९–६१ |
| ६ | उपासनार्थं यज्ञशरीरावयवत्वेन प्रणीतादीनामनुष्ठेयपदार्थानामधियज्ञमध्यात्मं च सम्पत्तिसम्पादनं, तत्र प्रणीतानामपां यज्ञशिरस्त्वेनानुसन्धानकथनम्, इध्मस्य प्राणरूपत्वेनोपासनकथनं, सामिधेनीषु सकलमध्यस्थावयवत्वस्याभिधानम्, आघारयोर्मनोवाग्रूपत्वेनोपासनकथनं, पञ्चसु प्रयाजेषु क्रमेण मुखनासापुटद्वयकर्णद्वयरूपशीर्षण्यपञ्चप्राणरूपानवयवान्प्रकल्प्य पञ्चानामपि प्रयाजानां तत्तदवयवरूपप्राणोपासनकथनम्, आज्यभागयोश्चक्षुर्द्वयरूपत्वं विधाय तद्रूपेणोपासनविधानं, दर्शे पूर्णमासे चाग्नेययागो यज्ञशरीरस्य दक्षिणार्धः—उपांशुयाग उभयत्र हृदयं—पूर्णमासे अग्नीषोमीययाग उत्तरार्धः—दर्शे तु ऐन्द्रः सान्नाय्ययाग उत्तरार्धः—स्विष्टकृद्यागोऽसमध्यमागः—प्राशित्रं तु शत्रुरूपं इति यथायथं विभाव्य तत्तद्रूपेणोपासितव्यमित्यभिधानं, तत्र प्राशित्रस्य शत्रुरूपत्वात्तदवदानस्य शत्रुनिरसनार्थत्वं प्रतिपाद्य तद्रूपेणोपासनकथनम्, इडाया उदरत्वं—त्रयाणामनुयाजानामवाङ्मुखप्राणत्रयरूपत्वं—सूक्तवाकशंयुवाकयोर्बाहुद्वयरूपत्वं—चतुर्णां पत्नीसंयाजानां क्रमेणोरुद्वयाष्ठीवद्वयरूपत्वं—समिष्टयजुषः पादद्वयरूपत्वं च | |

| ब्रा० विषयाः | पृष्ठाङ्काः | ब्रा० विषयाः | पृष्ठाङ्काः |
|---|---|---|---|
| यथायथं विभाव्य तत्तद्रूपेणोपासनविधानम्, एवं शिरःप्रभृति पादान्ता अवयवा अधियज्ञमध्यात्मं चाहुतिभिरेव परिकल्पिताः सन्तः सम्भूयैकविंशतिसंख्याकाः—तत्संख्याद्वारेण सूर्यलोकप्राप्तिरूपफलनिरूपणद्वारा तासामाहुतीनां परिगणनम्, उक्तोपासनफलयोः साध्यसाधनभावस्य संपादनं, उक्तोपासनेन सह दर्शपूर्णमासावनुतिष्ठतो यजमानस्येतरस्माद्बहुतरफलभाक्त्वस्य विचारपूर्वकं प्रदर्शनं, तत्रात्मयाजिदेवयाजिनोर्मध्ये आत्मयाजिनः श्रेयस्त्वप्रतिष्ठापनं, तस्य सर्वपापक्षयरूपफलस्य सदृष्टान्तं कथनं, देवयाजिनः ईदृक्फलव्यतिरेकस्य प्रदर्शनं चेत्यादि. | ६१–६७ | | |
| ७ यज्ञादीनां संवत्सराद्यात्मनोपासनं विधाय तत्तद्वैशिष्ट्येन दर्शपूर्णमासयागस्य विशिष्टफलसाधनतायाः प्रतिपादनं, तत्र दर्शपूर्णमासस्य संवत्सरात्मत्वमुपवर्ण्य तद्रूपेणोपासनविधानं, ऋत्विक्षु वसन्ताद्यृतुत्वमारोप्य तद्रूपेणोपासनविधानं, हविःषु मासात्मत्वं तत्सम्बन्धिषूलूखलमुसलादिपात्रेष्वर्द्धमासात्मत्वं चारोप्य तद्रूपेणोपासनविधानं, परिवेषणसाधनयोर्धृष्ट्योरहोरात्रबुद्ध्योपासनं कर्तव्यमिति विधानं, सामिधेनीनां पृथिव्यादिदेवतारूपेणोपासनविधानं, तत्र प्रथमोत्तमयोर्विहितया त्रिरावृत्त्या जेतव्यस्य प्रदर्शनम्, इत्थं सामिधेन्युपासनस्य प्रतिष्ठाफलस्य निगमनम्, आघारयोर्ऋतसत्यात्मनोपासनं विधाय तत्फलस्य कथनं, प्रयाजेषु त्विष्याद्युपासनविधानम्, एतच्चोपासनमनुमन्त्रणमन्त्रैः कार्यमित्यभिधानम्, उक्तार्थस्यारुणेयश्वेतकेतूक्त्या दृढीकरणं, भूतभविष्यदात्मनाऽऽज्यभागयोर्ध्यानं विधाय तत्फलकथनम्, आग्नेययागस्य ब्रह्मजातित्वमभिधाय तद्वेदनस्य फलकथनम्, उपांशुयागस्य क्षत्रजात्यात्मकत्वं प्रतिपाद्य तद्वेदनस्य समर्थनपूर्वकं फलनिरूपणम्, आग्नेयादीनां पौर्वापर्यक्रमस्य प्रशंसनं, दधिपयोलक्षणसान्नाय्ययागस्य राष्ट्ररूपेण ध्यानं विधाय तस्य समर्थनं, स्विष्टकृद्यागस्य तपोरूपत्वेनोपासनं विधाय तत्फलस्याभिधानं, प्राशित्राख्यावदानस्य लोकबुद्ध्योपासनं विधाय तत्फलकथनम्, इडायाः श्रद्धारूपेणोपासनं विधाय तत्फलकथनम्, अनुयाजत्रयस्य क्रमेणाशनिह्रादुन्युल्कुषीरूपत्वमुपजीव्याभिचरतः प्रयोगे अनुयाजानामनुमंत्रणमंत्राणां सप्रयोजनं सकारणं विधानम्, एतस्याशन्याद्यात्मकत्ववेदनस्य फलनिरूपणं, यज्ञस्योक्ताशन्यादिरूपत्वमुपन्यस्यानुयाजांतत्वस्य निषेधकरणम्, एतेषां स्वर्गप्राप्तिप्रतिबन्धकपापप्रतिक्षेपहेतुत्वेन प्रशंसनं, प्रयाजानामनुयाजानां च होमे धर्मविशेषस्य विधानम्, एवमनुयाजविषयं वक्तव्यं प्रतिपाद्य सूक्तवाकस्य संस्थात्वप्रतिपादनम्, एतद्वेदनस्य फलनिरूपणं, शंयुवाकस्य प्रतिष्ठात्मत्वप्रतिपादनम्, पत्नीसंयाजानां मिथुनरूपतया प्रजातिहेतुत्वमभिधाय तद्वेदनस्य फलाभिधानं, समिष्टयजुषोऽन्नरूपत्वमभिधाय तद्वेदनस्य फलाभिधानं, यजमानस्यर्त्विजां च संवत्सराद्यात्मकत्वस्य सोपपत्तिकमभिधानं, यजमानस्य वेदेर्दक्षिणभागे उपवेशनस्य विधित्सया दक्षिणवेद्यन्तस्य तुलादण्डरूपत्वाभिधानं, दक्षिणवेद्यन्तस्य तुलारूपतां | | | |

| ब्रा० | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| | जानतो यजमानस्य नैतद्भवतीत्यभिधानं चेत्यादि. | ६७—७८ |
| | इति द्वितीयोऽध्यायः । | |
| | **अथ तृतीयोऽध्यायः ।** | |
| १ | **अग्निहोत्रोपासनम्**—तत्राग्निहोत्रमाश्रित्य तत्प्रशंसामुखेन तदवयवाश्रितानामुपासनानामभिधानं, तत्रापि वाचोऽग्निहोत्रीधेनुरूपत्वं मनसस्तदीयवत्सरूपत्वं तेजसो हविषश्च श्रद्धासत्यरूपत्वं च सोपपत्तिकमभिधाय तद्रूपेणोपासनं कर्तव्यमिति विधानम्,अस्यार्थस्य जनक याज्ञवल्क्ययोरुक्तिप्रत्युक्तिभ्यां समर्थनं, होमद्रव्ये मुख्यद्रव्यं पयस्तस्याभावे व्रीहियवौ तयोरप्यभावे आरण्या ओषधयो वैणवश्यामाकाद्यास्तासामभावे वानस्पत्यं फलादिकं तस्याप्यभावे आप इत्यादेः प्रतिनिधिद्रव्यस्योत्तरोत्तरं प्रश्नोत्तरपूर्वकमभिधानम्, अपामप्यभावे केन होम इति जनकेन पृष्टे मनसि रहस्यत्वेन स्थापितं "सत्यवदनरूपो धर्म एव हविष्ट्वेन श्रद्धारूपाग्नौ होतव्यः" इतीममर्थं याज्ञवल्क्यः प्राहेत्यर्थस्य निरूपणं, विद्योपदेशात्संतुष्टेन जनकेन तस्मै याज्ञवल्क्याय धेनुशतरूपं पारितोषिकं दत्तमिति प्रतिपादनं, प्रवसद्विषयेऽग्निहोत्रहोमस्य मनः प्राणात्मना सांतत्यस्य श्लोकमन्त्रैः प्रतिपादनं, तत्र प्रथमेन श्लोकेन प्रवासविषयं प्रश्नमुद्भाव्य द्वितीयश्लोकेन तस्योत्तरकथनं, तृतीयश्लोकेन प्रवसतो यजमानस्यानवधानयुक्तत्वे दोषमभिधाय चतुर्थश्लोकेन तन्मनस्कस्य प्रवसतो यजमानस्य मनसैवाग्निहोत्रसम्पत्तिमभिधाय प्राणरूपत्वस्याप्यभिधानं, उक्तार्थेन सहैव तत्तच्छ्लोकमंत्रस्य तात्पर्यतो व्याख्यानम्, उक्तेऽर्थे विद्वत्प्रसिद्धेरभिधानं चेत्यादि. | ८०—८३ |
| २ | **षण्मिथुनब्राह्मणम्**—तत्र तावदेतस्मिन्नेवाग्निहोत्रे सफलं मिथुनवेदनविधानं, यजमानः पत्नी च वत्सोऽग्निहोत्री च स्थाल्यङ्गाराश्च स्रुक्स्रुवश्च आहवनीयः समिच्च—आहुतिः स्वाहाकारश्च—इत्येतेषां षण्णां मिथुनानां क्रमेण प्रदर्शनम्, एतद्वेदनस्योक्तफलसाधनत्वनिगमनं चेति. | ८३—८४ |
| ३ | **ब्रह्मचारिधर्मनिरूपकं ब्राह्मणम्**—तत्र तावदग्निहोत्रादिनियमप्रसङ्गादागतं ब्रह्मचारिधर्मं निरूपयितुमाख्यायिकाया अभिधानं, तस्यां च ब्रह्मचारिणः सर्वदा रात्रौ समिदाधानमत्यावश्यकमिति सोपपत्तिकं प्रतिपादनं, समिदाधानादिब्रह्मचर्यधर्माचरणस्य सत्रयागात्मना निरूपणं, तत्र समिदाधानस्य सत्रयागात्मना स्तवनोत्तरमात्मनिष्क्रयणहेतुत्वेनापि प्रशंसनं, समिदाधानेऽग्नौ प्रविष्टस्य चतुर्थपादस्य परिक्रयप्रदर्शनम्, मृत्यौ प्रविष्टस्य पादस्य परिक्रयार्थत्वेन भिक्षाचर्यस्य विधानम्, आचार्यगतस्य पादस्य तत्परिचर्यया परिक्रयणस्य प्रदर्शनम्, एवं ब्रह्मचर्यायां क्रियमाणस्य परिचरणस्य परिक्रयार्थत्वमुक्तमिदानीं समृद्ध्यादिहेतुत्वस्याप्यभिधानम्, विदुषो ब्रह्मचारिणः फलनिरूपणं चेत्यादि. | ८४—८७ |
| | इति तृतीयोऽध्यायः । | |

| ब्रा० विषयाः | पृष्ठाङ्काः |
|---|---|

## अथ चतुर्थोऽध्यायः।

१ दर्शपूर्णमासयागस्यैव भावनाविशिष्टानां केषाञ्चन मित्रविन्दादीनां धर्माणां प्रतिपादनम्, तत्र प्रथमं विजिगीषुकथारूपेण प्रश्नप्रतिवचनाभ्यां दर्शपूर्णमासावेव सर्वोत्पत्तिनिमित्तत्वेन स्तोतुं तत्प्रश्नप्रतिप्रश्नोपयोगिन्या आख्यायिकायाः प्रतिपादनम्, तस्यां च विवदमानानां मध्ये उद्दालकस्य पुरतः सप्रयोजनं सकारणं निष्कोपधानकथनम्, उदीच्यान् देशान् धावयद्भिर्वृतैर्ब्राह्मणैः स्वैदायनेन संहोद्दालकाय दत्तं ब्रह्मोद्याह्वानकथनम्, तत्र तयोः संवादस्योपक्रमप्रकारनिरूपणं, गौतमस्य पुत्रायोद्दालकाय स्वैदायनेन पृष्टस्य दर्शपूर्णमासविषयकप्रश्नचतुष्टयस्य निरूपणम्, उक्तप्रश्नानामुत्तराणि दातुमनीश्वरस्योद्दालकस्याग्रिमप्रवृत्तेः प्रकारकथनम्, तत उद्दालकेन सह विवदमाने त्वयि परिणामः कः संवृत्तः इत्यन्यैर्ऋषिभिः पृष्टेऽयमुद्दालको ब्रह्मिष्ठस्य गौतमस्य पुत्र इत्येतावदेवेत्युत्तरं दत्त्वैनमल्पज्ञं सन्तं तद्विपर्ययेण यो गृह्णीयात्तस्य मूर्द्धा विपतेदिति स्वैदायनकर्तृकोद्घोषस्य कथनं, तत उक्तप्रश्नरहस्यज्ञानाय शिष्यभावेनोपगतायोद्दालकाय प्रागुदीरितप्रश्नचतुष्टयस्य सप्रपञ्चं सोपपत्तिकं क्रमात्स्वैदायनप्रत्तोत्तरचतुष्टयस्य निरूपणम्, उक्तार्थं वेदितुः फलाभिधानं चेत्यादि. ८९–९७

२ इत्थं दर्शपूर्णमासयोः प्रयाजादियागाञ्छरीरोत्पत्तिनिमित्तत्वेन प्रतिपाद्याधुना तेषां यागानां स्रुगादानप्रभृतिहोमान्तानां केषाञ्चन धर्माणां विचारणा, तत्र स्रुगादानस्य प्रकारविशेषं दर्शयितुं प्रस्तावकथनं, तत्रैकीयं मतं प्रदर्श्य दोषाभावप्रतिपादनपुरःसरमानुगुण्यकथनपुरःसरं च स्वकीयपक्षस्य सविशेषमभिधानम्, अतिक्रमणविषयकविचारस्य सविशेषं निरूपणं, स्रुग्धारणविषयकस्य धर्मविशेषस्य विधानं, तत्र पूर्वपक्षमुद्भाव्य तं दूषयित्वा कर्तव्योत्तरपक्षस्य कथनं, न्यक्तिर्यगूर्ध्वक्नुपणबहिःश्र्यन्तःश्र्यात्मनां षण्णामाश्रावणानां स्वरूपाणां प्रदर्शनं, तत्र तत्सद्धैव न्यक्क्नुपणबहिःश्र्यात्मकाश्रावणानां प्रयोगेऽनिष्टफलं दर्शयित्वा तेषामप्रयोज्यत्वप्रदर्शनं, तिर्यगूर्ध्वान्तःश्र्यात्मकाश्रावणानां प्रयोगे इष्टफलं दर्शयित्वा तेषां प्रयोज्यत्वप्रदर्शनं च, तत्रापि षष्ठस्यान्तःश्रिलक्षणाश्रावणस्य स्वाभिमतत्वं प्रदर्शयितुं भूयः प्रशंसनम्, अस्मिन्नेव षष्ठे आश्रावणे स्वरविशेषस्य विधानम्, आश्रावणानंतरं भाविनो होमस्य विशेषं वक्तुं प्रस्तावकथनं, तत्रैकीयं मतं प्रदर्श्य तद्दूषयित्वा पुनरन्यं पक्षमुपन्यस्य तद्दूषणम्, इत्थं पक्षद्वयं प्रत्याख्यायोक्तपक्षद्वयगतदोषविरहेण प्राशस्त्यप्रदर्शनसहितं सिद्धान्तकथनं, सन्तृप्ताहुतीनां फलहेतुताप्रदर्शनद्वारा तदर्थमध्वर्युद्वैविध्यस्य सोपपत्तिकमभिधानम्, उक्तं सन्तर्पणमुपसंहारव्याजेनानूद्य सन्तृप्ताहूतीनां विशिष्टफलाभिधानम्, एवं श्रुत्या स्वाभिमतमाहुतिसंतर्पणं प्रदर्श्य याज्ञवल्कीयस्य मतस्य पक्षान्तरत्वेन प्रदर्शनम्, अत्रापि पूर्वोदितफलप्रदर्शनं, यदिदं स्रुगादानादिहोमान्तं कर्म सविशेषं निरूपितं तत्परिज्ञानवतैवाध्वर्युणा भवितव्यमिति दर्शयितु-

| क्रा० | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| | माख्यायिकाया अभिधानं, तस्यां च शौल्बायनेनाध्वर्युणा कृतं गृहपतेरधिक्षेपं प्रतिपाद्य तस्य गृहपतिना यदुत्तरं दत्तं तस्य प्रतिपादनम्, एवं प्रत्युक्तोऽध्वर्युः शिष्यभावेन तं गृहपतिमुपगम्य तस्मात्स्रुचोरादानविषयं रहस्यज्ञानं सम्पादितवानित्यभिधानम्, अन्ते एतद्ब्राह्मणार्थविदमेवाध्वर्युं वृणीतेति निगमनं चेत्यादि. | ९७–१०६ |
| ३ | **मित्रविन्देष्टिः**—तत्र मित्रविन्दाख्यायाः काम्येष्टेर्विधित्सया तत्र हविरुत्पत्तिक्रममन्नाद्यादिकामनोपेतमधिकारिविशेषं च दर्शयितुमाख्यायिकाकथनद्वाराऽऽदौ श्रिय उत्पत्तिमुत्पन्नायाश्च तस्या देवैरभिध्यानकथनम्, इमां श्रियं हत्वाऽस्याः सम्बन्ध्यन्नाद्यादिकं वयं स्वीकुर्यामेति देवैरुक्ते प्रजापतिनोक्तं यल्लोकेऽपि स्त्रियं केऽपि नैव घ्नन्ति प्रत्युत जीवन्त्या एव तस्याः सम्बन्धि धनादिकमाददत इत्यर्थस्याभिधानम्, एवं प्रजापतिनोक्ते केन देवेन किं स्वीकृतमिति तत्प्रदर्शनम्, एवमग्न्यादिभिरन्नाद्यादिषु बलात्स्वीकृतेषु सत्सु श्रीः प्रजापतिं प्राह मदीयमन्नाद्यादिकं देवा अहार्षुरिति तदा प्रजापतिः प्रत्याह यज्ञेन देवेभ्यः पुनरन्नाद्यादिकं याचस्वेत्याद्यर्थस्याभिधानम्, अन्नाद्यादिप्राप्तिनिमित्तभूताया दशहविष्केष्ट्या उत्पत्तिमभिधाय तेषां हविषां तद्देवतानां च परिगणनम्, हविषां निर्वापादिसंस्कारेषु "समिधो यजति" इत्यादाविव चोदकप्राप्तं क्रममेवाभिप्रेत्य तं विहायात्र केवलं प्रदानं तु सर्वेषां सहैव भवत्विति विधित्सयाऽन्यादिदशदेवतानामाक्षरवत्या अनुवाक्याया याज्यायाश्च सविशेषं विधानम्, तत्तत्प्रधानयागसम्बन्ध्युपहोमानामुत्पत्तिमभिधाय तानुपहोममन्त्रान्पठित्वा तत्तदाहुत्या तस्य तस्यान्नाद्यादेः परिक्रयेण प्राप्तिर्भवतीत्यभिधानं, देवताहविरुपहोमे दक्षिणात्वेन देयानां गवां दशसंख्यामनूद्य तस्याः प्रशंसनम्, एतस्यामिष्टौ चोदकप्राप्तेष्वङ्गेषु कचिद्विशेषं दर्शयितुं तेषामनुक्रमणम्, तत्राज्यभागयोरनुवाक्ययोः पुष्टिशब्दयुक्तत्वस्य सौविष्टकृत्योः संयाज्ययोः सहस्रशब्दयुक्तत्वस्य चाभिधानं सहैव क्रमेण तन्मन्त्राणामभिधानं च, अस्या इष्टेर्मित्रविन्देति नाम निर्वक्तुं सम्प्रदायागत्यभिधानम्, पुराकल्पव्याजेन साधारण्येन विहितायामिष्टौ फलाभिधानद्वारोपसंहारमिषादधिकारिणः प्रदर्शनं चेत्यादि. | १०७–११३ |
| ४ | **हविरादिसमृद्ध्यभिधायकं ब्राह्मणम्**—तत्र दाहविपतनादिदोषदुष्टस्यापि हविषः समृद्ध्युपायभूतोपासनस्य विधित्सया प्रतिज्ञाकरणम्, तत्र विधित्सितस्योपासनस्य विषयभूतोपास्यस्य प्रतिपादनम्, तत्र यतोऽग्निर्ब्रह्मणो द्वारं ततस्तेनोपदग्धो हविर्योग अग्न्याख्यद्वारेण ब्रह्मलोकप्राप्त्युपाय इति कथनम्, तथा तत्सायुज्यादिकमपि फलं भवतीति प्रतिपादनम्, वायुर्ब्रह्मद्वारमित्याद्युपासनस्य फलाभिधानम्, अपक्वे हविषि जलबुद्ध्योपासनस्य फलकथनम्, उपरक्ते हविषि चन्द्रबुद्ध्योपासनस्य फलाभिधानम्, लोहिते हविषि विद्युद्बुद्ध्योपासनस्य फलनिरूपणम्, इत्थमपाकातिपाकहविषामुपासनान्यभिधायाधुना सुशृते हविष्यादित्यबुद्ध्योपासनस्य फलोपवर्णनम्, उक्ता हविषः | |

ब्रा० विषयाः पृष्ठाङ्काः | ब्रा० विषयाः पृष्ठाङ्काः

समृद्धिरुपासकस्यैवोक्तफलहेतुः स्यादिति निगमनम्, इत्थं हविषः समृद्धिमुपपाद्य प्रसङ्गात्तत्साध्यस्य यज्ञस्यापि न्यूनत्वादिदोषपरिहाराय समृद्धिं वक्तुं प्रतिज्ञाकरणम्, तत्र यज्ञसमृद्धिं वक्तुं न्यूनातिरिक्तत्वादिधर्माणां यज्ञावयवत्वप्रतिपादनम्, एतदुपजीव्य यज्ञसमृद्ध्यर्थं तदुपासनकथनम्, इत्थं न्यूनातिरिक्तदोषस्योपासनया समीकरणमुक्त्वा सम्यगनुष्ठितस्याप्यङ्गस्याधिकफलसिद्ध्यर्थमुपासनविधानम्, प्रतिज्ञाताया यज्ञसमृद्धेर्निगमनम्, तत्र समृद्धिरूपवेदनस्य फलनिरूपणं चेत्यादि. ११४-११८

इति चतुर्थोऽध्यायः ।

अथ पञ्चमोऽध्यायः ।

१ आश्वत्थ्योररण्योरुत्पत्तिख्यापकं ब्राह्मणम्—तत्र दर्शपूर्णमासविकृतिभूतांश्चातुर्मास्यादीन्प्रशंसितुमादौ तत्राग्निमन्थनसद्भावात्तत्साधनभूतयोररण्योरश्वत्थविकृतित्वस्य विधित्सया तदर्थमाख्यायिकाया अभिधानं, तस्यां चोर्वशीपुरूरवसोः ससंवित्कस्य जायापत्यभावस्य वर्णनं, तत्रोर्वशी यावता कालेन गर्भवती बभूव तावच्चिरकालपर्यन्तमस्मिंल्लोके पुरूरवसि निवसति स्मेत्यर्थस्याभिधानं, एवमुर्वश्यां चिरकालं मनुष्यलोकसंस्थायिन्यां तद्विरहमसहमानैर्गन्धर्वैः कृतस्य तद्धरणोपायस्य सप्रकारकं प्रदर्शनं, तत्र गन्धर्वाणां कौशल्येन जातं समयभङ्गं दृष्ट्वोर्वश्यास्तिरोभावकथनं, उर्वशीदर्शनकामनया कुरुक्षेत्रसमीपेऽन्यतःप्लक्षनाम्नः सरसस्तीरे सञ्चरतः पुरूरवसः पुरतो जलचरपक्षिविशेषरूपं परिहायाऽन्याभिरप्सरोभिः साकमुर्वश्या आत्मनः प्रादुर्भावकथनम्, अप्सरोगणमध्यस्थितामुर्वशीं ज्ञात्वा हे उर्वशि ! मा गास्तिष्ठ गमनान्निवर्तस्व क्षिप्रं संवदावहै इत्यादिरूपेण पुरूरवसः प्रार्थनाकरणस्योर्वश्यास्तत्प्रत्याख्यानकरणस्य च यथायथं मंत्रद्वयेनोपवर्णनम्, उर्वश्या एवं निराकृतस्य पुरूरवस एकेन मंत्रेण दुःखप्रदर्शनम्, एवं परिदेवने कृते तन्निवारणार्थमुर्वश्या कृतस्य तत्समाधानस्यकेन मंत्रेण सप्रकारकं कथनम्, इत्थं सहसा प्रातुकामं पुरूरवसं निराकृत्योर्वश्या स्वप्राप्त्युपायान्तरं तस्योपदेष्टुं तत्कृतोपकारस्यैकेन मंत्रेणाविष्करणकथनं, यदत्र मंत्रपञ्चकात्मक उर्वशीपुरूरवसोरुक्तप्रत्युक्तलक्षणसूक्तैकदेश उक्तस्तत्सूक्तं पञ्चदशर्चं बह्वृचाः प्राहुरित्याद्यभिधानम्, इत्थमुक्तिप्रत्युक्तिभ्यां विलीनहृदययोर्वश्या पुनः पुरूरवसा सह संवत्सरस्यान्तिमायां रात्र्यां पुनर्मेलनार्थं समयं कृत्वा तमनुसृत्य मेलनं कृत्वा च गन्धर्वास्ते प्रातर्वरं दास्यन्ति तदा त्वं हे गन्धर्वाः ! युष्माकं मध्येऽहमप्येको भवानीति वरं वृणीष्वेत्यर्थस्य निरूपणम्, इत्थं गन्धर्वरूपत्वे पुरूरवसा प्रार्थिते सति तत्प्राप्त्युपायफलस्य गन्धर्वैरुपदेशस्यानुक्रमणं, तत्र प्रथमं गन्धर्वत्वप्रापकं यागं कर्तुं पुरूरवसे गन्धर्वैर्यज्ञार्होऽग्निः स्थाल्यामोप्य प्रत्त इत्यभिधानम्, एवं गन्धर्वैर्दत्ते सति पुरूरवास्तमग्निम् उर्वशीगर्भाज्जातं कुमारं चादाय तन्मध्यात्स्थालीसहितमग्निमरण्ये एव निधाय कुमारेणैव सह ग्रामे स्वस्थानमाजगामेत्याद्यर्थस्य प्रतिपादनं, ततः पुरूरवाः पुनररण्यमेत्य निहितं सस्थ-

| ब्रा० | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| | लौकमग्निं यदाऽपश्यत्तदा सोऽग्निरश्वत्थवृक्षात्मना परिणतः स्थाली च शमीवृक्षात्मना परिणता इति दृष्टवानित्याद्यभिधानम्, इत्थमग्नौ तिरोहिते सति पुरूरवाः पुनर्गन्धर्वानाजगाम गन्धर्वाश्च तस्मै पुनस्तादृशमेवाग्निं प्रापयितुं चातुष्प्राश्यपचनात्मकं समिद्वतीभिर्घृतवतीभिर्ऋग्भिस्तिसृणामाश्वत्थीनां समिधामभ्याधानात्मकं च व्रतमुपादिशन्नित्यर्थकथनम्, उक्तं व्रतरूपमुपायं व्यवहितं मत्वोत्तरारणिमाश्वत्थीमधरारणिं च शमीमयीं कृत्वा मन्थनेन योऽग्निर्जनिता सोऽस्मद्दत्त एवेति पुनरन्योपायकथनं, तत्रोक्तं पक्षमप्यन्तर्हितं मत्वाऽरणिद्वयमप्यश्वत्थवृक्षजं कर्तव्यमिति पक्षान्तरनिरूपणम्, इत्थं गन्धर्वैरुपदिष्टे पुरूरवास्तत्सर्वं तथैव कृत्वा गन्धर्वाणां मध्ये एक आसेत्यादिकथनम्, इत्थमाख्यायिकासिद्धस्यारण्योरश्वत्थोपादानत्वस्याधुनातनयजमानस्यापि विधानं चेत्यादि। | ११९—१२७ |
| २ | दर्शपूर्णमासयाजिवच्चातुर्मास्ययाजिनोऽपि आत्मयाजित्वं देवयाजित्वं चेति द्वैविध्यप्रदर्शनार्थं तत्रत्यैर्यागैः शरीरावयवकल्पनस्याख्यायिकया प्रतिपादनं, तत्र तस्य प्रजापतेर्दक्षिणहस्तत्वेन वैश्वदेवाख्यं पर्व कल्पयित्वा तत्राप्याग्नेयादिहविष्पञ्चकमङ्गुष्ठाद्यङ्गुलिपञ्चकत्वेन मारुतं हविर्मणिबन्धत्वेन वैश्वदेवं हविः कूर्परत्वेन द्यावापृथिवीयं हविर्दोर्दण्डरूपत्वेन च प्रकल्प्यमिति सोपपत्तिकमभिधानं, वरुणप्रघासाख्यं द्वितीयं पर्व दक्षिणपादत्वेन प्रकल्प्य तत्राग्नेयादिहविष्पञ्चकमङ्गुष्ठाद्यङ्गुलिपञ्चकत्वेन ऐन्द्राग्नं हविः कुल्फद्वयरूपत्वेन वारुणं हविर्जङ्घाद्वयरूपत्वेन मारुतं हविरूरुद्वयरूपत्वेन कायं हविरनूकरूपत्वेन च प्रकल्प्यमिति सोपपत्तिकमभिधानं, साकमेधाख्यं तृतीयं पर्व मध्यमशरीरत्वेन कल्पयित्वा तत्रानीकवतीष्टिर्मुखं सान्तपनीयेष्टिरुरः गृहमेधीयेष्टिरुदरं क्रैडिनं हविः शिश्नानि आदित्यं हविरवाङ्प्राणः इत्येवं साकमेधेषु बहिस्तन्त्रवर्तिभिर्यागैर्मध्यशरीरस्यावयवक्लृप्तेः सोपपत्तिकमभिधानं, साकमेधान्तर्गतां महाहविषेष्टिं वामपादत्वेन प्रकल्प्य तत्र तद्गताग्नेयादिहविष्पञ्चकमंगुष्ठाद्यंगुलिपञ्चकत्वेन ऐन्द्राग्नं हविः कुल्फद्वयरूपत्वेन माहेन्द्रं हविर्जङ्घाद्वयरूपत्वेन वैश्वकर्मणं हविरूरुद्वयरूपत्वेन पितृयज्ञाख्यं कर्म चोदरान्तर्वर्त्यन्त्रपुरीतदादिकत्वेन च प्रकल्प्यमिति सोपपत्तिकमभिधानं, शुनासीरीयाख्यं चतुर्थं पर्व सव्यहस्तत्वेन कल्पयित्वा तत्राग्नेयादिहविष्पञ्चकमंगुष्ठाद्यंगुलिपञ्चकत्वेन शुनासीरीयं हविर्मणिबन्धत्वेन वायव्यं हविः कूर्परत्वेन सौर्यं हविर्दोर्दण्डरूपत्वेन च प्रकल्प्यमिति सोपपत्तिकमभिधानं, चातुर्मास्यानि त्रिषन्धीनि द्विसमस्तानि तेष्वाद्यन्तयोः पर्वणोर्मध्ये त्रीणि त्रीणि हवींष्यनिरुक्तानि मध्यमयोर्द्वयोः पर्वणोर्मध्ये द्वे द्वे हविषी अनिरुक्ते भवत इत्यर्थस्याभिधानं, तेषां पर्वणां साधारण्येनाग्निमन्थनस्य सम्यग्विधानम्, अस्याख्यायिकासिद्धस्यार्थस्याधुनातनयजमाने नियोजनं, गायत्र्यादिसम्पत्तिमेषु पर्वसु दर्शयितुं पूर्ववादमुद्भाव्य तं निषिध्य च पक्षान्तर- | |

| ब्रा० | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| | विधानं, चातुर्मास्येषु संख्याविशेषघटित-बृहतीसम्पत्तेः प्रदर्शनद्वारा संवत्सरात्मकचित्याग्नेर्महाव्रतसाम्नश्च प्रातिरूपफलस्य प्रदर्शनम्, तत्रैतयोर्द्वयोरवशिष्टयोः प्रयोजननिरूपणं चेत्यादि. | १२८–१३२ |
| ३ | अग्निहोत्रस्य सर्वदेवतातृप्तिकरत्वाभिधानम्—तत्र प्रश्नप्रतिवचनाभ्यामग्निहोत्रहोमस्य सर्वदेवतातृप्तिकरत्वाभिधायकं ब्रह्मोद्यं प्रतिपादयितुं प्रष्टृप्रतिवक्त्रोः प्राचीनयोग्योद्दालकयोः संवादप्रदर्शनम्, तत्र प्राचीनयोग्य आगत्य च तमुद्दालकं प्रतीमानग्निहोत्रावयवभूतांस्त्रयस्त्रिंशत्पदार्थान् पप्रच्छेत्याद्यभिधानम्, एतत्पृष्टमर्थजातं विदुषोऽग्निहोत्रं सम्यग्घुतं भवति ततोऽन्यस्याविदुषो हुतमप्यहुतं भवतीति प्रदर्शनम्, एवं प्राचीनयोग्येन पृष्टानां प्रश्नानामुत्तराण्युद्दालकः क्रमेण ददातीत्याद्यभिधानम्, उक्ताग्निहोत्रेऽन्युद्धरणानन्तरं पात्रासादनानन्तरं चाहवनीयस्यानुगमनेऽनिष्टफलरूपं भयं तन्निवृत्त्युपायभूता प्रायश्चित्तिः—गार्हपत्यानुगमने पूर्ववद्भयं तन्निवृत्त्युपायभूता प्रायश्चित्तिः—दक्षिणाग्न्यनुगमने च पूर्ववद्भयं तन्निवृत्त्युपायभूता प्रायश्चित्तिरित्येतेषामर्थानां प्रश्नप्रतिप्रश्नरूपेण कथनम्, एवमेकैकानुगतौ प्रश्नप्रतिवचनाभ्यां प्रायश्चित्तं निरूप्य कृत्स्नाग्नीनां युगपदनुगमनेऽनिष्टफलरूपं भयं तन्निवृत्त्युपायभूता प्रायश्चित्तिरित्येतस्यार्थस्य पूर्ववत्प्रश्नप्रतिवचनाभ्यां निरूपणं, तत्र यदि वातो न स्यात्तदा किं कर्तव्यमिति प्रश्नोत्तररूपेणैवाभिधानम्, उक्तमेतच्चरमं प्रायश्चित्तमविदुषेऽत एव शिष्यभावेनोपगताय मे भो उद्दालक ! तद् ब्रूहीत्युक्ते तज्ज्ञानं तस्मै प्राचीनयोग्याय प्रोक्तमित्याद्यर्थस्य निरूपणं, तत्र सत्यवदनमेव परमो धर्म इति निगमनं चेत्यादि. | १३३–१४१ |
| ४ | उपनयनधर्माभिधायकं ब्राह्मणम्—तत्र गुरुं प्रत्युपनयनप्रार्थनपरमुपनेतव्यस्य शिष्यस्य मन्त्रं विधाय तस्य प्रशंसनं भागशोऽनूद्य व्याख्यानं च, गुरोर्मन्त्रं विधाय तस्यार्थविवरणं, गुरुकर्तृकं मन्त्रतदर्थयुतं सफलं शिष्यस्य हस्तग्रहणविधानम्, उक्तार्थं वेदितुरप्येतत्फलं भवतीति कथनम्, प्रजापत्यादिदेवताभ्यः शिष्यस्य समन्त्रकं परिदानं विधाय तत्र मन्त्रं भागशोऽनूद्य व्याख्याय च परिदानकरणस्य फलनिरूपणम्, अस्य शिष्यस्य मन्त्रैरनुशासनं विधाय तदनुसारेणाचरणे फलप्रतिपादनं, सावित्र्या अनुवाचनं विधाय तस्य साभिप्रायमुपनयनादूर्ध्वं संवत्सरादिकालेषु कर्तव्यत्वाभिधानं, तत्र षण्मासादित्र्यहान्तेषु कालेष्वपि संवत्सरसम्पत्तेः प्रतिपादनद्वारा तदनुवाचनस्य कर्तव्यत्वाभिधानम्, तत्रापि त्र्यहपक्षे श्लोकमन्त्रस्य संवादप्रदर्शनम्, इत्थं त्रैवर्णिकानां साधारणपक्षानुक्त्वा ब्राह्मणस्य कृते सोपपत्तिकं सद्यस्त्वरूपविशेषपक्षस्याभिधानं, का पुनरसौ सावित्रीत्याशङ्क्य तत्रैकीयं मतमुपन्यस्य सकारणं तत्प्रत्याख्याय च स्वपक्षस्य सिद्धान्ततयाऽभिधानं, तत्रानुवचनसमये शाखान्तराभिमतं दक्षिणतोऽवस्थानं शिष्यस्यानूद्य तस्य सकारणं निषेधं कृत्वा स्वपक्षस्य प्राग्वत्सिद्धांततया प्रतिष्ठापनम् | |

| ब्रा० | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| | एतस्मिन्ननुवाचने पच्छोऽर्धर्चशः कृत्स्नशोऽनवानं चेत्यादीनां धर्माणां क्रमेण निरूपणं, प्रागुक्तसंवत्सरादिपक्षेषूपनयनानन्तरं सावित्रीप्रदानात्पूर्वमाचार्यस्य नियमं प्रदर्श्य तत्र कारणाभिधानम्, एवं केषाञ्चिन्मतमुक्त्वाऽन्येषां मतनिरूपणम्, उक्तदोषाभावस्य व्यवस्थया प्रतिपादनम्, उक्तार्थस्योपसंहारश्च, इत्थमाचार्यस्य नियमंमुक्त्वा ब्रह्मचारिणोऽपि नियमस्य पक्षपक्षान्तरसहितमभिधानम्, उक्तार्थोसंपहरणं चेत्यादि. | १४१–१४९ |
| ५ | **शतातिरात्रसंज्ञकं सत्रम्**–तत्र शतातिरात्राख्यं सत्रं विधातुमादावाख्यायिकाया निरूपणम, तस्यां च कृत्स्नस्य तमसो निर्हरणार्थं देवाः शताग्निष्टोमं सत्रमुपेयुरित्यभिधानं, तत्र देवाः पितरं प्रजापतिमेत्य तस्मै स्वकीयं कृत्स्नतमसोऽपहननविषयमसामर्थ्यं विज्ञाप्य तादृगुपायत्वेनेष्टोपदेशनप्रार्थनं कृतवन्त इत्यभिधानम्, इत्थं प्रार्थितः सन्प्रजापतिस्तेषां तदुपायत्वेन शतातिरात्राख्यं सत्रं प्रोक्तवानित्यभिधानम्, देवाः पुनर्यथोपदिष्टं तथा कृत्वा तत्फलं प्राप्नुवन्ति स्मेत्यभिधानम्, तत्रानुष्ठानक्रमं दर्शयितुं कालविपर्ययरूपं दोषमुद्भाव्य तद्दोषपरिहारार्थं च देवैर्यत्कृतं तस्य मन्त्रैः साभिप्रायं प्रदर्शनम्, तत्र सत्रमासीनानां देवानां प्रजापतिना मोहकारणमभिधाय तत्परिहारायेदमुपदिष्टमिति प्रतिपादनं, तस्यैतस्यातिप्रशंसनविषयस्य देवानां प्रश्नस्य प्रयोगक्रमस्य कार्त्स्न्येनाभिधानहेतुत्वेन निरूपणम्, अत्र प्रजापतिनोक्तमहां परस्परसन्धानप्रकारकथनं, एवं प्रातरनुवाकस्य स्वकाले प्रवृत्त्युपायमभिधाय तत उपरितनं प्रयोगजातमपि प्रातरनुवाकसमनंतरं कर्तव्यमित्यभिधानम्, अस्मिन् श्रुत्युक्तेऽर्थे श्लोकमन्त्राणां संवादप्रदर्शनम्, उक्तार्थपरत्वेनोक्तश्लोकस्य व्याख्यानं, ब्राह्मणार्थस्योपसंहरणं चेत्यादि. | १९०–१९६ |
| ६ | **पञ्चमहायज्ञब्राह्मणम्**–तत्र प्रथमसत्रप्रसङ्गाद्यावज्जीवमनुष्ठेयानां पञ्चमहायज्ञानां महासत्रत्वेन निरूपकस्य प्रस्तावस्य कथनं, तेषां नामतः प्रदर्शनम्, ततश्चतुर्णां क्रमेण भूतमनुष्यपितृदेवयज्ञानां स्वरूपनिरूपणं, इत्थं प्रत्यहमनुष्ठेयांश्चतुरो महायज्ञान्संग्रहेण प्रतिपाद्य तदुत्तरं बहुवक्तव्यं ब्रह्मयज्ञं प्रपञ्चयितुं प्रस्तावकथनं, ततस्तस्य क्रमात्स्वरूपं यज्ञसाम्यं प्रधानफलं तद्धेतुभूतमध्ययनं चेत्येतेषामर्थानामभिधानम्, एतस्मिन्ब्रह्मयज्ञे ऋचामध्ययनस्य पयआहुतिरूपत्वेन–यजुषामध्ययनस्याज्याहुतित्वेन–साम्नामध्ययनस्य सोमाहुतित्वेन–तुरीयाथर्वणवेदस्याध्ययनस्य मेदआहुतित्वेन–वेदाङ्गभूतानामन्यासां विद्यानामध्ययनस्य मध्वाहुतित्वेन च प्रशंसनम्, वातादीनि यान्यनध्यायनिमित्तानि तेषु सत्स्वपि ब्रह्मयज्ञस्यानिवृत्तिमभिप्रेत्य तेषां तदङ्गत्वस्याभिधानम्, एवं वषट्कारेषु सत्सु यदध्ययनं तस्य फलनिरूपणम्, एवं सर्वमध्ययनं कर्तुमशक्तस्य पक्षान्तरस्य प्रतिपादनं, चेत्यादि. | १९७–१९२ |
| ७ | **ब्रह्मयज्ञलक्षणस्वाध्यायप्रशंसाख्यं** | |

ब्रा० विषयाः पृष्ठाङ्काः | ब्रा० विषयाः पृष्ठाङ्काः

ब्राह्मणम्-तत्र एतस्मिन्ब्रह्मयज्ञस्वाध्याये पुरुषाणामादरातिशयं जनयितुं प्रशंसां कर्तुं प्रतिज्ञाकरणं, तद्धेतुभूतानां फलानामनुक्रमेणाभिधानं, तत्र फलत्वेनोक्तां यशोलोकपक्तिमनूद्य तद्धेतुकस्यान्यफलस्याभिधानम्,उक्ताध्ययनस्योत्कृष्टतपोरूपत्वाभिधानम् उक्तान्येतावन्ति फलानि विदुष एवाध्येतुर्भवन्तीत्यभिधानं, वेदाध्ययनशीलस्य कायिकव्यापारनिर्वर्त्ययागहोमादिफलमप्ययत्नतः सिद्धं भवतीत्यभिधानम्,एतस्याध्ययनस्य कृच्छ्रचान्द्रायणादितपोरूपत्वेन प्रशंसनम्, एतेषामृगादीनां मध्वादिरूपतया तृप्तिहेतुतां वक्तुं तत्सारूप्यमभिधाय तदुपजीवनेन तेषां ऋग्यजुःसाम्नां वाकोवाक्यादिविद्यानां चाध्ययनस्य क्रमशः प्रशंसनं, ब्रह्मयज्ञस्वाध्यायस्य सूर्यादिगतिवदखिलजगद्व्यवहारनिर्वर्तकत्वेन प्रशंसनम्, अनध्यायादिनिमित्तेऽध्यायादिप्रयुक्तसामर्थ्यविरहे च सत्यपि सर्वथा ब्रह्मयज्ञस्य वर्जनमयुक्तमित्यस्य प्रकारान्तरस्योपसंहारव्याजेनाभिधानं चेत्यादि. १६३-१६६

८ सर्वप्रायश्चित्तविधायकं ब्राह्मणम्-तत्रादौ सत्रप्रसङ्गाद्वेदसारभूताभिर्व्याहृतिभिः सर्वप्रायश्चित्तहोमस्य विधित्सया तासामुत्पत्तेराख्यायिकया प्रतिपादनं, तस्यां च महत्सृष्टेरभिधानं, तत्रापि प्रथमं पृथिव्यन्तरिक्षदिवात्मकानां त्रयाणां लोकानाम् अग्निवाय्वादित्यानां त्रयाणां देवानां–तेभ्यो देवेभ्यः सकाशात्क्रमेणर्ग्यजुः–सामाख्यानां त्रयाणां वेदानां च सृष्टेरभिधानम्, तेभ्य ऋग्यजुःसामवेदेभ्यः क्रमाद् भूर्भुवः स्वरिति व्याहृतित्रयस्योत्पत्तेरभिधानम्, एवं व्याहृतीनां त्रयीसारत्वं प्रतिपाद्य "ऋचा हौत्रं–यजुषाऽऽध्वर्यवं–साम्नौद्गात्रं–त्रय्या ब्रह्मत्वं" इति यज्ञस्यापि त्रयीमयत्वनिरूपणम्, एवं यज्ञस्य त्रयीनिष्पाद्यत्वमभिधाय त्रयीसारभूताभिर्व्याहृतिभिस्तत्तद्वेदोक्तकर्मभ्रेषनिमित्तस्य प्रायश्चित्तहोमस्य विधित्सया प्रश्नकरणकथनम्, उक्तप्रश्नस्योत्तरं दातुं तदनुगुणतया क्रमादृग्भ्रेषप्रायश्चित्तं–यजुर्भ्रेषप्रायश्चित्तं-सामभ्रेषप्रायश्चित्तं-इत्येतद्व्यवस्थितं प्रायश्चित्तत्रयं सप्रकारकं निरूप्याविज्ञातप्रायश्चित्तस्य सप्रकारकं निरूपणं, तत्तद्वेदोक्तकर्मप्रायश्चित्तत्वेनोक्तस्य तत्तद्व्याहृतिहोमस्य क्रमशः प्रशंसनम्, उक्तस्यार्थस्य सदृष्टान्तं व्यतिरेकमुखेन दृढीकरणम्, उक्तप्रायश्चित्तपरिज्ञानवानेव ब्रह्मा विधेय इत्यस्यार्थस्य प्रतिपादनम्, उक्तं यज्ञस्य वेदत्रयप्रतिपाद्यत्वमनूद्य प्रागुक्तस्यैव ब्रह्मत्वस्य पुनः प्रश्नप्रतिवचनाभ्यां निरूपणं चेत्यादि. १६७-१७०

९ अंश्वदाभ्याख्ययोः सोमग्रहयोर्विधित्सया तयोरात्मवागादिरूपतया समुच्चित्यानुष्ठानस्य प्रशंसनम्, एतौ ग्रहौ सह प्रयोक्तव्यौ न पृथगित्यभिप्रायेणापि तयोर्मनोवागादिरूपतया च प्रशंसनं, कृत्स्नयज्ञस्यासुरेभ्यः सकाशादावर्जनसाधनत्वस्यादाभ्यग्रहस्याख्यायिकया प्रतिपादनं, तस्यां च विवदमाना देवाः किं कृतवन्त इत्यपेक्षायां तत्करणप्रकारनिरूपणं, प्रसङ्गाददाभ्यनामनिर्वचनम्, आख्यायिकासिद्धस्यार्थस्य प्रकृते नियो-

ना० विषयाः — पृष्ठाङ्काः

जनं, तस्य ग्रहस्य पात्रविशेषे ग्रहणविधानम्, तत्र त्रयाणामप्यंशूनां ग्रहणमन्त्रान्विधाय तेषां व्याख्यानम्, उक्तमन्त्राणां पाठस्य प्रयोजनकथनम्, एतेषां ग्रहान्तरवत्प्राप्तस्याभिषवस्य सकारणं निषेधकथनम्, अभिषवस्थाने आधावनस्य विधानं, विहिते आधावने मन्त्रान्विधाय तेषां तात्पर्यं कथयित्वा तत्राप्यन्तिमं मन्त्रमनूद्य तस्य व्याख्यानम्, उक्तानां मन्त्राणामुक्तार्थपरत्वस्याभिधानम्, अस्य ग्रहस्य समन्त्रकं होमं विधाय तन्मंत्रस्य व्याख्यानम्, अस्य ग्रहस्य होमकाले ध्रियमाणस्य प्राणवायोर्यदि बलान्निष्क्रमः स्यात्तदा हिरण्यस्योपरि प्रश्वासः कार्य इत्यस्यार्थस्य स्तावकार्थवादातिदेशसहितं निरूपणं, परिमाणविशेषविशिष्टस्य दक्षिणाद्रव्यस्य विधानम्, एतेषां त्रयाणामंशूनां पुनः संसर्जनं विधाय तत्र मन्त्रान्विनियुज्य च तेषां सवनार्थकथनव्याजेन व्याख्यानं चेति १७०—१७७

इति पञ्चमोऽध्यायः ।

## अथ षष्ठोऽध्यायः ।

१ समिदाधानादीनां वनस्पत्यादिरूपफलप्राप्तिसाधनत्वस्य विवक्षयाऽऽख्यायिकाकथनं, तस्यां च वरुणस्य पुत्रस्याहंकारं खण्डयितुं प्रागादिदिक्षु अवान्तरदेशेषु च गत्वा तत्रतत्रत्यं दृष्टं ममाचक्ष्वेति पुत्रस्य नियोजनम्, इत्थं वरुणेन नियुक्तः स भृगुस्ततः प्रागादिदिक्षु अवान्तरदेशेषु च पर्यटनं कृत्वा किं कृतवानित्यपेक्षायां तत्कृतस्याभिधानं, तत्र चतसृषु दिक्षु उग्रकर्माणि दृष्ट्वाऽन्ते चावान्तरदेशे शोभनाशोभनयोः स्त्रियोर्मध्ये स्थितं भयंकरं पुरुषविशेषं च दृष्ट्वा भीतो भृगुर्गृहमेत्य संविवेशेत्यर्थस्याभिधानम्, एवं वरुणेन पित्रा पुत्रस्य भृगोरहङ्कारमपनीय तस्मै स्वाध्यायमधीष्वेत्युपदिष्टे ममाध्येतव्यं किमपि नास्तीति भृगुरुक्तवांस्तत एव वरुणस्तदभिप्रायं ज्ञातवानित्यर्थस्य प्रतिपादनं, तेन भृगुणा प्रागादिदिक्षु यद्यत्पूर्वं दृष्टं तत्सर्वं तस्योपदिशति श्रुतिरित्यभिधानं, तथा ये अवान्तरदिशि स्त्रियौ दृष्टे तयोः स्वरूपस्य तयोर्मध्ये स्थितस्य पुरुषस्य स्वरूपस्य च प्रदर्शनम्, एवमाख्यायिकया पितापुत्रसंवादेनोक्ता अग्निहोत्रसम्बन्धिनां समिदाधानादीनां वनस्पत्यादिलोकजयप्राप्तिर्विदुषोऽप्यस्त्येवेत्यभिधानं चेत्यादि. १७८—१८४

२ तथाऽग्निहोत्रहोमे पूर्वोक्तयोराहुत्योरूर्ध्वगत्यादिविषयां विद्यां वक्तुमाख्यायिकायाः कथनं, तस्यां च देशान्तरादागतैः श्वेतकेतुसोमशुष्मयाज्ञवल्क्यैस्त्रिभिः संगतो जनकोऽग्निहोत्रविषयं विचारं कृतवानित्यभिधानं, तत्र प्रथमं श्वेतकेतुनोक्तस्य प्रतिवचनस्य प्रदर्शनम्, एतत्प्रतिवचनोक्तमर्थं विदुषो जुह्वतः फलाभिधानं, तत उक्तार्थविषये सोमशुष्मस्य याज्ञवल्क्यस्य च क्रमेण मतप्रदर्शनं, तत्र याज्ञवल्क्योक्तं मतं जनकस्य सम्मतमभवदिति तन्निदर्शकपारितोषिकप्रदानरूपादिप्रकारसहितमभिधानम्, एवं त्रिषु ब्राह्मणेषु स्वाभिमतमग्निहोत्ररूपमुक्तवत्सु जनकः स्वावगतमुत्क्रान्तिगत्यादिकं याज्ञवल्क्योऽपि न जानातीत्यभिधानं, ततो जनकस्य

| ब्रा० | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| | प्रवृत्तिनिरूपणम्, एवमुक्त्वा यानमारुह्य निर्गते राजनि क्रुद्धा ब्राह्मणाः किं कृतवन्त इति तन्निरूपणं, तत्र याज्ञवल्क्यस्याभिप्रायप्रदर्शनम्, ततो जनकः प्रागज्ञातत्वेनात्मनोपन्यस्तमुत्क्रान्त्यादिकं तस्मै याज्ञवल्क्यायाकथयदित्यभिधानम्, एतद्वेदनस्यावान्तरफलनिरूपणं "ते व्रियमाविशतः" इत्यत्राप्याहवनीयादीनां सम्पादनम्, एतद्वेदनस्यापि फलप्रतिपादनम्, इत्थं जनकेन स्वाभिमतमग्निहोत्राहुत्योरुत्क्रान्त्यादिकं प्रतिपाद्य तस्योपसंहरणं, जनकस्य याज्ञवल्क्यं प्रति स्वाभिमतस्य वरस्य प्रार्थनाकरणकथनं चेति. | १८४–१८९ |
| ३ | अग्निहोत्रदर्शपूर्णमासादियागदेवतानां तत्त्वतः प्राणशब्दाभिधेयपरमात्मरूपताया विवक्षया विजिगीषुकथामुखेनाख्यायिकायाः कथनं, तस्यां चादौ ब्राह्मणपरीक्षार्थं जनकेन गावो निहिता इत्यभिधानम्, एवं राज्ञो वाक्यमाकर्ण्य याज्ञवल्क्यस्य मदीयं गृहं प्रत्येता गावः प्रस्थापनीया इत्यभिधानम्, एतद्याज्ञवल्क्यवाक्यं श्रुत्वा क्रुद्धानामन्येषां ब्राह्मणानां वचनप्रदर्शनम्, एवं ब्राह्मणैरधिक्षिप्ते सति याज्ञवल्क्येन यदुक्तं तस्य प्रदर्शनम्, एवमुपहसिते सत्यन्यैर्ब्राह्मणैर्यत्कृतं तस्य प्रदर्शनं, तत्र याज्ञवल्क्यवाक्यमनादृत्यैव शाकल्यः प्रष्टुमुपचक्रमे इत्यभिधानं, तत्र पुनर्विशेषजिज्ञासायाः प्रदर्शनं, तत्रापि शाकल्ययाज्ञवल्क्ययोः प्रश्नप्रतिवचनाभ्यां पर्यवसितं देवताया एकत्वं प्रदर्श्य पुनः शाकल्यस्योक्ताक्षेपपरस्य प्रश्नस्योद्भावनाकथनम्, उक्तप्रश्नस्योत्तरत्वेनाभिहितानां त्रयस्त्रिंशत्संख्याकानां देवानां विभागपुरःसरं परिगणनं, तत्र प्रश्नपूर्वकं क्रमेण वसूनां रुद्राणामादित्यानां स्वरूपकथनं तत्तन्नामनिर्वचनं च, ततः प्रश्नपूर्वकमिन्द्रप्रजापत्योः स्तनयित्नुयज्ञयोश्च स्वरूपकथनं, "कतमे ते त्रयो देवाः" इति प्रागुक्तस्य सविशेषं विवरणं, एवं याज्ञवल्क्यस्य शाकल्येन पृष्टस्य देवतास्वरूपस्याविष्करणद्वारा शाकल्यस्याधिक्षेपकरणप्रदर्शनं, प्रसङ्गात्तत्त्वनिष्ठमुपेत्य वादी न भवेत्किन्तु तमेवंविदं विद्वांसमुपेत्य तात्पर्येण सेवायुक्तो भवेदिति नियमप्रदर्शनं चेत्यादि. | १९०–१९४ |


इति षष्ठोऽध्यायः ।

## अथ सप्तमोऽध्यायः ।


| ब्रा० | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| १ | **पशुबन्धयागः**–तत्र दर्शपूर्णमासवन्नित्यं प्रतिसंवत्सरं यष्टव्यस्य पशुयागस्य विधानम्, उक्तपशुयागस्य साभिप्रायं पशुफलसाधनत्वमभिधाय दर्शपूर्णमासवन्नित्यत्वं प्रतिपादयितुमकरणे प्रत्यवायजनकत्वस्य प्रतिपादनम्, एवं दोषमुपन्यस्य पशुबन्धस्य तत्परिहारहेतुत्वाभिधानम्, अस्य पशुबन्धयागस्यायुर्हेतुत्वमभिधातुमात्मनिष्क्रयणसाधनत्वस्य सोपपत्तिकं निरूपणं चेति. | १९५–१९६ |
| २ | **पशुबन्धस्येष्टिसवविधत्वेन द्वैविध्याभिधायकं ब्राह्मणम्**–तत्र प्रथमं पशुबन्धस्येष्टिविधत्वं सवविधत्वं चेति द्वैविध्यं प्रदर्श्य क्रमात्तयोः स्वरूपवर्णनं, तत्र सवविधत्वस्यैव मीमांसापूर्वकं सिद्धान्ततया प्रतिष्ठापनम्, तथाऽत्र सवनत्रयमुपपाद्य | |

| ब्रा० विषयाः | पृष्ठाङ्काः |
|---|---|
| तदुपजीवनेन दक्षिणाकालं विधातुं शाखान्तरीयं दक्षिणाकालमनूद्य च तस्य प्रत्याख्यानम्,ततः स्वमतेन दक्षिणाकालं विधाय सप्रकारकं दक्षिणादानविधानम्, षड्ढोतृहोमस्य विधित्सया तस्य दीक्षारूपतां सम्पादयितुं प्रश्नमुद्भाव्य तदुत्तरत्वेन षड्ढोतृसंज्ञका एकाऽऽज्याहुतिः पञ्च वाऽऽज्याहुतयो होतव्या इति विधाय तत्र मन्त्रस्य विनियोजनम्, कः पुनरवभृथ इत्याशङ्क्य तत्समाधानकथनम्, निरूढपशुबन्धरूपपालाशयूपस्य प्रकृतिभूतपलाशद्रव्यवृक्षस्य विधित्सयोपोद्धातकथनम्, तत्र पशुबन्धस्य विसोमत्वं ससोमत्वं चेति प्रागुक्तं पक्षद्वयमनूद्य तत्रान्तिमे पक्षे पलाशवृक्षस्यैव यूपं कुर्वीतेत्यभिधानम्, उक्तपक्षस्य निगमनं चेत्यादि. | १९७–२०१ |
| ३–इत्थं यूपस्य पालाशत्वं प्रतिपाद्य तत्रापि बहुसारस्य पशुविरोधित्वमल्पसारस्य पशुसमृद्धिकरणत्वं चेत्यर्थस्य प्रदर्शनम्, इत्थमल्पसारस्य यूपार्हतामुक्त्वा तस्यैव सन्निवेशमुपजीव्य दोषप्रदर्शनम्, उक्तयूपवृक्षे अपनत्युपनत्योः क्रमेणान्नविरोधित्वस्यान्नसमृद्धिकरत्वस्य च प्रदर्शनं चेति. | २०१–२०२ |
| ४–इत्थं यूपार्हं वृक्षं तत्स्वरूपं चाभिधायेदानीं यूपस्य तत्तत्फलाभिधानपुरःसरं विकल्पेन एकद्वित्रिचतुररत्न्यात्मकप्रमाणविधानम्, इतोऽधिकारत्निप्रमाणविशेषस्य सोमयागविषयत्वप्रतिपादनं, तत आज्यभागयोरवश्यकर्तव्यतायाः सदृष्टान्तं निरूपणं, पश्ववयवपाकविषये कस्यचिद्विशेषस्य प्रतिपादनम्, वपावदानस्य पञ्चावत्तत्वप्रकारसम्पादनद्वारा पृथिव्यादिलोकत्रयात्मनाऽग्न्यादित्यात्मना च प्रशंसनं, चेति. | २०३–२०५ |

इति सप्तमोऽध्यायः ।

## अथाष्टमोऽध्यायः ।

| ब्रा० विषयाः | पृष्ठाङ्काः |
|---|---|
| १ अग्निहोत्रे महउपस्थानम्–तत्र प्रथममग्निहोत्रे कर्मणि मह इत्युपस्थानं तद्दार्ढ्याय कर्तव्यनिमित्तं विधातुमाख्यायिकाया अभिधानं, तस्यां च विशेषतो महःशब्दार्थमभिधाय तस्य लोकप्रसिद्ध्या प्रमाणीकरणम्, उक्तार्थज्ञानस्य प्रशंसनम्, मह इत्युपस्थानस्य फलसहितं विधानं चेति. | २०६ |
| २ अग्नेश्चातुर्विध्याभिधायकं ब्राह्मणम्–तत्र प्रथममाहवनीयात्प्राक्प्रहृते उत्तरवेदिकेऽग्नौ पशुयागः कर्तव्य इति विधातुमग्नेराहितोद्धृतप्रहृतविहृतात्मना चातुर्विध्यप्रदर्शनम्, उक्ताहितादिचतुष्टयस्य भूराद्यात्मनाऽग्न्याद्यात्मना च प्रशंसनम्, आहितादीनामभिप्रेतस्यार्थस्य श्रुतिकृतविवरणप्रदर्शनम्, उपयड्ढोमार्थं वर्णितस्याग्नेस्तत्प्रयोजननिरूपणं चेत्यादि. | २०७ |
| ३ पशुदेवताविकल्पाभिधायकं ब्राह्मणम्–तत्र प्रथमस्य पशोः प्रजापतिः सूर्य इन्द्राग्नी चेति त्रयो देवा विकल्पिता इति दर्शयितुं क्रमेण तस्य तस्य पक्षस्य सोपपत्तिकमभिधानं, पशुत्वस्य प्राणात्मकतायास्तथा तत्परिज्ञातुः पशुनाऽऽर्तिहेतुतायाः समर्थनं, विहितस्य पशोरुक्तप्राणरूपतोपपादनाय तस्यैव अग्न्यादिषड्देवतामयत्वस्योपपादनाय | |

| ब्रा० विषयाः | पृष्ठाङ्काः |
|---|---|
| चाख्यायिकायाः प्रतिपादनं, तस्यां च विशेषतः प्रसङ्गादाप्रीशब्दनिर्वचनं, यथाऽश्वमेधेनेष्टभावनापुरःसरं पशुनेष्टवतः फलं भवति तथैवानेन पशुबन्धेनेष्टवतस्तदेव फलं भवतीति प्रतिपादनं, ततस्तस्मिन्निष्प्राणत्वेनोच्छूने आदित्यलक्षणे पशौ प्राच्यादिदिक्कर्तृकस्यानुप्राणनस्य विधानं, प्रसङ्गात्किञ्चित्पुरुषार्थस्यानुप्राणनप्रयोगस्य विधानं, तत आदित्यस्याग्नेः सकाशात्प्राणादाने—वायोः सकाशाद्रूपादाने-पुरुषस्य सकाशाद्वित्तादाने—पशुभ्यः सकाशाच्चक्षुष आदाने—चन्द्रमसः सकाशात्प्रभाया आदाने च क्रमेण कारणमभिधाय प्रतिपर्यायं उक्तार्थं वेदितुः फलकथनम्, उक्तविधमादानं निमित्तीकृत्यादित्यशब्दो निष्पन्न इति प्रदर्शनं चेत्यादि | २०८–२१२ |
| ४ पशुप्रायश्चित्तीयाः स्पृतिहोमाः—तत्र स्पृत्याख्यान्होमान्पशुप्रायश्चित्ततया विधातुमाख्यायिकाया अभिधानं, तस्यां च प्रवर्ग्यदोहनार्थायां गवि शार्दूलेन हतायां का प्रायश्चित्तिरिति सह सत्रिण उपेत्य केशिगृहपतेः प्रश्नस्योद्भावनं, खण्डिक एवैतत्प्रायश्चित्तं जानातीति तेषामुत्तरप्रदानम्, उक्तप्रायश्चित्तं ज्ञातुं केशिराजस्य खण्डिकं प्रति गत्वा प्रायश्चित्तं यदि ब्रवीषि तर्हि यज्ञं समाप्स्यामीति प्रार्थनाकरणम्, एतस्मै राज्ञे प्रायश्चित्तमुपदेष्टव्यं न वेति सन्दिहानस्य खण्डिकस्य स्वैर्विचारकैः सह मंत्रकरणप्रदर्शनं,—तत्र तैरास्तैर्हि भगवन्नस्मै विद्यां मा वोच इति प्रत्याख्यातेऽपि बलवत्तरकारणपुरःसरं वक्ष्यामीत्येवं खण्डिकस्य निश्चयकरणप्रदर्शनं, ततः खण्डिकः स्पृतिहोमाख्यं सप्रकारकं प्रायश्चित्तमुवाचेत्यभिधानं, विहिते प्रायश्चित्ते स्पृतिसंज्ञकानां पञ्चानां मन्त्राणां विनियोजनं, स्पृतीर्हुत्वाऽन्यामाजतेति वचनप्रदर्शनं चेत्यादि. | २१३–२१६ |


इत्यष्टमोऽध्यायः ।

**इति संग्रहापरनामधेयमष्टाध्यायीनामकमेकादशं काण्डं समाप्तम् ॥**



श्रीशः शरणम् ।

# अथ द्वादशे मध्यम–सौत्रामण्युभयनामके काण्डे

## विषयानुक्रमणिका प्रारभ्यते ।



ब्रा० विषयाः पृष्ठाङ्काः

### तत्र प्रथमोऽध्यायः ।


१—**गवामयनब्राह्मणम्**—तत्र च प्रथमं गृहपतिसहितब्रह्माद्यृत्विजां दीक्षादातृपुरुषनिर्देशपूर्वकं सार्थवादं सहेतुकं सविशेषं दीक्षाक्रमविधानं चेति. १—६

२—**प्रादुर्भाविकदेवाद्युपासनम्**—तत्र च देवैः श्रद्धादिभ्यो देवताभ्यो दीक्षाद्यभिमानिनो विग्रहवन्तो देवा निर्मितास्तथा दीक्षादिर्यज्ञियोऽङ्गकलापश्च निर्मित इति प्रतिपाद्य दीक्षादिष्वङ्गेषु तत्तदभिमानिदेवोपासनं विधेयमिति द्योतनम्, उक्तोपासनफलनिरूपणं चेति. ६—

३—**देवविद्याब्राह्मणम्**—तत्र चातीतब्राह्मणगतोपासनस्यैव प्रपञ्चकरणं, तत्रापि दीक्षणीयेष्ट्यादीनामङ्गानामनुष्ठानेन तत्तदङ्गाभिमानिदेवानामुपासनं भवतीति प्रतिपादनं, तत्तद्देवतोपासनेन तत्तद्देवतायाः सारूप्यसायुज्यसालोक्येतित्रिविधमुक्तिरूपं फलं लभ्यते इति प्रदर्शनं, प्रसंगात् " सतिसदः–सत्रसदः " इत्येतयोः शब्दयोर्निरुक्तिपूर्वकं वैलक्षण्यप्रदर्शनं, सत्रे विदुषां दीक्षितानां पापं न कीर्तयेदिति नियमं प्रदर्श्य तदुल्लंघने पापीयस्त्वं भवतीत्यादिफलप्रदर्शनं, त्रिमहाव्रतयाजिनः प्राक्कलियुगात्त्रिमहाव्रतं संवत्सरमुपयन्ति स्मेतिसकारणं निरूपणं, कलियुगे कथं त्रिमहाव्रतानुष्ठानं भवेदित्यपेक्षायां तत्संभवस्य सकारणं कथनं चेति. ७—११

४—**अध्यात्मविद्ब्राह्मणम्**—तत्र च संवत्सरात्मकपुरुषस्य अवयवसम्पत्तिमुपपाद्याध्यात्मरूपेणोपासनविधानम्, उक्तोपासनस्य फलनिरूपणं चेत्यादि. ११—१२


इति प्रथमोऽध्यायः ।

### अथ द्वितीयोऽध्यायः ।


१—**संवत्सरे समुद्रप्रतरणोपासनम्**—तत्र संवत्सरसम्बन्धिषु दीक्षणीयाद्यङ्गेषु तीर्थगाधप्रभृतिसमुद्रावयवत्वं सोपपत्तिकमुपपाद्य तत्तद्रूपेणोपासनविधानं, सोपपत्तिकं संवत्सरस्य पूरणप्रदर्शनं, संवत्सरस्य यथायथं त्रयोदशमासान्प्रकल्प्य तेषु प्रतिमासं पृष्ठ्याभिप्लवावुपेतव्यावित्यभिधानम्, उक्तेऽर्थे विदुष आरुणेयस्य श्वेतकेतोः संमतिप्रदर्शनं चेति. १३—१५

२—प्रतिमासमुपेतव्यतयोक्तयोः पृष्ठ्याभिप्लवयोराधियज्ञिकेनाधिदैविकेन च रूपेण निरूपणं, तत्र चैतौ पृष्ठ्याभिप्लवौ देवानां रथचक्रे भवतो यजमानस्य पाप्मानमपहतश्चेति निरूपणं, यो दीक्षितानां सत्रे पाप्मानं कीर्तयेत्तस्यैते देवचक्रे शिरश्छिन्द्युरित्यादिकथनम्, एते चक्रे समे भवतः स्तोमास्तु विषमाः कथमेतेषां साम्यमित्याशङ्क्य तत्समाधानकथनं, तत्र पैङ्ग्याचार्यमतेन पृष्ठ्याभिप्लवयोः सहेतुकं तन्त्रानुष्ठानकरणकथनमन्यथाऽनुष्ठानेऽनिष्ट-

| ब्रा० विषयाः | पृष्ठाङ्काः |
|---|---|
| फलाभिधानं च फलनिर्देशपुरःसरं मासिमासि नवाग्निष्टोमसम्पत्तेरभिधानं, फलाभिधानसहितं मासिमासि एकविंशत्युक्थ्यानां सम्पत्तेरुपपादनं, फलाभिधानसहितं मासिमासि चतुस्त्रिंशदग्निष्टोमानां सम्पत्तेरुपपादनं, यतो देवा एतेन वीर्येणान्नेन सर्वान्कामानाप्नुवन्नतः संवत्सराय दीक्षितोऽप्येतस्मैकामाय पृष्ठ्याभिप्लवौ उपैवेयादित्युक्तसम्पत्तेर्निगमनं, स्वर्गं लोकमभिगन्तुमादित्यानामाङ्गिरसानां च परस्परं स्पर्द्धाकरणप्रदर्शनं, तत्प्रसङ्गेनाभिप्लवपृष्ठ्यशब्दयोर्निर्वचनं, तत्राभिप्लवस्य षट्पञ्चचतुस्त्रिद्व्येकाहःसम्पत्तेः सोपपत्तिकं निरूपणं, कौशाम्बेयस्य कौसुरबिन्देः प्रोतेररुणपुत्रस्योद्दालकस्य च शिष्यगुर्वोः प्रश्नोत्तरात्मकसंवादेन संवत्सरस्य दशाद्येकपर्यन्ताहःसम्पत्तेरुपसंहारक्रमेण सोपपत्तिकं निरूपणम्, एषोक्ता सम्पत्संवत्सरस्योपनिषद्भवतीत्यभिधाय तां वेदितुः फलाभिधानं चेत्यादि. | १६–२३ |
| ३–बृहत्युपनिषद्–तस्यां च एष एव संवत्सरो बृहतीच्छन्दोरूपेणाभिसम्पन्न इत्युपासीतेति द्योतनं, तत्र संवत्सरस्य बृहत्यात्मनाऽभिसम्पत्तेः सोपपत्तिकं सफलं निरूपणं, ततः प्रकृतिभूतेनाभिप्लवेनैवातिरात्रात्तत्सर्वमभिपूरितं भवतीति सोपपत्तिकं प्रदर्शनं, विषुवतः पूर्वेषु षट्सु मासेषु पूर्वमभिप्लवमुत्तरं पृष्ठ्यमुपयन्त्युत्तरेषु षट्सु मासेषु पूर्वं पृष्ठ्यमुत्तरमभिप्लवमुपयन्तीति पितापुत्रयोरुपजीवनक्रमदृष्टान्तेन प्रतिपादनम् उक्तार्थं वेदितुः फलाभिधानं च, यदि दीक्षितश्चतुर्विंशमहरुपेत्य प्रेयात्तदा कथमनागूर्ती भवतीत्याशङ्क्य तत्समाधानकथनं, ततः पुरुषविधस्य संवत्सरस्य विषुवानात्मा द्वादश मासा अङ्गानि तयोश्चाङ्गाङ्गिनोर्नातिरेको भवतीत्यादिप्रतिपादनम्, इदानीमस्य संवत्सरस्य महासुपर्णत्वं प्रतिपाद्य तदर्थं तदङ्गजातं चोपपाद्य तदीयाऽऽत्मपक्षयोरप्यन्योऽन्यमतिरेको न जायत इति प्रतिपादनं, विषुवतः पूर्वेष्वाभिप्लविकेषु षट्सु मासेषु त्रिविधा ये ऊर्ध्वाः स्तोमास्ते पार्ष्ठिकेष्वप्यहःसूर्ध्वा भवन्ति दशरात्रे ते स्तोमा ऊर्ध्वा एवोपेतव्या इत्यादिप्रदर्शनं, एतद्वेदितुः फलाभिधानं च, ततोऽह्नामभ्यारोहणसादृश्येनाशीराशंसननिरूपणम्, अह्नामभ्यारोहणे क्रमान्तरनिरूपणं, एतद्वेदितुः फलाभिधानं च,अस्य संवत्सरस्य विद्वदविद्वदनुष्ठानमभिलक्ष्य प्रशंसानिन्दारूपार्थवादकथनं, ततोऽस्य संवत्सरस्य परांच्यहानि कति–अर्वांच्यहानि च कतीत्येवम्प्रश्नपूर्वकं तेषां पराचामर्वाचां चाह्नामुपपादनं चेत्यादि. | २३–२८ |
| ४–गवामयनीयसंवत्सरस्य पुरुषविधोपासनम्–तत्र संवत्सरसत्रस्य प्रायणीयातिरात्राद्यङ्गेषु हस्ताद्यङ्गानां सम्पादनपुरःसरं सोपपत्तिकं पुरुषविधत्वं सम्पाद्य तद्रूपेणोपासनस्य द्योतनं, तत्र प्रसङ्गात् पैङ्ग्याचार्यमतेनाभिप्लवपृष्ठ्यशब्दयोर्निर्वचनम्, एवमध्यात्मतया प्रतिष्ठितं संवत्सरं वेदितुः फलनिरूपणं चेत्यादि. | २८–३२ |

इति द्वितीयोऽध्यायः ।

| ब्रा० विषयाः | पृष्ठाङ्काः | ब्रा० विषयाः | पृष्ठाङ्काः |
|---|---|---|---|

## अथ तृतीयोऽध्यायः ।

१ **गवामयनपुरुषप्रजापतीनां कलासाम्याभिधानम्**—तत्र प्रथमं पञ्चभिः श्लोकमन्त्रैर्हे बालाके ! इदमधियज्ञाध्यात्माधिदैवं त्रिवृत् सर्वमन्योऽन्यमभिसम्पद्यमानं भवति, ततो यज्ञः पुरुषः प्रजापतिरित्येते त्रयः कथमन्योऽन्यं नातिरिच्यन्ते ? इति सप्रपञ्चं प्रश्नस्योद्भावनम्, अस्य पुरुषस्य त्रिवृत्स्तोमः शिरः—पञ्चदशस्तोमो ग्रीवा इत्यवयवसाम्यसम्पादनेन चतुर्भिः श्लोकमन्त्रैरुद्भावितप्रश्नस्य सप्रपञ्चमुत्तरप्रतिपादनम्, एवं धीरोऽनुष्ठातोपासकः सर्वस्तोमं सर्वसामानमध्यात्मं प्रविष्टं संवत्सरमात्मना समं कल्पयित्वाऽजातशोकः सन् ब्रध्नस्य विष्टपे आस्ते इत्युक्तोपासनस्य फलनिरूपणं चेत्यादि. ३३–३५

२ संवत्सरस्य पुरुषस्य च तत्तदवयवानां समत्वस्य यथायथमुपपादनं, तत्र प्रसङ्गाद्वर्षतो मेघस्य स्वेदायनपरिमाणविषयकं विदुषो वार्कलेर्मतनिरूपणम्, तत्प्रसङ्गेनैव द्वाभ्यां श्लोकमन्त्राभ्यां उच्छ्वासनिःश्वासलक्षणयोः प्राणापानयोः संख्याविषये प्रश्नोत्तरयोः प्रदर्शनं चेत्यादि. ३५–३७

३ **प्रायश्चित्तसत्रम्**—तत्र सहस्रसंवत्सरसत्राय दीक्षिता देवाः पञ्चशतसंवत्सरेष्वतीतेषु सत्सु श्रान्ताः सन्तो यज्ञस्य सप्तदशाक्षरात्मकं व्याहृतिपञ्चकमयातयामापश्यंस्तत्र यानि सप्तदशाक्षराणि स सप्तदशः प्रजापतिः सम्पन्न इत्याद्यर्थस्याभिधानम्, एवमधिदैवतमध्यात्मं च प्रतिष्ठितं सप्तदशं प्रजापतिं वेदितुः फलनिरूपणं, पुनर्देवा यज्ञक्रतुमभिलक्ष्य क एतादृशो मनुष्यः स्यात् योऽस्य सहस्रसंवत्सरस्य प्रतिमां वेद वैनं सहस्रसंवत्सरेण समाप्नुयादिति विचार्य षडहस्य पृष्ठ्यस्य सर्वपृष्ठं विश्वजितं—द्वादशाहस्य षडहं पृष्ठ्यं—संवत्सरस्य द्वादशाहं—तापश्चितस्य संवत्सरं—सहस्रसंवत्सरस्य तापश्चितं अञ्जःसवविधिमपश्यन्नित्यादीतिहासप्रदर्शनम्, सहस्रसंवत्सरस्य संवत्सरात्मभिर्दीक्षोपसत्सुत्याभिः सम्पादनकथनं, सहस्रसंवत्सरस्य द्वादशमासनिर्वर्त्याभिर्द्वादशदीक्षाभिर्द्वादशोपसद्भिर्द्वादशसुत्याभिश्च बृहतीत्वसम्पादनम्, बृहत्यात्मनोपासनस्यफलाभिधानसहितं द्योतनं, सफलमग्न्यर्क्य महदुक्थ्यात्मनोपासनस्य द्योतनं चेत्यादि. ३८–४०

४ नारायणप्रजापतिसंवादात्मकेतिहासद्वारा संवत्सरसत्रे पवमानत्रये समन्त्रकमुद्गातुरन्वारम्भविधेयताप्रतिपादनम्, संस्थितेषु संस्थितेषु सवनेषु जपविधानं जपमन्त्रप्रदर्शनं च, मन्त्रोदितमर्गोमहोयशःसर्वादीनां लोकदेवतावेदप्राणाद्यात्मत्वप्रतिपादनम्, एतेन मन्त्रजपेन च सर्वांल्लोकान्सर्वान्देवान्सर्वान्वेदान्सर्वान् प्राणांश्चात्मन्यधिषि—आत्मानं च तेषु सर्वेषु अधाम्—तथैतेनान्योऽन्यधारणेन सर्वे लोकाः सर्वे देवाः सर्वे वेदाः सर्वे प्राणा अक्षीणाः सर्वं चाक्षीणमिति विद्यादिति विज्ञानाभिधानम्, उक्तविज्ञानं वेदितुः फलाभिधानं चेत्यादि. ४१–४२

५ श्रीकामाणां सत्रिणामेकक्लृप्तो गवामयनः क्रतुः—तत्र पूर्वे सत्रिण इष्टकापशुं सावित्र-

| ब्रा० विषयाः | पृष्ठाङ्काः | ब्रा० विषयाः | पृष्ठाङ्काः |
|---|---|---|---|

मालभन्ते स्म—इदानीन्तनाः सत्रिणः प्राजापत्यं पशुमालभन्त इत्याद्यभिधानं, सावित्रप्राजापत्यपश्वोरेकत्वप्रतिपादनं, सत्रेष्वितरेषां सत्रिणां गृहपतेरेव स्वस्वगार्हपत्यसन्निवापस्य सकारणमभिधानं पक्षान्तरेण नानागार्हपत्या एव स्युरित्यस्य कल्पस्य प्रतिपादनं, यदि दीक्षितस्य किञ्चिदङ्गं व्याधिनोपतपेत्तदा स गार्हपत्यादाहवनीयमुद्धृत्य पार्श्वभागे तत्रैव जुहुवसेदित्यर्थस्याभिधानं स दीक्षितो यदि रोगरहितो भवति तदाऽऽहवनीयं पुनर्गार्हपत्ये संसृज्य तं याजयेदित्यर्थस्याभिधानं, यदि तु स दीक्षितो म्रियेत तदा तं तत्पुत्रादयस्तदीयैरेवाग्निभिर्दहन्तीतरे तु सत्रिणोऽन्यावाग्निभिरेव यजमानाः सन्त आसत इति सकारणं निरूपणम् यदा च संवत्सरात्मकसत्राय संवत्सरसदः सत्रिणो दीक्षन्ते तदा तेषामग्निहोत्रं पौर्णमासं हविः पिण्डपितृयज्ञ आमावास्यं हविराग्रयणेष्टिश्चातुर्मास्यानि पशुबन्धो ज्योतिष्टोमश्चेत्येते यज्ञक्रतवः कथमन्तरिता न भवन्तीति पर्यायशः प्रश्नानुद्भाव्य तेषां तेनैव क्रमेण पर्यायश एव व्रतेनाज्यपुरोडाशाभ्यामौपासनैर्दधिपुरोडाशाभ्यां सौम्येन चरुणा पयस्यया पशुपुरोडाशाभ्यां सवनैश्चैते सर्वे यज्ञक्रतवः संवत्सरं प्राप्यानन्तरिता भवन्तीत्युत्तरप्रदानवर्णनम्, इमामुक्तां यज्ञक्रतूनामपीतिं वेदितुः फलकथनं, संवत्सरस्य गवामयनेन सह समतायाः सोपपत्तिकं प्रतिपादनम्, उक्तार्थं वेदितुः फलप्रतिपादनं चेत्यादि.

इति तृतीयोऽध्यायः ।

## अथ चतुर्थोऽध्यायः ।

१—**अग्निहोत्र प्रायश्चित्तयः**—तत्र प्रथमं अग्निहोत्रस्य दीर्घसत्रात्मना जरामर्यसत्रात्मना च सफलं प्रशंसनं, दीर्घसत्रिणोऽग्निहोत्रं जुह्वतो यदि गार्हपत्यादीनामन्तरा सञ्चरणं भवेत्तदा प्रायश्चित्तिं कुर्यान्न वा कुर्यादिति संशयमुत्पाद्यापीष्ट्या यजेतेति पूर्वपक्षीकृत्य तद्धु तन्नाद्रियेतेति पूर्वपक्षं प्रत्याख्याय गार्हपत्यादीनां लोकात्मत्वमभिधाय तेषु लोकेषु वयांसि युक्तं चायुक्तं च सञ्चरन्ति नैव च काचनार्तिरस्तीत्यादिहेतुसहितं प्रायश्चित्तिं नैव कुर्यादिति राद्धान्तप्रतिपादनम्, अग्निहोत्रेऽधिश्रिते यदि श्वमेषशूकराणां त्रयाणाममेध्यानां पशूनां गार्हपत्यादीनामन्तरा गमनं भवेत्तदा एकेषां मतेन गार्हपत्याद्भस्मोद्धृत्य तद्भस्म निवपन्तो गार्हपत्यादाहवनीयं यन्तीदं विष्णुरिति मन्त्रेणेत्येकीयं मतं सकारणमभिधाय पुनः सकारणं तत्प्रत्याख्याय चेदं विष्णुरित्यनेनैव मन्त्रेण उदकस्थालीं वोदककमण्डलुं वाऽऽदाय गार्हपत्यादाहवनीयं यावत्प्राचीमुदकधारां निनयन्नियादिति सिद्धान्ततया सकारणं स्वमतप्रतिष्ठापनम्, अग्निहोत्रहविःस्कन्दने सप्रकारकं प्रायश्चित्तविधानं, स्थाल्या नीचीभावे भेदने वा सप्रकारकं प्रायश्चित्तविधानं, तत्र स्कन्नाभिमर्शने सार्थवादं मंत्रस्य विधानं, तत्रैव स्कन्नस्योपरि " भूर्भुवः स्वः " इत्येताभिर्व्याहृतिभिरपामासेचनस्य सार्थवादं विधानं, तत्रैव भिन्नस्थालीशकलानां भस्मोद्वापे प्रक्षेपस्य

| ब्रा० विषयाः | पृष्ठाङ्काः |
|---|---|
| विधानम्, अग्निहोत्रार्थं दुह्यमाना गौर्यद्युपविशेत्तदा तां "उदस्थाद्देव्यदितिः" इत्यादिना यजुषोत्थाप्य दुग्ध्वा च स्वगृहमनभ्यागमिष्यते ब्राह्मणाय दद्यादिति मन्त्रार्थवादसहितमेकेषां मतेन प्रायश्चित्तविधानं, याज्ञवल्क्यमतेन त्वग्निहोत्रार्थं दुह्यमाना गौर्यद्युपविशेत्तदा तां जघनप्रदेशे दण्डेन विपिष्य तूष्णीमेवोत्थाप्य दुहीतेत्येवंविधमेव प्रायश्चित्तं कुर्यादिति सार्थवादं विधानम्, उक्तयाज्ञवल्कीयप्रायश्चित्तस्यारुणिमतं पुरस्कृत्यार्थवादेन दृढीकरणम्, अग्निहोत्रार्थं दुह्यमानाया गोः शब्दकरणे सप्रकारकं प्रायश्चित्तविधानं चेत्यादि. | ४८—५२ |
| २—अग्निहोत्रार्थं दुह्यमानाया गोर्लोहित दोहे सप्रकारकं प्रायश्चित्तस्य विधानम्, अग्निहोत्रार्थं दुह्यमानं पयो यद्यमेध्यमापद्येत तदा कर्तव्यस्य प्रायश्चित्तस्य सप्रकारकमभिधानम्, अग्निहोत्रार्थं दुग्धं पयो यद्यमेध्यमापद्येत तदा कर्तव्यस्य प्रायश्चित्तस्य सप्रकारकमभिधानम्, अग्निहोत्रार्थं पयोऽधिश्रितं सद्यद्यमेध्यमापद्येत तदा कर्तव्यस्य प्रायश्चित्तस्य सप्रकारकमभिधानम्, अग्निहोत्रार्थे हविष्यधिश्रिते सति यदि यजमानो म्रियेत तदा कर्तव्यस्य प्रायश्चित्तस्य सप्रकारकमभिधानं, एतदेव प्रायश्चित्तं सर्वस्मिन्हविर्यज्ञे कर्तव्यमित्यतिदेशकथनम्, अग्निहोत्रार्थं स्रुच्युन्नीतं पयो यदि स्कन्देत्तदा कर्तव्यस्य प्रायश्चित्तस्य सप्रकारकमभिधानं, यस्यां स्रुच्युन्नीतं तस्याः स्रुचो नीचीभावे भेदने वा कर्तव्यस्य प्रायश्चित्तस्य सप्रकारकमभिधानम्, अत्र उन्नीतस्य साकल्येन स्कन्दने उक्तप्रायश्चित्तानुष्ठानोत्तरं स्थालीस्थेन परिशिष्टेन जुहुयादित्येकीयं मतं प्रतिपाद्य तत्सकारणं प्रत्याख्याय च स्वमतेन कर्तव्यस्य होमस्य सोपपत्तिकं सप्रकारकमभिधानम्, अग्निहोत्रार्थं स्रुच्युन्नीतं पयो यद्यमेध्यमापद्येत तदा कर्तव्यस्य प्रायश्चित्तस्य सप्रकारकमभिधानं, तत्रैकीयं मतं निरस्य स्वमतप्रतिष्ठापनं च, अग्निहोत्रार्थं स्रुच्युन्नीतं पयो यद्युपरिष्टादववर्षेत्तदा कर्तव्यस्य प्रायश्चित्तस्य सप्रकारकमभिधानं चेत्यादि. | ५२—५६ |
| ३ अग्निहोत्रहोमे पूर्वस्यामाहुत्यां हुतायां सत्यां यदाऽऽहवनीयोऽनुगच्छेत्तदा "दारौ दारावग्निः" इति वदन् काष्ठे वा हिरण्ये वाऽभिजुहुयादित्येतस्य प्रायश्चित्तस्य सार्थवादं विधानम्, अग्निहोत्रहोमे सकृच्छतकृत्वो वोद्धृतस्याप्याहवनीयस्यानुगमने सप्रकारकं प्रायश्चित्तविधानं, सर्वत्र गार्हपत्यस्यानुगमने सप्रकारकं प्रायश्चित्तविधानं, तत्रैकीयं मतमभिधाय तन्निरस्य च स्वमतप्रतिष्ठापनं च, प्रमादादुद्धृतस्याग्नेः पूर्वोद्धृतस्याहवनीयस्योपर्यभिनिधाने किञ्चनानिष्टं फलं प्रदर्श्य तच्छान्त्यै "समितꣳ सङ्कल्पेथाम्" इत्यादिद्वाभ्यामृग्भ्यामुपस्थानं कुर्यादग्नयेऽग्निमतेऽष्टाकपालं पुरोडाशं निर्वपेदित्येवंविधं प्रायश्चित्तं विधायोक्तस्याग्नेरग्निमतोऽष्टाकपालस्य पुरोडाशस्य सप्तदश सामिधेनीः—वार्त्रघ्नावाज्यभागौ—विराजौ संयाज्ये—"अग्निनाऽग्निः समिध्यते"—"त्वꣳ ह्यग्नेऽग्निन ।" इत्येते याज्यानुवाक्ये, इत्यादिविशेषेति- | |

| ब्रा० विषयाः | पृष्ठाङ्काः |
|---|---|
| कर्तव्यताया निरूपणम्, आहवनीयेऽननुगते गार्हपत्योऽनुगच्छेच्चेत्तदैकेषां मतेन विद्यमानादाहवनीयादेव गार्हपत्यस्य प्राञ्चमुद्धरणं—पुनरेकेषां मतेन प्रत्यगर्थात्सकलस्याहवनीयस्य गार्हपत्यस्थाने आहरणं—पुनरेकेषां मतेनान्यस्य गार्हपत्यस्य मन्थनं—पुनरेकेषां मतेन विद्यमानमाहवनीयमनुगमय्यान्यस्य गार्हपत्यस्य मन्थनम्—एवं भिन्नभिन्नैकदेशीयमतेनैतस्मिन्प्रायश्चित्ते पक्षचतुष्टयं प्रतिपाद्य सकारणं तत्पक्षचतुष्टयमपि निरस्य स्वमतेनारण्योरग्नी समारोह्योद्ङ्ङुदवसाय निर्मथ्य जुहुद्वसेदित्येवंविधं प्रायश्चित्तं कुर्यादिति सफलं विधानं चेत्यादि. | ९६—९९ |
| ४ रासभस्यान्तरा गमने प्रज्ञातानां दर्शपूर्णमासाग्रयणचातुर्मास्यादीनामिष्टीनां कालातिपत्तौ स्तोत्रशस्त्रविपर्यासे स्वजनमरणे च प्रायश्चित्ततया कर्तव्यायाः पथिकृदिष्टेः सेतिकर्तव्यताविशेषं विधानम्, आहवनीयादीनां परस्परं संसर्गे वा ग्रामाग्निना संसर्गे च प्रायश्चित्ततया कर्तव्याया विविच्येष्टेः सेतिकर्तव्यताविशेषं विधानं, यश्च द्विषतो भ्रातृव्याद्व्याविवृत्सेत स तत्कामः सन्नेतयेष्ट्या यजेतेत्यस्या इष्टेः काम्यत्वप्रदर्शनं च, आहवनीयादीनां दावाग्निना संसर्गे प्रायश्चित्ततया कर्तव्यायाः संवर्गेष्टेः सेतिकर्तव्यताविशेषं विधानं, यश्च द्विषतो भ्रातृव्यात्संविवृक्षेत स तत्कामः सन्नेतयेष्ट्या यजेतेत्यस्या इष्टेः काम्यत्वप्रदर्शनं च, आहवनीयादीनां वैद्युताग्निना संसर्गे प्रायश्चित्ततया कर्तव्यायाअप्सुमतीष्टेः सेतिकर्तव्यताविशेषं विधानं, तत्र याज्यानुवाक्ययोः फलविशेषद्योतनं च, आहवनीयादीनामशुच्यायतनैरमेध्यैरग्निभिः संसर्गे प्रायश्चित्ततया कर्तव्यायाः शुचीष्टेः सेतिकर्तव्यताविशेषं विधानं, तत्र याज्यानुवाक्ययोः फलविशेषद्योतनं च, आहवनीयेऽनुद्धृते यद्यादित्योऽस्तमियात्तदा कर्तव्यस्य वैश्वदेव्याहुत्यात्मकस्य प्रायश्चित्तस्येतिकर्तव्यतासहितं सार्थवादमभिधानं, आहवनीयेऽनुद्धृते यद्यादित्योऽभ्युदयमियात्तदा कर्तव्यस्य वैश्वदेव्याहुत्यात्मकस्य प्रायश्चित्तस्येतिकर्तव्यतासहितं सार्थवादमभिधानं चेत्यादि. | ९९—६४ |

इति चतुर्थोऽध्यायः ।

## अथ पञ्चमोऽध्यायः ।

| ब्रा० विषयाः | पृष्ठाङ्काः |
|---|---|
| १—प्रोषितस्याग्निहोत्रिणो मरणे श्रुते तन्मृतदेहस्यास्थ्नामागमनं यावत्तावद्गृहे सायम्प्रातर्होमयोर्विशेषेतिकर्तव्यताया अभिधानं, तत्रैकेषां मतेन यावदस्थ्नामागमनं तावदग्निहोत्रं होतव्यमिति—पुनरेकेषां मतेन होमवेलायां समुपस्थितायां केवलमग्नयः सन्दीपनीया न तु होतव्याः किन्त्वास्थ्नामागमनकालं प्रतीक्ष्य स्थातव्यमिति-पुनरेकेषां मतेनारण्योरग्नी समारोह्याग्निहोत्रं स्थगितव्यमाहृते चास्थनि पुनर्निर्मन्थेदिति—एवं विभिन्नैकदेशीयं पक्षत्रयं प्रतिपाद्य तत्पक्षत्रयमपि सकारणं प्रत्याख्याय नीवान्यां दुग्ध्वा तेन पयसा यावदस्थ्नामागमनं तावत्प्रत्यहं सायम्प्रातर्होमौ होतव्याविति स्वमतस्य सकारणं सार्थवादं सोपमं निरूपणं, प्राचीनावीतिना दोहो न तु | |

| ग्रा० विषयाः | पृष्ठाङ्काः |
|---|---|
| यज्ञोपवीतिना—नाङ्गारेष्वधिश्रयणं किन्तु-गार्हपत्यादुष्णं भस्म दक्षिणतो निरुह्य तस्मिन्नधिश्रयणं—सकृदुद्वासनं न त्रिः—नोपरिष्टात्समिधं धारयित्वा स्रुचो हरणं किन्त्ववस्तात्समिधं धारयित्वा स्रुचो हरणम्—आहरणं च गार्हपत्यमुत्तरेण न किन्तु गार्हपत्यं दक्षिणेन-परिस्तरणार्था-नि कुशतृणान्युदीचीनाग्राणि न किन्तु दक्षिणाग्राणि—आहवनीये समिधमभ्या-धाय सव्यं जान्वाच्य सकृदेव तूष्णीं न्यक्पर्यसनं—इत्यादिमृतकाग्निहोत्रोपचा-राणां प्रदर्शनम्, अवज्योतनापःप्रत्यानय-नोन्नयनप्रैषचतुरुन्नयनादि उदिङ्गनोपमा-र्जनप्रासनोद्वक्षणसमिदाधानादि च जीव-दग्निहोत्रोपचाराश्च न कर्तव्या इति निषेध-कथनं, प्रोषितस्य मृतस्याग्निहोत्रिणो-ऽदग्ध्वाऽऽहरणमाहृतस्य चाग्निभिः सङ्घ्रा-पणमित्येकीयं मतं सकारणं प्रत्याख्याय स्व-मतेन सं प्रोषितं मृतमग्निहोत्रिणं लौकिका-ग्निना दग्ध्वा तदीयास्थीन्याहृत्य कृष्णा-जिने न्युप्य पुरुषविधिं विधायोर्णाभिः प्रच्छाद्याज्येनाभिघार्य ततस्तं स्वाग्निभि-र्दहेदिति दाहकल्पविधानं, तत्र दाहे केषाञ्चन मतेन ग्रामाग्निना दाहः—केषा-ञ्चन मतेन प्रदव्येनाग्निना दाहः—केषाञ्चन मतेनोल्मुक्येनाग्निना दाहः—केषाञ्चन मतेनान्तरेणाग्नींश्चितिं च चित्वा तमग्निभिः सन्दहेदिति विभिन्नैकदेशीयमतचतुष्ट-यस्य किमपि किमप्यनिष्टफलं प्रदर्श्य तेन तेन कारणेन निराकरणप्रदर्शनं चेत्यादि. | ६९—६९ |
| २—अप्रोषितस्य प्रेतस्याग्निहोत्रिणो-ऽन्त्यकर्म—तत्रादौ प्रेतोऽग्निहोत्री समा-रूढनिर्मथितैरग्निभिर्दग्धव्य इत्यमुं नाक-र्षिसम्मतं पक्षं सप्रकारकमुपन्यस्य तस्य कारणनिर्देशपुरःसरं निरसनं, सप्रकारकं सन्तापजाग्नीनामुत्पादनं प्रतिपाद्य तैरेव सन्तापजाग्निभिरेनं प्रेतमग्निहोत्रिणं सन्द-हेदिति स्वसम्मतपक्षस्य निरूपणम्, उक्ते-ऽर्थे मन्त्रब्राह्मणयोरुभयोः सम्मतिरस्तीति प्रदर्शनं, तत एनं मृतमग्निहोत्रिणं विपुरीषं कुर्यादितीमं पक्षं सार्थवादं सकारणमुपन्यस्य तं सकारणमेव निरस्य च तं मृतं यजमानमन्तरतः प्रक्षा-ल्याज्येनाक्त्वा मेध्यं कुर्यादिति स्व-कीयपक्षस्य प्रतिष्ठापनम्, अस्य मृत-स्याग्निहोत्रिणः सप्तसु प्राणायतनेषु सप्त हिरण्यशकलान्प्रत्यस्येदिति सार्थवादं विधानम्, अस्य मृतस्याग्निहोत्रिणः प्रत्य-ङ्गेषु पात्रविशेषप्रतिपत्तेः सप्रकारकमभि-धानम्, उक्तायाः पात्रप्रतिपत्तेः फलकथनं, सन्तापजैरग्निभिर्दाहे च फलकथनं, तत्र यदि गार्हपत्यः पूर्वः प्राप्नुयात्तदा यत्फलं लब्धं भवति तस्याभिधानं, यदा चाह-वनीयः पूर्वः प्राप्नुयात्तदा यत्फलं भवे-त्तस्य निरूपणं, यदि चान्वाहार्यपचनः पूर्वः प्राप्नुयात्तदा यत्फलं लभ्येत तस्य प्रतिपादनं, यदि च सर्वे सकृत्प्राप्नुयु-स्तदा यत्फलमुत्पद्यते तस्याभिधानं, चितौ हूयमाने यजमानशरीरे आहुतित्वमारोप्य तयाऽऽहुत्याऽस्य स्वर्गो लोको जितो भवत्यमृतमयश्च सम्भवतीति फलोपवर्णनं, यान्यश्ममयानि मृन्मयानि च पात्राणि तानि ब्राह्मणाय दद्यादितीमं पक्षमभिधा-यास्मिंश्च पक्षे प्रतिग्रहीतारं शवोद्वहं जना वदिष्यन्तीत्यनिष्टत्वं दर्शयित्वा- | |

| ब्रा० विषयाः | पृष्ठाङ्काः |
|---|---|
| ऽप्सु तेषां सर्वेषां पात्राणामवहरणं विधेयमिति पक्षान्तरनिरूपणं, ततः पुत्रेण भ्रात्राऽन्येन केनचिद्ब्राह्मणेन वा एकाऽऽज्याहुतिः "अस्मात्त्वमधि जातोऽसि" इत्यनेन मन्त्रेण होतव्येति निरूपणम्, अनपेक्षमेत्याप उपस्पृशेयुरित्येतन्निरूपणं चेत्यादि. | ६९–७४ |

इति पञ्चमोऽध्यायः ।

**अथ षष्ठोऽध्यायः ।**

| ब्रा० विषयाः | पृष्ठाङ्काः |
|---|---|
| १–ज्यौतिष्टोमिकानि प्रायश्चित्तानि–तत्र प्रथमम् अधिदैवतया सोमसाधनकयज्ञस्य प्रजापत्यात्मकत्वाभिधानं, तस्य यज्ञस्य वक्ष्यमाणाःपरमेष्ठ्यादयो देवता आहुतयश्च प्रायश्चित्तीयानि शरीराणीत्यभिधानं, यदि सोमयज्ञस्य किञ्चिदङ्गं विनश्येत्तदा तस्य पुनः सन्धानार्थं तस्मिन्नङ्गे यां देवतां परमेष्ठ्यादिकाममिमन्येत तस्यै देवताया आज्याहुतिं जुहुयादिति सामान्यतयाऽभिधानं,तच्चाङ्गं यदि दीक्षायामुपसत्सु वा प्रायणीयादूर्ध्वं सुत्यायाः प्राक्च विनष्टं भवेत्तदाऽऽहवनीये जुहुयाद्यदि तु सुत्यायां विनष्टं भवेत्तदाऽऽग्नीध्रे जुहुयादित्यभिधानम्, एतस्मिन्सोमयागेऽभिध्यानादितत्तन्निमित्तेषु परमेष्ठ्यादिसलिलान्तानां व्याहृतिसंज्ञकानां प्रायश्चित्तार्थानां चतुस्त्रिंशतामाज्यद्रव्यकाणां कालाहुतीनां मध्ये तां तामाहुतिं यथाकालं जुहुयादिति विशेषतया सार्थवादमभिधानं, ता एताः प्रायश्चित्तरूपाः कालाहुतीर्ब्रह्मैव जुहुयात्तदभावे यः कश्चनान्य ऋत्विक् स्यात्स जुहुयादिति सकारणमभिधानम्, एतासां परमेष्ठ्यादिव्याहृतीनामुत्पत्तिःएताश्च व्याहृतीः पूर्वं वसिष्ठा एव विदुरतस्तद्वेदिता वासिष्ठ एव ब्रह्मा कर्तव्योऽथवा यः कश्चनैता व्याहृतीरधीते जानाति वा स ब्रह्मा कर्तव्यः–तथैताः सौमिक्यः प्रायश्चित्तयश्चोदकात्संवत्सरसत्रादिष्वतिदिष्टा भवन्ति–इत्याद्यर्थजातस्य सेतिहासं सार्थवादं सोपपत्तिकमभिधानं चेति. | ७९–८३ |

इति षष्ठोऽध्यायः ।

**इत्युत्तरक्रतुनिरूपणान्तोऽशीतिपथसंज्ञकः शतपथविभागः ।**

**अथ सप्तमोऽध्यायः ।**

| ब्रा० विषयाः | पृष्ठाङ्काः |
|---|---|
| १ सौत्रामणीयागः–तत्र प्रथमं सौत्रामणीयागोत्पत्त्यर्थं विश्वरूपाख्यायिकाकथनं, तस्यां चेन्द्रकृतं विश्वरूपहननं–विश्वरूपपुत्रकृतमिन्द्रोद्देशकाभिचारयागं कृत्वाऽपेन्द्रं सोमापहरणं–इन्द्रकृतं तदीययज्ञविनाशं कृत्वा बलात्सोमपानं–स सोमः शक्रशरीरं सर्वतो व्याप्याङ्गादङ्गाद्वीर्यरूपेणास्रवत्–इत्याद्यर्थजातस्य संक्षेपेण वर्णनं, इन्द्रस्याक्षिनासिकामुखश्रोत्रेन्द्रियेभ्यः क्रमशस्तेजोवीर्यबलयशोरूपेण स्रुतात्सोमादजाविगोऽश्वाश्वतरगर्दभानां पशूनां पक्ष्माश्रुश्लेष्मस्नीहाफेनेभ्यो गोधूमकुवलोपवाकबदरयवकर्कन्धूनां चोत्पत्तेरभिधानं, स्तनाभ्यां शुक्ररूपेण स्रुतात्सोमात्पयः–उरसस्त्विषिरूपेण स्रुतात्सोमाच्छ्येनः पक्षी–नाभीतः शूषात्मना स्रुतात्सोमात्सीसं–रेतसो रूपात्मना स्रुतात्सोमाद्धिरण्यं–शिश्नाद्रसात्मना स्रुतात्सोमात्परिस्रुत्–स्फिगीभ्यां क्रोधरूपेण स्रुतात्सोमात्सुरा–मूत्रादोजोरूपेण स्रुतात्सोमाद्वृकः पशुः– | |

| ब्रा० | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| | ऊवध्यान्मन्युरूपेण स्रुतात्सोमाद्व्याघ्रः- लोहितात्सहोरूपेण स्रुतात्सोमात्सिंहः- लोमभ्यश्चित्तरूपेण स्रुतात्सोमाच्छ्यामाकाः—त्वचोऽपचितिरूपेण स्रुतात्सोमादश्वत्थवृक्षः—मांसेभ्य ऊर्ग्रूपेण स्रुतात्सोमादुदुम्बरो वृक्षः—अस्थिभ्यः स्वधारूपेण स्रुतात्सोमान्न्यग्रोधो वृक्षः—मज्जभ्यः:सोमपीथरूपेण स्रुतात्सोमाद् व्रीहयश्चेत्यादि सौत्रामण्युपकरणजातं समुत्पन्नमिति क्वचित् क्वचिद्विशेषणविशिष्टमभिधानं, ततः कदाचिदिन्द्रो नमुचिनाऽसुरेण सह चचार, तदा नमुचिस्तमिन्द्रं पुनर्भूतं विलोक्य सुरया तस्येन्द्रियं सोमपीथमन्नाद्यं च वीर्यमपाहरदिन्द्रश्चार्दितः सञ्छयितवानित्याद्याख्यायिकांशकथनं, 'ततो देवास्तमुपगम्यायमिन्द्रोऽस्माकं प्रशस्यतम आसीदधुना तु पाप्मानं प्राप्तो हन्तेमं भिषज्यामेति विचार्य क्रमादश्विनौ सरस्वतीं चाब्रुवन्—यतो युवां भिषजौ त्वं च भैषज्यमतो यूयमिमं भिषज्यतेत्याख्यायिकांशकथनम्, एवं सुरैः प्रार्थितास्ते तान्सुरानब्रुवन्नस्तु नो भाग इति, तदा देवैरश्विभ्यां धूम्रोऽजः पशुः, सरस्वत्यै च मेषः पशुः, यस्माच्चायमिन्द्रोऽस्माकमृषभस्तस्मात्तस्मा ऋषभः पशुर्भागत्वेन परिकल्पित इत्याद्याख्यायिकांशकथनं, ततोऽश्विनौ सरस्वती च यथा यथा स्रुतं तत्सर्वं नमुचेः सकाशादाहृत्य तस्मिन्निन्द्रे पुनरदधुरित्याख्यायिकोपसंहरणम्, एवमाख्यायिकया सौत्रामण्यङ्गपशुयागत्रयस्योत्पत्तिमभिधाय प्रसङ्गात्सौत्रामणीशब्दनिर्वचनं तद्वेदितुः फलकथनं च, दक्षिणाधिकारविधिनिरूपणं चेत्यादि. | ८५–८९ |
| २ | सोमातिपूतसोमवामिनोस्तत्राप्यलम्भूतेरसम्भूतेरलम्पशोरपशोश्चायं सौत्रामणीयागो भवतीति सौत्रामणीयागप्रयोजकं सोपपत्तिकं निमित्तद्वयनिरूपणम्, आश्विनसारस्वतैन्द्रेतिपशुयागत्रयस्य प्रातिस्विकफलनिर्देशद्वारा प्रयोजनप्रतिपादनं, अश्विसरस्वतीन्द्रदेवतास्वध्यात्मसम्पत्तेर्निरूपणम्, एताभिरेव देवताभिरजादीन्पशूनवरुन्ध इति धूम्रादीनामधिभूतसम्पत्तेर्निरूपणम्, अनुपदं निरूपिताजाविगवाख्यपशुत्रयेण सह वडवाऽनुशिशुर्भवतीत्यारभ्यापाष्ठिहस्य पत्रे भवत इत्यन्तं सौत्रामण्युपकरणभूतानां षट्त्रिंशतां द्रव्याणां सार्थवादमभिधानं, तत्र प्रसङ्गाद्यतः सौत्रामणीयागः स्त्रीपुंरूपेष्टिपशुबन्धविलक्षणस्तस्मात्तत्र क्लीबात्सीसेन शष्पाणि क्रिणीयादिति चरकाध्वर्युमतमनूद्य तन्मतं सौत्रामण्या इष्टिपशुबन्धोभयात्मकत्वस्य सोपपत्तिकप्रतिपादनेन प्रत्याख्याय च सोमविक्रयिणः पुरुषादेव शष्पाणि क्रिणीयान्न क्लीबादिति सोपपत्तिकं स्वमतप्रतिष्ठापनम्, उक्तानां षट्त्रिंशतां द्रव्याणां बृहतीत्वसम्पादकार्थवादस्य निरूपणं, देवतान्तरसम्बन्धप्रदर्शनार्थं "अन्यदेवत्याः पशवोऽन्यदेवत्याः पुरोडाशा भवन्ति विलोमैतत्कथं सलोम भवति" इत्यादिपशुपुरोडाशानामुपन्यासस्योपक्रमणम्, तत्रैन्द्रपुरोडाशस्य प्राथम्यं—सावित्रपुरोडाशस्य द्वैतीयीकत्वं-वारुणपुरोडाशस्य तार्तीयीकत्वं च भवतीति सार्थवादं देवतानां | |

| ब्रा० | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| | द्रव्यस्य क्रमस्य च निरूपणं, विहितेषु पुरोडाशेषु कपालसंख्यायाः सार्थवादमुपपादनं विधानं च, सौत्रामण्यां वडवा ऽनुशिशुरश्वोऽश्वतरश्च दक्षिणा भवतीति सकारणमभिधानं चेत्यादि. | ८९-९९ |
| २ | यदा च नमुचिरसुर इन्द्रस्येन्द्रियमन्नस्य रसं सोमरूपं भक्षमाहरत्तदेन्द्रोऽश्विनौ सरस्वतीं चोपाधावच्छेपानोऽस्मि नमुचये इति सप्रकारकां प्रतिज्ञां चाकरोदित्याख्यायिकांशकथनं, तत इन्द्रः प्रतिज्ञामनुसृत्य व्युष्टायां रात्रौ अनुदिते चादित्ये नमुचेः शिर उदवासयत्तत- श्छिन्ने शिरसि सोमं लोहितमिश्रं सम्पन्नं दृष्ट्वा उद्विग्ना देवा एतच्छुक्रमन्धसो विपानं विलोक्य तेनैनं सोमं पुनः स्वदनयोग्यं कृत्वा चात्मनि स्थापितवन्त इत्याद्याख्यायिकाशेषकथनं, तत्रापि मध्ये उक्तेतिहासस्य दाढर्याय मन्त्रद्वयसंवादकथनं "यो भ्रातृव्यवांस्स एतया सौत्रामण्या यजेत" इति सार्थवादं सौत्रामण्यधिकार्यन्तरप्रदर्शनं च, मन्त्रमन्त्रार्थसहितं सुरार्थानामोदनचूर्णमासराणां सन्धानस्य सार्थवादं त्रिरात्रस्थापनस्य च विधानं, वरुणप्रघासवद्दक्षिणा चोत्तरा च द्वे वेदी कर्तव्ये इति सार्थवादं विधानं, पयश्च सुरा चेति द्वे द्रव्ये भवत इति सार्थवादं विधानं, "सुरां पूत्वा पयः पुनाति" इति साभिप्रायं पावनक्रमप्रदर्शनं, सोमातिपूतस्य यजमानस्य सोमवामिनो यजमानस्य समृद्धिकामस्य यजमानस्य च सौत्रामणीयागे क्रमात्प्रत्यङ्पदघटितेन "वायोः पूतः" इति मन्त्रेण प्राङ्पदघटितेन "वायोः पूतः" इति मन्त्रेण "पुनाति ते" इति मन्त्रेण च मन्त्राभिप्रायसहितं सुरापावनविधानं, मन्त्रमन्त्रार्थविवरणोपेतं पयसः पावनविधानम्, आदौ पयोग्रहान्गृहीत्वा पश्चात्सुराग्रहा ग्राह्या इति सकारणं ग्रहग्रहणक्रमप्रदर्शनं, "कुविदङ्ग" इति मन्त्रेण पयोग्रहान्गृह्णीयादिति सार्थवादं विधानं, "नाना हि वाम्" इति मन्त्रेण सुराग्रहान्गृह्णीयादिति सार्थवादं विधानं, पयोग्रहाणां क्षत्रत्वं सुराग्रहाणां विट्त्वं च प्रतिपाद्य तेषामुभयेषामव्यतिषिक्तग्रहणं न कुर्यादिति निन्दार्थवादेन सूचयित्वा व्यतिषिक्तग्रहणं कुर्यादिति प्रशंसार्थवादेन सूचनं, पयोग्रहाणां प्राणत्वं सुराग्रहाणां शरीरत्वं च प्रतिपाद्य पूर्ववत्तेषामुभयेषामव्यतिषिक्तग्रहणं न कुर्यादिति निन्दार्थवादेन सूचयित्वा व्यतिषिक्तग्रहणं कुर्यादिति प्रशंसार्थवादेन सूचनं, पयोग्रहाणां सोमत्वं पशुत्वं ग्राम्यपशुत्वं च सुराग्रहाणामन्नत्वमारण्यपशुत्वं चाभिधाय तत्र पयोग्रहाणां ग्रहणेन सोमपीथः पशवो ग्राम्याः पशवश्च सुराग्रहाणां ग्रहणेनान्नाद्यमारण्याः पशवश्चावरुद्धा भवन्तीत्यर्थवादस्य निरूपणं, यदि ग्राम्येणारण्येन चान्नेन पयोग्रहाञ्छ्रीणीयात्तदा ग्राम्याणां पशूनां ग्राम्यं चारण्यं चान्नाद्यमवरुद्धं भवतीत्यस्यार्थवादस्य निरूपणं, पापघ्न्या देवताया एतद्रूपमिति दर्शयितुं वक्ष्यमाणार्थवादकथनं, तत्र घोराणामारण्यकपशूनां लोमभिः पयोग्रहान्न श्रीणीयादिति निन्दार्थवादेन सूचयित्वा सुराग्रहानेवैतेषां घोराणा- | |

ग्रा० विषयाः पृष्ठाङ्काः | ग्रा० विषयाः पृष्ठाङ्काः

मारण्यकपशूनां लोमभिः श्रीणीयादिति प्रशंसार्थवादेन सूचनं, प्रसङ्गाल्लोकेऽपि यज्ञानुकरणेन सुरां पीत्वा रौद्रमनाः पुरुषो ग्राम्याणां पशूनामहिंसायै मृगयाव्याजेनारण्येषु पशुषु रौद्रमायुधं दधातीति लौकिकव्यवहारप्रदर्शनम्, अध्वर्युप्रतिप्रस्थातारौ जघनेन वेदिम्प्राञ्चमावृत्तं यजमानं "या व्याघ्रं" इति मन्त्रद्वयेन श्येनपत्राभ्यामूर्ध्वञ्चावाञ्चञ्च पावयत इति सार्थवादं प्रतिपादनं, "सम्पृचः स्थ" इति मन्त्रेण पयोग्रहान् "विपृचः स्थ" इति मन्त्रेण सुराग्रहान्संमृशेदिति सार्थवादं विधानं चेत्यादि. ९९–१०३

इति सप्तमोऽध्यायः।

## अथाष्टमोऽध्यायः।

१–यत्रेन्द्रस्येन्द्रियाणि वीर्याणि व्युदक्रामंस्तानि देवाः पुनरस्मिन्यज्ञे पयोग्रहाणां सुराग्रहाणां च ग्रहणेन तस्मिन्समदधुरिति वक्ष्यमाणानां पयोग्रहसुराग्रहहोमानां प्रशंसनम्, उत्तरेऽग्नौ पयोग्रहा होतव्या इति सार्थवादं विधानम्, अध्वर्युः "सुरावन्तं" इति मन्त्रेण पयोग्रहान् जुहुयादिति विधायोक्तं मन्त्रं व्याख्याय च होमोत्तरं हुतशेषं भक्षयेदिति सार्थवादं विधानं, विहितं भक्षणमनूद्य तत्र मन्त्रं विधाय तस्य व्याख्यानं, सुराग्रहा दक्षिणेऽग्नौ होतव्या इति सार्थवादं विधानम्, अध्वर्युः "यस्ते रसः सम्भृतः" इति मन्त्रेण सुराग्रहान् जुहुयादिति विधायोक्तं मन्त्रं व्याख्याय च होमोत्तरं हुतशेषं भक्षयेदिति सार्थवादं विधानं, विहितं भक्षणमनूद्य तत्र मन्त्रं विधाय तस्य व्याख्यानं, तदेतत्सुराग्रहभक्षणं भक्षार्थं परिक्रीतेन राजन्यवैश्ययोरन्यतरेण कर्तव्यमिति चरकाध्वर्यूणां मतमनूद्य सकारणं निरस्य च कारणप्रदर्शनपुरःसरं प्रागुक्तस्वीयमतस्य दृढीकरणं, दक्षिणस्याहवनीयाग्नेस्त्रीनङ्गारान् बहिष्परिधि निर्वर्त्य तेषु "पितृभ्यः" इत्येताभिस्तिसृभिर्व्याहृतिभिर्होमावशिष्टान् सुराग्रहान् जुहुयादिति प्रोक्तव्याहृतीनामभिप्रायसहितं विधानं, ग्रहपात्रेष्वप आनीय ता होमदेशेषु यथाक्रमं निनयतीति मन्त्रमन्त्राभिप्रायसहितं विधानं, "पितरः शुन्धध्वम्" इत्यस्य मन्त्रस्य जपविधानम्, अनुपूर्वमेवैनान्पित्रादीन्सर्वान् पावयतीति सहेतुकं विधानं, तच्च विहितं पावनं त्रिभिः पवित्रैः पावमानीभिः "पुनन्तु मा पितरः" इत्येताभिर्ऋग्भिस्तत्रापि तिसृभिस्तिसृभिर्ऋग्भिरेवं नवभिर्ऋग्भिः पावयन्त्यध्वर्युप्रभृतय इति सार्थवादं विधानं, पूर्वं "त्रिभिः पवित्रैः पावयन्ति" इति यत्सामान्यतो विहितं तत्राजाविलोममयेन पवित्रेण गोऽश्ववालमयेन पवित्रेण हिरण्मयेन पवित्रेण च पावयन्तीति विशेषस्य सार्थवादं विधानम्, एतानि त्रीणि पवित्राण्यन्तर्धाय पूतया सुरया पावयन्तीति तात्पर्यतो विधानं, यो विद्वानेवमुक्तरीत्या सौत्रामण्या यजते वा उक्तार्थं वेद स सर्वस्मात्पाप्मनो निर्मुच्यत इति फलाभिधानं, सौत्रामण्या याजयितव्यं न वा याजयितव्यमिति सन्देहमुद्भाव्य यतोऽनन्तरायं ह्यस्य यष्टुः सर्वं पाप्मानमपघ्नन्ति तस्माद्याजयितव्यमिति केवलयाज्ञिकविषयकस्य पक्षस्य प्रदानं प्रदाय याजयितव्यमेवेति विद्वद्विषयकस्य पक्षस्य

| ब्रा० विषयाः | पृष्ठाङ्काः |
| --- | --- |

च सार्थवादमभिधानं, तत्रोत्तरस्मिन्पक्षे च्वाकर्षेः सम्मतिरस्तीति प्रदर्शनं, ये च दक्षिणेऽग्नौ चरन्ति तत्र यजमान आज्याहुतिं जुहोति ते सर्वे पितृलोकमनुयन्तीति सार्थवादमभिधानं, विहितामाज्याहुतिमनूद्य तस्यां मन्त्रं विधाय तदभिप्रायप्रदर्शनं, ततः यज्ञोपवीती भूत्वोत्तराग्निमुपसंगम्य यजमानस्तस्मिन्नाज्याहुतिं जुहोतीति सार्थवादं विधानं, विहितामाज्याहुतिमनूद्य तस्यां मन्त्रं विधाय तदभिप्रायप्रदर्शनम्, ऋत्विग्यजमानेषु समन्वारब्धेषु सत्सु अध्वर्युस्तस्मिन्नेवाग्नौ पयो जुहोतीति सार्थवादं विधानं, विहिते पयोहोमे मन्त्रं विधाय तस्य तात्पर्यानुकथनं हुतोच्छिष्टं च यजमान एकाकी सन्भक्षयतीति सार्थवादं विधानं, विहिते भक्षणे मन्त्रं विधाय तस्य तात्पर्यशो व्याख्यानं, चात्वाले हिरण्येन सर्वे मार्जयन्ते इति सार्थवादं विधानं चेत्यादि. १०४–११२

२–सौत्रामण्यां सोमसम्पत्तिः–तत्र प्रथमं प्रजापतिः सोमसाधनकं यज्ञं सृष्ट्वा सोममाहृत्य तेनेष्ट्वा यदा रिक्त इवामन्यत तदा स पुनरमुं सौत्रामणीयागं दृष्ट्वा तेनेष्ट्वा च पुनराप्यायतेत्यादीतिहासस्य वाक्यशेषसहितं निरूपणं, "सोमेनेष्ट्वा सौत्रामण्या यजेत" इति सौत्रामण्याः सोमाङ्गत्वं ज्योतिष्टोमानुष्ठानोत्तरमनुष्ठेयत्वं च सदृष्टान्तमभिधाय सौत्रामणीयागलभ्यफलनिरूपणं, सुप्लानामकराजपुत्रस्य याज्ञिकस्य प्रतीदर्शनामकं राजानं प्रति सौत्रामण्यां सोमयज्ञोऽर्थाच्चदवयवाः कथं सम्भवन्तीति सोपपत्तिकं सौत्रामण्यां सोमसम्पत्तिविषयकप्रश्नकरणप्रदर्शनं, प्रश्नमनुसृत्य प्रतीदर्शस्य सोमसम्पत्तेरुपवर्णनं, तत्र ज्योतिष्टोमे एव तावद्दीक्षाव्रतयोरध्यात्मसम्पत्तेरभिधानं, ज्योतिष्टोमगता निरुक्ता दीक्षाव्रतविषयिण्यध्यात्मसम्पदेव सौत्रामण्यां सम्भवतीति प्रकारान्तरेणोपपादनं, तयोर्दीक्षाव्रतयोर्विविधरूपेण मिथुनसम्पत्तेरभिधानं, सौत्रामणीगतानां शष्पतोक्मलाजानां सोमांशुत्वोपवर्णनं, सौत्रामण्यां प्रातर्माध्यन्दिनोत्तमसवनानां रूपसंपत्तेः सोपपत्तिकं निरूपणं, तत्र प्रथमायां रात्रौ एकस्या गोर्दुग्धेन द्वितीयायां रात्रौ द्वयोर्गवोर्दुग्धेन तृतीयायां रात्रौ तिसृणां गवां दुग्धेन सुरां परिषिञ्चन्तीति सार्थवादं परिषेकस्य विधानं, विहिते परिषेके मन्त्रं विधाय तस्य तात्पर्यार्थव्याख्यानं, सौत्रामण्यामुभयोः सुतस्यासुतस्य च रूपसम्पत्तेः सोपपत्तिकं निरूपणं, प्रैषाप्रीरूपसम्पत्तेर्यथायथमुपपादनं, सर्वे यज्ञाः पयस्वन्तः सोमवन्तः परिस्रुन्मन्तो घृतवन्तो मधुमन्तश्च भवन्तीति सोपपत्तिकं साधयित्वा सौत्रामणीयज्ञोऽपि यज्ञत्वाविशेषात्तद्वानिति द्योतनं, प्रयाजप्रैषेष्वश्विसरस्वतीन्द्राणां सकारणं देवतात्वप्रतिपादनम्, एताभिरश्विसरस्वतीन्द्राभिख्याभिर्देवताभिरेनं सौत्रामणीयागं सम्भरन्ति पूर्वमेताभिर्देवताभिस्तथा सम्भृतत्वादित्यर्थवादस्याभिधानम्, तिसृणामपि वपानां याज्यापुरोऽनुवाक्यानां सन्ततत्वस्य समानदेवत्यत्वस्य च सार्थवादमभिधानम्, आप्रीणामनुष्टुप्छन्दस्त्वस्यानुप्रैषाणां जगतीछन्दस्त्वस्य च सोपपत्तिकं सार्थ-

| ब्रा० विषयाः | पृष्ठाङ्काः |
|---|---|
| वादं प्रतिपादनं, यस्मादत्र व्रतमन्त्रदीक्षादयः सर्वे सोमावयवाः सन्त्यत एष सौत्रामणीयागः प्रत्यक्षं सोमयज्ञ एवेति सौत्रामण्यां सोमसम्पत्तेरभिधानस्योपसंहरणम्, सौत्रामण्यां यजमानः पयोग्रहसुराग्रहशेषं ऋत्विग्भिः सह भक्षयेत्सोमरूपत्वसम्पादनाय, अन्यथाऽयं सौत्रामणीयाग इष्टिर्वा पशुबन्धो वा स्यादिति प्रतिपादनं, तत्राश्विनं ग्रहमध्वर्युःप्रतिप्रस्थाताऽऽग्नीध्रश्चेत्येतेऽध्वर्यवः सारस्वतं ग्रहं होता ब्रह्मा मैत्रावरुणश्चेत्येते त्रयो भक्षयन्ति, ऐन्द्रं ग्रहं यजमान एकाकी एव भक्षयतीति विविधार्थवादसहितं निरूपणं, तत्र मध्ये तेषां ऋत्विजां भक्षणोत्तरमाश्विनग्रहशेषस्य सारस्वतग्रहेऽवनयनं सारस्वतग्रहशेषस्यैन्द्रग्रहेऽवनयनं कर्तव्यमित्यस्याप्यर्थस्य सार्थवादमभिधानं, पुनः पूर्ववदृत्विजां यजमानस्य च भक्षणस्य सप्रकारकं सार्थवादमभिधानं,भक्षाणां मासरूपत्वेन ऋत्विजामृतुरूपत्वेन तत्रापि यजमान भक्षस्य त्रयोदशाधिमासरूपत्वेन यजमानस्य संवत्सररूपत्वेन च प्रशंसनं, त्रयाणां पशूनां लोकत्रयरूपत्वेन त्रयाणां पुरोडाशानामृतुत्रयरूपत्वेन षण्णां ग्रहाणां षड्तुरूपत्वेन च प्रशंसनं, प्राग्विहितं याज्यापुरोऽनुवाक्यानां सन्ततत्वं समानदेवत्यत्वं चानूद्य तत्प्रकारस्य सार्थवादमुपवर्णनं, सर्वेषां ग्रहाणां ये द्वे याज्यापुरोऽनुवाक्ये भवतस्तयोरहोरात्ररूपत्वेन प्रशंसनं, सौत्रामण्याः संवत्सरात्मत्वमुपपाद्य तदात्मनोपासनविधानम्, उक्तार्थज्ञस्य सौत्रामण्येजानस्य फलाभिधानं चेत्यादि. | ११३–१२४ |
| ३ हतपुत्रस्य त्वष्टुरिन्द्रोद्देशकाभिचारयागं कृत्वाऽपेन्द्रं सोमाहरणम्—इन्द्रकृतं तदीययज्ञविनाशं कृत्वा बलात्सोमपानं-स सोमः शक्रशरीरं सर्वतो व्याप्य तस्यान्याङ्गवन्मुखात्प्राणेभ्यश्च श्रीयशसान्यूर्ध्वान्युदक्रामयत्तानि पशून्प्राविशंस्तस्मात्पशवो यशस्विनो जायन्ते इत्यादीतिहासकथनम्, एवमुक्तार्थं विद्वान्यः सौत्रामण्याऽभिषिच्यते सोऽपि यशस्वी भवतीत्यर्थस्य कथनम्, अश्विनौ सरस्वती च यस्मादिन्द्राय सौत्रामण्या भैषज्यं कुर्वन्तः सौत्रामण्यैवेन्द्रमभ्यषिञ्चंस्तस्मात्स इन्द्रो देवानां श्रेष्ठोऽभवद्यथा तथैव य एनया सौत्रामण्याऽभिषिच्यते सोऽपि स्वानां श्रेष्ठो भवतीति निरूपणम्, स चाभिषेकः कृष्णाजिने कर्तव्यो भवतीति सार्थवादं प्रतिपादनं, कृष्णाजिनाधारभूताया आसन्द्याः सार्थवादमभिधानं, सा चासन्दी औदुम्बरी जानुसम्मिता तिरश्री च भवतीति तस्या आसन्द्याः प्रकृतिद्रव्यस्योर्ध्वतिर्यक्परिमाणस्य च सार्थवादमभिधानं, पुनः सा चासन्दी मुञ्जविवयना भवतीति प्रतिपाद्य तस्या आसन्द्या द्वौ पादावुत्तरस्यां वेद्यां द्वौ पादौ दक्षिणस्यां वेद्यां च भवत इति सार्थवादं निरूपणम्, अत्रोक्तार्थवादार्थविषये विदुषो गोरीवीतेर्ऋषेः श्विक्नानां राज्ञ ऋषभस्य च सम्मतेः प्रदर्शनम्, अनुपदोक्तप्रकारेण मन्त्रतदभिप्रायसहितमासन्द्या आस्तरणविधानं, मन्त्रतदभिप्राययुतमासन्द्यां कृष्णाजिनस्यास्तरणविधानं, यजमानस्तस्यामासन्द्यां वारुण्यर्चाऽधिरोहतीति प्रतिपादनम्, सुवर्णरजतौ रुक्मौ पादयो- | |

| ब्रा० | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| | रध उपास्यति प्रतिमन्त्रं मन्त्राभिप्रायोपेतमभिधानं, " पशूनां वसयाऽभिषिञ्चति" इत्यभिषेकसाधनभूतस्य द्रव्यस्य सार्थवादं विधानं, ऋषभशफैर्गृहीता वसाग्रहा भवन्ति ते च त्रयस्त्रिंशत्संख्याकास्तांश्च जगतीछन्दस्काभिः षोडशभिर्ऋग्भिर्जुहुयादिति प्रत्येकस्यार्थस्य सार्थवादं निरूपणं, " सीसेन तन्त्रं मनसा" इति मन्त्रोपलक्षितेनानुवाकेन प्रत्यृचं द्वौ द्वौ होमौ समासं हुत्वा तच्छेषान्सते पात्रे समवनयेदिति सार्थवादं विधानं, तच्च सताख्यं पात्रं वैतसं भवतीति सार्थवादमभिधानं, यजमानस्य सर्वसुरम्युन्मर्दनं कर्तव्यमिति सार्थवादं विधानं, यजमानस्य पुरस्तात्समीपे प्रतिदिशमवस्थितः सन्नध्वर्युरामुखादन्ववस्रावयन् यजमानं शिरस्यभिषिञ्चेदिति सार्थवादं विधानं, तत्र तावद्विहितोऽभिषेकः प्रथमवारमाश्विनेन यजुषा द्वितीयवारं सारस्वतेन यजुषा तृतीयवारमैन्द्रेण यजुषा चतुर्थवारमेकेषां मतेन सर्वाभिर्देवताभिरर्थात्तद्देवत्यैस्त्रिभिर्यजुर्भिः पुनरेकेषां मतेन "भूर्भुवः स्वः" इत्येताभिर्व्याहृतिभिरभिषिञ्चेदिति विधानं,तत्रापि एकेषां व्याहृतिपक्षं कारणाभिधानेन समर्थ्य तं निरस्य च स्वमतेन " एताभिरेवैनं देवताभिरभिषिञ्चेत् " इत्यस्य पक्षस्य कारणोपन्यासपुरःसरं समर्थनं, "पुरस्तात्स्विष्टकृतोऽभिषिञ्चति—अन्तरा वनस्पतिञ्च स्विष्टकृतञ्चाभिषिञ्चति" इत्यादिनाऽभिषेकस्य सार्थवादमवसरविधानं,एवं यजमानं क्रमेण जानुमात्रे नाभिमात्रे मुखमात्रे इत्येतेषु प्रमाणेषु धारयेयुरिति सार्थवादं विधानं, वाजपेयसौत्रामण्योरभिषेकवत्त्वसामान्येन समानत्ववर्णनं, सकारणं सार्थवादं यजमानस्य कृष्णाजिने प्रत्यवरोहणं विधाय तत्र मन्त्रं विनियुज्य तस्य साभिप्रायं तात्पर्यार्थकथनं, वक्ष्यमाणं त्रयस्त्रिंशं वसाग्रहमुद्दिश्य तदङ्गत्वेन सामगानस्य सार्थवादं विधानं, तच्च साम बृहतीच्छन्दस्कायामिन्द्रलिङ्गायां " बृहदिन्द्राय गायत " इत्यस्यामृचि गेयमिति सार्थवादमभिधानम्, ऋत्विजो यजमानश्च सर्वे " संश्रवसे " इत्यादि चत्वारि संज्ञानापरनामधेयानि चतुर्निधनानि पठेयुरिति कारणपूर्वकसंज्ञाननामनिरुक्तिसहितं सार्थवादं विधानं, एतस्य गीयमानस्य साम्न उक्थप्रतिष्ठयोः प्रश्नोत्तराभ्यां निरूपणं, " त्रया देवा एकादश—प्रथमा द्वितीयैः " इत्येताभ्यां मन्त्राभ्यां त्रयस्त्रिंशं वसाग्रहं जुहुयादिति विधाय विनियुक्तयोरेतयोर्मन्त्रयोर्व्याख्यानं, तत ऋत्विक्षूपहवमिष्ट्वा यजमानो भक्षयतीति सार्थवादं विधानं, विहितं यजमानकर्तृकं भक्षणमनूद्य तत्र मन्त्रस्य विनियोजनं, यः सौत्रामण्याऽभिषिच्यते यश्चावान्तरामात्मानमुपह्वयते तस्य पुरुषस्य सर्वमङ्गं संस्कृतमन्यूनं च संभवतीति सौत्रामण्याः प्रशंसनं चेत्यादि. | १२४–१३४ |

इत्यष्टमोऽध्यायः ।

## अथ नवमोऽध्यायः ।

| ब्रा० | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| १ | सौत्रामणीयज्ञात्पुरुषोत्पत्तिः—तत्र प्रकृतादेतस्मात्सौत्रामणीयज्ञात् पुरुषो जायते इति पुरुषोत्पत्तेरुपक्रमस्य निरूपणं, तत्र प्रसङ्गादयं सौत्रामणीयज्ञो | |

ब्रा० विषयाः पृष्ठाङ्काः | ब्रा० विषयाः पृष्ठाङ्काः

ब्राह्मणाधिकारिक इति प्रतिपादनं, ततः "तस्य लोमान्येव शष्पाणि" इत्यारभ्य "सर्वेषां ग्रहाणां द्वे याज्यापुरोनुवाक्ये भवतः प्राणोदानयोस्तद्रूपम्" इत्यन्तं शष्पादियाज्यापुरोऽनुवाक्यान्तस्य सौत्रामण्युपकरणभूतस्य पदार्थजातस्य लोमत्वगादिप्राणोदानान्ततत्तदवयवात्मना पुरुषावयवजातसम्पत्तेः सार्थवादमुपपादनं, निरुक्तायाः पुरुषावयवसम्पत्तेः सार्थवादं प्रकारान्तरेणोपपादनम्, तत्र पशुदेवतानां संसृष्टानां संसृष्टान्येवाध्यात्मिकानि त्रीणि रूपाणि भवन्तीति निरूपणं, पुरोडाशदेवतानां संसृष्टानां संसृष्टान्येवाध्यात्मिकानि त्रीणि रूपाणि भवन्तीति निरूपणं चेत्यादि १३९—१४०

२—सौत्रामण्यामवभृथः—तत्र प्रथमं सौत्रामण्यङ्गावभृथस्योपक्रमकथनं, ततो मासरकुम्भस्य जले प्लावनमज्जनसाधनानां मन्त्राणामभिधानं साभिप्रायं तेषां तात्पर्यार्थव्याख्यानं च, समन्त्रकमपोऽञ्जलिनाऽऽदाय ता अपः समन्त्रकमेव द्वौ विक्रमौ उदङ्क्त्वा यस्यां दिशि द्वेष्यः स्यात्तस्यां दिशि द्वेष्यं प्रति परासिञ्चेदिति सार्थवादं विधानं, स्नानपूर्वकवासोऽपप्लावनस्य समन्त्रकं सार्थवादं विधानं, समन्त्रकं जलादुत्क्रमणं विधाय विनियुक्तमन्त्रस्य व्याख्यानम्, अनपेक्षमेत्याहवनीयमुपतिष्ठेतेति विधानं, विहित उपस्थाने मन्त्रं विनियुज्य तस्याभिप्रायशो व्याख्यानं, समन्त्रकं समिध आदानं समन्त्रकमाहवनीये समिधोऽभ्याधानं च विधाय विनियुक्तमन्त्रयोरभिप्रायकथनं, अस्याः सौत्रामण्या आदावन्ते चादित्यश्चरुः कर्तव्य इति सार्थवादं विधानम्, अस्यादित्यचरोर्दक्षिणा धेनुर्भवति तत्रापि पूर्वे आदित्यचरौ वत्सो दक्षिणात्वेन देय उत्तरे चरौ च माता दक्षिणात्वेन देयेति सार्थवादं दक्षिणादानविधानम्, अवभृथस्य प्रशंसनम्, अवभृथादुदेत्यार्थाभिपशुदेशाद्देशान्तरे गत्वा मैत्रावरुण्या पयस्यया यजेतेति सार्थवादं विधानं चेत्यादि. १४०—१४४

३—सौत्रामण्यङ्गगतानि दर्शनानि—तत्र प्रथमं राज्यादपरुद्धस्य क्षत्रस्य सौत्रामण्यविकारप्रदर्शनार्थमितिहासकथनं, तस्मिंश्चेतिहासे सृञ्जयै राजभिः स्वराष्ट्राद्बहिर्निष्कासितेन रेवोत्तरसा दशपुरुषमारभ्य राज्याद्भ्रष्टो दुष्टरीतुः सौत्रामण्या याजितस्तेन हेतुना स स्वं राज्यं पुनर्लेभे इति कथनं,यस्मादाहवनीये सुरा न होतव्येति याज्ञिका आहुस्तस्मात्त्वं यद्याहवनीये सुरां होष्यसि तर्हि दुष्टरीतुं पापभागिनं यज्ञं च जामियुक्तं करिष्यसीति बाह्लिकोक्त्या दोषद्वयकथनम्, उक्तदोषद्वयपरिहारायाहवनीयादुपाहृतयोराहवनीयाद्भिन्नयोराहवनीयसदृशयोरुत्तरदक्षिणाग्न्योर्मध्ये उत्तरेऽग्नौ पयोग्रहा दक्षिणेऽग्नौ च सुराग्रहा होतव्या इत्यस्या व्यवस्थायाः सोपपत्तिकं निरूपणम्, मध्ये च प्रसङ्गात्प्रणीतानां प्रणीतत्वस्य सकारणमुपपादनम्, पर्यग्निकरणस्य च सकारणमुपपादनं, उत्तरेऽग्नौ पयोग्रहा होतव्याः पशवश्च श्रपयितव्या इत्येतत्सार्थवादमभिधानं, दक्षिणेऽग्नौ सुराग्रहा होतव्यास्त्रिषंयुक्ताभिः पवित्राभिश्च पावयितव्य-

| ब्रा० विषयाः | पृष्ठाङ्काः |
|---|---|
| मित्येतत्सार्थवादमभिधानं, वह्विकस्य स्वगृहमागत्य रेवोत्तरसाऽनुष्ठितवृत्तान्तस्य कथनम्, उत्तरेऽग्नौ पशुपुरोडाशपयोग्रहैः प्रचरणस्य फलनिरूपणं, दक्षिणेऽग्नौ च सुराग्रहहवनस्य त्रिषंयुक्ताभिः पवित्राभिः पावनस्य च फलनिरूपणं, सौत्रामण्या आत्मत्वमैन्द्रवायोधसयोः पश्वोर्बाहुद्वयरूपत्वं च सकारणमुपपाद्य सौत्रामण्या आदावन्ते च यथाक्रमं तयोरैन्द्रवायोधसयोः पश्वोरनुष्ठानस्य सार्थवादं विधानम्, एवमेव सौत्रामण्यां मध्येऽस्य त्रिपशोरेक एव आत्मसदृशो यूपो भवति तदभित इमौ बाहुसदृशौ ऐन्द्रवायोधसौ पशू भवत इति प्रतिपादनं चेत्यादि. | १४४–१५९ |

इति नवमोऽध्यायः ।

इति द्वादशं सौत्रामण्यपरनामकं मध्यमसंज्ञकं काण्डं समाप्तम् ।

## विशेषसूचनम् ।

१ द्वादशे काण्डे तृतीयेऽध्याये चतुर्थब्राह्मणे एकादश्यां कण्डिकायां ( द्विचत्वारिंशत्तमे पृष्ठे ) ऋजुपाप्रथमपर्यायादग्रेतनो द्वितीयः पर्यायः "सर्वान् देवान् आत्मन्नधिषि सर्वेषु देवेषु आत्मानमधाम् ।" इत्याकारक पाठः परिच्युतः । स चात्र मुद्रितः । स तत्र मूलानुसारेणानुसन्धेय इति सप्रश्रयं सूच्यते ॥

२ द्वादशे एव काण्डेऽष्टमेऽध्याये प्रथमब्राह्मणे द्वाविंश्यां कण्डिकायां ( द्वादशोत्तरशततमे पृष्ठे ) ऋजुपाठेऽन्ते "धत्त । इति " इत्यस्मादनन्तरं " हिरण्येन मार्जयन्ते " इत्यस्मात्प्राक् च " तत् ये एवैनमेते याजयन्ति, तानेतदाह-एतन्मयि सर्वं धत्तेति । " इत्याकारकोंऽशः परिच्युतः । स चात्र मुद्रितः । स तत्र मूलानुसरेणानुसन्धेय इति सप्रश्रयं सूच्यते ॥



# अथ त्रयोदशेऽश्वमेधसंज्ञके काण्डे

## विषयानुक्रमणिका प्रारभ्यते।


| ब्रा० | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| | **प्रथमोऽध्यायः।** | |
| १ | अश्वमेधयागः—तत्र प्रथमं सार्थवादमध्वर्युकर्तृकब्रह्मौदनपचनं विधाय तत्र यदाज्यमवशिष्यते तेनाश्वाभिधानिकां रशनामभ्यज्यादत्ते इति सार्थवादं विधानं, रशनाभ्यञ्जनद्वाराऽश्वस्य प्रजापतिदेवताकत्वात्प्रजापतिरिव तेजसा समृद्धो भवत्यश्वश्च पूतो मेध्यो भवतीत्यर्थवादाभिधानम्; उक्ताया रशनाया दर्भमयत्वं सार्थवादं प्रदर्श्य तया पूतं मेध्यं चैवाश्वमालभते इत्यर्थस्य प्रदर्शनम्, आलब्धादश्वाद्यद्रेत उत्क्रान्तं तस्मात्सुवर्णमुत्पन्नं तच्च सुवर्णं महर्त्विग्भ्यो दद्यात्तेन रेतसोक्तपरम्परयाऽश्व एव समृद्धो भवतीति निरूपणम्, ऋत्विजां महत्त्वकारणमभिधाय तैश्च ब्रह्मौदनः प्राशितव्य इत्यपि सार्थवादं विधाय तत्र ब्रह्मौदनप्राशने सुवर्णं हिरण्यं शतमानं दद्यादिति सार्थवादं विधानं, मध्यमस्याह्नः कृते चतसृभ्यो दिग्भ्यः समाहृताश्चतुरवयवा वसतीवरीरपो गृहीत्वा गृहीत्वा समासिच्य परिहरेदिति सार्थवादं विधानं चेति। | १–२ |
| २ | अश्वाभिधानिकाया रशनाया आदाने सप्रयोजनं मन्त्रं विनियुज्य सैषा रशना द्वादशारत्निपरिमाणा भवतीति सार्थवादं विधानं, रशनायाः परिमाणविषये विकल्पमभिधातुं विहितं द्वादशारत्नित्वमनूद्य मतान्तरेण त्रयोदशारत्निरूपं परिमाणं विधाय तस्यार्थवादेन प्रशंसनं, विहितयोक्तपरिमाणया रशनयाऽश्वस्य बन्धने मन्त्रं विधाय तस्य साभिप्रायं व्याख्यानम्, अश्वबन्धनार्थं ब्रह्मामन्त्रणमन्त्रं ब्रह्मणोऽनुज्ञादानसाधनमन्त्रं च विधाय तयोरभिप्रायकथनं, बद्धस्याश्वस्य प्रोक्षणे पञ्च मन्त्रान्विधाय तेषां व्याख्यानं, ततश्चतुरक्षस्य शुनोऽश्वस्य पादान्तराले उपप्लावनस्य समन्त्रकं सार्थवादं विधानं चेति। | २–६ |
| ३ | अश्वसम्बन्धिप्रस्रवणबिन्दूनां निष्क्रयणतया सम्बन्धिनीर्देशाश्वस्तोमीया आज्याहुतीरग्नये स्वाहेत्यनुवाकेन प्रतिमन्त्रं जुहुयादथवाऽनुवाकावृत्त्या प्रतिमन्त्रं सहस्रसंख्या आहुतीर्जुहुयादिति विकल्पेन सार्थवादं सोपपत्तिकं विधानम्, अश्वरूपाणां हिङ्कारादीनां निष्क्रयणात्मिका रूपाख्याः प्रक्रमाख्या वा आज्याहुतीर्हिङ्काराय स्वाहेत्यादिभिर्मन्त्रैर्जुहुयादिति सार्थवादं सप्रयोजनं विधानम्, एताश्चाहुतयो न होतव्या इति सकारणं पूर्वपक्षीकृत्य होतव्या एवेति कारणपुरःसरमेव सिद्धान्तस्थापनं, पुनश्चैता आहुतयोऽग्नेरन्यत्रानायतने न होतव्या इति सकारणं प्रतिषिध्य सावित्र्या एवेष्टेः पुरस्तादनुद्रुत्य सकृदेवाहवनीयरूपे आयतने एव जुहुयादिति सप्रयोजनं विधानं, पुनरन्येषां मतेनैता आहुतयो दीक्षणीयाद्युदवसानीयान्तेषु प्रतियज्ञ- | |

| ब्रा० | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| | मुखे होतव्या इति सार्थवादं पक्षं प्रतिपाद्य तस्मिन्पक्षे निन्दार्थवादेनारुचिं दर्शयित्वा प्रागुक्तावसरे एव सकृदेव होतव्या इत्यस्य पक्षस्यैव सार्थवादं दृढीकरणं, ताश्चाहुतय एकोनपञ्चाशत्संख्याका भवन्तीत्येतस्यार्थस्य सार्थवादं विधानं चेत्यादि. | ६–८ |
| ४ | तिसृणां सावित्रीष्टीनां सेतिहासं सार्थवादं सप्रयोजनमुत्पत्तेरमिधानं, चतस्रो धृतिसंज्ञका आज्याहुतीर्जुहुयादिति सार्थवादं विधाय तासां सायमनुष्ठेयत्वस्य सावित्रीष्टीनां प्रातरनुष्ठेयत्वस्य च सार्थवादममिधानं चेति. | ९–१० |
| ५ | सायं धृतिहोमसमये वीणायां वीणागाथिनौ ब्राह्मणौ संवत्सरं गायत इति सार्थवादं विधानं, विहितस्य ब्राह्मणद्वयकर्तृकस्य वीणायां गाथागानस्य प्रशंसार्थमर्थवादकथनम्, अथवा पक्षान्तरेणोभावपि राजन्यौ एतच्च वीणायां गाथागानं कुरुत इति सार्थवादं विधानम्, अथवा पक्षान्तरेणैको ब्राह्मणोऽपरश्च राजन्यस्तावुभौ वीणागाथिनौ गायेतामिति सार्थवादं विधानं, तत्रैतस्मिन्पक्षे ब्राह्मणराजन्यावुभावपि यदि दिवा गायेतां यदि वा रात्रौ गायेतां तदोभयत्राप्यनिष्टं फलमुत्पद्येतेति निन्दार्थवादेन प्रतिपाद्य दिवा ब्राह्मणो गायेन्नक्तं राजन्यो गायेदिति प्रशंसार्थवादेन व्यवस्थाकरणं, तत्र ब्राह्मणकर्तृकगानस्य राजन्यकर्तृकगानस्य च सार्थवादं प्रकारनिरूपणं, वीणागाथिभ्यां पृथक् पृथक् गोशतं दद्यादिति सार्थवादं विधानं चेति. | १०–१२ |
| ६ | वक्ष्यमाणस्य तृतीयस्याः सावित्रीष्टेरन्ते अध्वर्युयजमानाभ्यां क्रियमाणस्याश्वदक्षिणकर्णे जपस्य साधनभूतमन्त्रस्य साभिप्रायं व्याख्यानं, प्राग्विहितधृतिहोमसाधनभूतं मन्त्रचतुष्टयमभिधाय संवत्सरमध्ये ता धृतिसंज्ञका आहुतयः षोडशनवतयोऽर्थाच्चत्वारिंशदधिकाश्चतुर्दशशतपरिमिता भवन्तीत्यभिधाय चार्थवादेन धृतिहोमस्य प्रयोजनाभिधानम्, अन्वयव्यतिरेकाभ्याम् अश्वमेधयज्ञस्य कारणमुक्त्वाऽश्वमेधयज्ञस्योत्पत्तिविधेरभिधानं, दुर्बलस्याश्वमेधयाजिनोऽश्वो यद्यमित्रैरपहृतस्तदा का प्रायश्चित्तिरित्याशङ्क्यान्यमश्वमानीय प्रोक्षयेयुरिति कारणनिर्देशपुरःसरं प्रायश्चित्तेरभिधानं चेत्यादि. | १३–१४ |
| ७ | आश्वमेधिक्या दीक्षाया उत्पत्तेः सेतिहासममिधानम्, उत्पन्नाया दीक्षाया अवरोधार्थं वैश्वदेवसंज्ञकौद्ग्रभणहोमस्योत्पत्तेरमिधानं, तत्र सप्ताहं दीक्षया प्रचरन्ति देवतानां त्रेधा विभागं कृत्वा प्रत्यहं त्रिकेणेत्येवंक्रमेण सप्त वैश्वदेवसंज्ञकानौद्ग्रभणहोमाञ्जुहति चेति सोपपत्तिकं सप्रयोजनं सार्थवादं विधानं, तानि च सप्त त्रिकाण्येकविंशतिर्भवन्ति तस्या एकविंशतेरधिदैवसम्पत्तेर्निरूपणं, सप्तानां दीक्षाहानां मध्ये षट्सु दिनेषु प्रत्यहं सौमिकानि औद्ग्रभणानि सप्तम उत्तमेऽह्नि तु सौमिकान्याग्निकानि च मिलित्वा षडौद्ग्रभणानि तथाऽन्तिमैका पूर्णाहुतिर्वैश्वदेविकेति संकलनया त्रिंशदौद्ग्रभणानि हवनानि भवन्तीति त्रिंशत्संख्यामभिधाय तस्या विराडात्मना | |

| ब्रा० | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| | प्रशंसनम्, आध्वरिकाणामाश्वमेधिकानां चौद्ग्रभणानां प्रत्यहं सप्तसंख्या भवतीत्यभिधाय शीर्षण्यप्राणसप्तकरूपत्वेन प्रशंसनम्, उत्तमायाः पूर्णाहुत्याः सप्रयोजनं विधानं चेति. | १५–१६ |
| ८ | अश्वमेधयज्ञस्यर्ग्यजुषात्मत्वं सामयजुषात्मत्वं चोपपाद्य वैश्वदेवसंज्ञकाश्वमेधीयौद्ग्रभणहोमस्य प्रयोजनकथनम्, एकविंशत्याश्वमेधिकवैश्वदेवसंज्ञकौद्ग्रभणहोममन्त्राणां त्रिकशः साभिप्रायं प्रदर्शनं, प्राग्विहितायाः पूर्णाहुत्या मन्त्रस्य च साभिप्रायं प्रदर्शनं चेति. | १७–१८ |
| ९ | कृष्णाजिनदीक्षामारभ्योखायां त्रयोदशसमिदाधानान्तस्य कर्मजातस्य करणानन्तरमध्वर्युकर्तव्यस्यैव जपस्य साधनभूतं "आ ब्रह्मन्" इति मंत्रमभिधाय तस्य व्याख्यानं चेति. | १८–२० |
| | इति प्रथमोऽध्यायः। | |
| | **अथ द्वितीयोऽध्यायः।** | |
| १ | अन्नहोमब्राह्मणम्—तत्रादौ अन्नहोमानामुत्पत्तिविधेः सार्थवादं सप्रयोजनमभिधानं, तत्राज्यसक्तुधानालाजानां क्रमेणावयुत्य सार्थवादं विधानं, विहितान्नहोमसाधनभूतानां मन्त्राणां साभिप्रायं दिक्प्रदर्शनं, तत्र "द्वाभ्यां स्वाहा, शताय स्वाहा" इत्यनयोराहुत्योरान्तरालिकानां "त्रिभ्यः स्वाहा" इत्यादीनाम् "एकोनशताय स्वाहा" इत्यन्तानामाहुतिमन्त्राणामुपसंहृतस्वाध्यायतया साभिप्रायं सार्थवादं दिक्प्रदर्शनं, नैकशतमतीयादिति निन्दार्थवादसहितमभिधानम्, एकशतं जुहुयादिति प्रशंसार्थवादसहितमभिधानं, ततः "व्युष्टयै स्वाहा—स्वर्गाय स्वाहा" इति द्वे आहुती साभिप्रायिके समन्त्रके जुहुयादिति विधानं, तत्र पूर्वाहुतिरनुदित आदित्ये द्वितीयोत्तराहुतिरुदिते आदित्ये च होतव्येति सार्थवादं विधानं चेत्यादि. | २१–२२ |
| २ | अश्वमेधस्य यज्ञराजत्वं यजमानाश्वमेधयोर्यज्ञरूपत्वेनाभिन्नत्वं चोपपाद्य पशूनां यूपे नियोजनस्य प्रकृतयज्ञारम्भकत्वप्रतिपादनम्, आश्वमेधिकानामश्वतूपरगोमृगैः सह कृष्णग्रीवादिवामनान्तानां पञ्चदशानां पर्यङ्ग्यपशूनां देवतासम्बन्धस्य बन्धनस्थानस्य च सार्थवादमभिधानं, पर्यङ्ग्यपशूनां पञ्चदशत्वसंख्यायाः पञ्चदशवज्रात्मकत्वमभिधाय तद्रूपेण प्रशंसनं, मध्यमे यूपे आग्नेयावेकादशिनौ द्वौ पर्यङ्ग्याः पञ्चदश चेत्येवं सप्तदश पशून्नियुज्यालभेतेति सार्थवादमभिधानम्, इतरेषु तु यूपेषु षोडश षोडश पशून्नियुज्यालभेतेति च सार्थवादमभिधानं, तानेतान्पशून्कथमाप्रीणीयादित्याशङ्क्य "समिद्धोऽअञ्जन्" इत्यादिभिरेकादशभिर्बार्हदुक्थीभिर्ऋग्भिराप्रीणीयादिति केषाञ्चिन्मतं सकारणमुपन्यस्य तत्प्रतिषिध्य च "समिद्धोऽअद्य मनुषो दुरोणे" इत्यादिभिरेकादशभिर्जामदग्नीभिरेवाप्रीणीयादिति साभिप्रायं स्वमतप्रदर्शनम्, एतेषामश्वादिपर्यङ्ग्यपशूनामेके पृथक्पृथक् याज्यापुरोऽनुवाक्याः कुर्वन्ति इत्येकीयं मतमुपन्यस्य तत्तथा न कुर्यादिति सकारणं प्रत्याख्याय प्राजापत्यस्याश्वादेः पृथग्याज्याऽनुवाक्ये कर्तव्ये इतरेषां सर्वेषां साधारण्यौ देवदेवत्ये द्वे | |

| ब्रा० | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| | एव कर्तव्ये इति सकारणं सार्थवादं स्वमतनिरूपणम्, अश्वस्य हिरण्यपरिष्कृतः शासः—अश्वव्यतिरिक्तानां पर्यङ्ग्यपशूनां ताम्रपरिष्कृताः शासाः-इतरेषां रोहितादीनां त्वायसाः शासाः भवन्तीति सार्थवादं प्रतिपादनम्, अश्वस्य हिरण्यस्य च क्षत्ररूपत्वेन प्रशंसनम्, पर्यङ्ग्यशासपरिष्करणसाधनस्य ताम्रस्य सदृष्टान्तमुपकरणरूपत्वेन प्रशंसनम्, इतरेषां रोहितादिपशूनां तच्छासप्रकृतिद्रव्यस्यायसश्च विड्रूपेण प्रशंसनम्, अश्वस्यावदानानामाहवनीयस्योत्तरपार्श्वे वेतसशाखामये कटे निधानस्य सार्थवादं विधानं चेत्यादि. | २३—२८ |
| ३ | अश्वमेधे मध्यमेऽहनि अश्वस्य पुच्छमालभ्य बहिष्पवमानाय सर्पणं कर्तव्यमिति सार्थवादं विधानं, तत्र प्रस्तोतृप्रतिहर्तृभ्यां सहोद्गातोद्गायेदित्येकीयं मतं निरूप्य सकारणं तन्निषिध्य चोद्गातारमपरुध्योद्गीथायाश्वमेव वृणीते इति सार्थवादं स्वमतनिरूपणं, तत्राप्यश्वस्य वडवादर्शनेन यद्धिङ्करणं तस्य सार्थवादं सामरूपत्वप्रतिपादनम्, उद्गातृभ्यः शतपरिमाणा सुवर्णरूपा स्तोत्रदक्षिणा देयेति स्तावकार्थवादातिदेशसहितं विधानं चेति. | २८—२९ |
| ४ | आश्वमेधिकानां ग्राम्याणामारण्यानां च पशूनां मनुष्यदेवोभयलोकजयहेतुत्वस्य सेतिहासमभिधानं, तत्र ग्राम्यैरश्वादिभिः पशुभिरमुमश्वमेधयज्ञं संस्थापयेदिति प्रशंसकार्थवादसहितं विधानम्, आरण्यान्पशूंस्तु पर्यग्निकृतानेवोत्सृजेदिति निन्दार्थवादेनाभिधानम्, अत्रोक्तेऽर्थे मीमांसापूर्विकाया विद्वत्सम्मतेः प्रदर्शनं, ग्राम्यैः संस्थापनस्य प्रकारान्तरेण प्रशंसनं चेत्यादि. | ३०—३१ |
| ५ | आश्वमेधिका ग्राम्याः पशवः पञ्चदशिनश्चातुर्मास्या एकादशिनश्चेत्येते त्रिविधा भवन्ति तत्र पञ्चदशिषु पशुष्वर्धमाससम्पत्तेः प्रदर्शनं, चातुर्मास्यदेवताकेषु पशुषु संवत्सरसम्पत्तेः प्रदर्शनम्, एकादशिनेषु पशुषु स्वर्गसम्पत्तेः प्रदर्शनं, दशिषु पशुषु विराट्सम्पत्तेः प्रदर्शनम्, एकादश दशतः पशुषु त्रिष्टुप्सम्पत्तेः प्रदर्शनं, पशूनां नानारूपत्वस्य सोपपत्तिकं प्रदर्शनं चेत्यादि. | ३२—३४ |
| ६ | समन्त्रकं सार्थवादं रथेऽश्वनियोजनादिकस्य विधानं, समन्त्रकं सार्थवादं विमुक्तस्याश्वस्य महिषीवावातापरिवृक्ताख्यपत्नीत्रयकर्तृकस्याज्येनाभ्यञ्जनस्य विधानं, महिष्याद्याः पत्न्योऽश्वस्य केसरपुच्छेषु सुवर्णमयान्मणीन्यथा न पतन्ति तथा महाव्याहृतिभिराबध्नन्ति इति सदृष्टान्तं सार्थवादं विधानं, रात्रिहुतशेषमतिरिक्तमाज्यसक्तुधानालाजात्मकमन्नमश्वाय प्रयच्छतीति मन्त्रतदभिप्रायसहितं विधानं, यूपमभितो होतृब्रह्मणोर्ब्रह्मोद्यवदनस्य सार्थवादं विधानं, तत्रादौ ब्रह्मणः प्रश्नकर्तृत्वं होतुश्चोत्तरप्रदातृत्वं पश्चाद्धोतुः प्रश्नकर्तृत्वं ब्रह्मण उत्तरप्रदातृत्वं चेत्येवंक्रमेण ब्रह्मोद्यसम्बन्धिप्रश्नप्रतिवचनानां निरूपणं चेत्यादि. | ३४—३८ |
| ७ | नियुक्तेषु पशुष्वन्वारब्धे च यजमानेऽश्वं प्रोक्षिष्यन्नध्वर्युः प्रोक्षणीरादायाध्वरिकं यजुः पठित्वाऽऽश्वमेधिकं यजुर्जातं पठतीत्यभिधानं, सदेतद्द्विहितं यजुर्जातमभि- | |

| ग्रा० विषयाः | पृष्ठाङ्काः |
|---|---|
| धाय तस्य साभिप्रायं व्याख्यानम्, अश्वस्य मुखे प्रोक्षणीनां धारणे विनियुक्तान्याश्वमेधिकानि यजूंष्यभिधाय तेषामभिप्रायप्रदर्शनं, प्रोक्षणीः पुनः संस्कृत्येतरान्पशून्प्रोक्षतीति विधानं, विहितस्यास्य ब्राह्मणमग्रे वक्ष्यत इत्यभिधानं चेत्यादि. | ३९-४२ |
| ८ वासोऽधिवासं हिरण्यं चेत्येतत्त्रयमश्वायोपस्तीर्य तस्मिन्नेनमश्वं संज्ञपयन्तीति सार्थवादं सविशेषं विधानं, संज्ञप्यमानेऽश्वे "प्राणाय स्वाहा" इत्याद्यास्तिस्रः परिपशव्या आहुतीर्जुहुयादिति सार्थवादं विधानं, पत्नीनामुदानकरणसाधनभूतं मन्त्रमभिधाय तस्याभिप्रायकथनं, सर्वाः पत्न्योऽश्वं त्रिभिर्मन्त्रैस्त्रिस्त्रिरर्थान्वक्तत्वः परियन्ति पर्ययणकाले धवित्रैरेनमुपवाजयन्ति चेति सार्थवादं साभिप्रायं विधानं, ततो महिष्या अश्वसमीप उपसंवेशनस्य समन्त्रकं सार्थवादं विधानं, मन्त्रतदभिप्रायसहितमश्वमहिष्योरधिवासेनाच्छादनकरणविधानं, महिष्या अश्वशिश्नस्य स्वोपस्थे करणसाधनभूतं मन्त्रमभिधाय तस्याभिप्रायकथनं चेति. | ४३-४९ |
| ९ अश्वमेधयाजिनः सकाशाच्छ्रियोऽपक्रमणस्य पुनस्तत्प्रतिसमाधानस्य चोपायनिरूपणोपक्रमकथनं, तत्राभिमेथिनीषु ऋक्षु या गूढाभिप्रायिका ऋचस्ताः पादशोऽनूद्य तासां व्याख्यानद्वारा गूढार्थप्रदर्शनम्, अश्वसमीपसुप्तां महिषीमुत्थाप्य ऋत्विजो यजमानश्चान्ततः सुरभिमतीमृचमन्वाहुरिति सार्थवादमभिधानं, तत्सहैव सुरभिमत्या ऋचः प्रतीकप्रदर्शनं चेति. | ४६-४८ |
| १० असिपथानां लौह्यादिभिः सूचीभिः परिकल्पनस्य सार्थवादं सोपपत्तिकमभिधानं, तत्र ताम्रमय्यो रजतमय्यो हिरण्मय्यश्चेति त्रिविधाः सूच्यो भवन्तीति सार्थवादमभिधानं चेति. | ४८- |
| ११ महिम्नोर्ग्रहयोरुत्पत्तिविधेः सेतिहासं सार्थवादमभिधानं, "वपामभिजुहोति" इति महिम्नोर्ग्रहयोर्होमावसरस्य सार्थवादं प्रदर्शनं, पुरस्तात्स्वाहाकृतय उपरिष्टात्स्वाहाकृतयश्च ये केचन देवास्तानेताभ्यां महिमग्रहाभ्यां प्रीणातीति मन्त्रलिङ्गाभ्यां महिमग्रहहोमयोः प्रयोजनप्रदर्शनं, राज्ञा वपापरियजनस्य च प्रयोजनप्रदर्शनं चेति. | ४९- |
| इति द्वितीयोऽध्यायः। | |
| **अथ तृतीयोऽध्यायः।** | |
| १ **अश्वस्य प्राजापत्याक्षिप्रभवत्वं—ब्रह्महत्याप्रायश्चित्तिश्च**—तत्र प्रथमं प्रजापतेरक्ष्णः सकाशादश्वस्योत्पत्तेरभिधानं, तत्प्रसङ्गादश्वशब्दनिर्वचनम्, अश्वमेधेन प्रजापतेः सर्वमधियज्ञमविकलं भवतीत्यभिधानम्, अश्वमेधस्य सर्वप्रकारस्य पातकोपपातकादेर्विशेषतो ब्रह्महत्यायाश्च प्रायश्चित्तत्वस्य सार्थवादं निरूपणम्, अश्वस्योत्तरतोऽवदानकरणस्यान्येषां पशूनां दक्षिणतोऽवदानकरणस्य च कारणाभिधानं, तत्रापि वैतसे कटेऽश्वावदानकरणस्य कारणप्रतिपादनम्, अश्वमेधे प्रथममहश्चतुष्टोमस्तोम उत्तममहः सर्वस्तोमोऽतिरात्रश्च भवतीति कारणाभिधानपुरःसरं सार्थवादमभिधानं चेति. | ५१-५२ |

| ब्रा० | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| २ | एष यजमानः प्रथमेऽहनि आधियज्ञिकेन परमेण चतुष्टोमस्तोमेन जित्वोत्तरस्मिन्मध्यमेऽहन्याधिदैविकेनैकविंशस्तोमेन प्रतिष्ठां लब्ध्वा तदुत्तरस्मिंस्तृतीयेऽहनि पृष्ठरूपानृतूनन्वारुह्य संवत्सरे प्रतितिष्ठतीत्यभिधानं, तथाऽत्र मध्यमेऽहनि शक्वर्यः पृष्ठं भवन्ति तास्वन्यदन्यच्छन्दः क्रियते—तद्वदन्येऽन्ये ग्राम्या आरण्याश्च पशव आलभ्यन्ते इति च सार्थवादं सकारणमभिधानम्, पूर्वयोरह्नोर्येऽजावय आरण्याश्च पशव आलभ्यन्ते ते न सर्वे पशवो भवन्तीत्यभिधाय गव्या एव पशवः सर्वे पशवो भवन्तीति प्रतिपादनम्, तांश्च गव्यान्सर्वान्पशूनुत्तमेऽह्नि आलभते इति विधानम्, एते च गव्याः पशवो वैश्वदेवदेवत्याश्चित्रवर्णास्तत्रापि परस्परं भिन्नवर्णाश्च भवन्तीति सप्रयोजनं साभिप्रायं निरूपणं चेत्यादि. | ९२—९४ |
| ३ | आश्वमेधिकस्य चतुष्टोमस्तोमस्यानुष्टुब्गायत्रीच्छन्दस्त्वमुपपाद्य तद्द्वारा प्रशंसनम्, आश्वमेधिकस्य पृष्ठस्य शक्वरीच्छन्दस्त्वमुपपाद्य तद्द्वारा प्रशंसनम्, आश्वमेधिकं मध्यममहरेकविंशस्तोमकं भवतीति प्रतिपाद्य तस्यादित्यादिरूपेण प्रशंसनम्, अश्वमेधे मैत्रावरुणगेयं साम वामदेव्यं भवतीति प्रतिपाद्य तस्य प्रजापतिरूपेण प्रशंसनम्, आश्वमेधिकं ब्राह्मणाच्छंसिशस्त्रसम्बद्धं स्तोत्रं पार्थुरश्मसामकं भवतीति प्रतिपाद्य तस्य रश्मिरूपत्वेन प्रशंसनम्, अश्वमेधस्योत्सन्नयज्ञत्वमुपपाद्य तत्रैतत्संकृत्यच्छावाकसाम भवतीति सार्थवादं प्रतिपादनम्, अश्वमेधे एकविंशविधोऽग्निर्भवतीति पक्षं प्रतिपाद्य तस्य प्रशंसा निन्दा च, पुनरश्वमेधे द्वादशविधोऽग्निर्भवतीति पक्षान्तरमभिधाय तस्य प्रशंसा निन्दा च, पुनर्द्वादशविधाग्निपक्षे दोषमभिधायैकविंशतिविधाग्निपक्ष एव श्रेयानिति निगमनम्, अश्वमेधे एकविंशोऽग्निरेकविंशः स्तोम एकविंशतिर्यूपाश्चेति त्रीणि शीर्षाणि तिस्रः ककुदश्च भवन्तीति सोपपत्तिकं निरूपणम्, एतच्छीर्षत्रयककुत्त्रयविज्ञानं वेदितुः फलनिरूपणं चेत्यादि. | ९४—९८ |
| ४ | सर्वाभ्यो देवताभ्योऽश्व आलभ्यते इत्यभिधाय पक्षान्तरेणाश्वं प्राजापत्यं कुर्यादिति विधानं, तत्राश्वस्य प्राजापत्यत्वकरणपक्षे दोषं प्रदर्श्य तद्दोषपरिहारार्थं शादप्रभृतिदेवताभ्योऽश्वाङ्गेभ्यश्चाज्याहुतीर्जुहुयादिति सार्थवादं विधानं, ततोऽरण्येऽनूच्याग्न्यादिदेवताहोमान्हुत्वा द्यावापृथिवीयामुत्तमामाहुतिं जुहुयादिति सार्थवादं विधानं, देवासुरसंवादपुरःसरं स्विष्टकृदर्थमश्वस्य लोहितोद्धरणस्य सार्थवादमभिधानम्, उद्धृतमश्वलोहितं स्विष्टकृद्भ्यो जुहुयादिति सार्थवादं विधानं, विहिते लोहितहोमे तिस्र आहुतयो होतव्या भवन्ति तासु गोमृगकण्ठेन प्रथमामाहुतिं जुहुयादश्वशफेन द्वितीयामाहुतिं जुहुयादयस्मयेन चरुणा तृतीयामाहुतिं जुहुयादिति प्रत्याहुति सार्थवादं विधानं चेत्यादि. | ९८—१० |
| ५ | अरण्येऽनूच्याग्न्यादिदेवताहोमाङ्गभूताया मृत्युसम्बन्धिन्या आहुतेरुत्पत्तेरभिधानं, तत्र शाखान्तरमतेनानेका आहुतयो मृत्यवे | |

| ब्रा० विषयाः | पृष्ठाङ्काः |
|---|---|
| होतव्या इति पक्षं सोपपत्तिकमुक्त्वा तस्य निन्दार्थवादेन प्रत्याख्यानं, स्वमतेन "मृत्यवे स्वाहा" इति मृत्यव एकामेवाहुतिं जुहुयादिति सोपपत्तिकं सार्थवादं विधानं, द्वितीयां "ब्रह्महत्यायै स्वाहा" इतीमां ब्रह्महत्याहुतिं जुहुयादिति सोपपत्तिकं सार्थवादं विधानं, मुण्डिभर्षिमतं पुरस्कृत्यैषैव द्वितीयाऽश्वमेधान्तर्गताऽऽहुतिर्ब्रह्महत्यायाः प्रायश्चित्तिरिति सोपपत्तिकं सार्थवादं निरूपणं चेति. | ६१–६२ |
| ६ अश्वस्तोमीयद्विपदाहोमब्राह्मणम्–तत्र प्रथमम् अश्वस्तोमीयहोमस्योत्पत्त्यभिधानपूर्वकं सार्थवादं विधानम्, अश्वस्तोमीयहोमं कृत्वा द्विपदाहोमः कर्तव्य इति सकारणं प्रतिपादनम्, अश्वस्तोमीयद्विपदाहोमयोः पौर्वापर्यस्याश्वस्तोमीयानां पशुत्वं द्विपदानां च पुरुषत्वं प्रतिपाद्य तद्द्वारा प्रशंसनं, विहितेऽश्वस्तोमीयहोमे षोडशैवाहुतीर्जुहुयान्न कनीयसीर्न वा भूयसीरिति सोपपत्तिकं सार्थवादं विधानम्, अश्वस्तोमीयहोमान्तेऽन्यामुत्तमामाहुतिं न जुहुयात्किन्तु द्विपदासंज्ञका आहुतय एवोत्तमास्ता जुहुयादिति सार्थवादमभिधानम्, आश्वमेधिकेऽवभृथे शुक्लखलतिविक्लिधपिङ्गाक्षविशिष्टस्य पुरुषस्य मूर्द्धनि "जुम्बकाय स्वाहा" इतीमामुत्तमामाहुतिं जुहुयादिति सकारणं सप्रयोजनं विधानम्, अश्वमेधं समाप्यान्ते प्रत्यहमेकमेवं द्वादश ब्रह्मौदनांश्चरूनिर्वपेदथवा प्रत्यहमेकामेवं द्वादशाग्नेयपुरोडाशहविष्का इष्टीः कुर्यादिति विकल्पेन विधानम्, तत्रेष्टिपक्षमादौ प्रशस्यानन्तरं निन्दित्वा च ब्रह्मौदनपक्षस्य प्रशंसनं चेत्यादि. | ६२–६५ |
| ७ अश्वमेधस्य यौगिकसंज्ञाद्वादशकाभिधायकं ब्राह्मणम्–तत्र चाश्वमेधयज्ञस्य भिन्नप्रवृत्तिनिमित्तकानां यौगिकानां द्वादशानां नामधेयानां सफलं निरूपणं चेति. | ६५–६६ |
| ८ अश्वमेधीयप्रायश्चित्तानि–तत्रादौ यद्यश्वो वडवायां गत्वा रेतः सिञ्चेत्तदा वायव्यं पयोऽनुनिर्वपेदित्येषैव प्रायश्चित्तिरिति सार्थवादं विधानम्, यद्यश्वं स्रामो विन्देत्तदा पौष्णं चरुं निर्वपेदित्येषा प्रायश्चित्तिरिति सार्थवादं विधानं, यद्यश्वमक्षतामयो विन्देत्तदा भूम्यंशरूपद्वादशकपालं वैश्वानरं पुरोडाशं निर्वपेदिति प्रायश्चित्तिरित्येतत्सार्थवादं विधानं, यदि चाश्वमक्ष्यामयो विन्देत्तदा सौर्यं चरुं निर्वपेदित्येषा प्रायश्चित्तिरिति सार्थवादं विधानम्, यद्यश्वोऽप्सु म्रियेत तदा यवमयं वारुणं चरुं निर्वपेदित्येषा प्रायश्चित्तिरिति सार्थवादं विधानम्, अनया प्रायश्चित्त्याऽन्यस्याश्वस्यालम्भायानुमतिर्भवति तयैतयाऽनुमत्याऽन्यमश्वमालभेतेति च सार्थवादमभिधानम्, आश्वमेधिक्याः प्रायश्चित्तीयायास्त्रिहविषेष्टेरश्वमेधे यदि किञ्चिन्नश्येत्तत्प्रायश्चित्तार्थं नष्टवेदनार्थं च द्रव्यदेवताभिधानपुरःसरं सार्थवादं विधानम्, यदि वाऽश्वमेधसम्बन्धिनमश्वं शत्रवो विन्देरन्यदि वा म्रियेताश्वो यदि वाऽप्सु म्रियेताश्वस्तदैतेषु निमित्तेष्विमामेव त्रिहविषेष्टिरूपां प्रायश्चित्तिं कृत्वाऽन्यमश्वमानीय प्रोक्षयेयुरिति | |

ब्रा० विषयाः पृष्ठाङ्काः

विधानम्; अस्या एव त्रिहविषेष्टेर्हिरण्यादिनष्टवेदनफलोद्देशेनैवाश्वमेधाद्बहिरपि स्वातंत्र्येण पुरुषार्थतया विधानं चेत्यादि. ६७-६९

इति तृतीयोऽध्यायः ।

अथ चतुर्थोऽध्यायः ।

१ **अश्वमेधस्य फलाधिकारिकालादिकम्**—तत्रादौ अश्वमेधयागेन मोक्षादिसर्वकामा आप्यन्त इति फलविधानम्, अयं च क्षत्रिययज्ञोऽश्वमेध इत्यधिकारिविधानम्, स च—एकेषां मतेन ग्रीष्मर्तौ प्रारब्धव्य इति सकारणमभिधाय तत्रारुचिं मत्वा स्वमतेन वसन्तर्तावेव प्रारब्धव्य इति सकारणं कालविधानम्, तत्रापि फाल्गुनीपौर्णमास्याः पुरस्तात्षडहे सप्ताहे वाऽर्थान्नवम्यामष्टम्यां वा प्रारब्धव्य इति सूक्ष्मावान्तरकालविधानं च, स्तावकार्थवादातिदेशसहितमध्वर्युरध्वर्य्वादिभ्यश्चतुर्णां पात्राणामञ्जलिप्रसृतानां चातुष्प्राश्यं ब्रह्मौदनं निर्वपतीति प्रतिपाद्य पात्राञ्जलिप्रसृतिगतां द्वादशसंख्यामादाय तस्या माससंवत्सराद्यात्मना प्रशंसनम्, तमेतं ब्रह्मौदनमध्वर्य्वादयश्चत्वार ऋत्विजः प्राश्नन्ति तेभ्यश्चत्वारि गवां सहस्राणि चत्वारि सुवर्णानि शतमानानि हिरण्यानि च दद्यादिति सार्थवादं विधानम्, ततोऽध्वर्युर्यजमानाय निष्कसंज्ञकमाभरणविशेषं तद्गले प्रतिमुञ्चन्मन्त्रेण वाचनं दद्याद्वाग्यमप्रैषं च दद्यादिति सार्थवादं विधानम्, उपस्थिताभिर्निष्किणीभिरलङ्कृताभिर्महिषीवावातापरिवृक्तापालागलीसंज्ञिकाभिश्चतसृभिर्जायाभिः सह यजमानोऽन्यगारं प्रविशति तत्र यजमानः पूर्वद्वारेण प्रविशति यजमानपत्न्यश्च दक्षिणद्वारेण प्रविशन्तीति सप्रयोजनमभिधानम्, प्रातराहुत्यां हुतायामध्वर्युः पूर्णाहुतिं जुहुयादिति सार्थवादं विधाय पूर्णाहुत्यां हुतायां च यजमानो ब्रह्मणे वरं दत्त्वा वाचं विसृजेदिति सार्थवादं विधानम्, यजमानः पूर्वदिने स्वगले प्रतिमुक्तं निष्कमध्वर्यवे दद्यादिति सार्थवादं विधानम् ।

**आग्नेयीष्टिः**—तत्रयमिष्टिर्यज्ञपथस्य कामाय यज्ञमुखस्य चाछंवट्काराय कर्तव्येति सार्थवादं विधानम्, तस्या एतस्या आग्नेय्येष्टेः पञ्चदश सामिधेन्यः वार्त्रघ्नावाज्यभागौ उपांशुहविषो मूर्द्धन्वती पुरोऽनुवाक्या याज्या च सद्वती मूर्द्धन्वत्सद्वती पुरोऽनुवाक्यायाज्यामन्त्रप्रतीके विराजौ संयाज्ये सुवर्णं शतमानं हिरण्यं दक्षिणा चेत्यादिविशिष्टेतिकर्तव्यतायाः सार्थवादमभिधानम् ।

**पौष्णीष्टिः**—तत्रायं पौष्णश्चरुरश्वस्य स्वस्त्ययनाय कतव्यो भवतीति सार्थवादं विधानम्, तस्या एतस्याः पौष्णेष्टेः सप्तदश सामिधेन्यो वृधन्वन्तावाज्यभागौ उपांशुहविषो व्रतवती पुरोऽनुवाक्या याज्या च पथन्वती व्रतवत्पथन्वती पुरोऽनुवाक्यायाज्यामन्त्रप्रतीके अनुष्टुभौ संयाज्ये वासःशतं दक्षिणा च इत्यादिविशिष्टेतिकर्तव्यतायाः सार्थवादं निरूपणं चेत्यादि. ७०-७६

२ पौष्णेष्ट्यां तायमानायां यजमानपुरुषा अश्वं स्नापयित्वाऽऽनयन्तीति प्रतिपाद्य स चाश्वः सर्वरूपो जववान्सहस्रगो-

| ब्रा० विषयाः | पृष्ठाङ्काः | ब्रा० विषयाः | पृष्ठाङ्काः |
|---|---|---|---|


मूल्यार्हः प्रथमवया दक्षिणधुर्येभ्य उत्कृष्ट-श्वेत्यादिविशिष्टलक्षणैरुपलक्षितोऽपेक्ष्यते इति सार्थवादमभिधानं, तत्र माल्लवेयर्षिमतेन त्वश्वः शुक्लकृष्णेति द्विरूपः कृष्णसारङ्गो वाऽपेक्ष्यते इति सकारणं सार्थवादमभिधानं, तथा सात्ययज्ञिमतेन त्वश्वः पूर्वार्द्धे कृष्णोऽपरार्द्धे शुक्लः पुरस्ताल्ललाटे कृत्तिकाञ्जिरित्येवं त्रिरूपोऽपेक्ष्यते इति सकारणं सार्थवादमभिधानं, दिग्विजयार्थं विसृष्टस्याश्वस्य पुरस्तात्समन्ततश्च शतं कवचिनो राजपुत्राः-शतं निषङ्गिणो राजन्याः—शतमिषुधर्षिणः सूतग्रामणीपुत्राः—शतं दण्डिनः क्षात्त्रसङ्ग्रहीतॄणां पुत्राः निरमणं निरष्टमश्वशतं च रक्षितृत्वेन नियुञ्ज्यादिति विधानम्।

सावित्रीष्टिः—तत्र प्रथमायां प्रसवितृगुणकाय सवित्रे द्वादशकपालं पुरोडाशं निर्वपेदिति सार्थवादं प्रथमायाः सावित्रीष्टेर्विधानम्, तस्या एतस्याः प्रथमायाः सावित्रीष्टेः पञ्चदश सामिधेन्यः—वार्त्रघ्नावाज्यभागौ—उपांशुहविषो याज्याऽनुवाक्ययोर्मन्त्रप्रतीके विराजौ संयाज्ये शतमानं सुवर्णं हिरण्यं दक्षिणा चेतिकर्तव्यताविशेषस्य सार्थवादं विधानम्, तथैतस्यामिष्टौ प्रयाजेषु तायमानेषु वीणागाथी कश्चनार्त्विग्भिन्नो ब्राह्मणो दक्षिणत उपविश्योत्तरमन्द्रया वीणया स्वयंकृता राजकर्तृकयागदानेतिहासविशिष्टास्तिस्रो गाथा गायतीति विधानम्, आसवितृगुणकाय सवित्रे द्वादशकपालं पुरोडाशं निर्वपेदिति सार्थवादं द्वितीयायाः सावित्रीष्टेर्विधानम्, तस्या एतस्या द्वितीयायाः सावित्रीष्टेः सप्तदश सामिधेन्यः सद्वन्तावाज्यभागौ—उपांशुहविषो याज्याऽनुवाक्ययोर्मन्त्रप्रतीके अनुष्टुभौ संयाज्ये—शतमानं रजतं हिरण्यं दक्षिणा चेतिकर्तव्यताविशेषस्य सार्थवादं विधानम्, पूर्वेष्टिवत्प्रयाजेषु तायमानेषु वीणागाथी कश्चनर्त्विग्भिन्नो ब्राह्मणो दक्षिणत उपविश्योत्तरमन्द्रया वीणया स्वयङ्कृता राजकर्तृकयागदानेतिहासविशिष्टास्तिस्रो गाथा गायतीति विधानम्, सत्यप्रसवगुणकाय सवित्रे द्वादशकपालं पुरोडाशं निर्वपेदिति सार्थवादं तृतीयायाः सावित्रीष्टेर्विधानम्, तस्या एतस्यास्तृतीयायाः सावित्रीष्टेः सप्तदश सामिधेन्यः रयिमन्तावाज्यभागौ उपांशुहविषो याज्यानुवाक्ययोर्मन्त्रप्रतीके निर्त्ये संयाज्ये शतमानं सुवर्णं हिरण्यं दक्षिणा चेतिकर्तव्यताविशेषस्य सार्थवादं विधानम्, पूर्वेष्टिवत्प्रयाजेषु तायमानेषु वीणागाथी कश्चनर्त्विग्भिन्नो ब्राह्मणो दक्षिणत उपविश्योत्तरमन्द्रया वीणया स्वयङ्कृता राजकर्तृकयागदानेतिहासविशिष्टास्तिस्रो गाथा गायतीति विधानम्, तृतीयायां सावित्रीष्ट्यां संस्थितायामध्वर्युयजमानावुत्थायाश्वस्य दक्षिणे कर्णे "विभूर्मात्रा प्रभूः पित्रा" इतीमानि यजूंष्याजपतो जपोत्तरञ्चैनमश्वमुत्तरपूर्वस्यां दिशि प्रसृजतश्चेति सार्थवादं विधानं, ततोऽश्वस्य रक्षिणः प्रति सप्रकारकं मन्त्रेण रक्षणविषयकमादेशकरणविधानम्, तत्र संवत्सरात्मके प्रवासेऽश्वस्याश्वरक्षकाणां च खादनपाननिवासजयसम्पादनादिकाया दिनचर्यायाः

| ब्रा० विषयाः | पृष्ठाङ्काः |
|---|---|
| रक्षणेतिकर्तव्यतायाश्च सप्रकारकं निरूपणं चेति. | ७६–८३ |
| ३ पारिप्लवाख्यानब्राह्मणम्–तत्र प्रथमं प्रमुच्याश्वं वेदेर्दक्षिणतो हिरण्मयेष्वासनेषु तत्र कूर्चयोः फलकयोर्वाऽध्वर्युयजमानौ कशिपुषु होतृब्रह्मोद्गातारश्चोपविशन्तीति प्रतिपादनम्, समुपविष्टेषु ऋत्विक्षु होतारमध्वर्युः पारिप्लवाख्यानार्थं सम्प्रेष्यतीत्यभिधाय तत्प्रैषमन्त्रकथनम्, सम्प्रेषितो होता पारिप्लवमाख्यानमाख्यास्यन्नध्वर्युमामन्त्रयतेऽध्वर्युश्च होतारं प्रत्यामन्त्रयते इति सप्रकारकं निरूपणं, ततो होत्रा "मनुर्वैवस्वतो राजा" १ इत्यादिपारिप्लवाख्याने प्रथमे राज्यपर्याये सविशेषं प्रोक्ते सत्यध्वर्युरुपसमेतान्वीणागणगिनः पुराणै राजर्षिभिरेनं यजमानं सङ्गायतेति सम्प्रेष्य प्रक्रमहोमाञ्जुहुयादिति विधानम्, ते च प्रक्रमहोमा अन्वाहार्यपचने वाऽश्वस्य पदं परिलिख्य तस्मिन्पदे वा होतव्या इति पक्षद्वयं प्रतिपाद्य प्रथमाध्यायपठितां स्थितिमनुसृत्य सावित्र्या एवेष्टेः पुरस्तादनुद्रुत्य सकृदेवाहवनीये प्रक्रमहोमा होतव्या इति प्राग्विहितस्य पक्षस्य प्रतिपादनं, सायं धृतिहोमेषु हूयमानेषु वीणागाथी राजन्यो दक्षिणत उत्तरमन्द्रया वीणया राजकृतयुद्धसंग्रामजयेतिहासविशिष्टास्तिस्रः स्वयंकृता गाथा गायतीति स्तावकार्थवादातिदेशसहितं विधानम्, द्वितीयादिदशमान्तेष्वहःसु सावित्रीष्टिषु संस्थितासु सामान्यत एषैवावृत्–प्रक्रमहोमानामभावः इति चावृत्प्रकारसहितं प्रतिपादनम्, तत्र होता क्रमेण तेषु राज्यपर्यायेषु "यमो वैवस्वतो राजा २ वरुण आदित्यो राजा ३ सोमो वैष्णवो राजा ४ अर्बुदः काद्रवेयो राजा ५ कुबेरो वैश्रवणो राजा ६ असितो धान्वो राजा ७ मत्स्यः साम्मदो राजा ८ ताक्ष्र्यो वैपश्यतो राजा ९ धर्म इन्द्रो राजा १०" इमानि राज्यपर्यायाणि सविशेषं ब्रूयात्तथैतेषु पर्यायेषु प्रोक्तेष्वध्वर्युः प्रतिपर्यायं क्रमेण "स्थविरेभ्यो यजुषामेकम्पर्व २ शोभनेभ्यो युवभ्योऽथर्वणामेकम्पर्व ३ शोभनाभ्यो युवतिभ्योऽङ्गिरसामेकम्पर्व ४ सर्पविद्भ्यः सर्पेभ्यः सर्पविद्याया एकम्पर्व ५ पापकृद्भ्यः सेलगेभ्यो देवजनविद्याया एकम्पर्व ६ कुसीदिभ्यः कांचिन्मायां ७ मत्स्यहनेभ्यो मत्स्येभ्यः कञ्चनेतिहासं ८ वायोविद्यिकेभ्यो वयोभ्यः किञ्चित्पुराणं ९ अप्रतिग्राहकेभ्यः श्रोत्रियेभ्यः साम्नां दशतं" ब्रूतेति तत्तद्विद्यांशप्रतिपादनविषयकं सम्प्रैषं दद्यादिति चेत्येवंरूपाया विशेषेतिकर्तव्यतायाः प्रदर्शनम्, एतस्य पारिप्लवसमाख्यानस्य प्रशंसनपूर्वकं फलं निरूप्योपसंहरणम्, एतत्पारिप्लवसमाख्यानं यावत्संवत्सरं कुर्यादिति विधानं तत्प्रसङ्गात्पारिप्लवशब्दनिर्वचनं च, षष्ट्युत्तरत्रिशतदिनात्मकसंवत्सरस्य षट्त्रिंशद्दशाहा भवन्तीत्यभिधाय तस्याः संख्याया बृहत्यात्मना प्रशंसनं चेत्यादि. | ८४–९० |
| ४ संवत्सरे समतीते प्राजापत्यमिष्टकापशुं कृत्वा दीक्षा कर्तव्येति विधाय सावित्री- | |

| आ० विषयाः | पृष्ठाङ्काः |
|---|---|
| ष्टीनामुत्सादनं कुर्यादिति विधानम्, तत्रैके सावित्रीष्टीरुत्सादयेदिति, एके पुरोहितस्याग्निषु यजेतेति चाहुरित्यभिधाय स्वमतेन तु दीक्षितो यजेतैवेत्यभिधानं, दीक्षा द्वादश—उपसदो द्वादश—सुत्यास्तिस्रो—भवन्तीत्यभिधाय तद्गतसंख्याः सम्भूय तस्यास्त्रिणवस्तोमत्वं सम्पाद्य तस्य वज्ररूपेण प्रशंसनं, दीक्षणीयायां संस्थितायां सायं वाचि विसृष्टायां चोपसमेतान्वीणागणगिनः प्रति "देवैरिमं यजमानं सङ्गायत" इत्यध्वर्युः सम्प्रैषं दद्यात्ते च तथा गायन्तीति विधानम्, एवमेवाहरहर्वाचि विसृष्टायामग्नीषोमीयाणामन्ततः संस्थायां परिहृतासु वसतीवरीषु देवैरेनं यजमानं सङ्गायन्तीति सार्थवादमभिधानम्, एवमेव सुत्यास्वहरहः परिहृतासु वसतीवरीषूदवसानीयायां संस्थितायां च प्रजापतिनैनं यजमानं सङ्गायन्तीति सार्थवादं विधानम्, अश्वमेधे एकविंशत्यरत्निपरिमाणा एकविंशतिर्यूपा भवन्ति तेषु मध्यमो यूपो रज्जुदालोऽग्निष्ठस्तदभितो द्वौ यूपौ पैतुदारवौ त्रयस्त्रयोऽभित एवं षट् षट् बैल्वखादिरपालाशा यूपा इति सप्रकारकं निरूपणम्, प्रसङ्गाद्रज्जुदालापरपर्याय-श्लेष्मातकवनस्पतेरुत्पत्तेरुपपादनम्, तद्विकृतिभूतस्य यूपस्य मध्यमत्वाग्निष्ठत्वयोरुपपादनं च, एवमेव क्रमेण पीतुदारुबिल्वखदिरपलाशवनस्पतीनामुत्पत्तेरुपपादनम्, तत्तद्वनस्पतिविकृतिभूतानां यूपानां मध्यमयूपस्याभित उत्तरोत्तरं बहिर्निवेशनस्य कारणनिरूपणं च, यूपगताया एकविंशतिसंख्याया मासर्तुलोकादित्यात्मना प्रशंसनम्, एवमश्वमेधयज्ञस्य प्रजापतिना साम्यमुपपाद्य तस्मिन्नेकविंशतिमग्नीषोमीयान् पशूनालभते इति विधानम्, एतेषां वैकृतानामाश्वमेधिकाग्नीषोमीयपशूनां कर्म प्राकृतेनाग्नीषोमीयपशुकर्मणा समानमित्यभिधायेत्येतत्पूर्वेद्युः कर्मेति पूर्वदिनकर्मण उपसंहरणं चेत्यादि. | ९१–९९ |

इति चतुर्थोऽध्यायः।

**अथ पञ्चमोऽध्यायः।**

| आ० विषयाः | पृष्ठाङ्काः |
|---|---|
| १ गोतममतं पुरस्कृत्य प्रथमेऽहनि प्रातः कर्तव्यस्याग्निष्टोमसंस्थाकस्याह्निकस्य चतुष्टोमादिवच्चमभिधाय सविशेषं निदर्शनं, तत्रैकेषां मतेनाग्निष्टोमसाम चतुःसाम कर्तव्यं भवति ते च "नाग्निष्टोमो नोक्थ्य इति वदन्तः" यदि चैवं कुर्युस्तदा सार्द्धं स्तोत्रियं शस्त्वा रथन्तरं पृष्ठं राथन्तरं शस्त्रं सार्द्धमनुरूपं शंसेदेवं कृतेऽग्निष्टोमसंस्थमहः सम्पन्नं भवतीत्यादि सार्थवादं निरूपणम्, तथा चास्मिन्प्रथमेऽहन्येकेषां मतेनैकविंशतिः सवनीयाः पशवः—ते च सर्वे आग्नेयाः तेषां कर्म च समानं भवतीति प्रतिपाद्य पुनरन्येषां मतेनात्र द्वे खिलपरिपठिते पश्वेकादशिन्यौ आलभेतेति च सार्थवादं प्रतिपादनम्, ततः संस्थितेऽग्निष्टोमेऽहनि परिहृतासु वसतीवरीषु चाध्वर्युः "प्राणाय स्वाहाऽपानाय स्वाहा" इत्यादिद्वादशभिरनुवाकैरन्नहोमाञ्जुहुयादिति स्तावकार्थवादातिदेशसहितमनुवाकगतद्वादशसंख्याया माससंवत्सरात्मना प्रशंसनसहितं च विधानम्, मध्यममहरेकविंशस्तोमकं भवतीति | |

| ब्रा० | विषयाः | पृष्ठाङ्काः | ब्रा० | विषयाः | पृष्ठाङ्काः |
|---|---|---|---|---|---|

प्रतिपाद्य तस्यादित्यादिरूपेण पुरुषरूपेण प्रतिष्ठारूपेण च प्रशंसनं, मध्यमाह्नो हौत्रे प्रातःसवनसम्बन्धिविशेषस्य प्रदर्शनम्, तत्र "अग्निं तं मन्ये यो वसुः" इत्येतदाश्वमेधिकं पङ्क्तिच्छन्दस्कमाज्यशस्त्रं शस्त्वा ऐकाहिकमुपशंसति तथा बार्हतं च प्रउगं माधुच्छन्दसं चोभे अपि शस्त्रे त्रिचशः संशंतीत्यादि सार्थवादमभिधानम्, ततो माध्यन्दिनसम्बन्धिविशेषस्य प्रदर्शनम्, तत्र मरुत्वतीयशस्त्रसम्बन्धिविशेषस्य सार्थवादं प्रदर्शनम्, तथा निष्केवल्यशस्त्रसम्बन्धिविशेषस्य सार्थवादं प्रदर्शनम्, ततस्तृतीयसवनसम्बन्धिविशेषस्य प्रदर्शनं, तत्र वैश्वदेवशस्त्रसम्बन्धिविशेषस्य सार्थवादं प्रदर्शनम्, आग्निमारुतशस्त्रसम्बन्धिविशेषस्य सार्थवादं प्रदर्शनम्, मध्यमस्याह्नः एतेऽश्वादयः पञ्चदश पर्यङ्ग्याः पशवस्तथा वसन्तादिदैवत्याः कपिञ्जलादय आरण्याः पशवो भवन्तीति स्तावकार्थवादातिदेशसहितमभिधानम्, तत्रैतानेकविंशतये चातुर्मास्यदेवताभ्य एकविंशतिमेकविंशतिं पशूनालभते इति सार्थवादमेकं पशुकल्पमुपन्यस्य तस्य प्रत्याख्यानं, मध्यमे यूपे सप्तदशैव पशूनालभते इति सार्थवादं प्रतिपाद्याकाशेषु त्रयोदश त्रयोदशारण्यान्पशूनालभते इत्यपरस्य पशुकल्पस्य सार्थवादमभिधानम्, बहिष्पवमानस्तोत्रात्पुराऽश्वं निक्त्वोदानीय तेन सह पवमानाय सर्पन्तीति स्तावकार्थवादातिदेशसहितं प्रतिपादनं, स्तुते च बहिष्पवमानेऽश्वमास्तावमाक्रमयन्ति स तत्र यद्यवजिघ्रेद्विवर्तेत वा तदा मे यज्ञः समृद्ध इति विद्यादित्येवं विज्ञानकथनम्, ततस्तमश्वमुपाकृत्याध्वर्युः "होतरभिष्टुहि" इति हौत्रे सम्प्रैषं ददाति, होता च "उपप्रागाच्छसनं—उपप्रागात्परमं" इत्येतदृग्द्वयं वर्जयित्वा एकादशभिर्ऋग्भिरभिष्टौतीति च विधानं, "यदक्रन्दः" इत्याद्यास्ता एकादशर्चस्त्रिः—प्रथमया त्रिरुत्तमया पञ्चदश भवन्तीत्यभिधाय तस्याः पञ्चदशसंख्याया वज्ररूपेण प्रशंसनम्, "उपप्रागाच्छसनं—उपप्रागात्परमं" इत्येतदश्वसूक्तादुद्धृतमृग्द्वयं "मा नो मित्रो वरुणः" इत्येवमादि—"चतुस्त्रिंशद्वाजिनः" इत्यन्तं सूक्तद्वयमभिगावावपेत्तत्राप्येतामन्तिमामृचं वङ्क्रीणाम्पुरस्ताद्दधातीति साभिप्रायमेकीयं पक्षमुपन्यस्य न तथा कुर्यादिति तं प्रत्याख्यायान्तिमयर्चा सार्द्धमेव सकलं सूक्तं अन्ते—"उप प्र" इत्यृग्द्वयं चावपेदेवेति पक्षान्तरविधानं चेत्यादि। ९६—१०१

२ "उप प्र" इत्यृग्द्वयमुक्त्वा यदभिगोः परिशिष्टं भवति तदाहेत्यभिधानं, वासोऽधिवासो हिरण्यं चाश्वायोपस्तीर्य तस्मिन्नेनमश्वमधिसंज्ञपयन्तीत्यभिधानं, संज्ञप्तेषु पशुषु कुमारीपञ्चम्यश्वतस्रो यजमानपत्न्योऽनुचरीणां च चत्वारि शतानि पान्नेजनैरुदानयन्तीत्यभिधानम्, निष्ठितेषु पान्नेजनेषु महिषीमश्वायोपनिपादयन्तीति प्रतिपाद्यैनां महिषीमधिवासेन सम्प्रोर्णुवन्तीति समन्त्रकं सार्थवादं विधानम्, अश्वस्य शिश्नं बहिरायम्याकृष्य च महिषी स्वोपस्थे विदधातीति सम-

| ब्रा० विषयाः | पृष्ठाङ्काः | ब्रा० विषयाः | पृष्ठाङ्काः |
|---|---|---|---|


न्त्रकं सार्थवादं विधानं, तयोः शयानयोर्यजमानोऽश्वमभिमेथतीति सविशेषं समन्त्रकं सार्थवादं विधानं, ततोऽध्वर्युः कुमारीमभिमेथति कुमारी च तमध्वर्युं प्रत्यभिमेथतीति समन्त्रकं सप्रकारकं विधानं, ततो ब्रह्मा महिषीमभिमेथति महिष्याः शतं राजपुत्र्योऽनुचर्यश्च ब्रह्माणं प्रत्यभिमेथन्तीति समन्त्रकं सप्रकारकं विधानं, तत उद्गाता वावातामभिमेथति वावातायाः शतं राजन्या अनुचर्यश्चोद्गातारं प्रत्यभिमेथन्तीति समन्त्रकं सप्रकारकं विधानं, ततो होता परिवृक्तामभिमेथति परिवृक्तायाः शतं सूतग्रामण्यां दुहितरोऽनुचर्यश्च होतारं प्रत्यभिमेथन्तीति समन्त्रकं सप्रकारकं विधानं, ततः क्षत्ता पालागलीमभिमेथति पालागल्याः शतं क्षात्रसङ्ग्रहीतॄणां दुहितरोऽनुचर्यश्च क्षत्तारं प्रत्यभिमेथन्तीति समन्त्रकं सकारकं विधानम्, अभिमेथिकानां वाचां सर्वकामावाप्तिप्रापकत्वेन प्रशंसनं, पत्न्यनुचर्यो महिषीमुत्थापयन्तीतरेऽध्वर्युब्रह्मोद्गात्रादय ऋत्विजश्च सुरभिमतीमृचं पठन्तीति मन्त्रप्रतीकसहितं विधानं, यज्ञे पूताया वाचो वदनस्य प्रशंसनं, गोमृगाजतूपराऽश्वानां वपा अवदायाहरन्तीति प्रतिपाद्याश्वस्य वपा नास्तीत्याशङ्क्य तथा न कुर्यादिति शङ्कां निरस्य चाश्वस्यैव प्रत्यक्षं मेद आहरेदितराश्च नित्या इत्येतन्निरूपणं, वपासु श्रृतासु सतीषु स्वाहाकृतिभिश्चरित्वा प्रत्यञ्चः प्रतिपरेत्य सदसि पूर्वद्वारेण प्रविश्य यथाधिष्ण्यमुपविश्य होत्रादय ऋत्विजो ब्रह्मोद्यं वदन्तीति निरूपणं,

ब्रह्मोद्यम्—तत्र-होत्रध्वर्य्वोः-अध्वर्युहोत्रोः-ब्रह्मोद्गात्रोः-उद्गातृब्रह्मणोश्च प्रश्नप्रतिप्रश्नानां मन्त्रैरेव प्रदर्शनं, ततः स्वस्वधिष्ण्यादुत्थाय सदसोऽधि प्राञ्चोऽग्रेण हविर्द्धाने आसीनं यजमानमभ्यायत्य यथायतनं पर्युपविशन्ति होत्रादय ऋत्विज इति प्रतिपादनं, ततः पुनर्होत्रध्वर्य्वोः-अध्वर्युहोत्रोः-ब्रह्मोद्गात्रोः-उद्गातृब्रह्मणोः अध्वर्युयजमानयोश्च प्रश्नप्रतिप्रश्नानां मन्त्रैरेव प्रदर्शनं, ब्रह्मोद्यवदनस्य सर्वकामावाप्तिरूपं फलमिति प्रदर्शनं,

महिमग्रह पूर्वोः—तत्र च उदिते ब्रह्मोद्ये चाध्वर्युः प्रविश्य हिरण्मयेन पात्रेण प्राजापत्यं महिमानं ग्रहं गृह्णातीति विधाय तस्य महिमग्रहस्य पुरोरुक्पुरोऽनुवाक्याप्रैषयाज्यावषट्कारमन्त्राणां प्रदर्शनम्, अस्य ग्रहस्य वषट्कृते एव हवनम्—अनुवषट्कारो नास्ति—सर्वहुतत्वं च भवतीत्यादिमहिमग्रहधर्माणां निरूपणं चेत्यादि. १०६—१११

३ वपाप्रचारणम्—तत्र वपाहोमं प्रक्रम्यानेकेषां पक्षाणां निरूपणं, तत्र प्रथमं पृथक्पृथग्वपाप्रचरणपक्षस्य निरूपणं, ततो जाबालस्य सत्यकामस्य मतेन वपाप्रचरणप्रकारस्य सहेतुकं निरूपणं, सौमापयोर्मानुतन्तव्ययोर्मतेन वपाप्रचरणप्रकारस्य सहेतुकं निरूपणं, शैलालेर्मतेन सहेतुकं वपाप्रचरणप्रकारनिरूपणं, माल्लवेयस्य मतेन सहेतुकं वपाप्रचरणप्रकारनिरूपणं, प्राथम्येन विहिते वपाप्रचरणपक्षे शौनकस्येन्द्रोतस्य सम्मतेःकारणान्तराभिधानपुरःसरं प्रतिपादनम्, एवं वपाप्रचरणे पञ्च पक्षा-

| ब्रा० | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| | नाख्याय याज्ञवल्क्यमतेन षष्ठस्य वपाप्रचरणपक्षस्य सोपपत्तिकं सप्रकारकं सकारणं निरूपणम्, | |
| | उत्तरो महिमग्रहः—तत्र हुतासु वपासु ध्वाध्वर्युः प्रविश्य राजतेन पात्रेण प्राजापत्यं महिमानं ग्रहं गृह्णातीति तस्य महिमग्रहस्य पुरोरुक्पुरोऽनुवाक्याप्रैषयाज्यावषट्कारमंत्राणां प्रदर्शनम्, अस्य ग्रहस्य वषट्कृते एव हवनम्-अनुवषट्कारो नास्ति-सर्वहुतत्वं च भवतीत्यादिमहिमग्रहधर्माणां निरूपणम्, इतरपशूनां लोहितावदानप्रकारमनूद्याश्वस्य लोहितावदानप्रकारनिरूपणम्, अश्वस्य लोहितावदाने पक्षान्तरं निरूप्य सात्ययज्ञिमतं प्रदर्श्य च तद्द्वारा पूर्वोदितपक्षस्यैव प्रतिष्ठापनं, ततः प्रातरनुष्ठेयस्योक्थ्यसंस्थस्य मध्यमस्याह्नः सम्पत्तेः सार्थवादं निरूपणं, तत्रैकेषां मतेनैकविंशतिः सवनीयाः पशवः पुनरन्येषां मतेन चतुर्विंशतिः सवनीयाः पशवः—ते च सर्वे आग्नेयाः—तेषां सर्वेषां कर्म च समानं चेत्यादि सार्थवादमभिधानं चेति. | ११२–११६ |
| ४ | दैवापेनेन्द्रोतेन याजितस्य पारिक्षितस्य जनमेजयस्य दृष्टान्तेनाश्वमेधस्य ब्रह्महत्यानिरसनरूपं फलं भवतीति प्रतिपादनम्, उक्तेऽर्थे गाथयाऽभिगीतस्य प्रदर्शनं, भीमसेनोग्रसेनश्रुतसेनानां पारिक्षितीयानां तथाऽऽह्लारदौर्ग्रहमरुत्तपाञ्चालानां राज्ञां दृष्टान्तेनाश्वमेधिकस्यातिरात्रसंस्थस्य तृतीयस्याह्नः प्राकृतात्सर्वस्तोमातिरात्रादधिका ज्योतिर्गौरायुरभिजिद्विश्वजिन्महाव्रतातोर्यामातिरात्ररूपाः सप्त विकल्पा भवंतीति सार्थवादं गाथयाऽभिगीतसहितं च विधानं, त्रिष्वप्यहःसु स्तोमान्तराणि सोपपत्तिकं प्रतिपाद्य तद्वताऽश्वमेधेन द्वैपायनो राजा ईजे इति गाथयाऽभिगीतसहितमभिधानं, तथा त्रिष्वप्यहःसु पवमानान्तराणि सोपपत्तिकं प्रतिपाद्य तद्वताऽश्वमेधेन दौष्यन्तिर्भरतो राजा ईजे इति गाथयाऽभिगीतसहितं प्रतिपादनम्, अत्रोक्तेऽर्थे द्वितीयातृतीयाचतुर्थीभिर्गाथाभिरभिगीतस्यार्थस्य प्रदर्शनं, त्रिष्वपि दिवसेषु एकविंशस्तोमवताऽश्वमेधेन याज्ञतुर ऋषभो राजा ईजे इति गाथयाऽभिगीतसहितमभिधानं, तथा त्रिष्वपि दिवसेषु त्रयस्त्रिंशवताऽश्वमेधेन सात्रासहः शोणो राजा ईजे इति गाथयाऽभिगीतसहितमभिधानम्, अस्मिन्नुक्तेऽर्थे द्वितीयातृतीयाभ्यां गाथाभ्यामभिगीतस्यार्थस्य प्रदर्शनं, गोविनतस्तोमवताऽश्वमेधेन सात्राजितः शतानीको राजा ईजे इत्यभिधानं, गोविनतसंज्ञकस्तोमस्य प्रकारनिरूपणं, गोविनतस्तोमविषयकस्य चतसृभिर्गाथाभिरभिगीतस्यार्थस्य प्रदर्शनम्, विजयमध्यात्प्राच्यादिक्रमेण चतुर्दिक्षु यदुत्पन्नं द्रव्यं तत्तेनैव क्रमेण होतृब्रह्माध्वर्यूद्गातृभ्यः प्रदेयं भूमिपुरुषब्राह्मणस्ववर्जं यथा स्यात्तथेति दक्षिणादानविधानम्, उदयनीयेष्ट्यां समाप्तायां सप्त मैत्रावरुण्यः सप्त वैश्वदेव्यः सप्त बार्हस्पत्या एवमेकविंशतिं वशा अनूबन्ध्या आलभेतेति सार्थवादं विधानम्, अनूबन्ध्यासम्बन्धिन्या एकविंशतिसंख्यया मासर्तुलोकादित्यात्मना प्रशंसनं, तथोदवसानीयेष्ट्यां संस्थि- | |

| ब्रा० | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| | तायां महिष्यादिकाश्चतस्रो जायाः—, पञ्चमीं कुमारीम्—अनुचरीणां चत्वारि शतानि च येन सह ययाऽभिमेथिकः संवादः कृतस्तास्तेभ्यो दक्षिणात्वेन दद्यादिति विधानं, ततः संवत्सरपर्यन्तं वसन्तादिक्रमेण प्रत्यृतु षट् षडाग्नेयानैन्द्रान्पार्जन्यान्मारुतान्वा मैत्रावरुणानैन्द्रावैष्णवानैन्द्राबार्हस्पत्यानृतुपशूनालभ्य यजेतेति सार्थवादं विधानम्, ऋतुपशुगतषट्त्रिंशत्संख्यायाः षट्त्रिंशदक्षरसंख्याकबृहत्यात्मना प्रशंसनं चेत्यादि. | ११६–१२५ |

**इत्यश्वमेधः ।**

इति पञ्चमोऽध्यायः ।

## अथ षष्ठोऽध्यायः ।

| ब्रा० | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| १ | **पुरुषमेधः**—तत्र प्रथमं तावदतिष्ठाफलवतः पुरुषमेधस्य क्रतोरुत्पत्तेराख्यायिकया सोपपत्तिकमभिधानम्, तस्यैतस्य पुरुषमेधस्य त्रयोविंशतिर्दीक्षा द्वादशोपसदः पञ्च सुत्याश्च भवन्ति ताश्च सर्वा मिलित्वा पुरुषमेधश्चत्वारिंशद्रात्रो भवतीत्यभिधाय तस्य चत्वारिंशत्त्वसामान्याद्विराडात्मना प्रशंसनम्, एतस्मिन्नुक्तेऽर्थे मन्त्रसंवादप्रदर्शनं च, इदानीमेवाभिहिताया विराजश्चत्वारो दशकवर्गा भवन्तीति सप्रयोजनं सोपपत्तिकमभिधानं, तत्रोपवसथेऽह्नि एकादश यूपा एकादशाग्नीषोमीयाः पशवश्च भवन्ति तेषां कर्म च समानमित्येतत्प्रतिपाद्य तद्गतैकादशसंख्यायास्त्रिष्टुबात्मना प्रशंसनं, तथा सुत्यास्वैकादशिनाः पशवो भवन्तीति प्रतिपाद्य तद्गतैकादशसंख्यायाः पूर्ववत्त्रिष्टुबात्मना प्रशस्य प्रजापत्यात्मना प्रशंसनं, पुरुषमेधाख्योऽयं यज्ञक्रतुः पञ्चरात्रो भवतीति प्रतिपाद्य पंचविधयज्ञपशुऋत्वादिसम्पत्त्या प्रशंसनम्, एवं यज्ञविराजोऽधिदैवाध्यात्ममुपासनमभिधाय पुरुषमेधिकेषु सौत्येष्वहःसु कर्तव्या अहःसंस्था अभिधाय च तासामाध्यात्माधिदैवोपासनस्य सफलं सार्थवादं निरूपणम्, उक्तार्थं वेदितुः फलनिरूपणं च, पुरुषमेधिकानां सौत्यानामह्नां लोकर्तुरूपेणाधिदेवतसम्पत्तेर्ऋत्वात्मरूपेणाध्यात्मसम्पत्तेश्च सोपपत्तिकं निरूपणं चेत्यादि. | १२६–१३० |
| २ | पुरुषमेधशब्दस्याधिदैविकमाधियाज्ञिकं च निर्वचनम्, तत्र पुरुषमेधस्यं मध्यमेऽहनि पुरुषपशूनालभते इति सार्थवादं विधानं, ते च ब्राह्मणादयः पुरुषपशवो मन्त्रब्राह्मणे एकैकस्यां कण्डिकायां दश दश पशवोऽभिहितास्ताननूद्यालभत इत्यभिधायैतस्या दशसंख्याया विराडात्मना प्रशंसनम्, एवं दशदशपश्वभिधायिका एकादश कण्डिकास्तद्गतान्पशूननूद्यालभत इत्यभिधाय तस्या एकादशसंख्यायास्त्रिष्टुबात्मना प्रशंसनं, मध्यमेऽग्निष्ठे यूपे अष्टाचत्वारिंशतं पशून्नियुज्यालभत इत्यभिधायैतस्या अष्टाचत्वारिंशत्संख्याया जगत्यात्मना प्रशंसनम्, इतरेषु यूपेष्वेकादशैकादश पशून्नियुज्यालभत इति प्रतिपाद्यैतस्या एकादशसंख्यायास्त्रिष्टुबात्मना प्रशंसनम्, उत्तमांश्चाष्टौ पशूनालभत इत्यभिधायैतस्या अष्टसंख्याया गायत्र्यात्मना प्रशंसनम्, एतेषामुत्तमानामष्टानां पशूनां प्राजापत्यत्वं प्रतिपाद्य तद्रूपेण प्रशं- | |

ब्रा० विषयाः पृष्ठाङ्काः | ब्रा० विषयाः पृष्ठाङ्काः

सनम्, पशूनुपाकरिष्यन्नध्वर्युः " देव सवितः—तत्सवितुः—विश्वानि देव " इत्येतास्तिस्रः सावित्रीराहुतीर्जुहोतीति सार्थवादं विधानम्, " ब्रह्मणे ब्राह्मणं क्षत्राय राजन्यं मरुद्भ्यो वैश्यं तपसे शूद्रम्" इत्येतान्पशूंस्तद्देवताश्चेतर-पशुतद्देवतानामुपलक्षकत्वेनानूद्य तेषां सोपपत्तिकं प्रयोजननिरूपणं, पूर्वं या विहितास्तिस्रः सावित्र्य आहुतयस्ता आज्येन होतव्या इति सार्थवादं विधानम्, नियुक्तान्पुरुषान्ब्रह्मा दक्षिणतः " सहस्रशीर्षा पुरुषः " इत्येतेन षोडशर्चेन नारायणेन पुरुषसूक्तेनाभिष्टौतीति सार्थवादं विधानम्, ते च सर्वे पशवः संज्ञपनवर्जिताः केवलं पर्यग्निकृता बभूवुरतस्तद्देवत्या आहुतय आज्येन होतव्याः पर्यग्निकृतांस्तान्पशूंस्तूत्सृजेदे-वेत्यशरीरिवाङ्नारायणसंवादद्वारा सोपपत्तिकं सार्थवादं निरूपणम्, ऐकादशिनैः पशुभिरेनं यज्ञं संस्थापयतीति विधायैतस्या एकादशसंख्याया त्रिष्टुबात्मना प्रशंसनम्, उदयनीयेष्ट्यां संस्थितायां तिस्रो मैत्रावरुणीः—तिस्रो वैश्वदेवीः पञ्च बार्हस्पत्याः-एवमेकादश वशा अनूबन्ध्या आलभत इति सार्थवादं विधायैतस्या एकादशसंख्यायास्त्रिष्टुबात्मना प्रशंसनं, ततस्त्रैधातव्युदवसानीयेष्टिर्भवतीति स्तावकार्थवादातिदेशसहितमभिधानं, विजयमध्यात्प्राच्यादिक्रमेण चतुर्दिक्षु यदुत्पन्नं द्रव्यं तत्तेनैव क्रमेण होतृब्रह्माध्वर्यूद्गातृभ्यः प्रदेयं सपुरुषं भूमिब्राह्मणस्ववर्जं यथा भवेत्तथेति दक्षिणादानविधानं, तत्रापि यदि ब्राह्मणः पुरुषमेधेन यजेत तदा सर्वस्वं दद्यादिति सार्थवादं विधानं, तत आत्मन्यग्नी समारोह्योत्तरनारायणेनादित्यमुपस्थाय चानपेक्षमाणोऽरण्यमभिप्रेयादिति सप्रयोजनं विधानं, यदि वा ग्रामे विवत्सेत्तदाऽरण्योरग्नी समारोह्य पूर्ववदुत्तरनारायणेनैवादित्यमुपस्थाय गृहेषु प्रत्यवस्येद्यानभ्यामुयात्तांश्च यज्ञक्रतूनाहरेतेति च विधानं, स एष पुरुषमेधः सर्वस्मै नानुवक्तव्यः किन्तु ज्ञातप्रियानूचानेभ्य एव ब्रूयादिति सकारणं पुरुषार्थप्रतिषेधकथनं चेत्यादि. १३०—१३७


इति पुरुषमेधः ।

इति षष्ठोऽध्यायः ।

## अथ सप्तमोऽध्यायः ।


१ सर्वमेधः—तत्र प्रथमं सर्वकामनयाऽनुष्ठेयस्य सर्वमेधस्य क्रतोरुत्पत्तेराख्यायिकया सोपपत्तिकमभिधानं, स एष सर्वमेधाख्यो यज्ञक्रतुर्दशरात्रो भवतीति प्रतिपाद्यैतस्य दशसंख्याया विराडात्मना प्रशंसनम्, अस्य सर्वमेधस्य सर्वयज्ञानां मध्ये परमत्वप्रतिपादनं, सर्वमेधे प्रथमदिवसोऽग्निष्टुन्नामैकाहोऽग्निष्टोमसंस्थो भवति—तत्र आग्नेया ग्रहाः—आग्नेय्यः पुरोरुचश्च भवन्ति—इत्यादिं सोपपत्तिकं सार्थवादमभिधानं, द्वितीयदिवस इन्द्रस्तुदुक्थ्यो भवति-तत्र ऐन्द्रा ग्रहाः—ऐन्द्र्यः पुरोरुचश्च भवन्ति—इत्यादि सकारणं सार्थवादमभिधानं, तृतीयदिवसः सूर्यस्तुदुक्थ्यो भवति—तत्र सौर्या ग्रहाः—सौर्यः पुरोरुचश्च भवन्ति-इत्यादि सकारणं सार्थवादमभिधानं, चतुर्थदिवसो वैश्वदेवस्तुदुक्थ्यो भवति—तत्र वैश्वदेवा ग्रहाः—वैश्वदेव्यः पुरोरुचश्च भवन्ति—

| ब्रा० विषयाः | पृष्ठाङ्काः | ब्रा० विषयाः | पृष्ठाङ्काः |
|---|---|---|---|

इत्यादि सकारणं सार्थवादममिधानं, पञ्चमदिवस आश्वमेधिको मध्यमः पञ्चमो दिवसो भवति मेध्यमतश्व-मालभते इति सप्रयोजनं प्रतिपादनं, षष्ठो दिवसः पौरुषमेधिको मध्यमो दिवसो भवति तत्र मेध्यान्पुरुषानाल-भते इति सप्रयोजनमभिधानं, सप्तमदिवसोऽप्तोर्यामात्मको भवतीति सप्रयोजनं तद्गतेतिकर्तव्यताविशेष-सहितं सार्थवादं निरूपणम्, अष्टम-दिवसस्त्रिणवस्तोमको भवतीति सार्थ-वादममिधानं, नवमदिवसस्त्रयस्त्रिंशस्तो-मको भवतीति सार्थवादममिधानं, दशम-दिवसो विश्वजित्सर्वपृष्ठोऽतिरात्रो भव-तीति सकारणं सार्थवादममिधानं, विजयमध्यात्प्राच्यादिक्रमेण चतुर्दिक्षु यदुत्पन्नं द्रव्यं तत्तेनैव क्रमेण होतृ-ब्रह्माध्वर्यूद्गातृभ्यः प्रदेयं सभूमिपुरुषं ब्राह्मणस्ववर्जं यथा भवेत्तथेति दक्षिणा-दानविधानं, भौवनस्य विश्वकर्मणो राज्ञो दृष्टान्तेन सर्वमेधेन यष्टुः सर्व-मेधं वेदितुश्चातिष्ठारूपं फलं भवतीति प्रतिपादनम्, एतं विश्वकर्माणं राजानं कश्यपो याजयाञ्चकार तस्मिन्सर्व-मेधे यदा च विश्वकर्मा अस्मै कश्य-पाय भूमिं दातुं प्रवृत्तस्तदा "न मां कश्चन मर्त्यः कदाऽपि दातुमर्हति, हे ! विश्वकर्मंस्त्वं मन्दोऽसि, यदि बलान्मां दास्यसि तर्ह्यहं सलिले मग्ना भविष्यामि ततश्च ते प्रतिज्ञा वृथा स्यात्" इत्या-द्यर्थकं श्लोकं भूमिर्जगाविति निरूपणं चेत्यादि। १३८–१४३

इति सर्वमेधः।

इति सप्तमोऽध्यायः।

## अथ अष्टमोऽध्यायः।

१ पितृमेधः—तत्र च प्रथमं सप्रयोजनं श्मशानकरणं श्मशानशब्दनिर्वचनं च, एष च पितृमेधः क्षिप्रं न कर्तव्यः किन्तु पितुः संवत्सरास्मृतौ कर्तव्य इति सकारणं निरूपणं, बहुकालाति-क्रमणोत्तरमपि पितुर्मरणसंवत्सरस्य स्मृतौ सत्यां समेषु संवत्सरेषु—अस्मृतौ च सत्यामयुग्मेषु संवत्सरेषु पितृमेधः कार्य इति व्यवस्थितविकल्पपुरःसरमभिधानं, तद्दयं पितृमेधः एकतारके नक्षत्रे-ऽथवाऽमावास्यारूपे एकनक्षत्रे कर्तव्य इति सोपपत्तिकं सप्रयोजनं निरूपणं, तत्राप्ययं पितृमेधः शरदि माघे निदाघे वा कार्य इति सकारणं प्रति-पादनं, पूर्वं श्मशानकरणं विहितमिदानीं तच्छ्मशानं चतुर्दिक्षु चतुःस्रक्ति कर्तव्य-मिति देवासुरस्पर्द्धाया इतिहासद्वारा प्रकथनं, प्रसङ्गाद्दैव्यः प्रजा देवानुका-रेण श्मशानं चतुःस्रक्ति कुर्वन्त्यासुर्यः प्रजा असुरानुकारेण परिमण्डलाकारं श्मशानं कुर्वन्तीति प्रतिपादनम्, एतच्च श्मशानं ग्रामाद्दक्षिणपूर्वस्यां दिशि कर्तव्य-मिति सकारणमभिधानं, ततः श्मशान-करणार्थं भूमिजोषणोपक्रमणं, तथा चैतच्छ्मशानमुदीचीनप्रवणं कर्तव्य-मिति सोपपत्तिकं सार्थवादं विधानं, तत्र दक्षिणाप्रवणं कार्यमिति सकारणं केषाञ्चिन्मतमनूद्य तस्यानिष्टफलप्रदर्शन-द्वारा निराकरणं, दक्षिणाप्रवणस्य प्रत्यासन्नं कुर्यादिति सकारणं पुनः केषाञ्चिन्मतमनूद्य तस्योदकप्रवणत्व-सम्पादनेनैव प्रत्युच्छ्रितं दक्षिणदेशे भव-

| अ० विषयाः | पृष्ठाङ्काः | अ० विषयाः | पृष्ठाङ्काः |
|---|---|---|---|

तीति कारणनिर्देशपुरःसरं प्रत्याख्यानं, पुनरेतच्छ्मशानं समभूमौ—तत्रापि रमणीये सुखनीये च प्रदेशे—तत्रापि दूराध्वनि प्रदेशे—तत्रापि वृक्षगुल्माद्याकाशवर्जिते प्रदेशे—तत्रापि वृक्ष-गुल्मादिभिः समन्तात्संवृते सत्यधस्तापिनि प्रदेशे—तत्रापि पार्श्वतोऽवकाशवर्जिते प्रदेशे—तत्रपि वनगिरिदेवगृहादिना चित्रेऽर्थादर्शनीये प्रदेशे तत्राप्यूषरे प्रदेशे—तत्रापि वीरिणमिश्रे औषधिमूलसहिते प्रदेशे—तत्रापि विशाखशराश्वगन्धापृश्निपर्ण्यध्याण्डादिविवर्जिते प्रदेशे तत्राप्यश्वत्थविभीतकतिल्वकस्फूर्जकहरिद्रुन्यग्रोधानां ये च पापनामानो वृक्षास्तेषामनन्तिके प्रदेशे कर्तव्यमिति प्रतिपर्यायं सोपपत्तिकं सार्थवादं श्मशानोचितप्रदेशप्रदर्शनम्, पुनस्तच्छ्मशानमग्निचितोऽग्निविधया कुर्यादिति सोपपत्तिकं सार्थवादमभिधानं, पुनरप्येतच्छ्मशानं महन्न कुर्यात्किन्तु यावानपक्षपुच्छोऽग्निस्तावन्मितं कुर्यादिति सकारणं केषाञ्चिन्मतमुपन्यस्य पुरुषमात्रं पश्चादुत्तरतश्च पृथुतरं च कुर्यादिति सार्थवादं सप्रयोजनं विधाय तदप्रदक्षिणं वलिताभी रज्जुभिः पर्यातन्यादिति सहेतुकं निरूपणं, तत्र श्मशाने यावति प्रदेशेऽस्थिनिवापः सम्भवेत्तावन्तं प्रदेशं लाङ्गलेनोद्धन्यादित्येकीयं मतमुपन्यस्य पुरुषमात्रमेवोद्धन्यादिति स्वमतस्य सार्थवादमभिधानं चेत्यादि. १४४—१९२

२ तत्र पृथिव्यां किञ्चिदन्तैरिष्टकान्तर्द्धानं कृत्वाऽस्थीनि निवपन्तीत्येकीयं मतमुपन्यस्यानन्तर्द्धाय निवपन्तीति पुनरन्यदीयस्य मतस्य सेतिहासं निरूपणं, ततः श्मशानक्षेत्रं गार्हपत्यचितिपरिश्रिदपेक्षयाऽपरिमिताभिः परिश्रिद्भिः परिश्रयति—तत्राग्निकीनां परिश्रितां यजुषा परिश्रयणमेतासां पैतृमेधिकीनां परिश्रितां तु तूष्णीं परिश्रयणं—यदेवाग्निकीनां परिश्रितां प्रयोजनं तदेवैतासां पैतृमेधिकीनां परिश्रितामित्येतत्सार्थवादं निरूपणं, ततः पलाशशाखया श्मशानक्षेत्रस्य व्युदूहनमर्थात्तृणपर्णादिभिर्विहीनीकरणं विधाय तत्रर्ग्यजूषी विनियुज्य तयोर्व्याख्यानम्, अस्याः पित्र्यायाः पलाशशाखाया दक्षिणस्यां निरसनमितरस्यास्तूत्तरस्यामित्यभिधानं, श्मशानक्षेत्रस्य दक्षिणत एकेषां मतेनोत्तरतो वा सीरं युनक्तीति पक्षद्वयस्येच्छाविकल्पत्वं प्रदर्श्य युंक्तेति सम्प्रेष्याभिमन्त्रयत इति विधानं, तत्राभिमन्त्रणमन्त्रं प्रतिपाद्य तस्याभिप्रेतार्थप्रदर्शनम्, तच्च सीरं षड्गवं भवतीति सार्थवादं प्रतिपादनं, ततश्चतुर्भिर्यजुर्भिश्चतसृणां सीतानां कर्षणस्य सप्रकारकं सार्थवादं विधानं, तत आत्मनो विकर्षणस्य सार्थवादं सप्रकारकं विधानम्, एवं सीताविकर्षणं कर्म कृत्वा सीरं विमुञ्चतीति समन्त्रकं सप्रयोजनमभिधायास्य पित्र्यस्य सीरस्य दक्षिणस्यां निरसनं तदितरस्य दैवस्य तूत्तरस्यां निरसनमिति सकारणमभिधानं चेत्यादि. १९२—१९४

३ कृष्टक्षेत्रमध्ये सर्वौषधं वपतीति विधाय यच्चाग्निकं सर्वौषधवपनं तद्वद्वीभिर्ऋग्भिरिदं पैतृमेधिकं च सर्वौषधवपनमेकयर्चा

| ब्रा० | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| | कर्तव्यमिति सकारणं प्रदर्श्य वपनसाधनमन्त्रं च प्रदर्श्य तस्याभिप्रायवर्णनं, ततः सूर्योदयसमकालं कृष्टक्षेत्रमध्ये प्रेतास्थिनिवपनस्य सार्थवादं विधानं, विहिते प्रेतास्थिनिवपने मन्त्रद्वयं विनियुज्य तयोरभिप्रायार्थप्रदर्शनं द्वितीयमन्त्रेऽसौस्थाने नामादेशकरणकथनं च, दक्षिणां दिशं गत्वाऽनुच्छ्वसन्कुम्भं प्रक्षिप्यानपेक्षमाण एहीति कश्चित्पुरुषं प्रेष्येदिति विधाय यथाप्रेषितं कृत्वा तस्मिन्प्रत्यागते "परं मृत्यो" इतीमं मन्त्रं जपेदिति विधाय च तस्य मन्त्रस्याभिप्रायप्रदर्शनं, कृष्टक्षेत्रमध्ये निहितानामस्थ्नां यथाङ्गं परिकल्पनं कुर्यादिति विधाय तत्र मन्त्रद्वयं विनियुज्य तस्याभिप्रायप्रदर्शनम्, ततस्त्रयोदश पादमात्र्य इष्टका लेखारूपलक्षणवर्जिता भवन्ति—या एवाग्निक्यः पादमात्र्य इष्टकास्ताः—एवैताः आग्निकीरिष्टका यजुषोपदधातीमाश्च तूष्णीमुपदधातीति च सार्थवादं सकारणं प्रतिपादनं, तासां विहितानां पादमात्रीणां त्रयोदशानामिष्टकानां कृष्टक्षेत्रमध्ये उपधानप्रकारनिरूपणम्—उपधानद्वाराऽग्निचित्यात्मकत्वसम्पादनं च, प्रदरात्पुरीषाहरणप्रैषप्रदर्शनं, तत्रैकेषां मतेन प्रदरात्पुरीषमाहृत्य पुनरन्येषां मतेन पूर्वदक्षिणावान्तरदेशे कर्षूं खात्वा ततः पुरीषमभ्याहृत्याभ्याहृत्येति पक्षद्वयस्येच्छाविकल्पत्वप्रदर्शनपुरःसरं तेन पुरीषेण दक्षिणतः पश्चादुत्तरतश्च श्मशानकरणविधानं, तच्च पुरीषश्मशानं महन्न कुर्यात्किन्तु क्षत्रियस्योद्वाहुपुरुषसम्मितं—ब्राह्मणस्य मुखदघ्नं—स्त्रिया उपस्थदघ्नं—शूद्रस्याष्ठीवदघ्नं कुर्यादिति सार्थवादं विधानम्, अथवा पुरीषश्मशानं सर्वेषामधोजानुसम्मितं कर्तव्यमिति विधानं, तथाऽपरस्मा अवकाशं न दद्यादिति विधानं, ततस्तस्य क्रियमाणस्य तेजनीमुत्तरतो धारयन्तीति सार्थवादं विधानम्, उत्तरतो धृतां तेजनीं न न्यस्येत्किन्त्वेनां धृत्वा वोढ्वा वा गृहेषूच्छ्रयेदिति सार्थवादं विधानं, तत्र पुरीषश्मशाने यवानामावापं कृत्वा तदवकाभिः कुशैश्च प्रच्छादयेदिति सप्रयोजनं विधानं चेत्यादि. | १९९–१६० |
| ४ | पुरस्तात्पालाशेन शङ्कुना—उत्तरतः शमीमयेन शङ्कुना—पश्चाद्वारणेन शङ्कुना—दक्षिणतोऽश्ममयेन शङ्कुना एवं चतुर्भिः शङ्कुभिरेनच्छ्मशानं परिणिहन्तीति सप्रयोजनमभिधानं, श्मशानस्य दक्षिणतः कर्षूं खात्वा तां क्षीरोदकाभ्यामापूर्योत्तरतश्च सप्त कर्षूः खात्वा ता उदकेनैवापूरयेदिति सप्रयोजनमभिधानं, ततोऽध्वर्युयजमानामात्या उत्तरासु कर्षूषु प्रतिकर्षु त्रींस्त्रीनश्मन आवपन्तीति विधाय तासां कर्षूणामुपरिष्टाद्ग्रामं प्रत्युद्गच्छन्तीति समन्त्रकं विधानं, हस्तगृहीतैरपामार्गैः स्वशरीरमपमृजत इति समंत्रकं सप्रयोजनं विधानं, ततो यत्रोदकं भवति तत्र स्नात्वा "सुमित्रिया नः" इति मन्त्रेणापोऽञ्जलिनाऽऽदायेति सार्थवादं विधाय "दुर्मित्रियाः" इति मन्त्रेण यो ग्रामस्य दिशं द्वेष्यः स्यात्तमुद्दिश्य तां दिशं परासिञ्चेदिति सप्रयोजनं विधानं, स्नानार्था आपो यदि स्थावरास्तर्हि पापानामनिरसनं, यदि च ताः प्रवहन्त्यस्तदा पापानामपि निरसनमिति स्नानार्थोना- | |

ब्रा० विषयाः पृष्ठाङ्काः

मपां प्रशंसनं, ततः स्नात्वाऽहतवासांसि परिधायानडुहः पुच्छमन्वारभ्येति सार्थवादमभिधाय "उद्वयं तमसस्परि" इतीमामृचं जपन्तो ग्रामं प्रतियन्तीति सार्थवादं विधानं, ततस्तेभ्य आगतेभ्य आञ्जनाभ्यञ्जने प्रयच्छन्तीति सार्थवादं विधानं,ततो गृहेष्वग्निमुपसमाधाय तमभितो वारणान्परिधीन्परिधाय तत्र वारणेनैव स्रुवेणाग्नये आयुष्मत आहुतिं जुहुयादिति सार्थवादं विधानम्, विहितामाहुतिमनूद्य तत्र साभिप्रायं मन्त्रस्य विनियोजनं, पुराणोऽनड्वान्पुराणा यवाः पुराणा सोपधानाऽऽसन्दी चास्य पितृमेधस्य दक्षिणाऽन्वादिष्टेति विधानं, तथा यथाकामं यथाश्रद्धं भूयसीरन्याश्च दक्षिणा दद्यादिति च विधानम् "इति न्वग्निचितः" इत्युपसंहरणम्, अथानग्निचितः प्रकृत्य अग्निकरणपरिश्रित्परिधानसर्वौषधवपनेष्टकोपधानेभ्योऽन्यद्भूमिजोषणादि सकलं कर्म समानमित्यभिधानम्, एकेषां मतेनाहिताग्नेः श्मशाने इष्टकास्थाने शर्करोपधानं कुर्यादेकेषां मतेन न कुर्यादिति पक्षद्वयं प्रतिपाद्य तत्र यथाकामं कुर्यादितीच्छाविकल्पप्रदर्शनम्, अध्वर्युर्ग्रामश्मशानयोरन्तरे मर्यादालोष्टं निदध्यादिति समन्त्रकं सप्रयोजनं विधानं चेत्यादि. १६०–१६४

इति पितृमेधः ।

इत्यष्टमोऽध्यायः ।

**इति परिशेषाख्ये भागे त्रयोदशेऽश्वमेधकाण्डे विषयानुक्रमणिका समाप्ता ।**



श्रीशः शरणम्।

# अथोत्तराख्ये भागे बृहदारण्यकसंज्ञकचतुर्दश-काण्डान्तर्गते प्रवर्ग्यकाण्डे

## विषयानुक्रमणिका प्रारभ्यते।

| ब्रा० विषयाः | पृष्ठाङ्काः |
|---|---|

### तत्र प्रथमोऽध्यायः।

१ प्रवर्ग्यसृष्टिप्रतिपादकं ब्राह्मणम्—तत्र प्रथमं श्रीयशोऽन्नाद्यकामा अश्विभ्यां वर्जिताः अग्नीन्द्रसोममखविष्णुविश्वेदेवाः कुरुक्षेत्रे देवयजने किञ्चन सत्रं निषेदुरित्यभिधानं, तत्रास्माकं मध्ये श्रमेण तपसा श्रद्धया यज्ञेनाहुतिभिर्यः पूर्वो यज्ञस्योदृचमवगच्छात्स एव श्रेष्ठ इति ते देवा ऊचुरित्यभिधानं, तादृशो विष्णुः स एव च देवानां मध्ये श्रेष्ठोऽभूदिति प्रतिपादनम्, विष्णुयज्ञादित्यानां साम्यत्वोपपादनं, प्रसङ्गाद्यशः संयन्तुं केनापि न शक्यते इति लोकस्वभावप्रदर्शनं, ततो विष्णोः शिरःप्रच्छेदनेतिहासस्य सप्रकारकमुपवर्णनं, तत्पतितं शिर आदित्योऽभवदित्यभिधानं, घर्मप्रवर्ग्य—महावीर-सम्राट्शब्दानां सोपपत्तिकं निर्वचनम्, एतं प्रवर्ग्ययज्ञं देवाः प्रापुस्तत्रापि प्रथममिन्द्रः प्रापान्वङ्गं न्यपद्यतेमं यज्ञं परिगृह्य यशस्व्यभवच्चातस्तमिन्द्रं प्रत्यक्षेण मखवान्पारोक्ष्येण मघवानित्याचक्षत इत्यादिनिरूपणं, ततो देवा ज्याछिद्भ्यो वम्रीभ्यः पूर्वं शिरःप्रच्छेदमेतिहासप्रसङ्गेन प्रतिज्ञातमन्नाद्यं प्रायच्छन्नित्यादि सोपपत्तिकमभिधानम्, एवमुपायेन प्राप्तस्य यज्ञस्य देवैः कृतस्य त्रेधाविभागस्य प्रदर्शनं, ततो देवानामपगतशिरस्कस्यात एव फलविहीनस्य यज्ञस्यानुष्ठानकरणादिप्रदर्शनम्, एवं छिन्नशिरस्कस्य यज्ञस्य फलसाधनत्वाभावात्तदनुष्ठानमेव सर्वत्रोत्सीदेदित्याशङ्क्य कश्चिद्दध्यङ्ङाथर्वणर्षिस्तत्संधानविद्याकुशल आसीदित्याद्यभिधानं, स चर्षिः पुराऽऽदित्यात्मना यज्ञशिरःसन्धानविद्यां शक्रायोपदिदेश—स चेन्द्र एवममन्यत यद्ययमिमां विद्यामन्यस्मा उपदिशेत्तदा सोऽपि मद्विधः स्यात्—अतस्तमृषिमितः परं त्वयैषा विद्या न कस्मा अप्युपदेष्टव्येत्याज्ञापितवानित्यादिप्रतिपादनम्, इन्द्रोपदेशात्प्रागेवाश्विनोर्यज्ञशिरःसन्धानविद्यादानं प्रतिश्रुतमासीदित्यादिनिरूपणम्, एवं दधीचा प्रतिश्रुतं-विद्यादानं स्मृत्वा तावश्विनौ दध्यञ्चमेत्य विद्यां देहीति प्रार्थितवन्तौ, तदानीं तयोर्दधीचश्च संजातयोरुक्तिप्रत्युक्त्योः प्रदर्शनम्, एवमश्विभ्यां प्रवर्ग्यविद्याया उपदेशे प्रार्थिते सति दधीचो विद्यादाने शक्रकृतप्रतिबन्धस्याभिधानं, ततः पुनरश्विनोर्दधीचश्च संजातसंवादेन तत्प्रतिबन्धनिवृत्त्युपायस्य प्रतिपादनम्, अश्विभ्यामभिहितमुपायमङ्गीकृत्य दध्यङ् ऋषिस्ताभ्यामश्विभ्यां विद्यामुपदिदिक्षुः सन्स्वसमीपं प्रापितवानित्यादिनिरूपणं, दधीचोऽश्विभ्यां मधुविद्यादानम्, इंद्रेण तस्य शिरश्छेदनम्, अश्विभ्यां

| ब्रा० | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| | च पुनस्तस्य स्वयंप्रदर्शितोपायेन शिरःसन्धानकरणं चेत्यादिप्रदर्शनम्, उक्तेऽर्थे कस्यचिन्मन्त्रस्य संवादप्रदर्शनम्, एतत्प्रवर्ग्याख्यं मधु साधारण्येन सर्वेषां नोपदेष्टव्यं किन्तु ज्ञातप्रियानूचानेभ्य एवेति नियमप्रतिपादनं, तथा ये पूर्वोक्ता उपदेशार्हाः शिष्यास्तेभ्योऽपि झटिति एषा मधुविद्या नोपदेष्टव्या किन्तु संवत्सरपर्यन्तं संवासोत्तरमेवेति नियमान्तरप्रतिपादनं, वक्ष्यमाणस्य मधुविद्याध्ययनव्रतस्य कालमाननिरूपणं, सोपपत्तिकमुक्तव्रतस्यानुष्ठेयस्वरूपनिरूपणम्, एतस्य प्रवर्ग्याख्यस्य कर्मणो यशोरूपेण प्रशंसनं, तत्र यशोरूपस्यादित्यात्मकस्य प्रवर्ग्यस्य सम्बन्धाद्यज्ञादिदक्षिणापर्यन्तानां वक्ष्यमाणानां यशस्वित्वप्रतिपादनं, प्रसङ्गाद्दक्षिणाविषये प्रतिग्रहीतुः कस्यचन विशेषनियमस्य प्रदर्शनम्, एतस्य प्रवर्ग्यस्यानुष्ठानकाले ऋतुनियमविशेषस्य विधानम्, आसुरेराचार्यस्य मतेनैकमेव सत्यवदनात्मकं दुष्करं व्रतं कर्तव्यमित्यभिधानं चेत्यादि. | १--१४ |
| २ | महावीरादिप्रवर्ग्यपात्रसम्भारब्राह्मणम्—तत्र प्रथमं महावीरादीनि मृन्मयानि पात्राणि निर्मातुं मृद्वल्मीकवपादीनां सम्भरणानां विधानम्, तत्राप्यादौ तेषां सम्भारसंज्ञाया निर्वचनं, तच्च सम्भरणमुत्तरत आस्तृते प्राचीनग्रीवे कृष्णाजिने, तत्रापि लोमवद्भागे विधेयमिति सार्थवादं विधानं, तत्राग्निरूपसाधनं विधाय तस्य प्रशंसनं, तस्या अग्नेः प्रकृतिभूतमौदुम्बरवृक्षं विधाय तस्य प्रशंसनं, विकल्पेनाग्नेः प्रकृतिभूतं विकङ्कतरूपं वृक्षान्तरं विधाय तस्योत्पत्तेरभिधानपूर्वकं प्रशंसनं, सा चाभ्रिररत्निमात्री भवतीति तस्याः परिमाणं विधाय तस्य प्रशंसनं, ततः सम्भारानाहर्तुं तस्याः समन्त्रकं स्तावकार्थवादातिदेशसहितमाहरणविधानम्, तामभ्रिं सव्ये हस्ते कृत्वा दक्षिणेन हस्तेनाभिमृश्य "युञ्जते मनः" इतीमं मन्त्रं जपतीति स्तावकार्थवादातिदेशसहितं विधानं, तयाऽभ्र्या खातां जलेनासिक्तां मृदं समन्त्रकमाहृत्योत्तरत आस्तृते कृष्णाजिने निदधातीति सप्रकारकं विधाय मृदाहरणमन्त्रं भागशोऽनूद्य च तस्य व्याख्यानं, मृत्सम्भरणानंतरं वल्मीकवपायाः समंत्रकं सम्भरणविधानं तस्य मन्त्रस्य, भागशोऽनूद्य व्याख्यानं स्तावकार्थवादातिदेशकथनं च, ततो वराहेण खातस्य मृत्पिण्डस्य समन्त्रकं सम्भरणविधानं, तस्य मन्त्रस्य भागशोऽनूद्य व्याख्यानं स्तावकार्थवादातिदेशकथनं च, ततः पूतिकरससम्भाराहरणं समन्त्रकं पूतिकादारशब्दयोर्निर्वचनसहितं च विधाय तस्य मन्त्रस्याभिप्रायकथनं स्तावकार्थवादातिदेशकथनं च, ततोऽजाक्षीरसम्भरणं समंत्रकं विधाय छिन्नशिरस्कस्य यज्ञस्याजाक्षीरस्य च परस्परसम्बन्धार्थतामुपपाद्य च स्तावकार्थवादातिदेशकथनम्, एतेषां विहितानां मृदादिपञ्चसम्भाराणां संहत्य प्रशंसनं, तत एकस्मिन्कृष्णाजिने सम्भृतानां पञ्चानामपि सम्भाराणां स्तावकार्थवादातिदेशसहितं समन्त्रकमभि- | |

ब्रा० विषयाः पृष्ठाङ्काः | ब्रा० विषयाः पृष्ठाङ्काः

मर्शनविधानं, महावीरादिनिर्माणाय देवयजनस्योत्तरतः परिश्रितं विधाय तत्र सम्भृतसम्भारानादाय गच्छन्तः "प्रैतु ब्रह्मणस्पतिः" इतीमं मन्त्रं जपन्तीति च विधाय तस्य मन्त्रस्य व्याख्यानम्, उत्तरतो विहितं परिश्रितमनूद्य तस्योपपादनम्, एवमानीतं सम्भारजातं तस्मिन्परिश्रिते खरे निदध्यादिति स्तावकार्थवादातिदेशसहितं समन्त्रकं विधानं, तेषां कृष्णाजिनस्थानां सम्भाराणां स्तावकार्थवादातिदेशसहितं समन्त्रकं संसर्जनविधानं, तया संसृष्टया मृदा महावीरकरणस्य विशिष्टलक्षणाभिधानपुरःसरं विधानम्, एवमुक्तलक्षणसम्पन्नं महावीरं कृत्वा तस्य समन्त्रकमभिमर्शनविधानम्, एतत्प्रकारेणैवान्यावपि द्वौ महावीरौ कर्तव्यावित्यभिधायैतयैव मृदा द्वयोः पिन्वनयोर्द्वयो रौहिणकपालयोश्च तूष्णींकरणविधानं, यदेतत्समन्त्रकं महावीरनिर्माणममन्त्रकं पिन्वनादिनिर्माणं चोक्तं तदुभयस्यापि संहत्य प्रशंसनम्, अवशिष्टस्य मृत्पिण्डस्य परित्यागप्रसक्तिं वारयित्वा प्रायश्चित्तार्थं धारणविधानं, प्रथममहावीरस्य समन्त्रकं स्तावकार्थवादातिदेशसहितमितरयोर्महावीरयोः पिन्वनयो रौहिणकपालयोश्चामन्त्रकं गवेधुकाभिः श्लक्ष्णीकरणविधानं, प्रथममहावीरस्य समन्त्रकं सार्थवादं स्तावकार्थवादातिदेशसहितं चेतरयोर्महावीरयोः पिन्वनयो रौहिणकपालयोश्चामन्त्रकमश्वशकृता धूपनकरणविधानम्, एतेषां महावीरादीनां श्रपणं विधाय पचनद्रव्याणां विधानम्, विहिते पचने पचनप्रकारकथनपूर्वकं मन्त्रं विनियुज्य तत्स्तावकार्थवादातिदेशकथनम्, इतरयोर्महावीरयोः पिन्वनयो रौहिणकपालयोश्च प्रथममहावीरवच्छृपणस्यामन्त्रकं विधानम्, एतेषामावापोद्धरणयोः कालविशेषस्य निरूपणं, महावीरत्रयस्योद्वपने क्रमेण मन्त्रत्रयं विनियुज्योद्वपनक्रियायां मन्त्रसङ्गतेरुपपादनं, पिन्वनयो रौहिणकपालयोश्च तूष्णीमुद्वपनविधानं, प्रथममहावीरस्यावापादुद्धृतस्याजाक्षीरेणासेचनस्य समन्त्रकं तत्स्तावकार्थवादातिदेशसहितं विधानम्, आवापादुद्धृतयोरितरयोर्महावीरयोः पिन्वनयो रौहिणकपालयोश्च तूष्णीमजाक्षीरेणासेचनस्य विधानं, प्रथमप्रवर्ग्यसृष्टिप्रतिपादकब्राह्मणस्यावसाने निरूपिताया व्रतचर्याया अत्राप्यतिदेशकरणं चेत्यादि. १९–३२

२ घर्मसन्दीपनं ब्राह्मणम्—तत्र प्रथमं अस्य च प्रवर्ग्यस्यानारभ्याधीतत्वेन स्वातन्त्र्यमाशंक्य क्रतुप्रवेशस्य प्रतिपादनं, तत्र सप्रवर्ग्ये क्रतौ आतिथ्येष्ट्यनंतरमुपसदः पुरा प्रवर्ग्यानुष्ठानकालं इति प्रतिपादनं, ततस्तावदसंस्कृतानां पात्राणां यागानर्हत्वात्तत्संस्काराय द्वन्द्वशः पात्रासादनस्य सार्थवादं विधानं, ततोऽध्वर्युः प्रोक्षणीः संस्कृत्यादायोपोत्तिष्ठन् "ब्रह्मन्प्रचरिष्यामः होतरभिष्टुहि" इति प्रैषद्वयं ब्रूयादिति विधाय तस्य प्रैषद्वयस्याभिप्रायकथनम्, एवमध्वर्युणा प्रार्थितस्य होतुरभिष्टवस्य प्रतिपदं तात्पर्यार्थकथनपुरःसरं तत्साधनभूतकर्सङ्घगतप्रथमर्चः प्रतीकप्रदर्शनेनाभिधानं, स्तावकार्थवादातिदेशसहितमासादितानां पात्राणां प्रोक्षणविधानं,

| ब्रा० विषयाः | पृष्ठाङ्काः |
|---|---|
| विहितं प्रोक्षणमनूद्य तत्र महावीरत्रयस्य प्रोक्षणे क्रमेण मन्त्रत्रयं विनियुज्य तस्य व्याख्यानं, घर्मदुहो धेनोर्बन्धनाय स्थूणा-निखननस्य सविशेषं विधानम्, आसादि-तायाः सम्राडासन्द्या देशविशेषे स्थापन-विधानम्, एतस्याः सम्राडासन्द्याः सार्थ-वादं वृक्षविशेषोच्छ्रायपरिमाणावयनानां विधानं, राजासन्द्या उत्तरतः सम्राडा-सन्द्याः स्थापनस्य प्रकारद्वयेन प्रशंसनं, प्रचरणीयस्य महावीरस्य कालविशेष-निर्देशपुरःसरं समन्त्रकं घृतेन समञ्जनं विधाय तस्य मन्त्रस्य व्याख्यानं, गार्ह-पत्यस्योत्तरत उपक्षिप्ते प्रवृञ्जनार्थे सैकते खरे रजतशतमानरुक्मप्रक्षेपस्य सप्रयो-जनं सोपपत्तिकं समन्त्रकं विधानं, होत्रा " सꣳसीदस्व " इत्युच्यमाने मुञ्जप्रल-वान्द्विगुणानादीप्याध्वर्युः प्रतिदिशं खरे कुर्यादिति सोपपत्तिकं सार्थवादं विधानम्, आदीपनप्रभृति प्रवृञ्जनसमये पत्नीमुख-वेष्टनस्य सप्रयोजनमभिधानं, मुञ्जप्रल-वेषु विहितं प्रवृञ्जनार्थं महावीरासादन-मनूद्य तत्र मन्त्रं विधाय च तत्प्रशंसनं, वक्ष्यमाणं पृथिवीसम्बन्धि यदाशीः-प्रतिपादनं तत्सर्वं यज्ञस्यैवेति निरूपणं, महावीरस्य समन्ताच्चतुर्दिक्षूपरिष्टाद्दिशि चैवं पञ्चसु दिक्षु प्रादेशं धारयन्तं यज-मानं पृथिवीदेवत्यान्याशिषः प्रतिपाद-कानि यजूंषि वाचयेदध्वर्युरिति विधाय क्रमेण तत्तद्दिक्सम्बद्धं मन्त्रं त्रेधा विभज्य च तस्य तस्य मन्त्रस्य भागशो व्याख्यानं, महावीरस्य दक्षिणदेशे उत्तानेन पाणिना निह्नवकरणस्य मन्त्रतदर्थविवरणसहितं विधानं, महावीरस्योत्तरदेशे वर्तमानां भूमिमभिमृश्य " मनोरश्वाऽसि " इतीमं मन्त्रं जपेदिति सोपपत्तिकं विधानं, महावीरस्य त्रयोदशभिर्वैकङ्कतसमिद्भिः परिश्रयणं विधातुं पूर्वं तासु द्वाभ्यां समिद्भ्यां समन्त्रकाभ्यां प्रथमं परिश्रयणं कार्यमिति प्रतिपादनम्, अवशिष्टाभिः समिद्भिः परिश्रयणं तूष्णीं कार्यमिति सप्रकारकमभिधानम्, तस्यैतस्य त्रयो-दशत्वसम्पादनस्य प्रशंसनपूर्वकं निग-मनम्, महावीरस्योपरिष्टात्सुवर्णशत-मानस्य रुक्मस्य सार्थवादं सप्रयोजनं समन्त्रकं स्थापनविधानम्, ततोऽध्वर्यु-र्धवित्रैर्महावीरं त्रिराधुनोतीति समन्त्रकं सार्थवादं विधानम्, तत्रैकं धवित्रं प्रति-प्रस्थात्र एकमग्नीधे दत्त्वैकं च स्वयं गृही-त्वाऽध्वर्युस्ताभ्यां सहाप्रदक्षिणं परिक्रामन् त्रिराधुनोतीति सार्थवादं विधानम्, पुनस्त्रिः प्रदक्षिणं परिक्रामद्भिस्तैराधूननं कार्यमिति सार्थवादं विधानम्, रौहिण-पुरोडाशयोः श्रपणविधानम्, उपरि निहितस्य सुवर्णशतमानस्यादानविधा-नम्, एवं धवित्रैराधूननेन सन्तापि-तस्य घर्मस्य वेदनार्थं कालविशेषे कश्चित्प्रैषमन्त्रं ब्रूयादिति धर्मविशेष-सहितं सप्रकारकं सार्थवादं विधानम्, प्रथमप्रवर्ग्यसृष्टिप्रतिपादकब्राह्मणस्याव-साने निरूपिताया व्रतचर्याया अत्रा-प्यतिदेशकरणं चेत्यादि. | ३३–६१ |
| ४ प्रवर्ग्येऽवकाशोपस्थानं ब्राह्मणम्— तत्र प्रथममध्वर्युणा " रुचितो घर्मः " इति प्रेषिते प्रवर्ग्यकर्तॄन् ऋत्विज आसनादुत्थायावकाशाख्यै-मन्त्रैर्घर्ममुपतिष्ठन्त इति विधानम्, उपस्थातॄणां संख्यामुपजीव्य प्रशंसनम्, | |

ब्रा० विषयाः पृष्ठाङ्काः | ब्रा० विषयाः पृष्ठाङ्काः

तेषामवकाशमन्त्राणां वाक्यशोऽनूद्य व्याख्यानम्, ततः पत्न्याः शिरोऽपावृत्य महावीरमीक्षमाणां तां "त्वष्टृमन्तस्त्वा" इत्येनामृचं वाचयतीति सार्थवादं विधानम्, प्रथमप्रवर्ग्यसृष्टिप्रतिपादकब्राह्मणस्यावसाने निरूपिताया व्रतचर्याया अत्राप्यतिदेशकरणं चेत्यादि. ९२–९८

इति प्रथमोऽध्यायः ।

अथ द्वितीयोऽध्यायः ।

१ गवाजपयोऽवसेचनब्राह्मणम्—तत्रादौ आज्यपूर्णे महावीरे गवाजयोः पयोऽवसेचनं विधातुं तत्र तयोर्दोहनात्पूर्वं तदासेचनोत्तरकालं च होतव्ययो रौहिणपुरोडाशयोः सायम्प्रातःकाले होमं विधाय तत्र मन्त्रद्वयस्य विनियोजनम्, एतयो रौहिणपुराडाशयोः क्रमेणाग्न्यादित्यात्मनाऽहोरात्रात्मना द्यावापृथिव्यात्मना चक्षुर्द्वयात्मना च प्रशंसनम्, दोहनार्थं रज्ज्वादानस्य समन्त्रकं स्तावकार्थवादातिदेशसहितं विधानम्, दैवीभिः संज्ञाभिर्घर्मदुहो गोराह्वानं विधाय लौकिकेन नाम्नाऽपि तस्या आह्वानस्य विधानम्, एवमुभयविधैर्नामभिराहूतायास्तस्या मन्त्रतत्तात्पर्यार्थोपेतं बन्धनविधानम्, दोहनाय वत्सविसर्जनस्य मन्त्रतत्सङ्गत्युपपादनसहितं विधानम्, मन्त्रतत्सङ्गत्युपपादनसहितं वत्सस्य पुनर्बन्धनविधानम्, ततः समन्त्रकं दोहनं विधाय तस्य मन्त्रस्य भागशोऽनूद्य व्याख्यानम्, दोहनसमये सर्वतः प्रसृतानां विप्रुषां मन्त्रवदभिमन्त्रणं विधाय मन्त्रस्य पाठप्राप्तं त्रिर्वचनमनूद्य तत्प्रशंसनम्, घर्मदुहो धेनोः समन्त्रकं स्तनाभिमर्शनं विधाय तस्य मन्त्रस्य पादशोऽनूद्य व्याख्यानम्, स्तावकार्थवादातिदेशसहितं समन्त्रकं गार्हपत्यं प्रति गमनविधानम्, एतस्य महावीरस्य ग्रहणसाधनयोः शफयोरादानं समन्त्रकं विधाय ताभ्यां शफाभ्यां महावीरस्य समन्त्रकं परिग्रहणविधानम्, ततो महावीरस्याधोभागे वेदेनोपमार्जनस्य स्तावकार्थवादातिदेशसहितं विधानम्, तत उपयमन्या स्रुचा महावीराधोभागस्य सोपपत्तिकं समन्त्रकं परिग्रहणविधानम्, एवं स्थिते महावीरेऽजापयस आसेचनं सप्रयोजनं विधाय गोपयसः समन्त्रकमासेचनविधानम्, उक्तमन्त्रस्य पदद्वयं पदद्वयमनूद्य सोपपत्तिकं स्तावकार्थवादातिदेशसहितं च व्याख्यानं, प्रथमाध्यायस्थप्रथमप्रवर्ग्यसृष्टिप्रतिपादकब्राह्मणस्यावसाने निरूपिताया व्रतचर्याया अत्राप्यतिदेशकरणं चेत्यादि. ९९–६९

२ घर्मप्रचरणम्—तत्र प्रथमं होत्रा "प्रैतु ब्रह्मणस्पतिः" इत्यस्मिन्मन्त्रे उच्यमानेऽध्वर्युः शफाभ्यां महावीरं धृत्वाऽऽहवनीयं प्रति प्राङ्मुखो गच्छन्वातनामानि यजूंषि जुहोतीत्याख्यायिकयोपपादनपूर्वकमभिधानं, तत्र द्वादशवातनामप्रतिपादकमंत्राणां सोपपत्तिकं वायुपरत्वं प्रतिपाद्य तात्पर्यार्थविवरणम्, एतेषां द्वादशानां वातनाम्नां संहत्य माससंवत्सरादित्यप्रवर्ग्यात्मना प्रशंसनं, तत उपयमन्या स्रुचाऽऽसेचनसमये पतितं पयो वा घृतं वा हविर्महावीरे पुनरासिञ्चन्तीति समन्त्रकं सार्थवादं विधानम्, इत्थं प्रत्यानयनानन्तरमाम्नातस्य जपमन्त्रस्य सार्थवादं

| ब्रा० विषयाः | पृष्ठाङ्काः | ब्रा० विषयाः | पृष्ठाङ्काः |
|---|---|---|---|

विनियोजनं, ततोऽस्य घर्मयागस्य वषट्कारप्रदानत्वात्प्रसक्तायाः पुरोऽनुवाक्याया निषेधप्रदर्शनं, महावीरस्थेन हविषा वषट्कृते होमस्य विधानं, विहिते होमे मन्त्रं विनियुज्य तस्य स्वाहाकारार्थवादसहितं व्याख्यानं, होमानंतरं त्रिवारं महावीरस्याग्नेरूर्ध्वाभिमुखमुज्ज्वालनं समंत्रकं विधाय तन्मंत्रस्य व्याख्यानम्, अनुवषट्कारे च समन्त्रकं होमं विधाय तन्मन्त्रस्य तात्पर्यार्थविवरणं, सप्रयोजनं ब्रह्मकर्तृकघर्मानुमन्त्रणमन्त्रं विधाय तस्य भागशोऽनूद्य व्याख्यानं, सोपपत्तिकं यजमानस्यापि घर्मानुमन्त्रणमन्त्रं विधाय तस्य भागशोऽनूद्य व्याख्यानम्, एवं वषट्कारानुवषट्कारयोर्महावीरस्थं हविर्हुत्वा तत्र यदवशिष्टं तेन प्रतिदिशमध्वर्युणा पिन्वने क्रियमाणे यजमानकर्तृकं घर्मपिन्वमानानुमन्त्रणमन्त्रं विधाय तस्य भागशोऽनूद्य व्याख्यानं, यजमानफलार्थं प्रथममूर्ध्वं पश्चात्प्रागादिदिक्षु च देवपितृतृप्त्यर्थं पिन्वनं कुर्यादित्यर्थवादेनोन्नयनम्, एवं कुर्वतो दक्षिणतोऽवस्थितस्याध्वर्योः प्रत्याक्रमणविधानं, विहिते प्रत्याक्रमणे कर्तव्यप्रकारं मन्त्रं चाभिधाय तत्र मन्त्रस्य तात्पर्यार्थं प्रदर्श्य च प्रवर्ग्ये तत्सङ्गतेरुपपादनम्, एवमुत्तरपूर्वार्द्धेऽतिक्रम्याहवनीयस्योत्तरस्यां दिशि सिकतयोते स्थले महावीरस्य समन्त्रकं सादनं विधाय तस्य मन्त्रस्य व्याख्यानं, सप्तभिर्मन्त्रैः सप्त विकङ्कतशकलान्घर्मे न्यज्य जुहोति हुत्वा हुत्वा प्रथमपरिधौ हस्तलेपं निर्माष्टीति च सार्थवादं विधानम्, एतेषां सप्तानामपि शाकलमन्त्राणां मध्ये प्रथममन्त्रस्य पूषपरत्वं व्याख्याय द्वितीय-

तृतीयपञ्चमषष्ठशाकलमन्त्राणां प्राणपरत्वव्याख्यानं, तथा चतुर्थशाकलमन्त्रेण चतुर्थशकलं घर्मे न्यज्याग्नावहुतं सन्तं वेद्यामास्तीर्णे बर्हिषि दक्षिणभागे स्वयमुदीचीं दिशमीक्षमाणः संवृणुयादिति सार्थवादं सविशेषं विधानं, सप्तमशाकलमन्त्रेण तु सप्तमस्य शकलस्य होमं निषिध्य सप्रकारकं सोपपत्तिकं निरसनविधानम्, एताः सप्त शाकलाहुतीः संहृत्य तासां प्रशंसनं, महावीरे वर्तमानस्यावशिष्टस्य हविष उपयमन्यामासेचनस्य मन्त्रतदभिप्रायसहितं स्तावकार्थवादातिदेशसहितं च विधानं, सायंप्रातःकालयोः प्रवृञ्जनोपरिष्टात्काले होतव्यत्वेन विहितौ यौ रौहिणपुरोडाशौ तावस्मिन्काले होतव्याविति समन्त्रकं स्तावकार्थवादातिदेशसहितं च विधानम्, उपयमन्यामानीतस्यावशिष्टस्य घर्मस्य यजमानेन सहोपहवयाचनपूर्वकं मन्त्रतदर्थसहितं भक्षणविधानम्, स्तावकार्थवादातिदेशसहितं प्राग्वंशस्य दक्षिणादिग्भागे प्रवर्ग्यकर्तॄणां मार्जनविधानं, ततोऽवशिष्टानां वैकंकतशकलानां प्रहरणविधानम्, इत्थं सप्रवर्गे क्रतौ प्रवर्ग्याख्यं कर्म निर्वर्त्य तदनूपसदाख्यं कर्म कर्तव्यमित्यभिधाय प्रवर्ग्यस्य प्रयोजनकथनपूर्वकमुपसंहरणम्, इमं प्रवर्ग्यं प्रथमयज्ञे न प्रवृञ्ज्यादिति सदोषं सकारणं निषिध्य द्वितीये तृतीये वा तु यज्ञेऽमुं प्रवर्ग्यं प्रवृञ्ज्यादेवेति सोपपत्तिकं सप्रयोजनं सकारणं विपक्षे बाधककथनपुरःसरं विधानं, द्वितीयतृतीयादिष्वपि यज्ञेषु न सर्वेषां यजमानानामविशेषेणैतत्प्रवर्ग्यानुष्ठानं कर्तव्यं, किन्तु

| ग्र० विषयाः | पृष्ठाङ्काः | ग्र० विषयाः | पृष्ठाङ्काः |
|---|---|---|---|

ज्ञातप्रियानूचानानामिति सप्रयोजनमभिधानं, सहस्रदक्षिणे–सर्ववेदसे–सर्वपृष्ठे विश्वजिति–वाजपेये–राजसूये च सत्रेषु च नियमेन प्रवृञ्ज्यादेभ्योऽन्यत्र नेति प्रतिपादनम्, एवमप्रवर्ग्यस्य यज्ञस्याशिरस्कत्वे कथमग्निहोत्रदर्शपूर्णमासचातुर्मास्यपशुबन्धसौम्याध्वराणां सशिरस्त्वमित्याशङ्क्य तदुपपादनं, प्रकारान्तरेण सशिरस्कत्वस्योपपादनम्, एतद्वेदनस्य फलाभिधानं, सोमयागाङ्गभूतेषु दीक्षणीयादिषु कर्मसु प्रणीता आपः प्रणीयन्ते तद्वत्तदङ्गभूते प्रवर्ग्येऽपि तासां प्रणयनेन भवितव्यमित्याशङ्क्य तत्समाधानकथनं, प्रयाजानुयाजानामभावकृतं यज्ञान्तरवैषम्यमाशङ्क्य तत्समाधानकथनं, यज्ञान्तरवदत्राज्यभागौ कुतो न भवत इत्याशंक्य तत्समाधानकथनं, मृन्मयपात्रस्य होमानर्हतामाशंक्य घर्महोमे तदेव योज्यमित्युपपाद्य तत्र पक्षान्तरेण वानस्पत्यं हिरण्मयं च पात्रमाक्षिप्यैतस्मिन्पक्षे बाधमुक्त्वा मृन्मयेनैव होतव्यमित्युपसंहारकरणं, प्रथमाध्यायस्थप्रथमप्रवर्ग्यसृष्टिप्रतिपादकब्राह्मणस्यावसाने निरूपिताया व्रतचर्याया अत्राप्यतिदेशकरणं चेत्यादि। ७०–९७

इति द्वितीयोऽध्यायः।

## अथ तृतीयोऽध्यायः।

१ घर्मोद्वासनम्–तत्र प्रथमं घर्मोद्वासनकालस्य विधानं, तत्र प्रवर्ग्यमुद्वासयितुं घर्मोपयुक्तानां द्रव्याणामेकीकरणविधानं, ततो घर्मोद्वासस्याङ्गत्वेनाहुतित्रयस्य विधिस्सया तदर्थं दर्भमुष्टित्रयस्योपकल्पननिरूपणं, तेषां मध्ये एकं दर्भमुष्टिं प्रज्वाल्य तद्गतेऽग्नौ प्रथमाहुतिर्होतव्येति सप्रकारकं सप्रयोजनं सार्थवादं समन्त्रकं विधाय तस्य मन्त्रस्य भागशोऽनूद्य व्याख्यानम्, पूर्ववद्वितीयाहुतेः सप्रकारकं सप्रयोजनं सार्थवादं समन्त्रकं विधानं, पूर्ववत्तृतीयाहुतेः सप्रकारकं सप्रयोजनं सार्थवादं समन्त्रकं विधानं, घर्मोद्वासनदेशं प्रति गमनं समन्त्रकं विधाय तस्य मन्त्रस्य भागशोऽनूद्य व्याख्यानम्, एवं समन्त्रकं सर्वं प्रवर्ग्यसम्भारमादायोपनिष्क्रम्य प्रस्तोतारं साम गायेति प्रेष्येदिति विधाय तत्र पक्षान्तरमुपन्यस्यास्य पक्षस्यैवान्ततः सकारणं निगमनं, सामगानस्य प्रयोजननिरूपणं, विहितस्य साम्न आधारभूतमन्त्रलिङ्गद्वारेणापि रक्षोनिबर्हकत्वाभिधानम्, तस्याः सामयोन्या ऋचोऽतिच्छन्दस्त्वेन प्रशंसनम्, तत्साम्न आद्यं स्तोभपदमुदाहृत्य रक्षोविनाशहेतुत्वप्रतिपादनम्, ततः प्रवर्ग्यमुद्वासयिष्यतामध्वर्युप्रभृतीनां गमनमार्गं विधायोदकसमीपगमनविधानम्, परितो जलयुक्ते द्वीपे घर्मोद्वासनं विधाय विपक्षे बाधोपन्यासपुरःसरं तदुपपाद्य तस्य निगमनम्, इत्थं नदीद्वीपे घर्मोत्सादनमभिधाय तत्र सोपपत्तिकं पक्षान्तरनिरूपणं, ततः प्रथमस्य महावीरस्योत्सादनप्रकारं सार्थवादं समन्त्रकं विधाय तस्य मन्त्रस्य भागशोऽनूद्य व्याख्यानम्, एवमुत्तरयोरपि महावीरयोरुत्सादनं कार्यमिति विधाय संहृत्य च तत्प्रशंसनं, ततो या पूर्वं महावीरादिनिर्माणावसरेऽवशिष्टा मृन्निहितासीत्तस्या अप्यत्र निधानं विधाय तस्य सोपपत्तिकं प्रशंसनं, ततः क्रमे-

| ब्रा० विषयाः | पृष्ठाङ्काः | ब्रा० विषयाः | पृष्ठाङ्काः |
|---|---|---|---|

णाग्नेः सम्राडासन्द्याः कृष्णाजिनस्य धवित्राणां चोद्वासनस्य विधानम्, उपयमन्या सार्द्धं गवादिबन्धनार्थाया रज्जोरुद्वासनं विधाय दोहनार्थयोः पात्रयोरुद्वासनविधानं, गवादिबन्धनार्थानां स्थूणादीनामुद्वासनं विधाय तन्निर्वर्त्यावयवजातस्य सम्पादनं, खरत्रयस्याप्युद्वासनस्य सविशेषमभिधानं, प्रचरणीये महावीरे पयस आसेचनस्य सार्थवादं समन्त्रकं विधानं तस्य मन्त्रस्य भागशोऽनूद्य व्याख्यानं च, आनेतव्यस्य पयसः परिमाणस्य साभिप्रायमभिधानं, परिशेषितस्य पयसः कदोपयोग इत्याशंक्य तदुपयोगकालस्यार्थवादयुतं प्रतिपादनम्, उद्वासितं घर्मं सर्वदिक्षु त्रिः परिषिञ्चेदिति सहेतुकं सार्थवादं निरूपणं, परिषेचने क्रियमाणे प्रस्तोतारं प्रति सामगानार्थं प्रेष्येदिति सार्थवादं विधानं, चात्वाले प्रवर्ग्यकर्तॄणां मार्जनं विधाय तत्र मन्त्रं विनियुज्य तस्य व्याख्यानं, मार्जनशेषस्योदकस्य मन्त्रतदभिप्राययुतं सप्रकारकं सेचनविधानं, सर्वेषां प्रवर्ग्यकर्तॄणां मार्जनदेशात्समन्त्रकं निर्गमनं विधाय तस्य मन्त्रस्य भागशोऽनूद्य तात्पर्यार्थविवरणम्,

**प्रवर्ग्यशेषो दधिघर्मः**—तत्रेत्थं प्रवर्ग्यतदुद्वासनयोरभिधानानन्तरं सौत्येऽहनि कर्तव्यस्य दधिघर्माख्ययागस्य विधानं, तस्यैतस्य सोमयागानां मध्येऽनुष्ठेयस्य घर्मानुष्ठानस्य प्रशंसनं, स च दधिघर्मो माध्यन्दिनसवने तत्रापि पवमानस्यानन्तरमनुष्ठेय इति सार्थवादमभिधानं, तस्मिन् दधिघर्मे साधनत्वेन पात्रविशेषं विधाय तस्य प्रशंसनम्, इत्थं दधिघर्मस्य कालसाधने उक्त्वा तस्य यागभक्षणयोर्विधित्सया तत्प्रकारनिरूपणं, तत्र भक्षणस्योपहवयाचनपूर्वकत्वं मन्त्रवत्त्वं चाभिधायोक्तमन्त्रस्य भागशोऽनूद्य व्याख्यानम् स्तावकार्थवादातिदेशसहितं सर्वेषामृत्विजां चात्वाले मार्जनस्य विधानं,

**प्रवर्ग्याङ्गभूतं दक्षिणाद्रव्यदानम्**—तत्र च तावद्ब्रह्मणो यज्ञभिषक्त्वेन मुख्यत्वात्तस्मै दातव्यस्य दक्षिणाद्रव्यस्य सोपपत्तिकं निरूपणं, तथाऽध्वर्यवे दातव्यां दक्षिणामभिधाय तस्याः सोपपत्तिकं निगमनं, तथा होत्रे प्रदेयां दक्षिणामभिधाय तस्याः सोपपत्तिकं निगमनम्, उद्गातृभ्यो दक्षिणादानं विधाय तदुपपाद्य निगमनं, प्रथमाध्यायस्थप्रथमप्रवर्ग्यस्तुष्टिप्रतिपादकब्राह्मणस्यावसाने निरूपिताया व्रतचर्याया अत्राप्यतिदेशाकरणं चेत्यादि। ९८–११८

२ **घर्मभेदे प्रायश्चित्तनिरूपणम्**—तत्र प्रथमं प्रायश्चित्तं विधातुमुपोद्घातत्वेन तस्योपपादनम्, ततो यस्य घर्मो भिद्येत तेन तत्र प्रायश्चित्तिः कर्तव्येति विधानम्, तत्राद्यां पूर्णाहुतिं विधाय तां प्रशस्य च तस्यां मन्त्रं विनियुज्य च तेन मन्त्रेण भिन्नस्य घर्मस्य भैषज्यकरणप्रकारस्योपवर्णनम्, " पृथिव्यै स्वाहा " इत्यादीनां " पूताय स्वाहा " इत्यन्तानां त्रयोदशमन्त्राणां भैषज्यकरणहेतुत्वव्याख्यानेन घर्मभेदप्रायश्चित्ते विनियोजनम्, तत एतैस्त्रयोदशभिर्मन्त्रैस्त्रयोदशाहुतयो होतव्या इति

| ब्रा० विषयाः | पृष्ठाङ्काः |
| --- | --- |
| विधाय तासां संवत्सरात्मकप्रजापत्यात्मना प्रशंसनम्, ततः पुनरन्येषां " वाचे स्वाहा " इत्यादीनां " श्रोत्राय स्वाहा " इत्यन्तानां सप्तानां मन्त्राणां भैषज्यकरणहेतुत्वव्याख्यानेन घर्मभेदप्रायश्चित्ते विनियोजनम्, तत एतैः सप्तभिर्मन्त्रैः सप्तान्या आहुतयो होतव्या इति विधाय तासां सप्तशीर्षण्यप्राणात्मना प्रशंसनम्, तत उत्तमां पूर्णाहुतिं विधाय तां प्रशस्य च तस्यां मन्त्रं च विनियुज्य तस्य भागशोऽनूद्य व्याख्यानम्, एवं महावीरस्य भेदननिमित्तं प्रायश्चित्तं प्रतिपाद्येदानीं पुनस्तस्य निर्माणस्यानुष्ठानप्रकारस्य च प्रतिपादनम्, प्रवर्ग्यस्तुतिः—तस्यां चैतस्य प्रवर्ग्यस्य क्रमेण संवत्सरात्मना—लोकत्रयात्मना—अग्निवाय्वादित्यात्मना—यजमानात्मना—अग्निहोत्रात्मना—दर्शपूर्णमासात्मना—चातुर्मास्यात्मना—पशुबन्धात्मना—ज्योतिष्टोमात्मना च सोपपत्तिकं प्रशंसनम्, प्रतिपर्यायमुक्तार्थं वेदितुः फलाभिधानं च, इत्थं प्रवर्ग्यसम्बन्ध्युक्तविज्ञानं वेदिता सर्वेष्वपि यज्ञेषूक्तप्रकारेण प्रवर्ग्यस्य सम्पादनात्सप्रवर्ग्येणैव सर्वेण यज्ञजातेनेष्टवान्भवतीति निरूपणम्, प्रथमाध्यायस्थप्रथमप्रवर्ग्यसृष्टिप्रतिपादकब्राह्मणस्यावसाने निरूपिताया व्रतचर्याया अत्राप्यतिदेशकरणं चेत्यादि. | ११९–१३२ |


इति तृतीयोऽध्यायः ।

इति बृहदारण्यकसंज्ञकचतुर्दशकाण्डान्तर्गते प्रवर्ग्यकाण्डे विषयानुक्रमणिका समाप्ता ।

समाप्तं प्रवर्ग्यकाण्डम् ।



श्रीशः शरणम् ।

# दशमादि चतुर्दश काण्डान्तर्गत प्रथम प्रवर्ग्यकाण्डान्तेषु काण्डेषु ।

## अकाराद्यनुक्रमेण विशिष्टनाम्नां सूची.

### तत्र दशमे काण्डे—


| नामानि | अ. ब्रा. क. |
|---|---|
| अर्क्यम् | ४ । १ । ४ ; ६ । ५ । १, २ |
| अग्निचयनम् | १ । ५ |
| अग्निचित् | १ । ४ । ९ ; १ । ५ । ४ |
| अग्निरहस्यम् | १ । १ |
| अग्निसवः | १ । ५ । ३ |
| अरुण औपवेशीयः— ( गौतमः ) | ६ । १ । १, ४ |
| अश्वपतिः— ( केकयानां राजा ) | ६ । १ । २ |
| अप्सरसः | ५ । २ । २० |
| इन्द्रद्युम्नो भाल्लवेयः— ( वैयाघ्रपद्यः ) | ६ । १ । १, ८ |
| उक्थ्यग्रहः | ३ । ४ । २ |
| कुश्रिर्वाजश्रवसः— ( गौतमः ) | ५ । ५ । १ |
| केलकः ( शाण्डिल्यायनः ) | ४ । ५ । ३ |
| कोषः | ५ । ५ । ८ |
| जनशार्कराक्ष्यः— ( सावयसः ) | ६ । १ । १, ९ |
| ज्योतिष्टोमः | १ । २ । ६, ७ |
| दर्शपूर्णमासः | १ । ५ । ४ |
| धीरशातपर्णेयः | ३ । १ । १ |
| नाराशंस्यो गाथाः | ५ । ६ । ८ |
| प्रियव्रतः ( रौहिणायनः ) | ३ । ५ । १४ |
| बुडिल आश्वतराश्विः— ( वैयाघ्रपद्यः ) | ६ । १ । १ |
| भारद्वाज ऋषिः | ४ । २ । १९ |
| महाशालजाबालः | ३ । ३ । १ ; ६ । १ । १, ७ |
| माया | २ । २ । २० |
| यज्ञवचाः ( राजस्तंबायनः ) | ४ । २ । १ |
| वामकक्षायणः | ४ । १ । ११ |
| विश्वजित् ( अतिरात्रः ) | २ । ६ । १६ |
| वैश्वावसव्यः | ३ । ४ । १ |
| शाकायनिनः | ४ । ५ । १ |
| शाट्यायनिः | ४ । ५ । २ |
| श्यापर्णः ( सायकायनः ) | ४ । १ । १० |
| शाण्डिल्यः | १ । ४ । १०, ११ ; ५ । १ । ११ ; ६ । ३ । २ |
| श्वेतकेतुः ( आरुणेयः ) | ३ । ४ । १ |
| श्रौमत्यः | ५ । ४ । १ |
| सात्ययज्ञः पौलुषिः— ( प्राचीनयोग्यः ) | ६ । १ । १, ५ |
| सल्वः | ४ । १ । १० |
| सातरथवाहिनिः | १ । ४ । १० |
| सुश्रवाः ( कौष्यः ) | ५ । ५ । १ |
| सोमयागः | १ । ५ । ४ ; ४ । १ । १९ |
| सोमयाजी | १ । ५ । ४ |
| स्वधा | ५ । २ । २० |
| हालिङ्गवः | ४ । ५ । १ |


वंशोक्तान्यृषिनामानि तु तत एवावगन्तव्यानि ।

इति दशमं काण्डं समाप्तम् ।

## अथैकादशो काण्डे-


| नामानि | अ. ब्रा. क. |
|---|---|
| अग्न्याधानम् | १ । १ |
| अग्नीषोमौ | १ । ३ । २ |
| अतिरात्रः | ९ । ९ । ६ |
| अप्सरसः | ९ । १ । ४ |
| अथर्वाङ्गिराः | ९ । ६ । ७ |
| अयस्थूणः | ४ । २ । १७ |
| अन्तर्वान् ( गन्धर्वः ) | २ । ३ । ९ |
| अन्वाहार्यपचनः | ९ । ३ । १० |
| अन्यतःप्लक्षाः कुरुक्षेत्रस्थं सरः | ९ । १ । ४ |
| आग्नीध्रः ( अग्नीत् ) | २ । ७ । ३२ |
| आरुणिः | २ । ६ । १२ |
| इडा | ९ । १ । १<br>९ । ३ । ९ |
| इतिहासः | ९ । ६ । ८ |
| उद्दालक आरुणिः-( अरुणपुत्रो गौतमः ) | ४ । १ । ९ । ३ |
| उद्दालवान् ( गन्धर्वः ) | २ । ३९ |
| उर्वशी ( अप्सराः ) | ९ । १ |
| ऐषावीरः | २ । ७ । ३२ |
| कुरुक्षेत्रम् | ९ । १ । ४ |
| कुरुपञ्चालः | ४ । १ । २ |
| केशी ( राजा ) | ८ । ४ । १, ६ |
| खण्डिकः ( औद्भारिः | ८ । ४ । १ |
| गृहपतिः | ८ । ४ । १ |
| जनकः ( वैदेहो राजा ) | ३ । १ । २<br>४ । ३ । २०<br>६ । २ । १<br>६ । ३ । १ |
| जनमेजयः पारीक्षितः-( राजा ) | ९ । ९ । १३ |
| दर्शपूर्णमासः ( यागः ) | १ । १ । ४ । १ । ९<br>१ । २ । २० । १ । ६ । १६ |
| दाक्षायणः ( यज्ञः ) | १ । २ । १३ |
| दानवः ( असुरः ) वृत्रः | ९ । ९ । १३ |
| परमेष्ठी ( प्रजापतिः ) | १ । ६ । १४-१८ |
| पुरूरवाः ( राजा ) | ९ । १ |
| पुराणम् | ९ । ६ । ८ |
| प्रजापतिहृदयम् | १ । २ । ४० |
| भृगुर्वारुणिः | ६ । १ |
| मधुकः पैङ्ग्यः | ७ । २ । ८ |
| महादेवः | ९ । ३ । ९ |
| मित्रविन्दा | ४ । ३ |
| यवमान् ( गन्धर्वः ) | २ । ३ । ९ |
| याज्ञवल्क्यः | ३ । १ । २, ४<br>४ । २ । १७<br>४ । ३ । २०<br>६ । २ । १, ९, १०<br>६ । ३ । १ |
| रोहिणी | १ । १ । ७ |
| वरुणप्रघासाः | ९ । २ । ३ |
| वषट् | १ । २ । २ । २ । २ । २, ४<br>२ । ७ । ३२ |
| विष्णुक्रमणम् | ७ । २ । १ |
| वैश्वदेवम् | ९ । २ । १ |
| शम्योः | २ । ३ । ९ । २ । ७ । २८ |
| शाकल्यः | ६ । ३ । ३, ११ |
| शिपिविष्टः | १ । ४ । ३, ४ |
| शुनासीरीयम् | ९ । २ । ६ |
| शौचेयः ( प्राचीनयोग्यः ) | ९ । ३ । १ |
| शौल्बायनः | ४ । २ । १७ |
| श्रीः | ४ । ३ । १, २ |
| श्रौषट् | ४ । २ । ३ |
| श्वेतकेतुः ( आरुणेयः ) | २ । ७ । १२<br>९ । ४ । १८ । ६ । २ |
| सत्रम् | ९ । ९ । ४ |
| सरस्वान् | २ । ४ । ९ । २ । ६ । ३ |
| सूक्तवाकः | २ । ७ । २८ |

| नामानि | अ. ब्रा. क. |
|---|---|
| सोमयागः | ७ । २ । १ |
| सोमशुष्मः ( सात्ययज्ञिः ) | ६ । २ । १ |
| सैन्धवः ( अश्वः ) | ५ । ५ । १२ |
| स्वधा | ५ । ६ । २ |
| स्वैदायनः | ४ । १ । २ |


इत्येकादशं काण्डं समाप्तम् ।

## अथ द्वादशे काण्डे–


| नामानि | अ. ब्रा. क. |
|---|---|
| अर्क्यम् | ३ । ३ । १४ |
| अङ्गिराः | २ । २ । ९ |
| अच्छावाकः ( ऋत्विग् ) | १ । १ । ८ |
| अतिरात्रः | २ । १ । ५, ६ |
| अन्वाहार्यपचनः– ( अग्निः ) | ४ । १ । ३<br>४ । २ । १ |
| आग्नीध्रः | १ । १ । ९ |
| आरुणिः | ४ । १ । ११ |
| उद्दालकः ( आरुणिरेव ) | २ । २ । १३ |
| उक्थ्यः ( यागः ) | २ । १ । ६, ७ |
| उन्नेता ( ऋत्विग् ) | १ । १ । ९, १० |
| ऋभुः | ३ । ४ । ५ |
| गवामयनम् ( सत्रम् ) | १ । २ । १ । ३ |
| गौर्वीतिः ( शाक्त्यः ) | ८ । ३ । ७ |
| गृहपतिः | १ । १ । १ |
| ग्रावस्तुत् ( ऋत्विग् ) | १ । १ । ९ |
| छन्दोमः ( स्तोमः ) | १ । २ । २ |
| दुष्टरीतुः (पौंसायनः राजा) | ९ । ३ । १, २, १३ |
| नमुचिः ( असुरः ) | ७ । १ । १०<br>७ । ३ । १, ४<br>८ । १ । ३ |
| नारायणः ( परमात्मा ) | ३ । ४ । १ |
| नेष्टा ( ऋत्विग् ) | १ । १ । ७, ८ |
| पोता ( ऋत्विग् ) | २ । १ । ८ |
| पैङ्ग्यः ( ऋषिः ) | २ । ४ । ८ |
| प्रतिप्रस्थाता– ( ऋत्विग् ) | १ । १ । ५, ७<br>८ । १ । ४ |
| प्रतीदर्शः ( श्वैक्नः )– ( ऐभावतः ) | ८ । २ । ३<br>१ । १ । ८ |
| प्रस्तोता ( ऋत्विग् ) | १ । १ । ६ |
| प्रोतिः कौशाम्बेयः (कौसुरुबिन्दिः ) | २ । २ । १३ |
| बालाकिः | ३ । १ । १ |
| महाव्रतम् | १ । ३ । २३<br>३ । १ । ९ |
| याज्ञवल्क्यः | ४ । १ । १० |
| वसोर्धारा ( होमः ) | ६ । १ । ३८, ४१ |
| विश्वरूपः | ७ । १ । १ |
| विषुवत् | १ । २ । २ । १ । ३ । २३<br>२ । ३ । ६, ७, ८ |
| शृञ्जयः | ९ । ३ । १, २, ३ |
| श्रौषट् | ३ । ३ । ३ |
| श्वेतकेतुः ( आरुणेयः ) | २ । १ । ९ |
| सत्रम् | १ । १ । २ । १ । ३ । ३ |
| सत्रिन् | ३ । ५ । २ |
| सुपर्णः | ३ । ४ । ४ |
| स्नातकः | १ । १ । १० |
| सुप्ला ( सांञ्जयः ) | ८ । २ । ३ |
| सृंजयः | ९ । ३ । १, २, ३ |
| सुब्रह्मण्या | १ । १ । ९ |
| स्वधा | ८ । १ । ७ |


इति द्वादशं काण्डम् ।

## अथ त्रयोदशे काण्डे–


| नामानि | अ. ब्रा. क. |
|---|---|
| अग्निष्टोमं ( साम ) | ५ । १ । २ |
| अग्निष्टुत् ( अग्निष्टोमसाम ) | ७ । १ । ३ |
| अग्नीषोमीयः ( पशुः ) | ४ । ४ । ३ ॥ ४ । ४ । ११<br>६ । १ । ४ |
| अङ्गिराः | ४ । ३ । ८ |
| अतिरात्रः ( यागः ) | ३ । १ । ४ ॥ ३ । ३ । ६<br>५ । ३ । ९ |

| नामानि | अ. ब्रा. क. |
|---|---|
| अथर्वा | ४ । ३ । ७ |
| अन्वाध्यः | ४ । २ । १६ |
| अप्सराः | ४ । ३ । ८ |
| अप्तोर्यामः ( यागः ) | ९ । ४ । ७ ॥ ७ । १ । ९ |
| अर्बुदः ( काद्रवेयः ) | ४ । ३ । ९ |
| अश्वसामुद्रिः | २ । २ । १४ |
| असितो धान्वः ( असुराणां राजा ) | ४ । ३ । ११ |
| आग्नेयी दिक् | ८ । १ । ९ |
| आप्यम् | ४ । २ । १६ |
| आसन्दीवत् ( नगरी ) | ९ । ४ । २ |
| इतिहासः | ४ । ३ । १२ |
| इन्द्राबृहस्पती | ९ । ४ । २८ |
| इन्द्राग्नी | १ । २ । ६ ॥ ९ । ३ । २ |
| इन्द्राविष्णू | ९ । ४ । २८ |
| इन्द्रस्तुत् ( उक्थ्यः ) | ७ । १ । ४ |
| इन्द्रोतः शौनकः | ९ । ३ । ९ |
| इन्द्रोतो दैवापः शौनकः | ९ । ४ । १ |
| उग्रसेनः | ९ । ४ । ३ |
| ऋषभो याज्ञतुरः ( श्विक्नानां राजा ) | ९ । ४ । १९ |
| कश्यपः | ७ । १ । १९ |
| काश्यः | ९ । ४ । १९ |
| कुबेरो वैश्रवणः ( राक्षसानां राजा ) | ४ । ३ । १० |
| कोकः ( शोणराजपुत्रः ) | ९ । ४ । १७ |
| कौसल्यः | ९ । ४ । ४ |
| क्रिविः ( पञ्चालदेशः ) | ९ । ४ । ७ |
| क्रैव्यः ( पञ्चालानां राजा ) | ९ । ४ । ७ |
| गौतमस्य स्तोमः ( चतुष्टोमः ) | ९ । १ । १ |
| जनमेजयः पारीक्षितः | ९ । ४ । १,२ |

| नामानि | अ. ब्रा. क. |
|---|---|
| जमदग्निर्ऋषिः | २ । २ । १४ |
| जामदग्नं ( आप्रीसूक्तम् ) | २ । २ । १४ |
| जुम्बको वरुणः | ३ । ६ । ६ |
| तार्क्ष्यः | ४ । ३ । १३ |
| दधिक्रावा | २ । ९ । ९ |
| देवजनविद्या ( राक्षसानां वेदः ) | ४ । ३ । १० |
| धर्म इन्द्रः ( देवराट् ) | ४ । ३ । १४ |
| धृतराष्ट्रः | ९ । ४ । २२ |
| ध्वसनो द्वैतवनः ( मत्स्यदेशानां राजा ) | ९ । ४ । ९ |
| नाडपित् ( कण्वाश्रमः ) | ९ । ४ । १३ |
| नारायणः परमात्मा ( पुराणपुरुषः ) | ६ । १ । १ |
| नेष्टा ( ऋत्विग् ) | २ । ८ । ३ |
| पर आत्नारो हैरण्यनाभः ( कोसलानां राजा ) | ९ । ४ । ४ |
| परिवक्रा ( नगरी ) | ९ । ४ । ७ |
| पञ्चालः | ९ । ४ । ७ |
| पारीक्षितीयः | ९ । ४ । ३ |
| पालागलिः | ९ । २ । ८ |
| पुरुषनारायणाः ( मन्त्राः ) | ६ । २ । १२ |
| पुरुकुत्सः ( ऐक्ष्वाको राजा ) | ९ । ४ । ९ |
| पुरुषमेधः ( यागः ) | ६ । १ । १ ६ । २ । १ |
| पुरोहितः | ४ । ४ । १ |
| प्राच्याः | ८ । १ । ९ । ८ । २ । १ |
| बहिष्पवमानम् | २ । ३ । १ |
| बार्हद्दुक्थम् ( आप्रीसूक्तम् ) | २ । २ । १४ |
| बृहदुक्थम् ( वामदेव्यम् ) | २ । २ । १४ |
| भरतः | ९ । ४ । ११, २१ |
| भारताः | ९ । ४ । ११, २१ |
| भाल्लवेयः ( इन्द्रद्युम्नः ) | ४ । २ । ३ । ९ । ३ । ४ |
| भीमसेनः | ९ । ४ । ३ |

| नामानि | अ. ब्रा. क. |
|---|---|
| मत्स्यः सांमदः ( जलचराणां राजा ) | ४ । ३ । १२ |
| मनुर्वैवस्वतः | ४ । ३ । ३ |
| मरुत्त आविक्षितः ( आयोगवानां राजा ) | ५ । ४ । ६ |
| माघः | ८ । १ । ४ |
| मुण्डिभः ( औदन्यः ) | ३ । ५ । ४ |
| याज्ञवल्क्यः | ५ । ३ । ६ |
| विश्वजित् ( अतिरात्रः ) | ७ । १ । १२ |
| वैश्वदेवम् | १ । ८ |
| शकुन्तला ( अप्सराः ) | ५ । ४ । १३ |
| शतानीकः ( सात्राजितः ) | ५ । ४ । १९ |
| शूद्रः | २ । ५ । ८ |
| श्रुतसेनः | ५ । ४ । ३ |
| शैलालिः | ५ । ३ । ३ |
| शोणः सात्रासहः ( पाञ्चालानां राजा ) | ५ । ४ । १६ |
| शौनकः | ५ । ४ । १ |
| श्विक्नः ( राजा. ) | ५ । ४ । १५ |
| सत्वत् | ५ । ४ । २१ |
| सवनीयः ( पशुः ) | ५ । १ । ३ । ५ । ३ । ११ |
| सर्वमेधः ( यागः ) | ७ । १ |
| सत्यकामो जाबालः | ५ । ३ । १ |
| सात्ययज्ञिः ( सात्ययज्ञः ) | ४ । २ । ४ । ५ । ३ । ९ |
| सौमापो मानुतन्तव्यः | ५ । ३ । २ |
| स्वधा. | ८ । १ । ४ |

इति त्रयोदशं काण्डम् ।

## अथ चतुर्दशकाण्डन्तर्गते प्रथमे प्रवर्ग्यकाण्डे–

| नामानि | अ. ब्रा. क. |
|---|---|
| अङ्गिराः | २ । २ । ११ |
| आग्नीध्रः ( अग्निसखः ) | ३ । १ । ६, १३ |
| आसुरिः | १ । १ । ३३ |
| इडा | २ । १ । ७ |
| इन्द्राणी | २ । १ । ८ |
| ऋभुः | २ । २ । ९ |
| एमुषः | १ । २ । ११ |
| कुरुक्षेत्रम् | १ । १ । २ |
| दध्यङ् ( आथर्वणः ) | १ । १ । १८, २० |
| ब्रह्मणस्पतिः | १ । २ । १५ |
| मखः ( घर्मः ) | १ । १ । १३ । १ । २ । ६ |
| मधु ( ब्राह्मणम् ) | १ । ४ । १४ |
| मनुः | १ । ३ । २५ |
| महावीरः | १ । १ । ११ । १ । २<br>१ । ३ । १३ । १ । ४ । १ |
| मार्जालियः ( धिष्ण्यः ) | २ । २ । ४३ |
| वाजः | २ । २ । ९ |
| विभुः | २ । २ । ९ |
| शूद्रः | १ । १ । ३१ |
| श्रौषट् | २ । २ । १५<br>३ । १ । ३० |


इति चतुर्दशकाण्डान्तर्गतं प्रथमं प्रवर्ग्यकाण्डं समाप्तम् ।



### अथ

## * माध्यन्दिनशतपथब्राह्मणे बहुवारमागतानां विशिष्टनाम्नामकाराद्यनुक्रमेणेयं

# स्वतन्त्रा सूची ।

अग्निः
अग्निहोत्रम्
अग्निष्टोमः
अदितिः
अध्वर्युः
अनुष्टुप्
अश्वमेधः
अश्विनौ
असुराः
आदित्यः
आदित्याः
आहवनीयः
इन्द्रः
उख्यः ( अग्निः )
उद्गाता ( ऋत्विक् )
उपसद् ( इष्टिः )
ऋचः
ऋषिः
क्षत्रः
क्षत्रियः
गन्धर्वः
गायत्री ( छन्दः )
गार्हपत्यः ( अग्निः )
जगती ( छन्दः )
त्वष्टा
त्रिष्टुप् ( छन्दः )
दक्षिणा दिक्
नक्षत्रम्
निर्ऋतिः ( राक्षसः )
पत्नी
वसवः
वाक्
वाजपेयः ( सोमसंस्था )
वाजश्रवाः ( ऋषिः )
वायुः
विराट् ( छन्दः )
विश्वकर्मा
विश्वेदेवाः
विष्णुः
वेदः
वैश्यः
वैश्वानर. ( अग्निः )
वृत्रः
शतरुद्रियम्
शाण्डिल्यः
पितरः
पूषा
प्रजापतिः
प्रवर्ग्यः ( सौमिको भागः )
ब्रह्म ( परं ब्रह्म )
ब्रह्मा ( प्रजापतिः )
ब्रह्मचारी
ब्राह्मणः
बृहस्पतिः
बृहती ( छन्दः )
मनः ( वाक् )

* एतत्सूचीगताः शब्दा माध्यन्दिनशतपथब्राह्मणे प्रथमादिचतुर्दशकाण्डान्तर्गतप्रथमप्रवर्ग्यकाण्डान्तेषु काण्डेषु बहुवारमागता इति कृत्वा तेषामग्रेऽध्यायब्राह्मणकण्डिकाङ्का न निर्दिष्टाः—काण्डनिर्दशनमपि न कृतमिति बोध्यम् ।

## स्वतन्त्रसूची ।

मरुतः
महदुक्थम्
महाव्रतम्
मित्रः
मित्रावरुणौ
मृत्युः
मैत्रावरुणः ( प्रशास्ता ऋत्विक् )
यजमानः
यजमानपत्नी
यजुः
यमः
यज्ञः
याज्ञवल्क्यः
यूपः
राजन्यः
राजसूयः

रुद्रः
रौद्राः
वरुणः
श्वेतकेतुः ( आरुणेयः ) ऋषिः
सरस्वती
सविता
साकमेधाः
साम
सूर्यः
सोमक्रयणी ( गौः )
सोमः
सौत्रामणिः
स्तोमः
स्विष्टकृत्
होता

* इति बहुवारमागतानां शब्दानां निदर्शिका विशिष्टा स्वतन्त्रा सूची समाप्ता ।

---

* अस्मिन् शतपथब्राह्मणसंस्करणे यत्र यत्र श्रीहरिस्वामिनां भाष्यं संयोजितमास्ते तत्र तत्र भाष्ये यावानत्यन्तोऽशुद्धोंऽशस्ता-वान् (       ) इत्याकारककंसचिह्नान्तराले स्थापितोऽस्तीति विज्ञेयं विचक्षणवरेण्यैरिति ।



श्रीः

ॐ

श्रीमद्वाजसनेयिमाध्यन्दिन-

# शतपथब्राह्मणम् ।

सायणभाष्यसमेतम् ।

तत्र

## दशमं काण्डम् १० ।

तत्र

( मण्डलब्राह्मणे पण्डितमण्डनभाष्येण च संवलितम् ।
अन्तिमे ब्राह्मणद्वये श्रीशंकराचार्यभाष्यमात्रसहितम् । )

गंगाविष्णु श्रीकृष्णदास,

मालिक-"लक्ष्मीवेङ्कटेश्वर" स्टीम्-प्रेस,

कल्याण बंबई.

संवत् १९९६, शके १८६१.

1939.

# अथाग्निरहस्यं नाम दशमं काण्डं प्रारभ्यते ।



## प्रथमोऽध्यायः प्रारभ्यते ।

### तत्र प्रथमं ब्राह्मणम् ।

### प्रथमप्रपाठके च प्रथमं ब्राह्मणम् ।

**अग्निरेषु पुरस्ताच्चीयते । संवत्सरु ऽउपरिष्टान्महदुक्थꣳ शस्यते प्रजापतेर्व्विस्रस्तस्याग्रꣳ रसोऽगच्छत् ॥ १ ॥**

---

अग्निरेष पुरस्ताच्चीयते संवत्सरः । उपरिष्टान्महदुक्थं शस्यते । प्रजापतेर्विस्रस्तस्याग्रं रसोऽगच्छत् ॥ १ ॥

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

षष्ठादिकाण्डचतुष्टये उखासम्भरणादिसञ्चितिकर्मान्तमग्निचयनं साङ्गं निरूपितम् । तत्र कर्मणां भावनापुरःसरमनुष्ठाने फलविशेषो भविष्यतीति प्रतिपादयितुं दशमकाण्डमारभ्यते । षष्ठादिकाण्डचतुष्टयेन प्रतिपादितकर्मणो भावनोपयोगितयाऽनुष्ठानाङ्गयुक्तकर्मप्रतिपादकतया च सर्वशेषत्वादस्य काण्डस्याग्निरहस्यमिति संज्ञा; रहसि भवं रहस्यम्, अग्निविषयं रहस्यज्ञानमित्यर्थः । तत्र अग्निशब्देनाहवनीयाधिकरणं सप्तपुरुषाद्येकशतपुरुषपरिमितं चितं क्षेत्रमभिधीयते । "इष्टकाभिरग्निं चिनोति"—इति श्रुतेः । तथा "अग्निमारोहति, अग्निं प्रोक्षति" (श.प.९।२।१।२) इति च आरोहणप्रोक्षणे स्थूलस्यैवोच्येते । तस्य चित्याग्नेरुपरि निधीयमान आहवनीयोऽग्निस्तत्कर्म चाग्निशब्देनोच्यते । तद्विषयं पूर्वमनुक्तमग्निमानादिकं तद्रहस्यं च ध्यानभागोऽस्मिन् काण्डे वक्ष्यत इति "अग्निरहस्यम्" इति—नामधेयं युक्तम् । "तत्राग्निं चिनुते" (श. प. १०।१।४।१३–१४) इत्यनारम्य विहितस्य "अन्तरोपसदौ चिनोति" (श. प. १०।२।५।११) "प्रायणीयेन प्रचर्य सीरं युनक्ति" (श. प. ७।२।२।२) इति "चितो गार्हपत्यो भवत्यचित आहवनीयोऽथ राजानं क्रीणाति" (श. प. ७।३।१।१) इत्येवमादिगुणयोगादग्नेः सोमयागाङ्गत्वेऽपि "तस्मादेतानि सर्वाणि सहोपेयादग्निं महाव्रतं महदुक्थम्"—(श. प. १०।१।२।२) इति समाम्नानात् महाव्रतस्य क्रतुविशेषे नियमदर्शनादन्यत्र प्रथमज्योतिष्टोमाग्निष्टोमसंस्थाव्यतिरिक्तेष्विच्छयाऽनुष्ठानम्—तथा च कात्यायनः—"अग्निः सोमाङ्गं तद्गुणव्यतिषङ्गात्" "इच्छतः स महाव्रते नियमः" "न प्रथमाहारे" "उत्तरवेद्यग्निनिधानात्"—(का. श्रौ. सू. १६,१–४) इति । महाव्रतं नाम संवत्सरसाध्यस्य गवामयनस्योपान्त्यमहः, तत्राग्निचयनमहाव्रतसामबृहदुक्थानां नियमेन सह प्रयोज्यत्वात्तानि त्रीण्येवं सह भावनीयानीति वक्तुमग्निबृहदुक्थे प्रथममनुवदति–अग्निरेष पुरस्तादिति । आद्यन्तवर्त्तिचयनार्थयोर्ग्रहणेन तन्मध्यपतितं महाव्रतसामापि सङ्गृहीतं भवति । 'एषोऽग्निः' संवत्सरात्मकः 'पुरस्तात्' पूर्वम् 'चीयते' इष्टकाभिः । अग्नेः संवत्सरात्मकत्वं षष्ठे काण्डे प्रतिपादितम् (श. प. ६।२।१।३६) । 'उपरिष्टात्' मरुत्वतीयशस्त्रादनन्तरं महाव्रतसामोद्गात्रा गीयते । तस्मादनन्तरं 'महदुक्थं'

(त्स) स यः स प्रजापतिर्व्यस्रꣳसत । संवत्सरः सोऽथ यान्यस्य तानि पर्वाणि व्यस्रꣳसन्ताहोरात्राणि तानि ॥ २ ॥

स यः स संवत्सरः प्रजापतिर्व्यस्रꣳसत । (ता) अयमेव स योऽयमग्निश्चीयतेऽथ यान्यस्य तान्यहोरात्राणि पर्वाणि व्यस्रꣳसन्तेष्टका ऽएव तास्तद्यदेता ऽउपदधाति यान्येवास्य तान्यहोरात्राणि पर्वाणि व्यस्रꣳसन्त तान्यस्मिन्नेतत्प्रतिदधाति तदेतदत्रैव यजुश्चितमत्राप्तम् ॥ ३ ॥

---

स यः स प्रजापतिर्व्यस्रंसत—संवत्सरः सः । अथ यान्यस्य तानि पर्वाणि व्यस्रंसन्त—अहोरात्राणि तानि ॥ २ ॥

स यः स संवत्सरः प्रजापतिर्व्यस्रंसत—अयमेव सः—योऽयमग्निश्चीयते । अथ यान्यस्य तान्यहोरात्राणि पर्वाणि व्यस्रंसन्त—इष्टका एव ताः । तद्यदेता उपदधाति—यान्येवास्य तान्यहोरात्राणि पर्वाणि व्यस्रंसन्त, तान्यस्मिन्नेतत्प्रतिदधाति । तदेतदत्रैव यजुश्चितम् । अत्राप्तम् ॥ ३ ॥

---

नाम बृहतीसहस्रात्मकं शस्त्रं होत्रा 'शस्यते' । संवत्सरात्मकाग्नेः पूर्वं चयनं, बृहदुक्थस्यान्ते शंसनम् इति यदुक्तं तत् प्रशंसितुमाह—प्रजापतेरिति । अग्निचयनं नाम प्रजापतिसन्धानार्थमिति षष्ठे प्रपञ्चेन प्रतिपादितम् । 'विस्रस्तस्य' विश्लिष्टावयवस्य 'प्रजापतेः' 'रसः' शरीरगतः 'अग्रम्' ऊर्ध्वलोकम् 'अगच्छत्' तद्रसो महदुक्थमभवदिति वक्ष्यति ॥ १ ॥

प्रजापतेः संवत्सररूपतामाह—स यः स प्रजापतिरिति । यस्य रस ऊर्ध्वं गतः । एकस्तच्छब्दः प्रसिद्धवाची । अपरस्तच्छब्दः प्रतिनिर्देशः । 'स यः' 'प्रजापतिः' विस्रस्तः 'स' एव 'संवत्सरः' । तदेवोपपादयति—अथ यानीति । विस्रंसनसमये 'यानि' प्रजापतेः 'पर्वाणि' सन्धयः विस्रस्तानि 'तानि' 'अहोरात्राणि' यथा शरीरस्यावयविनः पर्वाण्यवयवाः एवं संवत्सरस्यावयविनः अहोरात्रा अवयवा इति प्रजापतिविस्रंसनं संवत्सरविस्रंसनं, पर्वविस्रंसनम् अहोरात्रविस्रंसनमित्यर्थः ॥ २ ॥

चीयमानाग्नेः संवत्सरप्रजापतिरूपतामाह—स यः स संवत्सर इति । 'अयमेव' इत्यस्य विवरणम्—योऽयमग्निश्चीयत इति । 'यः' इदानीमिष्टकाभिः 'चीयते' स एव प्रजापतिरित्यर्थः । संवत्सररूपस्य प्रजापतेः अवयवभूताहोरात्ररूपाणि विस्रस्तानि 'पर्वाणि' 'एव' 'इष्टकाः' अभूवन् । तत्तस्माद् 'एताः' इष्टका उपदधातीति यत् एतद् एतेनोपधानेन प्रजापतेर्विस्रस्तानवयवान्पुनः प्रतिसंहितवान् भवति । इष्टकाश्च सप्तत्युत्तरशताधिकैकादशसहस्रसंमिता उपधेया इति । तथा च कात्यायनेनोक्तम्—"अथातः सर्वासां पक्वेष्टकानां समासेन सङ्ख्याप्रमाणान्यनु व्याख्यास्यामः । सहस्राण्येकादश सप्ततिं च शतमिति" (का. श्रौ. सू. परिशिष्टे पूरणसूत्रे ९ । १–२ ) इति । अत्र यावत्य इष्टका यजुर्मन्त्रैरुपहिताः—तावत्य एव प्राजापत्यवयवात्मना प्रतिसंहिता इत्याह—तदेतदत्रैवेति । 'अत्रैव' अग्नौ एतत् 'यजुश्चितम्' यजुर्मन्त्रैरिष्टकाभिश्चयनं

( मु ) अथ योऽस्य सोऽग्रᳪं रसोऽगच्छत् । ( न्म ) महत्तदुक्थं तमस्य तᳪं रसमृक्सामाभ्यामनुयन्ति तद्यत्तत्र यजुः पुरस्तादेत्यभिनेतैव तदेति यथाऽदो मेऽमुत्रैकं तदाहरिष्यामीत्येवं तद्यजुः पुरस्तादेति तᳪं संव्वत्सरऽआप्नुवन्ति ॥ ४ ॥

तमध्वर्युर्ग्रहेण गृह्णाति । यद्गृह्णाति तस्माद्ग्रहस्तस्मिन्नुद्गाता महाव्रतेन रसं दधाति सर्व्वाणि हैतानि सामानि यन्महाव्रतं तदस्मिन्त्सर्वैः सामभी रसं दधाति तस्मिन्होता महतोक्थेन रसं दधाति सर्व्वा हैता ऽऋचो यन्महदुक्थं तदस्मिन्त्सर्वाभिर्ऋग्भी रसं दधाति ॥ ५ ॥

---

अथ योऽस्य सोऽग्रं रसोऽगच्छत्–महत्तदुक्थम् । तमस्य तं रसमृक्सामाभ्यामनुयन्ति । तद्यत्तत्र यजुः पुरस्तादेति–अभिनेतैव तदेति । यथाऽदो मेऽमुत्रैकं तदाहरिष्यामीति । एवं तद्यजुः पुरस्तादेति । तं संवत्सरऽआप्नुवन्ति ॥ ४ ॥

तमध्वर्युर्ग्रहेण गृह्णाति । यद्गृह्णाति–तस्माद्ग्रहः । तस्मिन्नुद्गाता महाव्रतेन रसं दधाति । सर्वाणि हैतानि सामानि यन्महाव्रतम् । तदस्मिन्त्सर्वैः सामभी रसं दधाति । तस्मिन् होता महतोक्थेन रसं दधाति । सर्वा हैता ऋचो यन्महदुक्थम् । तदस्मिन्त्सर्वाभिर्ऋग्भी रसं दधाति ॥ ५ ॥

---

कृतम् तदत्र प्रजापतौ आप्तं प्रतिसंहितम् । अवयवात्मना युक्तं संवत्सरसम्बन्धिनामहोरात्राणां पर्वरूपाणां यजुष्मतीनामिष्टकानां च सङ्ख्यासाम्यात्ताभिरेव कृत्स्नं प्रजापतिशरीरमापद्यत इत्यभिप्रायः ॥ ३ ॥

एवं चित्यमग्निं प्रजापत्यात्मना स्तुत्वा स्तोत्रशस्त्रे स्तोतुमाह–अथ योऽस्य सोऽग्रमिति । 'यो रसः' पूर्वं विस्रस्तस्य प्रजापतेः सम्बन्धी ऊर्ध्वं गतः स एव 'महदुक्थम्' अभूत् । अत्रोक्थशब्दः स्तुतशस्त्रसाधारणः । उत्तरत्र द्वयोरपि स्तूयमानत्वात् । "ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकुर्यात्" इति ग्रहग्रहणं वा चमसोन्नयनं वा स्तोत्रप्रारम्भकालः । स्तुतमनुशंसतीति स्तोत्रादनन्तरं शस्त्रं शंसनीयम् । अत इदानीं तत्पूर्वभाविग्रहग्रहणं प्रशंसितुं तत्र ग्रहे सिच्यमानं चमसं स्तौति–तमस्य तं रसमिति । 'अस्य' प्रजापतेः 'तम्' ऊर्ध्वं गतं 'तं' प्रसिद्धं 'रसम्' 'ऋक्सामाभ्याम्' 'अनुयन्ति' अनुगमयन्ति । यथाऽदो मेऽमुत्रेति । लोके यथा 'अमुत्र' विप्रकृष्टे प्रदेशे 'अदः' दृष्टं 'मे' मदीयम् 'एकम्' वस्तु 'आहरिष्यामि' अहमिति पूर्वं गच्छति–'एवं' यजुर्मन्त्रः ऋक्सामाभ्यां प्रथमं रसानयनाय गच्छति । 'तं रसं संवत्सरे' संवत्सरसाध्यगवामयनोपान्त्यदिवसनिष्पाद्ये महाव्रते 'आप्नुवन्ति' ॥ ४ ॥

रसस्य ग्रहणमाह–तमध्वर्युरिति । गृह्यते अनेन रस इति ग्रहः । करणसाधनः । व्युत्पत्तिं दर्शयति–यद्गृह्णातीति । स महाव्रतीयो ग्रह इत्युच्यते । तथा चोत्तरत्र चतुर्थाध्याये समाम्नास्यते । "एष महाव्रतीयो ग्रहः । तमध्वर्युर्ग्रहेण गृह्णाति" ( श. प. १० । ४ । १ । १२–१३ ) " इति । तथा च महाव्रतक्रतुं प्रस्तुत्य सूत्रकृतोक्तम्–"महाव्रतमग्निष्टोमः प्राजापत्य उपालम्भ्यो ग्रहं गृह्णाति वि न इन्द्र, वाचस्पतिं विश्व-

ते यदा स्तुवते यदाऽनुश॒ꣳसति । ( त्य ) अथास्मिन्नेतं व्वषट्कृते जुहोति तदेनमेष रसोऽप्येति न वै महाव्व्रतमिदꣳ स्तुतꣳ शेतऽइति पश्यन्ति नो महदिदमुक्थमित्यग्निमेव पश्यन्त्यात्मा ह्यग्निस्तदेनमेतेऽउभे रसो भूत्वाऽपीत ऽऋक्च साम च तदुभेऽऋक्सामे यजुरपीतः ॥ ६॥

स ऽएष मिथुनोऽग्निः । प्रथमा च चितिर्द्वितीया च तृतीया च चतुर्थी चाथ पञ्चम्यै चितेर्य्यश्चितेऽग्निर्निधीयते तन्मिथुनं मिथुन ऽउऽएवायमात्मा ॥७॥

---

ते यदा स्तुवते, यदाऽनुशंसति—अथास्मिन्नेतं वषट्कृते जुहोति । तदेनमेष रसोऽप्येति । न वै महाव्रतमिदं स्तुतं शेत इति पश्यन्ति, नो महदिदमुक्थमिति । अग्निमेव पश्यन्ति । आत्मा ह्यग्निः । तदेनमेतेऽउभे रसो भूत्वाऽपीतः । ऋक् च साम च । तदुभे ऋक्सामे यजुरपीतः ॥ ६ ॥

स एष मिथुनोऽग्निः । प्रथमा च चितिर्द्वितीया च । तृतीया च चतुर्थी च । अथ पञ्चम्यै चितेर्येश्चितेऽग्निर्निधीयते—तन्मिथुनम् । मिथुन उ एवायमात्मा ॥ ७ ॥

---

कर्मन्निति वा "( का. श्रौ. सू. १३ । २९—३१ ) इति । ग्रहग्रहणमेव स्तोत्रप्रारम्भसमय इति यदुक्तं तदिदानीमाह—तस्मिन्नुद्गातेति । तस्मिन्निति निमित्तसप्तमी । यजुषा ग्रहे गृहीते 'उद्गाता' ऋत्विक् 'महाव्रतेन' एतन्नाम्ना साम्ना 'रसं दधाति' । पूर्वमृक्सामाभ्यामनुयन्तीत्युक्तम् । अत्र महाव्रतेनेत्युच्यते । एतत्परस्परविरुद्धमिति तत्राह—सर्वाणि हैतानि सामानि यन्महाव्रतम् इति । यत् 'तत्सर्वाणि' 'सामानि' तत्र राजनगायत्र-बृहद्रथन्तरभद्राख्यानि पञ्च 'सामानि' विद्यन्ते । स्तुतमनुशंसतीति स्तोत्रादनन्तरं शस्त्रमिति यदुक्तं तदपि दर्शयति—तस्मिन्होता महतोक्थेनेति । बृहदुक्थस्य गायत्रौष्णिहबार्हततृचाशीतित्रयात्मकत्वात् सर्वा ऋचो महदुक्थमित्युपपन्नम् ॥ ५ ॥

पूर्वं प्रजापते रससंयुक्तता स्यात्, अन्यथा रसाभावेन शरीरमदृढं भवेदितीमामाशङ्कां रसस्थापनेन व्युदस्यति—ते यदा स्तुवत इति । 'यदा' यस्मिन्काले 'स्तुवते' उद्गातृ—प्रस्तोतृ—प्रतिहर्तारः, ऋत्विक्त्रयापेक्षया स्तुवत इति बहुवचनम् । अत एव च्छन्दोगा आमनन्ति,—"सर्वे सहर्त्विजो महाव्रतेन स्तुवीरन्" इति । 'यदा चानुशंसति' । स्तोत्रमनुलक्ष्य शस्त्रं पठेत् होता । अत्र होतुरेकत्वात् शंसतीत्येकवचनम् । अथ शस्त्रादनन्तरं वषट्कृते शस्त्रयाज्यान्ते वषट्कारे कृते एनं गृहीतं स्तोत्रशस्त्राभ्यां संस्कृतं रसमस्मिन्नग्नौ प्रजापतिरूपे जुहोति । चित्याग्निरेव प्रजापत्यात्मेतीदानीमुक्तम्—"अयमेव स योऽयमग्निश्चीयते"—( श. प. १०।१।१।३। ) इति । 'तत्' तेन होमेन 'एनम्' प्रजापतिम् 'एषः' हुतो 'रसोऽप्येति' अपिगच्छति संयुक्तो भवति इत्यर्थः । अग्नौ रसस्याप्ययं प्रशंसति—न वै महाव्रतमिदमिति । इदानीमस्मिन् चयनप्रदेशे 'महाव्रतं' साम 'स्तुतम्' 'शेते' तिष्ठति 'इति न पश्यन्ति' । महदुक्थं शस्तमिति न पश्यन्ति, किन्तु अग्निं चितमेव पश्यन्ति । अग्निर्हि 'आत्मा' स्थूलं शरीरं 'तत्' तस्मात् 'एनम्' चित्याग्निम् 'एते उभे' महाव्रतबृहदुक्थे 'रसो भूत्वा अपीतः' अपिगच्छतः एकीभवतः । 'उभे ऋक्सामे' ग्रहग्रहणाय 'यजुरपीतः' ऋक्सामाभ्यां पुरस्तात् यजुर्मन्त्रेण ग्रहग्रहणात् ॥ ६ ॥

चित्याग्निं मिथुनरूपेण प्रशंसति—स एष मिथुनोऽग्निरिति । अग्नौ पञ्च चितयः स्वयमातृण्णाद्याः उपधेयाः ।

( त्माऽङ्गु ) अङ्गुष्ठाऽइति पुमाᳬसः । ( सोऽङ्गु ) अङ्गुलय ऽइति स्त्रियः कर्णाविति पुमाᳬसौ भ्रुवाविति स्त्रियाऽओष्ठाविति पुमाᳬसौ नासिकेऽइति स्त्रियौ दन्ता इति पुमाᳬसो जिह्वेति स्त्री सर्वऽएव मिथुनः सोऽनेन मिथुनेनात्मनैतं मिथुनमग्निमप्येति ॥ ८ ॥

( त्ये ) एषाऽत्रापीतिः । ( र ) अथ हैवं मिथुन ऽइत्थᳬ ह त्वेवापि मिथुनो व्वागेवेयं योऽयमग्निश्चितो व्वाचा हि चीयतेऽथ यश्चितेऽग्निर्निधीयते स प्राणः प्राणो वै व्वाचो व्वृषा प्राणो मिथुनं व्वाग्वेवायमात्माऽथ यऽआत्मन्प्राणस्तन्मिथुनᳬ सोऽनेन मिथुनेनात्मनैतं मिथुनमग्निमप्येति ॥ ९ ॥

---

अंगुष्ठा–इति पुमांसः, अंगुलयः–इति स्त्रियः । कर्णाविति पुमांसौ, भ्रुवाविति स्त्रियौ । ओष्ठाविति पुमांसौ, नासिके इति स्त्रियौ । दन्ताः–इति पुमांसः, जिह्वेति स्त्री । सर्व एव मिथुनः । सोऽनेन मिथुनेनात्मनैतं मिथुनमग्निमप्येति ॥ ८ ॥

एषाऽत्रापीतिः । अथ हैवं मिथुनः । इत्थं ह त्वेवापि मिथुनः । वागेवेयं योऽयमग्निश्चितः । वाचा हि चीयते । अथ यश्चितेऽग्निर्निधीयते स प्राणः । प्राणो वै वाचो वृषा । प्राणो मिथुनम् । वाग्वेवायमात्मा । अथ य आत्मन् प्राणः–तन्मिथुनम् । सोऽनेन मिथुनेनात्मनैतं मिथुनमग्निमप्येति ॥ ९ ॥

---

तत्र प्रथमाद्वितीये सम्भूयैकं मिथुनं भवति । तृतीयाचतुर्थ्यौ चेत्येकं मिथुनम् । पञ्चम्याः चितेर्मिथुनत्वं सम्पादयति–अथ पञ्चम्यै चितेरिति । पञ्चम्यै इति 'षष्ठ्यर्थे चतुर्थी "–( पा. सू. २ । ३ । ६२ वा. ) । 'चिते' चित्याग्नौ योऽग्निराहवनीयो 'निधीयते' अतः पञ्चमी चितिः तस्या उपरि निधीयमान आहवनीयोऽग्निरिति द्वयमेकं मिथुनम् । आत्मा ह्यग्निरित्यग्नेर्यदात्मत्वमुक्तम्, तस्मिन्नात्मशब्दवाच्ये शरीरे मिथुनत्वं संपादयितुमाह–मिथुन उ एवायमात्मेति । अथ 'अयमात्मा, स्थूलं शरीरं 'मिथुन उ एव' मिथुनरूप एव भवति ॥ ७ ॥

मिथुनत्वं नाम स्त्रीपुंसयुगलं, तच्छरीरे प्रदर्शयति–अंगुष्ठा इति पुमांस इत्यादिना । 'अंगुष्ठा इति' पुँल्लिङ्गशब्दवाच्यत्वात् पुमांस इत्युक्तम् । 'अंगुलयः' इति स्त्रीलिङ्गशब्दाभिधेयत्वादंगुलीनां स्त्रीत्वम् । तन्मिथुनम् । शरीरे पुंस्त्रीलिङ्गशब्दवाच्यानामन्येषामवयवानां सद्भावेऽपि सान्निध्ययोगादंगुष्ठांगुलीनां मिथुनत्वम् । एवमुत्तरत्र सान्निध्यान्मिथुनत्वसम्पादनम् । कर्णभ्रुवोः पुंस्त्रीलिङ्गवाच्ययोरवयवयोः सान्निध्यात् मिथुनत्वम् । एकः कर्णः एका भ्रूरिति एकं मिथुनम् । एवम् ओष्ठनासिकयोः । दन्ताः पुमांसः । जिह्वा स्त्री । एवमात्मा स्थूलशरीरं मिथुनरूपः संपन्नः । अस्तु किं प्रस्तुत इति तदाह–सोऽनेनेति । 'सः' वषट्कारान्ते हुतो रसः 'अनेन' 'मिथुनेनात्मना' शरीरेण 'एतं' चितिद्वन्द्वरूपं 'मिथुनम्' 'अग्निम्' 'अप्येति' अपिगच्छति ॥ ८ ॥

एषाऽत्रापीतिरिति । उक्तमिथुनरूपेणाप्ययनप्रकारः प्रदर्शित इत्यर्थः । पुनश्चित्याग्निं मिथुनरूपेण स्तोतुं प्रकारान्तरेण मिथुनत्वं प्रतिजानीते–अथ हैवमिति । 'एवम्' इति वक्ष्यमाणप्रकारेणापि मिथुनोऽग्निः ।

( त्यु ) एषोऽत्रापीतिः । ( नुं ) नु ह वाऽअस्यापुत्रतायै काचन शङ्का भवति य ऽएवमेतौ मिथुनावात्मानं चाग्निं च वेदान्नꣳ ह त्वेवायमात्मा दक्षिणाऽन्नं वनुते यो न ऽआत्मेति ह्यप्यृषिणाऽभ्युक्तम् ॥ १० ॥

( न्तु ) तदिदमन्नं जग्धं द्वेधा भवति । यदस्यामृतमूर्ध्वं तन्नाभेरूर्ध्वैः प्राणैरुच्चरति तद्वायुमप्येत्यथ यन्मर्त्यं पराक्तन्नाभिमप्येति तद्द्वयं भूत्वे-

---

एषोऽत्रापीतिः । न ह वा अस्यापुत्रतायै का चन शङ्का भवति । य एवमेतौ मिथुनौ–आत्मानं चाग्निं च वेद । अन्नं ह त्वेवायमात्मा । " दक्षिणाऽन्नं वनुते यो न आत्मा "–इति ह्यप्यृषिणाऽभ्युक्तम् ॥ १० ॥

तदिदमन्नं जग्धं द्वेधा भवति । यदस्यामृतम्–ऊर्ध्वं तन्नाभेरूर्ध्वैः प्राणैरुच्चरति–तद्वायुमप्येति । अथ यन्मर्त्यं पराक् तन्नाभिमप्येति । तद्द्वयं भूत्वेमामप्येति–मूत्रं च पुरीषं च । तद्व यदिदमप्येति–

---

तुशब्दः पक्षान्तरद्योतनार्थः । इत्थमेव वा मिथुनः । पूर्वं चित्याग्नेः चितिद्वन्द्वेन मिथुनत्वम् । आत्मरूपेणापि मिथुनत्वमिति मिथुनद्वयमुक्तम् । एवमुत्तरत्र मिथुनद्वयं सम्पादयितुं "अथ हैवं मिथुन इत्थं ह त्वेवापि मिथुनः" इति मिथुनद्वयं प्रतिज्ञातमित्यर्थः । तद्द्वयं दर्शयति–वागेवेयमित्यादिना । ' योऽयम् ' इष्टकाभिः ' चितः ' सा ' वागेव ' ' हि ' यस्मात् ' वाचा ' मन्त्रेण ' चीयते ' साधनसाध्ययोरभेदादेवमुक्तम् । ' चिते ' अग्नौ यः ' अग्निः ' आहवनीयो ' निधीयते ' ' स ' प्राणरूपः । शरीरं यथा प्राणेन व्याप्रियमाणं सत् फलसम्पादकम् एवं चित्याग्निरपि आहवनीयेनाग्निना फलसम्पादक इति प्राण इत्युक्तम् । अतः ' वाचः ' स्त्रियाः ' प्राणो ' ' वृषा ' पुमान् । तस्मात् प्राणो मिथुनात्मक इति एकं मिथुनम् । अन्यदाह–' वागेवात्मा ' शरीरं तात्स्थ्यात्ताच्छब्द्यम् । आत्मन् । सप्तम्या लुक् । शरीरे यः प्राणः तदन्यन्मिथुनम् । तस्माद्वषट्कृते हुतो रसः अनेन मिथुनेनात्मना शरीरप्राणरूपेण एनं मिथुनं वाक्प्राणरूपं ' अग्निमप्येति ' ॥ ९ ॥

अथ मिथुनपरम्परावेदितुः फलमाह–न ह वा अस्येति । ' यः ' पुरुष एवमुक्तप्रकारेण मिथुनरूपमात्मानं मिथुनरूपमग्निं च वेत्ति ' अस्यापुत्रतायै ' पुत्रराहित्याय काचन शङ्का नास्ति । सन्तानप्रतिबन्धकं कारणं नास्ति । प्रत्युत पुत्रवत्त्वसम्पादकमस्तीत्यर्थः । प्रकारान्तरेणाप्यमुं प्रकारं वक्तुमात्मनोऽन्नरूपत्वमाह–अन्नं ह त्वेवायमात्मेति । ' अयम् ' 'आत्मा' अन्नमेव तत्साध्यत्वात् । उक्तार्थे मन्त्रं संवादयति–दक्षिणाऽन्नं वनुत इति । स मन्त्रो दाशतय्यामेवं दक्षिणादानस्तावकसूक्ते समाम्नायते–" दक्षिणाऽश्वं दक्षिणा गां ददाति दक्षिणा चन्द्रमुत यद्धिरण्यम् । दक्षिणाऽन्नं वनुते यो न आत्मा दक्षिणां वर्म कृणुते विजानन्"(ऋ. सं.) इति । अस्यार्थः–न इत्यस्मच्छब्देन मन्त्रद्रष्टा ऋषिरुच्यते । नोऽस्मभ्यमश्वादिकं दक्षिणारूपेण ददाति । य आत्माऽस्ति तदन्नं दक्षिणाचतुष्टयमन्नात्मकमात्मानं च दक्षिणात्वेन ददाति । "वनु याचने"–(धा. पा. तु. उ. ९) इत्ययं धातुश्छन्दसि दाने वर्त्तते । " ब्रह्म वन्वानो अजरं सुवीरम् "–इत्यादिमन्त्रान्तरेषु दानार्थस्य दृष्टत्वात् । दक्षिणां प्रयच्छन् पुरुषः विजानन् दक्षिणां वर्म कवचं कृणुते करोतीति । अस्य मन्त्रस्य तृतीयपादे आत्मनोऽन्नरूपत्वमुक्तमिति स तृतीयपाद एव संवादत्वेनोक्तः ॥ १० ॥

यदर्थमन्नरूपत्वमुक्तं तद्दर्शयति–तदिदमन्नं जग्धमिति । ' तत् ' ' अन्नम् ' ' जग्धम् ' भक्षितं सत्

मामुप्येतिं मूत्रं च पुरीषं च तद्युदिमामप्येति योऽयमग्निश्चितस्तं तदुप्येत्युथ युद्वायुमप्येति युश्चितेऽग्निर्निधीयुते तं तदुप्येत्येषोऽएवात्रापीतिः ॥ ११

इति प्रथमप्रपाठके प्रथमं ब्राह्मणम् ॥ १०–१–१ ॥ ( १–१ ) ॥

प्रजापतिरिमाँल्लोकानैप्सत् । (त्सु) सु ऽएतं व्वयोविधमात्मानमपश्यदग्निं तुं व्यधत्त तुनेमुं लोकुमाप्नोत्स द्वितीयं व्वयोविधमात्मानमपश्यन्महाव्व्रतं तुद्व्यधत्त तुनान्तुरिक्षमाप्नोत्स तृतीयं व्वयोविधमात्मानमपश्यन्महदुक्थं तुद्व्यधत्त तुन दिवमाप्नोत् ॥ १ ॥

---

योऽयमग्निश्चितस्तं तदप्येतिं । अथ यद्वायुमप्येतिं–यश्चितेऽग्निर्निधीयते–तं तदप्येति । एषोऽएवात्रापीतिः ॥ ११ ॥

प्रजापतिरिमाँल्लोकानैप्सत् । स एतं वयोविधमात्मानमपश्यत् । अग्निं तं व्यधत्त । तेनेमं लोकमाप्नोत् । स द्वितीयं वयोविधमात्मानमपश्यत् । महाव्रतं तद्व्यधत्त । तेनान्तरिक्षमाप्नोत् । स तृतीयं वयोविधमात्मानमपश्यत् । महदुक्थं तद्व्यधत्त । तेन दिवमाप्नोत् ॥ १ ॥

---

'द्वेधा' द्विप्रकारं मर्त्यामृतभेदेन 'भवति' । तत्र 'अस्य' जग्धस्यान्नस्य 'यद्' 'अमृतम्' सूक्ष्मरूपमस्ति 'तत् नाभेः' ऊर्ध्वप्रदेशे स्थित्वा 'ऊर्ध्वैः' नासिकापुटादुद्गच्छद्भिः 'प्राणैः' सह 'उच्चरति' उद्गच्छति । तदुद्गच्छदन्नं 'वायुम्' प्राणरूपम् 'अप्येति' संयौति । 'यत् मर्त्यं' स्वरूपं 'तत्' नाभेरधस्तात्तिष्ठति । मर्त्यस्य द्वैविध्यमाह–तद्द्वयमिति । 'तत्' मर्त्यं 'द्वयम्' मूत्रपुरीषभेदेन द्विप्रकारं भूत्वा 'इमां' भूमिम् अप्येति' । 'इमाम्' इत्यस्यार्थमाह–योऽयमग्निश्चित इति । भूमावग्निश्चीयते, अत आधाराधेययोरभेदोपचारेण भूमेरग्नित्वं सम्पन्नम् । पूर्वम् "अन्नस्यामृतभागो वायुमप्येति"–इत्युक्तं तत्प्रकृते योजयति–यद्वायुमप्येतीति । यश्चितेऽग्निरिति । 'चिते' अग्नौ 'योऽयम्' आहवनीयोऽग्निः 'निधीयते' 'तम्' अग्निं तदमृतमन्नरूपं कर्तृ 'अप्येति' संयुक्तं भवति । अनेनैतदुक्तं भवति, चितोऽग्निर्जग्धान्नस्थविष्ठभागात्मना भावनीयः । तस्योपरि निहितोऽग्निरन्नस्याणिष्ठभागात्मना ध्येय इति ॥ ११ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये
दशमकाण्डे प्रथमेऽध्याये प्रथमं ब्राह्मणम् ॥ ( १०–१–१ ) ॥

पूर्वं महाव्रतयज्ञे सह प्रयुक्तानि अग्निचयनमहाव्रतसाममहदुक्थशस्त्राणि त्रीण्यपि पक्ष्याकाराणि अधिदैवं, पृथिव्यन्तरिक्षद्युलोकात्मकानि अध्यात्मं मनःप्राणवाग्रूपाणि चेति द्वितीयब्राह्मणे प्रतिपाद्यते । ज्योतिष्टोमयज्ञ एवैतेषां त्रयाणां सम्पादनप्रकारश्चोच्यते–प्रजापतिरिमाँल्लोकानैप्सदिति । 'ऐप्सत्' आप्तुमैच्छत्, आप्नोतेः सनि ( पा. सू. ७ । ४ । ५४ ) अभ्यासलोपे ( पा. सू. ७ । ४ । ५८ ) "आप्ज्ञप्यृधामीत्"–( पा. सू. ७ । ४ । ५५ ) पश्चादाडागमे वृद्धौ रूपम् । 'सः' प्रजापतिः 'एतम्' 'आत्मानं' 'वयोविधम्' पक्ष्याकारम् 'अपश्यत्' 'तम्' पक्ष्याकारम् 'अग्निम्' चित्याग्निं 'व्यधत्त' । चित्याग्नेः पक्ष्याकारत्वं

(द) अयं वाव लोक ऽएषोऽग्निश्चितः। (तोऽन्तु) अन्तरिक्षं महाव्व्रतं द्यौर्महदुक्थं तस्मादेतानि सर्व्वाणि सहोपेयादग्निं महाव्व्रतं महदुक्थꣳ सह हीमे लोका ऽअसृज्यन्त तद्यदग्निः प्रथमश्चीयतेऽयꣳ ह्येषां लोकानां प्रथमोऽसृज्यतेत्यधिदेवतम् ॥ २ ॥

(मु) अथाध्यात्मम्। (म्मु) मनऽ एवाग्निः प्राणो महाव्व्रतं व्वाङ्महदुक्थं तस्मादेतानि सर्व्वाणि सहोपेयात्सह हि मनः प्राणो व्वाक्तद्यदग्निः प्रथमश्चीयते मनो हि प्रथमं प्राणानाम् ॥ ३ ॥

(मा) आत्मैवाग्निः। प्राणो महाव्व्रतं व्वाङ्महदुक्थं तस्मादेतानि सर्व्वाणि सहोपेयात्सह ह्यात्मा प्राणो व्वाक्तद्यदग्निः प्रथमश्चीयतऽआत्मा हि प्रथमः संभवतः संभवति ॥ ४ ॥

---

अयं वाव लोकः—एषोऽग्निश्चितः। अन्तरिक्षं महाव्रतम्। द्यौर्महदुक्थम्। तस्मादेतानि सर्वाणि सहोपेयात्। अग्निम्, महाव्रतम्, महदुक्थम्। सह हीमे लोका असृज्यन्त। तद्यदग्निः प्रथमश्चीयते—अयं ह्येषां लोकानां प्रथमोऽसृज्यत। इत्यधिदेवतम्॥ २ ॥

अथाध्यात्मम्। मन एवाग्निः। प्राणो महाव्रतम्। वाङ्महदुक्थम्। तस्मादेतानि सर्वाणि सहोपेयात्। सह हि मनः प्राणो वाक्। तद्यदग्निः प्रथमश्चीयते। मनो हि प्रथमं प्राणानाम्॥३॥

आत्मैवाग्निः। प्राणो महाव्रतम्। वाङ्महदुक्थम्। तस्मादेतानि सर्वाणि सहोपेयात्। सह ह्यात्मा प्राणो वाक्। तद्यदग्निः प्रथमश्चीयते। आत्मा हि प्रथमः सम्भवतः सम्भवति ॥ ४ ॥

---

श्रूयते—"श्येनचितं चिन्वीत, कङ्कचितं चिन्वीत"—(तै. सं. ५। ४। ११) इत्यादि। 'तेन' अग्निना 'एनम्' भूलोकम् 'आप्नोत्'। 'द्वितीयं' पक्ष्याकारम् 'आत्मानम्' महाव्रतसामत्वेनाकरोत्। 'तेन' साम्ना 'अन्तरिक्षमाप्नोत्'। 'तृतीयम्' पक्ष्याकारम् 'आत्मानम्' 'बृहदुक्थम्' बृहतीसहस्रात्मकं शस्त्रं 'व्यधत्त'। 'तेन' शस्त्रेण द्युलोकं प्राप्तवान् ॥ १ ॥

उक्तानां भूम्यादिलोकानामग्न्यादेश्चाभेदविवक्षया तदात्मकतामाह—अयं वाव लोक एषोऽग्निरिति। यस्मादिमे त्रयो लोकाः सहासृज्यन्त। 'तस्मादेतानि' त्रीणि अग्निमहाव्रतबृहदुक्थानि सहानुतिष्ठेत्। तत्र त्रिषु मध्ये 'प्रथमः' 'अग्निः' इष्टकाभिः 'चीयते'। एवं 'लोकानां' मध्ये भूलोक एव प्रथमः सृष्टः 'इत्यधिदेवतम्' त्रयाणामग्न्यादीनामर्थ उक्तः ॥ २ ॥

अध्यात्ममपि दर्शयति—अथाध्यात्ममिति। आत्मन्यधिकृत्य अध्यात्मम्। विभक्त्यर्थेऽव्ययीभावः (पा. सू. २। १। ६) "अनश्च"—(पा. सू. ५। ४। १०८) इति समासान्तष्टच् प्रत्ययः। अग्न्यादीनि त्रीणि मनःप्राणवागात्मकानि यथाऽग्निः 'प्रथमश्चीयते' एवं 'प्राणानां' 'मन' एव 'प्रथमम्' ॥ ३ ॥

अध्यात्ममेव प्रकारान्तरेण तानि त्रीणि स्तौति—आत्मैवाग्निरिति। अग्न्यादय आत्मप्राणवागात्मकाः।

शिर ऽएवाग्निः । प्राणो महाव्व्रतमात्मा महदुक्थं तस्मादेतानि सर्व्वाणि सहोपेयात्सह हि शिरः प्राणऽआत्मा तद्यदग्निः प्रथमश्चीयते शिरो हि प्रथमं जायमानस्य जायते तस्माद्यत्रैतानि सर्व्वाणि सह क्रियन्ते महदुक्थमातमां रुयायतऽआत्मा हि महदुक्थम् ॥ ५ ॥

( न्तु ) तदाहुः । (र्व्वे) यदेतानि सर्व्वाणि सह दुरुपापानि कैतेषामुपाप्तिरिति ज्योतिष्टोमऽएवाग्निष्टोमे ज्योतिष्टोमेनैवाग्निष्टोमेन यजेत ॥ ६ ॥

---

शिर एवाग्निः । प्राणो महाव्रतम् । आत्मा महदुक्थम् । तस्मादेतानि सर्वाणि सहोपेयात् । सह हि शिरः प्राण आत्मा । तद्यदग्निः प्रथमश्चीयते । शिरो हि प्रथमं जायमानस्य जायते । तस्माद्यत्रैतानि सर्वाणि सह क्रियन्ते । महदुक्थमातमां रुयायते । आत्मा हि महदुक्थम् ॥ ५ ॥

तदाहुः—यदेतानि सर्वाणि सह दुरुपापानि । कैतेषामुपाप्तिरिति । ज्योतिष्टोम एवाग्निष्टोमे । ज्योतिष्टोमेनैवाग्निष्टोमेन यजेत ॥ ६ ॥

---

आत्मा हि प्रथम इति । 'सम्भवतः' उत्पद्यमानस्य पुरुषस्य 'प्रथमः आत्मा' मध्यशरीरं 'सम्भवति' ॥ ४ ॥

अन्यथैतत्त्रयं स्तौति—शिर एवाग्निरिति । अग्निचयनमहाव्रतसामबृहदुक्थानि शिरःप्राणात्मरूपाण्यनुसन्धेयानि, यस्मादग्निः 'प्रथमः चीयते' तस्मात् 'जायमानस्य' पुरुषस्य शिर एव प्रथमं योनेः सकाशादुत्पद्यते । तस्माद्यत्र यज्ञे 'एतानि' 'सर्वाणि' त्रीणि 'सह' 'क्रियन्ते' तत्र 'महदुक्थम्' 'आख्यायतेतमाम्' सम्पूर्णमुच्यते । बृहतीसहस्रात्मकत्वात्सम्पूर्णोक्तिः । सम्पूर्णोक्तौ युक्त्यन्तरमाह—आत्मा हीति । 'हि' यस्मात् 'महदुक्थम्' 'आत्मा' तत्स्वरूपम् । आत्मनस्तु सर्वाङ्गेभ्योऽपि स्थूलत्वात् ॥ ५ ॥

महाव्रतयज्ञे तावदेतान्यग्निमहाव्रतसामबृहदुक्थान्यविनाभूतानि । तेषामधिदैवमध्यात्मं च पृथिव्यादिरूपता मनःप्राणादिरूपता चोक्ता । अधुना प्रथमसंस्थारूपज्योतिष्टोमाग्निष्टोमं महाव्रतयज्ञात्मना स्तोतुं तत्रैवाग्निचयनादित्रयस्योपाप्तिं ब्रह्मवादिप्रश्नोत्तराभ्यां दर्शयति—तदाहुर्यदेतानि सर्वाणीति । यस्मात् 'एतानि सर्वाणि' त्रीण्यग्निचयनमहाव्रतसामबृहदुक्थानि सह युगपत्, 'दुरुपापानि' आप्नोतेः खल् प्रत्ययः । उपाप्तुमशक्यानि सर्वेषां महाव्रतयज्ञानुष्ठाने प्रयोगबाहुल्येन ऋत्विक्सम्पादनादेर्दुष्करत्वेन चानधिकारात् । तथा चैतरेयकम्—"नादीक्षितो महाव्रतं शंसेन्नानग्नौ न परस्मात्"—इत्यादि । अतः 'एतेषां' त्रयाणां 'का' कीदृशी 'उपाप्तिः' आप्तिः सम्पादनप्रकारः । कुत्र प्रदेशे तेषामाप्तिरिति प्रश्नार्थः । आप्तिस्थानं दर्शयति—ज्योतिष्टोम एवाग्निष्टोम इति । अतस्तस्मिन्पक्षे त्रयाणां सम्पादनात् ज्योतिष्टोमाग्निष्टोमेन यागः कर्त्तव्यः । तत्राग्निष्टोम इति पदेनाग्निस्तवनोक्तेरग्निचयनमुक्तमिति मन्तव्यम् । अग्निष्टोमशब्दस्याग्निस्तवनार्थोक्तिरैतरेयकब्राह्मणे समाम्नाता—"स वा एषोऽग्निरेव यदग्निष्टोमस्तं यदस्तुवंस्तस्मादग्निस्तोमस्तमग्निस्तोमं सन्तमग्निष्टोम इत्याचक्षते परोक्षेण परोक्षप्रिया इव हि देवाः" ( ऐ. ब्रा. १४ । ५ । ४३ ) इति ॥ ६ ॥

तस्य वाऽएतस्य ज्योतिष्टोमस्याग्निष्टोमस्य त्रिवृद्बहिष्पवमानं तद्धतस्य शिरः पञ्चदशसप्तदशाऽउत्तरौ पवमानौ तौ पक्षौ पञ्चदशꣳ होतुराज्यꣳ सप्तदशं पृष्ठमेकविꣳशं यज्ञायज्ञियं तत्पुच्छम् ॥ ७ ॥

( न्तु ) तयोर्वाऽएतयोः । पञ्चदशसप्तदशयोर्द्वात्रिꣳशत्स्तोत्रियास्ततो याः पञ्चविꣳशतिः स पञ्चविꣳशऽआत्माऽथ याः सप्तातियन्ति ताः परिमादः पशवो हैताः पशवः परिमाद ऽएतावद्वै महाव्रतं तदेतदत्रैव महाव्रतमाप्नोति ॥ ८ ॥

---

तस्य वा एतस्य ज्योतिष्टोमस्याग्निष्टोमस्य त्रिवृद्बहिष्पवमानम् । तद्धतस्य शिरः । पञ्चदश-सप्तदशाऽउत्तरौ पवमानौ । तौ पक्षौ । पञ्चदशं होतुराज्यं सप्तदशं पृष्ठम् । एकविंशं यज्ञायज्ञियम् । तत्पुच्छम् ॥ ७ ॥

तयोर्वा एतयोः पञ्चदशसप्तदशयोर्द्वात्रिंशत्स्तोत्रियाः—ततो याः पञ्चविंशतिः, स पञ्चविंश आत्मा । अथ याः सप्तातियन्ति, ताः परिमादः । पशवो हैताः । पशवः परिमादः । एतावद्वै महाव्रतम् । तदेतदत्रैव महाव्रतमाप्नोति ॥ ८ ॥

---

पक्ष्याकारस्य महाव्रतसाम्नो हि शिरः पक्षमध्यपुच्छात्मकाः पञ्चावयवाः । " शिरो गायत्रम् । राथन्तरं दक्षिणः पक्षः । बृहदुत्तरः पक्षः । भद्रसाम पुच्छम् । राजनसाम ह्यात्मा " इति । तत्सर्वमग्निष्टोमे सम्पादयति—तस्य वा एतस्येत्यादिना । त्रिवृद्बहिष्पवमानं तद्धतस्य शिर इति । ऋक्त्रयात्मकमेकं सूक्तम् । तादृशानि त्रीणि सूक्तानि त्रिवृतोऽवयवा यस्य स्तोमस्य तदिदं त्रिवृद्बहिष्पवमानं प्रातःसवनिकं त्रिवृत् तृचसूक्तत्रयात्मकं बहिष्पवमानं महाव्रतस्य शिरो भवति । बहिष्पवमानमपि गायत्रीछन्दस्कैस्तृचैर्गातव्यम् । तथा च तैत्तिरीयकम्—"त्रिवृच्छिरो भवति त्रेधाविहितं हि शिरः"—इति । पञ्चदशसप्तदशाविति । माध्यन्दिनः पञ्चदशस्तोत्रियात्मकः पवमानः, तृतीयसवने सप्तदशस्तोत्रियात्मकः आर्भवः पवमानः । तावुभौ ' पक्षौ ' पक्षस्थानीयौ । ' पञ्चदशं ' ' होतुराज्यम् ' होत्राऽनुशंसनीयं प्रथममाज्यस्तोत्रं सप्तदशस्तोत्रियात्मकं पृष्ठ्यनामकं होतुः प्रथमं स्तोत्रम् । तदुभयं ' पृष्ठं ' मध्यात्मरूपम्, मध्यात्मरूपाः परिमादश्च इति वक्ष्यते ( श. प. १० । १ । २ । ८ । ) । एकविंशम् एकविंशत्यावृत्तिरूपं यज्ञायज्ञियं " यज्ञायज्ञा वो अग्नयः " (वा. सं. २७ । ३९ ) इत्यत्रोत्पन्नं साम तत्पुच्छस्थानीयम् ॥ ७ ॥

यद् आज्यं पृष्ठमित्युक्तं तयोर्मध्यात्मरूपतामाह—तयोर्वा एतयोरिति । आज्यस्तोत्रं पञ्चदशस्तोत्रियात्मकं पृष्ठं सप्तदशात्मकमुभयं मिलित्वा द्वात्रिंशत्स्तोत्रियात्मकम् । तत्र पञ्चविंशतिः स्तोत्रिया आत्मा । तथा च तैत्तिरीयकम्—" पञ्चविंश आत्मा भवति, तस्मान्मध्यतः पशवो वरिष्ठाः " इति । यास्तत्र सप्ताधिकास्ताः परिमादः परितो हर्षहेतवः महाव्रते क्रियमाणानि यानि परिमान्नामकानि सामानि तत्स्थानीयास्ताः । एताः शिरःपक्षमध्यपुच्छपरिमाद एव महाव्रतं साम तदत्राग्निष्टोमे विधत इति तद्यज्ञेन महाव्रतयज्ञमेवाप्तवान्भवति॥८॥

( त्यु ) अथ होता सप्त च्छन्दाᳫँसि शᳫँसति । चतुरुत्तराण्येकर्चानि विराडष्टमानि तेषां तिस्रश्चाशीतयोऽक्षराणि पञ्चचत्वारिᳫँशच्च ततो या ऽअशीतयः सैवाशीतीनामाप्तिरशीतिभिर्हि महदुक्थमाख्यायतेऽथ यानि पञ्चचत्वारिᳫँशत्ततो यानि पञ्चविᳫँशतिः स पञ्चविᳫँश ऽआत्मा यत्र वाऽआत्मा तदेव शिरस्तत्पक्षपुच्छान्यथ यानि विᳫँशतिस्तदावपनमेतावद्वै महदुक्थं तदेतदत्रैव महदुक्थमाप्नोति तानि वाऽएतानि सर्वाणि ज्योतिष्टोमऽएवाग्निष्टोमऽआप्यन्ते तस्माद ज्योतिष्टोमेनैवाग्निष्टोमेन यजेत ॥ ९ ॥

इति प्रथमप्रपाठके द्वितीयं ब्राह्मणम् ॥ १०-१-२ ॥ ( १. २. ) ॥

---

अथ होता सप्त च्छन्दांसि शंसति । चतुरुत्तराण्येकर्चानि विराडष्टमानि । तेषां तिस्रश्चाशीतयोऽक्षराणि पञ्चचत्वारिंशच्च । ततो या अशीतयः । सैवाशीतीनामाप्तिः । अशीतिभिर्हि महदुक्थमाख्यायते । अथ यानि पञ्चचत्वारिंशत् । ततो यानि पञ्चविंशतिः । स पञ्चविंश आत्मा । यत्र वा आत्मा तदेव शिरः । तत्पक्षपुच्छानि । अथ यानि विंशतिः—तदावपनम् । एतावद्वै महदुक्थम् । तदेतदत्रैव महदुक्थमाप्नोति । तानि वा एतानि सर्वाणि ज्योतिष्टोम एवाग्निष्टोम आप्यन्ते । तस्माद् ज्योतिष्टोमेनैवाग्निष्टोमेन यजेत ॥ ९ ॥

---

महदुक्थेऽपि गायत्रबार्हतौष्णिहतृचाशीतयः पक्षमध्यपुच्छात्मकाश्चावयवाः सन्ति, तत्सर्वमपि अग्निष्टोमे दर्शयति—अथ होता सप्त च्छन्दांसीति । प्रातरनुवाके गायत्र्यादीनि सप्त च्छन्दांसि धाय्यादिषु विराट्छन्दश्चाष्टमं होता शंसति । तेषां मध्ये गायत्र्याश्चतुर्विंशत्यक्षराणि, चतुरुत्तराणि तावन्ति उष्णिहः, तथा चोष्णिहोऽष्टाविंशतिरक्षराणि; एवं चतुरक्षरोत्तराणि सप्त च्छन्दांसि । “ विराजस्त्रयस्त्रिंशदक्षराणि ”—इति अत्रैव काण्डे पञ्चमाध्याये वक्ष्यते । “ अथ यानि त्रयस्त्रिंशत्सा त्रयस्त्रिंशदक्षरा विराड् ” ( श. प. १० । ९ । ४ । ८ ) इति । एतेषामष्टानां छन्दसामक्षराण्यशीतित्रयसङ्ख्याकानि पञ्चचत्वारिंशदधिकानि । तत्र होत्रा शंसनीयानां गायत्र्यादिविराडष्टमच्छन्दस्कानां बह्वीनामृचां सद्भावादक्षरैः सह परिगणने अनेकसंख्यान्यक्षराणि भविष्यन्तीति मत्वा ‘ एकर्चानि ’ इत्युक्तम् । एकैकस्मिन् छन्दसि एकैका ऋक् स्वीकर्त्तव्येत्यर्थः । अत्र या अक्षरपरिगणनेन ‘ तिस्रोऽशीतयः ’ सम्पन्नास्ता महदुक्थगतास्तिस्रोऽशीतयः । बृहदुक्थेऽशीतित्रयमस्तीति प्रागुक्तम् । “ बृहदुक्थे महदुक्थे शिरःपक्षाद्यवयवाः सन्ति ”—इत्युक्तं तद्दर्शयति—अथ यानि पञ्चचत्वारिंशादिति । अशीतित्रयादधिकानि पञ्चचत्वारिंशदक्षराणि विद्यन्ते तत्र ‘ यानि ’ पञ्चविंशतिसंख्यान्यक्षराणि तान्यात्मा मध्यशरीरम् । अनेन शिरःपक्षद्वयपुच्छान्यवयवा अप्युक्ता वेदितव्याः । अथ यान्यवशिष्टानि विंशतिरक्षराणि तदावपनं नाम महदुक्थशस्त्रस्योरुभागात्मकत्वेन शसनीयेषु सूक्तेषु—“ वनेन वायो धायि चाकन्यो जात एव प्रथमो मनस्वान् ”—इत्यनयोः सूक्तयोर्मध्ये आयुष्कामयजमानार्थं कासांचिदृचां शंसनम् । तथा चैतरेयकम्—“ ते-

प्रजापतिः प्रजाऽ असृजत । सुऽ ऊर्ध्वेभ्य ऽएवु प्राणेभ्यो देवानुसृजत येऽ-वाञ्चः प्राणास्तेभ्यो मर्त्याः प्रजाऽ अुथोर्ध्वमेवु मृत्युं प्रजाभ्योऽत्तारमसृजत ॥ १

तुस्य ह प्रजापतेः । ( २ ) अर्धमेव मर्त्यमासीदर्धममृतं तद्यदस्य मर्त्य-मासीत्तेनमृत्योरबिभेत्स बिभ्यदिमां प्राविशद्द्वयं भूत्वा मृच्चापश्च ॥ २ ॥

स मृत्युर्देवानब्रवीत् । (त्क) क नुसोऽभूद्यो नोऽसृष्टेति त्वद्बिभ्यदिमां प्राविक्षदिति सोऽब्रवीत्तं वाऽअन्विच्छाम तथ्ँ सम्भराम न वाऽअहं तुथ्ँ हिथ्ँसिष्यामीति तं देवा ऽअस्याऽअधि समभरन्यदस्याप्स्वासीत्ता ऽअपः

---

प्रजापतिः प्रजा असृजत । स ऊर्ध्वेभ्य एव प्राणेभ्यो देवानसृजत । येऽवाञ्चः प्राणास्तेभ्यो मर्त्याः प्रजाः । अथोर्ध्वमेव मृत्युं प्रजाभ्योऽत्तारमसृजत ॥ १ ॥

तस्य ह प्रजापतेरर्धमेव मर्त्यमासीत् । अर्धममृतम् । तद्यदस्य मर्त्यमासीत्तेन मृत्योरबिभेत् । स बिभ्यदिमां प्राविशद्-द्वयं भूत्वा । मृच्चापश्च ॥ २ ॥

स मृत्युर्देवानब्रवीत्-क नु सोऽभूत्-यो नोऽसृष्टेति । त्वद्बिभ्यदिमां प्राविक्षदिति । सोऽब्रवीत् ।

---

ऽन्तरेणायाह्यर्वाङुपबन्धुरेष्टा विधुं दद्राणं शमने बहूनाम् "-( ऐ. ब्रा. ) इत्येतदावपनं दशतीनामैन्द्रीणां त्रिष्टुब्जगतीनां बृहतीसम्पन्नानां यावतीरावपेरंस्तावत्यूर्ध्वमायुषो वर्षाणि जिजीविषेदिति । एतावद्वा इति । 'एतावत्' एव अशीतित्रयं शिरःपक्षपुच्छानि, आत्मा च आवपनम् एतावदेव महदुक्थम् । तत्सर्वमत्राग्निष्टोमे विद्यत इति सप्त च्छन्दसां विराजश्च शंसनेन महदुक्थमेव तत्र सम्भृतवान् भवतीत्यर्थः । यतो ज्योतिष्टोमाग्निष्टोमे एतानि सर्वाणि अग्निमहाव्रतमहदुक्थानि सम्पादनया विद्यन्त इत्येतस्य महाव्रतयज्ञात्मना स्तुतत्वाज्ज्योतिष्टोमयागविधिः प्रशस्त इत्यर्थः ॥ ९ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये दशमकाण्डे प्रथमेऽध्याये द्वितीयं ब्राह्मणम् ॥ ( १० । १ । २ ) ॥

अग्निचयनेष्टकाहेतवो मृदापश्च, चित्याग्नेः पञ्चेष्टकाचितयः, पञ्च पुरीषचितयः चित्युपस्थानमन्त्रश्च । तत्र प्रजापतिरूपेणेष्टकाचितयः, पुरीषचितयः प्रजापतेर्मर्त्यामृतशरीरात्मना, मन्त्रोपस्थानं कृत्स्नशरीरसम्पादकत्वेन च तृतीयब्राह्मणे स्तूयते-प्रजापतिः प्रजा इति । पूर्वं 'प्रजापतिः' प्रजासर्जनकाले ऊर्ध्वप्राणेभ्यो देवप्रजाः सृष्टवान् । अवाग्भ्यः प्राणेभ्यो 'मर्त्याः प्रजाः,' । अथ चरमसृष्टानां मर्त्यप्रजानाम् 'अत्तारम्' भक्षयितारं 'मृत्युं' च सृष्टवान् ॥ १ ॥

एवंविधाः प्रजाः सृष्टवतः प्रजापतेः शरीरस्यार्द्धं 'मर्त्यं' मरणधर्मकं जातम्, 'अर्धममृतम्' । तत्र मर्त्यरूपेण स्वयमपि मर्त्यप्रजाभक्षकात् 'मृत्योरबिभेत्' 'स बिभ्यदिमाम्' भूमिं मृज्जलरूपेण प्रविष्टवान् ॥ २ ॥

भूप्रवेशमेव मृत्युदेवप्रश्नप्रतिवचनाभ्यामाह-स मृत्युर्देवानिति । एवं मृत्युभयेन प्रजापतौ मृदुदकात्मना

समभरन्नथ युदस्यां तां मृदं तदुभयथ्ँ सम्भृत्य मृदं चापश्चेष्टकामकुर्वं- स्तस्मादेतदुभयमिष्टका भवति मृच्चापश्च ॥ ३ ॥

तदेता वाऽअस्य ताः । पञ्च मर्त्यास्तन्व ऽआसँल्लोम त्वङ्माथ्ँस- मस्थि मज्जाऽथैता ऽअमृता मनो वाक्प्राणश्चक्षुः श्रोत्रम् ॥ ४ ॥

( १थ्ँ ) स यः स प्रजापतिः । ( २ ) अयमेव स योऽयमग्निश्चीयतेऽथ याऽ अस्य ताः पञ्च मर्त्यास्तन्व ऽआसन्नेतास्ताः पुरीषचितयोऽथ या ऽअमृता ऽएतास्ता ऽइष्टकाचितयः ॥ ५ ॥

---

तं वाऽअन्विच्छाम । तं सम्भराम । न वाऽअहं तं हिंसिष्यामीति । तं देवा अस्या अधि समभरन् । यदस्याप्स्वासीत्, ताः—अपः समभरन् । अथ यदस्यां—तां मृदम् । तदुभयं सम्भृत्य मृदं चापश्चेष्टका- मकुर्वन् । तस्मादेतदुभयमिष्टका भवति । मृच्चापश्च ॥ ३ ॥

तदेता वा अस्य ताः पञ्च मर्त्यास्तन्व आसन्—लोम, त्वक्, मांसम्, अस्थि, मज्जा । अथैता अमृताः—मनः, वाक्, प्राणः, चक्षुः, श्रोत्रम् ॥ ४ ॥

स यः स प्रजापतिः । अयमेव स योऽयमग्निश्चीयते । अथ या अस्य ताः पञ्च मर्त्यास्तन्व आसन्—एतास्ताः पुरीषचितयः । अथ या अमृताः—एतास्ता इष्टकाचितयः ॥ ५ ॥

---

भूमिं प्रविष्टवति 'मृत्युर्देवानब्रवीत्' हे देवाः ! यः 'नः' अस्मान् मां युष्मांश्च 'असृष्ट' सृष्टवान् । 'स क' प्रदेशे 'अभूत्' इति मृत्योर्वचनम् । अथ देवा ऊचुः—हे मृत्यो ! 'त्वत्' त्वत्तः सकाशात् 'बिभ्यत्' 'इमाम्' भूमिं 'प्राविक्षत' । विशेर्लुङि 'शल इगुपधादनिटः क्सः "—( पा. सू. ३।१।४५ ) । एवं देवैरुक्ते 'स' मृत्युः 'अब्रवीत्'—तं स्रष्टारम् 'अन्विच्छाम' अन्विष्याम । 'तं' मृज्जलरूपं 'सम्भ- राम' इच्छतेर्भरतेश्च लोटि बहुवचनम् । देवसाहित्येन 'अहं' तु 'तं' प्रजापतिं 'न हिंसिष्यामि' इति मृत्युनोक्ते देवाः 'तम्' प्रजापतिम् 'अस्याऽधि' अधिः पञ्चम्यर्थानुवादी; भूमेः सकाशात् सम्भृतवन्तः । तत्र मृदुदकयोः सम्भरणस्थानमाह—यदस्येति । 'यद्' अङ्गं प्रजापतेः 'अप्सु' प्रविष्टं 'ताः अपः' सम्भृतवन्तः । 'यद्' भूमौ 'तां मृदम्' इति 'तदुभयं सम्भृत्य' उभयेन इष्टकाः कृतवन्तः । तस्मादिदानीं मृज्जलाभ्यामिष्टकाः क्रियन्ते ॥ ३ ॥

अग्निचयने पञ्च इष्टकाचितयः, पञ्च पुरीषचितयः सन्ति । ताः प्रजापतेः मर्त्यामृतशरीराणीति प्रतिपादयति— तदेता वाऽअस्य ता इति । 'अस्य' मृज्जलात्मनः प्रजापतेर्मरणधर्मणः पञ्चसंख्याका लोमत्वङ्मांसास्थि- मज्जात्मकाः देहाः आसन् । लोमादीनि स्थूलशरीरगतानीति मर्त्यशब्देनोक्तानि । अथ मनो-वाक्-प्राण- चक्षुः-श्रोत्ररूपाः पञ्च अमृतरूपास्तन्वः । मनःप्रभृतीनां सूक्ष्मशरीरधर्मत्वात् स्थूलदेहनाशेऽपि तदनाशा- दमृतत्वम् ॥ ४ ॥

उभय्यः पञ्च तन्वश्चित्याग्नेरेवेति वक्तुं प्रजापतेस्तदात्मकतामाह—स यः स प्रजापतिरिति । तत्र 'याः' 'मर्त्याः' 'पञ्च तन्वः' ता एकैकेष्टकाचितेरुपरि निधीयमानाः पञ्च पुरीषचितयः । मनःप्रभृतयो 'याः' अमृततन्वः, 'ता' 'इष्टकाचितयः' ॥ ५ ॥

( स्ते ) ते देवा ऽअब्रुवन् । ( न्न ) अमृतमिमं करवामेति तस्यैताभ्याममृताभ्यां तनूभ्यामेतां मर्त्यां तनूं परिगृह्यामृतामकुर्वन्निष्टकाचितिभ्यां पुरीषचितिं तथा द्वितीयां तथा तृतीयां तथा चतुर्थीम् ॥ ६ ॥

( मु ) अथ पञ्चमीं चितिमुपधाय । पुरीषं निवपति तत्र विकर्णीं च स्वयमातृण्णां चोपदधाति हिरण्यशकलैः प्रोक्षत्यग्निमभ्यादधाति सा सप्तमी चितिस्तदमृतमेवमस्यैताभ्याममृताभ्यां तनूभ्यामेतां मर्त्यां तनूं परिगृह्यामृतामकुर्वन्निष्टकाचितिभ्यां पुरीषचितिं ततो वै प्रजापतिरमृतोऽभवत्तथैवैतद्यजमान ऽएतममृतमात्मानं कृत्वा सोऽमृतो भवति॥७॥

---

ते देवा अब्रुवन्—अमृतमिमं करवामेति । तस्यैताभ्याममृताभ्यां तनूभ्यामेतां मर्त्यां तनूं परिगृह्यामृतामकुर्वन् । इष्टकाचितिभ्यां पुरीषचितिम् । तथा द्वितीयाम् । तथा तृतीयाम् । तथा चतुर्थीम् ॥ ६ ॥

अथ पञ्चमीं चितिमुपधाय पुरीषं निवपति । तत्र विकर्णीं च स्वयमातृण्णां चोपदधाति । हिरण्यशकलैः प्रोक्षति, अग्निमभ्यादधाति । सा सप्तमी चितिः । तदमृतम् । एवमस्यैताभ्याममृताभ्यां तनूभ्यामेतां मर्त्यां तनूं परिगृह्यामृतामकुर्वन्—इष्टकाचितिभ्यां पुरीषचितिम् । ततो वै प्रजापतिरमृतोऽभवत् । तथैवैतद्यजमान एतममृतमात्मानं कृत्वा सोऽमृतो भवति ॥ ७ ॥

---

अथ मर्त्यशरीराणाममृतत्वकरणं दर्शयति—ते देवा अब्रुवन्नमृतमिममिति । 'इमं' मर्त्यामृतरूपेण द्विविधं प्रजापतिम् 'अमृतम्' 'करवामेति' 'देवा' विचार्य द्वाभ्याममृततनूभ्याम् एकां 'मर्त्यां' तनूं मध्ये निहिताम् 'अमृताम्' कृतवन्तः । अमृतशरीरद्वयेन एकमर्त्यशरीरस्यामृतीकरणं चित्याग्नौ दर्शयति—इष्टकाचितिभ्यां पुरीषचितिमिति । यथा प्रथमद्वितीयेष्टकाचितिभ्यामेकां प्रथमचितेरुपरि निहितां प्रथमां पुरीषचितिममृतां कृतवन्तः । एवं द्वितीयतृतीयाभ्यामितरां पुरीषचितिं तृतीयचतुर्थीभ्यामपरां चतुर्थीपञ्चमीभ्यामन्यामिति पञ्चेष्टकाचितिभिश्चतस्रः पुरीषचितयोऽमृतीकृताः ॥ ६ ॥

यदि द्वाभ्यामेकस्यामृतीकरणं चेत् पञ्चम्याः पुरीषचितेरुपरि चित्यन्तराभावात्तस्या अमृतत्वं नास्तीत्याशङ्क्याह—अथ पञ्चमीं चितिमिति । पञ्चम्या इष्टकाचितेरुपरि निहितायाः पञ्चम्याः पुरीषचितेरुपरि विकर्णी नामैकामिष्टकां स्वयमातृण्णां नामैकामिष्टकां 'चोपधाय' 'हिरण्यशकलैः' सम्प्रोक्ष्य तत्राहवनीयाग्नेराधानं सप्तमी चितिरिति व्यवह्रियते अतः पञ्चमीसप्तमीभ्यामिष्टकाचितिभ्यां तन्मध्यस्थितायाः पुरीषचितेरमृतीकरणमिति प्रजापतेः सर्वशरीराणाममृतत्वात् तस्यैवामृतत्वं संपन्नम् । एवं यजमानोऽपि भाविशरीररूपचित्याग्नेरिष्टकाभिरमृतीकरणेन स्वयममृतो भवतीत्यर्थः ॥ ७ ॥

ते वै देवास्तं नाविदुः। (य्यु) य्यद्येनर्ठं॒ सर्व्वं वाऽकुर्व्वंन्न वा सर्व्वं यद्यति वाऽरेचयन्न वाऽभ्यापयंस्त्ऽएतामृचमपश्यन्धामच्छदग्निरिन्द्रो ब्रह्मा देवो बृहस्पतिः॥ सचेतसो व्विश्वे देवा यज्ञं प्रावन्तु नः शुभऽइति॥ ८॥

तस्याऽअस्त्येवाग्नेयम्। (म्) अस्त्यैन्द्रमस्ति व्वैश्वदेवं तद्यदस्याऽआग्नेयं यदेवैतस्याग्नेराग्नेयं तदस्य तेन समस्कुर्व्वन्यदैन्द्रं तदैन्द्रेण यद्वैश्वदेवं तद्वैश्वदेवेन तमत्रैव सर्व्वं कृत्स्नर्ठं॒ समस्कुर्व्वन्॥ ९॥

(व्वंस्त) तद्यदेतयोपतिष्ठते। यदेवास्यात्र व्विद्वान्वाऽविद्वान्वाऽति वा रेचयति न वाऽभ्यापयति तदेवास्यैतया सर्व्वमाप्नोति यदस्य किंचानाप्तमनुष्टुब्धामच्छद्भवति व्वाग्वाऽअनुष्टुब्वाग्धामच्छद्वाचैवास्य तदाप्नोति

---

ते वै देवास्तं नाविदुः—यद्येनं सर्वं वाऽकुर्वन्—न वा सर्वं, यद्यति वाऽरेचयन्—न वाऽभ्यापयन्। त एतामृचमपश्यन्। "धामच्छदग्निरिन्द्रो ब्रह्मा देवो बृहस्पतिः। सचेतसो विश्वे देवा यज्ञं प्रावन्तु नः शुभे"—( वा. सं. १८।७६ ) इति॥ ८॥

तस्या अस्त्येवाग्नेयम्। अस्त्यैन्द्रम्। अस्ति वैश्वदेवम्। तद्यदस्या आग्नेयम्—यदेवैतस्याग्नेराग्नेयम्। तदस्य तेन समस्कुर्वन्। यदैन्द्रम्—तदैन्द्रेण। यद्वैश्वदेवम्—तद्वैश्वदेवेन। तमत्रैव सर्वं कृत्स्नं समस्कुर्वन्॥ ९॥

तद्यदेतयोपतिष्ठते, यदेवास्यात्र विद्वान्वाऽविद्वान्वाऽति वा रेचयति, न वाऽभ्यापयति, तदेवास्यैतया सर्वमाप्नोति। यदस्य किञ्चानाप्तम्। अनुष्टुब्धामच्छद्भवति। वाग्वा अनुष्टुब्, वाग्धाम-

---

चित्याग्नेर्न्यूनातिरेकपरिहाराय मन्त्रेणोपस्थानं देवाः कृतवन्त इत्यर्थं श्रुतिः स्वयमेव देवकर्तृकाज्ञानपुरःसरं निरूपयति—ते वै देवास्तं नाविदुरिति। 'ते' 'देवाः' 'तम्' अर्थम् 'नाविदुः' न ज्ञातवन्तः। 'यदि' 'एनम्' अग्निं सम्पूर्णं कुर्युः, अथवा 'सर्वं' न कुर्युः। यदि वा अतिरिक्तं कुर्युः। 'न' 'वाऽभ्यापयन्' न्यूनं वा कुर्युरित्येवमर्थं न ज्ञातवन्त इत्यर्थः। तत्तद्दोषपरिजिहीर्षया उपस्थानमन्त्रं दृष्टवन्त इत्याह—त एतामृचमिति। ऋचोऽयमर्थः—धामानि तेजांसि स्थानानि वा च्छादयतीति 'धामच्छदग्निः' एतेऽग्न्यादयो 'देवाः' सचेतसः समानमनस्काः 'नः' अस्मदीयं यज्ञं 'शुभे' शोभने विषये 'प्रावन्तु' रक्षन्तु पूरयन्त्विति॥ ८॥

मन्त्रगताग्नीन्द्रविश्वदेवपदैः प्रतिपाद्याभिः सवनदेवताभिः सवनत्रयव्यापिचित्याग्नेः संस्कृतत्वमाह—तस्या अस्त्येवाग्नेयमिति। यदस्या ऋच 'आग्नेयम्' अग्निदेवतासम्बन्धस्तेन 'अग्नेः' आग्नेयेन स्वरूपेण 'तं' चित्याग्निं संस्कृतवन्त इत्यनेन प्रातःसवनव्यापित्वमुक्तम्। एवं माध्यन्दिने सवने ऐन्द्रेण स्वरूपेण। तृतीये विश्वदेवरूपेण संस्कृतवन्त इत्यनेनाग्नेः कृत्स्नसंस्कार उक्तः॥ ९॥

अनया ऋचोपस्थाने पूर्वोक्तासर्वकरणादिदोषपरिहारो भवतीत्याह—तद्यदेतयोपातिष्ठत इति। यदस्य

यदस्य किञ्चानाप्तं पुरीषवतीं चितिं कृत्वोपतिष्ठेतेत्यु हैकऽआहुस्तत्र हि सा सर्व्वा कृत्स्ना भवतीति ॥ १० ॥

तदु वाऽआहुः । ( यं ) यविष्ठवत्यैवोपतिष्ठेतैतद्धास्य प्रियं धाम यद्यविष्ठ ऽइति तद्यदस्य प्रियं धाम तेनास्य तदाप्नोति यदस्य किंचानाप्तमाग्नेय्या-ऽग्निकर्म हि गायत्र्या गायत्रोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्य तदाप्नोति यदस्य किंचानाप्तमनिरुक्तया सर्व्वं वाऽअनिरुक्तꣳ सर्व्वेणैवास्य तदाप्नोति यदस्य किंचानाप्तं त्वं यविष्ठ दाशुष ऽइति तस्योक्तो बन्धुः पुरीषवतीं चितिं कृत्वोपतिष्ठेत तत्र हि सा सर्व्वा कृत्स्ना भवति ॥ ११ ॥

इति प्रथमप्रपाठके तृतीयं ब्राह्मणम् ॥ १०–१–३ ॥ ( १. ३. )

---

च्छद्, वाचैवास्य तदाप्नोति–यदस्य किञ्चानाप्तम् । पुरीषवतीं चितिं कृत्वोपतिष्ठेतेत्यु हैक आहुः । तत्र हि सा सर्वा कृत्स्ना भवतीति ॥ १० ॥

तदु वा आहुः–यविष्ठवत्यैवोपतिष्ठेत । एतद्धास्य प्रियं धाम यद्यविष्ठ इति । तद्यदस्य प्रियं धाम तेनास्य तदाप्नोति । यदस्य किञ्चानाप्तम् । आग्नेय्या । अग्निकर्म हि । गायत्र्या । गायत्रो-ऽग्निः । यावानग्निर्यावत्यस्य मात्रा तावतैवास्य तदाप्नोति–यदस्य किञ्चानाप्तम् । अनिरुक्तया । सर्वं वा अनिरुक्तम्, सर्वेणैवास्य तदाप्नोति–यदस्य किञ्चानाप्तम् । "त्वं यविष्ठ दाशुषः"–( वा. सं. १८ । ७७ ) इति । तस्योक्तो बन्धुः । पुरीषवतीं चितिं कृत्वोपतिष्ठेत । तत्र हि सा सर्वा कृत्स्ना भवति ॥ ११ ॥

---

किञ्चेति । 'अस्य' अग्नेः यत्किञ्चन स्वरूपमनाप्तं तत् 'सर्वम्' 'एतया' ऋचा आप्तवान् भवति । ऋग्गतमनुष्टुप्छन्दो वाग्रूपेण प्रशंसति–अनुष्टुब्धामच्छदिति । धामच्छदग्निः इत्यृक् अनुष्टुप् वाग्रूपा, चतुष्पात्त्वसाम्यात् । "चत्वारि वाक्परिमिता पदानि" ( श. प. ४।१।३।१७ ) इति वाचः पादचतुष्टय-माम्नातम् । परा, पश्यन्ती, मध्यमा, वैखरी, इत्येतत्पदचतुष्टयमन्यैर्व्याख्यातम् । "अग्निर्वाग्भूत्वा मुखं प्रावि-शत्"–इत्यग्नेर्वाक्त्वम् । उपस्थानकालमाह–पुरीषवतीं चितिमिति । अन्तिमां 'पुरीषवतीम्' 'चितिम्' कृत्वा, अनेन मन्त्रेणोपस्थानमिति 'एके' आचार्या आहुरिति । सर्वासां चितीनामन्ते उपस्थानेन 'सा चितिः समिष्टा 'कृत्स्ना' संपूर्णा भवतीति । उपस्थाने मन्त्रभेदं वक्तुम् 'एक आहुः' इति पक्षान्तरमुक्तं न तु चित्यन्तरान्ते उपस्थानमिति वक्ष्यमाणोऽपि वैकल्पिको मन्त्रोऽन्तिमपुरीषचितेरनन्तरमेवोपस्थाने विनियोक्तव्यः ॥ १० ॥

तं मन्त्रमाह–तदु वा आहुर्यविष्ठवत्येति । यविष्ठपदवत्या ऋचेत्यर्थः । पूर्वं धामच्छदग्निरिति–अग्नेर्धा-मच्छदिति गुणोऽभिहितः । अत्रापि तमेव गुणं दर्शयितुं यविष्ठपदस्य धामार्थतामाह–एतद्धास्य प्रियं धाम

उभयथ्ँ हैतदग्रे प्रजापतिरास । मर्त्यं चैवामृतं च तस्य प्राणा ऽएवामृता ऽआसुः शरीरं मर्त्यथ्ँ सऽएतेन कर्मणैतयाऽऽवृतैकधाऽजरममृतमात्मानमकुरुत तथैवैतद्यजमान ऽउभयमेव भवति मर्त्यं चैवामृतं च तस्य प्राणा ऽएवामृता भवन्ति शरीरं मर्त्यथ्ँ सऽएतेन कर्मणैतयाऽऽवृतैकधाऽजरममृतमात्मानं कुरुते ॥ १ ॥

---

उभयं हैतदग्रे प्रजापतिरास—मर्त्यं चैवामृतं च । तस्य प्राणा एवामृता आसुः । शरीरं मर्त्यम् । स एतेन कर्मणैतयाऽऽवृतैकधाऽजरममृतमात्मानमकुरुत । तथैवैतद्यजमान उभयमेव भवति—मर्त्यं चैवामृतं च । तस्य प्राणा एवामृता भवन्ति । शरीरं मर्त्यम् । स एतेन कर्मणैतयाऽऽवृतैकधाऽजरममृतमात्मानं कुरुते ॥ १ ॥

---

यद्यविष्ठ इति । धामनामेत्यर्थः । अस्या ऋचोऽग्निदेवत्यत्वं च प्रशंसति—आग्नेय्याऽग्निकर्म हीति । यस्माद् 'अग्नेः' 'कर्म' तस्माद् 'आग्नेय्या' अग्निदेवत्यया उपस्थानम् । 'गायत्र्या' अनया । अग्नेर्गायत्रत्वं षष्ठे काण्डेऽभिहितम्—"अष्टावग्निरूपाणि, अष्टाक्षरा गायत्री, गायत्रोऽग्निः" ( श.प.ब्रा.६।१।३।१९ ) इति । 'अग्निर्यावान्' यावत्परिमाण इति अवयविपरिमाणवचनम् । 'अस्य' अग्नेः यावती मात्रा इति अवयवपरिमाणवचनम् । अस्याग्नेस्तद्रूपं तावता तत्परिमाणरूपेण आप्तवान् भवति । अनिरुक्तयेति । अस्पष्टाग्निलिङ्गया ऋचेत्यर्थः । सर्वं वा अनिरुक्तमिति । निर्वक्तुमनर्हम् अनिरुक्तम् । यविष्ठपदवतीमृचं पठति—त्वं यविष्ठ दाशुष इति । एषाऽऽग्नेयी, यद्यपि अग्न्यादिपदं स्पष्टतया न प्रतीयते अथापि सूक्तस्याग्नेयत्वादस्या अप्याग्नेयत्वं प्रकरणादवसीयते । अस्य मन्त्रस्य व्याख्यापकं ब्राह्मणमतिदिशति—तस्योक्तो बन्धुरिति । सप्तमकाण्डस्योपरिभागे—"यद्वै जात इदं सर्वमयुवत तस्माद्यविष्ठस्त्वं यविष्ठ दाशुष इति, यजमानो वै दाश्वान्" ( श. प. ७।१।२। ३८ । ३९ ) इत्यादिना । उपस्थानकालमाह—पुरीषवतीं चितिं कृत्वेति । पूर्ववद् व्याख्येयम् ॥ ११ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये कामकाण्डे प्रथमेऽध्याये तृतीयं ब्राह्मणम् ॥ ( १०—१—३ ) ॥

चतुर्थे ब्राह्मणे षट्सङ्ख्याका इष्टकाचितयः प्रजापतेरमृतशरीरगतप्राणापानव्यानोदानसमानवाग्रूपत्वेन, षट् पुरीषचितयः प्रजापतेर्मरणधर्मकस्थूलशरीरगतमज्जास्थिस्नावमांसमेदोऽसृक्त्वग्रूपत्वेन, एकैकस्या इष्टकाचितेरुपरि निधीयमानाया एकैकस्याः पुरीषचितेरमृतत्वसम्पत्त्या अन्तिमायाश्चितेरुपरिनिहितविकर्णीस्वयमातृण्णेष्टका हिरण्यशकलाहवनीयनिधानं प्रजापतेर्हिरण्मयरूपत्वेन, प्रणीतेऽग्नौ हूयमानाः समिधो देवानामन्नत्वेन च स्तूयन्ते । अथाग्निचितः पक्षिभक्षणवर्जनव्रतं च प्रतिपाद्यते । अनन्तरातीतब्राह्मणे यत्प्रजापतेर्मर्त्यामृतभेदेन द्वैविध्यमित्युक्तम् ( श. प. १० । १ । ३ । ६ ) तद्द्वयोर्मर्त्यामृतयोरर्थं वक्तुं तत्स्मारयति—उभयं हैतदग्र इति । 'अग्रे' पूर्वम् । अमृतशब्देन वाक्सहिताः पञ्च प्राणा विवक्षिताः । मर्त्यपदेन स्थूलगतमज्जास्थिस्नावमांसमेदोऽसृक्त्वचोऽभिधीयन्ते । स एवं मर्त्यामृतभेदेन द्विप्रकारः प्रजापतिरेतेनाग्निकर्मणा एतयाऽऽवृता क्रियया एकधा

स प्रथमां चितिं चिनोति । सा हास्यैषा प्राणऽएव तद्वै तदमृतममृतꣳ हि प्राणः सैषाऽमृतचितिरथ पुरीषं निवपति तद्धास्यैतन्मज्जैव तद्वै तन्मर्त्यं मर्त्यो हि मज्जा तदेतस्मिन्नमृते प्रतिष्ठापयति तेनास्यैतदमृतं भवति ॥ २ ॥

द्वितीयां चितिं चिनोति । सा हास्यैषाऽपानऽएव तद्वै तदमृतममृतꣳ ह्यपानः सैषाऽमृतचितिस्तदेतन्मर्त्यमुभयतोऽमृतेन परिगृह्णाति तेनास्यै-तदमृतं भवत्यथ पुरीषं निवपति तद्धास्यैतदस्थ्येव तद्वै तन्मर्त्यं मर्त्यꣳ ह्यस्थि तदेतस्मिन्नमृते प्रतिष्ठापयति तेनास्यैतदमृतं भवति ॥ ३ ॥

तृतीयां चितिं चिनोति । सा हास्यैषा व्यानऽएव तद्वै तदमृतममृतꣳ हि व्यानः सैषाऽमृतचितिस्तदेतन्मर्त्यमुभयतोऽमृतेन परिगृह्णाति तेनास्यै-तदमृतं भवत्यथ पुरीषं निवपति तद्धास्यैतत्स्नावैव तद्वै तन्मर्त्यं मर्त्यꣳ हि स्नाव तदेतस्मिन्नमृते प्रतिष्ठापयति तेनास्यैतदमृतं भवति ॥ ४ ॥

---

स प्रथमां चितिं चिनोति—सा हास्यैषा प्राण एव । तद्वै तदमृतम् । अमृतं हि प्राणः । सैषा-ऽमृतचितिः । अथ पुरीषं निवपति—तद्धास्यैतन्मज्जैव । तद्वै तन्मर्त्यम् । मर्त्यो हि मज्जा । तदे-तस्मिन्नमृते प्रतिष्ठापयति । तेनास्यैतदमृतं भवति ॥ २ ॥

द्वितीयां चितिं चिनोति—सा हास्यैषाऽपान एव । तद्वै तदमृतम् । अमृतं ह्यपानः । सैषाऽमृत चितिः । तदेतन्मर्त्यमुभयतोऽमृतेन परिगृह्णाति । तेनास्यैतदमृतं भवति । अथ पुरीषं निवपति—तद्धास्यै-तदस्थ्येव । तद्वै तन्मर्त्यम् । मर्त्यं ह्यस्थि । तदेतस्मिन्नमृते प्रतिष्ठापयति । तेनास्यैतदमृतं भवति ॥ ३ ॥

तृतीयां चितिं चिनोति—सा हास्यैषा व्यान एव । तद्वै तदमृतम् । अमृतं हि व्यानः । सैषाऽमृत-चितिः । तदेतन्मर्त्यमुभयतोऽमृतेन परिगृह्णाति—तेनास्यैतदमृतं भवति । अथ पुरीषं निवपति । तद्धास्यैतत्स्नावैव । तद्वै तन्मर्त्यम् । मर्त्यं हि स्नाव । तदेतस्मिन्नमृते प्रतिष्ठापयति । तेनास्यैतद-मृतं भवति ॥ ४ ॥

---

एकप्रकारमात्मानम् अजरं जरारहितम् ‘ अमृतं ’ मरणधर्मरहितं कृतवान् । एवं यजमानोऽपि मर्त्यामृतभेदेन द्विप्रकार एतेन अग्निचयनकर्मणा एकमेव स्वात्मानं जरामरणधर्मरहितं कृतवान् भवति ॥ १ ॥

स प्रथमां चितिमिति । कण्डिकाया अयमर्थः—प्रथमा इष्टकाचितिरमृतात्मकप्राणादिषट्कमध्ये प्राणरूपा, प्राणेष्टकाचित्योरमृतत्वव्यवहाराद्द्वयमप्यमृतम्; तस्या उपरि निधीयमाना पुरीषचितिर्मर्त्यशरीरगतमज्जात्मिका; अतस्तस्याममृतरूपायां प्रथमेष्टकाचितौ निहितां मर्त्यरूपपुरीषचितिममृतां कृतवान् भवति ॥ २ ॥

एवं द्वितीयां चितिं चिनोतीत्याद्याः पञ्च कण्डिका व्याख्येयाः । तत्र इष्टकाचितीनाममृतरूपापानव्यानो-

चतुर्थीं चितिं चिनोति । सा हास्यैषोदान ऽएव तद्वै तदमृतममृतꣳ ह्युदानः सैषाऽमृतचितिस्तदेतन्मर्त्यमुभयतोऽमृतेन परिगृह्णाति तेनास्यैतदमृतं भवत्यथ पुरीषं निवपति तद्धास्यैतन्माꣳसमेव तद्वै तन्मर्त्यं मर्त्यꣳ हि माꣳसं तदेतस्मिन्नमृते प्रतिष्ठापयति तेनास्यैतदमृतं भवति॥५॥

पञ्चमीं चितिं चिनोति । सा हास्यैषा समान ऽएव तद्वै तदमृतममृतꣳ हि समानः सैषाऽमृतचितिस्तदेतन्मर्त्यमुभयतोऽमृतेन परिगृह्णाति तेनास्यैतदमृतं भवत्यथ पुरीषं निवपति तद्धास्यैतन्मेद ऽएव तद्वै तन्मर्त्यं मर्त्यꣳ हि मेदस्तदेतस्मिन्नमृते प्रतिष्ठापयति तेनास्यैतदमृतं भवति ॥ ६ ॥

षष्ठीं चितिं चिनोति । सा हास्यैषा व्वागेव तद्वै तदमृतममृतꣳ हि व्वाक्सैषाऽमृताचितिस्तदेतन्मर्त्यमुभयतोऽमृतेन परिगृह्णाति तेनास्यैतदमृतं भवत्यथ पुरीषं निवपाति तद्धास्यैतदसृगेव त्वगेव तद्वै तन्मर्त्यं मर्त्यꣳ ह्यसृङ्मर्त्या त्वक्तदेतस्मिन्नमृते प्रतिष्ठापयति तेनास्यैतदमृतं भवति ॥ ७ ॥

---

चतुर्थीं चितिं चिनोति—सा हास्यैषोदान एव । तद्वै तदमृतम् । अमृतं ह्युदानः । सैषाऽमृतचितिः । तदेतन्मर्त्यमुभयतोऽमृतेन परिगृह्णाति । तेनास्यैतदमृतं भवति । अथ पुरीषं निवपति । तद्धास्यैतन्मांसमेव । तद्वै तन्मर्त्यम् । मर्त्यं हि मांसम् । तदेतस्मिन्नमृते प्रतिष्ठापयति । तेनास्यैतदमृतं भवति ॥ ५ ॥

पञ्चमीं चितिं चिनोति—सा हास्यैषा समान एव । तद्वै तदमृतम् । अमृतं हि समानः । सैषाऽमृतचितिः । तदेतन्मर्त्यमुभयतोऽमृतेन परिगृह्णाति । तेनास्यैतदमृतं भवति । अथ पुरीषं निवपति । तद्धास्यैतन्मेद एव । तद्वै तन्मर्त्यम् । मर्त्यं हि मेदः । तदेतस्मिन्नमृते प्रतिष्ठापयति । तेनास्यैतदमृतं भवति ॥ ६ ॥

षष्ठीं चितिं चिनोति—सा हास्यैषा वागेव । तद्वै तदमृतम् । अमृतं हि वाक् । सैषाऽमृताचितिः । तदेतन्मर्त्यमुभयतोऽमृतेन परिगृह्णाति । तेनास्यैतदमृतं भवति । अथ पुरीषं निवपति—तद्धास्यैत-

---

दानसमानवाग्रूपत्वम् । पुरीषचितीनामस्थिस्नावमांसमेदोऽसृक्त्वगात्मकत्वम् । षष्ठ्याः पुरीषचितेरसृक्त्वं त्वक्त्वं चेति द्वयरूपत्वमिति विशेषः । तदेतन्मर्त्यमुभयतोऽमृतेन परिगृह्णातीति । 'तदेतत्' 'मर्त्यम्' पुरीषचितिरूपम् 'उभयतोऽमृतेन' इष्टकाद्वयेन 'परिगृह्णाति' मध्यस्थितं करोति । तेन कारणेन अस्य प्रजापतेस्तन्मर्त्यं रूपममृतं भवति । एवमुत्तरत्र योजनीयम् ॥ २-६ ॥

षष्ठीं चितिमिति । स्तोमभागानन्तरं पुरीषनिवपनविधानात्तदन्ता पञ्चमी चितिः । तत ऊर्ध्वं पुरीषचितेः

ता वाऽएताः । षडिष्टकाचितयः षट्पुरीषचितयस्तद्द्वादश द्वादश मासाः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैव तत्प्रजापतिरेकधाऽजरममृतमात्मानमकुरुत तथैवैतद्यजमान ऽएकधाऽजरममृतमात्मानं कुरुते ॥ ८ ॥

( तेऽथ ) अथ विकर्णीं च स्वयमातृण्णां चोपधाय । हिरण्यशकलैः प्रोक्षत्यग्निमभ्यादधाति रूपमेव तत्प्रजापतिर्हिरण्मयमन्तत ऽआत्मनोऽकुरुत तद्यदन्ततस्तस्मादिदमन्त्यमात्मनो रूपं तस्मादाहुर्हिरण्मयः प्रजापतिरिति तथैवैतद्यजमानो रूपमेव हिरण्मयमन्तत ऽआत्मनः कुरुते तद्यदन्ततस्तस्मादिदमन्त्यमात्मनो रूपं तस्माद्ये चैतद्विदुर्ये च न हिरण्मयोऽग्निचिदमुष्मिँल्लोके सम्भवतीत्येवाहुः ॥ ९ ॥

---

दसृगेव, त्वगेव । तद्वै तन्मर्त्यम् । मर्त्यं ह्यसृक्, मर्त्या त्वक् । तदेतस्मिन्नमृते प्रतिष्ठापयति । तेनास्यैतदमृतं भवति ॥ ७ ॥

ता वा एताः षडिष्टकाचितयः, षट् पुरीषचितयः, तद् द्वादश । द्वादश मासाः संवत्सरः । संवत्सरोऽग्निः । यावानग्निर्यावत्यस्य मात्रा तावतैव तत्प्रजापतिरेकधाऽजरममृतमात्मानमकुरुत । तथैवैतद्यजमान एकधाऽजरममृतमात्मानं कुरुते ॥ ८ ॥

अथ विकर्णीं च स्वयमातृण्णां चोपधाय—हिरण्यशकलैः प्रोक्षति । अग्निमभ्यादधाति । रूपमेव तत्प्रजापतिर्हिरण्मयमन्तत आत्मनोऽकुरुत । तद्यदन्ततः—तस्मादिदमन्त्यमात्मनो रूपम् । तस्मादाहुः—हिरण्मयः प्रजापतिरिति । तथैवैतद्यजमानो रूपमेव हिरण्मयमन्तत आत्मनः कुरुते । तद्यदन्ततः—तस्मादिदमन्त्यमात्मनो रूपम् । तस्माद्ये चैतद्विदुः, ये च न,—हिरण्मयोऽग्निचिदमुष्मिँल्लोके सम्भवती—त्येवाहुः ॥ ९ ॥

---

प्राक् याः नाकसत्पञ्चचूडच्छन्दस्यादय इष्टका उपधीयन्ते—सा षष्ठी चितिः इति अष्टमे काण्डे प्रपञ्चेन निरूपितम्—"स्तोमभागा उपधाय पुरीषं निवपति सा पञ्चमी चितिः । अथ यदेतदूर्ध्वमा पुरीषात्सा षष्ठी चितिः" ( श. प. ब्रा. ८ । ३ । ७ ) इति ॥ ७ ॥

चितिद्वयगतां संख्यामनूद्य सम्भूय संवत्सररूपाग्न्यात्मना प्रशंसति—ता वा एताः षडिष्टकाचितयः, षट् पुरीषचितय इति ॥ ८ ॥

विकर्ण्यादीष्टकाहिरण्यशकलाहवनीयनिधानं हिरण्मयरूपत्वेन प्रशंसति—अथ विकर्णीं च स्वयमातृण्णामिति । विकर्णीनामिका स्वयमातृण्णानामिका च इष्टका । 'सुवर्णशकलैः' चित्याग्निं प्रोक्ष्य आहवनीयं निदधाति । एवमिष्टकाग्निनिधानेन प्रजापतिः 'अन्ततः' अन्ते 'हिरण्मयम्' सुवर्णमयं रूपं स्वात्मनः कृतवान् । यतोऽन्ते 'आत्मनः' सुवर्णरूपकरणेन प्रजापतिर्हिरण्मय इति वेदवादिन आहुः । तथाऽयं यजमानः सर्वे-

( स्तु ) तुद्धैतच्छाण्डिल्यश्च सातुरथवाहनिश्च । ( श्चा ) आचार्यान्तेवासिनौ व्यूदाते रूपमेवास्यैतदिति ह स्माह शाण्डिल्यो लोमानीति सातुरथवाहनिः ॥ १० ॥

स होवाच शाण्डिल्यः । ( ल्यो ) रूपं वाव लोमवद्रूपमलोमकᳫँ रूपमेवास्यैतदिति तद्वै तत्तथा यथा तच्छाण्डिल्यऽउवाच संचितेऽग्निः प्रणीयते प्रणीतादूर्ध्वᳫँ समिध ऽआहुतय ऽइति हूयन्ते ॥ ११ ॥

प्राणेन वै देवा ऽअन्नमदन्ति । ( न्त्य ) अग्निरु देवानां प्राणस्तस्मात्प्राग्देवेभ्यो जुह्वति प्राणेन हि देवाऽअन्नमदन्त्यपानेन मनुष्या ऽअन्नमदन्ति तस्मात्प्रत्यङ्मनुष्येष्वन्नं धीयतेऽपानेन हि मनुष्या ऽअन्नमदन्ति ॥ १२ ॥

---

तद्धैतच्छाण्डिल्यश्च सात्तरथवाहनिश्चाचार्यान्तेवासिनौ व्यूदाते । रूपमेवास्यैतदिति ह स्माह शाण्डिल्यः । लोमानीति सात्तरथवाहनिः ॥ १० ॥

स होवाच शाण्डिल्यः—रूपं वाव लोमवत्, रूपमलोमकम्, रूपमेवास्यैतादिति । तद्वै तत् तथा—यथा तच्छाण्डिल्य उवाच । संचितेऽग्निः प्रणीयते । प्रणीतादूर्ध्वं समिध आहुतय इति हूयन्ते ॥ ११ ॥

प्राणेन वै देवा अन्नमदन्ति । अग्निरु देवानां प्राणः । तस्मात्प्राग् देवेभ्यो जुह्वति । प्राणेन हि

---

चितीनामन्ते हिरण्यशकलप्रोक्षणानन्तरमाहवनीयनिधानेन स्वात्मनोऽपि हिरण्मयं 'रूपं' करोति । 'तस्मात्' विद्वांसोऽभिज्ञाः पुरुषाः 'ये' चानभिज्ञास्ते उभयेऽपि 'अग्निचित्' अग्निं चितवान् यजमानः 'अमुष्मिन्' स्वर्गे 'लोके' 'हिरण्मयो' हिरण्यसमानवर्णः 'सम्भवतीति' अविवादेन वदन्तीत्यर्थः ॥ ९ ॥

हिरण्यशकलाहवनीयनिधानं प्रजापतेर्हिरण्मयरूपमित्युक्तम् । तत्र गुरुशिष्ययोः संवादं दर्शयति—तद्धैतच्छाण्डिल्यश्च सात्तरथवाहनिश्चेति । 'आचार्यान्तेवासिनौ' 'शाण्डिल्य' आचार्यः इतरः शिष्यः 'व्यूदाते' विवादं कृतवन्तौ । विवादस्वरूपमाह—रूपमेवास्यैतादिति । 'अस्य' प्रजापतेः 'एतत्' हिरण्मयं रूपमिति शाण्डिल्यमतम् । 'लोमानि' एव न रूपमिति सात्तरथवाहनेः शिष्यस्य मतम् ॥ १० ॥

एवं विवादे आचार्यः शाण्डिल्यो रूपमित्येव सोपपत्तिकं निश्चितवानित्याह—स होवाच शाण्डिल्य इति । 'लोमवत्' लोमयुक्तमपि 'रूपम्' भवति । 'अलोमकम्' लोमरहितमपि 'रूपं' भवति । अत 'एतत्' हिरण्मयत्वम् 'अस्य' प्रजापतेः 'रूपं', रूपमेवेत्यर्थः । शाण्डिल्योक्तमर्थं श्रुतिरनुमोदते—तद्वै तत्तथा यथा तच्छाण्डिल्य उवाचेति । चित्याग्निमभिलक्ष्याहवनीयाग्नेः प्राङ्मुखत्वेन प्रणयनं प्रशंसितुमाह—संचितेऽग्निः प्रणीयत इति । 'सञ्चिते' इष्टकाचितेऽग्नौ 'अग्निः' आहवनीयः 'प्रणीयते' प्राङ्मुखो नीयते 'प्रणीतादूर्ध्वम्' प्रणीतेऽग्नौ 'समिध आहुतय' इत्येवं 'हूयन्ते' ॥ ११ ॥

प्राणेन वै देवा अन्नमदन्तीत्यादेरयमर्थः । यतः 'अग्निः' 'देवानाम्' प्राणभूतः 'तस्मात्' प्राण-

तदाहुः । (नं) न व्वयसोऽग्निचिदश्नीयाद्वयो वा ऽएष रूपं भवति योऽग्निं चिनुतऽईश्वर ऽआर्त्तिमार्त्तोस्तस्मान्न व्वयसोऽग्निचिदश्नीयादिति तद्वै काममुवैवंविदश्नीयादग्निर्व्वाऽएष रूपं भवति योऽग्निं चिनुते सर्व्वं वा इदमग्नेरन्नꣳ सर्व्वं मऽइदमन्नमित्येवैवंविद्विद्यादिति ॥ १३ ॥

तदाहुः । किं तदग्नौ क्रियते येन यजमानः पुनर्मृत्युमपजयतीत्यग्निर्व्वाऽएष देवता भवति योऽग्निं चिनुतेऽमृतमु वाऽअग्निः श्रीर्देवाः श्रियं गच्छति यशो देवा यशो ह भवति य ऽएवं व्वेद ॥ १४ ॥

इति प्रथमप्रपाठके चतुर्थं ब्राह्मणम् ॥ १०-१-४ ॥ ( १. ४. ) ॥

---

देवा अन्नमदन्ति । अपानेन मनुष्या अन्नमदन्ति । तस्मात्प्रत्यङ्मनुष्येष्वन्नं धीयते । अपानेन हि मनुष्या अन्नमदन्ति ॥ १२ ॥

तदाहुः-न वयसोऽग्निचिदश्नीयात् । वयो वा एष रूपं भवति-योऽग्निं चिनुते । ईश्वर आर्त्तिमार्त्तोः । तस्मान्न वयसोऽग्निचिदश्नीयात्-इति । तद्वै काममेवैवंविदश्नीयात् । अग्निर्वा एष रूपं भवति योऽग्निं चिनुते । सर्वं वा इदमग्नेरन्नम् । सर्वं म इदमन्नमित्येवैवंविद्विद्यात्-इति ॥ १३ ॥

तदाहुः-किं तदग्नौ क्रियते-येन यजमानः पुनर्मृत्युमपजयतीति । अग्निर्वाऽएष देवता भवति-

---

स्योर्ध्वगतित्वात्, 'देवेभ्यः प्राक्' प्राचा हस्तेनोर्ध्वं 'जुह्वति' होमं कुर्वन्ति यतो 'देवाः' 'प्राणेन' 'अन्नमदन्ति' 'मनुष्याः' खलु 'अपानेन' अवाङ्मुखेन वायुना भुञ्जते, तस्मादग्नेः प्रणयनं देवानां प्राङ्मुखत्वेन हवनमित्यर्थः ॥ १२ ॥

अग्निचितः कञ्चिद्धर्मं विधत्ते-तदाहुर्न वयसोऽग्निचिदिति । अग्निं चितवान् यजमानः 'वयसः' पक्षिणो 'न अश्नीयात्' इति । तत्र हेतुमाह-वयो वा एष रूपमिति । 'योऽग्निं चिनुते' 'एषः वयो रूपं' 'भवति' चित्याग्निरेव पक्षी अग्निचितः स्वरूपम् अतः पक्षिमांसभक्षणेन चित्याग्निमेव भक्षितवान् भवति । तथा च तैत्तिरीयके-"वयो वा अग्निर्यदग्निचित्पक्षिणोऽश्नीयात्तमेवाग्निमद्यात्"-( तै. सं. ५ । ७ । ६ ) इति । ईश्वर आर्त्तिमार्त्तोरिति । 'आर्त्तिम्' दुःखम् 'आर्त्तोः' गन्तुमीश्वरो भवति । एवं पक्षिभक्षणवर्जननियममनूद्य तं दूषयति-तद्वै काममेवैवंविदश्नीयादिति । 'एवंवित्' चित्याग्निरूपः पक्षी स च स्वात्मा एवं जानानः पुरुषः 'कामम्' स्वेच्छया 'अश्नीयात्'। अत्र हेतुमाह-अग्निर्वा एष रूपमिति । 'यः' अग्निचित् स हि अग्निरूपः अतो यथाऽग्नेः 'सर्वम् अन्नम् भवति' एवं मे अग्निरूपस्य मम 'सर्वम् अन्नं भवति' 'इत्येव'-'एवंविद्' 'विद्यात्' जानीयात् । तस्मात् कामं पक्षिणोऽद्यादित्यर्थः ॥ १३ ॥

अग्निचयनसाध्यं फलं वेदवादिप्रश्नोत्तराभ्यां निरूपयति-तदाहुः किं तदग्नौ क्रियत इति । 'येन'

---

१-पक्ष्यभोजनम् । का. श्रौ. सू. १८ । ११२ ।

सुर्वे हैते युज्ञा योऽयमुग्निश्चितः । स युत्पशुमालुभते तुदग्न्याधेयमुथ युदुखाᳫँ संभरति तुान्यग्न्याधेयहवीᳫँष्युथ युद्दीक्षते तुदग्निहोत्रमुथ युद्दीक्षितुः सुमिधावाद्धाति ते ऽअग्निहोत्राहुती ॥ १ ॥

ते वै सायंप्रातरादधाति । सायंप्रातर्ह्यग्निहोत्राहुती जुह्वति समानेन मन्त्रेण समानेन हि मन्त्रेणाग्निहोत्राहुती जुह्वत्युथ युद्वनीवाहनं च भस्मनश्चाभ्यवहरणं तौ दर्शपूर्णमासावुथ युद्गार्हपत्यं चिनोति तुानि चातुर्मास्या-

---

योऽग्निं चिनुते । अमृतमु वा अग्निः, श्रीर्देवाः, श्रियं गच्छति । यशो देवाः । यशो ह भवति—य एवं वेद ॥ १४ ॥

सर्वे हैते यज्ञाः—योऽयमग्निश्चितः । स यत्पशुमालभते—तदग्न्याधेयम् । अथ यदुखां सम्भरति—तान्यग्न्याधेयहवींषि । अथ यद्दीक्षते—तदग्निहोत्रम् । अथ यद्दीक्षितः समिधावादधाति—ते अग्निहोत्राहुती ॥ १ ॥

ते वै सायंप्रातरादधाति । सायंप्रातर्ह्यग्निहोत्राहुती जुह्वति । समानेन मन्त्रेण । समानेन हि

---

कर्मणा ' यजमानः ' ' पुनर्मृत्युमपजयति ' तिरस्करोति तत्कर्म ' किम् अग्नौ क्रियते ' इति तदर्थजातमाहुः पृष्टवन्तः । इतिशब्दः प्रश्नसमाप्त्यर्थः । उत्तरम्—अग्निर्वा इति । योऽग्निचित् ' एषः ' अग्निर्देवता भवति । ' अग्निः ' हि अमृतम् एवं यष्टा अमृतो भवति । पुनर्मृत्युं जितवान् भवति । ' श्रीर्देवाः ' अग्न्यादयो देवाः श्रीरूपाः, अग्निकर्मणा ' श्रियं गच्छति ' किं च ' देवाः ' ' यशः '—स्वरूपाः तदपि अग्निकर्मणा आप्नोति । वेदितुः फलमाह—यशो ह भवति य एवं वेदेति । यशोरूपो भवतीति भावः ॥ १४ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये दशमकाण्डे प्रथमेऽध्याये चतुर्थं ब्राह्मणम् ॥ ( १०—१—४ ) ॥

अग्निचयनकर्म अग्न्याधानादिहविरग्निहोत्रदर्शपूर्णमासेष्टिपशुचातुर्मास्यसोमाध्वरराजसूयादिसर्वयज्ञात्मकमिति पञ्चमे ब्राह्मणे स्तूयते । यज्ञवीर्याणां मीमांसा च वक्ष्यते । तत्र प्रथमं संक्षेपत एवाग्नेः सर्वयज्ञात्मकतामाह—सर्वे हैते यज्ञा योऽयमग्निश्चित इति । विविच्य दर्शयति—स यत् पशुमालभत इति । सोऽग्निं चिकीर्षमाणः ' पशुम् ' पुरुषाश्वादीन् पशून् ' आलभते ' इति ' यत् ' ' तदग्न्याधेयम् ' आधानम्, प्रथमकरणसाम्यात् पश्वालम्भनमेवाधानरूपत्वेन स्तूयते । एवमुत्तरत्र । अथ यदुखां सम्भरतीति । उखार्थद्रव्यसम्भरणं " अष्टकायामुखां सम्भरति " ( श. प. । ६ । २ । २ । २३ ) इति यत् तदग्न्याधानहवींषि आग्नेयपावमानादीनि तदात्मकमित्यर्थः । दीक्षैव ' अग्निहोत्रम् ' । दीक्षितः पुरुषः संवत्सरपर्यन्तं प्रत्यहं सायं प्रातः समिधमेकैकामग्नौ ' आदधाति ' तदेवाग्निहोत्राहुतिद्वयम् ॥ १ ॥

' ते ' च समिधौ [१] ' समानेन मन्त्रेण ' । प्रातःकालीन एक एव मन्त्रः । सायन्तनोऽप्येक एव । " रात्रिं

---

१—' अहरहः ' इत्यत्र ' रात्रिं रात्रिम् ' इत्यूहः । मंत्रस्तु—स एवेत्यर्थः ।

न्युथ युदूर्ध्वं गार्हपत्यादा सर्व्वौषधात्ता ऽइष्टयोऽथ युदूर्ध्वᳪं सर्व्वौषधात्प्राचीनं चितिभ्यस्ते पशुबन्धा युऽएवैतेषु युज्ञेषु व्विष्णुक्रमास्ते व्विष्णुक्रमा युज्जुप्यं तुद्वात्सप्रम् ॥ २ ॥ ( अर्धप्रपाठकः ॥ ४७ ॥ )

( ॐ ) सौम्योऽध्वरः प्रथमा चितिः । ( यं ) युत्प्राचीनᳪं सवेभ्यो राजसूयो द्वितीया व्वाजपेयस्तृतीयाऽश्वमेधश्चतुर्थ्यग्निसवः पञ्चमी युैश्चितᳪं सामभिः परिगायति तन्महाव्व्रतमुथ युत्तत्रोद्गातुः पुरस्ताज्जुप्यं तुच्छतरुद्रियं व्वसोर्धारा मह्दुक्थमुथ युदूर्ध्वᳪं सामभ्यः प्राचीनं व्वसोर्धाराया युदेव तुत्र होतुः पुरस्ताज्जुप्यं तत्तदुथ युदूर्ध्वं व्वसोर्धाराये ते गृहमेधा ऽएतावन्तो वै सुर्व्वे युज्ञास्तानग्निनाऽऽप्नोति ॥ ३ ॥

---

मन्त्रेणाग्निहोत्राहुती जुह्वति । अथ यद्वनीवाहनं च भस्मनश्चाभ्यवहरणम्—तौ दर्शपूर्णमासौ । अथ यद्गार्हपत्यं चिनोति—तानि चातुर्मास्यानि । अथ यदूर्ध्वं गार्हपत्याद्—आ सर्वौषधात्—ता इष्टयः । अथ यदूर्ध्वं सर्वौषधात्, प्राचीनं चितिभ्यः—ते पशुबन्धाः । य एवैतेषु यज्ञेषु विष्णुक्रमाः—ते विष्णुक्रमाः । यजप्यम्—तद्वात्सप्रम् ॥ २ ॥

सौम्योऽध्वरः प्रथमा चितिः—यत्प्राचीनं सवेभ्यः । राजसूयो द्वितीया । वाजपेयस्तृतीया । अश्वमेधश्चतुर्थी । अग्निसवः पञ्चमी । यैश्चितं सामभिः परिगायति—तन्महाव्रतम् । अथ यत्तत्रोद्गातुः पुरस्ताजप्यम्—तच्छतरुद्रियम् । वसोर्धारा महदुक्थम् । अथ यदूर्ध्वं सामभ्यः, प्राचीनं

---

रात्रिमप्रयावम् "—(वा. सं. ११ । ७९) इति सायन्तनो मन्त्रः । "अहरहरप्रयावम्" (वा. सं. ११ । ७५) इति प्रातःकालीनो मन्त्रः । अग्निहोत्राहुत्योरपि मन्त्र एक एव । "अग्निर्ज्योतिः"—(वा. सं. ३ । ९) इति सायंकालीनः । "सूर्यो ज्योतिः"—( वा. सं. ३ । ९ ) इति प्रातर्मन्त्रः । 'अथ यद्वनीवाहनम्' देवयजनं प्रत्यग्नेः प्रणयनं 'भस्मनोऽभ्यवहरणम्' अप्सूस्थभस्मावपनम् । 'तौ' ते कर्मणी 'दर्शपूर्णमासौ' । 'गार्हपत्यं चेष्यन्' ( श. प. ७ । १ । १ ) इत्यादिविहितं गार्हपत्यचयनमेव चातुर्मास्यत्वेन स्तूयते । गार्हपत्यचयनादूर्ध्वभावीनि चित्याग्निक्षेत्रे सर्वौषधवपनपर्यन्तं यानि कर्माणि ता इष्टयः । ओषधिवपनादूर्ध्वभावि इष्टका—'चितिभ्यः' 'प्राचीनं' कर्मजातं निरूढपशुबन्धात्मकम् । 'एतेषु' दर्शपूर्णमासादियज्ञेषु ये 'विष्णुक्रमाः' त एव अग्निचयने क्रियमाणा 'विष्णुक्रमाः' अत्रत्या विष्णुक्रमाः त एव । यज्ञेषु 'यत् जप्यम्' अस्ति तद् 'वात्सप्रम्' सूक्तम् ॥ २ ॥

'प्रथमा' स्वयमातृण्णाद्या 'चितिः' सवा नाम अभिषेकयुक्ता यज्ञाः, तेभ्यः प्राचीनः 'सौम्योऽध्वरः' सौमिको यज्ञः प्रथमा चितिः सौमिकयज्ञरूपा । द्वितीयाद्याश्चतस्रः अभिषेकयुक्तराजसूयवाजपेयाश्वमेधाग्निसवा-

---

१—'दिवस्परि प्रथमं जज्ञे' इत्याद्याः 'विवक्षुः' इत्यन्ता वाजसनेयसंहितायां द्वादशाध्यायगता ( १८–२८ ) एकादश मन्त्रा वात्सप्रसूक्तमिति वेदवादिन आहुरिति ।

( त्य ) अथातो यज्ञवीर्याणामेव । सायंप्रातर्ह वाऽअमुष्मिँल्लोकेऽग्निहोत्रहुदश्नाति तावती ह तस्मिन्यज्ञऽऊर्गर्धमासेऽर्धमासे दर्शपूर्णमासयाजी चतुर्षु चतुर्षु मासेषु चातुर्मास्ययाजी षट्सु षट्सु पशुबन्धयाजी संवत्सरे संवत्सरे सोमयाजी शते शते संवत्सरेष्वग्निचित्काममश्नाति कामं न तद्धैतद्यावच्छतꣳ संवत्सरास्तावदमृतमनन्तमपर्यन्तꣳ स यो हैतदेवं वेदैवꣳ हैवास्यैतदमृतमनन्तमपर्यन्तं भवति तस्य यदपीषीकयेवोपहन्यात्तदेवास्यामृतमनन्तमपर्यन्तं भवति ॥ ४ ॥

इति प्रथमप्रपाठके पञ्चमं ब्राह्मणम् ॥ १०–१–५ ॥ ( १. ५. ) ॥

इति प्रथमोऽध्यायः समाप्तः ॥ १० । १ ॥

---

वसोर्धारायै–यदेव तत्र होतुः पुरस्ताज्जप्यं तत्तत् । अथ यदूर्ध्वं वसोर्धारायै–ते गृहमेधाः । एतावन्तो वै सर्वे यज्ञाः । तानग्निनाऽऽप्नोति ॥ ३ ॥

अथातो यज्ञवीर्याणामेव । सायंप्रातर्ह वा अमुष्मिँल्लोकेऽग्निहोत्रहुदश्नाति । तावती ह तस्मिन्यज्ञऽऊर्क् । अर्धमासेऽर्धमासे दर्शपूर्णमासयाजी । चतुर्षु चतुर्षु मासेषु चातुर्मास्ययाजी । षट्सु षट्सु पशुबन्धयाजी । सम्वत्सरे संवत्सरे सोमयाजी । शते–शते सम्वत्सरेष्वग्निचित्काममश्नाति कामम् । न तद्धैतद् यावच्छतं सम्वत्सराः–तावदमृतमनन्तमपर्यन्तम् । स यो हैतदेवं वेद–एवं हैवास्यैतदमृतमनन्तमपर्यन्तं भवति । तस्य यदपीषीकयेवोपहन्यात्तदेवास्यामृतमनन्तमपर्यन्तं भवति ॥ ४ ॥

---

त्मिकाः । चितमग्निं यैः सामभी रथन्तरादिभिः परिगायति तत्सामजातं महाव्रतम् । तत्र महाव्रतयज्ञे सामगानात् प्रागुद्गात्रा पुरस्ताज्जप्यो मन्त्रोऽस्ति तदत्र ' शतरुद्रियं ' शतरुद्रियमेवोद्गातुः 'पुरस्तात्' जप्यस्थानीयमित्यर्थः । वसोर्धारा नाम चमकसूक्तैर्हूयमानाऽऽज्यधारा सा बृहदुक्थम् । बृहतीसहस्रात्मकं शस्त्रं बृहदुक्थस्यादौ होत्रा जप्यं मन्त्रजातमस्ति तत्सामभ्य ' ऊर्ध्वं ' वसोर्धारायाः प्राचीनं कर्मजातम् । तस्या ऊर्ध्वभावि यत् ' ते ' ' गृहमेधाः ' सत्रयागाः । ' एतावन्तो वै ' ' यज्ञाः ' इष्टिपशुसोमरूपाः । सौमिकेषु च एकाहाहीनसत्रात्मका एतावन्त एव ' यज्ञाः ' ' तान् ' सर्वान् 'अग्निना' अग्निचयनकर्मणाऽऽसवान् भवति । एवमग्नेः सर्वयज्ञात्मकत्वमुक्तम् ॥ ३ ॥

अथात इति । अथ ' यज्ञवीर्याणामेव ' मीमांसा वक्ष्यत इति शेषः । सायंप्रातरिति । यो यजमानः 'सायंप्रातः' अग्निहोत्रं जुहोति स 'अमुष्मिन्' स्वर्गे 'लोके' प्रतिदिनं सायंप्रातरश्नाति । अत्रत्यमाहुतिद्वयं परलोके भोज्यत्वेन परिणमत इत्यर्थः । तावती हेति । तावत्परिमाणा च ' तस्मिन् ' अग्निहोत्रात्मके यज्ञे 'ऊर्क्' भवति । एवं ' अर्धमासेऽर्धमासे दर्शपूर्णमासयाजी ' इत्यादिकं व्याख्येयम् । पशुबन्धः षट्सु षट्सु मासेषु क्रियते । " वसन्ते वसन्ते ज्योतिषा यजेत "–इति सोमयागः संवत्सरे विधीयते । अतस्तद्याजी तावत्कालपरिमित तत्फलम् 'अश्नाति' । अग्निचितस्तु विशेषमाह–शत इति । अग्निं चितवान् पुरुषस्तु शतसंख्याकेषु संवत्सरेषु

'कामम्' अपरिमितं 'कामम्' अभीष्टं तत्फलम् 'अश्नाति'। शतशब्दस्यापरिमितार्थमाह—न तद्धैतादिति। 'तदेतत्' 'शतम्' 'न' एतत् परिमितं न—किन्तु अपरिमितमेव। अतो यावन्तः शतं संवत्सराः' 'तावदमृतम्' देवत्वप्रापकम् 'अनन्तम्' अपरिमितमन्नं भवति। वेदितुः फलमाह—स यो हैतदेवं वेदेति। 'तस्य यदपि' इत्यादेरयमर्थः—तस्य चयनकर्मण एकदेशभूतं यत् किञ्चिदपि 'इषीकया' सूक्ष्म-तृणाग्रेण 'उपहन्यात्' पृथक्कुर्यात्। उपपूर्वस्य हन्तेः पृथक्करणमर्थः। तथा चापस्तम्बप्रयोगः—"अपि वा सकृदुपहत्य जुहुयात्" (आप० श्रौ. सू. ) इति। तत्कर्मण एकदेशोऽपि अस्य चितवतोऽदृष्टम् 'अमृतम्' 'अनन्तमपर्यन्तम्' 'भवति' किल। किमुत सकलं कर्मेति फलस्तुतिः॥ ४॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये दशमकाण्डे प्रथमेऽध्याये पञ्चमं ब्राह्मणम्॥ ( १०—१—५ )॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्। पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः॥ १॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं,
सप्ताब्धीन्पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटं च॥
धान्याद्रिं धन्यजन्मा तिलभवमतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान्गुडकृतमजडो राजतं राजपूज्यः।
आज्योत्थं प्राज्यजन्मा लवणजमनृणः शार्करं चार्कतेजा,
रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणा-चार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये दशमकाण्डे प्रथमोऽध्यायः॥ (१०—१)॥



# अथ द्वितीयेऽध्याये प्रथमं ब्राह्मणम् ।

## प्रथमप्रपाठके च षष्ठं ब्राह्मणम् ।



**प्रजापतिः स्वर्गं लोकमजिगाꣳसत् । ( त्स ) सर्वे वै पशवः प्रजापतिः पुरुषोऽश्वो गौरविरजः स ऽएतै रूपैर्नाशक्नोत्स ऽएतं वयोविधमात्मानमपश्यदग्निं तं व्यधत्त सोऽनुपसमुह्यानुपाधायोदपिपतिषत्स नाशक्नोत्स ऽउपसमुह्योपाधायोदपतत्तस्मादप्येतर्हि वयाꣳसि यदैव पक्षाऽउपसमूहन्ते यदा पत्राणि विसृजन्तेऽथोत्पतितुꣳ शक्नुवन्ति ॥ १ ॥**

---

प्रजापतिः स्वर्गं लोकमजिगांसत्। सर्वे वै पशवः प्रजापतिः—पुरुषः, अश्वः, गौः, अविः, अजः। स एतै रूपैर्नाशक्नोत् । स एतं वयोविधमात्मानमपश्यत् । अग्निं तं व्यधत्त । सोऽनुपसमुह्यानुपाधायोदपिपतिषत् । स नाशक्नोत् । स उपसमुह्योपाधायोदपतत् । तस्मादप्येतर्हि वयांसि यदैव पक्षा उपसमूहन्ते—यदा पत्राणि विसृजन्ते, अथोत्पतितुं शक्नुवन्ति ॥ १ ॥

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

एवं पूर्वाध्यायेन महाव्रतयज्ञे अग्निचयनमहाव्रतबृहदुक्थानि सहप्रयोक्तव्यानीत्युक्त्वा तानि च सर्वैरग्निष्टोम एवाप्तुं शक्यानीत्यग्निष्टोमगतसामशस्त्राण्येव महाव्रतसामबृहदुक्थात्मना स्तुत्वा चित्याग्निं प्रजापत्यात्मना प्रस्तुत्य पञ्चेष्टकाचितीः पुरीषचितीश्च प्रजापतेर्मर्त्यामृतशरीरात्मना प्रतिपाद्य हिरण्यशकलप्रोक्षणमाहवनीयस्थापनं च हिरण्मयरूपत्वेन स्तुत्वाऽग्निचितो वयोभक्षणवर्जननियमादनन्तरमग्निचयनस्य पुनर्मृत्युजयरूपं फलं तस्याग्निकर्मणः सर्वयज्ञात्मना स्तुतिरुक्ता । अथ द्वितीयेऽध्याये चित्याग्निविषयो विचारो वक्ष्यते, तत्र प्रथमब्राह्मणे चित्याग्नेः पक्षिरूपत्वं पक्षपुच्छयोः प्रमाणं च विधीयते—प्रजापतिः स्वर्गमिति । पूर्वं ' प्रजापतिः ' ' स्वर्गम् ' ' लोकमजिगांसत् ' गन्तुमैच्छत् । इणः सनि (पा. सू. ३ । १ । ७) " सनि च " (पा. सू. २।४।४७) इति गम्यादेशे छान्दसत्वात्तङीडभावः "अज्झनगमां सनि" –(पा. सू. ६।४।१६) इति । दीर्घः । ' सर्वे ' ' पशवः ' पुरुषादिपञ्चपशवः ' प्रजापतिः ' सर्वात्मकत्वात्तस्य । यद्वा—अग्नेः पशुषु प्रवेशस्य षष्ठकाण्डे समाम्नानात् ( श. प. ६ । २ । १ । १–१२ । ), प्रजापतेश्चाग्न्यात्मकत्वादग्निरूपाणि प्रजापतिरूपाणीति कृत्वा प्रजापतिः सर्वपशुरूप इत्युक्तम् । ' स पशुरूपैर्नाशक्नोत्, ' स्वर्गं गन्तुमिति शेषः । स ' आत्मानं ' स्वर्गगमनसाधनभूतं ' वयोविधम् ' पक्षिरूपम् ' अपश्यत् ' । ' तम् ' पक्षिणम् ' अग्निम् ' चित्याग्निं व्यधत्त । पक्षपुच्छानि विधातुं केवलस्य पक्षिरूपात्मनः स्वर्गगमनसामर्थ्याभावं दर्शयति—सोऽनुपसमुह्येति । ' स ' केवलः पक्षिरूपः ' अनुपसमुह्य ' मध्यप्रदेशेऽवष्टम्भमकृत्वा ' अनुपाधाय ' कञ्चिदाधारमकृत्वा । अथ वा 'अनुपसमुह्य' पक्षाभ्यां मध्यभागमनवष्टभ्य 'अनुपाधाय' पक्षाग्राणि अविस्तीर्य ' उदपिपतिषत् ' उत्पतितुं स्वर्गं प्रति उद्गन्तुमैच्छत् । स 'नाशक्नोत्' पक्षरूपमवष्टम्भमकृत्वा न शक्तः । अथ तथा कृत्वा स्वर्गं गत इत्याह—स इति । स प्रजापतिः पक्षाभ्यां मध्यं ' समुह्य ' पक्षाग्राणि वितत्योत्पतितः ' तस्माद् ' एतस्मात् ' एतर्हि '

तं वाऽअङ्गुलिभिर्म्मिमीते । पुरुषो वै यज्ञस्तेनेदꣳ सर्वं मितं तस्यै-षाऽवमा मात्रा यदङ्गुलयस्तद्याऽस्यावमा मात्रा तामस्य तदाप्नोति तयैनं तन्मिमीते ॥ २ ॥

चतुर्व्विꣳशत्याऽङ्गुलिभिर्म्मिमीते । चतुर्व्विꣳशत्यक्षरा वै गायत्री गाय-त्रोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनं तन्मिमीते ॥ ३ ॥

स चतुरङ्गुलमेवोभयतोऽन्तरत ऽउपसमूहति । चतुरङ्गुलमुभयतो बा-ह्यतो व्युदूहति तद्यावदेवोपसमूहति तावद्व्युदूहति तन्नाहैवातिरेचयति नो कनीयः करोति तथा पुच्छस्य तथोत्तरस्य पक्षस्य ॥ ४ ॥

---

तं वा अङ्गुलिभिर्मिमीते । पुरुषो वै यज्ञः । तेनेदं सर्वं मितम् । तस्यैषाऽवमा मात्रा यदङ्गुलयः । तद्याऽस्यावमा मात्रा—तामस्य तदाप्नोति । तयैनं तन्मिमीते ॥ २ ॥

चतुर्विंशत्याऽङ्गुलिभिर्मिमीते । चतुर्विंशत्यक्षरा वै गायत्री, गायत्रोऽग्निः । यावानग्निर्यावत्यस्य मात्रा तावतैवैनं तन्मिमीते ॥ ३ ॥

स चतुरङ्गुलमेवोभयतोऽन्तरत उपसमूहति । चतुरङ्गुलमुभयतो बाह्यतो व्युदूहति । तद् यावदे-

---

इदानीं 'वयांसि' 'यदेव पक्षौ' 'उपसमूहन्ते' पक्षाभ्यां मध्यभागं समूहन्ते—पक्षमूलभागं मध्यभागसमीपे सङ्कोचयन्ति । यदा च 'पत्राणि' पक्षाग्राणि 'विसृजन्ते' विकिरन्ति तदा पक्षिणः 'उत्पतितुम्' 'शक्नु-वन्ति' ॥ १ ॥

उत्तरत्र पक्षपुच्छयोश्चतुरङ्गुलिपरिमाणेन समूहनव्यूहनादिकं विधास्यते, अतश्चित्याग्नेरङ्गुलिपरिमाणं दर्शयति—तं वा अङ्गुलिभिर्मिमीत इति । अङ्गुलिपरिमाणं प्रशंसति—पुरुषो वै यज्ञ इति । निर्वर्त्यनिर्वर्त्तकयो-रभेदोपचारेण यज्ञस्य पुरुषात्मकत्वम् । 'तेन' पुरुषेण 'इदम्' 'सर्वम्' यज्ञक्षेत्रं 'मितम्' 'तस्य' पुरुषस्य 'अवमा' 'मात्रा' परिमाणं तदेव 'यदङ्गुलयः' अङ्गुलिभ्योऽर्वाचीनं परिमाणं नास्ति अतस्ता एव 'अवमा मात्रा' अतोऽङ्गुलिमानेन चित्याग्नावपि 'ताम्' मात्रामाप्तवान् भवति ॥ २ ॥

सप्तपुरुषाष्टपुरुषादिपरिमाणानामग्नीनामङ्गुलीभिः परिमाणं न शक्यमित्यरत्निपरिमाणं विधत्ते—चतुर्विंश-त्याऽङ्गुलिभिर्मिमीत इति । वितस्तिर्द्वादशांगुलः, वितस्तिद्वयमरत्निः सा चतुर्विंशत्यंगुलपरिमाणा तया 'मिमीते' "अथ पक्षयोररत्नी उपादधाति"—( श. प. १० । २ । २ । ७ । ) इति । अरत्नैर्यजमानस्य वक्ष्यमाणत्वात्, चित्याग्निरपि उद्बाहुना पुरुषेण मातव्यः "तं वा उद्बाहुना पुरुषेण मिमीते"—( श. प. १० । २ । २ । ६ ) इति श्रुतेः । "यजमानेनोर्ध्वबाहुना प्रपदोच्छ्रितेन समस्थितेन वा"—( का. श्रौ. सू. । १६ । २२१) इति कात्यायनवचनाच्च । तादृशः पुरुषो हि पञ्चारत्निः । "अरत्निश्चतुर्विंशत्यङ्गुलि-परिमाणा" इति । अंगुलिभिर्मानमित्युक्तम् । अंगुलिगतां संख्यां प्रशंसति—चतुर्विंशत्यक्षरा वै गाय-त्रीति । अग्नेर्गायत्रत्वं षष्ठे ( श. प. । ६ । १ । १९ ) प्रतिपादितम् ॥ ३ ॥

पक्षपुच्छकरणे कश्चिद्विशेषः कात्यायनेन सूत्रितः—" पक्षपुच्छाप्ययेषु चतुरंगुलं चतुरंगुलं संकर्षति विकर्षत्यन्ते" इति (का, श्रौ. सू. १६।८।२०) । अप्ययाः सन्धयः, तदिदं विधत्ते—स चतुरंगुलमेवोभयत

( स्था ) अथ निर्णामौ पक्षयोः करोति । निर्णामौ हि व्वयसः पक्षयोर्भवतो व्वितृतीये व्वितृतीये हि व्वयसः पक्षयोर्निर्णामौ भवतोऽन्तरे व्वितृतीयेऽन्तरे हि व्वितृतीये व्वयसः पक्षयोर्निर्णामौ भवतः स चतुरङ्गुलमेव पुरस्तादुदूहति चतुरङ्गुलं पश्चादुपसमूहति तद्यावदेवोदूहति तावदुपसमूहति तन्नाहैवातिरेचयति नो कनीयः करोति ॥ ५ ॥

स तस्मिन्निर्णामे । ( म ) एकामिष्टकामुपदधाति तद्येयं व्वयसः पततो निर्णामादेका नाड्युपशेते तां तत्करोत्यथोऽइदम् ॥ ६ ॥

---

वोपसमूहति । तावद् व्युदूहति । तन्नाहैवातिरेचयति । नो कनीयः करोति । तथा पुच्छस्य । तथोत्तरस्य पक्षस्य ॥ ४ ॥

अथ निर्णामौ पक्षयोः करोति । निर्णामौ हि वयसः पक्षयोर्भवतः । वितृतीये । वितृतीये हि वयसः पक्षयोर्निर्णामौ भवतः । अन्तरे वितृतीये । अन्तरे हि वितृतीये वयसः पक्षयोर्निर्णामौ भवतः । स चतुरङ्गुलमेव पुरस्तादुदूहति । चतुरङ्गुलं पश्चादुपसमूहति । तद् यावदेवोदूहति तावदुपसमूहति । तन्नाहैवातिरेचयति । नो कनीयः करोति ॥ ५ ॥

स तस्मिन्निर्णाम एकामिष्टकामुपदधाति । तद् येयं वयसः पततो निर्णामादेका नाड्युपशेते । तां तत् करोति । अथो इदम् ॥ ६ ॥

---

इति । ' उभयतः ' पक्षस्य पार्श्वद्वये ' अन्तरतः ' चित्याग्नेर्मध्यदेशे ' चतुरंगुलम् ' ' उपसमूहति ' संकर्षति प्रवेशयतीत्यर्थः । पक्षस्य पार्श्वद्वये ' बाह्यतः ' अग्निमध्यात् बाह्यप्रदेशे चतुरङ्गुलं ' व्युदूहति ' अन्ते विवर्धयति । यावदेवोपसमूहतीत्यादेरयमर्थः—न्यूनातिरेकपरिहारेण समूहनसमानं व्युदूहनकरणं सप्तपुरुषपरिमितचित्याग्नेराधिक्यन्यूनतापरिहाराय इति । एकत्र पक्षे उक्तमर्थम् इतरपक्षे पुच्छे चातिदिशति—तथा पुच्छस्य तथोत्तरस्य पक्षस्येति ॥ ४ ॥

अथ पक्षयोर्निर्णमनं विधत्ते—अथ निर्णामौ पक्षयोः करोतीति । नितरां नामो नमनं ' निर्णामः ' चित्याग्नेः पक्षिरूपत्वात् पक्षिणः पक्षयोर्मध्ये ' निर्णामौ ' यथा तथाऽत्रेति । निर्णामप्रदेशं विधत्ते—वितृतीय इति । पक्षभागं त्रेधा विभज्य अन्तरे तृतीयभागे निर्णामकरणम् । निर्णामकरणप्रकारमाह—स चतुरङ्गुलमेवेति । एतां श्रुतिमपेक्ष्यैवापस्तम्बेनोक्तम्—" वक्रपक्षो व्यस्तपुच्छो भवति, पश्चात्प्राङुदूहति पुरस्तात्प्रत्युदूहति, एवमेव हि वयसां मध्ये पक्षनिर्णामो भवतीति विज्ञायते "—( आप. श्रौ. सू. ) इति ॥ ५ ॥

निर्णाम इष्टकोपधानं विधत्ते—स तस्मिन्निर्णाम एकामिष्टकामुपदधातीति । इष्टकोपधानं पक्षिपक्षमध्यगतनाडीत्वेन प्रशंसति—तद्येयं वयस इति । ' निर्णामे ' प्रदेशे एकेष्टकोपधानेन पक्षिरूपचित्याग्नेः पक्षमध्ये एकां नाडीमेव निहितवान् भवति ॥ ६ ॥

(मु) अथ व्वक्रौ पक्षौ करोति । व्वक्रौ हि व्वयसः पक्षौ भवतः स चतुरङ्गुलमेव पश्चादुदूहति चतुरङ्गुलं पुरस्तादुपसमूहति तद्यावदेवोदूहति तावदुपसमूहति तन्नाहैवातिरेचयति नो कनीयः करोति ॥ ७ ॥

(त्यु) अथ रूपमुत्तमं करोति । (त्यु) अत्रैष सर्व्वोऽग्निः संस्कृतस्तस्मिन्देवाऽएतद्रूपमुत्तममदधुस्तथैवास्मिन्नयमेतद्रूपमुत्तमं दधाति स सहस्रमृज्वालिखिता ऽइष्टकाः करोति सहस्रमित्यालिखिताः सहस्रमित्यालिखिताः ॥ ८ ॥

(ऽ) अथ पञ्चमीं चितिमुपधाय । त्रेधाऽग्निं व्विमिमीते स मध्यमे व्वितृतीये सहस्रमृज्वालिखिता ऽइष्टका ऽउपदधाति तद्यानीमानि व्वयसः प्रत्यञ्चि शीर्ष्ण ऽआ पुच्छाद्दजूनि लोमानि तानि तत्करोति ॥ ९ ॥

---

अथ वक्रौ पक्षौ करोति । वक्रौ हि वयसः पक्षौ भवतः । स चतुरङ्गुलमेव पश्चादुदूहति । चतुरङ्गुलं पुरस्तादुपसमूहति । तद् यावदेवोदूहति—तावदुपसमूहति । तन्नाहैवातिरेचयाति । नो कनीयः करोति ॥ ७ ॥

अथ रूपमुत्तमं करोति । अत्रैष सर्वोऽग्निः संस्कृतः । तस्मिन्देवा एतद्रूपमुत्तममदधुः । तथैवास्मिन्नयमेतद्रूपमुत्तमं दधाति । स सहस्रमृज्वालिखिता इष्टकाः करोति, सहस्रमित्यालिखिताः, सहस्रमित्यालिखिताः ॥ ८ ॥

अथ पञ्चमीं चितिमुपधाय—त्रेधाऽग्निं विमिमीते । स मध्यमे वितृतीये सहस्रमृज्वालिखिता

---

अथ पक्षयोर्वक्रतां विधत्ते—अथ वक्रौ पक्षौ करोतीति । चतुरङ्गुलमात्रं 'पश्चाद्भागे' 'उदूहति' विकर्षति, 'पुरस्ताद्' भागे चतुरङ्गुलमात्रं 'समूहति' सङ्कर्षति । एवं कृते वक्रत्वं भवति ॥ ७ ॥

अथ पञ्चेष्टका-चित्युपधानानन्तरमात्ममध्ये पक्षद्वये च ऋज्वालिखितदक्षिणावृत्तसव्यावृतः सहस्रत्रयसंख्याका इष्टका उपधेयाः, तदुपधानं प्रशंसति—अथ रूपमुत्तममिति । 'उत्तमम्' अन्तिमं रूपमग्नेः कुर्यात् । 'अत्र' अन्तिमे रूपे 'एषः' 'सर्वोऽग्निः' 'संस्कृतः' इष्टकाभिश्चितः । यथा पूर्वं 'तस्मिन्' अग्नौ 'देवाः' 'एतद्रूपम्' ऋज्वालिखितादीष्टकोपधानलक्षणमुत्तममदधुः । एवं यजमानोऽपि तादृशेष्टकोपधानेन 'उत्तमम्' रूपं कृतवान् भवति । त्रिविधा इष्टका आह—सहस्रमृज्वालिखिता इति । ऋजुलेखा अकुटिलरेखाः 'इति आलिखिताः' इतिशब्दोऽभिनये एवम् 'आलिखिताः' इत्यनेन दक्षिणावृतः । द्वितीयेत्यालिखितशब्देन सव्यावृतः । यदाहापस्तम्बः—"ऋजुलेखा दक्षिणावृतः सव्यावृतः"—इति । ताश्च प्रत्येकं सहस्रसंख्याका इति मिलित्वा सहस्रत्रयसंख्याकाः ॥ ८ ॥

तासामुपधानकालं प्रदेशं च दर्शयति—अथ पञ्चमीं चितिमिति । 'पञ्चमीम्' इष्टकाचितिम् 'उप-

( त्यु ) अथ सहस्रमित्यालिखिता दक्षिणतऽउपदधाति । तद्यानीमानि व्वयसो दक्षिणतो व्वक्राणि लोमानि तानि तत्करोति ॥ १० ॥

( त्यु ) अथ सहस्रमित्यालिखिताऽउत्तरतऽउपदधाति । तद्यानीमानि व्वयसऽउत्तरतो व्वक्राणि लोमानि तानि तत्करोति सहस्रेण सर्व्वं वै सहस्रᳬं सर्व्वेणैवास्मिन्नेतद्रूपमुत्तमं दधाति त्रिभिः सहस्रैस्त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतद्रूपमुत्तमं दधाति ॥ ११ ॥

इति प्रथमप्रपाठके षष्ठं ब्राह्मणम् ॥ १०–१–६ ॥ ( २. १. ) ॥

---

इष्टका उपदधाति । तद् यानीमानि वयसः प्रत्यञ्चि शीर्ष्ण आ पुच्छादृजूनि लोमानि–तानि तत्करोति ॥ ९ ॥

अथ सहस्रमित्यालिखिता दक्षिणत उपदधाति । तद् यानीमानि वयसो दक्षिणतो वक्राणि लोमानि–तानि तत्करोति ॥ १० ॥

अथ सहस्रमित्यालिखिता उत्तरत उपदधाति । तद् यानीमानि वयस उत्तरतो वक्राणि लोमानि तानि तत्करोति । सहस्रेण । सर्वं वै सहस्रम् । सर्वेणैवास्मिन्नेतद्रूपमुत्तमं दधाति । त्रिभिः सहस्रैः । त्रिवृदग्निः । यावानग्निर्यावत्यस्य मात्रा–तावतैवास्मिन्नेतद्रूपमुत्तमं दधाति ॥ ११ ॥

---

धाय ' ' अग्निं ' सप्तपुरुषसम्मितं ' त्रेधा ' विभज्य ' मध्यमे ' तृतीयभागे ऋजुलेखा इष्टका उपदध्यात् । एतासामुपधानेन पक्षिरूपस्य चित्याग्नेः शीर्षमारभ्य पुच्छपर्यन्तं प्रत्यञ्चि प्रतिलोमानि ऋजूनि लोमानि कृतवान्भवति । लोके हि पक्षिणां लोमानि शिरःप्रभृतिपुच्छपर्यन्तं प्रत्यञ्चि प्रतिलोमानि ऋजूनि भवन्ति तद्वत् ॥ ९ ॥

अथ सहस्रमित्यालिखिता इति । ' दक्षिणतः ' दक्षिणपक्षे ' इत्यालिखिता ' दक्षिणावृत इष्टकाः । ' उत्तरतः ' उत्तरस्मिन् पक्षे ' इत्यालिखिताः ' सव्यावृत इष्टका उपदध्यात् । यथा लोके पक्षिणां पार्श्वद्वयवर्तीनि ' लोमानि वक्राणि ' । एवं दक्षिणसव्यावृदिष्टकोपधानेन चित्याग्नेः पार्श्वद्वये वक्राणि लोमानि निहितवान् भवतीति । इष्टकागतां त्रित्वसंख्यामनूद्य प्रशंसति–त्रिभिः सहस्रैस्त्रिवृदग्निरिति । अग्नेस्त्रिवृत्त्वं षष्ठे प्रतिपादितम् । " अष्टावग्निरूपाणि कुमारो नवमः सैवाग्नेस्त्रिवृत्ता "–( श. प. ब्रा. का. ६ । १ । ३ । १.८ ) इति । ऋज्वालिखितादिसहस्रत्रयेष्टकोपधानं तत्स्थानविशेषं च संग्रहेणासूत्रयत्–कात्यायनः–सुपर्णचित्याग्निं प्रकृत्य " पञ्चम्यामन्तरा विराजः पुच्छसक्त्योः पादलोकावष्टौ च मध्यत आपूर्वान्तात् स मध्यमो भागस्तस्मिन्नृज्वालिखिता दक्षिणोत्तरयोर्वक्रालिखिताः "–( का. श्रौ. सू. इष्टकापूरणपरि. ७ । १–२ ) इति ॥ १० ॥ ११ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये दशमकाण्डे द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥ ( १०–२–१ ) ॥

यान्वै तान्त्सप्त पुरुषान् । ( ने ) एकं पुरुषमकुर्व्वन्त्स प्रजापतिरभवत्स प्रजा ऽअसृजत स प्रजाः सृष्ट्वोर्ध्व ऽउदक्रामत्स ऽएतं लोकमगच्छद्यत्रैष ऽएतत्तपति नो ह तर्ह्यन्य ऽएतस्मादत्र यज्ञिय ऽआस तं देवा यज्ञेनैव यष्टुमध्रियन्त ॥ १ ॥

तस्मादेतदृषिणाऽभ्यनूक्तम् । यज्ञेन यज्ञमयजन्त देवाऽइति यज्ञेन हि तं यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्निति ते हि धर्माः प्रथमेऽक्रियन्त ते ह नाकं महिमानः सचन्तेति स्वर्गो वै लोको नाको देवा महिमानस्ते देवाः स्वर्गं लोकꣳ सचन्त ये तं यज्ञमयजन्नित्येतत् ॥ २ ॥

---

यान्वै तान्त्सप्त पुरुषानेकं पुरुषमकुर्वन्—स प्रजापतिरभवत् । स प्रजा असृजत । स प्रजाः सृष्ट्वोर्ध्व उदक्रामत् । स एतं लोकमगच्छत्—यत्रैष एतत्तपति । नो ह तर्ह्यन्य एतस्मादत्र यज्ञिय आस । तं देवा यज्ञेनैव यष्टुमध्रियन्त ॥ १ ॥

तस्मादेतदृषिणाऽभ्यनूक्तम् । "यज्ञेन यज्ञमयजन्त देवाः"—इति । यज्ञेन हि तं यज्ञमयजन्त देवाः । "तानि धर्म्माणि प्रथमान्यासन्"—इति । ते हि धर्माः प्रथमेऽक्रियन्त । "ते ह नाकं महिमानः सचन्त"—इति । स्वर्गो वै लोको नाकः । देवा महिमानः । ते देवाः स्वर्गं लोकं सचन्त—ये तं यज्ञमयजन् इत्येतत् ॥ २ ॥

---

द्वितीये ब्राह्मणे चित्याग्नेः सप्तपुरुषप्रमाणतां पक्षपुच्छयोश्चारत्निवितस्तिप्रमाणतां विधत्ते—यान्वै तान्सप्त पुरुषानिति । 'वै' शब्दः प्रसिद्धिद्योतकः । यच्छब्दो विप्रकृष्टवचनः, तच्छब्दः प्रकृतवचनः, 'यांस्तान्' 'सप्त पुरुषान्' 'एकं पुरुषमकुर्वन्' 'स' एव पुरुषः 'प्रजापतिरभवत्' इति षष्ठकाण्डादौ सप्त प्राणाः स्वस्वाश्रयान्नानादेहानाश्रित्य सङ्घसाध्यव्यापारासमर्थाः सन्तः सर्वेन्द्रियाधारमेकं पुरुषमकुर्वन्नित्यभिहितम्—"न वा इत्थं संतः शक्ष्यामः प्रजनयितुमिमान् सप्त पुरुषान् एकं पुरुषं करवामेति त एतान् सप्त पुरुषानेकं पुरुषमकुर्वन्"—( श. प. ६।१।१।३ ) इति । "स एव पुरुषः प्रजापतिरभवत्"—( श. प. ६।१।१।५ ) इति च । तथाविधस्य प्रजापतेः प्रतिनिधिः सप्तपुरुषसम्मितः प्राकृतोऽग्निरित्यमुमर्थं मन्त्रसंवादपुरःसरं प्रतिपादयति—स प्रजा असृजतेति । 'सः' सप्तपुरुषात्मकः प्रजापतिः 'प्रजाः' सृष्ट्वा कृतकर्त्तव्यः 'ऊर्ध्वः' सन् 'उदक्रामत्' 'सूर्यलोकमगच्छत्' । 'अत्र' लोके 'तर्हि' तदा 'एतस्मात् सवितुः 'अन्यो' 'यज्ञियो' यज्ञार्हो यष्टव्यो 'नास' न बभूव । 'तम्' यज्ञियं सवितारं 'यज्ञेन' अग्निकर्मणा देवाः' 'यष्टुमध्रियन्त' निश्चितवन्तः । यष्टव्यः प्रजापतिस्तु सूर्यलोकं गतः । अतस्तत्र सूर्य एव यष्टव्य इति निश्चितवन्त इत्यनेन चयनस्य सूर्यलोकप्राप्तिः फलमिति सूचितं भवति ॥ १ ॥

यज्ञार्हस्य यज्ञेन यजनकरणे मन्त्रसंवादं दर्शयति—तस्मादेतदृषिणाऽभ्यनूक्तमिति । ऋषिर्मन्त्रः । देवाः 'यज्ञेन' चयनरूपेण 'यज्ञम्' यष्टव्यम् । यजेः कर्मणि 'यजयाचयतविच्छप्रच्छरक्षो नङ्'—( पा. सू.

( ग्रु ) युत्र पूर्व्वे साध्याः सुन्ति देवाऽ इति । प्राणा वै साध्या देवास्तुऽ-एतमुग्रऽएवमसाधयन्नेतुदेव बुभूषन्तस्तुऽ उऽ एवाप्येतुर्हि साधयन्ति पुश्चे-दुमन्युदभवद्युजत्रमुमर्त्यस्य भुवनस्य भूनेति पश्चा हैवेदुमन्युद्यज्ञियमास यत्किञ्चामृतम् ॥ ३ ॥

( ण्डँ ) सुपर्णोऽअङ्ग सवितुर्गरुत्मान् । ( न्पू ) पूर्व्वो जातः सऽ उऽ-अस्यानु धर्मेति प्रजापतिर्वै सुपर्णो गरुत्मानेष सवितैतस्य प्रजापतिरनु-धर्ममित्येतत् ॥ ४ ॥

---

" यत्र पूर्वे साध्याः सन्ति देवाः "–( वा. सं. ३१ । १६ ) इति । प्राणा वै साध्या देवाः । त एतमग्र एवमसाधयन्–एतदेव बुभूषन्तः । त उ एवाप्येतर्हि साधयन्ति । " पश्चेद-मन्यदभवद् यजत्रममर्त्यस्य भुवनस्य भूना "–इति । पश्चा हैवेदमन्यद्यज्ञियमास–यत्कि-ञ्चामृतम् ॥ ३ ॥

" सुपर्णो अङ्ग सवितुर्गरुत्मान् पूर्वो जातः स उ अस्मानु धर्म "–इति । प्रजापतिर्वै सुपर्णो गरुत्मान् । एष सविता । एतस्य प्रजापतिरनुधर्ममित्येतत् ॥ ४ ॥

---

३।३।८३) ' तम् ' सवितारम् 'अयजन्त' ततः 'प्रथमानि' आदिमानि 'तानि' 'धर्माणि' कर्माणि 'आसन्,' देवैः सम्पादितानि बभूवुः । ' महिमानो ' महत्त्वयुक्ताः ' ते ' देवाः ' नाकम् ' दुःखरहितं स्वर्गलोकं ' सचन्त ' सम्भजन्ते । यत्र लोके पूर्वे चिरन्तनाः साध्या देवाः प्रजापतेः स्रष्टारः सन्ति । मन्त्रं प्रतिपादमनूद्य व्याचष्टे--यज्ञेन हि तं यज्ञमिति । ये तं यज्ञमयजन्नित्येतदिति । उक्तार्थस्य तात्पर्यकथनम् । साध्यपदस्यार्थ-माह–प्राणा वै साध्या देवा इति । ' अग्रे ' पूर्वं ते ' प्राणाः ' ' एतम् ' एव प्रजापतिम् ' असाधयन् ' " सप्त प्राणा एकं पुरुषमकुर्वन् "–( श. प. ६।१।१।३ ) इति प्रागुक्तम् । किमर्थमेवं साधितवन्त इति तत्राह–एतदेव बुभूषन्त इति । प्राणाः स्वयमपि प्रजापत्यात्मना भवितुमिच्छन्तः, अतः ' एतर्हि ' इदानीमपि ' त एव ' प्राणाः ' साधयन्ति ' कार्यम् । प्राणवतैव हि कार्यं साध्यते । अनेन मन्त्रेणैतदुक्तं भवति–सूर्य-लोकं गतं प्रजापतिं लब्धुं सूर्यं यष्टुमभ्रियन्त इति । तस्य प्रजापतेः कथं लब्धिरित्याशङ्कां परिहर्तुं यत्र साध्याः सन्तीति प्राणरूपकारणसद्भावः प्रदर्शितः । कारणे विद्यमाने कार्यमुत्पद्यत इत्यभिप्रायः । एवं सूर्यो यज्ञरूप-प्रजापत्यात्मना यष्टव्य इत्युक्तम् । सृष्ट्यादौ प्रजापतिव्यतिरिक्तस्य यष्टव्यदेवजातस्य विरहात्सूर्य एव पक्ष्यात्मक-प्रजापतिरूपेण यष्टव्य इत्यमुमर्थं च मन्त्रान्तरेण प्रतिपादयति–पश्चेदमन्यदभवद्यजत्रमिति । अयं दाशत-य्याम् " सविता यन्त्रैः पृथिवीमरम्णाद् "–( ऋ. सं. ८ । ८ । ७ । १ ) इति सावित्रसूक्ते समाम्नातो मन्त्रः । अयमर्थः–पश्चाद् देवानां प्रजापतिमुद्दिश्य यागादनन्तरम् अमर्त्यस्य मरणधर्मरहितस्य भुवनस्य सर्व-लोकाधिष्ठातुः, भूना इमनिचो मकारस्य लोपः । ' भूम्ना ' बहुभावेन ' अन्यद् ' इतरत् ' यजत्रम् ' यष्टव्य-मिन्द्रादिदेवतान्तरमभवदुत्पन्नम् । सवितृसकाशात् पूर्वोत्पन्नत्वं समर्थितम्, अतोऽन्यो यज्ञियस्तदानीं नासीदिति भावः । पूर्वार्धगतं यजत्रपदं व्याचष्टे–पश्चा हैवेदमन्यद्यज्ञियमिति ॥ २ ॥ ३ ॥

' सुपर्णः ' शोभनपतनः ' गरुत्मान् ' पक्षवान् चित्याग्न्यात्मको विराड्रूपः प्रजापतिः सवितुः सर्वप्रेरका-

(त्स) स वै सप्तपुरुषो भवति । सप्तपुरुषो ह्ययं पुरुषो यच्चत्वार ऽआत्मा त्रयः पक्षपुच्छानि चत्वारो हि तस्य पुरुषस्यात्मा त्रयः पक्षपुच्छानि ॥ ५ ॥

तं वाऽउद्बाहुना पुरुषेण मिमीते । पुरुषो वै यज्ञस्तेनेदꣳ सर्वं मितं तस्यैषा परमा मात्रा यदुद्बाहुस्तद्याऽस्य परमा मात्रा तामस्य तदाप्नोति तयैनं तन्मिमीते तत्रोप यत्प्रपदेनाभ्युच्छ्रितो भवति तत्परिश्रिद्भिराप्नोति तस्माद् बाह्येनैव लेखां परिश्रिद्भ्यः खनेत् ॥ ६ ॥

( द ) अथ पक्षयोररत्नीऽउपादधाति । पक्षयोस्तद्वीर्यं दधाति बाहू वै पक्षौ बाहुभ्याम् वाऽअन्नमद्यतेऽन्नायैव तमवकाशं करोति तद्यत्पक्षयोररत्नीऽउपादधात्यरत्निमात्राद्ध्यन्नमद्यते ॥ ७ ॥

---

स वै सप्तपुरुषो भवति । सप्तपुरुषो ह्ययं पुरुषः । यत् चत्वार आत्मा, त्रयः पक्षपुच्छानि । चत्वारो हि तस्य पुरुषस्यात्मा, त्रयः पक्षपुच्छानि ॥ ५ ॥

तं वा उद्बाहुना पुरुषेण मिमीते । पुरुषो वै यज्ञः । तेनेदं सर्वं मितम् । तस्यैषा परमा मात्रा—यदुद्बाहुः । तद् याऽस्य परमा मात्रा—तामस्य तदाप्नोति । तयैनं तन्मिमीते । तत्रोप यत्प्रपदेनाभ्युच्छ्रितो भवति—तत्परिश्रिद्भिराप्नोति । तस्माद् बाह्येनैव लेखां परिश्रिद्भ्यः खनेत् ॥ ६ ॥

अथ पक्षयोररत्नी उपादधाति—पक्षयोस्तद्वीर्यं दधाति । बाहू वै पक्षौ । बाहुभ्याम् वाऽअन्नमद्यते । अन्नायैव तमवकाशं करोति । तद् यत्पक्षयोररत्नीऽउपादधाति । अरत्निमात्राद्ध्यन्नमद्यते ॥ ७ ॥

---

हिरण्यात्मकात् सूर्यात् ' पूर्वो ' ' जातः ' प्रथममुत्पन्नः । 'सः' खलु ' गरुत्मान् अस्य ' सवितुः ' अनुधर्म ' धारणमनुकरोति तदात्मको भवतीति यावत् । उत्तरार्धस्य तात्पर्यमाह—प्रजापतिर्वै सुपर्ण इति ॥ ४ ॥

तस्य सप्तपुरुषात्मकत्वमाह—स वा इति । ' सः ' सुपर्णरूपः प्रजापतिः सप्तपुरुषसम्मितो भवेत् । हि यस्माद् ' अयम् ' ' पुरुषः ' सप्तभिः पुरुषैर्निर्मितः । तानेव पुरुषानाह—यच्चत्वार आत्मा त्रयः पक्षपुच्छानीति । मध्यभागः चतुःपुरुषप्रमाणः । दक्षिणः पक्ष एकपुरुषप्रमाणः । तथा पुच्छम् । तथोत्तरः पक्ष इत्यर्थः ॥ ५ ॥

पुरुषप्रमाणं विधत्ते—तं वा उद्बाहुना पुरुषेणेति । समस्थितेन यजमानेनोर्ध्वबाहुना चित्याग्नेर्मानं कुर्यादित्यर्थः । उद्बाहुत्वं प्रशंसति—पुरुषो वै यज्ञ इति । पुरुषस्योर्ध्वबाहुत्वमेव ' परमा मात्रा ' प्रमाणम् । ' तेन ' मानेन तत्प्रमाणमग्नावाप्तवान् भवति । यथोर्ध्वबाहुत्वं प्रमाणम्, एवं प्रपदेनोच्छ्रितत्वमपि प्रमाणम् । तेनाप्यग्निर्मातव्य इत्याशङ्क्य तत्प्रमाणमन्यतः सिद्धमिति दर्शयति—तत्रोप यत्प्रपदेनेति । ' प्रपदेन ' पादाग्रेणावस्थानादुन्नतो भवतीति यत्प्रमाणमस्ति ' तत्परिश्रिद्भिः ' शर्कराभिराप्तवान् भवति । परिश्रिदर्थः सूत्रकृतोक्तः । " ऊर्ध्वाः शर्कराः खाते " ( का. श्रौ. सू. १६ । २९४ ) इति । तस्माद् बाह्येनेति । यस्मात्परिश्रितः चित्याग्निक्षेत्रमध्यपातिन्यः अतः ' परिश्रिद्भ्यो ' बाह्यतः ' लेखां खनेत् ' ॥ ६ ॥

" चित्याग्निः सार्द्धसप्तपुरुषप्रमाणः "—इत्यापस्तम्बवचनम् । अत्र सप्तपुरुषप्रमाणमेवोच्यते—अधिकमर्धपुरुष-

( तेऽथ ) अथ पुच्छे वितस्तिमुपादधाति । प्रतिष्ठायां तद्वीर्यं दधाति प्रतिष्ठा वै पुच्छँ हस्तो वितस्तिर्हस्तेन वाऽअन्नमद्यतेऽन्नायैव तमवकाशं करोति तद्यत्पुच्छे वितस्तिमुपादधात्यन्नऽएवैनं तत्प्रतिष्ठापयति तद्यत्तत्र कनीय ऽउपादधात्यन्ने ह्येवैनं तत्प्रतिष्ठापयत्यथोऽएतावद्वाऽइदं मितं भवत्येतावदिदं तद्यदेवं मिमीतऽएतस्यैवाप्त्यै ॥ ८ ॥

इति प्रथमप्रपाठके सप्तमं ब्राह्मणम् ॥ १० । १ । ७ ॥ ( २–२ )

या वाऽइयं वेदिः सप्तविधस्य । ( स्यै ) एषा वेदेर्मात्रा स देवयजनमध्यवसाय पूर्वया द्वारा पत्नीशालं प्रपद्य गार्हपत्यायोद्धत्यावोक्षति गार्ह-

---

अथ पुच्छे वितस्तिमुपादधाति–प्रतिष्ठायां तद्वीर्यं दधाति । प्रतिष्ठा वै पुच्छम्, हस्तो वितस्तिः । हस्तेन वा अन्नमद्यते । अन्नायैव तमवकाशं करोति । तद् यत्पुच्छे वितस्तिमुपादधाति–अन्न एवैनं तत्प्रतिष्ठापयाति । तद् यत्तत्र कनीय उपादधाति–अन्ने ह्येवैनं तत्प्रतिष्ठापयति । अथो एतावद्वा इदं मितं भवति । एतावदिदम् । तद् यदेवं मिमीते–एतस्यैवाप्त्यै ॥ ८ ॥

या वा इयं वेदिः सप्तविधस्य–एषा वेदेर्मात्रा । स देवयजनमध्यवसाय पूर्वया द्वारा पत्नीशालं

---

प्रमाणं नोक्तमिति तद्विधत्ते–अथ पक्षयोररत्नी इति । "पुरुषः पञ्चारत्निकः"–( का. श्रौ. सू. परिशिष्ट शुल्वसूत्रे ८२ ) इत्युक्तम् । पक्षद्वयेऽरत्निद्वयं पुच्छे वितस्तिरिति वक्ष्यते । उभयं मिलित्वा सार्द्धमरत्निद्वयमर्द्धपुरुषप्रमाणं लभ्यते । पक्षौ अरत्नी च प्रशंसति–बाहू वै पक्षाविति । यतः 'पक्षौ' बाहुस्थानीयौ, 'बाहुभ्यां' हि 'अन्नमद्यते' अतः पक्षकरणेन आद्यस्यान्नस्यावकाशं कृतवान् भवति । बाह्वोरभावे आद्यान्नस्यावकाश एव नास्ति केनाश्नीयादिति । यतो 'अरत्निमात्रात्' बाह्वोः 'अन्नमद्यते' अतो बाहुरूपयोः पक्षयोररत्निप्रमाणोपधानं युक्तमित्यर्थः ॥ ७ ॥

पुच्छे वितस्तिप्रमाणोपधानं विधत्ते–अथ पुच्छे वितस्तिमिति । प्रतिष्ठा वै पुच्छमिति । हस्तो वितस्तिरिति । मणिबन्धादारभ्य साङ्गुलिरप्रकरो 'वितस्तिः' तेन हि अन्नमद्यते, अतः पुच्छकरणेन आद्यान्नस्यावकाशं कृतवान् भवति । तत्र पुच्छे वितस्तिकरणेन 'एनं' यजमानमन्ने प्रतिष्ठितं करोति । पक्षप्रमाणात् न्यूनप्रमाणकरणं प्रतिष्ठाहेतुत्वेन प्रशंसति–तद्यत्तत्र कनीय इति । वासस्थानमल्पं भोग्यं बहु चेति युक्तम् । स्थानमधिकं भोग्यमल्पं न युक्तमित्यर्थः । अरत्निवितस्तिप्रमाणं सम्भूय स्तौति–अथो एतावद्वा इदं मितमिति । 'इदम्' पक्षक्षेत्रम् 'एतावन्मितम्' अरत्निभ्याम्, 'एतावदिदम्' पुच्छक्षेत्रं वितस्त्या, 'एतस्यैव' पक्षपुच्छक्षेत्रस्यैव 'आप्त्यै' प्राप्तये एवं मानं कर्तव्यमित्यर्थः ॥ ८ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये दशमकाण्डे द्वितीयेऽध्याये द्वितीयं ब्राह्मणम् ॥ ( १०–२–२ ) ॥

प्राकृतस्य सप्तविधस्याग्नेः वैकृतेष्वन्त्यस्यैकशतविधस्याग्नेश्च वेदिमानं तृतीये ब्राह्मणे विधत्ते–या वा इयं वेदिः

पत्यस्योद्धतात्सप्त प्राचः प्रक्रमान्प्रक्रामति ततः प्राञ्चं व्यामं विमिमीते तस्य मध्यऽआहवनीयायोद्धत्यावोक्षति पूर्वार्धाद्व्यामस्य त्रीन्प्राचः प्रक्रमान्प्रक्रामति स वेद्यन्तः ॥ १ ॥ ( शतम् ५२०० ) ॥

( स्ते ) ते वाऽएते । व्यामैकादशाः प्रक्रमा ऽअन्तरा वेद्यन्तं च गार्हपत्यं चैकादशाक्षरा त्रिष्टुब्वज्रस्त्रिष्टुब्वीर्यं त्रिष्टुब्वज्रेणैवैतद्वीर्येण यजमानः पुरस्ताद्यज्ञमुखाद्रक्षाᳪंसि नाष्ट्रा ऽअपहन्ति ॥ २ ॥

---

प्रपद्य गार्हपत्यायोद्धत्यावोक्षति । गार्हपत्यस्योद्धतात्सप्त प्राचः प्रक्रमान् प्रक्रामति । ततः प्राञ्चं व्यामं विमिमीते । तस्य मध्य आहवनीयायोद्धत्यावोक्षति । पूर्वार्धाद्व्यामस्य त्रीन्प्राचः प्रक्रमान्प्रक्रामति । स वेद्यन्तः ॥ १ ॥

ते वा एते व्यामैकादशाः प्रक्रमाः—अन्तरा वेद्यन्तं च गार्हपत्यं च । एकादशाक्षरा त्रिष्टुप् । वज्रस्त्रिष्टुप् । वीर्यं त्रिष्टुप् । वज्रेणैवैतद्वीर्येण यजमानः पुरस्ताद्यज्ञमुखाद्रक्षांसि नाष्ट्रा अपहन्ति ॥२॥

---

सप्तविधस्यैषा वेदेर्मात्रेति । ' या इयं वेदिः ' सौमिकी प्रसिद्धा सा सप्तविधस्याग्नेः ' मात्रा ' भवतीत्यर्थः । वेदिमानस्य कालं कात्यायनः सूत्रितवान्—" दीक्षाणामुत्तमेऽहनि वेद्यग्निमानम् "—( का. श्रौ. सू. १६ । २२७ ) इति । महावेदेर्मानं विधातुं प्राचीनवंशगतवेदेर्मानं सेतिकर्तव्यताकं विधत्ते—स देवयजनमध्यवसायेति । ' सः ' अध्वर्युः ' देवयजनं ' क्षेत्रं निश्चित्य पूर्वद्वारेण ' पत्नीशालम् ' प्राग्वंशं प्रविश्य गार्हपत्यार्थमुद्धत्य खात्वा तत्क्षेत्रम् ' अवोक्षति ' जलेन सिञ्चेत् । गार्हपत्यस्थानं कल्पयेदित्यर्थः । गार्हपत्यार्थं कल्पितात् प्रदेशात् ' सप्त प्रक्रमान् ' ' प्राचः ' प्रागायतान् गृह्णीयात् । प्रक्रमलक्षणमुक्तं सूत्रकृता—" पञ्चारत्निः पुरुषो दशपदो द्वादशांगुलं पदं प्रक्रमस्त्रिपदः "—( का. श्रौ.सू. १६।१४९ ) इति । सप्त प्रक्रमा गार्हपत्याहवनीययोर्मध्यमित्यर्थः । ' ततः ' सप्तप्रक्रमेभ्यः ' प्राञ्चम् ' ' व्यामम ' ' विमिमीते ' । व्यामश्चतुररत्निप्रमाणः । ' तस्य ' व्यामस्य ' मध्ये ' आहवनीयस्थानं कल्पयेत् । एष आहवनीयो वक्ष्यमाणायाश्चयनमहावेदेर्गार्हपत्यो भवति । अत एव कात्यायनः—" उख्यस्थानेऽर्द्धव्यामेन गार्हपत्यस्य मण्डलं परिलिखति "—( का. श्रौ. सू. १६ । २२८ ) इति । आपस्तम्बोऽपि—" एतच्छुत्यपेक्षया व्याममात्रेण गार्हपत्यस्य चयनम् "—( आ. श्रौ. सू. ) इत्युक्तवान् । " व्याममात्री भवतीति गार्हपत्यचितेर्विज्ञायते " इति । गार्हपत्यचित्यर्थं कल्पितस्य व्यामस्य पूर्वार्द्धात् प्रदेशादारभ्य ' त्रीन् प्रक्रमान् प्राचः ' क्रमेत् स वेद्यन्तः सप्तक्रमत्रयान्तःप्रदेशो महावेदेः पश्चिमभागस्यान्त इत्यर्थः ॥ १ ॥

पूर्वं गार्हपत्यादारभ्य प्राञ्चः सप्त प्रक्रमाः गार्हपत्याद्भविष्यत आहवनीयस्य पूर्वार्द्धात् प्राञ्चस्त्रयः प्रक्रमास्ते दश व्याम एकादशस्तामेकादशसंख्यामनूद्य त्रिष्टुबात्मना स्तौति—ते वा एते व्यामैकादशाः प्रक्रमा इति । ' वेद्यन्तं च गार्हपत्यञ्च अन्तरा ' तयोर्मध्ये " अन्तराऽन्तरेणयुक्ते "—( पा. सू. २ । ३ । ४ ) इति द्वितीया । ' वज्रस्त्रिष्टुब् ' इत्यस्य विवरणं वीर्यं त्रिष्टुबिति । इन्द्रत्रिष्टुभोः सहोत्पन्नत्वात्तस्या वीर्यत्वम् । एवं व्यामैकादशप्रक्रमकरणेन यजमानो वीर्यात्मना ' वज्रेण ' पूर्वं ' यज्ञमुखात् ' नाशकानि रक्षांसि विनाशितवान् भवति ॥ २ ॥

सैषा व्वेदेर्योनिः । ( रे ) एतस्यै वै योनेर्देवा व्वेदिं प्राजनयन्नथ यऽएष व्यामः सा गार्हपत्यस्य योनिरेतस्यै वै योनेर्देवा गार्हपत्यं प्राजनयन्गार्हपत्यादाहवनीयम् ॥ ३ ॥

( प्ँ ) स व्वेद्यन्तात् । ( त्व ) षट्त्रिꣳशत्प्रक्रमां प्राचीं व्वेदिं व्विमिमीते त्रिꣳशतं पश्चात्तिरश्चीं चतुर्व्विꣳशतिं पुरस्तात्तन्नवतिः सैषा नवतिप्रक्रमा व्वेदिस्तस्याꣳ सप्तविधमग्निं व्विदधाति ॥ ४ ॥

तदाहुः । कथमेष सप्तव्विध ऽएतया व्वेद्या सम्पद्यतऽइति दश वाऽइमे पुरुषे प्राणाश्चत्वार्यङ्गान्यात्मा पञ्चदश ऽएवं द्वितीयऽएवं तृतीये षट्सु पुरुषेषु नवतिरथैकः पुरुषोऽत्येति पाङ्क्तो वै पुरुषो लोम त्वङ्माꣳसमस्थि मज्जा पाङ्क्तोऽइयं व्वेदिश्चतस्रो दिश ऽआत्मा पञ्चम्येवमेष सप्तविध ऽएतया व्वेद्या सम्पद्यते ॥ ५ ॥

---

सैषा वेदेर्योनिः । एतस्यै वै योनेर्देवा वेदिं प्राजनयन् । अथ य एष व्यामः—सा गार्हपत्यस्य योनिः । एतस्यै वै योनेर्देवा गार्हपत्यं प्राजनयन् । गार्हपत्यादाहवनीयम् ॥ ३ ॥

स वेद्यन्तात्षट्त्रिंशत्प्रक्रमां प्राचीं वेदिं विमिमीते । त्रिंशतं पश्चात्तिरश्चीम् । चतुर्विंशतिं पुरस्तात् । तन्नवतिः । सैषा नवतिप्रक्रमा वेदिः । तस्यां सप्तविधमग्निं विदधाति ॥ ४ ॥

तदाहुः—कथमेष सप्तविध एतया वेद्या सम्पद्यत इति । दश वा इमे पुरुषे प्राणाः, चत्वार्यङ्गानि, आत्मा पञ्चदशः । एवं द्वितीये । एवं तृतीये । षट्सु पुरुषेषु नवतिः । अथैकः पुरुषोऽत्येति । पाङ्क्तो

---

व्यामैकादशप्रक्रमकृतां वेदिं महावेदेर्योनित्वेन प्रशंसति—सैषा वेदेर्योनिरिति । 'एतस्याः' दशप्रक्रमपरिमिताया वेदेः सकाशान्महावेदिं 'देवाः' जनितवन्तः । 'यो व्यामः' स 'गार्हपत्यस्य योनिः' 'एतस्याः' व्यामरूपाया योनेर्गार्हपत्यचित्यात्मकमग्निं जनितवन्तः । गार्हपत्यादाहवनीयं महावेदिगतमाहवनीयचित्यात्मकम् 'अजनयन्' ॥ ३ ॥

महावेदेर्मानं विधत्ते—स वेद्यन्तात्षट्त्रिंशत्प्रक्रमां प्राचीं वेदिमिति । पूर्वोक्तात् 'वेद्यन्तात्' प्रागायतां 'षट्त्रिंशत्संख्याकप्रक्रमपरिमितां 'वेदिम्' । 'मिमीते' 'पश्चाद्भागे' 'तिरश्चीम्' । दक्षिणोत्तरगतान् 'त्रिंशतं' प्रक्रमान् । वेदेः पूर्वभागे दक्षिणोत्तरगतचतुर्विंशतिसंख्याकान् प्रक्रमान् मिमीते प्राञ्चः षट्त्रिंशत्प्रक्रमाः, पश्चिमभागे तिर्यञ्चः त्रिंशत्, 'पुरस्तात्' तिर्यञ्चः चतुर्विंशतिः, मिलित्वा 'नवतिः' 'सम्पद्यते' । 'तस्यां' नवतिप्रक्रमपरिमितायां वेद्यां 'सप्तविधम्' सप्तपुरुषप्रमाणम् 'अग्निम्' 'विदधाति' इष्टकाभिः कुर्यात् ॥ ४ ॥

नवतिप्रक्रमवेदेः सप्तविधाग्नेश्च सङ्ख्यासम्पत्तिं वेदवादिविचारमुखेन दर्शयति—तदाहुः कथमेष सप्तविध

तद्धैके । (क॰ ८) उत्तरा विधा विधास्यन्तऽएतांश्च प्रक्रमानेतं च व्याममनुवर्धयन्ति योनिमनुवर्धयामऽ इति न तथा कुर्यान्न वै जातं गर्भं योनिरनुवर्धते यावद्वाव योनावन्तर्गर्भो भवति तावदेव योनिर्वर्धतऽएतावत्यु वाऽअत्र गर्भस्य वृद्धिः ॥ ६ ॥

---

वै पुरुषः—लोम, त्वग्, मांसम्, अस्थि, मज्जा । पाङ्क्ता उ इयं वेदिः—चतस्रो दिशः, आत्मा पञ्चमी । एवमेष सप्तविध एतया वेद्या संपद्यते ॥ ५ ॥

तद्धैके—उत्तरा विधा विधास्यन्त एतांश्च प्रक्रमान्, एतं च व्याममनुवर्धयन्ति—योनिमनुवर्धयाम इति । न तथा कुर्यात् । न वै जातं गर्भं योनिरनुवर्धते । यावद्वाव योनावन्तर्गर्भो भवति । तावदेव योनिर्वर्धते । एतावत्यु वा अत्र गर्भस्य वृद्धिः ॥ ६ ॥

---

एतया वेद्या सम्पद्यत इति । एकस्मिन् पुरुषे सप्त शीर्षण्याः, द्वौवांश्चौ, नाभिर्दशमी, ' चत्वार्यङ्गानि ', बाहुद्वयम्, पादद्वयम्, ' आत्मा ' मध्यदेहः पञ्चदशसङ्ख्यापूरक इति पञ्चदशसङ्ख्याऽस्ति । एवं द्वितीयतृतीयादिषु । एवं ' षट्सु पुरुषेषु ' नवतिसंख्या सम्पद्यते । अथ 'एकः' ' पुरुषोऽत्येति ' नवतिसङ्ख्यायाः अतिरिक्तो भवति । तस्यापि वेदिसङ्ख्यायाः सम्पत्तिरुच्यते—पाङ्क्तो वै पुरुष इति । ' पुरुषः पाङ्क्तः ' पञ्चसङ्ख्यायुक्तः । पंक्तिः पंचपदेति पांक्तवचनेन पंचसंख्यायोग इति । ' लोम त्वङ्मांसमस्थि मज्जा ' इति पुरुषे पञ्च विद्यन्ते । वेदिरपि पाङ्क्ता पञ्चसङ्ख्यायुक्तैव, वेदेः ' चतस्रो दिशः ' पूर्वोत्तरे दक्षिणोत्तरे इति चतुःसङ्ख्या, ' आत्मा ' वेदिः स्वयमेव ' पञ्चमी, ' अतो नवतिप्रक्रमायाः महावेदेः सङ्ख्यया सप्तपुरुषविधोऽग्निः सम्पन्नो भवति॥ ५ ॥

अथ यथा सप्तविधस्य प्राकृताग्नेर्व्यामैकादशाः प्रक्रमाः एवमष्टविधनवविधादिपुरुषप्रमाणानामेकशतविधपर्यन्तानामग्नीनां व्यामैकादशप्रक्रमा प्राकृती वेदिः किं पुरुषसङ्ख्यया वर्द्धयितव्या आहोस्विन्न वेति संशयं व्युदसितुं पूर्वपक्षयति—तद्धैक उत्तरा विधा विधास्यन्त इति । ' उत्तरा विधाः ' अष्टविधाद्येकशतपर्यन्तानग्निप्रकारान् ' विधास्यन्तः ' करिष्यन्तः, एतान् ' प्रक्रमान् ' गार्हपत्यात् प्राचः सप्त, आहवनीयपूर्वार्द्धात् प्राचस्त्रीन्, आहवनीयक्लृप्तमेकं ' व्यामम् ' ' च ' अनुवर्द्धयन्ति । तत्र हेतुः—योनिमनुवर्धयाम इतीति । अष्टविधाद्यग्निमहावेदीनां योनिभूतवेदिवृद्धिं विना वृद्धिः कर्तुं न युक्तेत्यतो हेतोः ' योनिं वर्द्धयाम ' इति वदन्त एके आचार्या योनिभूतवेदिं पुरुषसङ्ख्यया वर्द्धयन्तीति पूर्वः पक्षः । तं पक्षं दूषयति—न तथा कुर्यादिति । हेतुमाह—न वै जातं गर्भमिति । लोके उत्पन्नं गर्भमनुलक्ष्य योनिर्न वर्द्धते किन्तु ' गर्भो ' वर्धमानो यावान् ' भवति ' तावती ' योनिर्वर्धते ' गर्भं स्वतोऽपसारयितुम् । तर्हि तदा गर्भोऽपि योनौ वर्धमानो बहुधा वर्धतामित्याशंक्याह—एतावत्यु वा अत्र गर्भस्य वृद्धिरिति । अनेनैतदुक्तं भवति । अग्निः ' गर्भः ' स हि सप्तपुरुषप्रमाण एव प्राकृतेऽष्टविधादीनामपि भवति । जातस्यैव तस्याष्टविधादिरूपेण वृद्धिः । अतस्तस्य योनिभूता वेदिर्व्यामैकादशप्रक्रममात्रैव । अत उत्तरासु विधास्वपि गर्भस्यैकरूपेण तद्वृद्ध्यभावाद्योनिर्न वर्धते अत उत्तरेष्वपि योनिभूता वेदिर्न वर्द्धयितव्येति तात्पर्यम् ॥ ६ ॥

( स्ते ) ते ये ह तथा कुर्वन्ति । ( न्त्ये ) एतꣳ ह ते पितरं प्रजापतिꣳ सम्पदश्च्यावयन्ति तऽइष्ट्वा पापीयाꣳसो भवन्ति पितरꣳ हि प्रजापतिꣳ सम्पदश्च्यावयन्ति सा यावत्येषा सप्तविधस्य वेदिस्तावतीं चतुर्दश कृत्वऽएकशतविधस्य वेदिं विमिमीते ॥ ७ ॥

---

ते ये ह तथा कुर्वन्ति । एतं ह ते पितरं प्रजापतिं सम्पदश्च्यावयन्ति । त इष्ट्वा पापीयांसो भवन्ति–पितरं हि प्रजापतिं सम्पदश्च्यावयन्ति । सा यावत्येषा सप्तविधस्य वेदिः–तावतीं चतुर्दश-कृत्व एकशतविधस्य वेदिं विमिमीते ॥ ७ ॥

---

व्यतिरेकमुखेनाह–ते ये ह तथा कुर्वन्तीति । ' ये ' ' तथा कुर्वन्ति ' वेदिं वर्द्धयेयुः ' ते ' ' एतम् ' ' पितरं प्रजापतिं ' ' सम्पदः ' " एकादशाक्षरा त्रिष्टुब् " इति सङ्ख्यासम्पत्तेः सकाशात् 'च्यावयन्ति' अपगमयन्ति । ' ते ' एवम् ' इष्ट्वा ' । वेदिवर्द्धनेन यागं कृत्वा पापिष्ठा ' भवन्ति '–प्रजापतेः सम्पत्तिसकाशात् च्यावनात् । सूत्र्यते हि–" नान्तःपात्यगार्हपत्ययोर्विवृद्धिस्तावदेव योनिर्भवति न वै जातं गर्भ योनिरनुवर्द्धत इति श्रुतेर्वृद्धेरत्यंतप्रतिषेध इति " ( का. श्रौ. सू. शुल्बपरिशिष्टं । ६ । ६ ) तस्मादष्टविधाद्येकशतविधान्तासु विकृतिषु प्राग्वंशगता वेदिर्गार्हपत्यचितिश्च प्रकृतिभूतसप्तविधैकपरिमाणैव कार्या । अग्निक्षेत्रं महावेदिरिष्टका इत्येतत्सर्वमुत्तरोत्तरं वर्द्धते । तद्वृद्धिप्रकारः सूत्रे दर्शितः–"उत्तरेषु पुरुषोच्चयेनैकशतविधादित्येतद्वक्ष्यामः " । " आद्योऽग्निर्द्विगुणस्त्रिगुणो भवतीति सर्वसमासः । एकविꣳशतिविधो भवतीति पुरुषाभ्यासः" । " पुरुषाभ्यासे यावानग्निः सपक्षपुच्छविशेषस्तावत्समचतुरस्रं कृत्वा तस्मिन् पुरुषप्रमाणमवदध्यात् " । " समस्तं पञ्चदशभागान् कृत्वा द्वावेकसमासेन समस्येत् स पुरुषः" (का.श्रौ.सू.शुल्बपरिशिष्टे।९।१–९) इति । अयमर्थः–आद्योऽग्निः सार्द्धसप्तपुरुषप्रमाणस्तमग्निं चतुरस्रीकृत्य द्विकरणीसमासेन समस्येत् । त्रिगुणोऽप्येवं त्रिकरणीसमासेनेति विशेषः । उभयत्राग्निमानाय द्विपुरुषा रज्जुरुत्पादयितव्या । एवं मानं कुर्वन्नष्टविधादिषु सप्तविधक्षेत्राधिक्येनोत्तरोत्तरमेकैकपुरुषपरिमितक्षेत्रमभ्यस्येत् । अभ्यस्तपुरुषपरिमितक्षेत्रसञ्ज्ञितस्य प्राकृतस्याग्निक्षेत्रस्य पञ्चदशधा भक्तस्य भागद्वय एकः पुरुषस्तेन पुरुषेणाष्टविधादिष्वग्निक्षेत्रमानं कर्त्तव्यम्, तच्च वेदिवृद्धिमन्तरेण न घटत इति तद्वृद्धिप्रकारोऽप्युक्तः सूत्रे–"यथाऽग्निवेदीष्टकाप्रमाणं विवर्द्धेत इत्येतद् वक्ष्यामः"–( शु. सू. कं. ९ । १ । ) इति प्रक्रम्य " प्रक्रमेण वा सप्तमभागेन" ( प्रक्रमार्थः ) "आ एकशतविधात्"–( शु. सू. कं. ९।४–९। ) इत्यन्तेनाष्टविधादिषु प्राकृते प्रक्रमे एकैकं प्रक्रमसप्तमांशमधिकं प्रक्षिप्य तत्तदधिकसहितेन प्रक्रमेण षट्त्रिंशत्प्रक्रमां प्राचीमित्युक्तप्रकारेण वेदिमाने तत्तदग्निक्षेत्रपर्याप्ता महावेदिरपि वर्द्धते । एतत्सर्वं न्यायसिद्धमिति कृत्वा चाद्यन्तभूतयोः सप्त[1]विधैकशतविधयोरेवाग्निवेदिमानमुक्तम् । तत्रैकशतविधे त्रिभिः प्रक्रमसप्तमांशैः सहिताश्चतुर्दशप्रक्रमाः सम्भूयैकः प्रक्रमस्तेन वेदिमानं कर्त्तव्यम् । तदिदं सप्तविधप्राकृताग्निवेदेरावृत्तिविशेषणं विधत्ते–सा यावत्येषा सप्तविधस्य वेदिस्तावतीं चतुर्दशकृत्व एकशतविधस्य वेदिं विमिमीत इति । सप्तपुरुषाश्चतुर्दशभिर्गुणनेनाष्टानवतिः सम्पद्यन्ते । अत्र त्रिपुरुषप्रमाणयोजनेन एकशतविधोऽग्निरुत्पाद्यत इति ॥ ७ ॥

---

१–इदमत्रत्यं कर्कभाष्यमिति ज्ञेयम् ।

( तेऽथ ) अथ षट्त्रिंशत्प्रक्रमाथ्ँ रज्जुं मिमीते । ताथ्ँ सप्तधा समस्यति तस्यै त्रीन्भागान्प्राचऽ उपदधाति निःसृजति चतुरः ॥ ८ ॥

( रोऽथ ) अथ त्रिथ्ँशत्प्रक्रमां मिमीते । ताथ्ँ सप्तधा समस्यति तस्यै त्रीन्भागान्पश्चादुपदधाति निःसृजति चतुरः ॥ ९ ॥

( रोऽथ ) अथ चतुर्विथ्ँशतिप्रक्रमां मिमीते । ताथ्ँ सप्तधा समस्यति तस्यै त्रीन्भागान्पुरस्तादुपदधाति निःसृजति चतुरऽ इति नु व्वेदिविमानम् ॥ १० ॥

( म ) अथाग्नेर्विधाः । ( ऽ ) अष्टाविथ्ँशतिः प्राञ्चः पुरुषा ऽअष्टाविथ्ँशतिस्तिर्यञ्चः स ऽआत्मा चतुर्दश पुरुषा दक्षिणः पक्षश्चतुर्दशोत्तरश्चतु-

---

अथ षट्त्रिंशत्प्रक्रमां रज्जुं मिमीते । तां सप्तधा समस्यति । तस्यै त्रीन्भागान्प्राच उपदधाति । निःसृजति चतुरः ॥ ८ ॥

अथ त्रिंशत्प्रक्रमां मिमीते । तां सप्तधा समस्यति । तस्यै त्रीन् भागान्पश्चादुपदधाति । निःसृजति चतुरः ॥ ९ ॥

अथ चतुर्विंशतिप्रक्रमां मिमीते । तां सप्तधा समस्यति । तस्यै त्रीन्भागान्पुरस्तादुपदधाति । निःसृजति चतुरः । इति नु वेदिविमानम् ॥ १० ॥

अथाग्नेर्विधाः—अष्टाविंशतिः प्राञ्चः पुरुषाः । अष्टाविंशतिस्तिर्यञ्चः—स आत्मा । चतुर्दश पुरुषा

---

अथ अग्निमानं वक्ष्यते । सर्वेषां सप्तविधाद्येकशतपर्यन्तानामग्नीनामिष्टकोपधानप्रदेश एतावान् महावेदिषु भवतीति सङ्ग्रहतो दर्शयति—अथ षट्त्रिंशत्प्रक्रमां रज्जुमिति । प्रथमं वेद्यन्तात् प्रागायतषट्त्रिंशत्प्रक्रमां 'रज्जुम्' मित्वा 'ताम्' सप्तधा विभज्य 'तस्याः' रज्ज्वाः' सप्तसु भागेषु मध्ये 'प्राचस्त्रीन् भागान्' 'उपदधाति' इष्टकाभिरुपदध्यात् । अवशिष्टान् 'चतुरो' भागान् 'निःसृजति' उपधानार्थं न विनियुञ्जीत किन्तु हविर्धानसदःप्रभृत्यर्थं परित्यजेदित्यर्थः ॥ ८ ॥

एवं त्रिंशत्प्रक्रमायां चतुर्विंशतिप्रक्रमायां रज्ज्वां च सप्तधा विभक्तायामभितो द्वौ द्वौ भागौ विहाय मध्ये भागत्रयपरिग्रहेणाग्निक्षेत्रस्य पश्चात् पुरस्तात्तिर्यग्विस्तार उक्तो भवति । अग्निविषयं वेदिमानमुपसंहरति—इति नु वेदिविमानमिति । 'इति' एवं सप्तविधैकशतविधयोः वेद्योर्मानमित्युक्तम् ॥ ९ ॥ १० ॥

अथ चित्याग्नेः प्रकारान् प्रतिजानीते—अथाग्नेर्विधा इति । 'विधाः' प्रकारा उच्यन्त इति शेषः । तत्राष्टानवतिपुरुषप्रमाणस्याग्नेरेतावदात्मपक्षपुच्छप्रमाणमिति दर्शयति—अष्टाविंशतिः प्राञ्चः पुरुषा इति ।

---

१–षट्त्रिंशत्प्रक्रमां रज्जुमित्यादेर्यद्विवेचनम् । कृतं भाष्ये न तत्सूत्रश्रुतियोगार्थसंगतम् ॥ १ ॥ षट्त्रिंशत्प्रक्रमायामे सप्तमांशास्त्रयोऽत्र ते । प्रक्रमा दश पञ्चार्थांगुलानि दश पञ्च च ॥ २ ॥ सप्तमांशास्त्रयोऽप्येकस्यांगुलस्य भवंति तु । नैतत्पूर्वापरं मानमग्निना व्याप्यते क्वचित् ॥ ३ ॥ नैव तिर्यक्प्रमाणं च भाष्ये प्रोक्तं यथा तथा । अत्र चैकशतस्याग्नेर्वेदिः श्रुत्योच्यते यथा ॥ ४ ॥ यावत्येषेत्युपक्रम्य षट्त्रिंशत्प्रक्रमामिति ॥ ५ ॥

इत्येषा टिप्पणिरत्र काशीस्थ कै. पं. गौरीनाथ दीक्षित जावजीभट्ट इत्येतेषामानीतादर्शपुस्तके वर्त्तते ॥

र्दश पुच्छं चतुर्दशारत्नीन्दक्षिणे पक्ष उपदधाति चतुर्दशोत्तरे चतुर्दश वितस्तीः पुच्छऽइति न्वष्टानवतेः पुरुषाणां मात्रा साधिमानानाम् ॥ ११ ॥

( मु ) अथ त्रिपुरुषाꣳ रज्जुं मिमीते । ताꣳ सप्तधा समस्यति तस्यै चतुरो भागानात्मन्नुपदधाति त्रीन्पक्षपुच्छेषु ॥ १२ ॥

( ष्वु ) अथारत्निमात्रीं मिमीते । ताꣳ सप्तधा समस्यति तस्यै त्रीन्भागान्दक्षिणे पक्ष उपदधाति त्रीनेवोत्तरे निःसृजति चतुरः ॥ १३ ॥

( गोऽथ ) अथ वितस्तिमात्रीं मिमीते । ताꣳ सप्तधा समस्यति तस्यै

दक्षिणः पक्षः । चतुर्दशोत्तरः । चतुर्दश पुच्छम् । चतुर्दशारत्नीन् दक्षिणे पक्ष उपदधाति । चतुर्दशोत्तरे । चतुर्दश वितस्तीः पुच्छे । इति न्वष्टानवतेः पुरुषाणां मात्रा साधिमानानाम् ॥ ११ ॥

अथ त्रिपुरुषां रज्जुं मिमीते—तां सप्तधा समस्यति । तस्यै चतुरो भागानात्मन्नुपदधाति । त्रीन्पक्षपुच्छेषु ॥ १२ ॥

अथारत्निमात्रीं मिमीते । तां सप्तधा समस्यति । तस्यै त्रीन्भागान्दक्षिणे पक्ष उपदधाति, त्रीनेवोत्तरे । निःसृजति चतुरः ॥ १३ ॥

अथ वितस्तिमात्रीं मिमीते—तां सप्तधा समस्यति । तस्यै त्रीन्भागान्पुच्छ उपदधाति । निःसृजति चतुरः । एवमेष एकशतविध एतया वेद्या सम्पद्यते ॥ १४ ॥

सप्तपुरुषाणां चतुर्दशकृत्व आवर्तनेऽष्टानवतिः । तत्र ‘ अष्टाविंशतिः ’ ‘ प्राञ्चः पुरुषाः, ’ तावन्तः ‘ तिर्यञ्चः, ’ उभये ‘ आत्मा ’ अष्टानवतेरग्नेर्मध्यदेहो भवति । पक्षपुच्छानि प्रत्येकं चतुर्दशपुरुषपरिमितानि । पूर्वं सप्तविधे पक्षयोरुपहितारत्न्योश्चतुर्दशगुणने चतुर्दशारत्नयः उभयोः पक्षयोर्भवन्ति । वितस्तयोऽपि तथा पुच्छे भवन्ति । उक्तं प्रमाणमग्निविशेषस्येत्याह—इति न्वष्टानवतेः पुरुषाणामिति । ‘ इति ’ एवं ‘ साधिमानानाम् ’ पक्षपुच्छेष्वाधिक्येन निक्षिप्तारत्निवितस्तिप्रमाणसहितानां ‘पुरुषाणां ’ ‘ मात्रा ’ ‘अष्टानवतेः’ अग्नेरुक्तेत्यर्थः ॥ ११ ॥

अथैकशतविधाग्नेः प्रकारं दर्शयति—अथ त्रिपुरुषां रज्जुं मिमीत इति । पूर्वमुक्ताया अष्टानवतेरुपरि त्रिपुरुषसम्मितां ‘ रज्जुम् ’ ‘ मिमीते ’ पुरुषत्रयप्रमाणस्यैकत्र पक्षे पुच्छे चात्मनि योजने पक्षिरूपोऽग्निः समो न भवति—इत्याशङ्क्य योजनस्थानं विभज्याह—तां सप्तधा समस्यतीति । तस्या रज्ज्वाः ‘ चतुरो ’ ‘ भागान् ’ आत्मनि मध्यभागे ‘ उपदधाति ’ त्रीन् भागान् पक्षपुच्छेषु ॥ १२ ॥

एवमेकशतपुरुषप्रमाणं मध्यपक्षपुच्छेषु दर्शयित्वा प्राकृताग्निवत्पक्षपुच्छेष्वधिकं योजनीयं प्रमाणमाह—अथारत्निमात्रीमिति । ‘ अरत्निमात्रीम् ’ रज्जुं मित्वा ‘ ताम् ’ ‘ सप्तधा ’ विभज्य ‘ त्रीन् भागान् दक्षिणे पक्ष उपदधाति ’ एवमुत्तरे पक्षे । अवशिष्टान् ‘ चतुरो भागान् ’ निःसृजेत् ॥ १३ ॥

पुच्छेऽपि वितस्तिमात्रीं रज्जुं मित्वा तां पूर्ववद्विभज्य कुर्यात् । एकस्यैकशतपुरुषप्रमाणस्याग्नेर्नवतिप्रक्र-

१—अथ त्रिपुरुषाꣳ रज्जुं मिमीते ताꣳ सप्तधा समस्यति तस्यै चतुरो भागानात्मन्नुपदधाति त्रीन् पक्षपुच्छेषु । एवमेव का. श्रौ. सू. परि. शुल्बे—५ । १२॥ २—या करणी चतुर्दशप्रक्रमान् संक्षिपति त्रींश्च प्रक्रमसप्तमभागान् स एकशतविधे प्रक्रमः । का० श्रौ० शुल्बे सू० परि० ६ । २ ।

त्रीन्भागान्पुच्छ ऽउपदधाति निःसृजति चतुर ऽएवमेष ऽएकशतविध ऽएतया व्वेद्या सम्पद्यते ॥ १४ ॥

तदाहुः । ( र्य ) यत्त्रयोदश पुरुषा ऽअतियन्ति कथमेते सम्पदो नु च्यवन्त ऽइति या वाऽएतस्य सप्तमस्य पुरुषस्य सम्पत्सैवैतेषाᳪं सर्व्वेषाᳪं सम्पत् ॥ १५ ॥

( द ) अथो ऽआहुः । प्रजापतिरेवात्मानं व्विधाय तस्य यत्र यत्र न्यूनमासीत्तदेतैः समपूरयत तेनोऽएवापि सम्पन्न ऽइति ॥ १६ ॥

तद्धैके । ( कऽ ) एकविधं प्रथमं व्विदधत्यथैकोत्तरमाऽपरिमितविधान्न तथा कुर्यात् ॥ १७ ॥

---

तदाहुः—यत् त्रयोदश पुरुषा अतियन्ति—कथमेते सम्पदो न च्यवन्त इति । या वा एतस्य सप्तमस्य पुरुषस्य सम्पत्—सैवैतेषां सर्वेषां सम्पत् ॥ १५ ॥

अथो आहुः—प्रजापतिरेवात्मानं विधाय तस्य यत्र—यत्र न्यूनमासीत्तदेतैः समापूरयत । तेन उ एवापि सम्पन्न—इति ॥ १६ ॥

तद्धैके—एकविधं प्रथमं विदधति । अथैकोत्तरम्—आ अपरिमितविधात् । न तथा कुर्यात् ॥१७॥

---

माया वेद्याः संख्यासम्पत्तिं दर्शयति—एवमेष इति । 'एषः' एकशतविधः 'एतया वेद्या सम्पद्यते' इति सम्पत्तिः । एवं प्रतिपुरुषं दश प्राणाः—चत्वार्यङ्गानि, आत्मा पञ्चदश इति पञ्चदशसंख्याऽस्ति । एवं षट्सु पुरुषेषु नवतिः, सप्तमस्य पुरुषस्य वेदिश्चतुर्दिगात्मभिः पञ्चभिः लोमत्वङ्मांसास्थिमज्जाभिश्च संख्यासाम्यात् सप्तविधवेदिसंख्या सम्पद्यते । एवमेकशतविधे प्रथमसप्तविधव्यतिरिक्तेषु त्रयोदशसु पर्यायेषु संख्यासम्पत्तिर्द्रष्टव्या ॥ १४ ॥

अस्तु प्रतिपुरुषं पञ्चदशसंख्यया षट्सु षट्सु पुरुषेषु नवतिसंख्यासम्पत्तिः न त्वधिकेषु त्रयोदशपर्यायाणामन्तिमेषु त्रयोदशसु पुरुषेषु, इति वेदवादिविचारमुद्भाव्य तत्रापि पूर्ववत्सप्तमपुरुषस्य वेदिगतपञ्चसंख्ययैव सम्पत्तिं दर्शयति—तदाहुर्यत्त्रयोदश पुरुषा अतियन्तीति । 'एते' त्रयोदशपुरुषाः 'कथं सम्पदो' वेदिगतसंख्यासम्पत्तेः 'न च्यवन्ते ?'—च्यवन्त एवेति प्रश्नः । उत्तरम्—या वा एतस्येति । सप्तमस्य पुरुषस्येति । प्राकृतसप्तविधे सप्तमस्य या संख्यासम्पत्तिरुक्ता । यथा—"अथैकः पुरुषोऽस्येति पाङ्क्तो वै पुरुषो लोम त्वङ्मांसमस्थि मज्जा पाङ्क्तो इयं वेदिश्चतस्रो दिश आत्मा पञ्चम्येवमेष सप्तविध एतया वेद्या सम्पद्यते"—(श. प. १० । २ । ३ । ९ । ) इति । सा सम्पत्तिरितरेषु त्रयोदशपुरुषेषु द्रष्टव्येत्यर्थः ॥ १५ ॥

प्रकारान्तरेण सम्पत्तिमाह—अथो आहुः प्रजापतिरेवात्मानमिति । पूर्वं 'प्रजापतिरात्मानम्' विधाय 'यत्र यत्र न्यूनम्' अङ्गजातं तत्र तत्र 'एतैः' त्रयोदशभिः पूरितवान् । अतः संख्या सम्पन्ना भवतीत्याचार्याः आहुरित्यर्थः ॥ १६ ॥

अथ सर्वेषां चित्याग्नीनां सप्तविध एव प्राकृतः एकशतविध एवान्त इति सिद्धान्तयितुं पूर्वपक्षयति—तद्धैक

(त्स) सुप्तविधो वाऽअग्रे प्रजापतिरसृज्यत सु ऽआत्मानं विदधानऽ ऐत्स ऽएकशतविधेऽतिष्ठत सु योऽर्वाचीनॐ सप्तविधाद्विधत्तऽएतॐ ह सु पितरं प्रजापतिं विच्छिनत्ति सु ऽइष्ट्वा पापीयान्भवति यथा श्रेयाॐसॐ हिॐसित्वाऽथ य ऽएकशतविधमतिविधत्तेऽस्मात्स सुर्व्वस्माद्बहिर्धा निष्पद्यते सुर्व्वमु हीदं प्रजापतिस्तस्मादु सप्तविधमेव प्रथमं विदधीताथैकोत्तरमैकशतविधादेकशतविधं तु नातिविदधीत नाहैतं पितरं प्रजापतिं विच्छिनत्ति नोऽअस्मात्सुर्व्वस्माद्बहिर्धा निष्पद्यते ॥ १८॥

इति प्रथमप्रपाठके अष्टमं ब्राह्मणम् ॥ १०–१–८ ॥ (२. ३.) ॥

---

सप्तविधो वा अग्रे प्रजापतिरसृज्यत । स आत्मानं विदधान ऐत् । स एकशतविधेऽतिष्ठत । स योऽर्वाचीनं सप्तविधाद्विधत्ते । एतं ह स पितरं प्रजापतिं विच्छिनत्ति । स इष्ट्वा पापीयान्भवति–यथा श्रेयांसं हिंसित्वा । अथ य एकशतविधमतिविधत्ते–अस्मात्स सर्वस्माद्बहिर्धा निष्पद्यते । सर्वमु हीदं प्रजापतिः । तस्मादु सप्तविधमेव प्रथमं विदधीत–अथैकोत्तरम्–आ एकशतविधात् । एकशतविधं तु नातिविदधीत–नाहैतं पितरं प्रजापतिं विच्छिनत्ति । नो अस्मात्सर्वस्माद्बहिर्धा निष्पद्यते ॥ १८ ॥

---

एकविधं प्रथमं कुर्वन्तीति । 'एके' आचार्याः 'प्रथमम्' आदौ 'एकविधम्' एकपुरुषप्रमाणमग्निं 'कुर्वन्ति'। ततः 'एकोत्तरं' द्विपुरुषप्रमाणं त्रिपुरुषप्रमाणमित्येकैकपुरुषाधिक्येन अपरिमितपुरुषप्रमाणपर्यन्तमग्निं वर्द्धयन्ति । तन्मतं दूषयति–न तथा कुर्यादिति ॥ १७ ॥

तत्र कारणमाह–सप्तविधो वा अग्रे प्रजापतिरसृज्यतेति । पूर्वं प्रजापतिः सप्तभिः प्राणैः सप्तपुरुषात्मक एकः पुरुषः सृष्टः इति षष्ठे प्रतिपादितम्–"त एतान् सप्त पुरुषानेकं पुरुषमकुर्वन्"– (श. प. ६ । १ । १ । ३) । "स एव पुरुषः प्रजापतिरभवत्" (श. प. ६ । १ । १ । ५) इति । सोऽयं 'प्रजापतिरात्मानम्' एकोत्तरवृद्ध्या 'विदधान ऐत्' अगच्छत् 'स एकशतविधे' 'अतिष्ठत' ततः परं न गतवान् । अतः 'सप्तविधाद्' अर्वाचीनपुरुषप्रमाणमग्निं 'यः' चिनुयात् 'सः' यथा महान्तं 'हिंसित्वा' 'पापीयान् भवति' तथा 'श्रेयांसम्' 'पितरम्' 'प्रजापतिम्' विच्छिद्य 'इष्ट्वा' पापी भवति । तथा 'यः' एकशतविधाग्निमतिक्रम्य अधिकपुरुषप्रमाणमग्निं चिनुयात् स सर्वस्मादस्माद्बहिर्भूतो 'निष्पद्यते,' यतः 'इदं सर्वं प्रजापतिः' 'तस्मात्' सप्तविध 'एव' 'प्रथमं' चेतव्यः । ततः उपरि एकैकपुरुषाभिवृद्ध्या एकशतविधपर्यन्तं चिनुयात् । एवं च न्यूनत्वे जातः प्रजापतेर्विच्छेदः, आधिक्ये तु जातः स्वस्य सर्वस्माद्बहिर्भावः, तावुभावपि न सम्भवत इति तत्पर्यम् ॥ १८ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये दशमकाण्डे द्वितीयेऽध्याये तृतीयं ब्राह्मणम् ॥ (१०–२–३) ॥

संव्वत्सरो वै प्रजापतिः । ( २ ) अग्निरु सर्व्वे कामाः सोऽयꣳ संव्वत्सरः प्रजापतिरकामयताग्निꣳ सर्व्वान्कामानात्मानमभिसंचिन्वीयेति स ऽएकशतधाऽऽत्मानं व्यधत्त स ऽएकशतधाऽऽत्मानं व्विधायाग्निꣳ सर्वान्कामानात्मानमभिसमचिनुत स सर्व्वे कामा ऽअभवत्तस्मान्न कश्चन बहिर्धा कामोऽभवत्तस्मादाहुः संव्वत्सरः सर्व्वे कामा ऽइति न ह संव्वत्सरात्कश्चन बहिर्धा कामोऽस्ति ॥ १ ॥

तथैवैतद्यजमानः । (३) एकशतधाऽऽत्मानं व्विधायाग्निꣳ सर्व्वान्कामानात्मानमभिसंचिनुते स सर्व्वे कामा भवति तस्मान्न कश्चन बहिर्धा कामो भवति ॥ २ ॥

स यः स संव्वत्सरोऽसौ स ऽआदित्यः । सऽ एषऽ एकशतविधस्तस्य रश्मयः शतं व्विधा ऽएष ऽएवैकशततमो यऽ एष तपत्यस्मिन्त्सर्व्वस्मिन्प्रतिष्ठितस्तथैवैतद्यजमानऽएकशतधाऽऽत्मानं व्विधायास्मिन्त्सर्व्वस्मिन्प्रतितिष्ठति ॥ ३ ॥

---

संवत्सरो वै प्रजापतिः । अग्निरु सर्वे कामाः । सोऽयं संवत्सरः प्रजापतिरकामयत—अग्निं सर्वान्कामानात्मानमभिसंचिन्वीयेति । स एकशतधाऽऽत्मानं व्यधत्त । स एकशतधाऽऽत्मानं विधायाग्निं सर्वान्कामानात्मानमभिसमचिनुत । स सर्वे कामा अभवत् । तस्मान्न कश्चन बहिर्धा कामोऽभवत् । तस्मादाहुः—संवत्सरः सर्वे कामा इति । न ह संवत्सरात्कश्चन बहिर्धा कामोऽस्ति ॥ १ ॥

तथैवैतद्यजमान एकशतधाऽऽत्मानं विधायाग्निं सर्वान्कामानात्मानमभिसंचिनुते । स सर्वे कामा भवति । तस्मान्न कश्चन बहिर्धा कामो भवति ॥ २ ॥

स यः स संवत्सरः—असौ स आदित्यः । स एष एकशतविधः । तस्य रश्मयः शतं विधाः ।

---

चतुर्थब्राह्मणे एकशतविधस्याग्नेः सर्वकामरूपत्वेनादित्यात्मना स्तुतिः, तस्य सप्तविधप्राकृताग्निसंख्यायाः । सम्पत्तिप्रकारः, सप्तविधस्य चैकशतविधसङ्ख्यायाः सम्पत्तिश्च प्रदर्श्यते—संवत्सरो वै प्रजापतिरिति । ' प्रजापतिः ' हि संवत्सरात्मकः । प्रजापतेः संवत्सररूपत्वं प्रतिपादितम् । ' अग्निः ' अपि ' सर्वे कामाः ' सर्वकामरूपः । स सम्वत्सररूपः प्रजापतिः स्वयं सर्वकामप्राप्त्यर्थं तद्रूपम् ' अग्निम् ' सञ्चिनवानीति निश्चित्य ' आत्मानम् ' ' एकशतधा ' विभज्य तावत्संख्याकमग्निं चितवानित्यर्थः । ' स सर्वे कामा अभवत् ' यतोऽग्निं सर्वकामात्मकम् ' आत्मानम् ' अचिनोत्, अतः संवत्सरः सर्वकामरूपः । न हि संवत्सररूपाद् बहिर्धा कामोऽस्ति । अत इदानीमनुष्ठाताऽपि एकशतविधमग्निं चित्वा सर्वकामात्मको भवति ॥ १ ॥ २ ॥

स यः स सम्वत्सरोऽसौ स आदित्य इति । ' यः ' संवत्सर इत्युक्तः ' सः ' ' आदित्यः ' एकशत-

  

( त्यु ) अथ वाऽएकशतविधः । सप्तविधमभिसम्पद्यतऽएकशतधा वाऽअसावादित्यो विहितः सप्तसु देवलोकेषु प्रतिष्ठितः सप्त वै देवलोकाश्चतस्रो दिशस्त्रयऽ इमे लोकाऽएते वै सप्त देवलोकास्तेष्वेष प्रतिष्ठितस्तथैवैतद्यजमानऽएकशतधाऽऽत्मानं विधाय सप्तसु देवलोकेषु प्रतितिष्ठति॥४॥

यद्वेवैकशतविधः । सप्तविधमभिसम्पद्यतऽएकशतधा वाऽअसावादित्यो विहितः सप्तस्वृतुषु सप्तसु स्तोमेषु सप्तसु पृष्ठेषु सप्तसु छन्दःसु सप्तसु प्राणेषु सप्तसु दिक्षु प्रतिष्ठितस्तथैवैतद्यजमानऽएकशतधाऽऽत्मानं विधायैतस्मिन्त्सर्वस्मिन्प्रतितिष्ठति ॥ ५ ॥

---

एष एवैकशततमो–य एष तपति–अस्मिन्त्सर्वस्मिन्प्रातिष्ठितः । तथैवैतद्यजमान एकशतधाऽऽत्मानं विधायास्मिन्त्सर्वस्मिन्प्रतितिष्ठति ॥ ३ ॥

अथ वा एकशतविधः सप्तविधमभिसम्पद्यते । एकशतधा वा असावादित्यो विहितः सप्तसु देवलोकेषु प्रतिष्ठितः। सप्त वै देवलोकाः–चतस्रो दिशः, त्रय इमे लोकाः। एते वै सप्त देवलोकाः। तेष्वेष प्रतिष्ठितः। तथैवैतद्यजमान एकशतधाऽऽत्मानं विधाय सप्तसु देवलोकेषु प्रतितिष्ठति ॥ ४ ॥

यद्वेवैकशतविधः सप्तविधमभिसम्पद्यते । एकशतधा वा असावादित्यो विहितः–सप्तस्वृतुषु, सप्तसु स्तोमेषु, सप्तसु पृष्ठेषु, सप्तसु छन्दःसु, सप्तसु प्राणेषु, सप्तसु दिक्षु प्रतिष्ठितः। तथैवैतद्यजमान एकशतधाऽऽत्मानं विधायैतस्मिन्त्सर्वस्मिन्प्रतितिष्ठति ॥ ५ ॥

---

विधः। तस्यादित्यस्य एकशतविधत्वं स्फुटयति–तस्य रश्मय इति। शतसंख्याकाः 'रश्मयः' आदित्य एकशतसंख्यापूरकः। स यथा सर्वत्र लोके 'प्रतिष्ठितः' एवं तमग्निं चितवान् 'यजमानः' अपि सर्वत्र प्रतिष्ठितो भवति ॥३॥

अथ वा एकशतविध इत्यादिना सप्तविधसंख्यासम्पत्तिप्रदर्शनं फलविवक्षया। 'असावादित्यः' 'एकशतधा' शतं रश्मयः स्वात्मा एकशतसंख्यापूरकः। 'सप्तसु देवलोकेषु' दिक्षु चतसृषु त्रिषु लोकेष्वित्यर्थः। एवं 'यजमानोऽपि' तेषु सप्तलोकेषु 'प्रतिष्ठितो' भवति ॥ ४ ॥

प्रकारान्तरेण सम्पत्तिः–यद्वेवैकशतेति। एकशतविध आदित्यः "संसर्पकांहस्पतिनामकक्रतुना सह सप्तर्तवः"–( श. प. । ८ । ४ । १ । १७ । वा. सं. १४ । २३ । "संभरणस्त्रयोविंशः" इत्यत्र ) इत्युक्तम्। 'सप्तसु स्तोमेषु' त्रिवृत्पञ्चदशसप्तदशैकविंशचतुर्विंशत्रिणवत्रयस्त्रिंशेषु बृहद्रथन्तरवैरूपवैराजशाकरादिषु 'सप्तसु पृष्ठेषु' गायत्र्यादिषु 'सप्तसु छन्दःसु' 'सप्तसु' शीर्षण्येषु 'प्राणेषु' 'सप्तसु दिक्षु' प्राच्यादयश्चतस्रः, ऊर्ध्वावाच्यौ द्वे, सूर्यमण्डलमेव सप्तमी दिगिति सप्त दिशः। "स दिग्भिरेव सप्तविध" इतीत्युत्तरत्र (श. प. १० । २ । ५ । ३ ।) एवं सप्त दिशो वक्ष्यन्ते। एतेषु ऋत्वादिसप्तकेष्वादित्यः 'प्रतिष्ठितः' एवमेकशतविधं चितवान् 'यजमानः' अपि सर्वत्र ऋत्वादिषु प्रतिष्ठितो भवति ॥ ५ ॥

यद्वेवैकशतविधः । सप्तविधमभिसम्पद्यतऽएकशतधा वाऽअसावादित्यो विहितः सप्ताक्षरे ब्रह्मन्प्रतिष्ठितः सप्ताक्षरं वै ब्रह्मऽर्गित्येकमक्षरं यजुरिति द्वे सामेति द्वेऽअथ यदतोऽन्यद्ब्रह्मैव तद्द्व्यक्षरं वै ब्रह्म तदेतत्सर्वᳪ सप्ताक्षरं ब्रह्म तस्मिन्नेष प्रतिष्ठितस्तथैवैतद्यजमान ऽएकशतधाऽऽत्मानं विधाय सप्ताक्षरे ब्रह्मन्प्रतितिष्ठति ॥ ६ ॥

तस्माद् सप्तभिः सप्तभिः परिश्रयन्ति । तस्मादेकशतविधः सप्तविधमभिसम्पद्यतेऽथ वै सप्तविध ऽएकशतविधमभिसम्पद्यते ॥ ७ ॥

सप्तविधो वाऽअग्रे प्रजापतिरसृज्यत । स ऽएतमेकशतधाऽऽत्मानं विहितमपश्यत्प्राणभृत्सु पञ्चाशदिष्टकाः पञ्चाशद्यजूᳪषि तच्छतᳪ सादनं च सूददोहाश्चैकशततमे तत्समानᳪ सादयित्वा हि सूददोहसाऽधिवदति स ऽएतेनैकशतविधेनात्मनेमां जितिमजयदिमां व्यष्टिं व्याश्नुत तथैवैतद्यजमानऽ एतेनैकशतविधेनात्मनेमां जितिं जयतीमां व्यष्टिं व्यश्नुतऽएवमु सप्त-

---

यद्वेवैकशतविधः सप्तविधमभिसम्पद्यते । एकशतधा वा असावादित्यो विहितः—सप्ताक्षरे ब्रह्मन्प्रतिष्ठितः । सप्ताक्षरं वै ब्रह्म—ऋगित्येकमक्षरम्, यजुरिति द्वे, साम—इति द्वे । अथ यदतोऽन्यद्—ब्रह्मैव तद् । द्व्यक्षरं वै ब्रह्म । तदेतत्सर्वं सप्ताक्षरं ब्रह्म । तस्मिन्नेष प्रतिष्ठितः । तथैवैतद्यजमान एकशतधाऽऽत्मानं विधाय सप्ताक्षरे ब्रह्मन्प्रतितिष्ठति ॥ ६ ॥

तस्माद् सप्तभिः—सप्तभिः परिश्रयन्ति । तस्मादेकशतविधः सप्तविधमभिसम्पद्यते । अथ वै सप्तविध एकशतविधमभिसम्पद्यते ॥ ७ ॥

सप्तविधो वा अग्रे प्रजापतिरसृज्यत । स एतमेकशतधाऽऽत्मानं विहितमपश्यत् । प्राणभृत्सु पञ्चाशदिष्टकाः, पञ्चाशद्यजूंषि, तच्छतम् । सादनं च सूददोहाश्चैकशततमे । तत् समानम् । साद-

---

प्रकारान्तरेण संख्यासम्पत्तिः—एकशतविध आदित्यः ऋग्यजुःसामब्रह्मेत्यस्मिन् सप्ताक्षरे ब्रह्मणि प्रतिष्ठितः । एवं ' यजमानः ' अपि ' सप्ताक्षरे ' ब्रह्मणि प्रतिष्ठितः भवति ॥ ६ ॥

सप्तभिः सप्तभिः परिश्रयणेनापि एकशतविधोऽग्निः ' सप्तविधम् ' अग्निम् ' अभिसम्पद्यते ' ॥ ७ ॥

अथ सप्तविधाग्नेरेकशतविधसंख्यासम्पत्तिं दर्शयति—सप्तविधो वा अग्रे इति । ' अग्रे ' पूर्वं ' प्रजापतिः ' ' सप्तविधः ' सप्तपुरुषात्मकः सृष्टः । स ' आत्मानम् ' ' एकशतधा ' प्राणभृन्नामिकास्विष्टकासु दृष्टवान् । तदेवाह—प्राणभृत्स्विति । प्राणभृदिष्टकाः पञ्चाशत्प्रतीष्टकमेकैकमुपधानं यजुरिति ' पञ्चाशद्यजूंषि ' तदुभयं ' शतं '

विध ऽएकशतविधमभिसम्पद्यते स यु ऽएवैकशतविधः सु सप्तविधो युः सप्तविधः स ऽएकशतविध ऽइति नु विधानाम् ॥ ८ ॥

इति प्रथमप्रपाठके नवमं ब्राह्मणम् ॥ १०–१–९ ॥ ( २. ४. )

इति प्रथमः संलग्नः प्रपाठकः समाप्तः ॥ १०–१ ॥

कण्डिकासंख्या ॥ ९४ ॥

---

यित्वा हि सूददोहसाऽधिवदति । स एतेनैकशतविधेनात्मनेमां जितिमजयत् । इमां व्यष्टिं व्याश्नुत । तथैवैतद्यजमान एतेनैकशतविधेनात्मनेमां जितिं जयति । इमां व्यष्टिं व्यश्नुते । एवमु सप्तविध एकशतविधमभिसम्पद्यते । स य एवैकशतविधः—स सप्तविधः । यः सप्तविधः—स एकशतविधः । इति नु विधानाम् ॥ ८ ॥

---

भवति । तासामिष्टकानां "तया देवतयाऽङ्गिरस्वत् ध्रुवा सीद" इत्यनेन सादनं च, " ता अस्य सूददोहसः " इत्यधिवदनं चोभयमेकशतसंख्यापूरकम् । अतः 'एतेन' 'एकशतविधेनात्मना' 'इमां जितिम्' जितवान् । सर्वं जित्वा सर्वां ' व्यष्टिम् ' नानापदार्थरूपतां ' व्याश्नुत ' तथा यजमानोऽपि सप्तविधेन इष्टकायजुःसादनाधिवदनैः एकशतविधेन इमां जितिं जितवान् सर्वात्मकतां स व्याप्तवान् भवति । एवं सप्तविधैकशतविधयोरन्योन्यात्मकत्वमुक्तम् । अग्निविधाविषयं विचारमुपसंहरति—इति नु विधानामिति ॥ ८ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये दशमकाण्डे द्वितीयेऽध्याये चतुर्थं ब्राह्मणम् ॥ ( १० । २ । ४ ) ॥



# अथ द्वितीयप्रपाठके प्रथमं ब्राह्मणम् ।
# द्वितीयेऽध्याये च पञ्चमं ब्राह्मणम् ।



(म) अथातश्चयनस्यैव । (वा) अन्तरोपसदौ चिनोत्येतद्वै देवा ऽअबिभयु-र्यद्वै नऽ इममिह रक्षाᳫंसि नाष्ट्रा नु हन्युरिति तऽएताः पुरोऽपश्यन्नुपसदऽ इमानेव लोकानिमे वै लोकाः पुरस्ताः प्रापद्यन्त ताः प्रपद्याभयेऽनाष्ट्रऽ-एतमात्मानᳫं समस्कुर्वत तथैवैतद्यजमानऽ एताः पुरः प्रपद्याभयेऽनाष्ट्रऽ एतमात्मानᳫं सᳫंस्कुरुते ॥ १ ॥

---

अथातश्चयनस्यैव । अन्तरोपसदौ चिनोति । एतद्वै देवा अबिभयुः । यद्वै न इममिह रक्षांसि नाष्ट्रा न हन्युरिति । त एताः पुरोऽपश्यन्नुपसदः, इमानेव लोकान् । इमे वै लोकाः पुरः । ताः प्रापद्यन्त । ताः प्रपद्याभयेऽनाष्ट्र एतमात्मानं समस्कुर्वत । तथैवैतद्यजमान एताः पुरः प्रपद्याभये-ऽनाष्ट्र एतमात्मानं संस्कुरुते ॥ १ ॥

---

एवं चित्याग्नेर्वेदेश्च मानमुक्तम्—अथ चयनविषयविचारो वक्ष्यत इति प्रतिजानीते—अथातश्चयनस्यैवेति । विधिरिति मीमांसेति वा शेषः । तत्र कालं विधत्ते—अन्तरोपसदौ चिनोतीति । पौर्वाह्णिक्यापराह्णिक्योरुपसदोर्मध्ये चिनुयात्, तत्र साग्निकप्रकृतावग्निष्टोमे तिस्र उपसदः । साग्निके ऐकाहिके क्रतौ तिस्र उपसदः । द्वादशाहगवाम-यनतापश्चितादिषु अहीनसत्रसांवत्सरेषु द्वादशचतुर्विंशतिषष्ट्युत्तरत्रिशतसंख्या उपसद इति वक्ष्यते । ताश्च त्रित्वादिपक्षेष्वपि एकैकस्मिन्दिने पूर्वाह्णापराह्णयोः उपसदः कार्याः । तथा चैतरेयकं ब्राह्मणम्—"त इमास्तिस्रः सतीरुपसदो द्वैर्द्वैरेकैकामुपायन्" इति । " त इमाः षट् सतीरुपसदो द्विर्द्विरेकैकामुपायन् " ( ऐ. ब्रा. ४ । ६ । २३ ) इत्यादि । तस्मात्तु पूर्वाह्ण एव पूर्वयोपसदा प्रचरितव्यमपि स्वपराह्णेऽपरया " ( ऐ. ब्रा. ४ । ६ । २३ ) तत्र कालं प्रशंसति—एतद्वै देवा अबिभयुरिति । एतस्मिन् काले ' देवाः ' भीतवन्तः । इह अस्मिन् काले 'नः' अस्मान् ' नाष्ट्रा ' नाशका राक्षसा यथा ' नहन्युः ' ' इति ' भीताः ' उपसदः ' ' पुरोऽपश्यन् ' उपसदां पुरत्वं तद्विशेषलोकात्मकत्वं चैतरेयके समाम्नातम्—" इमानेव लोकान् पुरोऽकुर्वत " इत्युपक्रम्य " ते वा अयस्मयीमेव इमामकुर्वत राजतामन्तरिक्षं हरिणीं दिवम् " ( ऐ. ब्रा. ४ । ६ । २३ ) इति । " ते देवा अब्रुवन्—उपसद उपयामोपसदा वै महापुरं जयन्ति " ( ऐ. ब्रा. ४ । ६ । २३ ) इति । त एवं लोकपुररूपा उपसदः ' प्रपद्याभये ' भीतिरहिते ' अनाष्ट्रे ' नाशकरहिते स्थाने देवाः ' एतमात्मानं ' संस्कृतवन्तः । तथाऽयं यजमानोऽपि उपसदोर्मध्येऽग्निचयनेनात्मानं संस्कुरुते ॥ १ ॥

---

१—उपसत्सु पौर्वाह्णिक्यापराह्णिक्यंतरे चयनपुरीषनिवपने । का० श्रौ० सू० १७ । १३७ । कर्तव्ये इति सूत्रशेषः ॥

यद्देवान्तुरोपसदौ चिनोति । ( त्ये ) एतद्वै देवा ऽअबिभयुर्यद्वै नऽइममिह रक्षाᳬंसि नाष्ट्रा न हन्युरिति तऽएतान्वज्रानपश्यन्नुपसदो वज्रा वाऽउपसदस्तान्प्रापद्यन्त तान्प्रपद्याभयेऽनाष्ट्रऽएतमात्मानᳬं समस्कुर्वंतथैवैतद्यजमानऽएतान्वज्रान्प्रपद्याभयेऽनाष्ट्रऽएतमात्मानᳬं सᳬंस्कुरुते ॥२॥

( तऽ ) एतदु ह यज्ञे तपः । ( पो ) यदुपसदस्तपो वाऽउपसदस्तद्यत्तपसि चीयते तस्मात्तापश्चितस्तद्वै यावद्देवोपसद्भिश्चरन्ति तावत्प्रवर्ग्येण संव्वत्सरमेवोपसद्भिश्चरन्ति संव्वत्सरं प्रवर्ग्येण ॥ ३ ॥

( णा ) अहोरात्राणि वाऽउपसदः । ( ऽ ) आदित्यः प्रवर्ग्योऽमुं तदादित्यमहोरात्रेषु प्रतिष्ठापयति तस्मादेषोऽहोरात्रेषु प्रतिष्ठितः ॥ ४ ॥

---

यद्देवान्तरोपसदौ चिनोति । एतद्वै देवा अबिभयुः—यद्वै न इममिह रक्षांसि नाष्ट्रा न हन्युरिति । त एतान्वज्रानपश्यन्नुपसदः । वज्रा वा उपसदः—तान्प्रापद्यन्त । तान्प्रपद्याभयेऽनाष्ट्र एतमात्मानं समस्कुर्वत । तथैवैतद्यजमान एतान्वज्रान्प्रपद्याभयेऽनाष्ट्र एतमात्मानं संस्कुरुते ॥ २ ॥

एतदु ह यज्ञे तपो—यदुपसदः । तपो वा उपसदः । तद्यत् तपसि चीयते । तस्मात्तापश्चितः । तद्वै यावद्देवोपसद्भिश्चरन्ति—तावत्प्रवर्ग्येण । संवत्सरमेवोपसद्भिश्चरन्ति । संवत्सरं प्रवर्ग्येण ॥ ३ ॥

अहोरात्राणि वा उपसदः, आदित्यः प्रवर्ग्यः । अमुं तदादित्यमहोरात्रेषु प्रतिष्ठापयति । तस्मादेषोऽहोरात्रेषु प्रतिष्ठितः ॥ ४ ॥

---

प्रकारान्तरेण तं कालं स्तौति—यद्देवान्तरोपसदौ चिनोतीति । वज्रा वा उपसद इति । शत्रुनाशकत्वादुपसदां वज्रत्वम् । शिष्टं पूर्ववद् व्याख्येयम् ॥ २ ॥

तापश्चितोऽग्निस्तत्रोपसत्सङ्ख्यां दर्शयति—एतदु ह यज्ञे तपो यदुपसद इति । यत् 'एतद् यज्ञे तपः' तत्र तसव्रतो भवति । 'मदन्तीभिर्मार्जयन्ते' इत्यादिनियमविधानात्तासां तपस्त्वम्, यस्मात्तपसि तपोरूपासूपसत्सु चीयते तस्मादग्निस्तापश्चित इत्युच्यते । तत्र यावतीरुपसदः कुर्यात् तावद्भिः प्रवर्ग्यैश्चरितव्यम् । उपसदस्तापश्चिते चयने संवत्सरसम्मिताः । तथा च कात्यायनः—"तापश्चितं दीक्षाः संवत्सरमुपसदश्च तथा सुत्याः ।"—( का. श्रौ. सू. २४ । १९८ ) इति ॥ ३ ॥

उपसत्सु प्रवर्ग्यचरणं प्रशंसति—अहोरात्राणि वा उपसद इति । यतः संवत्सरं तापश्चित 'उपसदः'—अतः 'अहोरात्राणि' तत्र चैकैकस्मिन् दिने द्वे द्वे इति तयोरहोरात्ररूपत्वम् । तथा चैतरेयकम्—"यामेन पूर्वाह्ण उपसदमुपायंस्तथैवैनानह्नोऽनुदन्त, यामपराह्णे तया रात्रेस्तांस्तथोभाभ्यामहोरात्राभ्यामन्तरायन् "—( ऐ. ब्रा. ४।६।२३ ) इति । 'आदित्यः' 'प्रवर्ग्यः' तदात्मनोपास्यत्वात् । तस्मादुपसत्सु प्रवर्ग्यचरणेन सम्वत्सरसम्बन्धिषु 'अहोरात्रेषु' आदित्यं प्रतिष्ठापितवान् भवति ॥ ४ ॥

( तोऽथ ) अथ यदि चतुर्विंशतिः । ( श्च ) चतुर्विंशतिर्वाऽअर्धमासाऽअर्द्धमासा ऽउपसद ऽआदित्यः प्रवर्ग्योऽमुं तदादित्यमर्धमासेषु प्रतिष्ठापयति तस्मादेषोऽर्धमासेषु प्रतिष्ठितः ॥ ५ ॥

( तोऽथ ) अथ यदि द्वादश । द्वादश वै मासा मासाऽउपसदऽआदित्यः प्रवर्ग्योऽमुं तदादित्यं मासेषु प्रतिष्ठापयति तस्मादेष मासेषु प्रतिष्ठितः ॥ ६ ॥

( तोऽथ ) अथ यदि षट् । षड्वाऽऋतवऽ ऋतवऽउपसद ऽआदित्यः प्रवर्ग्योऽमुं तदादित्यमृतुषु प्रतिष्ठापयति तस्मादेषुऽऋतुषु प्रतिष्ठितः ॥ ७ ॥

( तोऽथ ) अथ यदि तिस्रः । ( स्र ) त्रयो वाऽइमे लोका ऽइमे लोका ऽउपसद ऽआदित्यः प्रवर्ग्योऽमुं तदादित्यमेषु लोकेषु प्रतिष्ठापयति तस्मादेष ऽएषु लोकेषु प्रतिष्ठितः ॥ ८ ॥

( तोऽथा ) अथातश्चितिपुरीषाणामेव मीमाꣳसा । मासं प्रथमा चिति-

---

अथ यदि चतुर्विंशतिः । चतुर्विंशतिर्वा अर्धमासाः । अर्धमासा उपसदः, आदित्यः प्रवर्ग्यः । अमुं तदादित्यमर्धमासेषु प्रतिष्ठापयति । तस्मादेषोऽर्धमासेषु प्रतिष्ठितः ॥ ५ ॥

अथ यदि द्वादश । द्वादश वै मासाः । मासा उपसदः, आदित्यः प्रवर्ग्यः । अमुं तदादित्यं मासेषु प्रतिष्ठापयति । तस्मादेष मासेषु प्रतिष्ठितः ॥ ६ ॥

अथ यदि षट् । षड्वाऽऋतवः । ऋतव उपसदः, आदित्यः प्रवर्ग्यः । अमुं तदादित्यमृतुषु प्रतिष्ठापयति । तस्मादेष ऋतुषु प्रतिष्ठितः ॥ ७ ॥

अथ यदि तिस्रः । त्रयो वा इमे लोकाः । इमे लोका उपसदः, आदित्यः प्रवर्ग्यः । अमुं तदादित्यमेषु लोकेषु प्रतिष्ठापयति । तस्मादेष एषु लोकेषु प्रतिष्ठितः ॥ ८ ॥

अथातश्चितिपुरीषाणामेव मीमांसा । मासं प्रथमा चितिः । मासं पुरीषम् । एतावान्वासन्तिक ऋतौ कामः । तद् यावान्वासन्तिक ऋतौ कामः—तं तत्सर्वमात्मानमभिसञ्चिनुते ॥ ९ ॥

---

न केवलमत्रैव तापश्चितीषु किन्तु यत्र यत्राधिका न्यूना वा उपसदः तत्र तत्र प्रवर्ग्यचरणेनादित्यस्थापनं कृतं भवतीत्याह—अथ यदि चतुर्विंशतिरिति । क्रतुविशेषे चतुर्विंशतिसङ्ख्या 'उपसदः' कार्याः । संवत्सरस्य हि तावन्तोऽर्धमासाः । तत्र प्रवर्ग्यचरणेन तेष्वर्धमासेष्वादित्यं प्रतिष्ठापितवान् भवति ॥ ५ ॥

एवम्—अथ यदि द्वादश इति वाक्यं योज्यम् । द्वादशाहे द्वादशोपसदः ॥ ६ ॥

अथ यदि षडिति । सामान्येन षडुपसदश्चित्याग्नेर्भवन्तीति ॥ ७ ॥

अथ प्रकृतौ तिस्र उपसदः कार्याः, तत्रापि प्रवर्ग्यचरणमिति दर्शयति—अथ यदि तिस्र इति । तिसृणामुपसदां लोकत्रयात्मकत्वं प्रागुक्तम् "इमानेव लोकान् पुरोऽकुर्वत" ( ऐ. ब्रा. ४ । ६ । २३ ) इति ॥ ८ ॥

एवमुपसदां मध्ये चयनमित्युक्तम्, तत्रोपसदां मध्येऽनुष्ठातव्यस्य चयनस्येष्टका चितिपुरीषनिवपनयोरनुष्ठान-

मासं पुरीषमेतावान्वासन्तिकऽऋतौ कामस्तद्यावान्वासन्तिकऽऋतौ कामस्तं तत्सर्व्वमात्मानमभिसंचिनुते ॥ ९ ॥

मासं द्वितीया । मासं पुरीषमेतावान्ग्रैष्म ऽऋतौ कामस्तद्यावान्ग्रैष्म ऽऋतौ कामस्तं तत्सर्व्वमात्मानमभिसंचिनुते ॥ १० ॥

---

मासं द्वितीया । मासं पुरीषम् । एतावान् ग्रैष्म ऋतौ कामः । तद् यावान्ग्रैष्म ऋतौ कामः—तं तत्सर्वमात्मानमभिसञ्चिनुते ॥ १० ॥

---

प्रकारं प्रतिजानीते—अथातश्चितिपुरीषाणामेव मीमांसेति । यत उपसदां मध्ये चयनं कर्त्तव्यमित्युक्तमत इत्यर्थः । तत्र त्र्युपसत्कादिकक्रतुषु चितिपुरीषानुष्ठानप्रकारः कात्यायनेन दर्शितः—तथाहि—"त्र्युपसत्के द्वे प्रथमायां तिस्रो मध्यमायां च" "पञ्चगृहीताद्युत्तमा" "उत्तरासु च" "सपुरीषा षट्स्वेकैका" "द्वादशोपसत्के व्यत्यासं चितिपुरीषे" "विकर्ण्याद्येकादश्याम्"—(का. श्रौ. सू. १७।१४०—१४९) इति । अयमर्थः—उपसत्त्रय वति क्रतौ प्रथमायामुपसदि द्वे चिती चीयेते, मध्यमायां तिस्रः, पञ्चगृहीतादिरुत्तमोपसद्भवति । "उपवसथीयेऽहन् प्रातरुदित आदित्ये वाचं विसृजते वाचं विसृज्य पञ्चगृहीतमाज्यं गृह्णीते"(श.प.९।२।१।१।) इत्युपक्रम्य "प्रवर्ग्योपसद्भ्यां प्रचरति" (श. प. ९।२।१।१८) इति श्रूयते । उत्तरासु चोपसत्सु पञ्चगृहीताद्युत्तमोपसद् भवति । षट्सूपसत्सु सपुरीषा चितिरेकैका स्तोमभागानन्तरं तूष्णीं पुरीषनिवपनम् । तदंता पञ्चमी चितिः । तत ऊर्ध्वं "नाकसत्प्रभृतयः षष्ठी चितिः" इति (श. प. ८।९।४।७—८मा.) प्राक् प्रतिपादितम् । तद्विवक्षया षडुपसत्के एकैका सपुरीषा चितिरित्युक्तम् । द्वादशोपसत्के क्रतौ व्यत्यासेन चितिपुरीषे भवतः । एकस्मिन् दिने इष्टकाचितिः, द्वितीये पुरीषचितिरेवमुत्तरेष्विति व्यत्यासेन विभज्यानुष्ठानमित्यर्थः । तत्र चैकादश्यामुपसदि विकर्ण्यादि कर्त्तव्यम् । इयं त्रिषडेकादशोपसत्केषु क्रतुषु चितिपुरीषमीमांसा सूत्रसंवादादुक्ता । तापश्चिताख्ये क्रतौ चितिपुरीषानुष्ठानप्रकारं श्रुतिः स्वयमेव दर्शयति—मासं प्रथमा चितिरित्यादिना । अग्नौ षडिष्टकाचितयः । षट् पुरीषचितयस्ताश्च तापश्चिते क्रतौ प्रतिमासमेकैका उपधेयाः । तथा च—वसन्तादिषु षट्सु ऋतुषु योयः कामस्तं 'सर्वमात्मानम्' अभिलक्ष्य सम्पादितवान् भवतीति वक्ष्यमाणस्य प्रकरणस्य तात्पर्यम् । अत्र कात्यायनः—"तापश्चिते मासशश्चितिपुरीषे चतसृणाम्" । "पञ्चम्यामसपत्ना विराजः प्रथमेऽहन्" "स्तोमभागा अन्वहम्" "मासं पुरीषं तूष्णीम्" । "नाकसत्प्रभृति मासम्" । "पुरीषं च"—(का. श्रौ. सू. १७।१४८—१९३) इति । चकारो मासानुकर्षणार्थः । इति द्वादश मासाः सम्पन्नाः । मासं प्रथमा चितिः । "कालाध्वनोरत्यन्तसंयोगे"—(पा. सू. २।३।५।) इति मासशब्दस्य द्वितीया । मासपर्यन्तं प्रथमा इष्टकाचितिरुपधेया । द्वितीयमासे पुरीषचितिरुपधेया । मासद्वयात्मकश्च ऋतुः । चयनस्य वसन्तकाले चोदितत्वाद् 'वासन्तिक ऋतुः' प्रथमं निर्दिष्टः । तस्मिन्नादिमे ऋतौ 'एतावान् कामः' मासद्वयपरिमितः कामः । तत् तेन मासद्वयेन इष्टकापुरीषचित्युपधानेन 'तं' 'सर्वं' कामम् 'आत्मानम्' अभिलक्ष्य 'संचिनुते' आपादयति ॥ ९ ॥

एवं मासं द्वितीयेत्यादिपर्यायत्रयं व्याख्येयम् ॥ १०—१२ ॥

मासं तृतीया । मासं पुरीषमेतावान्वार्षिकऽऋतौ कामस्तद्यावान्वार्षिकऽऋतौ कामस्तं तत्सर्व्वमात्मानमभिसंचिनुते ॥ ११ ॥

मासं चतुर्थी । मासं पुरीषमेतावाञ्छारदऽऋतौ कामस्तद्यावाञ्छारदऽऋतौ कामस्तं तत्सर्व्वमात्मानमभिसंचिनुते ॥ १२ ॥

( तेऽथ ) अथ पञ्चम्यै चितेः । ( र ) असपत्ना विराजश्च प्रथमाहमुपदधाति स्तोमभागाऽएकैकामन्वहं ताः सकृत्सादयति सकृत्सूददोहसाऽधिवदति तूष्णीं मासᳬं स्तोमभागापुरीषमभिहरन्त्येतावान्हैमन्तिकऽऋतौ कामस्तद्यावान्हैमन्तिकऽऋतौ कामस्तं तत्सर्व्वमात्मानमभिसञ्चिनुते ॥ १३ ॥

मासᳬं षष्ठी । मासं पुरीषमेतावाञ्छैशिरऽऋतौ कामस्तद्यावाञ्छैशिरऽऋतौ कामस्तं तत्सर्व्वमात्मानमभिसंचिनुतऽएतावान्वै द्वादशसु मासेषु कामः षट्स्वृतुषु तद्यावान्द्वादशसु मासेषु कामः षट्स्वृतुषु तं तत्सर्व्वमात्मानमभिसंचिनुते ॥ १४ ॥

---

मासं तृतीया । मासं पुरीषम् । एतावान्वार्षिक ऋतौ कामः । तद्यावान्वार्षिक ऋतौ कामः—तं तत्सर्वमात्मानमभिसञ्चिनुते ॥ ११ ॥

मासं चतुर्थी । मासं पुरीषम् एतावाञ्छारद ऋतौ कामः । तद् यावाञ्छारद ऋतौ कामः—तं तत्सर्वमात्मानमभिसञ्चिनुते ॥ १२ ॥

अथ पञ्चम्यै चितेरसपत्ना विराजश्च प्रथमाहमुपदधाति । स्तोमभागा एकैकामन्वहम् । ताः सकृत्सादयति । सकृत्सूददोहसाऽधिवदति । तूष्णीं मासं स्तोमभागापुरीषमभिहरान्ति । एतावान्हैमन्तिक ऋतौ कामः । तद्यावान्हैमन्तिक ऋतौ कामः—तं तत्सर्वमात्मानमभिसञ्चिनुते ॥ १३ ॥

मासं षष्ठी । मासं पुरीषम् । एतावाञ्छैशिर ऋतौ कामः । तद् यावाञ्छैशिर ऋतौ कामः—तं

---

पञ्चम्यां चिताविष्टकोपधाने विशेषमाह—अथ पञ्चम्यै चितेरिति । असपत्नानामधेयाः पञ्च, विराट्संज्ञकाश्चत्वारिंशदिष्टकाः 'प्रथमाहं' प्रथमदिवसे उपदध्यात् । स्तोमभागानामधेयेष्टका एकोनत्रिंशत्, प्रतिदिवसमेकैकामिष्टकामुपदध्यात् । एवं मासान्ते सर्वासां मासप्रथमदिवसे उपहितानामसपत्नाविराजामेकोनत्रिंशद्दिवसेषु प्रत्येकमुपहितानां स्तोमभागानां च 'सकृत्' एकवारं 'सादनम्' "तया देवतया"—इति मन्त्रेण तथा "ता अस्य सूददोहसः' इत्यनेन एतासां 'सकृद्' अधिवदनम् । एवमिष्टकाचितिं निर्णीय पुरीषचितौ विशेषं दर्शयति—तूष्णीमिति । 'तूष्णीम्' मन्त्रवर्जं स्तोमभागानामेष्टका अभिलक्ष्य मासपर्यन्तं पुरीषं हरेयुः । एतावान् हैमन्तिक इत्यादि । पूर्ववत् ॥ १३ ॥

मासं षष्ठीति । स्तोमभागानन्तरं तूष्णीं पुरीषनिवापोक्तेः तदन्ता पञ्चमी चितिरिति कृत्वा नाकसत्पञ्च-

---

१—'स्तोमभागाः' इति सविसर्गः पाठो युक्तः ।

(तेऽथ) अथ त्रीण्यहान्युपातियन्ति । यदहः शतरुद्रियं जुहोति यदहरुपवसथो यदहः प्रसुतस्तद्यत्तेष्वहःसूपसदा चरन्ति तानि तस्य मासस्याहोरात्राण्यथ यत्प्रवर्ग्येण तदु तस्मिन्नृतावादित्यं प्रतिष्ठापयत्येतावान्वै त्रयोदशसु मासेषु कामः सप्तस्वृतुषु तद्यावाँस्त्रयोदशसु मासेषु कामः सप्तस्वृतुषु तं तत्सर्व्वमात्मानमभिसंचिनुते ॥ १९ ॥

स संव्वत्सरं प्रसुतः स्यात् । (तस) सर्व्वं वै संव्वत्सरः सर्व्वमेकशतविधः सर्व्वेणैव तत्सर्व्वमाप्नोति यदि संव्वत्सरं न शक्नुयाद्विश्वजिता सर्व्व-

---

तत्सर्वमात्मानमभिसञ्चिनुते । एतावान्वै द्वादशसु मासेषु कामः षट्स्वृतुषु । तद् यावान्द्वादशसु मासेषु कामः षट्स्वृतुषु । तं तत् सर्वमात्मानमभिसञ्चिनुते ॥ १४ ॥

अथ त्रीण्यहान्युपातियन्ति–यदहः शतरुद्रियं जुहोति, यदहरुपवसथः, यदहः प्रसुतः । तद् यत्तेष्वहःसूपसदा चरन्ति–तानि तस्य मासस्याहोरात्राणि । अथ यत्प्रवर्ग्येण, तदु तस्मिन्नृतावादित्यं प्रतिष्ठापयति । एतावान्वै त्रयोदशसु मासेषु कामः सप्तस्वृतुषु । तद् यावांस्त्रयोदशसु मासेषु कामः सप्तस्वृतुषु । तं तत्सर्वमात्मानमभिसञ्चिनुते ॥ १९ ॥

स संवत्सरं प्रसुतः स्यात् । सर्वं वै संवत्सरः । सर्वमेकशतविधः । सर्वेणैव तत्सर्वमाप्नोति । यदि

---

चूडादीष्टकाभिः षष्ठी चितिः सम्पादितेत्यर्थः । तदन्ते मुख्या पुरीषचितिरस्ति । तथा चाष्टमे काण्डे समाम्नातम्–"स्तोमभागा उपधाय पुरीषं निवपति सा पञ्चमी चितिः" । "अथ यदत ऊर्ध्वमापुरीषात्सा षष्ठी" (श. प. । ८ । ९ । ४ । ७ । ८) इति । सर्वमासगतसङ्ख्यां सम्भूय प्रशंसति–एतावान् वै द्वादशसु मासेषु काम इति ॥ १४ ॥

अथ त्रीण्यहान्युपातियन्तीति । द्वादशस्य मासस्याष्टाविंशतिसङ्ख्याकैरहोभिः पुरीषनिवपनम् । तत उत्तमे द्वे अहनी परिशिष्येते । एकमेव च सुत्यमहरावृत्त्या संवत्सरो भवतीति तदेकमहरित्युच्यते । तानि त्रीण्यहानि पुरीषचितेरतिरिक्तानि भवन्ति । तान्यहानि विशिनष्टि–यदहः शतरुद्रियमिति । तेष्वतिरिक्तेषु प्रथमेऽहनि शतरुद्रियकर्मोपलक्षितविकर्ण्याद्यग्न्युक्थ्यशंसनान्तं प्रयोगजातं कर्त्तव्यम् । द्वितीयेऽहनि पञ्चगृहीताज्यग्रहणाद्यौपवसथ्यप्रयोगः । यस्मिन्नहनि प्रसुतः सोमोऽभिषुतो भवति तत्तृतीयमहः । "तापश्चिते मासशश्चितिपुरीषे" इति प्रक्रम्य सूत्रितम्–"नाकसत्प्रभृति मासं पुरीषं चोत्तमयोरह्नोर्विकर्ण्यादि पूर्वे" (का. श्रौ. सू. १७ । १४८–१९४) इति । अयमर्थः–अन्तिममासस्योत्तमयोरह्नोः पूर्वेऽहनि विकर्ण्यादि कर्त्तव्यम् । अन्तिमेऽहनि पञ्चगृहीताद्युत्तमेति परिभावितत्वात् तदादिविकृत्यौपवसथप्रयोग इति । तेष्वहःसु यत्प्रवर्ग्योपसदामनुष्ठानं तेन तस्य संसर्पांहस्पतिसंज्ञकस्य त्रयोदशमासात्मकस्य संबन्धिष्वहोरात्रेषु आदित्यात्मकस्य सप्तमर्तोः स्थापनं कृतं भवतीत्यर्थः । उक्तत्रयोदशमाससाहित्येन पूर्वोक्तां संख्यां प्रशंसति–एतावान् वै त्रयोदशस्विति ॥ १९ ॥

तत्र सुत्यानां संख्यां विधत्ते–स संवत्सरं प्रसुतः स्यादिति । संवत्सरपर्यन्तं प्रसुतः सोमयागः स्यादिति

पृष्ठेनातिरात्रेण यजेत तुस्मिन्त्सर्व्ववेदसं दद्यात्सुर्व्वं वै विश्वजित्सुर्व्व-पृष्ठोऽतिरात्रः सुर्व्वथ्ँ सुर्व्ववेदसथ्ँ सुर्व्वमेकशतविधः सुर्व्वेणैव तत्सुर्व्व-माप्नोति ॥ १६ ॥

इति द्वितीयप्रपाठके प्रथमं ब्राह्मणम् ॥ १०-२-१ ॥ ( २. ५. )

संव्वत्सरो वै प्रजापतिरेकशतविधः । ( स्तु ) तुस्याहोरात्राण्यर्धमासा मुासा ऽऋतुवः षष्टिर्मासस्याहोरात्राणि मासि वै संव्वत्सरस्याहोरात्राण्या-प्यन्ते चुतुर्व्विथ्ँशतिरर्धमासास्त्रयोदश मुासास्त्रयऽऋतवस्ताः शतं विधाः संव्वत्सरऽ एवैकशततमी विधा ॥ १ ॥

---

सम्वत्सरं न शक्नुयात्—विश्वजिता सर्वपृष्ठेनातिरात्रेण यजेत । तस्मिन्त्सर्ववेदसं दद्यात् । सर्वं वै विश्वजित् । सर्वपृष्ठोऽतिरात्रः । सर्वं सर्ववेदसम् । सर्वमेकशतविधः । सर्वेणैव तत् सर्वमाप्नोति॥१६॥

संवत्सरो वै प्रजापतिरेकशतविधः । तस्याहोरात्राणि अर्धमासाः, मासाः, ऋतवः । षष्टिर्मा-सस्याहोरात्राणि । मासि वै संवत्सरस्याहोरात्राण्याप्यन्ते । चतुर्विंशतिरर्धमासाः, त्रयोदश मासाः, त्रयः ऋतवः । ताः शतं विधाः । संवत्सर एवैकशततमी विधा ॥ १ ॥

---

प्रतिदिवसमेकैकः सोमयाग इति षष्ट्युत्तरत्रिशतसंख्याकाः सोमयागाः भवन्तीत्यर्थः । तत्र तापश्चिते कर्त्तव्यम-ग्निविशेषं प्रदर्शयन्स्तौति—सर्वमेकशतविध इति । अतः ' सर्वेण ' संवत्सरपर्यन्तं क्रियमाणेन एकशतविधा-ऽग्निमता सोमयागेन 'सर्वम्' आप्तवान् भवति । संवत्सरं सोमयागकरणाशक्तौ पक्षान्तरं दर्शयति—यदि संवत्सरं न शक्नुयादिति । ' अतिरात्रेण ' अतिरात्रसंस्थेन सर्वपृष्ठवता विश्वजिदाख्येन यजेत । तत्र दक्षिणां विधत्ते—तस्मिन् सर्ववेदसं दद्यादिति । सर्वस्वं देयमित्यर्थः । एतद्यज्ञकरणं सर्वप्राप्तिहेतुत्वेन प्रशंसति—सर्वं वै विश्व-जिदिति । अत्र विश्वजिति सर्वेषां पृष्ठानां करणात् सर्वस्वदक्षिणादानात् एकशतविधाग्निचयनाच्च सर्व-माप्तवान् भवति ॥ १६ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये दशमकाण्डे द्वितीयेऽध्याये पञ्चमं ब्राह्मणम् ॥ ( १०-२-५ ) ॥

पूर्वं संवत्सररूपप्रजापतेरेकशतविधाग्नित्वम् ( श. प. १०।२।४।१ । ) उक्तम् । तस्यादित्यरूपत्वं शत-संख्याकरश्मिभिर्मण्डलेनैकशतसंख्यापूरकेण सम्पन्नमिति चोक्तम् ( श. प. १०।२।३ ) । अधुना प्रकारान्त-रेणैकशतसंख्यावत्त्वं सप्तविधाग्निना सम्पत्तिश्च वक्ष्यते चयनस्यामृतत्वप्राप्तिः फलमिति च । संवत्सरो वै प्रजा-पतिरिति । ' एकशतविधो ' नामाग्निः संवत्सरात्मकप्रजापतिरूपः । तस्य संवत्सरस्य एकशतत्वेन प्रतिपादनं—तस्याहोरात्राणि इत्यादिना । तस्य संवत्सरस्य तावदेतावन्तः अहोरात्रा अर्द्धमासा मासास्त्रय ऋतव इति । एतेष्वेवोक्तसंख्या सम्पद्यत इति दर्शयितुमेकमासस्थिताहोरात्रा विवक्षिता इति । ऋतवश्च त्रित्वसंख्याका इत्याह—षष्टिर्मासस्येति । सर्वमासाहोरात्रपरिगणनेऽधिका संख्या सम्पद्यते । ये मासगताहोरात्रास्तेषामेव संव-

स ऽऋतुभिरेव सप्तविधः । षडृतवः संवत्सर ऽएव सप्तमी विधा तस्यै-तस्य संवत्सरस्यैतत्तेजो य ऽएष ऽतपति तस्य रश्मयः शतं विधा मण्डलमेवैकशततमी विधा ॥ २ ॥

स दिग्भिरेव सप्तविधः । (घो) ये प्राच्यां दिशि रश्मयः सैका विधा ये दक्षिणायाᳫँ सैका ये प्रतीच्याᳫँ सैका यऽउदीच्याᳫँ सैका यऽ-ऊर्ध्वायाᳫँ सैका येऽवाच्याᳫँ सैका मण्डलमेव सप्तमी विधा ॥ ३ ॥

तस्यैतस्य परस्तात्कामप्रो लोकः । (कोऽमृ) अमृतं वै कामप्रममृत-मेवास्य तत्परस्तात्तद्यत्तदमृतमेतत्तद्यदेतदर्चिर्दीप्यते ॥ ४ ॥

---

स ऋतुभिरेव सप्तविधः—षडृतवः, संवत्सर एव सप्तमी विधा । तस्यैतस्य संवत्सरस्यैतत्तेजो—य एष तपति । तस्य रश्मयः शतं विधाः । मण्डलमेवैकशततमी विधा ॥ २ ॥

स दिग्भिरेव सप्तविधः, ये प्राच्यां दिशि रश्मयः सैका विधा । ये दक्षिणायां सैका । ये प्रतीच्यां सैका । य उदीच्यां सैका । य ऊर्ध्वायां सैका । येऽवाच्यां सैका । मण्डलमेव सप्तमी विधा ॥ ३ ॥

तस्यैतस्य परस्तात्—कामप्रो लोकः । अमृतं वै कामप्रम् । अमृतमेवास्य तत् परस्तात् । तद्यत्तद-मृतम्—एतत्तत्—यदेतदर्चिर्दीप्यते ॥ ४ ॥

---

त्सरपर्यन्तावर्त्तनादिति न पृथग्गणनेति तात्पर्यम् । एकस्मिन् मासि त्रिंशदहानि त्रिंशद्रात्रय इति षष्टिः सम्प-द्यते । अर्द्धमासाश्चतुर्विंशतिः—मलिम्लुचसाहित्येन त्रयोदश मासाः । द्वौ द्वावृतू एकीकृत्य त्रय ऋतव इत्युक्तम् । एवं संवत्सरे शतं विधाः सम्पद्यन्ते संवत्सरः स्वयमेकशतसंख्यापूरक इति तत्संख्यासम्पत्तिः ॥ १ ॥

तस्य संवत्सररूपस्यैकशतविधस्य सप्तविधाग्निना सम्पत्तिमृतुभिर्दर्शयति—स ऋतुभिरेव सप्तविध इति । 'षड्ऋतवः' ऋत्वात्मकः संवत्सरः सप्तम इत्यर्थः । सप्तविधस्याप्येकशतविधसंख्यासम्पत्तिमाह—तस्यैतस्येति । 'यः' तपति स हि संवत्सरस्य तेजः, तस्य शतं रश्मयः मण्डलमेकशतसंख्यापूरकमिति तयोरन्योऽन्या-त्मकत्वम् ॥ २ ॥

प्रकारान्तरेण सम्पत्तिमाह—स दिग्भिरेव सप्तविध इति । तदुपपादयति—ये प्राच्यां दिशीति । प्राग्द-क्षिणपश्चिमोदीच्यश्चतस्रः, ऊर्ध्वावाच्यौ द्वे, रश्मियुक्तं मण्डलं सप्तममित्युक्तसंख्यासम्पत्तिः ॥ ३ ॥

सप्तविधाद्येकशतपर्यन्ताग्निचयनस्य सूर्यलोकः फलमिति दर्शयति—तस्यैतस्य परस्तात्कामप्र इति । 'एतस्य' सवितुर्मण्डलस्य 'परस्तात्' उपरिभागे सर्वकामपूरकः 'अमृतः' मरणधर्मरहितः 'लोकः' अस्ति । अमृतलोकं विशिनष्टि—यदेतदर्चिर्दीप्यत इति । 'यदेतदर्चिः' तेजो 'दीप्यते' सोऽमृतलोक इत्यर्थः ॥ ४ ॥

तदेतद्वसु चित्रꣳ राधः । ( स्तु ) तदेषु सविता विभक्ताभ्यः प्रजाभ्यो विभजत्यप्योषधिभ्योऽपि वनस्पतिभ्यो भूय ऽइव ह त्वेकाभ्यः प्रयच्छति कनीयऽ इवैकाभ्यस्तद्याभ्यो भूयः प्रयच्छति ता ज्योक्तमां जीवन्ति याभ्यः कनीयः कनीयस्ताः ॥ ५ ॥

( स्तु ) तदेतदृचाऽभ्युक्तम् । (म्वि) विभक्तारꣳ हवामहे वसोश्चित्रस्य राधसः । सवितारं नृचक्षसमिति तदेतत्सर्वमायुर्दीर्घमनन्तꣳ हि तद्यदिदमाहुर्दीर्घं तऽआयुरस्तु सर्वमायुरिहीत्येष ते लोक ऽएतत्तेऽस्त्विति हैवैतत् ॥ ६ ॥

---

तदेतद् वसु चित्रं राधः । तदेष सविता विभक्ताभ्यः प्रजाभ्यो विभजति—अप्योषधिभ्यः, अपि वनस्पतिभ्यः । भूय—इव ह त्वेकाभ्यः प्रयच्छति, कनीय—इवैकाभ्यः । तद् याभ्यो भूयः प्रयच्छति—ता ज्योक्तमां जीवन्ति । याभ्यः कनीयः—कनीयस्ताः ॥ ५ ॥

तदेतदृचाऽभ्युक्तम्—"विभक्तारं हवामहे वसोश्चित्रस्य राधसः । सवितारं नृचक्षसम्"—( वा. सं. ३० । ३ ) इति । तदेतत्सर्वमायुर्दीर्घम् । अनन्तं हि तत् । यदिदमाहुः—"दीर्घं त आयुरस्तु । सर्वमायुरिहि"—इति । एष ते लोकः । एतत्तेऽस्त्विति हैवैतत् ॥ ६ ॥

---

अर्चिषोऽमृतफलत्वं सवितृसम्बन्धित्वं च प्रदर्शयति—तदेतद्वसु चित्रं राध इति । 'वसु' वासयोग्यं 'चित्रम्' नानाप्रकारं भूयोऽल्पभेदेन 'तदेतद्' अर्चीरूपं 'राधः' दीर्घायूरूपं फलम् 'एष सविता' अर्चिष्मान् 'विभक्ताभ्यः' स्थावरजङ्गमभेदेन तत्रापि मनुष्यपशुपक्ष्यादिरूपेण ओषधिवनस्पत्यादिरूपेण च 'विभक्ताभ्यः प्रजाभ्यः' विभज्य विभज्य प्रयच्छति । "अप्योषधिभ्योऽपि वनस्पतिभ्यः" इति ओषध्यादिभ्योऽपि प्रयच्छति । अनेन सर्वस्य विभज्य दानं कैमुतिकन्यायसिद्धमित्युक्तं भवति । तत्र दाने विशेषं दर्शयति—भूय इव ह त्वेकाभ्यः प्रयच्छतीति । 'ह तु' इति पदद्वयम् । इवशब्द एवार्थे । कतिपयाभ्यः प्रजाभ्यो 'भूयः' आयूरूपमेव राधः 'प्रयच्छति' । 'एकाभ्यः कनीयः' राधः । तत्र यासां भूयोदानम्, ताः 'ज्योक्तमाम्' चिरं जीवन्ति । आयुषो भूयस्त्वात्तद्भोगाय चिरकालजीवनम् । यासां कनीयः फलं, ता अल्पकालं जीवन्ति ॥ ५ ॥

सवितैव सर्वप्रजाभ्यो नानारूपं कामं ददातीत्यर्थं दाशतय्या मन्त्रसंवादेन द्रढयति—तदेतदृचाऽभ्युक्तमिति । अयमर्थः—'वसोः' वासयोग्यस्य 'चित्रस्य' नानाविधस्य 'राधसः' आयुर्लक्षणफलस्य विभक्तारं विभज्य प्रदातारम् । 'नृचक्षसम' नृणां द्रष्टारं तत्कर्मसाक्षिणम् । यद्वा चष्टेः कर्मण्यसुन् । नृभिर्दृश्यमानं 'सवितारं हवामहे' । सर्वायुष्ट्वमिदानीमाह—तदेतत्सर्वमायुरिति । सर्वपदस्यार्थमाह—दीर्घमनन्तं हि तदिति । तदेतत् राधो लोकलक्षणं ततः सर्वायूरूपं दीर्घायूरूपमित्यर्थः । उक्तमर्थं लोकप्रसिद्ध्या द्रढयति—यदिदमाहुर्दीर्घं त आयुरिति । लोके पूर्ववयोभिरभिवादिता ज्यायांसः पुरुषाः एतामाशिषं कुर्वन्ति—दीर्घं त आयु-

(त्पु) पुश्यन्ती व्वाग्वदति । तुदेतदेकशतविधेन वैवाऽऽप्तुव्यᳬं शतायुतया वा युऽ एवैकशतविधं व्विधत्ते यो वा शतं व्वर्षाणि जीवति सु हैवैतदमृतमाप्नोति तुस्माद्ये चैतद्विदुर्ये च न लोक्या शतायुतेत्येवाहुस्तुस्मादु ह नु पुराऽऽयुषः स्वकामी प्रेयादलोक्यᳬं हैतुऽउ वाव लोका युदहोरात्राण्यर्धमासा मासा ऽऋतुवः संव्वत्सरः ॥ ७ ॥

(स्तु) तुद्येऽर्व्वाग्विᳬंशेषु व्वर्षेषु प्रयन्ति । ( न्त्य ) अहोरात्रेषु ते लोकेषु सज्यन्तेऽथ ये परोविᳬंशेष्वर्व्वाक्चत्वारिᳬंशेष्वर्धमासेषु तेऽथ ये परश्चत्वारिᳬंशेष्वर्व्वाक्षष्टेषु मासेषु तेऽथ ये परःषष्टेष्वर्व्वागशीतेष्वृतुषु तेऽथ ये परोऽशीतेष्वर्व्वाक्छतेषु संव्वत्सरे तेऽथ यु ऽएवु शतं व्वर्षाणि यो वा भूयाᳬंसि जीवति सु हैवैतदमृतमाप्नोति ॥ ८ ॥

---

पश्यन्ती वाग्वदति । तदेतदेकशतविधेन वैवाऽऽप्तव्यम् , शतायुतया वा । य एवैकशतविधं विधत्ते । यो वा शतं वर्षाणि जीवति । स हैवैतदमृतमाप्नोति । तस्माद्ये चैतद् विदुः, ये च न—लोक्या—शतायुता—इत्येवाहुः । तस्माद् ह न पुराऽऽयुषः स्वकामी प्रेयात् । अलोक्यं ह । एत उ वाव लोकाः—यदहोरात्राणि, अर्धमासाः, मासाः, ऋतवः, संवत्सरः ॥ ७ ॥

तद् ये—अर्वाग्विंशेषु वर्षेषु प्रयन्ति—अहोरात्रेषु ते लोकेषु सज्यन्ते । अथ ये परोविंशेष्वर्वाक् चत्वारिंशेषु—अर्धमासेषु ते । अथ ये परश्चत्वारिंशेष्वर्वाक्षष्टेषु—मासेषु ते । अथ ये परःषष्टेष्वर्वाग-

---

रस्त्विति । सर्वमायुरिहीति च । इहि गच्छ । इणो लोटि रूपम् । इति यदिदं लोके आयुस्तस्यार्थं श्रुतिः स्वयं दर्शयति—एष ते लोक इति । सर्वमायुरिहीति दीर्घं त आयुरस्त्वित्यनयोः अयमर्थः—तव 'एषः' लोकः सावित्रादिरूपोऽस्तु । 'ते' तव 'एतत्' सावित्रं तेजः 'अस्तु' भवत्विति ॥ ६ ॥—

'एतद्' अर्थजातं 'पश्यन्ती' विचारयन्ती वाक् दीर्घं त आयुरस्त्वित्यादिका वदतीति । तस्यामृतत्वफलसाधनं दर्शयति—तदेतदेकशतविधेन वैवाऽऽप्तव्यमिति । 'एकशतविधेन' अग्निना 'तत्' अमृतत्वरूपं राधः 'आप्तव्यम्' 'शतायुतया' शतवर्षजीवनेन वाऽऽप्तव्यम् इति साधनप्रश्नः । उभाभ्यामपि तत् फलं लभ्यत इत्युत्तरमाह—य एवैकशतविधं विधत्त इति । शतवर्षजीवनमपि पुण्यलोकहेतुरित्यत्र लोकप्रसिद्धिं दर्शयति—तस्माद्ये चैतद्विदुरिति । उक्तार्थज्ञाः तदनभिज्ञाश्च 'शतायुता' शतवर्षजीवनं 'लोक्या' लोकहिता पुण्यलोकहेतुरित्याहुः । यस्मात् शतायुर्जीवनं लोकहितं तस्मादस्मादायुषः 'पुरा' पूर्वं 'स्वकामी' स्वहितमिच्छन् स्वेच्छया 'न प्रेयात्' न म्रियेत । तन्मरणम् 'अलोक्यम्' अमृतत्वरूपलोकसाधनं न भवति । शतादर्वाचीनेषु वर्षेषु मरणं पुण्यलोकसाधकं न भवतीत्येतमर्थं विशदयति—एत इति । अहोरात्रार्द्धमासमासर्तुसंवत्सराः यद्यपि 'लोकाः' तथापि 'अलोक्याः' अमृतत्वप्रापका न भवन्ति ॥ ७ ॥

तत्रैतादृशेषु वर्षेषु मरणमहोरात्रार्द्धमासाद्यात्मकलोकहेतुः, नतु अमृतत्वफलप्रापकमित्याह—तद्येऽर्वाग्विंशेष्वित्या-

बहुभिर्हं वै यज्ञैः। (रे) एकमुहरेका रात्रिर्मिता स यु ऽएवैकशतविधं व्विधत्ते यो वा शतं व्वर्षाणि जीवति स हैवैनदद्धातमामाप्नोत्येष वाऽएकशतविधं व्विधत्ते य ऽएनछँ संव्वत्सरं बिभर्ति तस्मादेनछँ संव्वत्सरभृतमेवं चिन्वीतेत्यधिदेवतम् ॥ ९ ॥

(मु) अथाधियज्ञम्। यानमूनेकशतमुद्धाहून्पुरुषान्मिमीते स व्विधैकशतविधः स चितिभिरेव सप्तविधः षड्तुव्यवत्यश्चितयोऽग्निरेव सप्तमी व्विधा ॥ १० ॥

---

शीतेषु—ऋतुषु ते। अथ ये परोऽशीतेष्ववार्क् शतेषु—संवत्सरे ते। अथ य एव शतं वर्षाणि—यो वा भूयांसि जीवति। स हैवैतदमृतमाप्नोति ॥ ८ ॥

बहुभिर्ह वै यज्ञैरेकमहरेका रात्रिर्मिता। स य एवैकशतविधं विधत्ते—यो वा शतं वर्षाणि जीवति। स हैवैनदद्धातमामाप्नोति। एष वा एकशतविधं विधत्ते—य एनं संवत्सरं बिभर्ति। तस्मादेनं सम्वत्सरभृतमेव चिन्वीत। इत्यधिदेवतम् ॥ ९ ॥

अथाधियज्ञम्—यानमूनेकशतमुद्धाहून्पुरुषान्मिमीते—स विधैकशतविधः। स चितिभिरेव सप्तविधः। षड्तव्यवत्याश्चितयः। अग्निरेव सप्तमी विधा ॥ १० ॥

---

दिना। ये विंशतिवर्षादर्वाचीनेषु 'वर्षेषु' म्रियंते ते अहोरात्ररूपेषु लोकेषु 'सज्यन्ते' सम्बध्यन्ते। एवमुत्तरत्र योज्यम्। 'अर्वाक्षष्टेषु' षष्टिवर्षादर्वाचीनेषु। शतवर्षजीवनस्य सूक्तमेव फलमिति निगमयति—अथ य एव शतं वर्षाणि, यो वा भूयांसि जीवतीति ॥ ८ ॥

बहुभिर्हेति। 'बहुभिर्ह वै यज्ञैरेकमहः' इत्यादेरयमर्थः—'एकमहः' 'एका रात्रिरपि बहुभिर्यज्ञैः' 'मिता' एकदिनजीवनमेकरात्रिजीवनमपि बहुयज्ञफलं किमुत शतवर्षाणि जीवनवतोऽमृतत्वप्राप्तिरिति। एवमग्नेरमृतत्वं फलमित्युक्त्वा एकशतविधस्याग्नेः संवत्सरोख्यधारणं नियतमित्याह—एष वा एकशतविधं विधत्त इति। 'यः' पुरुषः 'एनम्' उख्याग्निं संवत्सरपर्यन्तं बिभर्त्ति—एष एकशतविधं चित्याग्निं विधातुं योग्यः। यस्मात्संवत्सरमुख्याग्निं बिभ्रत एवैकशतविधाग्नेर्विधाने योग्यत्वम् तस्मात् 'संवत्सरभृतमिव'। इव—शब्दोऽवधारणे। वर्षपर्य्यन्तं 'भृतमेव' अग्निं 'चिन्वीत' 'इत्यधिदेवतम्'। इति संवत्सरेण सूर्यात्मना वैकशतसंख्यावत्वं सम्पद्यत इति प्रागुक्तम्। "संवत्सरो वै प्रजापतिरेकशतविधः। तस्याहोरात्राणि, अर्द्धमासाः, मासाः, ऋतवः। षष्टिर्मासस्याहोरात्राणि, मासि वै संवत्सरस्याहोरात्राण्याप्यन्ते चतुर्विंशतिरर्द्धमासाः त्रयोदश मासाः त्रय ऋतवः—ताः शतं विधाः, संवत्सर एवैकशततमी विधा" इति "तस्य रश्मयः शतं विधा मण्डलमेवैकशततमी विधा" (श. प. १०।२।६।१–२) इति चोक्तत्वात् ॥ ९ ॥

अथाधियज्ञमिति। अभिधीयते। एकशतसंख्याकोद्वाहुपुरुषमितत्वात्तद्विधाभिः पुरुषैः 'एकशतविधः' स भूयः सन्नपि चितिभिः सप्तविधः। चितीनां सप्तत्वमष्टमे काण्डे (श. प. ८।७।४।१२–२१) प्रतिपादितम्; तदेव संग्रहेणाह—षडिति। प्रतिचिति ऋतव्ये उपदधातीत्युक्तत्वात् ऋतव्यसंज्ञकेष्टकाद्वयवत्यः षट्चितयस्तत्रोपरि निधीयमान आहवनीयः सप्तमी चितिरित्येकोऽर्थः अधियज्ञमुक्तम् ॥ १० ॥

---

१—'संवत्सरभृतमेव' इति भाष्यकारसंमतः पाठः।

सुऽउ वाऽइष्टकैकशतविधः । ( धो ) युाः पञ्चाशुत्प्रथमाऽइष्टका युाश्चो-त्तमास्तुाः शतुं विधा ऽअुथ युा ऽएतुदन्तरेणेष्टका ऽउपधीयन्ते सैवैक-शततमी विधा ॥ ११ ॥

सु उ ऽएव युजुस्तेजाः । ( ० ) युजुरेकशतविधो युानि पञ्चाशुत्प्रथमानि युजूꣳषि युानि चोत्तमानि तुाः शतुं विधाऽअुथ युान्येतुदन्तरेण युजूꣳषि क्रियन्ते सैवैकशततमी विधैवुमु सप्तविध ऽएकशतविधो भवति स युः शतायुतायां कुामो यऽएकशतविधे सप्तविधेन हैव तुमेवंविदाप्नोति ॥१२॥

( त्थे ) एवं वाव सुर्वे युज्ञाः । ( ऽ ) एकशतविधा आऽग्निहोत्रादृग्भि-र्युजुर्भिः पदैरक्षरैः कुर्मभिः सुामभिः स युः शतायुतायां कुामो यऽएकश-तविधे युः सप्तविधे यज्ञेनयज्ञेन हैव तुमेवंविदाप्नोतीत्युऽएवाधियज्ञम् ॥१३॥

---

स उ वा इष्टकैकशतविधः । याः पञ्चाशत्प्रथमा इष्टकाः । याश्चोत्तमास्ताः शतं विधाः । अथ या एतदन्तरेणेष्टका उपधीयन्ते—सैवैकशततमी विधा ॥ ११ ॥

स उ एव यजुस्तेजाः । यजुरेकशतविधः । यानि पञ्चाशत्प्रथमानि यजूंषि, यानि चोत्तमानि—ताः शतं विधाः । अथ यान्येतदन्तरेण यजूंषि क्रियन्ते—सैवैकशततमी विधा । एवमु सप्तविध एक-शतविधो भवति । स यः शतायुतायां कामः, य एकशतविधे—सप्तविधेन हैव तमेवंविदाप्नोति॥ १२॥

एवं वाव सर्वे यज्ञाः । एकशतविधा आऽग्निहोत्रात्—ऋग्भिः, यजुर्भिः, पदैः, अक्षरैः, कर्मभिः,

---

अपरमाह—स उ वा इष्टकैकशतविध इति । ‘ याः ’ ‘ प्रथमाः ’ प्रथमचिता उपहिताः प्राणभृतः ‘ पञ्चाशत् ’—इष्टकाः ‘ याश्चोत्तमाः ’ उत्तमचिता उपहिता विराड्—नाकसत्—पञ्चचूडाख्याः ‘ पञ्चाशत् ’ ‘ ताः ’ ‘ शतम् ’ । आसामाद्यन्तोपहितानां मध्ये याः ‘ इष्टकाः उपधीयन्ते ’ ताः सर्वा अपि ‘ एकशत-तमी विधा ’ इति ॥ ११ ॥

उपधानमन्त्रसङ्ख्ययाऽप्येकशतविधत्वमधियज्ञमेव दर्शयति—स उ एव यजुस्तेजा इति । यजूंष्येव तेजो यस्याग्नेः स उ तद्यजुर्मन्त्रैरेकशतसङ्ख्याक इत्यर्थः । ‘यानि ’ प्राणभृतामुपधानयजूंषि पंचाशत् ‘ यानि ’ चोत्त-मानामुपधानयजूंषि पञ्चाशत्—तानि शतम् । एतेषां मध्ये यान्युपधानयजूंषि क्रियन्ते तानि सर्वाण्यपि सङ्घा-त्मनैकशतपूरकाणीति । यदुक्तमिष्टकाभिर्यजुर्भिश्चैकशतविधसप्तविधे प्रतिपादिते एवमु सप्तविध एकशतविधो भवतीति—सप्तविधस्यैकशतविधत्वसम्पादनेन किं जातमिति तदाह—स यः शतायुतायां काम इति । यः शतवर्षं जीवने एकशतविधाग्निचयने च काम उक्तः—अमृतत्वप्राप्तिलक्षणः तं कामं सप्तविधेनाग्निना एवमर्थं विद्वान् पुरुष आप्नोति ॥ १२ ॥

यथा सप्तविधस्येष्टकायजुरादिसंख्यासम्पत्त्यैकशतविधत्वमुच्यते तथा सर्वयज्ञेष्वपि यथाकथञ्चनैकशतविधत्वं सम्पादयितुं शक्यत इत्याह—एवं वाव सर्वे यज्ञा एकशतविधा आऽग्निहोत्रादिति । एवं सप्तविधस्यैकशतत्व-

( म ) अथाध्यात्मम् । ( म्प ) पञ्चेमाश्चतुर्व्विधा ऽअङ्गुलयो द्वे कल्कुषी दोरꣳसफलकं चाक्षश्च तत्पञ्चविꣳशतिरेवमिमानीतराण्यङ्गानि ताः शतं विधा ऽआत्मैवैकशततमी विधोक्तꣳ सप्तविधतायै ॥ १४ ॥

स ऽउ ऽएव प्राणतेजाः । प्राणैकशतविधोऽन्वङ्गमङ्गेऽङ्गे हि प्राणः स यः शतायुतायां कामो य ऽएकशतविधे यः सप्तविधे यः सर्व्वेषु यज्ञेषु विद्यया हैव तमेवंविदाप्नोति सर्व्वैर्हि यज्ञैरात्मानꣳ सम्पन्नं व्विदे ॥ १५ ॥

---

सामभिः । स यः शतायुतायां कामो, य एकशतविधे, यः सप्तविधे—यज्ञेनयज्ञेन हैव तमेवंविदाप्नोति । इत्यु एवाधियज्ञम् ॥ १३ ॥

अथाध्यात्मम्—पञ्चेमाश्चतुर्विधा अङ्गुलयः, द्वे कल्कुषी, दोः, अंसफलकं चाक्षश्च, तत्पञ्चविंशतिः । एवमिमानीतराण्यङ्गानि । ताः शतं विधाः । आत्मैवैकशततमी विधा । उक्तं सप्तविधतायै ॥ १४ ॥

स उ एव प्राणतेजाः । प्राणैकशतविधोऽन्वङ्गम् । अङ्गेऽङ्गे हि प्राणः । स यः शतायुतायां कामः, य एकशतविधे, यः सप्तविधे, यः सर्वेषु यज्ञेषु । विद्यया हैव तमेवं विदाप्नोति । सर्वैर्हि यज्ञैरात्मानं सम्पन्नं विदे ॥ १५ ॥

---

सम्पत्तिन्यायवदेकाहाहीनसत्रादिकाश्चाग्निहोत्रावसानाः सर्वेऽपि यज्ञा एकशतविधा भवन्ति । एतदेव दर्शयति—ऋग्भिर्यजुर्भिरिति । एकस्मिन् यज्ञे आदितः पञ्चाशदृचः, अन्ते च पञ्चाशत्—तन्मध्यवर्तिन्यः सर्वा अप्यृच एकशततमी विधा इति । एवमेकस्य यज्ञस्यैकशतविधत्वम् । एवं सर्वेषां यज्ञानां यजुरादिभिरेकशतविधत्वमूह्यम् । तेषामेवमेकशतविधानां सर्वेषां यज्ञानां पूर्वमुक्तं फलमादिशति—स यः शतायुतायां काम इति । 'यज्ञेन यज्ञेन'—इति वीप्सया सर्वैर्यज्ञैरपि उक्तं फलमाप्नोति । एवमधियज्ञमर्थोऽभिहितः ॥ १३ ॥

अथाध्यात्ममिति । एकशतविधत्वं तदुच्यत इति शेषः । एकस्मिन् पुरुषे विद्यमानस्यैकहस्तस्य पञ्चाङ्गुलयोऽपि चतुर्विधा इति—एकैकाङ्गुलिपर्वभेदेन चतुर्विधा इति—पञ्चस्वङ्गुलिषु विंशतिः सम्पन्ना । द्वे कल्कुषी मणिबन्धारत्नी, बाहुरेकः, 'अंसफलकम्' एकम् 'अक्षः' अंसाग्रे वर्त्तमानं ग्रीवायामक्षवत् प्रोतमस्थि तदेकम् इति पञ्चविंशतिसङ्ख्या । एवमेकस्मिन् हस्ते पञ्चविंशतिः । तथाऽन्यस्मिन् हस्ते पादद्वये चेति शतं सङ्ख्या सम्पद्यते । 'आत्मा' अस्य देह एकशततमी विधेति । एतस्य प्राणैः सप्तविधत्वमुक्तमिति स्मारयति—उक्तं सप्तविधताया इति ॥ १४ ॥

अध्यात्ममेव प्रकारान्तरेणैकशतविधत्वं निरूपयति—स उ एव प्राणतेजा इति । उक्तरीत्या शतसंख्याकेष्वङ्गेषु प्राणो वर्तत इति सोऽपि शतसंख्याकः आत्मनि वर्त्तमानः 'प्राणः' एकशततमः । "स यः शतायुतायां कामः" इत्यादिना—"आत्मानं सम्पन्नं विदे" इत्यन्तेन वेदितुः फलनिरूपणम् । 'विदे' विदतेः—"लोपस्त आत्मनेपदेषु"—( पा. सू. ७ । १ । ४१ ) इति तलोपः ॥ १५ ॥

त्रीणि वाऽइमानि पञ्चविधानि । संव्वत्सरोऽग्निः पुरुषस्तेषां पञ्च विधाऽ अन्नं पानᳪ श्रीर्ज्योतिरमृतं यदेव संव्वत्सरेऽन्नं तदन्नं याऽआपस्तत्पानᳪ रात्रिरेव श्रीः श्रियाᳫ हैतद्रात्र्याᳪ सर्व्वाणि भूतानि संवसन्त्यहर्ज्योतिरादित्योऽमृतमित्यधिदेवतम् ॥ १६ ॥

( म ) अथाधियज्ञम् । यदेवाग्नावन्नमुपधीयते तदन्नं या ऽआपस्तत्पानं परिश्रित ऽएव श्रीस्तद्धि रात्रीणाᳪ रूपं यजुष्मत्यो ज्योतिस्तद्ध्यह्नाᳪ रूपमग्निरमृतं तद्ध्यादित्यस्य रूपमित्यु ऽएवाधियज्ञम् ॥ १७ ॥

( म ) अथाध्यात्मम् । यदेव पुरुषेऽन्नं तदन्नं या ऽआपस्तत्पानमस्थी-

---

त्रीणि वा इमानि पञ्चविधानि—संवत्सरः, अग्निः, पुरुषः । तेषां पञ्च विधाः—अन्नम्, पानम्, श्रीः, ज्योतिः, अमृतम् । यदेव संवत्सरेऽन्नं तदन्नम् । या आपस्तत्पानम् । रात्रिरेव श्रीः । श्रियां हैतद्रात्र्यां सर्वाणि भूतानि संवसन्ति । अहः, ज्योतिः, आदित्यः, अमृतम् । इत्यधिदेवतम् ॥१६॥

अथाधियज्ञम्—यदेवाग्नावन्नमुपधीयते—तदन्नम् । या आपस्तत्पानम् । परिश्रित एव श्रीः । तद्धि रात्रीणां रूपम् । यजुष्मत्यो ज्योतिः । तद्ध्यह्नां रूपम् । अग्निरमृतम् । तद्ध्यादित्यस्य रूपम् । इत्यु एवाधियज्ञम् ॥ १७ ॥

अथाध्यात्मम्—यदेव पुरुषेऽन्नम्—तदन्नम् । या आपस्तत्पानम् । अस्थीन्येव श्रीः—तद्धि परि-

---

यदुक्तं एकशतविधं विधत्त इत्यत्राधिदेवाधियज्ञाध्यात्मत्रयविषये संवत्सरचित्याग्निपुरुषा इति, तत्र तेषां संवत्सराग्निपुरुषाणां पञ्चविधत्वमिदानीमाह—त्रीणि वा इमानि पञ्चविधानीति । अन्नपानादीनि पञ्च विधाः, तत्र अधिदेवतं संवत्सरे अन्नादीनामर्थमाह—यदेवेति । यत् ' अन्नम् ' संवत्सरे समुत्पद्यते तदेवान्नशब्दवाच्यम् । या वृष्टा आपस्ता एव पानशब्दवाच्याः । रात्र्याः श्रीत्वं प्रतिपादयति—श्रियां हैतदिति । श्रयन्ति निवसन्त्यस्मिन् काल इति ' रात्रिः ' श्रीशब्दवाच्या । अह्नि प्रकाशसद्भावात् तदेव ' अहः ज्योतिः ' ' आदित्योऽमृतमित्यधिदेवतम् ' पञ्चविधार्थाः ॥ १६ ॥

अथाधियज्ञमिति । चित्याग्नौ अन्नादीनामर्थ उच्यते, यदेव प्राक् सर्वौषधमुपधीयते तदेवान्नम् । प्रोक्षणार्था आपः पानम् । परिश्रितः श्रीशब्दवाच्याः । यजुष्मत्य इष्टका ज्योतिःशब्दवाच्याः । परिश्रितां रात्रिरूपत्वं, यजुष्मतीनामिष्टकानामहोरूपत्वम् ( श. प. १०।९।४।१० ) इति अधस्तात् प्रतिपादितम् । चित्याग्नेरुपरि निधीयमानोऽग्निराहवनीय एवामृतशब्दवाच्यः । अग्नेः कथममृतत्वमिति तत्राह—तद्ध्यादित्यस्य रूपमिति । आदित्यस्य अमृतत्वं प्रागुक्तम्—" अमृतमेतद्यदेतदर्चिर्दीप्यते "—( श. प. १० । २ । ९ । ४ ) इति ॥ १७ ॥

अथाध्यात्ममिति । पुरुषेऽन्नादीनामर्थ उच्यते—'यदन्नम्' अद्यते तदेवान्नम्, 'याः' पीयन्ते ' तत् पानम्'

न्येव श्रीस्तद्धि परिश्रिताꣳ रूपं मज्जानो ज्योतिस्तद्धि यजुष्मतीनाꣳ रूपं प्राणोऽमृतं तदृचमेे रूपं प्राणोऽग्निः प्राणोऽमृतमित्यु वाऽआहुः ॥ १८ ॥

( ३ ) अन्नाद्वाऽअशनाया निवर्त्तते । पानात्पिपासा श्रियै पाप्मा ज्योतिषस्तमोऽमृतान्मृत्युर्नि ह वाऽअस्मादेतानि सर्व्वाणि वर्तन्तेऽप पुनर्मृत्युं जयति सर्व्वमायुरेति यऽएवं वेद तदेतदमृतमित्येवामुत्रोपासीतायुरितीह प्राण ऽइति हैकऽउपासते प्राणोऽग्निः प्राणोऽमृतमिति वदन्तो न तथा विद्यादध्रुवं वै तद्यत्प्राणस्तं ते विष्याम्यायुषो न मध्यादिति इत्यपि यजुषाऽभ्युक्तं तस्मादेतदमृतमित्येवामुत्रोपासीतायुरितीह तथो ह स सर्व्वमायुरेति ॥ १९ ॥

इति द्वितीयप्रपाठके द्वितीयं ब्राह्मणम् ॥ १०-२-२ ॥ ( २. ६. ) ॥

इति द्वितीयोऽध्यायः समाप्तः ॥ १०-२ ॥

---

श्रितां रूपम् । मज्जानो ज्योतिः । तद्धि यजुष्मतीनां रूपम् । प्राणोऽमृतम् । तदृचमेे रूपम् । प्राणोऽग्निः । प्राणोऽमृतम्-इत्यु वा आहुः ॥ १८ ॥

अन्नाद्वा अशनाया निवर्तते । पानात्पिपासा, श्रियै पाप्मा, ज्योतिषस्तमः, अमृतान्मृत्युः । नि ह वा अस्मादेतानि सर्वाणि वर्तन्ते, अप पुनर्मृत्युं जयति, सर्वमायुरेति-य एवं वेद । तदेतदमृतमित्येवामुत्रोपासीत, आयुरितीह । प्राण इति हैक उपासते-प्राणोऽग्निः,प्राणोऽमृतमिति वदन्तः । न तथा विद्यात् । अध्रुवं वै तत्-यत्प्राणः । " तं ते विष्याम्यायुषो न मध्यात "-(वा. सं. १२ । ६९ ) इति ह्यपि यजुषाऽभ्युक्तम् । तस्मादेतदमृतमित्येवामुत्रोपासीत-आयुरितीह । तथो ह सर्वमायुरेति ॥ १९ ॥

---

'अस्थीन्येव' श्रीशब्दवाच्यानि, परिश्रयणहेतुत्वात् । मज्जैव ज्योतिःशब्दवाच्या । अस्थिमज्जरूपयोः परिश्रिद्यजुष्मतीरूपत्वमुपपादितमधस्तात् ( श. प. १०।१।४।१२। ) । शरीरगतः प्राण एवात्र अमृतशब्दवाच्यः प्राणः । कथं प्राणस्यामृतत्वमिति, तत्र वेदवादिप्रसिद्धयोपपादयति-तदृचमेे रूपं प्राणोऽग्निरिति ॥ १८ ॥

अन्नादिपञ्चकेन निवर्त्यपञ्चकं दर्शयति-अन्नाद्वा अशनायेति । 'अन्नाद्' 'अशनाया' बुभुक्षा 'निवर्त्तते' । पानात्पानेच्छा । श्रियाः पाप्मा दारिद्र्यम् । ज्योतिषः प्रकाशात् तमस्तिमिरम् । अमृतान्मृत्युर्मरणं निवर्तते । अन्नादिपञ्चकं विदुषां फलमाह-नि ह वा अस्मादेतानीति । य एवमन्नादिपञ्चकमधिदेवादित्रयं वेद अस्माद्वेदितुः सकाशाद् 'एतानि' अशनायादीनि पञ्चानिष्टानि निवर्त्तन्ते । किञ्चामृतरूपान्तिमविधापरिज्ञानेन 'मृत्युं' 'जयति' 'सर्वम्' अत्यन्तम् 'आयुः' अश्नुते । यदुक्तम् अमृतरूपपञ्चमविधापरिज्ञानेन मृत्युं जयति सर्वमायुः प्राप्नोतीति तद्विशदयति-तदेतदमृतमिति । अमुत्रादित्ये अमृतमित्येवोपासनं कुर्यात् । इह

३३१०

आयुरित्येवोपासनं कुर्यात्, अतोऽग्नेरायुष्ट्वेनोपासनात् सर्वायुःप्राप्तिः फलम् । एके केवलाध्यात्मविषयेऽन्तिमविधाया निरूपणसमये " प्राणोऽग्निः प्राणोऽमृतम् " इति समाम्नातत्वादमृतशब्दस्य प्राणोऽर्थ इति मत्वा तस्यैवोपासनं चित्याग्नौ मन्यन्ते तन्मतमनूद्य निराचष्टे—**प्राण इति हैक** इति । यस्मात् प्राणः अध्रुवः अनित्यः तस्मात् 'प्राणः' अमृतशब्दवाच्यो न भवति, प्राणस्यानित्यत्वं यजुर्मन्त्रेण संवादयति—**तं ते विष्याम्यायुषो न मध्यात्** ( वा. सं. १२ । ६९ ) इति । अयमर्थः—हे यष्टः ! ' ते ' तव ' आयुषो ' जीवनस्य मध्यात् तं प्राणं न विष्यामि न विनाशयामि, " षोऽन्तकर्मणि "—( धा. पा. दि. प. ४१ ) श्यनि ( पा. सू. ३ । १ । ६९ ) " ओतः श्यनि "—( पा. सू. ७ । ३ । ७१ ) इति लोपे कृते रूपम् । न विष्यामीति विनाशनिरासोक्त्या विनाशोऽस्तीति सम्भाव्यत इति यजुषोऽर्थः । तस्मादुक्त एवार्थ इति निगमयति—**तस्मादेतदमृतमित्येवासुत्रेति** ॥ १९ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये दशमकाण्डे द्वितीयेऽध्याये षष्ठं ब्राह्मणम् ॥ ( १०–२–६ ) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं,
सप्ताब्धीन्पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटं च ॥
धान्याद्रिं धन्यजन्मा तिलमवमतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान्गुडकृतमजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणजमनृणः शार्करं चार्कतेजा,
रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये दशमकाण्डे द्वितीयोऽध्यायः समाप्तः ॥ ( १०–२ ) ॥



# अथ तृतीयेऽध्याये प्रथमं ब्राह्मणम् । द्वितीयप्रपाठके च तृतीयं ब्राह्मणम् ।



**प्राणो गायत्री । चक्षुरुष्णिग्वागनुष्टुम्मनो बृहती श्रोत्रं पङ्क्तिर्यऽएवायं प्रजननः प्राणऽएष त्रिष्टुबथ योऽयमवाङ्प्राण ऽएष जगती तानि वा ऽएतानि सप्त च्छन्दाᳫंसि चतुरुत्तराण्यग्नौ क्रियन्ते ॥ १ ॥**

---

प्राणो गायत्री, चक्षुरुष्णिग्, वागनुष्टुब्, मनो बृहती, श्रोत्रं पङ्क्तिः । य एवायं प्रजननः प्राणः—एष त्रिष्टुब् । अथ योऽयमवाङ् प्राणः—एष जगती । तानि वा एतानि सप्त छन्दांसि चतुरुत्तराण्यग्नौ क्रियन्ते ॥ १ ॥

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

चयने पक्वेष्टकाः किञ्चिदधिकैकादशसहस्रसम्मिता उपधेयाः । तथा च कात्यायनः—" अथातः सर्वासां पक्वेष्टकानां समासेन संख्याप्रमाणान्यनुव्याख्यास्यामः " " सहस्राण्येकादश सप्ततिश्च शतम् " ( का. श्रौ. सू. परि० पूरणसूत्रे ९ । १—२ ) इति । यद्यपि दर्भस्तम्बपुष्करपर्णरुक्मपुरुषाः स्रुगुलूखलपशुशीर्षकूर्मादयो यजुष्मदिष्टकामध्ये परिगणितास्तथापि ते पक्वेष्टका न भवंति । अतो न तेषामत्र परिगणनम् तत्रोक्तसंख्यानां मध्ये लोकंपृणेष्टका अष्टशतोत्तरदशसहस्रसंख्याकाः । शिष्टा यजुष्मत्यश्च । तथाच कात्यायनः लोकंपृणानां प्रतिचिति संख्याविशेषं वदन्नेतावत्यः इति सूत्रितवान् । " द्विसाहस्री प्रथमा लोकंपृणानां पञ्चाशदूना, " " उत्तराश्च " " त्रिसाहस्र्युत्तमा " " वक्रालिखितानां दक्षिणोत्तरे मध्य इत्तरासाम् " " षट्त्रिंशच्छत्या वा तृतीया " " अष्टादशशत्या इतराः " ( का. श्रौ. सू. १७ । १९५—१९९ ) इति । अयमर्थः—प्रथमा चितिः पञ्चाशदूनद्विसहस्रलोकंपृणेष्टकायुक्ता । एवमुत्तरास्तिस्रो द्वितीयाद्याः । एवं चतसृणां चितीनां शतद्वयोनाष्टासहस्राणि । पञ्चमी चितिस्त्रिसहस्रयुक्ता ऋजुसव्यदक्षिणरेखावदिष्टकायुक्ता इति लोकंपृणानामष्टशतोत्तराणि दश सहस्राणि जातानि । अथवा षट्त्रिंशच्छतसंख्याका तृतीया चितिः । उत्तरा अष्टादशशतसम्मिता इति । अत्रापि पक्षे प्रोक्तसंख्या सम्भवति । तत्र पञ्चम्यां चितावुपधेयानां लोकंपृणानां त्रिसहस्रसम्मितानामृजुदक्षिणसव्यलेखनं समाम्नातम् अत्रैव काण्डे द्वितीयाध्याये " सहस्रमृज्वालिखिता इष्टकाः करोति सहस्रमित्यालिखिताः सहस्रमित्यालिखिताः " ( श. प. १० । २ । १ । ८ ) इति, अत्र इतिशब्दोऽभिनयप्रदर्शकः । इति दक्षिणावृतः सव्यावृतश्च आलिखिता इति रेखायुक्ता इत्यर्थः । आपस्तम्बेन तु स्पष्टमुक्तम्—" ऋजुलेखा दक्षिणावृतः सव्यावृतः " इति । ताश्च तत्रैवाध्याये ( श. प. १० । २ । १ । ९—११ ) त्रिसहस्रसम्मिताः सुपर्णचित्याग्नेर्मध्यदक्षिणोत्तरभागत्रये लोमरूपत्वेन स्तुता इति

---

१—एतच्च स्पष्टीकृतं श्लोकैः कात्यायनेनैव पूरणसूत्रे—अयुतं च सहस्रं च शतं च सप्ततिं तथा । एताः पक्वेष्टका ज्ञेया अग्नौ वाजसनेयके ॥ तत्र—अयुतं च शतान्यष्टौ ज्ञेया लोकम्पृणेष्टकाः । इतोऽन्याश्च यजुष्मत्यस्त्वपक्वाः पंचविंशतिः ॥ इति । १२—१५ ॥

प्राणो गायत्रीति । तद्य ऽएव प्राणस्य महिमा यद्वीर्यं तदेतत्सहस्रं प्राणस्यैवैतद्वीर्यं यद्ध्यस्य चिन्वतः प्राण ऽउत्क्रामेत्तत ऽएवैषोऽग्निर्न चीयेतैतेनैवास्य रूपेण सहस्रमेष गायत्रीः संचितो भवति ॥ २ ॥

चक्षुरुष्णिगिति । तद्य ऽएव चक्षुषो महिमा यद्वीर्यं तदेतत्सहस्रं चक्षुष ऽएवैतद्वीर्यं यद्ध्यस्य चिन्वतश्चक्षुरुत्क्रामेत्तत ऽएवैषोऽग्निर्न चीयेतैतेनैवास्य रूपेण सहस्रमेष ऽउष्णिहः संचितो भवति ॥ ३ ॥

---

प्राणो गायत्रीति–तद् य एव प्राणस्य महिमा, यद्वीर्यम्–तदेतत्सहस्रम् । प्राणस्यैवैतद्वीर्यम् । यद्ध्यस्य चिन्वतः प्राण उत्क्रामेत्–तत एवैषोऽग्निर्न चीयेत, एतेनैवास्य रूपेण सहस्रम् एष गायत्रीः सञ्चितो भवति ॥ २ ॥

चक्षुरुष्णिगिति–तद् य एव चक्षुषो महिमा, यद्वीर्यम्–तदेतत्सहस्रम् । चक्षुष एवैतद्वीर्यम् । यद्ध्यस्य चिन्वतश्चक्षुरुत्क्रामेत्–तत एवैषोऽग्निर्न चीयेत । एतेनैवास्य रूपेण सहस्रम् एष उष्णिहः सञ्चितो भवति ॥ ३ ॥

---

तत्सहस्रत्रयं परित्यज्यावशिष्टानां सप्तसहस्राणां शिरःप्रभृति पादपर्यन्तमुपहितानामेव शरीररूपत्वेन स्थितानां गायत्र्यादिसप्तच्छन्दोवीर्यत्वेन स्तुतिस्तृतीयाध्याये प्रथमब्राह्मणे क्रियते । यद्यप्यष्टौ शतान्यतिरिच्यन्ते तथापि सहस्रत्वेन स्तोतुमयोग्यत्वात्तासां स्तुतिरत्र न क्रियते । यद्वा अष्टमकाण्डे चरमचितौ " छन्दस्या उपदधाति " ( श. प. । ८ । ६ । २ । १–१९ ) इति सप्तानां छन्दसामुपधानमुक्तम् । तेषां छन्दसां स्तुतिः– प्राणो गायत्रीति । चित्याग्निरूपस्य प्रजापतेः 'प्राणो' ' गायत्रीति ' गायत्री छन्दः, प्राणः प्राणसंचारस्थानं नासिकोच्यते । शीर्षण्याः प्राणाश्चत्वार उक्ताः । द्वाववाञ्चावाह–य एवायं प्रजननः प्राण इत्यादिना । मनस्तु सर्वेन्द्रियसङ्गतमेकमिति सप्त प्राणा इत्यर्थः । पूर्वमपि प्रजापतिः सप्तभिः प्राणैः सप्तपुरुषात्मक एकः पुरुषः सृष्ट इति विवक्षया सप्तावयवा उक्ता इति तात्पर्यम् । छन्दसामग्नौ प्रसक्तिं दर्शयति–तानि वा एतानीति । चतुरुत्तराणीति । गायत्र्याश्चतुर्विंशतिरक्षराणि, तस्याश्चत्वार्यधिकान्युष्णिहः । तस्याश्चत्वार्यक्षराण्यनुष्टुभम् इति सर्वाणि चतुरक्षराधिकानि सप्त च्छन्दांसि अग्नौ क्रियन्ते छन्दस्येष्टकोपधानकरणमन्त्रतया ॥ १ ॥

एवं छन्दसां प्राणाद्यात्मकत्वमुक्तम् । तत्र वियुज्य स्तोतुमनुवदति–प्राणो गायत्रीतीति । 'यः' ' प्राणस्य ' ' महिमा ' महत्त्वं ' यद्वीर्यं ' च ' तदेतद् ' इष्टका–' सहस्रं ' प्राणवीर्यात्मकम् । इष्टकानां प्राणात्मकत्वमेव व्यतिरेकमुखेनाह–यद्ध्यस्य चिन्वत इति । यदि ' चिन्वतो ' यजमानस्य कर्ममध्ये प्राण उत्क्रान्तः स्यात् तर्हि एषोऽग्निर्न चेतुं योग्यः । कर्तृलोपे कर्मकरणन्यायाभावात् । अतोऽग्नौ प्राणरूपगायत्रीछन्दोऽनुवचनेन अस्यानुत्क्रान्तप्राणस्य ' एतेनैव रूपेण ' पुनः देहावस्थानलक्षणेन रूपेणात्मना एष चित्याग्निः ' सहस्रं गायत्रीः ' इष्टकाः ' सञ्चितः ' । कर्त्तरि क्तः । सञ्चितवान् व्याप्तवान् ' भवति ' । छन्दस्योपधानस्तुतिपक्षे तदेतत्प्राणवीर्यं सहस्रगुणमिति ॥ २ ॥

एवमुत्तरे चक्षुरुष्णिगित्यादयः षट्पर्याया व्याख्येयाः । तत्र " चक्षुरुत्क्रामेत् " " वागुत्क्रामेत् " " मन

व्वागनुष्टुब्बिति । तद्य ऽएव व्वाचो महिमा यद्वीर्यं तदेतत्सहस्रं व्वाच ऽएवैतद्वीर्यं यद्धचस्य चिन्वतो व्वागुत्क्रामेत्तत ऽएवैषोऽग्निर्न चीयेतैतेनै-वास्य रूपेण सहस्रमेषोऽनुष्टुभः संचितो भवति ॥ ४ ॥

मनो बृहतीति । तद्य ऽएव मनसो महिमा यद्वीर्यं तदेतत्सहस्रं मनस ऽएवैतद्वीर्यं यद्धचस्य चिन्वतो मन ऽउत्क्रामेत्तत ऽएवैषोऽग्निर्न चीयेतैतेनै-वास्य रूपेण सहस्रमेष बृहतीः संचितो भवति ॥ ५ ॥

श्रोत्रं पङ्क्तिरिति । तद्यऽएव श्रोत्रस्य महिमा यद्वीर्यं तदेतत्सहस्रँ श्रोत्र-स्यैवैतद्वीर्यं यद्धचस्य चिन्वतः श्रोत्रमुत्क्रामेत्तत ऽएवैषोऽग्निर्न चीयेतैतेनै-वास्य रूपेण सहस्रमेष पङ्क्तीः संचितो भवति ॥ ६ ॥

यऽएवायं प्रजननः प्राणः । (ऽ) एष त्रिष्टुबिति तद्य ऽएवैतस्य प्राणस्य महिमा यद्वीर्यं तदेतत्सहस्रमेतस्यैवैतत्प्राणस्य व्वीर्यं यद्धचस्य चिन्वतऽ एष प्राण ऽआलुभ्येत्तत ऽएवैषोऽग्निर्न चीयेतैतेनैवास्य रूपेण सहस्रमेष त्रिष्टुभः संचितो भवति ॥ ७ ॥

---

वागनुष्टुबिति–तद् य एव वाचो महिमा, यद्वीर्यम्–तदेतत्सहस्रम् । वाच एवैतद्वीर्यम् । यद्धचस्य चिन्वतो वागुत्क्रामेत्–तत एवैषोऽग्निर्न चीयेत । एतेनैवास्य रूपेण सहस्रम् एषोऽनुष्टुभः सञ्चितो भवति ॥ ४ ॥

मनो बृहतीति–तद् य एव मनसो महिमा, यद्वीर्यम्–तदेतत्सहस्रम् । मनस एवैतद्वीर्यम् । यद्धचस्य चिन्वतो मन उत्क्रामेत्–तत एवैषोऽग्निर्न चीयेत । एतेनैवास्य रूपेण सहस्रम् एष बृहतीः सञ्चितो भवति ॥ ५ ॥

श्रोत्रं पङ्क्तिरिति–तद् य एव श्रोत्रस्य महिमा, यद्वीर्यम्–तदेतत्सहस्रम् । श्रोत्रस्यैवैतद्वीर्यम् । यद्धचस्य चिन्वतः श्रोत्रम् उत्क्रामेत्–तत एवैषोऽग्निर्न चीयेत । एतेनैवास्य रूपेण सहस्रम् एष पङ्क्तीः सञ्चितो भवति ॥ ६ ॥

य एवायं प्रजननः प्राण एष त्रिष्टुबिति । तद् य एवैतस्य प्राणस्य महिमा, यद्वीर्यम् । तदेतत्सहस्रम् । एतस्यैवैतत्प्राणस्य वीर्यम् । यद्धचस्य चिन्वत एष प्राण आलुभ्येत्–तत एवैषोऽग्निर्न चीयेत । एतेनैवास्य रूपेण सहस्रम् एष त्रिष्टुभः सञ्चितो भवति ॥ ७ ॥

---

उत्क्रामेत् " " श्रोत्रमुत्क्रामेत् " " एषोऽग्निर्न चीयेत " इति पठ्यते । तस्यार्थः–अन्धमूकबधिरादीनां यजमानानां कर्मण्यनधिकारादग्निचयनं न स्यादिति । प्रजननः प्राण आलुभ्येदिति । प्रजननशक्तिरहितो भवेत् ।

( त्यु ) अथ योऽयमवाङ्प्राणः । ( ऽ ) एष जगतीति तद्य ऽएवैतस्य प्राणस्य महिमा यद्वीर्यं तदेतत्सहस्रमेतस्यैवैतत्प्राणस्य वीर्यं यद्वचस्य चिन्वत ऽएष प्राणऽ आलुभ्येत्तत ऽएवैषोऽग्निर्न चीयेतैतेनैवास्य रूपेण सहस्रमेषु जगतीः संचितो भवति ॥ ८ ॥

तानि वाऽएतानि । सप्त च्छन्दाᳪंसि चतुरुत्तराण्यन्योऽन्यस्मिन्प्रतिष्ठितानि सप्तेमे पुरुषे प्राणा ऽअन्योऽन्यस्मिन्प्रतिष्ठितास्तद्यावन्तमेवंविच्छन्दसां गणमन्वाह च्छन्दसश्छन्दसो हैवास्य सोऽनूक्तो भवति स्तुतो वा शस्तो वोपहितो वा ॥ ९ ॥

इति द्वितीयप्रपाठके तृतीयं ब्राह्मणम् ॥ १०-२-३ ॥ ( ३. १. ) ॥

---

अथ योऽयमवाङ् प्राण एष जगतीति-तद् य एवैतस्य प्राणस्य महिमा, यद्वीर्यम्-तदेतत्सहस्रम् । एतस्यैवैतत्प्राणस्य वीर्यम् । यद्वचस्य चिन्वत एष प्राण आलुभ्येत्-तत एवैषोऽग्निर्न चीयेत । एतेनैवास्य रूपेण सहस्रम् एष जगतीः सञ्चितो भवति ॥ ८ ॥

तानि वाऽएतानि सप्त च्छन्दांसि चतुरुत्तराण्यन्योऽन्यस्मिन्प्रतिष्ठितानि । सप्तेमे पुरुषे प्राणा अन्योऽन्यस्मिन्प्रतिष्ठिताः । तद् यावन्तमेवंवित् छन्दसां गणमन्वाह-छन्दसश्छन्दसो हैवास्य सोऽनूक्तो भवति । स्तुतो वा, शस्तो वा, उपहितो वा ॥ ९ ॥

---

' एषोऽग्निर्न चीयेत ' नपुंसकस्य कर्मानधिकारात् । अवाङ्प्राण आलुभ्येदिति । दुश्चिकित्समूलरोगराजयक्ष्मादिगृहीतः पुरुषः कर्मणि नाधिक्रियते ॥ ३-८ ॥

सम्भूय च्छन्दांसि प्रशंसति-तानि वा एतानि सप्तेति । यतः ' छन्दांसि ' परस्परम् ' अन्योऽन्यस्मिन् ' प्रतिष्ठितानि गायत्र्यां तावत् सर्वाणि च्छन्दांसि तस्याश्चतुर्विंशत्यक्षराणां सर्वच्छन्दःस्वनुगमात् । तथा जगत्यामन्तिमच्छन्दसि सर्वाणि गायत्र्यादिच्छन्दांसि प्रतिष्ठितानि सकलच्छन्दोऽक्षरसद्भावात् । एवं मध्यमानि च्छन्दांस्यूह्यानि । एवं पुरुषे वर्त्तमानाः ' सप्तेमे प्राणाः ' ' अन्योन्यस्मिन् ' ' प्रतिष्ठिताः ' तदुक्तं प्राक् " न वा इत्थं सन्तः शक्ष्यामः प्रजनयितुमिमान् सप्त पुरुषानेकं पुरुषं करवाम " ( श.प.६।१।१।३ ) इत्यादिना । अतः सप्तानां छन्दसामग्नौकरणेन एकस्मिन् पुरुषे चित्याग्नौ सप्त प्राणान् प्रतिष्ठापितवान् भवतीति प्रकरणार्थः । वेदितुः फलमाह-तद्यावन्तमेवंविदिति । विद्वान् पुरुषः गायत्र्यादीनां मध्ये ' यावन्तम् ' छन्दोगणमनुब्रूयाव तेनैवानुवचनेन तस्य विदुषः ' छन्दसश्छन्दसः ' सर्वच्छन्दसां गणः सम्यग् ' अनूक्तः ' संस्तुतः शस्तः सम्यगुपहितश्च भवतीत्यर्थः ॥ ९ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये दशमकाण्डे तृतीयेऽध्याये प्रथमं ब्राह्मणम् ॥ ( १०-३-१ ) ॥

तदाहुः । किं छन्दः का देवताऽग्नेः शिर ऽइति गायत्री छन्दोऽग्निर्देवता शिरः ॥ १ ॥

किं छन्दः । का देवता ग्रीवा ऽइत्युष्णिक्छन्दः सविता देवता ग्रीवाः ॥२॥

किं छन्दः । का देवताऽनूकमिति बृहती छन्दो बृहस्पतिर्देवताऽनूकम् ॥३॥

(ङ्कि) किं छन्दः । का देवता पक्षाविति बृहद्रथन्तरे च्छन्दो द्यावापृथिवी देवते पक्षौ ॥ ४ ॥

किं छन्दः । का देवता मध्यमिति त्रिष्टुप्छन्दऽइन्द्रो देवता मध्यम् ॥ ५ ॥

( ङ्कि ) किं छन्दः । का देवता श्रोणीऽइति जगती छन्दऽ आदित्यो देवता श्रोणी ॥ ६ ॥

किं छन्दः । का देवता यस्मादिदं प्राणाद्रेतः सिच्यतऽ इत्यतिच्छन्दाश्छन्दः प्रजापतिर्देवता ॥ ७ ॥

---

तदाहुः—किं छन्दः का देवताऽग्नेः शिर इति । गायत्री छन्दोऽग्निर्देवता शिरः ॥ १ ॥

किं छन्दः का देवता ग्रीवा इति । उष्णिक्छन्दः सविता देवता ग्रीवाः ॥ २ ॥

किं छन्दः का देवताऽनूकमिति । बृहती छन्दो बृहस्पतिर्देवताऽनूकम् ॥ ३ ॥

किं छन्दः का देवता पक्षाविति । बृहद्रथन्तरे छन्दो द्यावापृथिवी देवते पक्षौ ॥ ४ ॥

किं छन्दः का देवता मध्यमिति । त्रिष्टुप्छन्द इन्द्रो देवता मध्यम् ॥ ५ ॥

किं छन्दः का देवता श्रोणी इति । जगती छन्द आदित्यो देवता श्रोणी ॥ ६ ॥

किं छन्दः का देवता यस्मादिदं प्राणाद्रेतः सिच्यत—इति । अतिच्छन्दाश्छन्दः, प्रजापतिर्देवता ॥ ७ ॥

---

एवं चित्याग्नेश्चक्षुरादिसप्तावयवानां छन्दोमयत्वमुक्तम् । अथ शिरोग्रीवादीनां छन्दोमयत्वं वेदवादिप्रश्नोत्तराभ्यां निरूपयति—तदाहुः किं छन्दः का देवताऽग्नेः शिर इतीति । 'अग्नेः' चित्यस्य 'शिरः इति' यदस्ति तस्य किं छन्दः का देवतेति प्रश्नः । उत्तरम्—'गायत्री छन्दोऽग्निर्देवता'—"अग्निर्मूर्द्धा दिवः ककुद्"—( वा. सं. १५ । २० ) इत्यस्य छन्दस्येष्टकोपधानमन्त्रस्य गायत्रत्वादाग्नेयत्वाच ( श. प. ७।४।१।४१ ) शिरसस्तदुभयात्मकत्वम् ( श. प. । ८ । ६ । २ । ६ ) अन्यत्र "गायत्रं हि शिरः" इति श्रूयते ॥ १ ॥

एवं ग्रीवानूकपक्षादिषु तत्तच्छन्दोमयत्वं तत्तद्देवतामयत्वं च यथायोग्यं मन्तव्यम् ॥ २ ॥

अनूकशब्दस्य पक्षयोर्मध्यदेहस्य सन्धिः पुच्छमध्ययोश्च सन्धिरित्यर्थः ॥ ३—७ ॥

किं छन्दः । का देवता योऽयमवाङ्प्राणऽइति यज्ञायज्ञियं छन्दो वैश्वानरो देवता ॥ ८ ॥

किं छन्दः । का देवतोरूऽइत्यनुष्टुप्छन्दो विश्वे देवा देवतोरू ॥ ९ ॥

किं छन्दः । का देवताऽष्ठीवन्ताविति पङ्क्तिश्छन्दो मरुतो देवताऽष्ठीवन्तौ १०

किं छन्दः । का देवता प्रतिष्ठेऽइति द्विपदा च्छन्दो विष्णुर्देवता प्रतिष्ठे ११

किं छन्दः । का देवता प्राणाऽइति विच्छन्दाश्छन्दो वायुर्देवता प्राणाः १२

किं छन्दः । का देवतोनातिरिक्तानीति न्यूनाक्षरा च्छन्दऽ आपो देवतोनातिरिक्तानि सैषाऽऽत्मविद्यैवैतन्मयो हैवैता देवताऽएतमात्मानमभिसम्भवति न ह्यत्रान्या लोक्यतायाऽआशीरस्ति ॥ १३ ॥

इति द्वितीयप्रपाठके चतुर्थं ब्राह्मणम् ॥ १०-२-४ ॥ ( ३. २. ) ॥

---

किं छन्दः का देवता योऽयमवाङ् प्राण इति । यज्ञायज्ञियं छन्दो वैश्वानरो देवता ॥ ८ ॥

किं छन्दः का देवतोरूऽइति । अनुष्टुप् छन्दो विश्वे देवा देवतोरू ॥ ९ ॥

किं छन्दः का देवताऽष्ठीवन्ताविति । पंक्तिश्छन्दो मरुतो देवताऽष्ठीवन्तौ ॥ १० ॥

किं छन्दः का देवता प्रतिष्ठे इति । द्विपदा च्छन्दो विष्णुर्देवता प्रतिष्ठे ॥ ११ ॥

किं छन्दः का देवता प्राणा इति । विच्छन्दाश्छन्दो वायुर्देवता प्राणाः ॥ १२ ॥

किं छन्दः का देवतोनातिरिक्तानीति । न्यूनाक्षरा छन्द आपो देवतोनातिरिक्तानि । सैषाऽऽत्मविद्यैव । एतन्मयो हैवैता देवता एतमात्मानमभिसम्भवति । न ह्यत्रान्या लोक्यतायाऽआशीरस्ति ॥ १३ ॥

---

यज्ञायज्ञियमिति । " यज्ञायज्ञा वो अग्नये "–( वा. सं. २७ । ४२ ) इत्यत्रोत्पन्नं ' यज्ञायज्ञियं ' तदेव छन्दः बृहतीत्यर्थः ॥ ८ ॥ ९ ॥

' अष्ठीवन्तौ ' जानुप्रदेशावित्यर्थः ॥ १० ॥

' प्रतिष्ठे ' पादौ ॥ ११ ॥

विच्छन्दा इति । विविधच्छन्दस्का ऋक् विच्छन्दाः, तादृक् छन्दः ॥ १२ ॥

ऊनातिरिक्तानीति । उक्तेभ्योऽङ्गेभ्योऽन्यानि न्यूनाधिकपरिमाणान्यङ्गानि च किं छन्दस्कानि किं देवत्यानि– इति प्रश्नः । उत्तरम्–न्यूनाक्षरा छन्दः, आपो देवतेति । " आपो वा इदं सर्वं विश्वा भूतान्यापः प्राणा वा आपः "–इति श्रुतेः अपां सर्वात्मत्वात् न्यूनातिरिक्तान्यङ्गान्यब्देवत्यानीत्यर्थः । यदुक्तम्–अग्नेः शिरोग्रीवादिपरिकल्पनेन छन्दोदेवतास्वरूपत्वं तदेतत्पुण्यलोकसाधनमात्मविद्यैवेति प्रशंसति–सैषाऽऽत्मविद्यैवेति । आत्मन उदीरितच्छन्दोदेवतासमष्टिरूपविराडात्मकस्य सम्बन्धिनः स्वस्य विद्या । य एवंविधमग्निं चिन्वीत, वेद वा स एतन्मयः । अत्रोक्ताग्निसवित्रादिदेवतास्वरूपः सः ' एतमात्मानम् ' एवंविधच्छन्दोदेवतारूपावयवयुक्तं

धीरो ह शातपर्णेयः । ( यो ) महाशालं जाबालमुपोत्ससाद तꣳ होवाच किं मा विद्वानुपोदसदऽइत्यग्निं वेदेति कमग्निं वेत्थेति वाचमिति यस्तमग्निं वेद किꣳ स भवतीति वाग्ग्मी भवतीति होवाच नैनं वाग्जहातीति ॥ १ ॥

वेत्थाग्निमिति होवाच । किमेव मा विद्वानुपोदसदऽइत्यग्निं वेदेति कमग्निं वेत्थेति चक्षुरिति यस्तमग्निं वेद किꣳ स भवतीति चक्षुष्मान्भवतीति होवाच नैनं चक्षुर्जहातीति ॥ २ ॥

वेत्थाग्निमिति होवाच । किमेव मा विद्वानुपोदसदऽइत्यग्निं वेदेति कमग्निं वेत्थेति मनऽइति यस्तमग्निं वेद किꣳ स भवतीति मनस्वी भवतीति होवाच नैनं मनो जहातीति ॥ ३ ॥

वेत्थाग्निमिति होवाच । किमेव मा विद्वानुपोदसदऽ इत्यग्निं वेदेति कमग्निं वेत्थेति श्रोत्रमिति यस्तमग्निं वेद किꣳ स भवतीति श्रोत्रवान्भवतीति होवाच नैनꣳ श्रोत्रं जहातीति ॥ ४ ॥

---

धीरो ह शातपर्णेयो महाशालं जाबालमुपोत्ससाद । तं होवाच–किं मा विद्वानुपोदसद इति । अग्निं वेदेति । कमग्निं वेत्थेति । वाचमिति । यस्तमग्निं वेद–किं स भवतीति । वाग्ग्मी भवतीति–होवाच । नैनं वाग्जहातीति ॥ १ ॥

वेत्थाग्निमिति होवाच–किमेव मा विद्वानुपोदसद इति । अग्निं वेदेति । कमग्निं वेत्थेति । चक्षुरिति । यस्तमग्निं वेद–किं स भवतीति । चक्षुष्मान्भवतीति होवाच । नैनं चक्षुर्जहातीति ॥ २ ॥

वेत्थाग्निमिति होवाच–किमेव मा विद्वानुपोदसद इति । अग्निं वेदेति । कमग्निं वेत्थेति । मन इति । यस्तमग्निं वेद–किं स भवतीति । मनस्वी भवतीति होवाच । नैनं मनो जहातीति ॥ ३ ॥

वेत्थाग्निमिति होवाच–किमेव मा विद्वानुपोदसद इति । अग्निं वेदेति । कमग्निं वेत्थेति । श्रोत्रमिति । यस्तमग्निं वेद–किं स भवतीति । श्रोत्रवान्भवतीति होवाच । नैनं श्रोत्रं जहातीति ॥ ४ ॥

---

शरीरम् 'अभि' लक्ष्य सम्भवति उत्पद्यते । अग्निचितो वेदितुश्च सर्वदेवतास्वरूपप्राप्तिरित्युक्तं भवति । नहात्रेति । 'अत्र' अग्नौ 'लोक्यतायै' पुण्यलोकावाप्तये 'अन्या' उक्तव्यतिरिक्ता 'आशीः' प्रार्थना नास्तीत्यर्थः ॥ १३ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये दशमकाण्डे तृतीयेऽध्याये द्वितीयं ब्राह्मणम् ॥ ( १०–३–२ ) ॥

तृतीयब्राह्मणेऽग्नेः सर्वदेवतासमष्टिरूपप्राणवाय्वात्मकत्वं धीरमहाशालनाम्नोर्महर्ष्योः प्रश्नप्रतिवचनाभ्यां प्रतिपाद्यते । विद्याविषये गुरुशिष्यप्रतिपत्तिः कार्येति वक्तुं तत्प्रतिपत्तिमादौ दर्शयति–धीरो ह शातपर्णेय इति । 'उपोत्ससाद' समीपमभ्यागतः । तस्मात् सकाशाद् विद्यां ग्रहीतुमुपसर्त्तिं कृतवान् । गुरुः शिष्यस्य समीपा-

व्वेत्थाग्निमिति होवाच। किमेवु मा व्विद्वानुपोदसद॒ऽइत्यग्निं व्वेदेति कुमग्निं व्वेत्थेति यु ऽएतत्सुर्व्वमग्निस्तं व्वेदेति तुस्मिन्होक्तुऽउपावरुरोहा-धीहि भोस्तुमग्निमिति ॥ ५ ॥

सु होवाच। प्राणो वावु सोऽग्निर्यदा वै पुरुषः स्वुपिति प्राणं तुर्हि व्वागु-प्येति प्राणं चुक्षुः प्राणं मुनः प्राणꣳ श्रोत्रं यदा प्रबुध्यते प्राणादेवाधि पुनर्जायन्तऽइत्यध्यात्मम् ॥ ६ ॥

---

वेत्थाग्निमिति होवाच—किमेव मा विद्वानुपोदसद इति। अग्निं वेदेति। कमग्निं वेत्थेति। य एतत्सर्वमग्निस्तं वेदेति। तस्मिन्होक्तऽउपावरुरोह—अधीहि भोः—तमग्निमिति ॥ ५ ॥

स होवाच—प्राणो वाव सोऽग्निः। यदा वै पुरुषः स्वपिति—प्राणं तर्हि वागप्येति। प्राणं चक्षुः। प्राणं मनः। प्राणं श्रोत्रम्। यदा प्रबुध्यते प्राणादेवाधि पुनर्जायन्ते। इत्यध्यात्मम् ॥ ६ ॥

---

गमनमात्रं दृष्ट्वा विद्यामुपदेष्टुं नार्हति, किन्तु तस्य बुभुत्साविशेषं परिज्ञाय वक्तुमुचितः इति दर्शयितुं महा-शालस्य वचनमाह—तं होवाच किं मा विद्वानिति। स जाबालो महाशालः 'तं' धीरमुपसन्नं शिष्यमुवाच—हे धीर! 'किं विद्वान्' कमर्थं जानानो माम् 'उपोदसदः' उपसन्नवानसीति। शिष्यस्योत्तरम्—'अग्निं वेद' जानामीति। वेत्तेर्लडुत्तमे मिपो णलादेशे रूपम्। कमग्निं वेत्थेति। अग्निविशेषप्रश्नो महाशालस्य। वाचम् इति। वाग्रूपमग्निं वेदेति शिष्यस्योत्तरम्। अथ महाशालस्य वाग्रूपाग्निपरिज्ञाने किं फलमिति फलप्रश्नः—यस्तमग्निं वेद किं स भवतीति। अत्र वेत्तेर्लट्प्रथमैकवचने तिपो णलादेशे रूपम्। अथ वाग्रूपफलकथनं वाग्ग्मी भवतीत्यादिना। 'वाग्ग्मी' प्रशस्तवाग्भवति इत्येवमुवाच धीरः। तदेव विवृणोति—नैनमिति। 'एनम्' वाग्रूपमग्निं विद्वांसं 'वाक् न जहाति' न त्यजति। सर्वत्र प्रश्नप्रतिवचनसमाप्तिद्योतका इतिशब्दाः ॥ १ ॥

वेत्थाग्निमिति होवाचेत्यादयो जाबालस्य धीरं प्रति कृताः प्रश्नाः, एवमुत्तरत्र वागाद्यग्निविशेषविषयप्रश्न-प्रतिवचनरूपाः पर्याया व्याख्येयाः ॥ २–४ ॥

य एतत्सर्वमग्निस्तं वेदेति। पुनः जाबालेन कीदृशमग्निं 'वेत्थेति' प्रश्ने कृते वागादिसर्वात्मकमग्निं जानामीति धीर उक्तवान्। अथैवमुक्ते सर्वात्मकमग्निमजानानो महाशालस्तस्माद्धीरात् सकाशादग्निं परिजिज्ञा-सितुमासनादुपावरूढ इत्याह—तस्मिन् होक्त उपावरुरोहेति। हे धीर! 'तं' सर्वात्मकम् 'अग्निम्' माम् 'अधीहि' अध्यापयेति उपसन्न इत्यर्थः ॥ ५ ॥

उपास्याग्नेरध्यात्माधिदेवतभेदेन सर्वात्मकत्वं विशदयति—स होवाच प्राणो वाव सोऽग्निरिति। 'स' धीरः 'तम्' अग्निमुक्तवान्। 'सोऽग्निः' 'प्राणो वाव' प्राण एव। प्राणस्य सर्वात्मकत्वमाह—यदा वै पुरुषः स्वपितीति। सुषुप्त्यवस्थामनुभवति तदा वाक्चक्षुःश्रोत्रादीनि ज्ञानकर्मेन्द्रियाणि मनश्चान्तरमिन्द्रियं 'प्राण-मप्येति'—प्राण एकीभवति। केवलं प्राण एव वर्त्तत इत्यर्थः। अथ 'यदा' पुरुषः 'प्रबुध्यते' ज्ञानवान् भवति तदा प्राणादेवाधि पुनरिन्द्रियाणि जायन्ते अतः प्राणरूपोऽग्निः सर्वात्मक इत्यध्यात्ममित्यर्थः ॥ ६ ॥

( म ) अथाधिदेवतम् । या वै सा वागग्निरेव स यत्तच्चक्षुरसौ सऽआदित्यो यत्तन्मनऽएष स चन्द्रमा यत्तच्छ्रोत्रं दिशऽएव तदथ यः स प्राणोऽयमेव स वायुर्योऽयं पवते ॥ ७ ॥

यदा वाऽअग्निरनुगच्छति । वायुं तर्ह्यनूद्वाति तस्मादेनमुदवासीदित्याहुर्वायुꣳ ह्यनूद्वाति यदाऽऽदित्योऽस्तमेति वायुं तर्हि प्रविशति वायुं चन्द्रमा वायौ दिशः प्रतिष्ठिता वायोरेवाधि पुनर्जायन्ते स यदेवंविदस्माल्लोकात्प्रैति वाचैवाग्निमप्येति चक्षुषाऽऽदित्यं मनसा चन्द्रꣳ श्रोत्रेण दिशः प्राणेन वायुꣳ सऽएतन्मय ऽएव भूत्वैतासां देवतानां यां यां कामयते सा भूत्वैलयति ॥ ८ ॥

इति द्वितीयप्रपाठके पञ्चमं ब्राह्मणम् ॥ १०-२-५ ॥ ( ३. ३. ) ॥

---

अथाधिदेवतम्-या वै सा वाक्-अग्निरेव सः । यत्तच्चक्षुः-असौ स आदित्यः । यत्तन्मनः-एष स चन्द्रमाः । यत्तच्छ्रोत्रम्-दिश एव तत् । अथ यः स प्राणः-अयमेव स वायुः-योऽयं पवते ॥ ७ ॥

यदा वा अग्निरनुगच्छति-वायुं तर्ह्यनूद्वाति । तस्मादेनमुदवासीदित्याहुः । वायुं ह्यनूद्वाति । यदाऽऽदित्योऽस्तमेति-वायुं तर्हि प्रविशति । वायुं चन्द्रमाः । वायौ दिशः प्रतिष्ठिताः । वायोरेवाधि पुनर्जायन्ते । स यदेवंविदस्माल्लोकात्प्रैति-वाचैवाग्निमप्येति । चक्षुषाऽऽदित्यम् । मनसा चन्द्रम् । श्रोत्रेण दिशः । प्राणेन वायुम् । स एतन्मय एव भूत्वैतासां देवतानां यां यां कामयते-सा भूत्वैलयति ॥ ८ ॥

---

अधिदेवमाह-अथाधिदेवतमिति । 'या वै सा वागग्निरेव '-" अग्निर्वाग्भूत्वा मुखं प्राविशद् " ( ऐ. आ. २ । ४ । २ )-इति श्रुतेः । चक्षुर्मनःश्रोत्रप्राणानामादित्यचन्द्रदिग्वायुरूपत्वमैतरेयके समाम्नायते-"वायुः प्राणो भूत्वा नासिके प्राविशद्, आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशद्, दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन्, चन्द्रमा मनो भूत्वा हृदयं प्राविशद् "-( ऐ. आ. २ । ४ । २ ) इति । 'योऽयं पवते ' अन्तरिक्षे प्रवहति स वायुः प्राण इत्यर्थः ॥ ७ ॥

तेषामग्न्यादीनां वाय्वधीनतां दर्शयति-यदा वा अग्निरिति । 'यदाऽग्निः ' 'अनुगच्छति ' तदा 'वायुम् ' अनुलक्ष्य ' उद्वाति ' नश्यति । वायावधिकं वाति सति अग्निर्विनष्टो भवति । तस्मादेनं नष्टमग्निम् ' उदवासीदित्याहुः ' नष्टोऽनुगत उद्वात इति पर्याया इत्यर्थः । यदाऽऽदित्योऽस्तमेतीति । ' अस्तमेति ' इति पदेन विलयो लक्ष्यते । आदित्यचन्द्रमसोर्वायौ प्रवेशः " ज्योतिष्यापः प्रलीयन्ते तेजो वायौ प्रलीयते "-इति श्रुतेरवगम्यते । " वायौ ' सूत्रात्मनि ' दिशः ' ' प्रतिष्ठिताः ' वर्त्तन्ते ।

श्वेतकेतुर्हारुणेयुः । (यो ) यक्ष्यमाणऽ आस तुꣳ ह पितोवाच कानृत्विजोऽवृथाऽइति स होवाचायं न्वेव मे वैश्वावसव्यो होतेति तꣳ ह पप्रच्छ वेत्थ ब्राह्मण वैश्वावसव्य ॥ १ ॥

चत्वारि महान्ती३ऽइति । वेद भो३ऽइति होवाच वेत्थ चत्वारि महतां महान्ती३ऽइति वेद भो३ऽइति होवाच वेत्थ चत्वारि व्रतानी३ऽइति वेद भो३ऽइति होवाच वेत्थ चत्वारि व्रतानां व्रतानी३ऽइति वेद भो३ऽइति होवाच वेत्थ चत्वारि क्यानी३ऽइति वेद भो३ऽइति होवाच वेत्थ चत्वारि क्यानां क्यानी३ऽइति वेद भो३ऽइति होवाच वेत्थ चतुरोऽर्का३निति वेद भो३ऽइति होवाच वेत्थ चतुरोऽर्काणामर्का३निति वेद भो३ऽइति होवाच ॥ २ ॥

---

श्वेतकेतुर्हारुणेयो यक्ष्यमाण आस । तं ह पितोवाच–कानृत्विजोऽवृथा इति । स होवाच–अयं न्वेव मे वैश्वावसव्यो होतेति । तं ह पप्रच्छ–वेत्थ ब्राह्मण वैश्वावसव्य ॥ १ ॥

चत्वारि महान्ती३ इति–वेद भो३ इति होवाच । वेत्थ चत्वारि महतां महान्ती३ इति–वेद भो३ इति होवाच । वेत्थ चत्वारि व्रतानी३ इति–वेद भो३ इति होवाच । वेत्थ चत्वारि व्रतानां व्रतानी३ इति–वेद भो३ इति होवाच । वेत्थ चत्वारि क्यानी३ इति–वेद भो३ ऽइति होवाच ।

---

'पुनः' वायोः सकाशादेवाग्न्यादयो जायन्त इत्यधिदेवतमर्थः । वेदितुः फलमाह–स यदैवंविदस्माल्लोकात्प्रैतीति । वेदिता यदि म्रियेत तदा वाक्चक्षुरादिभिरग्न्यादित्यादीनुपेत्य 'एतन्मयो' देवतामयो भूत्वा 'एतासाम्' 'देवतानाम्' मध्ये या देवता भवामि इति स्वयमिच्छति सा 'सा' देवता भूत्वा 'एलयति' सञ्चरति चेष्टत इत्यर्थः ॥ ८ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये दशमकाण्डे तृतीयेऽध्याये तृतीयं ब्राह्मणम् ॥ ( १०–३–३ ) ॥

उत्तरब्राह्मणेऽग्निवाय्वादित्यपुरुषाणामोषधि-वनस्पत्युदकचन्द्रपशूनां च बहुविधनामव्यपदेश्यत्वेन स्तुतिः । तत्रापि पुरुषस्यार्करूपतया च स्तुतिरनेकैः प्रश्नप्रतिवचनैः प्रतिपाद्यते । तौ प्रष्टृप्रतिवक्तारौ दर्शयितुं तत्प्रसङ्गमादावाह–श्वेतकेतुर्हारुणेय इति । पूर्वं 'श्वेतकेतुः' नाम 'यक्ष्यमाणो' बभूव । 'तम्' पुत्रं 'पिता' उक्तवान् । हे पुत्र ! 'कान्' कीदृशान् 'ऋत्विजः' वृतवानसीति–पितुर्वचनम् । 'स होवाच' इत्यादिना श्वेतकेतुः 'अयं न्वेव मे वैश्वावसव्यो होता' वैश्वावसव्यनामको होता वृत इति उक्तवान् । 'तं ह पप्रच्छ वेत्थ ब्राह्मण' इत्यादिना होतारं प्रति पितुः प्रश्नः ॥ १ ॥

'चत्वारि' चतुःसंख्यानि 'महान्ति' सर्वेभ्योऽपि महान्ति वस्तूनि हे होतः ! 'वेत्थ' अपि जानासि

व्वेत्थार्कमिति । ( त्यु ) अथ वै नो भुवान्वक्ष्यतीति व्वेत्थार्कपर्णेऽइत्यथ वै नो भुवान्वक्ष्यतीति व्वेत्थार्कपुष्पेऽइत्यथ वै नो भुवान्वक्ष्यतीति व्वेत्थार्ककोश्यावित्यथ वै नो भुवान्वक्ष्यतीति व्वेत्थार्कसमुद्गावित्यथ वै नो भुवान्वक्ष्यतीति व्वेत्थार्कधानाऽइत्यथ वै नो भुवान्वक्ष्यतीति व्वेत्थार्काष्ठीलामित्यथ वै नो भुवान्वक्ष्यतीति व्वेत्थार्कमूलमित्यथ वै नो भुवान्वक्ष्यतीति ॥ ३ ॥

स ह वै यत्तदुवाच । व्वेत्थ चत्वारि महान्ति व्वेत्थ चत्वारि महतां महान्तीत्यग्निर्महांस्तस्य महतो महदोषधयश्च व्वनस्पतयश्च तद्धचस्यान्नं व्वायुर्महांस्तस्य महतो महदापस्तद्धचस्यान्नमादित्यो महांस्तस्य महतो महच्चन्द्रमास्तद्धचस्यान्नं पुरुषो महांस्तस्य महतो महत्पशवस्तद्धच-

---

वेत्थ चत्वारि क्यानां क्यानी३ इति–वेद भो३ इति होवाच । वेत्थ चतुरोऽर्का३निति–वेद भो३ इति होवाच । वेत्थ चतुरोऽर्काणामर्का३निति–वेद भो ३ इति होवाच ॥ २ ॥

वेत्थार्कमिति । अथ वै नो भवान्वक्ष्यतीति । वेत्थार्कपर्णे इति । अथ वै नो भवान्वक्ष्यतीति । वेत्थार्कपुष्पे इति । अथ वै नो भवान्वक्ष्यतीति । वेत्थार्ककोश्याविति । अथ वै नो भवान्वक्ष्यतीति । वेत्थार्कसमुद्गाविति । अथ वै नो भवान्वक्ष्यतीति । वेत्थार्कधाना इति । अथ वै नो भवान्वक्ष्यतीति । वेत्थार्काष्ठीलामिति । अथ वै नो भवान्वक्ष्यतीति । वेत्थार्कमूलमिति । अथ वै नो भवान्वक्ष्यतीति ॥ ३ ॥

स ह वै यत्तदुवाच–वेत्थ चत्वारि महान्ति, वेत्थ चत्वारि महतां महान्ति–इति । अग्निर्महान्–तस्य महतो महदोषधयश्च वनस्पतयश्च–तद्धचस्यान्नम् । वायुर्महान्–तस्य महतो महदापः–तद्धच-

---

इति । महान्तीत्यत्र प्रश्नार्थे विचार्यमाणानां प्लुतः ' वेद भोः ' अत्र प्रतिवचनेऽर्थे प्लुतः । तानि त्वया पृष्टानि महान्ति वेद जानामीति होतुर्वाक्यस्यार्थः । एवमुत्तराणि " वेत्थ चत्वारि महतां महान्ती३ " इत्यादीनि सप्त प्रश्नप्रतिवचनानि व्याख्येयानि । ' वेत्थार्कम् ' इति श्वेतकेतोः पित्रा पृष्टो होता स्वयमर्करूपमजानानस्तस्मात्पितुः सकाशादेव संजिज्ञासुराह–अथ वै नो भवान्वक्ष्यतीति । ' नः ' अस्माकं 'भवान् ' 'वक्ष्यति' तमर्कमुपदिश इति होतुर्विज्ञापनम् । एवं ' वेत्थार्कपर्णे ' इत्यादयः सप्त पर्याया व्याख्येयाः । पूर्वाणि पितुः प्रश्नवचनानि, उत्तराणि तत्सकाशाद्धोतुर्विद्याग्रहणप्रार्थनावाक्यानि ॥ २ ॥ ३ ॥

वेत्थ चत्वारि महान्तीत्यादेः प्रश्नसमुदायस्याग्न्यादिकमर्थं श्रुतिः स्वयं विशदयति–स ह वै यत्तदुवाच वेत्थ चत्वारि महान्तीति । यदुवाच पिता तस्यार्थोऽयमिति ' अग्निर्महान् ' इत्यादिनोच्यते । तत्र महच्छब्देन अग्निवाय्वादित्यपुरुषाश्चत्वार उच्यन्ते । ' महतां महान्ति ' इति पदेन महतामग्निवाय्वादित्यपुरुषाणामुपजीव्या

स्यान्नमेतान्येव चत्वारि महान्त्येतानि चत्वारि महतां महान्त्येतान्येव चत्वारि व्रतान्येतानि चत्वारि व्रतानां व्रतान्येतान्येव चत्वारि क्यान्येतानि चत्वारि क्यानां क्यान्येतऽएव चत्वारोऽर्काऽ एते चत्वारोऽर्काणामर्काः ॥ ४ ॥

( ५ ) अथ ह वै यत्तदुवाच । वेत्थार्कमिति पुरुषꣳ हैव तदुवाच वेत्थार्कपर्णेऽइति कर्णौ हैव तदुवाच वेत्थार्कपुष्पेऽइत्यक्षिणी हैव तदुवाच वेत्थार्ककोश्याविति नासिके हैव तदुवाच वेत्थार्कसमुद्गावित्योष्ठौ हैव तदुवाच वेत्थार्कधानाऽइति दन्तान्हैव तदुवाच वेत्थार्काष्ठीलामिति जिह्वाꣳ हैव तदुवाच वेत्थार्कमूलमित्यन्नꣳ हैव तदुवाच सऽएषोऽग्निरर्को यत्पुरुषः स यो हैतमेवमग्निमर्कं पुरुषमुपास्तेऽयमहमग्निरर्कोऽस्मीति विद्यया हैवास्यैषऽआत्मन्नग्निरर्कश्चितो भवति ॥ ५ ॥

इति द्वितीयप्रपाठके षष्ठं ब्राह्मणम् ॥ १०–२–६ ॥ ( ३. ४. ) ॥

---

स्यान्नम् । आदित्यो महान्–तस्य महतो महच्चन्द्रमाः–तद्धचस्यान्नम् । पुरुषो महान्–तस्य महतो महत्पशवः–तद्धचस्यान्नम् । एतान्येव चत्वारि महान्ति, एतानि चत्वारि महतां महान्ति । एतान्येव चत्वारि व्रतानि, एतानि चत्वारि व्रतानां व्रतानि । एतान्येव चत्वारि क्यानि, एतानि चत्वारि क्यानां क्यानि । एत एव चत्वारोऽर्काः, एते चत्वारोऽर्काणामर्काः ॥ ४ ॥

अथ ह वै यत् तदुवाच–वेत्थार्कमिति–पुरुषं हैव तदुवाच । वेत्थार्कपर्णे इति–कर्णौ हैव तदुवाच । वेत्थार्कपुष्पे इति–अक्षिणी हैव तदुवाच । वेत्थार्ककोश्याविति–नासिके हैव तदुवाच । वेत्थार्कसमुद्गाविति–ओष्ठौ हैव तदुवाच । वेत्थार्कधाना इति–दन्तान्हैव तदुवाच । वेत्थार्काष्ठीलामिति–जिह्वां हैव तदुवाच । वेत्थार्कमूलमिति–अन्नं हैव तदुवाच । स एषोऽग्निरर्को यत्पुरुषः । स यो हैतमेवमग्निमर्कं पुरुषमुपास्ते–अयमहमग्निरर्कोऽस्मीति । विद्यया हैवास्यैष आत्मन्नग्निरर्कश्चितो भवति ॥ ५ ॥

---

ओषधि–वनस्पत्युदकचन्द्रपशवश्चत्वार उच्यन्ते । एतेषामोषध्यादीनामग्न्यादिभिरुपजीव्यत्वात्तेषां महच्छब्दवाच्यानामपि एतान्योषध्यादीनि महतां महान्तीत्युच्यन्ते । यो हि उपजीव्यः स महानिति व्यवह्रियते । उक्तमग्निवाय्वादिकमोषधिवनस्पत्युदकादिकं च उत्तरेषां चत्वारि व्रतानीत्यादीनां वाक्यानां क्रमेणार्था इति निरूपयति–एतान्येव चत्वारीत्यादिना अर्काणामर्काः इत्यन्तेन । 'क्यानि' । कः प्रजापतिस्तस्मै हितानि क्यानि । 'अर्काः' अर्चनीयाः ॥ ४ ॥

"वेत्थार्कमि"त्यादिकस्य प्रश्नस्यार्थं दर्शयति–अथ ह वै यत्तदुवाच वेत्थार्कमिति पुरुषमिति । 'वेत्थार्कमिति' यत् पृष्टस्तत्रार्कपदेन पुरुष एवोक्तः । 'अर्कपर्णे' इति पदेन पुरुषकर्णावुक्तौ । 'कर्णौ'

अयं वाव युजुर्योऽयं पुवते । ( त२ ) एष हि युन्नेवेदꣳ सुर्वं जनुयत्येतं युन्तमिदमुनु प्रुजायते तुस्माद्वायुरेव युजुः ॥ १ ॥
( २ ) अयुमेवाकाशो जूः । ( युं ) युदिदमन्तुरिक्षमेतꣳ ह्याकाशमुनु जुवते तुदेतद्युजुर्व्वायुश्चान्तुरिक्षं च युच्च जूश्च तुस्माद्युजुरेषऽ एव युदेष

अयं वाव यजुः—योऽयं पवते । एष यन्नेवेदं सर्वं जनयति । एतं यन्तमिदमनु प्रजायते तस्माद्वायुरेव यजुः ॥ १ ॥
अयमेवाकाशो जूः—यदिदमन्तरिक्षम् । एतं ह्याकाशमनु जवते । तदेतद्यजुर्वायुश्चान्तरिक्षं च

अपि पर्णाकारौ तिष्ठत इति मत्वोक्तम् । 'अर्कपुष्पे' 'इत्यक्षिणी' उक्ते । अर्ककोश्याविति । कोश्याकारे फलके एतत्पदेन पुरुषनासिके उक्ते । 'अर्ककोश्यौ' अपि नासिकाकृती । अर्कसमुद्गाविति । अर्ककोशाग्रे विदलितौ ओष्ठभागौ । 'धाना' पदेन 'अर्कबीजानि' । अर्काष्ठीलामिति । अर्ककोशमध्ये विस्तरेण वर्तमाना तूली जीह्वामूली । अर्कमूलमिति । इत्यनेन 'अन्नम्' उक्तम् । अन्नं हि पुरुषस्य मूलम् । स एषोऽग्निरर्क इति । अर्कपर्णादिभिर्यः पुरुषो निरूपितः 'सः' 'अग्निरर्कः' । अहंग्रहोपासकस्य फलमाह—स यो हैतमेवमग्निमर्कमिति । 'अग्निम्' 'अर्कम्' पुरुष इत्युपास्ते । अहम अग्निरर्कः पुरुषोऽस्मीत्यहंग्रहणम् । अनेन प्रतीकोपासनं न भवतीत्युक्तं भवति । एष उपासको 'विद्यया' एवंरूपज्ञानेनात्मन् स्वशरीरे भाविनि 'अग्निरर्को भवति । अग्न्यर्कात्मको भवतीत्यर्थः ॥ ९ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये दशमकाण्डे तृतीयेऽध्याये चतुर्थं ब्राह्मणम् ॥ ( १० । ३ । ४ ) ॥

अथ अत्र यजुस्तद्विधायकब्राह्मणयोर्निर्वचनपुरःसरमधिदेवाध्यात्ममेदेनार्थः, मन्त्रब्राह्मणप्रसङ्गादुपनिषदः स्तुतिः, तत्स्वरूपं, तद्विदुषः फलमानन्दावाप्तिः, यजुषाम् उपांश्वनुष्ठानं चेति पञ्चमब्राह्मणप्रतिपादितार्थसंग्रहः । यजुःशब्देन वायुं निर्ब्रुवन् अधिदेवमर्थमाह—अयं वाव यजुर्योऽयं पवत इति । 'यः' अन्तरिक्षे 'पवते' सञ्चरति स हि यजुरात्मकः, यजुरित्यत्र द्वे अक्षरे 'य' इति 'जुः' इति । एष यन्नेवेदमिति । एष वायुः 'यन्' सर्वत्र सञ्चरन् 'इदम् सर्वं जनयति' उत्पादयति । 'एतं यन्तम्' संचरन्तं वायुमनुलक्ष्य सर्वाः प्रजा उत्पद्यन्ते । एतस्य यजुरात्मकस्य वायोर्ज्येष्ठब्रह्मरूपत्वमुत्तरत्रास्मिन् ब्राह्मणे ( कं. १० । १४ । ) वक्ष्यते सूत्रात्मश्रुत्यभिप्रायेण । तस्माद्वायुसञ्चारमनु सर्वजगत उत्पत्तिर्युक्तेत्यर्थः । अत्र वायुः 'यन्' जननिमित्तं चेति यजुःशब्दनिर्वचनं कृतमित्यर्थः ॥ १ ॥

एवं प्रथमाक्षरधात्वर्थकथनम् उत्तरस्यार्थतो व्याख्यानं च कृतम् । अथ द्वितीयाक्षरस्य धात्वर्थकथनं पूर्वं स्यार्थतो व्याख्यानं चाह—अयमेवाकाशो जूरिति । 'जूः' इति सौत्रो धातुर्गत्यर्थः । 'यदिदं' प्रतीयमानम्

१—'अयं वाव यजुः' 'वायुरेव यजुः'—इत्येवमेव श्रौतः पाठः सर्वेष्वेवोपलब्धपुस्तकेषूपलभ्यते । अर्थस्वारस्यात्तु यजुःशब्दस्थाने 'यन्'—इति पाठः पुरात्वे भवेत् । वैदिकयाज्ञिकानां लेखदोषात्तु कालक्रमेण यन्नित्यस्य स्थाने यजुरिति पदं प्रक्षिप्तमिति प्रतीमः । एवमेव 'तदेतयजुर्व्वायुश्चा'—इत्यत्रापि यजुःशब्दस्थाने 'यज्जूः' इति पाठं साधु मन्यामहे । यजुःशब्दनिर्वचनार्थे प्रकरणे शुद्धस्य यजुःशब्दस्य पाठायोगात् । इह हि यज्जूःशब्दस्य परोक्षवृत्त्या यजुरिति निर्वचनं कृतं दृश्यते इत्यूह्यम् ।

ह्येषेति तदेतद्यजुर्ऋक्सामयोः प्रतिष्ठितमृक्सामे वहतस्तस्मात्समानैरेवाध्वर्युर्ग्रहैः कर्म करोत्यन्यान्यन्यानि स्तुतशस्त्राणि भवन्ति यथा पूर्वाभ्याᳪं स्यन्त्वा पराभ्यां धावयेत्तादृक्तत् ॥ २ ॥

( द ) अग्निरेव पुरः । ( रोऽग्निᳪं ) अग्निᳪं हि पुरस्कृत्येमाः प्रजाऽउपासतऽआदित्यऽ एव चरणं यदा ह्येवैषऽ उदेत्यथेदᳪं सर्वं चरति तदेतद्यजुः सपुरश्चरणमधिदेवतम् ॥ ३ ॥

---

यच्च जूश्च । तस्माद्यजुरेष एव । यदेष ह्येति । तदेतद्यजुर्ऋक्सामयोः प्रतिष्ठितम्—ऋक्सामे वहतः । तस्मात्समानैरेवाध्वर्युर्ग्रहैः कर्म करोति । अन्यान्यन्यानि स्तुतशस्त्राणि भवन्ति । यथा पूर्वाभ्यां स्यन्त्वा पराभ्यां धावयेत्—तादृक् तत् ॥ २ ॥

अग्निरेव पुरः । अग्निं हि पुरस्कृत्येमाः प्रजा उपासते । आदित्य एव चरणम् । यदा ह्येवैष उदेति—अथेदं सर्वं चरति । तदेतद्यजुः सपुरश्चरणमधिदेवतम् ॥ ३ ॥

---

'अन्तरिक्षम्' अस्ति तदेव 'जूः' इति पदेनोच्यते । 'एतमाकाशम्' अनुलक्ष्य जवते 'वायुः' गच्छति । वायुजवयोरधिकरणत्वाद् 'जूः' आकाशः । जवतेरधिकरणार्थे क्विप् "क्विब्वचि०"—( पा. सू. क्र. उ० २।९७ ) इति दीर्घत्वम् । उक्तमर्थद्वयमक्षरद्वये योजयित्वा दर्शयति—तदेतद्यजुर्वायुश्चान्तरिक्षमिति । 'यद्' इति वायुः, 'जूः' इति आकाश उच्यत इत्यर्थः । आधाराधेययोर्वाय्वाकाशयोरभेदोपचारेण वायोरेव यजुःशब्दमाह—तस्माद्यजुरेष एवेति । 'एष' वायुः 'यस्माद्' अन्तरिक्षे 'एति' तस्माद् असौ यजुःशब्दाऽभिधेय इत्यर्थः । तदेतद्यजुर्ऋक्सामयोः प्रतिष्ठितमित्यादेरयमर्थः । अन्तरिक्षलोको हि द्यावापृथिव्योर्मध्यवर्तीति तयोरधिकरणमुपचर्यते, तयोश्च ऋक्सामरूपत्वम् भूःस्वरिति ऋक्सामसारभूतव्याहृतिद्वयकल्पितत्वात् । तथाऽन्यत्राम्नायते—"स भूरिति व्याहरत्, स भूमिमसृजत । स भुव इति व्याहरत्, सोऽन्तरिक्षमसृजत । स स्वरिति व्याहरत्, स दिवमसृजत" इति । अतो यजुर्ऋक्सामयोः प्रतिष्ठितं मध्यस्थितमित्यर्थः । तस्यैव विवरणम्—ऋक्सामे वहत इति । 'तस्मात्' आधारयोर्नानारूपतो भेदेऽपि आधेयस्यैकरूपेण भेदाभावात् 'अध्वर्युणा' याजुषेण 'समानैरेव' 'ग्रहैः' प्रकृतिसोमयागगतैरेवैन्द्रवायववादिभिर्विकृतिकर्म क्रियते । सामगबह्वृचैः स्तुतशस्त्राणि स्तोत्रशस्त्राणि, अन्यान्यन्यानि प्रकृतिगतव्यतिरिक्तानि क्रियन्ते । यथा महाव्रतयज्ञे बृहद्रथन्तरयोर्वैकल्पिकयोः प्राकृतयोः पृष्ठसाम्नोः स्थाने पञ्च सामानि, निष्केवल्यस्थाने महदुक्थमित्युक्तम् । ऋक्सामयोस्तत्र क्रतुषु भिन्नरूपत्वं स्तौति—यथा पूर्वाभ्यां स्यन्त्वेति । यथा 'पूर्वाभ्याम्' अश्वाभ्यां 'स्यन्त्वा' गत्वा श्रान्तौ तौ विमुच्य 'पराभ्याम्' अन्याभ्यां 'धावयेत्' 'तादृक् तत्' तत्रान्यस्यान्यस्य स्तुतशस्त्रस्य करणमित्यर्थः । 'स्यन्त्वा' इति "स्यन्दू प्रस्रवणे"—(धा. पा. भ्वा. आ. ७६२) क्त्वाप्रत्यये ऊदित्त्वादिडभावपक्षे रूपं, छान्दसो नकारालोपः ॥ २ ॥

अथ ब्राह्मणापरनामधेयस्य पुरश्चरणशब्दस्य पूर्ववन्निर्वचनपुरःसरमधिदैवमर्थमाह—अग्निरेव पुर इत्यादिना । 'इमाः' प्रजा वैदिक्योऽग्निं 'पुरस्कृत्य' 'उपासते' तस्माद्—'अग्निः' पुरःशब्दवाच्यः । 'आदित्यः'

( मु ) अथाध्यात्मम् । ( म्प्रा ) प्राणऽ एव यजुः प्राणो हि यन्नेवेदᳬं सर्व्वं जनयति प्राणं यन्तमिदमनु प्रजायते तस्मात्प्राणऽएव यजुः ॥ ४ ॥
( र ) अयमेवाकाशो जूः । (यो) योऽयमन्तरात्मन्नाकाशऽएतᳬं ह्याकाशमनु जवते तदेतद्यजुः प्राणश्चाकाशश्च यच्च जूश्च तस्माद्यजुः प्राणऽएव यत्प्राणो ह्येति ॥ ५ ॥ ( शतम् ५३०० ) ॥
( त्यु ) अन्नमेव यजुः । ( रु ) अन्नेन हि जायतेऽन्नेन जवते तदेतद्यजुरन्ने प्रतिष्ठितमन्नं व्वहति तस्मात्समानऽएव प्राणेऽन्यदन्यदन्नं धीयते ॥ ६ ॥

मनऽ एव पुरः । ( रो ) मनो हि प्रथमं प्राणानां चक्षुरेव चरणं चक्षुषा ह्ययमात्मा चरति तदेतद्यजुः सपुरश्चरणमधिदेवतं चाध्यात्मं च प्रतिष्ठितᳬं स यो हैतदेवं यजुः सपुरश्चरणमधिदेवतं चाध्यात्मं च प्रतिष्ठितं व्वेद ॥ ७ ॥

---

अथाध्यात्मम्—प्राण एव यजुः । प्राणो हि यन्नेवेदं सर्वं जनयति । प्राणं यन्तमिदमनु प्रजायते । तस्मात्प्राण एव यजुः ॥ ४ ॥
अयमेवाकाशो जूः । योऽयमन्तरात्मन्नाकाशः । एतं ह्याकाशमनु जवते । तदेतद्यजुः प्राणश्चाकाशश्च यच्च जूश्च । तस्माद्यजुः प्राण एव यत्प्राणो ह्येति ॥ ५ ॥
अन्नमेव यजुः । अन्नेन हि जायते । अन्नेन जवते । तदेतद्यजुरन्ने प्रतिष्ठितम् । अन्नं वहति । तस्मात्समान एव प्राणेऽन्यदन्यदन्नं धीयते ॥ ६ ॥
मन एव पुरः । मनो हि प्रथमं प्राणानाम् । चक्षुरेव चरणम् । चक्षुषा ह्ययमात्मा चरति ।

---

चरणशब्दवाच्यः । 'यदा' असौ 'उदेति' तदैव सर्वस्य स्वव्यापारं प्रति चरणात् । अनेन 'चरति' गच्छति अस्मिन् उदित इति अधिकरणे ल्युडित्यर्थः । उक्तं शब्दतो निर्वचनं तदर्थं चोपसंहरति—तदेतद्यजुः सपुरश्चरणमिति ॥ ३ ॥

एतयोराध्यात्मिकोऽर्थो वक्ष्यत इति प्रतिजानीते—अथाध्यात्मं प्राण एव यजुरिति । प्राणः पंचभूतात्मकः । अन्तरात्मन्नाकाश इति । हृदयमध्यवर्ती देहे एवाकाशः । शिष्टं पूर्ववत् व्याख्येयम् ॥ ४ ॥ ५ ॥

अन्नमेव यजुरित्यादेरयमर्थः । यथा यजुः ऋक्सामाधिकरणे प्रतिष्ठितम् एवं प्राणोऽपि अन्ने प्रतिष्ठितः । आधारस्याप्यन्नस्य जननजीवननिमित्तत्वमाश्रित्य यजुरात्मकत्वकथनम् । "अन्नाद्वै प्रजाः प्रजायंते अन्नेन जातानि जीवंति"—( तै. आ. २ । २ ) इति श्रुतेः । तदेतद्यजुरिति । 'प्राणः' परामृश्यते । 'यजुः' यजुरात्मकः 'प्राणः' यजुरात्मकेऽन्ने प्रतिष्ठितः । अत्रापि प्राणस्यैकत्वात्तत्पोषकस्यान्नस्य नानात्वादाधेयस्य प्राणस्यैकत्वादेकरूपे प्राणे विषये नानाविधमन्नं धीयते ॥ ६ ॥

पुरश्चरणपदस्याप्यध्यात्मपरतामाह—मन एव पुर इति । यस्मात् सर्व—'प्राणानाम्' 'मनः' 'प्रथमम्'

( ८ ) अरिष्टो हैवानार्तः । स्वस्ति यज्ञस्योदृचमश्नुतेऽथो स्वानाᳬ श्रेष्ठः पुरऽएता भवत्यन्नादोऽधिपतिर्य्य ऽएवं व्वेद ॥ ८ ॥

यऽ उ हैवंविदम् । ( २ᳬ ) स्वेषु प्रति प्रतिर्बुभूषति न हैवालं भार्येभ्यो भवत्यथ यऽ एवैतमनुभवति यो वै तमनु भार्यान्बुभूर्षति स हैवालं भार्येभ्यो भवति ॥ ९ ॥

तदेतज्ज्येष्ठं ब्रह्म । न ह्येतस्मात्किं चन ज्यायोऽस्ति ज्येष्ठो ह वै श्रेष्ठः स्वानां भवति यऽएवं व्वेद ॥ १० ॥

---

तदेतद्यजुः सपुरश्चरणमधिदेवतं चाध्यात्मं च प्रतिष्ठितम् । स यो हैतदेवं यजुः सपुरश्चरणमधिदेवतं चाध्यात्मं च प्रतिष्ठितं वेद ॥ ७ ॥

अरिष्टो हैवानार्तः स्वस्ति यज्ञस्योदृचमश्नुते । अथो स्वानां श्रेष्ठः पुरएता भवत्यन्नादोऽधिपतिर्य एवं वेद ॥ ८ ॥

य उ हैवंविदं स्वेषु प्रति प्रतिर्बुभूषति–न हैवालं भार्येभ्यो भवति । अथ य एवैतमनुभवति । यो वै तमनु भार्यान्बुभूर्षति–स हैवालं भार्य्येभ्यो भवति ॥ ९ ॥

तदेतज्ज्येष्ठं ब्रह्म । न ह्येतस्मात्किं चन ज्यायोऽस्ति । ज्येष्ठो ह वै श्रेष्ठः स्वानां भवति–य एवं वेद ॥ १० ॥

---

तस्मात् तत्पुरःशब्दाभिधेयम् । चक्षुषा हि सर्वो जनः स्वस्वव्यापारार्थं सञ्चरतीति चक्षुश्चरणशब्दवाच्यमुक्तम् । यजुःपुरश्चरणशब्दयोरधिदेवाध्यात्मभेदेनोक्तमर्थं विदुषः फलमाह–स यो हैतदेवं यजुः सपुरश्चरणमिति ॥ ७ ॥

अरिष्ट इति । 'अरिष्टः' अन्येनाबाधितः 'अनार्त्तः' शरीरपीडारहितः अत्र 'स्वस्ति' क्षेमेण 'यज्ञस्योदृचम्' समाप्तिं 'अश्नुते' । तस्यैव फलान्तरं समुच्चिनोति–अथो स्वानां श्रेष्ठ इति । 'स्वानाम्' ज्ञातीनां मध्ये स्वयं 'श्रेष्ठः' प्रशस्यतमः 'पुरएता' पुरतो गन्ता 'अन्नादः' ईश्वरो भवति ॥ ८ ॥

विद्वन्निन्दकस्य दोषं तत्स्तावकस्य च फलं दर्शयति–य उ हैवंविदमिति । 'यः' पुरुषः 'स्वेषु' मध्ये 'एवंविदम्' उक्तविद्यां जानानं पुरुषं प्रति 'प्रतिर्बुभूषति' प्रातिकूल्यमाचरितुमिच्छति स 'भार्येभ्यः' पोषणीयेभ्यः स्वीयेभ्यो 'नालं' न पर्याप्तो भवति–पोषणसमर्थो न भवतीत्यर्थः । यस्तु एवंविदमनुकूलयेत् सः पोष्यान् पोषयितुं शक्नोति ॥ ९ ॥

यजुःशब्दस्य वायुप्राणरूपोऽर्थः उक्तः । तं ज्येष्ठब्रह्मात्मना स्तौति–तदेतज्ज्येष्ठं ब्रह्मेति । ब्रह्मणि ज्येष्ठत्वमाह–न ह्येतस्मादिति । न हि हिरण्यगर्भात्मनः ( सूत्रात्मनः ) परस्ताज्ज्यायो वस्त्वस्ति तस्यैव सर्वजगदाधारत्वात् । तथा च बृहदारण्यके चतुर्दशकाण्डे समाम्नास्यते–" वायुर्वै गौतम तत् सूत्रम् । वायुना वै गौतम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि संदब्धानि भवन्ति " ( १४ । ६ । ७ । ६ ) इति । वेदितुरपि ज्येष्ठत्वं फलं भवतीत्याह–ज्येष्ठो ह वै श्रेष्ठ इति ॥ १० ॥

तुदेतद्ब्रह्मापूर्व्वमपरवत् । ( त्स ) स यो हैतुदेवं ब्रह्मापूर्व्वमपरवद्वेद नु हास्मात्कुश्चन श्रेयान्त्समानेषु भवति श्रेयाꣳसः श्रेयाꣳसो हैवास्माद-परपुरुषा जायन्ते तुस्माद्योऽस्माज्ज्यायान्त्स्याद्दिशोऽस्मात्पूर्व्वाऽइत्यु-पासीत तुथो हैनं नु हिनस्ति ॥ ११ ॥

तुस्य वाऽएतुस्य यजुषः । ( षो ) रुस ऽएवोपनिषत्तुस्माद्यावन्मात्रेण यजुषाऽध्वर्युर्ग्रहं गृह्णाति सुऽउभे स्तुतशस्त्रेऽअनुविभवत्युभे स्तुतशस्त्रे ऽअनुव्यश्नुते तुस्माद्यावन्मात्र ऽइवान्नस्य रुसः सुर्व्वमन्नमवति सुर्व्व-मन्नमनुव्येति ॥ १२ ॥

तृप्तिरेवास्य गतिः । ( स्तु ) तुस्माद्यदाऽन्नस्य तृप्यत्युथ सु गतु ऽइव मन्यत ऽआनन्द ऽएवास्य विज्ञानमात्माऽऽनन्दात्मानो हैव सुर्व्वे देवाः

---

तदेतद्ब्रह्मापूर्वमपरवत् । स यो हैतदेवं ब्रह्मापूर्वमपरवद्वेद—न हास्मात्कश्चन श्रेयान्त्समानेषु भवति । श्रेयांसः । श्रेयांसो हैवास्मादपरपुरुषा जायन्ते । तस्माद्योऽस्माज्ज्यायान्त्स्यात्—दिशोऽस्मात्पूर्वा इत्युपासीत । तथो हैनं न हिनस्ति ॥ ११ ॥

तस्य वा एतस्य यजुषो रस एवोपनिषत् । तस्माद्यावन्मात्रेण यजुषाऽध्वर्युर्ग्रहं गृह्णाति—स उभे स्तुतशस्त्रे अनुविभवति । उभे स्तुतशस्त्रे अनुव्यश्नुते । तस्माद्यावन्मात्र—इवान्नस्य रसः—सर्व-मन्नमवति । सर्वमन्नमनुव्येति ॥ १२ ॥

तृप्तिरेवास्य गतिः । तस्माद्यदाऽन्नस्य तृप्यति । अथ स गत—इव मन्यते । आनन्द एवास्य विज्ञानमात्मा । आनन्दात्मानो हैव सर्वे देवाः । सा हैषैव देवानामद्धा विद्या । स ह स न मनुष्यो य एवंवित् । देवानां हैव स एकः ॥ १३ ॥

---

तदेतत् ब्रह्मापूर्वमित्यादेरयमर्थः—यदुक्तं ‘ तद्ब्रह्म ’ ‘ अपूर्वम् ’ यस्मात् पूर्वो न विद्यते कारणरहितम् । ‘ अपरवत् ’ स्रष्टव्यजगद्रूपापरवत् । उक्तगुणद्वयविशिष्टस्योपासनस्य फलमाह—स यो हैतदिति । एवमुपासीते-त्यर्थः । यदि वेदितुः सकाशात् ज्यायसः पुरुषस्य सद्भावे तदा स्वयं बाध्यो भवतीत्याशंक्य-तस्मात् पुरुषादधिकं वस्तु दिशः इत्युपासितव्यमित्याह—योऽस्माज्ज्यायानिति । यदि ‘अस्मात्’ उपासकात् ‘ यः ’ अधिकः स्यात् तर्हि तस्मात् अधिकात् ‘ दिशः ’ ‘ पूर्वाः ’ ‘ इत्युपासीत ’ ततः ज्यायसोऽपि ज्यायउपासने स्वस्याधिक्यात् बाधको नास्तीत्यर्थः ॥ ११ ॥

यजुर्मन्त्रब्राह्मणप्रसङ्गादुपनिषदोऽर्थं तत्स्वरूपं वेदितुः फलं च दर्शयति—तस्य वा एतस्य यजुष इति । अन्नरूपस्य ‘ यजुषो रसः ’ सार ‘ एव ’ ‘ उपनिषत् ’ । तस्याश्च वेदसारत्वमन्नरसदृष्टान्तेन प्रतिपादयति—तस्माद्यावदिति । यथा ‘ अन्नस्य ’ यावान् ‘ रसः ’ तावान् स्वाश्रयभूतं ‘ सर्वमन्नम् ’ ‘ अवति ’ तर्पयति भोगयोग्यं करोति, ‘ अनुव्येति ’ व्याप्नोति च अत उपनिषत् सकलं साङ्गं वेदं व्याप्नोति ॥ १२ ॥

अस्य अन्नात्मकस्य यजुषः ‘ तृप्तिरेव गतिः ’ फलावाप्तिः । यथा लोके अन्नेन तृप्तः पुरुषः गतः प्राप्त-

---

१—अत्र “ श्रेयान्त्सोऽश्रेयांसो हैव ” इति पाठः साधीयान् प्रतिभाति ।

स हैषैव देवानामद्धा विद्या स ह स न मनुष्यो य ऽएवंविद्देवानाᳬं हैव स ऽएकः ॥ १३ ॥

(ऽ) एतद्ध स्म वै तद्विद्वान्प्रियव्रतो रौहिणायनऽ आह । वायुं वान्तमानन्दस्तऽआत्मेतो वा वाहीतो वेति स ह स्म तथैव वाति तस्माद्यां देवेष्वाशिषमिच्छेदेतेनैवोपतिष्ठेतानन्दो वाऽ आत्माऽसौ मे कामः स मे समृध्यतामिति सᳬं हैवास्मै स कामऽऋध्यते यत्कामो भवत्येताᳬं ह वै तृप्तिमेतां गतिमेतमानन्दमेतमात्मानमभिसम्भवति य ऽएवं वेद ॥ १४ ॥

तदेतद्यजुरुपाᳬंश्वनिरुक्तम् । (म्रा) प्राणो वै यजुरुपाᳬंश्वायतनो

---

एतद्ध स्म वै तद्विद्वान्प्रियव्रतो रौहिणायन आह–वायुं वान्तम् । आनन्दस्त आत्मा । इतो वा वाहि, इतो वेति । स ह स्म तथैव वाति । तस्माद्यां देवेष्वाशिषमिच्छेद्–एतेनैवोपतिष्ठेत–"आनन्दो वा आत्मा, असौ मे कामः, स मे समृध्यताम्"–इति । सं हैवास्मै स काम ऋध्यते–यत्कामो भवति । एतां ह वै तृप्तिम्, एतां गतिम्, एतमानन्दम्, एतमात्मानम्–अभिसम्भवति–य एवं वेद ॥ १४ ॥

तदेतद्यजुरुपांश्वनिरुक्तम् । प्राणो वै यजुः । उपांश्वायतनो वै प्राणः । तद् यदेनं निर्ब्रुवन्तं ब्रूयात्–अनिरुक्तां देवतां निरवोचत्प्राण एनं हास्यतीति । तथा हैव स्यात् ॥ १५ ॥

---

प्रयोजन इव मन्यते । उपनिषत्प्रतिपाद्यस्वरूपमाह–आनन्द एवास्य विज्ञानमात्मेति । 'अस्य' उपनिषदात्मकस्य रसस्य 'आनन्दः' 'विज्ञानमेव' 'आत्मा' सच्चिदानन्दैकरसमखण्डं वस्तुस्वरूपमित्यर्थः । आनन्दात्मान इत्यादिकेन विद्याप्रशंसा । 'अद्धा विद्या' आनन्दात्मकदेवानां प्रतिपादकत्वादेषा उपनिषत् 'अद्धा' अपरोक्षा विद्या साक्षादमरत्वात् । तद्वेदितुर्देवत्वमेव फलमित्याह–स ह स न मनुष्य इति । 'एवम्' उपनिषदखण्डविज्ञानलक्षणमात्मानं जानानो 'मनुष्यो न' भवति किं तु 'देवानां' मध्ये 'एको' भवतीत्यर्थः ॥ १३ ॥

उक्तं देवानामानन्दात्मत्वमुपजीव्य यजुरात्मकवायोरानन्दात्मत्वपरिज्ञानफलं पुरावृत्तकथनेन दर्शयति–एतद्ध स्म वै तद्विद्वानिति । 'एतद्' देवानामानन्दात्मत्वं यजूरसरूपाया उपनिषद आनन्दविज्ञानरूपं च 'विद्वान्' रोहिणपुत्रः 'प्रियव्रतो' नामाह 'वायुं वान्तं' सञ्चरन्तं वायुमुक्तवान् । किमिति ? हे वायो 'ते' तव 'आत्मा' स्वरूपम् 'आनन्दः' इति । तस्मात् 'इतः' अन्यप्रदेशे 'वाहि' 'इतो' 'वा' देशे 'वाहि' सञ्चरेति वायुमुक्तवान् । स वायुरपि स्वकीयानन्दलक्षणस्वरूपं वेदितुर्वाक्यमनतिलङ्घयन्निदानीमपि 'तथैव' इतस्ततो 'वाति' । वायुवशीकरणं तस्य फलमित्युक्तं भवति । तस्माद्यां देवेष्वाशिषम्–इत्यादेरयमर्थः–सर्वत्र देवेष्वानन्दत्वपरिज्ञानेन सर्वकामप्राप्तिर्भवतीति । आनन्दो वा आत्मा–इत्ययं ब्राह्मणप्रतिपादित उपस्थानमन्त्रः । "तस्य वा एतस्य यजुषो रस एवोपनिषद्"–इत्यादिना प्रतिपादितमर्थजातं विदुषः फलमाह–एतां ह वै तृप्तिमेतां गतिमिति ॥ १४ ॥

एवं वायुप्राणरूपत्वेन स्तुतस्य यजुष उपांश्वनुष्ठानं विधत्ते–तदेतद्यजुरुपांश्वनिरुक्तमिति । इदमीदृक्

वै प्राणस्तद्यदेनं निर्ब्रुवन्तं ब्रूयादनिरुक्तां देवतां निरवोचत्प्राण ऽ एनᳯं हास्यतीति तथा हैव स्यात् ॥ १५ ॥

(त्त) तस्य ह यो निरुक्तमाविर्भावं वेद । (दा) आविर्भवति कीर्त्या यशसोपाᳯंशु यजुषाऽध्वर्युर्ग्रहं गृह्णाति गृहीतः सन्नऽआविर्भवत्युपाᳯंशु यजुषाऽग्निं चिनोति चितः संचितऽआविर्भवत्युपाᳯंशु यजुषा हविर्निर्व्वपति शृतं निष्ठितमाविर्भवत्येवं यत्किंचोपाᳯंशु करोति कृतं निष्ठितमाविर्भवति तस्य ह य ऽएतमेवं निरुक्तमाविर्भावं वेदाविर्भवति कीर्त्या यशसा ब्रह्मवर्चसेन क्षिप्रऽउ हैवाविदं गच्छति स ह यजुरेव भवति यजुषैनमाचक्षते ॥ १६ ॥

इति द्वितीयप्रपाठके सप्तमं ब्राह्मणम् ॥ १०-२-७ ॥ ( ३. ५. ) ॥

इति तृतीयोऽध्यायः समाप्तः ॥ १०-३ ॥

---

तस्य ह यो निरुक्तमाविर्भावं वेद—आविर्भवति कीर्त्या, यशसा । उपांशु यजुषाऽध्वर्युर्ग्रहं गृह्णाति—गृहीतः सन्न आविर्भवति । उपांशु यजुषाऽग्निं चिनोति—चितः संचित आविर्भवति । उपांशु यजुषा हविर्निर्वपति—शृतं निष्ठितमाविर्भवति । एवं यत्किञ्चोपांशु करोति—कृतं निष्ठितमाविर्भवति । तस्य ह य एतमेवं निरुक्तमाविर्भावं वेद—आविर्भवति कीर्त्या, यशसा, ब्रह्मवर्चसेन । क्षिप्र उ हैवाविदं गच्छति । स ह यजुरेव भवति । यजुषैनमाचक्षते ॥ १६ ॥

---

क्रियत इति निर्वक्तुमनर्हम् 'अनिरुक्तम्' तदेवोपांशुत्वलक्षणम् । आन्तरत्वात् प्राणस्योपांशुस्थानत्वम् । उपांशुत्वेनाननुष्ठाने दोषमाह—तद्यदेनं निर्ब्रुवन्तमिति । 'एनम्' प्राणरूपं यजुर्मन्त्रं 'निर्ब्रुवन्तम्' उच्चैः पठन्तं पुरुषं 'ब्रूयात्'—विद्वानसौ 'अनिरुक्ताम्' उच्चैर्वक्तुमनर्हां 'देवताम्' उच्चैरवादीत् । 'एनं' निर्ब्रुवन्तं 'प्राणो' 'हास्यति' त्यक्ष्यति उपांशुत्वविघातादिति 'यत्' ब्रूयात् तत् 'तथैव स्यात्' इति सम्बन्धः । यावन्तं कालं प्राण उपांशुरान्तरो वर्त्तते तावन्तं जीवति स यदा ऊर्ध्वं निष्क्रामति तदा मरिष्यतीत्यर्थः ॥ १५ ॥

उपांशुत्वं प्रशस्य निरुक्तत्वं प्रशंसति—तस्य ह यो निरुक्तमिति । अग्नौ उपांशु यजुषा कर्त्तव्यानि संगृह्णाति—उपांशु यजुषाऽध्वर्युर्ग्रहं गृह्णाति इति । ग्रहणकाले उपांशुत्वं गृहीतस्य ग्रहस्यायतने सादितस्य 'आविर्भावः' अयमेष ग्रह इति सर्वैर्ज्ञायते । एवमुत्तरं योज्यम् । शृतं निष्ठितमिति । 'शृतं' पक्वम् 'निष्ठितम्' प्रयोगार्हमवदानार्हमित्यर्थः । यत्किञ्चोपांश्वित्यादिनोपांशुकर्त्तव्यसामान्यसंग्रहः । यद्यदुपांशु क्रियते तत्तत्पश्चादाविर्भूतं सर्वै-

रिदं कर्म कृतमिति बुध्यते । क्षिप्र उ हैवाविदं गच्छतीति । यो यजुष उपांशुत्वं पश्चादाविर्भावं वेत्ति स आयुःकीर्त्यादियुक्तः ' क्षिप्रम् ' ' आविदम् ' प्रसिद्धिं ' गच्छति ' " अय महान्पुरुषः "—इति । ' यजुषैन माचक्षते ' इति ज्ञातृज्ञेययोरभेदोपचारेण तस्य विदुष एव ' यजुः ' इति तस्य व्यवहार्यत्वं भवतीत्यर्थः ॥ १६॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये दशमकाण्डे तृतीयेऽध्याये पंचमं ब्राह्मणम् ॥ ( १०—३—५ ) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं,
सप्ताब्धीन्पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटं च ॥
धान्याद्रिं धन्यजन्मा तिलभवमतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान्गुडकृतमजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणजमनृणः शार्करं चार्कतेजा,
रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये दशमकाण्डे तृतीयोऽध्यायः समाप्तः ॥ ( १०—३ )॥



# अथ चतुर्थेऽध्याये प्रथमं ब्राह्मणम् ।
# द्वितीयप्रपाठके च अष्टमं ब्राह्मणम् ।



**प्रजापतिं विस्रस्तम् । यत्र देवाः समस्कुर्वंस्तमुखायां योनौ रेतोभूतमसिञ्चन्योनिर्वाऽउखा तस्मा ऽएतत्संवत्सरेऽन्नꣳ समस्कुर्वन्योऽयमग्निश्चितस्तदात्मना पर्य्यदधुस्तदात्मना परिहितमात्मैवाभवत्तस्माऽदन्नमात्मना परिहितमात्मैव भवति ॥ १ ॥**

---

प्रजापतिं विस्रस्तं यत्र देवाः समस्कुर्वन् । तमुखायां योनौ रेतोभूतमसिञ्चन् । योनिर्वा उखा । तस्मा एतत्सम्वत्सरेऽन्नं समस्कुर्वन् । योऽयमग्निश्चितः । तदात्मना पर्यदधुः । तदात्मना परिहितमात्मैवाभवत् । तस्मादन्नमात्मना परिहितमात्मैव भवति ॥ १ ॥

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिल जगत् । निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

चतुर्थेऽध्याये आहवनीयाग्निरूपप्रजापतेरुखाप्रक्षेपतश्चित्याग्नेरन्नत्वेन परिकल्पितयोर्भोक्तृभोग्ययोरग्निचित्ययोर्द्वन्द्वस्यार्क्यमहाव्रतोक्थनाममिर्यजुःसामर्क्पदत्रयपरिभाषासिद्धैर्व्यवहार्यत्वेन स्तुतिः । अथ रुक्मपुरुषयोरिष्टकापुरीषचित्योश्चित्याहवनीययोश्चेन्द्राग्न्यात्मना स्तुतिः । पश्चात् प्रजापतिरूपाहवनीयस्य तत्र हूयमानमहाव्रतीयग्रहरसस्य यद्द्वंद्वं सम्पद्यते—तस्यार्क्यमहाव्रतोक्थनामभिर्व्यपदेश्यत्वम् । कलाभिः सप्तदशात्मकस्य चित्याग्निरूपस्य प्रजापतेः सप्तदशात्मकः सोमयागोऽन्नम् । तयोरधिदैवमादित्यचन्द्रात्मनाऽध्यात्मं प्राणात्मना च स्तुतिः त्रिष्वपि स्थानेषु अर्क्यादिनामत्रयप्रतिपाद्यत्वमिति प्रतिपाद्यसंग्रहः । अथादौ प्रजापतेर्भोक्तृत्वमाहवनीयरूपत्वेनाह—प्रजापतिं विस्रस्तमिति । ‘ यत्र ’ यदा ‘ विस्रस्तम् ’ विश्लिष्टावयवं ‘ प्रजापतिम् ’ संस्कृतवन्तः—तदा ‘ तम् ’ ‘ उखायां योनौ रेतोभूतं ’ सिक्तवन्तः । अग्नेः पत्नीयजमानाभ्यां ‘ रेतोरूपेण सेकः, तस्य संवत्सरान्ते समुत्पत्तिश्च षष्ठकाण्डादौ प्रतिपादिता । तथा हि “ तस्यामस्यां प्रतिष्ठायां भूतानि च भूतानां च पतिः संवत्सरायादीक्षन्त, भूतानां पतिर्गृहपतिरासीत् । उषाः पत्नी ” ( श. प. । ६ । १ । ३।७) इत्युपक्रम्य “ संवत्सर उषसि रेतोऽसिञ्चन्त्स सम्वत्सरे कुमारोऽजायत ” (श. प.६।१।३।८।) इति । तस्य प्रजापतेर्देवैः संस्कारः तस्य चाग्निरिति नामव्यपदेशस्तत्रैव प्रतिपादितः । तदेतत्सर्वमभिप्रेत्योक्तम् । तस्मै उख्याग्निरूपप्रजापतये ‘ संवत्सरे ’ अतीते सति ‘ एतद् ’ वक्ष्यमाणं चित्याग्निरूपम् ‘ अन्नम् ’ संस्कृतवन्तः । “ तस्मादेनं संवत्सरभृतमेव चिन्वीत ” (श. प. १०।२।६।९) इति वचनादुख्योऽग्निः संवत्सरं धारयितव्यः, पश्चादिष्टकाचयनमित्यर्थः । यद्वा ‘ संवत्सरे ’ संवत्सरसाध्यगवामयनादौ गवामयनोपान्त्यदिवसे महाव्रताख्यमन्नमिति योज्यम् । अनेन संस्कारप्रकारमाह—तदात्मनेति । ‘ तत् ’ चित्याग्निरूपमन्नम् ‘ आत्मना ’ प्रजापतिशरीरेण पर्यदधुराच्छादितवंतः । यस्माच्छरीरेणान्नं परिहितं तस्माच्चित्याग्निरूपमन्नं प्रजापतिशरीरात्मकमेवासीत् । शरीरात्मकत्वं लोकप्रसिद्ध्योपपादयति—तस्मादन्नमात्मना परिहितमिति ॥ १ ॥

तुथैवैतद्युजमानः । ( ८ ) आत्मानमुखायां योनौ रेतोभूतꣳ सिञ्चति योनिर्वा ऽउखा तुस्मा ऽएतत्संवत्सरे ऽन्नꣳ सꣳस्करोति योऽयमग्निश्चितस्तुदात्मना परिदधाति तुदात्मना परिहितमात्मैव भवति तुस्मादन्नमात्मना परिहितमात्मैव भवति ॥ २ ॥

तं निदधाति । व्वौषडिति व्वौगिति वा ऽएष षडितीदꣳ षट्चितिकमन्नं कृत्वाऽस्मा ऽअपिदधात्यात्मसंमितं युदु वा ऽआत्मसंमितमन्नं तुदवति तन्न हिनस्ति यद्भूयो हिनुस्ति तद्यत्कनीयो न तुदवति ॥ ३ ॥

स ऽएष ऽएवार्कः । ( कौं ) यमेतमत्राग्निमाहरन्ति तुस्यैतदन्नं क्यं योऽयमग्निश्चितस्तुदक्यं यजुष्ट ऽएष ऽएव महांस्तुस्यैतदन्नं व्रतं तन्महा-

---

तथैवैतद्यजमान आत्मानमुखायां योनौ रेतोभूतं सिञ्चति । योनिर्वा उखा—तस्मा एतत्संवत्सरेऽन्नं संस्करोति । योऽयमग्निश्चितः । तदात्मना परिदधाति । तदात्मना परिहितमात्मैव भवति । तस्मादन्नमात्मना परिहितमात्मैव भवति ॥ २ ॥

तं निदधाति । वौषट्—इति । वौग्—इति वा एषः । षडिति । इदं षट्चितिकमन्नं कृत्वाऽस्मा अपिदधात्यात्मसम्मितम् । यदु वा आत्मसंमितमन्नं तदवति । तन्न हिनस्ति । यद्भूयः । हिनस्ति तत् । यत्कनीयः । न तदवति ॥ ३ ॥

स एष एवार्कः—यमेतमत्राग्निमाहरन्ति । तस्यैतदन्नं क्यम् । योऽयमग्निश्चितः । तदक्यम्—

---

यथा पूर्वं देवैर्विस्रस्तस्य प्रजापतेरुखायां रेतोरूपेण सेकस्तस्मै समुत्पन्नाय प्रजापतये चित्याग्नेरन्नत्वेन संस्कारः । तस्य चान्नस्य शरीरेण परिहितत्वादात्मत्वम् । तत्सर्वमधुनातनानुष्ठातरि योजयति—तथैवैतद्यजमान इति । 'आत्मानम्' स्वरूपम् 'उखायाम्' रेतोरूपं सिक्तवान् ॥ २ ॥

चित्याग्नेरुपरि उख्याग्निनिधानमन्त्रे "वौषट्" इति श्रूयते—तस्याक्षरद्वयस्य यथाक्रमम् अग्निचित्याग्निपरतां दर्शयति—तं निदधातीति । चित्याग्नेरुपरि स्थापयति । तत्र 'वौगिति' पूर्वाक्षरेण 'एषः' अग्निरुच्यते । वक्तेर्वौगिति पदनिष्पत्तिरूह्या । षडित्यक्षरेण षट्चितिकोऽग्निः । तथा सति 'वौषट्' इत्यस्यायमर्थः सम्पद्यते 'अस्मै' अहवनीयाग्नये 'षट्चितिकमग्निमन्नं' 'कृत्वा,' 'आत्मसम्मितम्' 'अपिदधाति' कृतवान् भवति । अन्नस्य शरीरसम्मितत्वमन्वयव्यतिरेकाभ्यां दर्शयति—यदु वा आत्मेति । 'यत्' शरीरस्याधिकम् 'अन्नम्' 'तद्धिनस्ति' शरीरम्—अजीर्णत्वात् । अल्पं 'तत्' शरीरं 'न अवति' न पोषयति, अतः शरीरपर्याप्तमेवान्नं कार्यमित्यर्थः ॥ ३ ॥

अग्निचित्याग्निद्वन्द्वस्य यजुःसामर्ग्वेदत्रयपरिभाषासिद्धार्क्यमहाव्रतोक्थनामभिर्व्यपदेश्यत्वं तत्तन्नामाऽवयवनिर्वचनेन दर्शयति—स एष एवार्क इत्यादिना । योऽग्निराहवनीयोऽत्र षट्चितिकेऽग्नावाह्रियते निधीयते 'स

व्रतꣳ सामत ऽएष ऽउ ऽएवोक्तस्यैतदन्नं थं तदुक्थमृक्तस्तदेतदेकꣳ सत्त्रेधाऽऽख्यायते ॥ ४ ॥

( तेऽथे ) अथेन्द्राग्नी वाऽअसृज्येताम् । ( म्ब्र ) ब्रह्म च क्षत्त्रं चाग्निरेव ब्रह्मेन्द्रः क्षत्रं तौ सृष्टौ नानैवास्तां तावब्रूतां न वाऽइत्थꣳ सन्तौ शक्ष्यावः प्रजाः प्रजनयितुमेकꣳ रूपमुभावसावेति तावेकꣳ रूपमुभावभवताम् ॥५॥

( न्तौ ) तौ यौ ताविन्द्राग्नी । ( ऽ ) एतौ तौ रुक्मश्च पुरुषश्च रुक्म ऽएवेन्द्रः पुरुषोऽग्निस्तौ हिरण्मयौ भवतो ज्योतिर्वै हिरण्यं ज्योतिरिन्द्राग्नीऽअमृतꣳ हिरण्यममृतमिन्द्राग्नी ॥ ६ ॥

---

यजुष्टः । एष एव महान् । तस्यैतदन्नं व्रतम् । तन्महाव्रतम्—सामतः । एष उ एवोक् । तस्यैतदन्नं थम् । तदुक्थम्—ऋक्तः । तदेतदेकं सत्—त्रेधाऽऽख्यायते ॥ ४ ॥

अथेन्द्राग्नी वा असृज्येताम् । ब्रह्म च क्षत्रं च । अग्निरेव ब्रह्म । इन्द्रः क्षत्रम् । तौ सृष्टौ नानैवास्ताम् । तावब्रूताम् । न वा इत्थं सन्तौ शक्ष्यावः प्रजाः प्रजनयितुम् । एकं रूपमुभावसावेति । तावेकं रूपमुभावभवताम् ॥ ५ ॥

तौ यौ ताविन्द्राग्नी—एतौ तौ रुक्मश्च पुरुषश्च । रुक्म एवेन्द्रः । पुरुषोऽग्निः । तौ हिरण्मयौ भवतः । ज्योतिर्वै हिरण्यम्, ज्योतिरिन्द्राग्नी । अमृतं हिरण्यम्, अमृतमिन्द्राग्नी ॥ ६ ॥

---

एषोऽर्कः ' आदित्यः । यस्योपरि निहितः स हि तस्यान्नं क्यं कः प्रजापतिः ' तस्मै ' हितम् ' अन्नम् ' चित्याग्निरूपं 'क्यम्' भवतीति कृत्वोक्तम् । अतः अर्कः क्यम् इति पदद्वयं यजुष्टो यजुर्वेदेऽर्क्यम् इति श्लिष्टोच्चारणेन व्यवहृतमित्यर्थः । " तदर्क्यं भवति "—इति तैत्तिरीयकेऽग्निप्रकरणे समाम्नायते । एषोऽग्निः ' महान् ' महच्छब्दवाच्यः, तस्य चित्योऽग्निर्व्रतसंज्ञकमन्नं तदुभयं ' सामतः ' सामवेदे ' महाव्रतम् ' इति व्यवहृतम् । यस्मात् 'एषः' अग्निः उगिति पदेनोच्यते । तस्य चित्याग्निः ' थम् ' अन्नमुच्यत इत्यर्थः । तदुभयम् ' ऋक्तः ऋग्वेदे ' 'उक्थम्' इति नाम्ना व्यवहृतम् । बृहतीसहस्रस्योक्थमिति संज्ञा । अतः ' तदेतदेकम् ' अग्निचित्याग्निद्वन्द्वं ' सत्त्रेधा ' वेदत्रये अर्क्य-महाव्रत-उक्थ-नामभिराख्यायते ॥ ४ ॥

एतदग्निद्वयं चेन्द्राग्न्यात्मना स्तोतुमादाविन्द्राग्निसृष्टिमाह—अथेन्द्राग्नी वा असृज्येतामिति । पूर्वं ब्रह्मक्षत्ररूपौ ' इन्द्राग्नी ' प्रजापतिना 'सृष्टौ' 'नानैव' भेदेन ' आस्ताम् ' । पृथगवस्थितौ 'तौ'परस्परम् ' अब्रूताम् ' ' न वा इत्थं ' भेदेन ' सन्तौ ' ' प्रजा ' उत्पादयितुं ' न शक्ष्यावः '—न समर्थौ भविष्यावः । तस्मादुभावावामेकं समानं रूपमसाव भवावेति तथैवाभूताम् ॥ ५ ॥

तत्र प्रथमेष्टकाचितावुपधेयौ रुक्मपुरुषाविन्द्राग्न्यात्मना स्तौति—तौ यौ ताविन्द्राग्नी इति । तयोरेकरूपापन्नयोः स्वरूपमाह—रुक्मश्च पुरुषश्चेति । ' रुक्मो ' नामैकविंशतिनिर्बाधं हिरण्मयं फलकम्, पुरुषश्च हिरण्मयः । हिरण्यस्य ' ज्योतिरमृत ' पदाभ्यां स्तुतिः ॥ ६ ॥

---

१—श. प. ७ । १ । २ । अत्र निर्बाधशब्दार्थः स्पष्टः । " यजमानः कण्ठे रुक्मं प्रतिमुञ्चते परिमण्डलमेकविंशतिपिण्डम् " का. श्रौ. सू. १६ । १४६ । इति ।

तावेताविन्द्राग्नीऽएव चिन्वन्ति । यद्धि किं चैष्टकमग्निरेव तत्तस्मात्तदग्निना पचन्ति यद्धि किं चाग्निना पचन्त्यग्निरेव तदथ यत्पुरीषꣳ स ऽइन्द्रस्तस्मात्तदग्निना न पचन्ति नेदग्निरेवासन्नेन्द्र ऽइति तस्मादेताविन्द्राग्नीऽएव चितौ ॥ ७ ॥

( तात् ) अथ यश्चितेऽग्निर्निधीयते । तदेकꣳ रूपमुभौ भवतस्तस्मात्तावेतेनैव रूपेणेमाः प्रजाः प्रजनयतः सैषैकैवेष्टकाऽग्निरेव तामेष सर्व्वोऽग्निरभिसम्पद्यते सैवेष्टकासम्पत्तदेतदेकमेवाक्षरं व्वौगिति तदेष सर्व्वोऽग्निरभिसम्पद्यते सैवाक्षरसम्पत् ॥ ८ ॥

( त ) तद्धैतत्पश्यन्नृषिरभ्युनूवाद । भूतं भविष्यत्प्रस्तौमि महद्ब्रह्मैकमक्षरं बहु ब्रह्मैकमक्षरमित्येतद्ध्येवाक्षरꣳ सर्व्वे देवाः सर्व्वाणि

---

तावेताविन्द्राग्नी एव चिन्वन्ति । यद्धि किं चैष्टकम्—अग्निरेव तत् । तस्मात्तदग्निना पचन्ति—यद्धि किं चाग्निना पचन्ति । अग्निरेव तत् । अथ यत्पुरीषम्—स इन्द्रः । तस्मात्तदग्निना न पचन्ति । नेदग्निरेवासन्नेन्द्र इति । तस्मादेताविन्द्राग्नी एव चितौ ॥ ७ ॥

अथ यश्चितेऽग्निर्निधीयते—तदेकं रूपमुभौ भवतः । तस्मात्तावेतेनैव रूपेणेमाः प्रजाः प्रजनयतः । सैषैकैवेष्टकाऽग्निरेव । तामेष सर्वोऽग्निरभिसम्पद्यते । सैवेष्टकासम्पत् । तदेतदेकमेवाक्षरं वौगिति । तदेष सर्वोऽग्निरभिसम्पद्यते-सैवाक्षरसम्पत् ॥ ८ ॥

तद्धैतत्पश्यन्नृषिरभ्यनूवाद । "भूतं भविष्यत्प्रस्तौमि महद्ब्रह्मैकमक्षरम्—बहु ब्रह्मै-

---

इष्टकापुरीषचितिद्वयमिन्द्राग्न्यात्मना स्तौति—तावेताविन्द्राग्नी एव चिन्वन्तीति । तत्र 'ऐष्टकम्' इष्टकासमूहः तत् 'अग्निः,' 'पुरीषं' स 'इन्द्रः,' अत एव इष्टकानामग्न्यात्मकत्वाद् अग्निना ताः पक्वाः कर्त्तव्याः । पुरीषस्येन्द्रात्मकत्वात्, तस्याग्निना न पाकः कर्त्तव्यः । इष्टकानां पाके पुरीषस्यापाके कारणमाह—नेदग्निरेवासन्नेन्द्र इति । यदि उभयोः पाकस्तदा तर्हि इन्द्राग्न्योरेकैकं छ्नं भवति । न तूभयोः । अतस्तत्रोभयरूपत्वाय इष्टकानां पाकः पुरीषस्य तदभाव इत्यर्थः ॥ ७ ॥

एवं विभिन्नयो रुक्मपुरुषयोरिष्टकापुरीषचित्योरिन्द्राग्नित्वमुक्तम् । तयोरिदानीमैक्यमाह—अथ यश्चितेऽग्निर्निधीयत इति । 'उभौ' इन्द्राग्नी 'एकम्' 'रूपम्' आहवनीयात्मकमभवताम् । कथमेकरूपत्वमिति ? तदिष्टकासम्पत्त्या अक्षरसम्पत्त्या चोपपादयति—सैषैकैवेष्टकाऽग्निरेवेति । यदग्निद्वन्द्वमुक्तं सा 'एकेष्टका' अग्निरूपा 'एष सर्वोऽग्निः' तामिष्टकामभिलक्ष्य 'सम्पद्यते'—इष्टकारूपेणैकेन सम्पन्न इति एक इति गण्यते 'सा' इयमिष्टकासम्पत् । एकमेवाक्षरं वौगिति—इत्यस्यार्थः—आहवनीयनिधानमन्त्रगतवौषडवयववौगित्यात्मकैकाक्षरेण सर्वोऽग्निः सम्पद्यत इत्यक्षरैकत्वादेकत्वम् । सैवेयमक्षरसम्पत् ॥ ८ ॥

अक्षरस्यैकत्वं मन्त्रसंवादेन द्रढयति—तद्धैतत्पश्यन्नृषिरभ्यनूवादेति । एतमर्थं पश्यन्नृषिर्मन्त्र उक्तवान् ।

भूतान्यभिसम्पद्यन्ते तदेतद्ब्रह्म च क्षत्रं चाग्निरेव ब्रह्मेन्द्रः क्षत्रमिन्द्राग्नी वै विश्वे देवा विड्वि विश्वे देवास्तदेतद्ब्रह्म क्षत्रं विट् ॥ ९ ॥

( डे ) एतद्ध स्म वै तद्विद्वाञ्छ्यापर्णः सायकायन ऽआह । यद्वै मऽइदं कर्म समाप्स्यत ममैव प्रजा सल्वानाॅं राजानोऽभविष्यन्मम ब्राह्मणा मम वैश्या यत्तु मऽएतावत्कर्मणः समापि तेन मऽउभयथा सल्वान्प्रजाऽतिरेक्ष्यतऽइति स ऽएष ऽएव श्रीरेष यश ऽएषोऽन्नादः ॥ १० ॥

---

कमक्षरम्" इति । एतद्ध्येवाक्षरं सर्वे देवाः, सर्वाणि भूतान्यभिसम्पद्यन्ते । तदेतद्ब्रह्म च क्षत्रं च । अग्निरेव ब्रह्म, इन्द्रः क्षत्रम् । इन्द्राग्नी वै विश्वे देवाः । विड्वि विश्वे देवाः । तदेतद्ब्रह्म क्षत्रं विट्॥९॥

एतद्ध स्म वै तद्विद्वाञ्छ्यापर्णः सायकायन आह—यद्वै म इदं कर्म समाप्स्यत ममैव प्रजा सल्वानां राजानोऽभविष्यन्, मम ब्राह्मणाः, मम वैश्याः । यत्तु म एतावत्कर्मणः समापि—तेन म उभयथा सल्वान्प्रजाऽतिरेक्ष्यत इति । स एष एव श्रीः, एष यशः, एषोऽन्नादः ॥ १० ॥

---

'भूतं भविष्यत्' मिलितं भूतभविष्यत्कालवर्त्ति महत्, महत्त्वातीतस्य विश्रान्तिभूमिः "ज्यायानेभ्यो लोकेभ्यः"—इति श्रुतेः । अथ वा ब्रह्म कीदृशं ? सकलजगदात्मना महत्, अतिप्रभूतम्, एकम्, अद्वितीयम्, एकत्वसङ्ख्या द्वित्वादिसङ्ख्यानिरासार्था । न तु तत्रैकत्वसङ्ख्याविधानार्था । अन्यथा—" अस्थूलमनण्वह्रस्वं ब्रह्म "—( बृ. उ. १।४।६।८।९) इति निर्गुणश्रुतिव्याकोपः स्यात्, इति ब्रह्मविदां मतम् । 'अक्षरम्'—अविनश्वरं सर्वगतं वा ब्रह्म सच्चिदानन्दैकरसं 'प्रस्तौमि' । बहु ब्रह्मैकमक्षरमित्येतदुक्तस्य विवरणम् । एतद्ध्येवाक्षरम् इति । अयमर्थः—'सर्वे देवाः' 'सर्वाणि भूतानि' चैतद्ब्रह्मलक्षणमेकमक्षरमभिसम्पद्यन्ते । सर्वेषां कारणरूपाक्षरात्मनैकत्वं सम्पन्नमित्यर्थः । उक्तमग्नेरिन्द्राग्न्यात्मकत्वमुपजीव्य वर्णत्रयात्मना स्तौति—तदेतद् ब्रह्म च क्षत्रं चेति । इन्द्राग्न्योरवयवशो ब्रह्मक्षत्ररूपत्वात्तदुभयरूपस्याग्नेस्तत्तादात्म्यं तयोर्विश्वदेवात्मकत्वाच्च 'विड्' रूपता । इन्द्राग्न्योर्विश्वदेवात्मकत्वमेवम्—इन्द्रः सर्वदेवानां परमः, अग्निरवमः । तयोराद्यन्तवर्तिनोर्ग्रहणेन सर्वे देवाः संगृहीता इति, तयोस्तदात्मकत्वं विश्वदेवानां विट्त्वम्—इन्द्रप्रजात्वात् । अतस्तदेकमग्न्यात्मकमक्षरं ब्रह्मक्षत्रवैश्यरूपमित्यर्थः ॥ ९ ॥

उक्तं वर्णत्रयात्मकत्वमुपजीव्य कर्मणः श्रीयशोऽन्नादत्वलक्षणं फलं पुरावृत्तकथनेन दर्शयति—एतद्ध स्म वै तद्विद्वाञ्छ्यापर्ण इति । 'एतद्' अग्न्यात्मकमक्षरं वर्णत्रयात्मकं जानानः सायकपुत्रः, नडादित्वात् फक् ( पा. सू. ४ । १ । ९९ ) 'श्यापर्णः' उक्तवान् । 'यदिदम्' एतादृशं कर्म समाप्स्यत समापितमभविष्यत् तर्हि मम स्वीयैव प्रजा 'सल्वानाम्' देशनामैतत्, राजानोऽभविष्यन् क्रियातिपत्तौ लृङः प्रयोगः । मम प्रजा सल्वानां ब्राह्मणा वैश्याश्चाभविष्यन्निति । अयमर्थः एवंरूपकर्मणः समापने मदीया प्रजैव सल्वदेशानां राजानः क्षत्रिया ब्राह्मणा वैश्याश्च भविष्यन्तीति । फलान्तरमाह—यत्त्वित्यादिना । यदि मदीयम् 'एतावत्' कर्म समाप्यते तर्हि 'मे' मदीया प्रजा उभयथा 'सल्वान्' देशान् 'अतिरेक्ष्यते' अतिरिक्ता अधिका भविष्यतीति 'श्यापर्ण आह'—इति सम्बन्धः । यदुभयथा—इति तस्यार्थं श्रुतिः स्वयमाह—स एष एव श्रीरिति । 'एषः' अग्निः 'श्रीः' श्रीरूपः तद्धेतुः 'यशः' अन्नादरूपस्तद्धेतुरित्यर्थः । अतः प्रजा श्रीरूपत्वेन यशोऽन्नादरूपत्वेन चोभयथा अतिरिक्ता भविष्यतीत्यर्थः ॥ १० ॥

(ऽ) एतुद्ध वै तुच्छाण्डिलयः। ( ल्यो ) व्वामकक्षायणाय प्रोच्योवाच श्रीमान्यशुस्व्यन्नादो भविष्यसीति श्रीमान्ह वै यशुस्व्यन्नादो भवति युऽ एवं व्वेद ॥ ११ ॥

सु एषोऽग्निः प्रजापतिरेव। ते देवा ऽएतमग्निं प्रजापतिᳬ सᳬस्कृत्या-थास्माऽएतुत्संव्वत्सरेऽन्नᳬ सुमस्कुर्व्वन्य ऽएषु महाव्व्रतीयो ग्रहः ॥ १२ ॥

( स्तु ) तुमध्वर्युर्ग्रहेण गृह्णाति। युद्गृह्णाति तुस्माद्ग्रहस्तुस्मिन्नुद्गाता महाव्व्रतेन रुसं दधाति सुर्व्वाणि हैतानि सामानि युन्महाव्व्रतं तुदस्मि-न्त्सुर्व्वैः सामभी रुसं दधाति तुस्मिन्होता महतोक्थेन रुसं दधाति सुर्व्वा हैता ऽऋचो युन्महदुक्थं तुदस्मिन्त्सुर्व्वाभिर्ऋग्भी रुसं दधाति ॥ १३ ॥

ते युदा स्तुवते युदाऽनुशᳬसति। ( त्यु ) अुथास्मिन्नेतं व्वषट्कृते जुहोति व्वौगिति वाऽएष षड़्तीदᳬ युद्विधमन्नं कृत्वाऽस्माऽअुपिदधा-

---

एतद्ध वै तच्छाण्डिल्यो वामकक्षायणाय प्रोच्योवाच—श्रीमान्यशस्व्यन्नादो भविष्यसीति। श्रीमान्ह वै यशस्व्यन्नादो भवति य एवं वेद ॥ ११ ॥

स एषोऽग्निः प्रजापतिरेव। ते देवा एतमग्निं प्रजापतिं संस्कृत्याथास्मा एतत्सम्वत्सरेऽन्नं समस्कुर्वन्—य एष महाव्रतीयो ग्रहः ॥ १२ ॥

तमध्वर्युर्ग्रहेण गृह्णाति—यद् गृह्णाति तस्माद्ग्रहः। तस्मिन्नुद्गाता महाव्रतेन रसं दधाति। सर्वाणि हैतानि सामानि—यन्महाव्रतम्। तदस्मिन्त्सर्वैः सामभी रसं दधाति। तस्मिन् होता महतोक्थेन रसं दधाति। सर्वा हैता ऋचो—यन्महदुक्थम्। तदस्मिन्त्सर्वाभिर्ऋग्भी रसं दधाति ॥ १३ ॥

ते यदा स्तुवते। यदाऽनुशंसति। अथास्मिन्नेतं वषट्कृते जुहोति। वौगिति वा एषः। षडितीदं

---

उक्तं श्रीयशःप्रभृतिकं फलं संवादेन द्रढयति—एतद्ध वै तच्छाण्डिल्य इति। शाण्डिल्यो नामार्षिः वामकक्षपुत्राय एतत्फलं 'प्रोच्य' स्वयं सम्यक् पर्यालोच्य 'उवाच' किमिति? हे वामकक्षपुत्र! त्वमग्न्यैक-रूप्यभावनया 'श्रीमान्' 'भविष्यसि' इति प्रतिवाक्यमन्वयः। वेदितुः फलमाह—श्रीमान् ह वा इति ॥११॥

अथ प्रजापतिरूपाहवनीयाग्नेस्तत्र हूयमानमहाव्रतीयग्रहरसस्य च यद्द्वन्द्वं तस्य पूर्ववदर्क्यमहाव्रतोक्थनाम-त्रयेणाभिधेयत्वं वक्तुं ग्रहग्रहणं स्तुतशस्त्रपठनं तस्य रसस्य वषट्कारान्ते होमं च क्रमेण दर्शयति—स एषोऽग्निः प्रजापतिरेवेत्यादिना। पूर्वं 'देवाः' अग्निरूपप्रजापतिं 'संस्कृत्य' तस्मै संवत्सरान्ते संवत्सरसाध्यगवामय-नादौ एतद्वक्ष्यमाणमन्नं संस्कृतवन्तः। अन्नमिति यदुक्तं तदाह—य एष महाव्रतीयो ग्रह इति। महाव्रतप्रति-पत्तिनिर्वर्त्यो यो ग्रहः स एवान्नशब्देनोच्यते। कात्यायनोऽपि महाव्रतैकनियतं ग्रहणं सूत्रितवान्। तथा हि—“ महाव्रतमग्निष्टोमः प्राजापत्य उपालम्भ्यो ग्रहं गृह्णाति वि न इन्द्र वाचस्पतिं विश्वकर्मन्निति वा ” (का. श्रौ. सू. १३। २९। ३०। ३१) इति ॥ १२ ॥

अथ तस्य ग्रहस्य ग्रहणं विधत्ते—तमध्वर्युर्ग्रहेण गृह्णातीति। एतदादिकम् “ अथास्मिन् एतं वषट्कृते

त्यात्मसंमितं यद्वु वाऽआत्मसंमितमन्नं तदवति तन्न हिनस्ति यद्भूयो हिनस्ति तद्यत्कनीयो न तदवति ॥ १४ ॥

सऽएषऽएवार्कः । (कौं) योऽयमग्निश्चितस्तस्यैतदन्नं क्यमेष महाव्रतीयो ग्रहस्तदर्क्यं यजुष्ट्ट ऽएष ऽएव महांस्तस्यैतदन्नं व्रतं तन्महाव्रतꣳ सामत ऽएषऽउऽएवोक्तस्यैतदन्नं थं तदुक्थमृक्तस्तदेतदेकꣳ सत्त्रेधाऽऽख्यायते ॥ १५ ॥

सऽएष संवत्सरः प्रजापतिरग्निः । ( स्तु ) तस्यार्धमेव सावित्राण्यर्धं वैश्वकर्मणान्यष्टावेवास्य कलाः सावित्राण्यष्टौ वैश्वकर्मणान्यथ यदेतदन्तरेण कर्म क्रियते स ऽएव सप्तदशः प्रजापतिर्या वै कला मनुष्याणामक्षरं तद्देवानाम् ॥ १६ ॥

---

षड्विधमन्नं कृत्वाऽस्मा अपिदधात्यात्मसंमितम् । यद्वु वा आत्मसंमितमन्नं तदवति । तन्न हिनस्ति । यद्भूयः । हिनस्ति तत् । यत्कनीयो न तदवति ॥ १४ ॥

स एष एवार्कः—योऽयमाग्निश्चितः । तस्यैतदन्नं क्यम् । एष महाव्रतीयो ग्रहः । तदर्क्यम्—यजुष्टः । एष एव महान् । तस्यैतदन्नं व्रतम् । तन्महाव्रतम्—सामतः । एष उ एवोक्—तस्यैतदन्नं थम् । तदुक्थम्—ऋक्तः । तत् एतदेकं सत् त्रेधाऽऽख्यायते ॥ १५ ॥

स एष संवत्सरः प्रजापतिरग्निः । तस्यार्धमेव सावित्राणि—अर्धं वैश्वकर्मणानि । अष्टावेवास्य कलाः सावित्राणि—अष्टौ वैश्वकर्मणानि । अथ यदेतदन्तरेण कर्म क्रियते—स एव सप्तदशः प्रजापतिः । या—उ वै कला मनुष्याणाम्—अक्षरं तद्देवानाम् ॥ १६ ॥

---

जुहोति " इत्येतदन्तं एतत्काण्डस्य प्रथमाध्याये ( श. प. १० । १ । १ । ५—६ ) व्याख्यातम् । वौषडिति अक्षरद्वयस्य अग्निरसार्थपरतां दर्शयति—वौगिति वा एष इति । 'वौगिति' अक्षरेण एषोऽग्निराहवनीय उच्यते । 'षट्' इत्यक्षरेण इदं महाव्रतग्रहरसं षड्भिर्मधुरादिभेदेन षट्प्रकारमन्नं 'कृत्वा' अस्मै प्रजापतिरूपाग्नये संमितमपिदधाति स्थापयति । अन्नस्य शरीरसम्मितत्वमन्वयव्यतिरेकाभ्यामाह—यद्वु वा आत्मेति ॥ १३ ॥ १४ ॥

स एष एवार्कः इत्यादेरयमर्थः । 'यः' अग्निश्चितः 'सः' अर्करूपः । पूर्वम् आहवनीयाग्नेरर्कत्वमुक्तम् " स एष एवार्को यमेतमत्राग्निमाहरन्ति " ( श. प. १०।४।१।४ ) इति । अत्र तु विशिष्टस्याहवनीयस्यार्कत्वमिति विशेषः । तस्य महाव्रतीयग्रहरूपमन्नं क्यमिति पदेनोच्यते । अर्कक्ययोः श्लिष्टोच्चारणादर्क्यं यजुर्वेदतः सिद्धमित्यर्थः । शिष्टम् एष एव महान् इत्यादि पूर्ववद् ( चतुर्थकण्डिकावत् ) व्याख्येयम् ॥

तदिदमग्निरसद्वयम् एकं सत् त्रेधा अर्क्यादिनामत्रयेणाम्नायते—स एष संवत्सरः प्रजापतिरग्निरित्यादिना अधियज्ञं प्रजापतिसौम्याध्वरयोर्द्वन्द्वस्य, अधिदैवम् आदित्यचन्द्रद्वयस्य, अध्यात्मम् प्राणान-

( न्त ) तद्वै लोमेति द्वेऽअक्षुरे । त्वगिति द्वेऽअसृगिति द्वे मेद ऽइति द्वे माꣳसमिति द्वे स्नावेति द्वेऽ अस्थीति द्वे मज्जेति द्वे ताः षोडश कलाऽ अथ यु ऽ एतदन्तरेण प्राणः संचरति स ऽ एव सप्तदशः प्रजापतिः ॥ १७ ॥

( स्तु ) तस्माऽएतस्मै प्राणाय । ( ये ) एताः षोडश कला ऽ अन्नमभिहरन्ति ता यदाऽनभिहर्तुं ध्रियन्तेऽथैताऽएव जग्ध्वोत्क्रामति तस्माद् हैतद्शिशिषतस्तृप्रमिव भवति प्राणैरद्यमानस्य तस्माद् हैतदुपतापी कृशऽइव भवति प्राणैर्हि जग्धो भवति ॥ १८ ॥

---

तद्वै लोम–इति द्वे अक्षरे । त्वग्–इति द्वे । असृग्–इति द्वे । मेदः–इति द्वे । मांसम्–इति द्वे । स्नाव–इति द्वे । अस्थि–इति द्वे । मज्जा–इति द्वे । ताः षोडश कलाः । अथ य एतदन्तरेण प्राणः सञ्चरति । स एव सप्तदशः प्रजापतिः ॥ १७ ॥

तस्मा एतस्मै प्राणायैताः षोडश कला अन्नमभिहरन्ति । ता यदाऽनभिहर्तुं ध्रियन्ते–अथैता एव जग्ध्वोत्क्रामति । तस्माद् हैतदशिशिषतस्तृप्तमिव भवति–प्राणैरद्यमानस्य । तस्माद् हैतदुपतापी कृश इव भवति । प्रणैर्हि जग्धो भवति ॥ १८ ॥

---

द्वयस्य च अग्न्यादिनामत्रयमाक्त्वं प्रदर्श्यते । 'स एषः' प्रजापतिरूपोऽग्निः 'संवत्सरः' सप्तदशावयव इत्यर्थः । अग्नेस्तावदवयवत्वमाह–तस्यार्द्धमिति । आदौ "युञ्जानः प्रथमं मनः" ( वा. सं. ११ । १–८ । ) इत्यादिभिर्यजुरष्टमाभिर्ऋग्भिः क्रियमाणानि 'सावित्राण्यष्टौ' तदेकमग्नेरर्द्धम् । 'वैश्वकर्मणानि' षोडशगृहीतस्यार्द्धेन "य इमा विश्वा भुवनानि" ( वा. सं. १७–।१७–२४ ) इत्यष्टभिर्ऋग्भिरेकाहुतिः । अवशिष्टेनार्द्धेन "चक्षुषः पिता मनसा" ( वा. सं. १७।२९–३२ । ) इत्यष्टभिरपरा । अतोऽष्टशो गृहीतत्वादष्टावेव वैश्वकर्मणानि । तदपरमर्द्धम्, एवं षोडश सम्पद्यन्ते । तयोः सावित्रवैश्वकर्मणहोमयोर्मध्ये उखासम्भरणादि 'यत्' 'कर्म क्रियते' 'सः' एव 'सप्तदशः' अग्निः 'प्रजापतिः' । तद्धोमद्वयं कलाष्टकद्वयात्मना स्तौति–अष्टावेवास्य कला इति । 'अस्य' इति अग्निरूपप्रजापतेरित्यर्थः । यो वै कलेत्यस्यायमर्थः–'मनुष्याणां' या 'कला' इति व्यवहृता सैव 'देवानाम्' मते अक्षरमित्युच्यते । षोडशकलः पुरुष इति मनुष्यसंकेते देवैः षोडशाक्षरः पुरुष इति व्यवह्रियते ॥१५॥१६॥

तान्येवाक्षराणि शरीरे दर्शयति–तद्वै लोमेति द्वे अक्षरे इत्यादि । कलानामधेयानि लोमत्वगसृङ्मेदोमांसस्नावास्थिमज्जगतानि षोडशाक्षराणि शरीरे विद्यन्ते । तदंतरेण यत्कर्म श्वासप्रश्वासादिका क्रिया क्रियते स एव सप्तदशः प्रजापतिरग्निरित्यर्थः ॥ १७ ॥

तस्मा एतस्मै प्राणाय–इत्यादेरयमर्थः–'तस्मै' पुरुषशरीरमध्यवर्तिने पञ्चवृत्त्यात्मकप्राणाय 'एताः' उक्ताः 'षोडश कलाः' 'अन्नमभिहरन्ति' अर्प्पयन्ति । यदा ताः कला अन्नमभिहर्तुं 'न' 'ध्रियन्ते' न समर्थाः तदा प्राण एताः कलाः 'जग्ध्वा' भक्षयित्वा 'उत्क्रामति' देहान्निर्गच्छति । 'तस्मात्' लोके

---

१–अत्र "यदा नाभिहर्तुम्" इति पाठः साधीयान्प्रतिभाति ।

तुस्माऽएतुस्मै सप्तदशाय प्रजापतये । ( यऽ ) एतुत्सप्तदशमुन्नꣳ सुमस्कुर्व्वन्युऽ एष सौम्योऽध्वरोऽथ याऽअस्य ताः षोडश कलाऽ एते ते षोडशर्त्विजस्तुस्मान्न सप्तदशमृत्विजं कुर्व्वीत नेदतिरेचयानीत्युथ युऽएवात्र रसो याऽ आहुतयो हूयुन्ते तुदेव सप्तदशमन्नम् ॥ १९ ॥

( न्तु ) ते यदा स्तुवते युदाऽनुशꣳसति । ( त्यु ) अथास्मिन्नेतं व्वषट्कृते जुहोति व्वौगिति वाऽएष षडितीदꣳ षड्विधमन्नं कृत्वाऽस्माऽ अपिदधात्यात्मसंमितं युदु वाऽआत्मसंमितमन्नं तुदवति तन्न हिनस्ति युद्भूयो हिनस्ति तद्यत्कनीयो न तुदवति ॥ २० ॥

सऽ एषऽ एवार्कः । ( र्को ) योऽयमग्निश्चितस्तुस्यैतदन्नं क्यमेष सौम्योऽध्वरस्तुदर्क्यं यजुष्टऽएषऽएव महांस्तुस्यैतदन्नं व्व्रतं तुन्महाव्व्रतꣳ सामतऽएषऽ उऽएवोक्तुस्यैतदन्नं थं तुदुक्थमृक्तस्तदेतदेकꣳ सत्त्रे-

---

तस्मा एतस्मै सप्तदशाय प्रजापतय एतत्सप्तदशमन्नं समस्कुर्वन् । य एष सौम्योऽध्वरः । अथ या अस्य ताः षोडश कलाः—एते ते षोडशर्त्विजः । तस्मान्न सप्तदशमृत्विजं कुर्वीत—नेदतिरेचयानीति । अथ य एवात्र रसः, या आहुतयो हूयन्ते-तदेव सप्तदशमन्नम् ॥ १९ ॥

ते यदा स्तुवते, यदाऽनुशंसति । अथास्मिन्नेतं वषट्कृते जुहोति । वौगिति वा एषः । षडितीदं षड्विधमन्नं कृत्वाऽस्मा अपिदधात्यात्मसंमितम् । यद्ु वा आत्मसंमितमन्नम्—तदवति । तन्न हिनस्ति । यद्भूयो हिनस्ति तत् । यत्कनीयो न तदवति ॥ २० ॥

स एष एवार्कः—योऽयमग्निश्चितः । तस्यैतदन्नं क्यम् । एष सौम्योऽध्वरः । तदर्क्यं—यजुष्टः । एष एव महान्—तस्यैतदन्नं व्रतम् । तन्महाव्रतम्—सामतः । एष उ एवोक्तस्यैतदन्नं थं तदुक्थम्—ऋक्तः ।

---

'अशिशिषतः' अशितुं भोक्तुमिच्छतः क्षुधितस्य 'प्राणैरद्यमानस्य' पुरुषस्य 'तृप्तमिव' संतप्तमिव भवति । "तृप तृप्तौ संदीपने इत्येके" ( धा. पा. चु. २८६ ) इति धातुः । बुभुक्षितशरीरे धातुसंक्षयेण सदा व्यग्रता दृश्यत इत्यर्थः । यतः प्राणैरद्यते तस्माल्लोके 'उपतापी' ज्वरार्दितः कृशो भवति ॥ १८ ॥

अथ अग्न्यात्मकस्य प्रजापतेर्भोक्तुः सप्तदशात्मकत्वमुक्तं तद्भोग्यस्याप्यन्नस्य तत्संख्योपेततामाह—तस्मा एतस्मै सप्तदशाय प्रजापतय इति । षोडशर्त्विज अध्वर्यूद्गातृहोतृब्रह्माण उत्तरोत्तरपुरुषत्रयसमेताः । एवं यज्ञस्य 'षोडश कलाः' 'ऋत्विजां' षोडशकलारूपत्वोक्तेः तेभ्योऽन्यः सप्तदश ऋत्विक् न कर्तव्य इत्यर्थः । सप्तदशसंख्यापूरकस्तु सोमरसपुरोडाशाज्याहुत्यात्मकस्तदेवात्र 'सप्तदशम्' अन्नम् ॥ १९ ॥

यथा पूर्वं देवाः सप्तदशाय प्रजापतये संस्कृतवन्तस्तथाऽयमध्वर्युः स्तोत्रशस्त्रान्ते अस्मिन्नग्नौ एतं सोमरसादिकं वषट्कृते जुहोति । तत्र वौषडित्यक्षरद्वयस्य अग्न्यन्नरूपतां दर्शयति—वौगिति वा एष इति । पूर्ववद् व्याख्येयम् ॥

स एष एवार्को योऽयमग्निश्चितः—इत्यादिना-त्रेधाऽऽख्यायते—इत्यन्तेनार्क्यादिनामत्रयोक्तिः । अत्र

धाऽऽख्यायते सऽ एतेनान्नेन सहोर्ध्वऽउदक्रामत्स यः सऽ उदक्रामदसौ सऽ आदित्योऽथ येन तेनान्नेन सहोदक्रामदेष स चन्द्रमाः ॥ २१ ॥

स ऽएष ऽएवार्को य ऽएष तपति । तस्यैतदन्नं क्यमेष चन्द्रमास्तदक्यं यजुष्ट ऽ एष ऽ एव महांस्तस्यैतदन्नं व्रतं तन्महाव्रतꣳ सामत ऽ एष उऽएवोक्तस्यैतदन्नं थं तदुक्थमृक्तस्तदेतदेकꣳ सत्त्रेधाऽऽख्यायत ऽ इत्यधिदेवतम् ॥ २२ ॥

( म ) अथाध्यात्मम् । ( म्प्रा ) प्राणो वाऽअर्कस्तस्यान्नमेव क्यं तदक्यं यजुष्टः प्राण ऽएव महांस्तस्यान्नमेव व्रतं तन्महाव्रतꣳ सामतः प्राण ऽउऽएवोक्तस्यान्नमेव थं तदुक्थमृक्तस्तदेतदेकꣳ सत्त्रेधाऽऽख्यायते स ऽएष ऽ एवैषोऽधिदेवतमयमध्यात्मम् ॥ २३ ॥

इति द्वितीयप्रपाठकेऽष्टमं ब्राह्मणम् ॥ १०–२–८ ॥ ( ४. १. ) ॥

इति द्वितीयः प्रपाठकः समाप्तः ॥ १०–२ ॥

कण्डिकासंख्या ॥ १०९ ॥

---

तदेतदेकं सत् त्रेधाऽऽख्यायते । स एतेनान्नेन सहोर्ध्व उदक्रामत् । स यः स उदक्रामत्–असौ स आदित्यः । अथ येन तेनान्नेन सहोदक्रामदेष स चन्द्रमाः ॥ २१ ॥

स एष एवार्को य एष तपति । तस्यैतदन्नं क्यम्–एष चन्द्रमाः । तदक्यं यजुष्टः । एष एव महांस्तस्यैतदन्नं व्रतं तन्महाव्रतं सामतः । एष उ एवोक् । तस्यैतदन्नं थम्–तदुक्थम् । ऋक्तः । तदेतदेकं सत् त्रेधाऽऽख्यायत इत्यधिदेवतम् ॥ २२ ॥

अथाध्यात्मम्–प्राणो वा अर्कस्तस्यान्नमेव क्यं तदक्यं यजुष्टः । प्राण एव महान्–तस्यान्नमेव व्रतं तन्महाव्रतं सामतः । प्राण उ एवोक्–तस्यान्नमेव थं तदुक्थं ऋक्तः । तदेकं सत् त्रेधाऽऽख्यायते । स एष एवैषोऽधिदेवतमयमध्यात्मम् ॥ २३ ॥

---

सौम्योऽध्वरः क्यमिति पदेनोच्यत इति विशेषः । अग्न्यन्नयोरधिदेवमादित्यचन्द्रार्थपरतामाह–स एतेनान्नेन सहोर्ध्व उदक्रामदिति । 'सः' अग्निः प्रजापतिः 'एतेन' हुतेन सप्तदशेन 'अन्नेन' 'सह' 'ऊर्ध्वम्' उद्गतः । तत्राग्निः प्रजापतिरादित्यात्मना जातः । अन्नं चन्द्रमसो रूपम् ॥ २१ ॥

अत्रापि अर्क्यादिनामत्रयं योजयति–स एष एवार्क इति । अत्रार्कशब्दो मुख्य इत्याह–य एष तपतीति । तस्य 'चन्द्रमाः' 'अन्नम्' 'क्यम्' इत्युच्यते । एवमादित्यचन्द्रमसोर्युगलं अर्क्यादिनामभिर्वेदत्रयसिद्धैर्व्यवह्रियत 'इत्यधिदेवतम्' अर्थः ॥ २२ ॥

अध्यात्ममप्यर्कक्ययोरर्थमाह–अथाध्यात्मं प्राणो वा अर्क इति । प्राण एवार्कशब्देनोच्यते । अत्र मुख्यमन्नं क्यमित्युच्यते । अस्य प्राणान्नयुगलस्यार्क्यादिनामव्यपदेश्यत्वमित्यध्यात्मम् । अधिदैवाध्यात्मद्वयेन

# अथ तृतीयप्रपाठके प्रथमं ब्राह्मणम् ।
# चतुर्थेऽध्याये च द्वितीयं ब्राह्मणम् ।



संव्वत्सरो वै प्रजापतिरग्निः । सोमो राजा चन्द्रमाः स ह स्वयमेवात्मानं प्रोचे यज्ञवचसे राजस्तम्बायनाय यावन्ति वाव मे ज्योतीᳪंषि तावत्यो मऽइष्टका ऽइति ॥ १ ॥

तस्य वाऽएतस्य संव्वत्सरस्य प्रजापतेः । सप्त च शतानि विᳪंशतिश्चाहोरात्राणि ज्योतीᳪंषि ता ऽइष्टकाः षष्टिश्च त्रीणि च शतानि परिश्रितः षष्टिश्च त्रीणि च शतानि यजुष्मत्यः सोऽयᳪं संव्वत्सरः प्रजापतिः सर्व्वाणि भूतानि ससृजे यच्च प्राणि यच्चाप्राणमुभयान्देवमनुष्यान्त्स सर्व्वाणि भूतानि सृष्ट्वा रिरिचानऽइव मेने स मृत्योर्बिभयां चकार ॥ २ ॥

---

संवत्सरो वै प्रजापतिः अग्निः । सोमो राजा चन्द्रमाः । स ह स्वयमेवात्मानं प्रोचे–यज्ञवचसे राजस्तंबायनाय । यावन्ति वाव मे ज्योतींषि–तावत्यो म इष्टका इति ॥ १ ॥

तस्य वा एतस्य संवत्सरस्य प्रजापतेः सप्त च शतानि विंशतिश्चाहोरात्राणि ज्योतींषि–ता इष्टकाः । षष्टिश्च त्रीणि च शतानि परिश्रितः । षष्टिश्च त्रीणि च शतानि यजुष्मत्यः । सोऽयं

---

समुदितमर्थमुपसंहरति–स एष एवैषोऽधिदेवतमिति । एष सन्तापक आदित्योऽधिदेवतम् । अयं प्राणोऽध्यात्ममित्यर्थः ॥ २३ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये दशमकाण्डे चतुर्थेऽध्याये प्रथमं ब्राह्मणम् ॥ ( १०–४–१ ) ॥

अथास्मिन् द्वितीये ब्राह्मणे प्रजापतिरूपचित्याग्नेः कालमन्त्रात्मकत्वं, चयनफलं च; मृत्युरूपत्वं मृत्युरूपोपासनाफलमुपधेयानामिष्टकानां सङ्ख्या, तद्विभागश्च, अग्नेरिष्टकानां च संवत्सरतदवयवाहोरात्रमुहूर्त्तात्मकत्वं मन्त्ररूपत्वं च स्पष्टमाम्नायते । तत्र प्रथमं संवत्सररूपप्रजापतेरग्नीषोमात्मकत्वमाह–संवत्सरो वै प्रजापतिरग्निः सोमो राजा चन्द्रमा इति । संवत्सरात्मकप्रजापतिरेवाग्निरित्युच्यते । सोमो राजैव चन्द्रमा इत्युच्यते । तच्चन्द्रमसो वचनमुत्तरत्र " यः स उदक्रामदेष स चन्द्रमाः "–( श. प. १० । ४ । २ । २७ ) इति प्रजापतेश्चन्द्रत्वोक्तावुपयुज्यते । सः प्रजापतिः स्वयमेव राजस्तम्बपुत्राय यज्ञवचसे यज्ञऋषये आत्मानं स्वस्वरूपं प्रोचे; किमिति ? तदाह–मे मम यावन्ति ज्योतींषि सन्ति तावत्यो मे इष्टकाः कार्याः इति प्रोवाच इति सम्बन्धः ॥ १ ॥

यदुक्तं प्रजापतिना यावन्ति ज्योतींषीति–तत्र ज्योतिःशब्दार्थं तत्सङ्ख्यां च श्रुतिः स्वयं लोकोपकाराय दर्शयति–तस्य वा एतस्येति । संवत्सररूपस्य प्रजापतेः विंशत्युत्तराणि सप्तशतसङ्ख्याकान्यहोरात्रलक्षणानि

स हेक्षां चक्रे । कथं न्वहमिमानि सर्व्वाणि भूतानि पुनरात्मन्नावपेय पुनरात्मन्दधीय कथं न्वहमेवैषाᳬं सर्व्वेषां भूतानां पुनरात्मा स्यामिति ॥ ३ ॥

स द्वेधाऽऽत्मानं व्यौहत् । (तस्य) षष्टिश्च त्रीणि च शतान्यन्यतरस्येष्टकाऽअभवंस्तथैवमन्यतरस्य स न व्याप्नोत् ॥ ४ ॥

---

संवत्सरः प्रजापतिः सर्वाणि भूतानि ससृजे-यच्च प्राणि, यच्चाप्राणम् । उभयान्देवमनुष्यान् । स सर्वाणि भूतानि सृष्ट्वा रिरिचानः-इव मेने । स मृत्योर्बिभयां चकार ॥ २ ॥

स हेक्षां चक्रे । कथं न्वहमिमानि सर्वाणि भूतानि पुनरात्मन्नावपेय । पुनरात्मन्दधीय । कथं न्वहमेवैषां सर्वेषां भूतानां पुनरात्मा स्यामिति ॥ ३ ॥

स द्वेधाऽऽत्मानं व्यौहत्-षष्टिश्च त्रीणि च शतान्यन्यतरस्येष्टका अभवन् । एवमन्यतरस्य । स न व्याप्नोत् ॥ ४ ॥

---

ज्योतींषि विद्यन्ते ता अत्रेष्टकाः संपन्नाः । संवत्सरे षष्ट्युत्तरत्रिशतसंख्यान्यहानि तावत्यो रात्रयः, इत्युक्तसंख्या सिद्धेत्यर्थः । उक्तामहोरात्रसंख्यामिष्टकासु दर्शयति-षष्टिश्च त्रीणीति । परिश्रितो नाम परित उपधेयाः शर्कराः । एवं च मन्त्रैरुपहिता इष्टकाः षष्ट्यधिकत्रिशतसंख्याका भवन्तीति, तावतीनां यजुर्मन्त्रोपहितानामिष्टकानां तावत्यः परिश्रितः-इत्यहोरात्रसंख्या परिश्रिद्यजुष्मतीनामस्तीति अग्नेः संवत्सरात्मकप्रजापतित्वम् । परिश्रिद्यजुष्मतीनामेषा भवत्येव संख्येत्युत्तरत्र वक्ष्यते । अथ संवत्सराग्नेः पक्षगततिथ्यर्द्धमासमुहूर्तान् दर्शयितुं प्रस्तौति-सोऽयं संवत्सरः प्रजापतिः सर्वाणि भूतानीति । सोऽयमग्निसंवत्सरात्मकः प्रजापतिः सकलं 'प्राणि' चेष्टमानं जङ्गमम् 'अप्राणम्' अचेष्टमानं स्थावरम् उभयान् द्विप्रकारान् देवमनुष्यान् सृष्ट्वा रिरिचान इव मेने । यथा लोके कश्चन धनाढ्यो धनं विद्यां वा दत्त्वा रिक्तः शून्यः मम किञ्चिदपि नावशिष्टमिति मन्यते; एवमयं रिक्तः सन् मृत्योः सकाशाद् भीतः ॥ २ ॥

स हेति । 'सः' 'ईक्षांचक्रे' पर्यालोचितवान् । कथमिमानि सृष्टानि भूतानि आत्मनि 'पुनरावपेय' प्रक्षिपेयम्, प्रक्षिप्य कथमात्मनि 'दधीय' धारयेयम्, कथं चाहं सर्वभूतानामात्मा भवेयमिति विचार्य पूर्वमेकः सन् प्रजापतिः स्वात्मानं द्वेधा 'व्यौहत्' व्यभजत् विभक्तयोर्द्वयोरात्मनोः पूर्वोक्ता अहोरात्रसंख्याकाः परिश्रित इष्टकाश्च विभज्य दर्शयति-षष्टिश्च त्रीणि च शतान्यन्यतरस्येष्टका अभवन्निति । पूर्वं परिश्रितो यजुष्मत्यश्चोभय्यो विंशत्यधिकंसप्तशतसंख्याका इत्युक्तम् । तासां समविभाग एकैकस्य षष्ट्यधिकत्रिशतसङ्ख्याका यजुष्मत्य इष्टकाः, परिश्रितश्च सम्भूय भवन्तीत्यर्थः । परिश्रितामपि "तया देवतयाऽङ्गिरस्वद्"-( वा. सं. १२ । ५३ ) इति मन्त्रेणोपधानादिष्टकाशब्दव्यवहार्यत्वमिति मन्तव्यम् । एवमुत्तरत्र त्रिचतुरप्रभृत्यात्मविभागेषु तत्तदात्मसंख्यया विंशत्यधिकसप्तशतसंख्या एव परिश्रिद्यजुष्मतीर्विभज्य दर्शयिष्यतीति न तत्र वक्तव्यमस्ति । त्रिप्रभृत्यात्मान्तरकल्पने कारणमाह-स न व्याप्नोदिति । एतावता द्वेधाऽऽत्मव्यूहेन सर्वभूतानि स्वात्मनि प्रक्षेप्तुं धारयितुं स्वयं च तेषामात्मा भवितुं समर्थो नाभवदित्यर्थः ॥ ३ ॥ ४ ॥

( त्री ) त्रीनात्मनोऽकुरुत । तिस्रस्तिस्रोऽशीतय ऽएकैकस्येष्टका ऽअभवन्त्स नैव व्याप्नोत् ॥ ५ ॥

( च ) चतुरऽ आत्मनोऽकुरुत । ( ता ) अशीतिशतेष्टकान्त्स नैव व्याप्नोत् ॥ ६ ॥

( त्पु ) पञ्चात्मनोऽकुरुत । चतुश्चत्वारिᳫँशᳫँ शतमेकैकस्येष्टका ऽअभवन्त्स नैव व्याप्नोत् ॥ ७ ॥

( त्षु ) षडात्मनोऽकुरुत । विᳫँशतिशतेष्टकान्त्स नैव व्याप्नोन्न सप्तधा व्यभवत् ॥ ८ ॥

( द ) अष्टावात्मनोऽकुरुत । नवतीष्टकान्त्स नैव व्याप्नोत् ॥ ९ ॥

( न्नु ) नवात्मनोऽकुरुत । ( ता ) अशीतीष्टकान्त्स नैव व्याप्नोत् ॥ १० ॥

( द्दु ) दशात्मनोऽकुरुत । द्वासप्ततीष्टकान्त्स नैव व्याप्नोन्नैकादशधा व्यभवत् ॥ ११ ॥

---

त्रीनात्मनोऽकुरुत । तिस्रस्तिस्रोऽशीतय एकैकस्येष्टका अभवन् । स नैव व्याप्नोत् ॥ ५ ॥
चतुर आत्मनोऽकुरुत—अशीतिशतेष्टकान् । स नैव व्याप्नोत् ॥ ६ ॥
पञ्चात्मनोऽकुरुत । चतुश्चत्वारिंशं शतमेकैकस्येष्टका अभवन् । स नैव व्याप्नोत् ॥ ७ ॥
षडात्मनोऽकुरुत—विंशतिशतेष्टकान् । स नैव व्याप्नोत् । न सप्तधा व्यभवत् ॥ ८ ॥
अष्टावात्मनोऽकुरुत—नवतीष्टकान् । स नैव व्याप्नोत् ॥ ९ ॥
नवात्मनोऽकुरुत—अशीतीष्टकान् । स नैव व्याप्नोत् ॥ १० ॥
दशात्मनोऽकुरुत—द्वासप्ततीष्टकान् । स नैव व्याप्नोत् । नैकादशधा व्यभवत् ॥ ११ ॥

---

त्रिधाऽऽत्मविभागे एकैकस्य भागस्य अशीतित्रयसंख्याका इष्टकाः; तेषामशीतित्रयाणां त्रयं मिलित्वा गणने सति विंशत्यधिकसप्तशतसंख्या सम्पद्यत इत्यर्थः ॥ ५ ॥

चतुर्द्धाऽऽत्मविभागे एकैकस्य अशीत्यधिकशतसंख्याका इष्टका भवन्ति ॥ ६ ॥

पञ्चधा विभागे एकैकस्यात्मनश्चतुश्चत्वारिंशदधिकशतसंख्याका भवन्ति । “ तदस्मिन्नधिकमिति दशान्ताड्डः ”—( पा. सू. ५ । २ । ४५ ) “ शदन्तविंशतेश्च ”—( पा. सू. ५ । २ । ४६ ) इति चतुश्चत्वारिंशत्पदस्य डप्रत्ययः ॥ ७ ॥

षोढाविभागे विंशत्यधिकशतसंख्याका भवन्ति । न सप्तधा व्यभवदित्यस्यायमर्थः—सप्तधाऽऽत्मविभागे विंशत्यधिकसप्तशतसंख्यानां संवत्सरावयवभूताहोरात्ररूपाणां परिश्रिदिष्टकानां समविभागो न भवति, किन्तु न्यूनोऽधिको वा भवतीति मत्वा सप्तधा विभागं न कृतवान् । एवमुत्तरत्र विभागाभाववचनस्यायमेवार्थ उन्नेयः ॥ ८ ॥

अष्टावात्मनोऽकुरुतेत्यादि त्रयोविंशतिधेत्येवमन्तं निगदव्याख्यातम् ॥ ९–१६ ॥

( द्वा ) द्वादशात्मनोऽकुरुत । षष्टीष्टकान्त्स नैव व्याप्नोन्न त्रयोदशधा व्यभवन्न चतुर्दशधा ॥ १२ ॥

पञ्चदशात्मनोऽकुरुत । ( ता ) अष्टाचत्वारिꣳशदिष्टकान्त्स नैव व्याप्नोत् ॥ १३ ॥

( त्सो ) षोडशात्मनोऽकुरुत । पञ्चचत्वारिꣳशदिष्टकान्त्स नैव व्याप्नोन्न सप्तदशधा व्यभवत् ॥ १४ ॥

( द ) अष्टादशात्मनोऽकुरुत । चत्वारिꣳशदिष्टकान्त्स नैव व्याप्नो-न्नैकान्नविꣳशतिधा व्यभवत् ॥ १५ ॥

( द्वि ) विꣳशतिमात्मनोऽकुरुत । षट्त्रिꣳशदिष्टकान्त्स नैव व्याप्नो-न्नैकविꣳशतिधा व्यभवन्न द्वाविꣳशतिधा न त्रयोविꣳशतिधा ॥ १६ ॥

चतुर्विꣳशतिमात्मनोऽकुरुत । त्रिꣳशदिष्टकान्त्सोऽत्रातिष्ठत पञ्चदशे व्यूहे तद्यत्पञ्चदशे व्यूहेऽतिष्ठत तस्मात्पञ्चदशापूर्य्यमाणस्य रूपाणि पञ्चदशापक्षीयमाणस्य ॥ १७ ॥

---

द्वादशात्मनोऽकुरुत–षष्टीष्टकान् । स नैव व्याप्नोत् । न त्रयोदशधा व्यभवत् । न चतुर्दशधा ॥ १२ ॥

पञ्चदशात्मनोऽकुरुत–अष्टाचत्वारिंशदिष्टकान् । स नैव व्याप्नोत् ॥ १३ ॥

षोडशात्मनोऽकुरुत–पञ्चचत्वारिंशदिष्टकान् । स नैव व्याप्नोत् । न सप्तदशधा व्यभवत् ॥ १४ ॥

अष्टादशात्मनोऽकुरुत–चत्वारिंशदिष्टकान् । स नैव व्याप्नोत् । नैकान्नविंशतिधा व्यभवत् ॥ १५ ॥

विंशतिमात्मनोऽकुरुत–षट्त्रिंशदिष्टकान् । स नैव व्याप्नोत् । नैकविंशतिधा व्यभवत् । न द्वाविंशतिधा । न त्रयोविंशतिधा ॥ १६ ॥

चतुर्विंशतिमात्मनोऽकुरुत–त्रिंशदिष्टकान् । सोऽत्रातिष्ठत–पञ्चदशे व्यूहे । तद् यत्पञ्चदशे व्यूहेऽतिष्ठत–तस्मात्पञ्चदशापूर्यमाणस्य रूपाणि । पञ्चदशापक्षीयमाणस्य ॥ १७ ॥

---

चतुर्विंशतिधाऽऽत्मविभागे एकैकस्यात्मनस्त्रिंशत्संख्याका इष्टका भवन्ति, मिलित्वा चतुर्विंशतेस्त्रिंशता गुणने विंशत्यधिकसप्तशतसंख्या जायते । इत उत्तरमात्मविभागो नास्तीत्याह–सोऽत्रातिष्ठत पञ्चदशे व्यूह इति । स प्रजापतिरत्र चतुर्विंशतिधाऽऽत्मविभागे 'अतिष्ठत' स्थितः । अत्र चतुर्विंशतेर्मध्ये आत्मविभागस्थानानां परिगणने द्वित्रिचतुरादयः चतुर्दश व्यूहाः, पूर्वस्त्वेक इति पञ्चदश व्यूहाः । न सप्तधा व्यभवन्नैकादशधेत्यादय आत्मविभागप्रदेशा न भवन्तीति न तेषां व्यूहसंज्ञाऽस्ति, व्यूहपञ्चदशकं पक्षावयवपञ्चदशतिथ्यात्मना स्तौति–तद्यत्पञ्चदशे व्यूहेऽतिष्ठतेति । आपूर्यमाणस्य चन्द्रकलाभिः पूरयितव्यस्य शुक्लपक्षस्य, अपक्षीयमाणस्य कृष्णपक्षस्य च पञ्चदश रूपाणि तिथय इत्यर्थः ॥ १७ ॥

२३४५

( स्या ) अथ यच्चतुर्विंᳩशतिमात्मनोऽकुरुत तस्माच्चतुर्विंᳩशत्यर्धमासः संवत्सरः स एतैश्चतुर्विंᳩशत्या त्रिᳩशदिष्टकैरात्मभिर्न व्यभवत्स पञ्चदशाह्नो रूपाण्यपश्यदात्मनस्तन्वो मुहूर्ताँल्लोकम्पृणाः पञ्चदशैव रात्रेस्तद्यन्मुहुस्त्रायन्ते तस्मान्मुहूर्ताऽअथ यत्क्षुद्राः सन्त ऽ इमाँल्लोकानापूरयन्ति तस्माल्लोकम्पृणाः ॥ १८ ॥

( ऽ ) एष वाऽइदᳩ सर्वं पचति । (त्य) अहोरात्रैरर्धमासैर्मासैर्ऋतुभिः संवत्सरेण तदमुना पक्वमयं पचति पक्वस्य पक्तेति ह स्माह भारद्वाजोऽग्निमसुना हि पक्वमयं पचतीति ॥ १९ ॥

---

अथ यच्चतुर्विंशतिमात्मनोऽकुरुत—तस्माच्चतुर्विंशत्यर्धमासः संवत्सरः । स एतैश्चतुर्विंशत्या त्रिंशदिष्टकैरात्मभिर्न व्यभवत् । स पञ्चदशाह्नो रूपाण्यपश्यदात्मनस्तन्वो मुहूर्तान्—लोकम्पृणाः । पञ्चदशैव रात्रेः । तद् यन्मुहुः त्रायन्ते—तस्मान्मुहूर्ताः । अथ यत्क्षुद्राः सन्त इमाँल्लोकानापूरयन्ति—तस्माल्लोकम्पृणाः ॥ १८ ॥

एष वा इदं सर्वं पचाति—अहोरात्रैः, अर्धमासैः, मासैः, ऋतुभिः, संवत्सरेण । तदमुना पक्वमयं पचाति । पक्वस्य पक्तेति ह स्माह भारद्वाजोऽग्निम् । अमुना हि पक्वमयं पचतीति ॥ १९ ॥

---

चतुर्विंशतिधा विभागानर्द्धमासात्मना स्तौति—अथ यच्चतुर्विंशतिमिति । एवं संवत्सररूपाऽग्नेः पक्षगततिथ्यर्द्धमासा उक्ताः, मुहूर्त्तानपि दर्शयति—स एतैश्चतुर्विंशत्येत्यादिना । एतैः चतुर्विंशतिधा विभागैर्न व्यभवत्प्रजापतिः । 'सः' पञ्चदशसंख्याकान्यह्नो रूपाण्यपश्यत्, तथा रात्रे रूपाणि च । अहोरात्ररूपाणीति यदुक्तं तस्यार्थो मुहूर्त्ताः । लोकंपृणेष्टकानां मुहूर्त्तरूपत्वं वक्तुं लोकंपृणा इत्यन्तेनोक्तिः । अहोरात्रसम्बन्धिनो मुहूर्त्ताः लोकंपृणेष्टका इत्यर्थः । एकस्याहोरात्रस्य षष्टिर्घटिकाः, ते द्वे द्वे एकैको मुहूर्त्त इति त्रिंशन्मुहूर्त्ताः । तत्राह्नः पञ्चदश रात्रेश्च तावन्त इत्यर्थः । मुहूर्त्तशब्दं निर्वक्ति—तद्यन्मुहुस्त्रायन्त इति । लोकंपृणेष्टकानां मुहूर्त्तरूपत्वं वक्तुं लोकंपृणाशब्दं मुहूर्त्तपरत्वेन निर्वक्ति—अथ यत्क्षुद्रा इति । क्षुद्रा अल्पपरिमाणाः सन्तः सर्वलोकान् पूरयन्तीति लोकंपृणाः ॥ १८ ॥

एष वा इदं सर्वं पचतीत्यादि । न हि कालानवच्छिन्नं वस्त्वस्ति । सूर्य एव अहोरात्रादिसंवत्सरान्तकालेन प्रथमं सर्वं वस्तु पचति, पश्चादयमग्निरमुना सूर्येण पक्वं पचति । उक्तार्थे भारद्वाजसंवादः—पक्वस्य पक्तेति हि भारद्वाजेनाग्निर्व्यवहृतः, अतोऽग्निसूर्ययोः प्रजापत्यात्मनोरभेदादहोरात्रमासादिभिः जगत्परिपाकनिमित्तत्वात् सूर्यगत्यधीनाः संवत्सरावयवा अहोरात्रसम्बन्धिनो मुहूर्त्ता एव चित्याग्न्यवयवभूतलोकंपृणेष्टका इति तात्पर्यार्थः ॥ १९ ॥

तानि संव्वत्सरे । दश च सहस्राण्यष्टौ च शतानि समपद्यन्त सोऽत्रा-तिष्ठत दशसु च सहस्रेष्वष्टासु च शतेषु ॥ २० ॥

( ख ) अथ सर्व्वाणि भूतानि पर्यैक्षत् । ( स ) स त्रय्यामेव विद्यायाᳬं सर्व्वाणि भूतान्यपश्यदत्र हि सर्व्वेषां छन्दसामात्मा सर्व्वेषाᳬं स्तोमानाᳬं सर्व्वेषां प्राणानाᳬं सर्व्वेषां देवानामेतद्वाऽअस्त्येतद्ध्यमृतं यद्ध्यमृतं तद्ध्यस्त्येतदु तद्यन्मर्त्यम् ॥ २१ ॥

( ᳬं ) स ऽऐक्षत प्रजापतिः । ( त्र ) त्रय्यां वाव विद्यायाᳬं सर्व्वाणि भूतानि हन्त त्रयीमेव विद्यामात्मानमभिसᳬंस्करवाऽइति ॥ २२ ॥

---

तानि सम्वत्सरे दश च सहस्राणि, अष्टौ च शतानि समपद्यन्त । सोऽत्रातिष्ठत—दशसु च सहस्रेषु, अष्टासु च शतेषु ॥ २० ॥

अथ सर्वाणि भूतानि पर्यैक्षत् । स त्रय्यामेव विद्यायां सर्वाणि भूतान्यपश्यत् । अत्र हि सर्वेषां छन्दसामात्मा । सर्वेषां स्तोमानाम् । सर्वेषां प्राणानाम् । सर्वेषां देवानाम् । एतद्वा अस्त्येतद्ध्यमृतम् । यद्ध्यमृतं तद्ध्यस्ति । एतदु तद् यन्मर्त्यम् ॥ २१ ॥

स ऐक्षत प्रजापतिः । त्रय्यां वाव विद्यायां सर्वाणि भूतानि । हन्त त्रयीमेव विद्यामात्मानम-भिसंस्करवा इति ॥ २२ ॥

---

यदुक्तं पञ्चदशाह्नो रूपाणि मुहूर्त्ताः, पञ्चदश रात्रेरित्यनेन एकैकस्याहोरात्रस्य त्रिंशन्मुहूर्त्ता भवन्तीति, ते मुहूर्ताः संवत्सरे सम्भूयैतावन्तः स्युरिति परिगणयति—तानि संवत्सरे दशेति । प्रतिमासं नवशत-सङ्ख्याका मुहूर्ताः, मिलित्वा अष्टशताधिकदशसहस्रसम्मिताः संवत्सरे भवन्तीत्यर्थः । सोऽत्रातिष्ठतेति । उक्त-संख्येषु संवत्सरसम्बन्धिषु मुहूर्तेषु प्रतिष्ठितोऽभवत् ॥ २० ॥

यत्पूर्वं प्रजापतिना—" कथं न्वहमिमानि भूतानि पुनरात्मन्नावपेय, पुनरात्मन् दधीय, कथं न्वहमेवैषाᳬं सर्व्वेषां भूतानामात्मा स्यामिति " ( श. प. १०।४।२।३ ) इतीक्षितं तदभिधानव्याजेन त्रय्याः सर्वभूतात्म-कता प्रतिपाद्यते—अथ सर्वाणि भूतानि पर्यैक्षदित्यादिना । ' पर्यैक्षत् ' अन्विष्येष व्याप्तुमिति शेषः । त्रयी विद्या वेदत्रयम् तत्र सर्वभूतानि दृष्टवान् । त्रय्याः सर्वाश्रयत्वमाह—अत्र हि सर्वेषां छन्दसामिति । गाय-त्र्यादिसकलच्छन्दसां स्वरूपमस्ति, स्तोमास्त्रिवृदादयः, मन्त्राणां सकलदेवप्रतिपादकत्वाद्देवस्वरूपमप्यस्ति, किं बहुना मर्त्यामृतभेदेन यद् द्विविधं तत्सर्वं त्रय्येवेत्याह—एतद्वा अस्तीत्यादिना । एतत्त्रयीरूपं वस्तु ' अस्ति ' सर्वदा विद्यते । एतदेव खल्वमृतं नाशरहितम् । त्रय्यास्तावदमृतत्वं नित्यत्वात् स्वतः सिद्धम् । यस्मादमृतं तस्मा-दस्ति, यतः सदा विद्यते तस्मादमृतानां देवानामाश्रयं तेनामृतात्मकत्वं, यच्च ' मर्त्यं ' मरणधर्मकं मनुष्यादि तदप्येतत्त्रयीरूपमेव अतो मर्त्यामृतात्मकं सर्वं जगदत्रान्तर्भूतमित्यर्थः ॥ २१ ॥

यस्मात् ' त्रय्यां ' सर्वभूतानि विद्यन्ते अतः ' हन्तेति ' हर्षे ' त्रयीमेव विद्यामात्मानमभि ' लक्ष्य

सऽ ऋचो व्यौहत् । (द्वा) द्वादश बृहतीसहस्राण्येतावत्यो हऽर्चो याः प्रजापतिसृष्टास्तास्त्रिꣳशत्तमे व्यूहे पङ्क्तिष्वतिष्ठन्त ता यत्त्रिꣳशत्तमे व्यूहेऽतिष्ठन्त तस्मात्त्रिꣳशन्मासस्य रात्रयोऽथ यत्पङ्क्तिषु तस्मात्पाङ्क्तः प्रजापतिस्ताऽअष्टाशतꣳ शतानि पङ्क्तयोऽभवन् ॥ २३ ॥

(न्न) अथेतरौ वेदौ व्यौहत् । (द्वा) द्वादशैव बृहतीसहस्राण्यष्टौ यजुषां चत्वारि साम्नामेतावद्धैतयोर्वेदयोर्यत्प्रजापतिसृष्टं तौ त्रिꣳशत्तमे व्यूहे पङ्क्तिष्वतिष्ठेतां तौ यत्त्रिꣳशत्तमे व्यूहेऽतिष्ठेतां तस्मात्त्रिꣳशन्मासस्य रात्रयोऽथ यत्पङ्क्तिषु तस्मात्पाङ्क्तः प्रजापतिस्ता ऽअष्टाशतमेव शतानि पङ्क्तयोऽभवन् ॥ २४ ॥

---

स ऋचो व्यौहत्–द्वादश बृहतीसहस्राणि । एतावत्यो हर्चो याः प्रजापतिसृष्टाः । तास्त्रिंशत्तमे व्यूहे पङ्क्तिष्वतिष्ठन्त । ता यत्त्रिंशत्तमे व्यूहेऽतिष्ठन्त । तस्मात्त्रिंशन्मासस्य रात्रयः । अथ यत्पङ्क्तिषु–तस्मात्पाङ्क्तः प्रजापतिः । ता अष्टाशतं शतानि पङ्क्तयोऽभवन् ॥ २३ ॥

अथेतरौ वेदौ व्यौहत्–द्वादशैव बृहतीसहस्राणि । अष्टौ यजुषाम् । चत्वारि साम्नाम् । एतावद्धैतयोर्वेदयोर्यत्प्रजापतिसृष्टम् । तौ त्रिंशत्तमे व्यूहे पङ्क्तिष्वतिष्ठेताम् । तौ यत्त्रिंशत्तमे व्यूहेऽतिष्ठे-

---

'संस्करवै' वेदत्रयात्मकं स्वशरीरं संस्कृतं करवाणीति विचार्य स प्रजापतिर्द्वादश–बृहतीसहस्रसम्मिताः 'ऋचो' 'व्यौहत्' विभक्तवान् । ऋचां न्यूनाधिकसङ्ख्यासंशयं व्युदस्यति–एतावत्यो हऽर्चो याः प्रजापतिसृष्टा इति । 'तास्त्रिंशत्तमे व्यूहे' इत्यादेः, 'अष्टाशतं शतानि पङ्क्तयोऽभवन्' इत्येवमन्तस्यायमर्थः–ता द्वादशसहस्रसङ्ख्याका बृहत्य ऋचो द्वित्रिचतुरादिक्रमेण पूर्ववद्विभज्यावसाने त्रिंशद्भागाः कृताः । तत्र एकैकस्य भागस्य चतुःशतं बृहत्यः, एष त्रिंशत्तमः त्रिंशत्सङ्ख्यापूरको व्यूहो विभागस्थानमित्यर्थः । बृहती षट्त्रिंशदक्षरा, पङ्क्तिस्तु चत्वारिंशदक्षरा, अतो दश बृहत्यो नव पङ्क्तयः सम्पद्यन्ते । एवं शतं बृहत्यो नवतिः पङ्क्तयः । तथा चैकैकभागगतबृहतीचतुःशतस्य षष्ट्यधिकत्रिशतसङ्ख्याकाः पङ्क्तयः सम्पद्यन्ते । एवं सर्वासां त्रिंशत्सङ्ख्याकात्मगतद्वादशसहस्रसम्मितानां बृहतीच्छन्दस्कानामृचां पङ्क्तित्वसम्पादने सहस्रं बृहत्यो नवशतपङ्क्तय इति रीत्या द्वादशानां बृहतीसहस्राणां द्वादशशतानि न्यूनानि । एवं च अष्टाशतं शतानि पङ्क्तयो भवन्ति । अष्टोत्तरशतसङ्ख्यायाः नियतानि शतं शतानि तावत्यः पङ्क्तयो जाताः; अष्टाशतानि दशसहस्राणि अष्टशताधिकानीत्यर्थः । तत्र ऋचां त्रिंशत्तमे भागे तत्रापि पङ्क्तिष्ववस्थानं च प्रशंसति–ता यत्त्रिंशत्तमे व्यूह इति । यत्त्रिंशद्भागाः, अतो 'मासस्य' त्रिंशद्रात्रयः, यतः पङ्क्तिष्वतिष्ठन्त अतः 'पाङ्क्तः प्रजापतिः' पाङ्क्तत्वं नाम पञ्चसङ्ख्यावत्त्वम्–पञ्चपदा पङ्क्तिरिति संख्यासाम्यात् प्रजापतेर्लोमत्वङ्मांसास्थिमज्जात्मानः पञ्च चितय इति षष्ठे प्रतिपादितम् ( श. प. का. ६ ) ॥ २२ ॥ २३ ॥

यथा ऋग्वेदस्य त्रिंशता विभागैर्विभक्तानां द्वादशसहस्रबृहतीनां पङ्क्तित्वसम्पादनेन अष्टशताधिकदशसहस्रसम्मिताः पङ्क्तयो जाताः एवं यजुःसामवेदयोरपि विभागं पङ्क्तित्वसम्पादनं च प्रदर्शयति–अथेतरौ वेदौ

( वंस्ते ) ते सर्व्वे त्रयो व्वेदाः । ( ० ) दश च सहस्राण्यष्टौ च शतान्यशीतीनामभवन्त्स मुहूर्तेन मुहूर्तेनाशीतिमाप्नोन्मुहूर्तेन मुहूर्तेनाशीतिः समपद्यत ॥ २५ ॥

स ऽएषु त्रिषु लोकेषूखायाम् । योनौ रेतोभूतमात्मानमसिञ्चच्छन्दोमयꣳ स्तोममयं प्राणमयं देवतामयं तस्यार्धमासे प्रथमऽआत्मा समस्क्रियत दवीयसि परो दवीयसि परः संव्वत्सरऽएव सर्व्वः कृत्स्नः समस्क्रियत ॥ २६ ॥

---

ताम्—तस्मात्त्रिंशन्मासस्य रात्रयः । अथ यत्पङ्क्तिषु—तस्मात्पाङ्क्तः प्रजापतिः । ता अष्टाशतमेव शतानि पङ्क्तयोऽभवन् ॥ २४ ॥

ते सर्वे त्रयो वेदाः दश च सहस्राण्यष्टौ च शतान्यशीतीनामभवन् । स मुहूर्तेन—मुहूर्तेनाशीतिमाप्नोत् । मुहूर्तेन मुहूर्तेनाशीतिः समपद्यत ॥ २५ ॥

स एषु त्रिषु लोकेषूखायां योनौ रेतोभूतमात्मानमसिञ्चत्—छन्दोमयम्, स्तोममयम्, प्राणमयम्, देवतामयम् । तस्यार्धमासे प्रथम आत्मा समस्क्रियत । दवीयसि परः । दवीयसि परः । सम्वत्सर एव सर्वः कृत्स्नः समस्क्रियत ॥ २६ ॥

---

व्यौहदिति । अनयोरपि वेदयोर्द्वादशबृहतीसहस्राणामृचां तत्र यजुषामष्टौ सहस्राणि, साम्नां चत्वारि मिलित्वोक्तैव संख्या । एतावत्य एव हि पूर्वं वेदद्वये प्रजापतिना सृष्टा ऋच इति । न ततो न्यूना वा अधिका वेत्यर्थः । तौ त्रिंशत्तमे व्यूहे पङ्क्तिष्वतिष्ठेतामित्यादिकं पूर्ववद् व्याख्येयम् । एवं त्रय्याः अष्टशताधिकदशसहस्रपङ्क्तिरूपत्वसम्पादनाय संवत्सरस्य प्रजापतेर्मुहूर्त्तसंख्यासाम्येन त्रयीशरीरकत्वमुक्तम् ॥ २४ ॥

अथात्र वेदत्रयगताः सकलाः पङ्क्तीः सम्भूय अशीत्यात्मना सम्पादयति—ते सर्वे त्रयो वेदा इति । वेदत्रये तावत् चतुर्विंशतिबृहतीसहस्राणि, षट्शताधिकैकविंशतिसहस्रसम्मिताः पङ्क्तयः सम्पन्नाः । पङ्क्तिश्चत्वारिंशदक्षरा, पङ्क्तिद्वयं अशीतिरेका भवति, अशीत्यक्षराणि भवन्तीत्यर्थः । एवं च वेदत्रयगताः सर्वाः पङ्क्तयो द्वयोर्द्वयोरेकैकाऽशीतिर्भवतीति न्यायेन अष्टशताधिकदशसहस्रसंख्या इति प्रागुक्तम् । अत उभयोः संख्यासाम्यान्मुहूर्त्तानामशीत्यात्मना सम्पत्तिः ॥ २९ ॥

उक्तरीत्या प्रजापतेः संवत्सरात्मकत्वं स्पष्टमुक्तमिति दर्शयति—स एषु त्रिषु लोकेष्विति । 'स' प्रजापतिः लोकत्रयरूपायामुखायां योनावात्मानं रेतोरूपेण सिक्तवान् । आत्मानं विशिनष्टि—छन्दोमयमिति । त्रयीविद्यायां हि छन्दस्तोमप्राणदेवताः सन्तीति प्रागुक्तम्, तन्मयमात्मानं सिक्तवान् । तत्र तस्य प्रजापतेः प्रथम आत्माऽर्द्धमासे संस्कृतश्चतुर्विंशतिधा विभक्ता तावत्संख्या अर्द्धमासा इति तत्रैव संस्कृत इत्युच्यते । परोऽन्य आत्मा दवीयसि दूरतरे मासतिथ्यात्मके वेदत्रयस्य त्रिंशद्धा विभागे चतुर्विंशतेर्दूरतर इत्यर्थः । पुनर्दवीयसि पर इति वचनं मुहूर्त्तात्मके सर्वत्राप्येतेषां बहुसंख्यासंख्येयत्वादत्यन्तदूरतरत्वम् । एवं संवत्सर एव अर्द्धमासतिथिमुहूर्त्तात्मके सर्वत्रात्मा कृत्स्नः संस्कृतः ॥ २६ ॥

---

१—'नैवाशीतिम्' इत्येवमत्र क. पु. पाठो दृश्यते ।

२३४९

तद्यत्परिश्रितमुपाधत्त । तद्रात्रिमुपाधत्त तदनु पञ्चदश मुहूर्तान्मुहूर्तानु पञ्चदशाशीतीरथ यद्यजुष्मतीमुपाधत्त तदहरुपाधत्त तदनु पञ्चदश मुहूर्तान्मुहूर्तानु पञ्चदशाशीतीरेवमेतां त्रयीं विद्यामात्मन्नावपतात्मन्न्नकुरुत सोऽत्रैव सर्वेषां भूतानामात्माऽभवच्छन्दोमय स्तोममयः प्राणमयो देवतामयः सऽएतन्मयऽ एव भूत्वोर्ध्वऽ उदक्रामत्स यः सऽ उदक्रामदेष स चन्द्रमाः ॥ २७ ॥

( स्तु ) तस्यैषा प्रतिष्ठा । यऽ एष तपत्येतस्मादेवाध्यचीयतैतस्मिन्नध्यचीयतात्मनऽएवैनं तन्निरमिमीतात्मनः प्राजनयत् ॥ २८ ॥

---

तद् यत्परिश्रितमुपाधत्त—तद्रात्रिमुपाधत्त । तदनु पञ्चदश मुहूर्तान् । मुहूर्तान‌नु पञ्चदशाशीतीः । अथ यद्यजुष्मतीमुपाधत्त—तदहरुपाधत्त । तदनु पञ्चदश मुहूर्तान् । मुहूर्तान‌नु पञ्चदशाशीतीः । एवमेतां त्रयीं विद्यामात्मन्नावपत । आत्मन्नकुरुत । सोऽत्रैव सर्वेषां भूतानामात्माऽभवत्—छन्दोमयः, स्तोममयः, प्राणमयः, देवतामयः । स एतन्मय एव भूत्वोर्ध्व उदक्रामत् । स यः स उदक्रामद्—एष स चन्द्रमाः ॥ २७ ॥

तस्यैषा प्रतिष्ठा य एष तपति, एतस्मादेवाध्यचीयत । एतस्मिन्नध्यचीयत । आत्मन एवैनं तन्निरमिमीत । आत्मनः प्राजनयत् ॥ २८ ॥

---

यदुक्तं प्रजापतेः संवत्सरस्याहोरात्रमुहूर्त्तात्मकत्वं वेदत्रयरूपत्वं च तत्सर्वं चित्याग्नौ विभज्य प्रजापतिकर्तृकोपधानवचनव्याजेन दर्शयति—तद्यत्परिश्रितमुपाधत्तेत्यादिना । 'तत्' तदा 'परिश्रितं' शर्करामुपाधत्त प्रजापतिरिति यत् तेन रात्रिमेवोपहितवान्भवति । तदनु पञ्चदश मुहूर्त्तानुपाधत्त, मुहूर्त्ता लोकंपृणेष्टका इति उक्तम् । अतः पञ्चदशलोकंपृणेष्टकोपधानेन रात्रौ पञ्चदश मुहूर्त्तानेवोपहितवान्भवति । मुहूर्त्तानामशीत्यात्मकत्वात्तावतीरप्यशीतीरुपहितवान् । अयमर्थः—प्रथमपरिश्रिदुपधानेन रात्रिं, पञ्चदशलोकंपृणोपधानेन चाग्नौ संवत्सररूपे रात्रिगतमुहूर्त्तान्, वेदत्रयरूपे तु पञ्चदशपङ्क्त्यशीतीरुपहितवान् । एवम् अथ यद्यजुष्मतीमुपाधत्तेति योज्यम्, यजुष्मती नाम मन्त्रेणोपहितेष्टका तदुपधानेन अहः, तामनु पञ्चदशलोकंपृणोपधानेन अहर्गतपञ्चदशमुहूर्त्तान् । वेदत्रयपक्षे पञ्चदशाशीतीरुपहितवानिति । एतदुक्तं भवति—एकस्याः परिश्रितो यजुष्मत्याश्चोपधानेन रात्रिमहश्च त्रिंशल्लोकंपृणोपधानेन तद्गतान् त्रिंशन्मुहूर्तांस्त्रिंशतमशीतीश्चोपहितवानिति । एवं षष्ट्युत्तरत्रिशतसङ्ख्याकानां परिश्रितां यजुष्मतीनां चोपधानेन संवत्सरगतानहोरात्रान् लोकंपृणोपधानेन सर्वान् मुहूर्त्तान् सकलाशीतीश्च चित्याग्नावुपहितवानिति । "हन्त त्रयीमेव विद्यामात्मानमभि संस्करवै" इति प्रजापतिना प्रतिज्ञातं निगमयति—एवमेतां त्रयीं विद्यामात्मन्नावपतात्मन्नकुरुतेति । यतस्त्रयी विद्या सर्वच्छन्दस्तोमादिसर्वभूताधारः, अतस्त्रयीविद्यायाः आत्मन्यावापधारणाभ्यां सर्वभूतानां प्रजापतिरात्मा, सर्वच्छन्दस्स्तोमप्राणदेवतामयोऽभवदित्यर्थः । एवमग्निं चितवतः प्रजापतित्वं निदर्शयति—स एतन्मय एव भूत्वेति । 'एतन्मयः' इत्येतच्छब्दः प्रकृतं सर्वं परामृशति, 'ऊर्ध्वः' 'उदक्रामत्' स 'एषः' 'चन्द्रमाः' जातः ॥ २७ ॥

'तस्य' चन्द्रमोरूपस्य प्रजापतेः आदित्यात्मिका 'एषा' प्रतिष्ठा आश्रयो जातः, चन्द्रः सन्नादित्या-

( १८ ) स य॒दग्निं चे॑ष्य॒माणो दीक्ष॒ते । य॒थैव त॒त्प्रजाप॑ति॒रे॑षु त्रि॒षु लो॒के॑षूखा॒यां यो॒नौ रे॒तोभू॒त॒मा॒त्मा॒न॒म॒सि॒ञ्च॒दे॒व॒मे॒वै॒ष॒ऽ ए॒त॒दा॒त्मा॒न॒मु॒खा॒यां यो॒नौ रे॒तोभू॒तꣳ सि॑ञ्चति च्छन्दोम॒यꣳ स्तोमम॒यं प्रा॑णम॒यं देवताम॒यं त॒स्यार्ध॑मा॒से प्र॑थ॒मऽ आ॒त्मा स॒ꣳस्क्रि॑यते द॒वीय॑सि पु॒रो द॒वीय॑सि पु॒रः सं॒व्वत्स॒रऽएव स॒र्व्वः कृ॒त्स्नः स॒ꣳस्क्रि॑यते ॥ २९ ॥

त॒द्य॒त्परि॑श्रि॒त॒मु॒प॒धत्ते । त॒द्रात्रि॒मु॒प॒धत्ते त॒द॒नु प॒ञ्च॒द॒श मु॒हू॒र्ता॒न्मु॒हू॒र्ता॒न॒नु प॒ञ्च॒द॒शा॒शी॒ती॒र॒थ य॒द्य॒जु॒ष्म॒ती॒मु॒प॒धत्ते त॒द॒ह॒रु॒प॒धत्ते त॒द॒नु प॒ञ्च॒द॒श मु॒हू॒र्ता॒न्मु॒हू॒र्ता॒न॒नु प॒ञ्च॒द॒शा॒शी॒ती॒रे॒व॒मे॒तां त्र॒यीं वि॒द्या॒मा॒त्म॒न्ना॒व॒प॒तऽआ॒त्म॒न्कु॒रु॒ते सो॒ऽत्रै॒व स॒र्व्वे॒षां भू॒ता॒ना॒मा॒त्मा भ॑वति च्छन्दोम॒य स्तोमम॒यः प्रा॑णम॒यो दे॒व॒ताम॒यः स॒ऽए॒तन्म॒यऽ ए॒व भू॒त्वो॒र्ध्वऽउ॒त्क्रा॒म॑ति ॥ ३० ॥

त॒स्यै॒षा प्र॑ति॒ष्ठा । य॒ऽ ए॒ष त॒प॒त्ये॒त॒स्मा॒द्दे॒वा॒धि॒ची॒य॒तऽए॒त॒स्मि॒न्न॒धि॒ची॒य॒तऽआ॒त्म॒नऽए॒वै॒नं त॒न्नि॒र्मि॒मी॒तऽआ॒त्म॒नः प्र॒ज॒न॒य॒ति स य॒दे॒वंवि॒द॒स्मा॒ल्लो॒का॒त्प्रै॒त्य॒थै॒त॒मे॒वा॒त्मा॒न॒म॒भि॒स॒म्भ॒व॒ति च्छ॒न्दो॒म॒यꣳ स्तो॒म॒म॒यं प्रा॒ण-

---

स यदग्निं चेष्यमाणो दीक्षते—यथैव तत्प्रजापतिरेषु त्रिषु लोकेषूखायां योनौ रेतोभूतमात्मानमसिञ्चत्—एवमेवैष एतदात्मानमुखायां योनौ रेतोभूतं सिञ्चति—छन्दोमयम्, स्तोममयम्, प्राणमयम्, देवतामयम् । तस्यार्द्धमासे प्रथम आत्मा संस्क्रियते, दवीयसि परः, दवीयसि परः । संवत्सर एव सर्वः कृत्स्नः संस्क्रियते ॥ २९ ॥

तद् यत्परिश्रितमुपधत्ते—तद्रात्रिमुपधत्ते । तदनु पञ्चदश मुहूर्तान् । मुहूर्ताननु पञ्चदशाशीतीः । अथ यद्यजुष्मतीमुपधत्ते—तदहरुपधत्ते । तदनु पञ्चदश मुहूर्तान् । मुहूर्ताननु पञ्चदशाशीतीः । एवमेतां त्रयीं विद्यामात्मन्नावपते, आत्मन् कुरुते । सोऽत्रैव सर्वेषां भूतानामात्मा भवति—छन्दोमयः, स्तोममयः, प्राणमयः, देवतामयः । स एतन्मय एव भूत्वोर्ध्व उत्क्रामति ॥ ३० ॥

तस्यैषा प्रतिष्ठा—य एष तपति—एतस्माद्देवाधिचीयते । एतस्मिन्नधिचीयते, आत्मन एवैनं तान्निर्मिमीते, आत्मनः प्रजनयति । स यदेवंविदस्माल्लोकात्प्रैति—अथैतमेवात्मानमभिसम्भवति—छन्दो-

---

त्मभावेन स्थित इत्यर्थः । एतस्मादेवाध्यचीयत—इत्यादेरयमर्थः—रुक्मपुरुषात्मकादेतस्मात्सूर्यादुपर्यध्यचीयत अतः 'एतस्मिन्' एवाधारे सर्वोऽग्निश्चितः । एतस्यैव विवरणम्—आत्मन एवैनमिति । अत आधारभूतस्य सूर्यस्य प्रतिष्ठारूपतेति ॥ २८ ॥

यत्प्रजापतेरुखायां सिक्ते स्वात्मनि संवत्सरमन्त्ररूपे परिश्रिद्यजुष्मतीष्टकोपधानेनादित्ये प्रतिष्ठितत्वम्, तत्सर्वमिदानीन्तने यजमाने योजयितुं प्रस्तौति—स यदग्निं चेष्यमाणो दीक्षत इति । 'सः' अनुष्ठाता 'यत्'

मुयं देवतामुयथ्ँ सुऽएतन्मुयऽएवु भूत्वोर्ध्वऽउत्क्रामति युऽएवं विद्वाने-तत्कुर्म कुरुते युो वैतुदेवं व्वेद ॥ ३१ ॥

इति तृतीयप्रपाठके प्रथमं ब्राह्मणम् ॥ १०–३–१ ॥ ( ४. २. ) ॥

एष वै मृत्युर्युत्संव्वत्सरुः । ( ५ ) एष हि मुर्त्यानामहोरात्राभ्यामायुः क्षिणोत्यथ म्रियन्ते तुस्मादेषुऽ एवु मृत्युः स युो हैतं मृत्युथ्ँ संव्वत्सरं व्वेद नु हास्यैषु पुरा जरसोऽहोरात्राभ्यामायुः क्षिणोति सुर्वथ्ँ हैवायुरेति ॥ १ ॥

---

मयम्, स्तोममयम्, प्राणमयम्, देवतामयम् । स एतन्मय एव भूत्वोर्ध्व उत्क्रामति–य एवं विद्वाने-तत्कर्म कुरुते, यो वैतदेवं वेद ॥ ३१ ॥

एष वै मृत्युर्यत्संवत्सरः । एष हि मर्त्यानामहोरात्राभ्यामायुः क्षिणोति । अथ म्रियन्ते । तस्मादेष एव मृत्युः । स यो हैतं मृत्युं संवत्सरं वेद–न हास्यैष पुरा जरसोऽहोरात्राभ्यामायुः क्षिणोति । सर्वं हैवायुरेति ॥ १ ॥

---

यदा ' अग्निम् ' इष्टकाभिः ' चेष्यमाणः ' हेतौ शानच् प्रत्ययः । चयनाद्धेतोः ' दीक्षते ' तदा प्रजापतिवत् सर्वमनुष्ठातव्यम् । फलं च तस्य तद्भवतीत्याह–यथैव तत्प्रजापतिरित्यादिना–आत्मन एवैनं निर्मिमीत आत्मनः प्रजनयति इत्यन्तेन । पूर्ववद्व्याख्येयम् । अयमत्र विशेषः–प्रजापतिवृत्तान्तस्य भूतत्वादाख्यातानां भूतकालेऽर्थे अनद्यतने लङ् । अत्र तु वर्त्तमानप्रयोग इति । उक्तमर्थजातं विदुषः फलमाह–स यदैवं-विदस्माल्लोकात्प्रैतीति । वेदित्रनुष्ठात्रोरयं विशेषः–एकदा ज्ञात्वाऽनुष्ठाने फलम् । ज्ञानमात्रे तु यावज्जीवम् । एवं कर्मणो भावनायां फलमिति । अत एव ज्ञानपूर्वककर्मानुष्ठानं केवलं च ज्ञानमित्युभयं दर्शितम्–य एवं विद्वानेतत्कर्म कुरुते यो वैतदेवं वेदेति ॥ २९–३१ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये दशमकाण्डे चतुर्थेऽध्याये द्वितीयं ब्राह्मणम् ॥ ( १०–४–२ ) ॥

अथ संवत्सररूपप्रजापतेर्मृत्य्वन्तकरूपत्वं तद्रूपोपासनस्य फलम्, अग्निचयनस्यामृतत्वलक्षणं फलम्, परिश्रिद्यजुष्मतीलोकंपृणेष्टकानां संख्या तृतीयब्राह्मणे प्रदर्श्यते–एष वै मृत्युरिति । ' मृत्युः ' आयुषः क्षपयिता । संवत्सरस्य मृत्युरूपत्वं व्यनक्ति–एष हि मर्त्यानामहोरात्राभ्यामिति । परिवर्त्तमानाभ्याम् ' अहोरात्राभ्यामायुः क्षिणोति ' हिनस्ति, "क्षिणु हिंसायाम्"–( धा. पा. त. प. ४ ) इत्यस्य रूपम् । ' अथ ' आयुःक्षयानन्तरं म्रियन्ते । संवत्सरमृत्युरूपोपासकस्य फलमाह–स यो हैतं मृत्युमिति । एवं संवत्सरो मृत्यु-रिति ' यः ' उपास्ते अस्य ' आयुः ' आयुष्यं ' जरसः पुरा ' ' एष ' संवत्सरो ' न ' हिनस्ति मदीयं रूपमसौ जानातीत्यनुग्रहबुद्ध्येत्यर्थः । तस्मात् सर्वमायुरेति ॥ १ ॥

(त्ये) एषु ऽ उऽएवान्तकः । (ऽ) एष हि मर्त्यानामहोरात्राभ्यामायुषोऽन्तं गच्छत्यथ म्रियन्ते तस्मादेषऽ एवान्तकः स यो हैतमन्तकं मृत्युँ संव्वत्सरं व्वेद न हास्यैष पुरा जरसोऽहोरात्राभ्यामायुषोऽन्तं गच्छति सर्व्वँ हैवायुरेति ॥ २ ॥

ते देवाः । (ऽ) एतस्मादन्तकान्मृत्योः संव्वत्सरात्प्रजापतेर्बिभयाञ्चक्रुर्यद्वै नोऽयमहोरात्राभ्यामायुषोऽन्तं न गच्छेदिति ॥ ३ ॥

तऽएतान्यज्ञक्रतूंस्तेनिरे । (रेऽग्नि) अग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुबन्धँ सौम्यमध्वरं तऽएतैर्यज्ञक्रतुभिर्यजमाना[1] नामृतत्वमानशिरे ॥ ४ ॥

---

एष उ एवान्तकः । एष हि मर्त्यानामहोरात्राभ्यामायुषोऽन्तं गच्छति । अथ म्रियन्ते । तस्मादेष एवान्तकः । स यो हैतमन्तकं मृत्युं संवत्सरं वेद—न हास्यैष पुरा जरसोऽहोरात्राभ्यामायुषोऽन्तं गच्छति, सर्वं हैवायुरेति ॥ २ ॥

ते देवा एतस्मादन्तकान्मृत्योः संवत्सरात्प्रजापतेर्बिभयाञ्चक्रुः । यद्वै नोऽयमहोरात्राभ्यामायुषोऽन्तं न गच्छेदिति ॥ ३ ॥

त एतान्यज्ञक्रतूंस्तेनिरे । अग्निहोत्रम्, दर्शपूर्णमासौ, चातुर्मास्यानि, पशुबन्धम्, सौम्यमध्वरम् । तऽएतैर्यज्ञक्रतुभिर्यजमाना नामृतत्वमानशिरे ॥ ४ ॥

---

संवत्सरस्यान्तकरूपत्वमाह—एष उ एवान्तक इति । अन्तं करोतीत्यन्तकः, करोतेः "अन्यत्रापि दृश्यते"—(पा. सू. ३ । २ । ४८ वा. ४) इति डः प्रत्ययः । अन्तकशब्दं निर्वक्ति—एष हि मर्त्यानामिति । आयुषोऽन्तं गच्छति, अन्तर्भावितण्यर्थः । गमयति करोतीत्यर्थः । यद्वा स्वयं सर्वेषाम् 'आयुषोऽन्तं गच्छति' । स यो हैतमन्तकं मृत्युं संवत्सरम् इत्यादिकं तद्रूपोपासनावाक्यं पूर्ववद्व्याख्येयम् ॥ २ ॥

चयनस्यामृतत्वफलवत् यज्ञक्रतूनाममृतत्वं फलमित्याह—ते देवा एतस्मादन्तकादिति । 'ते देवाः' मृत्य्वन्तकसंवत्सररूपात्प्रजापतेर्भीताः सन्तः इदमूचुः—यथा 'अयं' 'नः' अस्माकम् 'आयुषोऽन्तं न गच्छेदिति' ॥ ३ ॥

ततः 'ते' तद्भीतिपरिहाराय 'यज्ञक्रतूंस्तेनिरे' यज्ञा अग्निहोत्रादयः, यूपवन्तः क्रतवः तान् । 'सौम्यमध्वरं' सोमद्रव्यकं यज्ञम् । 'एतैः' 'यजमानाः' यजनं कुर्वाणाः 'अमृतत्वं' पुनरनुत्पत्तिलक्षणम् 'आनशिरे' "अश्नोतेश्च" (पा. सू. ७ । ४ । ७२) इति नुडागमः ॥ ४ ॥

---

१—अत्र "यजमाना अमृतत्वम्" इति भाष्यानुसारी पाठः साधुः ।

ते हाप्यग्निं चिक्यिरे । तेऽपरिमिता ऽ एव परिश्रित ऽ उपदधुरपरिमिता यजुष्मतीरपरिमिता लोकम्पृणा यथेदमप्येतर्ह्येक ऽउपदधतीति देवा ऽअकुर्व्वन्निति ते ह नैवामृतत्वमानशिरे ॥ ५ ॥

तेऽर्चन्तः श्राम्यन्तश्चेरुः । ( र ) अमृतत्वमवरुरुत्समानास्तान्ह प्रजापतिरुवाच न वै मे सर्व्वाणि रूपाण्युपधत्थाति वैव रेचयथ न वाऽभ्यापयथ तस्मान्नामृता भवथेति ॥ ६ ॥

ते होचुः । ( स्ते ) तेभ्यो वै नस्त्वमेव तद्ब्रूहि यथा ते सर्व्वाणि रूपाण्युपदधामेति ॥ ७ ॥

---

ते हाप्यग्निं चिक्यिरे । तेऽपरिमिता एव परिश्रित उपदधुः, अपरिमिता यजुष्मतीः, अपरिमिता लोकम्पृणाः—यथेदमप्येतर्ह्येक उपदधति—इति देवा अकुर्वन्निति । ते ह नैवामृतत्वमानशिरे ॥ ५ ॥

तेऽर्चन्तः श्राम्यन्तश्चेरुरमृतत्वमवरुरुत्समानाः । तान्ह प्रजापतिरुवाच—न वै मे सर्वाणि रूपाण्युपधत्थ । अति वैव रेचयथ । न वाऽभ्यापयथ । तस्मान्नामृता भवथेति ॥ ६ ॥

ते होचुः—तेभ्यो वै नस्त्वमेव तद् ब्रूहि । यथा ते सर्वाणि रूपाण्युपदधामेति ॥ ७ ॥

---

अथ यथाविध्यनुष्ठितस्य चयनस्याप्येतदेवामृतत्वं फलमिति वक्तुं तद्विपरीतानुष्ठाने फलं न सेत्स्यतीति पुरावृत्तं प्रस्तौति—ते हाप्यग्निं चिक्यिर इति । 'ते' मृत्युभयं परिहरन्तो देवाः 'अग्निमपि चिक्यिरे' चितवन्तः । "चिञ् चयने"—( धा. पा. स्वा. उ. ५ ) "परोक्षे लिट्"—(पा. सू. ३ । २ । ११५ ) । "विभाषा चेः"—( पा. सू. ७ । ३ । ५८ ) इति कुत्वम् । "एरनेकाचः"—( पा. सू. ६ । ४ । ८२ ) इति यणादेशः । 'ते' चिन्वन्तो देवाः 'अपरिमिताः' असंख्याताः परिश्रितो यजुष्मतीः लोकंपृणाश्चोपदधुः । देवकृतं तादृशमनुष्ठानमिदानीन्तनानुष्ठानेन सममिति संवादेन दर्शयति—यथेदमप्येतर्ह्येक उपदधतीति देवा अकुर्वन्निति । प्रथम इतिशब्दोऽनेकानुष्ठानप्रकारदर्शकः । द्वितीय इतिशब्दो हेत्वर्थः । इत्येवमपरिमितपरिश्रिदादिभिर्देवा अकुर्वन्नित्यतो हेतोः 'एतर्हि' अस्मिन्काले 'एके' आचार्यास्तथैवोपदधति । 'ते' एवमपरिमितपरिश्रिदादिभिर्देवा अनुष्ठितवन्तः 'अमृतत्वं' 'न' व्याप्तवन्तः ॥ ५ ॥

अथामृतत्वप्राप्त्यर्थं देवानां तपो दर्शयति—तेऽर्चन्तः श्राम्यन्त इति । 'अवरुरुत्समानाः' अवरोद्धुकामाः । तान् ह प्रजापतिरुवाचेत्यादेरयमर्थः—अग्निरूपः प्रजापतिः स्वात्मन्युपधेयेष्टकासंख्यापरिज्ञानाभावेन फलाभावमनुवदन् तैः पृष्टः स्वात्मरूपत्वेनोपधेयानामिष्टकानां परिश्रितां च संख्यां विभज्योक्तवानिति । उपधत्थ, अतिरेचयथ, अभ्यापयथ, भवथ,—इति चत्वारो वर्त्तमानप्रयोगाः । अभ्यापनं नामाभ्याप्तिरन्यूनता 'यथा ते सर्वाणि रूपाणि उपदधामेति' देववाक्यम् । दधातेर्लोटि "आडुत्तमस्य पिच्च"—( पा. सू. ३ । ४ । ९२ ) इत्याडागमः ॥ ६ ॥ ७ ॥

स होवाच । षष्टिं च त्रीणि च शतानि परिश्रित ऽ उपधत्त षष्टिं च त्रीणि च शतानि यजुष्मतीरधि षट्त्रिँशतमथ लोकम्पृणा दश च सहस्राण्यष्टौ च शतान्युपधत्ताथ मे सर्वाणि रूपाण्युपधास्यथाथामृता भविष्यथेति ते ह तथा देवा ऽउपदधुस्ततो देवा ऽअमृता ऽआसुः ॥ ८ ॥

स मृत्युर्देवानब्रवीत् । ( दि ) इत्थमेव सर्व्वे मनुष्या ऽ अमृता भविष्यन्त्यथ को मह्यं भागो भविष्यतीति ते होचुर्नातोऽपरः कश्चन सह शरीरेणामृतोऽसद्यदैव त्वमेतं भागँ हरासाऽअथ व्यावृत्य शरीरेणामृतोऽसद्योऽमृतोऽसद्विद्यया वा कर्मणा वेति यद्वै तदब्रुवन्विद्यया वा कर्मणा वेत्येषा हैव सा विद्या यदग्निरेतदु हैव तत्कर्म यदग्निः ॥ ९ ॥

---

स होवाच—षष्टिं च त्रीणि च शतानि परिश्रित उपधत्त । षष्टिं च त्रीणि च शतानि यजुष्मतीः—अधि षट्त्रिंशतम् । अथ लोकंपृणा दश च सहस्राणि, अष्टौ च शतान्युपधत्त । अथ मे सर्वाणि रूपाण्युपधास्यथ, अथामृता भविष्यथेति । ते ह तथा देवा उपदधुः । ततो देवा अमृता आसुः ॥ ८ ॥

स मृत्युर्देवानब्रवीत्—इत्थमेव सर्वे मनुष्या अमृता भविष्यन्ति । अथ को मह्यं भागो भविष्यतीति । ते होचुः—नातोऽपरः कश्चन सह शरीरेणामृतोऽसद् । यदैव त्वमेतं भागं हरासै । अथ व्यावृत्य शरीरेणामृतोऽसद्, योऽमृतोऽसद्—विद्यया वा कर्मणा वेति । यद्वै तदब्रुवन्—विद्यया वा कर्मणा वेति । एषा हैव सा विद्या—यदग्निः । एतदु हैव तत्कर्म—यदग्निः ॥ ९ ॥

---

स होवाचेत्यादि । 'उपधत्त' इति द्वयं लोटि मध्यमे रूपम् । उपधास्यथ, भविष्यथेति द्वयं भविष्यत्प्रयोगे । यजुष्मत्यः षष्ट्यधिकत्रिशतसङ्ख्याकाः ' अधि षट्त्रिंशतम् ' इत्यस्यायमर्थः—ता यजुष्मत्यः पञ्चोनचतुःशतसम्मिता इत्युत्तरत्र वक्ष्यते । " ताः सर्वाः पञ्चभिर्न चत्वारि शतानि "—( श. प. १० । ४ । ३ । १९ ) इति । तत्र षष्ट्यधिकत्रिशतादधिकाः पञ्चत्रिंशत्संख्याकाः, पुरीषं षट्त्रिंशी सम्पत्तिः । " अथ याः । षट्त्रिंशत्पुरीषं तासां षट्त्रिंशी "—( श. प. १० । ४ । ३ । १९ ) इति च वक्ष्यते । ता एवात्र अधिषट्त्रिंशतमित्युक्ताः । एवं प्रजापतिना स्वात्मन्युपधेयेष्टकासंख्यायामुक्तायां देवा अपि तथैवाकार्षुः, फलं च लब्धवन्त इत्याह—ते ह तथा देवा उपदधुरिति । ' अमृता आसुः ' सशरीराः सन्त एवामृतत्वं प्राप्ता इत्यर्थः ॥ ८ ॥

इदानींतनानामग्निचितां शरीरसाहित्येनामृतत्वाभावं प्रश्नप्रतिवचनाभ्यां दर्शयति—स मृत्युर्देवानब्रवीदिति । ' इत्थमेव ' अनेन प्रकारेण स्वशरीरसाहित्येन ' सर्वे मनुष्याः अमृताः भविष्यन्ति ' । ' अथ '—शब्दश्चेदर्थे, एवं चेत् ' मह्यं ' मृत्यवे ' कः ' ' भागः भविष्यति ' सर्वेऽप्यमृताश्चेन्मृत्योर्भागो नास्ति, मृत्युर्नाम

( स्ते ) ते यऽएवमेतद्विदुः । ( ये ) ये वैतत्कर्म कुर्व्वते मृत्वा पुनः सम्भवन्ति ते सम्भवन्त ऽएवामृतत्वमभिसम्भवन्त्यथ यऽएवं न विदुर्ये वैतत्कर्म न कुर्व्वते मृत्वा पुनः सम्भवन्ति तऽएतस्यैवान्नं पुनः पुनर्भवन्ति ॥ १० ॥

स यदग्निं चिनुते । ( तऽ ) एतमेव तदन्तकं मृत्युꣳ संवत्सरं प्रजापतिमग्निमाप्नोति यं देवाऽआप्नुवन्नेतमुपधत्ते यथैवैनमदो देवाऽ उपादधत ॥ ११ ॥

---

ते य एवमेतद्विदुः । ये वैतत्कर्म कुर्वते—मृत्वा पुनः सम्भवन्ति । ते सम्भवन्त एवामृतत्वमभिसम्भवन्ति । अथ यऽएवं न विदुः । ये वैतत्कर्म न कुर्वते, मृत्वा पुनः सम्भवन्ति—त एतस्यैवान्नं पुनः पुनर्भवन्ति ॥ १० ॥

स यदग्निं चिनुते—एतमेव तदन्तकं मृत्युं संवत्सरं प्रजापतिमग्निमाप्नोति—यं देवा आप्नुवन् । एतमुपधत्ते । यथैवैनमदो देवा उपादधत ॥ ११ ॥

---

बाधकः, बाध्यानामभावे बाधकत्वमपि निवृत्तमित्यर्थः । अथ देववाक्यम्—' अतः ' एभ्योऽस्मत्तः ' परः कश्चन ' अपि 'शरीरेण' 'सह' 'नामृतोऽसत्' अमृतो न भवेत् । अस्तेः पञ्चमलकारस्य रूपम् असदिति । हे मृत्यो ! त्वम् यदा 'एतं भागं' शरीरलक्षणं 'हरासै' अपहरेः—"हृञ् हरणे—" ( धा. पा. भ्वा. उ. ९२४ ) पञ्चमे लकारे " लेटोऽडाटौ "—( पा. सू. ३।४।९४ ) इत्याडागमे " वैतोऽन्यत्र"—( पा. सू. ३।४।९६ ) इत्यैकारः । अथ तदानीमेव शरीरेण व्यावृत्य शरीरं विहायेत्यर्थः । अमृतोऽसत् भवेत् । किमेवं सर्वेऽप्यमृताः ? नेत्याह—योऽमृतोऽसद्विद्यया वा कर्मणा वेति । यो ' विद्यया ' उपासनया ' कर्मणा ' अनुष्ठानेन वाऽमृतत्वं प्राप्नोति तस्य शरीरं त्वया भागत्वेन स्वीकर्तव्यमित्यर्थः । यदुक्तं देवैः—' विद्यया वा कर्मणा वेति ' तयोरर्थं श्रुतिः स्वयमाह—यद्वै तदब्रुवन्विद्यया वेति । अग्निविषयैव विद्या, अग्निचयनमेव कर्म नान्यविषयं ज्ञानं कर्म वेत्यर्थः ॥ ९ ॥

कर्म कुर्वतां विदुषामविदुषां च शरीरपरित्यागोत्पत्ती समाने, कुतः कर्मविद्याभ्यां ज्ञाने विशेष इत्याशङ्क्योभयेषां फलव्यतिरेकं दर्शयति—ते य एवमेतद्विदुरिति । अग्निं विद्वांसोऽनुतिष्ठन्तश्च ' मृत्वा ' शरीरं विहाय ' पुनः सम्भवन्ति ' उत्पद्यन्ते, उत्पद्यमाना अमृता एवोत्पद्यन्ते । ये तु विद्याकर्मविरहितास्ते मृत्वा पुनः पुनरुत्पद्यमाना मृत्योः ' अन्नं ' भवन्ति । मृत्युना अद्यमाना भवन्तीति विद्याकर्मतदभावयोरमृतत्वतदभावाविति फलव्यतिरेकोऽस्तीत्यर्थः ॥ १० ॥

चयनस्याऽमृतत्वं फलमित्युक्तम्, अमृतशब्दार्थमाह—स यदग्निं चिनुत इति । यदा ' अग्निं ' चिन्वानस्तदा ' यं देवाः ' फलत्वेनाप्नुवन् ' एतमेव ' अन्तकं मृत्युं संवत्सरं प्रजापतिरूपमग्निं प्राप्नोति—अन्तकादिरूपाग्नित्वमेव देवैरमृतरूपफलत्वेन प्राप्तमेवेत्यर्थः । देवाः फलसाधनत्वेन यदकार्षुः, तदेवेदानीन्तनैरपि कृतमिति

परिश्रिद्भिरेवास्य रात्रीराप्नोति । यजुष्मतीभिरहान्यर्धमासान्मासानृ-तूँल्लोकम्पृणाभिर्मुहूर्तान् ॥ १२ ॥

( तांस्त ) तद्याः परिश्रितः । (ता) रात्रिलोकास्ता रात्रीणामेव साऽऽप्तिः क्रियते रात्रीणां प्रतिमा ताः षष्टिश्च त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतानि संवत्सरस्य रात्रयस्तासामेकविँशतिं गार्हपत्ये परिश्रयति द्वाभ्यां नाशीतिं धिष्ण्येषु द्वेऽएकषष्टे शतेऽआहवनीये ॥ १३ ॥

---

परिश्रिद्भिरेवास्य रात्रीराप्नोति । यजुष्मतीभिरहानि । अर्धमासान्, मासान्, ऋतून् । लोकं-पृणाभिर्मुहूर्तान् ॥ १२ ॥

तद् याः परिश्रितः—रात्रिलोकास्ताः । रात्रीणामेव साऽऽप्तिः क्रियते, रात्रीणां प्रतिमा । ताः षष्टिश्च त्रीणि च शतानि भवन्ति । षष्टिश्च ह वै त्रीणि च शतानि सम्वत्सरस्य रात्रयः । तासामेकविंशतिं गार्हपत्ये परिश्रयति । द्वाभ्यां नाशीतिं धिष्ण्येषु । द्वे एकषष्टे शते आहवनीये ॥ १३ ॥

---

साधनैक्यं दर्शयति—एतमुपधत्ते यथैवैनमदो देवा इति । अदः—शब्दो विप्रकृष्टवचनः, पूर्वं यथा देवा एत-मग्निमुपादधुः, एवमेतमग्निमिदानीमनुष्ठाताऽप्युपधत्ते ॥ ११ ॥

चयनेन "संवत्सरं प्रजापतिमग्निमाप्नोति" इति समनन्तरातीतग्रन्थे ( श.प.१०।४।३।११ ) उदितम्, तदेव विशदयति—परिश्रिद्भिरेवास्य रात्रीराप्नोतीत्यादिना । परिश्रितां रात्रिरूपत्वं यजुष्मतीनामहोरूपत्वं च ( श. प. १०।४।२।२७ ) प्रागुक्तम् । यजुष्मतीभिरेवार्द्धमासमासर्तुप्राप्तिरुत्तरत्र वक्ष्यते—"ततो याश्चतु-र्विंशतिरर्द्धमासलोकास्ता अर्द्धमासानामेव साऽऽप्तिः क्रियतेऽर्धमासानां प्रतिमाऽथ या द्वादशमासलोकास्ता-मासानामेव साऽऽप्तिः क्रियते मासानां प्रतिमा ता उ द्वे द्वे सहऽर्तुलोका ऋतूनामशून्यतायै"—( श.प.१० । ४ । ३ । १९ ) इति । लोकंपृणाभिरिष्टकाभिर्मुहूर्त्तानाप्नोति । तासां मुहूर्त्तरूपत्वमुक्तम् ॥ १२ ॥

परिश्रिदादिभिः रात्र्यहरादिप्राप्तिमेव क्रमेण विवृणोति—तद्याः परिश्रित इत्यादिना । तत्र परिश्रितां संख्याम्, स्थानविशेषेण तद्विभागं चाह—षष्टिश्च त्रीणि च शतानीति । गार्हपत्ये एकविंशतिं परिश्रितः उप-दध्यात् । द्वाभ्यां नाशीतिं धिष्ण्येष्विति । धिष्ण्या अष्टौ—होतृप्रशास्तृब्राह्मणाच्छंस्यच्छावाकपोतृनेष्टॄणां षण्णां षट्, आग्नीध्रीयमार्जालीयौ द्वौ । अत्र परिश्रिदिष्टकाविभागं कात्यायनः सूत्रयामास—" धिष्ण्यांश्चिनोत्यष्टेष्टकांल्लोकं-पृणाभिश्चतुःस्रक्तीस्तिरश्चो न्युप्य न्युप्य पृश्न्यश्मा चाग्नीध्रीये सकृन्मंत्रवचनम् । होत्रीये त्रिरेकविंशत्या ब्राह्मणा-च्छंस्ये द्विरेकादशसु षण्मार्जालीये शेषा अष्टेष्टकाः । यावदिष्टकं परिश्रितः परिनिधाय " ( का. श्रौ. सू. १८ । ९३–९९ ) इति । अत्र पृश्न्यश्मेति यजुष्मतीष्टका । त्रिर्द्विःपदे मन्त्रावृत्तिवाचके । अत्र होत्र्यब्राह्मणाच्छंस्यमार्जा-लीयानां त्रयाणां सम्भूय अष्टात्रिंशत्परिश्रितः । शिष्टानां पञ्चानां धिष्ण्यानामष्टाविति चत्वारिंशत् । उभयोर्द्वाभ्या-मूनाऽशीतिर्भवन्ति । आहवनीये तु एकषष्ट्युत्तरद्विशतसंख्याकाः परिश्रितः । ' एकषष्टे ' इति—"तदस्मिन्नधिक-मिति दशान्ताड्डः "—( पा. सू. ५ । २ । ४५ ) इति षष्टिशब्दाड्डः प्रत्ययः ॥ १३ ॥

२३५७

( ये॒ऽथ ) अ॒थ य॒जु॒ष्मत्यः॑ । ( त्यो ) द॒र्भस्त॒म्बो लो॒गेष्ट॒काः पु॒ष्कर॑पर्णꣳ रु॒क्मपु॑रुषौ स्रु॒चौ स्व॑यमातृ॒ण्णा दू॒र्वेष्ट॒का द्वि॒यजू॒ रे॒तः॒सि॒चौ वि॒श्वज्यो॑तिर्ऋत॒व्ये॑ऽअषा॒ढा कू॒र्मो॑ऽउलूखलमुस॒ले॑ऽउ॒खा पञ्च॑ पशु॒शीर्षा॑णि पञ्च॑दशापस्याः पञ्च॑ च्छन्द॒स्याः॑ पञ्चा॒शत्प्रा॑ण॒भृत॒स्ता द्वा॒भ्यां न श॒तं प्र॑थ॒मा चि॒तिः ॥ १४ ॥ ( अर्धप्रपाठकः ॥ कं० ४६ )

---

अथ यजुष्मत्यः–दर्भस्तम्बः, लोगेष्टकाः, पुष्करपर्णम्, रुक्मपुरुषौ, स्रुचौ, स्वयमातृण्णा, दूर्वेष्टका, द्वियजुः, रेतःसिचौ, विश्वज्योतिः, ऋतव्ये, अषाढा, कूर्मः, उलूखलमुसले, उखा, पञ्च पशुशीर्षाणि, पञ्चदशापस्याः, पञ्च च्छन्दस्याः, पञ्चाशत्प्राणभृतः । ता द्वाभ्यां न शतं प्रथमा चितिः ॥ १४ ॥

---

यजुष्मतीनां संख्याम्, चितिषु तद्विभागं च दर्शयति–अथ यजुष्मत्य इति । संख्यां तावत्–" ताः सर्वाः पञ्चभिर्न चत्वारि शतानि " (१९ कण्डिकायां) इति वक्ष्यते । अत्र पञ्चचितिभेदेन यजुष्मतीः परिगणयति–दर्भस्तम्ब इत्यादिना । " कुशस्तम्बमुपदधाति मध्ये तूष्णीं" ( का. श्रौ. सू. १७ । ४६ ) इति तस्योपधानमुक्तम्, अस्य तूष्णीमुपधानात्कथं यजुष्मदिष्टकानाम्ना व्यपदेशः ? सत्यम्; अस्योपरि समन्त्रहोमकरणादस्य यजुष्मत्त्वम् उच्यते । तथा च तं प्रस्तुत्य कात्यायनः–" पञ्चगृहीतेनोद्गृह्णन्नभिजुहोति सजूरब्द इति " ( का. श्रौ. सू. १७ । ४७ ) इति । लोगेष्टका नाम " मा मा हिंसीत् " ( वा. सं. १२।१०२ ) इति प्रत्यृचमुपहिताश्चतस्र इष्टकाः–( का. श्रौ. सू. १७ । ६९ ) । " अपां पृष्ठमसि " ( वा. सं. १३–२ ) इति–मन्त्रेणोपहितं पुष्करपर्णम् ( का. श्रौ. सू. १७ । ७३ ) । " ब्रह्म जज्ञानम् " इति रुक्मः ( का. श्रौ. सू. १७ । ७४ ) । " हिरण्यगर्भः " ( वा. सं. १३ । ४ । ) इति पुरुष उपहितः ( का. श्रौ. सू. १७ । ७९ ) । " अग्नेष्ट्वा " ( वा. सं. १३ । १३ । ) इति मन्त्रेण घृतपूर्णा कार्ष्मर्यमयी स्रुक् ( का. श्रौ. सू. १७ । ८४ ) । " इन्द्रस्य त्वा " ( वा. सं. १३ । १४ ) इति दधिपूर्णौदुम्बरी स्रुक् ( का. श्रौ. सू. १७ । ८९ ) । " ध्रुवाऽसि " ( वा. सं. १३ । १६ ) इति स्वयमातृण्णा ( का. श्रौ. सू. १७ । ८७ ) । " काण्डात्काण्डात् " ( वा. सं. १३ । २० ) इति दूर्वेष्टका ( का. श्रौ. सू. १७ । ९० ) । " यास्ते अग्ने सूर्ये " ( वा. सं. १३ । २२ ) इति मन्त्रेणोपहिता द्वियजुर्नामेष्टका ( का. श्रौ. सू. १७ । ९२ ) । " विराट् स्वराट् " ( वा. सं. १३।२४ ) इति 'रेतःसिचौ' ( का. श्रौ. सू. १७ । ९४ ) । "प्रजापतिष्ट्वा सादयतु" ( वा. सं. १३ । २४ ) इति 'विश्वज्योतिः' ( का. श्रौ. सू. १७ । ९५ ) । " मधुश्च माधवश्च " ( वा. सं. १३ । २५ ) इति द्वे ऋतव्यसंज्ञके ( का. श्रौ. सू. १७ । ९६ ) । " अषाढाऽसि " ( वा. सं. १३ । २६ ) इति 'अषाढा' ( का. श्रौ. सू. १७ । ९७ ) । " मधु वाता ऋतायते " ( वा. सं. १३ । २७–२९ ) इति मन्त्रैरुपहितः 'कूर्मः' ( का. श्रौ. सू. १७ । ९९ ) । " विष्णोः कर्माणि " ( वा. सं. १३ । ३३ ) इति 'उलूखलमुसले' ( का. श्रौ. सू. १७ । १०२ ) । " ध्रुवासि " ( वा. सं. १३ । ३४ ) इति मन्त्रेण उखा ( का. श्रौ. सू. १७ । १०३ ) ।

( २ ) अथ द्वितीया । पञ्चाश्विन्यो द्वेऽऋतव्ये पञ्च वैश्वदेव्यः पञ्च प्राणभृतः पञ्चापस्याऽएकया न विꣳशतिर्वयस्यास्ताऽएकचत्वारिꣳशद्द्वितीया चितिः ॥ १५ ॥

( ३ ) अथ तृतीया । स्वयमातृण्णा पञ्च दिश्या विश्वज्योतिश्चतस्रऽऋतव्या दश प्राणभृतः षट्त्रिꣳशच्छन्दस्याश्चतुर्दश वालखिल्यास्ताऽएकसप्ततिस्तृतीया चितिः ॥ १६ ॥

---

अथ द्वितीया—पञ्चाश्विन्यः, द्वे ऋतव्ये, पञ्च वैश्वदेव्यः, पञ्च प्राणभृतः, पञ्चापस्याः । एकया न विंशतिर्वयस्याः । ता एकचत्वारिंशत् द्वितीया चितिः ॥ १५ ॥

अथ तृतीया—स्वयमातृण्णा, पञ्च दिश्याः, विश्वज्योतिः, चतस्र ऋतव्याः, दश प्राणभृतः, षट्त्रिंशच्छन्दस्याः, चतुर्दश वालखिल्याः । ता एकसप्ततिः तृतीया चितिः ॥ १६ ॥

---

" आदित्यं गर्भम् " ( वा. सं. १३ । ४१ ) इति प्रतिमन्त्रमुपहितानि ' पञ्च पशुशीर्षाणि ' ( का. श्रौ. सू. १७ । ११६ ) । " अपां त्वेमन् " ( वा. सं. १३ । ५३ ) इति प्रतिमन्त्रमुपहिताः ' पञ्चदशापस्याः '—( का. श्रौ. सू. १७ । १२४ ) । गायत्रेणेति प्रतिमन्त्रमुपहिताः ' पञ्च च्छन्दस्याः ' । " अयं पुरो भुवः " ( वा. सं. १३ । ५४ ) इति प्रतिमन्त्रमुपहिताः ' पञ्चाशत् प्राणभृतः ' ( का. श्रौ. सू. १७ । १२९ ) । एवं प्रथमचिता उक्ता यजुष्मतीरिष्टकाः सम्भूय गणयति—द्वाभ्यां न शतं प्रथमा चितिरिति । द्वाभ्यामूनं शतमित्यर्थः ॥ १४ ॥

द्वितीयायां चितौ दर्श्यन्ते इति प्रतिजानीते—अथ द्वितीयेति । " ध्रुवक्षितिर्ध्रुवयोनिः "—( वा. सं. १४ । १ ) इति प्रतिमन्त्रमुपहिताः ' पञ्चाश्विन्यः ' ( का. श्रौ. सू. १७ । १८० ) । " शुक्रश्च शुचिश्च "—( वा. सं. १४ । ६ ) इति ' द्वे ऋतव्ये ' ( का. श्रौ. सू. १७ । १८१ ) । " सजूर्ऋतुभिः "—( वा. सं. १४ । ७ ) इति प्रतिमन्त्रं ' पञ्च वैश्वदेव्यः ' ( का. श्रौ. सू. १७ । १८३ ) । " प्राणं मे "—( वा. सं. १४ । ८ ) इति पञ्चभिर्मन्त्रैरुपहिताः ' पञ्च प्राणभृतः ' ( का. श्रौ. सू. १७ । १८५ ) । " अपः पिन्व " ( वा. सं. १४ । ८ ) इति प्रतिमन्त्रं ' पञ्चापस्याः ' ( का. श्रौ. सू. १७ । १८६ ) । " मूर्द्धा वयः "—( वा. सं. १४ । ९ ) इति प्रतिमन्त्रमुपहिताः एकोनविंशतिर्वयस्याः ( का. श्रौ. सू. १७ । १८७ ) । एवं द्वितीयायां चितौ एकचत्वारिंशद्यजुष्मत्यः ॥ १५ ॥

तृतीयायां " इन्द्राग्नी अव्यथमानाम् "—( वा. सं. १४ । ११ ) इति मन्त्रेणोपहिता ' स्वयमातृण्णेष्टका ' ( का. श्रौ. सू. १७ । १९१ ) । " राज्ञ्यसि "—( वा. सं. १४ । १३ ) इति प्रतिमन्त्रम् ' पञ्च दिश्याः ' ( का. श्रौ. सू. १७ । १९२ ) । " विश्वकर्मा त्वा सादयतु "—( वा. सं. १४ । १४ ) इति मन्त्रेण ' विश्वज्योतिः ' ( का. श्रौ. सू. १८ । १९३ ) । " नमश्च नभस्यश्च "—( वा. सं. १४ । १५ ) इति " इषश्चोर्जश्च "—( वा. सं. १४ । १६ ) इति च ' चतस्र ऋतव्याः ' ( का. श्रौ.

( ग ) अथ चतुर्थी । (र्थ्य) अष्टादश प्रथमाऽअथ द्वादशाऽथ सप्तदश ताः सप्तचत्वारिꣳशच्चतुर्थी चितिः ॥ १७ ॥

( ग ) अथ पञ्चमी । पञ्चासपत्नाश्चत्वारिꣳशद्विराजऽएकया न त्रिꣳशत्स्तोमभागाः पञ्च नाकसदः पञ्च पञ्चचूडाऽएकत्रिꣳशच्छन्दस्याऽअष्टौ गार्हपत्या चितिरष्टौ पुनश्चितिर्ऋतव्ये विश्वज्योतिर्विकर्णी च स्वयमातृण्णा चाश्मा पृश्निर्यश्चितेऽग्निर्निधीयते ताऽअष्टात्रिꣳशꣳ शतं पञ्चमी चितिः ॥ १८ ॥

---

अथ चतुर्थी—अष्टादश प्रथमाः, अथ द्वादश, अथ सप्तदश । ताः सप्तचत्वारिंशत् चतुर्थी चितिः ॥ १७ ॥

अथ पञ्चमी—पञ्चासपत्नाः, चत्वारिंशद्विराजः, एकया न त्रिंशत्स्तोमभागाः, पञ्च नाकसदः, पञ्च पञ्चचूडाः, एकत्रिंशच्छन्दस्याः, अष्टौ गार्हपत्या चितिः, अष्टौ पुनश्चितिः, ऋतव्ये, विश्वज्योतिः, विकर्णी च, स्वयमातृण्णा च, अश्मा पृश्निः, यश्चितेऽग्निर्निधीयते । ता अष्टात्रिंशं शतं पञ्चमी चितिः ॥ १८ ॥

---

सू. १७ । १९४–१९६ ) । "आयुर्मे पाहि" ( वा. सं. १४ । १७ ) इति प्रतिमन्त्रम् 'दश प्राणभृतः'–( का. श्रौ. सू. १७ । १९७ ) । "मा च्छन्दः प्रमा च्छन्दः" ( वा. सं. १४ । १८ ) इति प्रतिमन्त्रम् 'षट्त्रिंशच्छन्दस्याः' ( का. श्रौ. सू. १७।१९८ ) । "मूर्द्धाऽसि राट्"–( वा. सं. १४।२१) इति प्रतिमन्त्रम् 'चतुर्दश वालखिल्याः'–( का. श्रौ. सू. १७ । १९९–२०३ ) । एवं तृतीयस्यां चितौ एकसप्ततिर्यजुष्मत्यः ॥ १६ ॥

चतुर्थ्याम्—"आशुस्त्रिवृत्"–( वा. सं. १४ । २३ ) इति प्रतिमन्त्रमुपहिता अष्टादश स्तोमाख्या इष्टकाः प्रथमा इत्युच्यन्ते । "अग्नेर्भागः"–( वा. सं० १४ । २४ ) इति प्रतिमन्त्रम् 'दश स्पृतः' (का. श्रौ. सू. १७।२११–२२०) । "सहश्च सहस्यश्च"–(वा.सं.१४।२७) इति द्वे ऋतव्ये (का. श्रौ.सू. १७ । २२१ ) । मिलित्वा 'अथ द्वादश' इत्युक्तम् । "एकयाऽस्तुवत"–( वा. सं. १४ । २८) इति प्रतिमन्त्रं सप्तदश सृष्टयः–(का. श्रौ. सू. १७।२२२ ) । एवं चतुर्थ्यां सप्तचत्वारिंशद्यजुष्मत्यः ॥ १७ ॥

पञ्चम्याम्—"अग्ने जातान्"–( वा. सं. १५ । १ ) इति प्रतिमन्त्रं 'पञ्चासपत्नाः'–( का. श्रौ. सू. १७ । २२६ ) । "एवश्छन्दः"–( वा. सं. १५ । ४ ) इति प्रतिमन्त्रं 'चत्वारिंशद्विराजः'–( का. श्रौ. सू. १७।२२८ ) । "रश्मिना सत्याय सत्यं जिन्व"–( वा. सं. १५ । ६ ) इति प्रतिमन्त्रमुपहिताः 'एकोनत्रिंशत्स्तोमभागाः'–( का. श्रौ. सू. १७।२३२) । "राज्ञ्यसि प्राची दिक्"–(वा. सं. १५ । १० ) इति प्रतिमन्त्रं 'पञ्च नाकसदः'–( का. श्रौ. सू. १७ । २३६ ) । "अयं पुरः" ( वा. सं. १५ । १५ ) इति प्रतिमन्त्रं 'पञ्च पञ्चचूडाः'–( का. श्रौ. सू. १७।२३७) । "अग्निर्मूर्द्धा दिवः ककुत्"–( वा. सं. १५ । २० ) इति प्रत्यृचमेकत्रिंशच्छन्दस्याः–( का. श्रौ. सू. १७ । २४० ) ।

( स्ता ) ताः सर्व्वाः पञ्चभिर्न्न चत्वारि शतानि । ततो याः षष्टिश्च त्रीणि च शतान्यहर्लोकास्ताऽअह्नामेव साऽऽप्तिः क्रियतेऽह्नां प्रतिमा ताः षष्टिश्च त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतानि संव्वत्सरस्याहान्यथ याः षट्त्रिꣳशत्पुरीषं तासाꣳ षट्त्रिꣳशी ततो याश्चतुर्व्विꣳशतिरर्धमासलोकास्ता ऽअर्धमासानामेव साऽऽप्तिः क्रियतेऽर्धमासानां प्रतिमाऽथ या द्वादशमासलोकास्ता मासानामेव साऽऽप्तिः क्रियते मासानां प्रतिमा ताऽउ द्वे द्वे सहऽर्तुलोका ऽऋतूनामशून्यतायै ॥ १९ ॥

ताः सर्वाः पञ्चभिर्न चत्वारि शतानि । ततो याः षष्टिश्च त्रीणि च शतानि–अहर्लोकास्ताः । अह्नामेव साऽऽप्तिः क्रियते, अह्नां प्रतिमा । ताः षष्टिश्च त्रीणि च शतानि भवन्ति । षष्टिश्च ह वै त्रीणि च शतानि सम्वत्सरस्याहानि । अथ याः षट्त्रिंशत्पुरीषम्–तासां षट्त्रिंशी । ततो याश्चतुर्विंशतिः–अर्धमासलोकास्ताः । अर्धमासानामेव साऽऽप्तिः क्रियते । अर्धमासानां प्रतिमा । अथ या द्वादशमासलोकास्ताः । मासानामेव साऽऽप्तिः क्रियते, मासानां प्रतिमा । ता उ द्वे द्वे ह ऋतुलोकाः ऋतूनामशून्यतायै ॥ १९ ॥

"अयं सोऽअग्निः "–( वा. सं. १२ । ४७ ) इत्यादिरुपधेया अष्टौ गार्हपत्यादिभिः "येन ऋषयस्तपसा-सत्रम् "–( वा. सं. १९ । ४९ ) इत्यादिभिरुपहिता अष्टौ पुनश्चितिः–( का. श्रौ. सू. १७ । २९४ ) । "तपश्च तपस्यश्च"–( वा. सं. १९ । ९७ ) इति द्वे ऋतव्ये–(का. श्रौ. सू. १७।२९८) । "परमेष्ठी त्वा सादयतु "–( वा. सं. १९।९८ ) इति विश्वज्योतिः–( श्रौ. सू. १७ । २९९ ) । "प्रोथदश्वः"–( वा.सं. १९।६२) इति विकीर्णी–( का. श्रौ. सू.१७।२११ ) । "आयोष्ट्वा सदने"–( वा. सं.१९ । ६३ ) इति मन्त्रेणोपहिता ' स्वयमातृण्णा–( का. श्रौ. सू. १७।२६१ ) । "विमान एष दिवः"–( वा. सं. १७।६४ ) इति द्वाभ्यामाग्नीध्रीये उपहितः "पृश्न्यश्मा" सूत्रं तु " पृश्न्यश्मा चाग्नीध्रीये " ( का. श्रौ. सू. १८ । ९४ ) इत्युदाहृतम् । चित्याग्नेरुपरि अग्निं निदधाति । " सुपर्णोऽसि " ( वा. सं. १७।७२ ) इति " वषट्कारेण " ( का. श्रौ.सू. १८।४७ ) इति सूत्रात् । वषट्कारान्तमन्त्रेण निहितोऽग्निराहवनीय इष्टकेत्यर्थः । एवं पञ्चम्यां चितौ असपत्नाद्या आहवनीयान्ताः आग्नीध्र्योपहितपृश्न्यश्मना सह अष्टात्रिंशदधिकं शतं यजुष्मत्य इष्टकाः॥१८

पञ्चचितिगता यजुष्मतीः सर्वाः सम्भूय गणयति–ताः सर्वाः पञ्चभिर्न चत्वारि शतानीति । पञ्चोन-चतुःशतसंख्याकाः सर्वा यजुष्मत्य इत्यर्थः । एतासामेवाहरर्द्धमासर्तुरूपतां विभज्य दर्शयति–ततो याः षष्टिश्च त्रीणि च शतान्यहर्लोकास्ता इति । तत्र ' याः ' षष्ट्यधिकत्रिशतसंख्याकाः यजुष्मत्य इष्टकाः ता ' अहर्लोकाः ' अहर्लोकप्राप्तिहेतुभूता इत्यर्थः । ता अह्नां प्रतिमाः प्रतिकृतय इति । संवत्सरस्यापि तावन्त्येवा हानि एवं षष्ट्यधिकशतत्रये गते पञ्चत्रिंशदवशिष्टाः । अथ तासां पुरीषमन्तिमं संयोज्य षटत्रिंशत्संपन्ना इत्याह–अथ याः षट्त्रिंशत्पुरीषं तासां षट्त्रिंशीति । " इन्द्रं विश्वा अवीवृधन् "–( वा. सं. १२ । ५६ ) इति मन्त्रेण पुरीषमुपधीयते, अतस्तस्यापि यजुष्मत्त्वाद्यजुष्मतीष्विष्टकासु मध्ये परिगणनमित्यः

१–अत्र कण्डिकायां सर्वत्र ' प्रतिमा ' इति पाठो भाष्यानुसारी साधीयान्प्रतिभाति । एवमुत्तरत्रापि ।

( या॑ऽअु ) अथ या लोकम्पृणाः । ( ० ) मुहूर्त्तलोकास्ता मुहूर्त्तानामेव साऽऽप्तिः क्रियते मुहूर्त्तानां प्रतिमा ता दश च सहस्राण्यष्टौ च शतानि भवन्त्येतावन्तो हि संव्वत्सरस्य मुहूर्तास्तासामेकविंशतिं गार्हपत्यऽउपदधाति द्वाभ्यां नाशीतिं धिष्ण्येष्वाहवनीयऽइतराऽएतावन्ति वै संव्वत्सरस्य रूपाणि तान्यस्यात्राप्तान्युपहितानि भवन्ति ॥ २० ॥

तद्धैके । ( क२ं ) आहवनीयऽएवैताꣳ सम्पदमापिपयिषन्त्यन्ये वाऽएतेऽग्नयश्चिताः किमन्यत्रोपहिता ऽइह सम्पद्येमेति न तथा कुर्य्याद्दश वाऽएतानग्नींश्चिनुतेऽष्टौ धिष्ण्यानाहवनीयं च गार्हपत्यं च तस्मादाहु-

---

अथ या लोकम्पृणाः—मुहूर्त्तलोकास्ताः । मुहूर्त्तानामेव साऽऽप्तिः क्रियते, मुहूर्त्तानां प्रतिमा । ता दश च सहस्राणि, अष्टौ च शतानि भवन्ति । एतावन्तो हि संवत्सरस्य मुहूर्ताः । तासामेकविंशतिं गार्हपत्य उपदधाति । द्वाभ्यां नाशीतिं धिष्ण्येषु । आहवनीय इतराः । एतावन्ति वै संवत्सरस्य रूपाणि—तान्यस्यात्राप्तान्युपहितानि ॥ २० ॥

तद्धैक आहवनीय एवैतां सम्पदमापिपयिषन्ति । अन्ये वा एते, अग्नयश्चिताः किमन्यत्रोपहिता इह सम्पद्येमेति । न तथा कुर्यात् । दश वा एतानग्नींश्चिनुते, अष्टौ धिष्ण्यान्, आहवनीयं च

---

भिप्रायः । ताः षट्त्रिंशतमिष्टकाः विभज्य अर्द्धमासमासाद्यात्मिका इत्याह—ततो याश्चतुर्विंशतिर्यजुष्मत्यः ता अर्द्धमासप्रतिमाः—संख्यासाम्यात् अर्द्धमासात्मना सम्पन्नाः । संवत्सरस्यापि तावन्त एवार्द्धमासाः । अथ या द्वादश विद्यन्ते ता मासप्रतिमाः संख्यासाम्यात् । एवं षट्त्रिंशदिष्टका अर्द्धमासमासात्मना सम्पन्नाः । अथ कथं यजुष्मतीभिरहान्यर्द्धमासान्मासानृतूनिति । यजुष्मतीभिर्ऋतुप्राप्तिरुक्ता तत्राह—ता उ द्वे द्वे सह ऋतुलोकाः इति । 'ताः' द्वादश लोकाः 'द्वे द्वे' सह सम्भूय ऋतुलोकाः संवत्सरेऽपि वर्तन्त इति साम्यात् । किमर्थमेवं सम्पादनमिति तद्दर्शयति—ऋतूनामशून्यताया इति । ऋतूनामिष्टकारूपत्वाभावे तेषां संवत्सरावयवानामप्राप्तिर्भवतीति तात्पर्यम् ॥ १९ ॥

लोकंपृणाभिर्मुहूर्त्तप्राप्तिं संख्यासाम्यादुपपादयति—अथ या लोकम्पृणा मुहूर्तलोकास्ता इति । तासामुपधानप्रदेशसंख्याविशेषं दर्शयति—एकविंशतिं गार्हपत्य उपदधातीति । लोकंपृणानामष्टशताधिकदशसाहस्रसम्मितानां मध्ये गार्हपत्ये एकविंशतिं लोकंपृणा उपदध्यात् । तत्र परिश्रितोऽपि तावत्य इत्युक्तम् । द्वाभ्यां नाशीतिं धिष्ण्येष्विति । अस्मिन्नर्थे सूत्रम्—"परिश्रिदुपधानविभागसमये पूर्वमुदाहृतम् । " धिष्ण्यांश्चिनोत्यष्टेष्टकांल्लोकंपृणाभिश्चतुःस्रक्तीन् " ( का. श्रौ. सू. १८ । ९३ ) इत्यादिकम् । अत्र गार्हपत्यधिष्ण्यानामेकोनशतं लोकंपृणा गताः । शिष्टाः सर्वा आहवनीये उपधेयाः एवं परिश्रिद्यजुष्मतीलोकंपृणाभिः संवत्सरस्य सकलानि रूपाणि, अहोरात्रार्द्धमासमासर्तुमुहूर्त्तात्मकान्युपहितवान् भवतीति चयनस्य संवत्सरात्मकाग्निप्राप्तिः फलमित्युक्तं युक्तमित्यर्थः ॥ २० ॥

अत्र केचनाहवनीय एव सकला अपि लोकम्पृणा उपधेया इत्याहुः, तेषां मतमनूद्य दूषयति—तद्धैक

र्व्विराडग्निरिति दशाक्षरा हि व्विराट् ताग्नु सर्व्वानेकमिवैवाचक्षतेऽग्निरि-त्येतस्य ह्येवैतानि सर्व्वाणि रूपाणि यथा संव्वत्सरस्याहोरात्राण्यर्धमासा मासा ऽऋतव ऽएवमस्यैतानि सर्व्वाणि रूपाणि ॥ २१ ॥

ते ये ह तथा कुर्व्वन्ति । ( न्त्ये ) एतानि हास्य ते रूपाणि बहिर्धा कुर्व्वन्त्यथो पापवस्यसं कुर्व्वन्ति क्षत्त्राय व्विशं प्रतिप्रतिनीं प्रत्युद्या-मिनीमाग्नीध्रीये वाऽअश्मानं पृश्निमुपदधात्यथ तᳪं सम्पश्यति किमु तᳪं सम्पश्यन्नितरा न सम्पश्येद्येनैव निर्ऋतिं पाप्मानमपहते स ऽएकादशः ॥ २२ ॥

---

गार्हपत्यं च । तस्मादाहुर्विराडग्निरिति । दशाक्षरा हि विराट् । ताग्नु सर्वानेकमिवैवाचक्षते । अग्नि-रित्येतस्य ह्येवैतानि सर्वाणि रूपाणि । यथा संवत्सरस्याहोरात्राणि, अर्धमासाः, मासाः, ऋतवः, एवमस्यैतानि सर्वाणि रूपाणि ॥ २१ ॥

ते ये ह तथा कुर्वन्ति—एतानि हास्य ते रूपाणि बहिर्धा कुर्वन्ति । अथो पापवस्यसं कुर्वन्ति । क्षत्त्राय विशं प्रतिप्रतिनीं प्रत्युद्यामिनीम् । आग्नीध्रीये वा अश्मानं पृश्निमुपदधाति । अथ तं सम्पश्यति । किमु तं सम्पश्यन्नितरा न सम्पश्येत् । येनैव निर्ऋतिं पाप्मानमपहते—स एका-दशः ॥ २२ ॥

---

आहवनीय एवैतां सम्पदमिति । लोकम्पृणानां मुहूर्त्तरूपाणां सम्पत्तिमाहवनीयाग्नावेवाप्तुमिच्छन्ति । तत्रैषो-पपत्तिः—' अन्ये वाऽएते ग्नयः ' गार्हपत्यधिष्ण्योपलक्षणाः चिताः लोकम्पृणेष्टकाभिः । अतः अन्यत्रोपहिता इष्टका इहाहवनीयचित्याऽग्नौ किं सम्पश्येम सम्भूय जानीमह इति केषांचिन्मतम् । तस्योत्तरम्—चित्ये यजमानो दशाग्नीन्, गार्हपत्याहवनीयौ, अष्टौ धिष्ण्यान्, चिनुते । अग्निगतदशसंख्याया एव विराडात्मकत्वेनैव वैदिक-प्रसिद्धिं दर्शयति—तस्मादाहुर्विराडग्निरिति । दशाक्षरा हि विराट्, अतोऽग्निर्विराट्रूप इति वदन्ति । यद्येवम् अग्निं चिनुत इत्येकवचनान्ताग्निशब्दव्यवहारः कथमित्याशङ्क्य तदुपपादयति—ताग्नु सर्वानेकमिवैवाचक्षतेऽ-ग्निरिति । एतस्यैकस्यैवाग्नेरितराणि गार्हपत्यादिलक्षणानि रूपाणि यथैकस्य संवत्सरस्य अहोरात्रार्द्धमासमासर्तवो रूपाणि एवमित्यर्थः ॥ २१ ॥

केषांचिन्मते दोषमाह—ते ये ह तथा कुर्वन्तीति । ये तथा आहवनीय एव संख्यासम्पत्तिं कुर्वन्ति—ते ' एतानि ' गार्हपत्यधिष्ण्यलक्षणानि रूपाणि संवत्सरात्मकादग्नेर्बहिर्द्धा कुर्वन्ति । किञ्च पापयुक्तं कर्मैव तत् । यतः ' क्षत्त्राय ' प्रजाभूतां वैश्यजातिं ' प्रतिप्रतिनीं ' प्रतिकोटिभूतां ' प्रत्युद्यामिनीं ' स्पर्द्धिनीं च कुर्वन्ति । अतो मुख्यस्याहवनीयाग्नेः सकाशादेतेषां गार्हपत्यादीनां बहिर्द्धाकरणात्तस्य तैः सह प्रातिकूल्यमेव कृतवन्तो भवन्ति । यद्येवमन्यत्र चित्यानामिष्टकानां सम्भूय परिगणनम्, तर्हि निर्ऋतिदेवत्यानां तिसृणामिष्टकानामप्यत्रैव सन्दर्शनं कर्तव्यमित्यनिष्टमापादयितुं भूमिकामारचयति—आग्नीध्रीये वा अश्मानं पृश्निमुपदधातीति ।

( स्तु ) तदाहुः । कथमु ता ऽअत्र न सम्पश्यतीति न ह्येना ऽअभिजुहोत्याहुत्या वाऽइष्टका सर्व्वा कृत्स्ना भवतीति ॥ २३ ॥

तदाहुः । कथमस्यैता ऽअनतिरिक्ता ऽउपहिता भवन्तीति व्वीर्य्यं वा ऽअस्यैता ऽअनतिरिक्तं वै पुरुषं व्वीर्य्यं स ह वा ऽएतं सर्व्वं कृत्स्नं प्रजापतिं संस्करोति य ऽएवं विद्वानेतत्कर्म कुरुते यो वैतदेवं व्वेद ॥ २४ ॥

इति तृतीयप्रपाठके द्वितीयं ब्राह्मणम् ॥ १०–३–२ ॥ ( ४. ३. )

---

तदाहुः—कथमु ता अत्र न सम्पश्यतीति । न ह्येना अभिजुहोति । आहुत्या वा इष्टका सर्वा कृत्स्ना भवतीति ॥ २३ ॥

तदाहुः—कथमस्यैता अनतिरिक्ता उपहिता भवन्तीति । वीर्यं वा अस्यैताः । अनतिरिक्तं वै पुरुषं वीर्यम् । स ह वा एतं सर्वं कृत्स्नं प्रजापतिं संस्करोति । य एवं विद्वानेतत्कर्म कुरुते । यो वैतदेवं वेद ॥ २४ ॥

---

पृश्न्यश्मा तु यजुष्मतीमध्ये परिगणितः । तस्याग्नीध्रीयेऽग्नावुपधानसूत्रं तूदाहृतम् । " पृश्न्यश्मा चाग्नीध्रीये "—( का. श्रौ. सू. १८।९४ ) इति । ' अथ तं ' तं अश्मानं सम्पश्यति—यजुष्मतीषु मध्ये सम्भूय जानाति । तद्वदितरधिष्ण्यगता अपि लोकम्पृणाः कथं न संपश्येत् । अन्यत्र स्थितानामपि पृश्न्यश्मवत् सम्पश्यत्यन्तर्भावो न विरुध्यत इत्यर्थः । एवमन्तर्नैर्ऋतीनां प्रसक्तिः सम्पद्यते—येनैव निर्ऋतिमिति । येनाग्निना ' निर्ऋतिं पाप्मानमहते ' अपहन्ति । स एकादशोऽग्निः । पूर्वं दशाग्नय उक्ताः तेषामयमेकादशसंख्यापूरक इत्यर्थः ॥ २२ ॥

इत्थं पीठिकां कृत्वा चोदयन्ति—तदाहुः कथमु ता इति । नैर्ऋत्य इष्टकाः उपधेया इति प्राग्विहितम् । " अथातो नैर्ऋतीर्हरन्ति "—(श. प. ७।२।१।१) इति । कात्यायनेनापि " नैर्ऋतीः कृष्णास्तुषपकास्तिस्रः" इति—प्रक्रम्य—" दक्षिणामुखोऽनुपरपृशन् ' असुन्वन्तं ' ( वा. सं. १२।६२ ) इति प्रत्यृचं पराचीः "—( का. श्रौ. सू. १७ । २३–२४ ) इति । तासां कथमत्र न परिगणनमिति चोदनार्थः । तद्दूषयति—न ह्येना जुहोतीत्यादिना । आहुतिभिरिष्टका सम्पाद्यते । नात्राहुतिरस्तीति इष्टकात्वमेव नास्ति कुतस्तासामिष्टकामध्ये परिगणनमित्युत्तरस्यार्थः । " होमेन हीष्टका भवति " इति षष्ठकाण्डादौ प्रतिपादितम् । " यां यामाहुतिमजुहवुः सासैनं पक्वेष्टकाभूत्वाऽप्यपद्यत । तद्यदिष्टात्समभवंस्तस्मादिष्टकाः "—( श. प. ६ । १ । २ । २२ । ) इति ॥ २३ ॥

अथासां नैर्ऋतीनां तिसृणामिष्टकानां सप्तत्यधिकशतोत्तरैकादशसहस्रसम्मितेष्टकाभ्यो नातिरेकेनोपधानं प्रश्नोत्तराभ्यामाह—तदाहुः कथमस्यैता इति । ' अस्य ' चित्याग्नेः ' अनतिरिक्ताः ' ' उपहिताः ' अतिरेकाभावेनोपहिताः कथं भवन्तीति प्रश्नार्थः । वीर्यं वा अस्यैता इति । अस्याग्नेरेतास्तिस्र इष्टकाः 'वीर्यं' वीर्यरूपा इत्यर्थः । वीर्यत्वेऽपि कथमनतिरेकस्तदाह—अनतिरिक्तं वै पुरुषमिति । पुरुषस्य वीर्यम् अनतिरिक्तम् अनधिकं, तस्मादेतासामनतिरेकेणोपधानमेवेत्यर्थः । अथ विदित्वाऽनुष्ठातुः केवलवेदितुश्च फलमाह—स ह वा एतं सर्वं कृत्स्नं प्रजापतिमिति । यः पुरुषः एवं परिश्रिद्यजुष्मतीलोकम्पृणानामुक्तविधां सम्पत्तिं ज्ञात्वा चयनकर्म

प्रजापतिं वै प्रजाः सृजमानम् । ( म्पा ) पाप्मा मृत्युरभिपरिजघान स तपोऽतप्यत सहस्रꣳ संव्वत्सरान्पाप्मानं विजिहासन् ॥ १ ॥

( संस्तु ) तस्य तपस्तेपानस्य । ( स्यै ) एभ्यो लोमगर्तेभ्य ऽऊर्ध्वानि ज्योतीꣳष्यायंस्तद्यानि तानि ज्योतीꣳष्येतानि तानि नक्षत्राणि यावन्त्येतानि नक्षत्राणि तावन्तो लोमगर्ता यावन्तो लोमगर्तास्तावन्तः सहस्रसंव्वत्सरस्य मुहूर्ताः ॥ २ ॥

स सहस्रतमे संव्वत्सरे । सर्व्वोऽत्यपवत स यः सोऽत्यपवतायमेव स व्वायुर्योऽयं पवतेऽथ यं तं पाप्मानमत्यपवतेदं तच्छरीरं कऽउ तस्मै मनुष्यो यः सहस्रसंवत्सरमवरुन्धीत विद्यया ह वाऽएवंवित्सहस्रसंव्वत्सरमवरुन्द्धे ॥ ३ ॥

---

प्रजापतिं वै प्रजाः सृजमानं पाप्मा मृत्युरभिपरिजघान । स तपोऽतप्यत—सहस्रं संवत्सरान् । पाप्मानं विजिहासन् ॥ १ ॥

तस्य तपस्तेपानस्यैभ्यो लोमगर्तेभ्य ऊर्ध्वानि ज्योतींष्यायन् । तद् यानि तानि ज्योतींष्येतानि तानि नक्षत्राणि । यावन्त्येतानि नक्षत्राणि—तावन्तो लोमगर्ताः । यावन्तो लोमगर्तास्तावन्तः सहस्रसंवत्सरस्य मुहूर्ताः ॥ २ ॥

स सहस्रतमे संवत्सरे सर्वोऽत्यपवत । स यः सोऽत्यपवत । अयमेव स वायुर्योऽयं पवते । अथ यं तं पाप्मानमत्यपवत—इदं तच्छरीरम् । क उ तस्मै मनुष्यः—यः सहस्रसंवत्सरमवरुन्धीत । विद्यया ह वा एवं वित्सहस्रसंवत्सरमवरुन्द्धे ॥ ३ ॥

---

करोति, यश्च या ऋचो वेद, स प्रजापतिं चित्याग्निरूपं सर्वं कृत्स्नं संस्करोति नाधिकं न्यूनं किं तु संपूर्णमेव संस्कृतवान् भवतीत्यर्थः ॥ २४ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये दशमकाण्डे चतुर्थेऽध्याये तृतीयं ब्राह्मणम् ॥ ( १०–४–३ ) ॥

उत्तरेणाध्यायद्वयेन अग्निविषया उपासना वक्ष्यते तत्रादावस्मिन् ब्राह्मणद्वये संवत्सररूपाग्नेः तदवयवानां च सहस्ररूपत्वेनोपासनं तत्फलं च प्रदर्श्यते । सहस्रप्रसङ्गं प्रजापतिवृत्तान्तेन प्रस्तौति—प्रजापतिं वै प्रजा इति । पूर्वं प्रजाः सृष्टवन्तं प्रजापतिं पापरूपो मृत्युरभिजघान । 'सः' 'पाप्मानं विजिहासन्' त्यक्तुमिच्छन् । "ओहाक् त्यागे"–( धा. पा. जु. प. ३ ) सनि रूपम् । सहस्रसंवत्सरपर्यन्तं तपस्तेपे ॥ १ ॥

'तस्य' 'तेपानस्य' तपश्चरितवतो रोमकूपेभ्य ऊर्ध्वमुखानि ज्योतींषि निरगच्छन् । 'तानि' इमानि 'नक्षत्राणि' 'प्रजापतेः यावन्तः' 'लोमगर्ताः' 'तावन्तः' सहस्रसंवत्सरात्मकस्य दिनानि लक्षत्रयं षष्टिसहस्राणि ( ३, ६०,००० ) । तन्मुहूर्ताः, कोटिरेका, अष्टौलक्षाणि ( १, ८, ००००० ) ॥ २ ॥

'सः' प्रजापतिः 'सहस्रतमे' पूरणार्थे तमट् प्रत्ययः—" विंशत्यादिभ्यस्तमडन्यतरस्याम् "–( पा.

सर्व्वाऽ एवैता ऽइष्टकाः साहस्रीरुपासीत । रात्रिसहस्रेण रात्रिसहस्रेणै-कैकां परिश्रितᳪं सम्पन्नामुपासीताहःसहस्रेणाहःसहस्रेणैकैकामहर्भा-जमर्धमाससहस्रेणार्धमाससहस्रेणैकैकामर्धमासभाजं माससहस्रेण मासस-हस्रेणैकैकां मासभाजमृतुसहस्रेणऽर्तुसहस्रेणैकैकामृतुभाजं मुहूर्तसहस्रेण मुहूर्तसहस्रेणैकैकां मुहूर्तभाजᳪं संवत्सरसहस्रेण संवत्सरं ते यऽएतमेव-मग्निᳪं संव्वत्सरेण सम्पन्नं व्विदुः सहस्रतमीᳪं हास्य ते कलां व्विदुरथ यऽएनमेवं न व्विदुर्न हास्य ते सहस्रतमीं चन कलां विदुरथ य ऽएवैवं व्वेद यो वैतत्कर्म कुरुते स हैवैतᳪं सर्व्वं कृत्स्नं प्राजापत्यमग्निमाप्नोति यं प्रजापतिराप्नोत्तस्मादेवंवित्तप ऽएव तप्येत यदु ह वाऽएवंवित्तपऽ एव तप्यतऽआ मैथुनात्सर्व्वᳪं हास्य तत्स्वर्गं लोकमभिसम्भवति ॥ ४ ॥

---

सर्वा एवैता इष्टकाः साहस्रीरुपासीत । रात्रिसहस्रेण रात्रिसहस्रेणैकैकां परिश्रितं सम्पन्नामुपासीत । अहःसहस्रेण अहःसहस्रेणैकैकामहर्भाजम् । अर्धमाससहस्रेणार्धमाससहस्रेणैकैकामर्धमासभाजम् । माससहस्रेण माससहस्रेणैकैकां मासभाजम् । ऋतुसहस्रेण ऋतुसहस्रेणैकैकामृतुभाजम् । मुहूर्तसहस्रेण मुहूर्तसहस्रेणैकैकां मुहूर्तभाजम् । संवत्सरसहस्रेण संवत्सरम् । ते य एतमेवमग्निं संवत्सरेण सम्पन्नं विदुः, सहस्रतमीं हास्य ते कलां विदुः । अथ य एनमेवं न विदुः, न हास्य ते सहस्रतमीं चन कलां विदुः । अथ य एवैवं वेद, यो वैतत्कर्म कुरुते—स हैवैतं सर्वं कृत्स्नं प्राजापत्यमग्निमाप्नोति । यं प्रजापतिराप्नोत् । तस्मादेवंवित्तप एव तप्येत । यदु ह वा एवंवित्तप एव तप्यते—आमैथुनात्सर्वं हास्य तत्स्वर्गं लोकमभिसम्भवति ॥ ४ ॥

---

सू. ९ । २ । १६ ) इति । सहस्रसंख्यापूरकेऽन्तिमे संवत्सरे 'सर्वोऽत्यपवत' अत्यक्षरत् बहुसंक्षरित इत्यर्थः । स यः सोऽत्यपवत अयमेव पवमानो वायुरासीत् । अथ यमेवं तं मृत्युरूपं पाप्मानमत्यपवत तदिदं शरीरम् अतिपूतं शरीरमेव तदानीं प्रजापतेर्गतमित्यर्थः । क उ तस्मै मनुष्य इत्यादिना । सहस्रोपासनायाः प्रसङ्गमाह 'यः सहस्रसंवत्सरमवरुन्धीत' जीवन्निति शेषः । तस्मै सहस्रसंवत्सरजीवनाय को वा मनुष्यः शक्नुयात् ?—मनुष्यायुषः परमावधिः शतम्, अतो जीवता मनुष्येण सहस्रसंवत्सराः प्राप्तुमशक्याः । तर्हि तेषां कथं प्राप्तिः तदुपायमाह—विद्यया ह वा इति ॥ ३ ॥

सहस्रसंवत्सरावरोधे मनुष्यस्य विद्यैव साधनं यतः, अतस्तामुपासनामाह—सर्वा एवैता इष्टका इति । सामान्येन सर्वा इष्टकाः साहस्रीः सहस्रसम्मिता इत्युपासीत । विशेषत आह—रात्रिसहस्रेणेति । एकैकां परिश्रितं रात्रिसहस्रेण सम्पन्नां तदात्मिकामुपासीत । अत्रोपासनक्रियया परिश्रिदादीनां रात्रिसहस्राद्यात्मना कार्त्स्न्येन व्याप्तिः सर्वत्र वीप्सार्थः । परिश्रिद्यजुष्मतीलोकम्पृणानां रात्र्यहरर्द्धमासमासर्तुमुहूर्त्तात्मकत्वं ( श. प. १० ४।२ ब्राह्मणे ) प्रागुक्तम् । अहर्भाजमर्द्धमासभाजं मासभाजमृतुभाजमिति पदचतुष्टयस्याप्ययमर्थः—यजुष्मतीषु चतु-

तदेतदृचाऽभ्युक्तम् । ( न ) न मृषा श्रान्तं यदवन्ति देवा ऽइति न हैवैवंविदुषः किंचन मृषा श्रान्तं भवति तथो हास्यैतत्सर्व्वं देवा ऽअवन्ति ॥ ५ ॥

इति तृतीयप्रपाठके तृतीयं ब्राह्मणम् ॥ १०-३-३ ॥ ( ४. ४. ) ॥

अथादेशा ऽउपनिषदाम् । (म्वा) व्वायुरग्निरिति ह शाकायनिन ऽउपासतऽआदित्योऽ ग्निरित्यु हैकऽआहुरथ ह स्माह श्रौमत्यो वा हालिङ्गवो वा व्वायुरेवाग्निस्तस्माद्यदेवाध्वर्य्युरुत्तमं कर्म करोत्यथैतमेवाप्येतीति ॥ १ ॥

---

तदेतदृचाऽभ्युक्तम्-" न मृषा श्रान्तं, यदवन्ति देवाः "-( ऋ. सं. २ । ४ । २२ । ३ ) इति । न हैवैवं विदुषः किंचन मृषा श्रान्तं भवति । तथो हास्यैतत्सर्वं देवा अवन्ति ॥ ५ ॥

अथादेशा उपनिषदाम्-वायुरग्निरिति ह शाकायनिन उपासते । आदित्योऽग्निरित्यु हैक आहुः । अथ ह स्माह श्रौमत्यो वा हालिङ्गवो वा-वायुरेवाग्निः । तस्माद्यदेवाध्वर्युरुत्तमं कर्म करोति-अथैतमेवाप्येतीति ॥ १ ॥

---

रूनचतुःशतसंख्याकास्विष्टकासु मध्ये षष्ट्युत्तरत्रिशतसंख्याका अहोरूपाः । चतुर्विंशतिरर्द्धमासरूपाः । द्वादशावशिष्टा मासरूपाः । ता एव द्वे द्वे भूत्वा षड् ऋतुरूपाः । तदभिप्रायेण अहर्भाजमिष्टकामहःसहस्रेण सम्पन्नामुपासीत । एवमर्द्धमासमाजमित्यादि व्याख्येयम् । मुहूर्त्तभाजमिति लोकम्पृणाभिप्रायम् । संवत्सरसहस्रेण संवत्सरमिति । समष्टिरूपचित्याग्निविषयम् । उपासनाफलमाह-य एतमेवमग्निं संवत्सरेण सम्पन्नं विदुरिति । सहस्रतमींकलां पापाभिभवहेतुभूतामस्याग्निरूपप्रजापतेः कलां विदुर्जानन्ति । येषां तादृशज्ञानाभावस्तेषां पापजयहेतुभूतोपायदर्शनाभाव इत्याह-अथ य एनमेवमिति । सर्वेषु व्यापारेष्वपि एतदुपासनं कर्तुं युज्यत इति वक्तुम् । आमैथुनादिति । मैथुनान्तव्यापारेषु सर्वेष्वपि एतत्तपः अग्नेस्तदवयवानां च सहस्रात्मकत्वरूपं करोति तस्माच स्वर्गलोकप्राप्तिर्भवतीत्यर्थः ॥ ४ ॥

विदुषः किञ्चिदपि व्यापारमात्रं व्यर्थं न भवतीत्यर्थे मन्त्रं संवादयन्ति-तदेतदृचाऽभ्युक्तं न मृषेति । अत्र "न मृषा श्रान्तं यदवन्ति देवाः" इत्येतावान् पाद एव संवादः । उत्तरस्मिन्पादत्रये लोपामुद्राऽगस्त्यप्रतिपादकानि । अश्नवाव जयाव अभ्यजीवावेति त्रीणि द्विवचनान्तानि पदानि प्रयुक्तानि । तान्यत्र न सङ्गच्छन्त इति पाद एव संवादत्वेन पठितः । पादस्यार्थमाह-न हैवैवं विदुष इति । एवं जानानस्य पुरुषस्य किञ्चन किञ्चिदपि न मृषा श्रान्तं व्यर्थः श्रमो न भवति । एवं विद्वान् यः कुरुते तत्सर्वं यद्यस्मात् देवा अवन्ति ॥ ५ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये दशमकाण्डे चतुर्थेऽध्याये चतुर्थं ब्राह्मणम् ॥ ( १० । ४ । ४ ) ॥

एवं प्रजापत्यात्मकसमष्टिरूपोपासनामभिधाय व्यष्टिरूपाग्निविषयामुपासनां वक्तुं प्रतिजानीते-अथादेशा उपनिषदामिति । 'अथ' अनन्तरम् 'उपनिषदां' रहस्यार्थानाम् 'आदेशाः' उपदेशाः वक्ष्यन्त इत्यर्थः । तत्र वाय्वादित्यरूपेणाग्न्युपासनं ससम्प्रदायमाह-वायुरग्निरिति । शाकायनिन आचार्याः चित्याग्निं वायु-

शाट्यायनिरु ह स्माह । संव्वत्सरऽएवाग्निस्तुस्य व्वसन्तः शिरो ग्रीष्मो दक्षिणः पक्षो व्वर्षाऽ उत्तरः शरदृतुर्म्मध्यमात्मा हेमन्तशिशिरावृतू पुच्छं प्रतिष्ठा व्वागग्निः प्राणो व्वायुश्चक्षुरादित्यो मनश्चन्द्रमाः श्रोत्रं दिशऽ आपो मिथुनं तपः प्रतिष्ठा मासाः पर्व्वाण्यर्धमासा नाड्योऽहोरात्राणि रजतसुवर्णानि पत्राणि सऽएवं देवानप्येतीति संव्वत्सरोऽग्निरित्यु हैव विद्यादेतन्मयो भवतीति त्वेव विद्यात् ॥ २ ॥

( त्रे ) चेलकऽउ ह स्माह शाण्डिल्यायनः । ( ऽ ) इमऽएव लोकास्तिस्रः स्वयमातृण्णावत्यश्चितयो यजमानश्चतुर्थी सर्व्वे कामाः पञ्चमीमांश्च-लोकान्सꣳस्कुर्व्वऽआत्मानं च सर्व्वाश्च कामानित्येव विद्यादिति ॥ ३ ॥

इति तृतीयप्रपाठके चतुर्थं ब्राह्मणम् ॥ १०—३—४ ॥ ( ४. ९. ) ॥

इति चतुर्थोऽध्यायः समाप्त ॥ १०—४ ॥

---

शाट्यायनिरु ह स्माह—सम्वत्सर एवाग्निः—तस्य वसन्तः शिरः, ग्रीष्मो दक्षिणः पक्षः, वर्षा उत्तरः, शरदृतुर्मध्यम्, आत्मा हेमन्तशिशिरावृतू । पुच्छं प्रतिष्ठा, वागग्निः, प्राणो वायुः, चक्षुरादित्यः, मनश्चन्द्रमाः, श्रोत्रं दिशः, आपो मिथुनम्, तपः प्रतिष्ठा, मासाः पर्वाणि, अर्धमासा नाड्यः, अहोरात्राणि रजतसुवर्णानि पत्राणि, स एवं देवानप्येतीति । सम्वत्सरोऽग्निः—इत्युहैव विद्यात्—एतन्मयो भवतीति त्वेव विद्यात् ॥ २ ॥

चेलक उ ह स्माह शाण्डिल्यायनः—इम एव लोकास्तिस्रः स्वयमातृण्णावत्यश्चितयः, यजमान-

---

वग्निरित्युपासते । 'एके' केचन आदित्योऽग्निरिति । अथ वायुरूपत्वेनाग्न्युपासनं सयुक्तिकं प्रदर्शयति—अथ ह स्माहेति । वा—शब्दौ समुच्चयार्थौ । श्रौमत्य आचार्यः, हालिङ्गवो नामाचार्यश्च वायुरेवाग्निरित्याह । एवशब्दोऽन्योपाध्युपासनानिरासार्थः । यतो वायुरेवाग्निः तस्मादध्वर्युर्यदा उत्तमं यज्ञसमाप्तिलक्षणं कर्म करोति तदैतमेव वायुमप्येति । तथाहि समिष्टयजुर्होमे " देवा गातुविदो गातुं वित्त्वा गातुमित । मनसस्पते "—( वा. सं.२।२१) इति—मन्त्रे "यज्ञं स्वाहा वाते धाः स्वाहा" इति वायौ धारणमुक्तम्, अतो वायुरेवाग्निरित्यर्थः॥ १॥

संवत्सरे शिरःपक्षपुच्छावयवाग्न्युपासनां दर्शयति—शाट्यायनिर्ह स्माहेति । संवत्सरेऽपि पञ्चावयवान् दर्शयति—तस्य वसन्तः शिर इति । संवत्सरात्मकस्याग्नेर्वाक्प्राणादीनि दर्शयति—वागग्निरिति । बाह्योऽग्निरेव तस्य वाक्त्वेन सम्पन्नः, वायुः प्राणत्वेन, आदित्यश्चक्षुरात्मना, चन्द्रमा मनोरूपेण, दिशः श्रोत्रात्मना, आप एव मिथुनं प्रजननम्, तद्रूपेण तपः प्रतिष्ठात्मना, मासाः पर्वात्मना, अर्द्धमासा एव नाड्यात्मना, अहोरात्राणि रजतसुवर्णानि पत्राणि, पक्षिरूपत्वेन दर्शनात् पत्राणीत्युक्तम । " अहरेषा सुवर्णाऽमत्रद्रजता रात्रिः "—इति तैत्तिरीयकश्रुतेः । एवमग्न्यादीन् देवान् स संवत्सरोऽप्येति युनक्तीति हेतोः 'संवत्सरः' इत्येवाग्निरित्युपासनीयः। तत्फलमाह—एतन्मयो भवतीति । त्वेव विद्यात्—इति श्रुतिः । परेषामग्न्युपासनाफलमाविष्करोति । अग्नेः पूर्वं शिरःपक्षपुच्छरूपावयवाः सन्तीति संवत्सरेऽपि तथैव दर्शिताः ॥ २ ॥

इदानीं प्रकारान्तरेण पञ्चचितिरूपसम्पत्ति तथैवोपासनां दर्शयति—चेलक उ ह स्माह शाण्डिल्यायन इति ।

श्चतुर्थी, सर्वे कामाः पञ्चमी । इमांश्च लोकान्त्संस्कुर्वे । आत्मानं च, सर्वांश्च कामानित्येव विद्यादिति ॥ ३ ॥

---

शाण्डिल्यपुत्रश्चेलकोनामर्षिरेवमाह—' इमे ' त्रयो लोकाः ' एव ' अग्नेः स्वयमातृण्णावत्यः—तिस्रश्चितयः स्वयमातृण्णानाम सहजच्छिद्रयुक्तपाषाणेष्टकाः । तांश्च तिसृषु प्रथममध्यमोत्तमासु चितिषु उपधीयन्ते । ' यजमानः ' कर्ता चतुर्थी चितिः । सर्वे कामाः पञ्चमी चितिः । एवमिमांस्त्रीँल्लोकान् सर्वान् कामान्, आत्मानं, पञ्चचित्यात्मना संस्कुर्वे इति ध्यायेदिति ॥ ३ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये
दशमकाण्डे चतुर्थेऽध्याये पंचमं ब्राह्मणम् ॥ ( १०—४—५ ) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं,
सप्ताब्धीन्पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटं च ॥
धान्याद्रिं धन्यजन्मा तिलभवमतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान्गुडकृतमजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणजमनृणः शार्करं चार्कतेजा,
रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये
दशमकाण्डे चतुर्थोऽध्यायः समाप्तः ॥ ( १०—४ ) ॥



# अथ पञ्चमेऽध्याये प्रथमं ब्राह्मणम् । तृतीयप्रपाठके च पञ्चमं ब्राह्मणम् ।

तस्य वाऽएतस्याग्नेः ( र्व्वा ) ग्वागेवोपनिषद्वाचा हि चीयतऽऋचा यजुषा साम्नेति नु दैव्याऽथ यन्मानुष्या व्वाचा हेतीदं कुरुतेतीदं कुरुतेति तद्धु ह तया चीयते ॥ १ ॥

सा वाऽएषा व्वाक्त्रेधा व्विहिता । ( तचों ) ऋचो यजूंषि सामानि तेनाग्निस्त्रेधा व्विहित ऽएतेन हि त्रयेण चीयतेऽथ हैवं त्रेधा व्विहितऽइत्थं ह त्वेवापि त्रेधा व्विहितो यदस्मिंस्त्रेधा व्विहिताऽइष्टका ऽउपधीयन्ते पुन्नाम्न्य स्त्रीनाम्न्यो नपुंसकनाम्न्यस्त्रेधा व्विहितान्युऽएवेमानि पुरुषस्याङ्गानि पुन्नामानि स्त्रीनामानि नपुंसकनामानि ॥ २ ॥ ( शतम् ६४०० )

---

तस्य वा एतस्याग्नेर्वागेवोपनिषद् । वाचा हि चीयते, ऋचा, यजुषा, साम्नेति नु दैव्या । अथ यन्मानुष्या वाचा हेति । इदं कुरुतेति, इदं कुरुतेति । तद्धु ह तया चीयते ॥ १ ॥

## त्रयीमयादित्याग्न्युपासनं ब्राह्मणम् ।

सा वा एषा वाक् त्रेधा विहिता—ऋचः, यजूंषि, सामानि । तेनाग्निस्त्रेधा विहितः । एतेन हि त्रयेण चीयते । अथ हैवं त्रेधा विहितः—इत्थं ह त्वेवापि त्रेधा विहितः । यदस्मिंस्त्रेधा विहिता इष्टका उपधीयन्ते—पुन्नाम्न्यः, स्त्रीनाम्न्यः, नपुंसकनाम्न्यः । त्रेधा विहितान्यु एवेमानि पुरुषस्याङ्गानि—पुन्नामानि, स्त्रीनामानि, नपुंसकनामानि ॥ २ ॥

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

पूर्वम् " आदित्योऽग्निरित्युहैक आहुः " ( श. प. १० । ४ । ६ । १ ) इत्युक्तं तत्र त्रयीमयादित्येऽग्न्युपासनाऽस्मिन् ब्राह्मणे वक्ष्यते । अथ तस्याग्नेस्त्रयीमयत्वं दर्शयति—तस्य वा एतस्याग्नेरिति । ' वागेवोपनिषद् ' रहस्यं स्वरूपम् । यतोऽग्निः ऋग्यजुः—सामरूपया दैव्या ' वाचा ' चीयते, ' मानुष्या ' मनुष्यसम्बन्धिन्या ' वाचा ' अपि चीयते । तामेवाभिनयेनाह—इतीदं कुरुतेति ' इति इदं कुरुतेति ' ॥ १ ॥

वाचस्त्रैविध्यादग्निरपि तया चितस्त्रिविध इत्याह—सा वा एषा वाक् त्रेधा विहितेति । तेनाग्निस्त्रेधा विहितः अग्निवायुसूर्यात्मनेत्यर्थः । अथ हैवं त्रेधा विहित इत्यनेन वेदत्रयद्वाराऽग्नेरुक्तत्रैविध्योपसंहारः । इत्थं ह त्वेवापि त्रेधा विहित इत्यनेन वक्ष्यमाणत्रैविध्यप्रतिज्ञा । ' यत् ' यस्मात् ' अस्मिन् ' अग्नौ ' त्रेधा विहिता इष्टका उपधीयन्ते ' । ' पुंनाम्न्यः ' पुँल्लिङ्गशब्दाभिधेयाः स्तोमाख्याः । " स्तोमानुपदधाति "—

सो॓ऽयमात्मा त्रेधा व्विहित ऽएव । सो॓ऽनेन त्रेधा व्विहितेनात्मनैतं त्रेधा व्विहितं दैवममृतमाप्नोति ता ऽउ सर्व्वा ऽइष्टका ऽइत्येवाचक्षते नेष्टक ऽइति नेष्टकमिति व्वाचो रूपेण व्वाग्घ्येवैतत्सर्व्वं यत्स्त्री पुमान्नपुꣳसकं व्वाचा ह्येवैतत्सर्व्वमाप्तं तस्मादेनाऽअङ्गिरस्वद्ध्रुवा सीदेत्येव सर्व्वाः सादयति नाङ्गिरस्वद्ध्रुवः सीदेति नाङ्गिरस्वद्ध्रुवꣳ सीदेति व्वाचꣳ ह्येवैताꣳ सꣳस्कुरुते ॥ ३ ॥

सा या सा व्वागसौ स ऽआदित्यः । स ऽएष मृत्युस्तद्यत्किं चार्व्वाचीनमादित्यात्सर्व्वं तन्मृत्युनाऽऽप्तꣳ स यो हैनमतोऽर्व्वाचीनं चिनुते

---

सोऽयमात्मा त्रेधा विहित एव । सोऽनेन त्रेधा विहितेनात्मनैतं त्रेधा विहितं दैवममृतमाप्नोति । ता उ सर्वा इष्टका इत्येवाचक्षते–नेष्टक इति, नेष्टकमिति । वाचो रूपेण । वाग्घ्येवैतत्सर्वम्–यत् स्त्री, पुमान्, नपुंसकम् । वाचा ह्येवैतत्सर्वमाप्तम् । तस्मादेना " अङ्गिरस्वद्ध्रुवा सीद " ( वा. सं. १२ । ५३ ) इत्येव सर्वाः सादयति । नाङ्गिरस्वद्ध्रुवः सीदेति । नाङ्गिरस्वद्ध्रुवं सीदेति । वाचं ह्येवैतां संस्कुरुते ॥ ३ ॥

सा या सा वाक्–असौ स आदित्यः । स एष मृत्युः । तद् यत्किंचार्वाचीनमादित्यात्–सर्वं तन्मृत्युनाऽऽप्तम् । स यो हैनमतोऽर्वाचीनं चिनुते–मृत्युना हैनं स आप्तं चिनुते । मृत्यवे ह स

---

( श. प. । ८ । ४ । १ । ४–६ ) इति श्रुतेः । ' स्त्रीनाम्न्यः ' स्त्रीलिङ्गशब्दाभिधेयाः अषाढाच्छन्दस्याविकर्ण्याद्याः । ' नपुंसकनाम्न्यः ' नपुंसकशब्दाभिधेयाः पशुशीर्षाख्याः पञ्च । " पशुशीर्षाण्युपदधाति "–( श. प. । ७ । ५ । २ । १ ) इति श्रुतेः । यथा चित्याग्नेरवयवभूता इष्टका लिङ्गत्रयशब्दाभिहिताः–एवं पुरुषस्याङ्गानि लिङ्गत्रययुक्तशब्दाभिधेयानि । यथा कर्णः, पाणिः, पादः, इति पुँल्लिङ्गशब्दाः । नासिका, जङ्घा, इति स्त्रीलिङ्गशब्दाः । लोचनं, चक्षुः, शिरः, इति नपुंसकलिङ्गशब्दाः ॥ २ ॥

' सोऽयमात्मा ' पुरुषस्त्रेधाविहितः, लिङ्गत्रयशब्दाभिहिताङ्गयुक्तः । अनेन त्रेधाविहितेनात्मना त्रिविधेष्टकाचितेन त्रेधा विहितम् अग्निवायुसूर्यात्मना त्रिविधं दैवममृतमादित्यमाप्नोति तद्यदीष्टकानां स्त्रीपुन्नपुंसकलिङ्गशब्दमभिधेयत्वं तर्हि तथैव कथमिष्टकाशब्दस्य लिङ्गत्रयव्यवहारो नास्तीत्याशङ्क्य वाग्रूपत्वेन परिहरति–ता उ सर्वा इष्टका इत्येवाचक्षत इति । स्त्रीलिङ्गशब्देनैव व्यवह्रियन्ते न तु पुन्नपुंसकलिङ्गाभ्यामिति । तदनुवदति–नेष्टक इति, नेष्टकमिति । किमर्थमेवं ' वाचो रूपेण ' वाचः स्त्रीलिङ्गत्वं स्फुटम् । सादनमन्त्रेऽपि स्त्रीलिङ्गत्वमेवेत्याह–तस्मादेना अङ्गिरस्वद् ध्रुवासीदेति । ध्रुवशब्दात् स्त्रियां टाप् प्रत्ययः । पुंनपुंसकलिङ्गतां ध्रुवपदेन संयोज्य प्रदर्शयति निराकरणाय–नाङ्गिरस्वद् ध्रुवः सीदेति । नाङ्गिरस्वद् ध्रुवꣳ सीदेति । ध्रुव इति पुँल्लिङ्गत्वं ध्रुवमिति नपुंसकत्वम् इत्येवमग्नेर्वाग्रूपत्वमुक्तम् ॥ ३ ॥

वाच आदित्यरूपत्वं चाह–सा या सा वागसौ स आदित्य इति । ' यत्किञ्चादित्यादर्वाचीनम् ' अध-

मृत्युना हैनᳬं स ऽआप्तं चिनुते मृत्यवे ह स ऽआत्मानमपिदधात्यथ य ऽएनमत ऽऊर्ध्वं चिनुते स पुनर्मृत्युमपजयति विद्यया ह वाऽअस्यै-षोऽत ऽऊर्ध्वं चितो भवति ॥ ४ ॥

सा वाऽएषा वाक्त्रेधा विहिता। (तृचो) ऋचो यजूᳬंषि सामानि मण्ड-लमेवऽर्चोऽर्चिः सामानि पुरुषो यजूᳬंष्यथैतदमृतं यदेतदर्चिर्दीप्यतऽइदं तत्पुष्करपर्णं तद्यत्पुष्करपर्णमुपधायाग्निं चिनोत्येतस्मिन्नेवैतदमृतऽऋ-ङ्मयं यजुर्मयᳬं साममयमात्मानᳬं सᳬंस्कुरुते सोऽमृतो भवति ॥ ५ ॥

इति तृतीयप्रपाठके पञ्चमं ब्राह्मणम् ॥ १०–३–५ ॥ ( ५. १. ) ॥

---

आत्मानमपि दधाति । अथ य एनमत ऊर्ध्वं चिनुते–स पुनर्मृत्युमपजयति । विद्यया ह वा अस्यैषोऽत ऊर्ध्वं चितो भवति ॥ ४ ॥

सा वा एषा वाक् त्रेधा विहिता–ऋचः,यजूंषि, सामानि । मण्डलमेवऽर्चः, आर्चिः सामानि, पुरुषो यजूंषि, अथैतदमृतम्–यदेतदार्चिर्दीप्यते । इदं तत्पुष्करपर्णम्–तद् यत्पुष्करपर्णमुपधायाग्निं चिनोति–एतस्मिन्नेवैतदमृतऽऋङ्मयम्, यजुर्मयम्, साममयमात्मानं संस्कुरुते । सोऽमृतो भवति ॥ ५ ॥

---

स्तनं भूतजातं तत्सर्वं मृत्युनाऽऽप्तम् । न हि सूर्यप्रकाशानाक्रान्तं वस्त्वस्ति । अतः सूर्यादर्वाचीनं चिनुते । मृत्युनाऽऽक्रान्तमेव चिचिन्वन्यजमानः स्वात्मानमपि मृत्यवे अर्पितवान् भवति । यत एवम्, अतः सूर्यादूर्ध्वं चयने मृत्युकर्तृकाक्रमणस्याभावात् पुनर्मृत्युजयः फलं भवति । तत्कथं सूर्यादूर्ध्वं चयनमसम्भवपरिहतत्वा-दित्याशंक्य तत्राप्युपायं दर्शयति–विद्यया ह वा इति । यद्यपि वस्तुस्थित्या आदित्यस्योपरि चयनाभावस्त-थापि ज्ञानेनोर्ध्वचयनं सम्पादयितुं शक्यते । अतस्तथोपासनायां पुनर्मृत्युजयः फलं भवतीत्यर्थः ॥ ४ ॥

यदुक्तं विद्यया अस्यादित्यस्योर्ध्वमग्निश्चितो भवतीति तद्विशदयति–सा वा एषा वाक् त्रेधा विहितेति । सूर्यमण्डले तावत्त्रीणि विद्यन्ते ज्योतिर्मयमण्डलम्, अर्चींषि, तदन्तर्वर्ती पुरुषः, इति । चयनेऽपि वेदत्रय-मस्ति तत्र 'मण्डलमेव' ऋग्रूपत्वेनोपासनीयम्, 'आर्चिः' एव सामरूपत्वेन, अन्तर्वर्त्ती अग्निपुरुष एव यजूरूप-त्वेन । 'आर्चिर्दीप्यते ' इति यत् तद् ' एतदमृतं ' ' तत् पुष्करपर्णं ' । यतः " अपां पृष्ठमसि "–( वा. सं. । १३ । २ । ) इति मन्त्रेण प्रथमं पुष्करपर्णमुपधाय तस्योपर्यग्नेश्चयनम् । अतस्तदात्मकेऽमृते-ऽर्चिर्मये आदित्येऽयमुपासिता स्वीयमात्मानं वेदत्रयरूपं चित्याग्निरूपं संस्कुर्वन् ' अमृतः ' मृत्युबाधारहितः सूर्यात्मको भवतीत्यर्थः ॥ ५ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये दशमकाण्डे पञ्चमेऽध्याये प्रथमं ब्राह्मणम् ॥ ( १०–५–१ ) ॥

य॒दे॒तन्म॒ण्ड॒लं त॒पति । त॒न्म॒ह॒दु॒क्थं ता॒ऽ ऋच॒ः स॒ऽऋ॒चां॒ लो॒को॒ऽथ य॒दे॒त॒र्चि॒र्दी॒प्य॒ते त॒न्म॒हा॒व्र॒तं त॒ानि सा॒मानि स सा॒म्नां लो॒को॒ऽथ य॒ऽए॒ष॒ऽए॒त॒स्मिन्म॒ण्ड॒ले पु॒रु॒ष॒ः सो॒ऽग्नि॒स्ता॒नि य॒जूꣳषि स य॒जु॒षां लो॒कः ॥ १ ॥

## मण्डलपुरुषोपासनं ब्राह्मणम् ।

यदेतन्मण्डलं तपति—तन्महदुक्थम्, ता ऋचः, स ऋचां लोकः । अथ यदेतदर्चिर्दीप्यते तन्महाव्रतं तानि, तानि सामानि, स साम्नां लोकः । अथ य एष एतस्मिन्मण्डले पुरुषः—सोऽग्निः, तानि यजूंषि, स यजुषां लोकः ॥ १ ॥

अथ मण्डलब्राह्मणं व्याख्यायते—सूर्यमण्डलार्चिःपुरुषत्रयस्याधिदैवाधियज्ञाध्यात्मपरत्वेनार्थ उच्यते । तत्राधिदैवमयमर्थः—चयनगतमहदुक्थमहाव्रताग्नित्रयं क्रमेण मण्डलार्चिःपुरुषरूपत्वेनोपासनीयमिति । अधियज्ञमयमर्थः—चयनगतरुक्मपुष्करपर्णहिरण्मयपुरुषाणां मण्डलादित्रयरूपत्वेनोपासनमिति । अध्यात्ममपि मण्डलादित्रयमेव दक्षिणाक्षिगतशुक्लकृष्णवर्णतदन्तर्वर्तिपुरुषाणां मण्डलादित्रयरूपत्वेनोपासनमिति । लोचने हि शुक्लरूपं

## अथ पण्डितमण्डनं नाम मंडलब्राह्मणभाष्यम् ॥

विचार्य सर्ववेदांतैः संचार्य हृदयांबुजे । प्रचार्य सर्वलोकेषु ह्याचार्यं शंकरं भजे ॥ १ ॥
पद्मपादो विश्वरूपो हस्तामलकत्रोटकौ । अद्वैतदीक्षागुरवः साचार्याः पंच पांतु माम् ॥ २ ॥
नारायणेन्द्रपादाब्जं विद्येंद्रचरणांबुजम् । नृसिंहेंद्रपदांभोजं कैवल्येन्द्रपदांबुजम् ॥ ३ ॥
एतानि पद्मरत्नानि चत्वारि हृदयांबुजे । मामकीने प्रकाशंतां भुक्तिमुक्तिप्रसिद्धये ॥ ४ ॥
नारायणेंद्रपादाब्जमिलिंदीकृतमानसः । श्रीशाश्वतेंन्द्रो जयति राजहंसापराभिधः ॥ ५ ॥
योगपट्टांतरं चास्य राजहंससरस्वती । षड्दर्शनी प्रवक्ताऽयमिति यं जानते बुधाः ॥ ६ ॥
माध्यंदिनानां शाखायां पौरुषेयत्ववर्जिते । चतुर्दशमहाकांडे ब्राह्मणे तु शताध्वनि ॥ ७ ॥
त्रिलोकीनायकाकंठगीयमानयशस्तुतेः । सांगैर्वेदैः सहोपांगैर्गीयमानयशस्तुतेः ॥ ८ ॥
त्रिलोकीनयनाब्जस्य त्रयीमूर्तेर्महौजसः । आंगनाबालगोपालप्रसिद्धस्यामितद्युतेः ॥ ९ ॥
स्वरूपज्ञापकं पुण्यं मंडलं ब्राह्मणं शुभम् । वर्तते यत्तदधुना पदवाक्यप्रमाणतः ॥ १० ॥
व्याख्यायते यथाशक्ति यथाबुद्धि यथायथम् । मुहुर्मुहुर्विचार्यैतत्सूर्यभक्तिधुरंधरैः ॥ ११ ॥
व्याक्यार्थज्ञानपूर्वो हि वेदपाठो महाफलः । वाक्यार्थं मनसा ध्यायन् देवतामुपतिष्ठते ॥ १२ ॥
यत्तस्य पुण्यमाहात्म्यं शेषो वक्तुं न पार्यते । यत एवं ततो विप्रैर्वाक्यार्थः सुविचार्यताम् ॥ १३ ॥

तथाच सामब्राह्मणं—“ यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति ” ( छां. उ. १ । ३ । १ । १० ) इति अस्य ब्राह्मणस्य मंडलब्राह्मणमिति नामधेयम् । यतो मध्याह्नसंध्यागायत्रीजपांते “ विभ्राडित्यनुवाकपुरुषसूक्तशिवसंकल्पमंडलब्राह्मणैरादित्यमुपस्थाय ” ( का. त्रिकं. स्ना. सू. २ । ५ ) इति सूत्रसिद्धं ततो मंडलब्राह्मणमादित्योपस्थाने विनियुक्तं इत्यप्यावेदितमस्माभिः । नामार्थस्तु—मण्डलस्तावकं ब्राह्मणं मंडलब्राह्मणमिति । शाकपार्थिवादिगणपाठात् उत्तरपदलोपेन विगृह्यते । औपलक्ष्यणेनार्चिःपुरुषस्तावकं इत्यपि

कृष्णरूपं चास्ति तदन्तर्वर्ती पुरुषश्च दृश्यते । एतत्प्रसङ्गेन सव्यलोचनगतपुरुषस्य मिथुनत्वसम्पादनम् । अथ पुरुषस्य मृत्युत्वमुपजीव्य मृत्युगतैकत्वबहुत्वान्तिकत्वदूरत्वमीमांसा । तस्यैव पुरुषस्य बहुधोपासनं तत्फलमिति मण्डलब्राह्मणप्रतिपादितार्थसंग्रहः । अक्षरार्थो व्याख्यायते--**यदेतन्मण्डलं तपति तन्महदुक्थमिति** । यदुक्तं तन्मण्डलत्वेन ध्येयम् । एवं महाव्रतचित्याग्नी अर्चिःपुरुषात्मना ध्येयौ, वेदत्रयस्याग्निवायुसूर्यात्मकत्वेन त्रयो वेदा देवतानीति वक्तुं प्रयुज्यते । अतो मण्डलस्य बृहदुक्थद्वारा ऋग्वेदात्मकत्वोपासनमिति । उत्तरत्राधियज्ञपर्याये, ऋक्सामादयो यज्ञावयवरूपविशेषा इति । नीध्यात्माधियज्ञयोः स्तेषामुपास्यार्थता[1] । **तन्महदुक्थं ता ऋचः स ऋचां लोक इति** । उक्थस्य, ऋक्संघात्मकत्वात्, तस्य च मण्डलात्मकत्वोपासनात् 'ऋचां लोकः' ऋग्वेदरूपेण मण्डलमुपासनीयम्, मण्डलरूपेण वा ऋग्वेद उपासनीयः, तदुभयात्मना महदुक्थमुपासनीयम्, उभयथा व्याख्यातत्वात् । एवमुत्तरत्र महाव्रतं सर्वसामात्मकमर्चीरूपमिति सामवेदात्मना वा ध्यानमर्चिषः । अग्निर्मण्डलस्थपुरुषरूपः, अग्निश्च यजुर्मन्त्रसाध्य इति तस्य पुरुषत्वोक्त्या यजुर्मन्त्रसाध्यत्वोक्त्या च यजुर्वेदात्मकत्वम् । एवमुक्थमहाव्रतचित्याग्नीनां मण्डलार्चिःपुरुषात्मकत्वेन तस्य मण्डलादित्रयस्य, ऋग्यजुःसामरूपत्वम् ॥ १ ॥

---

विज्ञायताम् । तथा मूलग्रंथे विस्फीतं प्रतिभानात् । तत्रादौ भगवतस्त्रैलोक्यनायकस्यादितेयाग्रगण्यस्यादित्यस्य दिव्यगृहस्थानीयं मंडलं तोष्टूयते श्रुत्या । तत्स्तुतौमंडलिस्तवाधिक्योपपत्तेः । यथा हि लोके राजन्यस्येदं हर्म्यतलं रम्यं बहुमूल्यं चेत्युक्ते राजन्यो बहुधनो महाभाग्य इत्यर्थात्सिध्यति तथैवात्रापि विज्ञायताम् । अर्चिःस्तुत्यादौ पुरुषस्तुत्यादौ च अथशब्दपाठात् एतत्प्रथमकंडिकादौ मंडलस्तुत्यारंभेऽपि उत्तरत्रत्यो अथशब्दो अनुषंजनीयः । प्रायःपाठसामर्थ्यात् अध्याहारो मूलबाह्यः । अनुषंगस्तु मूले एकत्र पठितस्यापरत्र नयनम् । अनुषंजितो अथशब्दो मंगलार्थः । **तथाच स्मृतिः**—ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कंठे भित्त्वा विनिर्यातौ तस्मान्मांगलिकावुभौ'' ( ब्र.सू. १।१।१ इत्यत्र भाष्ये रत्नप्रभायां ) । इतरावथशद्वावानंतर्यार्थौ । तच्च प्रतिपदव्याख्यानकाले स्पष्टीकरिष्यते । अध्याहारानुषंगौ वेदेऽपि प्रथितौ । यथा 'इषे त्वा' ( वा. सं. १ । १ । १ ) इत्यत्र छिनद्मीति । यथा वा तैत्तिरीयके ' तेषाꣳसहस्रयोजनेऽवधन्वानि तन्मसि ' ( तै. सं. ४ । ५ । ११) इति ऋगुत्तरार्द्धस्य उत्तरत्रोन्नयनं । **संप्रति कंडिका व्याख्यायते** । अनुषंजिताथशब्देन मंगलमनुष्ठाय भगवती श्रुतिर्मंडलस्य सर्वात्मकत्वं निरूपयति—**यदेतन्मंडलमिति** । ' एतत् ' सर्वप्राणिचक्षुर्गोचरं मंडलं वर्तुलाकारं मंडयति भूषयत्यंबरमिति मंडलं । ' मडिभूषणे ' । ' यत्तपति ' तन्मंडलं ' महत् ' सर्वजगत्पूज्यं ' उक्थं ' बृहतीसहस्रत्वेन प्रसिद्धो हौत्रे शस्त्रविशेषः । तथाच ऋग्वेदारण्यकं 'उक्थमुक्थमिति वै प्रजावदंति' ( ऐ. आ. २ । १ । २ । १ ) इति । किंच ' ताः ' प्रसिद्धाः ' अग्निमीळे पुरोहितम् ' ( ऋ. सं. १ । १ । १ । १ ) इत्याद्या ऋचोऽपि मंडलमेव । ' सः ' प्रसिद्धः ऋचामध्ययनफलीभूतो लोकोऽपि मंडलमेव । औपलक्षण्येन सर्वात्मकं मंडलमिति भावः । यद्वा मंडले महदुक्थत्वर्ग्वेदलोकत्वदृष्टिः कार्या । सर्वात्मकत्वबुध्योपासितव्यमिति वा । एवं कैमुतिकन्यायेन मंडलाधिष्ठातारं स्तोतुं मंडलमभिष्टूय पुनस्तेनैव न्यायेनार्चिरभिष्टवीति—**अथेति** । अथ मंडलस्तुत्यनंतरं ' एतत् ' सार्वजनीनं ' सु ' प्रसिद्धं ' यत् अर्चिः ' त्रैलोक्यप्रकाशकं सौरं तेजः दीप्यते ' तदर्चिः' 'महाव्रतं' क्रतुविशेषः । तथा च ऋग्वेदारण्यकम् । ' अथ महाव्रतमिंद्रो वृत्रं हत्वा महानभवत्, यन्महानभवत्तन्महाव्रतस्य महाव्रतत्वम् ' ( ऐ. आ. १ । १ । १ ) इत्यादि ' तानि '

---

१—' नाधिदैवाधियज्ञयोः समानार्थता तेषामुपास्यतेति '—क्वचित्पुस्तके पाठभेदः ।

सैषा त्रय्येव विद्या तपति । तद्धैतदप्यविद्वाँसऽ आहुस्त्रयी वाऽएषा विद्या तपतीति वागेव तत्पश्यन्ती वदति ॥ २ ॥

---

सैषा त्रय्येव विद्या तपति । तद्धैतदप्यविद्वांस आहुः—त्रयी वा एषा विद्या तपतीति—वागेव तत्पश्यन्ती वदति ॥ २ ॥

---

सैषा त्रय्येव तपतीति । 'त्रयी' वेदत्रयम् 'एव' 'तपति'। उक्तार्थे लोकसम्मतिमाह—तद्धैतदप्यविद्वांस आहुरिति । 'ह' प्रसिद्धम् । 'अविद्वांसः' 'अपि' 'एतद्' 'आहुः'—'एषा' 'त्रयी' 'एव' 'विद्या' 'तपतीति'। एतदुक्तमर्थस्वरूपं 'पश्यन्ती' पर्यालोचयन्ती 'वाग्' 'वदति'—'त्रय्येव विद्या तपतीति' ॥ २ ॥

---

प्रसिद्धानि बृहद्रथंतरमित्यादीनि सामानि आर्चिरेव 'सः' प्रसिद्धः साम्नामध्ययनफलीभूतो लोकोऽपि आर्चिरेव सर्वात्मकमिति यावत् । अर्थांतरं पूर्ववत् । यदर्थमेतदुभयं श्रुत्या अभिष्टुतं सोऽयं भगवानादित्यो अभिष्टूयते-अथेति । अथ मंडलार्चिषोः स्तुतेरूर्ध्वं मंडलाभिमानी आर्चिष्मान्महीक्रियत इति शेषः । 'एषः' प्राणिमात्रानुभूयमानः 'यः' एतस्मिन्पूर्वोक्ते मंडले तदभिमानी पुरुषो वर्तते । 'सः' अग्निः अग्न्युपलक्षित-समस्तदेवतात्मकः । 'तानि' प्रसिद्धानि इषे त्वेत्यादीनि यजूंषि पुरुष एव । 'सः' प्रसिद्धः । यजुषामध्ययनफलीभूतो लोकोऽपि पुरुष एव सर्वात्मकः सर्वान्तर्यामीति भावः । तथा च मंत्रः—'सूर्य आत्मा जगतस्तस्थुषश्च' ( वा. सं. ७ । ४२ ) इति । पुरुषशब्दो बहुधा व्युत्पाद्यते । पूरयति स्वतेजसा भुवनत्रयमिति पुरुषः । तथाच मंत्रः—'आ प्रा द्यावापृथिवी अंतरिक्षम्' ( वा. सं. ७ । ४२ ) इति । सर्वप्राणिशरीरेषु शेते इति वा पुरुषः । तथा च श्रुतिः—'सर्वासु पूर्षु[1] शेते' ( श. प. १४ । २ । ५ । १८ ) इति । 'पुरुषविधब्राह्मणे तु—'सर्व्वान्पाप्मन[2] औषत्तस्मात्पुरुषः[3]' ( श. प. १४ । ३ । २ । २ ) इति । अन्यत्सर्वं पूर्ववत् ॥ १ ॥

आद्यकंडिकायां मंडलस्य महदुक्थाद्यात्मकत्वदृष्टिमुपदिश्य द्वितीयकंडिकायां केवलवेदत्रयात्मकत्वमुपदिशति—सैषेति । यदेतत्तपति तन्मंडलं न भवति किंतु 'सा' प्रसिद्धा 'एषा' श्रीगुरुभिः छात्रप्रछात्रोपछात्रद्वारा अध्याप्यमाना त्रयी विद्या तपति । एवकारो मंडलत्वबुद्धिं दूरीकरोति । त्रयीशब्दो वेदत्रयवाचकः वेदत्रयमेव तपति न मंडलमिति इममर्थं कैमुतिकन्यायेन द्रढयति—तद्धैतदिति । तदिति पदच्छेदः । ह किल तदेतत् पूर्वोक्तार्थजातं 'अविद्वांसः' बालगोपालादयोऽपि आहुः । किल किमिति त्रयी वै प्रसिद्धौ । एषा विद्या तपति न मंडलमिति । किमुत शास्त्रजन्यपरिज्ञाना ब्रह्मण्या इति भावः । ननु—यद्यपि अज्ञप्राज्ञप्रसिद्धिरस्ति तथापि वेदप्रसिध्या भवितव्यमिति आशंक्य साऽप्यस्तीत्याह—वागेवेति । 'तत्' विद्यायास्तापकत्वं 'पश्यंती' वीक्षमाणा वेदलक्षणा वाक् वदति । किमिति—'त्रयी वा एषा विद्या तपतीति' देहलीप्रदीपन्यायेनान्वीयते । 'ह एव' आभ्यां निपाताभ्यां वेदाः प्रमाणं विद्वदविद्वदनुभवश्च प्रमाणं इति सोसूच्यते । यत एवं ततो मंडले वेदत्रयीत्वदृष्टिः कर्तव्येति भावः ॥ २ ॥

---

१—पुरेषु शरीरेषु इत्यर्थः । २—पाप्मनो मृत्यूनित्यर्थः । ३—औषदहदित्यर्थः ।

स॒ऽ ए॒ष॒ऽ ए॒व॒ मृ॒त्युः । ( ख्ं ) य॒ऽ ए॒ष॒ऽए॒त॒स्मि॒न्म॒ण्ड॒ले॒ पु॒रु॒षो॒ऽथै॒त॒द॒मृ॒तं॒ य॒दे॒त॒द॒र्चि॒र्दी॒प्य॒ते॒ त॒स्मा॒न्मृ॒त्यु॒र्न॒ म्रि॒य॒ते॒ऽमृ॒ते॒ ह्य॒न्त॒स्त॒स्मा॒दु॒ न॒ दृ॒श्य॒ते॒ऽमृ॒ते॒ ह्य॒न्तः ॥ ३ ॥

( स्तु ) त॒दे॒ष॒ श्लो॒को भ॒व॒ति । ( त्यु ) अ॒न्त॒रं॒ मृ॒त्यो॒र॒मृ॒त॒मि॒त्य॒व॒र॒ꣳ

---

स एष एव मृत्युः, य एष एतस्मिन्मण्डले पुरुषः । अथैतदमृतं यदेतदर्चिर्दीप्यते । तस्मान्मृत्युर्न म्रियते—अमृते ह्यन्तः । तस्मादु न दृश्यते—अमृते ह्यन्तः ॥ ३ ॥

तदेष श्लोको भवति । "अन्तरं मृत्योरमृतम्"—इति । अवरं ह्येतन्मृत्योरमृतम् । "मृत्या-

---

अथ मण्डलस्थपुरुषस्य मृत्युरूपत्वमर्चिषोऽमृतरूपत्वं चाह—स एष एव मृत्युरिति । 'यः' 'एतस्मिन्मण्डले, 'पुरुषः' 'सः' 'मृत्युः' । 'यत्' 'एतदर्चिर्दीप्यते' तदमृतम् । यतः 'अमृते' मरणरहिते, अर्चिषि 'अन्तः' मध्ये वर्तते । अतो 'मृत्युर्न म्रियते' । न ह्यमृतमध्यवर्ती विनश्यति । तस्यापि विनाशेऽमृतत्वप्राप्तिः उत्तमफलत्वेनोपन्यसितुमयुक्तेति तात्पर्यम् । अन्तर्वर्तित्वमेव विशदयति—तस्मादु न दृश्यतेऽमृते ह्यन्तरिति । मृत्युरूपः पुरुषोऽमृतरूपेऽर्चिष्यन्तर्वर्त्तत इत्युक्तेऽस्मिन्नर्थेऽर्चिराश्रयमण्डलस्य पुरुषाधिष्ठितत्वम् ॥ ३ ॥

पुरुषार्चिषोरुभयोर्मण्डलमेव प्रतिष्ठेत्यस्मिन्नुक्ते चार्थे मन्त्रं संवादयति—तदेष श्लोको भवतीति । 'श्लोकः'

---

इत्थं द्वितीयकंडिकायां मंडलस्य वेदत्रयत्वमुपदिश्य रूपांतरमुद्दिश्य अथ पुरुषस्योपदेष्टव्यं तथापि प्रथमकंडिकोक्तक्रमभंगभीत्या होमपाकन्यायेन "अर्थक्रमो बलवान् पाठक्रमात्" । य एष एतस्मिन्मंडले पुरुषोऽभिमानी वर्तते । स एष एव मृत्युः । एवकारेण आद्यकंडिकोक्ताग्न्यात्मकत्वं निवार्यते मृत्युत्वं च दृढीक्रियते । ननु—संयमनीपतिर्मृत्युरन्यः कथमत्र सूर्यो मृत्युरिति श्रुतिर्वदतीति चेत्; मैवं अहोरात्रपक्षमासर्तुविषुवायनसंवत्सरपरिवत्सरेदावत्सरादिरूपेणाम्यावर्तमानः प्राणिनां पुरुषायूंषि क्षपयति तस्मात्सूर्यो मृत्युरिति नास्ति विरोधः । अर्चिषो रूपान्तरमुपदिशति—अथेति । अथ मंडलवर्तिनो मृत्युत्वोपदेशादूर्ध्वं 'यदेतदर्चिर्दीप्यते' 'तदर्चिरमृतम्' । अर्चिषि अमृतत्वदृष्टिः कर्तव्येति यावत् । मृत्युशब्दस्य मारयत्यन्यान्, म्रियते वा स्वयमिति, निरुक्तिद्वयमस्ति । तत्र द्वितीयामादाय सूर्यस्यानित्यत्वमाशंक्य परिहरति—'तस्मादिति' हि यस्मात् अमृते अर्चिषि अंतः सूर्यो वर्तत इति शेषः । तस्मान्मृत्युः सूर्यो न म्रियते । नहि अमृतमध्यवर्तिनो मृतिरस्ति अमृतवीर्यव्याघातप्रसंगात् । ननु—अर्चिर्नाम सूर्यदिव्यकायकांतिविशेषः, तथा सति कथं स तत्र वर्तते इत्युच्यते । शृणु, लोके कुत्रचित् स्थापितस्य मणेः प्रभा परितः प्रसरति यदा तदा मणिः प्रभाजालमध्यवर्तीव प्रतिभाति । तथा अयमर्चिष्मान् सूर्यः अर्चिर्वर्तीव, इति भावः । ननु—मंडलमेवोपलभामहे नतु ततो व्यतिरिक्तं पुरुषं इत्यत आह—तस्मादु—इति । उनिपातश्चोद्यविच्छेदकः । हि यस्मात् अमृते अर्चिषि अंतरस्ति भगवानर्यमा तस्मादस्माभिर्न दृश्यते । नहि केनचिदाच्छादितं वस्तु उपलभ्यते लोकैः । अंतरेण सर्वज्ञान् तस्मात् सूर्ये मृत्युत्वं अर्चिषि अमृतत्वं सूर्ये नित्यत्वं च, ध्यातव्यमिति भावः ॥ ३ ॥

तृतीयकंडिकोक्तेऽर्थे प्रमाणत्वेन मंत्रमुदाहरति—तदेष श्लोक इति । तदित्यव्ययं तत्, तस्मिन्, तृतीयकंडि-

ह्येतन्मृत्योरमृतं मृत्यावमृतमाहितमित्येतस्मिन्हि पुरुषऽएतन्मण्डलं प्रतिष्ठितं तपति मृत्युर्व्विवस्वन्तं व्वस्तऽ इत्यसौ वाऽआदित्यो व्विवस्वानेष ह्यहोरात्रे व्विवस्ते तमेष व्वस्ते सर्व्वतो ह्येनेन परिवृतो मृत्योरात्मा व्विवस्वतीत्येतस्मिन्हि मण्डलऽएतस्य पुरुषस्यात्मैतदेष श्लोको भवति ॥ ४ ॥

---

वमृतमाहितम् "–इति । एतस्मिन् हि पुरुष एतन्मण्डलं प्रतिष्ठितं तपति । मृत्युर्विवस्वन्तं वस्ते " इति । असौ वा आदित्यो विवस्वान्, एष ह्यहोरात्रे विवस्ते । तमेष वस्ते सर्वतो ह्येनेन परिवृतः । " मृत्योरात्मा विवस्वति " इति । एतस्मिन् हि मण्डल एतस्य पुरुषस्यात्मा । तदेष श्लोको भवति ॥ ४ ॥

---

मन्त्रः पादबद्धत्वसाम्यात् । मन्त्रपाठस्त्वेवम्–' अन्तरं मृत्योरमृतं, ' 'मृत्यावमृतमाहितं,' 'मृत्युर्विवस्वन्तं वस्ते,' ' मृत्योरात्मा विवस्वति ' इति । अयमर्थः–मृत्योः पुरुषस्यामृतमर्चिरन्तरं व्यवधायकम् । अमृतमध्यवर्तित्वात्पुरुषस्येतरैर्जीवैरदर्शनात् अमृतमेव तस्यान्तरमित्युक्तम् । मृत्यौ पुरुषे अमृतं अमृतरूपार्चिरधिकरणं मण्डलम्, 'अन्तरम्' अवरं तदपेक्षयाऽधरत्वात् । 'आहितं 'प्रतिष्ठितम्' । 'विवस्वन्तम्' 'अहोरात्रे' विवासयति–इदमहरेषा रात्रिरिति विभजति–पुनः पुनः करोतीति वा ' विवस्वान् ' आदित्यमण्डलमित्यर्थः । तं ' मृत्युः ' 'वस्ते' आच्छादयति–'सर्वतः' स्वतेजसा परिवृणोति । 'मृत्योः' पुरुषस्य, 'आत्मा विवस्वति' मण्डले प्रकाशत इति । अत्र वेदान्तिनो ' मण्डलस्थः पुरुष ईश्वर इति ' मण्डलं केवलं न तपति, किन्तु तन्मध्यवर्तिनी पुरुषतेजसीति प्रतिपादयन्ति । ईश्वरस्य च मृत्युरूपत्वम्, "अन्तस्तद्धर्मोपदेशात् "–( वे. सू. १।१।६२।२ ) "ज्योतिषि भावाच्च"–( वे. सू. १ ।३।९।३२ ) " अत्ता चराचरग्रहणात् "–( वे. सू. १।२।२।९ ) इत्येतैरधिकरणैः । अत्रापि तन्मतानुसारेण मण्डलवर्तिनः पुरुषस्य मृत्युरूपत्वम् । मण्डलं च तेनाधिष्ठितं तस्य च मण्डलमेव प्रतीतिस्थानत्वेन प्रतिष्ठा–इति । पूर्वमुक्तं मन्त्र प्रतिपादमनूद्य व्याचष्टे–अन्तरं मृत्योरमृतमित्यवरं ह्येतन्मृत्योरमृतमि-

---

कार्थे एष वक्ष्यमाणः श्लोको मंत्रः प्रमाणं भवति । " श्लोको यशसि मंत्रे च "–( ३ । ३ । २ । ) इत्यमरः । ननु–मंत्रब्राह्मणयोरुभयोरपि अपौरुषेयत्वाविशेषात् कथं ब्राह्मणेन मंत्रः प्रमाणत्वेनोदाह्रियत इति चेत्; आकर्णय–उपदिशामि वेदपुरुषगर्भस्थं रहस्यं यद्यपि मंत्रब्राह्मणे उभे परमात्मनः निःश्वसिते अनादिनी तथापि अस्ति कश्चिद्विशेषः–मंत्रो मूलं ब्राह्मणं व्याख्यानं मंत्रार्थप्रकाशकत्वात् । मंत्रविनियोजकमपि कल्पसूत्रवन्मंत्रविनियोगस्य ब्राह्मणेन प्रदर्शितत्वात् । तर्हि किं कल्पसूत्रैरिति चेत्; न विनियोगस्फुटत्वस्य प्रयोजनत्वात् । तथा च सति मंत्रब्राह्मणयोर्मूलमूलित्वात् मूलिनमपेक्ष्य मूलस्य प्राबल्यं मनसि निधाय मूलिना मूलं प्रमाणत्वेन लिख्यते । एतमेव लोकव्यवहारस्य शिक्षणीयत्वात् । इत्थमेव समस्तशाखासु ब्राह्मणग्रंथेषु मंत्रोदाहरणानि बहुलमुपलभ्यंते । केचित्तु मंत्रब्राह्मणाभ्यामुभाभ्यां कथितोऽर्थो दृढीभवतीति सङ्गिरन्ते । तर्हि सर्वशाखासंहिता-

---

१–अमरकोषेतु–' पद्य यशसि च श्लोकः ' इति पाठोऽस्ति । वेदगतं पद्य श्लोकार्थे मंत्र इत्युच्यत इति भावः ।

त्यादिना । अवरम् ' अधस्तादुभवममृतं पुरुषस्य परस्तादित्यर्थः सिद्धः । ' अनेन ' अमृतमध्यवर्तित्वमुक्तमि-त्यर्थः । द्वितीयपादगतामृतपदेनार्चिरधिकरणमण्डलमुच्यते तत् पुरुषे प्रतिष्ठितं तपति । तेन हि तस्य मण्डलस्य जगत्प्रकाशकत्वमस्तीति । तृतीयपादगतं विवस्वत्पदं निर्वक्ति–**एष ह्यहोरात्रे विवस्त** इति । एतेन विवस्वता परिवृतः सर्वतो वेष्टितः । चतुर्थपादं व्याचष्टे–**एतस्मिन् विवस्वति मण्डले पुरुषस्यात्मा प्रतीयत** इति शेषः । ' एतदेष श्लोको भवति ' इति निगमनम् ॥ ४ ॥

---

ग्रंथेषु ' तदेतद्ब्राह्मणं भवतीति ' किमिति मंत्रैर्ब्राह्मणं नोदाहृतं इति चेत् अत्रास्मदुक्तमेव प्रत्युत्तरमिति श्रद्धी-यताम् । प्रकृते–' तदेष श्लोको भवतीति ' प्रतिज्ञाय केवलमंत्रो नोदाहारि ब्राह्मणेन, अपि तु पच्छो मंत्रं व्याकु-र्वदेव ब्राह्मणमुदाहरति । कथं विज्ञायत इति चेत् सेतिकारं सव्याख्यानं, चरणचतुष्कदर्शनात् । केवलमंत्रस्तु असिकोशन्यायेन निष्काश्यास्माभिः प्रदर्श्यते–" **अंतरं मृत्योरमृतं मृत्यावमृतमाहितम् ॥ मृत्युर्विवस्वंतं वस्ते मृत्योरात्मा विवस्वति** ( १ ) अस्य मंत्रस्यानुष्टुप् छंदः याज्ञवल्क्यर्षिः भगवानादित्यो देवता जपे विनियोगः । प्रथमपादं विवृणोति सप्रतीकम्–**अंतरं मृत्योरमृतमित्यवरꣳ ह्येतन्मृत्योरमृतमिति** । 'एतत्' प्रसिद्धं त्रिविष्टपे इन्द्रकोशकनककलशस्थममृतं, 'मृत्योः' आदित्यात् ' अवरं ' हि एव, निकृष्टमेव अमृतप्राप्ते-र्भगवदादित्यापांगांचलदृष्टिनिमित्तकत्वात् । एतेन ' अंतरं ' ' अवरं ' पर्यायं इति द्योतितम् । द्वैतीयकं पादं विवृणोति–**मृत्यावमृतमाहितमित्येतस्मिन् हि पुरुष एतन्मंडलं प्रतिष्ठितं तपतीति** । ' मृत्यौ ' एतस्मि-न्पुरुषे ' अमृतं मण्डलं ' ' आहितं ' ' प्रतिष्ठितं ' एते पर्यायाः । सूर्ये तदभिमानिपुरुषे जीवस्थानीये सति देहस्थानीयं मंडलं प्रतिष्ठितं स्थितिमत्सत्तपति । अन्यथा निरात्मकशरीरवन्निश्चेष्टं सन्मंडलमधःपतेत् । तृतीय-चरणं व्याकरोति–**मृत्युर्विवस्वंतं वस्त इत्यसौ वा आदित्यो विवस्वानेष ह्यहोरात्रे विवस्ते तमेष वस्ते सर्व्वतो ह्येनेन परिवृत इति** । विविस्वंतमिति मंत्रस्थपदेप्रथमायां द्वितीया । ' विवस्वान् ' इति ब्राह्मणेन दर्शनात् । विवांसि तेजांसि यस्य संति स विवस्वानादित्यः 'एषः' प्रसिद्धः 'अहोरात्रे' रात्रिंदिवे ' विवस्ते ' । ' वस आच्छादने ' उपसर्गवशादन्योऽर्थः, स्वोदयास्तमानाभ्यां करोतीत्यर्थः । किंच ' तमादित्यं ' ' एषः ' प्रत्यक्षः प्रपंचः ' वस्ते ' आच्छादयति । यथा अध्यस्तं रजतं आधारशुक्तिमाच्छादयति तथा अध्यस्तं प्रतीयते नत्वाधार इति भावः । सूर्यस्यापि परब्रह्मत्वेन जगदाधारत्वं बोध्यम् । अपि च एतेन भगवता पूष्णा प्रपंचः परिवृतः आच्छादितः । कथं 'सर्वतः' अंतर्बहिरिति यावत् । हिशब्दद्वयेन उक्तवक्ष्यमाणौ दृष्टांतौ उच्येते । यथा मृत्पिंडं कारणं कार्यं घटं सर्वतो व्याप्य वर्तते तथा सुरनरतिर्यगादिनानाविधविचित्रपिंडांडयुक्तं चतुर्दशलोकं ब्रह्मांडं स्वकार्यं सर्वतो व्याप्य भगवानादित्यः कारणं वर्तत इति । तथाच मधुब्राह्मणम्–" नैनेन किंचनानावृतं नैनेन किंचनासंवृतम् " ( बृ. उ. १४ । २ । ५ । १८ ) इति । शाखांतरं च " अंतर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः " ( नारा. उ. ४ । १ ) इति । नहि नारायणः पूष्णो भिद्यते सर्वात्मकत्वस्य आद्य-कंडिकायां निपुणतरमुपपादितत्वात् । चरमचरणं व्याचष्टे–**मृत्योरात्मा विवस्वतीत्येतस्मिन् हि मंडल एतस्य पुरुषस्यात्मेति** । 'विवस्वति' इति पदेन सप्तम्यंतं मंडलमुच्यते तथा ब्राह्मणदर्शनात् एवं च सति रूढिमुपेक्ष्य योग आश्रयणीयः । अनेकतेजोयुक्ते मंडले मृत्योर्यम्णः आत्मा जीवो वर्तते । राहोः शिर इतिवदभेदे षष्ठी ।

---

१–अनेन निर्गुणेन ईश्वरेण किंचन वस्तु अनावृतं आच्छादनरहितं नास्ति, तथा अनेन ईश्वरेण किंचन वस्तु असंवृतं मध्ये प्रवेश-रहितं नास्ति । अयःपिंडे अग्निवत् अंतर्बहिश्च व्याप्य तिष्ठति इति मधुब्राह्मणार्थः ।

तयोर्वाऽएतयोः । ( रु ) उभयोरेतस्य चार्चिष ऽएतस्य च पुरुषस्यै-तन्मण्डलं प्रतिष्ठा तस्मान्महदुक्थं परस्मै न शꣳसेन्नेदेतां प्रतिष्ठां छिनदा ऽइत्येताꣳ ह स प्रतिष्ठां छिन्ते यो महदुक्थं परस्मै शꣳसति तस्मादुक्थशसं भूयिष्ठं परिचक्षते प्रतिष्ठाछिन्नो हि भवतीत्यधि-देवतम् ॥ ९ ॥

---

तयोर्वा एतयोरुभयोरेतस्य चार्चिषः, एतस्य च पुरुषस्यैतन्मण्डलं प्रतिष्ठा । तस्मान्महदुक्थं परस्मै न शंसेत्—नेदेतां प्रतिष्ठां छिनदा इति । एतां ह स प्रतिष्ठां छिन्ते—यो महदुक्थं परस्मै शंसति । तस्मादुक्थशसं भूयिष्ठं परिचक्षते । प्रतिष्ठाछिन्नो हि भवति । इत्यधिदेवतम् ॥ ९ ॥

---

तयोर्वा एतयोः—इत्यादेरयमर्थः—यतः पुरुषार्चिषोर्मण्डलमेव प्रतिष्ठा अतो मण्डलरूपं 'महदुक्थं' 'न' 'परस्मै' 'शंसेत्'। 'एतां' 'प्रतिष्ठां' 'नेच्छिनदै' 'नेदिति परिभये' (निरु. १।११।१) न च्छिन्द्यामिति । स्वप्रतिष्ठाया अन्याधीनत्वे स्वयमप्रतिष्ठितो भवतीत्यर्थः। तथाच बहुधा बृहदुक्थस्य परस्मै शंसननिषेधः ऐतरेयकोपनिषदि समाम्नायते—"तस्मादेवं विद्वान्न परस्मा अग्निं चिनुयान्न परस्मै महाव्रतेन स्तुवीत न परस्मा एतदहः शंसेत्"—( ऐ.आ. ३।२।४।१० ) इति। यतः परस्मै बृहदुक्थशंसनं निषिध्यते। अतः 'उक्थशसं भूयिष्ठं परिचक्षते'। परस्मै शंसितारं होतारं लोके बहु निन्दन्ति, यतः 'प्रतिष्ठाछिन्नः' प्रतिष्ठाहीनो भवतीति । मण्डलार्चिःपुरुषाणां बृहदुक्थमहाव्रताग्निद्वारेण ऋग्यजुःसामरूपत्वेनोपासनाच्च बृहदुक्थादीनां तादृक् मण्डलाद्यात्मनोपासनमिति 'अधिदेवतम्' अर्थ उक्त इत्युपसंहरति—इत्यधिदेवतमिति ॥ ९ ॥

---

अर्यमा मंडलमध्यास्ते इत्यभिप्रायः। सव्याख्यानं प्रमाणीकृतं श्लोकमुपसंहरति—एतदेष श्लोको भवतीति। एतद्धत्ययेन एतस्मिन् तृतीयकंडिकार्थे एष उक्तः श्लोको मंत्रः उदाहृत्य व्याख्यातो भवतीत्युपसंहारः ॥ ४ ॥

इत्थं चतसृभिः कंडिकाभिः उपासितव्योपासनाप्रकारमुपदिश्य उपासितारं प्रति किंचिच्छिक्षितव्यमिति उप-देष्टुकामा श्रुतिरुपोद्घातमारचयति—तयोर्वा इति । ननु उपासितेति प्रयोगाश्रवणात् कथमुपासितारमिति प्रायुंक्त भवानिति चेत् बाढं न श्रुतं परं श्रोष्यसि, यथा यथोपासते तदेव भवतीति वक्ष्यमाणत्वात्। उपासनाफल-मपि 'तदेव भवति' ( कं.२० ) इत्यनेनैव कथयिष्यते । अत एव तत्कार्योऽधिकारीति सेत्स्यत्यर्थात् 'वै' वाक्यालंकारे' यस्मादर्थे वा । तयोः प्रसिद्धयोः एतस्यार्चिषश्च एतस्य पुरुषस्य च आहत्योभयोः एतत् पूर्वोक्तं मण्डलं प्रतितिष्ठति अस्यामिति प्रतिष्ठा आधारं निवासस्थानं इति यावत्। यथा कुन्दनं मणेराधारं मणिः प्रभायाः तथा च प्रभाधारमपि कुंदनमेव प्रतिभाति, तथा अर्चिष्मानादित्यः यदा मण्डलमधितिष्ठति तदा अर्चि-रपि मंडलवर्तीव विभाति। यस्मादेवं तस्मादादित्योपासकः महदुक्थं हौत्रार्त्विज्यप्रसिद्धं शस्त्रं परस्मै परार्थं न शंसेत्। अत्र को हेतुरिति चेत्? शृणु—प्राक् मंडले उक्थत्वदृष्टिरुपदिष्टा यत्र यद्बुद्धिरुपदिश्यते न तयोर्भेदोऽस्ति। तथा च उक्थाभिन्नं मंडलं परमपुरुषनिवासस्थानं यदि परार्थं शंसनद्वारा विक्रीतमभविष्यत् तदा परमपुरुषो निराधारः सन्नुपासकाय नोपकारमकरिष्यत्। तस्मात्तदाधारत्वलब्धये उक्थाभिन्नं मंडलं कुक्षिंभरिणा परार्थं न

( मु ) अथाधियज्ञम् । यदेतन्मण्डलं तपत्ययथ्ँ स रुक्मोऽथ यदेतु- दर्चिर्दीप्यत ऽइदं तत्पुष्करपर्णमापो ह्येता ऽआपः पुष्करपर्णमथ यऽ

---

अथाधियज्ञम्–यदेतन्मण्डलं तपति–अयं स रुक्मः । अथ यदेतदर्चिर्दीप्यते–इदं तत्पुष्करप- र्णम् । आपो ह्येताः । आपः पुष्करपर्णम् । अथ य एष एतस्मिण्डले पुरुषः–अयमेव स योऽयं

---

अधियज्ञं वक्तुं प्रतिजानीते–अथाधियज्ञमिति । अत्र रुक्मपुष्करपर्णहिरण्मयपुरुषाणां मण्डलार्चिःपुरु-

---

विक्रयितव्यम् । परशब्देन पित्राचार्यस्वात्मव्यतिरिक्तास्त्रैवर्णिका उच्यंते तेभ्यो न शंसेत् । पित्रे आचार्याय स्वात्मने च शंसितव्यम् । तथा च ऋग्वेदारण्यके प्रतिप्रसवः श्रूयते–" तस्मादेवं विद्वान्न परस्मा अग्निं चिनुयान्न परस्मै महाव्रतेन स्तुवीत न परस्मा एतदहः शंसेत्कामं पित्रे वाऽऽचार्याय वा शंसेदात्मन एवास्य तत्कृतं भवति " ( ऐ. आ. ३ । २ । ४ । १० ) इति । उपासकाभिप्रायमाह । नेदेतामिति । न इत् एतां इति पदच्छेदः । इत् इवार्थे । अहमुपासकः एतां मंडललक्षणां परमपुरुषप्रतिष्ठां न, छिनदै न छेदं करवै इति मनसि निधाय परस्मै न शंसेदेव इति पूर्वेणान्वयः । निषेधमुखेन प्रोक्तमर्थं विधिमुखेन द्रढयति । एतांऽँहेति । य उपासकः कुक्षिंभरः सन् महदुक्थं परस्मै शंसति स एतां प्रतिष्ठां छिंते ह छेदं कुर्यादेवेत्यर्थः । तथाचोपासनीयः पुरुषः उपासकदृष्ट्या निष्प्रतिष्ठः सन् नोपकुर्वीतेति भावः । यस्मादेवं तस्माद्याज्ञिका उक्थं शंसंतीति उक्थशसः, तमु- क्थशसं शंसेः क्विप् पचादिर्वा । उक्थशंसनकर्तारं होतारं ' भूयिष्ठम् ' अधिकतरं अध्वर्युप्रभृतिभ्यः ' परिचक्षते ' परितः कथयंति । ' बहोर्लोपो भू च बहोः ' ( पा. सू. ६।४।१५८ ) इति इष्ठनि परे भू आदेशः । किंच याज्ञिका मिथो वदंति । यदि वयमादित्योपासितारमृत्विक्त्वेन वृण्महे, सोऽपि दरिद्रवशेन वृतो अभविष्यत् । तदा प्रतिष्ठां छिनत्तीति प्रतिष्ठाछिद्भवति । इदमस्माकमपि हानिकरमेव । तस्मात्प्रतिष्ठाछिन्नो भवतु न भवतु । इति हृदि निधाय यायजूका अपि उपासितारम् न वृणुयुः । ' हि ' एव । उक्थस्वरूपं ऋग्वेदे बहुधा प्रसिद्धम् । उक्थस्यैव शस्त्रस्य निष्कैवल्यमिति नाम । एतदेवोक्थं बहुधा उपासितव्यत्वेन बह्वृचद्वितीयारण्यके । ( ऐ. आ. २ । ३ । ४ । १६ इत्यत्र सायनभाष्ये ) प्रपंचितम् , तेषां ब्राह्मणे तु पक्षित्वेन विस्तृतम् , तथाहि– ' इंद्रमिद्गाथिनः ' इत्यादि मंत्रजालं उक्थलक्षणपक्षिणः शिरः । ' अभि त्वा शूर नो नुमः ' इत्यादि दक्षिणः पक्षः । ' त्वामिद्धि हवामहे ' इत्यादि उत्तरः पक्षः । ' इमा नु कं भुवनानाम् ' इत्यादि पुच्छम् । ' तदिदास ' इत्यादि मध्यमशरीरम् । ' महाँ इंद्रो य ओजसा ' इत्यादि गायत्री तृचाशीतिः 'विष्णोर्नुकम्' इत्यादि बृहती तृचाशीतिः ' योऽपि यऽइंद्रसोमपातमः ' इत्यादि उष्णिगशीतिः आहृत्य तिस्रो ऽशीतयः शस्त्रपक्षिणो अन्नम् । एवमादिर्महान्प्रतापो उक्थशस्त्रस्य ऋग्वेदग्रंथे परिशीलनीयः । बृहदारण्यके तु–" उक्थं प्राणो वा उक्थं प्राणो हीदं सर्वमुक्थापयति " ( बृ. उ. ५ । १३ । १ ) इत्युक्तम् । यद्वा । उक्थशब्देन क्रतुविशेष उच्यते–' अग्निष्टोम अत्यग्निष्टोम उक्थ ' इत्यादिना सोमसंस्थासु पाठात् । तथाच प्रकृतब्राह्मणे तद्धित- यल्लोपश्छांदसः । अथेदानीं प्रकारांतरेण कथितकथ्यमानोपासनाविभागं प्रतिजानीते–' इत्यधिदेवतमिति ' देवतामधिकृत्य प्रवृत्तमुपासनमधिदेवतमिति पूर्वोक्तरीत्यासप्रपंचं निरूपितमिति शेषः ॥ ५ ॥

पूर्वोक्तमेवोपासनं विधांतरेण प्रतिजानीते–अथाधियज्ञमिति । अथ अधिदेवतोपासनानंतरं यज्ञमधिकृत्य

एष ऽएतस्मिन्मण्डले पुरुषोऽयमेव स योऽयꣳ हिरण्मयः पुरुषस्तदेतदेवैतत्त्रयꣳ सꣳस्कृत्येहोपधत्ते तद्यज्ञस्यैवानु सꣳस्थामूर्ध्वमुत्क्रामति तदेतमप्येति यऽएष तपति तस्मादग्निं नाद्रियेत परिहन्तुममुत्र ह्येष तदा भवतीत्युऽएवाधियज्ञम् ॥ ६ ॥

---

हिरण्मयः पुरुषः । तदेतदेवैतत्त्रयं संस्कृत्येहोपधत्ते । तद् यज्ञस्यैवानु संस्थामूर्ध्वमुत्क्रामति । तदेतमप्येति—य एष तपति । तस्मादग्निं नाद्रियेत परिहन्तुम् । अमुत्र ह्येष तदा भवतीत्यु एवाधियज्ञम् ॥ ६ ॥

---

षात्मनोपासनमित्यधियज्ञवाक्यस्य तात्पर्यम् । अक्षरार्थस्तु—'यत्' 'मण्डलं तपति' 'अयम्' अत्रोपहितो रुक्मः 'यत्' 'अर्चिर्दीप्यते' तत् रुक्मपुरुषयोरधस्तादुपहितं 'पुष्करपर्णम्' । कथमर्चिषः पुष्करपर्णात्मत्वं तत्राह—आपो ह्येता आपः पुष्करपर्णमिति । आर्चिषो ह्यापः, सूर्यकिरणानामेव वृष्टिकर्तृत्वात्, कार्यकारणयोरभेदेन अर्चिरेव आप इत्युक्तम् । पुष्करपर्णमधि अद्भ्य उत्पन्नत्वात्तदात्मकमित्यर्थः । मण्डलमध्यवर्ती पुरुष एवात्रोपहितो हिरण्मयः पुरुषः । एवमेतत् रुक्मादित्रयं मण्डलाद्यात्मना 'संस्कृत्य' भावयित्वा इहाग्नावुपधत्ते । तदा यज्ञस्य संस्थां समाप्तिम् 'अनु' ऊर्ध्वम् 'उत्क्रामति'—उत्क्रामन् यजमानः 'एतं' मण्डलादिरूपेण त्रिविधमादित्यम् 'अप्येति' प्राप्नोति । 'य एष तपति' । अत्र कंचिद्धर्ममाह—तस्मादग्निं नाद्रियेत परिहन्तुममुत्र ह्येष तदा भवतीति । यतोऽस्मिन्नग्निं चितवान् परत्रादित्यो भवति—अतः 'अग्निं' परिहन्तुं' 'नाद्रियेत'—चितमग्निमिष्टकाविशेषेण नाशयितुमादरं न कुर्यात् । कुतः एषोऽग्निरमुत्र भवति परलोके यजमानशरीरात्मनोत्पद्यत इति । यद्वा परिहन्तुं प्राप्तुं स्प्रष्टुमित्यर्थः । चित्याग्निस्पर्शने दोषश्रवणात् । एवमधियज्ञमर्थो व्याख्यातः ॥ ६ ॥

---

प्रवर्तिष्यमानमुपासनमधियज्ञं निरूपयिष्यत इति शेषः । अस्ति कश्चित् चयनक्रतौ संप्रदायः । यदा इष्टका उपधीयंते तदा पूर्वं पंचभिः संस्कारैर्भूमिं शोधयित्वा शोधितभूमौ माषत्रयपरिमाणं सुवर्णं निक्षिप्य तदुपरि पद्मिनीपत्रं संस्थाप्य अद्भिः प्रोक्ष्य तदुपरि सौवर्णीं पुरुषाकृतिमावाह्य अथ इष्टका उपधीयंते । ततो अग्निप्रतिष्ठेति । तदेतत्सर्वं मंडलादौ उत्प्रेक्ष्यते उपासनाय यदेतन्मंडलमिति । एतत् प्रत्यक्षं यन्मंडलं तपति । तत् सोऽयं रुक्मश्चयनयागीयः । मंडले रुक्मत्वदृष्टिः कार्या अधःस्थितिसाम्यात् । अथ तद्दृष्ट्यनंतरं यदेतदर्चिर्दीप्यते तदिदं पुष्करपर्णं चायनपद्मिनीपत्रम् । तत्र तद्दृष्टिः क्रियतां उपरितनसाम्यात् । हिशब्दो निपातादानंतर्यार्थः । तद्दृष्ट्यनंतरं एताः सूर्यमंडलस्थाः आपः पुष्करपर्णव्यत्ययेन पुष्करपर्णे प्रोक्षणनिमित्तेन स्थिता आपः, तत्र तद्दृष्टिः कार्या 'अथ' तद्दृष्ट्यनंतरं 'य एष एतस्मिन्मंडले पुरुषः'—अयमेव सः 'कः' योऽयं हिरण्मयः, चायनः पुरुषः, तत्र तद्दृष्टिः क्रियतां सर्वोपरित्वसाम्यात् । 'तदेतदेवैतत्त्रयं' रुक्मपुष्करपर्णजलरूपं संस्कृत्य इह एतत्त्रितयोपरि सुवर्णमयसर्वावयवः परमपुरुषोऽस्तीत्युपासीत इति भावः । अतएवेदमुपासनयज्ञमधिकृत्य प्रवृत्तं इत्यवोचाम । सूर्यमंडले आपः संतीति सर्ववेदघंटाघोषः । तथा च तैत्तिरीयका आमनंति—'याभिरादित्यस्तपति रश्मिभिस्ताभिः पर्जन्यो वर्षति ( तै. आ. ४ अं. अनु. ) इति । स्मृतिरपि—

---

१—राजहंससरस्वतीनां भाष्यानुसारेण 'हिरण्ययः' इति पाठः । एवममेऽपि ।

( मु ) अथाध्यात्मम् । यदेतन्मण्डलं तपति यश्चैष रुक्म ऽइदं तच्छुक्लमक्षन्नथ यदेतदर्चिर्दीप्यते यच्चैतत्पुष्करपर्णमिदं तत्कृष्णमक्षन्नथ य ऽएष ऽएतस्मिन्मण्डले पुरुषो यश्चैष हिरण्मयः पुरुषोऽयमेव स योऽयं दक्षिणेऽक्षन्पुरुषः ॥ ७ ॥

---

अथाध्यात्मम् यदेतन्मण्डलं तपति, यश्चैष रुक्मः-इदं तच्छुक्लमक्षन् । अथ यदेतदर्चिर्दीप्यते, यच्चैतत्पुष्करपर्णम्-इदं तत्कृष्णमक्षन् । अथ य एष एतस्मिन्मण्डले पुरुषः, यश्चैष हिरण्मयः पुरुषः । अयमेव स योऽयं दक्षिणेऽक्षन्पुरुषः ॥ ७ ॥

---

'अथाध्यात्मम्' प्रदर्श्यते इतिशेषः । अत्रायं विशेषः—मण्डलादित्रयस्याधियज्ञिकरुक्मपुष्करपर्णहिरण्मयपुरुषत्रयस्य च दक्षिणाक्षिगतशुक्लकृष्णवर्णद्वयतदन्तर्वर्तिपुरुषेषु तादात्म्येनोपासनमिति । अक्षन्निति । अक्षिशब्दात् । "अस्थिदधि." ( पा. सू. ७ । १ । ७५ )—इत्यादिना अनङ् "सुपां सुलुक्"—( पा. सू. ७ । १ । ३९ ) इति सप्तम्या लुक् । एवं मण्डलादित्रयस्य लोचनगतशुक्लादित्रयस्य च तादात्म्येन ध्यानमुक्तम् । पुरुषस्य च द्वे चक्षुषी—तत्र यथा दक्षिणे तथा सव्यलोचनेऽपि पुरुषो दृश्यते ॥ ७ ॥

---

'आदित्याज्जायते वृष्टिः' ( म. स्मृ. ३ । ७६ ) इति । यदि मंडलं निर्जलमभविष्यत् तर्हि कथमवर्षिष्यदादित्यः । हिरण्मय इति वक्तव्ये 'ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि छंदसि' ( पा. सू. ६ । ४ । १७५ ) इति निपातनान्मयडादिलुप्तिः । यस्मादेवं तस्मात्तन्मंडलार्चिरुदकपुरुषाणां चतुष्कं यज्ञस्य चयनाख्यस्य संस्थां स्थितिं अनु पश्चात् चयनयागीयरुक्माद्युपमितं सत् ऊर्ध्वं नभोमंडलोपरि उत्क्रामति निर्गच्छति स्म इति एवकारेणावधार्यते । तत्तस्मात्कारणात् तं आदित्यपुरुषं उपासकः अप्येति प्राप्नोति इति फलनिरूपणम् । एतं कं य एष तपति तमित्यन्वयः । यस्मादेवं तस्मान्मंडलादौ चयनीयपदार्थदृष्ट्युपासको अग्निं नाद्रियेत चयनादिकर्मसु न श्रद्धां बध्नीयादिति भावः । तत्र हेतुमाह—परिहंतुमिति । हि यस्मात् एष उपासको यदा आदित्यमुपास्ते तदा 'अमुत्र' परलोके आदित्यमंडले इति यावत् 'भवति' वर्तते । किमर्थं 'परिहंतुं' परितो गंतुं सूर्यमेकीभावेन गंतुं । हंतिरत्र गत्यर्थः, गतिः प्राप्त्यर्थः । इत्थं खलु मर्यादा यो यदुपास्ते स तदात्मा सन्नप्येति । तथाच सति आदित्योपासकः, 'अमुत्र भवतीति' श्रुत्या उक्तम् । उक्तमर्थमुपसंहरति—इत्यु एवाधियज्ञमिति । पूर्वोक्तरीत्या अधियज्ञमेवोपासनं प्रपंचितं नान्यत् । उनिपातः प्रकरणविभागप्रयोजनः ॥ ६ ॥

प्रकारांतरेण उपासनांतरं प्रतिजानीते—अथाध्यात्ममिति । अथाधियज्ञोत्तरं आत्मानं शरीरमधिकृत्य प्रवृत्तमुपासनं अध्यात्मं कथयिष्यत इति शेषः । दक्षिणेऽक्षन्निति । कंडिकांते पाठात् मध्यग्रंथेऽपि दक्षिणपदं विशेषणीयम् । दक्षिणे अक्षन् अक्षिणि । विभक्तेर्लोपः । 'तच्छुक्लं' धवलभागः तदिदं शुक्लं रुक्मः मंडलवर्ती पुरुष एव । य एष यागीयरुक्मदृष्टांतः तद्दृष्टिं दक्षिणनेत्रस्थशुक्ले कुर्यात् । यदेतन्मंडलं तपति तद्दृष्टिं च दक्षिणनेत्रे कुर्यात् । रुक्माधारं मंडलं शुक्लाधारं नयनं इत्युपमानात् । अथैवंभावनादूर्ध्वं दक्षिणेऽक्षन्नक्षिणि 'तच्छुक्लं' शुक्लभागमध्यस्थं तदिदं तत्पुष्करपर्णं यागीयं रुक्मोपरिस्थं यत् तत्र तद्भावनां कुर्यात् । 'यदेतदर्चिर्दीप्यते' तदेतद्दक्षिणनेत्रमिति भावयेत् आधाराधेयभावसाम्यात् उपरितनसाम्याच्च । शुक्लोपरि कृष्णं रुक्मोपरि पर्णमिति भावः ।

स॒ऽ ए॒ष॒ऽ ए॒व लो॑कम्पृ॒णा । ता॒मे॒ष॒ स॒र्व्वोऽग्नि॒रभि॒संप॑द्यते त॒स्यै॒तन्मि॑थु॒नं यो॒ऽयु॒ꣳ स॒व्येऽक्ष॒न्पुरु॑षो॒ऽर्धंमु॒ हैतदात्म॒नो य॒न्मि॑थुनं॒ यदा॒ वै स॒ह मि॑थु॒नेना॒थ स॒र्व्वोऽथ कृ॒त्स्न॒: कृ॒त्स्न॒तायै॒ तद्य॒त्ते द्वे भ॑वतो॒ द्व॒न्द्वꣳ हि मि॑थु॒नं प्र॒ज॑ननं॒ त॒स्माद्वे॒ द्वे लो॑कम्पृ॒णेऽउ॒पधी॑येते त॒स्मादु॒ द्वाभ्यां चि॒तिं प्र॒णय॑न्ति ॥ ८ ॥

स एष एव लोकम्पृणा—तामेष सर्वोऽग्निरभिसंपद्यते । तस्यैतन्मिथुनम् । योऽयं सव्येऽक्षन्पुरुषः । अर्धमु हैतदात्मनः—यन्मिथुनम् । यदा वै सह मिथुनेन । अथ सर्वः । अथ कृत्स्नः—कृत्स्नतायै तद् । यत्ते द्वे भवतः । द्वंद्वं हि मिथुनं प्रजननम् । तस्माद् द्वे द्वे लोकम्पृणे उपधीयेते । तस्मादु द्वाभ्यां चितिं प्रणयन्ति ॥ ८ ॥

सोयमुक्तदक्षिणाक्षिपुरुषस्य मिथुनत्वेन सम्पद्यत इत्याह—स एष एव लोकम्पृणेति । 'सः' 'एषः' सूर्यमण्डलगतपुरुष एव 'लोकम्पृणा' इष्टका लोकम्पृणेष्टकाया आदित्यात्मत्वमष्टमकाण्डावसाने प्रतिपादितम्—तथा हि "अथ लोकम्पृणामुपदधात्यसौ वा आदित्यो लोकम्पृणाऽथ हीमान् लोकान् पूरयत्यमुमेवैतदादित्यमुपदधाति" ( श. प. ८।७।२।१ ) इति । तां सूर्यात्मकलोकम्पृणेष्टकामभिलक्ष्य सर्वोऽग्निः सम्पद्यते—लोकम्पृणाभिः सर्वोऽग्निः कृत्स्नः संतर्प्यत इत्यर्थः । तस्य सूर्यपुरुषात्मकदक्षिणाक्षिपुरुषस्य सव्याक्षिगतः 'पुरुषः' 'मिथुनं' योषित् इत्येतस्मिन् मिथुने हि 'आत्मनः' 'अर्द्धम्' अर्द्धभागः । "अर्द्धो वा एष आत्मनो

अथोत्प्रेक्षाद्वयात् ऊर्ध्वं 'य एष एतस्मिन्मंडले पुरुषः, य एष हिरण्मयः पुरुषः, सोऽयं' 'दक्षिणेऽक्षन्' अक्षिणि पुरुषो नेत्राभिमानी रूपादिदर्शनहेतुर्यो वर्तते सोऽयमेक एव । प्राणिनेत्रेषु मंडले च एक एव परमात्मा अस्तीति भावयेदिति रहस्यं । "एको देवः सर्वभूतेषु गूढः" ( श्वेता. उ. ६।११ ) इति शाखांतरात् । अस्यां कंडिकायां बहुलं सर्वनामप्रयोगो वस्तुसाक्षात्कारविद्योतकः । एवं पूर्वत्र च चकाराश्रयनयज्ञीयरुक्मादिदृष्टांतमंडलादिनिदर्शनं च, प्राणिनेत्रशुक्लादौ दार्ष्टांतिके समुच्चिन्वते । हिरण्मय इत्यत्र मयट् न विकारे अनित्यत्वप्रसंगात् । अपि तु प्राचुर्ये प्रचुरं कनकाभरणो देव इत्यर्थः । दिव्यमंगलविग्रह इति वा । यद्वा मंडले यागरुक्मदृष्टिः शुक्ले अर्चिःपर्णदृष्टिः कृष्णे मंडलयागपुरुषद्वयदृष्टिः अक्षिपुरुषे कार्या इति वा कंडिकार्थः ॥ ७ ॥

अथेदानीमष्टमकंडिकायां मिथुनत्वलक्षणमुपासनमुपदिशति । स एष इति । यः पूर्वोक्तो भानुमान् स एषः लोकंपृणाद्यौरेव इत्युपासीत । लोक्यते सर्वदर्शिभिरिति लोकं ब्रह्मांडं वृष्टिद्वारा पालयतीति लोकंपृणा द्यौः । पृ पालनपूरणयोः । द्वितीयाया अलुक् । जायास्थानीयां दिवं एषः प्रत्यक्षः सर्वः सर्वात्मकः । अत एव अग्निशब्दवाच्यो भानुः पतिस्थानापन्नः आभिमुख्येन संपद्यते मिथुनीभूतवान् । अयंभावः—एक एवादित्यो द्यौर्भूत्वा जायाशब्देन स्वरूपतः पुरुषशब्देन चोच्यते । अत एव परमात्मप्रकरणे बृहदारण्यकं "स इममेवात्मानं द्वेधा पातयत् । ततः पतिश्च पत्नी चाभवताम्" ( बृ. उ. १ । ४ । ३ ) इति । नच परमात्ममंडलपुरुषयोर्भेदोऽस्तीति असकृदवोचाम । अत्र तित्तिरिः कूजति ।

यत्पत्नी " (तै. सं. ६।१।९)–इति तैत्तिरीयश्रुतेः। यतोऽर्द्धमतः सव्याक्षिपुरुषो नातिरिक्त इत्यर्थः। 'यदा' आत्मा 'मिथुनेन' युक्तः 'तदा' 'सर्वः' 'कृत्स्नः' सम्पूर्णः। पुरुषद्वयं मिथुनात्मना स्तौति–**तद्यत्ते द्वे भवत** इति। 'यत्' यदा 'ते द्वे' 'भवतः' तदा 'कृत्स्नतायै' पूर्णत्वाय द्वे इति व्यक्त्यपेक्षं नपुंसकलिङ्गत्वम्। यतः पुरुषयोः 'द्वन्द्वं' यतः सूर्यात्मिके 'लोकंपृणे' 'द्वे द्वे' 'उपधीयेते' " तिसृषु लोकंपृणासु मंत्रो दशसु च द्वयोर्वा दशस्वेकस्यां च " (का. श्रौ. सू. १७।१७) इति लोकम्पृणोपधानप्रस्तावे सूत्रम्। अष्टमकाण्डे लोकम्पृणाप्रस्तावे द्वंदश उपधानमुक्तम्। अथ तत्र या द्वितीया 'मिथुनं' तत् 'अर्धमु हैतदात्मनो यन्मिथुनं' " स यस्यां सक्त्यां प्रथमे उपदधाति ततो दशभिर्दशभिः संछादयति" (श. प. ८।७।२।१२) इति। द्वित्वमेवमन्यत्रापि दर्शयति–**तस्माद्‌ द्वाभ्यामिति**। तस्मादेव द्वाभ्यां द्वाभ्यां यजुष्मतीलोकम्पृणाभ्यां 'चितिं' 'प्रणयन्ति'॥ ८॥

---

" स यश्चायं पुरुषे यश्चासावादित्ये स एकः " (तै. उ. ब्र. व. २। ८) इति। द्युलोकादित्ययोर्मिथुनत्वं सप्तान्नब्राह्मणे प्रसाधितं–" तावती द्यौस्तावानसावादित्यस्तौ मिथुनᳵ समैतां ततः प्राणोऽजायत " (बृ. उ. १।५।१२) इति। एतत्प्राक्तनकंडिकोक्तमध्यात्माधिदेवतभेदाभावं स्थूणानिखननन्यायेन प्रबलयति। **तस्येति**। 'योऽयं सव्ये अक्षन्' अक्षिणि पुरुषो वर्तते। तस्यैव 'एतन्मिथुनं' मिथुनत्वनिरूपणमिति भावः। सव्यं दक्षिणमिति सव्यापसव्यप्रकरणे दर्शनात्। स्त्रीपुंसयोरन्योन्यात्मकत्वं स्फीतयति। 'अर्द्धमुह' इति यन्मिथुनमस्ति 'एतदात्मनः' आत्मनः परस्परस्यार्द्धं। उ ह निपाताभ्यां प्रसिद्धिः प्रकाश्यते। तथाच बृहदारण्यकम्–" तस्मादिदमर्द्धं बृगलमिव स्व इति ह स्माह याज्ञवल्क्यस्तस्मादयमाकाशः स्त्रिया पूर्यते " (बृ. उ. १। ४। ३) इति स्थलांतरेऽपि। "अर्द्धो वा एष आत्मनो यत्पत्नी" (तै. सं. ६।५।९) इति। इत्थं जंपतिभ्यां द्युलोकद्युमणिभ्यां जगदुत्पत्तिमाचष्टे। **यदेति**। यदा यस्मिन् काले मिथुनेन " व्यत्ययो बहुलम् " (पा. सू. ३।१।८५) इत्यनुशासनात्। मिथुनं प्राक्कथितं सह एकीभावेन मिलति। वै वाक्यालंकारे। अथ तदानीं सर्वश्चतुर्दशभुवनसमूहः गगनादिभूतसमूहो वा जायते। अथ लोकजनेरूर्ध्वं 'कृत्स्नः' सुरासुरद्विपचतुष्पत्पक्षिसर्पादिसमूहः सममवदिति शेषः। लोकसृष्टयनंतरं प्राणिसृष्टिः बृहदारण्यके प्रमाणीकृता–" आत्मा वा इदमेक एवाग्र आसीत् " (बृ. उ. १।४।१।) इत्यादिना। लोकोत्पत्तिं भावयित्वा–"स ईक्षते मेऽनु लोकाश्च लोकपालाश्चान्नमेभ्यः सृजा इति" (ऐ. आ. २।४।२३) इति लोकपालाद्युत्पत्तेरुत्तरत्र भाषितत्वात्। पंचभूतोत्पत्तेरनंतरं प्राण्युत्पत्तिं तित्तिरी रोरवीति–" आत्मन आकाशः संभूतः " (तै. उ. ब्र. व. १) इत्यादिना भूतसर्गं संभाष्य " ओषधिभ्योऽन्नं अन्नात्पुरुषः " (तै. उ. ब्र. व. १) इत्यादिना पुरुषोपलक्षितप्राणिमात्रसर्गसंभाषणात्। यथा द्युलोकद्युमणी मिथुनीभूय कृत्स्नं जनयतः। तथा लोकेऽपीत्याह–**कृत्स्नतायै इति**। 'तत् यत्' तत् व्यत्ययेन तौ द्वौ कृत्स्नतायै स्वार्थे तद्व। कृत्स्नाय कृत्स्नसर्गायेत्यर्थः। द्वंद्वं भवतः। हि एव तत् तस्मात् लोकेऽपि प्राणिमात्रं सत् प्रजनयतीति। प्रजननमुत्पादनसमर्थं भवति। न एकैकशः। तदेतत्सर्वं पुरुषविधब्राह्मणे (बृ. उ. १।४) आलोचनीयम्। तस्मादित्थं तस्मात् चयनेऽपि 'द्वे द्वे' इष्टके उपधीयेते अध्वर्युणा। कथंभूते इष्टके 'लोकंपृणे' व्युत्पत्तिः प्राग्वत्। औपलक्षण्येन दर्शादावपि द्वंद्वशः पात्रासादनं इत्यादि बोध्यं। 'तस्माद्‌' तस्मादेव कारणात् 'द्वाभ्यां द्वाभ्याम्' इष्टकाभ्यां 'चितिं' चयनं क्रतौ 'प्रणयंति' याज्ञिका निष्पादयंति। सर्वथाऽपि द्वंद्वमेव कार्यक्षमम्। नैकाकी नैकाकिनी वा इति भावः॥ ८॥

सु॒ऽ ए॒षु॒ऽ ए॒वेन्द्रः॑ । ( न्द्रो ) योऽयं दक्षि॑णे॒ऽक्षन्पुरु॑षो॒ऽथे॒यमि॑न्द्रा॒णी ता॒भ्यां दे॒वा ऽए॒तां वि॒धृ॒तिम॑कुर्व॒न्नासि॑कां त॒स्माज्जा॒याया॒ऽअन्ते॒ नाश्नी॑या॒द्वी॒र्य॑वा॒न्हा॒स्मा॒ज्जा॒य॒ते वी॒र्य॑वन्तमु॒ ह॒ सा ज॑नयति॒ यस्या॒ऽ अन्ते॒ नाश्ना॒ति ॥ ९ ॥

तदे॒तद्दे॒व॒व्र॒तम् । ( ॐ ) राज॒न्य॒बन्ध॒वो मनु॒ष्या॒णा॒मनु॒तमां॒ गो॒पा॒य॒न्ति त॒स्मा॒दु॒ तेषु॒ वी॒र्य॑वा॒ञ्जा॒य॒ते॒ऽमृत॑वा॒का व॑य॒सा॒ᳪ᳭ सा क्षि॒प्र॒श्ये॒नं ज॑नयति १०

स एष एवेन्द्रः—योऽयं दक्षिणेऽक्षन्पुरुषः । अथेयमिन्द्राणी ताभ्यां देवा एतां विधृतिमकुर्वन्—नासिकाम् । तस्माज्जायाया अन्ते नाश्नीयाद् । वीर्यवान्हास्माज्जायते । वीर्यवन्तमु ह सा जनयति—यस्या अन्ते नाश्नाति ॥ ९ ॥

तदेतद्देवव्रतम् । राजन्यबन्धवो मनुष्याणामनुतमां गोपायन्ति । तस्माद् तेषु वीर्यवाञ्जायते । अमृतवाका वयसाम्—सा क्षिप्रश्येनं जनयति ॥ १० ॥

---

यदुक्तमक्षिद्वये पुरुषद्वन्द्वं मिथुनमिति तदेव स्त्रीपुँल्लिङ्गेन्द्रेन्द्राणीशब्दाभ्यां विशदयति—स एष एवेन्द्र इति । दक्षिणाक्षिपुरुष इन्द्र इत्युच्यते । सव्याक्षिपुरुष इन्द्राणीत्युच्यते । इन्द्रस्य स्त्री इन्द्राणी । " इन्द्रवरुणभव० ", (पा. सू. ४।१।४९) इत्यादिना ङीषानुकौ । ' ताभ्यां ' स्त्रीपुंसाभ्यामिन्द्राणीन्द्राभ्यामर्थे ' एतां ' ' नासिकां ' ' विधृतिं ' व्यवधायकवस्त्रस्थानीयाम ' अकुर्वन् ' यतः स्त्रीपुरुषयोर्मध्ये ' देवाः ' ' विधृतिं ' कृतवन्तः । अतः ' जायाया अन्ते नाश्नीयात् '—स्त्रियाः समीपे स्त्रियं पश्यन् भोजनं न कुर्यादित्यर्थः । स्त्रीसमीपे भोजनाकरणस्य फलं दर्शयति वीर्यवान्हास्मादिति । अस्मात् स्त्रीसमीपे भोजनमकुर्वतो ' वीर्यवान् ' सुतो जायते । यस्याः समीपे न भुङ्क्ते ' सा उ ह ' साऽपि ' वीर्यवन्तम् ' उत्पादयति ॥ ९ ॥

एतद् व्रतमनुतिष्ठतां वीर्यवत्पुत्रोत्पत्तिर्भवतीत्याह—तदेतद्देवव्रतं राजन्यबन्धव इति । यदुक्तं ' जायाया

---

नवम्यां विधांतरेण मिथुनत्वं कल्पयते—स एष इति । 'यो अयं दक्षिणे अक्षन्' अक्षिणि 'पुरुषः' अस्ति । 'स एष एवेन्द्रः' 'परमैश्वर्यमण्डलपुरुषभिन्नत्वात् ।' 'अथ' अनंतरं 'इयं' वामाक्षिनिष्ठकनीनिका 'इंद्राणी' अनुपदमुक्ता इंद्रपत्नी । एतयोर्जांपत्यम् कूर्चब्राह्मणे—" इंधो ह वै नाम "—( बृ. उ. ४ । २ । २ ) इति । द्वितीयकंडिकायां सव्यनेत्रस्थस्येन्द्रत्वं व्याहृत्य " अथैतद्वामेऽक्षिणि पुरुषरूपमेषाऽस्य पत्नी "—( बृ. उ. ४।२।३) इति तृतीयकंडिकायां अपसव्यनेत्रस्थकनीनिकायाः पत्नीरूपत्वं प्रपंचितम् । यतोऽनयोर्दांपत्यं अतः सर्वदा यथा दर्शनं नास्ति जातुचिदेव दर्शनम् तथा मर्यादा अपेक्षिता । तामाचष्टे—ताभ्यामिति । ' देवाः ' इंद्रादयः ताभ्यां तादर्थ्ये चतुर्थी । तयोरर्थाय 'एतां' अपरोक्षां 'नासिकां' नयनयोर्मध्ये 'विधृतिं' मर्यादाम् 'अकुर्वन्' चक्रुः । विशेषेण धारयति व्यवस्थामिति विधृतिर्मर्यादा । यस्मात् स्त्रीपुंसयोः सर्वदा मर्यादा देवैः कृता 'तस्मात् जायायाः' ' अंते ' समीपे दृष्टिगोचरे जायायाः भोजनस्यांते वा 'नाश्नीयात्' न भुंजीत । यदि 'ह' तर्हि 'अस्मात्' तथा अभोक्तुः सकाशात् 'वीर्यवान्' 'पुत्रः' 'जायते' । 'सा' अपि जाया 'वीर्यवन्तम्' आत्मजं 'जनयति' प्रसूते।'उ ह' निश्चये । सा का ? ' यस्या अंते नाश्नाति ' पतिः । अन्यथा निर्वीर्यस्तनयो भवतीति व्यतिरेको बोध्यः ॥९॥

अनुपदमुक्तां शिक्षां लोकानुभवेन प्रकटयति—तदेतद्देवव्रतमिति । यद्यपि पंचाग्निब्राह्मणे—" राजन्यबंधु-

तौ हृदयस्याकाशं प्रत्यवेत्य । मिथुनीभवतस्तौ यदा मिथुनस्यान्तं गच्छतोऽथ हैतत्पुरुषः स्वपिति तद्यथा हैवेदं मानुषस्य मिथुनस्यान्तं गत्वाऽसंविदऽ इव भवत्येवꣳ हैवैतदसंविदऽ इव भवति दैवꣳ ह्येतन्मिथुनं परमो ह्येषु ऽआनन्दः ॥ ११ ॥

---

तौ हृदयस्याकाशं प्रत्यवेत्य मिथुनीभवतः । तौ यदा मिथुनस्यान्तं गच्छतः अथ । हैतत्पुरुषः

---

अन्ते नाश्नीयात् ' इति ' तत् ' इदं देवकल्पितं व्रतम् ' एतत् ' ' मनुष्याणां ' मध्ये ' राजन्यबन्धवः ' 'अनुतमां गोपायन्ति ' अनुतमाम् अत्यर्थं रहस्यत्वेन कुर्वन्ति । ' तस्मात् ' ' उ ' तस्मादेव ' तेषु ' ' वीर्यवान् ' पुत्रो जायते ' वयसां ' पक्षिणां मध्ये ' अमृतवाका ' नाम पक्षिजातिरेतद्व्रतं गोपायति, अतः ' सा ' ' क्षिप्रश्येनं ' शीघ्रगामिनं श्येननामकं पक्षिणं ' जनयति ' ॥ १० ॥

अथेन्द्रेन्द्राणीनाम्नोः स्त्रीपुरुषयोः सङ्गमस्य स्थानं तल्लक्षणानि चाह–तौ हृदयस्याकाशमित्यादिना । स्त्रीपुरुषौ हृदयाकाशं दहरं प्राप्य ' मिथुनीभवतः ' मिथुनकर्म सम्भोगं कुरुत इत्यर्थः । ' तौ ' ' यदा ' मैथुन-

---

प्राक्षीत् " ( छां. उ. ५. ३. ५. ) इति पितरं गौतमं प्रति श्वेतकेतूक्तौ राजन्यो बंधुरस्यासौ राजन्यबंधुः । न तु स्वयं राजन्य इति काक्वा राजन्याधमपरत्वेन परमहंससाम्राज्यधुरंधुरैः नारायणेंद्रसरस्वतीभिर्व्याख्यातं, जैवलिराजन्यनिंदायाः श्वेतकेतुना अभिप्रेतत्वात् । तथाऽपि प्रकृते राजन्य एव बंधुर्यस्येति अवधारणापूर्वपदसमासे स्वस्य राजन्यतमत्वं प्रतिभाति । अन्यथा स्वस्याधमत्वे कथमवधारणं स्वामिनामुक्तौ अवधारणाभावात् कर्मधारयो वा । बंधुत्वमपि सौहार्दादिना बोद्धव्यम् । ननु एवं प्रयासे को हेतुरिति चेत् निंदाया अभावः । तेषु वीर्यवान् जायत इति वीर्यवत्पुत्रलाभश्च हेतुरिति वेदपुरुषांतरस्थं जानीहीति दिक् । यदेतद्दैवैर्निर्मितं व्रतं देवव्रतं जायांतेऽनशनादि । तदेतत् 'मनुष्याणां' मध्ये 'राजन्यबंधवः' पुष्पवंतोरन्ववायजयध्वजाः। 'अनुतमां' अतितरां 'गोपायंति' रक्षंति स्म यस्मात् 'तस्मात् उ' एव कारणात् 'तेषु' राजन्यश्रेष्ठेषु पुष्पवद्वंशमणिषु 'वीर्यवान्' पुत्रो 'जायते' । अनुभवसिद्धमेतत् सूर्याचंद्रमसोरन्ववाये । अपि च 'मृतवाका' मृताः वाकाः वर्णव्यत्ययेन पाकाः यस्याः सा मृतवाका मृतवंध्या । पाकाः पुत्राः । वर्णव्यत्ययः "ऐलबृदा आयुर्युधः" इत्यत्र ( वा.सं. १६।६० उवट भाष्ये ) ऐलभृत इति भाष्यकारैः परोऽक्षवृत्त्या अंगीकृतः । व्यत्ययसूत्रे ( पा.सू. ३।१।८५ ) पतंजलिना अपि । ' सा ' मृतवंध्या अपि तादृग्व्रतधारिपतिका सती मनुष्यमध्ये वीर्यवंतं पाकं ' जनयति ' । कमिव ' क्षिप्रश्येनम् ' क्षिप्रगामी श्येनः क्षिप्रश्येनः तमिव । लुप्तोपमानमेतत् । ' वयसां ' पक्षिणां मध्ये यथा श्येनः प्रतापप्रभावाभ्यां पक्षिमात्रतिरस्कर्ता । तथा तेजःशौर्याभ्यां मनुष्यमात्राभिभवितारं पुत्रं तादृशभर्तृका मृतवंध्याऽपि प्रसूते । इतरा प्रसूत इति का कथेति भावः ॥ १० ॥

पुनरपि अध्यात्मं मिथुनवृत्तान्तं कथयति । अधिदेवतं कथितप्रायमेव भेदाभावात् इति मन्वानो वेदपुरुष आह–ताविति । " पुमान् स्त्रिया " ( पा. सू. १ । २ । ६७ ) इत्येकशेषसूत्रात्, सा च स च ताविति

---

१–राजहंससरस्वतीभिस्तु 'मृतवाका' इति पदच्छेदमंगीकृत्य व्याख्यातम् । २–सूर्यचन्द्रयोरित्यर्थः । ३–सूर्यचन्द्रवंशमित्यर्थः ।

( स्तु ) तुस्मादेवंवित्स्वप्यात् । ( ह्लो ) ह्लोक्यᳫँ हैतेऽएव तुदेवुते मिथुनेन प्रियेण धाम्ना सुमर्धयति तुस्मादु ह स्वपन्तं धुरेव नु बोधयेन्नेदेते देवुते मिथुनीभुवन्त्यौ हिनुसानीति तुस्मादु हैतत्सुषु पुषः श्लेष्मणमिव

स्वपिति । तद् यथा हैवेदं मानुषस्य मिथुनस्यान्तं गत्वाऽसंविद इव भवति—एवं हैवैतदसंविद इव भवति । दैवं ह्येतमिथुनम् । परमो ह्येष आनन्दः ॥ ११ ॥

तस्मादेवंवित्स्वप्यात् । लोक्यं हैते एव तद्देवते । मिथुनेन प्रियेण धाम्ना समर्धयति । तस्मादु ह स्वपन्तं धुरेव न बोधयेत् । नेदेते देवते मिथुनीभवन्त्यौ हिनसानीति । तस्मादु हैतत् सुषु-

कर्मणः ' अन्तम् ' अवसानं गच्छतः तदानीमिव पुरुषः जीवात्मा स्वपिति लोके मानुषस्य मैथुनस्यान्तं गत्वा असंविदः अजानानेव स्त्री भवति । एवं तदा तयोर्मिथुनभावे पुरुषः 'असंविद इव भवति ' अजानन्निव भवति । " विदेः इगुपधलक्षणः "—( पा. सू. ३।१।१३५ ) इति कः प्रत्ययः । 'हि' यतः ' एतन्मिथुनम् ' इन्द्रेन्द्राणीद्वन्द्वं दैवं देवनिर्मितम्—अतस्तयोर्मिथुनभावे ' परमः ' ' आनन्दः ' भवति ॥ ११ ॥

' तस्मात् एवं ' जानानः स्वापेन तयोर्मिथुनकर्म समर्द्धयति ' परमानन्दयुक्तं करोति । अत्र कश्चिद्धर्ममाह—तस्मादु ह स्वपन्तं धुरेवेति । यतः स्त्रीपुंसयोर्मैथुनेन पुरुषः स्वपिति तस्मात् स्वापं कुर्वन्तं ' धुरेव ' पीडायै

समासः । 'तौ' प्राक्कथितौ जंपती जाग्रदवस्थायां स्वस्थानयोः स्थित्वा सुषुप्तौ 'हृदयस्य' हृदयकमलस्य मध्यममागरूपमाकाशः । " तल्लिङ्गात् दहर उत्तरेभ्यः " ( ब्र. सू. १।३।५।१४—१८ ) इत्यधिकरणद्वयसिद्धदहरशब्दवाच्यम् 'आकाशं' 'प्रत्यवेत्य' संप्राप्य 'मिथुनीभवतः' । एकदेहीभवतः । एकदेहीभूय ' तौ ' 'यदा' यस्मिन् काले 'मिथुनस्य' ग्राम्यधर्मस्य 'अंतं' समाप्तिं रत्यंतमिति भावः । 'गच्छतः' । 'अथ' तदा 'ह' किल । 'एतत्पुरुषः' एष चासौ पुरुषश्च इत्यभेदसमासः । ' स्वपिति ' रतिश्रमनिवृत्तये सोऽपि स्वपितीति बोध्यं । तथाच कूर्चब्राह्मणं— " तयोरेष सᳫँस्तावो यऽएषोऽन्तर्हृदय आकाशः " ( बृ. उ. ४।२।३ ) इति । 'तत्' तस्मात् यथैव 'ह' किल 'इदं' प्रसिद्धं 'मानुषस्य मिथुनस्य' व्यत्ययेन मानुषं मिथुनम् । स्त्रीपुंसलक्षणं 'अंतं' रतिसमाप्तिं 'गत्वा' न विद्यते संवित् व्यवहारज्ञानं यस्य तत् इति वक्तव्ये ' आपं चैव हलंतानां ' ( पा. सू. २ । ४ । ८२ सि. कौ. ) इति न्यायेन आपमंगीकृत्य । पुनर्न विद्यते संविदा यस्य मिथुनस्य तत् 'असंविदः' । व्यत्ययेन असंविदमिव 'भवति' । एवमेवाह किल 'एतद्दैवं मिथुनं' 'असंविद इव' असंविदमिव भवति । इदमत्राकूतं—यथा स्त्रीपुंसौ रत्यंते श्रांतौ संतौ निद्राणीभवतः न किंचिज्जानत इव । इवशब्देन यत्किंचित् ज्ञानमुच्यते । एवं दैवमिथुनं जाग्रद्व्यवहारक्लेशाक्लिष्टं सत् सुषुप्तौ हृत्पद्मकोशे लीनं सत् निर्विज्ञानमुत्प्रेक्ष्यते । ननु—इत्थं चेत् दैवमानुषमिथुनयोः को भेदः ? इत्यत्राह—दैवमिति । 'हि' यस्मात्, एतन्मिथुनं दैवं हि तस्मात् 'एषः' मिथुनसंभवः ' आनंदोऽपि परमः ' । एतेन मानुषमिथुनजानंदस्तुच्छ इत्युक्तं भवति ॥ ११ ॥

अथेदानीं दिव्यमिथुनवृत्तांतविदुपासकस्य कंचिन्नियमविधिं विधत्ते वेदः—तस्मादेवंवित् इति । यस्माद्वागीरितं द्वंद्वं हृदयाकाशे रहसि सुषुप्तौ एकीभूय रमते न जाग्रति तस्मात् एवंवेत्तीत्येवंवित् उपासकः 'स्वप्यात्' यद्यपि प्राणि-

मुखं भवत्येतेऽएव तद्देवते रेतः सिञ्चतस्तस्माद्रेतसऽइदꣳ सर्व्वꣳ सम्भवति यदिदं किञ्च ॥ १२ ॥

पुषः श्लेष्मणामिव मुखं भवति । एते एव तद् देवते रेतः सिञ्चतः । तस्माद्रेतस इदं सर्वं सम्भवति—यदिदं किं च ॥ १२ ॥

एव न बोधयेत्—न प्रबुद्धं कुर्यात् । धूर्वतेर्हिंसार्थात्—( धा. पा. भ्वा. ५७४ ) क्विपि " राल्लोपः "—( पा. सू. ६ । ४ । ४ । २१ ) इति रूपम् । इव एवार्थे । यद्वा धुरा इव वेगेनेव न प्रबोधयेत् । अत्याहितकार्ये शनैः प्रबोधयेदित्यर्थः । तत्र कारणम्—नेदेते देवते इति । यदि सहसा प्रबोधस्तर्हि एते देवते इन्द्रेन्द्राणीनाम्न्यौ ' मिथुनीभवन्त्यौ ' न ' हिनसानि ' न हनानीति मनीषया सुप्तस्य सहसा प्रबोधो न कार्यः । तयोरिदानीं मिथुनीभावस्य लक्षणमाह—तस्मादु हैतत्सुषुपुष इति । यस्मात्तयोर्मिथुनभावेन पुरुषस्य स्वापस्तस्मात्सुप्तवतो जनस्य ' मुखं ' ' श्लेष्मणं ' श्लेष्मयुक्तम् ' इव ' ' भवति ' श्लेष्मशब्दात् मत्वर्थे पमादित्वात्—( पा. सू. ५ । २ । १०० ) नः प्रत्ययः । कुतो मुखस्य श्लेष्मयुक्तता तत्राह—एते एव तद्देवते रेतः सिञ्चत इति । तयोर्देवतयो रेतःसेकात् सुप्तमुखं श्लेष्मयुक्तं तदाकारमिव भवतीत्यर्थः । ' तस्माद्रेतसः ' सकाशात् ' इदं सर्वं ' विश्वं ' सम्भवति ' उत्पद्यते, ' यदिदं किंच ' यत्किञ्चित्प्राणिजातम् ॥ १२ ॥

मात्रसाधारणः स्वापः तथापि 'स्वप्यात्' इति लिङा दिवा नक्तं वा अवश्यं स्वापं कुर्यादेव इत्युपासको नियम्यते । दिव्यद्वंद्वस्य रहःप्राप्तिसिद्धये इत्थं विधिमाश्रित्य उपासको अहन्यपि निद्रातीति यत् तत् 'लोक्यं' सर्वलोकहितं 'ह'किल"तस्मैहितम्" (पा.सू.५।१।५) इति तद्धितः । ननु—कथंसर्वलोकहित मितिचेत्; एतत्कंडिकांते संलपिष्यते । अत एवायमुपासको निद्रालुः सन् 'एते देवते' 'धाम्ना' हृदाकाशरूपस्थानेन 'समर्धयति' मेलयतीत्यर्थः । कथं विधेन 'धाम्ना मिथुनेन ' मिथुनस्य ' प्रियेण ' एकांतः खलु मिथुनप्रीतिहेतुरिति प्रथा । एतत्सर्वमेवकारो अवधारयति । 'उ ह' यस्मादर्थे । यस्मादित्थं 'तस्मात्' 'स्वपंतम्' उपासकं 'धुरा' पाणिना तदंगपेषणादिभारेण 'न बोधयेत्' नोत्थापयेत् । अनुत्थापनाभिप्रायमाह—नेदिति । न इत् इति पदच्छेदः । 'मिथुनीभवंत्यौ एते देवते न हिनसानि ' न पृथक् करोमि इति मनसि निधाय न बोधयेदित्यन्वयः । इव इत् आम्यामयमर्थो नियम्यते । अयंभावः—दिवा नक्तं वा निद्रालुमुपासितारं यः कश्चिदबोधयिष्यत् चेत्; तदा दिव्यं द्वंद्वं व्यभजिष्यत् । तद्विभागो महापातकहेतुः । विभाजकस्यास्मिन्परस्मिन् वा जन्मनि द्वंद्वविधातकश्च । अत एव दिवा स्वापनिषेधकं शास्त्रमपि न विरुध्यते । ननु दक्षिणाक्षिकमलाभिमानी सूर्यो वामाक्षिकमलतारका च स्त्रीपुंसीभूय निद्रालोरुपासकस्य हृत्कमलकर्णिकायां रमते इत्येतत् अप्रसिद्धमिव इत्याशंक्य भावनाबलेन अनुभावयति—तस्मादिति । उ हेति । यस्मात् 'एते देवते' क्रीडित्वा ' तत् ' प्रसिद्धं 'रेतः सिञ्चत एव तस्मात्' सुषुप्तिं पुष्णातीति 'सुषुपुट्' पृषोदरादित्वात् वर्णो लुप्तः । तस्य सुषुप्तिपोषकस्य एतत् अपरोक्षं 'मुखं श्लेष्मणं' फेनाकुलमिवोपलभ्यते कांतिसामान्यात् । श्लेष्म नयतीति श्लेष्मणं । " रषाभ्यां० " ( पा. सू. ८ । ४ । १ ) इति णत्वम् । रेतःसेककार्योपलब्धेर्दिव्यद्वंद्वक्रीडा अनुमीयते । तस्मात् अवश्यं एवंवित् स्वप्यात् । ननु ' —रेतसः ' किं भवतीति चेत् शृणु । ' यदिदं किंच ' जगद्वर्तते । ' इदं ' सर्वं तस्मात् रेतसो भवति । सर्वजगत्कारणं तद्वीर्यमिति भावः । अत एव लोक्यमिति भाषितवंतो वयं । अत्रार्थे एतत्सजातीयं कूर्चब्राह्मणद्वितीयतृतीयकंडिकाभ्यां ( बृ. उ. ४ । २ । ३ ) संलपितसंस्तावान्नप्रावरणादिकमपि गुणोपसंहारन्यायेन ( जै. सू. ३ । ४ । २ । ८—३२ ) संग्राह्यं ॥ १२ ॥

स॒ऽ ए॒ष॒ऽ ए॒व मृ॒त्युः । (यं॒) य॒ऽ ए॒ष॒ऽ ए॒त॒स्मि॒न्म॒ण्डले पुरु॒षो य॒श्चायं दक्षि॒णेऽक्ष॒न्पु॒रु॒षस्त॒स्य है॒त॒स्य हृ॒दये पा॒दावतिहितौ॒ तौ॒ है॒त॒दाच्छि॒द्यो॒त्क्रामति स॒ य॒दोत्क्रा॒मत्य॒थ है॒तत्पु॒रु॒षो म्रियते त॒स्मा॒दु है॒तत्प्रे॒तमा॒हुरा॒च्छे॒द्य॒स्ये॒ति ॥ १३ ॥

( त्ये ) ए॒ष॒ऽ उ॒ऽ ए॒व प्रा॒णः । ( ऽ ) ए॒ष॒ ही॒माः स॒र्वाः प्र॒जाः प्र॒णयति त॒स्यै॒ते॒ प्रा॒णाः स्वाः स॒ य॒दा स्व॒पि॒त्य॒थै॒नमे॒ते॒ प्रा॒णाः स्वाऽअ॒पि॒यन्ति

---

स एष एव मृत्युः—य एष एतस्मिन्मण्डले पुरुषः । यश्चायं दक्षिणेऽक्षन्पुरुषः—तस्य हैतस्य हृदये पादावतिहितौ । तौ हैतदाच्छिद्योत्क्रामति । स यदोत्क्रामति—अथ हैतत् पुरुषो म्रियते । तस्मादु हैतत्प्रेतमाहुः—आच्छेद्यस्येति ॥ १३ ॥

एष उ एव प्राणः, एष हीमाः सर्वाः प्रजाः प्रणयति । तस्यैते प्राणाः स्वाः । स यदा स्वपिति—

---

एवं प्रासङ्गिकं परिसमाप्य मण्डलस्थपुरुषात्मनोपासनीयस्य दक्षिणाक्षिपुरुषस्य मृत्युरूपत्वमेवाह—स एष एव मृत्युर्य एष एतस्मिन्मण्डल इति । ' तस्य ' एतस्याक्षिपुरुषस्य ' पादौ ' ' हृदये ' ' अतिहितौ ' व्याप्तौ कीलितौ भवतः । ' तौ ' ' यदा ' ' पादौ ' आच्छिद्योत्क्रामति ' पुरुषशरीरात् तदानीमेव पुरुषो म्रियते । यस्मादाच्छिद्य गतस्तस्मादिमं प्रेतमित्याहुः । प्रपूर्वादेतेः क्तप्रत्यये रूपं प्रेत इति ॥ १३ ॥

ननु कथमक्षिपुरुषनिर्गमे पुरुषस्य मरणमन्यत्र प्राणं प्रस्तुत्याम्नातम्—" तस्मिन्नुत्क्रान्ते " इत्यादिना प्राणनिर्गमादनन्तरमेव शरीरपात इत्याशंक्य तस्यैवाक्षिपुरुषस्य प्राणात्मकतामाह—एष उऽएव प्राण इति ।

---

अथेदानीं सिंहावलोकनन्यायेन प्रागुक्तं रवेर्मृत्युत्वं अन्वयव्यतिरेकाभ्यां स्थिरयति—स एष एवेति । अस्यां कंडिकायां व्यवहितान्वयः । 'य एष एतस्मिन्मंडले पुरुषः यश्चायं दक्षिणेऽक्षन् पुरुषः' विद्यते सः स्थानद्वयस्थो एक एव मृत्युः । तस्योपासितुर्हृदये एतत् स्वक्रीडास्थानं 'आच्छिद्य उत्क्रामति' देहवासं परित्यज्य निष्क्रामति । 'स यदा उत्क्रामति' 'अथ' तदा 'एतत् पुरुषः' उपासकः 'यत्' यदा देहेन वियुज्यते तदा 'अस्य' मृतस्य 'पादौ' अतितरां हतौ निश्चेष्टौ ' तौ ' प्रसिद्धौ करावपि औपलक्षण्येन समस्तावयवा व्याहन्यंते । यस्मादेवं ' तस्मात् ' 'एतत्' उपासितृकलेवरं ' प्रेतमाहुः ' ज्ञातयो ग्रामीणाश्च । 'अस्य' कलेवरं मृत्युना 'आच्छेदि' । णिचोरूपम् । छिन्नमित्यपि आहुः । उपासकजीवो नित्यत्वादुपास्तिमांद्यमध्यमतीव्रतीव्रतरैः सालोक्यसामीप्यसारूप्यसायुज्यलक्षणं निर्वाणं आदित्यलोके गत्वा प्राप्नोतीति फलवाक्यमध्याहर्तव्यम् । एतदर्थ एव बहु निपातप्रयोगः ॥ १३ ॥

अथाधुना आदित्यस्यैव गुणांतरमुपासितुं विधत्ते—एष इति । 'हि' यस्मात् । 'एषः' आदित्यः उदयगिरिमारुह्य यावत् अस्तगिर्यारोहणं तावत् सर्वाः उलूकादिव्यतिरिक्ताः 'इमाः प्रजाः प्रणयति' प्रकर्षेण हानोपादानो-

तस्मात्स्वाप्ययः स्वाप्ययो ह वैतꣳ स्वप्नऽइत्याचक्षते परोऽक्षं परोऽक्षकामा हि देवाः ॥ १४ ॥

अथैनमेते प्राणाः स्वाः अपियन्ति । तस्मात्स्वाप्ययः । स्वाप्ययो ह वैतं स्वप्न इत्याचक्षते-परोऽक्षम् । परोऽक्षकामा हि देवाः ॥ १४ ॥

'एषः' अक्षिपुरुषः 'एव प्राणः' । निर्वचनमाह–हि यतः 'एषः' इमाः प्रजाः 'सर्वाः' 'प्रणयति' लोकान्तरं प्रापयति 'तस्मात्' एष एव प्राणः । तस्याक्षिपुरुषस्य प्राणरूपस्य 'एते' 'प्राणाः' प्राणापानादयः पञ्च प्राणाः 'स्वाः' जातेयः प्राणत्वेन समानजातीया इत्यर्थः । 'सः' अक्षिपुरुषः 'यदा' 'स्वपिति' निलीयते तदा 'एनम्' 'एते' 'स्वाः' 'प्राणाः' 'अपियन्ति' प्राप्नुवन्ति अनुलीयन्त इत्यर्थः । स्वानामप्यय इति 'स्वाप्ययः' स्वाप्ययं 'स्वप्न इत्याचक्षते' परोऽक्षेण । यतो हि 'परोऽक्षकामाः' 'देवाः' ॥ १४ ॥

पेक्षाबुद्धीर्नयति प्रापयति । नयतिर्द्विकर्मा । 'उ' तस्मात् एष आदित्यः प्राण एवेति ध्यायेत् । प्र आ एतत्पूर्वान्नयतेः "अन्येभ्योऽपि दृश्यते"–(पा. सू. ३।२।१७) इति ड प्रत्यये "रषाभ्यां०"–(पा. सू. ८।४।१।) इति णत्वे च प्राण इति रूपम् । अत एव प्राणिनयनानयनसाम्यात् आदित्ये सर्वेन्द्रियराज मुख्यप्राणदृष्टिं कुर्वीतेति सुकरो विधिः । अत एव "प्राणस्तथाऽनुगमात्" (ब्र. सू. १।१।११।२८) इत्यधिकरणसिद्धप्राणशब्दार्थांगीकारे 'तस्यैते प्राणाः स्वाः' इति इंद्रियसाहचर्यादुपपत्तिः । ज्येष्ठश्रेष्ठब्राह्मणोक्तरीत्या (बृ. उ. ६।१।) मुख्यप्राणस्य सकलादिंद्रियग्रामात् ज्येष्ठत्वात् श्रेष्ठत्वाच्च पाप्मना मृत्युना अनपहतत्वात् सकलासूपनिषत्सु बहुधा उपास्यत्वेन प्रतीयमानत्वाच्च मुख्यः प्राणः एष आदित्यः इति विजानीयात् । अत एव एते समस्तप्राणिशरीरस्थाः 'प्राणाः' इंद्रियाणि तस्यादित्यस्य 'स्वाः' स्वकीयाः । अत एव 'सः' आदित्यो मुख्यप्राणाभिन्नः सन् 'यदा स्वपिति' 'अथ' तदा एते स्वाः 'स्वकीयभूताः' 'प्राणाः' इंद्रियाणि 'एनं' सूर्यं 'अपियंति' प्राप्नुवंति । मुख्यप्राणरूपे रवौ स्वापं याते सति सर्वाणीन्द्रियाणि स्वपंति उदितेउद्यंति इत्यर्थः । अयं भावः–द्व्याहब्राह्मणे (बृ. उ. १।३।१।७) गर्वितेषु इतरेंद्रियेषु मृत्युध्वस्तेषु सत्सु मुख्यः प्राणः "अश्मलोष्ठ" न्यायेन मृत्युं विध्वंस्य विजयते स्म । तं विजयमानं दूराद्यनेकनामानं मुखनासिकासंचारिणं इतरेंद्रियाणि सेवकवन्निषेव्य, तत्तृप्त्या संतृप्य तदुदयेन, उदेत्य तल्लयेन संलीय छायावत् तदनुसारीणि अभवन् । अयमेवेतिहासो भंग्यंतरेण ज्येष्ठब्राह्मणेऽपि विद्यते । अत्रैव–"ते हेमे प्राणाः अहं श्रयसे विवदमानाः ब्रह्म जग्मुः" (बृ. उ. ६।१।८) इति दर्शनात् प्राणशब्देन इंद्रियाण्यपि उच्यंते । इत्थं सति यो अयं प्राणस्य प्राणानां च व्यवहारः स सर्वोऽपि प्राणाभिन्नत्वेन उपास्यत्वात् आदित्यस्य प्राणानां च द्रष्टव्यः । यस्मादेव तस्मात् स्वाः प्राणाः अपियंति यं । 'असौ' स्वाप्ययो रविः । पुनरुक्तिः 'ह वा' निपातौ च आदरार्थौ । यद्यपि उक्तभंग्या आदित्यस्य स्वाप्ययः इति पावनं नाम तथापि 'एतं' त्रिलोकीनयनेन्दीवरः 'स्वप्नः' इति नामांतरेण 'परोऽक्षं' यथा तथा शास्त्रज्ञाः 'आचक्षते' । तत्र निदानं 'हि' यस्मात् 'देवाः परोक्षकामाः' । तथाच कूर्चे (बृ. उ. ४।२।२।) 'इंधः' इति वक्तव्ये इंद्र इत्यवोचि । सर्वेन्द्रियजनिस्थितिविनष्टिहेतुरादित्यः इति वेदपुरुषहृदयंगमो भावः ॥ १४ ॥

सुऽ एतैः सुप्तः । ( तो ) न कस्य चुन व्वेद न मुनसा सुंकल्पयति नु व्वाचाऽन्नस्य रुसं व्विजानाति नु प्राणेन गन्धं व्विजानाति न चुक्षुषा पश्यति न श्रोत्रेण शृणोत्येतुॅ हृयेते तदाऽपीता भवन्ति सुऽ एषऽ एकः सुन्प्रजासु बहुधा व्याविष्टस्तुस्माद्देका सती लोकम्पृणा सुर्वमग्निमनुवि-भवत्युथ यदेकऽएव तुस्माद्देका ॥ १९ ॥

स एतैः सुप्तो न कस्य चन वेद न मनसा सङ्कल्पयति । न वाचऽन्नस्य रसं विजानाति । न प्राणेन गन्धं विजानति । न चक्षुषा पश्यति । न श्रोत्रेण शृणोति । एतं ह्येते तदाऽपीता भवन्ति । स एष एकः सन्प्रजासु बहुधा व्याविष्टः । तस्मादेका सती लोकम्पृणा सर्वमग्निमनुविभवति । अथ यदेक एव । तस्मादेका ॥ १९ ॥

तस्मिन् सर्वेषां प्राणानामप्ययं विशदयति--स एतैः सुप्तो न कस्य चन वेदेति । सामान्योक्तं विवृणोति--न मनसेति । सङ्कल्पो नामाध्यवसायः 'वाचा' रसनया । 'प्राणेन' नासिकया । वस्तुत एकस्यैवाक्षिपुरुषस्य नानाप्रजास्वावेशाद्बहुत्वमित्याह--स एष एकः सन् प्रजास्विति । तस्मात् 'लोकम्पृणा' सूर्यपुरुषात्मिका वस्तुतो जात्या एकाऽपि सती 'सर्वमग्निमनुविभवति' व्याप्नोति । अथ यतः 'एक एव' पुरुषः 'तस्मादेका' लोकम्पृणा ॥ १९ ॥

अथ संप्रति सर्वप्राणसहिते मुख्यप्राणरूपे रवौ स्वापं याते सति जीवावस्थामाचष्टे-स एतैरिति । 'स' आदित्यरूपः प्राणः 'एतैः' प्राणैः सह यदा 'सुप्तः' तदा जीवो 'न कस्यचन' कर्मणि षष्ठी 'न' किंचित् 'वेद' 'न मनसा' धर्ममधर्मं वा 'संकल्पयति' सर्वत्र करणार्थे तृतीया । कर्ता जीवः । वाक्शब्देन रसना लक्ष्यते । वाक्परत्वे रसज्ञानानुपपत्तिर्लक्षणाबीजं । ऐकाधिकरण्यरूपः शक्यसंबंधोऽपि विद्यते । वाग्रसनेंद्रिययोरेकजिह्वाप्रवर्तितत्वात् । 'वाचा' रसनया 'अन्नस्य' गुडादेश्च 'रसं' मधुरादिं 'न विजानाति' 'प्राणेन' घ्राणेंद्रियेण 'गंधं न विजानाति' । उपसर्गान्न जिघ्रति इत्यर्थः । "प्राणो वै ग्रहः" ( बृ. उ. ३।२।२ ) इति ग्रहातिग्रहब्राह्मणे प्राणो घ्राणेंद्रियमिति नारायणेंद्रसरस्वतीभिर्विवृतम् । 'न चक्षुषा' पीतादिरूपं 'पश्यति' 'न श्रोत्रेण' वर्णध्वनिं शब्दं 'शृणोति' तत्र निदानम् । 'हि' यस्मात् 'एते' मनआदिप्राणा उपलक्षिताश्च 'तदा' सुप्तौ 'एतं' भास्करम् 'अपीताः' संप्राप्ताः 'भवंति' । अपिपूर्व इतिर्गत्यर्थः । गतिः प्राप्तिः । इत्थं महता प्रबंधेन प्रविष्टसमस्तपिंडांडं जनितब्रह्मांडं मार्तंडं श्रुतिः बंदिवरसीमंतिनीव तोष्टूयोपास्यत्वेन प्रतिपाद्य च अथ इदानीं सर्ववेदशास्त्ररहस्यमुपदिशति--स एष इति । 'स एष एकः सन्' 'प्रजासु' जरायुजादिचतुर्विधासु 'बहुधा' तत्तज्जमेवंरूपं धारं धारं तत्तद्वेषं ग्राहं ग्राहम् तत्तद्विद्यां पाठं पाठं तत्तद्भाषां भाषं वादं वादं तत्तल्लिपिं लेखं लेखं तत्तत्क्रियां कारं कारं सुखदुःखान्यनुभवन् मुष्टामुष्टि विद्विषन् हस्ताहस्ति मित्रयन् संसारिवत् मुक्तवत् शिष्टाशिष्टादिवच्च 'व्याविष्टः' प्रविष्टः । तथाच ऋग्वेदः--"अथातो विभूतयोऽस्य पुरुषस्य" ( ऐ. आ. २।१।७ ) इत्यादिना सर्वं जगद्विभुरिति दर्शयति--"एक एवाग्र आसीत्" ( ऐ. आ. ४।१।२१ ) इति । "तत्सृष्ट्वा तदेवानुप्राविशत्तदनुप्रविश्य सच्च त्यच्चाभवदिति" ( तै. उ. ब्र. व. ७।६ ) इति च तित्तिरिः । छांदोग्यम्--'सर्वं खल्विदं ब्रह्म' ( छां. उ. ३।१४।१ ) इति "अनेन जीवेना-

तदाहुः । ( रे ) एको मृत्युर्बहवा३ ऽइत्येकश्च बहवश्चेति ह ब्रूयाद्यदहासावमुत्र तेनैकोऽथ यदिह प्रजासु बहुधा व्याविष्टस्तेनो बहवः ॥ १६ ॥

---

तदाहुः–एको मृत्युर्बहवा ३ इति । एकश्च बहवश्चेति ह ब्रूयात् । यदहासावमुत्र–तेनैकः; अथ यदिह प्रजासु बहुधा व्याविष्टस्तेनो बहवः ॥ १६ ॥

---

एवं मण्डलमध्यवर्ति पुरुषात्मनोपासनीयस्य दक्षिणाक्षिपुरुषस्य मृत्युरूपत्वं प्राणरूपत्वं चोक्तम् । तत्र मृत्योरेकत्वं बहुत्वं चेति प्रश्नोत्तराभ्यामाह–तदाहुरेको मृत्युरिति । एको मृत्युर्बहवश्च । बहवा ३ इत्यत्र विचारार्थे प्लुतिः, ' असावमुत्र ' लोके आदित्यमण्डलमध्यवर्ती पुरुष एकः । ' इह ' भूलोके ' प्रजासु ' मनुष्यपक्ष्यादिष्वन्तरावेशाद् ' बहवः ' मृत्यवः ॥ १६ ॥

---

त्मनाऽनुप्रविश्य नामरूपे व्याकरोत् " ( छां. उ. ६ । ३ । ३ ) इति च । वाजसनेयिनः–" इंद्रो मायाभिः पुरुरूप ईयते," ( बृ. उ. २ । ५ । १९ ) इति, अंतर्यामिब्राह्मणादिकमपि ( बृ.उ. ३ । ७ ) । सूत्राणिच–" जन्माद्यस्य यतः " ( ब्र. सू. १ । १ । २ । १ ) इत्यादीनि । जगद्विवर्तोपादानवत् ब्रह्माभिन्नं जगत् । " क्षेत्रज्ञं चापि मां विद्धि " ( भ. गीता १३।२ ) " वासुदेवः सर्वम् " ( भ. गीता. ७ । १९ ) इत्यादि प्रमाणजालमुदाहियतां । एतत्सर्वं "तमेतमग्निः" इत्यादिना विंशतितमकंडिकायां चतुरतरं चर्चयिष्यामहे इत्यलं नारायणेंद्रसरस्वतीचरणसरसीरुहमधुपानमदविभ्रांतलीलाविलासैः । यस्मादेवं ' तस्मात् ' भगवती सूर्यदेवता स्वयम् ' एका सती लोकंपृणा ' चतुर्दशलोकपावयित्री वर्तते । अद्भुतमेतत् । पालनम् कामतः सुखप्रदानम् । तथा कठा आमनंति–" एको बहूनां यो विदधाति कामान् " ( कठ. उ. २ । ५ । १३ ) इति । किंच ' अग्निं ' तदुपलक्षितदेवतामात्रं ' सर्वं अनु ' लक्ष्य ' विभवति ' विभुर्भवति । " त्रयश्च त्री च शता त्रयश्च त्रीच सहस्रा " (बृ. उ. ३ । ९ । १) इति शाकल्यब्राह्मणोक्तसंख्यासंख्येयदेवतासार्वभौमो जगदांध्यापहंता प्राणिमात्राक्षिमंडलमधिशयानो देव इति श्रुतिमृगीदृगंतरंगं । अग्निशब्दस्योपलक्षणत्वे सर्वमितिविशेषणं निदानं । एतदेव प्रबलीक्रियते–अथेति । 'यत्' यस्मात् 'एक एव' सूर्यः तेजस्वितमः ' तस्मात् एका ' सूर्यदेवता सर्वानुप्रविष्टा इति उपसंहारः ॥ १९ ॥

अनुपदकंडिकोक्तमेकत्वं सिद्धांतयितुं ब्रह्मवादिनां चर्चामुत्थापयति–तदाहुरिति । किं 'मृत्युः' मृत्युशब्दवाच्यो जगच्चक्षुः 'एकः' उत अहो ' बहवः ' मृत्यव इति । तत् तस्मिन् पूर्वोक्तार्थे केचन महर्षयः आहुः कंचन ब्रह्मनिष्ठं पप्रच्छुरित्यर्थः । प्लुतिः संशयद्योतिका । एवं संशयानैः पृष्टः कश्चिद्विज्ञातसर्वरहस्यः ' एकश्च ' मृत्युः 'बहवश्च' मृत्यवः 'इति' 'ह' किल 'ब्रूयात्' प्रत्युत्तरं दद्यात् पृच्छामंगीकुर्यादित्यर्थः । पक्षद्वयं समर्थयति । 'यत्' यस्मात् 'असौ' सूर्यरूपः परमात्मा 'अमुत्र' सर्वनाम्नां बुद्धिस्थवाचकत्वात् अनेकार्थत्वाच्चाव्ययानामुक्तौ ' अहः ' " सुपां सुलुक् " ( पा. सू. ७ । १ । ३९ ) इत्यादिना सोर्लोपे अहः, हंति किमपि इति हः हंतेर्डः न हः अहः अहंता इत्यर्थः । स्वव्यतिरिक्ताभावात् सर्वं स्वयमेवेति सूर्यः किं हन्यात् न किंचित् अतः अयं अहः एकाकी इति ध्वनितोऽर्थः । तेन कारणेन मोक्षावस्थायां अयम् 'एकः' । नन्वियं क्लिष्टकल्पना, न, श्रीगुरूपदेशगम्यत्वादस्यार्थवादस्य । 'अथ' पक्षांतरे । 'यत्' येन कारणेन 'इह' ब्रह्मांडे ' प्रजासु बहुधा व्याविष्टः ' । 'तेन' कारणेन 'बहवः' 'उ' शब्देन बहुत्वस्य वास्तवत्वमपाक्रियते । चंद्रस्य अनेकजलाशयप्रवेशात् बहुत्वं न

(स्तु) तुदाहुः । (१) अन्तिके मृत्युर्दूरा३ऽ इत्यन्तिके च दूरे चेति ह ब्रूयाद्यदहायमिहाध्यात्मं तेनान्तिकेऽथ यदसावमुत्र तेनो दूरे ॥ १७ ॥

तदेष श्लोको भवति । (त्यु) अन्ने भात्यपश्रितो रसानाᳫ संक्षरेऽमृतऽ इति यदेतन्मण्डलं तपति तदन्नमथ यऽएषऽ एतस्मिन्मण्डले पुरुषः सोऽत्ता स ऽएतस्मिन्नन्नेऽपश्रितो भातीत्यधिदैवतम् ॥ १८ ॥

---

तदाहुः–अन्तिके मृत्युर्दूरा ३ इति । अन्तिके च दूरे चेति ह ब्रूयात् । यदहायमिहाध्यात्मम्–तेनान्तिके । अथ यदसावमुत्र–तेनो दूरे ॥ १७ ॥

तदेष श्लोको भवति–" अन्ने भात्यपश्रितो रसानां संक्षरेऽमृतः "–इति । यदेतन्मण्डलं

---

तदाहुरन्तिक इति । मृत्योः समीपदूरवर्तित्ववाक्यमप्येवं व्याख्येयम्–' इहाध्यात्मम् ' अयमक्षिपुरुषः समीपवर्ती ' अमुत्र ' द्युलोके ' असौ ' मण्डलस्थः पुरुषो दूरवर्तीति ॥ १७ ॥

अथ मृत्योरन्नात्तृत्वं मन्त्रसंवादपूर्वकमाह–तदेष श्लोको भवतीति । " अन्ने भात्यपश्रितो रसानां संक्षरे

---

वस्तुतः तथेदमिति । तथाचाथर्वणिका आमनंति–" एक एव हि भूतात्मा भूतिभूते व्यवस्थितः । एकधा बहुधा चैव दृश्यते जलचंद्रवत् " इति । ननु द्वादशादित्यस्य मध्ये कस्येदं निरूपणमिति चेत्; यो यदा त्रिलोकीमुखकमलविकासाख्यं कर्म अधिकरोति तस्य । किं बहुना तेषामपि न मिथो भेदिम । अस्ति । अनुपदमस्माभिः सिद्धांतितं किं विस्मरसि । को नाम त्वां वारं वारं बोधयति । श्रद्धत्स्व संप्रदायिकस्य मे वचनं । वस्तुतः एकस्य बहुत्वं औपाधिकं इति राद्धांतः ॥ १६ ॥

अथ इदानीं भास्करपरब्रह्मस्थितिं निश्चेतुं छात्रपृच्छामुपस्थापयति–तदाहुरिति । मृत्युः पूर्वोक्तः किं 'अंतिके' अस्ति अथवा 'दूरे' इति । 'तत्' तत्रार्थे संशयानाश्छात्रा आहुः । प्लुतिरपरिज्ञानं ज्ञापयति । एवं पृष्टो गुरुः 'अंतिके च दूरे च' मृत्युरस्ति 'इति ह' 'ब्रूयात्' कोटिद्वयं समर्थयते । ' यत् ' यस्मात् 'इह' ब्रह्मांडे 'अध्यात्मं' शरीरमध्ये 'अयं' सूर्यः । अहः पदनिरुक्तिः पूर्ववत् । अहः जीवरूपेण एकाकी वर्तते । 'तन' कारणेन 'अंतिके' मृत्युरस्तीति कथितम् । अथ पक्षांतरे 'यत्' यस्मात् ' असौ अमुत्र ' परलोके अस्ति । तेन हेतुना 'दूरे' अस्ति इत्युक्तम् । ' उ ' शब्दो दूरस्थत्वं न बहु मन्यते । अंतिकस्थत्वं संमन्यते च । तथाच ईशावास्यम्–" तद्दूरे तद्वंतिके " (ईशा. उप. ५) इति । अत्र मृत्युशब्देन न यम उच्यते किंतु प्रलये सर्वसंहर्ता परमात्मा सर्वसंहारकाले यमः उपदंशी भवति । अत्र कठाः पठंति–" यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनो मृत्युर्यस्योपसेचनं " ( कठ. उ. १ । २ । २५ ) इति । सूत्रं च–" अत्ता चराचरग्रहणात् " ( ब्र. सू. १ । २ । २ । ९ ) इति । अयमभिप्रायः–चतुर्दशभुवनोपगृहं ब्रह्मांडगृहं स्वाभिन्नं निर्माय सुरासुराद्यनेकजीवरूपेण वर्तते जीवति पुनरुपसंहरति । एवं मौहुर्मुह्येन लीलया स्वशक्त्या विलसति परमात्मा क्रीडति रमते । तथाच सूत्रं– " लोकवत्तु लीलाकैवल्यं " ( ब्र. सू. २ । १ । ११ । ३३ ) इति ॥ १७ ॥

उक्तार्थे मंत्रमुदाहरति–तदेष श्लोको भवति इति । व्याख्यातं वाक्यं । यजूरूपो मंत्रः । " अन्ने भात्य-

---

१–अत्र ' यत्, अहः, अयं, ' इति पदच्छेदो राजहंससरस्वतीकृत–व्याख्यानुरोधान्मंन्तव्यः । ' अहायं ' इति संधिस्तु छांदसः ।

( मु ) अथाध्यात्मम् । ( मिं ) इदमेव शरीरमन्नमथ योऽयं दक्षिणेऽक्षन्पुरुषः सोऽत्ता स ऽएतस्मिन्नन्नेऽपश्रितो भाति ॥ १९ ॥

---

तपति—तदन्नम् अथ य एष एतस्मिन्मण्डले पुरुषः सोऽत्ता । स एतस्मिन्नन्नेऽपश्रितो भाति । इत्यधिदेवतम् ॥ १८ ॥

अथाध्यात्मम्—इदमेव शरीरमन्नम् । अथ योऽयं दक्षिणेऽक्षन्पुरुषः सोऽत्ता । स एतस्मिन्नन्नेऽपश्रितो भाति ॥ १९ ॥

---

ऽमृतः " इति एतावान्मन्त्रः । तमेव श्लोकमधिदेवाध्यात्मपरत्वेन व्याचष्टे—यदेतन्मण्डलं तपतीति । ' यदेतत् ' जगत्प्रकाशकं ज्योतिर्मण्डलं ' तदन्नं ' तन्मध्यवर्ती ' पुरुषः ' ' अत्ता ' ' रसानां ' ' संक्षरे ' ' अन्ने ' ' मण्डले ' ' अपश्रितः ' स्थितः ' सः ' ' अमृतः ' मरणधर्मरहितः पुरुषोऽत्ता ' भाति ' दीप्यत इत्यधिदेवतमर्थः ॥ १८ ॥

' अध्यात्मम् ' तु ' इदमेव शरीरमन्नं ' दक्षिणाक्षिपुरुष एव ' अत्ता ' तथा च ' अन्ने ' शरीरे ' अपश्रितः ' अमृतोऽक्षिपुरुषोऽत्ता ' भाति ' प्रकाशत इति ॥ १९ ॥

---

पश्रितो रसाना ५ संक्षरे मृतः " इति । अस्यार्थः—प्रथमं एकत्वानेकत्वपरतया व्याख्यायते—' अमृतः ' परमात्मा 'अन्ने' अन्नमयशरीरे तत्तज्जीवरूपेण 'भाति' इत्यनेन बहुत्वमवादि । 'रसानां' वृष्टिरूपोदकानां ' संक्षरे ' क्षरणहेतुभूते मंडले ' भाति ' इत्यनेन एकत्वमसूचि । ' अमृतः ' कथंभूतः ' अपश्रितः ' भावे क्तप्रत्ययः । श्रयणमाश्रयो अपगतो यस्मात् स अपश्रितः निराश्रयः स्वयं सर्वजगदाश्रयश्च । तथा च छांदोग्ये—" स भगवः कस्मिन्प्रतिष्ठित इति स्वे महिम्नि " ( छां. उ. ७ । २४ । १ ) इति । स्कांदेऽपि " सर्वाधारो निराधारो भगवान्परमेश्वरः " ( स्कं. पु. का. खं. ) इति । अक्षरब्राह्मणे ( बृ. उ. ३।८ ) सर्वाधारत्वं स्फुटं । अथातिकदूरपरत्वेन व्याख्या ' अन्ने भाति ' इत्यनेन नैकट्यं 'रसानां संक्षरे भाति' इत्युक्त्या अनैकट्यं । यजुरिदं तिरोहितार्थमिति मन्वानेन ब्राह्मणेन विव्रियते—यदेतन्मंडलमिति । अस्माभिः प्रकृतानुसारेण विवृतं यजुः । ब्राह्मणेन तु एक एवार्थो उपलक्षणत्वेन सोसूच्यते । 'यदेतन्मंडलं तपति' 'तत्' मण्डलं 'अन्नं' वृष्टि द्वारा अन्नहेतुत्वात् । 'अथ' एवं 'य एष एतस्मिन्मंडले पुरुषः' अस्ति 'स अत्ता' भक्षयता प्रलये ब्रह्मांडं इत्यत इतरकाले 'स एतस्मिन्नन्ने अपश्रितः' सन् 'भाति' । श्रुतिकृतव्याख्यानेन एकत्वदूरस्थत्वे उपलभ्येते । अस्मद्विवरणे तु "तदाहुरिति" कंडिकाद्वयस्थं सर्वं अत्रैव मंत्र उदाहृतं तदिति पूर्वपरामर्शात् । व्याख्यायुग्मे तु विरोध इति न मंतव्यं उपलक्षणात् । यद्यपि अत्र मंडलपुरुषयो अन्नान्नादभावप्रतीतिः अस्ति तथापि अनुभवविरोधात् अस्मदुक्तं श्रद्धीयतां नहि मंडलं तत्रत्यः पुरुषो भक्षयति । ' इति अधिदेवतम् ' उपासनमुक्तं ॥ १८ ॥

अथाध्यात्मं वक्ष्यते । 'इदमेव शरीरमन्नं' अन्नविकारं । ' अथ ' एवं ' योऽयं दक्षिणेऽक्षन्पुरुषः ' अस्ति ' स अत्ता, स्वानुष्ठितक्रियाफलभोक्ता ' सः ' एवंविधः ' एतस्मिन्नन्ने ' अन्नोपचिते ' अपश्रितो भाति ' अत्रापि शरीराक्षिपुरुषयोरन्नान्नादभावोऽस्तीति कश्चित् बंभ्रमीति । न बंभ्रमीतु अस्माभिर्विशदीकृतत्वात् । नहि

तुमेतुमग्निरित्यध्वर्य्यव ऽ उपासते । युजुरित्येषु हीदꣳ सुर्व्वं युनुक्ति सामेति च्छन्दोगा ऽ एतुस्मिन्हीदꣳ सुर्व्वꣳ समानुमुक्थमिति बह्वृचा ऽ एषु हीदꣳ सुर्व्वमुत्थापुयति यातुरिति यातुविद ऽ एतेनु हीदꣳ सुर्व्वं यतं विषमिति सर्पाः सर्प ऽ इति सर्पविद ऽ ऊर्गिति देवा रयिरिति मनुष्या मायेत्युसुराः स्वधेति पितुरो देवजन ऽ इति देवजनविदो रूपमिति गन्धर्व्वा गन्ध ऽ इत्य-प्सुरसंस्त युथायथोपासते तुदेवु भवति तुद्धैनान्भूत्वा ऽ वति तुस्मादेनमेवं-वित्सुर्व्वैरुवैतैरुपासीत सुर्व्वꣳ हैतुद्भवति सुर्व्वꣳ हैनमेतुद्भूत्वा ऽ वति ॥२०॥

---

तमेतमग्निरित्यध्वर्यव उपासते, यजुः—इति एष हीदं सर्वं युनक्ति । साम—इति छन्दोगाः, एतस्मिन्हीदं सर्वं समानम् । उक्थमिति बह्वृचाः, एष हीदं सर्वमुत्थापयति । यातुः—इति यातुविदः । एतेन हीदं सर्वं यतम् । विषमिति सर्पाः । सर्प इति सर्पविदः । ऊर्गिति देवाः । रयिरिति मनुष्याः । मायेत्यसुराः । स्वधेति पितरः । देवजन इति देवजनविदः । रूपमिति गन्धर्वाः । गन्ध इत्यप्सरसः । तं यथायथोपासते, तदेव भवति—तद्धैनान्भूत्वाऽवति । तस्मादेनमेवंवित्सर्वैरेवैतैरुपासीत । सर्वं हैतद्भवति । सर्वं हैनमेतद्भूत्वाऽवति ॥ २० ॥

---

एवमधिदैवमध्यात्मं च यः पुरुषः परमात्मा ध्येयत्वेनोक्तः तस्य प्रशंसार्थं नानारूपैरुपासनं दर्शयति—तमेतमग्निरित्यध्वर्यव उपासते यजुरिति । 'तमेतम् अग्निः' इति यः पुरुष उक्तः स परमात्मेति सर्वत्र व्याख्येयम् । अत एवैतरेयके अध्यात्ममधिदैवं चैकं परमात्मानं प्रस्तुत्य समाम्नातम्—"एतं ह्येव बह्वृचामहत्युक्थे मीमांसन्त एतमग्नावध्वर्यव एतं महाव्रते छन्दोगा एतमस्यामेतं दिव्येतं वायवे तमाकाशः" इति प्रक्रम्य "सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षते"(ऐ.आ. ३।२।३।९)इति।तत्राध्वर्यवो याजुषाः । एतं पुरुषमग्निरिष्टकाचयनेन निष्पादितोऽग्नि

---

शरीरमक्षिस्थो भुंक्ते । अपि तु तदन्यत् भोग्यं । अत एव भोगायतनं शरीरमिति शरीरलक्षणं । मंडलमपि सूर्यभोगायतनमेव । सुरासुरनरादीनां तुल्ययोगक्षेमत्वात् । तर्हि सूर्यः कथं परमात्मा । आकर्णय, "शास्त्रदृष्ट्या तु उपदेशो वामदेववत्"—( ब्र. सू. १ । १ । ११ । ३० । ) इति सूत्रं । अन्यत्सर्वमसकृत् व्याचक्ष्महे स्म इति सर्वमवदातं ॥ १९ ॥

अथ इदानीं समस्तशाखाप्रवर्तकानां भूमिदेवानां मतानि उपन्यस्यन्ते सर्वात्मकत्वद्योतनाय—तमेतमिति । "रुचीनां वैचित्र्यादृजुकुटिलनानापथजुषां नृणामेकोगम्यस्त्वमसि" ( शि. म. स्तो. ७ ) इति न्यायात् । "यदक्षरं वेदविदो वदंति" ( भ. गीता. ८ । ११ ) इत्यादि न्यायाच्च । 'अध्वर्यवः' षडशीतिशाखावंतो याजुषाः 'तमेतं अग्निः' 'इति' बुध्या 'उपासते' तं कं एतावता निबंधेन सप्रपंचं तात्पर्येण उपपादितः यः तमिति शेषयित्वा अन्वेतव्यम् । यजुर्वेदे अग्निरिष्टदेवता कुलदेवता च । अध्वर्युभिः आहवनीयस्य नैर्ऋत्यभागे उत्थाय सवषट्कारं ईशानभागे स्थित्वा सस्वाहाकारं यजति जुहोति शब्दितानां समित्पयोदधिघृतपुरोडाशपशुसोमादिलक्षणानां नानाविधानां हविषां आहवनीयद्वयशामित्रादौ गार्हपत्ये पत्नीसंयाजादीनां दक्षिणाग्न्यादौ

रित्युपासते यजुरिति च । यजुःशब्दस्य परमात्मपरतां दर्शयति–एष हीदं सर्वं युनक्तीति । 'एषः' पुरुषः 'इदं' 'सर्वं' जगत् ' युनक्ति ' सर्वत्र स्वयं संगत इति । अनेन सर्वव्यापकत्वमुक्तम् । 'सामेति छन्दोगाः' सामवेदिनः सामेत्युपासते । सामशब्दस्य परात्मपरतां निर्वक्ति–एतस्मिन् हीदमिति । ' एतस्मिन् ' परमात्मनि कारणे ' इदं सर्वं ' कार्यजातं ' समानं ' समानमिति सामशब्दनिष्पत्तिः । ' उक्थमिति बह्वृचाः ' बह्व ऋचो येषां ते ' बह्वृचाः ' ऋग्वेदिन उक्थमित्युपासते । ' एष हीदं सर्वमुत्थापयति ' जनयति सर्वमिति उक्थ-शब्देन परमात्मोच्यत इत्यर्थः । उत्पूर्वात्तिष्ठतेः कप्रत्यये तकारस्य ककारश्छान्दसः इत्युक्थशब्दव्युत्पत्तिः । ' यातुविदः ' यातुधाना ' यातुः ' इत्युपासते । ' एतेन ' सर्वं ' यतं ' नियतं स्वस्वस्थानमनतिलङ्घ्य स्थापितं वर्तत इति । यातुशब्दः पुरुषवाचकः ' सर्पाः ' ' विषमिति ' स्वोपजीव्यत्वाद्विषस्योपासनम् । एव-मुत्तरत्र–' सर्पविदः ' आहितुण्डिकाः । संग्रहेणाह–तं यथा यथोपासते तदेव भवतीति । तं परमात्मानं यथा येन रूपेण उक्तेन प्रकारेणान्येन वा उपासीरन् ते ' तदेव ' तत्स्वरूपा भवन्तीति ॥ २० ॥

---

तत्तद्दुचितानां हूयमानत्वात् । एष खलु सर्ववेदेषु संप्रदायः । होतृद्गातृप्रशास्तॄणामृत्विजां याज्यापुरोऽनुवाक्याशं-स्यादीनां ऋचां पाठे सावधानता । तत्सर्वविक्षणपाटवं ब्रह्मणः । सर्वथाऽपि अनध्वर्योर्हवनकर्तृत्वं नास्तीत्यत्र न मुग्धोऽपि संदिग्धे । ऋत्विगभावपक्षे यो जुहोति स अध्वर्युरस्मीति भावनयैव जुहोति । तथाच त्रयीभाष्यकारैः सायनाचार्यैः प्रतिपादितं " आर्त्विज्येषु आध्वर्यवस्य प्रधानत्वात् तत्प्रयोगविनियुक्तमंत्रकदंबको याजुषवेदोऽपि प्रधानतया प्रथमः । ततो अध्वर्युनिष्पादितहविरादेर्वेदिकायामासादनानंतरं प्रयाजाज्यभागप्रधानयागाद्यपेक्षित-हौत्रविनियुक्तमंत्रकदंबको रौचो वेदो द्वितीयकः । ततो ऋगाश्रितगीतिविशेषसामप्रतिपादकः सामवेदस्तार्ती-यकः । आथर्वणवेदस्य तु क्रियासु विनियोगो नास्ति । तस्मात् यजुर्वेदो अर्थानुष्ठानक्रमाभ्यां आदिमः " इति । यस्मादेवं तस्मात् त्रेताग्नेः समस्ता याजुषाः सन्निकृष्टप्रियाः । हौत्रादयस्तु, होतृषदनादिस्थानप्रियाः तमादित्य-मध्वर्यवो यजुरित्युपासते । रवेर्यजुष्ट्वे युक्तिरुच्यते–'हि' यस्मात् 'एषः' रविः ' इदं सर्वं ' जगत् पुण्यपापद्वारा सुखदुःखाभ्यां सह ' युनक्ति ' तथा कौषीतकाः–" एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्यो उन्निनीषते एष ह्येवासाधु कर्म कारयति तं यमेभ्यो लोकेभ्योऽधो निनीषते "–( कौषि. उ. २ । ९ ) इति । अग्नित्वे, न युक्तिः–किंतु भावबलम् । बृहद्रथंतरादिपञ्चविधं सप्तविधं वा ' साम ' । तद्रूपम् ' इति ' ' छन्दोगाः ' सामगाः उपासते । अत्र युक्तिः–' हि ' यस्मात् ' इदं सर्वं ' जगत् ' एतस्मिन् ' आधारे ' समानं ' तुल्यं अस्ति । " न मे द्वेष्योऽस्ति न प्रियः "–( भ. गीता. ९ । २९ ) इति शास्त्रात् । ' उक्थं ' पूर्वोक्तं तद्रूपम् ' इति बह्वृचाः ' युक्तिस्तु ' हि ' यस्मात् ' एषः ' ' इदं सर्वं ' स्वोदयेन निद्रातः ' उत्थापयति ' जीवविशेषेण कायजातं वा । अत्र कठपाठः–" न प्राणेन नापानेन मृत्योर्जीवति कश्चन । इतरेण तु जीवति यस्मिन्नेतावुपाश्रितौ "–( कठ. उ. २ । ५ । ५ ) इति । ' यातुः ' याति यदध्ययनेन स्वर्गा-पवर्गौ त्रैवर्णिकाः असौ, ' यातुः ' अथर्ववेदः तद्वेत्तारो ' यातुविदः ' आथर्वणिका इति यावत् । ते तं ' यातुरिति ' उपासते । यातुर्नाम अथर्वणवेदप्रमेयं नानाविधप्रयोगलक्षणं, अयमर्थो गुरूपदेशगम्यः । युक्तिस्तु ' हि ' यस्मात् ' इदं सर्वं एतेन यतं ' नियतं नियमितम् एतच्छासनवर्तीत्यर्थः । तथाच गार्गीं प्रति याज्ञवल्क्यः–"एतस्य वा अक्षरस्य प्रशासने गार्गि०" ( बृ. उ. ३ । ८ । ९ ) इत्यादि । इत्थं चतुर्वेदीमतिभिः स्वस्वमतानुसारेण नामांतरैः एक एवादित्यः उपास्यते इत्युक्तं । अत्रैव "एतं ह्येव बह्वृचा महत्युक्थे मीमांसते एतमग्नावध्वर्यवः " ( ऐ. आ. ३ । २ । ३ । ९ ) इत्यादि शाखांतरमुदाह्रियतां ।

अथेदानीं लौकिकानि वेदाबाह्यमताभिमतानि उपन्यस्यति–' विषमिति सर्पाः ' विषस्य सर्पप्रधानत्वात्, विषमीत्यैव सर्पेभ्यो बिभ्यति जनाः । ' सर्प इति सर्पविदः ' तक्षकशेषाद्युपासकाः । ' ऊर्गिति देवाः ' इंद्रादयः । ऊर्जयति भोक्तृन् इति ऊर्क् । अन्नं हविरादि " ऊर्जबलप्राणनयोः " (धा. पा. चु. प. १६) अस्मात् क्विप् । 'रयिः' गजांतलक्ष्मीः 'इति मनुष्याः'।'मायेत्यसुराः' मायेंद्रजिदादिषु मायाविता प्रसिद्धा ।'स्वधा' तत्पूर्वकं कव्यं 'इति पितरः ' अग्निष्वात्तादयः । 'देवजनः' जायते ब्रह्मणः सकाशात् इति जनः, देवश्चासौ जनश्चेति देवजनः सरबीजन इत्यादिवत् स्वार्थे जनशब्दः देव इति भावः 'इति' ' देवजनविदः ' प्राग्वद्देवोपासका इत्यर्थः । ' रूपमिति गंधर्वाः ' तेषां सौंदर्यप्रधानत्वात् । ' गंधः इति अप्सरसो ' रंभाद्याः तासामंगरागप्रधानत्वात् । अत्रेदमुपलक्षणं, शिव इति शैवाः । विष्णुरिति वैष्णवाः । विरंचिरिति वैरिंच्याः । इंद्र इति ऐंद्राः । गणपतिरिति गाणपत्याः । सुर इति सौराः । भैरव इति कापालिकाः । शक्तिरिति शाक्तेयाः । पशुपतिरिति पाशुपताः । शुद्धशब्दः स्फोटः इति च वैयाकरणाः । नित्यज्ञानेच्छाप्रयत्नगुणकः क्षित्यादिकार्यलिंगगम्यो जगन्निमित्तमीश्वर इति आक्षपादिकाः काणादाश्च । प्रकृतिव्यतिरिक्ताः सच्चिदानंदाः निःसंगा बहवः पुरुषाः इति कापिलाः पातंजलाश्च । शुक्लकृष्णं कर्म इति पूर्वमीमांसकाः । सर्वजीवरूपं निर्गुणं ब्रह्म इति उत्तरमीमांसकाः । इदमेव समस्तराद्धांतसिद्धांजनं क्षणक्षणभंगुरं क्षणक्षणोदयं विज्ञानं इति सौगताः । शून्यमिति दिगंबराः । क्षणिकं जगदिति जैनाः । मदशक्तिन्यायेन भूतचतुष्कसंभवं चैतन्यं इति चार्वाकाः । प्रत्यक्षदेवतेति सर्वे प्राणिनः । त्रिलोकीनायिकामुखपुंडरीकमिति रसिकाः । त्रिलोकीनायिकानयनेंदीवरमिति अदिवांधाः । इत्थं मत्स्येंद्रगोरक्षनाथ–नानक–पाश्चात्यादि–मतानि उपन्यसनीयानि, एवंविधाः सर्वेऽपि तमादित्यं स्वस्वाभिमतं उपासते । वयं तूपास्महे श्रीनारायणेन्द्रसरस्वतीति । ननु–इत्थं चेत्; सूर्यस्वरूपं संदिग्धं भवेत् इत्याशंक्य नेत्याह–'तं' आदित्यं पूर्वोक्तवादिविवादिनो ' यथायथा उपासते ' सोऽपि आदित्यः ' तदेव ' तद्रूपमेव भवति सर्वात्मकत्वात् । न संशयः । सर्वात्मकवस्तुनो न स्वरूपावधारणं दूषणमपितु भूषणम् । ब्रह्मणः सर्वात्मत्वे षडशीतियजुःशाखामुक्ताफलमालामध्यवर्तिनायकरत्नायमानाः शतरुद्रियाध्यायाः प्रमाणं एते शिवपरा इति चेत् हा हा हंत बत मूर्खोऽसि " वेदत्रयमयात्सूर्याद्देवत्रयमयाद्रवेः । मातृत्रयमयाद्भानोरन्यत्किंचिन्न विद्यते ॥ " ( वा. रामा. आदित्यहृदये ) अस्मिन्नर्थे वाल्मिकिरामायणस्थं रघुकुलतिलकं प्रति चतुर्मुखोपदिष्टमादित्यहृदयं प्रमाणयितव्यं मूर्द्धानुकंपनैः सानुकंपं बहुमानयितव्यं पदवाक्यप्रमाणज्ञैरित्यमेवेत्थमेवेति मध्ये सममभिमानयितव्यं च । मध्येपंचमवेदमपि " यो यो यां यां तनुं भक्तः श्रद्धयाऽर्चितुमिच्छति । तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहं ॥ स तया श्रद्धया युक्तस्तस्याराधनमीहते । लभते च ततः कामान् मयैव विहितान्हितान् । " ( भ. गीता. ७ । २१ । २२ ) इति अत एव आदित्यब्रह्मणः स्त्रीपुंनपुंसकत्वनिर्धारणमपि नास्ति–तथाच ऋगारण्यकं "–नैनं वाचा स्त्रियं ब्रुवन्नैनमस्त्री पुमान् ब्रुवन् । पुमांसं न ब्रुवन्नेनं वदन्वदति कश्चन " ( ऐ. आ. २ । ३ । २० ) इति । श्वेताश्वतरमंत्रोऽपि "–नैव स्त्री न पुमानेष नैव चायं नपुंसकः " ( श्वेता. उ. ५ । १० । ) इति । अत एव न शरीरत्रयधारणं–" अस्थूलादि ( बृ. उ. ३ । ८ । ८ ) वाक्यात्, अचक्षुष्कादि ( बृ. उ. ३ । ८ । ८ ) वाक्याच्च । " अशरीरं शरीरेष्वनवस्थेष्ववस्थितम् " ( क. उ. १ । ३ । २१ ) इति कठपाठाच्च । अत एव न जातिवर्णाश्रमप्रसक्तिः शरीरग्रहणपूर्वकत्वात्तस्याः । अत एव न पित्राद्यपेक्षा–" नित्यो नित्यानां चेतनश्चेतनानाम् " ( कठ. उ. १ । २ । २२ ) इति कठपाठात् । अत एव नभोनेत्रस्थानद्वयवासोऽपि मृषा " सर्वव्यापी सर्वभूतांतरात्मा " ( कठ. उ. २ । ५ । १३ । ) इति काठकात् । अत एव संज्ञाछायादिसंगो

स एष त्रीष्टकोऽग्निः । ( ऋं ) ऋगेका यजुरेका सामैका तद्यां कां चात्रऽर्चोपदधाति रुक्मऽएव तस्याऽ आयतनमथ यां यजुषा पुरुषऽ एव तस्याऽआयतनमथ याᳬँ साम्ना पुष्करपर्णमेव तस्याऽआयतनमेवं त्रीष्टकः ॥ २१ ॥

स एष त्रीष्टकोऽग्निः–ऋगेका, यजुरेका, सामैका । तद् यां कां चात्रऽर्चोपदधाति–रुक्म एव

यदुक्तम् पूर्वस्मिन् ब्राह्मणे, "एतस्याग्नेर्वागेवोपनिषद्" इति–प्रक्रम्य "सा वा एषा वाक् त्रेधा विहिता

मृषा "आत्मरति रात्मक्रीडः" ( छां. उ. ७ । २५ । २ ) इति श्रुतेः । आदित्यादिनामान्यपि मिथ्या । "अनामागोत्रम्" ( बृ. उ. ३–८–८ ) इति शतपथात् । व्योमचारादिकमपि माया । "निष्कलं निष्क्रियं शांतं निरवद्यं निरंजनं" ( श्वेता. उ. ६ । १९ । ) इति श्वेताश्वतरात् । "चक्षोः सूर्यो अजायत" ( वा. सं. ३१ । १२ ) इति जन्ममनुरपि गौणः देहापेक्षत्वात् । देवदत्तो जातो ध्वस्तः इतिवत् "वासांसि जीर्णानि." ( भ. गी. २ । २२ ) इत्यादि । "नैनं छिन्दन्ति शस्त्राणि." ( भ. गी, २ । २३ ) "न हन्यते हन्यमाने शरीरे०" ( भ. गी. २ । २० ) "न जायते म्रियते वा०" ( भ. गी. २ । २० ) इत्यादि पंचमवेदात् । नहि जीवानित्यत्वं वैदिका अंगीकुर्वते । कृतनाशाकृतागम प्रसंगात् स्वर्गकामादिशास्त्रमात्रोच्छेदप्रसंगात् । यस्मादेवं तस्मात् अवाङ्मनोगोचरं "आदित्यो ब्रह्म" ( छां उ. ३ । १९ । १ ) इति वेदपुरूषांतरङ्गागमप्रसिद्धोऽर्थः । तथाच तित्तिरिः–"यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" ( तै. उ. ब्र. व. ९ ) इति । अत एव पुरुषमेधमहाक्रतुशतानुष्ठानफलं सौरं पदमिति ( तंत्रवार्तिकसिद्धांतोऽपि मृषा । सूर्यब्रह्मणः ब्रह्मवल्ल्युक्त ( तै. उ. ब्र. व. २ ) मनुष्यानन्दानि शत-शतगणितोगालितसंख्यापरमावधिसुखरूपत्वात् । बृहदारण्यकोक्त ( बृ. उ. ४ । ३ । ३३ । ) मनुष्यजित-लोकपितृकर्मदेवाजानदेवदेवलोकगांधर्वलोकाद्यानन्दशतशतसंख्यायमानविख्यायमानानन्दसीमानन्दरूपत्वाच । नच एतादृशं फलं पुरुषमेधशतायत्तं सहस्रसंवत्सरसत्राद्यायत्तं वा । अपि तु निजं सहजम् । किंबहुना अस्मदादेरिव सूर्यस्य सांसारिकत्वादिप्रतिपादका ग्रंथा अर्थवादाः । किंबहुना जीवमात्रस्य कर्तृत्वादिव्यवहारो मायाविलासि-नीविलासः इति वदतां गुरुवेदांतवचोरत्नमालां श्रद्धादृढसूत्रगुंफितां अद्वैतदीक्षागुरुभगवच्छंकराचार्यभाष्यवाक्प्रभां कंठे धारयतां अस्माकं सूर्यस्य निर्गुणत्वप्रतिपादने कः प्रयासः का कथा इत्यलं गुरुचरणस्मरणपारवश्यसंभ्रमली लागितैः । प्रकृतमनुसरामः–यैर्यैः यथायथोपासितं त्रिलोकीनायिकाफालफलककस्तूरीतिलकमध्यवर्तिदीप्तिमन्मौ-क्तिकं ब्रह्म 'तत् एतान्' उपासकान् सर्वान् तत्तद्रूपं 'भूत्वा अवति' रक्षति । 'ह' किल उपास्तितारतम्येन-फलतरतमभावप्रदं भवतीत्यर्थः । यस्मादेवं 'तस्मात्' कश्चिद्रसिकः एवंवित्सन् 'एनम्' आदित्यं 'सर्वैः' पूर्वोक्तैः 'एतैः' स्वरूपैः उपेतम् 'एवोपासीत' यदा तदा 'एतत्' रविब्रह्म 'सर्वं ह' सर्वात्मकमेव 'भवति' 'एनम्' उपासकं 'एतत्सर्वं भूत्वा अवति ह' इत्यस्य व्याख्यानं प्राग्वत् । अस्यां कंडिकायां उल्लेखालंकारः "बहुभिर्बहुधोल्लेखादुल्लेख इति कथ्यते"–( साहि. १० । ३७ ) इति लक्षणात् ॥ २० ॥

प्रागीरितस्वकमाद्युपादायोपासनान्तरं विधत्ते–स एष इति । यः प्रकृतग्रंथप्रमेयः 'स एषः' भानुमान्

(स्ते) ते व्वाऽ एते । (ऽ) उभेऽ एष च रुक्मुऽ एतच्च पुष्करपर्णमेतं पुरुषमुपीतऽउभे ह्यृक्सामे यजुरपीतऽएवम्वेकेष्टकः ॥ २२ ॥

तस्या आयतनम् । अथ यां यजुषा–पुरुष एव तस्या आयतनम् । अथ यां साम्ना–पुष्करपर्णमेव तस्या आयतनम् । एवं त्रीष्टकः ॥ २१ ॥

ते वाऽएते उभे–एष च रुक्मः, एतच्च पुष्करपर्णम् । एतं पुरुषमपीतः । उभे हि ऋक्सामे यजुरपीतः । एवम्वेकेष्टकाः ॥ २२ ॥

ऋचो, यजूंषि, सामानि तेनाग्निस्त्रेधा विहितः, तेन हि त्रयेण चीयते " इति । तत्र सूर्यमण्डलार्चिःपुरुषरूपत्वमेवमुक्तम् "मण्डलमेव ऋचः, आर्चिः सामानि, पुरुषो यजूंषि" इति । अथैतेषामधियज्ञमेवमुक्तं " यदेतन्मण्डलं तपत्ययं स रुक्मोऽथ यदेतदर्चिर्दीप्यत इदं तत्पुष्करपर्णमथ य एष एतस्मिन्मण्डले पुरुषोऽयमेव स योऽयं हिरण्मयः पुरुषः " इति तत्सर्वं पर्यालोच्याह–स एष त्रीष्टकोऽग्निरिति । 'एषः' चित्याग्निः 'त्रीष्टकः' त्रिसंख्याकेष्टकः । ता एवेष्टका दर्शयति–ऋगेका यजुरेका सामैकेति । 'तद्यां कां चात्रचोपदधाति' इत्यादेरयमर्थः । अत्राग्नौ 'यां' 'काम्' इष्टकाम् 'ऋचा' ऋङ्मन्त्रेणोपदध्यात् सा ऋगिष्टका । साध्यसाधनयोरभेदोपचारादेवमुक्तम् । 'तस्याः' 'रुक्मः' 'एव' 'आयतनम्' ऋगात्मकं मण्डलमेवाधियज्ञे रुक्म इत्युक्तम् । 'याम्' इष्टकां यजुर्मन्त्रेणोपदध्यात् सा यजुरिष्टका 'तस्याः' पुरुष एवायतनं मण्डलान्तर्वर्तियजुरात्मकः पुरुष इत्युक्तम् । मण्डलाधिष्ठातुः पुरुषस्याधियज्ञं हिरण्मयपुरुषत्वमुक्तम् । अथ यामिष्टकां साम्नोपदध्यात्सा सामेष्टका । 'तस्याः' 'पुष्करपर्णमेव' 'आयतनं' सामात्मकार्चिषोऽधियज्ञं 'पुष्करपर्णमेव' 'आयतनं' सामात्मकार्चिषोऽधियज्ञं पुष्करपर्णात्मत्वमुक्तम् । एवमृगादिभेदेन त्रीष्टकोऽन्याख्यो यज्ञः ॥२१॥

एकेष्टकत्वं सम्पादयितुमाह–ते वाऽएते उभे इति । 'एषः' 'रुक्मः' 'एतत्' 'पुष्करपर्णं' 'च' 'एते' 'उभे' 'एतं' 'पुरुषमपीतः' प्राप्नुतस्तदाधारे भवत इत्यर्थः । 'ऋक्सामे' 'उभे' यजुरपीतः यजुरधीने स्तः । 'एवम्' 'उ' 'एवम्' एवैकेष्टकः । रुक्मपुष्करपर्णयोः पुरुषाधारत्वम्, ऋक्सामयोश्च यजुरधीनत्वं तस्मादेकेष्टकोऽग्निरित्यर्थः ॥ २२ ॥

'त्रीष्टकः' तिस्रः इष्टकाः यस्यासौ त्रीष्टकः । त्रित्रीष्टक इति वीप्सायां तात्पर्यं । "तिसृभिस्तिसृभिरिष्टकाभिरुपदधाति" इति कात्यायनोक्तेः । पंचचित्यात्मकचयनक्रतोः अंगेष्टौ 'एषः अग्निः' एकैकोपधाने ऋग्यजुःसामानि सूत्रकृद्विनियुक्तानि पठनीयानि यं मंत्रमुच्चार्य या इष्टका उपधीयते । तयोर्भेदो नास्ति इत्यभिप्रायेणाह 'एका' इष्टका 'ऋक्' एकेष्टका 'यजुः' एकेष्टका 'साम' यतो भेदो नास्ति । 'तत्' तस्मात् अत्र अंगेष्टौ 'यां कां च' इष्टकां 'ऋचा' 'अध्वर्युः' उपदधाति तस्या रुक्म एवायतनं । 'अथ यां यजुषा' उपदधाति 'तस्याः पुरुष एवायतनं' । 'अथ यां साम्ना' उपदधाति 'तस्याः पुष्करपर्णमायतनं' । उक्तमर्थं निगमयति । य एवं उक्तरीत्या 'त्रीष्टको' वह्निरिति त्रीष्टकवह्निबुध्याऽपि भगवंतं ब्रह्मांडचक्षुषमुपासीतेतिभावः । रुक्मादिस्वरूपमुपन्यस्तमस्माभिः प्राक् ॥ २१ ॥

उपास्यन्तरमुपदिशति । ये प्रागुक्ते 'ते वै' वाक्यालंकारे । 'एते एष रुक्मश्च एतत् पुष्करपर्णं च' 'उभे एतं' हिरण्मयं 'पुरुषं अपीतः' व्याप्नुतः । 'हि' एवार्थे । 'उभे' रुक्मपुष्करपर्णोपधानविनियुक्ते 'ऋक्सामे' । "अचतुर-

स॒ऽ ए॒ष॒ऽ ए॒व मृ॒त्युः । ( यं॒ ) य॒ ऽए॒ष॒ऽ ए॒तस्मि॒न्मण्ड॑ले॒ पुरु॑षो॒ य॒श्चा॒यं॒ दक्षि॒णेऽक्ष॒न्पुरु॑षः स॒ऽ ए॒ष॒ऽ ए॒वंवि॒द॒ऽ आ॒त्मा भ॑वति स॒ य॒दै॒वंवि॒द॒स्मा॒-ल्लो॒का॒त्प्रै॒त्यथै॒त॒मे॒वा॒त्मा॒न॒म॒भि॒स॒म्भ॒व॒ति॒ सो॒ऽमृ॒तो॒ भ॒व॒ति॒ मृ॒त्यु॒र्ह्य॒-स्या॒त्मा भ॑वति ॥ २३ ॥

इति तृतीयप्रपाठके षष्ठं ब्राह्मणम् ॥ १०-३-६ ॥ ( ५. २. ) ॥

इति तृतीयः प्रपाठकः समाप्तः ॥ १०-३ ॥

कण्डिकासंख्या ॥ ९१ ॥

स एष एव मृत्युः—य एष एतस्मिन्मण्डले पुरुषः । यश्चायं दक्षिणेऽक्षन्पुरुषः स एष एवंविद् आत्मा भवति । स यदैवंविदस्माल्लोकात्प्रैति । अथैतमेवात्मानमभिसम्भवति । सोऽमृतो भवति, मृत्युर्ह्यस्यात्मा भवति ॥ २३ ॥

स एष एव-मृत्युरित्यादिना । वेदितुः फलवर्णनम् । ' स एषः ' अग्निर्यजुरात्मकोऽधिदैवं मण्डलमध्य-वर्ती । अध्यात्मं दक्षिणाक्षिवर्ती पुरुषः मृत्युरूपः तमात्मत्वेन विद्वानस्माल्लोकात्प्रयन्नेवामृतो भवतीति ॥ २३ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये दशमकाण्डे पञ्चमेऽध्याये द्वितीयं ब्राह्मणम् ॥ ( १०-५-२ ) ॥

विचतुर०"–(पा.सू. ५।४।७७) इत्यादिना निपातः । हेमपुरुषमूर्त्युपधानविनियुक्तं 'यजुः अपीतः' व्याप्नुतः । 'उ' शब्देन यजुः पुरुषं अप्येति इति वक्तव्यं । एवं सति पुरुष एक एव अवशिष्यते । स पुरुषः 'एकेष्टकः' इत्युच्यते । यथा वेदांतसिद्धांते भौतिकं ब्रह्मांडं भूतानि अप्येति । भूतानि च पञ्च तन्मात्रा अपियंति । तन्मात्राः कार्याविद्यां सा च कारणाविद्यां सा च परमात्मानं इति विलापनविधा । एवं रुक्मादिकं पुरुषे विलाप्य पुरुषं शेषयित्वा निर्गुणो निर्विकारो निष्प्रपञ्चो निष्कायत्रयः सर्वव्यापी ऊर्ध्वाधस्तिर्यक्परिपूर्णः परमंपुरुषः । " एक-मेवाद्वितीयं ब्रह्म "–( छां. उ. ६ । २ । २ ) " नेह नानाऽस्ति किंचन "–" मृत्योः स मृत्युमाप्नोति " " स इह नानेव पश्यति "–(क. उ. २ । ४ । १०-११) "अथात आदेशो नेति नेति"–( बृ. उ. २ । ३ । ६ । ) " तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे "–( छां. ६ । १६ । ३ ) " अ हं मनुरभवं सूर्यश्चेति "–( बृ. उ. १ । ४ । १० ) " गर्भे एवैतच्छयानो वामदेव एवमुवाच "–( ऐ. आ. २ । ५ । १ । २४ ) इति । "तत्त्वमसि" ( छां. उ. ६ । १६ । ३ ) इति । " योऽन्यां देवतामुपास्तेऽसावन्योऽहमस्मीति न स वेद यथा पशुः "–( बृ. उ. १ । ४ । १० ) " स एष इह प्रविष्ट आनखाग्रेभ्यो यथा क्षुरः क्षुरधानेऽवहितः स्याद्विश्वंभरो वा विश्वंभरकुलाये तं न पश्यंत्यकृत्स्नो हि सः " " अत्र ह्येते सर्वे एकं भवन्ति " ( बृ. उ. १ । ४ । ७ । ) इत्याद्यनेकवेदमस्तकमुकुटमणिमंजरीनीराजितचरणकनकसरसीरुहः परमात्मा अहमस्मि इति निर्विकल्पिकासंप्रज्ञातसमाधिनिष्ठो भूयो भूयो भूयात् इति द्वाविंशतिकंडिकासमु-दायार्थः ॥ २२ ॥

अथेदानीं पूर्वोक्तोपास्तितत्परस्य " तस्माच्छांतो दांतः "–( बृ. उ. ४ । ४ । २३ । ) इत्यादि-वेदोक्तगुणस्य " तमेतं वेदानुवचनेन ब्राह्मणा विविदिषंति "–( बृ. उ. ४ । ४ । २२ ) इत्यादिसाधनस्य

" तद्यथेह कर्मचितो लोकः क्षीयते "–( छां. उ. ८ । १ । ६ ) इत्यादिना विरक्तस्य मुमुक्षोः फलमुच्यते चरमया कंडिकया स एष इति । " स एष एव मृत्युर्य एष एतस्मिन्मंडले पुरुषो यश्चायं दक्षिणेऽक्षन्पुरुषः" इति । अतिरोहितार्थं निगदव्याख्यानं च । 'स एषः' मंडलब्राह्मणवेद्यो जगदात्मा सूर्यः । 'एवंविदः' मुमुक्षोः 'आत्मा भवति' " राहुमस्तकन्यायेन " अनन्यषष्ठी । अत एव 'सः' यः 'एवंवित्' यदा 'अस्माल्लोकात्प्रैति' त्यक्तदेहचतुष्को भवति । 'अथ' 'एतमेव एतम्' 'अत्मानमभितः संभवति' उपसर्गादेकीभवति । न कालांतरे । एतेन " क्रममुक्तिपक्षपरांतकाले परिमुच्यंति सर्वे " इति कलरवेण तित्तिरिणा कूजितं–दूरीकृत्य "ब्रह्मैव सन् ब्रह्माप्येति" (बृ. उ.४।४।६) "ब्रह्मविद्ब्रह्मैव भवति" (मुण्ड. उ.३।२।९) इति वेदसिद्धा सद्योमुक्तिर्विवक्षितेति वेदपुरुषहृदयंगमोऽर्थः । अत एव–'सोऽमृतो भवति मृत्युर्ह्यस्यात्मा भवति' इति । सर्वात्मकत्वाद्वेदांतवेत्तुः कालयममृत्युचित्रगुप्तादयोऽपि न भिदेलिमाः, पचेलिमानि च तत्र त्रिविधकर्माणि, तस्य च्छिदेलिमा विषयाः । अत्राथर्वांगिरसो जगुः " भिद्यते हृदयग्रंथिः " ( मुण्ड. २।२।८ ) इत्यादि । "संचितागामिप्रारब्धं ज्ञानेनेश्वरतोषतः । भोगेनापि च विध्वस्तं नारोहेत्प्लुष्टबीजवत्" समाप्ते वाक्यार्थे मीमांसामात्रीये विंशतिकंडिकाभिः एकमेवोपासनं सद्योमोक्षफलकमुपदिष्टं तत्रभवता भगवता वेदपुरुषेण । कुतो विज्ञायत, इति चेत् वेद्यैकत्वेऽपि संवर्ग–शांडिल्य–उपकोसल–पर्यंकादि–विद्याभेदवत् भिद्यतां इति, चेन्नैवम् । ब्रह्मैकत्वेपि गुणभेदात् वेद्यभेदस्तत्रास्तीति गुणोपसंहारे पादे ( ब्र. सू. ३।३ ) स्थितम् । "विशेषणभेदाद्विशेष्यभेदः" इति तर्कसमयः । यद्यपि अत्रापि कुत्रचिन्मध्येकंडिकं गुणभेदो अस्ति तथापि उद्गीथदहरादिविद्यावत् गुणा उपसंहर्तव्याः । आद्यकंडिकाद्वयेन सर्वात्मकं मंडलपुरुषमुद्दिश्य संलक्ष्य च " स एष मृत्युरिति " । तृतीयांतिमाभ्यां एकस्यैव परामृष्टत्वात् उपक्रमादितात्पर्यनिश्चायकलिंगषट्कप्रतिभानाच्च न अर्चिरादिदेवयानमार्गप्राप्तिरपि 'अथैतमेवात्मानं' इत्युक्तेः । न देहांतरग्रहणमपि 'सोऽमृतः' इत्युक्तेः । ननु–" अपाम सोमममृता अभूम " ( तै. सं. ३ । २ । ५ । ४ ) इति वत् सातिशयममृतत्वमिति चेन्न 'स एष एवंविद आत्मा' इत्युक्तेः । स्वर्गं लोकमेतीत्यनुक्तेश्च । अत एव इदमहंग्रहोपासनं सर्वात्मत्वोक्तेः । " मनो ब्रह्मेत्युपासीत " ( छां. उ. ३।१ ) इत्यादिवत् न अध्यासोपासनं । " ते अर्चिषमभिसंभवंति अर्चिषोऽन्हः, अन्ह आपूर्यमाणपक्षं " ( निरु. उ. ष. ७ । ८ । ) इत्यादित्यगत्याः श्रवणात् । अत एव " तमेव विदित्वाऽतिमृत्युमेति " ( वा. सं. ३१ । १८ ) इत्यादि न विरुध्यते मंडलब्राह्मणस्य वेदांतत्वात् । अत एव श्रवणमननादिभिरेव मुक्तिरित्यस्मदुक्तिः । ननु कथं वेदांतः कर्मकांडमध्यवर्तीति चेत् शतरुद्रियवत् पुरुषसूक्तवच्च । ननु चयनांगशतरुद्रियहोमविनियुक्तो रौद्राध्यायः कथं ब्रह्मविद्या । शृणु । ब्राह्मणसूत्रकाराभ्यां कृतं जडजनव्यामोहकरं साहसं, अविनियोगार्हः ताभ्यां विनियुक्तः । अत एव विद्यारण्यगुरुवरैः तैत्तिरीयकादिसंहिताभाष्येषु रुद्राध्यायं विनियोगानुसारेण व्याख्याय स्वतंत्रं केवलरुद्राध्यायं व्याचिकीर्षुः उपोद्घाते अस्य वेदांतग्रंथस्य अनुबंधचतुष्टयं उच्यते इति प्रतिज्ञातं । युक्तिरपि उपन्यस्ता वेदांतोऽयं सर्वात्मत्वनिरूपणात् । नहि कर्मकांडे सर्वात्मत्वं संभवति अहमनेन यक्ष्ये इष्ट्वा च इदं लभिष्ये इत्याद्यपेक्षितत्वात् । अस्माभिरपि मध्ये प्रसंगात् अनुबंधो निरूपितः । तस्मादेतद्वेदांतश्रवणादिना निर्वाणं न दुर्वारमिति सर्वं रमणीम् ॥ २३ ॥

नारायणेंद्रकर्मन्दिसरस्वत्याः पदाब्जयोः । रत्नपादुकयोश्छायां समाश्रित्य भवापहाम् ॥ १ ॥
मण्डलब्राह्मणस्यास्य सूर्यरूपनिवेदिनः । व्याख्यानमेतद्रचितं निर्भेद्यत्वकरं परम् ॥ २ ॥
निर्मत्सराणां सूरीणां हृदयव्योममण्डले । राजहंससरस्वत्या तदंघ्रिप्रीतये सदा ॥ ३ ॥
समस्तशाखाकल्पोक्तसंध्यावंदनकर्मसु । विनियुक्ता वेदमंत्रा व्याख्याता येन सर्वशः ॥ ४ ॥

माध्यंदिने तैत्तिरीये वेदे मैत्रायणीयके । षड्भिरंगैरुपेतस्य रुद्राध्यायस्य सक्रमम् ॥ ५ ॥

तत्तद्भाष्याणि संलोच्य भाष्यं संगतिपूर्वकम् । कर्मकाण्डक्रमं त्यक्त्वा संगृहीतं च येन च ॥ ६ ॥

अन्ये च वैदिकग्रंथाः कृता येन च द्राविडे । आंध्रे देशे सुप्रसिद्धः पदवाक्यप्रमाणतः ॥ ७ ॥

सोऽयं विराजते भूमौ राजहंससरस्वती । नामांतरेण सः प्रोक्तः शाश्वतेन्द्रसरस्वती ॥ ८ ॥

मंडलब्राह्मणस्यास्य निर्मेयं भाष्यमुत्तमं । आद्यंतमध्यमालोच्य सावधानेन चेतसा ॥ ९ ॥

शास्त्रांतरप्रमेयानि शब्दान्नानार्थगोचरान् । मुहुर्मुहुः संविचार्य ततो मां संस्तुवंतु वा ।
निंदंतु वा न तु क्षिप्रं गुणं दोषं वदंतु मे ॥ १० ॥

आसुप्तादामृतेः कालं वेदवेदांतगोचरं । योऽभिप्रायं सदा चित्ते विचारयति सर्वदा ॥ ११ ॥

तस्येमां कृतिमालोच्य तुष्यंतु भुवि सूरयः । सशिष्याः सप्रशिष्याश्च सोपशिष्या दयालवः ॥ १२ ॥

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीनारायणेंद्रसरस्वत्याः कृतौ माध्यंदिनशाखीयशतपथ-
मध्यगताखंडमार्तंडमण्डलब्राह्मणभाष्यं पंडितमंडनं नाम संपूर्णम् ॥

इति पंडितमंडनं नाम मंडलब्राह्मणभाष्यम् ॥



# अथ चतुर्थप्रपाठके प्रथमं ब्राह्मणम् ।
# पञ्चमेऽध्याये च तृतीयं ब्राह्मणम् ।

नेव॒ वा॒ऽइ॒दम॒ग्रे॒ऽस॒दासी॒न्नेव॒ स॒दासी॑त् । (ड़ा) आ॒सीदि॑व॒ वा॒ऽइ॒दम॒ग्रे॒ नेवा॒सी॒त्तुद्ध॒ तन्म॒न॒ ऽए॒वास ॥ १ ॥

---

## मानसाग्न्युपासनं ब्राह्मणम् ।

नेव वा इदमग्रेऽसदासीत्, नेव सदासीत् । आसीदिव वा इदमग्रे नेवासीत् । तद्ध तन्मन एवास ॥ १ ॥

---

उत्तरब्राह्मणे सकलपुरुषवार्तिमनोवाक्प्राणचक्षुःश्रोत्रकर्माग्निवृत्तिसम्पाद्यचित्याग्निविषया उपासना वक्ष्यन्ते । एते मनश्चिदादयोऽग्नयः क्रियानुप्रवेशिनः तच्छेषभूताः उत स्वतन्त्राः केवलविद्यात्मकाः इति विचार्याधिकरणमवतारितमाचार्यैः शारीरकभाष्ये । तथाहि—"लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि" (ब्र. सू. ३।३।२८।४४) इति । अधिकरणार्थः श्लोकद्वयेन सङ्गृहीतः तत्त्वविद्भिरभियुक्तैः—"कर्मशेषाः स्वतन्त्रा वा मनश्चित्प्रमुखाग्नयः । कर्मशेषः प्रकरणाल्लिङ्गं त्वन्यार्थदर्शनम् ॥ उन्नेय एव धीलिङ्गादेव श्रुत्या च वाक्यतः । बाध्यं प्रकरणं तस्मात् स्वतन्त्रं वह्निचिन्तनम्" ॥ इति । इदमेव ब्राह्मणं विषयवाक्यम्—तद्यथा—नेव वाऽइदमग्रेऽसदासीदिति प्रक्रम्य मनोऽधिकृत्याभिधीयते—"तत् षट्त्रिंशतं सहस्राण्यपश्यदात्मनोऽग्नीनर्कान्मनोमयान् मनश्चितः" (कं. ३) इत्यादि । अयमर्थः—पुरुषस्य शतसंवत्सरमित आयुषि षट्त्रिंशत्सहस्राणि दिनानि भवन्ति ३६००० । तत्रैकैकस्मिन् दिवसे या मनोवृत्तिः तस्या एकैकाग्नित्वेन ध्याने सति ध्यातव्या अग्नयः षट्त्रिंशत्सहस्रसंख्याकाः ३६०००—सम्पद्यन्ते । ते चाग्न्यात्मस्वरूपत्वेन ध्येयाः । अत एवार्का अर्चनीया मनसा चीयन्ते सम्पाद्यन्त इति मनश्चितः । एवं वाक्चितः, प्राणचितः, चक्षुश्चितः, श्रोत्रचितः, कर्मचितोऽग्निचित इति । ते चाग्नयोऽग्निचयनप्रकरणपठितत्वात् कर्मशेषाः, न तु स्वतन्त्रसङ्कल्पात्मकलिङ्गबलात् स्वतन्त्रविद्यात्मका भविष्यन्ति । तथाहि अस्मिन् ब्राह्मण एव "तद्यत्किं चेमानि भूतानि मनसा सङ्कल्पयन्ति तेषामेव सा कृतिरिति" (कं. ३) इति । एवं वागादिपर्यायेष्वपि । "तद्यत्किं चेमानि भूतानि वाचा वदन्ति तेषामेव सा कृतिः" (कं. ४) इति । "प्राणिनः प्राणन्ति" (कं. ९) इत्यादिलिङ्गानि सन्ति । एषामर्थः—यत्किंच भूतानि मनसा ध्यायन्ति, वाचा वदन्ति तैः सङ्कल्पवदनादिभिरेव तेषामग्नीनां करणमिति । तथा एतद्ब्राह्मणावसाने "तान् हैतानेवंविदे सर्वदा सर्वाणि भूतानि चिन्वन्त्यपि स्वपते" (कं. १२) इति वाक्यशेषः पठ्यते । तस्यायमर्थः—उपासकस्य स्वपतोऽप्यग्नयोऽविच्छिन्नाः । स्वकीयमनोवागादिवृत्त्युपरमेऽपि प्रबुध्य पुरुषमनोवागादिवृत्तीनां प्रवर्त्तमानत्वादशेषपुरुषमनोवृत्तीनामग्नित्वेन वर्णनात् । तस्मादेवंविदे स्वपतेऽपि तानेतानग्नीन् सर्वदा सर्वाणि भूतानि चिन्वतीति । तत्र यावज्जीवमग्नीनामविच्छेदेन नैरन्तर्यं प्रतीयते । तच्च विद्यास्वातन्त्र्यलिङ्गम् । कर्मशेषत्वे हि कर्मणो यावज्जीवं नैरन्तर्याभावात्तद्विषयाणां मनश्चिदादीनां कथं नैरन्तर्यं स्यात् तच्च लिङ्गं प्रकरणाद्बलीयः, तस्मात् स्वतन्त्रविद्यात्मका इति । नायं दोषः । अन्यार्थदर्शनरूपत्वेन लिङ्गस्यैतस्य दुर्बलत्वात् । तथाहि—द्विविधं लिङ्गम्, सामर्थ्यमन्यार्थदर्शनं चेति । तत्र विध्युद्देशगतं लिङ्गं सामर्थ्यं, तच्च स्वात-

तस्मादेतदृषिणाऽभ्युनूक्तम् । ( ना ) नासदासीन्नो सदासीत्तदानीमिति नेव हि सन्मनो नेवासत् ॥ २ ॥

( तत् ) तदिदं मनः सृष्टमाविरबुभूषत् । ( नि ) निरुक्ततरं मूर्त्ततरं तदात्मानमन्वैच्छत्तत्तपोऽतप्यत तत्प्रामूर्च्छत्तत्षट्त्रिँशतँ सहस्राण्यपश्यदात्मनोऽग्नीनर्कान्मनोमयान्मनश्चितस्ते मनसैवाधीयन्त मनसाऽचीयन्त मनसैषु ग्रहाऽअगृह्यन्त मनसाऽस्तुवत मनसाऽशँसन्यात्किञ्च यज्ञे कर्म क्रियते यत्किञ्च यज्ञियं कर्म मनसैव तेषु तन्मनोमयेषु मनश्चित्सु मनोमयमक्रियत तद्यत्किञ्चेमानि भूतानि मनसा संकल्पयन्ति तेषामेव सा कृतिस्तानेवादधति तांश्चिन्वन्ति तेषु ग्रहान् गृह्णन्ति तेषु स्तुवते तेषु

---

तस्मादेतदृषिणाऽभ्यनूक्तम्–" नासदासीन्नो सदासीत्तदानीम् "–इति। नेव हि सन्मनो नेवासत् ॥ २ ॥

तदिदं मनः सृष्टमाविरबुभूषत् । निरुक्ततरं मूर्ततरं तदात्मानमन्वैच्छत् । तत्तपोऽतप्यत । तत्प्रामूर्च्छत् । तत्षट्त्रिंशतं सहस्राण्यपश्यदात्मनोऽग्नीनर्कान्मनोमयान्मनश्चितः । ते मनसैवाधीयन्त ।

---

न्त्र्येण प्रमाणम् । अर्थवादगतं त्वन्यशेषवाक्ये दृश्यमानत्वात् अन्यार्थदर्शनम्; तच्च तात्पर्यरहितत्वान्न स्वातन्त्र्येण प्रमाणं, किन्तु प्रमेयसाधकप्रमाणान्तरे सति केवलमुपोद्बलकं भवति । एवं च सत्यत्रोदाहृतलिङ्गानां दुर्बलत्वात्, प्रकरणात् अग्निशेषा मनश्चिदादय इति प्राप्ते ब्रूमः—न तावदत्र शाब्दो विधिरुपलभ्यते लिङ्गादेरश्रवणात् किं तर्ह्यर्थवादसामर्थ्यादुन्नेयो विधिः । तथा च फलप्रतिपादकस्तावकवाक्यानां रात्रिसत्रन्यायेनाधिकारिसमर्पणपर्यवसानादशेषमप्येतद्ब्राह्मणं विधिरूपं भविष्यति । ततो विध्युद्देशगतत्वेन लिङ्गस्य प्राबल्यं; " किंच ते है ते विद्याचित एव " ( कं. १२ ) इत्येवकारश्रुत्या कर्माङ्गत्वं व्यावर्तते । तथा "विद्यया हैवैत एवंविदश्चिता भवन्ति" (कं. १२) इति वाक्यशेषोऽपि स्वातन्त्र्यगमकः । तस्माच्छ्रुतिलिङ्गवाक्यैः प्रकरणं बाधित्वा स्वतन्त्रविद्यात्मत्वं मनश्चिदादीनामभ्युपगन्तव्यमित्यधिकरणार्थः । तत्र सर्वेषामिन्द्रियाणां मनसः प्रामुख्यात् तत्सम्पाद्यमग्निं प्रस्तोतुं मनसः स्वरूपं तत्सृष्टिं चाह—नेव वाऽइदमग्र इति । ' अग्रे ' सृष्टेः प्राक्काले इदं जगन्नैवासदासीत्, असदिव नासीत्, सदपि च नैवासीत्, सदसद्विलक्षणमासीदित्यर्थः । किं तदुभयविलक्षणं तदासीत् । तद्ध तन्मन एवासेति ॥ १ ॥

सृष्टिप्राक्काले सदसद्विलक्षणसद्भावं मन्त्रसंवादेन द्रढयति—तस्मादेतदृषिणाऽभ्यनूक्तम्, नासदासीन्नो सदासीत्तदानीम्, इति प्रथमः पाद एव संवादकः । उक्तं सदसद्वैलक्षण्यं मनसि दर्शयति—नेव हि सन्मन इति । मनः सद्रूपं न भवति, घटादिवद्रूपादिमत्त्वाभावात् । असच्च न भवति—प्रतीयमानत्वात् ॥ २ ॥

' तदिदं ' सृष्टं ' मनः ' ' आविरबुभूषत् ' ' निरुक्ततरं ' शब्दनिर्वाच्यं ' मूर्ततरं ' सदाविर्भवितुमैच्छत् तन्मनः ' आत्मानं ' स्वकारणं परमात्मानं स्वस्वरूपं वा ' अन्वैच्छन् ' ' तपः ' पर्यालोचनं कृत्वा ' प्रामूर्च्छत् '

शꣳसन्त्येतावती वै मनसो विभूतिरेतावती विसृष्टिरेतावन्मनः षट्त्रिꣳशत्सहस्राण्यग्नयोऽर्कास्तेषामेकैक ऽएव तावान्यावानसौ पूर्वः ॥ ३ ॥

(स्त) तन्मनो वाचमसृजत । सेयं वाक्सृष्टाऽविरबुभूषन्निरुक्ततरा मूर्ततरा साऽऽत्मानमन्वैच्छत्सा तपोऽतप्यत सा प्रामूर्च्छत्सा षट्त्रिꣳशतꣳ सहस्राण्यपश्यदात्मनोऽग्नीनर्कान्वाङ्मयान्वाक्चितस्ते वाचैवाधीयन्त वाचाऽचीयन्त वाचैषु ग्रहा ऽअगृह्यन्त वाचाऽस्तुवत वाचाऽशꣳसन्यत्किञ्च यज्ञे कर्म क्रियते यत्किञ्च यज्ञियं कर्म वाचैव तेषु तद्वाङ्मयेषु

---

मनसाऽचीयन्त । मनसैषु ग्रहा अगृह्यन्त । मनसाऽस्तुवत मनसाऽशंसन् । यत्किञ्च यज्ञे कर्म क्रियते यत्किञ्च यज्ञियं कर्म मनसैव तेषु तन्मनोमयेषु मनश्चित्सु मनोमयमक्रियत । तद् यत्किञ्च इमानि भूतानि मनसा सङ्कल्पयन्ति । तेषामेव सा कृतिः । तानेवादधति । तांश्चिन्वन्ति । तेषु ग्रहान् गृह्णन्ति । तेषु स्तुवते । तेषु शंसन्ति । एतावती वै मनसो विभूतिः । एतावती विसृष्टिः । एतावन्मनसः षट्त्रिंशत्सहस्राण्यग्नयोऽर्काः—तेषामेकैक एव तावान्—यावानसौ पूर्वः ॥ ३ ॥

तन्मनो वाचमसृजत । सेयं वाक्सृष्टाऽऽविरबुभूषत्—निरुक्ततरा, मूर्ततरा । साऽऽत्मानमन्वैच्छत् । सा तपोऽतप्यत । सा प्रामूर्च्छत् । सा षट्त्रिंशतं सहस्राण्यपश्यत्—आत्मनोऽग्नीन् । अर्कान्वाङ्मयान्—

---

" मूर्च्छा मोहसमुच्छ्राययोः " ( धा. पा. भ्वा. २१२ ) । समुच्छ्रितं बभूव । ' तत् ' मनः कर्तृ ' षट्त्रिंशत्सहस्राणि ' अधिकरणविषयवाक्यविवरणसमये व्याख्यातम् । पुरुषायुषोऽहानि तत्सम्बन्धिनीषु मनोवृत्तिषु, अग्नित्वमारोप्यत इति द्रष्टव्यम् । एतावत्संख्याकान् ' अर्कान् ' अर्चनीयान् मनउपादानकान् ' मनश्चितः ' मनसा चीयमानान् ' मनः ' सम्पाद्य ' आत्मनोऽग्नीन् ' ' अपश्यत् ' एतस्य मनश्चितोऽग्नेः क्रियामयाग्नि-प्रकरणमुपमृद्य स्वातन्त्र्यं प्रतिपत्तुं मनोव्यापारक्रियावयवमनुबध्नाति—ते मनसैवाधीयन्त इत्यादिना । ' ते ' अग्नयो ' मनसैवाधीयन्त ' आधाने मनोव्यापार एव कारणमित्यर्थः । एवं चयनग्रहणस्तुतशस्त्रादिकरणं केवल-मनोव्यापारसिद्धमित्यर्थः । सम्पद्युलोकाद्याधानवत्प्रत्यक्षाः क्रियावयवाः संपदा प्रतिष्ठापयितव्याः; तदेव विशद-यति—तद्यत् किंचेमानि इति । 'इमानि भूतानि' यत्किंच 'मनसा सङ्कल्पयन्ति' ध्यायन्ति, मनसा सङ्कल्प एव 'तेषाम्' अग्नीनां 'सा कृतिः' तत्करणजनितानग्नीनेवादधति भूतानीति सर्वत्र सम्बध्यते । " तान् हैतानेवं-विदे सर्वदा सर्वाणि भूतानि चिन्वन्त्यपि स्वपते" (कं. १२) इति वाक्यशेषोऽभिधास्यते । 'एतावती वै मनसः' इति । मनोमयषट्त्रिंशसहस्रसंख्याका अग्नय एव ' मनसः ' ' विभूतिः ' महिमा ' विसृष्टिः ' विविधा विभक्ता सृष्टिरित्यर्थः । ' एतावन्मनः ' उक्तसंख्याग्निरूपं पुनरप्यस्य मनश्चितोऽग्निः । केवलविद्यामयत्वेन स्वातन्त्र्यं वक्तुं क्रियामयस्याग्नेर्माहात्म्यं मनोमयेऽतिदिशति—तेषामेकैक एव तावान्यावानसौ पूर्वं इति । ' असौ पूर्वः ' इति पदाभ्यामिष्टकाचितोऽग्निर्विवक्ष्यते । सः यावान्परिश्रिद्यजुष्मतीलोकम्पृणाभेदेनाहो-रात्रध्यानेन च यत्परिमाणस्तेषां षड्त्रिंशत्सहस्रसम्मितानामग्नीनां मध्ये एकैकोऽग्निरपि ' तावान् ' तत्परिमाणो ध्येयः । अनेन क्रियामयस्याग्नेर्माहात्म्यस्य ज्ञानमयानामग्नीनामेकैकस्मिन्नतिदेशे क्रियायामनादरो दर्शित इत्युक्तं भवति । अतोऽयमग्निः केवल विद्यामय एवेति सुस्थितम् ॥ ३ ॥

: एवमुत्तरे वाक्चिदादयोऽग्निचित्पर्यन्ताः षट्पर्याया व्याख्येयाः; तत्र वागादिसम्पाद्यानग्नीन् दर्शयितुं तत्तत्पर्या-

वाक्चित्सु वाङ्मयमक्रियत तद्यत्किञ्चेमानि भूतानि वाचा वदन्ति तेषामेव सा कृतिस्तानेवादधति तांश्चिन्वन्ति तेषु ग्रहान्गृह्णन्ति तेषु स्तुवते तेषु शꣳसन्त्येतावती वै वाचो विभूतिरेतावती विसृष्टिरेतावती वाक् षट्त्रिꣳशत्सहस्राण्यग्नयोऽर्कास्तेषामेकैकऽएव तावान्यावानसौ पूर्व्वः ॥ ४ ॥

सा वाक्प्राणमसृजत । सोऽयं प्राणः सृष्टऽ आविरबुभूषन्निरुक्ततरो मूर्त्ततरः सऽ आत्मानमन्वैच्छत्स तपोऽतप्यत स प्रामूर्च्छत्स षट्त्रिꣳशतꣳ सहस्राण्यपश्यदात्मनोऽग्नीनर्कान्प्राणमयान्प्राणचितस्ते प्राणेनैवाधीयन्त प्राणेनाऽचीयन्त प्राणेनैषु ग्रहाऽ अगृह्यन्त प्राणेनास्तुवत प्राणेनाशꣳसन्यत्किञ्च यज्ञे कर्म क्रियते यत्किञ्च यज्ञियं कर्म प्राणेनैव तेषु तत्प्राणमयेषु प्राणचित्सु प्राणमयमक्रियत तद्यत्किञ्चेमानि भूतानि प्राणेन प्राणन्ति तेषामेव सा कृतिस्तानेवादधति तांश्चिन्वन्ति तेषु ग्रहान्गृह्णन्ति तेषु स्तुवते तेषु शꣳसन्त्येतावती वै प्राणस्य विभूतिरेतावती विसृष्टिरेतावान्प्राणः षट्त्रिꣳशत्सहस्राण्यग्नयोऽर्कास्तेषामेकैकऽएव तावान्यावानसौ पूर्व्वः ॥ ५ ॥

---

वाक्चितः । ते वाचैवाधीयन्त । वाचाऽचीयन्त । वाचैषु ग्रहा अगृह्यन्त । वाचाऽस्तुवत । वाचाऽशंसन् । यत्किञ्च यज्ञे कर्म क्रियते—यत्किञ्च यज्ञियं कर्म—वाचैव । तेषु तद्वाङ्मयेषु वाक्चित्सु वाङ्मयमक्रियत । तद् यत्किंचेमानि भूतानि वाचा वदन्ति—तेषामेव सा कृतिः । तानेवादधति । तांश्चिन्वन्ति । तेषु ग्रहान् गृह्णन्ति । तेषु स्तुवते । तेषु शंसन्ति । एतावती वै वाचो विभूतिः । एतावती विसृष्टिः । एतावती वाक् । षट्त्रिंशत्सहस्राण्यग्नयोऽर्काः । तेषामेकैक एव तावान्—यावानसौ पूर्वः ॥ ४ ॥

सा वाक्प्राणमसृजत । सोऽयं प्राणः सृष्ट आविरबुभूषत्—निरुक्ततरः, मूर्ततरः । स आत्मानमन्वैच्छत् । स तपोऽतप्यत । स प्रामूर्च्छत् । स षट्त्रिंशतं सहस्राण्यपश्यदात्मनोऽग्नीन्, अर्कान्प्राणमयान्, प्राणचितः । ते प्राणेनैवाधीयन्त । प्राणेनाचीयन्त । प्राणेनैषु ग्रहा अगृह्यन्त । प्राणेनास्तुवत । प्राणेनाशंसन्—यत्किञ्च यज्ञे कर्म क्रियते । यत्किञ्च यज्ञियं कर्म—प्राणेनैव तेषु तत प्राणमयेषु, प्राणचित्सु, प्राणमयमक्रियत । तद् यत्किञ्चेमानि भूतानि प्राणेन प्राणन्ति । तेषामेव सा कृतिः । तानेवादधति । तांश्चिन्वन्ति । तेषु ग्रहान् गृह्णन्ति । तेषु स्तुवते । तेषु शंसन्ति । एतावती वै प्राणस्य विभूतिः । एतावती विसृष्टिः । एतावान्प्राणः षट्त्रिंशत् सहस्राण्यग्नयोऽर्काः । तेषामेकैक एव तावान्—यावानसौ पूर्वः ॥ ५ ॥

---

याद्दौ तस्य तस्योत्पत्तिरुक्ता—तन्मनो वाचमसृजतेति । "सा वाक् प्राणमसृजत" इत्यादेः—"तच्छ्रोत्रं कर्मासृजत

स प्राणश्चक्षुरसृजत । तदिदं चक्षुः सृष्टमाविरबुभूषन्निरुक्ततरं मूर्त्ततरं तदात्मानमन्वैच्छत्तत्तपोऽतप्यत तत्प्रामूर्च्छत्तत्षट्त्रिंशतं सहस्राण्यपश्यदात्मनोऽग्नीनर्कांश्चक्षुर्मयांश्चक्षुश्चितस्ते चक्षुषैवाधीयन्त चक्षुषाऽचीयन्त चक्षुषैषु ग्रहाऽ अगृह्यन्त चक्षुषाऽस्तुवत चक्षुषा ऽशंसन्यत्किञ्च यज्ञे कर्म क्रियते यत्किञ्च यज्ञियं कर्म चक्षुषैव तेषु तच्चक्षुर्मयेषु चक्षुश्चित्सु चक्षुर्मयमक्रियत तद्यत्किञ्चेमानि भूतानि चक्षुषा पश्यन्ति तेषामेव सा कृतिस्तानेवादधाति ताँश्चिन्वन्ति तेषु ग्रहान्गृह्णन्ति तेषु स्तुवते तेषु शंसन्त्येतावती वै चक्षुषो विभूतिरेतावती विसृष्टिरेतावच्चक्षुः षट्त्रिंशत्सहस्राण्यग्नयोऽर्कास्तेषामेकैकऽएव तावान्यावानसौ पूर्वः ॥ ६ ॥

( स्त ) तच्चक्षुः श्रोत्रमसृजत । तदिदं श्रोत्रं सृष्टमाविरभूषन्निरुक्ततरं मूर्त्ततरं तदात्मानमन्वैच्छत्तत्तपोऽतप्यत तत्प्रामूर्च्छत्तत्षट्त्रिंशतं सहस्राण्यपश्यदात्मनोऽग्नीनर्काञ्छ्रोत्रमयाञ्छ्रोत्रचितस्ते श्रोत्रेणैवाधीयन्त श्रोत्रेणाचीयन्त श्रोत्रेणैषु ग्रहा ऽअगृह्यन्त श्रोत्रेणास्तुवत श्रोत्रेणाशंसन्यत्किञ्च यज्ञे कर्म क्रियते यत्किञ्च यज्ञियं कर्म श्रोत्रेणैव तेषु तच्छ्रोत्रमयेषु श्रोत्रचित्सु श्रोत्रमयमक्रियत तद्यत्किञ्चेमानि भूतानि श्रोत्रेण शृण्वन्ति तेषामेव सा कृतिस्तानेवादधाति ताँश्चिन्वन्ति

---

स प्राणश्चक्षुरसृजत—तदिदं चक्षुः सृष्टमाविरबुभूषत्—निरुक्ततरम्, मूर्त्ततरम् । तदात्मानमन्वैच्छत् । तत्तपोऽतप्यत । तत्प्रामूर्च्छत् । तत्षट्त्रिंशतं सहस्राण्यपश्यत्—आत्मनोऽग्नीन्, अर्कांश्चक्षुर्मयांश्चक्षुश्चितः । ते चक्षुषैवाधीयन्त । चक्षुषाऽचीयन्त । चक्षुषैषु ग्रहा अगृह्यन्त । चक्षुषाऽस्तुवत । चक्षुषाऽशंसन् । यत्किञ्च यज्ञे कर्म क्रियते, यत्किञ्च यज्ञियं कर्म—चक्षुषैव । तेषु तत् चक्षर्मयेषु, चक्षुश्चित्सु चक्षुर्मयमाक्रियत । तद् यत्किञ्चेमानि भूतानि चक्षुषा पश्यन्ति—तेषामेव सा कृतिः । तानेवादधति । तेषु ग्रहान्गृह्णन्ति । तेषु स्तुवते । तेषु शंसन्ति । एतावती वै चक्षुषो विभूतिः । एतावती विसृष्टिः । एतावच्चक्षुः षट्त्रिंशत्सहस्राण्यग्नयोऽर्काः । तेषामेकैक एव तावान्—यावानसौ पूर्वः ॥ ६ ॥

तत् चक्षुः श्रोत्रमसृजत—तदिदं श्रोत्रं सृष्टमाविरबुभूषत्—निरुक्ततरम्, मूर्त्ततरम् । तदात्मानमन्वैच्छत् । तत् तपोऽतप्यत । तत्प्रामूर्च्छत् । तत् षट्त्रिंशतं सहस्राण्यपश्यत्—आत्मनोऽग्नीन् । अर्काञ्छ्रोत्रमयान्—श्रोत्रचितः । ते श्रोत्रेणैवाधीयन्त । श्रोत्रेणाचीयन्त । श्रोत्रेणैषु ग्रहा अगृ-

---

तत्प्राणानभिसममूर्च्छत्"(कं.८) इत्यस्तस्यायमर्थः । श्रोत्रेण सृष्टं कर्म प्राणानभिसममूर्च्छत, अभिन्याप्नोत् । इमं

तेषु ग्रहान्गृह्णन्ति तेषु स्तुवते तेषु शꣳसन्त्येतावती वै श्रोत्रस्य व्विभूतिरेतावती व्विसृष्टिरेतावच्छ्रोत्रꣳषट्त्रिꣳशत्सहस्राण्यग्नयोऽर्कास्तेषामेकैकऽएव तावान्यावानसौ पूर्व्वः ॥ ७ ॥

( स्त ) तच्छ्रोत्रं कर्मासृजत । तत्प्राणानभिसममूर्च्छदिमꣳ संदेघमन्नसंदेहमकृत्स्नं वै कर्मऽर्ते प्राणेभ्योऽकृत्स्नाऽ उ वै प्राणाऽऋते कर्मणः ॥ ८ ॥

( स्त ) तदिदं कर्म सृष्टमाविरबुभूषत् । ( त्रि ) निरुक्ततरं मूर्त्ततरं तदात्मानमन्वैच्छत्तत्तपोऽतप्यत तत्प्रामूर्च्छत्तत्षट्त्रिꣳशतꣳ सहस्राण्यपश्यदात्मनोऽग्नीनर्कान्कर्ममयान्कर्मचितस्ते कर्मणैवाधीयन्त कर्मणाऽचीयन्त कर्मणैषु ग्रहा ऽअगृह्यन्त कर्मणाऽस्तुवत कर्मणाऽशꣳसन्यत्किञ्च यज्ञे कर्म क्रियते यत्किञ्च यज्ञियं कर्म कर्मणैव तेषु तत्कर्ममयेषु कर्मचित्सु कर्ममयमक्रियत तद्यत्किञ्चेमानि भूतानि कर्म कुर्व्वते तेषामेव सा कृतिस्तानेवादधति तांश्चिन्वन्ति तेषु ग्रहान्गृह्णन्ति तेषु स्तुवते तेषु शꣳसन्त्येतावती वै कर्मणो व्विभूतिरेतावती व्विसृष्टिरेतावत्कर्म षट्त्रिꣳशत्सहस्राण्यग्नयोऽर्कास्तेषामेकैकऽएव तावान्यावानसौ पूर्व्वः ॥ ९ ॥

---

ह्यन्त । श्रोत्रेणास्तुवत । श्रोत्रेणाशंसन्–यत्किञ्च यज्ञे कर्म क्रियते । यत्किञ्च यज्ञियं कर्म श्रोत्रेणैव । तेषु तत् श्रोत्रमयेषु, श्रोत्रचित्सु श्रोत्रमयमक्रियत । तद् यत्किञ्चेमानि भूतानि श्रोत्रेण शृण्वन्ति–तेषामेव सा कृतिः । तानेवादधति, तांश्चिन्वन्ति, तेषु ग्रहान् गृह्णन्ति, तेषु स्तुवते, तेषु शंसन् । एतावती वै श्रोत्रस्य विभूतिः, एतावती विसृष्टिः, एतावच्छ्रोत्रं षट्त्रिंशत् सहस्राण्यग्नयोऽर्काः । तेषामेकैक एव तावान्–यावानसौ पूर्वः ॥ ७ ॥

तच्छ्रोत्रं कर्मासृजत । तत् प्राणानभिसममूर्च्छत् । इमं संदेघमन्नसन्देहम् । अकृत्स्नं वै कर्म ऋते प्राणेभ्यः । अकृत्स्ना उ वै प्राणाः ऋते कर्मणः ॥ ८ ॥

तदिदं कर्म सृष्टमाविरबुभूषत् । निरुक्ततरम्, मूर्ततरम् । तदात्मानमन्वैच्छत् । तत्तपोऽतप्यत । तत्प्रामूर्च्छत् । तत् षट्त्रिंशतं सहस्राण्यपश्यदात्मनोऽग्नीन्, अर्कान्कर्ममयान्कर्मचितः । ते कर्मणैवाधीयन्त । कर्मणाऽचीयन्त । कर्मणैषु ग्रहा अगृह्यन्त । कर्मणाऽस्तुवत । कर्मणाऽशंसन् । यत्किञ्च यज्ञे कर्म क्रियते–यत्किञ्च यज्ञियं कर्म–कर्मणैव तेषु कर्ममयेषु, कर्मचित्सु, कर्ममयमक्रियत । तत्

---

सन्देघमनुप्राणाश्रयं शरीरमुद्दिश्य समुच्छ्रितं बभूव । स्वयमसंदेघमशरीरं सत् कर्म प्राणान्नयोरन्योन्यसाहचर्यादभिवृद्धि व्यतिरेकमुखेनाह–अकृत्स्नं वै कर्म ऋते प्राणेभ्य इति ॥ ४–९ ॥

( स्त ) तत्कुर्माग्निमसृजत । ( ता ) आविस्तरां वाऽअग्निः कुर्मणः कुर्मणा ह्येनं जनुयन्ति कुर्मणेन्धुते ॥ १० ॥

सोऽयमग्निः सृष्टऽआविरबुभूषत् । (न्नि) निरुक्ततरो मूर्त्ततरः स ऽआत्मानमुन्वैच्छत्स तुपोऽतप्यत स प्रामूर्च्छत्स षुट्त्रिꣳशतꣳ सहस्राण्यपश्यदात्मुनोऽग्नीनर्कानग्निमयानग्निचितुस्तेऽग्निनैवाधीयन्ताग्निनाचीयन्ताग्निनैषु ग्रहाऽ अगृह्यन्ताग्निनाऽस्तुवताऽग्निनाऽशꣳ सन्यत्किञ्च यज्ञे कुर्मं क्रियुते यत्किञ्च यज्ञियं कुर्माग्निनैव तेषु तदग्निमयेष्वग्निचित्स्वग्निमयमक्रियत तद्यात्किञ्चेमानि भूतान्यग्निमिन्धुन्ते तेषामेव सा कृतिस्तानेवादधति तांश्चिन्वन्ति तेषु ग्रहान्गृह्णन्ति तेषु स्तुवते तेषु शꣳसन्त्येतावती वाऽअग्नेर्विभूतिरेतावती विसृष्टिरेतावानग्निः षुट्त्रिꣳशत्सहस्राण्यग्नयोऽर्कास्तेषामेकैक ऽएव तावान्यावानसौ पूर्व्वः ॥ ११ ॥

( स्ते ) ते हैते विद्याचित ऽएव । तान्हैतानेवंविदे सर्व्वदा सर्व्वाणि भूतानि चिन्वन्त्यपि स्वपते विद्यया हैवैतऽएवंविदश्चिता भवन्ति ॥ १२ ॥

इति चतुर्थप्रपाठके प्रथमं ब्राह्मणम् ॥ १०–४–१ ॥ ( ९. ३. ) ॥

---

यत्किंचेमानि भूतानि कर्म कुर्वते–तेषामेव सा कृतिस्तानेवादधति, तांश्चिन्वन्ति, तेषु ग्रहान् गृह्णन्ति, तेषु स्तुवते, तेषु शंसन्ति । एतावती वै कर्मणो विभूतिः, एतावती विसृष्टिः, एतावत्कर्म षट्त्रिंशत्सहस्राण्यग्नयोऽर्काः । तेषामेकैक एव तावान्–यावानसौ पूर्वः ॥ ९ ॥

तत्कर्माग्निमसृजत । आविस्तरां वा अग्निः कर्मणः–कर्मणा ह्येनं जनयन्ति । कर्मणेन्धते ॥ १० ॥

सोऽयमग्निः सृष्ट आविरबुभूषत्–निरुक्ततरः, मूर्त्ततरः । स आत्मानमन्वैच्छत् । स तपोऽतप्यत । स प्रामूर्च्छत् । स षट्त्रिंशतं सहस्राण्यपश्यदात्मनोऽग्नीन् । अर्कानग्निमयानग्निचितः । तेऽग्निनैवाधीयन्त । अग्निनाऽचीयन्त । अग्निनैषु ग्रहा अगृह्यन्त । अग्निनाऽस्तुवत । अग्निनाऽशंसन् । यत्किञ्च यज्ञे कर्म क्रियते । यत्किञ्च यज्ञियं कर्म–अग्निनैव तेषु तदग्निमयेष्वग्निचित्स्वग्निमयमक्रियत । तद् यत्किञ्चेमानि भूतान्यग्निमिन्धते–तेषामेव सा कृतिस्तानेवादधाति । तांश्चिन्वन्ति । तेषु ग्रहान्गृह्णन्ति । तेषु स्तुवते । तेषु शंसन्ति । एतावती वा अग्नेर्विभूतिः । एतावती विसृष्टिः एतावानग्निः षट्त्रिंशत्सहस्राण्यग्नयोऽर्काः–तेषामेकैक एव तावान्–यावानसौ पूर्वः ॥ ११ ॥

ते हैते विद्याचित एव । तान्हैतानेवं विदे सर्वदा सर्वाणि भूतानि चिन्वन्ति । अपि स्वपते । विद्यया हैवैत एवंविदश्चिता भवन्ति ॥ १२ ॥

---

कर्मणाऽग्निसृष्टिं स्पष्टीकरोति–आविस्तरां वा अग्निः कर्मण इति । कर्मसकाशादग्नेर्जननात् समिन्धनाच्चाग्निराविस्तरां स्पष्टो दृश्यत इत्यर्थः ॥ १०–११ ॥

एतेषां मनश्चित्प्रमुखाग्नीनां सर्वेषां स्वतन्त्रविद्यामयत्वोपोद्बलकानि श्रुतिलिङ्गवाक्यान्युदाहरति–ते हैते

अयं वाव लोकऽएषोऽग्निश्चितः । (स्त) तस्यापऽएव परिश्रितो मनुष्या यजुष्मत्यऽ इष्टकाः पशवः सूददोहाऽ ओषधयश्च व्वनस्पतयश्च पुरीषमाहुतयः समिधोऽग्निर्लोकम्पृणा तद्वाऽएतत्सर्व्वमग्निमेवाभिसम्पद्यते तत्सर्व्वोऽग्निर्लोकम्पृणामभिसम्पद्यते स यो हैतदेवं व्वेद लोकम्पृणामेनं भूतमेतत्सर्व्वमभिसम्पद्यते ॥ १ ॥

## चित्याग्नौ लोकदृष्ट्युपासनं ब्राह्मणम् ।

अयं वाव लोक एषोऽग्निश्चितः । तस्याप एव परिश्रितः । मनुष्या यजुष्मत्य इष्टकाः । पशवः सूददोहाः । ओषधयश्च वनस्पतयश्च पुरीषम् । आहुतयः समिधः । अग्निर्लोकम्पृणा । तद्वा एतत्सर्वमग्निमेवाभिसम्पद्यते । तत्सर्वोऽग्निर्लोकम्पृणामभिसम्पद्यते । स यो हैतदेवं वेद—लोकम्पृणाम् । एनं भूतमेतत्सर्वमभिसम्पद्यते ॥ १ ॥

विद्याचित एवेति । एते मनश्चिदादयो 'विद्याचित एव' विद्ययैव चीयमाना भवन्ति—एवकारश्रुतिः कर्माङ्गत्वं व्यावर्तयति । "तान्हैतानेवंविदे सर्वदा सर्वाणि भूतानि चिन्वन्त्यपि स्वपते" इति लिङ्गम् । "विद्यया हैवैत एवंविदश्चिता भवन्ति" इति वाक्यं च स्वातन्त्र्यपक्षमुपोद्बलयति ॥ १२ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये दशमकाण्डे पञ्चमेऽध्याये तृतीयं ब्राह्मणम् ॥ ( १० । ९ । ३ ) ॥

उत्तरब्राह्मणे भूम्यादिलोकत्रयादित्यनक्षत्रच्छन्दःसंवत्सरात्मानः चित्याग्निरूपत्वेनोपासनीया उच्यन्ते । अत एव लोकादेः परिश्रिद्यजुष्मतीपशुपुरीषसमिदादिसामान्यधर्मवर्णनमत्र केवलं विद्याविधित्वे शब्दस्य तात्पर्यं लक्ष्यते न शुद्धकर्माङ्गविधित्वे । तथाहि अस्मिन्नेव ब्राह्मणे "विद्यया तदारोहन्ति यत्र कामाः परागताः । न तत्र दक्षिणा यन्ति नाविद्वांसस्तपस्विनः" ( कं.—१६ ) इत्यनेन श्लोकेन केवलकर्मनिन्दापुरःसरं विद्याप्रशंसा—अयं वाव लोक एषोऽग्निश्चित इति । 'अयं' भूलोक एव 'एषः' 'चितः' 'अग्निः' ध्येयः । अग्निसामान्यधर्मानाह—तस्याप एवेत्यादिना । 'तस्य' भूलोकस्याग्नेः 'आप एव' 'परिश्रितः' समुद्रोदकान्येव परिश्रिद्रूपाणीति ध्येयानि, भूमौ वर्तमानमनुष्या यजुष्मत्य इष्टकाः, 'पशवः' 'सूददोहाः' अमृतदोहाः अन्नमित्यर्थः । यद्वा "ता अस्य सूददोहसः" ( वा. सं. १२ । ५५ ) इत्यनेन यदधिवचनं तत्पशव इत्यर्थः । 'ओषध्यः' 'वनस्पतयः' एव 'पुरीषम्' आहुतिः—समित्त्रयरूपा । एतस्य पुरीषाहुतेः समित्त्रयरूपत्वमुत्तरत्र स्पष्टीकरिष्यते । "अथ यद्दिक्षु च रश्मिषु चान्नं तत्पुरीषं ता आहुतयस्ताः समिधः" ( कं. ४ ) इति । बाह्यः 'अग्निः' ज्वलन एव 'लोकम्पृणा' इष्टकाः । यस्माद्बाह्योऽग्निर्लोकम्पृणेष्टकारूपः—तस्मात् 'एतत्सर्वं' परिश्रिद्यजुष्मत्यादिरूपोदकमनुष्यादिकम् 'अग्निमेवाभिसम्पद्यते' अग्निना सर्वे सम्पन्नाः स्वस्वव्यापारदक्षा भवन्ति । यथा चित्याग्निर्लोकम्पृणेष्टकाभिः सम्पूर्णः । अयमर्थः—भूलोकस्य चित्याग्नित्वपरिज्ञाने समुद्रोदकमनुष्यपशुओषधिवनस्पतिपुरीषाहुतिज्वलनाः परिश्रिद्यजुष्मतीसूददोहाः पुरीषाहुतिसमिल्लोकम्पृणारूपाः परिज्ञेया इति । वेदितुः फलमाह—स यो हैतदेवं वेदेति । एवं भूलोकं चित्याग्निरूपं वेद—स लोकम्पृणाभूतम् 'एनम्' लोकाधिष्ठितारमग्निमेव 'सम्पद्यते' तदात्मको भवतीत्यर्थः ॥ १ ॥

( तेऽन्तु ) अन्तरिक्षᳪं ह त्वेवैषोऽग्निश्चितः । ( स्त ) तस्य द्यावापृथिव्योरेव सन्धिः परिश्रितः परेण हान्तरिक्षं द्यावापृथिवी संधत्तस्ताः परिश्रितो व्वयाᳪंसि यजुष्मत्यऽ इष्टका व्वर्षᳪं सूददोहा मरीचयः पुरीषमाहुतयः समिधो व्वायुर्लोकम्पृणा तद्वाऽएतत्सर्व्वं व्वायुमेवाभिसम्पद्यते तत्सर्व्वोऽग्निर्लोकम्पृणामभिसंपद्यते स यो हैतदेवं व्वेद लोकम्पृणामेनं भूतमेतत्सर्व्वमभिसंपद्यते ॥ २ ॥

द्यौर्ह त्वेवैषोऽग्निश्चितः । ( स्त ) तस्यापऽ एव परिश्रितो यथा ह वाऽइदं कोशः समुब्जितऽ एवमिमे लोकाऽ अप्स्वन्तस्तद्याऽइमाँल्लोकान्परेणापस्ताः परिश्रितो देवा यजुष्मत्यऽ इष्टका यदेवैतस्मिँल्लोकेऽन्नं तत्सूददोहा नक्षत्राणि पुरीषमाहुतयः समिधऽ आदित्यो लोकम्पृणा तद्वाऽएतत्सर्व्वमादित्यमेवाभिसम्पद्यते तत्सर्व्वोऽग्निर्लोकम्पृणामभिसंपद्यते स यो हैतदेवं व्वेद लोम्कपृणामेनंभूतमेतत्सर्व्वमभिसंपद्यते ॥ ३ ॥

---

अन्तरिक्षं ह त्वेवैषोऽग्निश्चितः । तस्य द्यावापृथिव्योरेव सन्धिः परिश्रितः । परेण हान्तरिक्षं द्यावापृथिवी सन्धत्तः । ताः परिश्रितः । वयांसि यजुष्मत्य इष्टकाः । वर्षम् सूददोहाः । मरीचयः पुरीषम् । आहुतयः समिधः । वायुर्लोकम्पृणा । तद्वा एतासर्वं वायुमेवाभिसम्पद्यते । तत्सर्वोऽग्निर्लोकम्पृणामभिसम्पद्यते । स यो हैतदेवं वेद । लोकम्पृणाम् । एनं भूतमेतत्सर्वमभिसम्पद्यते ॥ २ ॥

द्यौर्ह त्वेवैषोऽग्निश्चितः । तस्याप एव परिश्रितः । यथा ह वाऽइदं कोशः समुब्जितः—एवमिमे लोका अप्स्वन्तः । तद् या इमाँल्लोकान्परेणापः—ताः परिश्रितः । देवा यजुष्मत्य इष्टकाः । यदेवैतस्मिँल्लोकेऽन्नं तत्सूददोहाः । नक्षत्राणि पुरीषम् । आहुतयः समिधः । आदित्यो लोकम्पृणा । तद्वा एतत्सर्वमादित्यमेवाभिसम्पद्यते तत्सर्वोऽग्निर्लोकम्पृणामभिसम्पद्यते । स यो हैतदेवं वेद । लोकम्पृणाम् । एनं भूतमेतत्सर्वमभिसम्पद्यते ॥ ३ ॥

---

एवमुत्तरे " अन्तरिक्षं ह त्वेवैषोऽग्निश्चितः "—इत्यादयः " सर्वाणि ह त्वेव भूतानि सर्वे देवा एषोऽग्निश्चितः "—इत्यन्ता अष्टौ पर्याया व्याख्येयाः । यत्र यत्र विशेषः स उच्यते । अन्तरिक्षपर्याये ' द्यावापृथिव्योः ' ' सन्धिः ' ' परिश्रितः ' इत्युक्तं विशदयति—परेण हान्तरिक्षमिति । अन्तरिक्षं ' परेण ' परस्तात् अन्त इत्यर्थः । यद् द्यावापृथिवी संयुक्तौ भवतः । स सन्धिः परिश्रिद्रूपो ज्ञेयः । अत्र वायुप्राप्तिः फलम् ॥ २ ॥

द्युलोकपर्याये "तस्या आप एव परिश्रितः" इत्युक्तम्, तत्समर्थयते—यथा ह वा इदं कोशः समुब्जित इति ।

( तऽ ) आदित्यो ह त्त्वेवैषोऽग्निश्चितः । ( स्तु ) तस्य दिशऽएव परिश्रितस्ताः षष्टिश्च त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतान्यादित्यं दिशः समन्तं परियन्ति रश्मयो यजुष्मत्यऽइष्टकास्ताः षष्टिश्चैव त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतान्यादित्यस्य रश्मयस्तद्यत्परिश्रित्सु यजुष्मतीः प्रत्यर्प्पयति रश्मींस्तद्दिक्षु प्रत्यर्प्पयत्यथ यदन्तरा दिशश्च रश्मींश्च तत्सूददोहाऽअथ यद्दिक्षु च रश्मिषु चान्नं तत्पुरीषं ता ऽआहुतयस्ताः समिधोऽथ यद्दिशऽइति च रश्मयऽ इति चाख्यायते तल्लोकम्पृणा तद्वाऽएतत्सर्व्वं दिशऽ इति चैव रश्मयऽ इति चाख्यायते तत्सर्व्वोऽग्निर्लोकम्पृणामभिसम्पद्यते स यो हैतदेवं व्वेद लोकम्पृणामेनं भूतमेतत्सर्व्वमभिसंपद्यते ॥ ४ ॥

---

आदित्यो ह त्वेवैषोऽग्निश्चितः । तस्य दिश एव परिश्रितः । ताः षष्टिश्च त्रीणि च शतानि भवन्ति । षष्टिश्च ह वै त्रीणि च शतान्यादित्यं दिशः समन्तं परियन्ति । रश्मयो, यजुष्मत्य इष्टकाः । ताः षष्टिश्चैव त्रीणि च शतानि भवन्ति । षष्टिश्च ह वै त्रीणि च शतान्यादित्यस्य रश्मयः । तद् यत्परिश्रित्सु यजुष्मतीः प्रत्यर्पयति—रश्मींस्तद्दिक्षु प्रत्यर्पयति । अथ यदन्तरा दिशश्च रश्मींश्च तत्सूददोहाः । अथ यद्दिक्षु च रश्मिषु चान्नं तत्पुरीषम् । ता आहुतयः । ताः समिधः । अथ यद्दिश इति च रश्मय इति चाख्यायते—तल्लोकम्पृणा । तद्वा एतत्सर्वं दिश इति चैव रश्मय इति चाख्यायते—तत्सर्वोऽग्निर्लोकम्पृणामभिसम्पद्यते । स यो ह तदेवं वेद । एनं भूतमेतत्सर्वमभिसम्पद्यते ॥ ४ ॥

---

भूलोकपर्याये समुद्रोदकान्येव परिश्रितः, अत्र तथा न सन्तीति तत्समर्थनोक्तिः यथा 'इदम्' इदानीम् 'कोशः' पेटिका 'समुब्जितः । सम्पिहितो वर्तते—' एवमिमे' त्रयो 'लोकाः' 'अप्स्वन्तः' कोशरूपत्वेन वर्तन्ते । तस्मात् 'इमान्' त्रीन् 'लोकान्' 'परेण' तेषां परस्ताद्या आपः परिवेष्टय वर्तन्ते ताः परिश्रितः । अत्रादित्यप्राप्तिः फलमुक्तम् ॥ ३ ॥

आदित्यपर्याये षष्ट्युत्तरत्रिशतसङ्ख्याका आदित्यमण्डलस्य समन्तात्परिगता दिशः परिश्रिदात्मिकाः । तत्रत्या एव तावत्सङ्ख्यकाः 'रश्मयः' किरणा एव यजुष्मत्य इष्टकाः । संवत्सरस्य षष्ट्यधिकत्रिशतदिनानि विद्यन्ते । अत्रादित्यस्यैकैकदिने एकैका दिक् एकैकश्च रश्मिरित्युक्तं भवति । अत्र परिश्रित्सु यजुष्मतीनां विधानम्, विदिक्षु रश्मिप्रत्यर्पणम् । अथ यद्दिक्षु च रश्मिषु चान्नमिति । दिशां रश्मीनां लोकत्वादत्रान्नसम्भावनाऽस्ति । अत्र दिशां रश्मीनां यन्मध्यवर्तनं तत्सूददोहस्थानीयमित्यर्थः । लोकम्पृणेष्टकास्थानीयं सम्पादयति—अथ यद्दिश इति च रश्मय इति चाख्यायते तल्लोकम्पृणेति । यद्दिश इति रश्मय इत्याख्यानं वचनमेव लोकम्पृणात्मकमित्यर्थः । आदित्यमग्निरूपत्वेनोपासकस्य दिग्रश्मितादात्म्यं फलमित्याह—स यो हैतदेवमिति ॥ ४ ॥

नक्षत्राणि ह त्वेवैषोऽग्निश्चितः । ( स्तुा ) तानि वाऽएतानि सप्तविंशतिर्नक्षत्राणि सप्तविंशतिः सप्तविंशतिर्होपनक्षत्राण्येकैकं नक्षत्रमनूपतिष्ठन्ते तानि सप्त च शतानि विंशतिश्चाधि षट्त्रिंशत्ततो यानि सप्त च शतानि विंशतिश्चेष्टकाऽ एव ताः षष्टिश्च त्रीणि च शतानि परिश्रितः षष्टिश्च त्रीणि च शतानि यजुष्मत्योऽथ यान्यधि षट्त्रिंशत्स त्रयोदशो मासः सऽ आत्मा त्रिंशदात्मा प्रतिष्ठा द्वे प्राणा द्वे शिरऽएव षट्त्रिंश्यौ तद्यत्ते द्वे भवतो द्व्यक्षरं हि शिरोऽथ यदन्तरा नक्षत्रे तत्सूददोहाऽअथ यन्नक्षत्रेष्वन्नं तत्पुरीषं ता ऽआहुतयस्ताः समिधोऽथ यन्नक्षत्राणीत्याख्यायते तल्लोकम्पृणा तद्वाऽएतत्सर्वं नक्षत्राणीत्येवाख्यायते तत्सर्वोऽग्निर्लोकम्पृणामभिसम्पद्यते स यो हैतदेवं वेद लोकम्पृणामेनं भूतमेतत्सर्वमभिसम्पद्यते ॥ ९ ॥

---

नक्षत्राणि ह त्वेवैषोऽग्निश्चितः । तानि वा एतानि सप्तविंशतिर्नक्षत्राणि । सप्तविंशतिः सप्तविंशतिर्होपनक्षत्राणि एकैकं नक्षत्रमनूपतिष्ठन्ते । तानि सप्त च शतानि विंशतिश्चाधि षट्त्रिंशत् । ततो यानि सप्त च शतानि विंशतिश्च, इष्टका एव ताः । षष्टिश्च त्रीणि च शतानि परिश्रितः । षष्टिश्च त्रीणि च शतानि यजुष्मत्यः । अथ यान्यधि षट्त्रिंशत्–स त्रयोदशो मासः । स आत्मा । त्रिंशदात्मा । प्रतिष्ठा द्वे । प्राणा द्वे । शिर एव षट्त्रिंश्यौ । तद् यत्ते द्वे भवतः । द्व्यक्षरं हि शिरः । अथ यदन्तरा नक्षत्रे तत्सूददोहाः । अथ यन्नक्षत्रेष्वन्नं तत्पुरीषम् । ता आहुतयः । ताः समिधः । अथ यन्नक्षत्राणीत्याख्यायते तल्लोकम्पृणा । तद्वा एतत्सर्वं नक्षत्राणीत्येवाख्यायते–तत्सर्वोऽग्निर्लोकम्पृणामभिसंपद्यते । स यो हैतदेवं वेद । लोकम्पृणाम् एनं भूतमेतत्सर्वमभिसम्पद्यते ॥ ९ ॥

---

नक्षत्राणामग्नित्वेनोपासनं कर्तव्यमित्यस्मिन्पर्याये सप्तविंशतेर्नक्षत्राणां मध्ये, एकैकस्य मुख्यनक्षत्रस्य 'सप्तविंशतिः सप्तविंशतिरुपनक्षत्राणि' विद्यन्ते । तत्र सर्वाणि सप्तविंशतिनक्षत्राणि 'उपनक्षत्राणि' च सम्भूय विंशत्यधिकानि सप्तशतानि षट्त्रिंशदधिकानि च सम्भवन्ति तत्र विंशत्यधिकसप्तशतसङ्ख्याकानां नक्षत्राणां मध्ये षष्ट्यधिकत्रिशतसङ्ख्याकानि परिश्रितः तावन्ति नक्षत्राणि यजुष्मत्यः । यान्यधिकानि षट्त्रिंशत्संख्याकानि विद्यन्ते तेषां विभागं विवक्षुः सामान्येन तेषां त्रयोदशमासरूपतामाह–स त्रयोदशो मास इति । विंशत्यधिकसप्तशतसंख्याकेष्टकारूपनक्षत्रवचनेन तावत्संख्याहोरात्रसंवत्सरात्मकोऽग्निरुक्त इति मत्वा, अधिकानां षट्त्रिंशन्नक्षत्राणां त्रयोदशमासरूपत्वमुच्यते । संवत्सरेण विना मासासम्भवात् । तत्र त्रिंशन्नक्षत्राण्यात्मा मध्यदेहः । द्वे नक्षत्रे प्रतिष्ठा पादरूपेण, पादयोर्द्वित्वं स्फुटम् । 'द्वे' 'नक्षत्रे' प्राणाः चक्षुरादिप्राणानां द्वन्द्वशोऽवस्थानादेवमुक्तम् । द्वे नक्षत्रे शिरोरूपम् । षट्त्रिंश्याविति स्त्रीलिङ्गवचनमिष्टकाभिप्रायेण । शिरसो नक्षत्रद्वयात्मकत्वमक्षरसंख्यया प्रतिपादयति–तद्यत्ते द्वे भवतो द्व्यक्षरं हि शिर इति । यदन्तरा नक्षत्रे तत्सूददोहा इति ।

ता वाऽएताः । ( ८ ) एकविꣳशतिर्बृहत्यऽएकविꣳशो वै स्वर्गो लोको बृहती स्वर्गो लोकस्तदेषु स्वर्गं लोकमभिसम्पद्यतऽएकविꣳशं च स्तोमं बृहतीं च च्छन्दः ॥ ६ ॥

( इन्द्र ) छन्दाꣳसि ह त्वेवैषोऽग्निश्रितः । ( स्वा ) तानि वाऽएतानि सप्त च्छन्दाꣳसि चतुरुत्तराणि त्रिचानि तेषाꣳ सप्त च शतानि विꣳशतिश्चाक्षराण्यधि षट्त्रिꣳशत्ततो यानि सप्त च शतानि विꣳशतिश्चेष्टकाऽएव ताः षष्टिश्च त्रीणि च शतानि परिश्रितः षष्टिश्च त्रीणि च शतानि यजुष्मत्योऽथ यान्यधि षट्त्रिꣳशत्स त्रयोदशो मासः सऽ आत्मा त्रिꣳशदात्मा प्रतिष्ठा द्वे प्राणा द्वे शिरऽएव षट्त्रिꣳश्यौ तद्यत्ते द्वे भवतो द्व्यक्षरꣳ हि शिरः ॥ ७ ॥

---

ता वा एता एकविंशतिर्बृहत्यः । एकविंशो वै स्वर्गो लोकः । बृहती स्वर्गो लोकः । तदेष स्वर्गं लोकमभिसम्पद्यते । एकविंशं च स्तोमं बृहतीं च छन्दः ॥ ६ ॥

छन्दांसि ह त्वेवैषोऽग्निश्रितः । तानि वा एतानि सप्त छन्दांसि । चतुरुत्तराणि त्रिचानि । तेषां सप्त च शतानि, विंशतिश्चाक्षराण्यधि षट्त्रिंशत् । ततो यानि सप्त च शतानि विंशतिश्च, इष्टका एव ताः । षष्टिश्च त्रीणि च शतानि परिश्रितः । षष्टिश्च त्रीणि च शतानि यजुष्मत्यः । अथ यान्यधि षट्त्रिंशत्—स त्रयोदशो मासः । स आत्मा । त्रिंशदात्मा । प्रतिष्ठा द्वे । प्राणा द्वे । शिर एव षट्त्रिंश्यौ । तद् यत्ते द्वे भवतः । द्व्यक्षरं हि शिरः ॥ ७ ॥

---

द्वयोर्द्वयोर्नक्षत्रयोर्मध्ये सूददोहोरूपेण ध्येयम् । " नक्षत्राणीति " यदाख्यानं वचनं तल्लोकम्पृणास्वरूपेण ध्येयम् । यस्मान्नक्षत्राख्यानं लोकम्पृणारूपं ततो मुख्यनक्षत्राण्युपनक्षत्राणि च सर्वाणि नक्षत्राणीति एव आख्यायन्ते । नक्षत्रसम्पत्तिः फलमस्य ध्यानस्योक्तम् ॥ ५ ॥

नक्षत्रोपनक्षत्रसम्पन्नां सङ्ख्यां बृहत्यात्मना स्तौति—ता वा एता एकविंशतिर्बृहत्य इत्यादि । विंशत्यधिकसप्तशतनक्षत्रैर्विंशतिर्बृहत्यः, अधिकया षट्त्रिंशतैकेति ' एकविंशतिर्बृहत्यः ' । एकविंशो वै स्वर्गो लोकः । स्वर्गस्त्वादित्य इति गम्यते; सुखरूपो वा लोकः स्वर्गः एकविंशतिसङ्ख्यापूरकः । तथाच तैत्तिरीयके स्वर्गस्य चैकविंशत्वं तस्यादित्यस्वरूपत्वमाम्नायते—" एकविंशो वा इतः स्वर्गो लोकः स्वर्गं लोकमाप्नोति, असौ वा आदित्य एकविंशः " इति, " बृहती स्वर्गो लोकः " इति । तैत्तिरीयक एवादित्यस्य च्छन्दोमयत्वप्रस्तावे " बृहत्येवादित्योऽभवत् " इति श्रुतम् । स्वर्गो लोको बृहत्यात्मक इत्यर्थः । अथ नक्षत्रसङ्ख्यां बृहत्यात्मनोपासितुः स्वर्गलोकादिफलमित्याह—तदेष स्वर्गं लोकमभिसम्पद्यत एकविंशं च स्तोमं बृहतीं च छन्द इति । एकविंशतिस्तोत्रियात्मकः स्तोम एकविंश उच्यते ॥ ६ ॥

छन्दसामग्निरूपेण ध्यानं विधत्ते—छन्दांसि ह त्वेवैषोऽग्निश्रित इति । तानि वा एतानि सप्त च्छन्दांसि—इत्यादेरयमर्थः—तत्र येषां छन्दसामग्नित्वमुक्तम् । तानि गायत्र्यादीनि सप्त च्छन्दांसि । तदुत्तरो-

( स्तु ) तस्यै वाऽएतस्यै षट्त्रिꣳशदक्षरायै बृहत्यै । यानि दश प्रथमान्यक्षराणि सा दशाक्षरैकपदाऽथ यानि विꣳशतिः सा विꣳशत्यक्षरा द्विपदाऽथ यानि त्रिꣳशत्सा त्रिꣳशदक्षरा विराडथ यानि त्रयस्त्रिꣳशत्सा त्रयस्त्रिꣳशदक्षराऽथ यानि चतुस्त्रिꣳशत्सा चतुस्त्रिꣳशदक्षरा स्वराडथ यत्सर्वैश्छन्दोभिरयमग्निश्चितस्तदतिच्छन्दास्ताऽ उ सर्वाऽ इष्टकाऽ एवेष्टकेति त्रीण्यक्षराणि त्रिपदा गायत्री तेनैष गायत्रोऽग्निर्मृदापऽ इति त्रीण्यक्षराणि त्रिपदा गायत्री तेनोऽएवैष गायत्रोऽथ यदन्तरा च्छन्दसी तत्सूददोहाऽअथ यच्छन्दःस्वन्नं तत्पुरीषं ताऽ आहुतयस्ताः समिधोऽथ यच्छन्दाꣳसीत्याख्यायते तल्लोकम्पृणा तद्वाऽएतत्सर्वं छन्दाꣳसीत्येवाख्यायते तत्सर्वोऽग्निर्लोकम्पृणामभिसंपद्यते स यो हैतदेवं वेद लोकम्पृणामेनं भूतमेतत्सर्वमभिसंपद्यते ॥ ८ ॥

---

तस्यै वा एतस्यै षट्त्रिंशदक्षरायै बृहत्यै यानि दश प्रथमान्यक्षराणि—सा दशाक्षरैकपदा । अथ यानि विंशतिः—सा विंशत्यक्षरा द्विपदा । अथ यानि त्रिंशत्—सा त्रिंशदक्षरा विराट् । अथ यानि त्रयस्त्रिंशत्—सा त्रयस्त्रिंशदक्षरा । अथ यानि चतुस्त्रिंशत्—सा चतुस्त्रिंशदक्षरा स्वराट् । अथ यत्सर्वैश्छन्दोभिरयमग्निश्चितः—तदतिच्छन्दाः । ता उ सर्वा इष्टका एव । इष्टकेति त्रीण्यक्षराणि, त्रिपदा गायत्री । तेनैष गायत्रोऽग्निः । मृदापः—इति त्रीण्यक्षराणि । त्रिपदा गायत्री । तेनो एवैष गायत्रः । अथ यदन्तरा छन्दसी तत्सूददोहाः । अथ यच्छन्दःस्वन्नं तत्पुरीषम् । ता आहुतयः । ताः समिधः । अथ यच्छन्दांसीत्याख्यायते—तल्लोकम्पृणा । तद्वा एतत्सर्वं छन्दांसीत्याख्यायते—तत्सर्वोऽग्निर्लोकम्पृणामभिसम्पद्यते । स यो हैतदेवं वेद । लोकम्पृणाम् । एनं भूतमेतत्सर्वमभिसम्पद्यते ॥ ८ ॥

---

त्तरं चतुरक्षराधिकानि ' त्रिचानि ' प्रत्येकं ऋक्त्रयात्मकानि, विवक्षितसंख्यासिद्धये त्रिचानीत्युक्तम् । त संख्यामाह—तेषां सप्त च शतानीति । तेषां प्रत्येकमृक्त्रयात्मनां सप्तानां छन्दसां सम्भूयाक्षरपरिगणनं सति विंशत्यधिकानि सप्तशतानि षट्त्रिंशदधिकानि चाक्षराणि भवन्ति । तत्र यानि विंशत्यधिकानि सप्तशताक्षराणि तेष्विष्टकारूपेषु, षष्ठ्युत्तरत्रिशताक्षराणि परिश्रितः, तावन्ति ' यजुष्मत्यः ' । अथाधिकान् षट्त्रिंशदक्षराणामधिकमासात्मकानां विभागमाह—त्रिंशदात्मेति । ' आत्मा ' मध्यमभागः त्रिंशदक्षरात्मकः, ' प्रतिष्ठा ' पादो द्व्यक्षरात्मकः, ' प्राणाः ' चक्षुरादयो द्व्यक्षरात्मकाः, शिरो द्व्यक्षरात्मकम् ॥ ७ ॥

एवमधिकानां षट्त्रिंशदक्षराणां विभागमुक्त्वा तावद्भिरक्षरैर्बृहतीं सम्पाद्य तां नानाच्छन्दोमयत्वेन सम्पादयति—तस्यै वा एतस्यै षट्त्रिंशदक्षरायै बृहत्या इति । तत्र षट्त्रिंशदक्षरायां बृहत्यां यानि प्रथमानि आदिमानि दशाक्षराणि तैर्दशाक्षरा एकपदा विराट् सम्पन्ना । अत्र विराजः पादत्रयं व्युदसितुं एकपदा इत्युक्तं । तथा यानि बृहत्याः प्रथमानि विंशतिरक्षराणि तैर्विंशत्यक्षरा द्विपदा विराट् संपन्ना । अथ यानि बृहत्या-

ता वाऽएताः । (ऽ) एकविꣳशतिर्बृहत्य ऽएकविꣳशो वै स्वर्गो लोको बृहती स्वर्गो लोकस्तदेष स्वर्गं लोकमभिसम्पद्यतऽएकविꣳशं च स्तोमं बृहतीं च च्छन्दः ॥ ९ ॥

संव्वत्सरो ह त्वेवैषोऽग्निश्चितः । (स्तु) तस्य रात्रय ऽएव परिश्रितस्ताः षष्टिश्च त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतानि संव्वत्सरस्य रात्रयोऽहानि यजुष्मत्यऽ इष्टकास्ताः षष्टिश्चैव त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतानि संव्वत्सरस्याहान्यथ याऽअमूः षट्त्रिꣳशदिष्टकाऽ अतियन्ति यः स त्रयोदशो मासऽ आत्माऽर्द्धमासाश्च ते मासाश्च चतुर्व्विꣳशतिरर्धमासा द्वादश मासाऽ अथ यदन्तराऽहोरात्रे तत्सूददोहाऽअथ यदहोरात्रेष्वन्नं तत्पुरीषं ताऽ आहुतयस्ताः समिधोऽथ यदहोरात्राणीत्याख्यायते तल्लोकम्पृणा तद्वाऽएतत्सर्व्वमहोरात्राणीत्येवाख्यायते तत्सर्व्वोऽग्निर्लोकम्पृणामभिसंपद्यते स यो हैतदेवं व्वेद लोकम्पृणामेनं भूतमेतत्सर्व्वमभिसंपद्यते ॥ १० ॥

---

ता वाऽएता एकविंशतिर्बृहत्यः एकविंशो वै स्वर्गो लोकः । बृहती स्वर्गो लोकः । तदेष स्वर्गं लोकमभिसम्पद्यते । एकविंशं च स्तोमम् । बृहतीं च छन्दः ॥ ९ ॥

सम्वत्सरो ह त्वेवैषोऽग्निश्चितः । तस्य रात्रय एव परिश्रितः । ताः षष्टिश्च त्रीणि च शतानि भवन्ति । षष्टिश्च ह वै त्रीणि च शतानि सम्वत्सरस्य रात्रयः । अहानि यजुष्मत्य इष्टकाः । ताः षष्टिश्चैव त्रीणि च शतानि भवन्ति । षष्टिश्च ह वै त्रीणि च शतानि सम्वत्सरस्याहानि । अथ

---

त्रिंशदक्षराणि तैस्त्रिंशदक्षरा विराट् संपन्ना । एवं त्रयस्त्रिंशताक्षरैस्तावदक्षरा विराट् । अथ चतुस्त्रिंशदक्षरैस्तावदक्षराच स्वराण्नाम च्छन्दः सम्पन्नम् । एवमेव सा बृहत्येव नानाच्छन्दोरूपेण स्तुता । अग्नेरतिच्छन्दोरूपत्वमाह— अथ यत्सर्वैरिति । यस्मात् ' अयमग्निः ' सर्वैर्गायत्र्यादिभिः ' छन्दोभिः ' ' चितः ' छन्दस्योपधानसमये तस्मादयमतिच्छन्दा इत्युच्यते चित्याग्निरतिच्छन्दा इति—यत् तेन सर्वा इष्टका अतिच्छन्दोमय्य इत्युक्तम् । इष्टकेति नाम्न्यपि छन्दः सम्पादयति—इष्टकेति त्रीण्यक्षराणि त्रिपदा गायत्रीति । संख्यासाम्यात्—अत इष्टका गायत्र्यश्चतिस्रस्तच्चितोऽग्निरपि गायत्र इत्युच्यते । इष्टकाकरणानां मृदपामपि संख्यासाम्यात् गायत्रीच्छन्दस्त्वं तद्द्वाराऽग्नेर्गायत्रीत्वं सम्पादयति—मृदाप इति त्रीण्यक्षराणीति । अथ च्छन्दोमयाग्नेः पूर्ववत्सूददोहपुरीषादिकं सम्पादयति—अथ यदन्तरा च्छन्दसी इति । यदुभयोः छन्दसोर्मध्यमेव मध्यवर्ति वा वस्तु तत्सूददोहस्थानीयं, छन्दांसीत्याख्यानमेव लोकम्पृणेष्टकास्थानीयम् ॥ ८ ॥

ता वा एता एकविंशतिर्बृहत्य इत्यादिकं पूर्ववद्व्याख्येयम् ॥ ९ ॥

संवत्सरस्याग्न्यात्मना ध्याने षष्ठ्यधिकत्रिशतसंख्याका रात्रय एव परिश्रितः सम्पन्नाः । तावत्संख्यान्यहानि

ता वाऽएताः । (ऽ) एकविꣳशतिर्बृहत्यऽ एकविꣳशो वै स्वर्गो लोको बृहती स्वर्गो लोकस्तदेष स्वर्गं लोकमभिसम्पद्यतऽएकविꣳशं च स्तोमं बृहतीं च च्छन्दः ॥ ११ ॥

(ऽ) आत्मा ह त्वेवैषोऽग्निश्चितः । ( स्त ) तस्यास्थीन्येव परिश्रितस्ताः षष्टिश्च त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतानि पुरुषस्यास्थीनि मज्जानो यजुष्मत्यऽइष्टकास्ताः षष्टिश्चैव त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतानि पुरुषस्य मज्जानोऽथ याऽअमूः षट्त्रिꣳशदिष्टकाऽअतियन्ति यः स त्रयोदशो मासऽआत्मा प्राणः स तस्य त्रिꣳशदात्मन्विधाः प्रतिष्ठायां द्वे प्राणेषु द्वे शीर्षन्द्वे तद्यत्ते द्वे भवतो द्विकपालꣳ हि शिरोऽथ येनेमानि पर्वाणि सन्ततानि तत्सूददोहाऽ अथैतत्त्रयं येनायमात्मा प्रच्छन्नो लोम त्वङ्माꣳसमिति तत्पुरीषं यत्पिबति ता ऽआहुतयो यदश्नाति ताः समिधोऽथ यदात्मेत्याख्यायते तल्लोकम्पृणा तद्वाऽएतत्सर्वमात्मेत्येवाख्यायते तत्सर्वोऽग्निर्लोक-

---

या अमूः षट्त्रिंशदिष्टका अतियन्ति । यः स त्रयोदशो मास आत्मा । अर्धमासाश्च ते मासाश्च । चतुर्विंशतिरर्धमासाः, द्वादश मासाः । अथ यदन्तराऽहोरात्रे तत्सूददोहाः । अथ यदहोरात्रेष्वन्नम्—तत्पुरीषम् । ता आहुतयः । ताः समिधः । अथ यदहोरात्राणीत्याख्यायते—तल्लोकम्पृणा । तद्वा एतत्सर्वमहोरात्राणीत्येवाख्यायते—तत्सर्वोऽग्निर्लोकम्पृणामभिसम्पद्यते । स यो हैतदेवं वेद । लोकम्पृणाम् । एनं भूतमेतत्सर्वमभिसम्पद्यते ॥ १० ॥

ता वा एता एकविंशतिर्बृहत्यः । एकविंशो वै स्वर्गो लोकः । बृहती स्वर्गो लोकः । तदेष स्वर्गं लोकमभिसम्पद्यते । एकविंशं च स्तोमम्, बृहतीं च छन्दः ॥ ११ ॥

आत्मा ह त्वेवैषोऽग्निश्चितः—तस्यास्थीन्येव परिश्रितः । ताः षष्टिश्च त्रीणि च शतानि भवन्ति । षष्टिश्च ह वै त्रीणि च शतानि पुरुषस्यास्थीनि । मज्जानो यजुष्मत्य इष्टकाः । ताः षष्टिश्चैव

---

यजुष्मत्यः । यजुष्मत्यश्च पुरीषेण सह चतुरूनचतुःशतसंख्याका इति चतुर्थोध्याये उक्तम् ( श. प. १०।४।१।१४–१९ ) तत्र षष्ट्यधिकत्रिशतसंख्या अहोरूपा ध्येयाः । अधिका याः षट्त्रिंशत्संख्याकाः सन्ति—स संवत्सरावयवस्त्रयोदशमासः स एवार्द्धमासमासात्मक आत्मा । तच्चतुर्विंशतिरर्द्धमासरूपाः द्वादशमासरूपाः अहोरात्राणीत्याख्यायते, तत्सर्वं लोकम्पृणेष्टकारूपम् ॥ १०–११ ॥

अथोपासकेन स्वशरीरमेवाग्निरूपत्वेनोपासनीयमिति विधत्ते—आत्मा ह त्वेवैषोऽग्निश्चित इति । स्वशरीररूपाग्नेः षष्ट्यधिकत्रिशतसंख्याकान्यस्थीनि परिश्रिद्रूपेणोपासनीयानि । तावत्संख्याका मज्जानो यजुष्मती-

म्पृणामभिसम्पद्यते स यो हैतदेवं वेद लोकम्पृणामेनं भूतमेतत्सर्वम-
भिसम्पद्यते ॥ १२ ॥

ता वाऽएताः । (८) एकविꣳशतिर्बृहत्यऽ एकविꣳशो वै स्वर्गो लोको
बृहती स्वर्गो लोकस्तदेषु स्वर्गं लोकमभिसम्पद्यतऽ एकविꣳशं च स्तोमं
बृहतीं च च्छन्दः ॥ १३ ॥

सर्वाणि ह त्वेव भूतानि । सर्वे देवाऽ एषोऽग्निश्चितऽ आपो वै सर्वे
देवाः सर्वाणि भूतानि ता हैताऽआपऽ एवैषोऽग्निश्चितस्तस्य नाव्याऽ
एव परिश्रितस्ताः षष्टिश्च त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च

---

त्रीणि च शतानि भवन्ति । षष्टिश्च ह वै त्रीणि च शतानि पुरुषस्य मज्जानः । अथ या अमूः षट्त्रिंशदिष्टका अतियन्ति—यः स त्रयोदशो मास आत्मा—प्राणः सः । तस्य त्रिंशदात्मन्विधाः—प्रतिष्ठायां द्वे, प्राणेषु द्वे, शीर्षन् द्वे । तद् यत्ते द्वे भवतः—द्विकपालं हि शिरः । अथ येनेमानि पर्वाणि सन्ततानि—तत्सूददोहाः । अथैतत्त्रयं येनायमात्मा प्रच्छन्नः—लोम, त्वङ्, मांसमिति तत्पुरीषम् । यत्पिबति ता आहुतयः । यदश्नाति ताः समिधः । अथ यदात्मेत्याख्यायते—तत्सर्वोऽग्निर्लोक-म्पृणामभिसम्पद्यते । स यो हैतदेवं वेद । लोकम्पृणाम् । एनं भूतमेतत्सर्वमभिसम्पद्यते ॥ १२ ॥

ता वा एता एकविंशतिर्बृहत्यः । एकविंशो वै स्वर्गो लोकः । बृहती स्वर्गो लोकः । तदेष स्वर्गं लोकमभिसम्पद्यते । एकविंशं च स्तोमं, बृहतीं च छन्दः ॥ १३ ॥

सर्वाणि ह त्वेव भूतानि । सर्वे देवा एषोऽग्निश्चितः । आपो वै सर्वे देवाः । सर्वाणि भूतानि । ता हैता आप एवैषोऽग्निश्चितः । तस्य नाव्या एव परिश्रितः । ताः षष्टिश्च त्रीणि च शतानि भवन्ति । षष्टिश्च ह वै त्रीणि च शतान्यादित्यं नाव्याः समन्तं परीयन्ति । नाव्या उ एव यजुष्मत्य इष्टकाः ।

---

रूपाः । अथ याः षट्त्रिंशदधिकाः यजुष्मत्योऽतियन्ति—तासां विभागमाह—सः त्रयोदशो मास आत्मा प्राणः स तस्य त्रिंशदात्मन्विधा इति । 'तस्य' शरीराग्नेः 'आत्मन्' आत्मनि 'त्रिंशद्विधा' यजुष्मत्यो ध्येयाः । 'प्रतिष्ठायां' पादयोः 'द्वे' इष्टकाद्वयम् । 'प्राणेषु' चक्षुःश्रोत्रादिषु इष्टकाद्वयम् 'शीर्षन्' शिरसि इष्टकाद्वयम् । पूर्वत्र पर्यायेषु त्रिंशदात्मा प्रतिष्ठा 'द्वे' प्राणाः 'द्वे' शिर एव षट्त्रिंश्याविति । आत्मप्रतिष्ठाप्राणशिरोरूपेणाधिकाः षट्त्रिंशदुपासनीया इत्युक्तम् । अत्र शरीरे प्राणपादचक्षुरादिशिरसां सद्भावात्तत्रतत्रेष्टका ध्येयाः इति विशेषः । सन्ततानि पर्वाण्येव सूददोहाः लोमत्वङ्मांसैरात्मा प्रच्छन्न इति तत्त्रयमेवात्र पुरीषत्वेन ध्येयम् । यत्पिबति ता एव आहुतयः । यदश्नाति भक्ष्यादि ता एव समिधो ध्येयाः । यदात्मेत्याख्यानं तल्लोकम्पृणेष्टकारूपम् ॥ १२ ॥

बृहतीसम्पादनादिकं पूर्ववद्बोद्धव्यम् ॥ १३ ॥

अथाप्स्वग्नित्वेनोपासनं विधित्सुरपां सर्वदेवभूतात्मकत्वमाह—सर्वाणि ह त्वेव भूतानि सर्वे देवा एषो-

शतान्यादित्यं नाव्याः समन्तं परियन्ति नाव्या ऽ उ ऽएव यजुष्मत्य ऽ इष्टकास्ताः षष्टिश्चैव त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतान्यादित्यं नाव्या ऽ अभिक्षरन्त्यथ यदन्तरा नाव्ये तत्सूददोहा ऽअथ या ऽअमूः षट्त्रिँशदिष्टका ऽ अतियन्ति यः स त्रयोदशो मास ऽ आत्मा ऽयमेव स योऽयँ हिरण्मयः पुरुषः ॥ १४ ॥

( स्त ) तस्यैते प्रतिष्ठे । रुक्मश्च पुष्करपर्णं चापश्चादित्यमण्डलं च स्रुचौ बाहू ताविन्द्राग्नी द्वे स्वयमातृण्णे ऽइयं चान्तरिक्षं च तिस्रो विश्वज्योतिष ऽएता देवता ऽअग्निर्वायुरादित्य ऽएता ह्येव देवता विश्वं ज्योतिर्द्वादश ऽर्तव्याः स संवत्सरः स ऽ आत्मा पञ्च नाकसदः पञ्च पञ्चचूडाः स यज्ञस्ते देवा ऽअथ यद्विकर्णी च स्वयमातृण्णा चाऽइमा पृश्नि-

---

ताः षष्टिश्च ह वै त्रीणि च शतानि भवन्ति । षष्टिश्च ह वै त्रीणि च शतान्यादित्यं नाव्या अभिरक्षन्ति । अथ यदन्तरा नाव्ये—तत्सूददोहाः । अथ या अमूः षट्त्रिंशदिष्टका अतियन्ति, यः स त्रयोदशो मासः—आत्माऽयमेव स योऽयं हिरण्मयः पुरुषः ॥ १४ ॥

तस्यैते प्रतिष्ठे—रुक्मश्च पुष्करपर्णं च । आपश्चादित्यमण्डलं च । स्रुचौ बाहू—ताविन्द्राग्नी । द्वे स्वयमातृण्णे । इयं चान्तरिक्षं च तिस्रो विश्वज्योतिषः—एता देवताः । अग्निर्वायुरादित्य एता

---

ऽग्निश्चित इति । 'सर्वाणि' 'भूतानि' 'सर्वे देवाः' अग्नित्वेन ध्येया इत्यर्थः । "आप एव सर्वभूतदेवात्मिका, आपो वा इदं सर्वम्, विश्वाभूतान्यापः, प्राणा वा आपः, पशव आपः, इति सर्वमापः, सर्वा देवता आपः"—इति तैत्तिरीयश्रुतेः । तत्र अब्रूपाग्नेरादित्यमण्डलपरिसरवर्त्तिन्यो 'नाव्याः' नावा तार्याः षष्ठ्यधिकत्रिशतसंख्याका नाव्या एव परिश्रितः । तावत्संख्याका एव नाव्या यजुष्मत्य इष्टकाः सूर्यमण्डलसमीपे नानासंख्याका नद्यः सन्ति इत्याद्युक्तं तैत्तिरीयके—"शतं सहस्राणि प्रयुतानि नाव्यानामयं यः श्वेतो रश्मिः" इति । 'नाव्ये अन्तरा यत्' उभयोर्नाव्ययोर्मध्ये यदस्ति तत्सूददोहत्वेन ध्येयम् । अधिकानां षट्त्रिंशत्संख्यानामिष्टकानां विशेषेण विभागं विवक्षुरादौ सामान्येनानूद्याग्रे तमाह—अथ या अमूः षट्त्रिंशदिष्टका इति । या अधिका इष्टकास्ताः अथोक्तेषु पर्यायेषु सवत्सररूपाग्न्यवयवत्रयोदशमासात्मिकाः आत्मा, अग्न्यात्मना ध्येयानामपामात्मेत्यर्थः । आत्मस्वरूपमाह—अयमेव स इति । योऽयमात्मेत्यर्थः । अयमेव हिरण्मयः पुरुषः अधिदैवं, मण्डलान्तर्वर्त्ती पुरुषोऽधियज्ञं, प्रथमचितावुपहितपुरुषोऽग्निरूपाणामपामात्मेत्यर्थः ॥ १४ ॥

अथोक्तेषु पर्यायेष्वत्र या अमूः षट्त्रिंशदित्युक्तं तद्विभागमाह—तस्यैते प्रतिष्ठे इति । योऽयं हिरण्मयः पुरुष आत्मेत्युक्तः तस्याधियज्ञं रुक्मपुष्करपर्णाख्ये अधिदैवमत्रादित्यमण्डलात्मके द्वे इष्टके 'प्रतिष्ठे'—पादौ

यश्चितेऽग्निर्निधीयते सा पञ्चत्रिꣳशी लोकम्पृणायै यजुः षट्त्रिꣳशी सोऽस्यैष सर्वस्यान्तमेवात्मा स ऽएष सर्वासामपां मध्ये स ऽएष सर्वैः कामैः सम्पन्न ऽआपो वै सर्वे कामाः स ऽएषोऽकामः सर्वकामो न ह्येतं कस्य चन कामः ॥ १९ ॥

( स्तु ) तदेष श्लोको भवति । विद्यया तदारोहन्ति यत्र कामाः परागताः । न तत्र दक्षिणा यन्ति नाविद्वाꣳसस्तपस्विन ऽइति न हैव तं लोकं दक्षिणाभिर्न तपसाऽनेवंविदश्नुत ऽएवं विदाꣳ हैव स लोकः ॥ १६ ॥

---

ह्येव देवताः । विश्वं ज्योतिर्द्वादशऽर्तव्याः । स संवत्सरः स आत्मा । पञ्च नाकसदः । पञ्च पञ्चचूडाः । स यज्ञः । ते देवाः । अथ यद्विकर्णी च स्वयमातृण्णा चाश्मा पृश्निः । यश्चितेऽग्निर्निधीयते—सा पञ्चत्रींशी लोकम्पृणायै । यजुः षट्त्रिंशी । सोऽस्यैष सर्वस्यान्तमेवात्मा । स एष सर्वासामपां मध्ये स एष सर्वैः कामैः सम्पन्नः । आपो वै सर्वे कामाः । स एषोऽकामः, सर्वकामो वा । न ह्येतं कस्य चन कामः ॥ १९ ॥

तदेष—श्लोको भवति—" विद्यया तदरोहन्ति यत्र कामाः परागताः । न तत्र दक्षिणा यन्ति नाविद्वांसस्तपस्विनः " इति । न हैव तं लोकं दक्षिणाभिः, न तपसा, अनेवंविदश्नुते । एवंविदां हैव स लोकः ॥ १६ ॥

---

पादरूपेण ध्येये । बाहुरूपेण ध्येये द्वे स्रुचौ । भूम्यन्तरिक्षात्मके द्वे स्वयमातृण्णे इष्टके । अग्निवाय्वादित्यात्मना ध्येयास्तिस्रो विश्वज्योतिषः । द्वादशसमसंख्या ऋतव्येष्टका संवत्सररूपात्मत्वेन ध्येयाः, यज्ञात्मना देवात्मना च स्तुताः ' पञ्च नाकसदः ' 'पञ्च पञ्चचूडाः' अष्टमकाण्डे—" नाकसदः पञ्चचूडाः स त्रिवृत्पञ्चदशाज्यप्रउगादिना रथन्तरादिसाम्ना वसुरुद्रादित्यादिरूपेण च यज्ञदेवतात्मना स्तुताः " ( श. प. ८ । ६ । १ । १–१२ ) इति । अतोऽत्र स यज्ञस्ते देवा इत्युक्तम्, एवं प्रतिष्ठारूपरुक्मपुष्करपर्णादयः पञ्चचूडान्ता एकत्रिंशज्जाताः, ' विकर्णी ' ' स्वयमातृण्णा ' चेति द्वे, आग्नीध्रीये उपहितः ' अश्मा ' ' पृश्निः ' एका, एवं चतुस्त्रिंशज्जाताः, चित्याग्नौ निहित आहवनीयोऽग्निः पञ्चत्रिंशी, लोकम्पृणोपधानयजुष्मत्यः षट्त्रिंशी, उपधेयानां लोकम्पृणानां बहुसहस्रसंमितत्वात्ताः परित्यज्य " लोकम्पृण छिद्रम्पृण. " ( वा. सं. १२ । ५४ ) इति तदुपधानमन्त्र एक इति स एव षट्त्रिंशीष्टकेति परिगृह्यते । एवं षट्त्रिंशदिष्टकामयो हिरण्मयः पुरुष आत्मा सर्वभूतदेवात्मनामपामग्न्यात्मना ध्येयानां मध्ये वर्तत इत्याह—सोऽस्यैष सर्वस्येति । ' सः ' ' एषः ' ' सर्वैः कामैः ' ' सम्पन्नः ' इत्यादिना सर्वात्मनामपां मध्यवर्ती आत्मा सर्वकामसम्पन्नः स्वयम् 'अकामः' इत्युक्तम् । एतदेव विशदयति—नह्येतं कस्य चनेति ॥ १९ ॥

तादृग्रूप आत्मा सर्वैर्ज्ञानेन लभ्यो न कर्मशतैरिति मन्त्रसंवादेन प्रतिपादयति—तदेष श्लोको भवति—विद्यया तदारोहन्तीति । मन्त्रस्यायमर्थः—' यत्र ' स्वरूपे ' कामाः ' सर्वे ' परागताः ' निवृत्ताः स्वयम-

( कोऽन्नं ) अन्नं पुरीषम् । ( च ) चन्द्रमा ऽआहुतयो नक्षत्राणि समिधो यच्चन्द्रमा नक्षत्रे व्वसत्याहुतिस्तत्समिधि व्वसत्येतदु वा ऽआहुतेरन्नमेषा प्रतिष्ठा तस्मादाहुतिर्न क्षीयतऽएतद्ध्यस्या ऽअन्नमेषा प्रतिष्ठाऽथ यद्देवाऽ इत्याख्यायते तल्लोकम्पृणा तद्वाऽएतत्सर्व्वं देवा ऽइत्येवाख्यायते ॥१७॥

तदेतदृचाऽभ्युक्तम् । ( वि ) व्विश्वे देवा ऽअनु तत्ते यजुर्गुरिति सर्व्वाणि ह्यत्र भूतानि सर्व्वे देवा यजुरेव भवन्ति तत्सर्व्वोऽग्निर्लोकम्पृणामभिसम्पद्यते स यो हैतदेवं व्वेद लोकम्पृणामेनं भूतमेतत्सर्व्वमभिसम्पद्यते ॥१८॥

---

अन्नं पुरीषम् । चन्द्रमा आहुतयः । नक्षत्राणि समिधः । यच्चन्द्रमा नक्षत्रे वसति । आहुतिस्तत्समिधि वसति । एतदु वा आहुतेरन्नम् । एषा प्रतिष्ठा । तस्मादाहुतिर्न क्षीयते । एतत् हि अस्या अन्नम् । एषा प्रतिष्ठा । अथ यद्देवा इत्याख्यायते—तल्लोकम्पृणा । तद्वा एतत्सर्वं देवा इत्येवाख्यायते ॥ १७ ॥

तदेतदृचाऽभ्युक्तम्—“ विश्वे-देवा अनु तत्ते यजुर्गुः ” इति । सर्वाणि ह्यत्र भूतानि, सर्वे देवा यजुरेव भवन्ति । तत् सर्वोऽग्निर्लोकम्पृणामभिसम्पद्यते । स यो हैतदेवं वेद—लोकम्पृणामेनं भूतमेतत्सर्वमभिसम्पद्यते ॥ १८ ॥

---

काममित्यर्थः । तदात्मस्वरूपं विद्यया ज्ञानेन आरोहन्ति आप्नुवन्ति । ‘ अविद्वांसः ’ पुरुषाः तत् स्वरूपं ‘ दक्षिणा ’—तृतीयाया लुक् दक्षिणाभिः ‘ न ’ ‘ यन्ति ’ न गच्छन्ति । तथा ‘ तपस्विनः ’ अपि अविद्वांसश्चेन्न गच्छन्ति । मन्त्रस्य तात्पर्यमाह—न हैव तं लोकमित्यादिना—एवंविदां हैव स लोक इत्यन्तेन ॥ १६ ॥

अन्नपाग्नेः पुरीषाहुतिसमिल्लोकम्पृणाः सम्पादयति—अन्नं पुरीषमिति । यच्चन्द्रमा नक्षत्र इति । चन्द्रमसो नक्षत्रेऽवस्थानमेव समित्तदाहुतिरूपेण ध्येयमित्यर्थः । एतदेव नक्षत्रेऽवस्थानमाहुतेरन्नं प्रतिष्ठा । ‘ तस्मादाहुतिर्न क्षीयते ’ नक्षत्रशब्दस्याप्येवं व्युत्पत्तिरिति नैरुक्ता आहुः । ‘ लोकम्पृणा इष्टका ये नाम देवा इत्याख्यातम् । “ सर्वाणि हत्वेवभूतानि सर्वे देवा एषोऽग्निश्चितः ” ( कं. १४ ) इत्यस्य पर्यायस्यादावुक्तम्’ अतो ‘ देवाः ’ इत्याख्यातं लोकम्पृणेष्टकाः अतः सर्वपरिश्रियजुष्मत्यादिकं देवा इत्युच्यत इत्यर्थः ॥ १७ ॥

उक्तं देवात्मत्वं मन्त्रसंवादेनोपपादयति—तदेतदृचाऽभ्युक्तं विश्वे देवा इति । अयमर्थः—ते प्रसिद्धा उक्ताः ‘ विश्वे ’ सर्वे ‘देवा:’ तदुपलक्षणम्—सर्वाणि भूतानि तद्यजुर्मन्त्रस्वरूपम् ‘अनु गुः’ अनुगच्छन्ति इति । मन्त्रस्य तात्पर्यमाह—सर्वाणि ह्यत्रेति । अधिदैवाध्यात्मादिभेदेन यद्यजुरात्मकं ब्रह्म प्रागुक्तम्—अतस्तदात्मकाः ‘ सर्वे देवाः ’ भवन्तीत्यर्थः । उपासकस्य फलमाह—स यो हैतदेवमिति । एवं सर्वभूतदेवरूपा अपोऽन्यात्मना विद्यात् । स लोकम्पृणात्मकोऽग्निरेवाभिसम्पद्यते ॥ १८ ॥

ता वुऽएताः । (ऽ) एकविꣳशतिर्बृहुत्य ऽएकविꣳशो वै स्वर्गो लोको बृहती स्वर्गो लोकस्तदेषु स्वर्गं लोकमभिसम्पद्यतऽएकविꣳशं च स्तोमं बृहतीं च च्छन्दः ॥ १९ ॥

इति चतुर्थ प्रपाठके द्वितीयं ब्राह्मणम् ॥ १०-४-२ ॥ (५. ४.) ॥

कुश्रिर्हं व्वाजश्रवसोऽग्निं चिक्ये । तꣳ होवाच सुश्रवाः कौश्यो गौतम यदग्निमचैषीः प्राञ्चमेनमचैषीः प्रत्यञ्चमेनमचैषीर्न्यञ्चमेनमचैषीरुत्तानमेनमचैषीः ॥ १ ॥

(र्य) यद्युहैनं प्राञ्चमचैषीः । (र्यु) यथा पराचऽआसीनाय पृष्ठतोऽन्नाद्यमुपाहरेत्तादृक्तन्नु ते हविः प्रतिग्रहीष्यति ॥ २ ॥

---

ता वा एता एकविंशतिर्बृहत्यः । एकविंशो वै स्वर्गो लोकः । बृहती स्वर्गो लोकः । तदेष स्वर्गं लोकमभिसम्पद्यते । एकविंशं च स्तोमं बृहतीं च छन्दः ॥ १९ ॥

कुश्रिर्ह वाजश्रवसोऽग्निं चिक्ये । तं होवाच सुश्रवाः कौश्यः । गौतम यदग्निमचैषीः—प्राञ्चमेनमचैषीः । प्रत्यञ्चमेनमचैषीः । न्यञ्चमेनमचैषीः । उत्तानमेनमचैषीः ॥ १ ॥

यद्यहैनं प्राञ्चमचैषीः—यथा पराच आसीनाय पृष्ठतोऽन्नाद्यमुपाहरेत्तादृक् तत् । न ते हविः प्रतिग्रहीष्यति ॥ २ ॥

---

ता वा एता एकविंशतिर्बृहत्य इत्यादि पूर्ववद्व्याख्येयम् । अत्र नानारूपपरिश्रिद्यजुष्मतीनां विंशत्यधिकसप्तशतसङ्ख्यानां रुक्मपुष्करपर्णादीनां लोकम्पृणामन्त्रान्तगणानां षट्त्रिंशत्संख्यानां च बृहतीसम्पादनं विशेषः ॥ १९ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये दशमकाण्डे पञ्चमेऽध्याये चतुर्थं ब्राह्मणम् ॥ ( १०-५-४ ) ॥

उत्तरब्राह्मणे चित्याग्नेः सर्वदिग्गतमुखत्वपृथक्छिरसो निरूहणाभावः प्रतिपाद्यते । तत्रैकैकदिग्गतमुखत्वे दोषमुद्भावयितुं तान्पक्षान्पुरावृत्तेनानुवदति—कुश्रिर्ह वाजेति । वाजश्रवसोऽपत्यं कुश्रिर्नाम 'अग्निं चिक्ये' चितवान् । तं कुश्रिं कौश्यः कुशगोत्रजः सुश्रवा नामोवाच पृष्टवान् । गौतमेति कुश्रेः संबुद्धिः । यद्यग्निं चितवानसि तदा किम् 'एनम्' अग्निं 'प्राञ्चं' पूर्वमुखम् 'अचैषीः', 'प्रत्यञ्चं' प्रत्यङ्मुखम् 'न्यञ्चं' अवाङ्मुखं 'उत्तानम्' ऊर्ध्वमुखमिति चत्वारः पक्षाः उद्दिष्टाः ॥ १ ॥

तेषु यथाक्रमं दोषान् स्वयमेव सुश्रवा आह—यद्यहैनं प्राञ्चमिति । यदि प्राङ्मुखोऽग्निश्चितः । तर्हि प्राङ्मुखेनापि यजमानेन तत्र हविःप्रक्षेपः । यदि प्रत्यङ्मुखम् 'अचैषीः' तर्हि कस्माद्धेतोः 'पुच्छं' पश्चिमतः

यद्यु वाऽएनं प्रत्यञ्चमचैषीः । कस्मादस्य तर्हि पश्चात्पुच्छमकार्षीः ॥३॥

( सं ) यद्यु वाऽएनं न्यञ्चमचैषीः । ( सं ) यथा नीचः शयानस्य पृष्ठेऽन्नाद्यं प्रतिष्ठापयेत्तादृक्तन्नैव ते हविः प्रतिग्रहीष्यति ॥ ४ ॥

यद्यु वाऽएनमुत्तानमचैषीः । ( नं ) न वाऽउत्तानं व्वयः स्वर्गं लोकमभिवहति न त्वा स्वर्गं लोकमभिवक्ष्यत्यस्वर्ग्युऽउ ते भविष्यतीति ॥ ५ ॥

स होवाच प्राञ्चमेनमचैषं प्रत्यञ्चमेनमचैषं न्यञ्चमेनमचैषमुत्तानमेनमचैषᳫं सर्वा ऽअनुदिश ऽएनमचैषमिति ॥ ६ ॥

स यत्प्राञ्चं पुरुषमुपदधाति । प्राच्यौ स्रुचौ तत्प्राङ् चीयतेऽथ यत्प्रत्यञ्चं कूर्ममुपदधाति प्रत्यञ्चि पशुशीर्षाणि तत्प्रत्यङ् चीयतेऽथ यन्न्यञ्चं कूर्म-

---

यद्यु वा एनं प्रत्यञ्चमचैषीः—कस्मादस्य तर्हि पश्चात्पुच्छमकार्षीः ॥ ३ ॥

यद्यु वा एनं न्यञ्चमचैषीः—यथा नीचः शयानस्य पृष्ठेऽन्नाद्यं प्रतिष्ठापयेत्तादृक् तत् । नैव ते हविः प्रतिग्रहिष्यति ॥ ४ ॥

यद्यु वा एनमुत्तानमचैषीः—न वा उत्तानं वयः स्वर्गं लोकमभिवहति । न त्वा स्वर्गं लोकमभिवक्ष्यति । अस्वर्ग्य उ ते भविष्यतीति ॥ ५ ॥

स होवाच—प्राञ्चमेनमचैषम् । प्रत्यञ्चमेनमचैषम् । न्यञ्चमेनमचैषम् । उत्तानमेनमचैषम् । सर्वा अनु दिश एनमचैषमिति ॥ ६ ॥

स यत्प्राञ्चं पुरुषमुपदधाति—प्राच्यौ स्रुचौ तत्प्राङ् चीयते । अथ यत्प्रत्यञ्चं कूर्ममुपदधाति—प्रत्यञ्चि पशुशीर्षाणि तत्प्रत्यङ् चीयते । अथ न्यन्न्यञ्चं कूर्ममुपदधाति—न्यञ्चि पशुशीर्षाणि,

---

कृतवानसि, प्राङ्मुखस्य पक्षिणः पुच्छं पश्चिमतः तिष्ठति । प्रत्यङ्मुखस्य तु पुच्छं पूर्वतः । अत्र त्वया पक्षिरूपस्याग्नेः पुच्छस्य पश्चिमतः करणेन पश्चिममुखोऽग्निश्चित इति न वक्तुं युज्यत इत्यर्थः । यदि न्यञ्चोऽवाङ्मुखश्चितस्तर्हि तस्योपरि हविःप्रक्षेपो नाम नीचीनस्यावाङ्मुखस्य शयानस्य पृष्ठभागेऽन्नाद्यनिधानसमान इत्यर्थः । यद्यग्निः उत्तानश्चितः तर्हि यथा ' उत्तानं ' ' वयः ' पक्षी स्वयमाकाशमुत्पतितुं न शक्नोति किल किमुत अन्यपुरुषं चञ्च्वा द्वाभ्यां पक्षाभ्यां वा गृहीत्वोत्पतितुं न शक्नुत इति । यथा यजमानेन त्वया स्वर्गप्रापणाद्धेतोः पक्षिरूपेण चितोऽग्निः चितवन्तं त्वां स्वर्गं लोकं प्रापयितुं न शक्नोति—उत्तानचयनादित्यर्थः । ' अभिवक्ष्यति ' इति ' वह प्रापणे '—( धा. पा. भ्वा. उ. १०२९ ) । लृटि स्यप्रत्यये रूपम् । एवमेकैकदिगभिमुखत्वेन चयनदोषा उक्ताः ॥ २–५ ॥

अथाग्निचित् कश्चित् उक्तदोषपरिजिहीर्षया सकलदिङ्मुखमग्निं चितवानित्याह—स होवाच प्राञ्चमेन मिति । प्रागादिचतुर्दिगभिमुखः इत्यवान्तरदिगभिमुखश्च चित इत्यर्थः ॥ ६ ॥

विपरीतानुष्ठानेऽन्येन चोदिते स्वयमपि यथाविधि कृतमित्युक्तम् । तत् वचनमात्रेण कर्म साङ्गं न भवतीति मत्वा स्वानुष्ठानप्रकारेणाग्नेः सकलदिगभिमुखत्वं विशदयति—स य त्प्राञ्चं पुरुषमुपदधातीति । हिरण्मय-

मुपदधाति न्यञ्चि पशुशीर्षाणि नीचीरिष्टकास्तन्न्यङ् चीयतेऽथ यदुत्तानं पुरुषमुपदधात्युत्ताने स्रुचाऽउत्तानमुलूखलमुत्तानामुखां तदुत्तानश्चीयतेऽथ यत्सर्व्वाऽअनु दिशः परिसर्प्पमिष्टकाऽ उपदधाति तत्सर्व्वतश्चीयते ॥ ७ ॥ ( अर्धप्रपाठकः कंडिका संख्या ॥ ३८ ॥ )

( तेऽथ ) अथ ह कोषा धावयन्तः । ( न्तो ) निरूढशिरसमग्निमुपाधावयाञ्चक्रुस्तेषाᳬं हैकऽ उवाच श्रीर्वै शिरः श्रियमस्य निरौहीत्सर्व्वज्यानिं ज्यास्यतऽइति स ह तथैवास ॥ ८ ॥

---

नीचीरिष्टकाः । तत् न्यङ् चीयते । अथ यदुत्तानं पुरुषमुपदधाति—उत्ताने स्रुचा उत्तानमुलूखलम्, उत्तानामुखां तदुत्तानश्चीयते । अथ यत्सर्वा दिशः परिसर्पमिष्टका उपदधाति । तत्सर्वतश्चीयते ॥ ७ ॥

अथ ह कोषा धावयन्तो निरूढशिरसमग्निमुपाधावयाञ्चक्रुः । तेषां हैक उवाच—श्रीर्वै शिरः, श्रियमस्य निरौहीत् । सर्वज्यानिं ज्यास्यते—इति । स ह तथैवास ॥ ८ ॥

---

पुरुषस्य स्रुचोश्च प्राचीमुखत्वेनोपधानादग्नेः प्राङ्मुखत्वेन चयनं जातम् । कूर्मस्य पशुशीर्षाणां प्रत्यक्त्वेनावाङ्मुखत्वेन चोपधानात्प्रत्यक्त्वमवाक्त्वं च, अग्नेः इष्टकानां नीचीनत्वेनोपधानं नाम ऋजुलेखादक्षिणापसव्या लिखितादिलेखानामुपरिभागे दर्शनं पशुशीर्षोपधाने पुरुषशीर्षस्य स्रुचोरुलूखलोखयोश्चोत्तानत्वोपधानादग्नेः ऊर्ध्वं चयनं सिद्धमित्यर्थः । अथ यत्सर्वा अनु दिशः—इत्यस्यायमर्थः—'परिसर्पम्' परिसृप्य । णमुल् प्रत्ययः । अपस्याप्राणभृदश्विनीदिश्यावैश्वदेव्यादिषु सर्वत उपधानमिति अग्नेः सर्वतश्चयनं निष्पन्नमित्यर्थः ॥ ७ ॥

अथ पक्षिरूपस्य चित्याग्नेरिष्टकोपधानक्रमेण कूर्मपशुशिरः परोऽक्षम्—आहवनीयाग्निरेव प्रत्यक्षं शिरः—न तु पक्षपुच्छवत् पृथक् शिरसः करणमिति वक्तुं पृथक्करणपक्षं पुरावृत्तकथनेन निन्दति—अथ ह कोषा धावयन्तो निरूढशिरस इति । 'कोषाः' नाम—ऋषयः ' धावयन्तः आर्त्विज्याय गच्छन्तः याजयन्तः 'अग्निं' 'निरूढशिरसम्' ' उपाधावयाञ्चक्रुः ' । यस्य कस्य चन यजमानस्य गृहे शिरः पृथक् चितवन्तः । आपस्तम्बेनापि शिरसः पृथक्पृथक्त्वपक्षो निरूपितो विद्यते । "शिरसो निरूहणं न विद्यत इत्यपरम् " इति । ' तेषाम् ' इत्यादिना तन्निराकरणं । तेषां तथा चितवतां कोषाणां याजयितॄणां मध्ये ' एकः ' उक्तवान् । किमिति तदाह—शिरो नाम ' श्रीः ' । शिरसः श्रीरूपत्वं सर्वदेवाश्रयणादिति षष्ठे काण्डादौ ( श. प. ६ । १ । १ । ४—७ ) प्रतिपादितम् । अस्य यज्ञस्य श्रियं शिरः निरौहीत् पृथक्कृतमकार्षीत् । ऋत्विग्जन इत्यध्याहारः । अतोऽग्नेः पृथक् शिरसो निरूहणेन यजमानात् श्रीरेवमेव पृथक् कृता । अतोऽयं यष्टा ' सर्वज्यानिं ' ' ज्यास्यते ' सर्वथा श्रीक्षीणो भविष्यतीति—स ह तथैवास इति वाक्येन श्रुतिः स्वयमृत्विग्भिः कोषैस्तथा पृथक्करणेन यजमानोऽपि तथा निःश्रीक आसेति तन्मतनिन्दयोक्तवती ॥ ८ ॥

( स॒ऽथ ) अथ॑ है॒क॑ऽ उवाच । प्राणा वै शिरः॑ प्राणान॑स्य निरौ॑ही॒त्क्षिप्रे॑ऽमुं लो॒कमे॑ष्यती॒ति स॑ऽ उ ह॑ त॒थैवा॑स ॥ ९ ॥

( सो ) ऊ॒र्ध्वो वा॑ ऽ ए॒ष ऽ ए॒तच्ची॑यते । य॒द्द॒र्भस्त॑म्बो॒ लो॒गेष्ट॑का॒: पुष्कर॑प॒र्णꣳ रु॒क्मपु॑रुषौ स्रु॒चौ स्व॑यमातृण्णा दू॒र्व्वेष्ट॑का द्वि॒यजू॒ रेत॑:सिचौ वि॒श्व॑ज्यो॒तिर्ऋ॑त॒व्ये॑ऽअषाढा कू॒र्मो॑ऽथ हा॒स्यैत॑दे॒व प्र॑त्य॒क्षत॑मा॒ꣳ शिरो॒ य॒श्चि॒ते॑ऽग्नि॒र्नि॑धी॒यते॒ त॒स्मान्न नि॑रू॒हेत् ॥ १० ॥

इति चतुर्थप्रपाठके तृतीयं ब्राह्मणम् ॥ १०-४-३ ॥ ( ५. ५. ) ॥

इति पञ्चमोऽध्यायः समाप्तः ॥ १०-५ ॥

---

अथ हैक उवाच—प्राणा वै शिरः, प्राणानस्य निरौहीत् । क्षिप्रेऽमुं लोकमेष्यतीति । स उ ह तथैवास ॥ ९ ॥

ऊर्ध्वो वा एष एतच्चीयते । यत्—दर्भस्तम्बः, लोगेष्टकाः, पुष्करपर्णम्, रुक्मपुरुषौ, स्रुचौ, स्वयमातृण्णा, दूर्वेष्टका, द्वियजू, रेतःसिचौ, विश्वज्योतिः, ऋतव्ये, अषाढा, कूर्मः । अथ हास्यैतदेव प्रत्यक्षतमां शिरो यश्चीते—अग्निर्निधीयते । तस्मान्न निरूहेत् ॥ १० ॥

---

अथ शिरसः प्राणरूपत्वमेव मतं तत्रैव दोषान्तरं समुच्चिनोति—अथ हैक उवाच प्राणा वै शिर इति । 'शिरः' नाम प्राणास्तदाधारत्वात् यतोऽग्नेः पृथक्करणेन यजमानात् प्राणानां पृथक्करणम्, अतः स क्षिप्रेण वेगेनामुं परलोकमेष्यति न तु चिरंजीविष्यतीति 'एक उवाच' । स उ ह तथैवास इति । निन्दाप्रदर्शनाय वाक्योपन्यासः ॥ ९ ॥

एवं शिरसः पृथक्करणपक्षो निन्दितः यद्यंतर्हि पक्षिरूपोऽग्निः शिरोरहितः स्यादितीमामाशंङ्कां परिहर्त्तुमिष्टकाभिरेव परोऽक्षमपरोऽक्षं च शिरः सम्पादयति—ऊद्‍र्ध्वो वा एष एतच्चीयत इति । 'एषः' अग्निः 'ऊद्‍र्ध्वश्चीयते' तदुत्तरोत्तरक्रमेणोर्ध्व उन्नतश्चितः । यथा तिष्ठतः पुरुषस्य पादबाह्वादयोऽवयवा उत्तरोत्तरक्रमेणावस्थिताः संतो मूर्द्धांतं यंति एवं चास्य चित्याग्नेरवयवरूपेष्टकासंनिवेशं दर्शयति—यद्दर्भस्तम्बो लोगेष्टका इत्यादिना । दर्भस्तम्बादिदूर्वेष्टकापर्यन्तमुत्तरोत्तरं क्रमेणोपहितानां मध्ये पुष्करपर्णरुक्मौ पादरूपौ पुरुषो हिरण्मयो हृदयान्तवर्ती, 'स्रुचौ' बाहुद्वयस्थानीये, 'स्वयमातृण्णा' कण्ठात्मिका, 'दूर्वेष्टका' लोमरूपा, एवं 'द्वियजूरेतःसिचौ विश्वज्योतिर्ऋतव्ये अषाढा' इत्येता इष्टका यथायथमवयवरूपाः कल्पनीयाः 'कूर्मः' मूर्द्धस्थानीयः, एवमिष्टकोपधानक्रमेण पादादिमूर्द्धान्तपरिकल्पनया कूर्म एव परोऽक्षंशिर इत्युक्तम् । अथ प्रत्यक्षतमं शिरो दर्शयति—अथ हास्यैतदेव प्रत्यक्षतमां शिर इति । यद्यपि कूर्मः अप्रत्यक्षो मूर्द्धा, अथापि तस्योपरीष्टकोपधानादन्तर्हितो मूर्धेति ये मन्यन्ते तान् प्रति प्रत्यक्षतमशिरोवर्णनं

चित्याग्नेरुपरि निहितोऽग्निराहवनीय एव प्रत्यक्षतमां सर्वैरत्यन्तं दृष्टं शिर इत्यर्थः । यतः कूर्म आहवनीयोऽग्निश्च चित्याग्नेः शिरः ' तस्मान्न निरूहेत् ' पृथक् शिर इष्टकाभिर्न कुर्यादित्यर्थः ॥ १० ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये
दशमकाण्डे पञ्चमेऽध्याये पंचमं ब्राह्मणम् ॥ ( १०—५—५ ) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं,
सप्ताब्धीन्पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटं च ॥
धान्याद्रिं धन्यजन्मा तिलभवमतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान्गुडकृतमजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणजमनृणः शार्करं चार्कतेजा,
रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये
दशमकाण्डे पञ्चमोऽध्यायः समाप्तः ॥ ( १०—५ ) ॥



# अथ षष्ठेऽध्याये प्रथमं ब्राह्मणम् ।

# चतुर्थप्रपाठके च चतुर्थं ब्राह्मणम् ।

अथ हैतेऽरुणे । (ण ऽ) औपवेशौ समाजग्मुः सत्ययज्ञः पौलुषिर्महाशालो जाबालो बुडिल ऽआश्वतराश्विरिन्द्रद्युम्नो भाल्लवेयो जनः शार्कराक्ष्यस्ते ह वैश्वानरे समासत तेषाᳬं ह वैश्वानरे न समियाय ॥ १ ॥

ते होचुः । (रु) अश्वपतिर्वाऽअयं कैकेयः सम्प्रति वैश्वानरं वेद तं गच्छामेति ते हाश्वपतिं कैकेयमाजग्मुस्तेभ्यो ह पृथगावसथान्पृथगुपचितीः पृथक्साहस्रान्त्सोमान्प्रोवाच ते ह प्रातरसंविदाना ऽएव समित्पाणयः प्रतिचक्रमिरऽउप त्वायामेति ॥ २ ॥

---

## वैश्वानराग्न्युपासनं ब्राह्मणम् ।

अथ हैतेऽरुणे औपवेशौ समाजग्मुः–सत्ययज्ञः पौलुषिः, महाशालो जाबालः, बुडिल आश्वतराश्विः, इन्द्रद्युम्नो भाल्लवेयः, जनः शार्कराक्ष्यः । ते ह वैश्वानरे समासत । तेषां ह वैश्वानरे न समियाय ॥ १ ॥

ते होचुः–अश्वपतिर्वा अयं कैकेयः सम्प्रति वैश्वानरं वेद । तं गच्छामेति । ते हाश्वपतिं कैकेयमाजग्मुः । तेभ्यो ह पृथगावसथान्, पृथगपचितीः, पृथक्साहस्रान्त्सोमान्प्रोवाच । ते ह प्रातरसंविदाना एव समित्पाणयः प्रतिचक्रमिरे । उप त्वायामेति ॥ २ ॥

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

षष्ठाध्याये प्रथमे ब्राह्मणे वैश्वानरविद्या, द्वितीयब्राह्मणे पुरुषस्याग्निविधार्कविधोक्थविधित्वनिरूपणम् । तृतीये शाण्डिल्यविद्या, चतुर्थे उषा वा अश्वस्येत्यस्मिन् ब्राह्मणे उषाऽश्वोपासना, पञ्चमेऽर्काश्वमेधान्युक्थोपासना त्रिद्या सम्प्रदायप्रवर्त्तकमुनिवंशकथनमिति प्रतिपाद्यसङ्ग्रहः । वैश्वानरविद्यायां–अथ हैतेऽरुण–इत्याख्यायिका सुखाववोधार्था विद्यासम्प्रदायप्रदर्शनार्था च । अथ अनन्तरम् एते वक्ष्यमाणाः सत्ययज्ञादयः पंच ऋषयः । औपवेशौ उपवेशापुत्रे अरुणे–नामतः 'समाजग्मुः' वैश्वानरविद्यामध्येतुमरुणसकाशं गतवन्त इत्यर्थः । सत्ययज्ञो नामतः यः 'पौलुषिः' पुलुषपुत्रः, महाशालो नामतः यः जाबालपुत्रः, बुडिलो नामतः अश्वतरस्यापत्यमाश्वतराश्विः, 'इन्द्रद्युम्नः' नामतः, भाल्लवेरपत्यं भाल्लवेयः । जनो नामतः, शर्कराक्षस्यापत्यं 'शार्कराक्ष्यः' । एते पञ्चापि 'वैश्वानरे' 'समासत' वैश्वानरस्वरूपपरिज्ञानाय अरुणसमीपे स्थिताः । अथ सोऽरुणः । 'तेषां' सत्ययज्ञादीनां पञ्चानां वैश्वानरं बोधयितुं 'न समियाय' सङ्गतः शक्तो नाभवत् ॥ १ ॥

ते होचुरितीति । तदा अरुणः, इतरे सत्ययज्ञादयः पञ्च परस्परम् 'ऊचुः'–कैकयदेशाधिपतिः 'अश्वपतिः' नामतः 'सम्प्रति' इदानीं 'वैश्वानरं' 'वेद' जानाति 'तं' गच्छामेति विचार्य 'अश्वपतिं' समाजग्मुः । स राजा एतेषां महर्षीणां 'पृथगावसथान्' गृहान् पृथक् पृथक् 'अपचितीः' पूजाश्च कृत्वा एते प्रतिग्रहार्थमागता

स॒ हो॑वाच । यन्नु भगवन्तोऽनूचाना॒ ऽअनूचानपुत्राः॒ किमि॒दमि॑ति॒ ते हो॑चु॒र्वैश्वानर॒ᳬं ह भगवान्त्सम्प्रति॒ व्वेद तं नो॒ ब्रूहीति॒ स॒ हो॑वाच सम्प्रति॒ खलु॒ न्वा॒ऽअहं॒ व्वैश्वानरं॒ व्वेदा॒भ्या॒धत्त॒ समि॒धऽउपेता॒ स्थे॒ति ॥ ३ ॥

स॒ हो॑वाचारुणमौ॒पवेशिम् । ( इ॒ग्रौ ) गौ॑तम॒ कं त्वं॒ व्वैश्वानरं॒ व्वेत्थे॒ति पृथिवी॒मेव॒ राजन्निति॒ हो॑वाचो॒मिति हो॑वाचै॒ष वै॒ प्रतिष्ठा॒ व्वैश्वानर॒ऽ एत॒ᳬं हि वै॒ त्वं॒ प्रतिष्ठां॒ व्वैश्वानरं॒ व्वे॒त्थ त॒स्मात्त्वं॒ प्र॒तिष्ठितः॒ प्रज॒या प॒शु॒भिर॑सि

---

स होवाच—यन्नु भगवन्तोऽनूचाना अनूचानपुत्राः ! किमिदमिति । ते होचुः—वैश्वानरं ह भगवान्सम्प्रति वेद, तं नो ब्रूहीति । स होवाच—सम्प्रति खलु न्वा अहं वैश्वानरं वेद । अभ्याधत्त समिधः, उपेताः स्थेति ॥ ३ ॥

स होवाचारुणमौपवेशिम् ! गौतम । कं त्वं वैश्वानरं वेत्थेति । पृथिवीमेव राजन्निति होवाच । ओमिति होवाच । एष वै प्रतिष्ठा वैश्वानरः । एतं हि वै त्वं प्रतिष्ठां वैश्वानरं वेत्थ । तस्मात्त्वं प्रति-

---

इति बुद्ध्वा तेषां 'पृथक्साहस्रान् सोमान् प्रोवाच' । सहस्रदक्षिणाकेषु सोमयज्ञेषु युष्मान् ऋत्विजो वृत्वा तत्रैकैकस्य ऋषेः सहस्रं ददामीत्यर्थः । एवमश्वपतिनोक्ते मुनयः स्वागमनप्रयोजनमनुक्त्वा परेद्युः शिष्यलक्षणयुता उपसेदुरित्याह—प्रातरसंविदाना इति । 'असंविदानाः' सङ्केतमकुर्वाणा राज्ञे स्वाशयमनाविष्कुर्वन्त एव प्रातः समित्पाणयः सन्तः 'हे राजन् त्वामुपयाम' उपासीदामेति वदन्तः 'प्रतिचक्रमिरे' तंप्रति आजग्मुः इत्यन्वयः । अत्र समित्पाणित्वं शिष्यलक्षणमित्यन्यत्राम्नायते—"समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्" ( मुण्ड. १ । २ । १२ ) इति । जातितो हीनं राजानं विद्यार्थिनो विनयेनोपजग्मुः; तथाऽन्यैर्विद्यार्थिभिर्भवितव्यमिति कथितं भवति ॥ २ ॥

पूर्वमसम्भवं मत्वा इदानीं महर्षीणां समित्पाणित्वेनोपसदनम् राजा पृच्छति—**सहोवाच यन्नु भगवन्त** इति । यद्यस्माद्यूयं हे भगवन्तो महर्षयः अनूचानाः साङ्गवेदाध्यायिनोऽनुष्ठातारः 'अनूचानपुत्राः' सनत्कुमारपुत्राः भवन्तः सन्तः किमिदमनुचितमित्युवाचेति सम्बन्धः । जातितो हीनोऽहं यूयं तु महानुभावाः तदेवमुपसदनं किमर्थमित्युक्तवानित्यर्थः । अथ ते नः विद्यार्थित्वेनागमनमिति स्वाभाविकमाविष्कुर्वन्ति—**ते होचुर्वैश्वानरमिति** । भगवान् वेदार्थसम्पन्नो भवान् 'संप्रति' इदानीं 'वैश्वानरं' 'वेद' जानाति तं वैश्वानरं 'नः' अस्मभ्यं 'ब्रूहि' उपदिशेति । वैश्वानरपदेन परमेश्वर इति—एतद्ब्राह्मणावसानाधिकरणेन प्रतिपादितव्यमिति 'सः' राजा 'उवाच' **सम्प्रति खलु न्वा अहं वैश्वानरं वेदेति** । सम्प्रति इदानी वैश्वानरं वेद जानामि । खलु न्वै । खलु न्वा इति निपातसमुदाय एकार्थवाची । नु वै इति पदद्वयं । नुशब्दस्य उकारं वैशब्दे परतः याजुषा लुंपंति । वेत्तेर्लोट्युत्तमैकवचने रूपम् । यूयं 'समिधो अभ्याधत्त' अग्नौ । 'उपेताः स्थ' उपसन्ना भवथेति राजोवाच ॥ ३ ॥

एवमन्येनापि विद्यादानेच्छा ग्राह्या, च श्रद्धानतयेति शिष्यकार्यं स्वीकार्यं सः कथमुवाचेत्याह—**स होवाचारुणमौपवेशिमिति** । राजा प्रथममुपवेशपुत्रमरुणम् उवाच गौतमेति अरुणस्य संबुद्धिः ।

यो वाऽएतं प्रतिष्ठां व्वैश्वानरं व्वेदाप पुनर्मृत्युं जयति सर्व्वमायुरेति पादौ त्वाऽएतौ व्वैश्वानरस्य पादौ तेऽम्लास्यतां यदि ह नागमिष्यऽइति पादौ ते विदितावभविष्यतां यदि ह नागमिष्यऽ इति वा ॥ ४ ॥

(२) (वाऽथ) अथ होवाच सत्ययज्ञं पौलुषिम् । (म्प्रा) प्राचीनयोग्य कं त्वं व्वैश्वानरं व्वेत्थेत्यपऽ एव राजन्निति होवाचोमिति होवाचैष वै रयिर्व्वैश्वानरऽएतꣳ हि वै त्वꣳ रयिं व्वैश्वानरं व्वेत्थ तस्मात्त्वꣳ रयिमान्पुष्टिमानसि यो वाऽ एतꣳ रयिं व्वैश्वानरं व्वेदाप पुनर्मृत्युं जयति सर्व्वमायुरेति बस्तिस्त्वाऽएष व्वैश्वानरस्य बस्तिस्त्वाऽहास्यद्यदि ह नागमिष्यऽ इति बस्तिस्ते विदितोऽभविष्यद्यदि ह नागमिष्यऽ इति वा ॥ ५ ॥

---

ष्ठितः प्रजया, पशुभिरसि । यो वा एतं प्रतिष्ठां वैश्वानरं वेद—अप पुनर्मृत्युं जयति । सर्वमायुरेति । पादौ त्वा एतौ वैश्वानरस्य । पादौ ते अम्लास्यताम् । यदिह नागमिष्य इति । पादौ ते विदितावभविष्यताम्—यदि ह नागमिष्य इति वा ॥ ४ ॥

अथ होवाच सत्ययज्ञं पौलुषिम् । प्राचीनयोग्य ! कं त्वं वैश्वानरं वेत्थेति । अप एव राजन्निति होवाच । ओमिति होवाच । एष वै रयिर्वैश्वानरः । एतं हि वै त्वं रयिं वैश्वानरं वेत्थ । रयिमान्पुष्टिमानसि यो वा एतं रयिं वैश्वानरं वेद—अप पुनर्मृत्युं जयति सर्वमायुरेति । बस्तिस्त्वा एष वैश्वानरस्य । बस्तिस्त्वाऽहास्यद् यदि ह नागमिष्य इति । बस्तिस्ते विदितोऽभविष्यद् यदि ह नागमिष्य इति वा ॥ ५ ॥

---

'कं त्वं वैश्वानरं वेत्थेति' स्वामिमतं वैश्वानरस्वरूपमुपदेष्टुं राज्ञोऽवगमार्थः प्रश्नः, पृथिवीमेव तं वैश्वानरं वेद्मि 'राजन्निति' अरुण उवाच 'ओम्' इत्यङ्गीकारः, 'एषः' पृथिवीरूपो 'वैश्वानरः' 'प्रतिष्ठा' यस्मात्त्वं वैश्वानरैकदेशं प्रतिष्ठारूपं वैश्वानरं वेत्थ—तस्मात्त्वं प्रजया, पशुभिः, प्रतिष्ठितोऽसि एवंरूपं वैश्वानरमुपासीनस्य फलमाह—यो वा एतं प्रतिष्ठामिति । 'यः' कश्चिदेतं यथोक्तमेतं वैश्वानरं वेद—सः 'पुनर्मृत्युं जयति' 'सर्वमायुः' अमृतत्वमेति । एष प्रतिष्ठारूपः वैश्वानरस्यावयवादिभिः परमेश्वरस्य पादावेव न समस्तो वैश्वानरः 'त्वा' इति निपातद्वयं । तु वै इति पदद्वयं । तु शब्दस्य उकारं वैशब्दे परतो याजुषा लुम्पंति । अतः समस्तबुद्ध्या वैश्वानरस्य ज्ञानात् पादौ ते तव विपरीतग्राहिणे 'अम्लास्यताम्' ग्लानौ गमनासमर्थावभविष्यतां यदि मां नागमिष्यः । इत्थं दोषपर्यवसानमुक्तम् । एकदेशज्ञानमेव दोष इत्याह—पादौ ते विदिताविति । वैश्वानरस्य पादमात्रं त्वया विदितं, न तु कृत्स्नो वैश्वानरः अतः साध्वकार्षीर्यन्मामागतोऽसीत्यभिप्रायः । क्रियातिपत्तौ लृङ्प्रयोगः । वाशब्दो विकल्पार्थः ॥ ४ ॥

एवमुत्तरे पञ्च पर्याया: सामान्येन व्याख्येयाः । विशेषस्तु कथ्यते—प्राचीनयोग्येति—सत्ययज्ञस्य संबोधनम्, आपः 'एव' अब्रूपं वैश्वानरं जानामि 'राजन्निति' सत्ययज्ञस्योत्तरम् । एष वै रयिर्वैश्वानर इति । एष अब्रात्मको

( वाऽथ ) अथ होवाच महाशालं जाबालम् । ( औ ) औपमन्यव कं त्वं वैश्वानरं वेत्थेत्याकाशमेव राजन्निति होवाचोमिति होवाचैष वै बहुलो वैश्वानरऽएतᳫँ हि वै त्वं बहुलं वैश्वानरं वेत्थ तस्मात्त्वं बहुः प्रजया पशुभिरसि यो वाऽएतं बहुलं वैश्वानरं वेदाप पुनर्मृत्युं जयति सर्वमायुरेत्यात्मा त्वाऽएष वैश्वानरस्यात्मा त्वाऽहास्यद्यदि ह नागमिष्यऽइत्यात्मा ते विदितोऽभविष्यद्यदि ह नागमिष्यऽ इति वा ॥ ६ ॥

( वाऽथ ) अथ होवाच बुडिलमाश्वतराश्विम् । ( वै ) वैयाघ्रपद्य कं त्वं वैश्वानरं वेत्थेति वायुमेव राजन्निति होवाचोमिति होवाचैष वै पृथग्वर्त्मा वैश्वानरऽएतᳫँ हि वै त्वं पृथग्वर्त्मानं वैश्वानरं वेत्थ तस्मात्त्वां पृथग्रथश्रेणयोऽनुयान्ति यो वाऽएतं पृथग्वर्त्मानं वैश्वानरं वेदाप पुनर्मृत्युं जयति सर्वमायुरेति प्राणस्त्वाऽएष वैश्वानरस्य प्राणस्त्वा-

---

अथ होवाच महाशालं जाबालम् । औपमन्यव ! कं त्वं वैश्वानरं वेत्थेति । आकाशमेव राजन्निति होवाच । एष वैश्वानरः । एतं हि वै त्वं बहुलं वैश्वानरं वेत्थ । तस्मात्त्वं बहुः प्रजया पशुभिरसि । यो वा एतं बहुलं वैश्वानरं वेद । अप पुनर्मृत्युं जयति सर्वमायुरेति । आत्मा त्वा एष वैश्वानरस्य आत्मा त्वाऽहास्यद् यदि ह नागमिष्य इति । आत्मा ते विदितोऽभविष्यद् यदि ह नागमिष्य इति वा ॥ ६ ॥

अथ होवाच बुडिलमाश्वतराश्विम् । वैयाघ्रपद्य ! कं त्वं वैश्वानरं वेत्थेति । वायुमेव राजन्निति होवाच ओमिति होवाच । एष वै पृथग्वर्त्मा वैश्वानरः एते हि वै त्वं पृथग्वर्त्मानं वैश्वानरं वेत्थ ।

---

वैश्वानरः, 'रयिः' धनरूपः यस्माद्धनरूपं वेत्थ तस्माद्धनवान् 'पुष्टिमानसि' । बस्तिस्त्वा एष वैश्वानरस्येति । एष रयिरूपोऽब्रात्मको वैश्वानरः वैश्वानरस्यावयविन ईश्वरस्य बस्तिर्मूत्राशय एव न समस्तमित्यर्थः । बस्तिस्त्वा एष इत्यत्र 'त्वा' इति निपातद्वयम् । बस्तिस्त्वा हास्यद्यदीति । युष्मच्छब्दद्वितीयैकवचनादेशस्त्वाशब्दः त्वां भवन्तमेकदेशोपासकं सत्ययज्ञं बस्तिरहस्यं त्यक्तमभविष्यत् "ओहाक् त्यागे"—(धा. पा. जु. प. ८ ) ॥ ९ ॥

'औपमन्यव' इति महाशालस्य सम्बोधनम् । आकाशात्मकं वैश्वानरं वेत्थ । 'राजन्निति'—महाशालवचनम् । एष वै बहुलो वैश्वानर इति । बहुत्वमाकाशस्य सर्वगतत्वात् । बहुगुणोपासनाभ्यः 'त्वं' प्रजयापशुभिर्बहुर्भवसि । आत्मा त्वा एष इति । 'एषः' आकाशो वैश्वानरस्यात्मा मध्यशरीरं न कृत्स्नः । 'त्वा एषः' इत्यत्र तु वै इति निपातद्वयम् । आत्मा त्वाऽहास्यद्यदीति युष्मदेकवचनादेशः । एवमुत्तरत्र ॥ ६ ॥

वैयाघ्रपद्येति बुडिलसंबुद्धिः । व्याघ्रपदो गोत्रमित्यर्थे—"गर्गादिभ्यो यञ्"—( पा. सू. ४।१।१०५ ) इति । गर्गादित्वाद्यञ् । "न य्वाभ्यां०"—( पा. सू. ७ । ३ । ३ ) इत्यैजागमः । भ संज्ञायाम् "पद्वो-

ऽहास्यद्यदि ह नागमिष्य इति प्राणस्ते विदितो ऽभविष्यद्यदि ह नागमिष्य ऽइति वा ॥ ७ ॥

( वाऽथ ) अथ होवाचेन्द्रद्युम्नं भाल्लवेयम् । ( म्वै ) वैयाघ्रपद्य कं त्वं वैश्वानरं वेत्थेत्यादित्यमेव राजन्निति होवाचोमिति होवाचैष वै सुततेजा वैश्वानर ऽएतᳬं हि वै त्वᳬं सुततेजसं वैश्वानरं वेत्थ तस्मात्तवैष सुतोऽद्यमानः पच्यमानोऽक्षीयमाणो गृहेषु तिष्ठति यो वाऽएतᳬं सुततेजसं वैश्वानरं वेदाप पुनर्मृत्युं जयति सर्वमायुरेति चक्षुस्त्वाऽएतद्वैश्वानरस्यचक्षुस्त्वाऽहास्यद्यदि ह नागमिष्यऽइति चक्षुस्ते विदितमभविष्यद्यदि ह नागमिष्यऽइति वा ॥ ८ ॥

---

तस्मात्त्वां पृथग्रथश्रेणयोऽनुयान्ति । यो वा एतं पृथग्वर्त्मानं वैश्वानरं वेद । अप पुनर्मृत्युं जयति । सर्वमायुरेति । प्राणस्त्वा एष वैश्वानरस्य प्राणस्त्वाऽहास्यद् यदि ह नागमिष्य इति । प्राणस्ते विदितोऽभविष्यद् यदि ह नागमिष्य इति वा ॥ ७ ॥

अथ होवाचेन्द्रद्युम्नं भाल्लवेयम् । वैयाघ्रपद्य । कं त्वं वैश्वानरं वेत्थेति । आदित्यमेव राजन्निति होवाच । ओमिति होवाच । एष वै सुततेजा वैश्वानरः । एतं हि वै त्वं सुततेजसं वैश्वानरं वेत्थ । तस्मात्तवैष सुतोऽद्यमानः पच्यमानोऽक्षीयमाणो गृहेषु तिष्ठति । यो वा एतं सुततेजसं वैश्वानरं वेदाप पुनर्मृत्युं जयति । सर्वमायुरेति । चक्षुस्त्वा एतद्वैश्वानरस्य चक्षुस्त्वाऽहास्यद् यदि नागमिष्य इति । चक्षुस्ते विदितमभविष्यद् यदि ह नागमिष्य इति वा ॥ ८ ॥

---

मास् ० "–( पा. ६ । १ । १३ । ) इति पादस्य पद्भावः । वायुरूपं वैश्वानरं वेद्मीति बुडिलस्योत्तरम् । एष वै पृथग्वर्त्मा वैश्वानर इति । नाना वर्त्म मार्गो यस्य वायोः आवहोद्वहादिभेदेन वर्त्तमानस्य सोऽयं पृथग्वर्त्मा तदात्मनो वैश्वानरस्य ज्ञानात् पृथङ्नानाविधाः ' रथश्रेणयः ' रथपङ्क्तयः ' त्वाम् ' ' अनुयान्ति ' ' अनुगच्छन्ति । प्राणस्त्वा एष इति । पृथग्वर्त्मा आत्मा इति 'वैश्वानरस्य' प्राणवायुरेव न समस्तो वैश्वानरः ' प्राणस्त्वाऽहास्यत् ' उदक्रमिष्यत् ॥ ७ ॥

' वैयाघ्रपद्य ' इति, इन्द्रद्युम्नसम्बुद्धिः । आदित्यमेव वैश्वानरं वेद्मीति इन्द्रद्युम्नोत्तरम् । एष वै सुततेजा इति, सुतमभिषुतं सोमरूपं तेजो यस्य सोऽयं तदात्मनो वैश्वानरस्य परिज्ञानात्तव गृहेषु सुतोऽभिषुतः सोमरसः 'अद्यमानः' एतद्रूपलक्षणं पुरोडाशादि 'पच्यमानः' ' अक्षीयमाणः' सर्वदा विनाशरहितस्तिष्ठति । चक्षुस्त्वा एतत् इति । एष सुततेजोरूपादित्यात्मको वैश्वानरः अवयविनो वैश्वानरस्य परमेश्वरस्य चक्षुरेव न समस्तः । तस्मादेकदेशोपासकत्वाच्चक्षुस्त्यक्तमभविष्यद्यदि नागमिष्यश्चक्षुर्मात्रमेव विदितं ज्ञातम् । यदि ' नागमिष्यः ' इति, समानम् ॥ ८ ॥

( ५।ऽ४ ) अथ होवाच जनꣳ शार्कराक्ष्यम् । ( ५ꣳ ) सायवस कं त्वं वैश्वानरं वेत्थेति दिवमेव राजन्निति होवाचोमिति होवाचैष वाऽअतिष्ठा वैश्वानरो ऽएतꣳ हि वै त्वमतिष्ठां वैश्वानरं वेत्थ तस्मात्त्वꣳ समानानतितिष्ठसि यो वाऽएतमतिष्ठां वैश्वानरं वेदाप पुनर्मृत्युं जयति सर्व्वमायुरेति मूर्द्धा त्वाऽएष वैश्वानरस्य मूर्द्धा त्वाऽहास्यद्यदि ह नागमिष्यऽइति मूर्द्धा ते विदितोऽभविष्यद्यदि ह नागमिष्य ऽइति वा ॥ ९ ॥

तान्होवाच ( चै ) एते वै यूयं पृथग्वैश्वानरान्विद्वाꣳसः पृथगन्नमघस्त प्रादेशमात्रमिव ह वै देवाः सुविदिताऽअभिसम्पन्नास्तथा तु वऽएनान्वक्ष्यामि यथा प्रादेशमात्रमेवाभिसम्पादयिष्यामीति ॥ १० ॥

---

अथ होवाच जनं शार्कराक्ष्यम् । सायवस ! कं त्वं वैश्वानरं वेत्थेति । दिवमेव राजन्निति होवाच । ओमिति होवाच । एष वा अतिष्ठा वैश्वानरः । एतं हि वै त्वमतिष्ठां वैश्वानरं वेत्थ । तस्मात्त्वं समानानतितिष्ठसि । यो वा एतमतिष्ठां वैश्वानरं वेदाप पुनर्मृत्युं जयति । सर्वमायुरेति । मूर्द्धा त्वा एष वैश्वानरस्य मूर्द्धा त्वाऽहास्यद् यदि ह नागमिष्य इति । मूर्द्धा ते विदितोऽभविष्यद् यदि ह नागमिष्य इति वा ॥ ९ ॥

तान्होवाच–एते वै यूयं पृथग्वैश्वानरान् विद्वांसः पृथगन्नमघस्त । प्रादेशमात्रमिव ह वै देवाः सुविदिताः अभिसम्पन्नाः । तथा तु व एनान्वक्ष्यामि–यथा प्रादेशमात्रमेवाभिसम्पादयिष्यामीति ॥ १० ॥

---

'सायवस' इति जनसंबुद्धिः । शर्कराक्ष्य इति ऋषिस्तस्य गोत्रम् । दिवमेव द्युलोकात्मकमेव वैश्वानरं वेद्मीति जनस्योत्तरम् । एष वा अतिष्ठा इति । अतीत्य सर्वमतिक्रम्य तिष्ठतीत्यतिष्ठाः, अतिष्ठागुणको वैश्वानर इत्यर्थः । यस्मात् 'त्वमतिष्ठाः'–गुणपरिज्ञानात्तस्मात् 'समानान्' अज्ञान् 'अतितिष्ठसि' अतिक्रम्य वर्तसे । मूर्द्धा त्वा एष इति । एषः अतिष्ठागुणको द्युलोकः तु वै वैश्वानरः, अवयविनो वैश्वानरस्य परमेश्वरस्य मूर्द्धैव न समस्तः, अतः समस्तमूर्द्धवैश्वानरस्यापरिज्ञानान्मूर्द्धविपरीतग्राहिणं मूर्द्धा 'अहास्यत्' त्यक्तोऽभविष्यत् । यदि माम् 'नागमिष्यः' अथवा ते तव मूर्द्धैव विदितो ज्ञातोऽभविष्यत् यदि मां नागतोऽभविष्यः–साध्वकार्षीर्यन्मागतोऽसीत्यभिप्रायः ॥ ९ ॥

एवमरुणसत्ययज्ञादीनामृषीणां वैश्वानरस्य तदेकदेशमात्रपरिज्ञानं न युक्तम्; पादादिमूर्द्धान्तावयवसंपूर्णं वैश्वानरं पुरुषमुपदिष्टवानित्याह–तान्होवाच एते वै यूयम्, इत्यादिब्राह्मणशेषेण । तानुक्तवैश्वानरदर्शनवत उवाच । एते यूयं पृथक् पृथगेकदेशरूपान् वैश्वानरान् विद्वांसः पृथगन्नं भुक्तवन्तः स्थ, अत उक्तावयवसंपूर्णं कृत्स्नं वैश्वानरं जानीतेति तात्पर्यम् । यद्येवं यथोक्तावयवैः पृथिवीपादादिभिः द्युमूर्द्धान्तावयवैर्विशिष्टमेकं वस्तु तत्प्रादेशमात्रं प्रादेशप्रमाणमिव देवाः सुविदिताः सम्यक् ज्ञानवन्तोऽभिसम्पन्नाः प्राप्तफला बभूवुरित्यर्थः ।

स होवाच । मूर्द्धानमुपदिशन्नेष वाऽअतिष्ठा व्वैश्वानरऽइति चक्षुषीऽउपदिशन्नुवाचैष वै सुततेजा व्वैश्वानरऽइति नासिकेऽउपदिशन्नुवाचैष वै पृथग्वर्त्मा व्वैश्वानरऽ इति मुख्यमाकाशमुपदिशन्नुवाचैष वै बहुलो व्वैश्वानरऽइति मुख्याऽ अप ऽउपदिशन्नुवाचैष वै रयिर्व्वैश्वानरऽ इति च्छुबुकमुपदिशन्नुवाचैष वै प्रतिष्ठा व्वैश्वानरऽ इति सऽएषोऽग्निर्व्वैश्वानरो यत्पुरुषः स यो हैतमेवमग्निं व्वैश्वानरं पुरुषविधं पुरुषेऽन्तः प्रतिष्ठितं व्वेदाप पुनर्मृत्युं जयति सर्व्वमायुरेति न हास्य ब्रुवाणं चन व्वैश्वानरो हिनस्ति ॥ ११ ॥

इति चतुर्थप्रपाठके चतुर्थं ब्राह्मणम् ॥ १०–४–४ ॥ ( ६. १. ) ॥

स होवाच मूर्द्धानमुपदिशन्–एष वा अतिष्ठा वैश्वानर इति । चक्षुषी उपदिशन्नुवाच–एष वै सुततेजा वैश्वानर इति । नासिके उपदिशन्नुवाच–एष वै पृथग्वर्त्मा वैश्वानर इति । मुख्यमाकाशमुपदिशन्नुवाच–एष वै बहुलो वैश्वानर इति । मुख्या अप उपदिशन्नुवाच–एष वै रयिर्वैश्वानर इति । छुबुकमुपदिशन्नुवाच–एष वै प्रतिष्ठा वैश्वानर इति । स एषोऽग्निर्वैश्वानरः–यत्पुरुषः । स यो हैतमेवमग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तः प्रतिष्ठितं वेद । अप पुनर्मृत्युं जयति । सर्वमायुरेति । न ह अस्य ब्रुवाणं चन वैश्वानरो हिनस्ति ॥ ११ ॥

यथा एतदेकं पादादिविशिष्टं वस्तु प्रादेशमात्रमेवाभिसम्पादयिष्यामि, तथा तुशब्द एवकारार्थे । तथैव तद्वदेव वः युष्मभ्यमेनान् वैश्वानरावयवान् ' वक्ष्यामि ' । अत्र मूर्द्धादिचुबुकान्तप्रतिष्ठः ( कं०१–११ ) इति प्रादेशैर्द्युमूर्द्धादिभिः पृथिवीपादान्तैरवयवैरध्यात्मं मीयत इति प्रादेशमात्रः परिकल्पनम् । आचार्यैस्तु ( ब्र. सू. शा. भा. १ । २ । ७ । ३० ) इत्यत्र शाखांतरानुसारेण प्रादेशमात्रस्य बहुधा प्रवचनं कृतम् । प्रादेशैर्द्युमूर्द्धादिभिः पृथिवीपादान्तैरध्यात्मं मीयत इति प्रादेशमात्रः, मुखादिषु करणदेशेषु कर्तृत्वेन मीयत इति प्रादेशमात्रः, द्युलोकादिपृथिव्यन्तः, प्रदेशपरिमाणो वा प्रादेशमात्रः । प्रकर्षेण शास्त्रेणादिश्यन्त इति, प्रदेशाः द्युलोकादय एव, तावत्परिमाणो वा प्रादेशमात्रः, मूर्द्धादिचुबुकान्तप्रतिष्ठ इति वा प्रादेशमात्रः इति ॥ १० ॥

अथ राजा पूर्वोक्तान् अतिष्ठा वैश्वानरादीन् वैश्वानरावयवान् मूर्द्धादिचुबुकान्तावयवेन प्रदर्शितवानिति श्रुतिराह–स होवाच मूर्द्धानमुपदिशन्निति । 'मूर्द्धानमुपदिशन्' राजा ' एष अतिष्ठा वैश्वानरः ' इत्युक्तवान् । मूर्द्धा अवयवोऽतिष्ठागुणः वैश्वानरात्मक इत्यर्थः । चक्षुर्द्वयं सुतं तेजो वैश्वानरः, नासिकारन्ध्रद्वयं पृथग्वर्त्म वैश्वानरः, मुख्यं मुखे भवमाकाशम् ' उपदिशन् ' बहुलगुणो वैश्वानर इत्युक्तवान्, मुख्याः मुखे भवा अप उदकान्युपदिशन् रयिर्गुणो वैश्वानर इत्युक्तवान् । चुबुकमवयवमुपदिशत्सु प्रतिष्ठात्मको वैश्वानर इत्युक्तवान् । चुबुकमिति अधरं मुखफलकमित्युच्यते । ' स एषोऽग्निर्वैश्वानरो यत्पुरुषः ' मूर्द्धादिचुबुकान्ते प्रादेशमात्रस्थले पुरुषावयवानां शिरःप्रभृतीनां पादान्तानां परिकल्पनात् । एषोऽतिष्ठादिगुणवैश्वानरसमष्टिरूपे एको वैश्वानरोऽग्निरित्युच्यत इति । विश्वान्नरान्पुण्यपापरूपां गतिं नयतीति विश्वानरः सर्वात्मा एक एव ईश्वरो विश्वानर एव

२४३३

वैश्वानर इति । आचार्यैस्तु–वैश्वानरस्य एवमर्थ उक्तः । "विश्वश्चायं नरश्च, विश्वेषां वा अयं नरः, विश्वे वा नरा अस्य, इति–विश्वानरः परमात्मा सर्वात्मत्वात् । विश्वानर एव वा वैश्वानरः । तद्धितोऽनन्यार्थः । राक्षसवायसादिवत्" । ( ब्र. सू. शां. भा. । १ । २ । ७ । २८ ) इति । यद्वा विश्वैर्वा नरैः प्रत्यगात्मा यो विभज्य नीयते इति स वैश्वानरः, इति यथोक्त वैश्वानराग्नि विदुषः फलमाह–स यो हैतमेवमग्निमिति । 'पुरुषविधं' पुरुषावयवयुक्तं । 'पुरुषेऽन्तः प्रतिष्ठितं' मूर्द्धादिचुबुकान्तप्रादेशमात्रमित्यर्थः । तादृशं वैश्वानरमग्निं यो वेद, सः 'पुनर्मृत्युं जयति' । 'सर्वमायुः अमृतत्वम् 'एति' । 'अस्य' वैश्वानराग्नेः । व्यत्ययेन कर्मणि षष्ठी, 'ब्रुवाणम्' उपदेष्टारमपि वैश्वानरो न हिनस्ति । वैश्वानरपदेन परमात्मा विभज्यत इति । "वैश्वानरः साधारणशब्दविशेषात्" ( ब्र. सू. भा. १ । २ । ७ । २४ ) इत्यस्मिन्नधिकरणे आचार्यैः समर्थितम् । एतदर्थस्तत्त्वविद्भिः श्लोकाभ्यां सङ्गृहीतः–" वैश्वानरः को नु भूतदेवजीवेश्वरेषु कः । वैश्वानरात्मशब्दाभ्यामीशादन्येषु कश्चन ॥ द्युमूर्द्धत्वादिना ब्रह्मशब्दाच्चेश्वर इष्यते । वैश्वानरात्मशब्दौ तावीश्वरस्यापि वाचकौ ॥ " ( वै. न्या. १।२।७ ) इति । वैश्वानरः–किमयं वैश्वानरः कुक्षिस्थोऽग्निः, उत बाह्योऽग्निः आहोस्विदादित्यदेवता किं वा जीवात्मा, उत परमात्मेति । तत्र वैश्वानरशब्दवशादाद्यं पक्षत्रयं प्राप्तम् । " अयमग्निर्वैश्वानरो योऽयमन्तःपुरुषे येनेदमन्नं पच्यते यदिदमद्यते " ( बृ. उ. ५ । ९ । १ ) इति श्रुतेर्वैश्वानराग्निशब्दो जाठराग्नौ प्रयुक्तः । " विश्वस्मा अग्निं भुवनाय देवा वैश्वानरम् " ( ऋ. सं. १० । ८८ । १२ ) इति । बाह्येऽग्नौ प्रयुक्तः । " वैश्वानरस्य सुमतौ स्याम " ( ऋ. सं. । १ । ९८ । १ ) इति देवतायां प्रयुक्तः । अतः पक्षत्रयप्राप्तिः । आत्मशब्दस्य जीवे रूढत्वात् जीवो वा वैश्वानरः स्यात् । न त्वीश्वरः तद्गमकाभावादिति प्राप्ते–ब्रूमः वैश्वानरो ब्रह्म भवितुमर्हतीति द्युमूर्द्धत्वादिश्रवणात् । तस्यैतस्यात्मनो वैश्वानरस्य मूर्द्धत्वादिना द्युलोकाद्युक्त्या जगतो वैश्वानरावयवत्वं श्रूयते–न चैतदीश्वरादन्यत्र संभवति । किंच "को न आत्मा, किं ब्रह्म" ( छां. ५।११।१ ) इति ब्रह्मशब्दस्त्वीश्वरे मुख्यः, वैश्वानरशब्दस्तु योगवृत्त्या ब्रह्मणि वर्तते । विश्वश्चासौ नरश्च विश्वानरः सर्वात्मकः पुरुषः इत्यर्थः । विश्वानर एव वैश्वानरः । आत्मशब्दवत् जीवे ब्रह्मण्यपि वर्तते । तस्माद्वैश्वानरः परमेश्वरः । स समानार्थत्वादपीश्वर इति द्रष्टव्यम् ॥ ११ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये दशमकाण्डे षष्ठेऽध्याये प्रथमं ब्राह्मणम् ॥ ( १०–६–१ ) ॥

---

१–नरो जीवः । २–विश्वेषां विकाराणां ३–नरः कर्ता । ४–विश्वे सर्वे ५–नरा जीवाः ६–अस्य आत्मत्वेन नियम्यत्वेन वा । ७–" नरे संज्ञायाम् " ( पा. सू. । ६ । ३ । १२९ ) इति पूर्वपदस्य दीर्घता । ८–रक्ष एव राक्षसः इतिवत्स्वार्थे तद्धितः प्रत्ययः इति रत्नप्रभायाम् ।

द्वयं वाऽइदमत्ता चैवाद्यं च । तद्यदोभयꣳ समागच्छत्यत्तैवाख्यायते नाद्यम् ॥ १ ॥

( ४ꣳ ) स वै यः सोऽत्ताऽग्निरेव सः । ( ० ) तस्मिन्यत्किञ्चाभ्यादधत्याहितयऽ एवास्य ताऽआहितयो ह वै ताऽआहुतयऽ इत्याचक्षते परोऽक्षं परोऽक्षकामा हि देवाः ॥ २ ॥

( ० ) आदित्यो वाऽअत्ता । तस्य चन्द्रमा ऽएवाहितयश्चन्द्रमसꣳ ह्यादित्यऽआदधतीत्यधिदेवतम् ॥ ३ ॥

( सु ) अथाध्यात्मम् । ( म्प्रा ) प्राणो वाऽअत्ता तस्यान्नमेवाहितयोऽन्नꣳ हि प्राणऽआदधतीति न्वग्नेः ॥ ४ ॥

---

पुरुषस्याग्न्यर्कोक्थविधत्वोपासनं ब्राह्मणम् ।

तत्राग्निविधोपासनम् ।

द्वयं वा इदम्—अत्ता चैवाद्यं च । तद् यदोभयं समागच्छति—अत्तैवाख्यायते । नाद्यम् ॥ १ ॥

स वै यः सोऽत्ता—अग्निरेव सः । तस्मिन् यत्किञ्च अभ्यादधाति—आहितय एवास्य ताः । आहितयो ह वै ता आहुतय इत्याचक्षते । परोऽक्षम् । परोऽक्षकामा हि देवाः ॥ २ ॥

आदित्यो वा अत्ता । तस्य चन्द्रमा एवाहितयः । चन्द्रमसं ह्यादित्य आदधति । इत्यधिदेवतम् ॥ ३ ॥

अथाध्यात्मम्—प्राणो वा अत्ता, तस्यान्नमेवाहितयः । अन्नं हि प्राणा आदधति । इति नु अग्नेः ॥ ४ ॥

---

द्वितीये पुरुषस्यैवाग्निविधत्वमर्कविधत्वमुक्थविधत्वमुच्यते—द्वयं वा इदमिति । 'इदं' जगत् 'अत्ता चैवाद्यं च' इति 'द्वयं' द्यात्मकं योऽत्ता भोक्ता, 'आद्यं' भोग्यं तदुभयं यदा 'समागच्छति' युक्तमेकीभूतं भवति तदा 'द्वयम्' अत्तैवेत्याख्यायते, आद्यमिति नाख्यायते ॥ १ ॥

योऽत्तेत्युक्तः सोऽग्निरेव तस्मिन्नत्तृरूपेऽग्नौ यत्किञ्च वस्त्वभ्यादधति प्रक्षिपन्ति—अस्याग्नेस्ताः प्रक्षिप्ता आहितय इत्युच्यन्ते आधानादाहितयः । दधातेः—क्तिनि । ( पा. सू. ७ । ४ । ४२ ) हिरादेशः । आहितानामेवाहुतित्वम् ॥ २ ॥

अत्रोक्तयोः अत्त्राहुत्योरधिदैवमध्यात्मं चार्थमाह—आदित्यो वा अत्तेति । 'योऽयमत्ताऽग्निः' 'सः' आदित्यः । तस्याहितयः 'चन्द्रमाः' । 'चन्द्रमसं ह्यादित्य आदधति' इत्यनेन चन्द्रमस आदित्ये आधानादाहितित्वं प्रतिपादितम् ॥ ३ ॥

अध्यात्मं प्राण एवात्ता । 'तस्य' आद्यम् 'अन्नमेवाहितयः' 'प्राणे' अन्नस्याधानादाहितित्वं व्यक्तम् । इति न्वग्नेः—इति । इति नु अत्ता आद्यम् एवम् 'उभयम्' भागद्वयमग्नेरेव समाख्या । स चात्ताऽग्निरिति

( र ) अथार्कस्य । ( स्या ) अग्निर्वाऽअर्कस्तस्याहुतयऽएव कमाहुतयो ह्यग्नये कम् ॥ ५ ॥

( मा ) आदित्यो वाऽअर्कः । ( स्तु ) स्तस्य चन्द्रमाऽ एव कं चन्द्रमा ह्यादित्याय कमित्यधिदेवतम् ॥ ६ ॥

( मु ) अथाध्यात्मम् । ( म्प्रा ) प्राणो वाऽअर्कस्तस्यान्नमेव कमन्नꣳ हि प्राणाय कमिति न्वेवार्कस्य ॥ ७ ॥

( स्या ) अथोक्थस्य । ( स्या ) अग्निर्वाऽउक्तस्याहुतयऽ एव थमाहुतिभिर्ह्यग्निरुत्तिष्ठति ॥ ८ ॥

---

## अर्कविधोपासनम् ।

अथार्कस्य—अग्निर्वा अर्कः । तस्याहुतय एव कम् आहुतयो ह्यग्नये कम् ॥ ५ ॥

आदित्यो वा अर्कः, । तस्य चन्द्रमा एव कम् । चन्द्रमा ह्यादित्याय कम् । इत्यधिदेवतम् ॥ ६ ॥

अथाध्यात्मम् । प्राणो वा अर्कः । तस्यान्नमेव कम् । अन्नं हि प्राणाय कम् । इति नु एवार्कस्य ॥ ७ ॥

## उक्थविधोपासनम् ।

अथोक्थस्य अग्निर्वा, उक् तस्याहुतय एव थम् । आहुतिभिर्ह्यग्निरुत्तिष्ठति ॥ ८ ॥

---

तस्याग्नेस्तत्र च निहितानां वस्तूनामधिदैवाध्यात्मपरत्वेनार्थद्वयव्याख्यानादग्नेर्विधोक्तेति शेषः । अग्निशब्दोपजीवनादग्निविधः पुरुष इत्युक्त भवतीति तात्पर्यम् ॥ ४ ॥

अर्कशब्दोपजीवनेन पूर्ववदग्न्याहुत्योरर्थद्वयं दर्शयितुं प्रतिजानीते—अथार्कस्येति । विधोच्यते—इति शेषः । अग्निर्हि—' अर्कः ' इत्युच्यते, ' तस्याहुतय एव कम् '—इति ' कं ' पदेनोच्यते । ' हि ' यस्मात् ' अग्नये ' आहुतयः कं सुखहेतवोऽतोऽर्कशब्देनाग्न्याहुतिद्वयं विवक्ष्यत इत्यर्थः ॥ ५ ॥

एतयोरर्कवाच्ययोरग्न्याहुत्योरधिदैवाध्यात्मपरत्वेनार्थमाह—आदित्यो वा अर्क इति । अथाध्यात्ममिति । इति न्वेवार्कस्य इति । पूर्ववद्व्याख्येयम् ॥ ६ ॥ ७ ॥

उक्थशब्दोपजीवनेन पूर्ववदग्न्याहुत्योरर्थद्वयं वक्तुं प्रतिजानीते- अथोक्थस्येति । उक्थब्दवाच्यः ' अग्निः ' थंशब्दवाच्याः ' आहुतयः ' । ' हि ' यस्मात् ' आहुतिभिः ' अग्निरुत्तिष्ठति—उत्तिष्ठत्यनेनाग्निरिति उक्थशब्दनिष्पत्त्या, अग्न्याहुत्योरुक्थशब्दवाच्यत्वं छान्दसो वर्णो यजनो द्रष्टव्यः ॥ ८ ॥

( त्या ) आदित्यो वाऽउक् । ( क्तु ) तस्य चन्द्रमाऽ एव थं चन्द्रमसा ह्यादित्यऽ उत्तिष्ठतीत्यधिदेवतम् ॥ ९ ॥

( मु ) अथाध्यात्मम् । ( म्प्रा ) प्राणो वा ऽउक्तस्यान्नमेव थमन्नेन हि प्राणऽ उत्तिष्ठतीति न्वेवोक्थस्य स ऽएषोऽग्निविधोऽर्कविध ऽउक्थविधो यत्पुरुषः स यो हैतमेवमग्निविधमर्कविधमुक्थविधं पुरुषमुपास्ते विदुषो हैवास्यैवं भ्रातृव्यो म्लायति ॥ १० ॥

प्राणेन वाऽअग्निर्दीप्यते । (तेऽग्नि) अग्निना वायुर्वायुनाऽऽदित्यऽआदित्येन चन्द्रमाश्चन्द्रमसा नक्षत्राणि नक्षत्रैर्विद्युदेतावती वै दीप्तिरस्मिंश्च लोकेऽमुष्मिंश्च सर्वाᳪं हैतां दीप्तिं दीप्यतेऽस्मिंश्च लोकेऽमुष्मिंश्च य ऽएवं वेद ॥ ११ ॥

इति चतुर्थप्रपाठके पञ्चमं ब्राह्मणम् ॥ १०।४।५ ॥ ( ६. २. )

---

आदित्यो वा उक्, तस्य चन्द्रमा एव थम् । चन्द्रमसा हि आदित्य उत्तिष्ठति । इत्यधिदेवतम् ॥ ९ ॥

अथाध्यात्मम्—प्राणो वाऽउक्, तस्यान्नमेव थम् । अन्नेन हि प्राण उत्तिष्ठति—इति नु एवोक्थस्य । स एषोऽग्निविधः, अर्कविधः, उक्थविधः । यत् पुरुषः सः । यो हैतमेवमग्निविधमर्कविधमुक्थविधं पुरुषमुपास्ते । विदुषो हैवास्यैवं भ्रातृव्यो म्लायति ॥ १० ॥

प्राणेन वा अग्निर्दीप्यते, अग्निना वायुः, वायुनाऽऽदित्यः, आदित्येन चन्द्रमाः, चन्द्रमसा नक्षत्राणि, नक्षत्रैर्विद्युत् । एतावती वै दीप्तिः अस्मिंश्च लोके—अमुष्मिंश्च । सर्वां हैतां दीप्तिं दीप्यते । अस्मिंश्च लोके, अमुष्मिंश्च । य एवं वेद ॥ ११ ॥

---

तयोरुक्थवाच्ययोरग्न्याहुत्योरधिदैवाध्यात्मपरत्वेनार्थमाह—आदित्यो वा उगिति । अथाध्यात्ममिति इति । इति न्वेवोक्थस्येति—पूर्ववत् । एवमग्न्यादिशब्दार्थवचने यदुक्तं तद्दर्शयति—स एषोऽग्निविध इति । यत्पुरुषः स इति । तस्योक्तरीत्याऽग्निविधादिसम्पत्तिः । यथोक्तं पुरुषं विदुषः फलमाह—स यो हैतमेवमिति—'भ्रातृव्यः' सपत्नः 'म्लायति' नश्यति ॥ ९ ॥ १० ॥

प्राणाग्न्यादित्यचन्द्रमःप्रसङ्गाज्ज्योतीरूपोपासनं फलं चाह—प्राणेन वा अग्निर्दीप्यत इति । योऽयमग्निरत्ता इत्युक्तः स ह प्राणेन दीप्यते प्राणवायोरभावेऽल्पत्वेऽग्नेर्दीपनं नास्ति । अग्निना वायुर्दीप्यते वायुनाऽऽदित्या- वष्टंभात् मानोर्दीपनम्, आदित्येन चन्द्रमस. प्रकाशो—ज्योतिःशास्त्रे प्रसिद्धः । रात्रौ नक्षत्राणि चन्द्रमसा प्रकाशन्ते । दिवा हि महत्तरेण सूर्यप्रकाशेन तिरोभूतत्वान्न तदा प्रकाशः । नक्षत्रैर्विद्युत्प्रकाश्यते एतावती हि

सत्यं ब्रह्मेत्युपासीत । ( तु॒ऽथ ) अथ खलु क्रतुमयोऽयं पुरुषः स यावत्क्रतुरयमस्माल्लोकात्प्रैत्येवं क्रतुर्हामुं लोकं प्रेत्याभिसम्भवति ॥ १ ॥

स ऽआत्मानमुपासीत । मनोमयं प्राणशरीरं भारूपमाकाशात्मानं कामरूपिणं मनोजवसꣳ सत्यसंकल्पꣳ सत्यधृतिꣳ सर्वगन्धꣳ सर्वरसꣳ सर्वा ऽअनु दिशः प्रभूतꣳ सर्वमिदमभ्याप्तमवाक्कमनादरं यथा व्रीहिर्वा यवो वा श्यामाको वा श्यामाकतण्डुलो वैवमयमन्तरात्मन्पुरुषो हिरण्मयो यथा ज्योतिरधूममेवं ज्यायान्दिवो ज्यायानाकाशाज्ज्यायानस्यै पृथिव्यै ज्यायान्त्सर्वेभ्यो भूतेभ्यः स प्राणस्यात्मैष मऽआ-

---

शाण्डिल्याग्न्युपासनं ब्राह्मणम् ।

सत्यं ब्रह्मेत्युपासीत । अथ खलु क्रतुमयोऽयं पुरुषः—स यावत्क्रतुरयमस्माँल्लोकात्प्रैति । एवं क्रतुर्हामुं लोकं प्रेत्याभिसम्भवति ॥ १ ॥

स आत्मानमुपासीत । मनोमयं प्राणशरीरं भारूपमाकाशात्मानं, कामरूपिणं, मनोजवसं, सत्यसंङ्कल्पं, सत्यधृतिं, सर्वगन्धं, सर्वरसं, सर्वा अनु दिशः प्रभूतं सर्वमिदमभ्याप्तमवाक्कमनादरम् । यथा

---

लोकद्वये दीप्तिः । भूलोके हि प्राणाग्निवायवः, इतरेतरस्मिन्निति । यः पुरुषः एतावतीं लोकद्वयंगतां दीप्तिं 'वेद' जानाति उपास्ते तस्य सर्वतेजोरूपत्वं फलमित्यर्थः ॥ ११ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये दशमकाण्डे षष्ठेऽध्याये द्वितीयं ब्राह्मणम् ॥ ( १० । ६ । २ ) ॥

तृतीये शाण्डिल्यविद्योच्यते—सत्यं ब्रह्मेत्युपासीतेति । 'सत्यम्' अबाध्यं नित्यं ब्रह्मेति वक्ष्यमाणैर्मनोमयत्वादिभिर्गुणैरुपेतमात्मानमुपासीत 'ब्रह्म' बृहतः सकलजगतः सृष्टिस्थितिसंहृतिहेतुभूतम् । तथा च च्छान्दोग्ये शाण्डिल्यविद्यामेव प्रस्तोतुमाम्नायते—" सर्वं खल्विदं ब्रह्म तज्जलान् इति शान्त उपासीत "—( छान्दो.उप. ३।१४।१ ) इति । तदुपासनप्रतिपादनाय—अथ खल्वित्यादिग्रन्थः—अथ खल्विति । हेत्वर्थः । अथ खलु यस्मात् 'क्रतुमयः' क्रतुर्निश्चयोऽध्यवसायः । एवमेव नान्यथेत्यविचलितप्रत्ययः । तदात्मकः सः पुरुषो जीवो 'यावत्क्रतुः' यादृशक्रतुः, यथाध्यवसायो यादृङ्निश्चयोऽस्मिन् लोके जीवत्पुरुषो भवति । तथाऽयं क्रतुरस्माल्लोकात्प्रेत्य मृत्वा 'अमुं लोकमभिसम्भवति' क्रत्वनुरूपफलात्मको भवतीत्यर्थः । एवं च एतच्छास्त्रतो दृष्टम्—" यं यं वाऽपि स्मरन् भावं त्यजत्यन्ते कलेवरम् । तं त मेवैति कौन्तेय सदा तद्भावभावितः "—( भ. गी. अ. ८।२ ) इति । यतः क्रत्वनुरूपं फलमुक्तं । ब्रह्मात्मविषयः क्रतुः कर्तव्य इत्यभिप्रायः ॥ १ ॥

कथं क्रतुकरणमिति तत्राह—स आत्मानमुपासीत मनोमयमित्यादि । सत्यं ब्रह्म मनोमयत्वादिगुणविशिष्टमात्मानमुपासीत एतदेव क्रतुकरणं 'मनोमयं' मनःप्रायं—मनुतेऽनेनेति मनः—तस्य प्रवृत्त्या विषयेषु प्रवृत्तो

एतमितुऽआत्मानं प्रेत्याभिसम्भविष्यामीति यस्य स्यादद्धा न विचिकित्साऽस्तीति ह स्माह शाण्डिल्यऽएवमेतदिति ॥ २ ॥

इति चतुर्थप्रपाठके षष्ठं ब्राह्मणम् ॥ १०।४।६॥ ( ६–३ )

---

व्रीहिर्वा, यवो वा, श्यामाको वा, श्यामाकतण्डुलो वा । एवमयमन्तरात्मन्पुरुषो हिरण्मयः । यथा ज्योतिरधूमम्, एवम् ज्यायान् दिवः । ज्यायानाकाशात् । ज्यायानस्यै पृथिव्यै । ज्यायान्त्सर्वेभ्यो भूतेभ्यः । स प्राणस्यात्मा । एष मे आत्मा । एतमित आत्मानं प्रेत्याभिसम्भविष्यामीति यस्य स्यात् । अद्धा न विचिकित्साऽस्ति, इति ह स्माह शाण्डिल्यः । एवमेतदिति ॥ २ ॥

---

भवति—तेन मनसा—तन्मयः—तत्प्रवृत्तौ प्रवृत्त इव—तदपाये निवृत्त इव । अत एव मनोमयं प्राणशरीरं प्राणः शरीरं यस्य—प्राणो लिङ्गात्मा । विज्ञानक्रियाशक्तिद्वयसंमूर्च्छितः । "यो वै प्राणः स प्रज्ञा या वा प्रज्ञा स प्राणः" (कौषि. उ. । ३ । ३ ।) इति । "स एष प्राण एव प्रज्ञात्मा" (कौषि. उप. । ४ । २० ) इति । "यस्य प्राणः शरीरं" ( श. प. । १४ । ३ । ७ । २१ । ) इति श्रुतेः । "अकृत्स्नो हि सः प्राणन्नेव प्राणो नाम भवति" ( श प. । १४ । १ । २ । ७ । ) इति च श्रुतेः । 'भारूपं' भा दीप्तिश्चैतन्यात्मलक्षणा रूपं यस्य तम्, आकाशात्मानं आकाश इव आत्मा स्वरूपं सर्वगतत्वसूक्ष्मत्वरूपादिविहीनत्वादिनाऽऽकाशतुल्यं । 'कामरूपिणं' सर्वकामात्मकं । 'मनोजवसं' मनोवेगं 'सत्यसंकल्पम्' अवितथसङ्कल्पम् ; संसारिणो ऽनैकान्तिकफलः सङ्कल्पः नैवमीश्वरस्येत्यर्थः । 'सत्यधृतिं' यथार्थधारणं । 'सर्वगन्धं' सर्वे गन्धाः सुखकराः अस्य । "पुण्यो गन्धः पृथिव्यां च" इति स्मृतेः । 'सर्वरसं' तथा रसा अपि विज्ञेयाः । अपुण्यगन्धरसग्रहणस्य पाप्मसम्बन्धिनिमित्तश्रवणात् । तस्मात् "स नोभयं जिघ्रति यत्सुरभि यद्दुर्गन्धि न पाप्मना ह्येष विद्धः" इति श्रुतेः । न च पाप्मसंसर्ग ईश्वरस्य अविद्याशेषानुपपत्तेः । 'सर्वा अनुदिशः प्रभूतं' "सर्वा दिशोऽनु प्रभूतं सर्वतो ब्रह्म" इति श्रुतेः । 'सर्वमिदमभ्याप्तं' सर्वमिदं जगदभ्याप्तम् । आप्नोतेर्व्याप्तिकर्मणः कर्तरि निष्ठा । 'अवाकं' वाचा रहितं पूर्वं गन्धरसादिश्रवणेन ईश्वरस्य प्राप्तानि घ्राणादीनि गन्धादिग्रहणाय, अतो वाक्प्रतिषेधेन तानि प्रतिषिध्यन्ते । "अपाणिपादो जवनो ग्रहीता, पश्यत्यचक्षुः, स शृणोत्यकर्णः । स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तम् ॥" (श्वेता० ३।१९) इति मन्त्रवर्णात् । 'अनादरम्' असंभ्रमम्—अप्राप्तौ अतिसंभ्रमः स्यादनाप्तकामस्य । ननु नित्यतृप्तस्येश्वरस्य संभ्रमोऽस्ति । एवं गुणकमात्मानमुपासीतेत्यन्वयः । तस्यैवाणुत्वज्यायस्त्वपरिमाणे दर्शयति—यथा व्रीहिर्वा यवो वेति । व्रीह्याद्युपन्यासोऽत्यन्तसूक्ष्मत्वप्रदर्शनार्थः, श्यामाकतण्डुलो वा यथा सूक्ष्मः एवं यथोक्तगुणोऽयम् 'अन्तरात्मन्' अन्तर्देहे अयं पुण्डरीकमध्ये 'हिरण्मयः' सुवर्णसमानतेजाः पुरुषोऽणीयानित्यर्थः । "आप्रणखात् सर्व एव सुवर्णः" इति श्रुतेः । अणुश्च न सर्व एव सुवर्णसमानकेवलज्योतीरूप इत्याह—यथा ज्योतिरधूममेवमिति । यथा धूमवर्जितं ज्योतिर्दीप्यते—एवं हिरण्मयः पुरुषो हृदयमध्ये दीप्यते । व्रीहियवश्यामाकतण्डुलवदणीयानित्युक्तेः । अणुपरिमाणत्वं प्राप्तमाशङ्क्य तत्प्रतिषेधायारभते—ज्यायानिति । ज्यायः परिमाणाज्ज्यायस्त्वं दर्शयन्ननन्तपरिमाणं दर्शयति—ज्यायान् सर्वेभ्यो भूतेभ्य इति । यथोक्तगुणलक्षण ईश्वरो ध्येयः । अत एव "तत्त्वमस्यात्मैवेदं सर्वमिति" तत्तत्तादात्म्यमात्रप्रतिपादने तात्पर्यम् । एष म आत्मैतमित आत्मानं प्रेत्याभिसंभविष्यामीति

लिङ्गात् आत्मशब्देन प्रत्यगात्मैवोच्यते । 'मे' इति षष्ठ्यासम्बन्धार्थप्रत्यायकत्वात्–एतमभिसंभविष्यामीति च कर्मकर्तृविरोधात् । अतः उक्तगुणः 'प्राणस्यात्मा' प्राणरूपस्य मे मम आत्मा इतोऽस्माच्छरीरात् प्रेत्य पूतमात्मानं क्रत्वनुरूपफलात्मकमभिसंभविष्यामि संपत्स्य इति–निश्चिता बुद्धिर्यस्यैवं विदितं स्याद्भवेत् 'अद्धा' अपरोक्षेण च 'न विचिकित्साऽस्ति' एतस्मिन् क्रतुफलसम्बन्धे तथैवेश्वरभावं प्रतिपद्यत इत्येवमेतत् 'आह स्म' उक्तवान् 'शाण्डिल्यः' नाम ऋषिरिति । अत्रेदं चिन्त्यते–किं मनोमयः प्राणशरीर इत्यादि विशेषणैर्जीवो वा ईश्वरो वेति विचारायाचार्यैरधिकरणमवतारितम्–"सर्वत्र प्रसिद्धोपदेशात्" ( ब्र. सू. १।२।१। १ ) इति । तदर्थः श्लोकद्वयेन संगृहीतः "मनोमयोऽयं शारीर ईशो वा प्राणमानसः । हृदयस्थित्यणीयस्त्वे जीवे स्तस्तेन जीवगीः । समवायगतं ब्रह्म तद्धितादिरपेक्षते । प्राणादियोगश्चित्तार्थः श्चित्तं ब्रह्मप्रसिद्धितः ॥" ( वै. न्या. मा. १ । २ । १ । १ ) इति । तद्धि च्छान्दोग्ये तृतीयाध्याये (खं. ३ । १४ । १ ।) शाण्डिल्यविद्यायामाम्नायते "मनोमयः प्राणशरीरो भारूपः" ( छां. उ. ३ । १४ । २ ) इति । तत्र जीव ईश्वरो वेति सन्देहे जीव इति प्राप्तम्, मनःसम्बन्धादीनां जीवे सुसंपादत्वात् मनसो विकारो मनोमय इति मनःसम्बन्धः, प्राणः शरीरं यस्येति प्राणसम्बन्धः । न चेदं द्वयमीश्वरे सुसंपादं "अप्राणो ह्यमनाः शुभ्रः" ( मुंड. उ. २ । १ । २ ) इति निषेधात् । तथा "एष म आत्माऽन्तर्हृदयेऽणीयान्" ( छांदो. ३ । १४ । ३ ) इति निरूप्यमाणं हृदयावस्थानमणीयस्त्वं च निराधारस्य सर्वगतस्य न कथञ्चिदप्युपपद्यते;–तस्माज्जीव इति प्राप्ते ब्रूमः–"सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपसीत" ( छांदो. ३।१४।१ ) इति । एतस्मिन् शमविधिपरे पूर्ववाक्ये श्रूयमाणं यद्ब्रह्म–तदेव मनोमयः प्राणशरीर इत्येताभ्यां तद्धितबहुव्रीहिभ्यां विशेष्यत्वेनापेक्ष्यते । शमवाक्यस्यायमर्थः–यस्मात्सर्वमिदं विकारजातं ब्रह्मैव तज्जत्वात्तल्लत्वात्तदनत्वाच्च इति तस्मात् सर्वात्मके ब्रह्मणि रागद्वेषादिविषयासम्भवात् उपास्तिकाले शान्तो भवेदिति तद्वाक्यगतब्रह्मणि विशेष्यत्वेनान्विते मनोमयवाक्यस्यापि ब्रह्मपरत्वं भविष्यति । न च ब्रह्मणो मनःप्राणसम्बन्धाद्यनुपपत्तिः–निरुपाधिके तदनुपपत्तावपि सोपाधिकस्यैवोपास्यस्य चिन्तनार्थतया तदुपपत्तेः । तस्मात्सर्वेष्वपि वेदान्तेषु यद्ब्रह्मोपास्यत्वेन प्रसिद्धं तदेवात्राप्युपास्यम् । न हि क्वचिदपि वेदान्ते जीवस्योपास्यत्वं प्रसिद्धम् । ततो ब्रह्मेति राद्धान्तः । तत्रापि "मनोमयः प्राणशरीरः" इत्यादिश्रुतेः । यथा "व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामाकतण्डुलाद्वा" (छां. ३।१४।३) इति श्रुतेः । एष म आत्मेति । अयं जीवो ब्रह्म वेति सन्देहः । "सत्यं ब्रह्मेत्युपासीत" (श. प. १४।१०।६। ३।१) इति सत्यश्रुतेर्ब्रह्मैवेति सिद्धान्तः । सत्यामेव शाण्डिल्यविद्यामधिकृत्यान्यच्चिंतितम्–"समान एवं चाभेदात्" (ब्र.सू.भा.३।३।१०।१९) इत्यधिकरणे । तदर्थः श्लोकद्वयेनाचार्यैः संगृहीतः–"शाण्डिल्यविद्याकाण्वानां द्विविधैकविधाऽथवा । द्विरुक्तेरेकशाखायां द्वे विद्ये इति गम्यते । एका मनोमयेत्यादिप्रत्यभिज्ञानतो भवेत् । विद्याया विधिरेकत्र स्यादन्यत्र गुणो विधिः ॥" ( वै. न्या. मा. ३ । ३ । १० । १९ ) इति । अत्र ह्येवमाम्नायते–"स आत्मनमुपासीत मनोमयं प्राणशरीरम्" इत्यादिकम् । इदानीमुदाहृता बृहदारण्यकोपनिषदि एषैव विद्या पठिता "मनोमयोऽयं पुरुषो भाः सत्यः" ( बृ. उ. ५ । ६ । १ ) इति । तत्र पौनरुक्त्यभयाद्विद्याभेद इति प्राप्ते ब्रूमः–मनोमयत्वादिकस्य वेद्यरूपस्य प्रत्यभिज्ञानादेकैव विद्या न च पुनरुक्तिः; एकत्र विद्यां

---

१–तज्जेति । तस्माज्जायत इति तज्जं । तस्मिँल्लीयत इति तल्लं । तस्मिन्ननिति चेष्टत इति तदनं । तज्जं च तल्लं च तदनं च तत्–इति तज्जलान् कर्मधारयेऽस्मिन् शाकपार्थिवन्यायेन मध्यमपदस्यतच्छब्दस्य लोपः । तज्जलानमितिवाच्ये अवयवलोपश्छांदसः । इति हेतो । इति न्यायनिर्णयः ॥

उषा वा॒ऽअश्व॑स्य॒ मेध्य॑स्य॒ शिरः॑। सूर्य॒श्चक्षु॒र्वातः॑ प्रा॒णो व्यात्त॑म॒ग्निर्वै॑श्वान॒रः सं॑वत्स॒रऽआ॒त्माऽश्व॑स्य॒ मेध्य॑स्य॒ द्यौः पृ॒ष्ठम॒न्तरि॑क्षमु॒दरं॑ पृथि॒वी पाज॒स्यं॒ दिशः॑ पा॒र्श्वेऽअ॑वान्तरदि॒शः पर्श॑वऽ ऋ॒तवोऽङ्गा॑नि॒ मासा॑श्चार्द्धमा॒साश्च॒ पर्वा॑ण्यहोरा॒त्राणि॑ प्रति॒ष्ठा नक्ष॑त्राण्य॒स्थीनि॒ नभो॑ मा॒ꣳसा॑न्यूव॒ध्यꣳ सि॑कताः॒ सिन्ध॑वो॒ गुदा॑ य॒कृच्च॑ क्लो॒मान॑श्च॒ पर्व॑ताऽओष॑धयश्च॒ वन॒स्पत॑यश्च॒ लोमा॑न्यु॒द्यन्पूर्वा॒र्द्धो नि॒म्लोच॒ञ्जघना॒र्द्धो यद्वि॒जृम्भ॑ते॒ तद्वि॒द्योत॑ते॒ यद्वि॒धूनु॑ते॒ तत्स्त॑नयति॒ यन्मेह॑ति॒ तद्वर्ष॑ति॒ वागे॒वास्य॒ वाग॒हर्वाऽअश्वं॑ पु॒रस्ता॑न्महि॒माऽन्व॑जायत॒ तस्य॒ पूर्वे॑ समु॒द्रे योनी॒ रात्रि॑रेनं

---

### अश्वावयवेषु विराडवयवोपासनं ब्राह्मणम् ।

उषा वा अश्वस्य मेध्यस्य शिरः, सूर्यश्चक्षुः, वातः प्राणः, व्यात्तमग्निर्वैश्वानरः । संवत्सर आत्मा । अश्वस्य मेध्यस्य-द्यौष्पृष्ठम्, अन्तरिक्षमुदरम्, पृथिवी पाजस्यम्, दिशः पार्श्वे, अवान्तरदिशः पर्शवः, ऋतवोऽङ्गानि, मासाश्चार्धमासाश्च पर्वाणि, अहोरात्राणि प्रतिष्ठा, नक्षत्राण्यस्थीनि, नभो मांसानि, ऊवध्यं सिकताः, सिन्धवो गुदा, यकृच्च क्लोमानश्च पर्वताः, ओषधयश्च वनस्पतयश्च लोमानि, उद्यन्पूर्वार्धः, निम्लोचञ्जघनार्धः, यद्विजृम्भते-तद् विद्योतते । यद्विधूनुते-

---

विधायापरत्र तदनुवादेन सत्यत्वसर्वेशानत्वादिगुणानां विधातुं शक्यत्वात् । " अग्निहोत्रं जुहोति, दध्ना जुहोति " इत्यादिवत् । तस्मादेकविधैव शाण्डिल्यविद्या ॥ २ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये दशमकाण्डे षष्ठेऽध्याये तृतीयं ब्राह्मणम् ॥ ( १०-६-३ ) ॥

उषा वा अश्वस्य मेध्यस्य शिर इत्यादिकम्, अश्वावयवेषु विराडवयवोपासनपरं ब्राह्मणम् ॥

---

### श्रीमच्छंकराचार्यभाष्यम् ।

अस्य तु अश्वमेधकर्मसम्बधिनो विज्ञानस्य प्रयोजनं येषामश्वमेधे नाधिकारः तेषामस्मादेव विज्ञानात् तत्फलत्प्राप्तिः । " विद्यया वा कर्मणा वा तद्धैतल्लोकजिदेव " इत्येवमादिश्रुतिभ्यः कर्मविषयत्वमेव विज्ञानस्येति चेन्न; " योऽश्वमेधेन यजते य उ चैनमेवं वेद " इति विकल्पश्रुतेः । विद्याप्रकरणे चाम्नानात् कर्मांतरे च संपादनदर्शनात् विज्ञानात् तत्फलप्राप्तिरस्तीत्यवगम्यते ।

---

१-अस्य " उषा वाऽश्वस्य, नैवेह किञ्चन " इति ब्राह्मण द्वयस्य सायणाचार्यैर्भाष्यं न कृतं वार्तिककारेण उपबृंहणपुरःसरं प्रपंचितत्वात् इति तैरेवावोचि । अतोऽत्र एतस्मिन्ब्राह्मणद्वये श्रीमच्छंकराचार्यकृतं भाष्यं तदीयबृहदारण्यकभाष्यादुद्धृत्य संगृहीतं । अस्य ब्राह्मणद्वयस्य माध्यंदिनपाठे काण्वपाठे च सार्वात्म्येन पाठसाम्यं, क्वचित् कण्डिकाभेदेन एकद्विपदाधिक्येन अस्ति किंचित् वैलक्षण्यं, तथापि न तद्विरुध्यते इति ध्येयम् ।



२२०

पश्चान्महिमाऽन्वजायत तस्यापरे समुद्रे योनिरेतौ वाऽअश्वं महिमानाव-भितः सम्बभूवतुर्हयो भूत्वा देवानवहद्वाजी गन्धर्वानर्वाऽसुरानश्वो मनुष्यान्त्समुद्रऽएवास्य बन्धुः समुद्रो योनिः ॥ १ ॥

## इति चतुर्थप्रपाठके सप्तमं ब्राह्मणम् ॥ १०-४-७ ॥ ( ६-४. ) ॥

---

तत्स्तनयति । यन्मेहति–तद्वर्षति । वागेवास्य वाक्, अहर्वा अश्वं पुरस्तान्महिमाऽन्वजायत । तस्य पूर्वे समुद्रे योनिः । रात्रिरेनं पश्चान्महिमाऽन्वजायत । तस्यापरे समुद्रे योनिः । एतौ वा अश्वं महिमानावभितः सम्बभूवतुः । हयो भूत्वा देवानवहद् । वाजी गन्धर्वान् । अर्वाऽसुरान् । अश्वो मनुष्यान् । समुद्र एवास्य बन्धुः, समुद्रो योनिः ॥ १ ॥

---

सर्वेषां च कर्मणां परं कर्म अश्वमेधः समष्टिव्यष्टिप्राप्तिफलत्वात् । तस्य चेह ब्रह्मविद्याप्रारंभऽआम्नानं सर्व-कर्मणां संसारविषयत्वप्रदर्शनार्थं । तथाच दर्शयिष्यति फलं अशानाया मृत्युभात्रं । न नित्यानां संसारविषय-फलत्वमितिचेत्; न सर्वकर्मफलोपसंहारश्रुतेः । सर्वं हि पत्नीसंबद्धं कर्म । "जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यादथ कर्म कुर्वीयेत्येतावान्वै कामः" ( बृ. उप. १४ । १ । २ । १७ ) इति निसर्गत एव सर्वे कर्मणां काम्यत्वं दर्शयित्वा पुत्रकर्मापरविद्यानां च "त्रयो वाव लोका मनुष्यलोकः पितृलोको देवलोकः" ( बृ. १४ । १ । ३ । १६ । ) इति फलं दर्शयित्वा अनात्मकतां चांते उपसंहरिष्यति । " त्रयं वा इदं नाम रूपं कर्म " ( बृ. १४ । ४ । १ ) इति सर्वकर्मणां फलं व्याकृतं संसार एवेति ।

इदमेव त्रयं प्रागुत्पत्तेस्तद्व्याकृतमासीत् । तदेव पुनः सर्वप्राणिकर्मवशात् व्याक्रियते । बीजादिव वृक्षः । सोऽयं व्याकृताव्याकृतरूपः संसारः अविद्या विषयः । क्रियाकारकफलात्मकतया आत्मरूपत्वेनाध्यारोपितः अविद्ययैव मूर्तामूर्ततद्वासनात्मकः । अतो विलक्षणोऽनामरूपकर्मात्मकोऽद्वयो नित्यशुद्धबुद्धमुक्तस्वभावोऽपि क्रियाकारकफलभेदादिविपर्ययेणावभासते । अतोऽस्मात्क्रियाकारकफलभेदस्वरूपात् एतावदिदमिति साध्यसा-धनरूपाद्विरक्तस्य कामादिदोषकर्मबीजभूताविद्यानिवृत्तये रज्ज्वामिव सर्पविज्ञानापनयाय ब्रह्मविद्याऽऽरभ्यते ।

तत्र तावदश्वमेधविज्ञानाय " उषा वा अश्वस्य " इत्यादि । तत्राश्वविषयमेव दर्शनमुच्यते । प्राधान्याद-श्वस्य । प्राधान्यं च–तन्नामांकितत्वात्क्रतोः प्रजापत्यत्वाच्च ।

उषा इति । ब्राह्मो मुहूर्त उषा । वै शब्दः स्मारणार्थः । प्रसिद्धं कालं स्मारयति । शिरः प्राधान्यात् । शिरश्च प्रधानं शरीरावयवानां । ' अश्वस्य मेध्यस्य ' मेधार्हस्य यज्ञियस्य उषा शिर इति सम्बन्धः । कर्मांगस्य पशोः संस्कर्तव्यत्वात् कालादिदृष्टयः शिरआदिषु क्षिप्यंते । प्राजापत्यत्वं च प्रजापतिदृष्टयध्यारोपणात् । काल-लोकदेवतात्वाध्यारोपणं च प्रजापतित्वकरणं पशोः । एवंरूपो हि प्रजापतिः विष्णुत्वादिकरणमिव प्रतिमादौ ।

सूर्यश्चक्षुः शिरसोऽनंतरत्वात् सूर्याधिदैवतत्वाच्च । ' वातः प्राणः ' वायुस्वाभाव्यात् । ' व्यात्तमग्निर्वैश्वानरः '

---

१–काण्वशाखीयपाठानुसारेणेति बोद्धव्यम् ।

व्यात्तं विवृतं मुखं अग्निर्वैश्वानरः वैश्वानर इत्यग्नेर्विशेषणं । वैश्वानरो नामाऽग्निर्विवृतं मुखमित्यर्थः । मुखस्याग्निदैवतत्वात् संवत्सर आत्मा संवत्सरो द्वादशमासस्त्रयोदशमासो वा । आत्मा शरीरं । कालावयवानां च संवत्सरः शरीरं शरीरं चात्मा । " मध्यं ह्येषामंगानामात्मा " इति श्रुतेः । ' अश्वस्य मेध्यस्य ' इति सर्वत्रानुषंगार्थं पुनर्वचनं । द्यौः पृष्ठं ऊर्ध्वत्वसामान्यात् । ' अंतरिक्षमुदरं ' सुषिरत्वसामान्यात् । 'पृथिवी पाजस्यं' पादस्यमिति वर्णव्यत्ययेन पादासनस्थानमित्यर्थः । ' दिशः पार्श्वे ' दिशश्चतस्रोऽपि पार्श्वे पार्श्वेन दिशां संबंधात् । पार्श्वयोर्दिशां च संख्यावैषम्यादयुक्तमिति चेन्न सर्वमुखत्वोपपत्तेरीश्वरस्य पार्श्वाभ्यामेव सर्वदिशां संबंधाददोषः । ' अवांतरदिशः पर्शवः ' अवांतरदिशः आग्नेय्याद्याः पर्शवः पार्श्वास्थीनि । 'ऋतवोऽङ्गानि' संवत्सरावयवत्वात् अंगसाधर्म्यात् । 'मासाश्चार्द्धमासाश्च पर्वाणि' पर्वाणि संधयः–संधिसामान्यात् । ' अहोरात्राणि प्रतिष्ठा ' बहुवचनात् प्राजापत्यदैवपित्र्यमानुषाणि प्रतिष्ठाः पादाः प्रतितिष्ठति एतैरिति । अहोरात्रैर्हि कालात्मा प्रतितिष्ठति अश्वश्च पादैः ' नक्षत्राण्यस्थीनि ' शुक्लत्वसामान्यात् । ' नभो मांसानि ' नभो नभस्था मेघाः अंतरिक्षस्योदरत्वोक्तेर्मांसानि–उदकरुधिरसेचनसामान्यात् । ' ऊवध्यं सिकताः '–ऊवध्यमुदरस्थमर्द्धजीर्णमशनं सिकताः विश्लिष्टावयवत्वसामान्यात् । ' सिंधवो गुदाः ' स्यंदनसामान्यान्नद्यो गुदानाड्यो बहुवचनाच्च । 'यकृच्च क्लोमानश्च पर्वताः ' यकृच्च क्लोमानश्च हृदयस्याधस्तात् दक्षिणोत्तरौ मांसखंडौ क्लोमान इति नित्यं बहुवचनमेकस्मिन्नेव पर्वताः काठिन्यादुच्छ्रितत्वाच्च । ' ओषधयश्च वनस्पतयश्च लोमानि ' ओषधयश्च क्षुद्राः स्थावराः वनस्पतयो महांतः लोमानि केशाश्च यथासंभवं । ' उद्यन् पूर्वार्धः ' उद्यन् उद्गच्छन् भवति सविता आमध्याह्नात् अश्वस्य पूर्वार्धो नाभेरूर्ध्वमित्यर्थः । ' निम्लोचन् जघनार्द्धः ' अस्तं यन् आ मध्यान्हात् जघनार्द्धो अपरार्द्धः पूर्वापरत्वसाधर्म्यात् । ' यत् विजृंभते तद्विद्योतते ' यद्विजृंभते गात्राणि विनामयति विक्षिपति तद्विद्योतते विद्योतनं मुखनेत्रविदारणसामान्यात् । ' यद्विधूनुते तत्स्तनयति ' यद्विधूनुते गात्राणि कंपयति तत्स्तनयति गर्जनशब्दसामान्यात् ॥

' यन्मेहति तद्वर्षति ' यत् मेहति मूत्रं करोत्यश्वः–तद्वर्षति वर्षणं तत् सेचनसामान्यात् । वागेवास्य वाक् ' वागेव शब्द एव अस्याश्वस्य वाक् इति नात्र कल्पनेत्यर्थः ॥ ( काण्व पाठानुसारेणात्र प्रथमा कंडिका समाप्ता )

' अहर्वा अश्वं ' अहर्वा इति । सौवर्णराजतौ महिमाऽऽख्यौ ग्रहौ अश्वस्य अग्रतः पृष्ठतश्च स्थाप्येते तद्विषयमिदं दर्शनम । अहः सौवर्णो ग्रहः दीप्तिसामान्याद्वै । ' अहरश्वं पुरस्तान्महिमाऽन्वजायत ' इति कथं अश्वस्य प्रजापतित्वात् प्रजापतिर्हि आदित्यलक्षणोऽन्हा लक्ष्यते । अश्वं लक्षयित्वा अजायत सौवर्णो महिमाग्रहो वृक्षमनुविद्योतते विद्युदिति यद्वत् । ' तस्य पूर्वे समुद्रे योनिः ' तस्य ग्रहस्य पूर्वे पूर्वैः समुद्रे समुद्रः योनिः–विभक्तिव्यत्ययेन योनिरित्यासादनस्थानम् । ' रात्रिरेनं पश्चान्महिमाऽन्वजायत तस्यापरे समुद्रे योनिः ' तथा रात्री राजतो ग्रहो वर्णसामान्यात् जघन्यत्वसामान्याद्वा ' एनम् ' अश्वं पश्चात्पृष्ठतो महिमाऽन्वजायत तस्यापरे समुद्रे योनिः महिमा महत्वात् । ' एतौ वा अश्वं महिमानावभितः संबभूवतुः ' अश्वस्य हि विभूतिरेषा यत्सौवर्णो राजतश्च ग्रहावुभयतः स्थाप्येते तावेतौ वै महिमानौ महिमाख्यौ ग्रहौ अश्वमभितः संबभूवतुः उक्तलक्षणावेव संभूतौ । इत्थमसावश्वो महत्वयुक्त इति पुनर्वचनं स्तुत्यर्थं । तथाच ' हयो भूत्वा ' इत्यादि स्तुत्यर्थमेव । ' हयः ' " हिनोतेर्गतिकर्मणः " विशिष्टगतिरित्यर्थः । जातिविशेषो वा । ' देवानवहत् ' देवत्वमगमयन् प्रजापतित्वात् । देवानां वा वोढा अभवत् ।

---

१–द्यौष्पृष्ठमिति माध्यंदिनीयानां पाठः । २–घना मेघाः । ३–विदारणं विद्युत्स्फुरणं ॥

नैवेह किञ्चनाग्रऽआसीत् । ( न्मृ ) मृत्युनैवेदमावृतमासीदशनायया॒ऽश- नाया हि मृत्युस्तन्मनोऽकुरुतात्मन्वी स्यामिति सोऽर्चन्नचरत्तस्यार्चतऽ आपोऽजायन्तार्चते वै मे कमभूदिति तदेवार्क्यस्यार्कत्वं कुँ ह वाऽअस्मै भवति यऽएवमेतदर्क्यस्यार्कत्वं वेद ॥ १ ॥

उपास्यस्य हिरण्यगर्भस्य स्वरूपप्रतिपादकं ब्राह्मणम् ।

नैवेह किं चनाग्रऽआसीत्—मृत्युनैवेदमावृतमासीत् । अशनाययाऽशनाया हि मृत्युस्तन्मनो ऽकुरुत—आत्मन्वी स्यामिति । सोऽर्चन्नचरत् । तस्यार्चत अपोऽजायन्त । अर्चते वै मे कमभूदिति । तदेवार्क्यस्यार्कत्वम् । कं ह वा अस्मै भवति—य एवमेतदर्क्यस्यार्कत्वं वेद ॥ १ ॥

" नैवेह किञ्चनाग्र आसीत् " इत्यादिकम्, उपास्यहिरण्यगर्भस्वरूपप्रतिपादनरं ब्राह्मणं चत्येतद्वयं काण्व- शाखानुसारेण बृहदारण्यकोपनिषदादौ प्रपञ्चेन वार्त्तिककारेणोपबृंहितं व्याख्यातमिति नेह पुनरुच्यते, पाठ- साम्यात्; तत् तत एवावधारणीयम् । अक्षरार्थस्तु उत्तरत्र बृहदारण्ये ॥

ननु—निंदैव वाहनत्वं । नैष दोषः, वाहनत्वं स्वाभाविकमश्वस्य स्वाभाविकत्वाद्दुच्छ्रायप्राप्तिर्देवादिसंबंधो- ऽश्वस्येति स्तुतिरेवैषा । तथा वाज्यादयो जातिविशेषाः । वाजी भूत्वा गंधर्वानवहत् इत्यनुषंगः । तथा अर्वा भूत्वा असुरान् । अश्वो भूत्वा मनुष्यान् । ' समुद्र एवास्य बंधुः ' समुद्र एवेति परमात्मा बंधुर्बन्धनं बध्यते- ऽस्मिन्निति बंधुः । ' समुद्रो योनिः ' योनिः कारणमुत्पत्तिं प्रति । एवमसौ शुद्धयोनिः शुद्धस्थितिः स्तूयते । " अप्सुयोनिर्वा अश्वः " इति श्रुतेः । प्रसिद्ध एव वा समुद्रो योनिः ॥ ( काण्वपाठानुसारेण अत्र द्वितीया कंडिका समाप्ता ॥ २ ॥ ) ॥ १ ॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यैः परमहंसपरिव्राजकाचार्यैः श्रीशंकरभगवद्भिः ( काण्वपाठानु- सारिबृहदारण्यकादौ कृतं ) अत्रोद्धृतं " उषा वा अश्वस्य मेध्यस्य " इत्यस्य ब्राह्मणस्य भाष्यं समाप्तम् ॥ ( १०–६–४ ) ॥

नैवेहेति । अथाग्नेरश्वमेधोपयोगिकस्योत्पत्तिरुच्यते । तद्विषयदर्शनविवक्षयैवोत्पत्तिः स्तुत्यर्था । " नैवेह किंचनाग्र आसीत् " इह संसारमंडले—किञ्चन किञ्चिदपि नामरूपप्रविभक्तविशेषं नैवासीन्न बभूव अग्रे प्राक् उत्पत्तेर्मनआदेः किं शून्यमेव बभूव शून्यमेव स्यात् " नैवेह किञ्चन " इति श्रुतेः । न कार्यं कारणं वा आसीत्—उत्पत्तेश्च उत्पद्यते हि घटः—अतः प्रागुत्पत्तेः घटस्य नास्तित्वं । ननु—कारणस्य न नास्तित्वं मृत्पिंडादि- दर्शनात् । यन्नोपलभ्यते तस्यैव नास्तिता अस्तु कार्यस्य । नतु कारणस्य उपलभ्यमानत्वात् न प्रागुत्पत्तेः सर्वा- नुपलंभात् । अनुपलब्धिश्चेत; अभावहेतुः सर्वस्य जगतः प्रागुत्पत्तेर्न कारणं कार्यं वा उपलभ्यते तस्मात्सर्वस्यै- वाभावोऽस्तु, ॥

न, " मृत्युनैवेदमावृतमासीत् "—इति श्रुतेः । यदि हि किंचिदपि नाऽऽसीत्—येनाव्रियते यच्चाव्रियते

१–तार्किकानां शंका । २–शून्यवादिबौद्धानामेतत् । ३–भाष्यकर्तां सिद्धांतग्रन्थः ।

तदा नावक्ष्यत् " मृत्युनैवेदमावृतम् " इति । नहि भवति गगनकुसुमपच्छन्नो वंध्यापुत्र इति । ब्रवीति च– " मृत्युनैवेदमावृतमासीन् " इति । तस्मात् येनावृतं कारणेन यच्चावृतं कार्यं प्रागुत्पत्तेस्तदुभयमासीत् श्रुतेः प्रामाण्यादनुमेयत्वाच्च ' अनुमीयते च प्रागुत्पत्तेः कार्यकारणयोरस्तित्वं । कार्यस्य हि सतो जायमानस्य कारणे सति उत्पत्तिदर्शनात् । असति चादर्शनात् । जगतोऽपि प्रागुत्पत्तेः कारणास्तित्वमनुमीयते घटादिकारणास्तित्ववत् ॥

घटादिकारणस्यापि असत्त्वमेवानुपमृद्य मृत्पिंडादिकं घटाद्यनुत्पत्तेरिति चेत्; न, मृदादेः कारणत्वात् ।' मृत्सुवर्णादि हि तत्र कारणं घटरुचकादेः–न पिण्डाकारविशेषः । तदभावेऽभावात् । असत्यपि पिण्डाकारविशेषे मृत्सुवर्णादिकारणद्रव्यमात्रादेव घटरुचकादिकार्योत्पत्तिर्दृश्यते । तस्मान्न पिंडाकारविशेषो घटरुचकादिकारणं । असति तु मृत्सुवर्णादिद्रव्ये घटरुचकादिर्न जायत इति मृत्सुवर्णादिद्रव्यमेव कारणं न तु पिण्डाकारविशेषः । सर्वं हि कारणं कार्यमुत्पादयत् पूर्वोत्पन्नस्यात्मकार्यस्य तिरोधानं कुर्वत् कार्यान्तरमुत्पादयति । एकस्मिन् कारणे युगपदनेककार्यविरोधात् । न च–पूर्वकार्योपमर्दे कारणस्य स्वात्मोपमर्दो भवति । तस्मात्पिण्डाद्युपमर्दे कार्योत्पत्तिदर्शनमहेतुः प्रागुत्पत्तेः कारणासत्त्वे । पिंडादिव्यतिरेकेण मृदादेरसत्त्वादयुक्तमितिचेत् पिंडादिपूर्वकार्योपमर्दे मृदादिकारणं नोपपद्यते घटादिकार्यान्तरेऽप्यनुवर्तेत इत्येतदयुक्तं । पिंडघटादिव्यतिरेकेण मृदादिकारणस्यानुपलंभादिति चेत्; न, मृदादिकारणानां घटाद्युत्पत्तौ पिंडादिनिवृत्तावनुवृत्तिदर्शनात् ।

सादृश्यादन्वयदर्शनं न कारणानुवृत्तेरिति चेत्; न, पिंडादिगतानां मृदाद्यवयवानामेव घटादौ प्रत्यक्षत्वे अनुमानाभासात् सादृश्यादिकल्पनानुपपत्तेः । नच प्रत्यक्षानुमानयोर्विरुद्धाव्यभिचारिता । प्रत्यक्षपूर्वकत्वादनुमानस्य सर्वत्रैवानाश्वासप्रसंगात् । यदि च क्षणिकं सर्वं तदेवेदं इति गम्यमानं तद्बुद्धेरप्यन्यतद्बुद्ध्यपेक्षत्वे तस्याप्यन्यतद्बुद्ध्यपेक्षमित्यनवस्थायां तत्सदृशमिदमित्यस्या अपि बुद्धेर्मृषात्वात् सर्वत्रानाश्वासतैव । तदिदं बुद्ध्योरपि कर्त्रभावे संबन्धानुपपत्तिः । सादृश्यात्तत्संबंध इति चेत्; न, तदिदं बुद्ध्योरितरेतरविषयत्वानुपपत्तेः । असति च इतरेतरविषयत्वे सादृश्यग्रहणानुपपत्तिः । असत्येव सादृश्ये तद्बुद्धिरिति चेत्; न, तदिदं बुद्ध्योरपि सादृश्य बुद्धिवदसद्विषयत्वप्रसंगात् ।

असद्विषयत्वमेव सर्वबुद्धीनामस्त्विति चेत्; न, बुद्धिबुद्धेरपि असद्विषयत्वप्रसंगात् । तदप्यस्त्विति चेत्; न, सर्वबुद्धीनां मृषात्वे असत्यबुद्ध्यनुपपत्तेः । तस्मादसदेतत् सादृश्यात्तद्बुद्धिरिति । अतः सिद्धः प्राक्कार्योत्पत्तेः कारणसद्भावः ।

कार्यस्य च अभिव्यक्तिलिंगत्वात् । कार्यस्य च सद्भावः प्रागुत्पत्तेः सिद्धः । कथं ? अभिव्यक्तिलिंगत्वात् अभिव्यक्तिर्लिङ्गमस्येति । अभिव्यक्तिः साक्षाद्विज्ञानालम्बनत्वप्राप्तिः । यद्धि लोके प्रावृतं तमआदिना घटादि वस्तु तदालोकादिना प्रावरणतिरस्कारेण विज्ञानविषयत्वं प्राप्नुवत् प्राक्सद्भावं न व्यभिचरति । तथा इदमपि जगत् प्रागुत्पत्तेरित्यवगच्छामः । नहि अविद्यमानो घट उदितेऽप्यादित्ये उपलभ्यते ।

न, ते अविद्यमानत्वाभावात् उपलभ्येतैव इति चेत्; नहि तव घटादिकार्यं कदाचिदपि अविद्यमानं । इत्युदित आदित्य उपलभ्येतैव मृत्पिण्डेऽसन्निहिते तमआद्यावरणे चासति ।

विद्यमानत्वादिति चेत्; न, द्विविधत्वादावरणस्य । घटादिकार्यस्य द्विविधं ह्यावरणं मृदादेरभिव्यक्तस्य

१–शंकाग्रंथः । २–इदमनुमानं बौद्धानाम् । ३–एतदपि बौद्धानाम् । ४–इदमपि बौद्धानाम् । ५–इदं विज्ञानवादिबौद्धानाम् । ६–इदं शून्यवादिबौद्धानाम् ।

तमःकुड्यादि प्राङ्मृदोऽभिव्यक्तेर्मृदाद्यवयवानां पिंडादिकार्यांतररूपेण संस्थानं । तस्मात्प्रागुत्पत्तेर्विद्यमानस्यैव घटादिकार्यस्य आवृतत्वादनुपलब्धिः ।

नष्टोत्पन्नभावाभावशब्दप्रत्ययभेदस्तु अभिव्यक्तितिरोभावयोर्द्विविधत्वापेक्षः । पिंडकपालादेरावरणवैलक्षण्याद्-युक्तमिति चेत्; तमःकुड्यादि हि घटाद्यावरणं घटादिभिन्नदेशं दृष्टं–न तथा घटादिभिन्नदेशे दृष्टे पिंड-कपाले । तस्मात् पिंडकपालसंस्थानयोर्विद्यमानस्यैव घटस्य आवृतत्वादनुपलब्धिरिति अयुक्तमावरणधर्मवैलक्ष-ण्यात्–इति चेत्; न, क्षीरोदकादेः क्षीराद्यावरणेन एकदेशत्वदर्शनात् । घटादिकार्ये कपालचूर्णाद्यवयवानां अंतर्भावात् अनावरणत्वं इति चेत्; न, विभक्तानां कार्यांतरत्वात् आवरणत्वोपपत्तेः ।

आवरणाभाव एव यत्नः कर्तव्य इति चेत्; पिंडकपालावस्थयोः विद्यमानमेव घटादिकार्यमावृतत्वान्नोपल-भ्यत इति चेत्; घटादिकार्यार्थिना तदावरणविनाश एव यत्नः कर्तव्यः न, घटाद्युत्पत्तौ । न चैतदस्ति । तस्मादयुक्तं विद्यमानस्यैव आवृतत्वादनुपलब्धिरिति चेत्; न, अनियमात् । नहि विनाशमात्रप्रयत्नादेव घटाद्यभिव्यक्तिर्नियता ।

तमआद्यावृते घटादौ प्रदीपाद्युत्पत्तौ प्रयत्नदर्शनात् सोऽपि तमोनाशायैवेति चेत्; दीपाद्युत्पत्तावपि यः प्रयत्नः सोऽपि तमस्तिरस्करणाय तस्मिन्नष्टे घटः स्वयमेवोपलभ्यते । नहि घटे किंचिदाधीयत इति चेत्; न, प्रकाशवतो घटस्योपलभ्यमानत्वात् । यथा प्रकाशविशिष्टो घट उपलभ्यते प्रदीपकरणे न तथा प्राक् प्रदीपकरणात् । तस्मान्न, तमस्तिरस्कारायैव प्रदीपकरणं किं तर्हि प्रकाशवत्त्वाय प्रकाशवत्त्वेनैव उपलभ्यमान-त्वात् । क्वचिदावरणविनाशेऽपि यत्नः स्यात् यथा कुड्यादिविनाशे । तस्मान्न नियमोऽस्ति अभिव्यक्त्यर्थिना आवरणविनाश एव यत्नः कार्य इति ।

नियमार्थवत्त्वाच्च कारणे वर्तमानं कार्यं कार्यांतराणामावरणं इति अवोचाम । तत्र यदि पूर्वाभिव्यक्तस्य कार्यस्य पिंडस्य व्यवहितस्य वा कपालस्य विनाश एव यत्नः क्रियेत तदा विदलचूर्णाद्यपि कार्यं जायेत । तेनाप्यावृतो घटो नोपलभ्यत इति पुनः प्रयत्नांतरापेक्षैव । तस्मात् घटाद्यभिव्यक्त्यर्थिनो नियत एव कारक-व्यापारोऽर्थवान् । तस्मात्प्रागुत्पत्तेरपि सदेव कार्यं ।

अतीतानागतप्रत्ययभेदाच्च अतीतो घटः अनागतो घटः इत्येतयोश्च प्रत्यययोः वर्तमानघटप्रत्ययवत् न निर्विषयत्वं युक्तं अनागतार्थिप्रवृत्तेश्च । नहि असति अर्थितया प्रवृत्तिर्लोके दृष्टा । योगिनां च अतीताना-गतज्ञानस्य सत्यत्वात् । असंश्चेत् भविष्यद्घट ऐश्वरं भविष्यद्घटविषयं प्रत्यक्षज्ञानं मिथ्या स्यात् । न च प्रत्यक्षमुपचर्यते । घटसद्भावे हि अनुमानमवोचाम । विप्रतिषेधाच्च यदि घटो भविष्यतीति कुलालादिषु व्याप्रिय-माणेषु घटार्थं प्रमाणेन निश्चितं । येन च कालेन घटस्य संबंधो भविष्यतीत्युच्यते तस्मिन्नेव काले घटो अस-न्निति विप्रतिषिद्धमभिधीयते ।

भविष्यन् घटोऽसन्निति न भविष्यतीत्यर्थः । अयं घटो न वर्तत इति यद्वत् । अथ प्रागुत्पत्तेर्घटः असन्नित्यु-च्येत घटार्थं प्रवृत्तेषु कुलालादिषु तत्र यथा व्यापाररूपेण वर्तमानास्तावत्कुलालादयः तथा घटो न वर्तत इति असच्छब्दस्यार्थश्चेत्; न विरुध्यते कस्मात् स्वेन हि भविष्यद्रूपेण घटो वर्तते नहि पिंडस्य वर्तमानता कपालस्य वा घटस्य भवति नच तयोर्भविष्यत्ता घटस्य तस्मात्कुलालादिव्यापारवर्तमानतायां प्रागुत्पत्तेर्घटोऽसन्निति न विरुध्यते यदि घटस्य यत्स्वं भविष्यत्ताकार्यरूपं तत् प्रतिषिध्येत तत्प्रतिषेधे विरोधः स्यात् । ननु तद्भवान्

१–शंका ग्रंथः ।

प्रतिषेधति । नच सर्वेषां क्रियावतामेकैव वर्तमानता भविष्यत्त्वं वा अपि च चतुर्विधानामभावानां घटस्य इतरेतराभावो घटादन्यो दृष्टो यथा घटाभावः पटादिरेव । न घटस्वरूपमेव ।

नच घटाभावः सन् पटो अभावात्मकः किं तर्हि भावरूप एव, एवं घटस्य प्राक्प्रध्वंसात्यंताभावानामपि घटादन्यत्वं स्यात्—घटेन व्यपदिश्यमानत्वात् घटस्येतरेतराभाववत् । तथैव भावात्मकता अभावानां एवं चासति घटस्य प्रागभाव इति न घटस्वरूपमेव प्रागुत्पत्तेर्नास्ति ।

अथ घटस्य प्रागभाव इति घटस्य यत्स्वरूपं तदेवोच्येत घटस्येति व्यपदेशानुपपत्तिः । अथ कल्पयित्वा व्यपदिश्येत शिलापुत्रकस्य शरीरमिति यद्वत् । तथाऽपि घटस्य प्रागभाव इति कल्पितस्यैवाभावस्य घटेन व्यपदेशो न घटस्वरूपस्यैव । अथार्थांतरं घटात् घटस्यांभाव इति उक्तोत्तरमेतत् ॥

किंचान्यत् प्रागुत्पत्तेः शशविषाणवत् अभावभूतस्य घटस्य स्वकारणसत्तासंबंधानुपपत्तिः द्विनिष्ठत्वात्संबंधस्य । अयुतसिद्धानामदोष इति चेत्; न, भावाभावयोरयुतसिद्धत्वानुपपत्तेः । भावभूतयोर्हि युतसिद्धता अयुतसिद्धता वा स्यात्, नतु भावाभावयोः अभावयोर्वा तस्मात् सदेव कार्यं प्रागुत्पत्तेः इति सिद्धम् ॥

किं लक्षणेन मृत्युना आवृतमित्यत आह । अशनायया अशितुमिच्छा अशनाया सैव मृत्योर्लक्षणं । तया लक्षितेन मृत्युना अशनायया । कथमशनाया मृत्युरिति उच्यते 'अशनाया हि मृत्युः' हिशब्देन प्रसिद्धं हेतुमवद्योतयति यो हि अशितुमिच्छति स अशनायानन्तरमेव हंति जंतून् । तेन असौ अशनायया लक्ष्यते 'मृत्युः इति अशनाया हि'—इत्याह—

बुध्यात्मनो अशनाया धर्म इति स एष बुध्यवस्थो हिरण्यगर्भो मृत्युरित्युच्यते । तेन मृत्युना इदं कार्यमावृतमासीत् । यथा पिंडावस्थया मृदा घटादय आवृताः स्युः इति तद्वत् ।

'तन्मनोऽकुरुत' तदिति मनसो निर्देशः । स प्रकृतो मृत्युः वक्ष्यमाणकार्यसिसृक्षया तत्कार्यालोचनक्षमं मनःशब्दवाच्यं संकल्पादिलक्षणं अन्तःकरणमकुरुत कृतवान् ।

केनाभिप्रायेण मनोऽकरोदिति उच्यते—'आत्मन्वी स्यामिति' । आत्मन्वी आत्मवान् स्यां भवेयं, अहमनेनात्मना मनसा मनस्वी स्यामित्यभिप्रायः । 'सः' प्रजापतिः अभिव्यक्तेन मनसा समनस्कः सन् 'अर्चन्' अर्चयन् पूजयन् आत्मानमेव कृतार्थोऽस्मीति 'अचरत्' चरणमकरोत् । 'तस्य' प्रजापतेः 'अर्चतः' पूजयतः 'आपः' रसात्मिकाः पूजांगभूताः 'अजायंत' उत्पन्नाः ।

अत्र आकाशप्रभृतीनां त्रयाणामुत्पत्त्यनंतरं इति वक्तव्यं श्रुत्यंतरसामर्थ्यात् द्विकल्पासंभवाच्च सृष्टिक्रमस्य ॥
'अर्चते' पूजां कुर्वते 'वै' 'मे' मह्यं 'कं' उदकं 'अभूत्' 'इति' एवममन्यत् ॥
यस्मान्मृत्युः 'तदेव' तस्मादेव हेतोः 'अर्कस्य' अग्नेरश्वमेधक्रतुपयोगिकस्य 'अर्कत्वम्' अर्कत्वे हेतुरित्यर्थः । अग्नेरर्कनामनिर्वचनमेतत् ।

अर्चनात् सुखहेतुपूजाकरणात् अप्संबंधाच्च अग्नेः एतत् गौणं नाम अर्क इति ॥
'यः एवं' यथोक्तं 'अर्कस्यार्कत्वंवेद' जानाति—'कं' उदकं सुखं वा नाम्नसामान्याद् । 'ह वा' इत्यवधारणार्थौ भवत्येवेति । 'अस्मै' एवंविद एवंविदर्थं भवति ॥ १ ॥

( द्वा ) आपो वाऽअर्कः । (स्त) तद्यदपाᳬं शरऽ आसीत्तत्समहन्यत सा पृथिव्यभवत्तस्यामश्राम्यत्तस्य श्रान्तस्य तप्तस्य तेजो रसो निरवर्तताग्निः २॥

स त्रेधाऽऽत्मानं व्यकुरुत । ( ता ) आदित्यं तृतीयं वायुं तृतीयᳬं सऽ एष प्राणस्त्रेधा विहितस्तस्य प्राची दिक्छिरोऽसौ चासौ चेर्मावथास्य प्रतीची दिक्पुच्छमसौ चासौ च सक्थ्यौ दक्षिणा चोदीची च पार्श्वे द्यौष्पृष्ठमन्तरिक्षमुदरमियमुरः सऽएषोऽप्सु प्रतिष्ठितो यत्र क्व चैति तदेव प्रतितिष्ठत्येवं विद्वान् ॥ ३ ॥

---

आपो वाऽअर्कः । तद् यदपां शर आसीत्—तत्समहन्यत । सा पृथिव्यभवत् । तस्यामश्राम्यत्—तस्य श्रान्तस्य तप्तस्य तेजो रसो निरवर्तताग्निः ॥ २ ॥

स त्रेधाऽऽत्मानं व्यकुरुत—आदित्यं तृतीयम्, वायुं तृतीयम् । स एष प्राणस्त्रेधा विहितस्य प्राची दिक् शिरः । असौ चासौ चेर्मौ । अथास्य प्रतीची दिक् पुच्छम् । असौ चासौ च सक्थ्यौ । दक्षिणा चोदीची च पार्श्वे । द्यौष्पृष्ठम् । अन्तरिक्षमुदरम् । इयमुरः । स एषोऽप्सु प्रतिष्ठितो यत्र क्व चैति—तदेव प्रतितिष्ठति । एवं विद्वान् ॥ ३ ॥

---

"आपो वा अर्कः"—कः पुनरसावर्क इति उच्यते । आपो वै अर्चनांगभूताः ता एवार्कः अग्नेरर्कस्य हेतुत्वात् । अप्सु चाग्निः प्रतिष्ठित इति । न पुनः साक्षादेवार्कस्ताः । तासामप्रकरणात् अग्नेश्च प्रकरणं, वक्ष्यति च—"अयमग्निरर्क इति" । 'तत्' तत्र 'यदपां शरः' इव शरो दध्न इव मंडभूतम् 'आसीत्'—'तत्समहन्यत' संघातमापद्यत तेजसा बह्यान्तः पच्यमानं लिंगव्यत्ययेन वा य अपां शरः स समहन्यतेति । 'सा पृथिवी अभवत्' स संघातः येयं पृथिवी सा अभवत् । ताभ्योऽद्भ्यः अंडमभिनिर्वृतमित्यर्थः । 'तस्यां' पृथिव्यामुत्पादितायां स मृत्युः प्रजापतिः 'अश्राम्यत्' श्रमयुक्तो बभूव । सर्वो हि लोकः कार्यं कृत्वा श्राम्यति । प्रजापतेश्च तन्महत्कार्यं यत्पृथिवीसर्गः । किं तस्य श्रांतस्य इत्युच्यते—'तस्य श्रांतस्य तप्तस्य' खिन्नस्य 'तेजो रसः' तेज एव रसस्तेजोरसः रसःसारः 'निरवर्तत' प्रजापतिशरीरान्निष्क्रांत इत्यर्थः । कोऽसौ निष्क्रांतः 'अग्निः' स अंडस्यांतर्विराट् प्रजापतिः प्रथमजः कार्यकारणसंघातवान् जातः । "स वै शरीरी प्रथमः"—इति स्मरणात् ॥ २ ॥

'स त्रेधाऽऽत्मानं' स च जातः प्रजापतिः—त्रेधा त्रिप्रकारं आत्मानं स्वयमेव कार्यकारणसंघातं 'व्यकुरुत' व्यभजत् । इत्येतत्कथं त्रेधेत्याह—'आदित्यं तृतीयं' अग्निवाय्वपेक्षया त्रयाणां पूरणं अकुरुतेत्यनुवर्तते । तथा अग्न्यादित्यापेक्षया 'वायुं तृतीयं' तथा वाय्वादित्यापेक्षया अग्निं तृतीयमिति द्रष्टव्यं । सामर्थ्यस्य तुल्यत्वात् त्रयाणां संख्यापूरणत्वे । 'स एष प्राणः' सर्वभूतानामात्माऽपि अग्निवाय्वादित्यरूपेण विशेषतः स्वेनैव मृत्य्वात्मना त्रेधा विहितः' विभक्तो न विराट्स्वरूपोपमर्दनेन । तस्यास्य प्रथमजस्याग्नेरश्वमेधोपयोगिकस्यार्कस्य विराजश्चित्यात्मकस्याश्वस्येव दर्शनमुच्यते । सर्वा हि पूर्वोक्ता उत्पत्तिः अस्य स्तुत्यर्था इत्यवोचाम ।

( न्त्सो ) सोऽकामयत । द्वितीयो मऽआत्मा जायेतेति स मनसा व्वाचं मिथुनर्ठं समभवदशनाया मृत्युस्तद्यद्रेत ऽआसीत्स संव्वत्सरोऽभवन्न ह पुरा ततः संव्वत्सरऽ आस तमेतावन्तं कालमबिभर्य्यावान्संव्वत्सरस्तमेतावतः कालस्य परस्तादसृजत तं जातमभिव्व्याददात्सभाणकरोत्सैव व्वागभवत् ॥ ४ ॥

---

सोऽकामयत–द्वितीयो म आत्मा जायेतेति । स मनसा वाचं मिथुनं समभवत्–अशनाया मृत्युः । तद् यद्रेत आसीत् । स संवत्सरोऽभवत् । न ह पुरा ततः संवत्सर आस । तमेतावन्तं कालमबिभर्यावान्संवत्सरः । तमेतावतः कालस्य परस्तादसृजत । तं जातमभिव्याददात् । स भाणकरोत् । सैव वागभवत् ॥ ४ ॥

---

इत्थमसौ शुद्धजन्मेति । 'तस्य प्राची दिक्शिरः' विशिष्टत्वसामान्यात् 'असौ चासौ च' ऐशान्याग्नेय्यौ–'ईर्मौ' बाहू 'ईरयतेर्गतिकर्मणः' । 'अथास्य' अग्नेः 'प्रतीची दिक् पुच्छं' जघन्यो भागः । प्राङ्मुखस्य प्रत्यग्दिग्संबंधात् । 'असौ चासौ च' वायव्यनैर्ऋत्यौ–'सक्थ्यौ' सक्थिनी पृष्ठकोणत्वसामान्यात् । दक्षिणा चोदीची च पार्श्वे' उभयदिक्संबंधसामान्यात् । द्यौः पृष्ठमंतरिक्षमुदरम्' इति पूर्ववत् । 'इयमुरः' अधोभागसामान्यात् । 'स एषः' अग्निः प्रजापतिरूपो लोकाद्यात्मको अग्निः 'अप्सु प्रतिष्ठितः' "एवमिमे लोका अप्स्वन्तः" इति श्रुतेः । 'यत्र क्व' यस्मिन् कस्मिंश्चित् 'एति' गच्छति । 'तदेव' तत्रैव । 'प्रतितिष्ठति' स्थितिं लभते । कोऽसावेवं यथोक्तमप्सु प्रतिष्ठितत्वं अग्नेर्विद्वान् विजानन् । गुणफलमेतत् ॥ ३ ॥

'सोऽकामयत' यः असौ मृत्युः–स अबादिक्रमेण आत्मना आत्मानं अंडस्यांतःकार्यकारणसंघातवंतं विराजमग्निं असृजत "त्रेधाऽऽत्मानं व्यकुरुत (कं० ३) इत्युक्तम् ।

स किंव्यापारः सन्नसृजत इत्युच्यते–स मृत्युरकामयत कामितवान् किं ? 'द्वितीयो मे मम आत्मा जायेतेति' द्वितीयो मे मम आत्मा शरीरं येनाहं शरीरी स्याम्, स जायेतोत्पद्यत इत्येवमेतदकामयत । 'सः' एवं कामयित्वा 'मनसा' पूर्वोत्पन्नेन 'वाचं' त्रयीलक्षणां 'मिथुनं' द्वंद्वभावं 'समभवत्' संभवनं कृतवान् । मनसा त्रयीमालोचितवान् त्रयीविहितं सृष्टिक्रमं मनसा अन्वालोचयत् इत्यर्थः । क असौ अशनायया लक्षितो मृत्युः "अशनाया मृत्युः" इत्युक्तं तमेव परामृशति । अन्यत्र प्रसंगो माऽभूदिति ।

'तद्यद्रेत आसीत्' तत्तत्र मिथुने यद्रेत आसीत् प्रथमशरीरिणः प्रजापतेरुत्पत्तौ कारणं रेतो बीजं ज्ञानकर्मरूपं त्रय्यालोचनायां यत् दृष्टवानासीत् जन्मांतरकृतम् । तद्भावभावितः अपः सृष्ट्वा तेन रेतसा बीजेन अप्सु अनुप्रविश्य अंडरूपेण गर्भीभूतः 'सः' 'संवत्सरोऽभवत्' संवत्सरकालनिर्माता संवत्सरः प्रजापतिरभवत् । 'न ह पुरा' पूर्वं–'ततः'–तस्मात्संवत्सरकालनिर्मातुः प्रजापतेः–'संवत्सरः' कालः न 'आस' न बभूवह । 'तं संवत्सरकालनिर्मातारं अंतर्गर्भं प्रजापतिं 'यावान्' इह प्रसिद्धः कालः 'एतावंतं' एतावत्संवत्सरपरिमाणं 'कालं' अबिभः' भृतवान् 'मृत्युः' यावान् संवत्सर इह प्रसिद्धः ।

(तस्) सुऽऐक्षत । युदि वाऽइमुमभिमथ्ँस्ये कुनीयोऽन्नं करिष्यऽइति स तुया व्वाचा तेनात्मुनेदथ्ँ सुर्व्वमसृजत युदिदं किञ्चऽर्चो युजूथ्ँषि सामानि च्छुन्दाथ्ँसि यज्ञान्प्रजां पशून्त्स युद्यदेवासृजत तुत्तदत्तुमध्रियत सुर्व्वं वाऽअत्तीति तददितेरदितित्वथ्ँ सुर्व्वस्यात्ता भवति सुर्व्वमस्यान्नं भवति यु ऽएवुमेतददितेरदितित्वं व्वेद ॥ ५ ॥

---

स ऐक्षत । यदि वा इममभिमंस्ये । कनीयोऽन्नं करिष्य इति । स तया वाचा, तेनात्मनेदं सर्वमसृजत—यदिदं किं च ऋचः, यजूंषि, सामानि, छन्दांसि, यज्ञान्, प्रजाम्, पशून् । स यद्यदेवा-असृजत—तत्तदत्तुमध्रियत । सर्वं वा अत्तीति । तददितेरदितित्वम् । सर्वस्यात्ता भवति । सर्वमस्यान्नं भवति—य एवमेतददितेरदितित्वं वेद ॥ ५ ॥

---

ततः परस्तात् किं कृतवान् । ' तमेतावतः कालस्य ' संवत्सरमात्रस्य ' परस्तात् ' ऊर्ध्वं ' असृजत ' सृष्टवान् अंडमभिनदित्यर्थः । ' तं ' एवं कुमारं जातमग्निं प्रथमशरीरिणं अशनायावत्त्वात् मृत्युः ' अभिव्या-ददात् ' मुखविदारणं कृतवान् अत्तुम् । ' सः ' च कुमारो भीतः स्वाभाविक्या अविद्यया युक्तः ' भाण् ' इत्येवं शब्दं ' अकरोत् ' ' सैव वागभवत् ' वाक् शब्दः अभवत् ॥ ४ ॥

' स ऐक्षत ' स एवं भीतं कृतरवं कुमारं दृष्ट्वा मृत्युरैक्षत ईक्षितवान् अशनायावानपि ' यदि वा ' कदाचिद्वा ' इमं ' कुमारं ' अभिमंस्ये ' ' अभिपूर्वो मन्यतिर्हिंसार्थः ' हिंसिष्ये इत्यर्थः । ' कनीयोऽन्नं करिष्ये ' कनीयः अल्पमन्नं करिष्ये इति । एवमीक्षित्वा तद्भक्षणादुपरराम । बहु हि अन्नं कर्तव्यं दीर्घकालभक्षणाय न कनीयः तद्भक्षणे हि कनीयोऽन्नं स्यात् बीजभक्षण इव सस्याभावः । स एवं प्रयोजनं अन्नबाहुल्यमा-लोच्य ' तया ' एव त्रय्या ' वाचा ' पूर्वोक्तया ' तेन ' एव च ' आत्मना ' मनसा मिथुनीभावमालोचनं उपगम्य उपगम्य ' इदं सर्वं ' स्थावरं जंगमं च ' असृजत ' ' यदिदं किंच ' यत्किंचेदम् । किं तत् । ' ऋचो यजूंषि सामानि छंदांसि ' च सप्त गायत्र्यादीनि । स्तोत्रशस्त्रादिकर्मांगभूतान् त्रिविधान् मंत्रान् गायत्र्यादि-च्छंदोविशिष्टान् ' यज्ञांश्च ' तत्साध्यान् । प्रजाः तत्कर्त्रीः । ' पशून् ' च ग्राम्यानारण्यान् कर्मसाधनभूतान् ।

ननु—त्रय्या मिथुनीभूतयाऽसृजतेत्युक्तं ऋगादीनीह कथमसृजतेति । नैष दोषः । मनसस्तु अव्यक्तोऽयं मिथुनीभावस्त्रय्या बाह्यस्तु ऋगादीनां विद्यमानानामेव कर्मसु विनियोगभावेन व्यक्तीभावः सर्ग इति । स प्रजापतिः एवमन्नवृद्धिं बुद्ध्वा ' यत् यदेव ' क्रियां क्रियासाधनं फलं वा किंचित् ' असृजत ' ' तत्तदत्तुं ' भक्षयितुं ' अध्रियत ' धृतवान् मनः । सर्वं कृत्स्नं वै यस्मात् ' अत्तीति ' ' तत् ' तस्मात् ' अदितेः ' अदितिनाम्नो मृत्योः ' अदितित्वं ' प्रसिद्धम् । तथाच मंत्रः—" अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता० "—( वा. सं. २५ । २३ । ) इत्यादि । ' सर्वस्य ' एतस्य जगतः अन्नभूतस्य ' अत्ता ' सर्वा-त्मनैव भवति । अन्यथा विरोधात् । नहि कश्चित् सर्वस्य एको अत्ता दृश्यते तस्मात् सर्वात्मा भवतीत्यर्थः ॥

---

१—बहुवचनांतः पाठः काण्वीयः । माध्यंदिनीयो ह्येकवचनांतः ।

सोऽकामयत । भूयसा यज्ञेन भूयो यजेयेति सोऽश्राम्यत्स तपोऽतप्यत तस्य श्रान्तस्य तप्तस्य यशो वीर्यमुदक्रामत्प्राणा वै यशो वीर्यं तत्प्राणेषूत्क्रान्तेषु शरीरꣳ श्वयितुमध्रियत तस्य शरीरऽएव मन ऽआसीत् ॥ ६ ॥

( त्सो ) सोऽकामयत । मेध्यं मऽइदꣳ स्यादात्मन्व्यनेन स्यामिति ततोऽश्वः समभवद्यदश्वत्तन्मेध्यमभूदिति तदेवाश्वमेधस्याश्वमेधत्वमेष ह वाऽअश्वमेधं वेद य ऽएनमेवं वेद ॥ ७ ॥

---

सोऽकामयत–भूयसा यज्ञेन भूयो यजेयेति । सोऽश्राम्यत्, स तपोऽतप्यत । तस्य श्रान्तस्य तप्तस्य यशो वीर्यमुदक्रामत् । प्राणा वै यशः, वीर्यं तत् प्राणेषूत्क्रान्तेषु शरीरं श्वयितुमध्रियत । तस्य शरीर एव मन आसीत् ॥ ६ ॥

सोऽकामयत–मेध्यं म इदं स्यात्–आत्मन्वी अनेन स्यामिति । ततोऽश्वः समभवत् । यदश्वत् तन्मेध्यमभूदिति । तदेवाश्वमेधस्याश्वमेधत्वम् । एष ह वा अश्वमेधं वेद–य एनमेवं वेद ॥ ७ ॥

---

'सर्वमस्यान्नं भवति' अत एव सर्वात्मनो ह्यत्तुः सर्वमन्नं भवतीत्युपपद्यते । 'य एवमेतत्' यथोक्तं 'अदितेः' मृत्योः प्रजापतेः सर्वस्यादनात् 'अदितित्वं वेद तस्यैतत्फलम् ॥ ५ ॥

सोऽकामयतेति । अश्वाश्वमेधयोर्निर्वचनार्थमिदमाह–' भूयसा ' महता ' यज्ञेन ' ' भूयः ' पुनरपि ' यजेयेति ' जन्मांतरकरणापेक्षया भूयःशब्दः । स प्रजापतिर्जन्मांतरे अश्वमेधेनायजत । स तद्भावभावित एव कल्पादौ व्यावर्तत । सोऽश्वमेधक्रियाकारकफलात्मत्वेन निर्वृतः सन्नकामयत । भूयसा यज्ञेन भूयो यजेयेति एवं महत् कार्यं कामयित्वा लोकवत् ' अश्राम्यत् ' ।

' स तपोऽतप्यत ' । ' तस्य श्रांतस्य तप्तस्येति ' पूर्ववत् । 'यशोवीर्यमुदक्रामत्' इति । स्वयमेवपदार्थमाह–' प्राणाः ' चक्षुरादयः ' वै ' ' यशः ' यशोहेतुत्वात् तेषु हि सत्सु ख्यातिर्भवति । तथा 'वीर्यं' बलं अस्मिन् शरीरे नहि उत्क्रांतप्राणो यशस्वी बलवान् वा भवति तस्मात्प्राणा एव यशो वीर्यं चास्मिन् शरीरे । तदेवं प्राणलक्षणं यशो वीर्यं ' उदक्रामत् ' उत्क्रांतवत् । तदेवं यशोवीर्यभूतेषु 'प्राणेषूत्क्रांतेषु' शरीरान्निष्क्रांतेषु तत् ' शरीरं ' प्रजापतेः ' श्वयितुं ' उच्छूनभावं गंतुं ' अध्रियत ' अमेध्यं चाभवत् । 'तस्य' प्रजापतेः शरीरान्निर्गतस्यापि तस्मिन्नेव 'शरीरे मन आसीत्' यथा कस्यचित् प्रिये विषये दूरं गतस्यापि मनो भवति तद्वत् ॥६॥

स तस्मिन्नेव शरीरे गतमनाः सन् किमकरोत् इति उच्यते । ' सोऽकामयत ' कथं ' मेध्यं ' मेधार्हं यज्ञियं मे इदं शरीरं स्यात् । किंच–' आत्मन्वी ' आत्मवांश्च ' अनेन ' शरीरेण शरीवान् स्याम् इति प्रविवेश । ' यत् ' यस्मात् ' तत् ' शरीरं मद्वियोगात् गतयशोवीर्यं सत् ' अश्वत् 'अश्वयत्–' ततः ' तस्मात् ' अश्वः ' ' समभवत् ' ततः अश्वनामा प्रजापतिरेव साक्षात् इति स्तूयते । यस्माच्च पुनस्तत्प्रवेशात् गतयशोवीर्यत्वात्

---

१–इदमित्यनेन " भूयसा यज्ञेनेत्यादि " कं० ६ " तदेवाश्वमेधस्याश्वमेधत्वं " कं० ७ इत्यन्तं श्रुतिः स्वयमेवाह इति अवगम्यताम् ।

तमनवरुध्येवामन्यत । तुꣳ संव्वत्सरस्य परस्तादात्मनऽआलभत पशून्देवताभ्यः प्रत्यौहत्तस्मात्सर्व्वदेवत्यं प्रोक्षितं प्राजापत्यमालभन्तऽएष वाऽअश्वमेधो यऽएष तपति तस्य संव्वत्सरऽआत्माऽयमग्निरर्कस्तस्येमे लोका आत्मानस्तावेतावर्काश्वमेधौ सो पुनरेकैव देवता भवति मृत्युरेवाप पुनर्मृत्युं जयति नैनं मृत्युराप्नोति मृत्युरस्यात्मा भवति सर्व्वमायुरेत्येतासां देवतानामेको भवति यऽएवं व्वेद ॥ ८ ॥ ( शतम् ६६०० ) ॥

---

तमनवरुध्येवामन्यत । तं संवत्सरस्य परस्तादात्मानऽआलभत । पशून्देवताभ्यः प्रत्यौहत् । तस्मात्सर्वदेवत्यं प्रोक्षितं प्राजापत्यमालभन्त । एष वा अश्वमेधः—य एष तपति । तस्य संवत्सर आत्मा, अयमग्निरर्कः, तस्येमे लोका आत्मानः । तावेतावर्काश्वमेधौ । सा उ पुनरेकैव देवता भवति मृत्युरेव । अप पुनर्मृत्युं जयति । नैनं मृत्युराप्नोति । मृत्युरस्यात्मा भवति । सर्वमायुरेति । एतासां देवतानामेको भवति—य एवं वेद ॥ ८ ॥

---

अमेध्यं सत् 'मेध्यम्' अभूत् । 'तदेव' तस्मादेव 'अश्वमेधस्य' अश्वमेधनाम्नः क्रतोः अश्वमेधनामलाभः । क्रियाकारकफलात्मको हि क्रतुः स च प्रजापतिरेवेति स्तूयते ।

क्रतुनिर्वर्तकस्याश्वस्य प्रजापतित्वमुक्तं "उषा वा अश्वस्य मेध्यस्य" ( श. प. १०।६।४।१ ) इत्यादिना तस्यैवाश्वस्य मेधस्य प्रजापतिस्वरूपस्याग्नेश्च यथोक्तस्य क्रतुफलात्मरूपतया समस्योपासनं विधातव्यं इत्यारभ्यते— पूर्वत्र क्रियापदस्य विधायकस्याश्रुतत्वात् क्रियापदापेक्षत्वाच्च प्रकरणस्य अयमर्थो अवगम्यते—'एष ह वा अश्वमेधं' 'क्रतुं वेद' 'यः' कश्चित् 'एनं' अश्वं अग्निरूपमर्कं च यथोक्तं 'एवं' वक्ष्यमाणेन समासेन प्रदर्श्यमानेन विशेषणेन विशिष्टं 'वेद' सः 'एषः' अश्वमेधं वेद नान्यः । तस्मात् एवं वेदितव्य इत्यर्थः॥७॥

कथं ? तत्र पशुविषयमेव तावद्दर्शनमाह—'तमनवरुध्यैवामन्यत' तत्र प्रजापतिः भूयसा यज्ञेन भूयो यजेयेति कामयित्वा—आत्मानमेव पशुं मेध्यं कल्पयित्वा तं पशुमनवरुध्यैव उत्सृष्टपशुमवरोधमकृत्वैव मुक्तप्रग्रहं अमन्यतार्चितयत् । 'तं संवत्सरस्य' पूर्णस्य 'परस्तात्' ऊर्ध्वं 'आत्मने' आत्मार्थम् 'आलभत' प्रजापतिदेवताकत्वेनेत्येतदालभत आलंभं कृतवान् 'पशून्' अन्यान् ग्राम्यानारण्यांश्च 'देवताभ्यः' यथादेवतं 'प्रत्यौहत' प्रतिगमितवान् । यस्माच्च एवं प्रजापतिरमन्यत तस्मात् एवं अन्यः अपि उक्तेन विधिना आत्मानं पशुं अश्वं मेध्यं कल्पयित्वा सर्वदेवत्योऽहम् प्रोक्ष्यमाण आलभ्यमानस्त्वहं मद्देवत्य एव स्याम् । अन्य इतरे पशवः ग्राम्यारण्या यथादेवतमन्याभ्यो देवताभ्य आलभ्यंते मदवयवभूताभ्य एवेति विद्यात । अत एव इदानीं सर्वदेवत्यं प्रोक्षितं प्राजापत्यमालभंते याज्ञिकाः । एवं 'एष[1] ह वा अश्वमेधो य एष तपति' यस्त्वेवं पशुसाधनकः क्रतुः स एषः साक्षात्फलभूतो निर्दिश्यते 'एष ह वा अश्वमेधः' कोऽसौ 'य एषः' सविता 'तपति' जगत् अवभासयति तेजसा 'तस्य' अस्य क्रतुफलात्मनः 'संवत्सरः' कालविशेषः 'आत्मा' शरीरं तन्निर्वर्त्यत्वात्संवत्सरस्य तस्यैव क्रत्वात्मनो अग्निसाध्यत्वाच्च फलस्य क्रतुत्वरूपेणैव निर्देशः । 'अयं'

---

१—"एष वाऽअश्वमेधः"—इति माध्यंदिनीयानां पाठः ।

पार्थिवः ' अग्निरर्कः ' साधनभूतः ' तस्य ' च अर्कस्य क्रतौ चित्यस्य ' इमे लोकाः ' त्रयोऽपि ' आत्मानः ' शरीरावयवाः । तथाच व्याख्यातम्--" तस्य प्राची दिक् " इत्यादिना । ' तौ अग्न्यादित्यौ ' एतौ यथाविशेषितौ ' अर्काश्वमेधौ ' क्रतुफले । अर्को यः पार्थिवोऽग्निः स साक्षात् क्रतुरूपः क्रियात्मकः क्रतोरग्निसाध्यत्वात् तद्रूपेणैव निर्देशः । क्रतुसाध्यत्वाच्च फलस्य क्रतुरूपेणैव निर्देश आदित्योऽश्वमेध इति । तौ साध्यसाधनौ क्रतुफलभूतौ अग्न्यादित्यौ । ' सा ' ' उ ' ' पुनः ' भूयः--' एकैव देवता भवति ' का सा ? ' मृत्युरेव ' पूर्वमपि एकैवासीत् क्रियासाधनफलभेदाय विभक्ता । तथा चोक्तम्--" स त्रेधाऽऽत्मानं व्यकुरुत " इति । सा पुनरपि क्रियानिर्वृत्त्युत्तरकालं एकैव देवता भवति--मृत्युरेव फलरूपः । यः पुनरेवं एनमश्वमेधं मृत्युं एकां देवतां वेद, अहमेव मृत्युरस्मि अश्वमेध एका देवता मद्रूपाश्वाग्निसाधनसाध्येति । सः ' अप जयति ' पुनर्मृत्युं पुनर्मरणं सकृन्मृत्वा पुनर्मरणाय न जायत इत्यर्थः । अपजितोऽपि मृत्युः एनं पुनरायायात् इत्याशंक्याह--' नैनं ' ' मृत्युराप्नोति ' कस्मात् ? ' मृत्युरस्य ' एवंविदः ' आत्मा भवति ' । किंच मृत्युरेव फलरूपः सन् ' एतासां देवतानामेको भवति ' तस्यैतत्फलम् ॥८॥ ( काण्वानामत्र सप्तमी कंडिका समाप्ता ) ॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यैः परमहंसपरिव्राजकाचार्यैः श्रीशंकरभगवद्भिः ( काण्व-पाठानुसारिबृहदारण्यकादौ कृतं ) अत्रोद्धृतं " नैवेह किञ्चनाग्रे " इत्यस्य ब्राह्मणस्य भाष्यं समाप्तम् ॥ ( १० । १ । ९ ) ॥

## इति श्रीमच्छंकराचार्यकृतं भाष्यं समाप्तम् ।



(द्वा) अथ वᳬ॒शः । समानमासाञ्जीवीपुत्रात्साञ्जीवीपुत्रो माण्डूकायनेर्माण्डूकायनिर्माण्डव्यान्माण्डव्यः कौत्सात्कौत्सो माहित्थेर्माहित्थिर्वामकक्षायणाद्वामकक्षायणो वात्स्याद्वात्स्यः शाण्डिल्याच्छाण्डिल्यः कुश्रेः कुश्रिर्यज्ञवचसो राजस्तम्बायनाद्यज्ञवचा राजस्तम्बायनस्तुरात्कावषेयात्तुरः कावषेयः प्रजापतेः प्रजापतिर्ब्रह्मणो ब्रह्म स्वयम्भु ब्रह्मणे नमः ॥९॥

इति चतुर्थप्रपाठकेऽष्टमं ब्राह्मणम् ॥ १०-४-८ ॥ (६. ५.) ॥
इति चतुर्थः प्रपाठकः समाप्तः ॥ १०-४ ॥

कण्डिकासंख्या ॥ ७५ ॥ षष्ठोऽध्यायश्च समाप्तः ॥ १०-६ ॥
अस्मिन्काण्डे कण्डिकासंख्या ॥ ३६९ ॥
इति माध्यन्दिनीये शतपथब्राह्मणेऽग्निरहस्यं नाम दशमं
काण्डं समाप्तम् ॥ १० ॥

---

अथ वंशः—समानम् आ साञ्जीवीपुत्रात् । साञ्जीवीपुत्रो माण्डूकायनेः । माण्डूकायनिर्माण्डव्यात् । माण्डव्यः कौत्सात् । कौत्सो माहित्थेः । माहित्थिर्वामकक्षायणात् । वामकक्षायणो वात्स्यात् । वात्स्यः शाण्डिल्यात् । शाण्डिल्यः कुश्रेः । कुश्रिर्यज्ञवचसो राजस्तम्बायनात् । यज्ञवचा राजस्तम्बायनस्तुरात् कावषेयात् । तुरः कावषेयः प्रजापतेः । प्रजापतिर्ब्रह्मणः । ब्रह्म स्वयम्भु । ब्रह्मणे नमः ॥ ९ ॥

---

वंशब्राह्मणसमाम्नास्यमानानां विद्यासम्प्रदायप्रवर्त्तकानामृषीणां मध्येऽग्निरहस्यविद्याप्रवर्त्तकमृषिप्रवाहमनुक्रामति—अथ वंशः समानम् आसांजीवीपुत्रादिति ॥ ९ ॥

विद्यासंप्रदायप्रवर्तकानां ऋषीणां वंशः ।

१ स्वयंभु ब्रह्म
२ प्रजापतिः
३ तुरः कावषेयः
४ यज्ञवचा राजस्तंबायनः
५ कुश्रिः—( वाजश्रवसः गोतमः )
६ शांडिल्यः
७ वात्स्यः
८ वामकक्षायणः
९ माहित्थिः
१० कौत्सः
११ मांडव्यः
१२ मांडूकायनिः
१३ सांजीवीपुत्रः

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये दशमकाण्डे षष्ठेऽध्याये चतुर्थं पञ्चमं च ब्राह्मणम् ॥ ( १०।६।४-५ ) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं,
सप्ताम्भोधीन्पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटं च ॥
धान्याद्रिं धन्यजन्मा तिलभवमतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान्गुडकृतमजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणजमनृणः शार्करं चार्कतेजा,
रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये दशमकाण्डे षष्ठोऽध्यायः समाप्तः ॥ ( १०—६ ) ॥

## अग्निरहस्यं नाम दशमं काण्डं समाप्तम् ॥

## इति शतपथ ब्राह्मणस्य पूर्वार्द्धं समाप्तम् ॥



ॐ

श्रीमद्वाजसनेयिमाध्यन्दिन-

# शतपथब्राह्मणम् ।

सायणभाष्यसमेतम् ।

तत्र

## एकादशं काण्डम् ११ ।

गंगाविष्णु श्रीकृष्णदास,

मालिक-" लक्ष्मीवेङ्कटेश्वर " स्टीम् प्रेस,

कल्याण-बंबई.

संवत् १९९६, शके १८६१.

1939.

# अथ शतपथब्राह्मणस्योत्तरार्द्धम् ।

## अथाष्टाध्यायीनामकं एकादशं काण्डं प्रारभ्यते ।



### प्रथमोऽध्यायः प्रारभ्यते ।

#### तत्र प्रथमं ब्राह्मणम् ।

#### प्रथमप्रपाठके च प्रथमं ब्राह्मणम् ।

सम्वत्सरो वै यज्ञः प्रजापतिः । (स्तु) तस्यैतद्द्वारं यदमावास्या चन्द्रमाऽएव द्वारपिधानः ॥ १ ॥

संवत्सरो वै यज्ञः प्रजापतिः । तस्यैतद्द्वारम् । यदमावास्या । चंद्रमा एव द्वारपिधानः ॥ १ ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वंदे विद्यातीर्थमहेश्वरम् ॥ १ ॥

इत्थं कांडदशकात्मकः शतपथपूर्वभागो व्याख्यातः । तत्र प्रथमद्वितीयकांडाभ्यां दर्शपूर्णमासाधानाग्निहोत्र-तदुपस्थानादीनि चातुर्मास्यांतानि प्रतिपादितानि । तृतीयचतुर्थाभ्यामेकहाहीनसत्रात्मकसकलसोमयागप्रकृति-

१--अस्य काण्डस्य " संग्रहम् " इति नामान्तरम् । " ततः षष्ठिपथं कृत्स्नं सरहस्यं ससंग्रहम् " (म. भा. शां. प. मो. ध. ४३ । १६ ) इत्यत्र प्रतिपादितम् ।

श्रीकाशीनिवासिजावजीभट्टानां पुस्तकस्था एकादशकाण्डप्रतिपाद्यविषयानुक्रमणिकाश्लोकाः ।

१–एकादशेऽस्मिन् कांडे वै अष्टाध्यायीतिनामनि । आधानाहान्वनिर्वापौ छायाचाभ्युदयस्तथा ॥
हिरण्यगर्भाद्युत्पत्तिर्दैवीसंपदथात्मनः । व्रतोपायनमीमांसा अभिमानकथा तथा ॥
ऋणत्रयापाकरणाऽऽहुतेरर्थस्तु ब्रह्म च । न्यूनातिरिक्तदोषास्तु वेद्यालंभकथापि च ॥
पूर्णशब्ददर्शशब्दार्थोऽश्वमेधफलं तु यत् । तदेव च दर्शपूर्णमासाभ्यामग्निहोत्रतः ॥
प्रणीताशिर इत्यादिसंस्तुतिर्देवयाजिनः । तथापि चात्मयाजित्वं श्रेष्ठमेवेति निर्णयः ॥
यज्ञः संवत्सरात्मकस्तत्साधनर्त्विगादि च । निन्द्येऽपि च ऋत्वभ्यासादनिंद्ययज्ञवत्फलम् ॥
अग्निहोत्रहोमद्रव्यं ब्रह्मचर्यफलं तथा । आघारादेस्तुमीमांसा सा प्रश्नोत्तरपूर्विका ॥
स्रुगादानातिक्रमयोस्तथा स्रुग्धारणस्य च । आश्रावणस्य होमार्थं स्रुगुपाहरणस्य च ॥
मित्रविन्दा च हविषः समृद्धिः षट्प्रकारतः । न्यूनातिरिक्तयज्ञस्य मिश्रसंपूरितस्य च ॥
समृद्धिरमेरुघासिकथा चारणिकी ततः । चातुर्मास्यदेवतानामंगरूपनिरूपणम् ॥
ब्रह्मोद्यमग्निहोत्रं चोपनयनप्रसंगतः । विधिस्तथा देवगणाः स्वर्गं गताः कथाऽपि च ॥
पञ्चमहायज्ञफलं ब्रह्मयज्ञस्य च पृथक् । प्रजापतेरनंतरं पृथिव्यादित्रयं ततः ॥

भूतश्चतुःसंस्थो ज्योतिष्टोमः प्रत्यपादि । पञ्चमेन वाजपेयराजसूयौ षष्ठादिकांडचतुष्टयेन प्रकृतिविकृतिभूतसोम-यागांगभूतमग्निचनाख्यं कर्म विस्तरेण प्रतिपादितम् । दशमे तत्प्रशंसाऽर्थमुखेन तदाश्रितान्युपशमनानि विहि-तानि, इति पूर्वभागार्थसंक्षेपः । उत्तरभागे अष्टाध्यायीसौत्रामण्यश्वमेधाख्यास्त्रयः काण्डाः । चतुर्थस्तु ब्रह्म-प्रतिपादको बृहदारण्यकाख्यः । तत्र प्रथमे कांडे पूर्वोक्तमाधानादिकं कर्मानूद्य प्राग्विहितकालाद्यत्रशिष्टांगकलाप-विधिः तत्प्रशंसा च क्रियते ।

तत्र तावदग्निहोत्रदर्शपूर्णमासाग्निष्टोमानां मूलप्रकृतीनां तद्विकृतीनां मासाग्निहोत्रसौर्ययागविश्वजिदादीनां सर्वेषां श्रौतकर्मणां गार्हपत्याद्यग्निसाध्यत्वात् । तस्य त्वाधानपवमानेष्टिभ्यामग्निसिद्धिरिति न्यायेनाधाननिष्पाद्यत्वा-दाधानमेवादौ वक्तव्यम् । तस्य च स्वाभिमतं कालं विसृजन् यज्ञादीन् संवत्सराद्यात्मना निरूपयति—संवत्सरो वै यज्ञ इत्यादिना ।

योऽयं दर्शपूर्णमासादियज्ञात्मकः ' प्रजापतिः ' ' स संवत्सरो वै ' संवत्सरात्मकः तत्साध्यत्वात् । ओश्राव-येत्यादिसप्तदशाक्षरसाध्यत्वाद्यज्ञस्य प्रजापतित्वम् । तथा च तैत्तिरीयके—ओश्रावयेति चतुरक्षरमिति प्रक्रम्य "एष वै सप्तदशः प्रजापतिर्यजमानाय ते" ( तै. सं. १।६।१० ) इत्याम्नातं । संवत्सरस्यापि द्वादश मासाः पंचर्तवः संवत्सर इति सप्तदशावयवत्वसाम्यात् प्रजापतेस्तस्य च तादात्म्यम् । यथा—" आदित्यो यूपः " इत्यत्र तेजःसारूप्यात् यूपस्यादित्यात्मना स्तुतिः । एवमत्रापि संख्यासारूप्यात् स्तुतिरेव मंतव्या । वैशब्द उक्तार्थप्रसिद्धिद्योतनार्थः । तथाच तैत्तिरीयकम्—" द्वादश मासाः पंचर्तवः " ( तै. सं. ९।६।७ ) इति । हेमन्तशिशिरयोः समासेन तावान् संवत्सरः प्रजापतिरिति । एवं यज्ञस्य संवत्सरकालात्मकत्वमुक्त्वा केन द्वारेण स प्रवेष्टव्य इत्याकांक्षायामाह—तस्यैतद्द्वारमित्यादि ।

' अमावास्या ' अमेत्ययं शब्दः सहशब्दार्थे वर्तते । प्रतिपदादितिथिषु मध्ये यस्यां तिथौ अमा सूर्येण सह चंद्रो वसति साऽमावास्या । अमापूर्वाद्वसेः "ऋहलोर्ण्यत्" ( पा. सू. ३।१।१२४ ) इति ण्यत्प्रत्ययः । यद्वा वसुशब्दाभिधेय इंद्रः सान्नाय्यपानार्थं देवैः सह अस्यां तिथौ वसतीत्यमावास्या । तथा च तैत्तिरीयकम्— " अमा वैनोऽद्य वसतीन्द्रो हि देवानां वसु तदमावास्याया अमावास्यात्वम् " ( तै. सं. २।५।३ ) इति । अमावास्येति यदस्ति ' एतच्चस्य ' संवत्सरात्मनो यज्ञस्य द्वारम् । लौकिकद्वारवत् कर्मानुष्ठानप्रवेशनसाधनमि-त्यर्थः । अमावास्या संवत्सरस्य द्वारं चेत्; तस्य केन चित् द्वारपिधायकेन भवितव्यं—किं तदित्यत आह—

चंद्रमा एवेति । माति प्रतिपदाद्यांस्तिथीन्परिच्छिनत्तीति माः । "मा माने" ( धा. पा. अ. प. ५२ ) इत्यस्मादसुन् । चंद्रः अमृतमयैः किरणैः सर्वजनाल्हादकः । चंद्रश्चासौ माश्च चंद्रमाः । सः ' एव द्वारपि-धानः, द्वारस्यामावास्यारूपस्य पिधानः तिरोधायकः । सच अमावास्यायां नास्तीत्येतदात्मकं विवृतमेव भवति । अतस्तेनैव द्वारेण यज्ञप्रवेशः सुकर इत्यर्थः ॥ १ ॥

---

तापेन सूर्यादित्रिकमेवं वेदाः क्रमेण तु । प्रायश्चित्तप्रसंगेन ऋत्विजामपि निर्णयः ॥
जयरूपाऽग्निहोत्रस्य कथा कामापरा तथा । अतिप्रश्नकथा सम्यक् हविर्यज्ञपशोर्विधिः ॥
सायं वै अग्निहोत्रस्योपस्थानस्य च कारणम् । आहुतोद्धृतप्रहुतविहुतामेस्तु निर्णयः ॥
पशुदेवतानिर्णयोऽनुप्राणनविधिस्ततः । आदित्यस्याऽऽदानकथा प्रायश्चित्तं तु घर्मधुक् ॥
शार्दूलेन हता चेदित्यस्मिन्नेष क्रमस्तु सः । व्याख्यातः सायनाचार्यैर्माधवापरनामकैः ॥

॥ इति एकादशकांडप्रतिपाद्यविषयानुक्रमणिकाश्लोकाः ॥

स योऽमावास्यायामग्नीऽ आधत्ते । यथा विवृतायां द्वारि द्वारा पुरं प्रपद्येत स ततऽ एव स्वर्गं लोकमियादेवं तद्योऽमावास्यायामाधत्ते ॥ २ ॥

( चेऽथ ) अथ यो नक्षत्रऽआधत्ते । यथा पिहितायां द्वार्य्यद्वारा पुरं प्रपित्सेत्स जिह्मः पुरः स्यादेवं तद्यो नक्षत्रऽ आधत्ते तस्मान्न नक्षत्रऽआदधीत ॥ ३ ॥

---

स योऽमावस्यायामग्नी आधत्ते । यथा विवृतायां द्वारि द्वारा पुरं प्रपद्येत । स तत एव स्वर्गं लोकमियात् । एवं तत् । योऽमावास्यायामाधत्ते ॥ २ ॥

अथ यो नक्षत्र आधत्ते । यथा पिहितायां द्वारि । अद्वारा पुरं प्रपित्सेत् । स जिह्मः पुरः स्यात् । एवं तत् । यो नक्षत्र आधत्ते । तस्मान्न नक्षत्र आदधीत ॥ ३ ॥

---

इत्थममावास्यां प्रशंस्य तत्राधानकर्तव्यतामाह—स य इति । ' यः ' कश्चिदग्न्याधित्सुर्भवति । ' सः ' सर्वोऽपि यजमानः ' अमावास्यायां ' तिथौ । ' अग्नी ' प्राधान्यात् गार्हपत्याहवनीयाख्यौ । ' आदधीत ' आयतनेषु[1] विधानेन स्थापयेत्, अप्राप्तार्थत्वात्पंचमलकाराश्रयणेन विध्यर्थोऽत्राधिगंतव्यः । दक्षिणाग्नेः सद्भावेऽपि द्वयोरेव प्राधान्यं श्रुत्यंतरेऽप्याम्नातम्—" उपस्तीर्य पूर्वश्चाग्निरपरश्चेत्याहुः " इति । " उभावग्नी उपस्तृणत " इति च ।

उक्तद्वारादिकल्पनोपजीवनेनामावास्याधानं दृष्टांतेनोपपादयति—यथा विवृतायामिति । ' यथा ' लोके नगरस्य ' द्वारि ' द्वारे ' विवृतायाम् ' उद्घाटितकपाटे सति 'द्वारा' तेन द्वारेण ' पुरं प्रपद्येत ' प्रविशेत प्रविश्य च स्वाभिलषितं देशं प्राप्नोति । ' एवं तत् ' अमावास्याधानमेतत्सदृशम् अमावास्यायाः संवत्सरात्मकयज्ञद्वारत्वात्, तत्रापिधायकचंद्रादर्शनेन विवृतत्वाच्च । अपि च आधानतः 'तत एव ' अमावास्यारूपद्वारेण यज्ञप्रवेशादेव । ' स्वर्गं लोकं ' लोक्यत इति लोकः । सुष्ठु अर्ज्यते शोभनेनार्जनेन गम्यत इति वा स्वर्गः । सर्वजनेनाभिलषणीयं दुःखासंभिन्नं कर्मफलमित्यर्थः । तथाचाहुः—" यन्न दुःखेन संभिन्नं नच ग्रस्तमनंतरम् । अभिलाषोपनीतं च सुखं स्वर्गपदास्पदम " इति । तादृशं स्वर्गफलं ' इयात् ' प्राप्नुयात् । यस्मादेवं अमावास्याधानं प्रशस्तं तस्मादेवममावास्यायामेवाधातव्यमित्युक्तमेवार्थं दार्ढ्यायोपसंहरति—योऽमावास्यायामग्नी आधत्त इति । स य इति पूर्वत्र संबंधः ॥ २ ॥

उक्तामावास्याधानप्रशंसार्थमस्मच्छाखायां[2] तैत्तिरीयादिशाखांतरे च विहितं नक्षत्राधानमनूद्य दूषयति—अथ यो नक्षत्र आधत्त इति ।

अथेति पक्षांतरद्योतनार्थः । यस्तु यजमानोऽमावास्यां विहाय केवले कृत्तिकादिनक्षत्रे अग्नी आधत्ते पूर्वोक्तमग्न्याधानं कुर्यात् । ' सः ' च । ' यथा ' नगरस्य ' द्वारि पिहितायां ' सत्यां लौकिको जनः । ' अद्वारा '

---

१—आयतनेष्विति वहुवचनं " दक्षिणाग्नेः सद्भावेऽपि द्वयोरेव प्राधान्यम् " इत्याद्यग्रिमस्वीयभाष्याविरोधात् अग्नी आधत्ते इति मूलश्रुतिविरोधाच्चासंगतं भवतीति " आयतनयोः " इति द्विवचनेन परिणमितव्यम् ।

२—अस्मच्छाखायां आपस्तंबशाखायामित्यर्थः । अस्मच्छब्देन भाष्यकृतां परामर्शात् तेषां तच्छाखीयत्वात् । माध्यंदिनशाखायामित्यपि बोध्यम् । अस्यां केवलस्य नक्षत्राधानस्योक्तत्वात् ।

यदुहरेवैषः। (षो) नु पुरस्तान्न पश्चाद्दृश्येत तदुहरुपवसेत्तर्हि ह्येषुऽ इमं लोकमागुच्छति तुस्मिन्निह व्वसति ॥ ४ ॥

सुर्व्वे देवा व्वसन्ति। सुर्व्वाणि भूतानि सुर्व्वा देवुताः सुर्व्वऽऋतुवः सुर्व्वे स्तोमाः सुर्व्वाणि पृष्ठानि सुर्व्वाणि च्छुंदाᳫँसि ॥ ५ ॥

---

यदहरेवैष न पुरस्तान्न पश्चात् दृश्येत। तदहरुपवसेत्। तर्हि एष इमं लोकमागच्छति। तस्मिन्निह वसति ॥ ४ ॥

सर्व्वे देवा वसंति। सर्वाणि भूतानि। सर्वा देवताः। सर्वे ऋतवः। सर्वे स्तोमाः। सर्वाणि पृष्ठानि। सर्वाणि छन्दांसि ॥ ५ ॥

---

द्वारवर्जितप्रदेशेन मोहात् 'पुरं प्रपित्सेत्' प्रपत्तुं प्रवेष्टुमिच्छेत्। "प्रपूर्वात्पदगतौ"—(धा.पा.दि.प. ६३) इत्यस्मादिच्छार्थे सनि द्विर्वचने। "सनि मीमाघुरभलभशकपतपदामच इस्"—(पा. सू. ७।४।५४) इत्यचः स्थाने इस्। "अत्र लोपोऽभ्यासस्य"—(पा. सू. ७।४।५८) इत्यभ्यासलोपः। सच 'अद्वारा पुरं' प्रविशेत्। 'पुरः' पुरोभागे। 'जिह्मः' वक्रः प्रतिहतगतिर्भवतीत्यर्थः। अतो 'यो नक्षत्र आधत्ते' तस्य तन्नक्षत्राधानमेवमेव। आधानदिवसे चन्द्रदर्शनेन अमावास्यारूपस्य द्वारस्य पिहितत्वात् तस्य यज्ञप्रवेशो दुष्कर इत्यर्थः। नक्षत्राधानं दूषयित्वा स्वमतदाढर्यार्थं निषेधति—तस्मान्न नक्षत्र आदधीत इति ॥३॥

अथाधानोपक्रमस्य विवक्षितममावास्याविशेषं दर्शयति—यदहरेवैष न पुरस्तान्न पश्चात् दृश्येत तदहरुपवसेदिति। 'यदहः' यस्मिन्नहनि। 'एषः' चंद्रमाः। 'पुरस्तात्' पूर्वस्यां 'न दृश्येत' तथा 'पश्चात्' प्रतीच्यां दिश्यपि न दृश्येत। 'तदहः' तस्मिन्नहनि 'उपवसेत्' उपवासो नाम आधानसंभारान् संभृत्य गार्हपत्यायतनसमीपे व्रतचारिणा अवस्थानम् चतुर्दशीप्रतिपन्मिश्रितायाममावास्यायामाधानं प्रारभेतेत्यर्थः। उक्तगुणविशिष्टाया अमावास्यायाः कोऽतिशयः ? इत्याह—तर्हि ह्येष इमं लोकमागच्छति तस्मिन्निह वसति। "सर्वे देवा वसंति, सर्वाणि भूतानि, सर्वा देवताः, सर्वे ऋतवः, सर्वे स्तोमाः, सर्वाणि पृष्ठानि, सर्वाणि छंदांसि" इति। यस्यां पुरस्तात्पश्चाच्च न संदृश्यते चन्द्रमाः। तर्हि तस्याममावस्यायामेषः चन्द्रो द्युलोकं विहायेमं 'लोकमागछति' आगत्य च 'तस्मिन्' दिवसे इहास्मिन्नेव लोके 'वसति'। अत एव स्मर्यते—"वनस्पतिंगते सोम" इति ॥ ४ ॥

तस्मिन् दिवसे चंद्रो भूम्यां वसति तदुपजीविनो देवाद्याः इमं लोकमधिवसंतीत्याह—सर्वे देवा इत्यादि। 'देवाः' इंद्रादयः ते 'सर्वे' चंद्रमसो निवृत्त्या अमावास्यायामस्मिन्नेव लोके 'वसंति'। तथा 'भूतानि' लोकांतरवर्तीनि प्राणिजातान्यपि। तथा अन्या अपि याः काश्चन 'देवताः' 'सर्वा' इहैव वसंति। 'ऋतवः' वसंताद्याः ते अपि चंद्रगत्यवधानत्वात् तमनुसृत्य वसंति। 'स्तोमाः' त्रिवृदादयः। 'पृष्ठानि' बृहद्रथंतरवैरूपादीनि। 'छंदांसि' गायत्र्युष्णिगनुष्टुबादीनि। दिव्यस्यैव चंद्रमसः सोमलतारूपेण भूमाववस्थानात् सोमयागांगभूतास्त्रिवृदाद्याः सर्वेऽपि तमनुसृत्य इह लोके सह वसंतीत्यर्थः ॥ ५ ॥

सर्वेषु ह वाऽ अस्य देवेषु । सर्वेषु भूतेषु सर्वासु देवतासु सर्वेष्वृतुषु सर्वेषु स्तोमेषु सर्वेषु पृष्ठेषु सर्वेषु च्छंदःस्वग्नीऽ आहितौ भवतो योऽमावास्या यामाधत्ते तस्मादमावास्यायामेवाग्नीऽआदधीत ॥ ६ ॥

याऽसौ वैशाखस्यामावास्या । तस्यामादधीत सा रोहिण्या संपद्यतऽ आत्मा वै प्रजा पशवो रोहिण्यात्मन्येवैतत्प्रजायां पशुषु प्रतितिष्ठत्यमावास्या वाऽअग्न्याधेयरूपं तस्मादमावास्यायामेवाग्नीऽ आदधीत पौर्णमास्यामन्वारभेतामावास्यायां दीक्षेत ॥ ७ ॥

इति प्रथमप्रपाठके प्रथमं ब्राह्मणम् ॥ १-१-१ ॥ ( १. १. ) ॥

---

सर्वेषु ह वा अस्य देवेषु । सर्वेषु भूतेषु । सर्वासु देवतासु । सर्वेषु ऋतुषु । सर्वेषु स्तोमेषु । सर्वेषु पृष्ठेषु । सर्वेषु छन्दःसु । अग्नी आहितौ भवतः । योऽमावास्यायामाधत्ते । तस्मादमावास्यायामेव । अग्नी आदधीत ॥ ६ ॥

या असौ वैशाखस्यामावास्या तस्यामादधीत । सा रोहिण्या संपद्यते । आत्मा वै प्रजा पशवः । रोहिण्याऽऽत्मन्येवैतत्प्रजायां पशुषु प्रतितिष्ठति । अमावास्या वा अग्न्याधेयरूपम् । तस्मादमावास्यायामेव । अग्नी आदधीत । पौर्णमास्यामन्वारभेत । अमावास्यायां दीक्षेत ॥ ७ ॥

---

अस्त्वेवममावास्यातिशयः । आधानस्य किं जातमित्यत आह—सर्वेषु ह वा इति । ये देवाद्या अमावास्यासंबंधितया प्रथमान्तशब्दैर्निर्दिष्टाः तेषु 'सर्वेषु' सत्सु अमावास्याधानकर्तुरग्नी 'आहितौ' स्थापितौ 'भवतः' । उक्तमर्थं निगमयति—तस्मादिति । निगदसिद्धोऽर्थः ॥ ६ ॥

उक्तामावास्याया ऋक्षविशेषसंबंधरूपं गुणं विधत्ते—याऽसाविति । विशाखानक्षत्रयुक्ता पौर्णमासी यस्मिन् मासि स वैशाखः, तत्संबंधिनी या अमावास्या तस्यामग्नी आदधीत । उक्तामावास्यायाः फलविशेषे हेतुमाह-सा रोहिण्येति । 'सा' वैशाखी अमावास्या 'रोहिण्या' संपद्यते रोहिणीनक्षत्रयुक्ता भवति । यतो वैशाख्यां पौर्णमास्यां तावद्विशाखानक्षत्रं । ततः पञ्चदशसु नक्षत्रेषु परिगणितेषु अमावास्यायां रोहिणी भवति । अस्त्वेवं किं तत इत्याह—आत्मा वा इति ।

'प्रजा' पुत्रादिरूपा या अस्ति सा 'पशवः' तत्साधनभूतत्वात् । रोहत्यनया पश्वादिसमृद्धिमिति तद्व्युत्पत्तेः तथा च तैत्तिरीयकम्—"प्रजापती रोहिण्यामग्निमसृजत देवा रोहिण्यामादधत ते वै ते सर्वानरोहानरोहन् तद्रोहिण्यै रोहिणीत्वम्" इति । एवं च आधाता एकदेवतारोहिण्यात्मनि आत्मप्रतिरूपायांमे 'प्रजायां पशुषु' च 'प्रतितिष्ठति' प्रतिष्ठो भवति । रोहिण्याधानेन पुत्रपश्वादिसमृद्धो भवतीत्यर्थः । इत्थममावास्याधानं बहुशः प्रशंस्य निगमयति—अमावास्या वा अग्न्याधेयरूपमिति । उक्तार्थप्रसिद्धौ वै शब्दः । यस्मादुक्तेन प्रकारेण अमावास्यायाः खल्वग्न्याधेयस्य रूपत्वम् । नक्षत्राधानादमावास्याधानप्राशस्त्यस्य दर्शितत्वात् तस्मादित्यादि सिद्धम् । इत्थमाधानेन गार्हपत्याद्यग्निस्वरूपसिद्धौ तन्निष्पाद्यानां दर्शपूर्णमासानामनियमेन प्रारंभे प्राप्ते तं नियमयति—पौर्ण-

घ्नन्ति वाऽएतद्यज्ञं । यदेनं तन्वते यन्वेव राजानमभिषुण्वंति तत्तं घ्नन्ति स यत्पशुँ संज्ञपयंति विशासति तत्तं घ्नन्त्युलूखलमुसलाभ्यां दृषदुपलाभ्याᳬं हविर्यज्ञं घ्नन्ति ॥ १ ॥

---

घ्नंति वा एतद्यज्ञं, यदेनं तन्वते । यन्वेव राजानमभिषुण्वंति । तत्तं घ्नंति । स यत् पशुं संज्ञपयन्ति । विशासति[१] । तत्तं घ्नंति । उलूखलमुसलाभ्यां दृषदुपलाभ्यां हविर्यज्ञं घ्नंति ॥ १ ॥

---

मास्यामिति । अमावास्यायां पवमानेष्टिभिः सहाधाने परिसमाप्ते यद्यपि दर्शयागः प्राप्तावसरः, तथापि आगामिन्यां पौर्णमास्यामन्वारभेत । "अन्वारंभणीयेष्टिं कुर्यात्, दर्शपौर्णमासाभ्यां स्वर्गकामो यजेत" इत्यादौ दर्शयागस्य प्राथम्यमाम्नायते । कथं ? पौर्णमासयागस्य प्राथम्यमिति । नैष दोषः । पूर्णमासश्च दर्शश्चेति विगृह्य द्वंद्वसमासे अल्पाक्षरत्वात् दर्शशब्दस्य पूर्वनिपातः नानुष्ठानापेक्षया । पौर्णमास्यां पौर्णमासेनेष्ट्वा आगामिन्याममावास्यायां दर्शयागमपि कृत्वा तस्यामेव 'अमावास्यायां दीक्षेत' सोमयागं प्रारभेत । सोमयागस्य च दर्शपूर्णमासपूर्वकत्वं तैत्तिरीयेऽप्याम्नातम्—"यो दर्शपूर्णमासाविष्ट्वा सोमेन यजेत" ( तै. सं. २।५।६ ) इत्यादि ॥

ननु "सोमेन यक्ष्यमाणो न ऋतून् प्रेक्षेत न नक्षत्रम्" इत्यादि श्रुतेराधानं सोमपूर्वमित्युच्यते । सोमयाग एवारभ्यते चेत्; तदा आधानानंतरं सोमप्रारंभ एवावसीयते । नैष दोषः । तथाहि आधानं तावत्त्रिविधं—अवश्यारभ्याणामग्निहोत्रसोमेष्टीनां भेदात् । आधानानानंतरं सर्वकर्मभ्यः पूर्वं यद्यग्निहोत्रमारभ्यते तदाऽऽधानं होमपूर्वकमित्युच्यते । सोमयाग एवारभ्यते चेत्; तदाऽऽधानं सोमपूर्वमिति गीयते । अथ दर्शपौर्णमासौ वा तर्हि तदाधानमिष्टिपूर्वं भवति । अत्र तु इष्टिपूर्वस्याधानस्य क्रमनियमोऽयमिति न विरोधः ॥ ७ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये
एकादशकाण्डे प्रथमाऽध्याये प्रथमं ब्राह्मणम् ॥ ( ११-१-१ ) ॥

एवमाधानस्यामावास्यालक्षणं प्रारंभकालं नियम्य दर्शपूर्णमासयोरपि उपवसथकालं निर्णेष्यन् आदौ च तत्रत्यानामाहुतीनां संख्याविशेषमुपजीव्य स्तोतुमुपोद्घातयति—घ्नंति वा इति । 'एतत्' एतर्हि इष्टिपशुसोमात्मानं त्रिविधं 'यज्ञं घ्नंति' हिंसंति ऋत्विग्यजमानाः । 'यत्' यदा 'एनं तन्वते' विस्तारयंति ।

---

१—तथाऽत्र कात्यायनः सूत्रयामास "दर्शपूर्णमासाभ्यामिष्ट्वाऽन्येन यजेतेति श्रुतेः, सोमेन वोपक्लृप्तसोमः"(का.श्रौ.सू. ७।१।१।२)इति च । अत्र कर्कादयः । अन्यशब्देन यजतेरेवाभिधानं न जुहोतेरपि । अन्येन यजेतेति वचनात् । तथाच प्रागप्यग्निहोत्रं न निवार्यत इति । ततश्च प्रागप्यग्निहोत्रं हूयत एव तेनाधानस्य होमपूर्वकत्वं निरस्तं भवति । तथा आधानस्य सर्वार्थतायाः सर्वसंमतत्वेन उपक्लृप्तसोमस्याधातुः सोमपूर्वत्वं अनुपक्लृप्तसोमस्याधातुर्दर्शपूर्णमासपूर्वत्वसोमपूर्वत्वेऽपि चान्ययजतीनां सोमानुष्ठानानंतरं वाचनिकं दर्शपूर्णमासपूर्वकमेवारंभणम् । तथात्रैव सूत्रव्याख्याने—वाशब्दश्च व्यवस्थितविभाषार्थः । उपक्लृप्तसोमस्य सोमपूर्वत्वं इतरस्य इष्टिपूर्वत्वमिति । सोमपूर्वत्वेऽपि च अन्येषां यागानां दर्शपूर्णमासपूर्वतैव वाचनिकीति कर्कादिसिद्धांतात् । त्रिविधमाधानं निरस्तं भवति । तया सोमेन यक्ष्यमाणो नर्तुमिच्छेन्न नक्षत्रमित्यनेनाधानस्य कालांतरतोच्यते । न सर्वार्थताऽप्यपनीयत इति अत्रैव सूत्रे कर्कादिसिद्धांतात् सोमपूर्वमाधानमित्युद्घोषोऽपि निरस्तो भवति ॥

तꣳ ह॒त्वा य॒ज्ञम् । (म) अ॒ग्नावे॒व योनौ॒ रेतो॑भूत॒ꣳसिञ्च॑त्य॒ग्निर्वै॒ योनि॑र्य॒ज्ञस्य॒ स त॒तः प्र॒जाय॑ते त॒द्दश॑ता ऽआहु॒तीः सं॒पाद॑ये॒द्याभ्यो॒ व्वष॑ट्क्रि॒यते॑॥२॥ (तेऽयं) अ॒यं वै य॒ज्ञो यो॒ऽयं पव॑ते । सो॒ऽयमेक॑ऽइ॒वैव॒ पव॑ते॒ सो॒ऽयं पुरु॑षे॒ऽन्तः प्र॒विष्टो॒ द॒श॒धा विहि॑तः स॒ऽए॒वं क्लृ॒प्तैः प्रा॒णैर॒ग्नेर्योनेर॒धिजाय॑ते॒ सैषा द॒शाक्ष॑रा॒ व्विरा॒ट् सैषा सं॒पत्स॒ य॒ज्ञः ॥ ३ ॥

---

तं हत्वा यज्ञं अग्नावेव योनौ रेतोभूतं सिंचति । अग्निर्वै योनिर्यज्ञस्य । स ततः प्रजायते । तद्दशता आहुतीः संपादयेत् । याभ्यो वषट्क्रियते ॥ २ ॥

अयं वै यज्ञः, योऽयं पवते । सोऽयमेक इवैव पवते । सोऽयं पुरुषेऽन्तःप्रविष्टो दशधा विहितः । स एवं क्लृप्तैः प्राणैरग्नेर्योनेरधिजायते । सैषा दशाक्षरा विराट् । सैषा संपत् । स यज्ञः ॥ ३ ॥

---

एतदेव विविच्यते—यन्वेवेत्यादिना । 'राजानं' लतारूपं सोमं, 'अभिषुण्वंति' निष्पीडयंतीत्यर्थः । 'पशुं संज्ञपयंति' मारयंतीत्यर्थः । "मारणतोषणनिशामनेषु ज्ञा" ( धा. पा. भ्वा.प. ८१२ ) इति मित्प्रकरणे स्मरणात् । "मितां ह्रस्वः" ( पा. सू. ६ । ४ । ९२ ) इति ह्रस्वत्वम् । 'विशासति' विशासनं त्वगस्थ्यादेरनवदानीयात् हृदयाद्यवदानस्य पृथगुद्धरणं तत्कुर्वंतीत्यर्थः । "जक्षित्यादयः षट्" ( पा. सू. ६ । १ । ६ ) इत्यभ्यस्तसंज्ञा । "अदभ्यस्तात्" ( पा. सू. ७ । १ । ४ ) इत्यदादेशः । एवं सोमपशुयागयोर्हननमुक्तम् । अथ हविर्यज्ञस्योच्यते—उलूखलमुसलाभ्यां दृषदुपलाभ्यामिति । "व्रीहिभिर्यजेतेति" पुरोडाशप्रकृतित्वेन विहिता व्रीहयो अत्र हविर्यज्ञशब्देन तत्साध्ययागवाचिना विवक्षिताः । ते प्रथमं 'उलूखलमुसलाभ्यां' अवहननेन वितुषीक्रियंते । पश्चात् 'दृषदुपलाभ्यां' पिष्यन्ते इति हविर्यज्ञस्यैवंपरंपरया हननं कृतं भवतीत्यर्थः ॥ १ ॥

तꣳहत्वेत्यादि । अभिषवसंज्ञपनावहननैः 'तम्' उक्तविधं त्रिविधं 'यज्ञं हत्वा' । अग्निरूपायां 'योनौ रेतोभूतं' कारणरूपतामापन्नम् । 'सिंचति' प्रक्षिपति प्रौढः सन्नुत्पद्यत इति । अग्नेर्यज्ञयोनित्वं प्रसिद्धमित्याह—अग्निर्वै योनिरिति । अग्निरेव खलु 'यज्ञस्य योनिः' उत्पत्तिकारणम् गार्हपत्याद्यग्निसाध्यत्वात्तस्येत्यर्थः । 'सः' च रेतोभूतो अग्नौ सिक्तो यज्ञः । 'ततः' तस्मात् योन्यात्मकादग्नेः प्रकर्षेण जायते । एवमग्नेः सकाशात् यज्ञस्योत्पत्तिमुपोद्घातत्वेन प्रतिपाद्य तत्रत्यानामाहुतीनामग्नेरुत्पद्यमानानां दशसंख्यासंपादनं विधत्ते—तद्दशता इति । दशसंख्यासंपन्नो वर्गो दशता । "पंचदशतौ वर्गे वा" ( पा. सू. ५ । १ । ६० ) इति स्मृतेः । तत्रत्याभ्य आहुतिभ्यः 'वषट्क्रियते' वषट्कारप्रदानास्ताः 'आहुतीः' 'दशताः' दशकसंघातरूपाः 'संपादयेत्' न न्यूनाधिकसंख्या इत्यर्थः ॥ २ ॥

तस्य दशसंख्यासंपादनस्य प्रयोजनमाह—अयं वै यज्ञ इति । 'योऽयं' वायुरंतरिक्षे 'पवते' अयमेव खलु 'सः' यज्ञः । "वातवदध्वयुर्यज्ञं प्रयुंक्ते" इत्यादिश्रुतेः । 'सोऽयं' अंतरिक्षे संचरन् 'एक एव' अनिरूपितभेदः सन् एकरूप एव अंते संचरति । योऽयं बाह्यो वायुः 'पुरुषे' मनुष्यादिशरीरे 'अंतःप्रविष्टः' प्राणो वायुर्भूत्वा चक्षुःश्रोत्रादिरंध्रदशकात् विनिर्गच्छन् 'दशधा विहितः' विभक्तः । स एव-

( ओऽथो ) अथोऽअपि नव स्युः । ( स्तु ) तन्न्यूनां विराजं करोति प्रजननाय न्यूनाद्धा इमाः प्रजाः प्रजायंते सैषा संपत्स यज्ञः ॥ ४ ॥

( ओऽथो ) अथोऽअप्येऽकाऽतिरिक्ता स्यात् । (त्सा) सा प्रजापतिमभ्यु-तिरिच्यते सैषा संपत्स यज्ञः ॥ ५ ॥

---

अथो अपि नव स्युः । तन्न्यूनां विराजं करोति प्रजननाय । न्यूनाद्धा इमाः प्रजाः प्रजायंते । सैषा संपत् । स यज्ञः ॥ ४ ॥

अथो अप्येकाऽतिरिक्ता स्यात् । सा प्रजापतिमभ्यतिरिच्यते । सैषा संपत् । स यज्ञः ॥ ५ ॥

---

मित्यादि । 'सः' जायमानः 'यज्ञः' एवमुदीरितप्रकारेण 'क्लृप्तैः' दशभिः 'प्राणैः' सह अग्नि-लक्षणाया योनेरधिजायते' "अधिपरी अनर्थकौ" इत्यधिरनर्थकः । 'सैषा' आहुतीनां दशसंख्या दशाक्षरवि-राड्रूपतया संपन्ना । 'सा' पूर्वोक्ता 'संपत्' एषैव येयं विराड्रूपता । यज्ञश्च यो विराड्संपन्नः स एव यज्ञः । तत्र दर्शपूर्णमासयोः प्रथमं पंच प्रयाजाः । ततो द्वावाज्यभागौ । आग्नेयः, अग्निषोमीयः, उपांशुयाजश्चेति पौर्णमास्यां त्रीणि प्रधानानि । दर्शे आग्नेयोऽष्टाकपालः, वैष्णव उपांशुयाजः, ऐन्द्रं दधिपयः, इति त्रीणि । एवं दश वषट्कारप्रदाना आहुतयः । एवं पशुसोमयोरित्यनेन न्यायेन दशसंख्यासंपत्तिर्द्रष्टव्या ॥ ३ ॥

असोमयाजिनस्तु पौर्णमासे अग्नीषोमीययागो नास्ति, अतस्तदपेक्षया नवसंख्योपजीवनेन स्तौति— अथो अपि नव स्युरिति । 'अथो' इति प्रकारांतरद्योतनार्थः । वषट्कारप्रदाना आहुतयो नवसंख्याकाः 'अपि' कदाचित् भवेयुः । 'तत्' तदा एकेन 'न्यूनां' 'विराजं संपादयंति । किमर्थं 'प्रजननाय' प्रजारूपेणोत्पत्तये । न्यूनस्य प्रजोत्पत्तिहेतुता प्रसिद्धेत्याह—न्यूनाद्धा इति । न्यूनादेव तु गर्भाशयरूपात् प्रजननस्थानात् 'इमाः' मनुष्याद्याः 'प्रजाः प्रजायंते' सैषेत्यादि सिद्धम् ॥ ४ ॥

प्रधानानंतरभाविस्विष्टकृद्यागापेक्षया स्तौति—अथो अप्येकाऽतिरिक्ता स्यादिति । वषट्कारप्रदानाहुति-दशकानंतरम् स्विष्टकृद्यागरूपा एका स्विष्टकृदाहुतिरूपा 'अतिरिक्ता' विराजो अधिका 'स्यात्' सा प्रजापतिमभिलक्ष्यातिरिच्यते । उभयोरेकत्वसंख्यायोगः साम्यं । 'एषा' प्रजापतिरूपैव एकस्या आहुतेः 'संपत्' तथाच यो यज्ञः प्रजापत्यात्मकः 'सः' एव 'यज्ञः' ॥ ५ ॥

---

१–इदं प्रवचनं ( कृष्णयाजुष ) मूलं, आश्वलायनः "–यद्यग्निषोमीय उपांशुयाजोऽग्नीषोमीयो अद्यवामान्यंदिवोमातरिश्वा-जभार" ( पू. ष. १ । ६ ) विकल्पमाह । शांखायनसूत्रे तु ( १ । ८ । ८ ) सान्नाय्ययाजिने अग्नीषोमीययागः, असान्नाय्य-याजिनो वैष्णव इति व्यवस्थितविकल्पः ।

याजुर्वेदिके हौत्रे तु कात्यायनः "विष्णुश्चे दिदं विष्णुरिति । तथा आध्वर्यवेऽपि । पुरोडाशावंतरेणाग्नीषोमा उपांश्वाज्यस्य ( ३ । ३ । २३ ) विष्णुर्वामावास्यायां हौत्राम्नानात्" ( ३ । ३ । २४ ) इति ।

अत्र कर्कः "अमावास्यायां विष्णुर्वा इज्यते । अग्नीषोमौ वा । एवं हि हौत्रे आम्नायते–विष्णुश्चेदिदं विष्णुरिति । ततश्च वाज-सनेयिनां ( असोमयाजिनामपि ) पौर्णमासे अग्नीषोमीय उपांशुयागो नियत एव । दर्शे तु अग्नीषोमीयो वैष्णवो वा उपांशुयागः तेन दशवषट्कारप्रदाना दशाहुतयः, न नवेति"।

( ओ३थो ) अथोऽअपि द्वेऽअतिरिक्ते स्याताम् । द्वन्द्वं वै मिथुनं प्रजननं मिथुनमेवैतत्प्रजननं क्रियते सैषा संपत्स यज्ञः ॥ ६ ॥

( ओ३थो ) अथोऽअपि तिस्रोऽतिरिक्ताः स्युः । ( द्वं ) द्वन्द्वमहमिथुनं प्रजननमथ यज्जायते तत्तृतीयꣳ सैषा संपत्स यज्ञः ॥ ७ ॥

( ओ३थो ) अथोऽ अपि चतस्रोऽतिरिक्ताः स्युः । ( स्त ) तद्यथैकैवं चतस्रस्त्रयो वा ऽइमे लोकास्तदिमानेव लोकांस्तिसृभिराप्नोति प्रजापतिर्वाऽ अतीमांल्लोकांश्चतुर्थस्तत्प्रजापतिमेव चतुर्थ्याऽऽप्नोति सैषा संपत्स यज्ञः॥ ८॥

---

अथो अपि द्वे अतिरिक्ते स्याताम् । द्वंद्वं वै मिथुनम् । प्रजननं मिथुनम् । एवैतत्प्रजननं क्रियते । सैषा संपत् । स यज्ञः ॥ ६ ॥

अथो अपि तिस्रोऽतिरिक्ताः स्युः । द्वंद्वमहमिथुनं प्रजननम् । अथ यज्जायते तत्तृतीयम् । सैषा संपत् । स यज्ञः ॥ ७ ॥

अथो अपि चतस्रोऽतिरिक्ताः स्युः । तद्यथैका । एवं चतस्रः । त्रयो वा इमे लोकाः । तदिमानेव लोकांस्तिसृभिराप्नोति । प्रजापतिर्वा अतीमांल्लोकांश्चतुर्थः। तत्प्रजापतिमेव चतुर्थ्याऽऽप्नोति । सैषा संपत् । स यज्ञः ॥ ८ ॥

---

इत्यमिष्टिविषये स्विष्टकृतः संपत्तिमभिधाय पशुयागविषयो विशेषो विद्यते इत्यभिप्रेत्य प्रतिपादयति—**अथो अपि द्वे** इति । तत्र हि वनस्पतियागः स्विष्टकृद्यागश्चेति 'द्वे' आहुती अधिके 'स्यातां' तत्र हि द्वित्वसंख्यया प्रजोत्पत्तये मिथुनरूपतासंपत्तिः प्रतिपाद्यत इत्यर्थः । सैषा संपदिति उक्तार्थनिगमनम् ॥ ६ ॥

अथ दर्शपूर्णमासयोरनुयाजसंख्योपजीवनेन संपत्तिमाह—**अथो अपि तिस्र** इति । अनुयाजयागरूपाः 'तिस्रः' आहुतयः प्रकृतादाहुतिदशकादधिका भवेयुः । 'अह' शब्दो अवधारणे । स्त्रीपुंसरूपं द्वंद्वमेव खलु 'प्रजननं' प्रजोत्पादकम् । अथानंतरं तस्मात् द्वंद्वात्, यदपत्यं 'जायते' 'तत् तृतीयं' पितृमातृपुत्ररूपास्ता आहुतय इत्यर्थः । सैषेत्यादि पूर्ववत् ॥ ७ ॥

इत्थमेकैकं स्तुत्वा स्विष्टकृदनुयाजान् संभूयापि प्रशंसति—**अथो अपि चतस्र** इति । प्रागुदीरितात् प्रधानपर्यंतात् आहुतिदशकात् 'चतस्रः' स्विष्टकृदनुयाजरूपा आहुतयः 'अतिरिक्ताः' भवेयुः । यद्वा सोमस्त्वष्टा देवपत्न्योऽग्निर्गृहपतिरिति चत्वारः पत्नीसंयाजाः । तेऽपि उक्तादशकादतिरिच्यंत इति । तदपेक्षया चतस्र इत्येतत् व्याख्येयम्—तद्यथैकैवमित्यादि । तत्र चतसृभिरेका । यथा एका अतिरिक्ता प्रजापतिरूपेण संपन्ना । एवं चतस्रोऽपि पर्यवसानवृत्त्या प्रजापतिमेवाप्नोति सैषा संपत्तिरूपेण संपद्यत इत्यर्थः । तामेव संपत्तिमाह—**त्रयो वा इमे लोका** इति । **प्रजापतिर्वा** इत्यादि । पूर्वाभिस्तिसृभिराहुतिभिः प्राप्तान् पृथिव्यादीन् त्रीन् लोकानतिक्रम्य 'प्रजापतिः' एव हि तदपेक्षया 'चतुर्थः' चतुःसंख्यापूरकः । तत्तस्मात् 'चतुर्थ्या' आहुत्या 'प्रजापतिमेव' प्राप्नोति । सैषा संपदिति उक्तार्थनिगमनम् ॥ ८ ॥

स यद्द्वाभ्यामूनं तदूनम् । ( ५॰ ) सोऽयज्ञो यत्पञ्चभिरतिरिक्तं तदति-रिक्त५॰ँ सोऽयज्ञः सैषैव दशत्यधिसंपदेषा विꣳशत्यामेषाऽऽसहस्रात् ॥९॥

( दा ) आजिं वा ऽएते धावंति । ये दर्शपूर्णमासाभ्यां यजंते स वै पञ्च-दश वर्षाणि यजेत तेषां पञ्चदशानां वर्षाणां त्रीणि च शतानि षष्टिश्च पौर्णमास्यश्चामावास्याश्च त्रीणि च वै शतानि षष्टिश्च संव्वत्सरस्य रात्र-यस्तद्रात्रीराप्नोति ॥ १० ॥

---

स यद्द्वाभ्यामूनं तदूनम्, सोऽयज्ञः । यत्पञ्चभिरातिरिक्तं तदतिरिक्तम् । सोऽयज्ञः । सैषैव दश-त्यधिसंपत् । एषा विंशत्याम् । एषाऽऽसहस्रात् ॥ ९ ॥

आजिं वा एते धावंति, ये दर्शपूर्णमासाभ्यां यजंते । स वै पंचदश वर्षाणि यजेत । तेषां पंचदशानां वर्षाणां त्रीणि च शतानि षष्ठिश्च पौर्णमास्यश्चामावास्याश्च । त्रीणि च वै शतानि षष्ठिश्च संवत्सरस्य रात्रयः, तद्रात्रीराप्नोति ॥ १० ॥

---

एवमेकेन न्यूनत्वं चतुर्भिरतिरिक्तत्वं च प्रतिपाद्य प्रशंसा कृता । एवं द्वाभ्यां न्यूनत्वं पंचभिरतिरिक्तत्वं च प्रदर्श्य कस्मान्न स्तूयत इत्याशंक्याह–स यद्द्वाभ्यामिति । 'सः' इति प्रसिद्धौ । लिंगव्यत्ययः । यज्ञसंबंधि 'अंगं' द्वाभ्यां न्यूनं भवति । 'तत्' ऊनमेव न संपूर्णं अत एव अयज्ञः स भवति । 'यत्' तु यज्ञसंबंधि अंगं पंचसंख्यया 'अतिरिक्तं' तत् अतिरिक्तमेव यज्ञशरीरमतिक्रम्य वर्तते । अतः सोऽपि 'अयज्ञः' भवति "हानिवदंगानामतिरेकोऽपि विरोध" इति न्यायात् । मंत्रवर्णादपि अयमर्थो अवगम्यते "अतिरिक्तं यच्च कर्मणो हीनम्" इति । तस्मादत्र एकेन न्यूनत्वस्य चतुर्भिरतिरेकस्य प्रागुदीरितरीत्या संपत्तिहेतुत्वेन यज्ञसमृद्धिकरत्वात् उपन्यासः, तद्राहित्यात् द्वाभ्यामूनत्वस्य पंचभिरतिरेकस्यचानुपन्यासः, इति विभागो द्रष्टव्यः । प्रकृतां संपत्तिं निगमयति–सैषेति । विंशतिप्रभृतिषु दशकेषु एवमेषा अनुसंधेया । तत उपर्यपि 'आसहस्रात्' यावत्सहस्रसंख्या पूर्यते तावत्पर्यंतम् एकैकं दशकं विभज्य एषा विराड् संपत्ति र्ज्ञातव्येत्यर्थः । 'एवकारः प्रकारांतरव्युदसनार्थः । 'अधिः' सप्तम्यर्थानुवादी । 'दशतौ' दशवर्गे 'एषा' उक्ता संपत् ज्ञातव्येत्यर्थः ॥ ९ ॥

यावज्जीवं दर्शपौर्णमासाभ्यां यजेतेत्येकः पक्षः । त्रिंशतं वा वर्षाणीति पक्षांतरम् । तदिदानीं प्रतिपाद्यते–आजिं वा एत इति । क्रियातः प्राप्तव्यो अवधिः 'आजिः' 'ये दर्शपूर्णमासाभ्यां यजंते' 'एते' आजिमेव खलु धावंति । अतो यावता कालेनाजिः प्राप्यते तावत्ताभ्यां यष्टव्यम् । ननु कियता कालेन तत्प्राप्तिरित्याशंक्य तदुचितं कालं विधत्ते–स वै पंचदशवर्षाणीति । तावता कालेन संवत्सरात्मकस्य यज्ञस्य रात्रिलक्षणार्द्धभागप्राप्तिमाह–तेषां पंचदशानामिति । एकैकस्मिन् वर्षे चतुर्विंशतिसंख्याकाः दर्शपूर्णमासयागाः, तेषां पंचदशसंख्यया गणने सति षष्ट्युत्तरा त्रिशती संख्या संपद्यते । एकस्मिन् वत्सरे विद्यमाना रात्रयोऽपि तावत्यः । अतस्तत्संख्याकैर्यागैस्ता रात्रीराप्नोतीत्यर्थः ॥ १० ॥

(त्य) अथापराणि पुञ्चदशैव व्वर्षाणि यजेत । तेषाम्पञ्चदशानां व्वर्षाणां त्रीणि चैव शतानि षष्टिश्च पौर्णमास्यश्चामावास्याश्च त्रीणि च वै शतानि षष्टिश्च सम्वत्सरस्याहानि तदहान्याप्नोति तद्देव सम्व्वत्सरमाप्नोति ॥ ११ ॥

मर्त्या ह वाऽअग्रे देवाऽ आसुः । स यदैव ते संव्वत्सरमापुरथामृताऽ-आसुः सर्व्वं वै सम्व्वत्सरः सर्व्वं वाऽअक्षय्यमेतेनोहास्याक्षय्यᳫँ सुकृतं भवत्यक्षय्यो लोकः ॥ १२ ॥

सऽ आजिसृतामेकः । (को) यऽ एवं विद्वांस्त्रिᳫँशतं व्वर्षाणि यजते तस्माद् त्रिᳫँशतमेव व्वर्षाणि यजेत यद्यु दाक्षायणयज्ञी स्यादथोऽ अपि पुञ्चदशैव व्वर्षाणि यजेतात्र ह्येव सा संपत्संपद्यते द्वे हि पौर्णमास्यौ यजते द्वेऽ अमावास्येऽ अत्रो ऽएव खलु सा सम्पद्भवति ॥ १३ ॥

इति प्रथमप्रपाठके द्वितीयं ब्राह्मणम् ॥ ११-१-२ ॥ ( १. २. ) ॥

---

अथापराणि पंचदशैव वर्षाणि यजेत । तेषां पंचदशानां वर्षाणां त्रीणि चैव शतानि षष्टिश्च पौर्णमास्यश्चामावास्याश्च । त्रीणि च वै शतानि षष्टिश्च संवत्सरस्याहानि । तदहान्याप्नोति, तद्वेव संवत्सरमाप्नोति ॥ ११ ॥

मर्त्या ह वा अग्रे देवा आसुः । स यदैवते संवत्सरमापुः । अथामृता आसुः। सर्वं वै संवत्सरः, सर्वं वा अक्षय्यां एतेनो हास्याक्षय्यं सुकृतं भवति । अक्षय्यो लोकः ॥ १२ ॥

स आजिसृतामेकः । य एवं विद्वांस्त्रिंशतं वर्षाणि यजते । तस्माद् त्रिंशतमेव वर्षाणि यजेत । यद्यु दाक्षायणयज्ञी स्यात् । अथो अपि पंचदशैव वर्षाणि यजेत । अत्र ह्येव सा संपत्संपद्यते । द्वे हि पौर्णमास्यौ यजते द्वे अमावास्ये । अत्रो एव खलु सा संपद्भवति ॥ १३ ॥

---

संवत्सरसंबंधिनामह्नामाप्तये पुनः पंचदश वर्षाणि ताभ्यां यष्टव्यमिति विधत्ते-अथापराणीति 'तेषां पंचदशानां' इत्यादि पूर्ववद्योज्यम् ॥ ११ ॥

एवमुक्तामहोरात्रविभागेन संवत्सरप्राप्तिमनूद्य स्तौति-मर्त्या इति । पुरा खलु मरणधर्माणः 'देवाः' बभूवुः । 'ते' यस्मिन् काल उक्तरीत्या 'संवत्सरमापुः' अथानंतरम् 'अमृताः' ते बभूवुः मर्त्यतां परित्यज्य देवत्वं प्राप्ताः । अतः संवत्सरव्याप्तिरेवामृतत्वप्राप्तिरितिभावः । एतदेवोपपादयति-सर्वं वा इति । सर्ववस्त्वात्मको हि 'संवत्सरः' तत्रैव तस्योत्पत्तेः । सर्वात्मकं हि वस्तु 'अक्षय्यम्' । अक्षयोपेतं कर्म शक्यम् । "क्षय्यजय्यौ शक्यार्थे" ( पा. सू. ६।१।८१ ) इति निपात्यते । एतेन संवत्सरप्रापणेनैव 'अस्य' दर्शपूर्णमासयाजिनः 'सुकृतमक्षय्यं' क्षयरहितं 'भवति' । तत्फलभूतो लोकश्च तथा भवति ॥ १२ ॥

स च 'आजिसृतां जगद्व्यापारनिर्वाहार्थमुदयाचलादिस्थानविशेषं नियमेन प्राप्नुवतां सूर्यादीनां मध्ये स्वयमप्येको भवति, 'एवं विद्वान्' उक्तप्रकारेण संवत्सरस्वरूपप्राप्तिं जानन् यो यजमानः त्रिंशद्वर्षपर्यंतं यजेत । प्रतिपादितमर्थं निगमयति-तस्माद्ध त्रिंशतमेवेति ।

पौर्णमासेनेष्ट्वा । (ष्ट्वेन्द्रा) इन्द्राय विमृधेऽनु निर्वपति तेन यथेष्ट्यैवं यजतऽआमावास्येनेष्ट्वाऽदित्यै चरुमनु निर्वपति तेन यथेष्ट्यैवं यजते १॥

स यत्पौर्णमासेनेष्ट्वा(ष्ट्वेन्द्रा)इन्द्राय विमृधेऽनु निर्वपतीन्द्रो वै यज्ञस्य देवताऽथैतदग्नीषोमीयं पौर्णमासँ हविर्भवति तत्र नेन्द्राय त्वेति किंचन क्रियतऽएतेनो हास्यै तत्सेन्द्रँ हविर्भवत्येतेन सेन्द्रो यज्ञोऽथ यद्विमृधे त्वेति सर्वाऽउ हि मृधो नाष्ट्राः पौर्णमासेन हन्ति ॥ २ ॥

---

पौर्णमासेनेष्ट्वा इंद्राय विमृधेऽनु निर्वपति, तेन यथेष्ट्या एवं यजते । आमावास्येनेष्ट्वा अदित्यै चरुमनु निर्वपति, तेन यथेष्ट्या एवं यजते ॥ १ ॥

स यत् पौर्णमासेनेष्ट्वा, इंद्राय विमृधेऽनुनिर्वपति । इंद्रो वै यज्ञस्य देवता । अथैतत् अग्नीषोमीयं पौर्णमासं हविर्भवति । तत्र नेंद्रायत्वेति किंचन क्रियते । एतेनो हास्यै तत्सेंद्रं हविर्भवति । एतेन सेंद्रो यज्ञः । अथ यद्विमृधे त्वेति । सर्वा उ हि मृधो नाष्ट्राः पौर्णमासेन हंति ॥ २ ॥

---

यस्तु दर्शपूर्णमासारंभकाले आवृत्तिगुणविशिष्टौ तौ आरभमाणो दाक्षायणयज्ञयाजी स्यात् तस्य विशेषमाह–यद्यु दाक्षायणयज्ञी स्यादिति । ' यद्यु ' यदि तु तदा दाक्षायणेनेष्टवान् स्यात् ' पंचदशैव वर्षाणि यजेत ' न हि 'त्रिंशतं वर्षाणि ' कुत इत्यत आह–अत्र ह्येवेति । ' सा ' प्रागुक्ता अहोरात्रविभागेन संवत्सरप्राप्तिरूपा ' संपत् ' तत्रोपपत्तिमाह–द्वे हीति । एवं प्रतिपर्व द्विरावृत्त्या अनुष्ठिते सति त्रिंशद्वर्षानुष्ठानेन या संपत् भवति । अत्र दाक्षायणयज्ञयागे पंचदशवर्षानुष्ठानेऽपि सा संपत्सिध्यतीत्यर्थः॥ १३॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये एकादश काण्डे प्रथमाऽध्याये द्वितीयं ब्राह्मणम् ॥ ( ११–१–२ ) ॥

पौर्णमासयागे दर्शयागे च निवृत्ते क्रमेणानुनिर्वाप्यं हविर्विधत्ते–पौर्णमासेनेष्ट्वेति । विमृधति शत्रून् हिनस्तीति कृतगुणकायेन्द्राय ' अनु ' पौर्णमासयागानंतरं एकादशकपालं पुरोडाशं निर्वपेत् । ' तेन ' हविषा ' यथेष्ट्या ' येन प्रकारेण प्राच्यांगकलापेन पूर्णमासेष्टिः क्रियते, एवमनेनैव प्रकारेण यजेत । तथा अमावास्यानुष्ठेयेन दर्शयागेनेष्ट्वा, ' अदित्यै ' अदितिदेवताकं ' चरुमनुनिर्वपति ' । तेन यथेष्ट्या इति अनुष्ठानप्रकारोपदेशः । उभयत्र क्त्वा श्रुत्या समानकर्तृकत्वप्रतीतेः । " वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत " इत्यादिवत् अंगांगीभावोऽवगंतव्यः ॥ १ ॥

वैमृधस्य हविषोऽनुनिर्वपणमनूद्य स्तौति–स यत्पौर्णमासेनेति । इंद्रो वा इत्यादि । ' इंद्रः ' खलु ' यज्ञस्य ' प्रधानभूता ' देवता ' । अथैवं सति यदेतत् पौर्णमासमग्नीषोमीयदेवताकं हविर्भवति । तत्र ' इंद्राय त्वा ' इत्याद्युद्दिश्य ' किंचन ' किमपि हविर्न ' क्रियते ' अतस्तत्र इंद्रसंबंधविरहात् स यज्ञो देवता-

( न्त्यु ) अथ युदामावास्येनेष्ट्वा । ( ष्ट्वाऽदि ) अुदित्यै चरुमनु निर्व्वुपत्येष वै सोमो राजा देवानामन्नं युच्चन्द्रमाः स युत्रैषुऽएताᳪँ रात्रिन्न पुरस्तान्न पश्चाद्ददृशे तेनैतदुनद्धेव हविर्भवति तेनाप्रतिष्ठितमियं वै पृथिव्युदितिः सेयमद्धा सेयं प्रतिष्ठितैतेनो हास्यैतदुद्धेव हविर्भवत्येतेन प्रतिष्ठितमेतन्नु तद्युस्मादनु निर्व्वुपत्युथ युस्मान्नानु निर्व्वपेत् ॥ ३ ॥

( त्स ) स युत्पौर्णमासेनेष्ट्वा । ( ष्ट्वेन्द्रा ) इुन्द्राय व्विमृधेऽनु निर्व्वुपति सेुन्द्रो मे युज्ञोऽसदिुति सुर्व्वो वैु यज्ञऽ इुन्द्रस्यैव स यत्सुर्व्वो यज्ञऽ इुन्द्रस्यैवैतेनो हास्यैतत्सेन्द्रᳪँ हविर्भुवत्येतेन सेुन्द्रो यज्ञः ॥ ४ ॥

---

अथ यत्, आमावास्येनेष्ट्वा अदित्यै चरुमनु निर्वपति। एष वै सोमो राजा देवानामन्नम्। यच्चंद्रमाः, स यत्रैष एतां रात्रिं न पुरस्तान्न पश्चाद्ददृशे। तेनैतदनद्धेव हविर्भवति। तेनाप्रतिष्ठितम्। इयं वै पृथिव्यदितिः। सेयमद्धा। सेयं प्रतिष्ठिता। एतेनो हास्यैतदद्धेव हविर्भवति। एतेन प्रतिष्ठितं। एतन्नु तत्। यस्मादनु निर्वपति। अथ यस्मान्नानुनिर्वपेत् ॥ ३ ॥

स यत् पौर्णमासेनेष्ट्वा, इंद्राय विमृधेऽनु निर्वपति। सेन्द्रो मे यज्ञोऽसदिति। सर्वो वै यज्ञ इंद्रस्यैव संपत्। सर्वो यज्ञ इंद्रस्यैव। ऐतेनो हास्यैतत्सेंद्रं हविर्भवति। एतेन सेंद्रो यज्ञः ॥ ४ ॥

---

शून्य एव स्यात्। एतेनैव हविषा अस्य पूर्णमाससंबंधिनः एतस्य अग्नीषोमीययागस्य संबंधि हविरैंद्रं इंद्रदैवत्यं भवति। एतेनैव हविषा यज्ञश्च देवतारूपेण इन्द्रसहितो भवति। इत्थं इन्द्रायेति विशेष्याभिप्रायेण स्तुत्वा विशेषणाभिप्रायमाविष्करोति—अथ यद्विमृधे त्वेति। एतेन विशेषणेन सर्वा एव हि मृधो हिंसाः 'नाश्नाः' नाशकारिणीः प्रजाः पौर्णमासयागेन हतवान् भवतीत्यर्थः ॥ २ ॥

दर्शयागे विहितमनुनिर्वाप्यं हविरनूद्य स्तौति—अथ यदामावास्येनेति। एष वा इत्यादि। 'एषः' दृश्यमानश्चंद्रमाः खलु लतारूपः 'सोमः' भूत्वा 'देवानामन्नं' भवति। स एषः अन्नरूपश्चंद्रमाः 'यत्र' यस्मिन् हविर्विषये 'एतां रात्रिं' अत्यंतसंयोगे द्वितीया (पा. सू. २। ३। ५)। अमावास्यादिवसस्य यावती रात्रिः, तावति काले न पूर्वस्यां दिशि दृश्यते। नापि प्रतीच्यां 'तेन' सोमादर्शननिमित्तेन। एतदामावास्यं हविः 'अनद्धेव' अप्रत्यक्षमिव असत्प्रायमिव 'भवति' तेनैव कारणेन 'अप्रतिष्ठितं' निराधारं च भवति, हविराधारस्य सोमस्यादृश्यमानत्वात्। तस्य दोषद्वयस्य समाधानार्थं आदित्यस्य हविषो निर्वाप इत्याह—इयं वै पृथिव्यदितिरिति। 'अद्धा' प्रत्यक्षतया साक्षिरूपा (सद्रूपा) सर्वाधारत्वात् 'प्रतिष्ठिता' वस्त्वासनात्। अनुनिर्वाप्यपक्षं निगमयति—एतन्नु तदिति। 'यस्मात्' कारणात् उक्तं हविर्द्वयं 'अनुनिर्वपति' तत्कारणम् एतत् समनंतरं प्रतिपादितम्। 'नु शब्दः' पक्षविशेषाविष्करणे। अथानुनिर्वाप्याभावपक्षमभिधत्ते—अथ यस्मादिति। यस्मात् कारणात् उक्तहविर्द्वयस्य अनुनिर्वापो न कर्तव्यः। तत्कारणमुच्यत इति शेषः ॥ ३ ॥

उक्तस्य प्रयोजनस्य अनुनिर्वाप्यमंतरेणापि सिद्धिं वक्तुं तदनुवदति—स यत्पौर्णमासेनेति। 'मे'

( ज्ञो॑ऽथ ) अथ॒ यदा॑मावास्येने॒ष्ट्वा । ( ष्ट्वाऽदि ) अदि॑त्यै च॒रुमनु॒ निर्व॑प- त्यामावास्यं वा॒ऽ अनुनिर्व्वाप्यं पौर्णमासेन वाऽइन्द्रो॑ वृत्रमहँस्तस्माऽ एतद्वृत्रं जघ्नुषे देवाऽ एतद्धविरनुनिरवपन्युदामावास्यं किमनुनिर्व्वाप्येऽ- नु निर्व्वपेदिति तस्मान्नानु निर्व्वपेत् ॥ ५ ॥

( त्स ) स यत्पौर्णमासेनेष्ट्वा । ( ष्ट्वाऽथा ) अथान्यद्धविरनु निर्व्वप- त्यामावास्येनेष्ट्वाऽथान्यद्धविरनु निर्व्वपति द्विषन्तँ ह स भ्रातृव्यं प्रत्यु- च्छ्रयतेऽथ यः पौर्णमासेनैव पौर्णमासीं यजतऽ आमावास्येनामावास्याम- सपत्ना हैवास्यानुपबाधा श्रीर्भवति ॥ ६ ॥

---

अथ यत् आमावास्येनेष्ट्वा, अदित्यै चरुमनुनिर्वपति । आमावास्यं वा अनुनिर्वाप्यम् । पौर्णमासेन वा इंद्रो वृत्रमहन् । तस्मा एतद्वृत्रं जघ्नुषे । देवा एतद्धविरनुनिरवपन् । यदामावा- स्यम् किमनुनिर्वाप्येऽनुनिर्वपेदिति । तस्मान्नानुनिर्वपेत् ॥ ५ ॥

स यत् पौर्णमासेनेष्ट्वा, अथान्यद्धविरनुनिर्वपति । आमावास्येनेष्ट्वा, अथान्यद्धविरनुनिर्व- पति । द्विषंतं ह स भ्रातृव्यं प्रत्युच्छ्रयते । अथ यः पौर्णमासेनैव पौर्णमासीं यजते; आमावास्ये- नामावास्यम् । असपत्ना हैवास्यानुपबाधा श्रीर्भवति ॥ ६ ॥

---

मदीयः ' यज्ञः ' ' सेन्द्रः ' इंद्रसहितः असद्भवेत् इत्यनेनाभिप्रायेण हि वैमृधस्यानुनिर्वापः क्रियते । तत्र सेंद्रत्वमन्यथाऽपि सिध्यति । कुतः ? ' सर्वो हि 'यज्ञ इंद्रस्यैव' स्वकः । अथ तस्य न पृथगिन्द्रसंबंधोऽपेक्षितः । एतेनैवास्य यजमानस्य पौर्णमासं हविः सेन्द्रमिन्द्रसंबद्धं भवति । तत्साध्यो यज्ञश्च ' सेन्द्रः ' इद्रसहित एव भवति ।अत ऐन्द्रस्य हविषः अनुनिर्वापापेक्षा न विद्यत इत्यर्थः ॥ ४ ॥

दर्शयागेऽनुनिर्वाप्यस्यापि प्रयोजनमर्थवादपुरःसरं समर्थयति-अथ यदामावास्येनेति । आमावास्य- मित्यादि । पौर्णमासयागेन वृत्रं हतवते इंद्राय देवाः ' एतदामावास्यं ' हविरनुनिरवपन् पौर्णमासयाग- स्यानुनिर्वाप्यं कुर्वन् तस्मादामावास्यं हविरेवानुनिर्वाप्यम् । नह्यनुनिर्वाप्येऽनुनिर्वाप्यांतरमपेक्ष्यते संभवति वा । तस्मादनुनिर्वाप्यस्य सतो दर्शयागस्यानुनिर्वाप्यहविरंतरापेक्षाविरहात् आदित्यं हविर्नानुनिर्वपेदित्यर्थः ॥ ५ ॥

इममेव पक्षमुपोद्बलयितुं अनुनिर्वाप्यपक्षे दोषमाह-स यत्पौर्णमासेनेत्यादि । यजमानस्थानीयौ हि दर्श- पूर्णमासौ, भ्रातृव्यस्थानीयमन्यद्धविः, यदि तदनुनिर्वपेत् तर्हि सोऽध्वर्युर्यजमानस्य ' भ्रातृव्यं' ' प्रत्युच्छ्रयते ' प्रतिपक्षत्वेनोच्छ्रितमुद्यतं करोति । अतः पौर्णमास्याममावास्यायां च दर्शपूर्णमासयागावेव कर्तव्यौ, नान्यत् किंचिद्धविः । अनुनिर्वाप्यमित्युपसंहरति-अथ यः पौर्णमासेनैवेति । असपत्ना हैवेति । ' असपत्ना ' शत्रुरहिता, अत एव ' अनुपबाधा ' तत्कृतबाधारहिता च ' अस्य ' यजमानस्य यागफलरूपा श्रीर्भवति ॥ ६ ॥

पौर्णमासेन वै देवाः । पौर्णमासीं यजमानाऽआमावास्येनामावास्यां क्षिप्रऽएव पाप्मानमपाघ्नत क्षिप्रे प्राजायंत स यो हैवं विद्वान्पौर्णमासेनैव पौर्णमासीं यजतऽ आमावास्येनामावास्यां क्षिप्रऽएव पाप्मानमपहते क्षिप्रे प्रजायते स यद्यनु निर्व्वपेद्दद्याद्दक्षिणान्नादक्षिणँ हविः स्यादिति ह्याहुर्दर्शपूर्णमासयोर्ह्येवैषा दक्षिणा यदन्वाहार्य्य ऽइति न्वनुनिर्व्वाप्य-स्याथाभ्युदितस्य ॥ ७ ॥

इति प्रथमप्रपाठके तृतीयं ब्राह्मणम् ॥ ११-१-३ ॥ ( १. ३. ) ॥

---

पौर्णमासेन वै देवाः पौर्णमासीं यजमानाः; आमावास्येनामावास्याम् क्षिप्र एव पाप्मानम-पाघ्नत । क्षिप्रे प्राजायंत । स यो हैवं विद्वान् पौर्णमासेनैव पौर्णमासीं यजते—आमावास्ये-नामावास्याम्, क्षिप्र एव पाप्मानमपहते । क्षिप्रे प्रजायते । स यदि अनुनिर्वपेत् दद्याद्दक्षिणाम् । नादक्षिणं हविः स्यात्[1] इति ह्याहुः । दर्शपूर्णमासयोर्ह्येवैषा दक्षिणा यदन्वाहार्यः । इति न्वनुनिर्वा-प्यस्य । अथाभ्युदितस्य ॥ ७ ॥

---

अत एव, अनुनिर्वाप्यरहितयोरेवैतयोरनुष्ठानं पापहतिहेतुत्वेन प्रजातिहेतुत्वेन च प्रशंसति—पौर्णमासेन वै देवा इत्यादि । 'पौर्णमासीममावास्याम्' अत्यंतसंयोगे द्वितीया (पा. सू. २ । ३ । ५) । सर्वासु पौर्णमासीषु पौर्णमासेनैव यागेन नानुनिर्वाप्येन, हविषा । एवं सर्वास्वमावास्यासु आमावास्येनैव हविषा नान्येन । एवं कर्म कुर्वंतो देवाः 'क्षिप्रे' अल्प एव काले कृत्स्नपापक्षयं पुत्रपौत्रादिलक्षणप्रजासमृद्धिं च प्राप्नुवन् । अत इदानीन्तनस्यापि तथा कुर्वाणस्य यजमानस्य तत् फलद्वयं भवतीत्यर्थः । इत्थं पक्षद्वयप्रति-पादनेनानुनिर्वाप्यस्य हविषो विकल्पोऽयं षोडशीग्रहणवत्सिद्धः[1] । तत्रानुनिर्वापपक्षे तस्य प्रातिस्विकं यत्किं-चित् दक्षिणात्वेन दातव्यमिति विधत्ते—स यद्यनु निर्वपेदिति । तत्र दक्षिणादाने हेतुरुच्यते—नादक्षिण-मिति । 'न' खलु दक्षिणारहितं च 'यत्' किंचिद्धविः 'स्यात् इति' यतः 'आहुः' ब्रह्मवादिनः; अतोऽवश्यं दक्षिणा दातव्येति ।

ननु अनुनिर्वाप्ययोर्वैमृधादित्ययोर्हविषोर्दर्शपूर्णमासकर्मांगत्वात् तद्दक्षिणयैव प्रयाजादिवत् दक्षिणावत्त्वेन पृथग्दक्षिणाकांक्षाविरहात् दक्षिणान्तरविधानमसङ्गतमित्यत आह—दर्शपूर्णमासयोर्ह्येवैषेति । 'अन्वाहार्य इति' या अस्ति । एषा दर्शपूर्णमासयोरेव दक्षिणा, नतु 'अनुनिर्वाप्यस्य' हविषः । तस्य बहिस्तंत्रवर्ति-

---

१-अयं षोडशीग्रहणवत्सिद्ध इति विकल्पो वाजसनेयिसूत्रादादिविकल्पो बोध्यः । तथा कात्यायनः "इंद्राय विमृध एकादश-कपालः पौर्णमासमनु, आदिविकल्पः, आदित्यश्चरुरामावास्यम्" (का. श्रौ. सू. ४ । ५ । २३-२५) आदिविकल्प इत्येत-स्मिन् सूत्रे कर्कः— स चायं शाखांतरात् आदित एवारभ्य आंताद्विकल्प इति । आदौ आरम्भ एव विकल्पो यस्य सः । आरभ्यते नवेति यदि आरभ्यते तदा यावज्जीवं क्रियत एव । तदुक्तम्—"रूपं कालोऽनुनिर्वापो देवताश्रपणं हविः । आदौ ये विधृताः पक्षास्त इमे सर्वदा मताः" इति ।

तद्धैके दृष्ट्वोपवसंति । श्वो नोदेतेत्यभ्रस्य वा हेतोरनिर्ज्ञाय वाऽथोतोपवसंत्यथैनमुताभ्युदेति स यद्यगृहीतᳬ हविरभ्युदियात्प्रज्ञातमेव तदेषैव व्रतचर्य्या यत्पूर्व्वेद्युर्दुग्धं दधि हविरातञ्चनं तत्कुर्व्वंति प्रति प्रमुञ्चन्ति वत्साँस्तान्पुनरपाकुर्व्वंति ॥ १ ॥

---

## नैमित्तिकी त्रिहविष्का अभ्युदयेष्टिः ।

तद्धैके दृष्ट्वोपवसंति । श्वोनोदेतेति । अभ्रस्य वा हेतोः । अनिर्ज्ञाय वा । अथ उत उपवसंति । अथैनमुताभ्युदेति । स यद्यगृहीतं हविरभ्युदियात् । प्रज्ञातमेवैतत् । एषैव व्रतचर्या । यत्पूर्वेद्युर्दुग्धं दधि हविः आतंचनं तत्कुर्वंति । प्रति प्रमुंचन्ति वत्सान् तान्पुनरपाकुर्वंति ॥ १ ॥

---

त्वेन प्रयाजादिवैलक्षण्यात् । ऋत्विगानत्यर्थं पृथगेव दक्षिणा दातव्येत्यभिप्रायः । प्रकृतमर्थमुपसंहरति—इति न्वनुनिर्वाप्यस्येति । 'अनुनिर्वाप्यस्य हविषः' या मीमांसा 'इति' अनेन प्रकारेण वृत्तेत्यर्थः । वर्तिष्यमाणप्रयोगजातस्य विषयं दर्शयति—अथाभ्युदितस्येति । आमावास्ये हविषि निरुप्ते सति यदि चंद्रोऽभ्युदियात् तस्याभ्युदितस्य हविषो नैमित्तिकस्य प्रयोग इतः परमधिक्रियत इति वृत्तवर्तिष्यमाणसौकर्यपरिहारार्थो विभागनिर्देशः ॥ ७ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये एकादशकाण्डे प्रथमेऽध्याये तृतीयं ब्राह्मणम् ॥ ( ११ । १ । ३ ) ॥

अभ्युदयनिमित्तं कर्म विधित्सुस्तस्य निमित्तस्य संभवमादौ कथयति—तद्धैके इति । तत्र दर्शपूर्णमासयागविषये 'एके' शाखिनः चतुर्दशीमिश्रितपर्वणि प्रभातसमये प्राच्यां दिशि चंद्रं 'दृष्ट्वा उपवसंति' अग्न्यन्वाधानादि उपवसथकर्म निर्वर्तयंति । तेषामयमाशयः 'श्वः' परस्मिन् दिवसे यागकाले चंद्रः 'नोदेता' नोदेष्यतीति । भविष्यदनद्यतनेलुट् (पा. सू. ३ । ३ । १५) । तत्र तस्य हेतोः मेघावरणनिमित्तात् । 'अनिर्ज्ञाय' तिथिनिर्णयमज्ञात्वा 'वा' । 'अथ उतेति पदच्छेदः । उतशब्दो अप्यर्थे । अथापि कालनिर्णयाभावेऽपि उपवसंति । अकाले यद्युपवसथं कर्म अग्न्यन्वाधानादिकं करोतीति यावत् । अथानंतरं यागदिवसे 'एनं' यजमानं चंद्रोऽभ्युदेति । चतुर्दशीमिश्रितया चंद्रकलादर्शनं तस्य भवतीत्यर्थः । एवं निमित्तस्य संभावनोक्ता । चंद्रदर्शने सति कालविशेषोपजीवनेन कर्तव्यमुपदिशति स यद्यगृहीतमिति । अगृहीतमनिरुप्तमित्यर्थः । परदिवसे हविर्निर्वापात् पूर्वं अकाले कर्म प्रक्रांतमिति 'यदि' ज्ञायेत तदा 'प्रज्ञातमेव' । एतावंतं प्रयोगजातं कृतं निश्चित्य ततस्तूष्णीमासीत । 'एषा' वक्ष्यमाणैव 'व्रतचर्या' व्रतस्य नियमस्याचरणं कार्यं । का पुनरसावित्यत आह—यत्पूर्वेद्युरिति । 'पूर्वेद्युः' सायं 'दुग्धं' पयो दध्यात्मना विद्यते परस्मिन् दिवसे पुनःकरणीयस्य सायंदोहरूपस्य हविषः 'आतंचनार्थं' तत्कुर्युः । प्रातर्दोहार्थं येऽप्युपाकृता वत्सास्तान् प्रतिप्रमुंचन्ति पुनर्मातृभिः संसृजेयुः । एवं कृत्वा पुनः सायंदोहार्थं 'तान् वत्सान्' 'पुनरपाकुर्वंति' मातृभ्यः पृथक् कुर्युः ॥ १ ॥

तानपराह्णे पर्णशाखयाऽपाकरोति । तद्यथैवादः प्रज्ञातमामावास्यꣳ हविरेवमेव तद्यद्यु व्रतचर्य्यां वा नोदाशꣳसेत गृहीतं वा हविरभ्युदियादितरथो तर्हि कुर्य्यादेतानेव तण्डुलान्त्सुफलीकृतान्कृत्वा स येऽणीयाꣳसस्तानग्नये दात्रेऽष्टाकपालं पुरोडाशꣳ श्रपयति ॥ २ ॥

( त्यु ) अथ यत्पूर्व्वेद्युः । ( र्दु ) दुग्धं दधि तदिन्द्राय प्रदात्रेऽथ तदानीं दुग्धे विष्णवे शिपिविष्टाय तांस्तण्डुलाञ्छृते चरुꣳ श्रपयति चरुरु ह्येव स यत्र क्व च तण्डुलानावपति ॥ ३ ॥

---

तानपराह्णे पर्णशाखयाऽपाकरोति । तद्यथैवादः प्रज्ञातम् आमावास्यं हविः । एवमेव तत् । यद्यु व्रतचर्यां वा नोदाशंसेत । गृहीतं वा हविरभ्युदियात् । इतरथो तर्हि कुर्यात् । एतानेव तंडुलान् सुफलीकृतान् कृत्वा स येऽणीयांसः—तानग्नये दात्रेऽष्टाकपालं पुरोडाशं श्रपयति ॥ २ ॥

अथ यत्पूर्वेद्युर्दुग्धं दधि-तदिंद्राय प्रदात्रे । अथ तदानीं दुग्धे विष्णवे शिपिविष्टाय तांस्तडुलान् शृते चरुं श्रपयति । चरुरु ह्येव सः । यत्र क्व च तंडुलानावपति ॥ ३ ॥

---

तस्य कालं विधत्ते—तानपराह्ण इति । एवं परस्मिन् दिवसे पुनः सायंदोहार्थं तानपाकृत्य सायंदोहादिकं कृत्वा ततः परदिवसे प्रागनुष्ठितात् प्रज्ञातत्वेन स्थापितात् क्रियाकलापात् आरभ्य आमावास्येन हविषा काले यजेत । एवं सति अकाले प्रक्रमदोषो न भविष्यतीत्याह—तद्यथैवाद इति । तत्तस्यां व्रतचर्यायां सत्याम् 'अदः' प्रज्ञातकाले प्रक्रांतमामावास्यं हविः यथैवाविकलं भवति 'एवमेव तत्' चंद्रदर्शननिमित्तयुक्तहविर्दोषरहितं भवतीत्यर्थः । यदुक्तव्रतचर्याकरणाशक्तौ हविर्निर्वापोत्तरकाले च कर्तव्यम् तदुपदिशति—यद्यु व्रतचर्यामिति । यदि तु उक्तां 'व्रतचर्यां' कर्तुं नेच्छेत् । "आङः शसिरिच्छायाम्" (धा. पा. भ्वा.आ. २७) इति धातुः । तदा हविर्निर्वापात् पूर्वमपि वक्ष्यमाणो विधिर्ज्ञातव्यः । यदि 'वा गृहीतं' निरुप्तं हविरभ्युदियात् निर्वापोत्तरकालं चतुर्दश्यामकाले दर्शयागः प्रक्रांत इति जानीयादित्यर्थः । उभयत्रापि इतरथा उक्तात्प्रकारात्प्रकारांतरेण तर्हि कुर्यात् । तदेव प्रकारांतरमाह—एतानेवेति । य एते प्रकृतिदेवताभ्यो निरुप्ता व्रीहयश्च ते अवहननेन तंडुलाः सुफलीकृताश्च कार्याः । एवं कृत्वा तत्र ये 'अणीयांसः' कणशः कृताः सूक्ष्मतंडुलाः । उपलक्षणमेतत् । स्थूलतमा मध्यमाः सूक्ष्मतमाश्च इति त्रेधा विभागस्य च । एते त्रिविधाः । तत्र ये मध्यमाः 'तानग्नये दात्रे' दातृगुणविशिष्टायाग्नये अष्टसु कपालेषु संस्कृतं 'पुरोडाशं' श्रपयेत् ॥ २ ॥

यत्सायंदोहरूपं 'दधि' 'तदिंद्राय प्रदात्रे' प्रदातृगुणविशिष्टायेंद्राय कार्यम् । तत्र दध्नि स्थविष्ठान् तंडुलान् प्रक्षिप्य चरुं श्रपयतीत्यर्थः । अथानंतरम् तदानीं प्रातर्दुग्धे शृते ये अणीयांसस्तंडुलाः तान् समोप्य, शिपिविष्टगुणकाय 'विष्णवे' 'चरुं श्रपयति' । ( गृह्यं ) प्रक्रांतहविषां नैमित्तिको देवतापनयः कृतः । एतत्सर्वं सूत्रकारेणोक्तं "चंद्रमसाऽभ्युदित आमावास्ये पुरस्तात्तद्व्रतः स्यात्, दधिहविरातंचनं निदध्यात्, संसृज्य वत्सान् पुनरपाकरणम्, निरुप्ते व्रताशक्तौ वा त्रैधं तंडुलान् विभज्य मध्यमानग्नये दात्रे

तद्युदेवं भवति । ( त्ये ) एष वै सोमो राजा देवानामन्नं यच्चन्द्रमास्तुमेतदुपैप्सीत्तमपारात्सीत्तमस्माऽअग्निर्दाता ददातीन्द्रः प्रदाता प्रयच्छति तुमस्माऽइन्द्राग्नी यज्ञं दत्तस्तेनेन्द्राग्निभ्यां दत्तेन यज्ञेन यजतेऽथ यद्विष्णवे शिपिविष्टायेति यज्ञो वै विष्णुरथ यच्छिपिविष्टायेति यमुपैप्सीत्तमपारात्सीत्तच्छिपितमिव यज्ञस्य भवति तस्माच्छिपिविष्टायेति तुत्रो यच्छक्नुयात्तद्दद्यान्नादक्षिणᳪ हविः स्यादिति ह्याहुरथ यदेव नोदियादथोपवसेत् ॥ ४ ॥

इति प्रथमप्रपाठके चतुर्थं ब्राह्मणम् ॥ ११-१-४ ॥ ( १. ४. ) ॥

---

तद्यदेवं भवति । एष वै सोमो राजा देवानामन्नम्-यच्चंद्रमाः, तमेतदुपैप्सीत्-तमपारात्सीत् । तमस्मा अग्निर्दाता ददाति । इंद्रः प्रदाता प्रयच्छति । तमस्मा इंद्राग्नी यज्ञं दत्तः । तेनेंद्राग्निभ्यां दत्तेन यज्ञेन यजते । अथ यद्विष्णवे शिपिविष्टायेति । यज्ञो वै विष्णुः । अथ यच्छिपिविष्टायेति यमुपैप्सीत् तमपारात्सीत् । तच्छिपितमिव यज्ञस्य भवति । तस्माच्छिपिविष्टायेति । तत्रो यच्छक्नुयात्, तद्दद्यात् । नादक्षिणं हविः स्यात इति ह्याहुः । अथ यदेव नोदियात् । अथोपवसेत् ॥ ४ ॥

इति नैमित्तिकी दर्शयागे पुरस्ताचन्द्रदर्शने त्रिहविष्का
अभ्युदयेष्टिसंज्ञिका प्रायश्चित्तेष्टिः ॥

---

स्थविष्ठानिंद्राय प्रदात्रे दधनि चरुमणिष्ठान् विष्णवे शिपिविष्टाय श्रृते चरुम्, तस्य तंडुलापनयो वचनात्" (का. श्रौ. सू. २५ । ९३-९६ । ९९) इति । ननु सायंदोहप्रातर्दोहौ स्वतंत्रे हविषी । तयोश्चर्वाधारतया उपसर्जनत्वमयुक्तमित्यत आह-चरुरु ह्येव स यत्रेति । यस्मिन् कस्मिन् दधनि क्षीरे वा तंडुलाः प्रक्षिप्यन्ते चरुरेव स भवति । अतस्तयोः चरुस्वरूपानुप्रवेशान्न प्राधान्यप्रच्युतिः । अत एव तत्र सान्नाय्यधर्माणामनुष्ठानम् । उक्तं हि सूत्रकृता-" संस्कारात्सान्नाय्यम्, अन्यद्वेज्यायोगात् " (का. श्रौ. सू. २५ । ९७ । ९८ । ) इति ॥ ३ ॥

विहितां नैमित्तिकीमभ्युदयेष्टिमनूद्य प्रयोजनकथनेन स्तौति-तद्यदेवमिति । तत्तत्र एवं त्रिहविष्केष्टिं निर्वपतीति यत् तस्य प्रयोजनमुच्यत इत्यर्थः । तमेतदुपैप्सीदिति । तं देवान्नभूतं चंद्रमसम् एतत्सगुणकान्नम् उपाप्तुं ऐच्छत् स चायम् अमावास्यायां भूमौ वसतीति उपाप्तुं शक्यते । अत उपाप्तुमिच्छति । 'तमपारात्सीत्' अपराधात् अकाले कर्मणामारंभात् अपराधप्रच्युतिमकार्षीत् । अतो देवान्नभूतस्य चंद्रमसो ग्रहणाभावान्निरुत्तं हविर्विकलमेव स्यादित्यर्थः । 'तं' तथाविधमन्नरूपं चंद्रमसम् दातृगुणविशिष्टः 'अग्निः' 'अस्मै' यजमानाय ददाति । इंद्रः प्रदातेत्यादि । तमस्मा इंद्राग्नी यज्ञमिति । अविकलं यथाकालमनुष्ठेयो दर्शयागो यज्ञः । तृतीययागस्य देवतां प्रशंसति-अथ यद्विष्णव इति । अवास्यो यज्ञ एव विष्णुरिति तस्य हविः प्रति निमित्तत्वेन देवतात्वमत्र युक्तमित्यर्थः ।

अ॒थामा॒वास्ये॒ति मन्यमा॒नऽ॒उपव॒सति । ( त्यु ) अ॒थैष॒ प॒श्चाद्द॑दृ॒शे स॒ हैष॒ दि॒व्यः श्वा स॒ य॒जमा॑नस्य प॒शून॒भ्य॑वे॒क्षते॒ तद॑पश॒व्य॑ᳪं स्याद॒प्राय॑श्चित्ति॒कृत॒ऽ ए॒तस्मा॑दु॒ हैत॒द्भीषा॒ऽवचन्द्र॒मसा॒दि॒ति ॥ १ ॥

---

## दर्शयागे पश्चाच्चंद्रदर्शने त्रिहविष्का अभ्युदितेष्टिः ( प्रायश्चित्तेष्टिः ) ।

अथामावास्येति मन्यमान उपवसति । अथैष पश्चाद्ददृशे । स हैष दिव्यः श्वा । स यजमानस्य पशूनभ्यवेक्षते । तदपशव्यं स्यादप्रायश्चित्तिकृतः । एतस्मादु हैतद्भीषाऽवचंद्रमसादिति ॥ १॥

---

तद्विशेषणप्रयोजनमाह—अथ यच्छिपिविष्टायेति । यं देवानरूपं चंद्रमसं अकाले उपाप्तुं ऐच्छत् 'तमपारात्सीत्' अपराधो भ्रंशः तद्विशिष्टमकार्षीत् । तच्चंद्रात्मकमकाले निरुप्तं हविः शिपिस्तदाश्रितो दोषविशेषः, तद्युक्तमिव यज्ञस्य शरीरं भवति । तस्मात् अस्मिन् समये तादृक्शरीरविशिष्टो भवति । अतो यज्ञरूपाय विष्णवे शिपिविष्टायेति विशेषणोपादानमर्थवत्स्यात् ।

अभ्युदयेष्टौ यथाशक्ति दक्षिणां दद्यादिति विधत्ते—तत्रो यच्छक्नुयादिति । ( गृह्यं ) चंद्रोदये दोषदर्शनात् निर्दिष्टं पक्षमाह—अथेति । यदा खलु चंद्रो 'नोदियात्' पूर्वस्यां दिशि नाविर्भवति । चतुर्दशीसंस्पर्शो यस्मिन् दिने नास्ति तस्मिन्नेव दिवसे अग्न्यन्वाधानादि कर्म औपवसथ्यं कुर्यादित्यर्थः ॥ ४ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये
एकादशकाण्डे प्रथमेऽध्याये चतुर्थं ब्राह्मणम् ॥ ( ११–१–४ ) ॥

( गृह्यम् ) दर्शयागे पुरस्ताच्चंद्रदर्शने प्रायश्चित्तेष्टिरुक्ता, अथ पश्चात्तद्दर्शने नैमित्तिकीमिष्टिं विधित्सुराह—अथामावास्येति मन्यमान इति । " पर्वणो यश्चतुर्थोंऽश आद्याः प्रतिपदस्त्रयः । यागकालः स विज्ञेयः " ( मुरारिकृतपर्वनिर्णये. ) इति स्मृत्युक्तकालमतिक्रम्य प्रतिपत्तुरीयपादादिकाले अद्येदानीं अमावास्येति दर्शयागस्यायं काल इति मोहात् 'मन्यमानो' यदा 'उपवसति' औपवसथ्यं कर्म करोति । अथानंतरं सायंकाले 'एषः' चंद्रमाः 'पश्चात्' प्रतीच्यां दिशि 'ददृशे' दृश्यते चोदितं कालमतिक्रम्याकाले कर्म कृतमिति ज्ञायत इत्यर्थः । 'सः' पश्चात् दृश्यमानः 'एषः' चंद्रः 'दिव्यः' दिवि भवः 'श्वा' श्ववत् बाधकः । 'सः' 'अस्य' यजमानस्य पशून् गोऽश्वाविमहिषादीन् 'अभ्यवेक्षते' अभ्यवहर्तुं पश्यति । यथा सालावृको वने संचरतो मेषादीन् पशून् अभ्यवजिहीर्षति, तद्वत् । तस्मात् चंद्रदर्शनं 'अप्रायश्चित्तिकृतः' प्रायो नाम विध्यतिक्रमजनितो दोषः, तस्य चित्तिः, तत्समाधायकं ज्ञानपूर्वकं कर्म तदकुर्वतो यजमानस्य 'अपशव्यं' पशुभ्यो हितं पशव्यं तद्विलक्षणं स्यात् । तच्चंद्रदर्शनं पशुहानिकृदित्यर्थः । एतदेवोपपादयते—एतस्मादिति । एतस्मादेव खलु चंद्रसंबंधिश्वरूपेण पूर्वोक्तात् । अत एव 'अवचंद्रमसात्' अवकृष्टो निकृष्टः चंद्रमाः अवचंद्रमसः । " अनसन्तान्नपुंसकात् " ( पा. सू. ५ । ४ । १०३ ) इति अनपुंसकाल्लिंगादपि व्यत्ययेनाकारः समासांतः । तस्माच्चन्द्रादिति 'भीषा' उक्तरूपया भीत्या ॥ १ ॥

---

१–काम्या चेयं पशव्येष्टिः ।

छायामुपसर्प्पन्ति । (न्त्ये) एतेनो हैतदुपतपदाचक्षते श्वलुचितमित्येतमु हैवैतदाचक्षते ॥ २ ॥

शशश्चांद्रमस ऽइति । चन्द्रमा वै सोमो देवानामन्नं तं पौर्णमास्यामभिषुण्वन्ति सोऽपरपक्षेऽपऽओषधीः प्रविशति पशवो वाऽअपऽ ओषधीरदन्ति तदेनमेताᳬं रात्रिं पशुभ्यः सन्नयति ॥ ३ ॥

सोऽद्यामावास्येति मन्यमानऽउपवसति । (त्यु) अथैष पश्चाद्ददृशे तद्य-जमानो यज्ञपथादेति तदाहुः कथं कुर्य्यादित्वा यज्ञपथाद्यजेता३ऽन यजेता३ऽ इति यजेत हैव न ह्यन्यदपक्रमणं भवति श्वः श्वऽएवैष ज्यायानुदेति स ऽआमावास्यविधेनैवेष्ट्वाऽथेष्टिमनु निर्व्वपति तदहर्व्वैव श्वो वा ॥ ४ ॥

---

छायामुपसर्पन्ति । एतेनो हैतदुपतपत् आचक्षते श्वलुचितमिति । एतमु हैवैतदाचक्षते ॥ २ ॥

शशश्चांद्रमस इति । चंद्रमा वै सोमो देवानामन्नम् । तं पौर्णमास्यामभिषुण्वंति । सोऽपर-पक्षेऽपऽओषधीः प्रविशति । पशवो वा अप ओषधीरदंति । तदेनमेतां रात्रिं पशुभ्यः सन्नयति ॥ ३ ॥

सोऽद्यामावास्येति मन्यमान उपवसति । अथैष पश्चाद्ददृशे । तद्यजमानो यज्ञपथादेति । तदाहुः कथं कुर्यात् इत्वा यज्ञपथाद्यजेता ३ न यजेता ३ इति । यजेत हैव । न ह्यन्यद-पक्रमणं भवति । श्वः श्व एवैष ज्यायानुदेति । स आमावास्यविधेनैवेष्ट्वा—अथेष्टिमनुनिर्वपति । तदहर्वैव श्वो वा ॥ ४ ॥

---

'छायामुपसर्पन्ति' उपगच्छन्ति गवाद्याः पशवस्तिरोहिता यजमानस्य भवंतीत्यर्थः । 'एतेनो ह' एतेनैव प्रकारेण इति 'उपतपत्' पशूनामुपतापकारि यदेतच्चंद्रदर्शनं ततः 'श्वलुचितं' शुना रिक्तीकृतमित्याचक्षते अभिज्ञाः कथयंति । 'एतमु हैवैतत्' एतमेव चंद्रगतदोषम् एवम् 'आचक्षते' ॥ २ ॥

'चन्द्रमसः' संबंधी तन्मण्डलमध्यवर्ती 'शशः' इति । अत एव तस्य शशांक इति प्रसिद्धिः । इतोऽपि चन्द्रदर्शनात्प्रागेव शुद्धायाममावास्यायां उपवसथः कार्य इत्याह—चंद्रमा वा इति । तं पौर्णमास्यामिति । उपचयकाष्ठां गतं तं देवान्नरूपं चंद्रमसं पौर्णमासीकाले 'अभिषुण्वंति' पातुं द्रवीकुर्वंति । स चाभिषवेणेतः अनुष्ठिताऽपरपक्षे अप ओषधीश्च प्रविशति । पशवस्ता ओषधीर्जग्ध्वा अपश्च पीत्वा स्वात्मनि तं चांद्रमसं कृत्स्नं रसममावास्यायां धारयंति । तत 'एनं' रसमेतां रात्रिम् । "अत्यंतसंयोगे द्वितीया"—( पा. सू. २ । ३ । ५ ) । अमावास्यायाः संबन्धिन्यां रात्रौ 'पशुभ्यः' 'सकाशात् सन्नयति' सम्यक् प्रापयति । तत्सन्नयनं प्रतिपच्चंद्रदर्शने सति नोपपद्यत इत्यर्थः ॥ ३ ॥

दर्शयागस्यातिक्रांतकालत्वे दोषमुपन्यस्य तत्रानुष्ठानप्रकारमाह—सोऽद्यामावास्येति । व्याख्यातार्थः । तत्तथा पश्चाच्चंद्रदर्शने सति यजमानो[1] 'यज्ञपथात्' अनुष्ठानमार्गात् 'एति' अपक्रामति "ऋक्पू-

---

१—अयं दर्शिज्ञानार्थः, न प्रेक्षणार्थः । पश्चादभ्युदृष्ट इति सूत्रावयवव्याख्याने—तद्दर्शनं च शास्त्रतः प्रतिपद्येव भवति । भ्रात्या प्रतिपदि उपवासोपक्रम एतत् । इति कर्कः ।

तुस्यै त्रीणि हवी॑ᳪषि भवन्ति। ( न्त्य ) अग्नये पथिकृतेऽष्टाकपालं पुरोडाशमिन्द्राय व्वृत्रघ्नऽएकादशकपालमग्नये व्वैश्वानराय द्वादशकपालं पुरोडाशम् ॥ ५ ॥

(ᳪ) स यदग्नये पथिकृते निर्व्वपति। (त्य) अग्निर्व्वै पथः कर्ता स यस्मादेवादो यजमानो यज्ञपथादेति तमेनमग्निः पन्थानमापादयति ॥ ६ ॥

( त्य ) अथ यदिन्द्राय व्वृत्रघ्ने । पाप्मा वै व्वृत्रो यो भूतेर्व्वारयित्वा तिष्ठति कल्याणात्कर्म्मणः साधोस्तमेतदिन्द्रेणैव व्वृत्रघ्ना पाप्मानं व्वृत्रᳪ हन्ति तस्मादिन्द्राय व्वृत्रघ्ने ॥ ७ ॥

---

तस्यै त्रीणि हवींषि भवंति। अग्नये पथिकृतेऽष्टाकपालं पुरोडाशम्, इंद्राय वृत्रघ्न एकादशकपालम्, अग्नये वैश्वानराय द्वादशकपालं पुरोडाशम् ॥ ५ ॥

स यदग्नये पथिकृते निर्वपति। अग्निर्वै पथः कर्ता। स यस्मादेवादो यजमानो यज्ञपथादेति। तमेनमग्निः पंथानमापादयति ॥ ६ ॥

अथ यदिंद्राय वृत्रघ्ने। पाप्मा वै वृत्रः। यो भूतेर्वारयित्वा तिष्ठति कल्याणात्कर्मणः साधोः। तमेतदिंद्रेणैव वृत्रघ्ना पाप्मानं वृत्रं हंति। तस्मादिंद्राय वृत्रघ्ने ॥ ७ ॥

---

रब्धूः " (पा.सू.५।४।७४) इति अकारः समासांतः। अत्र कर्तव्यविशेषमुपदेष्टुं ब्रह्मवादिनां प्रश्नमुद्भावयति—तदाहुः कथं कुर्यादित्वा यज्ञपथादिति। 'इत्वा' गत्वा प्रच्युतो भूत्वेत्यर्थः। किं प्रक्रांतेन दर्शयागेन ' यजेत न यजेतेति ' तेषां मीमांसा। "विचार्यमाणानाम्" ( पा. सू. ८।२।९७ ) इत्युभयत्र प्लुतिः। एवं विचार्य यागपक्षमेव निर्द्धारयंति—यजेत ३ हैवेति। ' अपक्रमणं ' दोषनिष्क्रमणद्वारं, तदानीमेव प्रकृतयागनिर्वर्तने कारणमाह—श्वः श्व एवैष इति। ' श्वः श्वः ' उत्तरोत्तरदिवसे कलावृद्ध्या ' ज्यायान् ' वृद्धतर एव सन्नुदेति। तथा च कालातिक्रम ओषधिगतश्चंद्रः प्रतिक्षणं ततोऽपसर्पतीति प्रकृतो दर्शयागः शीघ्रं समापनीय इत्यर्थः। अनंतरमेवैतद्दोषपरिहाराय प्रायश्चित्तेष्टिः कर्तव्येति विधत्ते—स आमावास्यविधेनैवेति। यश्चोदितकालेऽनुष्ठितोऽमावास्यायागः, तत्प्रकारेणैव प्रतिपदि प्रक्रांतां दर्शेष्टिं समाप्य, अनंतरमेव एतां त्रिहविष्कां वक्ष्यमाणामिष्टिमनुनिर्वपेत्। सा च सद्यस्काला द्व्यहःकालसाध्या वा कार्येत्याह—तदहर्वैवेति ॥ ४ ॥

कतिहविष्का सेति तत्राह—तस्यै त्रीणीति। षष्ठ्यर्थे चतुर्थी ( पा. सू. २। ३। ६२। वा. )। तान्येव हवींषि दर्शयति—अग्नये पथिकृत इति ॥ ५ ॥

तानि क्रमेणानूद्य व्याचष्टे—स यदग्नये पथिकृत इति। ' पथः ' यज्ञमार्गस्य भ्रष्टस्य ' अग्निः ' खलु ' कर्ता ' पुनः प्रापयिता। अतः सोऽग्निस्तं पंथानम् ' एनं ' यजमानं प्रापयति। ' यस्मात् ' यज्ञपथादेव ' अदः ' अमुत्र ' यजमान एति ' अपक्रामति। अतः पथिकृद्विशेषणविशिष्टाग्नेर्यागो युक्त इत्यर्थः ॥ ६ ॥

द्वितीययागदेवताया अपि विशेषणं प्रकृतोपयोगित्वेन समर्थयते—पाप्मा वै वृत्र इति। ' वृत्रघ्ने ' इत्यत्र

( ब्रे ऽथ ) अथ यदग्नये वैश्वानराय । द्वादशकपालं पुरोडाशं निर्वपति यत्र वाऽइन्द्रो वृत्रमहंस्तमग्निना वैश्वानरेण समदहत्तदस्य सर्वं पाप्मानꣳ समदहत्तथोऽ एवैषऽ एतदिन्द्रेणैव वृत्रघ्ना पाप्मानं वृत्रꣳ हत्वा तमग्निना वैश्वानरेण संदहति तदस्य सर्वं पाप्मानꣳ संदहति स यो हैवं विद्वानेतयेष्ट्या यजते न हास्यालपश्चन पाप्मा परिशिष्यते ॥ ८ ॥

तस्यै सप्तदश सामिधेन्यो भवन्ति । ( न्त्यु ) उपांशु देवता यजति याः कामयते ता याज्याऽनुवाक्याः करोत्येवमाज्यभागावेवꣳ संयाज्ये ॥ ९ ॥

---

अथ यदग्नये वैश्वानराय द्वादशकपालं पुरोडाशं निर्वपति । यत्र वा इंद्रो वृत्रमहन् । तमग्निना वैश्वानरेण समदहत् । तदस्य सर्वं पाप्मानं समदहत् । तथो एवैष एतदिंद्रेणैव वृत्रघ्ना पाप्मानं वृत्रं हत्वा तमग्निना वैश्वानरेण संदहति । तदस्य सर्वं पाप्मानं संदहति । स यो हैवं विद्वानेतयेष्ट्या यजते । न हास्यालपश्चन पाप्मा परिशिष्यते ॥ ८ ॥

तस्यै सप्तदश सामिधेन्यो भवंति । उपांशु देवता यजति । याः कामयते, ता याज्याऽनुवाक्याः करोति । एवमाज्यभागौ । एवं संयाज्ये ॥ ९ ॥

---

हननक्रियां-प्रति कर्मभूतो यो वृत्रः सः ' पाप्मा ' । तं विशिनष्टि—यो भूतेरिति । ' साधोः ' यथाकालमनुष्ठितात्, कल्याणाच्छोभनफलसाधनात्, ' कर्म्मणः ' या ' भूतिः ' फलोत्पत्तिः, तां ' वारयित्वा ' यः पाप्मा ' तिष्ठति ' । भूतेरिति कर्मणि षष्ठी ( पा. सू. २ । ३ । ५० ) । तमेतदित्यादि स्पष्टम् ॥ ७ ॥

वार्त्रघ्नयागानंतरमाग्नेययागस्य कर्तव्यतां प्रतिपादयति—यत्र वा इंद्र इति । हतस्य वृत्रस्य पुनरुद्भवशंकया ' तं ' हतं वृत्रं वैश्वानरगुणकेनाग्निना ' इंद्रः समदहत् ' भस्मसात्कृतवान् । ततः सोऽग्निः अस्येंद्रस्य ' सर्वं ' वृत्ररूपं ' पाप्मानं समदहत् ' । पुरावृत्तसंसिद्धमर्थं प्रकृते योजयति—तथो एवैष इति । ' एषः ' यजमानः तथैव वृत्रहननगुणविशिष्टेन ' इंद्रेणैव ' अयथाकालानुष्ठानजनितं पापरूपं ' वृत्रं हत्वा ' ' तं वैश्वानरेणाग्निना ' सम्यक् ' दहति ' भस्मीकरोति । तदनंतरं सोऽग्निः ' अस्य ' यजमानस्य ' सर्वं पाप्मानं संदहति ' । प्रकृतमुपसंहरति—स यो हैवमिति । अलपश्चनेति । चनशब्दोऽप्यर्थे ॥ ८ ॥

अथास्यामिष्टौ "प्रकृतिवत् विकृतिः कर्तव्या" इति चोदकप्राप्तेषु अंगेषु विशेषं विधत्ते—तस्यै सप्तदश सामिधेन्य इति । समिदाधानार्था ऋचः ' सामिधेन्यः ' । ताः प्रकृतौ पंचदश । अत्र चोदकप्राप्तास्ताः " पृथुपाजवत्यौ धाय्ये द्वे " इति ' सप्तदश भवंति ' । प्रकृतौ प्रधानयागे उच्चैष्ट्वं धर्मः । अत्र तदपवादेन उपांशुत्वं विधीयते—उपांशु देवता यजतीति । ' देवताः ' प्रधानदेवताः । याः कामयत इत्यादि । प्रकृतदेवतालिंगयुक्ताः चतुःषष्ट्यां दाशतय्यां समाम्नाताः ' याः ' ऋचः ' कामयते ' ताः ' याज्याऽनुवाक्याः ' कुर्यात् । तत्रैता एवेति नियमो नास्तीत्यर्थः । आज्यभागयोः स्विष्टकृद्यागे च याज्याऽनुवाक्यासु याथाकाम्यमतिदिशति—एवमाज्यभागाविति । एवं संयाज्ये इति च ॥ ९ ॥

तिसृधन्वं दक्षिणां ददाति । धन्वना वै श्वानं बाधन्ते तदेतमेवैतद्बाधते यत्तिसृधन्वं दक्षिणां ददाति ॥ १० ॥

दण्डं दक्षिणां ददाति । दण्डेन वै श्वानं बाधंते तदेतमेवैतद्बाधते यद्दण्डं दक्षिणां ददात्येषाऽन्वादिष्टा दक्षिणा दद्यात्त्वेवास्यामप्यन्यद्याऽइतरा दक्षिणास्तासां यत्संपद्येत सा हैषा पशव्येष्टिस्तयाऽप्यनभ्युदृष्टो यजेतैव ॥ ११ ॥

इति प्रथमप्रपाठके पञ्चमं ब्राह्मणम् ॥ ११।१।५ ॥ ( १-५ ) ॥

---

तिसृधन्वं दक्षिणां ददाति । धन्वना वै श्वानं बाधंते । तदेतमेवैतद्बाधते । यत्तिसृधन्वं दक्षिणां ददाति ॥ १० ॥

दंडं दक्षिणां ददाति । दण्डेन वै श्वानं बाधंते । तदेतमेवैतद्बाधते । यद्दंडं ददाति । एषाऽन्वादिष्टा दक्षिणा । दद्यात्त्वेव अस्यामप्यन्यत् । या इतरा दक्षिणाः । तासां यत्संपद्येत । सा हैषा पशव्येष्टिः । तयाऽप्यनभ्युदृष्टो यजेतैव ॥ ११ ॥

---

दक्षिणाद्रव्यं विधाय स्तौति—तिसृधन्वमिति । तिसृभिरिषुभिर्युक्तं धन्व 'तिसृधन्वम्' । पूर्ववदकारांतः समासांतः ( पा. सू. ५ । ४ । ७४ ) । धनुषा खलु लोके 'श्वानं बाधंते' । तत्तत 'एत' चंद्रात्मकं दिव्यं श्वानं 'एतत्' एतेन दीयमानेन धनुषा 'बाधते' हिनस्ति ॥ १० ॥

अन्यदपि देयं द्रव्यं दर्शयति—दण्डं दक्षिणां ददातीति । निगदसिद्धोऽर्थः । एतावदेवेति दक्षिणाद्रव्यस्य नियमो नाभिप्रेत इत्याह—एषाऽन्वादिष्टा दक्षिणेति । 'एषा' खलु 'आदिष्टा' अस्या इष्टेर्विशेषविहिता 'दक्षिणा' । अतो दद्यादेव अस्यामिष्ट्यां 'अन्यदपि' द्रव्यम् । या उक्तव्यतिरिक्ता इष्ट्यंतरेषु देयाः 'दक्षिणाः' । 'तासां' मध्ये यद्द्रव्यं 'संपद्येत' तद्दद्यादिति संबंधः ।

उक्तनिमित्ताभावेऽपि पशुकामेन एषा इष्टिः कार्या इति विधत्ते—सा हैषेति । 'सा' खलु 'एषा' इष्टिः 'पशव्या' पशुभ्यो हिता तया 'अनभ्युदृष्टोऽपि' अदृश्यमानचंद्रोऽपि यजेतैव ॥ ११ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये एकादशकाण्डे प्रथमाध्याये पञ्चमं ब्राह्मणम् ॥ ( ११-१-५ ) ॥

---

१-कात्यायनः सर्वमेतदनुसूत्रत् "पश्चादभ्युदृष्ट आमावास्येनेष्ट्वा तदहवैव श्वो वाऽग्नये पथिकृत इंद्राय व्रतभृत एकादशकपालो वैश्वानरश्च । त्रीषुकं धनुर्दक्षिणा दण्डो वा । प्राकृताश्चेच्छन् । अनभ्युदृष्टस्यापि पशुकामस्य" इति । का. श्रौ. सू. २५ । १०२-१०६ ।

आपो ह वाऽ इदमग्रे सलिलमेवास । ताऽअकामयंत कथं नु प्रजा-
येमहीति ताऽ अश्राम्यंस्तास्तपोऽतप्यंत तासु तपस्तप्यमानासु हिरण्म-
यमाण्डᳪं संबभूवाजातो ह तर्हि संवत्सरऽआस तदिदᳪं हिरण्मयमाण्डं
यावत्संव्वत्सरस्य व्वेला तावत्पर्य्यप्लवत ॥ १ ॥

ततः संवत्सरे पुरुषः समभवत् । (त्स) स प्रजापतिस्तस्माद् संवत्सर ऽएव
स्त्री वा गौर्वा व्वडवा वा व्विजायते संवत्सरे हि प्रजापतिरजायत सऽइदᳪं
हिरण्मयमाण्डं व्यरुजन्नाह तर्हि काचन प्रतिष्ठाऽऽस तदेनमिदमेव
हिरण्मयमाण्डं यावत्संव्वत्सरस्य व्वेलाऽऽसीत्तावद्बिभ्रत्पर्य्यप्लवत ॥ २ ॥

---

सृष्टिब्राह्मणम् ।

आपो ह वा इदम् अग्रे सलिलमेवास । ता अकामयंत । कथं नु प्रजायेमहीति । ता अश्राम्यन् । तास्तपोऽतप्यंत । तासु तपस्तप्यमानासु हिरण्मयमांडं संबभूव । अजातो ह तर्हि संवत्सर आस । तदिदं हिरण्मयमांडं यावत्संवरस्य वेला तावत्पर्यप्लवत ॥ १ ॥

ततः संवत्सरे पुरुषः समभवत् , स प्रजापतिः । तस्माद् संवत्सर एव स्त्री वा गौर्वा वडवा वा विजायते । संवत्सरे हि प्रजापतिरजायत । स इदं हिरण्मयमांडं व्यरुजत् । नाह तर्हि काचन प्रतिष्ठाऽऽस । तदेनमिदमेव हिरण्मयमांडं यावत्संवत्सरस्य वेलाऽऽसीत्तावद्बिभ्रत्पर्यप्लवत ॥ २ ॥

---

अथ दर्शपूर्णमासयोः सर्वात्मकलक्षणवैराजपदप्राप्तिसाधनतां वक्ष्यन् तदुपोद्घातत्वेनाख्यायिकया सृष्टिं प्रतिपादयति—आपो ह वा इदमित्यादि । 'इदं' दृश्यमानं सर्वं जगत् 'आपः' एव अबात्मकमेव तत्कार्यत्वात् । कथमिति चेत्, उच्यते । 'अग्रे' सृष्टेः पूर्वं सर्वात्मकमिदं सर्वं 'सलिलमेव' उदकपरिशेषं बभूव । 'आसेति' छांदसो भूभावाभावः । आपः 'अकामयंत' अभिमानिदेवतापेक्षया अचेतनानामपां कामयितृत्वम् । 'कथं नु' केन प्रकारेण विविधजगदात्मना प्रकर्षेण 'जायेमहीति' । 'ताः' कामयमानाः 'अश्राम्यन्' खिन्ना अभूवन् । "श्रमु तपसि खेदे च" ( धा. पा. दि. प. ९८ ) इति धातुः । "शमामष्टानां दीर्घः श्यनि" ( पा. सू. ७ । ३ । ७४ ) इति दीर्घः । 'ताः' श्रांताः आपः 'तपोऽतप्यंत' स्रष्टव्यपर्यालोचनरूपं तपः कृतवत्यः । "तपस्तपःकर्मकस्यैव" (पा. सू. ३ । १ । ८८) इति कर्मवद्भावात् यगात्मनेपदे । अखिलजगत्कारणमयस्य प्रजापतेरुपादानस्याण्डस्योत्पत्तिमाह—तासु तपस्तप्यमानास्विति । 'हिरण्मयं' हिरण्यस्य विकार इत्यर्थे "दांडिनादिसूत्रे" ( पा. सू. ३ । ४ । १७४ ) निपात्यते । हिरण्यनिर्मितमण्डं अप्सु प्रथमं मयूरकुक्कुटांडवत् 'संबभूव' उत्पन्नमभूत् । 'तर्हि' तस्मिन् समये संवत्सराख्यः कालोऽपि 'अजातः' अनुत्पन्न एव बभूव । अतः संवत्सराभावात् यावती 'संवत्सरस्य वेला' प्रांतः संभाव्यते 'तावत् पर्यप्लवत' तदण्डं परिप्लुतमपामुपरि स्थितमासीत् । "प्लुङ् गतौ" (धा. पा. भ्वा. आ. ९८३)इति धातुः॥ १ ॥

ततस्तस्मादण्डात् संवत्सरकाले गते सति 'पुरुषः' शरीरी कश्चित् 'समभवत्' उदपद्यत । 'सः' पुरुषः 'प्रजापतिः' । लोके शरीरिण उत्पत्तिः अत एव हेतोः संवत्सरकालसाध्या दृश्यत इत्याह—तस्माद्

स सम्वत्सरे व्याजिहीर्षत् । (तस) स भूरिति व्याहरत्सेयम्पृथिव्यभवद्भुव ऽइति तदिदमन्तरिक्षमभवत्स्वरिति साऽसौ द्यौरभवत्तस्मादु सम्वत्सर ऽएव कुमारो व्याजिहीर्षति संवत्सरे हि प्रजापतिर्व्याहरत् ॥ ३ ॥

( तस ) स वाऽएकाक्षरद्व्यक्षराण्येव । प्रथमं वदन्प्रजापतिरवदत्तस्मादेकाक्षरद्व्यक्षराण्येव प्रथमं वदन्कुमारो वदति ॥ ४ ॥

तानि वाऽएतानि पञ्चाक्षराणि । तान्पञ्चर्तूनकुरुत तऽ इमे पञ्चर्तवः सऽ एवमिमांल्लोकाञ्जातान्त्संवत्सरे प्रजापतिरभ्युदतिष्ठत्तस्मादु संवत्सर ऽएव कुमारऽउत्तिष्ठासति संवत्सरे हि प्रजापतिरुदतिष्ठत् ॥ ५ ॥

---

स संवत्सरे व्याजिहीर्षत् । स भूरिति व्याहरत् । सेयं पृथिव्यभवत् । भुव इति । तदिदमंतरिक्षमभवत् । स्वरिति । साऽसौ द्यौरभवत् । तस्मादु संवत्सर एव कुमारो व्याजिहीर्षति । संवत्सरे हि प्रजापतिर्व्याहरत् ॥ ३ ॥

स वा एकाक्षरद्व्यक्षराण्येव प्रथमं वदन् प्रजापतिरवदत् । तस्मादेकाक्षरद्व्यक्षराण्येव प्रथमं वदन् कुमारो वदति ॥ ४ ॥

तानि वा एतानि पंचाक्षराणि । तान्पंच ऋतूनकुरुत । त इमे पंच ऋतवः । स एवमिमान् लोकान्

---

संवत्सर एवेति । यस्मात् प्रजापतिसृष्टिरुक्तविधा तस्मात् लोकेऽपि स्त्र्यादिः संवत्सरपर्यंतं गर्भाशयस्थाने अण्डरूपेण गर्भं धृत्वा तदवसाने ' विजायते ' विविधं शरीरद्वयरूपेण उत्पद्यते । संवत्सरे हीत्युक्तस्य कारणस्य पुनर्योजनम् । स इदं हिरण्मयमित्यादि । ' सः ' उत्पन्नः प्रजापतिः ' इदं हिरण्मयं ' स्वाश्रयभूतमाण्डं ' व्यरुजत् ' भग्नं कृतवान् । "रुजो भंगे" (धा. पा. तु. प. १३९) इति धातुः । ' तर्हि ' तस्मिन् संवत्सरमये समये आश्रयभूतस्य आण्डस्य विरुग्णत्वात् ' तस्य ' प्रजापतेः ' प्रतिष्ठा ' आस्पदम् ' काचन ' किमपि ' नैवास ' न बभूव । स च निराधारत्वात् स्थातुमशक्नुवन् इदमेव भिन्नं हिरण्मयमाण्डं पुनः संवत्सरपर्यंतं बिभ्रद्धारयन् तास्वेव अप्सु ' पर्यप्लवत ' ॥ २ ॥

' सः ' प्रजापतिरुत्पत्त्यनंतरं ' संवत्सरे ' गते सति ' व्याजिहीर्षत् ' व्याहर्तुं भाषितुमैच्छत् । " हृञ् हरणे " (धा. पा. भ्वा. उ. ८) इत्यस्मात् इच्छासन्नंतात् लङ् । प्रथमं लोकत्रयसृष्टिमाह—भूरिति व्याहरदित्यादिना । भूर्भुवः स्वरित्येतत्पदत्रयं क्रमेण व्याहृतं सत् स्ववाच्यपृथिव्याद्यात्मना जातमित्यर्थः । भुव इति स्वरित्युभयत्र व्याहरदित्यनुषंगः । तस्मादिति पूर्ववल्लोकप्रसिद्धेरुपपादनम ॥ ३ ॥

प्रजापत्युक्तेः कुमारोक्तेश्चान्यदपि साम्यं कार्यकारणभावेन प्रतिपादयति—स वा इति । भूरित्येकाक्षरं ततो भुवः स्वरिति च अक्षरद्वयात्मकमेव ' प्रथमं वदन् ' भाषमाणः सः ' प्रजापतिरवदत् ' अन्यत्सर्वमुक्तवान् । तस्मादेव कारणात् कुमारोऽपि " तात " इत्येवंरूपाणि ' एकाक्षरद्व्यक्षराण्येव ' पदानि ' प्रथमं ' भाषमाणः ' वदति ' ॥ ४ ॥

ऋतुसृष्टिमाह—तानि वा इति । भूर्भुवः स्वरिति ' तान्येतानि पंचाक्षराणि ' ' तान् ' प्रसिद्धान्

( त्स ) स सहस्रायुर्जज्ञे । स यथा नद्यै पारं परापश्येदेवꣳ स्वस्यायुषः पारं पराचख्यौ ॥ ६ ॥

सोऽर्चञ्छ्राम्यँश्चचार प्रजाकामः । सऽ आत्मन्येव प्रजातिमधत्त सऽ आस्येनैव देवानसृजत ते देवा दिवमभिपद्यासृज्यंत तद्देवानां देवत्वं यद्दिवमभिपद्यासृज्यन्त तस्मै ससृजानाय दिवेवास तद्वेव देवानां देवत्वं यदस्मै ससृजानाय दिवेवास ॥ ७ ॥

---

जातान् संवत्सरे प्रजापतिरभ्युदतिष्ठत् । तस्माद्ध संवत्सर एव कुमार उत्तिष्ठासति । संवत्सरे हि प्रजापतिरुदतिष्ठत् ॥ ५ ॥

स सहस्रायुर्जज्ञे । स यथा नद्यै पारं परापश्येत् एवं स्वस्यायुषः पारं पराचख्यौ ॥ ६ ॥

सोऽर्चन् श्राम्यंश्चचार प्रजाकामः । स आत्मन्येव प्रजातिमधत्त । स आस्येनैव देवानसृजत । ते देवा दिवमभिपद्यासृज्यंत । तद्देवानां देवत्वम्, यद्दिवमभिपद्यासृज्यंत । तस्मै ससृजानाय दिवेव आस । तद्वेव देवानां देवत्वं, यदस्मै ससृजानाय दिवेव आस ॥ ७ ॥

---

वसंताद्यान् ' पञ्च ऋतूनकुरुत ' । हेमंतशिशिरयोः समासाभिप्रायेण पंचसंख्या । अतस्तैः पंचभिरक्षरैः सृष्टाः ' त एव ' प्रसिद्धा वसंताद्याः ' पंचर्तवः ' पूर्वसृष्टेषु त्रिषु लोकेषु वर्तंते । ' सः ' परिप्लवमानः ' प्रजापतिः ' एकस्मिन् ' संवत्सरे ' गते सति आंडं विहाय ' इमान् ' सृष्टान् पृथिव्यादिलोकान् अवलंब्य ' उदतिष्ठत् ' ऊर्ध्वं स्थितवान् । यस्मादेवं प्रजापतिः, तस्मादेव कारणात् जन्मानंतरं संवत्सरकाले गत एव ' कुमारः ' बालः ' उत्तिष्ठासति ' उत्थातुमिच्छति । संवत्सरे हीत्युक्तेऽर्थे कारणयोजनम् ॥ ५ ॥

स सहस्रायुरित्यादि । ' सः ' प्रजापतिः ' सहस्रायुः ' सहस्रसंवत्सरजीवनोपेतः ' जज्ञे ' जातो बभूव । " जनी प्रादुर्भावे " ( धा. पा. दि. आ. ४२ ) इत्यस्माल्लिट् । यथा दूरदर्शी अत्यंतं विस्तृतायाः ' नद्याः ' ' पारं ' परतीरं ' परापश्यति ' एवं प्रजापतिरपि सहस्रसंवत्सररूपस्य स्वकीयस्यायुषः पारमवसानं ' पराचख्यौ ' परागतेन दूरगमनशीलेन मनसा ददर्श ॥ ६ ॥

ततः ' सः ' प्रजापतिः स्वकीयस्यायुषः परिच्छेदं जानन्, ततः प्रागेव प्रजासर्जनरूपं कृत्स्नं स्वकार्यं निर्वर्तयितुकामः ' अर्चन् ' स्वकर्तव्यं परामृशन् ' श्राम्यन् ' तच्चिंतनेन श्रांतश्च सन् ' चचार ' वव्रते । ततः ' स आत्मनि ' स्वशरीरे ' एव ' 'प्रजातिं' प्रजोत्पत्तिसाधनं योनिं ' अधत्त ' । ततः ' स आस्येन ' मुखेनैव ' देवानसृजत ' । ' ते देवाः ' ' दिवं ' द्युलोकमभिपद्य अवष्टभ्य ' असृज्यंत ' सृष्टा अभवन् । यस्मादिवमभिपन्नास्ते तस्मात् द्युसंबंधात् तेषां ' देवानां देवत्वं ' देवशब्दाभिधेयता संपन्ना । यस्मादेव दिवोऽभिपदनात् । ' ससृजानाय ' देवान् सृष्टवते 'तस्मै' प्रजापतये सा देवसृष्टिः ' दिवेव आस ' प्रकाश इव बभूव ॥ ७ ॥

( सुऽस्थ ) अथु योऽयमुवाङ्प्राणः । ( स्ते ) तेनासुरानसृजत तुऽ इमामेवु पृथिवीमभिपुद्यासृज्यंत तुस्मै ससृजानाय तमऽइवासु ॥ ८ ॥

सोऽवेत् । ( त्पा ) पाप्मानं वाऽअसृक्षि युस्मै मे ससृजानाय तुमऽ इवाभूदिति ताँस्तुत ऽएवु पाप्मनाऽविध्यत्ते तुत ऽएव पुराभवंस्तुस्मा-दाहुर्नैतदस्ति युद्दैवासुरं युदिदुमन्वाख्याने त्वदुद्यतऽइतिहासे त्वत्तुतो ह्येव तान्प्रजापतिः पाप्मनाऽविध्यत्ते तुतऽएवु पराभवन्निति ॥ ९ ॥

तुस्मादेतदृषिणाऽभ्यनूक्तम् । (न्न) न त्वं युयुत्से कतमच्च नाहर्न्न तेऽमित्रो मघवन् कश्चनास्ति । मायेत्सा ते यानि युद्धान्याहुर्न्नाद्य शत्रून्ननु पुरा युयुत्सऽ इति ॥ १० ॥

---

अथ योऽयमवाङ्प्राणः, तेनासुरानसृजत । त इमामेव पृथिवीमभिपद्यासृज्यंत । तस्मै ससृजानाय तम इवास ॥ ८ ॥

सोऽवेत् । पाप्मानं वा असृक्षि । यस्मै मे ससृजानाय तम इवाभूदिति । तांस्तत एव पाप्मना अविध्यत् । ते तत एव पराभवन् । तस्मादाहुः । नैतदस्ति । यद्दैवासुरम् । यदिदमन्वाख्याने त्वत् । उद्यत इतिहासे त्वत् । ततो ह्येव तान्प्रजापतिः पाप्मना अविध्यत् । ते तत एव पराभवन्निति ॥९॥

तस्मादेतदृषिणाऽभ्यनूक्तम्–" न त्वं युयुत्से कतमच्च नाहर्न्न तेऽमित्रो मघवन् कश्चनास्ति । मायेत्सा ते यानि युद्धान्याहुर्न्नाद्य शत्रून्ननु पुरा युयुत्से " इति ॥ १० ॥

---

असुरसृष्टिमाह–अथ योऽयामिति । 'अथ' देवसृष्टयनंतरं योऽयमवाङ्मुखो गुदाख्यः 'प्राणः' 'तेनासुरान्' प्रजापतिरसृजत । ते सृज्यमानाः ' इमां ' पृथिवीमेव अभिपद्याभिप्राप्य ' असृज्यंत ' । ' तस्मै ससृजानाय ' असुरान् सृष्टवते प्रजापतये सा असुरसृष्टिः ' तम इव ' अंधकार इव बभूव ॥ ८ ॥

ततः 'सः' प्रजापतिः 'अवेत्' अजानात् । पापमेव खलु अहमसृक्षि सृष्टवानस्मि, 'यस्मै' सृष्टवते 'मे' इयमसुरसृष्टिस्तम इवाभूत् अंधकार इव सर्वस्यावरणशीला अभूदिति । एवं पर्यालोच्य तानसुरान् ' तत एव ' तेनैव तमोरूपेण ' पाप्मना ' ' अविध्यत् ' विद्धांस्ताडितानकुरुत । ' ते ' असुरास्तत एव तमसा विद्धाः पराभवं प्राप्ताः । यत एवं प्रजापतिना सृष्टिसमये एव निराकृता असुराः । 'तस्मात्' कारणात् 'आहुः' अभिज्ञाः कथयंति–नैतदस्तीत्यादि । ' यद्दैवासुरं ' देवांश्चासुरांश्चाधिकृत्य प्रवृत्तं युद्धादिकं यदस्ति तन्नैवास्ति । कुत्र तर्हि दैवासुरस्य व्यापारस्य प्रतिपादनमिति । ' अन्वाख्याने ' सृष्टयनुक्रमकथनरूपेऽस्मिन् ब्राह्मणे यदिदं देवैः सार्द्धं असुरसृष्टिप्रतिपादनम् । 'त्वत्' एकं तावत् इदमन्यत्राप्युपपद्यते । अत्र प्रवृत्ते ' इतिहासे ' यत् दैवासुरादिप्रतिपादनम् । ' त्वत् ' एकमिदम् । तदुभयं नैवास्तीत्यत्र उक्तमर्थं हेतुत्वेन योजयति–ततो ह्येव तानिति । सृष्टिसमय एव पापवेधेन तेषां पराभूतत्वादित्यर्थः ॥ ९ ॥

उक्तार्थदार्ढ्याय ऋचमपि संवादयति–तस्मादेतदृषिणाऽभ्यनूक्तामिति । ऋषिर्मंत्रः । स च " न त्वं

स यदस्मै देवान्त्ससृजानाय । दिवेवास तदहरकुरुताथ यदस्माऽ-
असुरान्त्ससृजानाय तमऽइवास ताᳫं रात्रिमकुरुत तेऽअहोरात्रे ॥ ११ ॥

सऽऐक्षत प्रजापतिः । सर्व्वं वाऽअत्सारिषं यऽइमा देवताऽअसृक्षीति
स सर्व्वत्सरोऽभवत्सर्व्वत्सरो ह वै नामैतद्यत्सम्वत्सरऽ इति स यो हैवमे-
तत्सम्वत्सरस्य सर्व्वत्सरत्वं व्वेद यो हैनम्पाप्मा मायया त्सरति न
हैनᳫं सोऽभिभवत्यथ यमभिचरत्यभि हैवैनं भवति यऽ एवमेतत्सम्व-
त्सरस्य सर्व्वत्सरत्वं व्वेद ॥ १२ ॥

---

यदस्मै देवान् ससृजानाय दिवेव आस । तदहरकुरुत । अथ यदस्मा असुरान् ससृजानाय तम इवास । तां रात्रिमकुरुत । ते अहोरात्रे ॥ ११ ॥

स ऐक्षत प्रजापतिः, सर्वं वा अत्सारिषं य इमा देवता असृक्षीति—स सर्वत्सरोऽभवत् । सर्व-त्सरो ह वै नामैतद्यत्संवत्सर इति । स यो हैवमेतत्संवत्सरस्य सर्वत्सरत्वं वेद । यो हैनं पाप्मा मायया त्सरति, न हैनं सोऽभिभवति । अथ यमभिचरति, अभि हैवैनं भवति, य एवमेतत्संवत्सरस्य सर्वत्सरत्वं वेद ॥ १२ ॥

---

युयुत्से " इत्यादिका ऋक् । हे इन्द्र ! 'त्वं न युयुत्से' युद्धं न कृतवान् । त्वत्प्रतिभटानामसुराणामभावात् । 'कतमच्च' किमपि शत्रुसैन्यं 'नाहः' नावधीः । हे मघवन्निन्द्र ! 'ते' तव प्रकृतसृष्टिः 'अमित्रः' शत्रुः 'कश्चन' कोऽपि नास्ति । वृत्रादिभिरसुरैः सह यानि तव युद्धान्याहुः सा 'मायेत्' इच्छब्दोऽवधारणे, तत् मायामात्रम्, न पारमार्थिकम् । तत् कुत इति चेत् ? उच्यते—अद्यास्मिन् काले 'पुरा' पूर्वकालेऽपि त्वं शत्रून् 'न युयुत्से' न प्रहृतवानसि । "युध संप्रहारे" (धा. पा. दि. आ. ६७) इति धातुः ॥ १० ॥

अथ प्रकृतसृष्टिमनुसरति—स यदस्मा इति । 'देवान्' सृष्टवते 'अस्मै' प्रजापतये 'यद्दिवेव' प्रकाश इव बभूव । 'सः' प्रजापतिः 'तदहरकुरुत' । असुरसृष्टिसमये 'यत्तमः' आसीत् । 'तां रात्रिमकुरुत' । एवं देवासुरसृष्टिभ्यामेव 'ते अहोरात्रे' सृष्टे भवत इत्यर्थः ॥ ११ ॥

अहोरात्रसमुदायरूपस्य संवत्सरस्य सृष्टिमाह—स ऐक्षतेति । ईक्षणप्रकारमाह—सर्वं वा इति । यः अहं 'इमा देवताः' 'असृक्षि' सृष्टवानस्मि सोऽहं 'सर्वं' स्रष्टव्यं कृत्स्नं जगत् 'अत्सारिषं' छद्मगत्या प्राप्त-वानस्मि । 'त्सर छद्मगतौ' (धा. पा. भ्वा. प. ५५५) इति धातुः । यस्मादेव 'सर्वं वा अत्सारिषं' इत्यव-बोधयत् । तस्मात् 'सः' प्रजापतिः 'सर्वत्सरः' अभवत् । स एव हि परोक्षवृत्त्या 'संवत्सर' इत्युच्यते । एतद्वेदनस्य फलमाह—स यो हैवमिति । एवमुक्तप्रकारेण । यो हैनमित्यादि । 'यः' खलु 'एनं' वेदितारं 'पाप्मा' पापरूपया 'मायया' मिथ्याकरणशक्त्या 'त्सरति' कौटिल्येन गच्छति । 'स एनं' वेदितारं 'नैवा-

---

१—इयमृक् शांखायनीया वा कण्वमाध्यान्दिनादिपञ्चदशान्यतमशाखीया वा स्यादिति प्रतिभाति । शाकलशाखीयसंहितायां तु—अस्यां ऋचोऽन्ते 'युयुत्से' इत्यत्र 'विवित्से' इति पाठान्तरेण युक्त उत्तरार्ध एवोपलभ्यते । पूर्वार्धस्तु 'कऽ उ नु ते महि-मानं' इत्यादिरस्ति ॥

सुऽ ऐक्षत प्रजापतिः । ( रि ) इमं वाऽआत्मनः प्रतिमामसृक्षि यत्सम्वत्सरमिति तस्मादाहुः प्रजापतिः संवत्सरऽइत्यात्मनो ह्येतं प्रतिमामसृजत यद्वेव चतुरक्षरः सम्वत्सरश्चतुरक्षरः प्रजापतिस्तेनो हैवास्यैष प्रतिमा ॥ १३ ॥

ता वाऽ एताः । प्रजापतेरधिदेवताऽअसृज्यंताग्निरिन्द्रः सोमः परमेष्ठी प्राजापत्यः ॥ १४ ॥

( स्ताः ) ताः सहस्रायुषो जज्ञिरे । ता यथा नद्यै पारं परापश्येदेवꣳ स्वस्यायुषः पारं पराचख्युः ॥ १५ ॥

( स्ता ) ताऽअर्चन्त्यः श्राम्यन्त्यश्चेरुः । (स्त) ततऽ एतं परमेष्ठी प्राजा-

---

स ऐक्षत प्रजापतिः, इमं वा आत्मनः प्रतिमामसृक्षि यत्संवत्सरमिति । तस्मादाहुः प्रजापतिः संवत्सर इति । आत्मनो ह्येतं प्रतिमामसृजत । यद्वेव चतुरक्षरः संवत्सरः । चतुरक्षरः प्रजापतिः । तेनो हैवास्यैष प्रतिमा ॥ १३ ॥

ता वा एताः प्रजापतेरधिदेवता असृज्यंत । अग्निरिंद्रः सोमः परमेष्ठी प्राजापत्यः ॥ १४ ॥

ताः सहस्रायुषो जज्ञिरे । ता यथा नद्यै पारं परापश्येत्–एवं स्वस्यायुषः पारं पराचख्युः ॥ १५ ॥

ता अर्चंत्यः श्राम्यंत्यश्चेरुः । तत एतं परमेष्ठी प्राजापत्यो यज्ञमपश्यत्–यद्दर्शपूर्णमासौ ।

---

भिभवति ' बाधितुं शक्नोति । अथ वेदिता यं शत्रुं बाधितुमिच्छति, तमेनं शत्रुं स्वयमभिभवत्येव । य एवमेतदिति प्रतिज्ञातार्थनिगमनम् ॥ १२ ॥

संवत्सरप्रजापत्योरैकात्म्यं प्रतिपादयति—स ऐक्षतेत्यादिना । ' इमं ' खलु संवत्सरात्मनो मदीयशरीरस्य 'प्रतिमां' प्रतिकृतिम् ' असृक्षि ' सृष्टवानस्मि । यत्संवत्सरमिति । 'इति' यस्मात् ' ऐक्षत ' पर्यालोचितवान् तस्मात्संवत्सरस्य प्रजापतिरूपप्रकृतित्वात् ' प्रजापतिः संवत्सरः ' इति तादात्म्यमाहुः । आत्मनो ह्येतमिति प्रागुक्ततादात्म्यकारणयोजनम् । कथमसौ प्रजापतेः प्रतिमेति तत्राह–यद्वेवेति । यस्मादेव कारणात् तदुभयवाचकयोः संवत्सरप्रजापतिशब्दयोः चतुरक्षरत्वलक्षणं साम्यमस्ति । तेनैव कारणेनास्य प्रजापतेः ' एषः ' संवत्सरः ' प्रतिमा ' प्रतिबिम्बम् ॥ १३ ॥

अथाधिदेवतानां सृष्टिमाह–ता वा एता इति । ' ताः ' प्रसिद्धाः ' एताः ' वक्ष्यमाणाः ' अधिदेवताः ' आधिक्यगुणोपेताः सर्वोत्कृष्टा देवताः प्रजापतेरसृज्यंत । काः पुनस्ता ? इति तत्राह–अग्निरिंद्र इति ' प्राजापत्यः ' इति परमेष्ठिनो विशेषणम ॥ १४ ॥

' ताः ' अपि प्रजापतिरिव सहस्रसंवत्सरजीविन्यः ' जज्ञिरे ' । प्रजापतिवत् ' ताः ' अग्न्याद्या देवता अपि नद्याः पारमिव स्वकीयस्य सहस्रसंवत्सरपरिमितस्यायुषः अवसानं ददृशुः ॥ १५ ॥

ततस्ता देवता अपि पुरुषार्थं साधयितुमर्थयमानाः प्रजापतिवत् ' अर्चंत्यः श्राम्यंत्यः ' अर्चनश्रमोपेताः

पत्यो यज्ञमपश्यद्युद्दर्शपूर्णमासौ ताभ्यामयजत ताभ्यामिष्ट्वाऽकामयता-हमेवेदᳪ सर्वᳪ स्यामिति सऽ आपोऽभवदापो वाऽ इदᳪ सर्वं ता यत्परमे स्थाने तिष्ठन्ति यो हीहाभिखनेदपऽ एवाभिविन्देत्परमाद्वाऽ एतत्स्थानाद्वर्षति यद्दिवस्तस्मात्परमेष्ठी नाम ॥ १६ ॥

स परमेष्ठी प्रजापतिं पितरमब्रवीत् । ( त्का ) कामप्रं वाऽ अहं यज्ञम-दर्शं तेन त्वा याजयानीति तथेति तमयाजयत्सऽइष्ट्वाऽकामयताहमे-वेदᳪ सर्वᳪ स्यामिति स प्राणोऽभवत्प्राणो वाऽ इदᳪ सर्वमयं वै प्राणो योऽयं पवते स प्रजापतिस्तस्य दृष्टिर्य्यदेव व्वेदेत्थाद्वातीति यद्वै किञ्च प्राणि स प्रजापतिः स यो हैवमेतां प्रजापतेर्दृष्टिं व्वेदाऽऽविरिव हैव भवति ॥ १७ ॥

---

ताभ्यामयजत । ताभ्यामिष्ट्वाऽकामयत—अहमेवेदं सर्वं स्यामिति । स आपोऽभवत् । आपो वा इदं सर्वम् । ता यत्परमे स्थाने तिष्ठंति । यो हीहाभिखनेत्, अप एवाभिविंदेत् । परमाद्वा एतत्स्थाना द्वर्षति यद्दिवः, तस्मात्परमेष्ठी नाम ॥ १६ ॥

स परमेष्ठी प्रजापतिं पितरमब्रवीत्, कामप्रं वा अहं यज्ञमदर्शम्, तेन त्वा याजयानीति । तथेति । तमयाजयत् । स इष्ट्वाऽकामयत, अहमेवेदं सर्वं स्यामिति । स प्राणोऽभवत् । प्राणो वा इदं सर्वम् । अयं वै प्राणः । योऽयं पवते । स प्रजापतिः । तस्य दृष्टिः । यदेव वेद—इत्थाद्वातीति । यद्वै किंच प्राणि । स प्रजापतिः । स यो हैवमेतां प्रजापतेर्दृष्टिं वेद, आविरिव हैव भवति ॥ १७ ॥

---

'चेरुः' ववृतिरे । ततोऽनंतरं 'एतं' दर्शपूर्णमासाख्यं 'यज्ञं' प्रजापतेः पुत्रः 'परमेष्ठी अपश्यत्' दृष्ट्वा च 'ताभ्यामयजत' यागानंतरं, 'इदं सर्वं' जगत् 'अहमेव स्यामिति' सार्वात्म्यं 'अकामयत' 'सः' प्रथमं 'आपः अभवत्' अबात्मकः अभवत् । ननु—कथमस्य सार्वात्म्यम् ? इत्युपपादयति—आपो वा इदं सर्वमिति । 'इदं सर्वं' जगत् अबात्मकम् । तथाहि—'ताः' आपो यस्मात् 'परमे' उत्कृष्टे 'स्थाने' व्योम्नि 'तिष्ठंति' । 'इह' पृथिव्यां 'यः' खलु 'अभिखनति' अभिखनेत् तत्रापि 'अप एवाभिविंदेत्' अभितो लभेत । ननु कथं परमे स्थाने अपामवस्थानमिति तदाह—परमाद्वा इति । परमादुत्कृष्टात् सूर्यमंडला-धिष्ठितात् व्योमरूपात् 'स्थानात्' खलु एषः पर्जन्यो 'वर्षति' । 'यद्दिवः' आकाशाद्वर्षति । तत आपः परमे स्थाने तिष्ठन्ति । तादृगब्रूपताप्राप्तेरयमपि 'परमेष्ठी' नाम्ना संपन्नः ॥ १६ ॥

इत्थं परमेष्ठी स्वयं सार्वात्म्यं प्राप्य पितुरपि तत्प्राप्तये एतेन अयाजयत् इत्याह—स परमेष्ठीति । 'कामप्रं' कामान् पूरयतीति कामप्रः । "प्रा पूरणे" (धा.पा.अ.प. ५१) इत्यस्माद्धातोः "आतोऽनुपसर्गे कः" ( पा. सू. ३।२।३ ) इति कः । अदर्शमिति । दृशेर्लुङि "इरितो वा" (पा.सू. ३।१।५७) इति च्लेरङा-

स प्रजापतिरिन्द्रं पुत्रमब्रवीत् । ( द ) अनेन त्वा कामप्रेण यज्ञेन याजयानि येन मामिदं परमेष्ठ्यर्यीयजदिति तथेति तमयाजयत्सऽ इष्ट्वाऽकामयताहमेवेदᳪ सर्वᳪ स्यामिति स वागभवद्वाग्वाऽ इदᳪ सर्वं तस्मादाहुरिन्द्रो वागिति ॥ १८ ॥ ( अर्द्धः प्रपाठकः ६० ) ॥

सऽइन्द्रोऽग्नीषोमौ भ्रातरावब्रवीत् । (द) अनेन वां कामप्रेण यज्ञेन याजयानि येन मामिदं पिता प्रजापतिरयीयजदिति तथेति तावयाजयत्ताविष्ट्वाऽकामयेतामावमेवेदᳪ सर्वᳪ स्यावेति तयोरन्नादऽ एवान्यतरोऽभवदन्नमन्यतरोऽन्नादऽ एवाग्निरभवदन्नᳪ सोमोऽन्नादश्च वाऽइदᳪ सर्वमन्नं च १९

---

स प्रजापतिरिन्द्रं पुत्रमब्रवीत्—अनेन त्वा कामप्रेण यज्ञेन याजयानि । येन मामिदं परमेष्ठ्यर्यीयजदिति, तथेति, तमयाजयत् । स इष्ट्वाऽकामयत, अहमेवेदं सर्वं स्यामिति । स वागभवत् । वाग्वा इदं सर्वम् । तस्मादाहुरिंद्रो वागिति ॥ १८ ॥

स इंद्रोऽग्नीषोमौ भ्रातरावब्रवीत्—अनेन वां कामप्रेण यज्ञेन याजयानि । येन मामिदं पिता प्रजापतिरयीयजदिति, तथेति, तावयाजयत् । ताविष्ट्वाऽकामयेताम्, आवमेवेदं सर्वं स्यावेति । तयोरन्नाद एवान्यतरोऽभवत् । अन्नमन्यतरः । अन्नाद एवाग्निरभवत् । अन्नं सोमः । अन्नादश्च वा इदं सर्वमन्नं च ॥ १९ ॥

---

देशः । " ऋदृशोऽङि गुणः " ( पा. सू. ७ । ४।१६ ) इति गुणः । तेन त्वेत्यादि । स्पष्टार्थम् । प्राणो वा इदं सर्वमिति । सूत्रात्मतया सर्वाधारत्वात्तस्य सर्वात्मकत्वम् । ' यः अयं ' बाह्यो वायुः अंतरिक्षे 'पवते' संचरति अयमेव 'सः' प्राणः। स एव 'प्रजापतिः'। 'तस्य' प्रजापतेः 'दृष्टिः' प्राणवायुः शब्दस्पर्शादिविषयसाक्षात्कारहेतुत्वात् । यदेवेत्यादि । ' यत् ' खलु वस्तु ' इत्यात् ' अनेन प्रकारेण असौ प्राणवायुः ' वातीति ' वर्तत इति ' वेद ' जानाति । किमपि तत्सर्वं ' प्राणि ' प्राणवत् भवति । अतः प्राणिसंघः प्रजापतिः । वेदितुः फलमाह—स यो हैवमेतामिति । इत्थं प्राणरूपां प्रजापतेर्दृष्टिं ' यः वेद ' स ' आविरिव ' ' भवति ' प्रकाशत एवेत्यर्थः ॥ १७ ॥

प्राणरूपताप्राप्तिरिव वाग्रूपताप्राप्तिरपि दर्शपूर्णमासयोः फलमित्याह—स प्रजापतिरित्यादिना । ' अयीयजत् ' याजितवान् । यजेर्ण्यंताल्लुङि चङि रूपम् । स्पष्टमन्यत् । स वाग् अभवदिति । 'सः' सर्वजगदात्मकोऽहं स्यामिति कामयमान इंद्रः वाग्रूपः अभवत् । वागात्मकं हि इदं सर्वं जगत् शब्दानुविद्धतया प्रतीयमानत्वात् । तस्मादेव कारणात् इंद्र एव वागात्मक इत्याहुः ॥ १८ ॥

अन्नादादिरूपफलप्राप्तिहेतुतामाह—स इंद्रोऽग्नीषोमावित्यादिना । स्पष्टोऽर्थः । तयोरन्नाद एवान्यतर इत्युक्तमेवार्थं विशदयति—अन्नाद एवाग्निरभवदिति । अन्नमत्तीत्यन्नादः । ' अग्निरेव ' सर्वप्राणिषु जाठररूपेण वर्तमानः सन् ' अन्नादः अभवत् ' । सोमस्तु रसात्मकत्वात् ओषधिवनस्पतिषु प्रविष्टः सन् कृत्स्नान्नरूपः अभवत् । उभयोः कृत्स्नजगदात्मकत्वमाह—अन्नादश्च वा इदं सर्वमिति ॥ १९ ॥

ता वाऽएताः । पञ्च देवताऽएतेन कामप्रेण यज्ञेनायजन्त ता यत्कामा अयजन्त सऽआभ्यः कामः समार्द्ध्यत यत्कामो ह वाऽ एतेन यज्ञेन यजते सोऽस्मै कामः समृध्यते ॥ २० ॥

तऽइष्ट्वा प्राचीं दिशमपश्यन् । ( इयँस्ता ) ताम्प्राचीमेवाकुर्व्वत सेयं प्राच्येव दिक्तस्मादिमाः प्रजाः प्राच्यः सर्प्पन्ति प्राचीँ ह्येतामकुर्व्वतो-पैनामितः कुर्व्वीमहीति तामूर्ज्जमकुर्व्वतेमां खलूर्ज्जं पश्येमेति साऽसौ द्यौरभवत् ॥ २१ ॥

( ३ ) अथ दक्षिणां दिशमपश्यन् । ( इयँस्तां ) तां दक्षिणामेवाकुर्व्वत सेयं दक्षिणैव दिक्तस्माद्दु दक्षिणतऽ एव दक्षिणाऽ उपतिष्ठंते दक्षिणतोऽभ्यु-वाजन्ति दक्षिणाँ ह्येतामकुर्व्वतोपैनामितः कुर्व्वीमहीति तँल्लोकमकु-

---

ता वा एताः पंच देवता एतेन कामप्रेण यज्ञेनायजंत । ता यत्कामा अयजंत, स आभ्यः कामः समार्द्ध्यत । यत्कामो ह वा एतेन यज्ञेन यजते—सोऽस्मै कामः समृध्यते ॥ २० ॥

त इष्ट्वा प्राचीं दिशमपश्यन् । तां प्राचीमेवाकुर्वत । सेयं प्राच्येव दिक् । तस्मादिमाः प्रजाः प्राच्यः सर्पंति । प्राचीं ह्येतामकुर्वत । उपैनामितः कुर्वीमहि इति । तामूर्ज्जमकुर्वत । इमां खलूर्जं पश्येमेति । साऽसौ द्यौरभवत् ॥ २१ ॥

अथ दक्षिणां दिशमपश्यन् । तां दक्षिणामेवाकुर्वत । सेयं दक्षिणैव दिक् । तस्माद्दु दक्षिणत एव दक्षिणा उपतिष्ठंते । दक्षिणतोऽभ्यवाजंति । दक्षिणां ह्येतामकुर्वत । उपैनामितः कुर्वीमहीति ।

---

उक्तमर्थजातं संभूयानूद्य इदानीन्तनयजमानस्यापि दर्शपूर्णमासयागेन तादृक्फलप्राप्तिमाह—ता वा एता इति । ' समार्द्ध्यत ' समृद्धोऽभवत् । गतमन्यत् ॥ २० ॥

' ते ' परमेष्ठ्यादयः दर्शपूर्णमासाभ्यां ' इष्ट्वा ' ' प्राचीं दिशं ' प्रथममपश्यन् । भाव्यपेक्षया प्राचीमिति विशेषणम् । यां ' प्रथममपश्यन् ' ' तां प्राचीमेवाकुर्वत ' । ' सेयं प्राच्येव ' सती ' दिक् ' इदानीं दृश्यते । तस्मादिमा इत्यादि । 'प्राच्यः' प्राच्यास्याः पूर्वदिगभिमुखाः स्वपुरस्ताद्भाग एव प्रथमं ' सर्पंति ' गच्छंति । प्राचीं ह्येतामिति प्रागुक्तस्य हेतोर्योजनम् । उपैनामित्यादि । ' एनां ' प्राचीं दिशमुपेत्य ' इतः ' पर ' कुर्वीमहि ' कार्यांतरं सृजेमहीति समकल्पयन् । ततस्तामेव दिशमूर्जमकुर्वत । बलकरः अन्नरस उर्क् । उर्करणानंतरं ' इमामेव खलु ऊर्जं पश्येम ' साक्षात् कुर्याम इत्यवोचन्त । ततः ' सा ' ऊर्क् ' असौ ' विप्रकृष्टा ' द्यौरभवत् ' ॥ २१ ॥

' अथ दक्षिणां दिशमपश्यन् ' इत्यादावपि एवमेव योज्यम् । दक्षिणत उपतिष्ठंत इति । ऋत्विक्परि-क्रयहेतुतया दातव्या गावः ' दक्षिणाः ' दक्षिणाशब्दाभिधेयायामेव दिशि 'उपतिष्ठंते' दक्षिणाकाले अवतिष्ठंते ।

र्व्वतेमं खलु लोकं पश्येमेति तदिदमन्तरिक्षमभवदेष वै लोकः सा यथा हैवेयं प्रतिष्ठाऽऽविरस्मिंल्लोके पृथिव्येवमु हैवैषा प्रतिष्ठाऽऽविरमुष्मिंल्लोकऽइदमन्तरिक्षꣳस यदिह सन्नमुं लोकं न पश्यति तस्मादाहुः परोऽक्षमसौ लोकऽइति ॥ २२ ॥

( त्यु ) अथ प्रतीचीं दिशमपश्यन् । ( इयँस्ता ) तामाशामकुर्व्वत तस्माद्यत्प्राङ्क्सृत्वा विंदतऽएतामेव तेन दिशमेत्याशाꣳ ह्येतामकुर्व्वतोपैनामितः कुर्व्वीमहीति ताꣳ श्रियमकुर्व्वतेमां खलु श्रियं पश्येमेति सेयं पृथिव्यभवच्छ्रीर्व्वाऽइयं तस्माद्योऽस्यै भूयिष्ठं विन्दते सऽएव श्रेष्ठो भवति ॥ २३ ॥

---

तं लोकमकुर्वत । इमं खलु लोकं पश्येमेति । तादिदमंतरिक्षमभवत् । एष वै लोकः सा । यथा हैवेयं प्रतिष्ठाऽऽविरस्मिन् लोके पृथिवी । एवमु हैवैषा प्रतिष्ठाऽऽविरमुष्मिन् लोके इदमन्तरिक्षम् । स यदिह सन्नमुं लोकं न पश्यति । तस्मादाहुः परोऽक्षमसौ लोक इति ॥ २२ ॥

अथ प्रतीचीं दिशमपश्यन् । तामाशामकुर्वत । तस्मात् यत् प्राङ् सृत्वा विंदते । एतामेव तेन दिशमेत्याशां ह्येतामकुर्वत । उपैनामितः कुर्वीमहीति । तां श्रियमकुर्वत । इमां खलु श्रियं पश्येमेति । सेयं पृथिव्यभवत् । श्रीर्वा इयम् । तस्माद्योऽस्यै भूयिष्ठं विंदते । स एव श्रेष्ठो भवति ॥ २३ ॥

---

तथा ' दक्षिणतः ' दक्षिणस्याः दिशः सकाशात् ताः ' अभ्यवाजंति' अभिगमयंति । "अज गतिक्षेपणयोः' ( धा. पा. भ्वा. प. २३० ) इति धातुः । उपैनामित्यादि पूर्ववत् । दक्षिणदिक्सृष्ट्यनंतरं यो लोकः कृतः स अंतरिक्षात्मकोऽभवत् । ' एषः ' खलु ' लोकः सा ' दक्षिणा दिक् । यथा हैवेत्यादि । ' अस्मिन् लोके ' यथैव ' पृथिवी ' ' आविः ' आविर्भवति । ' एवमेषा ' दक्षिणा दिक् ' प्रतिष्ठा ' भूत्वा ' अमुष्मिन् लोके ' आविर्भवति ' इदमेवांतरिक्षं ' अन्तरिक्षाख्यो लोकः । तदाधारभूतस्य द्युलोकाख्यस्य परोऽक्षत्वमाह—स यदिहेति । ' इह ' अस्मिन् लोके वर्तमानः 'सः' यस्मादमुं लोकं न पश्यति । अंतरिक्षेण व्यवहितत्वात् तस्मादसौ लोकः परोऽक्षमित्याहुः ॥ २२ ॥

प्रतीच्या दिशः सृष्टिमाह—अथ प्रतीचीमिति । ' अथ ' दक्षिणदिग्दर्शनानंतरम् परमेष्ठ्यादयः पंच देवताः प्रतीचीं दिशमपश्यन्, दृष्ट्वा च ' तामाशामकुर्वत । ' अप्राप्तफलविषयः अभिलाष आशा, तां कृतवंतः । तस्मात् प्रतीची दिक् आशारूपा । ' यस्मात् प्राङ् सृत्वा ' प्राङ्मुखो गत्वा इष्टं फलं ' विंदते ' लभते । तस्मात् प्रतीच्यां दिशि यथास्थानमवस्थितस्य फलप्राप्तिविरहात् आशैव केवलमवशिष्यत इति सा दिक् तदात्मिका इत्यभिप्रायः । तत्रोक्तमर्थं हेतुत्वेन योजयति । ' तेन ' दर्शनहेतुना ' एतामेव ' प्रतीचीं दिशमेत्य एनामाशां कृतवंतः । ' हि ' शब्दो हेतौ । सृष्ट्यन्तरमाह—उपैनामिति । इत ऊर्ध्वम् ' एनां ' आशारूपाम् प्रतीचीं दिशमुपकुर्वीमहि उपेत्य रूपांतरेण कुर्याम इत्यालोचयंतस्ते देवाः, ' तामाशां

( त्य ) अथोदीचीं दिशमपश्यन् । ( इयँस्ता ) तामपरेऽकुर्व्वतोपैना-मितः कुर्व्वीमहीति तं धर्म्ममकुर्व्वत धर्म्मो वाऽआपस्तस्माद्यदेमं लोक-मापऽआगच्छन्ति सर्व्वमेवेदं यथाधर्म्मं भवत्यथ यदा वृष्टिर्भवति बली-यानेव तर्ह्यबलीयसऽआदत्ते धर्म्मो ह्यापः ॥ २४ ॥

( स्ता ) ता वाऽएताः । ( ऽ ) एकादश देवताः पञ्च प्रयाजा द्वावाज्य-भागौ स्विष्टकृत्त्रयोऽनुयाजाः ॥ २५ ॥

( स्ता ) ताऽएकादशाहुतयः । ( ऽ ) एताभिर्व्वाऽआहुतिभिर्देवाऽ-इमाँल्लोकानजयन्नेता दिशस्तथोऽएवैषऽएताभिराहुतिभिरिमाँल्लोकाञ्जय-त्येता दिशः ॥ २६ ॥

---

अथोदीचीं दिशमपश्यन् । तामपरेऽकुर्वत । उपैनामितः कुर्वीमहीति । तं धर्ममकुर्वत । धर्मो वा आपः । तस्माद्यदेमं लोकमाप आगच्छंति । सर्वमेवेदं यथाधर्मं भवति । अथ यदा वृष्टिर्भवति । बलीयानेव तर्ह्यबलीयस आदत्ते । धर्मो ह्यापः ॥ २४ ॥

ता वा एता एकादश देवताः । पंच प्रयाजाः । द्वावाज्यभागौ । स्विष्टकृत् । त्रयोऽनुयाजाः ॥ २५ ॥

ता एकादशाहुतयः । एताभिर्वा आहुतिभिर्देवा इमान् लोकानजयन्नेता दिशः । तथो एवैष एताभिराहुतिभिरिमान् लोकान् जयत्येता दिशः ॥ २६ ॥

---

श्रियमकुर्वत ' कृत्वा च खलु ' इमां खलु श्रियं पश्येम ' किंरूपेति साक्षात्करवाम इत्यालोचयन् तस्मादा-लोचनमात्रात् सेयं श्रीः पृथिव्यात्मिका जाता । तां उपपादयति—श्रीर्वा इयमिति । ' इयं ' सर्वसन्निहिता पृथिवी । तस्माद्योऽस्या इति । षष्ठ्यर्थे चतुर्थी ( पा. सू. २ । ३ । ६२ वा. ) । अस्याः पृथिव्याः संबंधि ' भूयिष्ठं ' बहुतरं स्थानं यः ' विंदते ' लभते ' स एव श्रेष्ठो भवति ' श्रिया प्रशस्यतमो भवतीत्यर्थः ॥ २३ ॥

उदीच्या दिशः सृष्टिमाह—अथोदीचीमिति । अपश्यन्नित्यनंतरं तां प्राचीमेवाकुर्वतेतिवत् ' ताम् उदी-चीमेवाकुर्वतेति ' वाक्यमध्याहृत्य दिक्सृष्टिः प्रतिपादनीया । ' तां ' उदीचीं दिशं ' अपः ' अकुर्वत अपां रूपेण कृतवंतः । कृत्वा च पुनरित्थं संकल्पितवंत इत्याह—उपैनामिति । इत अनूपामेनां उदीचीं दिशम् अन्यत् पूर्ववत् । तं धर्ममकुर्वतेति । उद्देश्यविधेययोरेकत्वेन तल्लिंगस्य च पर्यायेणोपादातुं योग्यत्वात् अत्र तमिति विधेयलिंगता । या अनूपा उदीची दिक् तं ' धर्मं ' धारणसमर्थं सर्वस्य जगतो वा आतव्यं एकं पदार्थमकुर्वत । कार्यकारणयोरैक्यं प्रतिपादयति—धर्मो वा आप इति । ' यदा ' खलु ' इमं ' भूलोकम् ' आप आगच्छंति ' वृष्ट्यात्मना प्राप्नुवंति । तदा ' सर्वमेवेदं ' जगत् ' यथाधर्मं ' यथावस्थितस्वभावं भवति । एतदेव विशदयति—अथ यदेति । ' यदा ' यस्मिन् काले ' वृष्टिर्भवति ' ' तर्हि ' तस्मिन् समये ' बलीयानेव ' अतिशयबलोपेतः उदकप्रवाह एव ' अबलीयसः ' अतिशयेन बलरहितानादत्ते । ' हि ' यस्मात् ' आपो धर्मः ' धारयितृस्वभावः ॥ २४ ॥

ता वा एता इत्यादि । ' ताः ' अनुक्रांता एकादश देवताः । तथा हि—प्राची दिक् द्युलोकः दक्षिणा

( श्रु ) चुतस्रोऽवान्तरदिशः । ( स्तु ) तुऽएवु चत्वारः पत्नीसंयाजाऽअवान्तरदिशो वै देवाश्चतुर्भिः पत्नीसंयाजैरजयन्नवान्तरदिशऽ उऽएवैषुऽएतैर्ज्जयति ॥ २७ ॥

( त्य ) अथेडा । (डाऽन्ना) अन्नाद्यमेवैतया देवाऽअजयँस्तथोऽएवैषुऽएतयाऽन्नाद्यमेवु जयत्येषा नु देवत्रा दर्शपूर्णमासयोः संपत् ॥ २८ ॥

( हु ) अथाध्यात्मम् । ( म्पु ) पञ्चेमे पुरुषे प्राणाऽऋते चक्षुर्भ्यां तुऽएव पञ्च प्रयाजाश्चक्षुषीऽआज्यभागौ ॥ २९ ॥

---

चतस्रोऽवांतरदिशः । त एव चत्वारः पत्नीसंयाजाः । अवांतरदिशो वै देवाश्चतुर्भिः पत्नीसंयाजैरजयन् । अवांतरदिश उ एवैष एतैर्जयति ॥ २७ ॥

अथेडा । अन्नाद्यमेवैतया देवा अजयन् । तथो एवैष एतयाऽन्नाद्यमेव जयति । एषा नु देवत्रा दर्शपूर्णमासयोः संपत् ॥ २८ ॥

अथाऽध्यात्मम् । पंचेमे पुरुषे प्राणा ऋते चक्षुर्भ्याम् । त एव पंच प्रयाजाः । चक्षुषी आज्यभागौ ॥ २९ ॥

---

दिक् अंतरिक्षलोकः प्रतीची दिक् आशा श्रीः पृथिवी च उदीची दिक् आपो धर्मः इत्येकादशसंख्याका एता एव प्रयाजाद्या एकादशात्मतया वर्तंत इत्यर्थः । 'ताः' प्रयाजाद्या एकादशसंख्या आहुतयः । एताभिरेव खलु 'आहुतिभिः' प्रागुक्ताः परमेष्ठ्यादयो देवाः 'इमान्' पृथिव्यादिलोकान् 'एताः' प्राच्याद्या दिशश्चतस्रः अजयन् । अतस्तज्जयहेतुत्वात् तेषां तद्रूपतोक्तिः । तथो एवैष इति पुरावृत्तस्य सिद्धस्यार्थस्य प्रकृते योजनम् । एवं प्रागादिचतसृणां मुख्यदिशां पृथिव्यादिलोकानां एकादशभिराहुतिभिर्जयो जातः ॥ २१ ॥ २६ ॥

आग्नेय्याद्यवांतरदिशां कथं जयोपाय इति, तत्राह—चतस्रोऽवांतरदिश इति । 'अवांतरदिशश्चतस्रः' 'त एव चत्वारः पत्नीसंयाजाः' सोमत्वष्टृदेवपत्न्यग्निगृहपतिदेवताकाः पत्नीसंयाजाख्या यागाः । अतस्तेषां यागानां तज्जयहेतुतां प्रतिपादयति—अवांतरदिशो वै देवा इत्यादिना । अवांतरदिश उ एवैष इति । 'एषः' यजमानः 'एतैः' पत्नीसंयाजैः । गतमन्यत् ॥ २७ ॥

इडया जेतव्यं प्रतिपादयति—अथेडेति । इडा अधिक्रियत इत्यर्थः । 'अद्यं' अत्तुं योग्यं यदन्नं तदन्नाद्यम् । तदेव 'एतया' इडया पुरा 'देवा अजयन्' तथैव 'एषः' यजमानोऽपि 'एतया' 'अन्नाद्यमेव जयति' प्राप्नोति । उक्तां संपत्तिं निगमयति—एषा नु देवत्रेति । सप्तम्यर्थे ( पा. सू. ५ । ४ । ५६ ) त्राप्रत्ययः । देवेषु विषये एषोक्ता दर्शपूर्णमासयागयोः 'संपत्' ॥ २८ ॥

एवमाधिदैविकीं संपत्तिं प्रदर्श्य अन्यथाह—अथाध्यात्ममिति । 'अध्यात्मं' आत्मशरीरे । विभक्त्यर्थे अव्ययीभावः । दर्शपूर्णमासयोः संपत्तिरधिक्रियते । पंचेम इति । शीर्षण्येषु प्राणेषु चक्षुषी वर्जयित्वा मुखं नासिके कर्णाविति य इमे 'पंच प्राणाः' त इमे 'पंच प्रयाजात्मकाः' 'चक्षुषी आज्यभागौ' ॥ २९ ॥

( गाव ) अ॒यमे॒वावाङ्प्रा॒णः स्वि॑ष्ट॒कृत् । ( त्स ) स य॒त्तम॒भ्य॒र्द्धऽइवेत॑राभ्य॒ऽआहु॑तिभ्यो जु॒होति॒ त॒स्मादे॒तस्मा॑त्प्रा॒णात्स॒र्वे प्रा॒णा बी॑भत्स॒न्तेऽथ॒ यत्स्वि॑ष्टकृ॒ते स॒र्वे॑षाᳪं ह॒विषा॑ᳪं सम॑व॒द्यति॒ त॒स्माद्यत्कि॒ञ्चेमान्प्रा॒णाना॑प॒द्यत॒ऽएत॒मेव॒ तत्स॒र्व्वᳪं स॒मवै॑ति ॥ ३० ॥

त्रीणि॑ शि॒श्नानि॑ । त॒ऽएव त्र॒योऽनु॑या॒जाः स॒ योऽयं व्व॒र्षि॑ष्ठोऽनु॒याज॑स्त॒दिदं व्व॒र्षि॑ष्ठमिव॒ शिश्नं॒ तं वा॒ऽअन॑वानन्यजेदि॒त्याहु॒स्त॒थो हा॒स्यैत॑दमृ॒ध्रं भ॑वती॒ति ॥ ३१ ॥

स वै॒ स॒कृद॑वान्यात् । (ढे) ए॒कᳪं ह्ये॒तस्य॒ प॒र्व्वाथ॒ यद॑पु॒र्व्वकᳪं स्या॒त्प्र॒तृ॒ण्णं वै॒व ति॒ष्ठेल्ल॒म्बेत॒ वा त॒स्मादे॒तदु॒च्च ति॒ष्ठति॒ प॒द्यते॒ च त॒स्मात्स॒कृद॑वान्यात् ॥ ३२ ॥

---

अयमेवावाङ् प्राणः स्विष्टकृत् । स यत्तमभ्यर्द्ध इवेतराभ्य आहुतिभ्यो जुहोति । तस्मादेतस्मात् प्राणात्सर्वे प्राणा बीभत्संते । अथ यत्स्विष्टकृते सर्वेषां हविषां समवद्याति । तस्माद्यत्किंचेमान्प्राणानापद्यते । एतमेव तत्सर्वं समवैति ॥ ३० ॥

त्रीणि शिश्नानि । त एव त्रयोऽनुयाजाः । स योऽयं वर्षिष्ठोऽनुयाजः । तदिदं वर्षिष्ठमिव शिश्नम् । तं वा अनवानन्यजेदित्याहुः । तथो हास्यैतदमृध्रं भवतीति ॥ ३१ ॥

स वै सकृदवान्यात् । एकं ह्येतस्य पर्व । अथ यदपर्वकं स्यात् । प्रतृण्णं वैव तिष्ठेल्लंबेत वा । तस्मादेतदुच्च तिष्ठति पद्यते च । तस्मात्सकृदवान्यात् ॥ ३२ ॥

---

'योऽयमवाङ् प्राणः' अन्नमलविसर्जनहेतुः स स्विष्टकृद्यागः । धर्मभेदेनोक्तमर्थं समर्थयते—तमभ्यर्द्ध इवेति । 'इतराभ्य आहुतिभ्यः' प्रधानहविर्भ्यः सकाशात् 'अभ्यर्द्धे' अभिगतः अर्द्धो देशः । यथा प्रधानहविर्भिः संसर्गो न भवति तथाभूतदेशे तं स्विष्टकृतं जुहोति । यस्मादेवं 'तस्मात्सर्वे' शीर्षण्याः 'प्राणाः' एतस्मादवाचः प्राणात् 'बीभत्संते' जुगुप्संते । अपि च 'सर्वेषां' प्रधानहविषां उत्तरार्द्धात् स्विष्टकृद्यागाय 'समवद्यति' संभूयावद्यतीति यत्, अतः यस्मात् 'इमान् प्राणान्' शीर्षण्यान् यत्किमपि द्रव्यं पृथक् पृथगापद्यते प्राप्तं भवति तत्सर्वं एतमवांचं प्राणं 'समवैति' संप्राप्नोति ॥ ३० ॥

त्रीणि शिश्नानीत्यादि । अण्डाभ्यां सह त्रित्वम् । 'त एव त्रयोऽनुयाजाः' यज्ञशरीरस्य शिश्नात्मका इत्यर्थः । तत्र 'योऽयं वर्षिष्ठः' वृद्धतमस्तृतीयोऽनुयाजः 'तदिदं वर्षिष्ठमिव' लिंगात्मकं 'शिश्नम्' । तत्रानवानपक्षं योजयति—तं वा अनवानन्निति । 'अनवानन्' अनुच्छ्वसन् । तं तृतीयमनुयाजं वषट्कुर्यादित्यर्थः । तथैवं सति हि अस्य शरीरस्य एतदंगम् अमृध्रं अविच्छिन्नं 'भवति' इति अनवानपक्षाभिप्रायः ॥ ३१ ॥

पक्षांतरमाह—स वै सकृद्वान्यादिति । "ते होत्रेऽमत्सत" इत्यत्र सकृदेकवारं 'अवान्यात्'

( इ॒द्वौ ) द्वौ बा॒हू द्वा॑ऽऊ॒रू । तऽए॒व च॒त्वारः॑ पत्नीसंया॒जाः प्र॑ति॒ष्ठाऽयमे॒व प्रा॒णऽइ॒डा यत्तां॒ नाग्नौ जु॒होति॒ यत्साऽप्र॑दग्धेव त॒स्मादय॒मनवतृण्णः॑ प्रा॒णः ३३

(णोऽस्थ्ये)अ॒स्थ्येव या॒ज्याऽनुवा॒क्याः । (०)मा॒ꣳस॒ꣳ ह॒विस्तन्मि॒तं छन्दो॒ य॒द्याज्या॒ऽनुवा॒क्यास्त॒स्मादु॒ स॒मावन्त्ये॒वास्थी॑नि मे॒द्यत॑श्च कृ॒श्यत॑श्च भवन्त्य॒थ यद्भू॒यऽ इव च ह॒विर्गृ॒ह्णाति॒ कनी॒यऽइव च त॒स्मादु मा॒ꣳसान्येव मे॒द्यतो॒ मे॒द्यन्ति मा॒ꣳसानि॒ कृश्य॑तः कृश्यन्ति॒ ते॒नैते॒न य॒ज्ञेन॒ यां का॒म॒यते दे॒व॒तां तां य॑जति य॒स्यै ह॒विर्भव॑ति ॥ ३४ ॥

---

द्वौ बाहू द्वा ऊरू, त एव चत्वारः पत्नीसंयाजाः प्रतिष्ठा । अयमेव प्राण इडा । यत्तां नाग्नौ जुहोति । यत्सा अप्रदग्धेव । तस्मादयमनवतृण्णः प्राणः ॥ ३३ ॥

अस्थ्येव याज्याऽनुवाक्याः । मांसं हविः । तन्मितं छंदः । यद्याज्याऽनुवाक्याः । तस्मादु समावंत्येवास्थीनि मेद्यतश्च कृश्यतश्च भवंति । अथ यद्भूय इव च हविर्गृह्णाति कनीय इव च । तस्मादु मांसान्येव मेद्यतो मेद्यंति, मांसानि कृश्यतः कृश्यंति । तेनैतेन यज्ञेन यां कामयते देवतां तां यजति, यस्यै हविर्भवति ॥ ३४ ॥

---

अवस्येत् । 'एतस्य' वर्षिष्ठस्य मध्यमस्य शिश्नस्य 'एकं हि पर्व' विद्यते, अतस्तत्सादृश्यात् यन्मध्ये अवसानं कृतम् । 'अथ' यत्तत् 'अपर्वकं स्यात्' पर्वरहितं स्यात् 'प्रतृण्णं वैव' ऊर्ध्वमुखमेवावतिष्ठेत, अथवा 'लंबेत' तत्र तु उभयोः समावेशो न घटते । यस्मादेतत् सपर्वकं तदात्मकस्य तृतीयानुयाजस्य याज्यामध्ये विच्छेदः । तस्मात् कारणात् एतदंगं निमित्तवशात् कदाचिदुत्तिष्ठति कदाचित् व्यापद्यते च । तस्मादिति प्रतिपादितार्थनिगमनम् ॥ ३२ ॥

द्वौ बाहू इत्यादि । बाहुद्वयम्, ऊरुद्वयम्, 'चत्वारः पत्नीसंयाजाः' अतस्ते प्रतिष्ठात्मकाः । 'अयमेव' मध्यमः 'प्राणः' 'इडा' । यद्यस्मात् तामिडामग्नौ न जुहोति 'सा अप्रदग्धेव' प्रदाहरहितेव भवति । 'तस्मादयं' मध्यमः 'प्राणः' 'अनवतृण्णः' अविच्छिन्नः सदा वर्तते ॥ ३३ ॥

याज्यानुवाक्यानां हविषां च क्रमेण धातुद्वयरूपतामाह—अस्थ्येव याज्यानुवाक्या इति । एतेषां यागानां याः 'याज्यानुवाक्याः' तान्यस्थीन्येव । हविस्तु मांसस्थानीयम् । याज्यानुवाक्या ऋच इति यत् 'तन्मितं' परिमितं छंदः । कदाचिदपि न्यूनाधिकभावो न भवति । तस्मात्कारणात् अस्थीन्यपि 'मेद्यतः' स्थूलीभवतः 'कृश्यतः' कृशीभवतश्च शरीरे 'समावंति' समपरिमाणान्येव 'भवंति' । देहवृद्धिक्षयाभ्यां अस्थ्नां वृद्धिक्षयौ न स्त इत्यर्थः । हवीरूपतां मांसस्य प्रतिपादयति—अथ यद्भूय इवेति । यागेषु हि कदाचित् 'हविः' 'भूय इव' अधिकमिव 'कनीय इव' अल्पमिव च गृह्यते । 'तस्मात् मांसानि' 'मेद्यतः' स्निग्धगात्रस्य पुरुषस्य 'मेद्यंति' वर्द्धन्ते । "ञिमिदा स्नेहने" ( धा. पा. दि. प. १३७ ) इति धातुः । 'कृश्यतः' पुरुषस्य 'कृश्यंति' क्षीणानि भवंति । "कृश तनूकरणे" ( धा. पा. दि. प. १२१ ) इति धातुः । एवमधिदेवमध्यात्मं

ता वाऽएताः । ( ऽ ) अनपोद्धार्य्याऽआहुतयो भवन्ति स यद्धैतासामपोद्धरेद्यथैकमङ्गꣳ शृणीयात्प्राणं वा निर्हण्यादेवं तदन्यान्येव हवीꣳष्युप चाह्रियन्तेऽप च ह्रियन्ते ॥ ३५ ॥

ता वाऽएताः । षोडशाहुतयो भवंति षोडशकलो वै पुरुषः पुरुषो यज्ञस्तस्मात्षोडशाहुतयो भवन्ति ॥ ३६ ॥

इति प्रथमप्रपाठके षष्ठं ब्राह्मणम् ॥ ११-१-६ ॥ ( १. ६. ) ॥

---

ता वा एता अनपोद्धार्या आहुतयो भवंति । स यद्धैतासामपोद्धरेत् । यथैकमंगं शृणीयात्प्राणं वा निर्हण्यात् । एवं तत् । अन्यान्येव हवींष्युप चाह्रियंतेऽप च ह्रियंते ॥ ३५ ॥

ता वा एताः षोडशाहुतयो भवंति । षोडशकलो वै पुरुषः । पुरुषो यज्ञः । तस्मात्षोडशाहुतयो भवंति ॥ ३६ ॥

---

च प्रयाजाज्यभागादीनां तत्तदात्मकतोक्ता । इदानीं तस्य फलमाह—तेनैतेन यज्ञेनेति । उक्तानां देवतानां मध्ये यां यां 'देवतां' यजमानः 'कामयते' 'यस्यै' देवतायै हविर्गृहीतं भवति, 'तां' कामयितव्यदेवतारूपेण यजते ॥ ३४ ॥

एतासां प्रयाजादीनां अध्यात्ममुक्तेषु अंगेषु मध्ये 'यथा एकमंगं' 'शृणीयात्' हिंस्यात् । 'प्राणं वा निर्हण्यात्' 'एवं तत्' अपोद्धृतमंगं स्यात् । तस्मादेतानि प्रयाजानुयाजादीनि प्राच्योदीच्यानि अंगजातानि तत्प्रतिनियतावयवरूपतया यज्ञशरीरनिष्पादकानि इति सर्वेष्टितंत्रसाधारणानि । अन्येषां प्रधानहविषाम् । आवापोद्धारयोग्यतामाह—अन्यान्येव हवींषीति । 'उपाह्रियंते' आज्यभागानंतरं स्विष्टकृद्यागात् पूर्वं प्रधानयागस्थाने प्रक्षिप्यन्ते प्रयोगांतरे 'अपह्रियंते च' उद्धार्यंते इत्यर्थः ॥ ३५ ॥

उक्ता अंगाहुतीः संभूय प्रशंसति—ता वा एताः षोडशाहुतय इति । पंच प्रयाजाः, द्वावाज्यभागौ, स्विष्टकृत्, इडा, त्रयोऽनुयाजाः, चत्वारः पत्नीसंयाजाः, इति षोडश सर्वत्र साधारण्येन भवंतीत्यर्थः । षोडशकलो वै पुरुष इति । सप्त शीर्षण्याः प्राणाः, अवाङ्प्राण एकः, इत्यष्टौ प्राणाः, चत्वारि दोर्बाहवानि, चत्वारि ऊर्वष्ठीवानि च, अष्टावंगानि । एतत् षोडशावयवात्मकं खलु शरीरम् । यद्वा अत्रैव "पञ्चेमे प्राणाः" इत्यादिना अनुक्रांता एव प्राणाद्याः षोडशकला ज्ञातव्याः । यस्मादेवं षोडशकलात्मकस्य यज्ञशरीरस्य षोडशाहुतिसाध्यता तस्मात् सर्वास्वपीष्टिषु 'एताः षोडशाहुतयः' भवन्तीत्यर्थः ॥ ३६ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये एकादशकाण्डे प्रथमेऽध्याये षष्ठं ब्राह्मणम् ॥ ( ११ । १ । ६ ) ॥

---

१—पंच शीर्षण्याः प्राणाः ५ द्वे चक्षुषी २ अवाङ्प्राणः १ द्वावाण्डौ २ शिश्नं च १ द्वौ बाहू २ द्वावूरू २ मध्यमः प्राणः १ एवं षोडशकलो वा १६ ॥

तद्वाऽअदो व्रतोपायनुऽउद्यते । युदि नाश्नाति पितृदेवुत्यो भवति युद्युऽअश्नाति देवानुत्यश्नातीति तुदारण्युमश्नीयादिति तुत्र स्थापयन्ति॥१॥

स युदि ग्राम्याऽओषधीरश्नाति । पुरोडाशस्य मेधमश्नाति युद्यारण्याऽओषधीरश्नाति बर्हिषो मेधमश्नाति युदि व्वानस्पत्युमश्नातीध्मस्य मेधमश्नाति युदि पुयः पिबति साम्नाय्युस्य चाज्यस्य च मेधमश्नाति युद्यपः पिबति प्रणीतानां मेधमश्नाति युदि नाश्नाति पितृदेवुत्यो भवति ॥ २ ॥

---

तद्वा अदो व्रतोपायन उद्यते । यदि नाश्नाति पितृदेवत्यो भवति । यद्यु अश्नाति देवानत्यश्नाति–इति । तदारण्यमश्नीयादिति तत्र स्थापयंति ॥ १ ॥

स यदि ग्राम्या ओषधीरश्नाति, पुरोडाशस्य मेधमश्नाति । यद्यारण्या ओषधीरश्नाति, बर्हिषो मेधमश्नाति । यदि वानस्पत्यमश्नाति, इध्मस्य मेधमश्नाति । यदि पयः पिबति, साम्नाय्यस्य चाज्यस्य च मेधमश्नाति । यद्यपः पिबति, प्रणीतानां मेधमश्नाति । यदि नाश्नाति पितृदेवत्यो भवति ॥ २ ॥

---

अथ तत्रैव दर्शपूर्णमासयागे व्रतोपायनविषयां मीमांसां कर्तुं प्रतिजानीते–तद्वा अद इति । तत्तत्र दर्शपूर्णमासयोः । ' अदः ' अमुष्मिन् "व्रतमुपैष्यन्" ( श. प. १ । १ । १ । १ ) इत्यादावेव प्रतिपादिते 'व्रतोपायने ' व्रतस्य उपायनं उपगमः तस्मिन् विषये ' उद्यते ' रात्रिभोजनकरणाकरणविषयो विशेषो विचार्यते । वदेः कर्मणि यक् ( पा. सू. १ । २ । १३ ) । तत्र अशनानशनयोस्तावद्दोषमाह–यदि नाश्नातीति । ' यदि ' पर्वरात्रौ यजमानः ' नाश्नीयात् ' तर्हि ' पितृदेवत्यः ' भवेत् । पितॄणां हि भोजनं न रात्रौ भवति । "नच नक्तं श्राद्धं कुर्वीत" इति रात्रौ श्राद्धनिषेधस्मरणात् । अतो यजमानोऽपि रात्रौ अभुंजानस्तत्सदृशो भवेत् । नच एतज्जीवतो युक्तम् । तर्हि एतद्दोषपरिहाराय यदि ' अश्नीयात् ' परेद्युर्यष्टव्यानागतान् देवान् अत्यश्नीयात् अतिक्रम्य भुक्तवान् भवेत् । ' इति ' अनेन प्रकारेण ' उद्यते ' इति पूर्वत्र संबन्धः । कथं तर्हि कर्तव्यमिति तत्राह–तदारण्यमिति । तत्तस्माद्धेतोः आरण्यमरण्यनिष्पन्नं श्यामाकादिकमश्नीयात् इत्येवं 'तत्र' व्रतोपायनविषये ' स्थापयंति ' केचिन्निर्णयं कुर्वंति । अत एव तैत्तिरीयके–" यदश्नन्नुपवसेत्पितृदेवत्यः स्यादत आरण्यमश्नाति " इति ॥ १ ॥

एतदारण्याशनमपि पूर्वपक्षीकुर्वन् संभवत्पक्षांतराण्युपन्यस्य दूषयति–स यदि ग्राम्या इति । पुरोडाशप्रकृतिभूतानां व्रीहियवानां ग्राम्याणामशने तत्कार्यस्य ' पुरोडाशस्य मेधं ' यज्ञियं सारं भुक्तवान् भवति । एवमुत्तरत्रापि योज्यम् । वानस्पत्यमिति । वनस्पतिविकारभूतं फलादिकं 'वानस्पत्यम्' । साम्नाय्यस्य चाज्यस्य चेति । दधिपयोलक्षणं सान्नाय्यं हविः आज्यं च इत्येतदुभयं पयसः कार्यमिति तत्पाने तदुभयस्य यज्ञयोग्यं सारं भुक्तवान् भवतीत्यर्थः । यद्यपः पिबतीत्यादि । हविषः संयवनार्थाः चमसेनाहवनीयसमीपं

तुदाहुः । किमुयनमिति स्वयुᳬं हैवैते रात्रीऽअग्निहोत्रं जुहुयात्स युद्धुत्वा प्राश्नाति तेनापितृदेवत्यो भवत्याहुतिर्व्वाऽएषा स युदेवैतामात्मन्नाहुतिं जुह्वोति तेनोऽएतेषां मेधानां नाश्नाति ॥ ३ ॥

(त्ये) एते ह वै रात्री । सुर्व्वा रात्रयः समवयंति याऽआपूर्य्यमाणपक्षस्य रात्रयस्ताः सुर्व्वाः पौर्णमासीᳬं समवयन्ति याऽअपक्षीयमाणपक्षस्य रात्रयस्ताः सुर्व्वाऽअमावास्याᳬं समवयन्ति स यो हैवं विद्वान्त्स्वयमुपवसथे जुह्वोति सर्व्वदा हैवास्य स्वयुᳬं हुतं भवति ॥ ४ ॥

इति प्रथमप्रपाठके सप्तमं ब्राह्मणम् ॥ ११-१-७ ॥ ( १. ७. ) ॥

---

तदाहुः किमयनमिति । स्वयं हैवैते रात्री अग्निहोत्रं जुहुयात् । स यद्धुत्वा प्राश्नाति, तेनापितृदेवत्यो भवति । आहुतिर्वा एषा । स यदेवैतामात्मन्नाहुतिं जुहोति । तेनो एतेषां मेधानां नाश्नाति ॥ ३ ॥

एते ह वै रात्री सर्वा रात्रयः समवयंति । या अपूर्यमाणपक्षस्य रात्रयः; ताः सर्वाः पौर्णमासीं समवयंति । या अपक्षीयमाणपक्षस्य रात्रयः; ताः सर्वा अमावास्यां समवयंति । स यो हैवं विद्वान् स्वयमुपवसथे जुहोति । सर्वदा हैवास्य स्वयं हुतं भवति ॥ ४ ॥

---

नीताः आपः प्रणीता गृह्यंते । अशनपक्षे दोषस्य दुष्परिहारत्वात् अनशनपक्षोक्तदोष एव परिशिष्यत इत्याह—यदि नाश्नातीति ॥ २ ॥

अस्य दोषस्य प्रश्नपूर्वकं परिहारमाह—तदाहुः किमयनमिति । अनुष्ठानमार्गः क इति ब्रह्मवादिनां प्रश्नः । अस्योत्तरं श्रुतिराचष्टे—स्वयम् इति । 'एते रात्री' "अत्यंतसंयोगे द्वितीया" ( पा. सू. २।१।२९ ) । पर्वरात्रौ यजमानः स्वयमेवाग्निहोत्रं जुहुयात् । यजमानो हुतशिष्टं होमानंतरं यत्प्राश्नाति ' तेन ' प्राशनेन प्रागुदीरितपितृदेवत्यलक्षणदोषस्तस्य न भवति । मेधाशनलक्षणो दोषोऽपि नास्तीत्याह—आहुतिर्वा एषेति । यदग्निहोत्रहुतशेषभक्षणं, ' एषा आहुतिः ' खलु । अत एवान्यत्र श्रूयते—" यच्चतुरुन्नयति द्विर्जुहोति, अथ के द्वे आहुती भवत इति, अग्नावेव वैश्वानरे द्वे आहुती जुहोति " इति । यस्मादेतां प्राशनरूपामाहुतिमेव आत्मरूपे वैश्वानरे अग्नौ जुहोति । अतोऽनेनैव कारणेन एषां प्रागुक्तानां पुरोडाशादीनां यज्ञियसारं न भुक्तवान् भवतीत्यर्थः ॥ ३ ॥

पर्वरात्रौ विहितं स्वयं होमं प्रशंसति—एते ह वै रात्री इति । ' समवयंति ' संप्राप्नुवंति एकीभवंतीत्यर्थः । या आपूर्यमाणपक्षस्येत्यादि । यस्मिन्पक्षे चंद्रः कलावृद्ध्या क्रमेणापूर्यते स शुक्लपक्ष आपूर्यमाणपक्षः । तस्य याः प्रतिपदादितिथिषु चतुर्दश ' रात्रयः ' ' ताः सर्वाः पौर्णमासीं समवयंति ' संप्राप्नुवंति । कलाक्षयक्रमेण चंद्रो यस्मिन्नपक्षीयमाणः स अपरपक्षः । तस्य ' या रात्रयः ' ' ताः सर्वा अमावास्यां ' प्रविशंति ।

देवाश्च वाऽअसुराश्च । ( श्चो ) उभये प्राजापत्याः पस्पृधिरे ततोऽसुराऽअतिमानेनैव कस्मिन्नु वयं जुहुयामेति स्वेष्वेवास्येषु जुह्वतश्चेरुस्तेऽतिमानेनैव पराबभूवुस्तस्मान्नातिमन्येत पराभवस्य हैतन्मुखं यदतिमानः १

(नोऽथ) अथ देवाः । (ऽ) अन्योऽन्यस्मिन्नेव जुह्वतश्चेरुस्तेभ्यः प्रजापतिरात्मानं प्रददौ यज्ञो हैषामास यज्ञो हि देवानामन्नम् ॥ २ ॥

(वॅं) स देवेभ्यऽआत्मानं प्रदाय । ( या ) अथैतमात्मनः प्रतिमामसृजत यद्यज्ञं तस्मादाहुः प्रजापतिर्यज्ञऽइत्यात्मनो ह्येतं प्रतिमामसृजत ॥ ३ ॥

---

देवाश्च वा असुराश्चोभये प्राजापत्याः पस्पृधिरे । ततोऽसुरा अतिमानेनैव कस्मिन्नु वयं जुहुयामेति–स्वेष्वेवास्येषु जुह्वतश्चेरुः । तेऽतिमानेनैव पराबभूवुः । तस्मान्नातिमन्येत । पराभवस्य हैतन्मुखं यदतिमानः ॥ १ ॥

अथ देवा अन्योन्यस्मिन्नेव जुह्वतश्चेरुः । तेभ्यः प्रजापतिरात्मानं प्रददौ । यज्ञो हैषामास । यज्ञो हि देवानामन्नम् ॥ २ ॥

स देवेभ्य आत्मानं प्रदायाथैतमात्मनः प्रतिमामसृजत यद्यज्ञम् । तस्मादाहुः प्रजापतिर्यज्ञ इति । आत्मनो ह्येतं प्रतिमामसृजत ॥ ३ ॥

---

एवं विदुषः ' स्वयं ' पर्वणि जुह्वतो यजमानस्य अन्यासु रात्रिषु ऋत्विजा क्रियमाणोऽपि होमः स्वयं होमः संपद्यत इत्यर्थः ॥ ४ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये एकादश काण्डे प्रथमेऽध्याये सप्तमं ब्राह्मणम् ॥ ( ११–१–७ ) ॥

उक्तविधं व्रतम् उपेयुषो यजमानस्य हवीरूपतां ब्रुवन् तस्मिन्निष्क्रयणहेतुतां दर्शपूर्णमासयागस्य प्रतिपादयितुं आख्यायिकया यज्ञोत्पत्तिमाह–देवाश्च वा असुराश्चेति । ' उभये ' ' प्राजापत्याः ' प्रजापतेः पुत्रा अदित्यामुत्पादिताः ' देवाः ' दित्यामुत्पादिताः 'असुराः' 'पस्पृधिरे' स्पर्द्धां कृतवंतः । छांदसः स्पर्द्धधातोः स्पृभावः । ततस्तेषामुभयेषां मध्ये ' असुरा अभिमानेनैव ' अस्मदतिरिक्तः को नाम विद्यते यस्मिन् अस्मद्व्यतिरिक्ते श्रेष्ठे वयं हविर्जुहवाम । स नास्त्येवेति अतिशयेनाहंकारेण ' स्वेष्वेव आस्येषु ' हविर्जुह्वतः चेरुरवर्तंत । तेनाहंकारेण ' ते ' असुराः ' पराबभूवुः ' एवमतिमानस्य पराभवनिमित्तत्वात् स न कार्यः प्रेक्षावतेति प्रसंगादुपदिश्यते–तस्मान्नातिमन्येतेति । पराभवो नाशः तस्यैवैतन्मुखम् उपायः, ' अतिमानः ' अहंकार इति ' यत् ' ॥ १ ॥

इत्थमसुरैः कृतमुक्त्वा देवैः कृतं दर्शयति–अथ देवा इति । ' अन्योऽन्यस्मिन् ' अग्निरिंद्रादौ देवेन्द्र अग्न्यादौ देवे इति परस्परव्यतिहारेण हवींषि ' जुह्वतः ' चेरुरित्यर्थः । ' तेभ्यः ' देवेभ्यः प्रीतः ' प्रजापतिः ' ' आत्मानं ' स्वशरीरं ' प्रददौ ' प्रादित । आत्मा ' एषां ' देवानां यज्ञात्मकः ' आस ' बभूव । तेन क उपयोग ? इति तत्राह–यज्ञो हीति । ' यज्ञः ' खलु ' देवानां ' स्थितिनिमित्तं 'अन्नं' तदात्मकं भागं देवेभ्यः कल्पितवानित्यर्थः ॥ २ ॥

स देवेभ्य इत्यादि । ' सः ' प्रजापतिः एवं ' देवेभ्य आत्मानं ' स्वशरीरं ' प्रदाय ' तन्निष्क्रयणाय

स ऽएतेन यज्ञेन। देवेभ्य ऽआत्मानं निरक्रीणीत स यद्व्रतमुपैति यथैव तत्प्रजापतिर्देवेभ्य ऽआत्मानं प्रायच्छदेवमेवैष ऽएतद्देवेभ्यऽआत्मानं प्रयच्छति तस्मादु संयत ऽएवैताꣳ रात्रिं चिचरिषेद्यथा हविषा चरेदेवꣳ हविर्ह्येष देवानां भवति ॥ ४ ॥

( त्यु ) अथ यद्यज्ञं तनुते । यज्ञेनैवैतद्देवेभ्यऽआत्मानं निष्क्रीणीते यथैव तत्प्रजापतिर्निरक्रीणीतैवमथ यद्धविर्निर्वपति हविषैवैतद्यज्ञं निष्क्रीणाति हविरनुवाक्ययाऽनुवाक्यामवदानेनावदानं याज्यया याज्यां व्वषट्कारेण व्वषट्कारमाहुत्या तस्याहुतिरेवानिष्क्रीता भवति ॥ ५ ॥

---

स एतेन यज्ञेन देवेभ्य आत्मानं निरक्रीणीत । स यत् व्रतमुपैति । यथैव तत्प्रजापतिर्देवेभ्य आत्मानं प्रायच्छत् । एवमेवैष एतद्देवेभ्य आत्मानं प्रयच्छति । तस्मादु संयत एवैतां रात्रिं चिचरिषेत् । यथा हविषा चरेत् एवम् । हविर्हि एष देवानां भवति ॥ ४ ॥

अथ यद्यज्ञं तनुते । यज्ञेनैवैतद्देवेभ्य आत्मानं निष्क्रीणीते । यथैव तत्प्रजापतिर्निरक्रीणीत । एवम् ।

---

यज्ञरूपामात्मनः प्रतिकृतिम् ' असृजत ' सृष्टवान् । यत एवं प्रजापतिशरीरस्य प्रतिमा यज्ञः तस्मात् प्रजापतियज्ञयोः तादात्म्यव्यवहारः इत्याह—तस्मादाहुरिति । आत्मनो ह्येतमिति प्रागुदीरितहेतुयोजनम् । ' प्रतिमा ' प्रतिबिंबं प्रतिकृतिरिति पर्यायः ॥ ३ ॥

स एतेन यज्ञेनेत्यादि । ' सः ' प्रजापतिः इत्थं सृष्टेन स्वशरीरप्रतिकृतिभूतेन ' एतेन यज्ञेन ' ' देवेभ्यः ' सकाशात् ' आत्मानं ' स्वशरीरं ' निरक्रीणीत ' यज्ञतुल्यवेतनं देवेभ्यो दत्त्वा पुनः स्वशरीरं स्वीकृतवानित्यर्थः । इत्थं आख्यायिकया सिद्धमर्थं प्रकृते योजयति—स यत् व्रतमुपैतीति । दर्शपूर्णमासयागे प्रागुक्तलक्षणं ' व्रतमुपैतीति ' यदस्ति । एतेन प्रजापतिरिव देवेभ्यः स्वयमपि आत्मानं स्वशरीरं हविष्ट्वेन प्रयच्छति । तस्माद्धविर्दोषपरिहाराय 'एतां' औपवसथीयदिवसस्य रात्रिं 'संयत एव' सम्यक् नियतेंद्रियव्यापार एव सन् ' चिचरिषेत् ' चरितुं वर्तितुमिच्छेत् । दृष्टांतेनोपपादयति—यथा हविषेति । 'यथा' संयतः सन् 'हविषा चरेत्' यजेत । एवं पर्वरात्रावपि संयतो भवेदित्यर्थः । तत्र कारणमाह—हविर्ह्येष इति । ' एवं ' व्रतमुपेयिवान् यजमानः औपवसथ्यदिवसे देवानां स्वयमेव हविर्भवति । ' हि ' यस्मादेवं तस्मात्संयतश्चरेदिति संबंधः ॥ ४ ॥

अथ यद्यज्ञमित्यादि । अथानंतरं परस्मिन् दिवसे ' यत् ' यदा ' यज्ञं ' दर्शपूर्णमासादिलक्षणं ' तनुते ' विस्तारयति । तत्तदा तेनैव ' यज्ञेन ' हि मूल्येन ' देवेभ्यः ' सकाशात् औपवसथ्यदिवसे दत्तं स्वमात्मानं

---

१—श० ब्रा० १ । १ । १ । २ । इत्यत्र ॥

स यथाऽग्रप्रशीर्णो वृक्षः । ( ऽ ) एवमस्यैष यज्ञो भवत्याहुतिमेवान्वाहार्य्येण निष्क्रीणाति तद्यदेतद्धीनं यज्ञस्यान्वाहरति तस्मादन्वाहार्य्यो नामैवमु हास्यैष सर्व्वऽएव यज्ञो निष्क्रीतो भवत्येष ह वै यजमानस्यामुष्मिंल्लोकऽआत्मा भवति यद्यज्ञः स ह सर्व्वतनूरेव यजमानोऽमुष्मिंल्लोके सम्भवति यऽएवं विद्वान्निष्क्रीत्या यजते ॥ ६ ॥

इति प्रथमप्रपाठकेऽष्टमं ब्राह्मणम् ॥ ११-१-८ ॥ ( १. ८. ) ॥

इति प्रथमोऽध्यायः समाप्तः ॥ ११-१ ॥

---

अथ यद्धविर्निर्वपति । हविषैवैतद्यज्ञं निष्क्रीणाति । हविरनुवाक्यया । अनुवाक्यामवदानेन । अवदानं याज्यया । याज्यां वषट्कारेण । वषट्कारमाहुत्या । तस्याहुतिरेवानिष्क्रीता भवति ॥ ५ ॥

स यथाऽग्रप्रशीर्णो वृक्षः । एवमस्यैष यज्ञो भवति । आहुतिमेवान्वाहार्येण निष्क्रीणाति । तद्यदेतद्धीनं यज्ञस्यान्वाहरति । तस्मादन्वाहार्यो नाम । एवमु ह अस्यैष सर्व एव यज्ञो निष्क्रीतो भवति । एष ह वै यजमानस्यामुष्मिन् लोक आत्मा भवति । यद्यज्ञः । स ह सर्वतनूरेव यजमानोऽमुष्मिन् लोके संभवति । य एवं विद्वान्निष्क्रीत्या यजते ॥ ६ ॥

---

'निष्क्रीणीते' पुनः स्वीकरोति । 'यथैव' खलु 'प्रजापतिः' पुरा स्वमात्मानं देवेभ्यो दत्त्वा तत्प्रतिनिधित्वेन यज्ञं सृष्ट्वा तं देवेभ्यः प्रदाय पुनः स्वशरीरमगृह्णात् । एवं यजमानोऽपि करोतीत्यर्थः । यज्ञादीनामपि उत्तरेण निष्क्रयणप्रकारमाह—अथ यद्धविरिति । यदा खलु हविर्निर्वपति तेन 'हविषैव' तं यज्ञं 'निष्क्रीणाति' । तत्र 'हविरनुवाक्यया' 'अनुवाक्यामवदानेन' 'अवदानं याज्यया' 'याज्यां वषट्कारेण' 'वषट्कारमाहुत्या,' सर्वत्र निष्क्रीणातीति संबंधः । तस्याहुतिरेवेत्यादि । 'तस्य' यज्ञस्य संबंधिनी 'आहुतिरेव' 'अनिष्क्रीता' अस्वीकृता भवति इति ॥ ५ ॥

ततो यजमानस्य 'अग्रप्रशीर्णः' भग्नाग्रः 'वृक्षः' इव 'यज्ञो भवति' उपरि अवस्थिताया आहुतेः अनिष्क्रीतत्वात् । अथैतद्दोषपरिहाराय तन्निष्क्रयमाह—आहुतिमेवेति । योऽयमन्वाहार्याख्यो दक्षिणात्वेन देय ओदनः तेन तामाहुतिमेव 'निष्क्रीणाति' । तन्नामनिर्वचनेन दोषशमनसामर्थ्यं तस्य प्रतिपादयति—तद्यदेतदिति । तत्तत्र 'यज्ञस्य' संबंधि 'यदेतत्' 'हीनं' विलुप्तमंगमस्ति तत् 'अन्वाहरति' पुनः संदधाति । यस्मादेवं तस्मादयमन्वाहार्यो नाम्ना संपन्नः । अन्वाहरति दोषजातमनेन शमयतीति करणसाधनो ण्यत् । एवमु हास्येति प्रतिपादितकृत्स्नयज्ञनिष्क्रयणनिगमनम् । एवं निष्क्रीतस्य यज्ञस्य क उपयोगः ? इति तत्राह एष ह वा इति । 'एषः' खलु निष्क्रीतः 'यज्ञः' अस्य 'यजमानस्य' 'अमुष्मिन्' स्वर्गे 'लोके' 'आत्मा' देहो 'भवति' । 'सः' खलु 'यजमानः सर्वतनूरेव' सर्वावयवसंपूर्ण एव सन्

'अमुष्मिन्' स्वर्गे ' लोके ' ' संभवति ' उत्पद्यते । ' यः ' एवमुक्तप्रकारं ' विद्वान् ' निष्क्रीत्या ' निष्क्रयणेन दर्शपूर्णमासाभ्यां ' यजते ' स इति संबंधः ॥ ६ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये एकादशकाण्डे प्रथमेऽध्याये अष्टमं ब्राह्मणम् ॥ ( ११–१–८ ) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं,
सप्ताब्धीन्पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटं च ॥
धान्याद्रिं धन्यजन्मा तिलभवमतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान्गुडकृतमजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणजमनृणः शार्करं चार्कतेजा,
रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये एकादशकाण्डे प्रथमोऽध्यायः समाप्तः ॥ ( ११ । १ ) ॥



# अथ द्वितीयेऽध्याये प्रथमं ब्राह्मणम् ।

## प्रथमप्रपाठके च नवमं ब्राह्मणम् ।

त्रिर्हं वै पुरुषो जायते । (तऽए) एतुन्न्वेवु मातुश्चाधि पितुश्चाग्रे जायतेऽथ युं युज्ञऽउपनुमति स युज्जते तुद्द्वितीयं जायतेऽथ युत्र म्रियुते युत्रैतमुग्ना-वुभ्याद्धुधाति स युत्तुतः सम्भुवति तुत्तृतीयं जायते तुस्मात्त्रिः पुरुषो जायतऽ इुत्याहुः ॥ १ ॥

( स्ता ) ता वुाऽएताः । ( ताऽएु ) एुकादुश सामिधेनीरुन्वाह दुश वुाऽ इमे पुुरुषे प्राणाऽआुत्मैकादुशो युस्मिन्नेते प्राणाः प्रुतिष्ठिताऽएतुावान्वै पुुरुषस्तुदेनं कृत्स्नं जनयत्युथ युदूर्ध्वुं सामिधेनुीभ्यः सा प्रतिष्ठा तुदेनं जनयित्वा प्रुतिष्ठापयाति ॥ २ ॥

---

त्रिर्हं वै पुरुषो जायते । एतन्न्वेव मातुश्चाधि पितुश्चाग्रे जायते । अथ यं यज्ञ उपनमति–स यद्यजते तत् द्वितीयं जायते । अथ यत्र म्रियते–यत्रैतमग्नावभ्यादधति–स यत्ततः संभवति–तत् तृतीयं जायते । तस्मात् त्रिः पुरुषो जायत इत्याहुः ॥ १ ॥

ता वा एता एकादश सामिधेनीरन्वाह । दश वा इमे पुरुषे प्राणाः । आत्मैकादशः । यस्मिन्नेते प्राणाः प्रतिष्ठिताः । एतावान् वै पुरुषः । तदेनं कृत्स्नं जनयति । अथ यदूर्ध्वं सामिधेनीभ्यः । सा प्रतिष्ठा । तदेनं जनयित्वा प्रतिष्ठापयति ॥ २ ॥

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

अथ विशिष्टजन्महेतुतया सामिधेनीः प्रशंसयन् पुरुषस्य जन्मत्रयमाह–त्रिर्हं वै पुरुष इति । 'पुरुषः' शरीरी त्रिस्त्रिर्वारं खलु 'जायते' । तदेव जन्मनस्त्रित्वं दर्शयति–एतन्न्वेवेति । मातापितृसकाशात् यत् प्रथमं जन्म तदेकम् । अथानंतरं 'यं' पुरुषं 'यज्ञः' सोमयागः 'उपनमति' प्राप्नोति 'सः' यदि तेन 'यजते' तदस्य पुरुषस्य दीक्षारूपं 'द्वितीयं' जन्म भवति । अथानंतरं आयुरवसाने 'यत्र' यजमानः 'म्रियते' पंचत्वं गच्छति, अनंतरं 'यत्र' 'एनमग्नौ अभ्यादधति' अंत्येष्टिविधानेन प्रक्षिपंति, ततोऽनंतर-मेव 'सः' यजमानः अमुष्मिन् लोके अमृतमयशरीरः सन् यतः 'संभवति' उत्पद्यते यज्ञफलोपभोगायत्तं तदस्य 'तृतीयं' जन्म । उक्तेऽर्थे प्रसिद्धिं संवादयति–तस्मात् त्रिः पुरुष इति । 'आहुः' अभिज्ञाः कथयंति ( गृह्यम् ) ॥ १ ॥

इत्थं त्रीणि जन्मानि प्रदर्श्य यज्ञादेव पुनर्जन्मत्रयं प्रदर्शयन् सामिधेनीसंख्याद्वारा प्रथमं जन्म समर्थयते– ता वा एता इति । 'ताः' प्रसिद्धाः "प्र वो वाजा" इत्याद्याः 'एताः' एकादशर्चः । दश वा इति ।

नुव प्रसुवुस्य व्व्याहृतयः । (यो) नुवेमे पुरुषे प्राणास्तुदेनं द्वितीयं जन-यत्याश्रावणं प्रत्याश्रावणꣳ सा प्रतिष्ठाऽथ युदेवादः सृष्टौ जुन्मोच्युते तदेनं तृतीयं जनयति पत्नीसंयाजा ऽएव तुत्र प्रतिष्ठा ॥ ३ ॥

त्रिर्हं वै पुरुषो जायते । ( तऽए ) एवुमेवैनमेतुद्यज्ञात्त्रिर्जनयति तासामे-कादशानां त्रिः प्रथमामन्वाह त्रिरुत्तमाम् ॥ ४ ॥

---

नव प्रसवस्य व्याहृतयः । नवेमे पुरुषे प्राणाः । तदेनं द्वितीयं जनयति । आश्रावणं प्रत्याश्रावणं सा प्रतिष्ठा । अथ यदेवादः सृष्टौ जन्मोद्यते, तदेनं तृतीयं जनयति । पत्नीसंयाजा एव तत्र प्रतिष्ठा ॥ ३ ॥

त्रिर्हं वै पुरुषो जायते । एवमेवैनमेतद्यज्ञात् त्रिर्जनयति । तासामेकादशानां त्रिः प्रथमामन्वाह । त्रिरुत्तमाम् ॥ ४ ॥

---

सप्त शीर्षण्याः, द्वौ अवांचौ, नाभिर्दशमी । इति दश शरीरे प्राणाः । तेषामात्मा मन एव ' एकादशः ' एका-दशसंख्यापूरकः । एते ' प्राणाः ' यस्मिन् शरीरे वर्तंते । एतत्परिमाण एव खलु ' पुरुषः ' भवति । तदेनं अनया सामिधेनीगतैकादशसंख्यया ' कृत्स्नं ' सर्वावयवसंपूर्णमेव ' जनयति ' । ' अथ यत् सामिधेनीभ्यः ऊर्ध्वं ' सामिधेन्यनुवचनादुत्तरकालमनुष्ठेयं प्रयोगजातमस्ति । तदस्य जातस्य पुरुषस्य ' सा प्रतिष्ठा ' जीवनास्पदम् । तस्मादेनं पुरुषं सामिधेन्यनुवचनेन कृत्स्नेन ' जनयित्वा ' शेषेण प्रयोगजातेन ' प्रतिष्ठा-पयति ' प्रतिष्ठितं करोति ॥ २ ॥

द्वितीयं जन्म प्रतिपादयति—नव प्रसवस्येति । प्रसवः सामिधेन्यनुवचने प्रेरणं तद्येन " समिध्यमानायानु-ब्रूहि " इत्येवंरूपेण वाक्येन क्रियते तदत्र प्रसवशब्दाभिधेयम् । तस्य ' नव व्याहृतयः ' नवाक्षराणि भवंति । ताभिर्नवव्याहृतिभिः नवप्राणात्मकमेव पुरुषं ' द्वितीयं ' ' जनयति ' । यद्वा " अग्निर्होता वेत्त्वग्निः " इति प्रयाजांगभूतो यः स्रुगादापननिगदः, सोऽत्र प्रसवशब्दाभिधेयः तत्र विद्यमानानि नव वाक्यानि " नव व्याहृ-तयः ' अन्यत्समानम् । तदनंतरम् यत् " ओ श्रावय " इति आश्रावणं तस्य " अस्तु श्रौषट् " इति यत् ' प्रत्याश्रावणं ' तदुभयं अस्य जातस्य पुरुषस्य ' प्रतिष्ठा ' जीवनास्पदम् । तृतीयं जन्म प्रतिपादयति—अथ यदेवाद इति । अदःशब्देन प्रथमकांडे प्रस्तरप्रहरणविधायकं ब्राह्मणं ( श. प. ब्रा. १ । ९ । १–२ ) परामृश्यते । तत्र ' सृष्टौ ' यजमानसंस्तुतस्य प्रस्तरस्य स्वर्गलोकात्मके आहवनीये प्रहरणविधानात् यज्जन्म प्रतिपाद्यते तदत्र तृतीयं जन्म इत्यर्थः । तत्र जन्मनि जातस्य पत्नीसंयाजाख्या यागा एव ' प्रतिष्ठा ' जीवनास्पदम् ॥ ३ ॥

एतत् यज्ञसंबंधि जन्मत्रयं पूर्वोक्तजन्मत्रयदृष्टांतेन निगमयति—त्रिर्हं वा इति । " मातुश्चाधि पितुश्चाग्रे " इत्यादिना यथा पुरुषस्य त्रीणि जन्मानि प्रतिपादितानि । एवमेतर्हि ' एनं ' यजमानं यज्ञादेव त्रिर्जनयति । ' तासां ' सामिधेनीनां आद्योत्तमयोस्त्रिरावृत्तिं विधाय प्रशंसति—तासामेकादशानामिति । ' प्रथमा ' " प्र वो वाजा " इत्येषा । ' उत्तमा ' " आजुहोत " इत्येषा ॥ ४ ॥

ताः पञ्चदश सामिधेन्यः । (न्यो) द्वावाघारौ पञ्च प्रयाजाऽइडा त्रयोऽनुयाजाः सूक्तवाकश्च शंयोर्वाकश्च तास्त्रयोदशाहुतयोऽथ यदेवादः पत्नीसंयाजेषु सम्प्रतिगृह्णाति समिष्टयजुश्च ॥ ५ ॥

ताः पञ्चदशाहुतयः । (स्ता) तासां पञ्चदशानामाहुतीनामेताऽअनुवाक्या ऽएताः पञ्चदश सामिधेन्य ऽएतासामनुवाक्यानामेता याज्या यऽएवात्र मन्त्रो यो निगदस्तद्याज्यारूपमेतेनो हास्यैताऽआहुतयोऽनुवाक्यवत्यो भवन्त्येताभिः सामिधेनीभिरेताभिराहुतिभिरेता ऽअनुवाक्या याज्यवत्यश्चाहुतिमत्यश्च भवन्ति ॥ ६ ॥

इति प्रथमप्रपाठके नवमं ब्राह्मणम् ॥ ११-१-९ ॥ (२. १.) ॥

---

ताः पंचदश सामिधेन्यः । द्वावाघारौ । पंच प्रयाजाः । इडा । त्रयोऽनुयाजाः । सूक्तवाकश्च । शंयोर्वाकश्च । तास्त्रयोदशाहुतयः । अथ यदेवादः पत्नीसंयाजेषु संप्रतिगृह्णाति । समिष्टयजुश्च ॥५॥

ताः पंचदशाहुतयः । तासां पंचदशानामाहुतीनाम् एता अनुवाक्या एताः पंचदश सामिधेन्यः । एतासामनुवाक्यानामेता याज्याः । य एवात्र मंत्रः । यो निगदः-तद्याज्यारूपम् । एतेनो हास्यैता आहुतयोऽनुवाक्यवत्यो भवंति । एताभिः सामिधेनीभिरेताभिराहुतिभिरेता अनुवाक्या याज्यवत्यश्चाहुतिमत्यश्च भवंति ॥ ६ ॥

---

एवमभ्यस्ताभिः सह " ताः पंचदश सामिधेन्यो भवंति " इमामेव श्रुतिं मनसि निधाय आश्वलायनेनाप्युक्तं सूत्रम्-" एताः पंचदशाभ्यस्ताभिः " ( आश्व. श्रौ. सू. १।२।१।२ ) इति । " द्वावाघारौ " इत्यादिना पंचदशाहुतयः परिगण्यंते । इडोपह्वानमपि यागः । "इडया देव्यज्ययाऽहम्" इति मंत्रलिंगात् । सूक्तवाकोऽपि- " अग्निरिदं हविरजुषत " इत्यादिना प्रस्तरात्मकस्य हविषः । अग्न्यादिदेवतासंबंधप्रतिपादकत्वात् आहुत्यात्मकः । एतदेव मीमांसका आहुः । प्रस्तर आहुतिः सूक्तवाको याज्येति । " तच्छंयोरावृणीमहे " इति शंयोर्वाकोऽपि परिधिप्रहरणसमकालीनत्वात् आहुतिरूपः । ' अदः ' प्रथमकांडे ( श. ब्रा. १ । ९ । ३ ) पत्नीसंयाजेषु कर्तव्येषु सत्सु यत् आहवनीयस्योपरि स्रुचोः संप्रतिग्रहणं विहितं, सा संस्रवरूपा एकाहुतिः । समिष्टयजुराख्या एकेति । एवं पंचदशाहुतयः संपद्यंते ॥ ५ ॥

' तासां पंचदशानामाहुतीनाम् ' 'एताः पंचदश सामिधेन्यः' क्रमेण अनुवाक्यास्थानीयाः । अत्राज्याहुतिषु ' य एव ' करणमंत्रः, यश्च इडोपह्वानादिर्निगदः, ता एव संयाज्याः । तत्तथा सति आसु आहुतिषु याज्यानुवाक्यावत्त्वलक्षणंरूपं इतरयागवत् संपन्नमित्यर्थः । एतेनो हास्यैता इत्यादिना परिनिष्ठितस्यार्थस्यानुवादः । ' एताभिः सामिधेनीभिः ' इमाः पंचदशाहुतयः अनुवाक्यवत्यो भवंति । एताश्चानुवाक्यास्तुताः सामिधेन्यः ' एताभिः ' करणमंत्रनिगदसिद्धाभिः ' आहुतिभिः ' याज्योपेताः आहुत्युपेताश्च ' भवंति ' ॥ ६ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये एकादशकाण्डे द्वितीयेऽध्याये प्रथमं ब्राह्मणम् ॥ (११-२-१) ॥

२५०६

गायत्रीमनुवाक्यामुन्वाह। त्रिपदा वै गायत्री त्रय ऽइमे लोका ऽइमानेवैत-ल्लोकान्देवाः प्रत्यष्ठापयन् ॥ १ ॥

(न्तु) अथ त्रिष्टुभा यजति । चतुष्पदा वै त्रिष्टुप्चतुष्पादाः पशवस्तत्प-शूनेवैतदेषु लोकेषु प्रतिष्ठितेषु देवाः प्रत्यष्ठापयन् ॥ २ ॥

( न्द्व्य ) द्व्यक्षरो व्वषट्कारः । ( रो ) द्विपाद्वै पुरुषस्तत्पुरुषमेवैतद्वि-पादमेषु पशुषु प्रतिष्ठितेषु देवाः प्रत्यष्ठापयन् ॥ ३ ॥

( न्त्सो ) सोऽयं द्विपात्पुरुषः । पशुषु प्रतिष्ठितऽएवमेवैष ऽएतल्लोकान्प्र-तिष्ठापयति लोकेषु प्रतिष्ठितेषु पशून्प्रतिष्ठापयति पशुषु प्रतिष्ठितेष्वात्मानं प्रतिष्ठापयत्येवमेष पुरुषः पशुषु प्रतिष्ठितो यऽएवं व्विद्वान्यजते ॥ ४ ॥

( तेऽथ ) अथ यद्वषट्कृते जुहोति । ( त्ये ) एष वै व्वषट्कारो यऽएष तपति सऽएष मृत्युस्तदेनमुपरिष्टान्मृत्योः सꣳस्करोति तदेनमतो जन-यति सऽएतं मृत्युमतिमुच्यते यज्ञो वाऽअस्यात्मा भवति तद्यज्ञऽएव भूत्वैतन्मृत्युमतिमुच्यतऽएतेनो हास्य सर्व्वे यज्ञक्रतवऽएतं मृत्युमति-मुक्ताः ॥ ५ ॥ शतं ॥ ५६०० ॥

---

गायत्रीमनुवाक्यामन्वाह । त्रिपदा वै गायत्री । त्रय इमे लोकाः । इमानेवैतल्लोकान् देवाः प्रत्यष्ठापयन् ॥ १ ॥

अथ त्रिष्टुभा यजति । चतुष्पदा वै त्रिष्टुप् । चतुष्पादाः पशवः । तत्पशूनेवैतदेषु लोकेषु प्रतिष्ठितेषु देवाः प्रत्यष्ठापयन् ॥ २ ॥

द्व्यक्षरो वषट्कारः । द्विपाद्वै पुरुषः । तत्पुरुषमेवैताद्विपादमेषु पशुषु प्रतिष्ठितेषु देवाः प्रत्यष्ठा-पयन् ॥ ३ ॥

सोऽयं द्विपात्पुरुषः पशुषु प्रतिष्ठितः । एवमेवैष एतल्लोकान् प्रतिष्ठापयति । लोकेषु प्रतिष्ठितेषु पशून्प्रतिष्ठापयाति । पशुषु प्रतिष्ठितेष्वात्मानं प्रतिष्ठापयति । एवमेष पुरुषः पशुषु प्रतिष्ठितः । य एवं विद्वान्यजते ॥ ४ ॥

अथ यद्वषट्कृते जुहोति । एष वै वषट्कारो य एष तपति । स एष मृत्युः । तदेनमुपरिष्टा-

---

अथ प्रसंगात्, अनुवाक्यायाज्ययोः छंदोविशेषं विधाय स्तौति—गायत्रीमनुवाक्यामिति । गायत्रीच्छंदस्कामेवं होता अनुवाक्यामनुब्रूयात् । त्रिपदा वा इत्यादि स्पष्टम् ॥ १ ॥

तत्पशूनेवैतादित्यादि । तत्तेन 'त्रिष्टुभा' यजनेन गायत्रीपादैः 'प्रतिष्ठितेषु' त्रिषु 'लोकेषु' 'देवाः' 'चतुष्पदा त्रिष्टुप्' 'चतुष्पादाः पशवः' 'तान्' पशून् 'प्रत्यष्ठापयन्' ॥ २ ॥ ३ ॥ ४ ॥

वषट्कारानंतरभाविनं होमविधिमनूद्य प्रशंसति—अथेति । 'य एषः' सूर्यः 'तपति' अंतरिक्षलोके 'एषः'

(का॰ऽअ) अ॒थ या॒मेता॒मा॒हु॒तिं जु॒हो॒ति । (त्ये) ए॒षा ह॑ वा॒ऽअ॒स्या॒हु॒तिर॒मु॒ष्मि॒ल्लो॒क॒ ऽआ॒त्मा भ॑वति॒ स॒ य॒दै॒वं वि॒दस्मा॒ल्लो॒का॒त्प्रै॒त्य॒थै॒न॒मे॒षा॒ऽऽहु॒ति॒रे॒त॒स्य पृ॒ष्ठे स॒त्या॒ह्व॒यत्ये॒ह्य॒यं वै त॒ऽइ॒हा॒त्मा॒ऽस्मी॒ति॒ त॒द्य॒दा॒ह्व॒यति॒ त॒स्मा॒दा॒हु॒ति॒र्ना॒म ॥ ६ ॥

इति प्रथमप्रपाठके दशमं ब्राह्मणम् ॥ ११-१-१० ॥ (२. २.)

ब्र॒ह्म वा॒ऽइ॒द॒म॒ग्र॒ऽआ॒सी॒त् । (त्त) त॒द्दे॒वा॒न॒सृ॒ज॒त त॒द्दे॒वा॒न्त्सृ॒ष्ट्वै॒षु॒ लो॒के॒षु॒ व्या॒रो॒ह॒य॒द॒स्मि॒न्ने॒व॒ लो॒के॒ऽग्निं॒ वा॒यु॒म॒न्त॒रि॒क्षे॒ दि॒व्ये॒व सू॒र्य॒म् ॥ १ ॥

---

न्मृत्योः संस्करोति । तदेनमतो जनयति । स एतं मृत्युमतिमुच्यते । यज्ञो वा अस्यात्मा भवति । तद्यज्ञ एव भूत्वैतन्मृत्युमतिमुच्यते । एतेनो हास्य सर्वे यज्ञक्रतव एतं मृत्युमतिमुक्ताः ॥ ५ ॥

अथ यामेतामाहुतिं जुहोति । एषा ह वा अस्याहुतिरमुष्मिन् लोक आत्मा भवति । स यदैवं विदस्माल्लोकात्प्रैति । अथैनमेषाऽऽहुतिरेतस्य पृष्ठे सत्याह्वयति । एहि, अयं वै त इहात्माऽस्मीति । तद्यदाह्वयति । तस्मादाहुतिर्नाम ॥ ६ ॥

ब्रह्म वा इदमग्र आसीत् । तद्देवानसृजत । तद्देवान् सृष्ट्वैषु लोकेषु व्यारोहयत् । अस्मिन्नेव लोकेऽग्निम्, वायुमंतरिक्षे, दिव्येव सूर्यम् ॥ १ ॥

---

एव 'वषट्कारः' । 'स एषः' वषट्कारात्मकः सूर्यः 'मृत्युः' । तमतिक्रम्य होमेन 'एनं' यजमानं 'मृत्यो-रुपरिष्टात् संस्करोति' । 'तदेनं' 'अतः' अस्माद्धोमात् 'जनयति' जातश्च यजमानः 'एतं मृत्युं' 'अतिमुच्यते' मृत्युगोचरान्मुक्तो भवति । तत्र कारणमाह—यज्ञो वा अस्येति । 'अस्य' यजमानस्य 'यज्ञः' खलु 'आत्मा' शरीरं 'भवति' । तत्तस्माद्यज्ञशरीरात्मको 'भूत्वा' वषट्कारात्मकं 'मृत्युम् अतिमुच्यते' । यतः सर्वेषु यज्ञक्रतुषु वषट्कृते होमः । एतेनैव हेतुना 'अस्य' यजमानस्य 'सर्वे यज्ञक्रतवः' यज्ञा दर्शपूर्णमासादयः, यूपवंतः क्रतवः, उभयविधाश्चैते वषट्कारात्मकाः 'एतं मृत्युम् अतिमुक्ताः' अतिक्रम्यावस्थिताः ॥ ५ ॥

अथाहुतिशरीरत्वं यजमानस्य प्रतिपादयति—अथ यामेतामिति । स्वाहाकारेण वा वषट्कारेण वा या एषा यज्ञेषु आहुतिर्हूयते । 'एषा' खलु 'अमुष्मिन्' स्वर्गे 'लोके' 'अस्य' यजमानस्य 'आत्मा' शरीरम् । 'एवं वित्' उक्तार्थवित् 'सः' यजमानः 'यदा' 'अस्मात्' भूलोकात् 'प्रैति' प्रगच्छति । 'अथ' तदा 'एतस्य' यजमानस्य 'पृष्ठे' पश्चाद्भागे सती भवंती 'एषा' आहुतिः 'आह्वयति' हे यजमान ! 'एहि' आगच्छ । 'ते' त्वदीयः 'आत्मा' अहं इहास्मिन् स्थाने 'अस्मि' भवामि । अत आगच्छेति । अत एवाथर्वणिकैराम्नायते "एह्येहीति ता आहुतयः सुवर्चसः सूर्यस्य रश्मिभिर्यजमानं भक्षयंति" इति । आहुतिनामनिर्वचनं करोति—तद्यदाह्वयतीति ॥ ६ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये एकादशकाण्डे द्वितीयाऽध्याये द्वितीयं ब्राह्मणम् ॥ (११-२-२) ॥

इत्थं सामिधेनीप्रसंगेनागतान् अनुवाक्यावषट्काराहुतिरूपान् पदार्थान् स्तुत्वा, अथ सामिधेन्यनंतर-भाविनौ आघारौ नामरूपात्मना स्तोतुं तत्सृष्टिम् आख्यायिकया प्रतिपादयति—ब्रह्म वा इदमिति । 'इदं'

(मु) अथ येऽतऽऊर्ध्वा लोकाः । (स्त) तद्याऽअतऽऊर्ध्वा देवतास्तेषु ता देवता व्यारोहयत्स यथा हैवेमऽआविर्लोकाऽइमाश्च देवताऽएवमु हैव तऽआविर्लोकास्ताश्च देवता येषु ता देवता व्यारोहयत् ॥ २ ॥

(दु) अथ ब्रह्मैव परार्द्धमगच्छत् । (त्तु) तत्परार्द्धं गत्वैक्षत कथन्न्विमाँल्लोकान्प्रत्यवेयामिति तद्द्वाभ्यामेव प्रत्यवैद्रूपेण चैव नाम्ना च स यस्य कस्य च नामास्ति तन्नाम यस्योऽअपि नाम नास्ति यद्वेद रूपेणेदँ रूपमिति तद्रूपमेतावद्वाऽइदं यावद्रूपं चैव नाम च ॥ ३ ॥

---

अथ येऽत ऊर्ध्वा लोकाः । तद्या अत ऊर्ध्वा देवताः । तेषु ता देवता व्यारोहयत् । स यथा हैवेम आविर्लोका इमाश्च देवताः । एवमु हैव त आविर्लोकास्ताश्च देवताः । येषु ता देवता व्यारोहयत् ॥ २ ॥

अथ ब्रह्मैव परार्द्धमगच्छत् । तत्परार्द्धं गत्वैक्षत । कथं न्विमान् लोकान् प्रत्यवेयामिति । तद् द्वाभ्यामेव प्रत्यवैत् । रूपेण चैव नाम्ना च । स यस्य कस्य च नामास्ति तन्नाम । यस्यो अपि नाम नास्ति । यद्वेद रूपेणेदं रूपमिति—तत् रूपम् । एतावद्वा इदं यावद्रूपं चैव नाम च ॥ ३ ॥

---

नामरूपात्मकं दृश्यं जगत् ' अग्रे ' सृष्टेः पूर्वं सत्प्रज्ञानादिफललक्षणं मायाशक्तिसहितम् अद्वितीयं यज्जगत्कारणं 'ब्रह्म' तदेव 'आसीत्' वटबीजे वटवृक्षवत् तदंतर्लीनमासीदित्यर्थः। तद्ब्रह्म भूतभौतिकात्मकं जगत् प्रथमं सृष्ट्वा तदधिष्ठातॄन् ' देवानसृजत ' ' सृष्ट्वा ' च तान् ' एषु ' पृथिव्यादिलोकेषु विभज्यारोहयत् । कस्मिन् लोके कमिति तदाह—अस्मिन्नेवेति । 'अग्निम्' 'अस्मिन् लोके' लोकाधिष्ठातृत्वेन विभज्यारोहयत् । एवमुपरितनलोकानामपि । अधिष्ठातृदेवतासंबंधसद्भावात् लोकत्रयवत् प्रकाशमानत्वं साधारणम् इत्याह—स यथा हैवेति । 'सः' इति लिंगव्यत्ययः । तद्ब्रह्मेत्यर्थः । यथैव खलु एते पृथिव्यादिलोकाः 'इमाः' अग्न्यादयः ' देवताश्च ' ' आविः ' प्रकाशमानाः अस्माकं अपरोक्षा भवंति । एवमेव खलु एते ऊर्ध्वादिलोकाः तदधिष्ठातृदेवताश्च ' आविः ' प्रकाशंते । तच्छब्दवाच्यं निर्दिशति—येष्विति ॥ १—२ ॥

' अथ ' देवतानां व्यारोहणानंतरं ' तत् ' ' ब्रह्मैव ' ' परार्द्धं ' सत् उत्कृष्टं सर्वलोकावधिभूतं सत्यं सत्यलोकाख्यं स्थानं ' अगच्छत् ' प्राप्नोत् । आत्मीयं स्थानं ' गत्वा ऐक्षत ' व्यचारयत् । केन खलु प्रकारेण ' इमान् ' पृथिव्यादीन् सर्वान् ' लोकान् ' 'प्रत्यवेयां' प्रत्येकं प्राप्नुयामिति । एवं विचार्य ' द्वाभ्यामेव प्रत्यवैत् ' व्याप्नोत् । ते द्वे एव दर्शयति—रूपेण चैव नाम्ना चेति । तयोर्नामरूपयोः स्वरूपमाह—स यस्य कस्य चेति । 'सः' इति पूर्ववत् वाक्यालंकारे । ' यस्य ' कस्यचित् वस्तुनः 'नाम अस्ति' घटः पटः इत्येवमादिवाचकः शब्दो विद्यते ' तन्नाम ' । तथा 'यस्य' वस्तुनः ' नाम नास्ति ' तदभावे ' इदं रूपमिति' स्वरूपेण ' यत् ' वस्तु 'वेद' पुरुषो जानाति । तन्नामशून्यं स्वरूपेण ज्ञायमानं वस्तु 'रूपम्'। इदं कृत्स्नं जगत् एतावदेव परिमाणतः नाम च रूपं चैव इति यावत् । तावदेव कृत्स्नं जगत्, अंतर्भूतत्वात् । न खलु आकारशून्यं नामशून्यं च वस्तु संभवतीत्यर्थः ॥ ३ ॥

ते हैते ब्रह्मणो महती ऽअभ्वे । स यो हैते ब्रह्मणो महतीऽअभ्वे व्वेद महद्धैवाभ्वं भवति ॥ ४ ॥

ते हैते ब्रह्मणो महती यक्ष्ये । स यो हैते ब्रह्मणो महती यक्ष्ये व्वेद महद्धैव यक्ष्यं भवति तयोरन्यतरज्ज्यायो रूपमेव यद्यपि नाम रूपमेव तत्स यो हैतयोर्ज्ज्यायो व्वेद ज्यायान्ह तस्माद्भवति यस्माज्ज्यायान्बुभूषति ॥ ५ ॥

मर्त्त्या ह वाऽअग्रे देवाऽआसुः । स यदैव ते ब्रह्मणाऽऽपुरथामृताऽआसुः स यं मनसऽआधारयति मनो वै रूपं मनसा हि व्वेदेदꣳ रूपमिति तेन रूपमाप्नोत्यथ यं व्वाचऽआधारयति व्वाग्वै नाम व्वाचा

---

ते हैते ब्रह्मणो महती अभ्वे । स यो हैते ब्रह्मणो महती अभ्वे वेद । महद्धैवाभ्वं भवति ॥ ४ ॥

ते हैते ब्रह्मणो महती यक्ष्ये । स यो हैते ब्रह्मणो महती यक्ष्ये वेद । महद्धैव यक्ष्यं भवति । तयोरन्यतरत् ज्यायो रूपमेव । यद्यपि नाम रूपमेव तत् । स यो हैतयोर्ज्यायो वेद । ज्यायान् ह तस्मात् भवति । यस्मात् ज्यायान् बुभूषति ॥ ५ ॥

मर्त्या ह वा अग्रे देवा आसुः । स यदैव ते ब्रह्मणाऽऽपुः । अथामृता आसुः । स यं मनस आधारयति । मनो वै रूपम् । मनसा हि वेदेदं रूपमिति । तेन रूपमाप्नोति । अथ यं वाच आधा-

---

तयोर्नामरूपयोर्गुणं विधाय तद्वेदनं प्रशंसति—ते हैते इति । जगत्कारणस्य 'ब्रह्मणः' 'ते एते' नामरूपे 'महती अभ्वे' समधिकतरस्वरूपे । अभ्वमिति रूपनाम । महद्धैवाभ्वं भवतीति । अभ्वगुणस्य वेदिता स्वयमपि तादृक् ब्रह्मसंबन्धि 'महदभ्वं' व्यापकं रूपं भवति । 'तं यथायथोपासते तदेव भवति"— ( श. प. ब्रा. १० । ५ । २ ) इति श्रुतेः ॥ ४ ॥

यक्ष्यगुणेऽप्येवं योज्यम् । 'यक्ष्ये' पूज्यस्वरूपे । " स यो हैवं महद्यक्ष्यं प्रथमजं वेद " इत्यादौ तथैव व्याख्यानात् । "यक्ष पूजायाम्" (धा. पा. चु. उ. १५९) इति धातोर्निष्पन्नोऽयं यक्ष्यशब्दः । तत्र रूपस्याधिक्यमाह—तयोरन्यतरज्ज्यायो रूपमिति । 'ज्यायः' वृद्धतरम् । ज्यायस्त्वं प्रतिपादयति—यद्यपि नामेति । 'यत्' यस्यापि वस्तुनो 'नाम' अस्ति तद्वस्तु नाम इत्युभयमपि 'रूपमेव' भवति साकारत्वात् । अतो नाम्नोऽपि रूपानुप्रवेशात् रूपमेव ज्याय इत्यर्थः । एतद्वेदितुः फलमाह—स यो हैतयोरिति । 'एतयोः' नामरूपयोः । 'यस्मात्' पुरुषः 'ज्यायान् बुभूषति' ज्येष्ठः अधिकतरः भवितुमिच्छति । गतमन्यत् ॥ ५ ॥

एतन्नामरूपोपलक्षितव्यापकब्रह्मस्वरूपप्राप्तिरेवामृतत्वकारणमित्याह—मर्त्या ह वा इति । 'अग्रे' नामरूपाभ्यां व्यापनात्पूर्वम् पृथिव्यादिलोकवर्तिनः अग्न्याद्याः 'देवाः' 'मर्त्याः' मरणधर्माणः 'आसुः' बभूवुः । 'यदैव' खलु 'ते' 'ब्रह्मणा' नामरूपाभ्याम् 'आपुः' व्याप्ताः 'अथ' अनंतरं 'ते' व्यापक-

हि नाम गृह्णाति तेनो नामाप्नोत्येतावद्वाऽइदꣳ सर्व्वं यावद्रूपं चैव नाम च तत्सर्व्वमाप्नोति सर्व्वं वाऽअक्षय्यमेतेनो हास्याक्षय्यꣳ सुकृतं भवत्यक्षय्यो लोकः ॥ ६ ॥

(स्त) तद्वाऽअदऽआग्नेय्यामिष्टाऽउद्यते । यथा तदृषिभ्यो यज्ञः प्रारोचत तं यथाऽतन्वत तद्यज्ञं तन्वानानृषीन्गन्धर्व्वा ऽउपनिषेदुस्ते ह स्म संनिदधतीदं वाऽअत्यरीरिचन्निदमूनमक्रन्निति स यदैषां यज्ञः संतस्थेऽथैनांस्तद्दर्शयाञ्चक्रुरिदं वाऽअत्यरीरिचतेदमूनमकर्तेति ॥ ७ ॥

---

रयति । वाग्वै नाम । वाचा हि नाम गृह्णाति । तेनो नामाप्नोति । एतावद्वा इदं सर्वम् । यावद्रूपं चैव नाम च । तत्सर्वमाप्नोति । सर्वं वा अक्षय्यम् । एतेनो हास्याक्षय्यं सुकृतं भवति । अक्षय्यो लोकः ॥ ६ ॥

तद्वा अद आग्नेय्यामिष्टा उद्यते । यथा तत् ऋषिभ्यो यज्ञः प्रारोचत । तं यथाऽतन्वत । तद्यज्ञं तन्वानानृषीन् गंधर्वा उपनिषेदुः । ते ह स्म सन्निदधति । इदं वा अत्यरीरिचन्, इदमूनमक्रन्निति । स यदैषां यज्ञः संतस्थे । अथैनांस्तदर्शयांचक्रुः । इदं वा अत्यरीरिचत, इदमूनमकर्तेति ॥ ७ ॥

---

ब्रह्मस्वरूपप्राप्त्या 'अमृताः' अमरणधर्माणः बभूवुः । अतोऽत्रापि दर्शपूर्णमासयोः ब्रह्मप्राप्त्युपायतया नामरूपात्मकौ आघारौ क्रियेते इति प्रकृतमनुसरति—स यं मनस इति । 'यं' प्रथममाघारं 'मनसः' मंत्रराहित्येन आत्मनो व्यापारमात्रेणाघारयति तेन उदीरितलक्षणं रूपमाप्नोति । एतत्सिद्धये मनसो रूपतादात्म्यं प्रतिपादयति—मनो वै रूपमिति । 'हि' यस्मात् 'इदं' वस्तु एवंरूपम् एवमाकारमिति मनसा 'वेद' जानाति तस्मात् वेद्यस्य रूपस्य तद्वेदनकरणस्य मनसः तादात्म्योपचार इत्यर्थः ॥

नामरूपात्मकस्य प्रपंचस्य मध्ये प्रथमाघारेण रूपप्राप्तिरुक्ता । तथैव नामाप्तिरपि द्वितीयाघारेण भवतीत्याह—अथ यं वाच आघारयतीति । 'वाचः' वाङ्निर्वर्त्येन मंत्रेण यमाघारयति । तेनैव ब्रह्मणः सम्बन्धिनामप्रपंचमाप्नोति । करणभूताया वाचो नाम्नश्च तादात्म्यमुक्तार्थसिद्धये प्रतिपादयति—वाग्वै नामेति । वागिंद्रियमेव हि नाम नामधेयरूपः शब्दः । निर्वर्त्यनिर्वर्तकयोरभेदोपचारादित्यर्थः । इत्थं नामरूपावाप्तिद्वारा यजमानस्य कृत्स्नजगत्प्राप्तिरेव भवतीत्याह—एतावद्वा इति । नामरूपात्मकमेवेदं कृत्स्नं जगत् । अतस्तदवाप्त्या सर्व्वं जगदाप्नोतीत्यर्थः । सर्वावाप्तिफलमाह—सर्वं वा अक्षय्यमिति । यत् सर्वं जगत् तदक्षय्यं क्षेतुमशक्यम् । "क्षय्यजय्यौ शक्यार्थे" (पा. सू. ६ । १ । ८१) इति निपात्यते । अतः अक्षय्यसर्वजगत्प्राप्त्या यजमानस्य 'सुकृतं' पुण्यं तत्फलभूतो लोकश्च उभयं क्षयरहितं भवतीत्यर्थः ॥ ६ ॥

अथ शंयुवाकांते समंत्रकमभिमर्शनं विधित्सुस्तस्य निमित्तं प्रतिपादयति—तद्वा अद आग्नेय्यामिष्टा उद्यत इति । 'अदः' अमुत्र आधानप्रकरणे या आग्नेयी इष्टिरुक्ता तद्विषये किंचिदुच्यते । वदेः कर्मणि यक् (पा. सू. १।३।१३) । तत्तत्र 'यथा' येन प्रकारेण 'ऋषिभ्यः' मंत्रद्रष्टृभ्यः 'यज्ञः प्रारोचत' प्ररोचमानं यज्ञं 'ते' ऋषयः यथा 'अतन्वत' अकुर्वत । एतत्सर्वं तत्र आग्नेय्यामिष्टौ प्रतिपादितम् । तत्र यज्ञं 'तन्वानान्'

स यु॒दति॑रेचयां॒चक्रुः । ( यं॑ ) यु॒था गि॒रि॑रे॒वं तु॒दा॑सा॒थ यु॒दू॒नं च॒क्रुर्यु॑था श्व॒भ्राः प्र॒द॒रा॒ऽए॒वं तु॒दा॑स ॥ ८ ॥

स यु॒त्र शं॒योरा॑ह । तु॒द॒भि॒मृ॑शति यु॒ज्ञ नम॑श्च त॒ऽउ॒प च य॒ज्ञस्य॑ शि॒वे सं॒ति॑ष्ठस्व॒ स्वि॒ष्टे मे सं॒ति॑ष्ठस्वे॒ति स यु॒दति॑रेचुयति तु॒न्नम॑स्का॒रे॑ण शम॒यत्यु॒थ यु॒दू॒नं क॒रोत्यु॒प चे॒ति ते॒न त॒द॒न्यू॑नं भवति य॒ज्ञस्य॑ शि॒वे सं॒ति॑ष्ठस्वे॒ति य॒द्वै य॒ज्ञस्या॒न्यू॑नातिरिक्तं॒ तु॒च्छि॒वं ते॒न तु॒दु॒भ॒य॒थ्ँ॑ शमयाति॒ स्वि॒ष्टे मे सं॒ति॑ष्ठस्वे॒ति य॒द्वै य॒ज्ञस्या॒न्यू॑नातिरिक्तं॒ तु॒त्स्वि॒ष्टं ते॒नो तु॒दु॒भ॒य॒थ्ँ॑ शमयत्ये॒वमु॒ हा॒स्यैतेन य॒ज्ञेना॒न्यू॑नातिरिक्ते॒नै॒वेष्टं भवति॒ य॒ ऽए॒वं वि॒द्वाने॒वम॒भि॒मृ॒शति तु॒स्मादे॒व॒मे॒वा॒भि॒मृ॒शे॒त्ते ह ते गंध॒र्वा॒ऽआ॑सुः शू॒र्पं य॒वमा॑न्कृ॒षि॒रु॒द्दा॒ल॒वा॒न्धा॒ना॒न्तु॒र्वा॑न् ॥ ९ ॥

इति प्रथमप्रपाठके एकादशं ब्राह्मणम् ॥११-१-११॥ ( २. ३. ) ॥

---

स यदतिरेचयांचक्रुः । यथा गिरिः, एवं तदास । अथ यदूनं चक्रुः । यथा श्वभ्राः प्रदराः, एवं तदास ॥ ८ ॥

स यत्र शंयोराह । तदभिमृशति । "यज्ञ नमश्च त उप च यज्ञस्य शिवे संतिष्ठस्व, स्विष्टे मे संतिष्ठस्व" इति । स यदतिरेचयाति । तन्नमस्कारेण शमयति । अथ यदूनं करोति । उप चेति । तेन तदन्यूनं भवति । यज्ञस्य शिवे संतिष्ठस्वेति । यद्वै यज्ञस्यान्यूनातिरिक्तम् । तच्छिवम् । तेन तदुभयं शमयाति । स्विष्टे मे संतिष्ठस्वेति । यद्वै यज्ञस्यान्यूनातिरिक्तम् । तत्स्विष्टम् । तेनो तदुभयं शमयाति । एवमु हास्यैतेन यज्ञेनान्यूनातिरिक्तेनैवेष्टं भवति । य एवं विद्वानेवमभिमृशति । तस्मादेवमेवाभिमृशेत् । ते ह ते गंधर्वा आसुः । शूर्पं यवमान् कृषिरुद्दालवान्धानांतर्वान् ॥ ९ ॥

---

तान् 'ऋषीन्' 'गंधर्वा उपनिषेदुः' उपनिषण्णाः समीपस्था बभूवुः । 'ते' च गंधर्वाः प्रयोगवेलायां 'सन्निदधति स्म' सन्निधानं प्रत्यवेक्षणं कृतवंतः । तत्प्रकारमाह—इदं वा अत्यरीरिचन्निति । 'इदं' खलु ऋषयः 'अत्यरीरिचन्' अतिरिक्तमकुर्वन् । रिचेः ण्यंतस्य चङि रूपम् । 'इदं' खलु अंगं 'ऊनं' विकलं 'अक्रन्' अकुर्वत । कृञो लुङि "मंत्रे घस०" (पा. सू. २।४।८०) इति च्लेर्लुक् । यदा खलु 'स यज्ञः' एषामृषीणां 'संतस्थे' समाप्तो बभूव । "समवप्रविभ्यः स्थः" (पा. सू. १।३।२२) इति आत्मनेपदम् । अथानंतरं तदतिरिक्तं न्यूनमंगं चैतान् 'ऋषीन्' 'दर्शयांचक्रुः' ज्ञापयामासुः । हे ऋषयः! यूयं इदं खलु 'अत्यरीरिचत' अतिरिक्तमकुरुध्वम् 'इदमूनमकर्त' अकार्ष्टेति ॥ ७ ॥

एवं गन्धर्वैर्दर्शिते सति ते यदंगं 'अतिरेचयांचक्रुः' तत्पर्वतवत् अधिकपरिमाणं प्रवृद्धं बभूव । यदंगं न्यूनं अकृषत तत् प्रदीर्णाः 'श्वभ्राः' गर्ता इव बभूव । श्वभ्रवदतिनिम्नं बभूवेत्यर्थः ॥ ८ ॥

ततस्ते ऋषयः एतस्य न्यूनातिरिक्तस्य दोषस्य शमनाय यदभिमर्शनं कृतवंतः, तदिदानीं कर्तव्यमिति विधत्ते—स यत्र शंयोराहेति । 'यत्र' यस्मिन् काले 'सः' होता 'शंयोराह' शंयुनाम्नो बार्हस्पत्यस्य

एष वै पूर्णमाः । ( ० ) युऽएष तुपत्युहरहुर्ह्येवैषु पूर्णोऽथैषुऽएव दुर्शो-युच्चन्द्रमा ददृशुऽइवु ह्येषुः ॥ १ ॥

( युोऽथो ) अुथोऽइतरुथाऽऽहुः । (रे) एषुऽएवु पूर्णुमा युच्चन्द्रमाऽएतुस्य ह्युनु पूरणं पौर्णमासीत्याचुक्षतेऽथैषु ऽएव दुर्शो युऽएष तुपति ददृशुऽ-इवु ह्येषुः ॥ २ ॥

---

एष वै पूर्णमाः । य एष तपति । अहरहर्ह्येवैष पूर्णः । अथैष एव दर्शः । यच्चंद्रमाः । ददृश इव ह्येषः ॥ १ ॥

अथो इतरथाऽऽहुः । एष एव पूर्णमाः। यच्चंद्रमाः । एतस्य ह्यनु पूरणं पौर्णमासीत्याचक्षते । अथैष एव दर्शो य एष तपति । ददृश इव ह्येषः ॥ २ ॥

---

संबंधिनं " तच्छंयोः " इत्यनुवाकं ब्रूयात् । तत्तदा " यज्ञस्य नमश्च ते " इति मंत्रेणाभिमर्शनं कुर्यात् । मंत्रस्यायमर्थः—हे यज्ञ । ' ते ' तुभ्यं ' नमः ' नमस्कारोऽस्तु । अतिरेकदोषरहितो भव । ' उप ' इत्युपसर्ग-श्रवणात् योग्यक्रियाऽध्याहारः । उपचितावयवः सन् न्यूनदोषरहितश्च भवेत्यर्थः । यज्ञसंबंधि यच्छिवं न्यूना-धिकदोषरहितं कल्याणरूपं तत्र ' संतिष्ठस्व ' स्वपर्यवसितो भव । तथा ' मे ' मदीये ' स्विष्टे ' शोभनयजने तादृग्विधे ' संतिष्ठस्व ' इत्येतदर्थपरतां व्याचष्टे—स यदित्यादिना । मंत्रार्थव्याजेन ब्राह्मणार्थो व्याख्यातो ज्ञातव्यः । एवमु हास्येति प्रतिपादितार्थनिगमनम् । तस्मादिति विहितं समंत्रकमभिमर्शनं निगमयति—एवमभि-मृशतीति । एवमभिमर्शनेन न्यूनातिरेकदोषपरिहारे सति ' ते गंधर्वाः ' शूर्पादिभावमापन्नाः बभूवुः । ' यवमान् ' इत्याद्यास्तेषां संज्ञाः ॥ ९ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये एकादशकाण्डे द्वितीयेऽध्याये तृतीयं ब्राह्मणम् ॥ ( ११–२–३ ) ॥

अथ इमावाघारौ दर्शपूर्णमासात्मना स्तोष्यन्, अधिदेवमध्यात्मं च दर्शपूर्णमासौ प्रतिपादयति—एष वा इत्यादिना । ' य एषः ' सूर्यस्तपति । ' एषः ' खलु ' पूर्णमाः ' संपूर्णमानः । तत्र प्रसिद्धिं प्रमाणयति—अहरहर्ह्येवैष पूर्ण इति । ' अहरहः ' प्रतिदिवसं सर्वदा ' एषः ' सूर्यः ' पूर्णः ' एव भवति । चंद्रमा इति यदेष एव ' दर्शः ' । ' हि ' यस्मात् ' एष ददृश इव ' अमावास्यायामदृश्यमानः प्रतिपदि पश्चात् दृश्यमान इव भवति । तस्मात् दृश्यत इति दर्शश्चंद्रमाः ॥ १ ॥

उक्तवैपरीत्यमाह—अथो इतरथाऽऽहुः इति । ' इतरथा ' उक्तात् प्रकारात् इतरेण प्रकारेण ' आहुः ' अन्ये कथयंति । ' चंद्रमा एव पूर्णमाः ' न सूर्यः । तत्र युक्तिमाह—एतस्य हीति । ' एतस्य ' चंद्रमस. यदा सम्यक् ' पूरणं ' भवति तदनुलक्ष्य तं कालं ' पौर्णमासीत्याचक्षते ' पूर्णमसः चंद्रमसः संबंधिनी पौर्ण-मासीति आचक्षते व्युत्पत्त्या प्रतिपादयंतीत्यर्थः । अथैष एव दर्श इत्यादि स्पष्टम् ॥ २ ॥

( षुऽइ ) इयमेवु पूर्णमाः । पूर्णेवु हीयमसावेव द्यौर्दुर्शो ददृशुऽ इवु ह्यसौ द्यौः ॥ ३ ॥

( ० ) रात्रिरेवु पूर्णमाः । पूर्णेवु हीयथ्ँ रात्रिरहरेव दुर्शो ददृशुऽइवु हीद-मुहरेषा नु देवत्रा दर्शपूर्णमासुयोर्मीमाथ्ँसा ॥ ४ ॥

( सुाऽथा ) अुथाध्यात्मुम् । ( मु ) उदानुऽ एवु पूर्णमाऽउदानेनु ह्ययं पुरुषः पूर्य्युतऽइव प्राणुऽएव दुर्शो ददृशुऽइवु ह्ययं प्राणस्तुदेतावन्नाद-श्चान्नप्रदुश्च दर्शपूर्णमासौ ॥ ५ ॥

प्राणुऽएवान्नादुः । प्राणेनु हीदमुन्नमद्युतऽउदानुऽएवान्नप्रदुऽउदानेनु हीदमुन्नं प्रदीयुते स यो हैतावन्नादुं चान्नप्रदुं च दर्शपूर्णमासौ व्वेदान्नादो हैवु भवति प्र हास्माऽअन्नाद्यं दीयते ॥ ६ ॥

---

इयमेव पूर्णमाः । पूर्णेव हीयम् । असावेव द्यौर्दर्शः । ददृश इव ह्यसौ द्यौः ॥ ३ ॥

रात्रिरेव पूर्णमाः । पूर्णेव हीयं रात्रिः । अहरेव दर्शः । ददृश इव हीदमहः । एषा नु देवत्रा दर्शपूर्णमासयोर्मीमांसा ॥ ४ ॥

अथाध्यात्मम् । उदान एव पूर्णमाः । उदानेन ह्ययं पुरुषः पूर्यत इव । प्राण एव दर्शः । ददृश इव ह्ययं प्राणः । तदेतावन्नादश्चान्नप्रदश्च दर्शपूर्णमासौ ॥ ५ ॥

प्राण एवान्नादः । प्राणेन हीदमन्नमद्यते । उदान एवान्नप्रदः । उदानेन हीदमन्नं प्रदीयते । स यो हैतावन्नादं चान्नप्रदं च दर्शपूर्णमासौ वेद । अन्नादो हैव भवति । प्र हास्मा अन्नाद्यं दीयते ॥ ६ ॥

---

एवं दर्शपूर्णमासौ चंद्रादित्यात्मकौ इत्युक्त्वा तयोर्द्यावापृथिव्यहोरात्ररूपतामाह—इयमेव पूर्णमा इत्या-दिना । पूर्णं माः मानं यस्याः सा तथोक्ता । निगदसिद्धोऽर्थः ॥ ३ ॥

अधिदैवं निगमयति—एषा नु देवत्रेति । ‘ देवत्रा ’ देवेषु विषये ‘ एषा ’ खलु ‘ दर्शपूर्णमासयोः ’ यागयोः ‘ मीमांसा ’ अध्ययनप्रकारः ॥ ४ ॥

अथाध्यात्ममित्यादि । ‘ अध्यात्मम् ’ आत्मनि शरीरमध्ये तयोर्मीमांसा अधिक्रियत इत्यर्थः । योऽयं उदानवायुः स ‘ पूर्णमाः ’ तेन हि अयं देहः ‘ पूर्यत इव ’ अंतः पूर्यमाण इव भवति । अंतःपूरणनिमित्त-त्वात् स एव पूर्णमाः । मुखनासिकाभ्यां संचरन् यः प्राणवायुः एष एव ‘ दर्शः ’ । ददृश इवेत्यादि पूर्ववत् । तदेतावन्नादश्चेत्यादि । तत्तत्र ‘ एतौ ’ प्राणोदानात्मकौ ‘ दर्शपूर्णमासौ ’ ‘ अन्नादश्च अन्नप्रदश्च ’ भवतः ॥ ५ ॥

तावेतौ इति विविच्य दर्शयति—प्राण एवान्नाद इति । अन्नमत्तीत्यन्नादः । स च प्राणव्यतिरिक्तो भोक्ता जीव इति कथं प्राणस्यान्नादत्वमित्याशंक्याह—प्राणेन हीदमिति । ‘ प्राणेन ’ खलु मुखे संचरता

मनऽएव पूर्णमाः । पूर्णमिव हीदम्मनो व्वागेव दर्शो दद्दशऽइव हीयं व्वाक्तदेतावध्यात्मं प्रत्यक्षं दर्शपूर्णमासौ स यदुपवसथे व्व्रतोपायनीयमश्नाति तेनैतावध्यात्मं प्रत्यक्षं दर्शपूर्णमासौ प्रीणाति यज्ञेन प्रातर्देवौ ॥७॥

तदाहुः । ( यं ) यन्न पूर्णमासायेति हविर्गृह्यते न दर्शायेति हविर्गृह्यते न पूर्णमासायानुब्रूहि न दर्शायानुब्रूहि न पूर्णमासं यज न दर्शं यजेत्यथ केनास्य दर्शपूर्णमासाविष्टौ भवतऽइति स यम्मनसऽआघारयति मनो वै पूर्णमास्तेन पूर्णमासं यजत्यथ यं व्वाचऽआघारयति व्वाग्वै दर्शस्तेनो दर्शं यजत्येतेनो हास्य दर्शपूर्णमासाविष्टौ भवतः ॥ ८ ॥

---

मन एव पूर्णमाः । पूर्णमिव हीदं मनः । वागेव दर्शः । ददृश इव हीयं वाक् । तदेतावध्यात्मं प्रत्यक्षं दर्शपूर्णमासौ । स यदुपवसथे व्रतोपायनीयमश्नाति । तेनैतावध्यात्मं प्रत्यक्षं दर्शपूर्णमासौ प्रीणाति । यज्ञेन प्रातर्देवौ ॥ ७ ॥

तदाहुः । यन्न पूर्णमासायेति हविर्गृह्यते । न दर्शायेति हविर्गृह्यते । न पूर्णमासायानुब्रूहि । न दर्शायानुब्रूहि । न पूर्णमासं यज । न दर्शं यजेति । अथ केनास्य दर्शपूर्णमासाविष्टौ भवत इति । स यं मनस आघारयाति । मनो वै पूर्णमाः । तेन पूर्णमासं यजाति । अथ यं वाच आघारयति । वाग्वै दर्शः । तेनो दर्शं यजति । एतेनो हास्य दर्शपूर्णमासाविष्टौ भवतः ॥ ८ ॥

---

बाह्यमन्नमद्यते निगीर्यते । अतोऽन्नादनसाधनत्वात् स एव 'अन्नादः' । उच्चलनहेतुभूतः 'उदानः' तेन हि 'इदमन्नं प्रदीयते' प्रकर्षेण भोक्तुमुपविष्टाय दीयते । अतः अन्नप्रद उदान इत्यर्थः । एतद्वेदितुः फलमाह—स यो हैताविति । 'यः' 'एतौ' दर्शपूर्णमासौ प्राणोदानात्मना अन्नादान्नप्रदौ जानाति स स्वयमन्नादो भवति । 'अस्मै' वेदित्रे आद्यम् अत्तुमर्हमन्नमनेन प्रदीयते ॥ ६ ॥

अथ एतयोर्मनोवाग्रूपतामाह—मन एव पूर्णमा इति । पूर्णमिव हीदमिति । 'इदं मनः' शरीरमध्ये नखाग्रलोमपर्यंतं पूर्णमिव हि भवति चैतन्याभिव्यक्तिहेतुत्वात् । 'वागेव दर्शः' । यतोऽधिवदनव्यापारेण दृश्यमानमेव भवति । तत्तत्र 'अध्यात्मम्' आत्मनि देहमध्ये 'एतौ' मनोवाग्रूपौ प्रत्यक्षमपरोक्षेण भासमानौ 'दर्शपूर्णमासौ' । इत्थमधिदैवमध्यात्मम् आत्मनि देहमध्ये भेदेन द्वैविध्यं दर्शयित्वा तस्य प्रयोजनमाह—स यदुपवसथ इति । उपवसथाख्ये अन्वाधानदिवसे 'सः' यजमानो 'व्रतोपायनीयं' व्रतोपायनांगभूतम् 'अश्नाति' भुंक्ते इति यत् तेनाशनेनैतौ आत्मसमवस्थितौ,मनोवाग्रूपावपरोक्षौ दर्शपूर्णमासौ 'प्रीणाति' तर्पयति । परेद्युः प्रातःकालीनेन क्रियमाणेन यज्ञेन 'देवौ' अधिदेवौ प्रागुक्तौ दर्शपूर्णमासौ तर्पयति ॥ ७ ॥

एतदाक्षिप्य समाधत्ते—तदाहुरिति । ननु—दर्शपूर्णमासशब्दावुच्चार्य हविर्ग्रहणाभावात्, 'अनुब्रूहि' 'यज' इति च संप्रैषयोरदर्शनाच्च कथं दर्शपूर्णमासौ इष्टौ भवत इत्याक्षेपः । स यं मनस इति परिहारः । 'मनः' खलु अध्यात्मं पूर्णमासत्वेनोक्तम् । तथा च—पूर्णमसा पूर्वाघारस्यानुष्ठानात् पूर्णमासम् इष्टवान् भवति ।

( स्त ) तद्धैके चरू निर्व्वपंति । पौर्णमास्याᳪं सुरस्वतेऽमावास्यायाᳪं सुरस्वत्या ऽएतुत्प्रत्युक्षं दर्शपूर्णमासौ यजामहऽइति व्वुदंतस्तुदु तुथा न कुर्य्यान्मुनो वै सुरस्वान्वाक्सुरस्वती स युदेवैतावाघाराुवाघारुयति तुदेवास्य दर्शपूर्णमासाविष्टौ भवतस्तुस्मादेतौ चरू न निर्व्वपेत् ॥९॥

(त्त) तुदाहुः । (रा) आगूर्ती वाऽएषु भवति यो दर्शपूर्णमासाभ्यां युजते पौर्णमासेनु हीष्ट्वा व्वेदामावास्येन यक्ष्यऽइत्यामावास्येनेष्ट्वा व्वेद पुनः पौर्णमासेन यक्ष्यऽइतिं सुऽआगूर्त्यैवामुं लोकमेति युदाऽमुं लोकमेति कथमुनागूर्ती भवतीति स युदेवैताऽउभयुत्राघाराुवाघारुयति तुदेवास्य दर्शपूर्णमासौ संतिष्ठेते स सुᳪंस्थितयोरेवु दर्शपूर्णमासुयोरुथाऽमुं लोकुमेति तथुाऽनागूर्ती भवति ॥ १० ॥

इति प्रथमप्रपाठके द्वादशं ब्राह्मणम् ॥ ११-१-१२ ॥ ( २. ४ ) ॥

इति प्रथमः प्रपाठकः समाप्तः ॥ ११-१ ॥

कंडिकासंख्या ॥ ११९ ॥

---

तद्धैके चरू निर्वपंति—पौर्णमास्यां सरस्वते, अमावास्यायां सरस्वत्यै । एतत्प्रत्यक्षं दर्शपूर्णमासौ यजामह इति वदंतः । तदु तथा न कुर्यात् । मनो वै सरस्वान्, वाक् सरस्वती । स यदेवैतावाघारावाघारयति । तदेवास्य दर्शपूर्णमासाविष्टौ भवतः । तस्मादेतौ चरू न निर्वपेत् ॥ ९ ॥

तदाहुः—आगूर्ती वा एष भवति । यो दर्शपूर्णमासाभ्यां यजते । पौर्णमासेन हीष्ट्वा वेद आमावास्येन यक्ष्य इति । आमावास्येनेष्ट्वा वेद पुनः पौर्णमासेन यक्ष्य इति । स आगूर्त्यैवामुं लोक-

---

तथाऽध्यात्मं वागेव दर्शत्वेनोक्ता । तथासत्युत्तराघारस्य 'वाचा' वाग्व्यापारसाध्येन मंत्रेण करणात् साक्षात् दर्शमिष्टवान् भवति । एतेनो हास्येति । एतेनाघारद्वयेन 'अस्य' यजमानस्य 'दर्शपूर्णमासौ इष्टौ भवतः' ॥८॥

अत्र केषांचिच्छाखिनां मतमुपन्यस्य निराचष्टे—तद्धैके चरू निर्वपंतीति । एतत्प्रत्यक्षमिति । "अमावास्या वै सरस्वती पूर्णमासः सरस्वान्" ( तै. सं. ३ । ५ । १ । ४ ) इति श्रुतेः ते देवते 'प्रत्यक्षं' दर्शपूर्णमासात्मके । स्पष्टमन्यत् । मनो वै सरस्वानित्यादि । मनसा वाचा क्रियमाणावाघारावेव सरस्वत्सरस्वत्यात्मकावतस्तद्देवत्यचरुद्वयं प्राप्यम् आघाराभ्यामेव सिध्यतीति न युक्तश्चरुपक्ष इति निगमयति—तस्मादिति ॥ ९ ॥

दर्शपूर्णमाससमापनहेतुतयाऽप्याघारौ स्तौति—तदाहुरिति । तत्तत्र दर्शपूर्णमासविषये आहुश्चोदयंति । दर्शपूर्णमासयाजी 'एष आगूर्ती वा' आगूर्तमागूरणं संकल्पः, तद्वानिव खलु भवति । एतदेव प्रतिपाद्यते—पौर्ण-

२५१३

मेति । यदाऽमुं लोकमेति कथमनागूर्ती भवतीति । स यदेवैता उभयत्राघारावाघारयाति । तदेवास्य दर्शपूर्णमासौ संतिष्ठेते । स संस्थितयोरेव दर्शपूर्णमासयोरथाऽमुं लोकमेति । तथाऽनागूर्ती भवति ॥ १० ॥

---

मासेनेष्ट्वेति । ' पौर्णमासेन ' हविषा ' इष्ट्वा ' ' वेद ' अनंतरमेव मन्यते—आगामिनि पर्वणि ' आमावास्येन ' हविषा यक्ष्य इति; एवं ' आमावास्येन ' हविषा ' इष्ट्वा ' आगामिनि पर्वणि पुनः ' पौर्णमासेन ' हविषा ' यक्ष्य इति ' जानाति । अतः असौ संकल्पवान् । इत्थं यावज्जीवं भूत्वा ' अमुं ' स्वर्गं ' लोकमेति ' तस्मिन् लोके न अनागूर्तिना भवितव्यं तस्य क उपाय इत्यर्थः । स यदेवेति । ' उभयत्र ' दर्शपूर्णमासयोः यजमानो यस्मात् ' एतौ ' 'आघारौ' वाङ्मानसौ आघारौ ' आघारयति' तत्तदानीमेव ' अस्य ' यजमानस्य ' दर्शपूर्णमासौ ' मनोवाग्रूपतया ' संतिष्ठेते ' समाप्तौ भवतः । ततः ' संस्थितयोरेव दर्शपूर्णमासयोः ' यजमानः स्वर्गं ' लोकं ' प्रयाति, नासंस्थितयोरिति तस्यानागूर्तित्वलक्षणो दोषो नास्तीत्यर्थः ॥ १० ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यंदिनीयशतपथब्राह्मणभाष्य एकादशकांडे द्वितीयेऽध्याये चतुर्थं ब्राह्मणम् ॥ ( ११ । २ । ४ ) ॥



# अथ द्वितीयप्रपाठके प्रथमं ब्राह्मणम् ।
# द्वितीयेऽध्याये च पञ्चमं ब्राह्मणम् ।



अपि ह वाऽएतर्हि । देवेभ्योऽश्वमेधमालभंते तदाहुः प्राकृतोऽश्वमेध ऽइतीतरऽइन्नूनꣳ स तद्वाऽएषऽएवाश्वमेधो यच्चंद्रमाः ॥ १ ॥

( स्तु ) तदाहुः । पदे पदेऽश्वस्य मेध्यस्याहुतिं जुह्वतीति स यत्सायं-प्रातरग्निहोत्रं जुहोति द्वे सायमाहुती जुहोति द्वे प्रातस्ताश्चतस्रऽआहुतय-श्चतुष्पाद्वाऽअश्वस्तदस्य पदे पदऽएवाहुतिर्हुता भवति ॥ २॥

---

अपि ह वा एतर्हि देवेभ्योऽश्वमेधमालभंते । तदाहुः—प्राकृतोऽश्वमेध इति । इतर इन्नूनं सः । तद्वा एष एवाश्वमेधो यच्चंद्रमाः ॥ १ ॥

तदाहुः—पदे पदेऽश्वस्य मेध्यस्याहुतिं जुह्वतीति । स यत्सायंप्रातरग्निहोत्रं जुहोति । द्वे साय-माहुती जुहोति, द्वे प्रातः—ताश्चतस्र आहुतयः । चतुष्पाद्वा अश्वः । तदस्य पदे पद एवाहुतिर्हुता भवति ॥ २ ॥

---

अथ दर्शपूर्णमासयागं अश्वमेधात्मना स्तोतुं प्रस्तौति—अपि ह वा एतर्हीति । 'अपि' खलु एतस्मिन् समये 'देवेभ्यः' प्रजापतिमुख्येभ्यः 'अश्वमेधं' अश्वात्मकं मेधं 'पशुम्' आलभंते । दर्शपूर्णमासयाजिन इति शेषः । तदाहुः प्राकृत इत्यादि । तत्तत्र दर्शपूर्णमासविषये 'आहुः' प्रतिपादयंति । अयमेव दर्शपूर्ण-मासयागः 'प्राकृतः' प्रकृतिभूतः 'अश्वमेधः' । प्रसिद्धोऽश्वमेधस्तु 'इतर इत्' वैकृत एव । नूनमित्यवधारणे । उक्तमर्थं प्रतिपादयितुं चंद्रमसम् अश्वमेधत्वेन निरूपयति—तद्वा एष एवेति । दर्शपूर्णमासकालविभागनिमित्त-भूतश्चंद्रमाः इति यदस्ति, अयमेव तदा अश्वमेध इत्यर्थः ॥ १ ॥

मेध्याश्वसादृश्यं चंद्रमसः प्रश्नपूर्वकं संपादयति—तदाहुरिति । 'मेध्यस्य' मेधार्हस्याश्वस्य 'पदे पदे' 'आहुतिं जुह्वति' इति यत् तत्र साक्षादश्वमेधे पदाधिकरणं हवनं विहितम् तदत्र किं ? इति प्रश्नाभिप्रायः । स यत्सायंप्रातरित्यादिना तस्य प्रतिवचनम् । सायंप्रातःकालीनयोरग्निहोत्रयोः ये 'द्वे द्वे आहुती' प्रतिदिवसं हूयेते 'ताश्चतस्र आहुतयः' अश्वपदाधिकरणाहुतिचतुष्टयस्थानीयाः । अत एवान्यत्राम्नायते—"इह धृतिः स्वाहेह विधृतिः स्वाहेह रंतिः स्वाहेह रमतिः स्वाहेति चतसृषु पत्सु जुहोति एता वा अश्वस्य बंधनं ताभिरेवैनं बध्नाति" (तै. ब्रा. ३ । ८ । ९ । ) । 'चतुष्पाद्वा अश्वः' इत्यादि । तत्पादानां चतुःसंख्यया तद्बंधनार्थानामाहुतीनामपि चतुष्ट्वम् । अतस्तस्य एकस्मिन्पदे पदे एव एषा अग्निहोत्रसंबंधिनी आहुतिः क्रमेण हुता भवतीत्यर्थः ॥ २ ॥

तुदाहुः । ( व्विु ) व्विवृत्तेऽश्वस्येष्टिन्निर्व्वपंतीत्येष वै सोमो राजा देवानामन्नं यच्चन्द्रमाः स यत्रैषऽएताꣳ रात्रिन्न पुरस्तान्न पश्चाद्ददृशे तुदिमं लोकमागच्छति सोऽस्मिंल्लोके व्विवर्तते ॥ ३ ॥

स यदामावास्येन यजते । व्विवृत्तऽएवास्यैतदिष्टिन्निर्व्वपत्यथ यत्पौर्णमासेन यजतेऽश्वमेधमेवैतदालभते तुमालभ्य देवेभ्यः प्रयच्छति संवत्सरे वाऽइतरमश्वमेधमालभन्तऽएष वै मासः परिप्लवमानः संवत्सरं करोति तुदस्य संवत्सरे संवत्सरऽएवाश्वमेधऽआलब्धो भवति ॥ ४ ॥

---

तदाहुर्विवृत्तेऽश्वस्येष्टिं निर्वपंतीति । एष वै सोमो राजा देवानामन्नम्—यच्चंद्रमाः । स यत्रैष एतां रात्रिं न पुरस्तान्न पश्चाद्ददृशे । तदिमं लोकमागच्छति । सोऽस्मिँल्लोके विवर्तते ॥ ३ ॥

स यदामावास्येन यजते । विवृत्त एवास्यैतदिष्टिं निर्वपति । अथ यत्पौर्णमासेन यजते, अश्वमेधमेवैतदालभते—तमालभ्य देवेभ्यः प्रयच्छति । संवत्सरे वा इतरमश्वमेधमालभंते । एष वै मासः परिप्लवमानः संवत्सरं करोति । तदस्य संवत्सरे संवत्सर एवाश्वमेध आलब्धो भवति ॥ ४ ॥

---

एवमन्यदपि अंगं संपादयति—तदाहुरिति । अश्वस्य 'विवृत्ते' विवर्तने सति काचित् नैमित्तिकीष्टिः प्रसिद्धा अश्वमेधे क्रियते, सा अत्र चंद्रात्मकस्याश्वस्य विवर्तने कीदृशी ? इति प्रश्नाभिप्रायः । तां विवर्तननिमित्तामिष्टिं दर्शयिष्यन् अस्य चंद्रात्मकस्य अश्वस्य विवर्तनं संपादयति—एष वै सोमो राजा देवानामित्यादिना । यस्मिन् दिवसे देवान्नरूपश्चंद्रमाः 'रात्रिं' अत्यंतसंयोगे द्वितीया ( पा. सू. २ । ३ । ५ )। कृत्स्नायां रात्रौ 'पुरस्तात्' पूर्वस्यां दिशि 'पश्चात्' प्रतीच्यां दिशि च 'न' दृश्यते । तत्तदानीं 'सः' चंद्रः 'इमं' लोकमेवागच्छति । 'सोऽस्मिन्नेव लोके विवर्तते' स्थानात् स्थानांतरं प्राप्नोति । इत्थं विवर्तनलक्षणं इष्टिनिमित्तं चंद्ररूपस्याश्वस्य प्रतिपादितम् ॥ ३ ॥

निमित्तोपजीविनीमिष्टिमाह—स यदामावास्येनेति । एवं चंद्रमोविवर्तनानंतरं 'आमावास्येन' नित्येन दर्शयागेन 'यजते' इति यदस्ति, एषैव विवर्तननिमित्ता इष्टिर्भवतीत्यर्थः । अथ पूर्णमासयागस्य अश्वमेधयागरूपतामाह—अथ यत्पौर्णमासेनेति । यदा खलु असौ चंद्रः कात्स्न्र्येन पूर्यते तदा तद्रूपोऽश्वः कृत्स्नावयवः संपद्यते । तथा च तस्मिन् समये पौर्णमासाख्येन नित्येन यागेन 'यजते' इति यदस्ति, 'एतत्' एतेन अश्वमेधे चन्द्रात्मकं अश्वरूपं पशुमेव 'देवेभ्यः' 'आलभते' संज्ञप्तवान् भवति । आङ्पूर्वो लभिर्हिंसायामपि वर्तते । 'तं' चंद्रात्मकमश्वम् उपवसथे दिवस आलभ्य हवीरूपेण 'देवेभ्यः' प्रातः 'प्रयच्छति' । अत एव चन्द्रं प्रकृत्याम्नायते "घ्नन्ति वा एनं पूर्णमासे" ( तै. सं. २।५।२ ) इति । संवत्सरकालीनतामपि अस्याश्वमेधस्य प्रतिपादयति संवत्सरे वा इति । दीक्षानंतरं अश्वमुत्सृज्य संवत्सरपरिमिते काले समाप्ते समाप्ते सति इतरं प्रसिद्धमश्वमेधमालभन्ते । चंद्रात्मकस्याश्वमेधस्य संवत्सरकालीनता कथं ? इत्यभिप्रायः । एष वै मास इत्यादि । अयं दर्शपूर्णमासेनावच्छिन्नो यो मासः 'एषः' एव 'परिप्लवमानः'

तं वाऽएतम् । (म्मा) मासि मास्येवाश्वमेधमालभन्ते स यो हैवं विद्वानग्निहोत्रं च जुहोति दर्शपूर्णमासाभ्यां च यजते मासि मासि हैवास्याश्वमेधेनेष्टं भवत्येतद्ध हास्याग्निहोत्रं च दर्शपूर्णमासौ चाश्वमेधमभिसंपद्येते ॥ ५ ॥

इति द्वितीयप्रपाठके प्रथमं ब्राह्मणम् ॥ ११-२-१ ॥ ( २. ५. ) ॥

शिरो ह वाऽएतद्यज्ञस्य यत्प्रणीताः । स यत्प्रणीताः प्रणयति शिरऽएवैतद्यज्ञस्य सꣳस्करोति स विद्याच्छिरऽएव मऽएतत्सꣳस्क्रियत ऽइति ॥ १ ॥

---

तं वा एतं मासि मास्येवाश्वमेधमालभंते । स यो हैवं विद्वानग्निहोत्रं च जुहोति दर्शपूर्णमासाभ्यां च यजते । मासि मासि हैवास्याश्वमेधेनेष्टं भवति । एतद्ध हास्याग्निहोत्रं च दर्शपूर्णमासौ चाश्वमेधमभिसंपद्येते ॥ ५ ॥

शिरो ह वा एतद्यज्ञस्य-यत्प्रणीताः । स यत्प्रणीताः प्रणयति । शिर एवैतद्यज्ञस्य संस्करोति । स विद्याच्छिर एव म एतत्संस्क्रियत इति ॥ १ ॥

---

द्वादशकृत्वः पर्यावृत्तः सन् ' संवत्सरं करोति ' स्वयमेव संवत्सरात्मको भवतीत्यर्थः । यस्मात् एवं मासोऽपि संवत्सरो जातः । तत्तस्मात् ' अस्य ' मासि मासि पौर्णमासयागं कुर्वतो यजमानस्य संवत्सरकालावच्छिन्न एव ' अश्वमेध आलब्धो भवति ' ॥ ४ ॥

इत्थमश्वमेधरूपतां अग्निहोत्रदर्शपूर्णमासयोर्यागयोः प्रतिपाद्य तत्र विदुष एवाधिकार इत्याह—तं वा एतमित्यादिना । 'मासि मासि' प्रतिमासपौर्णमासमित्यर्थः । "पद्दन्नोमास्"—( पा. सू. ६।१।६३ ) इत्यादिना मासशब्दस्य मास्भावः । एवं विद्वानिति । उक्तप्रकारेण अश्वमेधसंपत्तिं विद्वानित्यर्थः । मासि मासि हैवास्येति । चंद्रस्याश्वरूपत्वं पूर्णमासयागस्याश्वमेधयागरूपत्वं च विदित्वा तदनुतिष्ठतो यजमानस्येत्यर्थः । उक्ताम् अग्निहोत्रदर्शपूर्णमासयागयोरश्वमेधसंपदं निगमयति—एतद्ध हास्येति । ' एतत् ' एतेन प्रकारेण । स्पष्टमन्यत् ॥ ५ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यंदिनीयशतपथब्राह्मणभाष्ये एकादशकांडे द्वितीयेऽध्याये पंचमं ब्राह्मणम् ॥ ( ११ । २ । ५ ) ॥

अथोपासनार्थं यज्ञशरीरावयवत्वेन प्रणीतादीनामनुष्ठेयपदार्थानामधियज्ञमध्यात्मं च संपत्तिं कथयति—शिरो ह वा एतद्यज्ञस्येत्यादिना । प्रणीताख्या या आपः आहवनीयस्योत्तरतो निधीयंते ' एतद्यज्ञस्य शिरः ' इति तेन ज्ञातव्यं तत्र । ' सः ' अध्वर्युः ' प्रणीताः प्रणयति ' इति यदस्ति । ' एतत् ' एतेन ' यज्ञस्य शिर एव संस्करोति ' विशिष्टाकृतिमत् करोति । " संपर्युपेभ्यः " ( पा. सू. ६ । १ । १३७ ) इति कृञः सुट् । अध्यात्ममनुसंधानं विधत्ते—स विद्याच्छिर एव म इति । यजमानः ' विद्यात् ' जानीयात् । कथमिति तदुच्यते—' एतत् ' प्रणीतात्मकं संस्क्रियमाणं यज्ञसंबंधि ' शिर एव ' मदीयं शिर इति ॥ १ ॥

प्राणऽएवास्येध्मः । प्राणेन हीदᳫं सर्वमिद्धं यत्प्राणभृन्निमिषद्यदेजति स विद्यादहमेवैषऽइध्मऽइति ॥ २ ॥

( स्य ) अनूकमेवास्य सामिधेन्यः । ( स्तु ) तस्मात्ता ब्रूयात्संतन्वन्निव मेऽनुब्रूहीति संततमिव हीदमनूकं मनश्चैवास्य वाक्चाघारौ सरस्वाँश्च सरस्वती च स विद्यान्मनश्चैव मे वाक्चाघारौ सरस्वाँश्च सरस्वती चेति ३॥

---

प्राण एवास्येध्मः । प्राणेन हीदं सर्वमिद्धम् । यत्प्राणभृन्निमिषद्यदेजति । स विद्यादहमेवैष इध्म इति ॥ २ ॥

अनूकमेवास्य सामिधेन्यः । तस्मात्ता ब्रूयात् " संतन्वन्निव मेऽनुब्रूहि " इति । संततमिव हीदमनूकम् । मनश्चैवास्य वाक्चाघारौ सरस्वांश्च सरस्वती च । स विद्यान्मनश्चैव मे वाक्चाघारौ सरस्वांश्च सरस्वती चेति ॥ ३ ॥

---

इध्मस्य प्राणरूपत्वेनोपासनमाह—प्राण एवास्येध्म इति । अस्य यज्ञस्य संबंधी यः 'इध्मः' पंचदशदार्वात्मकः एषः ' प्राण एव ' देहमध्ये संचरन् प्राणवायुरेव, इध्मे प्राणबुद्धिः कार्येत्यर्थः । उभयोः साम्यमाह—प्राणेन हीति । इध्मेन यथा अग्निः समिध्यते एवं ' प्राणेन ' ' हि ' यस्मात् ' इदं ' सर्वं शरीरजातं ' इद्धं ' प्रदीप्तं भोगयोग्यं भवति । इदमिति सामान्योक्तमेव विशिनष्टि—यत्प्राणभृदिति । प्राणान् बिभर्तीति ' प्राणभृत् ' । ' निमिषत् ' निमीलनव्यापारं करोतीति निमिषत् । पशुपक्षिमनुष्यादिजंगमशरीरस्योपलक्षणमेतत् । स्थावरशरीरस्य परिग्रहार्थं—यदेजतीति । यच्च निमेषणादिव्यापारशून्यं तत्तरुगुल्मलताद्यात्मकं शरीरं ' एजति ' एकत्रैव स्थितं सत् केवलं कंपते । एतत्सर्वमन्तः संचरता प्राणेनेद्धम् । तद्विरहितमुभयं शुष्कं भवत् दृश्यते । " एजृ कंपने " ( धा. पा. भ्वा. प. २३९ ) इति धातुः । इत्थमधियज्ञमुक्त्वाऽध्यात्ममाह—स विद्यादिति । इध्मस्य प्राणरूपतां ' सः ' यजमानो विद्याज्जानीयात् । अहमेवैष इध्मात्मकेन प्राणेनेद्धः सन् दीप्त इति ॥ २ ॥

अथ सामिधेनीषु सकलमध्यस्थावयवमाह—अनूकमेवेति । ' अस्य ' यज्ञस्य सामिधेन्याख्या या ऋचः ताः ' अनूकमेव ' शिरःपक्षपुच्छाद्यवयवसंधिरनूकं तदात्मका ज्ञातव्या इत्यर्थः । यस्मादेवमनूकरूपाः तस्मात् तद्रूपाणां तद्विषये यजमान इत्थं ब्रूयात् हे होतः ! त्वं ' ताः ' सामिधेनीः ' संतन्वन्निव ' परस्परं संयोजयन्निव 'मे' मह्यं अनुब्रूहीति । तत्र कारणमाह—संततमिव हीति । 'हि' यस्मात् 'इदं' शरीरं मध्यावयवसंधिरूपमनूकं ' संततमिव ' परस्परं संसक्तमिव दृश्यते । तस्मात् तद्रूपाणां सामिधेनीनामपि सांतत्यं युक्तम् । तल्लक्षणं भगवताऽऽश्वलायनेनोक्तम्—"स्वरादिमृगंतमोंकारं त्रिमात्रं मकारांतं कृत्वोत्तरस्या अर्द्धर्चेऽवस्येत्तत्संततम् " इति ( आश्व. श्रौ. सू. ) । मनश्चैवेत्यादि । ' अस्य ' यज्ञशरीरस्य इमौ ' आघारौ ' मनोवाग्रूपौ ज्ञातव्यौ । तौ क्रमेण ' सरस्वांश्च सरस्वती च ' एतद्द्वयात्मकौ भवतः । अध्यात्मं तयोरुपासनमाह—स विद्यादिति । मम मनश्च वाक् च सरस्वत्सरस्वतीरूपावाघाराविति जानीयादित्यर्थः ॥ ३ ॥

पञ्च प्रयाजाः । ( ऽ ) इमुऽएवास्य ते शीर्षुण्याः पञ्च प्राणा मुखमेवास्य प्रथमुः प्रयाजो दक्षिणा नासिका द्वितीयः सव्या नासिका तृतीयो दक्षिणः कर्णश्चतुर्थः सव्यः कर्णः पञ्चमोऽथ यच्चतुर्थे प्रयाजे समानयति तस्मादिदᳪं श्रोत्रमन्तरतः सन्तृण्णं चक्षुषीऽआज्यभागौ स विद्याच्चक्षुषीऽएव मऽएताविति ॥ ४ ॥

( त्यु ) अथ युऽआग्नेयः पुरोडाशः । (शोऽयु) अयमेवास्य दक्षिणोऽर्द्धो हृदयमेवास्योपाᳪंशुयाजः स यत्तेनोपाᳪंशु चरति तस्मादिदं गुहेव हृदयम् ॥ ५ ॥

( मु ) अथ योऽग्नीषोमीयः पुरोडाशः । (शोऽयु) अयमेवास्य सऽउत्तरोऽर्द्धऽऐन्द्रं वा सान्नाय्यमन्तराᳪंसमेवास्य स्विष्टकृद्द्विषन्प्राशित्रम् ॥ ६ ॥

---

पंच प्रयाजाः । इम एवास्य ते शीर्षण्याः पंच प्राणाः । मुखमेवास्य प्रथमः प्रयाजः । दक्षिणा नासिका द्वितीयः । सव्या नासिका तृतीयः । दक्षिणः कर्णश्चतुर्थः । सव्यः कर्णः पंचमः । अथ यच्चतुर्थे प्रयाजे समानयति । तस्मादिदं श्रोत्रमंतरतः संतृण्णम् । चक्षुषी आज्यभागौ । स विद्याच्चक्षुषी एव म एताविति ॥ ४ ॥

अथ य आग्नेयः पुरोडाशः, अयमेवास्य दक्षिणोऽर्द्धः । हृदयमेवास्योपांशुयाजः । स यत्तेनोपांशु चरति । तस्मादिदं गुहेव हृदयम् ॥ ५ ॥

अथ योऽग्नीषोमीयः पुरोडाशः, अयमेवास्य स उत्तरोऽर्द्धः । ऐन्द्रं वा सान्नाय्यम् । अंतरांसमेवास्य स्विष्टकृत् । द्विषन् प्राशित्रम् ॥ ६ ॥

---

प्रयाजेषु कल्प्यानवयवानाह–पंच प्रयाजा इति । शिरसि भवाः 'शीर्षण्याः' "ये च तद्धिते"–( पा. सू. ६ । १ । ६१ ) इति शीर्षन्नादेशः । तत्र कीदृशः प्रयाजः प्राण इति विविनक्ति–मुखमेवास्येति । 'अस्य' शरीरस्य 'प्रथमः' प्रयाजः' एव 'मुखम्' आस्यम् । दक्षिणा नासिकेत्यादि निगदसिद्धम् । चतुर्थ-पंचमप्रयाजयोः कर्णत्वे लिंगमुपन्यस्यति–अथ यच्चतुर्थे प्रयाज इति । यस्माच्चतुर्थे प्रयाजे औपभृतस्याज्यस्यार्द्धं जुह्वामानयति 'तस्मादिदं' 'श्रोत्रम्' 'अंतरतः' मध्ये 'संतृण्णं सच्छिद्रं' दृश्यते । एवं पंचसु प्रयाजेषु शीर्षण्यपंचप्राणोपासनमुक्त्वा आज्यभागयोः चक्षुष्ट्वेनोपासनं विधत्ते–चक्षुषी आज्यभागाविति । एतावेवाज्यभागौ मम 'चक्षुषी' इति विद्यादित्यर्थः ॥ ४ ॥

अथ य आग्नेय इत्यादि । अग्निदेवताको यः प्रथमः 'पुरोडाशः' 'अयमेवास्य' यज्ञशरीरस्य 'दक्षिणः अर्द्धः' दक्षिणः पार्श्वः । उपांशुयाजाख्यस्तु यागोऽस्य 'हृदयमेव' । तत्समर्थयते–स यत्तेनेति । तेनोपांशु चरतीति 'यत्' तस्मात् कारणात् तदात्मकमिदं हृदयम् 'गुहेव' गुहासदृशम् अलक्ष्यं भवति ॥ ५ ॥

अग्नीषोमीयदेवताको यः तृतीयो यागः 'स अस्य उत्तरोऽर्द्धः' उत्तरभागः, इत्थं पौर्णमासयागे ।

(५ऍ) स य॒त्प्राशित्र॒मवद्य॒ति । य॒थैव त॒त्प्रजा॒पतेरा॒विद्धं निर॒कृन्तन्नेव॒मेवै॒-त॒स्यैतय्य॒द्वेष्टितं य॒द्ग्रथितं य॒द्वरु॒ण्यं तन्निष्कृ॒न्तति स॒ विद्वा॒ंय॒थैव त॒त्प्रजा॒-पतेरा॒विद्धं निर॒कृन्तन्नेव॒मेव॒ म ऽइदं य॒द्वेष्टितं य॒द्ग्रथितं य॒द्वरु॒ण्यं तन्नि॒-ष्कृ॒न्तती॒ति ॥ ७ ॥

( त्यु ) उद॒रमे॒वास्येडा । तद्य॒थैवाद॒ऽइ॒डायाॅं समव॒द्यन्त्येव॒मेवेदं विश्व॒रूपम॒न्नमु॒दरे॒ सम॒वधीयते ॥ ८ ॥

त्र॒योऽनुया॒जाः । ( जाऽइ ) इम॒ ऽएवास्य॒ तेऽवा॒ञ्चस्त्र॒यः प्रा॒णा बा॒हू-ऽएवास्य॒ सूक्तवा॒कश्च॒ शंयो॒र्व्वा॒कश्च॒ चत्वा॒रः पत्नीसंया॒जाश्च॒तस्रो॒ वै प्रतिष्ठा-ऽऊरू॒ द्वाव॒ष्ठीव॒न्तौ द्वौ पा॒दावे॒वास्य॒ समिष्टयजुः ॥ ९ ॥

---

स यत्प्राशित्रमवद्यति । यथैव तत्प्रजापतेराविद्धं निरकृंतन् । एवमेवैतस्यैतत्—यद्वेष्टितं यद्ग्रथितं यद्वरुण्यम् तन्निष्कृन्तति । स विद्वान्यथैव तत्प्रजापतेराविद्धं निरकृंतन् । एवमेव म इदम् यद्वेष्टितं यद्ग्रथितं यद्वरुण्यं तन्निष्कृंततीति ॥ ७ ॥

उदरमेवास्येडा । तद्यथैवाद् इडायां समवद्यंति । एवमेवेदं विश्वरूपमन्नमुदरे समवधीयते ॥ ८ ॥

त्रयोऽनुयाजाः । इम एवास्य तेऽवांचस्त्रयः प्राणाः । बाहू एवास्य सूक्तवाकश्च शंयोर्वाकश्च । चत्वारः पत्नीसंयाजाश्चतस्रो वै प्रतिष्ठा ऊरू द्वावष्ठीवन्तौ द्वौ । पादावेवास्य समिष्टयजुः ॥ ९ ॥

---

दर्शयागे तु इंद्रदेवताकं 'सान्नाय्यं' दधिपयोलक्षणं हविरेव देहस्योत्तरभागः । वाशब्दोऽत्र व्यवस्थितविकल्पार्थः । अन्तरांसमेवेति । अंसमध्यमेवास्य स्विष्टकृद्भागः । द्विषन् प्राशित्रमिति । 'द्विषन्' शत्रुरेव 'प्राशित्रम्' प्राशित्रे शत्रुबुद्धिः कार्या इत्यर्थः ॥ ६ ॥

अतस्तदवदानं शत्रुनिरसनार्थमिति प्रतिपादयति—स यत्प्राशित्रमिति । प्राशित्राख्यं भागम् 'अवद्यति' खण्डयतीति यदस्ति, अस्य वाक्यस्य एवमेवैतस्यैतदित्युपरितनवाक्येन संबन्धः । यथैव तदित्यादि । 'यथैव' खलु पुरा प्रजापतिशरीरे 'आविद्धम्' शल्यं प्राशित्रावदानेन 'निरकृन्तन्' निरगमयन् । "कृती छेदने"—( धा. पा. तु. प. १९४ ) इति धातुः । 'एवमेवैतस्य' यज्ञशरीरस्य यजमानस्य वा यत्पापं 'वेष्टितं' वेष्टनशीलं यच्च 'ग्रथितं' ग्रंथिमद्वस्तुभूतम् यच्च 'वरुण्यं' वरुणसंबंधि हिंसनम् तत्सर्वं प्राशित्रावदानेन 'निष्कृंतति' निःसारयति । एतस्योपासनमाह—स विद्वान्यथैव तदिति । व्याख्यातप्रायमेतत् ॥ ७ ॥

उदरमेवास्येडेत्यादि । तत्र 'यथैव' खलु 'इडायां' च पुरोडाशादीनि सान्नाय्यादीनि सर्वाणि हवींषि सहावद्यंति । 'एवमेवेदं विश्वरूपं' नानारूपमन्नम् 'उदरे समवधीयते' सह धार्यते । अत उदरात्मकत्वमिडाया युक्तमित्यर्थः ॥ ८ ॥

अनुयाजेष्ववयवक्लृप्तिमाह—त्रयोऽनुयाजा इति । 'ते' प्रसिद्धाः अवाङ्मुखास्त्रयः 'प्राणाः' नाभिपायुगुह्यरूपाः । बाहू एवास्येत्यादि । "इदं द्यावापृथिवी भद्रमभूत्" इत्यादिसूक्तवाकः । "तच्छंयो-

( स्ता ) ताऽएकविꣳशतिराहुतयः । ( यो ) द्वावाघारौ पञ्च प्रयाजा द्वावाज्यभागावाग्नेयः पुरोडाशस्तद्दशाग्नीषोमीयऽउपाꣳशुयाजोऽग्नीषोमीयः पुरोडाशोऽग्निः स्विष्टकृदिडा त्रयोऽनुयाजाः सूक्तवाकश्च शंय्योर्वाकश्चाथ यदेवादः पत्नीसंयाजेषु सम्प्रगृह्णाति समिष्टयजुश्च ॥ १० ॥

ताऽएकविꣳशतिराहुतयः । ( यो ) द्वादश वै मासाः संवत्सरस्य पञ्चर्तवस्त्रयो लोकास्तद्विꣳशतिरेषऽएवैकविꣳशो यऽएष तपति सैषा गतिरेषा प्रतिष्ठा तदेतां गतिमेतां प्रतिष्ठां गच्छति ॥ ११ ॥

---

ता एकविंशतिराहुतयः । द्वावाघारौ । पंच प्रयाजाः । द्वावाज्यभागौ । आग्नेयः पुरोडाशः, तद्दश । अग्नीषोमीय उपांशुयाजः । अग्नीषोमीयः पुरोडाशः । अग्निः स्विष्टकृत् । इडा । त्रयोऽनुयाजाः । सूक्तवाकश्च । शंयोर्वाकश्च । अथ यदेवादः पत्नीसंयाजेषु संप्रगृह्णाति । समिष्टयजुश्च ॥ १० ॥

ता एकविंशतिराहुतयः । द्वादश वै मासाः संवत्सरस्य । पंचर्तवः । त्रयो लोकाः । तद्विंशतिः । एष एवैकविंशः, य एष तपति । सैषा गतिः, एषा प्रतिष्ठा । तदेतां गतिमेतां प्रतिष्ठां गच्छति ॥ ११ ॥

---

रावृणीमहे" इति शंयुवाकः । इमावस्य 'बाहू' । सोमत्वष्टृदेवपत्न्यग्निगृहपतिदेवताकाश्चत्वारः 'पत्नीसंयाजाः' अस्य 'चतस्रः' 'प्रतिष्ठाः' प्रकर्षेण स्थितिहेतुभूताः । तत्र द्वौ 'ऊरू' द्वौ 'अष्ठीवंतौ' ऊर्वधोभागौ अष्ठीवच्छब्दवाच्यौ । यश्चरमवर्ती समिष्टयजुराख्यो होमः सोऽस्य 'पादावेव' भूतले निक्षेप्तव्यौ चरणौ । कृत्स्नाधारत्वं समिष्टयजुषः पादयोश्च साम्यम् ॥ ९ ॥

एवं शिरःप्रभृतिपादांता अवयवाः अधियज्ञमध्यात्मं च आहुतिभिरेव परिकल्पिताः संतः संभूय एकविंशतिसंख्याकाः, तत्संख्याद्वारेण सूर्यलोकप्राप्तिरूपं फलं वक्ष्यन् ता आहुतीः परिगणयति—द्वावाघाराविस्यादिना । अग्नीषोमीय उपांशुयाज इति । "विष्णुरुपांशु यष्टव्यः" इतिवत् "अग्नीषोमावुपांशु यष्टव्यौ" इति श्रवणात् उपांशुयाजोऽप्यग्नीषोमीयदेवताको भवति । अथ यदेवाद इति । 'अदः' अमुत्र पौरोडाशिककांडपत्नीसंयाजेषु कर्तव्येषु सत्सु शंयुवाकानंतरं यत् स्रुचोः संप्रग्रहणं विहितम्, सा संस्रवाहुतिः परिगणनीयेत्यर्थः ॥ १० ॥

द्वादश वै मासा इत्यादि सुगमम् । एष एवैकविंश इति । 'एषः' दृश्यमानः सूर्यः 'एव' एकविंशतिसंख्यापूरकः । एतच्छब्दार्थमाह—य एष तपतीति । 'तपति' श्लोकेन दीप्यत इत्यर्थः । 'सैषा' सूर्यरूपैव 'गतिः' गंतव्यभूमिः । एषैव 'प्रतिष्ठा' कृत्स्नफलस्याश्रयः । तदेवं सति उक्तोपासनं विद्वान् 'एतां' सूर्यरूपां 'गतिं' प्रतिष्ठां च आभिरेकविंशतिभिराहुतिभिः प्राप्नोति ॥ ११ ॥

तद्ध स्मैतदारुणिराह । (ह्रा) अर्द्धमासशो वाऽअहममुनाऽऽदित्येन सलोको भवामि तामहं दर्शपूर्णमासयोः सम्पदं वेदेति ॥ १२ ॥

तदाहुः । (रा) आत्मयाजी श्रेया३न्देवयाजी३ऽइत्यात्मयाजीति ह ब्रूयात्स ह वाऽआत्मयाजी यो वेदेदं मेऽनेनाङ्गꣳ सꣳस्क्रियतऽइदं मेऽनेनाङ्गमुपधीयतऽइति स यथाऽहिस्त्वचो निर्म्मुच्येतैवमस्मान्मर्त्याच्छरीरात्पाप्मनो निर्मुच्यते स ऽऋङ्मयो यजुर्म्मयः साममयऽआहुतिमयः स्वर्गं लोकमभिसंभवति ॥ १३ ॥

---

तद्ध स्मैतदारुणिराह—अर्द्धमासशो वा अहममुनाऽऽदित्येन सलोको भवामि । तामहं दर्शपूर्णमासयोः संपदं वेदेति ॥ १२ ॥

तदाहुः—आत्मयाजी श्रेया३न् देवयाजी३ इति । आत्मयाजीति ह ब्रूयात् । स ह वा आत्मयाजी—यो वेदेदं मेऽनेनाङ्गं संस्क्रियते, इदं मेऽनेनाङ्गमुपधीयत इति । स यथाऽहिस्त्वचो निर्मुच्येत, एवमस्मान्मर्त्याच्छरीरात्पाप्मनो निर्मुच्यते । स ऋङ्मयो यजुर्मयः साममय आहुतिमयः स्वर्गं लोकमभिसंभवति ॥ १३ ॥

---

उक्तोपासनफलयोः साध्यसाधनभावं संपादयति—तद्ध स्मैतदिति । 'आरुणिः' नाम महर्षिः 'आह स्म' 'अर्द्धमासशः' अर्द्धमासे अर्द्धमासे खलु 'अहममुना आदित्येन' 'सलोकः' समानलोको भवामि । तत्कारणभूतां 'दर्शपूर्णमासयोः' तामुक्तरूपां 'संपदं' संपत्तिं यतः अहं 'वेद' जानामि । ततः सलोको भवामीति संबंधः ॥ १२ ॥

उक्तोपासनेन सह दर्शपूर्णमासावनुतिष्ठतो यजमानस्य इतरस्मात् बहुतरफलभाक्त्वं विचारपूर्वकं दर्शयति—तदाहुरिति । तत्तत्र विषये 'आहुः' मीमांसन्ते ब्रह्मवादिनः । किमात्मयाजी श्रेयान् उत देवयाजी इति ? । "विचार्यमाणानाम्" ( पा. सू. ८ । २ । ९७ ) इत्युभयत्र प्लुतिः । तत्र प्रशस्तं पक्षं दर्शयति—आत्मयाजीतीति । हशब्दोऽवधारणे । कः पुनरसावात्मयाजीति तं लक्षयति—स ह वा आत्मयाजीति । 'सः' एव खलु 'आत्मयाजी' यो यजमानः 'इदं' शिरःप्रभृतिकं मदीयमङ्गमनेन यज्ञांगेन 'संस्क्रियते' 'इदं' मदीयमङ्गमनेनोपधीयत उपस्थाप्यत इति 'वेद' जानाति स आत्मयाजी । तस्य सर्वपापक्षयरूपं फलं सदृष्टांतमाह—स यथाऽहिरिति । 'यथा' सर्पस्त्वचो विनिर्मुच्येत एवमात्मयाजी 'अस्मात् मर्त्यात्' मरणधर्मकात् शरीररूपात् 'पाप्मनः' 'निर्मुच्यते' निःशेषेण मुक्तो भवति । न पुनस्तादृक्शरीरसंबंधं प्रतिपद्यत इत्यर्थः । तर्हि कीदृग्रूपः असौ भवतीति तदाह—स ऋङ्मय इति । सूर्यमंडलस्य त्रयीरूपत्वात् तादृङ्मयरूप एव सन् तत्र स्थिताहुतिमयः सन् फलभूतं 'स्वर्गं' दुःखासंस्पृष्टसुखरूपं लोकं अभिलक्ष्य 'संभवति' सन्निधत्ते ॥ १३ ॥

( त्यु ) अथ ह स देवयाजी यो वेद । देवानेवाहमिदं यजे देवान्त्सपर्य्यामीति स यथा श्रेयसे पापीयान्बलिᳪं हरेद्वैश्यो वा राज्ञे बलिᳪं हरेदेवᳪं स स ह न तावन्तं लोकं जयति यावन्तमितरः ॥ १४ ॥

इति द्वितीयप्रपाठके द्वितीयं ब्राह्मणम् ॥ ११-२-२ ॥ ( २. ६. ) ॥

संवत्सरो यज्ञः । स यो ह वै संवत्सरो यज्ञ ऽइति वेदान्ते हैवास्य संवत्सरस्येष्टं भवत्यथो यत्किञ्च संवत्सरे क्रियते सर्व्वᳪं हैवास्य तदाप्तमवरुद्धमभिजितं भवति ॥ १ ॥

( त्यृ ) ऋतव ऽऋत्विजः । स यो ह वा ऽऋतव ऽऋत्विज ऽइति वेदान्ते हैवास्यर्तूनामिष्टं भवत्यथो यत्किञ्चर्तुषु क्रियते सर्व्वᳪं हैवास्य तदाप्तमवरुद्धमभिजितं भवति ॥ २ ॥

---

अथ ह स देवयाजी । यो वेद, देवानेवाहमिदं यजे, देवान्त्सपर्यामीति । स यथा श्रेयसे पापीयान् बलिं हरेत् । वैश्यो वा राज्ञे बलिं हरेत् । एवं सः । स ह न तावन्तं लोकं जयति । यावन्तमितरः ॥ १४

संवत्सरो यज्ञः । स यो ह वै संवत्सरो यज्ञ इति वेद । अंते हैवास्य संवत्सरस्येष्टं भवति । अथो यत्किंच संवत्सरे क्रियते । सर्वं हैवास्य तदाप्तमवरुद्धमभिजितं भवति ॥ १ ॥

ऋतव ऋत्विजः । स यो ह वा ऋतव ऋत्विज इति वेद । अंते हैवास्यर्तूनामिष्टं भवति । अथो यत्किंचर्तुषु क्रियते । सर्वं हैवास्य तदाप्तमवरुद्धमभिजितं भवति ॥ २ ॥

---

ईदृग्रूपफलव्यतिरेकं देवयाजिनो दर्शयति—अथ ह स देवयाजीति । निगदसिद्धोऽर्थः । 'सपर्यामि' पूजयामि । "सपर पूजायाम्" ( कण्ड्वादिगणे.२१ ) इति धातुः । स यथा श्रेयस इत्यादि । 'यथा' खलु 'श्रेयसे' श्रेष्ठाय 'पापीयान्' हीनः पुरुषः बलिमुपहारं 'हरेत्' यथा वा 'वैश्यो राज्ञे' 'बलिं' करं 'हरेत्' एवमेव 'सः' देवयाजी हविषा तोषितैर्देवैः सेवानुसारेण दत्तं फलं लभते । 'यावंतं' लोकं 'इतरः' आत्मयाजी जयति । 'तावंतं लोकं' 'सः' देवयाजी न लभते । उपासनाज्ञानहीनत्वादित्यर्थः ॥ १४ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये एकादशकाण्डे द्वितीयेऽध्याये षष्ठं ब्राह्मणम् ॥ ( ११-२-६ ) ॥

अथ यज्ञादीनां संवत्सराद्यात्मना उपासनं विधाय तत्तद्वैशिष्ट्येन दर्शपूर्णमासयागस्य विशिष्टफलसाधनतां प्रतिपादयति—संवत्सरो यज्ञ इत्यादिना । योऽयं प्रकृतो दर्शपूर्णमासात्मकः 'यज्ञः' संवत्सरात्मकः । यज्ञे संवत्सरात्मकत्वमुपासनार्थमारोप्यमित्यर्थः । तदुपासनं विधत्ते—स यो ह वा इति । 'यः' खलु एनं यज्ञं संवत्सरं 'वेद' उपास्ते । 'अस्य' यजमानस्य संवत्सरसमीप एव 'इष्टं भवति' यागः कृतो भवति । 'अथो' अपि च संवत्सरसामीप्यलाभात् तस्मिन् संवत्सरमध्ये यत्किमपि कर्मजातम् 'क्रियते' अस्य यजमानस्य तत्सर्वमाप्तं सत् 'अवरुद्धं' लब्धम् 'अभिजितं' स्वाधीनं 'भवति' । एवमुत्तरत्र सर्वत्र योज्यम् ॥ १ ॥

ऋत्विक्षु वसंतादिऋतुरूपत्वोपासनं विधत्ते—ऋतव ऋत्विज इति । यज्ञस्य संवत्सरात्मकत्वात् तन्निष्पादकानामृत्विजामृतुत्वाध्यारोपः ॥ २ ॥

मासा हवीᳬंषि । स यो ह वै मासा हवीᳬंषीति व्वेदान्ते हैवास्य मासानामिष्टं भवत्यथो यत्किञ्च मासेषु क्रियते सर्व्वᳬं हैवास्य तदाप्तमवरुद्धमभिजितं भवति ॥ ३ ॥

(त्य) अर्द्धमासा हविष्पात्राणि । स यो ह वाऽअर्द्धमासा हविष्पात्राणीति व्वेदान्ते हैवास्यार्द्धमासानामिष्टं भवत्यथो यत्किञ्चार्द्धमासेषु क्रियते सर्व्वᳬं हैवास्य तदाप्तमवरुद्धमभिजितं भवति ॥ ४ ॥

(त्य) अहोरात्रे परिवेष्ट्री । स यो ह वाऽअहोरात्रे परिवेष्ट्रीऽइति व्वेदान्ते हैवास्याहोरात्रयोरिष्टं भवत्यथो यत्किञ्चाहोरात्रयोः क्रियते सर्व्वᳬं हैवास्य तदाप्तमवरुद्धमभिजितं भवति ॥ ५ ॥

( ती ) इयमेव प्रथमा सामिधेनी । ( न्य ) अग्निर्द्वितीया व्वायुस्तृतीयाऽन्तरिक्षं चतुर्थी द्यौष्पंचम्यादित्यः षष्ठी चन्द्रमाः सप्तमी मनोऽष्टमी व्वाङ्नवमी तपो दशमी ब्रह्मैकादश्येता हि वाऽइदᳬं सर्व्वᳬं समिंधतऽएताभिरिदᳬं सर्व्वᳬं समिद्धं तस्मात्सामिधेन्यो नाम ॥ ६ ॥

---

मासा हवींषि । स यो ह वै मासा हवींषीति वेद । अंते हैवास्य मासानामिष्टं भवति । अथो यत्किंच मासेषु क्रियते । सर्वं हैवास्य तदाप्तमवरुद्धमभिजितं भवति ॥ ३ ॥

अर्द्धमासा हविष्पात्राणि । स यो ह वा अर्द्धमासा हविष्पात्राणीति वेद । अंते हैवास्यार्द्धमासानामिष्टं भवति । अथो यत्किंचार्द्धमासेषु क्रियते । सर्वं हैवास्य तदाप्तमवरुद्धमभिजितं भवति ॥ ४ ॥

अहोरात्रे परिवेष्ट्री । स यो ह वा अहोरात्रे परिवेष्ट्री इति वेद । अंते हैवास्याहोरात्रयोरिष्टं भवति । अथो यत्किंचाहोरात्रयोः क्रियते । सर्वं हैवास्य तदाप्तमवरुद्धमभिजितं भवति ॥ ५ ॥

इयमेव प्रथमा सामिधेनी । अग्निर्द्वितीया । वायुस्तृतीया । अंतरिक्षं चतुर्थी । द्यौष्पंचमी ।

---

हविःषु मासबुद्धिं विधत्ते—मासा हवींषीति । आज्यसान्नाय्यादीनि 'हवींषि' मासात्मना ध्यातव्यानि । मासानां ऋत्ववयवत्वात् हविषामृत्विक्संपाद्यतया तादात्म्याध्यारोपः । एवमुत्तरत्रापि तादात्म्यमूहनीयम् ॥ ३ ॥

हविषां संबंधीनि यानि उलूखलमुसलादीनि पात्राणि तेषामर्द्धमासात्मनोपासनं विधत्ते—अर्द्धमासा हविष्पात्राणीति ॥ ४ ॥

ये परिवेषणसाधने धृष्टी तयोरहोरात्रबुद्धिं विधत्ते—अहोरात्रे परिवेष्ट्री इति ॥ ५ ॥

अथ सामिधेनीनां पृथिव्यादिदेवतारूपेणोपासनं विधत्ते—इयमेव प्रथमा सामिधेनीति । 'इयं' पृथिव्येव 'प्रथमा' "प्र वो वाजाः" इत्येषा 'सामिधेनी' समिदाधानार्था ऋक्, 'अग्निः' तदधिष्ठातृदेवता

स वै त्रिः प्रथमामुन्वाह । स युत्प्रथमुमन्वाह प्राचीं तेन दिशं जयति युद्द्वितीयं दक्षिणां तेन दिशं जयति युत्तृतीयमूर्ध्वामेव तेन दिशं जयति॥७॥

त्रिर्व्वैवोत्तमामुन्वाह । स युत्प्रथमुमन्वाह प्रतीचीं तेन दिशं जयति युद्द्वितीयमुदीचीं तेन दिशं जयति युत्तृतीयमिमामेव तेन प्रतिष्ठां जयत्ये-वमु हाभिरिमाँल्लोकाञ्जयत्येताः दिशः ॥ ८ ॥

(०) ऋतुमेव पूर्वऽआघारः । सत्यमुत्तरोऽव ह वाऽऋतसत्ये रुन्धेऽथो यत्किञ्चर्तसत्याभ्यां जय्यथ्ँ सर्वथ्ँ हैव तज्जयति ॥ ९ ॥

---

आदित्यः षष्ठी । चंद्रमाः सप्तमी । मनोऽष्टमी । वाङ्नवमी । तपो दशमी । ब्रह्मैकादशी । एता हि वा इदं समिंधते । एताभिरिदं सर्वं समिद्धम् । तस्मात्सामिधेन्यो नाम ॥ ६ ॥

स वै त्रिः प्रथमामन्वाह । स यत्प्रथममन्वाह । प्राचीं तेन दिशं जयति । यद्द्वितीयं–दक्षिणां तेन दिशं जयति । यत्तृतीयम्–ऊर्ध्वामेव तेन दिशं जयति ॥ ७ ॥

त्रिर्वैवोत्तमामन्वाह । स यत्प्रथममन्वाह । प्रतीचीं तेन दिशं जयति । यद्द्वितीयम्–उदीचीं तेन दिशं जयति । यत्तृतीयम्–इमामेव तेन प्रतिष्ठां जयति । एवमु हाभिरिमाँल्लोकाञ्जयत्येता दिशः॥८॥

ऋतमेव पूर्व आघारः । सत्यमुत्तरः । अव ह वा ऋतसत्ये रुंधे । अथो यत्किंचर्तसत्याभ्यां जय्यम् । सर्वं हैव तज्जयति ॥ ९ ॥

---

'द्वितीया' सामिधेनी, वायुरन्तरिक्षाधिदेवता सा 'तृतीया' एवमुत्तरत्रापि संबंधो द्रष्टव्यः । उक्तपृथिव्यादीनां यन्मूलकारणं 'ब्रह्म' सा 'एकादशी' सामिधेनी । एतासां देवतानां सामिधेन्यात्मकत्वं समर्थयते–एता हि वा इति । 'एताः' खलु देवताः 'इदं सर्वं' स्थावरजंगमात्मकं जगत् 'समिंधते' संदीपयंति । तथा च एताभिरेवेदं 'सर्वं समिद्धं' संदीप्तं सत् इदानीं दृश्यते । तस्मात्समिंधनहेतुत्वात् एताः सामिधेनीनाम्ना प्रतिपादयितुमर्हा इत्यर्थः । इत्थं यो यजमानः पृथिव्याद्यात्मना सामिधेनीरुपास्ते स पृथिव्यादीन् लोकान् जयतीत्यभिप्रायः ॥ ६ ॥

तत्र प्रथमोत्तमयोस्त्रिरावृत्तिर्विहिता तया जेतव्यं दर्शयति–स वै त्रिः प्रथमामिति । इमामेव तेनेति । 'तेन' तृतीयेन 'इमां' पृथिवीमेव 'प्रतिष्ठां' प्रतिष्ठाहेतुभूतां तदुपलक्षितां अधोदिशं जयतीत्यर्थः । इत्थं सामिधेन्युपासनस्य प्रतिष्ठाफलं निगमयति–एवमु हाभिरिति । 'आभिः' सामिधेनीभिः 'इमान्' पृथिव्यादीन् अग्न्याद्यधिष्ठातृसहितान् । गतमन्यत् ॥ ७ ॥ ८ ॥

अथाघारयोः ऋतसत्यात्मना उपासनं विधत्ते–ऋतमेवेति । मनसा यथार्थसंकल्पनम् 'ऋतं', यथार्थभाषणं 'सत्यं', एतावाघारौ यथाक्रमं ऋतसत्यात्मना ध्यातव्यावित्यर्थः । तत्फलमाह–अव ह वा इति ॥९॥

त्विषिरेव प्रथमः प्रयाजः । ( जो॰प ) अपचितिर्द्वितीयो यशस्तृतीयो ब्रह्मवर्चसं चतुर्थोऽन्नाद्यं पञ्चमः ॥ १० ॥

स प्रथमं प्रयाजमनुमंत्रयते । त्विषिमान्भूयासमित्यपचितिमान्भूयासमिति द्वितीयं यशस्वी भूयासमिति तृतीयम्ब्रह्मवर्चसी भूयासमिति चतुर्थमन्नादो भूयासमिति पंचमं त्विषिमान्ह वाऽअपचितिमान्यशस्वी ब्रह्मवर्चस्यन्नादो भवति य ऽएवमेतद्वेद ॥ ११ ॥

( दे ) एतद्ध स्म वै तद्विद्वानाह । श्वेतकेतुरारुणेयः कुᳪं स्विदेवापरीषु महानागमिवाभिसᳪंसारं दिद्दक्षितारो यऽएवमेतत्प्रयाजानां यशो वेदितेति ॥ १२ ॥

---

त्विषिरेव प्रथमः प्रयाजः । अपचितिर्द्वितीयः । यशस्तृतीयः । ब्रह्मवर्चसं चतुर्थः । अन्नाद्यं पंचमः ॥ १० ॥

स प्रथमं प्रयाजमनुमंत्रयते " त्विषिमान् भूयासम् " इति । " अपचितिमान् भूयासम् " इति द्वितीयम् । " यशस्वी भूयासम् " इति तृतीयम् । "ब्रह्मवर्चसी भूयासम्" इति चतुर्थम् । " अन्नादो भूयासम् " इति पंचमम् । त्विषिमान् ह वा अपचितिमान् यशस्वी ब्रह्मवर्चस्यन्नादो भवति, य एवमेतद्वेद ॥ ११ ॥

एतद्ध स्म वै तद्विद्वानाह श्वेतकेतुरारुणेयः । कं स्विदेवापरीषु महानागमिवाभिसंसारं दिद्दक्षितारः । य एवमेतत्प्रयाजानां यशो वेदितेति ॥ १२ ॥

---

अथ प्रयाजेषु त्विष्याद्युपासनं विधत्ते—त्विषिरेवेति । ' त्विषिः ' शरीरकांतिः, ' अपचितिः ' पूजा, ' यशः ' कीर्तिः, ' ब्रह्मवर्चसं ' श्रुताध्ययनजनितसंपत्तिः ब्राह्मं तेजः, ब्रह्मणो वर्च इति विगृह्य " ब्रह्महस्तिभ्यां वर्चसः " ( पा. सू. ५ । ४ । ७८ ) इति अकारः समासांतः । ' अन्नाद्यं ' अन्नादनसामर्थ्यम् ॥ १० ॥

एतच्चोपासनमनुमंत्रणमंत्रैः कार्यमित्याह—स प्रथमं प्रयाजमिति । एवं अनुमंत्रणमंत्रैः कृतस्य त्विष्याद्युपासनस्य फलमाह—त्विषिमान्ह वा अपचितिमानिति । यशस्वीति । " अस्मायामेधा " ( पा. सू. ५ । २ । १२१ ) इति विनिः । ब्रह्मवर्चसशब्दात् " अत इनिठनौ " ( पा. सू. ५ । २ । ११५ ) इति इनिः ॥ ११ ॥

उक्तमर्थं महर्षिवाक्येन द्रढयति—एतद्ध स्म वै तदिति । ' एतद्ध ' एतदेव उक्तप्रकारेण प्रयाजानां त्विष्याद्यात्मकत्वं ' विद्वान् ' जानन् ' श्वेतकेतुरारुणेयः ' अरुणेः पुत्रः श्वेतकेतुः एतत्संज्ञको महर्षिः पुरा खलु ' आह स्म ' उक्तवान् । कथमिति ? ' यः ' पुरुषः एवमुक्तप्रकारेण ' प्रयाजानां ' एतद्यशः त्विष्यादिरूपं माहात्म्यं ' वेदिता ' ज्ञास्यति । " विद ज्ञाने " ( धा. पा. अ. प. ५४ ) इत्यस्मात् लुटि रूपम् । 'कं स्विदेव' कंचिदेव बहूनां मध्ये ज्ञानप्रभावेण असाधारणं संतं महानागमत्यद्भुतं महासर्पमिव ' अभि-

भूतमेव पूर्व्वऽआज्यभागः । ( गो ) भविष्यदुत्तरोऽव ह वै भूतं च भविष्यच्च रुन्धेऽथो यत्किञ्च भूतेन च भविष्यता च जय्यꣳ सर्व्वꣳ हैव तज्जयति ॥ १३ ॥

ब्रह्माऽऽग्नेयः पुरोडाशः । स यो ह वै ब्रह्माऽऽग्नेयः पुरोडाशऽइति वेदाव ह ब्रह्म रुन्धेऽथो यत्किञ्च ब्रह्मणा जय्यꣳ सर्व्वꣳ हैव तज्जयति ॥ १४ ॥

क्षत्रमुपाꣳशुयाजः । स यो ह वै क्षत्रमुपाꣳशुयाजऽइति वेदाव ह क्षत्रꣳ रुन्धेऽथो यत्किञ्च क्षत्रेण जय्यꣳ सर्व्वꣳ हैव तज्जयति तद्यदुपाꣳशुयाजं कुर्व्वन्त्येके नैके तस्मादुच्चैश्चोपाꣳशु च क्षत्रायाचक्षते ॥ १५ ॥

---

भूतमेव पूर्वं आज्यभागः; भविष्यदुत्तरः । अव ह वै भूतं च भविष्यच्च रुंधे । अथो यत्किंच भूतेन च भविष्यता च जय्यम् । सर्वं हैव तज्जयति ॥ १३ ॥

ब्रह्माऽऽग्नेयः पुरोडाशः । स यो ह वै ब्रह्माऽऽग्नेयः पुरोडाश इति वेद । अव ह ब्रह्म रुंधे । अथो यत्किंच ब्रह्मणा जय्यम् । सर्वं हैव तज्जयति ॥ १४ ॥

क्षत्रमुपांशुयाजः । स यो ह वै क्षत्रमुपांशुयाज इति वेद । अव ह क्षत्रं रुंधे । अथो यत्किंच क्षत्रेण जय्यम् । सर्वं हैव तज्जयति । तद्यदुपांशुयाजं कुर्वंत्येके, नैके । तस्मादुच्चैश्चोपांशु च क्षत्रायाचक्षते ॥ १५ ॥

---

'संसारं' अभिगम्याभिगम्य 'दिदृक्षितारः' दिदृक्षंते । पूर्ववल्लुट् । इत्थं प्रयाजानां त्विष्यादिरूपं विद्वान् यशः अतिशयेन दर्शनीयो भवतीति विदुषः श्वेतकेतोरभिप्रायः ॥ १२ ॥

भूतभविष्यदात्मना आज्यभागयोर्ध्यानं विधत्ते—भूतमेव पूर्वं आज्यभाग इति । भूतकालावच्छिन्नं वस्तु 'भूतं' आगामिकालावच्छिन्नं वस्तु 'भविष्यत्' । भूतभविष्यद्रूपतायाश्चाज्यभागयोर्विधानात् 'भूतं' 'भविष्यच्च' अतीतमनागतं च सकलं वस्तुजातं 'अवरुंधे' अथ ताभ्यां जेतव्यं यत्किमपि फलमस्ति तत्सर्वं जयति ॥ १३ ॥

ब्रह्माग्नेय इत्यादि । 'ब्रह्म' ब्राह्मणजातिरेव 'आग्नेयः पुरोडाशः' । एतद्वेदनस्य फलमाह—स यो ह वा इति । अव ह ब्रह्म रुंध इति । ब्राह्मणजातिरवरुद्धा वेदितुः स्वाधीना भवतीत्यर्थः । ततः किमित्याह—अथो यत्किंचेति ॥ १४ ॥

क्षत्रमुपांशुयाज इति । उपांशुयाजाख्यो यागः क्षत्रियजात्यात्मना ध्यातव्यः । तद्वेदनस्य फलमाह—स यो ह वा इति । पूर्ववद्योज्यम् । क्षत्रात्मकत्वमुपांशुयागस्य समर्थयते—तद्यदिति । तत्तत्र यद्यस्मात् 'एके' शाखिनः उपांशुयाजं कुर्वंति । एके न कुर्वंति, अत एवोक्तमाश्वलायनेन—"अग्नीषोमीयेण पौर्णमास्यां वैष्णवममावास्यायामेके नैके" ( आश्व. श्रौ. सू. ) इति । तस्मादुपांशुयाजस्य पाक्षिकत्वात् 'क्षत्राय' क्षत्रियजातये विज्ञापयंतो जनाः 'उच्चैश्चोपांशु च' 'आचक्षते' वाक्यं प्रयुंजते । यद्वा उपांशुयाजाख्यं यागं केचिदुपांशुधर्मेण कुर्वंति, अन्ये तु नोपांशुधर्मेण, तमपि उच्चैरेव कुर्वंति ॥ १५ ॥

विड्डुत्तरः पुरोडाशः । स य्यो ह वै विड्डुत्तरः पुरोडाशऽइति व्वेदाव ह व्विशꣳ रुन्धेऽथो यत्किञ्च व्विशा जय्यꣳ सर्व्वꣳ हैव तज्जयति तद्यदाग्नेयश्च पुरोडाशऽउपाꣳशुयाजश्च पूर्व्वौ भवतस्तस्मादुभे ब्रह्म च क्षत्त्रं च व्विशि प्रतिष्ठिते ॥ १६ ॥

राष्ट्रꣳ सान्नाय्यम् । ( १ꣳ ) स य्यो ह वै राष्ट्रꣳ सान्नाय्यमिति व्वेदाव ह राष्ट्रꣳ रुन्धेऽथो यत्किञ्च राष्ट्रेण जय्यꣳ सर्व्वꣳ हैव तज्जयति तद्यत्सन्नयन्त्येके नैके तस्माद्राष्ट्रꣳ सञ्चैति व्वि च ॥ १७ ॥

तपः स्विष्टकृत् । ( त्स ) स य्यो ह वै तपः स्विष्टकृदिति व्वेदाव ह तपो रुन्धेऽथो यत्किञ्च तपसा जय्यꣳ सर्व्वꣳ हैव तज्जयति ॥ १८ ॥

---

विड्डुत्तरः पुरोडाशः । स यो ह वै विड्डुत्तरः पुरोडाश इति वेद । अव ह विशं रुंधे । अथो यत्किंच विशा॥जय्यम् । सर्वं हैव तज्जयति । तद्यदाग्नेयश्च पुरोडाश उपांशुयाजश्च पूर्वौ भवतः । तस्मादुभे ब्रह्म च क्षत्रं च विशि प्रतिष्ठिते ॥ १६ ॥

राष्ट्रं सान्नाय्यम् । स यो ह वै राष्ट्रं सान्नाय्यमिति वेद । अव ह राष्ट्रं रुंधे । अथो यत्किंच राष्ट्रेण जय्यम् । सर्वं हैव तज्जयति । तद्यत्सन्नयंत्येके, नैके । तस्माद्राष्ट्रं सं चैति वि च ॥ १७ ॥

तपः स्विष्टकृत् । स यो ह वै तपः स्विष्टकृदिति वेद । अव ह तपो रुंधे । अथो यत्किंच तपसा जय्यम् । सर्वं हैव तज्जयति ॥ १८ ॥

---

तदेतत् आग्नेयादीनां पौर्वापर्यक्रमं स्तौति–तद्यदाग्नेयश्चेति । यस्मादग्नीषोमीयात् वैश्यजात्यात्मकात् आग्नेयोपांशुयाजौ ब्रह्मक्षत्रात्मकौ पूर्वौ भवतः । तस्मात् 'विशि' वैश्यजातौ 'ब्रह्म क्षत्रं' च 'प्रतिष्ठिते' करोतीत्यर्थः ॥ १६ ॥

अथ दधिपयोलक्षणस्य सान्नाय्यस्य राष्ट्ररूपताध्यानं विधत्ते–राष्ट्रं सान्नाय्यमिति । 'राष्ट्रं सान्नाय्यं' तदात्मना सान्नाय्यं ध्येयमित्यर्थः । स यो ह वा इत्यादि पूर्ववत् । राष्ट्रात्मकत्वं सान्नाय्यस्य समर्थयते–तद्यत्सन्नयंत्येके नैक इति । तत्तत्र यस्मात् 'एके' केचन यजमानाः कृतसोमयागाः 'सन्नयंति' अकृतसोमयागास्त्वेके न सन्नयंति । 'तस्मात्' कारणात् 'राष्ट्रं' 'समेति' च 'व्येति' च परस्परं संगच्छते विश्लिष्यति चेत्यर्थः ॥ १७ ॥

स्विष्टकृतस्तपोरूपतामाह–तपः स्विष्टकृदिति । कृच्छ्रचान्द्रायणादिजन्यमदृष्टं 'तपः' तदात्मना स्विष्टकृद्यागो ध्यातव्यः । तत्फलमाह–स यो ह वा इति ॥ १८ ॥

लोकः प्राशित्रम् । (ष्टँ) स यो ह वै लोकः प्राशित्रमिति व्वेदाव ह लोकꣳ रुन्धेऽथो यत्किञ्च लोकेन जय्यꣳ सर्व्वꣳ हैव तज्जयति नो ह लवेन लोकाद्व्यथते लवेन ह वाऽअमुष्मिँल्लोके लोकाद्व्यथंतेऽथ यऽएवं व्वेद न ह बहु चन पापं कृत्वा लोकाद्व्यथते ॥ १९ ॥

श्रद्धेडा । स यो ह वै श्रद्धेडेति व्वेदाव ह श्रद्धाꣳ रुन्धेऽथो यत्किञ्च श्रद्धया जय्यꣳ सर्व्वꣳ हैव तज्जयति ॥ २० ॥

(त्य)अशनिरेव प्रथमोऽनुयाजः । (ज्रो) ह्रादुनिर्द्वितीयऽउल्कुषी तृतीयः २१

स प्रथममनुयाजमनुमन्त्रयेत । ( त्रा ) अशन्यमुञ्जहीति यं द्विष्याद्ध्रा-दुन्यमुञ्जहीति द्वितीयमुल्कुष्यमुञ्जहीति तृतीयम् ॥ २२ ॥

---

लोकः प्राशित्रम् । स यो ह वै लोकः प्राशित्रमिति वेद । अव ह लोकं रुंधे । अथो यत्किंच लोकेन जय्यम् । सर्वं हैव तज्जयति । नो ह लवेन लोकाद्व्यथते । लवेन ह वा अमुष्मिँल्लोके लोकाद्व्यथन्ते । अथ य एवं वेद । न ह बहु चन पापं कृत्वा लोकाद्व्यथते ॥ १९ ॥

श्रद्धेडा । स यो ह वै श्रद्धेडेति वेद । अव ह श्रद्धां रुंधे । अथो यत्किंच श्रद्धया जय्यम् । सर्वं हैव तज्जयति ॥ २० ॥

अशनिरेव प्रथमोऽनुयाजः । ह्रादुनिर्द्वितीयः । उल्कुषी तृतीयः ॥ २१ ॥

स प्रथममनुयाजमनुमंत्रयेत—अशन्यमुं जहीति । यं द्विष्याद् । ह्रादुन्यमुं जहीति द्वितीयम् । उल्कुष्यमुं जहीति तृतीयम् ॥ २२ ॥

---

लोकः प्राशित्रमित्यादि । यत्प्राशित्राख्यमवदानं क्रियते तल्लोकबुद्ध्योपास्यम् । स यो ह वा इत्यादि । पूर्ववत् । नो ह लवेनेति । लवो लेशः अल्पीयस्त्वमिति यावत् । एवं लोकवित् 'लोकात्' लोक्यमानात् कर्मफलात् लवेनाल्पीयस्त्वेन हेतुना नैव 'व्यथते' न कंपते न बिभेति वा । "व्यथ भयकंपनयोः" ( धा. पा. भ्वा.आ. ७६३ ) इति धातुः । निमित्तसद्भावस्तत्र विद्यते इत्याह—लवेन ह वा इति । 'लवेन' लेशेन खलु हेतुना 'अमुष्मिन्' स्वर्गे 'लोके' 'लोकात्' लोक्यमानात् 'व्यथंते' बिभ्यति । यस्त्वेवंवित् तस्य नोक्तो दोष इत्याह—अथ य एवमिति । अथशब्दस्त्वर्थे । यस्त्वेवं प्राशित्रस्य लोकात्मतां 'वेद' राष्ट्रकृत-मपि 'पापं' दुष्कृतं जयति । निमित्तं कृत्वा लोकान्न व्यथते । चनशब्दः अप्यर्थे ॥ १९ ॥

इडायाः श्रद्धारूपेणोपासनं विधत्ते—श्रद्धेडेति । नित्यनैमित्तिकानुष्ठानगोचरः अभिरतिविशेषः 'श्रद्धा' । स्पष्टमन्यत् ॥ २० ॥

अशनिरेव प्रथमोऽनुयाज इति । 'अशनिः' दंभोलिः । 'ह्रादुनिः' विद्युत् । 'उल्कुषी' उल्का । क्रमेण एतत्त्रयात्मकास्त्रयोऽनुयाजा ज्ञातव्याः ॥ २१ ॥

उक्तरूपोपजीवनेनाभिचरतः प्रयोगे अनुयाजानामनुमंत्रणमंत्रान् विधत्ते—स प्रथममिति । यजमानो 'यं'

(ऌ) स युऽएष क्षिप्रं म्रियते । ( तेऽशु ) अशुनिर्हं तमनुयाजो हन्त्युथ यो विस्रवन्मिश्रऽइव हाडुनिर्हं तमनुयाजो हन्त्युथ योऽभ्युष्टमिश्रऽइवोल्कुषी ह तमनुयाजो हन्ति ॥ २३ ॥

सैषा यज्ञमेनिः । (रे) एतया वै मेन्या देवाऽअसुरान् पराभावयांचक्रुस्तथो ऽएवैवंविद्यजमानः पाप्मानं द्विषन्तं भ्रातृव्यम्पराभावयाति ॥ २४ ॥

स यदनुयाजान्तो यज्ञः स्यात् । ( द ) अशन्यन्तः स्याद्धाडुन्यन्तऽ उल्कुष्यंतस्तस्माद्दे देवानां यज्ञऽइडान्तो वैव शंय्वंतो वा ॥ २५ ॥

---

स य एष क्षिप्रं म्रियते । अशनिर्ह तमनुयाजो हंति । अथ यो विस्रवन्मिश्र इव । हाडुनिर्ह तमनुयाजो हंति । अथ योऽभ्युष्टमिश्र इव उल्कुषी ह तमनुयाजो हंति ॥ २३ ॥

सैषा यज्ञमेनिः । एतया वै मेन्या देवा असुरान्पराभावयांचक्रुः । तथो एवैवंविद्यजमानः पाप्मानं द्विषंतं भ्रातृव्यं पराभावयति ॥ २४ ॥

स यदनुयाजांतो यज्ञः स्यात् । अशन्यंतः स्यात्, हाडुन्यंत उल्कुष्यंतः । तस्माद्दे देवानां यज्ञ इडांतो वैव । शंय्वंतो वा ॥ २५ ॥

---

शत्रुं ' द्विष्यात् ' तन्नाम मंत्रेषु अमुमित्यस्य स्थाने द्वितीयांतेन निर्देष्टव्यम् । अयमर्थः—हे अशन्यात्मक प्रथमानुयाज ! ' अमुं ' देवदत्तं शत्रुं ' जहि ' बाधस्व । लोण्मध्यमैकवचने " हंतेर्जः " (पा. सू. ६ । ४ । ३६) इति जादेशः । तस्य " असिद्धवदत्राभात् " ( पा. सू. ६ । ४ । २२ ) इत्यसिद्धत्वेनानकारांतत्वात् हेर्लुगभावः । एवमुत्तरयोरपि मंत्रयोर्योजना ॥ २२ ॥

' स एषः ' खलु शत्रुः अनुमंत्रणमंत्रसामर्थ्यात् ' क्षिप्रं म्रियते ' नश्यति । तत्र कारणमाह—अशनिर्हेति । ' तं ' शत्रुं यस्मात् अनुयाजात्मकः अशनिः ' हंति ' हिनस्ति । न खलु अशनिहतो जीवितुमर्हतीत्यर्थः । अथ यो विस्रवन्मिश्र इवेत्यादि । अथशब्दस्तुशब्दार्थः । यस्तु शत्रुः द्वितीयेऽनुमंत्रणमंत्रे निर्दिश्यते । स ' विस्रवन्मिश्र इव ' विद्रवन् भयकंपादिभिर्मिश्र इव भवति । तं ह्राडुन्यात्मको द्वितीयोऽनुयाजो हिनस्ति । यस्तु द्वेष्यः ' अभ्युष्टमिश्र इव ' अभित ओषणं अभ्युष्टं सर्वतो दाहः तेन मिश्र इव भवति । तमुल्कुष्यात्मकोऽनुयाजस्तृतीयो हन्ति । एवमनुमंत्रणमंत्राणामभिचारप्रयोगविषयं प्रयोजनमुक्तम् ॥ २३ ॥

अथैताननुमंत्रणमंत्रान् विधाय अशन्याद्यात्मकत्ववेदनस्य फलमाह—सैषा यज्ञमेनिरिति । यज्ञरूपा मेनिः आयुधं ' एतया ' खलु ' मेन्या ' ' देवा असुरान् ' ' पराभावयांचक्रुः ' पराभूतान् कृतवंतः । तथैव ' एवंवित ' अनुयाजानां शत्रुनिबर्हणायुधरूपतां जानन् यजमानः पापरूपं ' द्विषंतं ' द्वेषणं कुर्वंतं ' भ्रातृव्यं ' शत्रुं ' पराभावयति ' नाशयति ॥ २४ ॥

उदीरिताशन्यादिरूपत्वमुपन्यस्यानुयाजांतत्वं यज्ञस्य निषेधयति—स यदिति । तत्र यदि ' यज्ञः ' दर्शपूर्णमासादिलक्षणो यागः ' अनुयाजांतः ' स्यात् अनुयाजैरेव समाप्यमानः स्यात् । तदा अशन्यादिरूपेण समापितः

प्रयाजैर्वै देवाः । स्वर्गं लोकमायँस्तानसुराऽअन्वाजिगाᳬँसँस्ताननुयाजैः प्रत्यौहँस्तद्यदनुयाजाऽइज्यन्ते पाप्मानमेव तद्द्विषन्तं भ्रातृव्यं यजमानः प्रत्यूहति ॥ २६ ॥

प्राणा वै प्रयाजाः । ( ८ ) अपानाऽअनुयाजास्तस्मात्प्रयाजाः प्राञ्चो हूयन्ते तद्धि प्राणरूपं प्रत्यञ्चोऽनुयाजास्तदपानरूपमेता ह वै दर्शपूर्णमासयोरुपसदो यदनुयाजास्तस्मात्तऽउपसद्रूपेण प्रत्यञ्चो हूयन्ते ॥ २७ ॥

सᳬँस्था सूक्तवाकः । स यो ह वै सᳬँस्था सूक्तवाकऽइति वेदाव ह

---

प्रयाजैर्वै देवाः स्वर्गं लोकमायन् । तानसुरा अन्वाजिगांसन् । ताननुयाजैः प्रत्यौहन् । तद्यदनुयाजा इज्यंते । पाप्मानमेव द्विषन्तं भ्रातृव्यं यजमानः प्रत्यूहति ॥ २६ ॥

प्राणा वै प्रयाजाः । अपाना अनुयाजाः । तस्मात्प्रयाजाः प्रांचो हूयंते; तद्धि प्राणरूपम् । प्रत्यंचोऽनुयाजाः; तदपानरूपम् । एता ह वै दर्शपूर्णमासयोरुपसदो यदनुयाजाः; तस्मात्त उपसद्रूपेण प्रत्यंचो हूयंते ॥ २७ ॥

संस्था सूक्तवाकः । स यो ह वै संस्था सूक्तवाक इति वेद । अव ह संस्थां रुन्धे । अथो यत्किंच संस्थया जय्यम् । सर्वं हैव तज्जयति । गच्छति वयसः संस्थाम् ॥ २८ ॥

---

स्यात् । तस्मादेव कारणात् देवतासंबन्धी ' यज्ञः ' इडामार्जनान्त एव वा शंयुवाकांत एव वा भवति । अत एव प्रायणीयातिथ्ये तथा संस्थाप्येते । उक्तं ह्याश्वलायनेन—" प्रायणीयातिथ्ये इडांतेति शंय्वंतेति यजमानाज्यभागा " ( आश्व. श्रौ. सू. ) इति च ॥ २९ ॥

अथैतान् स्वर्गप्राप्तिप्रतिबन्धकपापप्रतिक्षेपहेतुत्वेन स्तौति—प्रयाजैर्वै देवा इत्यादिना । अन्वाजिगांसन्निति । देवाननुप्रविश्य हन्तुं हिंसितुमैच्छन्नित्यर्थः । तानसुरानेतैरनुयाजैर्यागैः ' प्रत्यौहन् ' प्रत्यक्षिपन् । तस्मादिदानीमपि अनुयाजानां करणेन ' द्विषंतं ' द्वेषणशीलं ' भ्रातृव्यं ' तिरस्करोति ॥ २६ ॥

अथ प्रयाजानामनुयाजानां च होमे धर्मविशेषं विधत्ते—प्राणा वै प्रयाजा इति । मुखनासिकाभ्यां प्राङ् संचरन् वायुः प्राणः । प्रत्यङ्ङास्याभिमुखः संचरन्नपानः । यतस्ते उभये क्रमेण प्राणापानात्मकौ तस्माद्धेतोः ' प्रयाजाः प्रांचः ' प्रागपवर्गा अग्नौ ' हूयंते ' तादृक् खलु प्रोक्त प्राणवायो रूपम् । अनुयाजास्तु ' प्रत्यंचः ' प्रत्यगपवर्गा हूयंते तादृक् खल्वपानवायो रूपम् । अथैतेषां प्रत्यक्त्वमुपसद्रूपतयाऽपि प्रतिपादयति—एता ह वा इति । अग्निसोमविष्णुदेवताकाः यास्तिस्रः ' उपसदः ' सोमयागे प्रसिद्धाः तद्रूपत्वेन हि एते ' अनुयाजाः ' ' दर्शपूर्णमासयोः ' इज्यंते । प्रत्यगपवर्गत्वं चोपसद्धर्मः । ' तस्मात् ' कारणात् ' ते ' अनुयाजाः तेन ' उपसद्रूपेण ' प्रत्यगपवर्गं ' हूयंते ' ॥ २७ ॥

इत्यनुयाजविषयं वक्तव्यं प्रतिपाद्य सूक्तवाकस्य संस्थात्वमाह—संस्था सूक्तवाक इति । ' संस्था ' समाप्तिः ।

सᳬंस्थाᳬं रुंधेऽथो यत्किञ्च सᳬंस्थया जय्यᳬं सर्वᳬं हैव तज्जयति गच्छति वयसः सᳬंस्थाम् ॥ २८ ॥

( म्प्र ) प्रतिष्ठा शंयोर्व्वाकः । स यो ह वै प्रतिष्ठा शंयोर्व्वाक ऽइति व्वेदाव ह प्रतिष्ठाᳬं रुंधेऽथो यत्किञ्च प्रतिष्ठया जय्यᳬं सर्व्वᳬं हैव तज्जयति गच्छति प्रतिष्ठाम् ॥ २९ ॥

( न्ते ) ते देवाः । ( ऽ ) एतान्पत्नीसंयाजान्पश्चात्पर्य्यौहन्त मिथुनमेवैतदुपरिष्टाद्दधत प्रजात्यै तद्यत्पत्नीसंयाजा ऽइज्यंते मिथुनमेवैतदुपरिष्टाद्धत्ते प्रजात्यै देवानाᳬं ह वै प्रजातिमनुप्रजायते मिथुनेन मिथुनेन ह प्रजायते यऽएवमेतद्वेद ॥ ३० ॥

( द्रा ) अन्नᳬं समिष्टयजुः । स यो ह वाऽअन्नᳬं समिष्टयजुरिति व्वेदाव हान्नᳬं रुंधेऽथो यत्किञ्चान्नेन जय्यᳬं सर्व्वᳬं हैव तज्जयति ॥ ३१ ॥

---

प्रतिष्ठा शंयोर्वाकः । स यो ह वै प्रतिष्ठा शंयोर्वाक इति वेद । अव ह प्रतिष्ठां रुन्धे । अथो यत्किंच प्रतिष्ठया जय्यम् । सर्वं हैव तज्जयति । गच्छति प्रतिष्ठाम् ॥ २९ ॥

ते देवा एतान्पत्नीसंयाजान् पश्चात्पर्यौहंत । मिथुनमेवैतदुपरिष्टाद्दधत प्रजात्यै । तद्यत्पत्नीसंयाजा इज्यंते, मिथुनमेवैतदुपरिष्टाद्धत्ते प्रजात्यै । देवानां ह वै प्रजातिमनुप्रजायते । मिथुनेन मिथुनेन ह प्रजायते । य एवमेतद्वेद ॥ ३० ॥

अन्नं समिष्टयजुः । स यो ह वा अन्नं समिष्टयजुरिति वेद । अव हान्नं रुन्धे । अथो यत्किंचान्नेन जय्यम्, सर्वं हैव तज्जयति ॥ ३१ ॥

---

एतद्वेदनस्य फलमाह—स यो ह वा इति । अव ह संस्थां रुंध इति । प्रारिप्सितस्य कार्यस्य ‘ संस्था ’ समाप्तिः । तामवरुन्धे लभते । स्पष्टमन्यत् । गच्छति वयस इति । ‘ वयसः ’ आयुषः ‘ संस्थां ’ संपूर्तिं गच्छतीत्यर्थः ॥ २८ ॥

प्रतिष्ठा शंयोर्वाक इत्यादि । “ तच्छंयोरावृणीमहे ” इत्यनुवाकः शंयुवाकः । ‘ सः ’ प्रतिष्ठात्मना ज्ञातव्यः । निगदसिद्धमन्यत् ॥ २९ ॥

अथ पत्नीसंयाजानां मिथुनरूपतया प्रजातिहेतुतामाह—ते देवा एतान् पत्नीसंयाजानित्यादिना । सोमत्वष्टृदेवपत्न्यग्निगृहपतिदेवताकान् चतुरः पत्नीसंयाजाख्यान् यागान् ‘ पश्चात् ’ प्रतीच्यां दिशि गार्हपत्यसमीपे ‘ पर्यौहंत ’ परिप्रापयन् । ‘ एतत् ’ एतेन ‘ उपरिष्टात् ’ यज्ञस्योपरिभागे ‘ मिथुनं ’ स्त्रीपुंसात्मकम्प्रजातिहेतुमदधत स्थापितवन्तः । अत इदानीमपि तेषां पश्चात् प्रत्यूहनं प्रजातिहेतुभूतस्य मिथुनस्योपरिष्टाद्धारणाय संपद्यते । यतो देवानां प्रजातिमनुसृत्य प्रजातिर्यजमानस्य पुत्रपौत्रादिरूपा प्रजा उत्पद्यते । वेदितुः फलमाह—मिथुनेन मिथुनेनेति । वीप्सया गवाश्वादिसर्वमिथुनस्वीकारः ॥ ३० ॥

समिष्टयजुषोऽन्नरूपतामाह—अन्नं समिष्टयजुरिति । अन्नात्मकत्ववेदनस्य फलमाह—स यो ह वा इति ३१

संवत्सरो यजमानः । ( स्तु ) तमृतवो याजयंति वसंतऽआग्नीध्रस्तस्माद्वसंते दावाश्चरंति तद्ध्यग्निरूपं ग्रीष्मोऽध्वर्युस्तप्तऽइव वै ग्रीष्मस्तप्तमिवाध्वर्युर्निष्क्रामति वर्षाऽउद्गाता तस्माद्यदा बलवद्वर्षति साम्नऽइवोपब्दिः क्रियते शरद्ब्रह्मा तस्माद्यदा सस्यं पच्यते ब्रह्मण्वत्यः प्रजाऽइत्याहुहेमंतो होता तस्माद्धेमन्वषट्कृताः पशवः सीदंत्येता ह वाऽएनं देवता याजयंति स यद्येनमैषावीरा याजयेयुरेताऽएव देवता मनसा ध्यायेदेता हैवैनं देवता याजयंति ॥ ३२ ॥

---

संवत्सरो यजमानः, तमृतवो याजयंति । वसंत आग्नीध्रः । तस्माद्वसंते दावाश्चरंति । तद्ध्यग्निरूपम् । ग्रीष्मोऽध्वर्युः । तप्त इव वै ग्रीष्मः । तप्तमिवाध्वर्युर्निष्क्रामति । वर्षा उद्गाता । तस्माद्यदा बलवद्वर्षति । साम्न इवोपब्दिः क्रियते । शरद्ब्रह्मा । तस्माद्यदा सस्यं पच्यते । ब्रह्मण्वत्यः प्रजा इत्याहुः । हेमन्तो होता । तस्माद्धेमन् वषट्कृताः पशवः सीदंति । एता ह वा एनं देवता याजयन्ति । स यद्येनमैषावीरा याजयेयुः । एता एव देवता मनसा ध्यायेत् । एता हैवेनं देवता याजयंति ॥ ३२ ॥

---

अथ यजमानस्य ऋत्विजां संवत्सराद्यात्मकत्वमाह—संवत्सरो यजमान इति । 'यजमानः' संवत्सरात्मकः । 'ऋतवः' वसंताद्या ऋतवो याजकाः । तत्र वसंतः ऋतुरेवाग्नीध्रः । अग्नीन्धनसंयोगाद्धि ऋत्विज आग्नीध्र इति संज्ञा, यस्मात् तादृग् ऋत्विगात्मको वसंतः । 'तस्मात् वसंते' ऋतौ 'दावाः' दावाग्नयश्चरंति तरुगुल्मलतादिकं दहंति । तत्खल्वग्निसंबंधि रूपम् । ग्रीष्मऋतुरध्वर्युः । उभयोस्तादात्म्यनिमित्तं साम्यमाह—तप्त इव वा इति । आतपाधिक्यात् ग्रीष्मः ऋतुः 'तप्त इव' भवति । अध्वर्युरपि व्यापारबाहुल्यात् अग्निसमीपे संचरन् तापयुक्तो यथा भवति तथा 'निष्क्रामति' विहारान्निर्गच्छति । 'वर्षा उद्गाता' । तत्र लिंगमाह—तस्माद्यदेति । 'यदा' खलु बलयुक्तमधिकं 'वर्षति' तदा 'साम्न इवोपब्दीरूपः' घोषः क्रियते । तस्मात्सामकल्पस्योद्गातुः वर्षर्तुरूपत्वं युक्तमित्यर्थः । 'शरद्ब्रह्मा' । यस्मात् ब्रह्मणः ऋत्विजः शरत्तादात्म्यं, तस्मात् यदा यस्यां 'शरदि' शरदृतौ व्रीह्यादि 'सस्यं पच्यते' तदा अन्नवत्त्वेन हेतुना सर्वाः 'प्रजाः' 'ब्रह्मण्वत्यः' ब्राह्मणजातिविदो वा तद्वत्यो भवंति इत्येवमाहुः अभिज्ञाः कथयंति । हेमंतो होतेत्यादि । यः 'होता' स हेमंतात्मकः । यस्मात् वषट्कर्तुर्होतुः हेमंतस्य च तादात्म्यम्, तस्मात् 'हेमन्' हेमंते । वर्णलोपश्छांदसः । 'पशवः' गोमहिष्याद्याः 'वषट्कृताः' वषट्कारवत् परुषस्वनयुक्ताः संतः 'सीदंति' विशीर्णांगा भवंति । 'एनं' एवंविदं संवत्सरात्मकं यजमानमेता एव वसंताद्या देवताः 'याजयंति' । एतच्च ध्यानलभ्यमित्याह—स यद्येनमिति । 'ऐषावीराः' । एषावीरो नाम निंदितो ब्राह्मणजातिविशेषः । तत्संबंधिनः ऋत्विजः । 'यद्येनं' यद्यपि एनं 'याजयेयुः' । 'एता एव' वसंताद्या देवता ऋत्विक्त्वेन 'मनसा ध्यायेत्' । 'एता देवताः' एव 'एनं' 'याजयंति' ॥ ३२ ॥

( न्त्यु ) अुथ हैषैव तुला । यद्दक्षिणो व्वेद्यन्तः स युत्साधु करोति तुद-न्तर्व्वेद्युथ युदसाधु तुद्बहिर्व्वेदि तुस्माद्दक्षिणं व्वेद्यंतुमधिस्पृश्येवासीत तुलायाᳬ॒ ह वाऽअमुष्मिल्लोकऽआदधति यतरुद्यᳬस्यति तदुन्वेष्यति युदि साधु वाऽसाधु वेत्युथ युऽएवं व्वेदास्मिुन्हैवु लोकेु तुलामारो-हत्युत्यमुष्मिंल्लोकेु तुलाधानं मुच्यते साधुकृत्या हैवास्य युच्छति नु पापकृत्या ॥ २२ ॥ अर्द्धः प्रपाठकः ॥ ९२ ॥

इति द्वितीयप्रपाठके तृतीयं ब्राह्मणम् ॥ ११-२-३ ॥ ( २. ७. ) ॥

इति द्वितीयोऽध्यायः समाप्तः ॥ ११-२ ॥

---

अथ हैषैव तुला । यद्दक्षिणो वेद्यंतः । स यत्साधु करोति तदंतर्वेदि । अथ यदसाधु तद्बहिर्वेदि । तस्माद्दक्षिणं वेद्यंतमधिस्पृश्येवासीत । तुलायां ह वा अमुष्मिंल्लोक आदधति । यतरद्यंस्यति । तदन्वेष्यति । यदि साधु वाऽसाधु वेति । अथ य एवं वेद । अस्मिन् हैव लोके तुलामारोहति । अत्यमुष्मिँल्लोके तुलाधानं मुच्यते । साधुकृत्या हैवास्य यच्छति; न पापकृत्या ॥ २२ ॥

---

अथ यजमानस्य वेदेर्दक्षिणभाग उपवेशनं विधित्सुः दक्षिणवेद्यंतस्य तुलादंडरूपतामाह—अथ हैषैव तुलेति । 'अथ' खलु 'दक्षिणः' वेदिप्रांत इति यत् 'एषैव तुला' तत्र स्थितो यजमानः 'यत्साधु' शोभनं विहितं कर्म करोति 'तदंतर्वेदि भवति' । 'अथ' 'यत् असाधु' अशोभनं कर्म करोति 'तद्बहिर्वेदि' वेदिबाह्यदेशे भवति । साध्वसाधुकर्मणी तुलादंडस्योभयतः बद्धशिक्यद्वयस्थानीये भवत इति भावः । यस्मादेवं दक्षिणो वेद्यंतः साध्वसाधुकर्मणोः विभागहेतुः । तस्मात् दक्षिणवेद्यंतमधिस्पृश्येव उपरिसंस्पृशन्निव यजमान आसीत । तुलायाᳬ॒ ह वा इति । 'अमुष्मिन्' परलोके गतं पुरुषं सुकृतदुष्कृतयोराधिक्यज्ञानार्थं 'तुलायां' खलु 'आदधति' प्रक्षिपंति तुलया तोलयंतीत्यर्थः । 'यदि' तत्र 'साधु' सुकृतं वा कर्म 'असाधु' दुष्कृतं वा 'यतरत्' अनयोर्मध्य एकतरं 'यंस्यति' उच्चत्वेन नियमनं करिष्यति 'तत् अन्वेष्यति' पुरुषोऽनुगमिष्यति सुकृतं वा दुष्कृतं वा इति अनेनाभिप्रायेण तुलायाममुष्मिन् लोके प्रक्षिपन्तीत्यर्थः । दक्षिणवेद्यंतस्य तुलारूपतां जानतो यजमानस्य तु नैतदित्याह—अथ य एवं वेदेति । एवमुक्तप्रकारं विद्वान् अस्मिन्नेव 'लोके' सुकृतदुष्कृतविभागं दक्षिणवेद्यंतरूपां तुलामारोहति । 'अमुष्मिन्' कर्मफलभूतस्वर्गाख्ये 'लोके' तुलाधानमतिक्रम्य पापफलान्मुच्यते । तथा चैनं 'साधुकृत्या' सुकृतरूपा अस्यैव 'यच्छति' आश्रयति । तथा 'पापकृत्या' पापं कर्म न स्पृशति ॥ २२ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये एकादशकाण्डे द्वितीयेऽध्याये सप्तमं ब्राह्मणम् ॥ ( ११-२-७ ) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं,
सप्ताब्धीन्पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटं च ॥
धान्याद्रिं धन्यजन्मा तिलमवमतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान्गुडकृतमजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणजमनृणः शार्करं चार्कतेजा,
रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये एकादशकाण्डे द्वितीयोऽध्यायः समाप्तः ॥ ( ११ । २ ) ॥



# अथ तृतीयेऽध्याये प्रथमं ब्राह्मणम् ।
# द्वितीयप्रपाठके च चतुर्थं ब्राह्मणम् ।



वाग्घ वाऽएतस्याग्निहोत्रस्याग्निहोत्री । मन ऽएव वत्सस्तदिदम्मनश्च वाक्च समानमेव सन्नानेव तस्मात्समान्या रज्ज्वा वत्सं च मातरं चाभिदधति तेजऽएव श्रद्धा सत्यमाज्यम् ॥ १ ॥

( न्तु ) तद्धैतज्जनको वैदेहः । ( हो ) याज्ञवल्क्यं पप्रच्छ वेत्थाग्निहोत्रं याज्ञवल्क्या३ऽइति वेद सम्राडिति किमिति पयऽएवेति ॥ २ ॥

---

वाग् ह वा एतस्याग्निहोत्रस्याग्निहोत्री । मन एव वत्सः । तादिदं मनश्च वाक् च समानमेव सन्नानेव । तस्मात्समान्या रज्ज्वा वत्सं च मातरं चाभिदधति । तेज एव श्रद्धा । सत्यमाज्यम् ॥ १ ॥

तद्धैतज्जनको वैदेहो याज्ञवल्क्यं पप्रच्छ । वेत्थाग्निहोत्रं याज्ञवल्क्या ३ इति । वेद सम्राडिति । किमिति । पय एवेति ॥ २ ॥

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

इत्थं दर्शपूर्णमासाववलंब्य तत्प्रशंसाव्याजेन तदंगावबद्धानि उपासनानि विहितानि । अथाग्निहोत्रमाश्रित्य तत्प्रशंसामुखेन तदवयवाश्रितानि उच्यंते–वाग्घ वा इत्यादिना । अग्निहोत्रमिति कर्मनामधेयम् । अग्नये होत्रं होमोऽस्मिन्निति व्युत्पत्तिः । उपचारात्तदर्थं पयोऽप्यग्निहोत्रम् । तस्य दोग्ध्री धेनुरपि अग्निहोत्रीत्युच्यते । तस्यैतस्याग्निहोत्राख्यस्य कर्मणः वागेव 'अग्निहोत्री' धेनुः । 'मनः' तस्याः 'एव वत्सः' गवि वाग्बुद्धिः, वत्से मनोबुद्धिश्च कार्येत्यर्थः । तदेतत्समानधर्मयोगेन प्रतिपादयति–तादिदमिति । 'तदिदं' वाङ्मनसलक्षणं द्वयं 'समानं' इदंप्रदेश एकीभूतमेव 'सत्' पश्चान्नानेव विभक्तमिव भवति । यस्मादेवं तस्माल्लोके दोग्धारः 'समान्या' एकयैव 'रज्ज्वा' 'वत्सं मातरं च' 'अभिदधति' बध्नंति । तत्र तेजसो हविषश्च श्रद्धासत्यरूपतामाह–तेज एव श्रद्धेति । होमाधिकरणभूतं यत्तेजः तच्छ्रद्धात्मकत्वेन ध्यातव्यम् । तत्र होमद्रव्यमाज्यं तत्सत्यात्मकमिति ॥ १ ॥

इममर्थं जनकयाज्ञवल्क्ययोरुक्तिप्रत्युक्तिभ्यां समर्थयते–तद्धैतदिति । तत्र खलु अग्निहोत्रविषय एतदुक्तं तेजआज्ययोः श्रद्धासत्यरूपत्वं विदेहानां राजा 'वैदेहः' जनकाख्यो राजा 'याज्ञवल्क्यं' महर्षिं 'पप्रच्छ' पृष्टवान् । "प्रच्छ ज्ञीप्सायाम्" (धा. पा. तु. प. १३२) इति धातुः । हे 'याज्ञवल्क्य !' त्वं अग्निहोत्रं वेत्सि जानासि किम् ? इति प्रश्नः । "विचार्यमाणानाम्" (पा. सू. ८ । २ । ९७) इति प्लुतिः । 'सम्राट्'

---

१—"अग्निहोत्रीं दोहयति पुंवत्साम्" ( का. श्रौ. सू. ४ । ३१५ ) इति सूत्रीयं कर्कभाष्यम् । अग्निहोत्रशब्दः कर्मवाची सन्निहिततत्साधनभूते द्रव्ये द्रष्टव्यः । तदग्निहोत्राख्यं द्रव्यं यस्यां विद्यते सेयमग्निहोत्रिणी । अत्रापि मतुब्लोपे कृते अग्निहोत्रीमिति भवति । तथा च दृश्यते–यथाऽग्निहोत्री दोह्यमाना वाश्येतेति । पयस्यपि च अग्निहोत्रशब्दो दृश्यते, यस्याग्निहोत्रं दोह्यमानममेध्यमापद्येतेति ।

यत्पयो न स्यात् । ( त्के ) केन जुहुयाऽइति व्व्रीहियवाभ्यामिति यद्व्री-हियवौ न स्यातां केन जुहुयाऽइति याऽअन्याऽओषधयऽ इति यदन्या-ऽओषधयो न स्युः केन जुहुयाऽइति याऽआरण्याऽओषधयऽइति यदा-रण्याऽओषधयो न स्युः केन जुहुयाऽइति व्वानस्पत्येनेति यद्वानस्पत्यं न स्यात्केन जुहुयाऽइत्यद्भिरिति यदापो न स्युः केन जुहुयाऽइति ॥ ३ ॥

स होवाच । न व्वाऽइह तर्हि किञ्चनासीदथैतदहूयतैव सत्यꣳ श्रद्धा-यामिति व्वेत्थाग्निहोत्रं याज्ञवल्क्य धेनुशतं ददामीति होवाच ॥ ४ ॥

तदप्येते श्लोकाः । किꣳ स्विद्विद्वान्प्रवसत्यग्निहोत्री गृहेभ्यः । कथꣳ

---

यत्पयो न स्यात्; केन जुहुया इति । व्रीहियवाभ्यामिति । यद्व्रीहियवौ न स्यातां; केन जुहुया इति । या अन्या ओषधय इति । यदन्या ओषधयो न स्युः; केन जुहुया इति । या आरण्या ओषधय इति । यदारण्या ओषधयो न स्युः; केन जुहुया इति । वानस्पत्येनेति । यद्वानस्पत्यं न स्यात्; केन जुहुया इति । अद्भिरिति । यदापो न स्युः; केन जुहुया इति ॥ ३ ॥

स होवाच । न वा इह तर्हि किंचनासीत् । अथैतदहूयतैव । सत्यं श्रद्धायामिति । वेत्थाग्निहोत्रं याज्ञवल्क्य ! धेनुशतं ददामीति होवाच ॥ ४ ॥

तदप्येते श्लोकाः–" किंस्वित् विद्वान्प्रवसत्यग्निहोत्री गृहेभ्यः । कथं स्विदस्य काव्यं कथं सन्ततो अग्निभिः " इति । कथं स्विदस्यानपप्रोषितं भवति–इत्येवैतदाह ॥ ५ ॥

---

' वेद ' अहं जानामि अग्निहोत्रमिति प्रतिवचनम् । पुनः किन्तदिति प्रश्नः । ' पय एवेति ' तस्योत्तरम् । पयः खलु नित्यतया अग्निहोत्रहोमसाधनत्वेन श्रुतं, अतः पय एवाग्निहोत्रमित्यर्थः ॥ २ ॥

यदि तर्हि ' पयो न स्यात् ' तदा ' केन ' द्रव्येण जुहुया इति प्रश्नस्योत्तरं–व्रीहियवाभ्यामिति । व्रीहियवयोरन्यतरत्साधनमित्यर्थः । एवमुत्तरेष्वपि प्रश्नप्रतिवचनेषु योजना । अन्या ओषधय इति । व्रीहियवातिरिक्ता ग्राम्या ओषधयो होमसाधनमित्यर्थः । आरण्या ओषधय इति । वेणवश्यामाकधान्यादय आरण्याः । वानस्पत्येनेति । वनस्पतिर्वृक्षः, तजन्यं फलादिकं वानस्पत्यं तेनेत्यर्थः । तस्याप्यभावे आप एव होमद्रव्यमित्याह–अद्भिरिति ॥ ३ ॥

तासामभावे केन होम इति पृष्टे मनसि रहस्यत्वेन स्थापितमर्थमाह–स होवाचेति । इत्थं खलु याज्ञवल्क्य उवाच–' तर्हि ' तथा सति इहास्मिन् लोके ' किंचन ' किमपि होमसाधनमन्यत् द्रव्यं नैवासीत् । तथापि एतदग्निहोत्रं ' अहूयतैव ' न लुप्यते । तत्किरूपमित्युच्यते–यत्सत्यवदनरूपो यो धर्मः स एव श्रद्धारूपाग्नौ हूयत इति अंतरतिगूढमर्थमाविष्कृतवान् । विद्योपदेशात्तुष्टस्य जनकस्य वाक्यम्–वेत्थाग्निहोत्रमिति । हे याज्ञवल्क्य ! त्वमेवाग्निहोत्रं जानासि । अतस्तुभ्यं रहस्यवेदिने धेनूनां शतं पारितोषिकं प्रयच्छामीत्यर्थः ॥ ४ ॥

अथ प्रवसद्विषये अग्निहोत्रहोमस्य मनःप्राणात्मना सांतत्यं श्लोकमन्त्रैः प्रतिपादयति–तदप्येते श्लोका

स्विदस्य काव्यं कथ॑ँ संततोऽअग्निभिरिति कथ॑ँ स्विदस्यानपप्रोषितं भवतीत्येवैतदाह ॥ ५ ॥

यो जविष्ठो भुवनेषु । स विद्वान्प्रवसन्विदे । तथा तदस्य काव्यं तथा संततोऽअग्निभिरिति मनऽएवैतदाह मनसैवास्यानपप्रोषितं भवतीति ॥६॥

यत्स दूरं परेत्य । ( त्या ) अथ तत्र प्रमाद्यति । कस्मिन्त्साऽस्य हुताऽऽहुतिर्गृहे यामस्य जुह्वतीति यत्स दूरं परेत्याथ तत्र प्रमाद्यति कस्मिन्नस्य साऽऽहुतिर्हुता भवतीत्येवैतदाह ॥ ७ ॥

---

" यो जविष्ठो भुवनेषु स विद्वान्प्रवसन्विदे । तथा तदस्य काव्यं तथा संततो अग्निभिः " इति । मन एवैतदाह । मनसैवास्यानपप्रोषितं भवतीति ॥ ६ ॥

" यत्स दूरं परेत्याथ तत्र प्रमाद्यति । कस्मिन् साऽस्य हुताऽऽहुतिः, गृहे यामस्य जुह्वति " इति । यत्स दूरं परेत्याथ तत्र प्रमाद्यति । कस्मिन्नस्य साऽऽहुतिर्हुता भवतीति—एवैतदाह ॥ ७ ॥

---

इति । तत्तस्मिन्नग्निहोत्रविषये ' अपि ' खलु ' एते श्लोकाः ' पठ्यंते । तत्तत्र प्रथमेन श्लोकेन प्रवासविषयं प्रश्नमुद्भावयति—किं स्विदिति । ' अग्निहोत्री ' यावज्जीवसंकल्पिताग्निहोत्रवान् यजमानः किं विद्वान् किंरूपमग्निहोत्रं जानन् ' गृहेभ्यः ' ' प्रवसति ' तथा ' अस्य ' प्रवसतो यजमानस्य ' कथं ' वा तत् ' काव्यं ' कविकर्म यावज्जीवमग्निहोत्रं जुहुयादिति वाक्यं समर्थं भवति । तथा ' अग्निभिः ' गार्हपत्यादिभिः ' कथं संततः ' संबद्धो भवतीति । अस्य मंत्रस्य तात्पर्यार्थमाह—कथं स्विदिति । 'अस्य' प्रवसतो यजमानस्य 'अनपप्रोषितं' प्रवासदोषाभावः कथं सिद्ध्यतीति एतत् प्रथमश्लोकरूपमंत्रवाक्यं प्रतिपादयतीत्यर्थः ॥ ५ ॥

अस्योत्तरं द्वितीयेन श्लोकमंत्रेण प्रतिपादयति—यो जविष्ठ इति । ' यः ' यजमानः ' भुवनेषु ' लोकेष्वनुष्ठेयपदार्थेषु ' जविष्ठः ' अतिशयेन जववान् मनसा कृत्स्नं दूरवर्त्यपि प्रयोगजातमनुसंधातुं कुशल इत्यर्थः । ' स विद्वान् ' ' विदे ' लाभाय ' प्रवसन् ' प्रवासकारी भवति । ' तथा ' तेन वेदनेन ' अस्य ' प्रवसतः ' तत् काव्यं ' यावज्जीववाक्यमपि सार्थकं भवति । ' तथा ' तेनैव वेदनेन दूरे वर्तमानोऽपि ' अग्निभिः ' ' संततः ' अव्यवहितसंबंध एव भवति । इमं मन्त्रं तात्पर्यकथनेन व्याचष्टे—मन एवैतदिति । एतन्मंत्रवाक्यं प्रवासजनितदोषनिवृत्तेः मन एव साधनमिति 'आह' तात्पर्यतो ब्रूत इत्यर्थः । तदेव विवृणोति—मनसैवास्यानपप्रोषितमिति । ' अनपप्रोषितं ' प्रवासदोषविरहः ॥ ६ ॥

यत्स दूरमिति तृतीयश्लोकः । यत् यदि ' सः ' यजमानः 'दूरं परेत्य' ' अथ तत्र प्रमाद्यति ' अनवधानयुक्तो भवति । तदा ' अस्य ' यजमानस्य ' गृहे ' 'यां' आहुतिं ऋत्विजः ' जुह्वति ' ' सा ' ' आहुतिरस्य ' प्रमाद्यतो यजमानस्य तस्मिन् गृहे एव ' हुता ' भवति । न त्वनेन संगच्छत इत्यर्थः । इमं मंत्रं व्याचष्टे—यत्स दूरमिति । निगदसिद्धोऽर्थः ॥ ७ ॥

२५३८

यो जागार भुवनेषु । विश्वा जातानि योऽविभः । तस्मिन्त्साऽस्य हुताऽऽहुतिर्गृहे ग्रामस्य जुह्वतीति प्राणमेवैतदाह तस्मादाहुः प्राण ऽएवाग्निहोत्रमिति ॥ ८ ॥

इति द्वितीयप्रपाठके चतुर्थं ब्राह्मणम् ॥ ११–२–४ ॥ ( ३. १. ) ॥

यो ह वाऽअग्निहोत्रे । षण्मिथुनानि वेद मिथुनेन मिथुनेन ह प्रजायते सर्वाभिः प्रजातिभिर्यजमानश्च पत्नी च तदेकम्मिथुनं तस्मादस्य पत्नीवदग्निहोत्रꣳ स्यादेतन्मिथुनमुपाप्नवानीति वत्सश्चाग्निहोत्री च तदेकम्मिथुनं तस्मादस्य पुम्वत्साऽग्निहोत्री स्यादेतन्मिथुनमुपाप्नवानीति स्थाली चाङ्गाराश्च तदेकम्मिथुनꣳ स्रुक्च स्रुवश्च तदेकम्मिथुनमाहवनी-

---

" यो जागार भुवनेषु विश्वा जातानि योऽविभः । तस्मिन् साऽस्य हुताऽऽहुतिः, गृहे ग्रामस्य जुह्वति " इति । प्राणमेवैतदाह । तस्मादाहुः । प्राण एवाग्निहोत्रमिति ॥ ८ ॥

षण्मिथुनब्राह्मणम् ।

यो ह वा अग्निहोत्रे षण्मिथुनानि वेद । मिथुनेन मिथुनेन ह प्रजायते सर्वाभिः प्रजातिभिः । यजमानश्च पत्नी च तदेकं मिथुनम् । तस्मादस्य पत्नीवदग्निहोत्रं स्यात् । एतन्मिथुनमुपाप्नवानीति ।

---

एवं हि तन्मनस्कस्य प्रवसतो मनसैवाग्निहोत्रसंपत्तिमभिधाय प्राणरूपतामप्याह–यो जागारेति । ' यः ' प्राणवायुः ' भुवनेषु ' शरीरेषु ' जागार ' जागर्ति अनिद्रः सदा वर्तते । तथा ' विश्वा ' सर्वाणि ' जातानि ' भूतजातानि ' योऽविभः ' तत्रात्मरूपतया बिभर्ति ' तस्मिन् ' अनिरुक्तरूपिणि तस्मिन् प्राणवायौ ' अस्य ' उक्त प्राणत्वं विदुषः प्रवसतो यजमानस्य ' सा ' अग्निहोत्राहुतिः ' हुता ' भवति । गतमन्यत् । इमं मंत्रं व्याचष्टे–प्राणमेवैतदाहेति । एतन्मंत्रवाक्यं प्राणमेव होमाधारत्वेन प्रतिपादयतीत्यर्थः । अत्र विद्वत्प्रसिद्धिं संवादयति–तस्मादाहुरिति । इत्थमाहुत्यधिकरणत्वात् ' प्राण एव ' अग्निहोत्राख्यं कर्मेति तत्र प्राणबुद्धिः कार्येत्यर्थः । प्राणस्तु सर्वदा यजमानेन संबद्धः इति न प्रवासजनितदोषावकाश इत्यर्थः ॥ ८ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये एकादशकाण्डे तृतीयेऽध्याये प्रथमं ब्राह्मणम् ॥ ( ११–३–१ ) ॥

अथ तस्मिन्नेवाग्निहोत्रे मिथुनवेदनं विधत्ते–यो ह वा इति । ' मिथुनानि ' स्त्रीपुंसरूपाणि द्वंद्वानि । तद्वेदनस्य फलमाह–मिथुनेनेति । वीप्साया अर्थो विव्रियते–सर्वाभिः प्रजातिभिरिति । पुरुषगोमहिषाश्वादि-

---

१–अत्र अग्निहोत्रगतानि षण्मिथुनान्युपवर्णितानि सन्ति । तानि निम्नदर्शितस्वरूपाणि ।

१–यजमानः, पत्नी ।
२–वत्सः, अग्निहोत्री ( धेनुः ) ।
३–स्थाली, अग्निः ।
४–स्रुक्, स्रुवः ।
५–आहवनीयः, समित् ।
६–आहुतिः, स्वाहाकारः ॥

यश्च समिच्च तदेकम्मिथुनमाहुतिश्च स्वाहाकारश्च तदेकम्मिथुनमेतानि ह वाऽअग्निहोत्रे षण्मिथुनानि तानि य ऽएवं वेद मिथुनेन मिथुनेन ह प्रजायते सर्व्वाभिः प्रजातिभिः ॥ १ ॥

इति द्वितीयप्रपाठके पञ्चमं ब्राह्मणम् ॥ ११-२-५ ॥ ( ३. २. ) ॥

ब्रह्म वै मृत्यवे प्रजाः प्रायच्छत् । ( तु ) तस्मै ब्रह्मचारिणमेव न प्रायच्छत्सोऽब्रवीदस्तु मह्यमप्येतस्मिन्भाग ऽइति यामेव रात्रिँ समिधं नाहराताऽइति तस्माद्याँ रात्रिम्ब्रह्मचारी समिधन्नाहरत्यायुष ऽएव तामवदाय वसति तस्माद्ब्रह्मचारी समिधमाहरेन्नेदायुषोऽवदाय वसानीति ॥ १ ॥

---

वत्सश्चाग्निहोत्री च तदेकं मिथुनम् । तस्मादस्य पुंवत्साऽग्निहोत्री स्यात् । एतन्मिथुनमुपाप्नवानीति । स्थाली चांगाराश्च तदेकं मिथुनम् । स्रुक् च स्रुवश्च तदेकं मिथुनम् । आहवनीयश्च समिच्च तदेकं मिथुनम् । आहुतिश्च स्वाहाकारश्च तदेकं मिथुनम् । एतानि ह वा अग्निहोत्रे षण्मिथुनानि । तानि य एवं वेद । मिथुनेन मिथुनेन ह प्रजायते सर्वाभिः प्रजातिभिः ॥ १ ॥

ब्रह्मचारिधर्मनिरूपकं ब्राह्मणम् ।

ब्रह्म वै मृत्यवे प्रजाः प्रायच्छत् । तस्मै ब्रह्मचारिणमेव न प्रायच्छत् । सोऽब्रवीत् । अस्तु मह्यमप्येतस्मिन् भाग इति । यामेव रात्रिं समिधं नाहराता इति । तस्माद्यां रात्रिं ब्रह्मचारी समिधं

---

रूपाभिः सर्वाभिरुत्पत्तिभिः प्रजायत इत्यर्थः । तत्र प्रथमं मिथुनं दर्शयति—यजमानश्चेति । यस्मादेवं यजमानपत्न्यौ प्रधानमेकं मिथुनम् । 'तस्मादस्य' यजमानस्य 'अग्निहोत्रं' पत्नीयुक्तमेव 'स्यात्' न कदाचित्तया विरहितं भवेत् । 'एतन्मिथुनमुपाप्नवानि' उपगच्छानीत्यनेनाभिप्रायेण । द्वितीयं मिथुनं दर्शयति—वत्सश्चाग्निहोत्री चेति । अग्निहोत्रसाधनस्य पयसो दोहनार्था या धेनुः सा 'अग्निहोत्री' यस्मादिदमेकं 'मिथुनं' तस्माद्वत्सस्य पुंस्त्वमावश्यकमित्याह—तस्मादस्येति । पुमान् वत्सो यस्याः सा 'पुंवत्सा' । अवशिष्टानि चत्वारि मिथुनानि अनुक्रामति—स्थाली चांगाराश्चेति । निगदसिद्धोऽर्थः । तद्वेदनस्य उक्तफलसाधनत्वं निगमयति—य एवमिति । उक्तार्थमन्यत् ॥ १ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये एकादशकाण्डे तृतीयेऽध्याये द्वितीयं ब्राह्मणम् ॥ ( ११-३-२ ) ॥

अथाग्निहोत्रादिनियमप्रसंगादागतं ब्रह्मचारिधर्मं निरूपयितुमाख्यायिकामाह—ब्रह्म वै मृत्यव इति । जगत्कारणं 'ब्रह्म' सर्वाः 'प्रजाः' सृष्ट्वा तस्मै 'मृत्यवे' ताः 'प्रजाः' 'प्रायच्छत्' । 'तस्मै'

दीर्घसत्रं वा॒ऽए॒षऽउ॒पैति । यो ब्र॑ह्मच॒र्य्यमु॒पैति स या॒मु॒प॒यन्त्स॒मिध॑मा॒द॒धाति सा प्राय॒णीया॒ यां स्ना॒स्य॒न्त्सोद॒यनी॒या॒ऽथ या ऽअ॒न्तरे॑ण स॒त्र्या॒ऽए॒वास्य॒ ता॒ ब्रा॒ह्म॒णो ब्र॑ह्मच॒र्य्यमु॒प॒य॒न् ॥ २ ॥

(यं॒श्च) च॒तु॒र्द्धा भू॒तानि॒ प्र॒वि॒श॒ति । (त्य) अ॒ग्निम्प॒दा मृ॒त्युम्प॒दाऽऽचा॒र्य्यम्प॒दाऽऽत्म॒न्ये॒वास्य॑ च॒तु॒र्थः पा॒दः प॒रि॒शि॒ष्य॒ते ॥ ३ ॥

---

नाहरति। आत्यायुष एव तामवदाय वसति । तस्मात् ब्रह्मचारी समिधमाहरेत् । नेत् आयुषोऽवदाय वसानीति ॥ १ ॥

दीर्घसत्रं वा एष उपैति । यो ब्रह्मचर्यमुपैति । स यामुपयन् समिधमादधाति; सा प्रायणीया । यां स्नास्यन्; सोदयनीया । अथ या अंतरेण सत्र्या एवास्य ताः । ब्राह्मणो ब्रह्मचर्यमुपयन् ॥२॥

चतुर्द्धा भूतानि प्रविशति । अग्निं पदा । मृत्युं पदा । आचार्यं पदा । आत्मन्येवास्य चतुर्थः पादः परिशिष्यते ॥ ३ ॥

---

ब्रह्मचारिणमेकमेव 'न प्रायच्छत्' । 'सः' मृत्युरब्रवीत् 'एतस्मिन्' ब्रह्मचारिण्यपि 'मह्यं' भागोऽस्त्विति । ततो ब्रह्मणा उक्तम्—'यामेव रात्रिं' असौ ब्रह्मचारी 'समिधं' 'नाहराते' समिदाहरणमग्न्यर्थं न कुर्यात् । सा रात्रिस्तव भागोऽस्त्विति । इत्यमाख्यायिकासिद्धमर्थं श्रुतिः स्वयमेव व्याचष्टे—तस्माद्यां रात्रिमिति । यस्मादेवं ब्रह्मणा भागत्वेन परिकल्पितं 'तस्मात्' 'यां रात्रिं' 'ब्रह्मचारी' समिधमग्न्यर्थं नाहरति 'आयुषः' सकाशादेव तां रात्रिमवदायावखंड्य 'वसति' । यस्मादेवं दोषः, 'तस्माद्ब्रह्मचारी' सर्वदा रात्रौ 'समिधमाहरेत्' नैवायुषो जीवनात् तां रात्रिमवखंड्य वसानीत्यभिप्रायेण ॥ १ ॥

ब्रह्मचर्यधर्माचरणं सत्रयागात्मना निरूपयति—दीर्घसत्रं वा एष उपैतीति । दीर्घं चिरसाध्यं सत्रं यागः 'दीर्घसत्रं' । 'यः' ब्रह्मचर्याश्रमविहितं कर्म 'ब्रह्मचर्यं' तद्ब्रह्मचर्यमुपैति 'एषः' दीर्घसत्रमेवोपैति उपगच्छति । तत्र प्रायणीयोदयनीये संपादयति—स यामुपयन्निति । 'उपयन्' प्रथमं गुरुसमीपमुपगच्छन् उपनयनकाले 'यां' समिधमग्नावादधाति सैव समित्प्रायणीयेष्टिः । 'स्नास्यन्' स्नानं करिष्यन् 'यां' समिधमादधाति सैव समित् उदयनीयेष्टिः । 'अथ' 'याः' समिधः 'अंतरेण' तयोर्मध्ये अग्नावादधाति । 'ताः' 'सत्र्याः' सत्रियाः सत्रसंबंधिन्यः समिधः । एवं समिदाधानं सत्रयागात्मना स्तुत्वा आत्मनिष्क्रयहेतुत्वेनापि स्तौति—ब्राह्मणो ब्रह्मचर्यमुपयन्निति । 'उपयन्' उपगच्छन् 'चतुर्धा' चतुर्विधेन 'पदा' पादेन चतुर्थांशेन 'आचार्यं' सावित्रीप्रदानपुरःसरं अध्यापयितारम् । स्मर्यते हि—"उपनीय गुरुः शिष्यं वेदमध्यापयेत् द्विजम् । सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते" (म. स्मृ. २ । १४० ।) इति । आत्मन्येवेत्यादि । 'आत्मनि' स्वस्मिन्नेव 'अस्य' ब्रह्मचारिणः 'चतुर्थः पादः परिशिष्यते' अतः स्वरूपहानिशंका न कार्येति भावः ॥ २ ॥ ३ ॥

---

१–अत्र (पार. गृ. सू. २ । ४) इत्येतत्समिदाधानसूत्रमप्यनुसन्धेयम् ॥

स यदग्नये समिधमाहरति । यऽएवास्याग्नौ पादस्तमेव तेन परिक्रीणाति तꣳ सꣳस्कृत्यात्मन्धत्ते सऽएनमाविशति ॥ ४ ॥

( त्य ) अथ यदात्मानं दरिद्रीकृत्येव । ( वाऽ ) अहीर्भूत्वा भिक्षते यऽएवास्य मृत्यौ पादस्तमेव तेन परिक्रीणाति तꣳ सꣳस्कृत्यात्मन्धत्ते सऽएनमाविशति ॥ ५ ॥

( त्य ) अथ यदाचार्य्यवचसं करोति । यदाचार्य्याय कर्म्म करोति यऽएवास्याचार्य्ये पादस्तमेव तेन परिक्रीणाति तꣳ सꣳस्कृत्यात्मन्धत्ते सऽएनमाविशति ॥ ६ ॥

न ह वै स्नात्वा भिक्षेत । ( ता ) अप ह वै स्नात्वा भिक्षां जयत्युप ज्ञातीनामशनायामप पितॄणाꣳ सऽएवं विद्वान्यस्याऽएव भूयिष्ठꣳ

---

स यदग्नये समिधमाहरति । य एवास्याग्नौ पादः, तमेव तेन परिक्रीणाति । तं संस्कृत्यात्मन् धत्ते । स एनमाविशति ॥ ४ ॥

अथ यदात्मानं दरिद्रीकृत्येवाहीर्भूत्वा भिक्षते । य एवास्य मृत्यौ पादः, तमेव तेन परिक्रीणाति । तं संस्कृत्यात्मन् धत्ते । स एनमाविशति ॥ ५ ॥

अथ यदाचार्यवचसं करोति । यदाचार्याय कर्म करोति । य एवास्याचार्ये पादः, तमेव तेन परिक्रीणाति । तं संस्कृत्यात्मन् धत्ते । स एनमाविशति ॥ ६ ॥

न ह वै स्नात्वा भिक्षेत । अप ह वै स्नात्वा भिक्षां जयत्यप ज्ञातीनामशनायामप पितॄणाम् । स

---

तत्र समिदाधानेनाग्नौ प्रविष्टस्य चतुर्थांशस्य परिक्रयं दर्शयति—स यदग्नय इति । ' परिक्रीणाति ' समिधो मूल्यत्वेन अग्नये समर्प्य स्वकीयं तुरीयमंशं पुनरादत्ते । यतः ' पदा ' अंशेन समिदाधानेन च ' संस्कृत्य ' उत्कृष्टं कृत्वा पुनः ' आत्मन् ' आत्मनि स्वरूपे धारयति । स भागोऽप्यग्नेः सकाशात् प्रतिनिवृत्य ' एनं ' ब्रह्मचारिणम् ' आविशति ' ॥ ४ ॥

मृत्यौ प्रविष्टस्य पादस्य परिक्रयार्थत्वेन भिक्षाचर्यं विधत्ते—अथ यदात्मानमिति । ' अथ ' उपनयनानंतरम् ' आत्मानं ' ' दरिद्रीकृत्य ' दरिद्रमिव कृत्वा ' अह्रीः ' लज्जारहितः ' भूत्वा ' ' भिक्षेत ' वृत्त्यर्थं याचेत । य एवास्येत्यादि पूर्ववद्योज्यम् ॥ ५ ॥

आचार्यगतस्य पादस्य तत्परिचर्यया परिक्रयणं दर्शयति—अथ यदाचार्यवचसमिति । आचार्यवाक्यं तत्र युक्तायुक्तचिन्ता न कार्येत्यर्थः । तथा तस्मै ' आचार्याय ' पादसंवाहनादिलक्षणं परिचर्यारूपं ' कर्म करोति ' इति च यदस्ति तेनेति संबंधः । गतमन्यत् ॥ ६ ॥

ब्रह्मचर्यायां क्रियमाणस्य परिचरणस्य परिक्रयार्थत्वमुक्तम्, इदानीं समृद्ध्यादिहेतुतामप्याह—न ह वा इति ।

---

१–भिक्षायां षडधिकारिण इत्याहात्रिः–" यतिश्च ब्रह्मचारी च विद्यार्थी गुरुपोषकः । अध्वगः क्षीणवृत्तिश्च षडेते भिक्षुकाः स्मृताः " ( अ. स्मृ. १६२ । ) इति । तत्रापि–" यतिश्च ब्रह्मचारी च पक्वान्नस्वामिनावुभौ " इति विशेषः । तेनात्र ब्रह्मचारिणा पक्वान्नमेव भिक्षितव्यम् । न कदाचिदप्यामम् इति गम्यते ॥

श्लाघेत तां भिक्षेतेत्याहुस्तल्लोक्यमिति स यद्यन्यां भिक्षितव्यान्न विन्देदपि स्वामेवाचार्य्यजायां भिक्षेताथो स्वाम्मातरन्नैनꣳ सप्तम्यभिक्षिताऽतीयात्तमेवं विद्वाꣳसमेवं चरन्तꣳ सर्व्वे वेदाऽआविशन्ति यथा ह वाऽअग्निः समिद्धो रोचतऽएवꣳ ह वै स स्नात्वा रोचते यऽएवं विद्वान् ब्रह्मचर्य्यं चरति ॥ ७ ॥

इति द्वितीयप्रपाठके षष्ठं ब्राह्मणम् ॥ ११।२।६ ॥ ( ३।३ ) ॥

इति तृतीयोऽध्यायः समाप्तः ॥ ११–३ ॥

---

एवं विद्वान्यस्या एव भूयिष्ठं श्लाघेत । तां भिक्षेतेत्याहुः । तल्लोक्यमिति । स यद्यन्यां भिक्षितव्यां न विंदेत् । अपि स्वामेवाचार्यजायां भिक्षेत । अथो स्वां मातरम् । नैनं सप्तम्यभिक्षिताऽतीयात् । तमेवं विद्वांसमेवं चरंतं सर्वे वेदा आविशंति । यथा ह वा अग्निः समिद्धो रोचते । एवं ह वै स स्नात्वा रोचते । य एवं विद्वान् ब्रह्मचर्यं चरति ॥ ७ ॥

---

' न ' खलु ' स्नात्वा ' स्नानेन गुरुकुलात् प्रतिनिवृत्य ' भिक्षेत ' । कस्य हेतोः ? स्नानानंतरं हि भिक्षाभक्षणं ' अपजयति ' अतिक्रामति । पुनस्तस्य याचनखेदो न भवतीत्यर्थः । न केवलं स्वस्यैवैतत्फलम् । अपि तु स्ववंश्यानां सर्वेषामित्याह–अप ज्ञातीनामिति । ' ज्ञातीनां ' स्वगोत्रजानां संबंधिनी या 'अशनाया' अशनेच्छा क्षुत्पिपासा तामपि 'अपजयति' तथा 'पितॄणां' संबन्धिनीमपि अशनायामपजयति । अशनशब्दात् क्यचि " अशनायोदन्यधनाया बुभुक्षापिपासा. " ( पा. सू. ७ । ४ । ३४ ) इति निपात्यते । स एवं विद्वानित्यादि । ' एवं ' उक्तरीत्या भिक्षाचरणस्य प्राशस्त्यं ' विद्वान् ' ' सः ' ब्रह्मचारी ' यस्याः ' एव भिक्षितायाः स्त्रियः सकाशात् ' भूयिष्ठं ' बहुतरमन्नं लभ्यत इति ' श्लाघेत ' ' तां भिक्षेत ' ' इत्याहुः ' अभिज्ञाः कथयंति । तत्र निमित्तमप्याह–तल्लोक्यमिति । यद्धि भूयिष्ठमन्नं भिक्षातो लब्धम् । तदेव हि स्नानादूर्ध्वमतिवृद्धं सत् ' लोक्यं ' लोकहितं भवति । भिक्षितव्याभावात् भिक्षालोपशंका न कार्येत्याह–स यद्यन्यामिति । निगदसिद्धमेतत् । नैनं सप्तमीत्यादि । ' सप्तमी ' सप्तसंख्यापूरणी रात्रिः ' अभिक्षिता ' भिक्षाचरणरहिता सती ' एनं ' ब्रह्मचारिणं ' नातीयात् ' नातिक्रामेत् । स्मर्यते अतिक्रमणे महान् दोषः– " अकृत्वा भैक्ष्यचरणमसमिद्ध्य च पावकम् । अनातुरः सप्तरात्रमवकीर्णिव्रतं चरेत् " (मनुस्मृ. २ । १८७) इति । विदुषो ब्रह्मचारिणः फलमाह–तमेवं विद्वांसमिति । उक्तमर्थजातं 'विद्वांसं' जानंतम् । ज्ञात्वा च एवमेव समिदाहरणादीनि ' चरंतं ' कुर्वंतम् । ' स्नात्वा ' समावर्तनं कृत्वा । 'रोचते' दीप्यते । स्पष्टमन्यत् ॥ ७ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यंदिनीयशतपथब्राह्मणभाष्ये एकादशकांडे तृतीयेऽध्याये तृतीयं ब्राह्मणम् ॥ ( ११ । ३ । ३ ) ॥

---

१–तिस्रोऽप्रत्याख्यायिन्यः । षड् द्वादशापरिमिता वा । मातरं प्रथमामेके । ( पार. गृ. सू. २ । ५ । ५–७ ) इति ।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं,
सप्ताब्धीन्पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटं च ॥
धान्याद्रिं धन्यजन्मा तिलभवमतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान्गुडकृतमजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणजमनृणः शार्करं चार्कतेजा,
रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये एकादशकाण्डे तृतीयोऽध्यायः समाप्तः ॥ ( ११ । ३ ) ॥



# अथ चतुर्थेऽध्याये प्रथमं ब्राह्मणम् ।

## द्वितीयप्रपाठके च सप्तमं ब्राह्मणम् ।



उद्दालको हारुणिः । ( रु ) उदीच्यान्वृतो धावयाञ्चकार तस्य निष्कऽ उपाहितऽआसैतद्ध स्म वै तत्पूर्वेषां वृतानां धावयतामेकधनमुपाहितं भवत्युपवल्हाय बिभ्यतां तान्होदीच्यानां ब्राह्मणान्भीर्व्विवेद ॥ १ ॥

कौरुपाञ्चालो वाऽअयम्ब्रह्मा ब्रह्मपुत्रः । ( त्रो ) यद्वै नोऽयमर्द्धन्न पर्य्यादुदीत हन्तैनम्ब्रह्मोद्यमाह्वयामहाऽइति केन व्वीरेणेति स्वैदायनेनेति शौनको ह स्वैदायनऽआस ॥ २ ॥

---

उद्दालको हारुणिरुदीच्यान्वृतो धावयांचकार । तस्य निष्क उपाहित आस । एतद्ध स्म वै तत्पूर्वेषां वृतानां धावयतामेकधनमुपाहितं भवति । उपवल्हाय बिभ्यतां तान्होदीच्यानां ब्राह्मणान् भीर्विवेद ॥ १ ॥

कौरुपांचालो वा अयं ब्रह्मा ब्रह्मपुत्रः । यद्वै नोऽयमर्द्धं न पर्याददीत । हंतैनं ब्रह्मोद्यमाह्वयामहा इति । केन वीरेणेति । स्वैदायनेनेति । शौनको ह स्वैदायन आस ॥ २ ॥

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

इत्थं तृतीये अग्निहोत्रं प्रशस्य तत्प्रसंगात् ब्रह्मचारिधर्माश्च निरूपिताः । अथ चतुर्थे दर्शपूर्णमासयागस्यैव भावनाविशिष्टाः केचन धर्माः मित्रविंदादयश्च प्रतिपाद्यंते । तत्र प्रथमं विजिगीषुकथारूपेण प्रश्नप्रतिवचनाभ्यां दर्शपूर्णमासावेव सर्वोत्पत्तिनिमित्तत्वेन स्तोतुकामः तत्प्रश्नप्रतिप्रश्नोपयोगिनीमाख्यायिकामवतारयति—उद्दालको हारुणिरिति । पुरा खलु ' आरुणिः ' अरुणस्य पुत्रः उद्दालकाख्यः ऋषिः आर्त्विज्यया ' वृतः ' सन् ' उदीच्यान् ' उदग्देशान् ' धावयांचकार ' जगाम । अथ तेषूदीच्यदेशेषु गतस्य उद्दालकस्य ' निष्कः ' हिरण्मयो दीनारः ' उपाहितः ' तद्रुपार्जितः ' आस ' उपायनत्वेन निक्षिप्तो बभूव । एतस्य प्रयोजनमाह—एतद्ध स्मेति । ' पूर्वेषां ' पुरातनानाम् आर्त्विज्याय ' वृतानां ' ' धावयतां ' जनपदं गच्छतां ब्राह्मणानां श्रेष्ठ्यपरीक्षार्थं ' एकधनं ' मुख्यं धनं ' उपाहितं ' निक्षिप्तं भवति स्म । तदेतदत्र क्रियत इत्यर्थः । निष्कोपधानस्य कारणमाह—उपवल्हाय बिभ्यतामिति । बहूनां मध्ये कस्यचित् ज्ञानाधिक्यतारतम्येन जयपराजयाध्यवसानहेतुकं प्राधान्यमुपवल्हः । तत्कर्तुं ' बिभ्यतां ' भीतिं प्राप्नुवतां ' उदीच्यानां ' केवलं निष्क एव ' उपाहित आस ' । तद्ग्रहणाय परस्परं विवदमानानां ज्ञानाधिक्यं स्वयमेव ज्ञास्यते इत्यनेनाभिप्रायेणेत्यर्थः । अथोदीच्यदेशसंबन्धिनः ' ब्राह्मणान् ' ' भीः ' भीतिः ' विवेद ' प्राप्नोत् ॥ १ ॥

कौरुपांचालो वा इत्यादि । कुरुपंचालाख्यदेशनिवासी अयमुद्दालकः ' ब्रह्मा ' वेदाढ्यः ' ब्रह्मपुत्रः ' ब्रह्मिष्ठस्य पुत्रश्च, अतोऽयं महाप्रभाववान् ' नः ' अस्माकं ' अर्द्धं ' अर्द्धशब्दो देशवाची । अस्मत्समीप-

ते होचुः । स्वैदायन त्वया व्वीरेणेमं प्रतिसंयतामहाऽइति स होवाचो-पात्र खलु रमताहं न्वेनं व्वेदानीति तᳫं हाभिप्रपेदे तᳫं हाभिप्रपन्नमभ्युवाद स्वैदायना३ऽ इति हो३ गौतमस्य पुत्रेतीतरः प्रतिशुश्राव तᳫं ह तत-ऽएव प्रष्टुं दध्रे ॥ ३ ॥

स वै गौतमस्य पुत्र व्वृतो जनं धावयेत् । ( य्यो ) य्यो दर्शपूर्णमासयोरष्टौ पुरस्तादाज्यभागान्विद्यात्पञ्च मध्यतो हविर्भागान्षट् प्राजापत्यानष्टा-ऽउपरिष्टादाज्यभागान् ॥ ४ ॥

---

ते होचुः । स्वैदायन त्वया वीरेणेमं प्रतिसंयतामहा इति । स होवाच—उपात्र खलु रमत । अहं न्वेनं वेदानीति । तं हाभिप्रपेदे । तं हाभिप्रपन्नमभ्युवाद स्वैदायना ३ इति । हो ३ गौतमस्य पुत्रेति इतरः प्रतिशुश्राव । तं ह तत एव प्रष्टुं दध्रे ॥ ३ ॥

स वै गौतमस्य पुत्र वृतो जनं धावयेत् । यो दर्शपूर्णमासयोरष्टौ पुरस्तादाज्यभागान् विद्यात् । पंच मध्यतो हविर्भागान् । षट् प्राजापत्यान् । अष्टा उपरिष्टादाज्यभागान् ॥ ४ ॥

---

देशं प्राप्य येन हेतुना निष्कं 'न पर्याददीत' तादृगुपायदर्शनहर्षद्योतको हंतशब्दः । 'हंत' तत्कारणमस्माभि-र्दृष्टम् । 'एनं' उद्दालकं 'ब्रह्मोद्यं' ब्रह्म वेदः तदेकसमधिगम्यं रहस्यं अर्थं प्रति उद्यम् 'आह्वयामहै इति' तेन चास्य मुनेः प्राशस्त्यं ज्ञास्यत इत्यर्थः । केन वीरेणेत्यादि । ते ब्राह्मणाः केन वीर्यवता प्रति-वादिना एतत् ब्रह्मोद्यं कर्तुं शक्यत इति विचार्य स्वैदायनाख्येन महर्षिणेति निश्चितवंतः । तत्र शुनक-गोत्रजः स्वैदायनाख्यो महर्षिः 'आस' आगतोऽभवत् ॥ २ ॥

'ते होचुः' तमवोचन्—हे 'स्वैदायन !' 'वीरेण' श्रौताध्ययनजनितवीर्यवता 'त्वया इमम्' उद्दालकम् 'संयतामहा इति' प्रतिवादित्वेन सम्यक्प्रपन्नं करवामहा इति । त्वमनेन सर्वं संवदस्वेत्यर्थः । एवमुक्तः 'सः' खलु स्वैदायनः 'उवाच' उक्तवान् । अत्रास्मिन् विषये यूयं खलु सर्वे 'उपरमत' तूष्णीमवस्थिताः भवत । 'अहं नु' अहमेवाद्य 'एनम्' ऋषिं 'वेदानि' अस्य सामर्थ्यं इयदिति जानामि । एवमुक्त्वा तमुद्दालकम् 'अभिप्रपेदे' अभिजगाम । 'तम्' 'अभिप्रपन्नम्' उद्दालकः 'अभ्युवाद' स्वैदायनेत्या-मंत्रितवान् । "दूराद्धूते च" ( पा. सू. ८ । २ । २४ ) इति प्लुतः । 'इतरः' स्वैदायनोऽपि तं 'हो३' 'गौतमस्य पुत्रेति' 'प्रतिशुश्राव' प्रतिबभाषे । हो इति अभिमुखीकरणार्थो निपातः । अत्रापि प्लुतः पूर्ववत् । 'ततः' अनन्तरमेव स्वैदायनः तमुद्दालकं 'प्रष्टुम्' 'दध्रे' उपचक्रमे ॥ ३ ॥

स वै गौतमस्य पुत्रेत्यादि । हे 'गौतमस्य पुत्र !' स खलु आर्त्विज्याय 'वृतः' सन् 'जनं' जनपदम् 'धावयेत्' 'यः' दर्शपूर्णमासयागयोः 'पुरस्तात्' पूर्वभागे अनुष्ठेयान् 'आज्यभागान्' आज्यहविष्कान-ष्टौ यागान् 'विद्यात्' जानीयात् । 'मध्यतः' मध्यभागे अनुष्ठेयान् 'हविर्भागान्' पुरोडाशादिहविः-साध्यान् पंचसंख्याकान् विद्यात् । तथा 'प्राजापत्यान्' प्रजापतिदेवताकान् 'षट्'—संख्याकान् विद्यात् ।

स वै गौतमस्य पुत्र वृतो जनं धावयेत् । (य) यस्तद्दर्शपूर्णमासयोर्विद्याद्यस्मादिमाः प्रजाऽअदंतका जायंते यस्मादासां जायंते यस्मादासां प्रभिद्यंते यस्मादासाᳬं सन्तिष्ठन्ते यस्मादासां पुनरुत्तमे वयसि सर्वऽ एव प्रभिद्यन्ते यस्मादधरऽ एवाग्रे जायन्तेऽथोत्तरे यस्मादणीयाᳬंसऽ एवाधरे प्रथीयाᳬंसऽ उत्तरे यस्माद्दᳬंष्ट्रा वर्षीयाᳬंसो यस्मात्समाऽ एव जम्भ्याः ॥ ९ ॥

स वै गौतमस्य पुत्र वृतो जनं धावयेत् । (य) यस्तद्दर्शपूर्णमासयोर्विद्याद्यस्मादिमाः प्रजा लोमशा जायन्ते यस्मादासां पुनरिव श्मश्रूण्यौपपक्ष्याणि दुर्वीरिणानि जायन्ते यस्माच्छीर्षण्येवाग्रे पलितो भवत्यथ पुनरुत्तमे वयसि सर्वऽएव पलितो भवति ॥ ६ ॥

---

स वै गौतमस्य पुत्र वृतो जनं धावयेत् । यस्तद्दर्शपूर्णमासयोर्विद्यात् । यस्मादिमाः प्रजा अदंतका जायंते । यस्मादासां जायंते । यस्मादासां प्रभिद्यंते । यस्मादासां संतिष्ठन्ते । यस्मादासां पुनरुत्तमे वयसि सर्व एव प्रभिद्यंते । यस्मादधर एवाग्रे जायंते । अथोत्तरे । यस्मादणीयांस एवाधरे । प्रथीयांस उत्तरे । यस्माद्दंष्ट्रा वर्षीयांसः । यस्मात्समा एव जंभ्याः ॥ ९ ॥

स वै गौतमस्य पुत्र वृतो जनं धावयेत् । यस्तद्दर्शपूर्णमासयोर्विद्यात् । यस्मादिमाः प्रजा लोमशा

---

तथा ' उपरिष्टाद् ' अवसानभागे क्रियमाणान् ' अष्टौ ' ' आज्यभागान् ' यो विद्यात् । स एव जनपदं धावयेदित्येकः प्रश्नः ॥ ४ ॥

अन्यं प्रश्नं दर्शयति—स वा इति । 'तत्' वक्ष्यमाणमर्थजातम् । गतमन्यत् । यस्मादिमाः प्रजा इत्यादि । ' यस्मात् ' कारणात् 'इमाः प्रजाः' ' अदंतकाः ' दंतरहिताः ' जायन्ते ' । ' यस्मात् ' ' आसां ' प्रजानां जननादूर्ध्वं पंचमासेषु गतेषु दन्ता जायन्ते । यस्मादेव कारणात् ' आसां ' प्रजानां सप्तमाष्टमादिवर्षेषु ते दन्ताः ' प्रभिद्यंते ' पततीत्यर्थः । यस्माच्च कारणात् ' आसां ' प्रजानां ' संतिष्ठंते ' दंताः सम्यक् स्थिताः भवंति । यस्मादेव कारणात् ' उत्तमे ' चरमे 'वयसि' 'सर्वे एव' दंताः पतिताः भवंति । उत्पत्त्यवस्थायामपि ' अग्रे ' प्रथमं ' यस्मात् ' कारणात् 'अधरे' अधोभागवर्तिन एव दंताः 'जायंते' । अथानंतरं ' उत्तरे ' उपरिभागवर्तिनो दन्ता जायंते । अयं पौर्वापर्यनियमो यस्मादित्यर्थः । यस्मादणीयांस इत्यादि । तेषामधरोत्तरदंतानां यथाक्रममणुतरत्वं स्थूलतरत्वं च किंनिबंधनमिति प्रश्नः । तथा ' यस्मात् ' कारणात् ' दंष्ट्राः ' दशनसाधनीभूताः पुरोवर्तिनो दंताः ' वर्षीयांसः ' वृद्धतराः उन्नततराः । यस्माच्च कारणात् ' जंभ्याः ' पार्श्ववर्तिनो दंताः 'समाः' समानाकृतय एव । यदेतत् कारणजातं दर्शपूर्णमासावयवेषु यो वक्तुं जानाति, स आर्त्विज्यमर्हति । जानासि चेत् ब्रूहि इति प्रश्नाभिप्रायः ॥ ९ ॥

पुनरन्यं प्रश्नमुद्भावयति—स वै गौतमस्य पुत्रेति । यस्मात्कारणात् ' इमाः ' जायमानाः ' प्रजाः ' ' लोमशाः ' केशयुक्ता एव ' जायंते ' । यस्मात्कारणात् 'आसां' प्रजानां ' औपपक्ष्याणि ' उपपक्षो बाहुमूलं

स वै गौतमस्य पुत्र व्वृतो जुनं धावयेत् । ( द्य ) यस्तुदुर्शपूर्णमासुयो-र्व्विद्याद्युस्मात्कुमारुस्य रेतः सिक्तं नु संभुवति युस्मादुस्य मध्यमे व्वुयसि संभुवति युस्मादुस्य पुनरुत्तमे व्वुयसि नु संभुवति ॥ ७ ॥

यो गायत्रीᳫं हुरिणीम् । ( ज्ज्यो ) ज्ज्योतिष्पक्षां युजमानᳫं स्वर्गं लोकुमभिवुहन्तीं व्विद्यादिति तुस्मै ह निष्कं प्रददावनूचानुः स्वैदाय-नासि सुवुर्णं वाव सुवर्णविदे ददुतीति तुᳫं होपगुह्य निश्चक्राम तुᳫं ह पप्रच्छुः किमिवैषु गौतमुस्य पुत्रोऽभूदिति ॥ ८ ॥

---

जायंते । यस्मादासां पुनरिव श्मश्रूण्यौपपक्ष्याणि दुर्वीरिणानि जायंते । यस्माच्छीर्षण्येवाग्रे पलितो भवति । अथ पुनरुत्तमे वयसि सर्व एव पलितो भवति ॥ ६ ॥

स वै गौतमस्य पुत्र वृतो जनं धावयेत् । यस्तद्दर्शपूर्णमासयोर्विद्यात् । यस्मात् कुमारस्य रेतः सिक्तं न संभवति । यस्मादस्य मध्यमे वयसि संभवति । यस्मादस्य पुनरुत्तमे वयसि न संभवति ॥७॥

यो गायत्रीं हरिणीं ज्योतिष्पक्षां यजमानं स्वर्गं लोकमभिवहंतीं विद्यादिति । तस्मै ह निष्कं प्रददौ । अनूचानः स्वैदायनासि । सुवर्णं वाव सुवर्णविदे ददतीति । तं होपगुह्य निश्चक्राम । तं ह पप्रच्छुः । किमिवैष गौतमस्य पुत्रोऽभूदिति ॥ ८ ॥

---

तत्संबंधीनि रोमाणि, मुखप्रांतवर्तीनि श्मश्रूणि च ' दुर्वीरिणानि ' वीरणास्तृणविशेषाः । लुप्तोपममेतत् । दुष्टानि वीरणानीव । पुनरेव यौवनावस्थायां ' अग्रे ' प्रथमं ' शिर्षणि ' शिरस्येव ' पलितो भवति ' केशेषु शौक्ल्यं भवति । अनंतरं ' उत्तमे ' चरमे वयसि । सर्वदेहः ' पलितो भवति ' श्वेतरोमांकित इत्यर्थः ॥ ६ ॥

अन्यं प्रश्नमुद्भावयति—स वै गौतमस्य पुत्रेति । ' यस्मात् ' कुमारावस्थायां ' सिक्तं रेतः ' अपत्यरूपेण नोत्पद्यते । ' मध्यमे ' यौवने ' वयसि ' यस्मादपत्यरूपेण तदुत्पद्यते । यस्मादेव कारणात् पुनः ' उत्तमे ' वार्द्धक्ये ' वयसि ' पुनरपत्यरूपेण नोत्पद्यते । तत्कारणं कीदृगिति वद ॥ ७ ॥

अपिच ' हरिणीं ' हरितवर्णां ' ज्योतिष्पक्षां ' ज्योतिर्मयपक्षोपेतां ' यजमानं स्वर्गं लोकमभिवहंतीं ' ' गायत्री ' 'यो विद्यात्' जानीयात् स एवार्त्विजीनो भवति । तस्मै ह निष्कमित्यादि । एवं स्वैदायनेन पृष्टः प्रतिवक्तुमसमर्थः सन्नुद्दालकः स्वस्योपायनत्वेन कल्पितं 'निष्कं' ' तस्मै ' स्वैदायनाय 'प्रददौ' । ' स्वैदायन ! ' त्वम् ' अनूचानः ' रहस्यविद्यामधीतवान् भवसि असत्तोऽधिकं जानासि । ' सुवर्णविदे ' सुष्ठुवर्ण-नीयमर्थं जानते पुरुषाय ' सुवर्णं ' शोभनवर्णयुक्तं हिरण्यं ' ददति ' धनिनः प्रयच्छंति । अतो हेतोः हे स्वैदायन ! त्वमेव निष्कमुपादातुमर्हसीत्यर्थः । तं होपगुह्येत्यादि । ' तं ' स्वैदायनं ' उपगुह्य ' आलिंग्य उद्दालकस्तस्मात् स्थानात् ' निश्चक्राम ' निष्क्रान्तवान् । तं ह पप्रच्छुरित्यादि । ' एषः ' ' गौतमस्य पुत्रः ' उद्दालकः किमात्मकः अभूदिति स्वैदायनं ' पप्रच्छुः ' ते उदीच्याः ब्राह्मणाः पृष्टवंतः ॥ ८ ॥

स होवाच । यथा ब्रह्मा ब्रह्मपुत्रो मूर्द्धाऽस्य विपतेद्यऽएनमुपवल्हेतेति ते ह ततऽएव विप्रेयुस्तᳬँ ह ततऽएव समित्पाणिः प्रतिचक्रम ऽउप त्वाऽऽयानीनि किमध्येष्यमाणऽइति यानेव मा प्रश्नानप्राक्षीस्तानेव मे विब्रूहीति स होवाचानुपेतायैव तऽएनान्ब्रवाणीति ॥ ९ ॥

तस्माऽउ हैतदुवाच । द्वावाघारौ पञ्च प्रयाजाऽआग्नेयऽआज्यभागोऽष्टमऽएतेऽष्टौ पुरस्तादाज्यभागाः सौम्य ऽआज्यभागो हविर्भागाणां प्रथमो हविर्हि सोमऽआग्नेयः पुरोडाशोऽग्नीषोमीय ऽउपाᳬँशुयाजोऽग्नीषोमीयः पुरोडाशोऽग्निः स्विष्टकृदेते पञ्च मध्यतो हविर्भागाः ॥ १० ॥

---

स होवाच—यथा ब्रह्मा ब्रह्मपुत्रः । मूर्द्धाऽस्य विपतेत्, य एनमुपवल्हेतेति । ते ह तत एव विप्रेयुः । तं ह तत एव समित्पाणिः प्रतिचक्रमे, उप त्वाऽऽयानीति । किमध्येष्यमाण इति । यानेव मा प्रश्नानप्राक्षीः । तानेव मे विब्रूहीति । स होवाच—अनुपेतायैव त एनान् ब्रवाणीति ॥ ९ ॥

तस्मा उ हैतदुवाच—द्वावाघारौ पंच प्रयाजा आग्नेय आज्यभागोऽष्टमः, एतेऽष्टौ पुरस्तादाज्यभागाः । सौम्य आज्यभागो हविर्भागाणां प्रथमः । हविर्हि सोमः । आग्नेयः पुरोडाशः । अग्नीषोमीय उपांशुयाजः । अग्नीषोमीयः पुरोडाशः । अग्निः स्विष्टकृत् । एते पंच मध्यतो हविर्भागाः ॥ १० ॥

---

स होवाचेति । 'स' खलु पृष्टः स्वैदायन 'उवाच' 'ब्रह्मा' स्वयं वेदाढ्यः 'ब्रह्मपुत्रः' ब्रह्मिष्ठस्य गौतमस्य पुत्रः इत्येतावत् 'यथा' वृत्तमेव । अपितु 'यः' पुरुषः 'एनं' उद्दालकम् 'उपवल्हेत' प्रधानं श्रेष्ठं कुर्यात् । "बर्ह वल्ह प्राधान्ये"–( धा. पा. भ्वा. आ. ६३९ ) इति धातुः । 'अस्य' पुरुषस्य 'मूर्द्धा विपतेत्' अल्पज्ञानस्याधिक्येन विपर्ययग्रहणात् तन्निमित्तं शिरःपतनं भवतीत्यर्थः । ततः 'ते' ब्राह्मणाः 'विप्रेयुः' विविधं स्वकीयं देशं जग्मुरित्यर्थः । तं ह तत एवेत्यादि । ततस्तस्मात्प्रश्नादेव हेतोः उद्दालकः 'समित्पाणिः' हस्ते समिधं धारयन् शिष्यभावं प्राप्तः उपनयनकालेनैव स्वैदायनं 'प्रतिचक्रमे' प्राप । उप त्वेत्यादि । तयोरुक्तिप्रत्युक्ती । यानेवेति । 'यान्' दर्शपूर्णमासयोः अष्टौ पुरस्तादाज्यभागानित्यादिना यानेव प्रश्नान् 'मा' माम् 'अप्राक्षीः' पृष्टवानसि । 'तानेव मे' विविच्य 'ब्रूहि' कथयेति । 'सः' खलु स्वैदायनः 'उवाच' महतस्तव उपनयनमनुचितम् अतः 'अनुपेताय एव' 'ते' तुभ्यं 'एनान्' पृष्टानर्थान् अहं 'ब्रवाणि' इति ॥ ९ ॥

तस्मा उ हैतदुवाचेति । एवमुक्त्वा 'तस्मै' उद्दालकाय 'एतत्' वक्ष्यमाणं सर्वमुवाच । एषा आख्यायिका वक्ष्यमाणविद्यास्तुत्यर्था । तत्र तावदष्टौ पुरस्तादाज्यभागानाह–द्वावाघारावित्यादि । 'पुरस्तात्' प्रधानयागात्पूर्वं अनुष्ठेया आज्यहविष्का यागाः 'आज्यभागाः' । अथ पंच हविर्भागान् दर्शयति–सौम्य आज्यभाग इति । सोमदेवताको द्वितीयः 'आज्यभागः' 'हविर्भागाणां प्रथमः' आदिमः । ननु–आज्यहविष्कस्य सोमयागस्य कथं हविर्भागत्वं तत्राह–हविर्हीति । यद्यपि अस्य आज्यद्रव्यकत्वं तथापि देवता-

प्राशित्रं चेडा च । यच्चाग्नीधऽआदधाति ब्रह्मभागो यजमानभागो-ऽन्वाहार्य्यऽएते षट् प्राजापत्यास्त्रयोऽनुयाजाश्चत्वारः पत्नीसंयाजाः समिष्टयजुरष्टममेतेऽष्टाऽउपरिष्टादाज्यभागाः ॥ ११ ॥

( ० ) अथ यदपुरोऽनुवाक्यकाः प्रयाजा भवन्ति । तस्मादिमाः प्रजाऽअदन्तका जायन्तेऽथ यत्पुरोनुवाक्यवन्ति हवीꣳषि भवन्ति तस्मादासां जायन्तेऽथ यदपुरोनुवाक्यका ऽअनुयाजा भवन्ति तस्मादासां प्रभिद्यन्ते-ऽथ यत्पुरोनुवाक्यवन्तः पत्नीसंयाजा भवन्ति तस्मादासाꣳ संतिष्ठन्तेऽथ यदपुरोनुवाक्यकꣳ समिष्टयजुर्भवति तस्मादासां पुनरुत्तमे व्वयसि सर्व्वऽएव प्रभिद्यन्ते ॥ १२ ॥ शतम् ॥ ६७०० ॥

---

प्राशित्रं चेडा च यच्चाग्नीध आदधाति ब्रह्मभागो यजमानभागोऽन्वाहार्य एते षट् प्राजापत्याः। त्रयोऽनुयाजाश्चत्वारः पत्नीसंयाजाः समिष्टयजुरष्टममेतेऽष्टा उपरिष्टादाज्यभागाः ॥ ११ ॥

अथ यदपुरोऽनुवाक्यकाः प्रयाजा भवंति । तस्मादिमाः प्रजा अदंतका जायंते । अथ यत्पुरोऽनुवाक्यवंति हवींषि भवंति, तस्मादासां जायंते । अथ यदपुरोऽनुवाक्यका अनुयाजा भवंति, तस्मादासां प्रभिद्यंते । अथ यत्पुरोऽनुवाक्यवंतः पत्नीसंयाजा भवंति, तस्मादासां संतिष्ठंते । अथ यदपुरोऽनुवाक्यकं समिष्टयजुर्भवति, तस्मादासां पुनरुत्तमे वयसि सर्वे एव प्रभिद्यंते ॥ १२ ॥

---

भूतः 'सोमः' स्वयं हविरात्मकः "सोमेन यजेत" इति श्रुतेः । अग्नीषोमीय उपांशुयाज इति । "तावब्रूतामग्नीषोमौ आज्यस्यैव नौ उपांशु पौर्णमास्यां यजेत" इति श्रुतत्वात् उपांशुयाजस्याग्नीषोमदेवताकत्वम् । तथाच स्विष्टकृद्यागांताः 'एते पंच मध्यतः' मध्ये अनुष्ठेया हविर्भागाः' हविः पुरोडाशादि द्रव्यं भागो भागधेयं येषां ते तथोक्ताः ॥ १० ॥

षट् प्राजापत्यानाह—प्राशित्रं चेति । यच्चाग्नीध इति । 'अग्नीधे' आग्नीध्राय यं चतुर्द्धाकृतपुरोडाशभागं 'आदधाति' हस्ते प्रक्षिपति, अयं तृतीयः प्राजापत्यः । 'एते' प्राशित्राद्यन्वाहार्यांताः 'षट् प्राजापत्याः' प्रजापतिदेवताकाः । अथाष्टसंख्यान् उपरिष्टादाज्यभागानाह—त्रयोऽनुयाजा इति । 'अष्टमं' अष्टसंख्यापूरकम् ॥ ११ ॥

इत्थं प्रथमप्रश्नविषयमुक्त्वा द्वितीयेन प्रश्नेन पृष्टानाह—अथ यदपुरोऽनुवाक्यका इति । यस्मात् पुरोऽनु-

---

१—शतपथश्रुतिमूलककात्यायनश्रौतसूत्रक्रमेण—न चतुर्द्धाकृतः पुरोडाशभागः प्राजापत्यो भवितुमर्हति । तदितरेषां ब्रह्मादिचतुर्द्धाकृतानां प्राजापत्यत्वानुक्तेः । ब्रह्मभागो यजमानभाग इति भागसाहित्यात् अग्नीत्संप्रदानकः षडवत्तभागस्तृतीयः प्राजापत्यः । तथा च सूत्रक्रमः "संचरमभ्युक्ष्य प्राशित्रमवद्यति यवमात्रं पिप्पलमात्रं वा अन्यतरत आज्यमुभयतो वाऽऽग्नेयात् । भागांश्च" इत्युपक्रम्य "द्यावापृथिव्योरुपह्वानेऽग्नीधे षडवत्तम्" इति । अत्र कर्कभाष्ये उपन्यस्ता श्रुतिः "अथ यत्राहोपहूते द्यावापृथिवी इति तदग्नीध आदधाति "( का. श्रौ. सू. ३।७२।७३।८८ ) इति हि श्रूयत इति । अत्रापि "यच्चाग्नीध आदधाति" इति श्रुतिः । इमे अपि श्रुत्यौ समानतिङन्ते इति ॥

(न्तेऽथ) अथ यदनुवाक्यामनूच्य । याज्यया यजति तस्मादधरऽ एवाग्रे जायन्तेऽथोत्तरेऽथ यद्गायत्रीमनूच्य त्रिष्टुभा यजति तस्मादणीयाꣳसऽएवाधरे प्रथीयाꣳसऽउत्तरेऽथ यत्प्राञ्चावाघारावाघारयति तस्माद्दꣳष्ट्रा व्वर्षीयाꣳसोऽथ यत्सच्छन्दसावेव संयाज्ये भवतस्तस्मात्समाऽ एव जम्भ्याः ॥ १३ ॥

(ऽ) अथ यद्बर्हि स्तृणाति । तस्मादिमाः प्रजा लोमशा जायन्तेऽथ यत्पुनरिव प्रस्तरꣳ स्तृणाति तस्मादासां पुनरिव इमश्रूण्यौपपक्ष्याणि

अथ यदनुवाक्यामनूच्य याज्यया यजति । तस्मादधर एवाग्रे जायंते । अथोत्तरे । अथ यद्गायत्रीमनूच्य त्रिष्टुभा यजति । तस्मादणीयांस एवाधरे । प्रथीयांस उत्तरे । अथ यत्प्रांचावाघारावाघारयति, तस्माद्दंष्ट्रा वर्षीयांसः । अथ यत्सच्छंदसावेव संयाज्ये भवतः, तस्मात्समा एव जंभ्याः ॥ १३ ॥

अथ यद्बर्हिः स्तृणाति; तस्मादिमाः प्रजा लोमशा-जायंते । अथ यत्पुनरिव प्रस्तरं स्तृणाति; तस्मादासां पुनरिव इमश्रूण्यौपपक्ष्याणि दुर्वीरिणानि जायंते । अथ यत्केवलमेवाग्रे प्रस्तरमनु-

वाक्यारहिताः केवलं याज्यावंतः ' प्रयाजा भवंति ' तस्मात् ' इमाः ' उत्पद्यमानाः ' प्रजा अदंतकाः ' दंतरहिताः ' जायंते । ' यस्मात् ' हवींषि ' आग्नेयादीनि अनुवाक्योपेतानि भवंति ' तस्मादासां ' प्रजानां दंताः ' जायंते ' । पुनरनुयाजा अनुवाक्यारहिता भवंतीति ' यत् ' यस्मात् तस्मादुत्पन्ना दंताः ' प्रभिद्यंते ' । पुनः ' पत्नीसंयाजा ' अनुवाक्योपेता भवंतीति यत् ' तस्मादासां ' प्रजानां पुनरुत्पन्ना दंताः ' संतिष्ठंते ' सम्यक् स्थिता भवंति । अथ समिष्टयजुराख्यं कर्म पुरोऽनुवाक्यारहितमिति यत् ' तस्मादासां ' प्रजानां ' पुनरुत्तमे ' चरमे ' वयसि ' ' सर्वे एव ' दंताः प्रभिन्ना भवन्ति ॥ १२ ॥

यस्मादधर एवाग्रे जायंते इत्यस्योत्तरमाह—अथ यदनुवाक्यामनूच्येति । ' यत् ' यतः पूर्वमनुवाक्यावचनं अधरदंतानां प्रथमोत्पत्तौ निमित्तं, अनुवाक्याया गायत्रीरूपं न्यूनच्छंदस्त्वं तदणीयस्त्वनिमित्तं, याज्याना पश्चात्प्रयोगः उपरितनदंतानां पश्चादुत्पत्तौ कारणं, याज्यानां त्रिष्टुप्छंदस्कत्वेनाप्येकादशाक्षरत्वं तत्प्रथीयस्त्वनिमित्तमित्यर्थः । ' यस्मात् दंष्ट्रा वर्षीयांसः ' इत्यस्योत्तरमाह—अथ यत्प्रांचाविति । यद्यस्मात् कारणात् आघाराख्यौ होमौ ' प्रांचौ ' प्रागपवर्गौ दीर्घधारया 'आघारयति' तस्मात्कारणात् दंष्ट्राख्या दंताः द्राघीयांसः । ' अथ ' यद्यस्मात् कारणात् ' संयाज्ये ' स्विष्टकृतो याज्यानुवाक्ये ' सच्छंदसौ ' समानच्छंदस्कचौ ' भवतः ' । ते च—" पिप्रीहि देवान्; " " अग्ने यदद्य विशः " इत्यादी । ते ' त्रिष्टुभौ ' यस्मात् तस्मात् कारणात् ' जंभ्याः ' दंताः ' समाः ' समानाकृतयो भवंतीति ॥ १३ ॥

अथ ' यस्मादिमाः प्रजाः लोमशा जायंते ' इत्यस्योत्तरमाह—अथ यद्बर्हिरिति । यद्यस्मात् वेद्यां 'बर्हिः स्तृ-

१—तथाऽऽह हौत्रपारिशिष्टे कात्यायनः—" त्रिष्टुभावृतुवत्यौ संयाज्ये, पिप्रीहि देवा २ उशतो यविष्ठाग्ने यदद्य विशो अध्वरस्य " इति दर्शयागे । पौर्णमासे तु—विराजौ संयाज्ये, प्रेद्धो अग्ने, इमो अग्ने इति ॥

दुर्बीरिणानि जायन्तेऽथ यत्केवलमेवाग्रे प्रस्तरमनुप्रहरति तस्माच्छीर्षण्येवाग्रे पलितो भवत्यथ यत्सर्व्वमेव बर्हिरनुप्रहरति तस्मात्पुनरुत्तमे व्वयसि सर्व्वऽ एव पलितो भवति ॥ १४ ॥

(त्यु) अथ यदाज्यहविषः प्रयाजा भवन्ति । तस्मात्कुमारस्य रेतः सिक्तं न सम्भवत्युदकमिवैव भवत्युदकमिव ह्याज्यमथ यन्मध्ये यज्ञस्य दध्ना पुरोडाशेनेति चरन्ति तस्मादस्य मध्यमे व्वयसि सम्भवति द्रप्सीवैव भवति द्रप्सीव हि रेतोऽथ यदाज्यहविषऽ एवानुयाजा भवन्ति तस्मादस्य पुनरुत्तमे व्वयसि न सम्भवत्युदकमिवैव भवत्युदकमिव ह्याज्यम् ॥१५॥

---

प्रहरति; तस्माच्छीर्षण्येवाग्रे पलितो भवति । अथ यत्सर्वमेव बर्हिरनुप्रहरति; तस्मात्पुनरुत्तमे वयसि सर्व एव पलितो भवति ॥ १४ ॥

अथ यदाज्यहविषः प्रयाजा भवंति; तस्मात्कुमारस्य रेतः सिक्तं न संभवति, उदकमिवैव भवति, उदकमिव ह्याज्यम् । अथ यन्मध्ये यज्ञस्य दध्ना पुरोडाशेनेति चरंति; तस्मादस्य मध्यमे वयसि संभवति, द्रप्सीवैव भवति, द्रप्सीव हि रेतः । अथ यदाज्यहविष एवानुयाजा भवंति; तस्मादस्य पुनरुत्तमे वयसि न संभवति, उदकमिवैव भवति, उदकमिव ह्याज्यम् ॥ १५ ॥

---

णाति' स्तीर्यमाणं तद्बर्हिर्लोमस्थानीयम् । अत एवान्यत्राम्नातम्-"लोमानि बर्हिर्वेदः शिखा" ( तै.आ. अन्तिमानुवाके) इति । श्मश्रूपपक्ष्यरोम्णां जन्मनः पुरस्तादुत्पत्तौ कारणमाह—अथ यत्पुनरिवेति । यद्यस्मात् कारणात् स्तीर्णे बर्हिषि 'पुनरिव' प्रस्तराख्यं दर्भमुष्टिं ' स्तृणाति ' तस्मात् कारणात् ' आसां ' प्रजानां पुनर्यौवने वयसि श्मश्रुप्रभृतीनि उत्पद्यंते । प्रथमं शिरस्येव पलिताविर्भावे निमित्तमाह-अथ यत् केवलमेवेति । यद्यस्मात् 'अग्रे' आदौ बर्हिषः प्रहरणात्पूर्वमेव 'केवलं' प्रस्तरमेव 'अनुप्रहरति' अनूच्यमाने सूक्तवाके अग्नौ प्रक्षिपति । तस्मादित्यादि सिद्धम् । अथ जीर्यदवस्थायां सर्वावयवेषु पलितत्वे कारणमाह—अथ यत्सर्वमेवेति । यद्यस्मात् समिष्टयजुर्होमकाले ' सर्वं ' निःशेषमेव कृत्स्नं स्तीर्णं ' बर्हिः ' अग्नौ ' अनुप्रहरति ' । तस्मादित्यादि गतम् ॥ १४ ॥

अथ यस्मात् कुमारस्य रेतः सिक्तं न संभवतीत्यादेः प्रश्नस्योत्तरमाह—अथ यदाज्यहविष इति । अथेत्यारंभे । यद्यस्मात्प्रयाजाः ' आज्यहविषः ' आज्यहविष्का भवंति, ' तस्मात्कुमारस्य रेतः ' उदकात्मना स्रवति; न तु देहरूपेण घनीभवतीत्यर्थः । अथ मध्यमे वयसि रेतसो देहरूपपरिणामे कारणमाह—अथ यन्मध्य इति । ' यज्ञस्य ' दर्शपूर्णमासाख्यस्य ' मध्ये ' मध्यभागे ' दध्ना ' सान्नाय्येन । इतिशब्दश्चार्थे । आग्नेयादि-' पुरोडाशेन ' च ' चरंति ' यजंति ' तस्मात् ' कारणात् । गतमन्यत् । उक्तं कार्यकारणभावं योजयति—द्रप्सीवैव भवतीति । एवशब्दश्चार्थे । आग्नेयादिपुरोडाशे तद्दध्यादिहविः 'द्रप्सीव' द्रप्साः घनीभूता बिंदवः तद्युक्तमेव भवति । पुनश्च ' रेतः ' सिक्तमपि ' द्रप्सीव ' द्रप्सयुक्तमिव भवति । यस्मादेवमनयोः साम्यं तस्मान्मध्यगतदध्यादियोगेन मध्यमवयस्कस्य रेतः द्रप्सयुक्तं सर्वशरीराकारेण घनीभवतीत्यर्थः । चरमे वयसि निषिक्तरेतसः प्रजारूपानुत्पत्तौ कारणमाह—अथ यदाज्यहविष एवानुयाजा इति । यद्यस्मात्

(य्वे) व्वेदिरेव गायत्री । तस्यै येऽष्टौ पुरस्तादाज्यभागाः स दक्षिणः पक्षो येऽष्टाऽ उपरिष्टादाज्यभागाः सऽउत्तरः पक्षः सैषा गायत्री हरिणी ज्योतिष्पक्षा यजमानथ्ँ स्वर्गं लोकमभिवहति यऽएवमेतद्वेद ॥ १६ ॥

इति द्वितीयप्रपाठके सप्तमं ब्राह्मणम् ॥ ११-२-७ ॥ ( ४. १. ) ॥

अथातः स्रुचोरादानस्य । तद्धैतदेके कुशला मन्यमाना दक्षिणेनैव जुहूमाददते सव्येनोपभृतन्न तथा कुर्याद्यो हैनं तत्र ब्रूयात्प्रतिप्रतिं न्वाऽ अयमध्वर्य्युर्य्यजमानस्य द्विषन्तं भ्रातृव्यमकत्प्रत्युद्यामिनमितीश्वरो ह तथैव स्यात् ॥ १ ॥

---

वेदिरेव गायत्री । तस्यै येऽष्टौ पुरस्तादाज्यभागाः; स दक्षिणः पक्षः । येऽष्टा उपरिष्टादाज्यभागाः; स उत्तरः पक्षः । सैषा गायत्री हरिणी ज्योतिष्पक्षा, यजमानं स्वर्गं लोकमभिवहति । य एवमेतद्वेद ॥ १६ ॥

अथातः स्रुचोरादानस्य । तद्धैतदेके कुशला मन्यमाना दक्षिणेनैव जुहूमाददते, सव्येनोपभृतम् । न तथा कुर्यात् । यो हैनं तत्र ब्रूयात्-प्रतिप्रतिं न्वा अयमध्वर्युर्यजमानस्य द्विषंतं भ्रातृव्यमकत्प्रत्युद्यामिनमिति । ईश्वरो ह तथैव स्यात् ॥ १ ॥

---

कारणात् प्रधानयागानंतरम् अनुष्ठेयाः अनुयाजाख्या यागाः प्रयाजवत् पुनः 'आज्यहविष एव' 'भवंति' । तस्मात् कारणात् अस्य पुरुषस्य बाल्ये बयसीव पुनरपि 'उत्तमे' चरमे 'वयसि' रेतः शरीराकारेण नोत्पद्यते । पूर्ववदेव तदुपपादयति-उदकमिवैवेति । सिद्धमेतत् ॥ १९ ॥

यो गायत्रीमिति प्रश्नस्योत्तरमाह-वेदिरेव गायत्रीति । ज्योतिष्पक्षरूपा या पूर्वं पृष्टा गायत्री सा 'वेदिरेव' । तस्याः पक्षादिकं संपादयति-तस्यै येऽष्टाविति । आघारादयः 'येऽष्टौ पुरस्तादाज्यभागाः' अनुक्रांताः 'तस्यै' षष्ठ्यर्थे चतुर्थी ( पा. सू. २।३।६२ वा. ) इति । 'तस्याः' गायत्र्याः 'स दक्षिणः पक्षः' । 'उपरिष्टादाज्यभागाः' अनुयाजादयः 'ये अष्टौ' च अनुक्रांताः 'स उत्तरः पक्षः' । 'सैषा' वेदिरूपा 'गायत्री' 'हरिणी' अभितो दीप्यमानैरग्निभिर्हरितवर्णा 'ज्योतिष्पक्षा' ज्योतिर्मयाहुत्यात्मकपक्षोपेता सती 'यजमानं स्वर्गं लोकमभिवहति' अभिलक्ष्य प्रापयति । एतत् कृत्स्नफलं ब्राह्मणार्थवेदिन इत्याह-य एवमेतद्वेदेति । 'एवं' उक्तेन प्रकारेण अष्टौ पुरस्तादाज्यभागानित्यादिनोक्तमर्थजातं 'यः' यजमानः 'वेद' तमेवोपासकमेव गायत्री स्वर्गं वहतीत्यर्थः ॥ १६ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये एकादशकाण्डे चतुर्थेऽध्याये प्रथमं ब्राह्मणम् ॥ ( ११-४-१ ) ॥

इत्थं दर्शपूर्णमासयोः प्रयाजादियागान् शरीरोत्पत्तिनिमित्तत्वेन प्रतिपाद्य, अथ तेषां यागानां स्रुगादानप्रभृतिहोमांताः केचन धर्मा विचार्यंते; तत्र स्रुगादानस्य प्रकारविशेषं दर्शयितुं प्रस्तौति-अथातः स्रुचो-

(दि) इत्थमेव कुर्य्यात्। (दु) उभाभ्यामेव पाणिभ्यां जुहूम्परिगृह्योपभृत्यधिनिदध्यात्तस्य नोपमीमाꣳसाऽस्ति तत्पशव्यमायुष्यं तेऽअसꣳशिञ्जयन्नाददीत ते यत्सꣳशिञ्जयेदयोगक्षेमो यजमानमृच्छेत्तस्मादसꣳशिञ्जयन्नाददीत ॥ २ ॥

(ता) अथातोऽतिक्रमणस्य। वज्रेण ह वाऽअन्योऽध्वर्य्युर्य्यजमानस्य

---

इत्थमेव कुर्यात्; उभाभ्यामेव पाणिभ्यां जुहूं परिगृह्योपभृत्यधिनिदध्यात्। तस्य नोपमीमांसाऽस्ति। तत्पशव्यमायुष्यम्। ते असंशिंजयन्नाददीत। ते यत्संशिंजयेत्। अयोगक्षेमो यजमानमृच्छेत्। तस्मादसंशिंजयन्नाददीत ॥ २ ॥

अथातोऽतिक्रमणस्य। वज्रेण ह वा अन्योऽध्वर्युर्यजमानस्य पशून्विधमति। वज्रेण हास्मा

---

रिति। अथेत्यारंभे आनंतर्ये वा। यतः स्रुगादानविषये वक्ष्यमाणप्रकारेण वैषम्यमस्ति। 'अतः' हेतोः 'स्रुचोः' जुहूपभृतोर्होमार्थं यदादानम्, तस्य विचारः क्रियत इति शेषः। तत्र एकीयमतं दर्शयति—तद्धैतदिति। तावत् स्रुचोरादानविषये 'एके' याज्ञिकाः 'कुशला मन्यमानाः' युगपत्पात्रद्वयग्रहणे कौशलयुक्तमात्मानं मन्यमानाः संतो दक्षिणवामहस्ताभ्यां युगपत् जुहूपभृतौ 'आददते' गृह्णंति। तदेतत् दूषयति—न तथा कुर्यादिति। 'तथा' तेनोक्तप्रकारेण स्रुचोरादानं 'न कुर्यात्'। 'तत्र' तस्मिन् विषये 'यो ह' यः कश्चिदभिज्ञः आगत्य एनमध्वर्युं 'ब्रूयात्' किमिति? 'नु' 'अयमध्वर्युर्यजमानस्य' 'प्रतिप्रतिम्' प्रतिकूलाचरणेन प्रतिभटं 'द्विषन्तं भ्रातृव्यम्' शत्रुं 'प्रत्युद्यामिनं' प्रत्युद्गमनशीलं 'अकत्' कृतवान्। इतिशब्दो वाक्यसमाप्तौ। जुहूर्हि यजमानदेवत्या, उपभृत् भ्रातृव्यरूपा, उभयोर्युगपदेव हस्तद्वयेन ग्रहणे भ्रातृव्यमपि यजमानवत् संस्कृतवान् भवतीत्यभिप्रायः। ईश्वरो हेति। यथैवमुक्तं 'तथैव' भवितुं यजमानः 'ईश्वरः' समर्थः स्यात्। उक्तदोषः अवश्यं भवेदित्यर्थः ॥ १ ॥

स्वकीयं पक्षमाह—इत्थमेवेति। 'इत्थं' अनेन प्रकारेण वक्ष्यमाणप्रकारेणैव स्रुचोरादानं 'कुर्यात्'। दक्षिणोत्तराभ्यामुभाभ्यामेव 'पाणिभ्यां' 'जुहूं' परिगृह्यादाय 'उपभृत्यधिनिदध्यात्' निक्षिपेत्। विध्यर्थे लिङ्। पश्चात् जुहूसहितामुपभृतं गृह्णीयात् इति। अस्मिन्पक्षे दोषाभावं ब्रुवन् आनुगुण्यमाह—तस्य नोपमीमांसाऽस्तीति। 'तस्य' एवंविधस्य स्रुगादानस्य 'उपमीमांसा' उदीरितदोषोक्तिरिति यावत्। सा नास्ति। न केवलं दोषाभावः, अपि तु तदादानं 'पशव्यं' पशुभ्यो हितं पशुवृद्धिकरमित्यर्थः। 'आयुष्यं' आयुष्करम्। तत्र विशेषमाह—ते असंशिंजयन्निति। 'ते' जुहूपभृतौ 'असंशिंजयन्' "शिजि अव्यक्ते शब्दे" (धा. पा. अ. आ. १७) इति धातुः। परस्परसंघट्टजनितं शब्दमकुर्वन्। 'आददीत' स्वीकुर्यात्। "डुदाञ् दाने" (धा. पा. जु.उ. ९) इति धातुः। अत एवोक्तमापस्तंबेन—"न च शिंजयति" इति। अथ विपक्षे बाधं दर्शयन् निगमयति—अयोगक्षेम इति। अप्राप्तस्य फलस्य प्राप्तिर्योगः। लब्धस्य परिपालनं क्षेमः। तयोरभावो यजमानम् 'ऋच्छेत्' प्राप्नुयात्। गतमन्यत् ॥ २ ॥

अतिक्रमणविषयं विचारं प्रस्तौति—अथातोऽतिक्रमणस्येति। 'अथातः' शब्दावुक्तार्थौ विद्येते। अति-

पशून्विधमति व्वज्रेण हास्मा ऽ अन्य ऽउपसमूहत्येष ह वा ऽअध्वर्य्युर्व्वज्रेण यजमानस्य पशून्विधमति यऽआश्रावयिष्यन्दक्षिणेनातिक्रामति सव्येनाश्राव्याथ हास्मा ऽ एष ऽ उपसमूहति यऽआश्रावयिष्यन्त्सव्येनातिक्रामति दक्षिणेनाश्राव्यैष हास्माऽउपसमूहति ॥ ३ ॥

(त्य) अथातो धारणस्य। तद्धैतदेके कुशला मन्यमानाः प्रगृह्य बाहू स्रुचौ धारयन्ति न तथा कुर्य्याद्यो हैनं तत्र ब्रूयाच्छूलौ न्वाऽअयमध्वर्य्युर्बाहूऽअकृत शूलबाहुर्भविष्यतीतीश्वरो ह तथैव स्यादथ हैष मध्यमः प्राणस्तस्माद तमुपन्युच्येवैव धारयेत् ॥ ४ ॥

---

अन्य उपसमूहति । एष ह वा अध्वर्युर्वज्रेण यजमानस्य पशून्विधमति, य आश्रावयिष्यन् दक्षिणेनातिक्रामति सव्येनाश्राव्य । अथ हास्मा एष उपसमूहति, यः आश्रावयिष्यन् सव्येनातिक्रामति दक्षिणेनाश्राव्य । एष हास्मा उपसमूहति ॥ ३ ॥

अथातो धारणस्य । तद्धैतत् एके कुशला मन्यमानाः प्रगृह्य बाहू स्रुचौ धारयंति । न तथा कुर्यात् । यो हैनं तत्र ब्रूयात् ; शूलौ न्वा अयमध्वर्युर्बाहू अकृत । शूलबाहुर्भविष्यतीति । ईश्वरो ह तथैव स्यात् । अथ हैष मध्यमः प्राणः, तस्माद तमुपन्यच्येवैव धारयेत् ॥ ४ ॥

---

क्रमणप्रकारविशेष उच्यते इति शेषः । तं दर्शयितुं अध्वर्युद्वैविध्यमाह—वज्रेण ह वा इति । 'अन्य' एकोऽध्वर्युः 'यजमानस्य पशून्' गवादीन् 'वज्रेण' खलु 'विधमति' विगमयति यजमानात् वियोजयतीत्यर्थः । 'अन्यः' खलु अध्वर्युः 'अस्मै' यजमानाय । षष्ठ्यर्थे चतुर्थी (पा. सू. २ । ३ । ६२ वा.) । वज्रेणैव तान्पशून् 'उपसमूहति' समीपं प्रापयति । तत्र यो विधमति तं दर्शयति—एष ह वा अध्वर्युरिति । 'यः' अध्वर्युः आश्रावणं करिष्यन् 'दक्षिणेन' पदा दक्षिणा 'अतिक्रामति', 'आश्राव्य' आश्रावणं कृत्वा 'सव्येन' पादेनापक्रामति । एषोऽध्वर्युर्विधमति । इत्थं अध्वर्युविशेषप्रदर्शनेन अतिक्रमणविषयं निंदापक्षमुक्त्वा सिद्धांतयति—अथ हास्मा इति । अथशब्दः पक्षव्यावृत्त्यर्थः । 'यः' अध्वर्युः उक्तवैपरीत्येन अतिक्रमणं करोति । सः 'अस्मै' यजमानाय पशून् 'उपसमूहति' प्रापयतीत्यर्थः ॥ ३ ॥

अथ स्रुग्धारणविषयं धर्मविशेषं विधातुं प्रस्तौति—अथातो धारणस्येति । प्रकार उच्यते इति शेषः । तत्र पूर्वपक्षयति—तद्धैतदेक इति । 'तत्' एतस्मिन् स्रुग्धारणविषये 'एके' याज्ञिकाः—कुशलत्वेनात्मानं मन्यमानाः 'प्रगृह्य' प्रकर्षेणोर्ध्वमुद्यम्य तथाविधाभ्यां बाहुभ्यां 'स्रुचौ धारयंति' । तन्निषिद्धं दूषयति—न तथा कुर्यादिति । शूलौ न्वा इति । नुशब्द उपमार्थः । उक्तं हि यास्केन—"अथाप्युपमार्थे भवति । वृक्षस्य नु ते पुरुहूत वयाः"—(निरु. १ । ४ । १८) इति । 'अयमध्वर्युः' 'बाहू' प्रगृह्य धारयन् तौ शूलाविव 'अकृत' कृतवान् । अतो यजमानः 'शूलबाहुर्भविष्यति' इति । गतमन्यत् । कर्तव्यं पक्षमाह—अथ हैष इति । यः 'एषः' 'मध्यमः' देहमध्यवर्ती 'प्राणः' वाय्वाधारत्वात् प्राणो नाभिः । 'तस्मात् उ' तस्मात् मध्यमात्प्राणात्

( द ) अथातऽआश्रावणस्य । षुड्ढ वाऽ आश्रावितानि न्यक्तिर्य्युगूर्ध्वं कृपणं बहिःश्रयन्तःश्रि ॥ ५ ॥

( श्ये ) एतुद्ध वै न्युक् । ( ग्यो ) योऽयमुच्चैराद्दाय शनैर्निदधाति स यमिच्छेत्पापीयान्त्स्यादिति तुस्योच्चैराद्दाय शनैर्निदध्यात्तेन स पापीयान्भवति ॥ ६ ॥

( त्यु ) अथ हैतुत्तिर्य्यक् । ( ग्यो ) योऽयं यावत्तैवाददीत तावता निदधाति स यमिच्छेन्नैव श्रेयान्त्स्यान्न पापीयानिति तुस्य यावत्तैवाददीत तावता निदध्यात्तेन स नैव श्रेयान्न पापीयान्भवति ॥ ७ ॥

(त्यु) अथ हैतदूर्ध्वम् । योऽयुᳪ शनैराद्दायोच्चैर्निदधाति यमिच्छेच्छ्रेयान्त्स्यादिति तुस्य शनैराद्दायोच्चैर्निदध्यात्तेन स श्रेयान्भवति ॥ ८ ॥

---

अथात आश्रावणस्य । षड् ह वा आश्रावितानि । न्यक् तिर्यक् ऊर्ध्वं कृपणं बहिःश्रि अंतःश्रि ॥ ५ ॥

एतद्ध वै न्यक्, योऽयमुच्चैरादाय शनैर्निदधाति । स यमिच्छेत्पापीयान् स्यादिति; तस्योच्चैरादाय शनैर्निदध्यात् । तेन स पापीयान् भवति ॥ ६ ॥

अथ हैतत्तिर्यक्, योऽयं यावतैवाददीत तावता निदधाति । स यमिच्छेन्नैव श्रेयान् स्यान्न पापीयानिति; तस्य यावतैवाददीत तावता निदध्यात् । तेन स नैव श्रेयान्न पापीयान् भवति ॥ ७ ॥

अथ हैतदूर्ध्वम्, योऽयं शनैरादायोच्चैर्निदधाति । स यमिच्छेच्छ्रेयान् स्यादिति; तस्य शनैरादायोच्चैर्निदध्यात् । तेन स श्रेयान् भवति ॥ ८ ॥

---

'उपन्यच्येवैव' नीचैः कृत्वैव 'तं' मध्यमं प्राणं उपनतस्य मध्यमप्राणस्य समीपे धारयेत् । अत एवोक्तं सूत्रकृता—"नाभिदेशे धारणम्"—( का. श्रौ. सू. ३ । ४४ ) इति ॥ ४ ॥

एवमाश्रावणेऽपि स्वाभिमतं पक्षं दर्शयितुं प्रस्तौति—अथात आश्रावणस्येति । यतो वक्ष्यमाणप्रकारेण तत्र भूयसी विप्रतिपत्तिरस्ति, अतः कारणात् 'अथ' तस्याश्रावणस्य विशेषानादौ संपरिचष्टे—षड्ढ वा आश्रावणानीति । 'न्यक्, तिर्यग्' इत्यादिशब्दाः तेषामाश्रावणविशेषाणां क्रमेणान्वर्थसंज्ञाः ॥ ५ ॥

तत्र प्रथमस्वरूपमाह—एतद्ध वा इति । 'योऽयं' अध्वर्युः 'उच्चैः' ऊर्ध्वस्वरेणादायाश्रावणं प्रारभ्य 'शनैः' नीचस्वरेण 'निदधाति' परिसमापयति । एतत् न्यक्संज्ञकमाश्रावणम् । एतस्य प्रयोगविषयमाह—स यमिच्छेदिति । 'यं' यजमानं द्वेष्यम् 'पापीयान्' अतिशयेन दरिद्रः 'स्यात्' इतीच्छेदध्वर्युः 'तस्य' एतदाश्रावितं येन यजमानः 'पापीयान् भवति' ॥ ६ ॥

द्वितीयमाश्रावणं लक्षयति—अथ हैतत्तिर्यगिति । 'यः अयम्' अध्वर्युः 'यावता' यावत्परिमाणेन स्वरेणाश्रावणम् 'आददीत' आरभते, तावतैव स्वरेण 'निदधाति', तस्य तत् आश्रावणं तिर्यक्संज्ञम् । तस्य प्रयोगफलमाह—स यमिच्छेदिति । श्रेयानपि न स्यात्, पापीयानपि नैव स्यात्, अपि तु मध्यस्थ एव 'भवतु' इति यं यजमानं कामयेत, तस्य एतत् तिर्यक्संज्ञकमाश्रावणं प्रयोज्यम् । स्पष्टमन्यत् ॥ ७ ॥

अथ तृतीयस्याश्रावणस्य स्वरूपमाह—अथ हैतदूर्ध्वमिति । 'अथ' खलु 'एतत्' वक्ष्यमाणं आश्रावणं

(त्यु) अथ हैतुत्कृपणम् । (णं यो) योऽयमणु दीर्घमस्वरमाश्रावयति यो हैनं तत्र ब्रूयात्कृपणं न्वाऽअयमध्वर्युर्य्यजमानमकर्द्विषतो भ्रातृव्यस्योपावसायिनमितीश्वरो ह तथैव स्यात् ॥ ९ ॥

( तु ) अथ हैतुद्बहिःश्रि । योऽयमपव्यादायौष्ठाऽउच्चैरस्वरमाश्रावयति श्रीर्वै स्वरो बाह्यतऽ एव तच्छ्रियं धत्तेऽशनायुको भवति ॥ १० ॥

( त्यु ) अथ हैतदन्तःश्रि । योऽयुᳫँ सन्धायौष्ठाऽउच्चैः स्वरवदाश्रावयति श्रीर्वै स्वरोऽन्तरतऽ एव तच्छ्रियं धत्तेऽन्नादो भवति ॥ ११ ॥

---

अथ हैतत्कृपणम्, योऽयमणु दीर्घमस्वरमाश्रावयति । यो हैनं तत्र ब्रूयात्; कृपणं न्वा अयमध्वर्युर्यजमानमकत्; द्विषतो भ्रातृव्यस्योपावसायिनमिति । ईश्वरो ह तथैव स्यात् ॥ ९ ॥

अथ हैतत् बहिःश्रि, योऽयमपव्यादायौष्ठा उच्चैरस्वरमाश्रावयति । श्रीर्वै स्वरः । बाह्यत एव तच्छ्रियं धत्ते । अशनायुको भवति ॥ १० ॥

अथ हैतदंतःश्रि, योऽयं संधायौष्ठा उच्चैःस्वरवदाश्रावयति । श्रीर्वै स्वरः । अंतरत एव तच्छ्रियं धत्ते । अन्नादो भवति ॥ ११ ॥

---

'ऊर्ध्वं' योऽयमध्वर्युः 'शनैरादाय' नीचैः स्वरेणारभ्य 'उच्चैर्निदधाति' उन्नतस्वरेण परिसमापयति तदाश्रावणमूर्ध्वम् । एतस्य प्रयोगविषयमाह—स यमिच्छेदिति । स्पष्टोऽर्थः ॥ ८ ॥

चतुर्थं लक्षयति—अथ हैतत् कृपणमिति । 'अथ' खलु एतदाश्रावणं कार्पण्यदोषयुक्तं, यः अयमध्वर्युः 'अणु' अल्पं कंठस्याल्पता यथा भवति तथा, दीर्घमायामवत्, 'अस्वरं' स्वररहितं क्षीणस्वरं च यथा भवति तथा 'आश्रावयति' तस्य तादृगाश्रावणं कृपणमित्युच्यते । एतस्याप्रयोज्यतामभिप्रेत्य दूषणमाह—यो हैनमिति । 'कृपणं नु वै' कृपणं दीनमिव खलु अयमध्वर्युर्यजमानं 'अकत्' कृतवान् । तथा विद्वेषणं कुर्वतः 'भ्रातृव्यस्य' शत्रोः 'उपावसायिनं' समीपे अवस्थायिनं अकार्षीदिति यः कश्चिदभिज्ञो ब्रूयात् तथैव स यजमानो भवितुमीश्वरः 'स्यात्' ॥ ९ ॥

पंचमस्याश्रावितस्य स्वरूपमाह—अथ हैतद्बहिःश्रीति । यः अयमध्वर्युः 'ओष्ठौ अपव्यादाय' अपकृष्य विवृतौ कृत्वा 'अस्वरं' उदात्तादिस्वररहितं यथा भवति तथा केवलं उच्चैर्घोषेण 'आश्रावयति' तस्य तदाश्रावणं 'बहिःश्रि' इत्युच्यते । आस्यबाह्यदेशे श्रयति वर्तते इति शब्दव्युत्पत्तिः । अथैतत् पूर्ववत् दूषयति—श्रीर्वै स्वर इति । उदात्तादिलक्षणः 'स्वरः' स 'श्रीर्वै' वेदवाक्यस्य संपद्रूपः । तत्तथा सति ओष्ठयोरपव्यादानेन स्वरस्य बहिर्भावात् 'बाह्यत एव' यजमानाद्बहिर्भूत एव देशे 'श्रियं' संपदं 'धत्ते' धारयति । स यजमानः 'अशनायुकः' क्षुत्पीडितो 'भवति' तस्मादेतदपि आश्रावणं नोपादेयमिति भावः ॥ १० ॥

षष्ठं लक्षयति—अथ हैतदंतःश्रीति । यः अयमध्वर्युः 'ओष्ठौ' 'संधाय' संकुचितौ कृत्वा 'उच्चैः

स वै मन्द्रमिवोरसि । परास्तभ्योभयतो बार्हतमुच्चैरंततो निदध्यात्तस्य नोपमीमाꣳसाऽस्ति तत्पशव्यमायुष्यम् ॥ १२ ॥

( म ) अथातो होमस्य । तद्धैतदेके कुशला मन्यमानाः प्राचीꣳ स्रुचमुपावहृत्य हुत्वा पर्य्याहृत्योपभृत्यधिनिदधाति न तथा कुर्य्याद्यो हैनं तत्र ब्रूयादनुयुवन्न्वा अयमध्वर्य्युर्य्यजमानमकद्द्विषतो भ्रातृव्यस्यान्ववसायिनमितीश्वरो ह तथैव स्यात् ॥ १३ ॥

---

स वै मंद्रमिवोरसि परास्तभ्य उभयतो बार्हतम् उच्चैरंततो निदध्यात्; तस्य नोपमीमांसाऽस्ति । तत्पशव्यमायुष्यम् ॥ १२ ॥

अथातो होमस्य । तद्धैतत्, एके कुशला मन्यमानाः प्राचीं स्रुचमुपावहृत्य हुत्वा पर्याहृत्योपभृत्यधिनिदधति । न तथा कुर्यात् । यो हैनं तत्र ब्रूयात्–अनुयुवन्वा अयमध्वर्युर्यजमानमकत्; द्विषतो भ्रातृव्यस्यान्ववसायिनमिति । ईश्वरो ह तथैव स्यात् ॥ १३ ॥

---

स्वरवत् ' उदात्तादिविविक्तस्वरयुक्तं यथा भवति तथा उच्चैराश्रावयति । तस्य तदाश्रावणं ओष्ठसंधानेन श्रीरूपस्य स्वरस्यांतर्भावात् ' अंतःश्रि ' इत्युच्यते । एतदेव सर्वत्र प्रयोक्तव्यम् इत्यभिप्रेत्य प्रशंसति–श्रीर्वै स्वर इति । 'तत्' तेन प्रकारेण ओष्ठसंधानेन श्रीरूपस्य स्वरस्य अंतर्धारणात् श्रीकरत्वम् । स्पष्टमन्यत् ॥ ११ ॥

अस्मिन्नेवाश्रावणे स्वरविशेषं विधत्ते–स वै मंद्रमिवेति । ' सः ' खलु आश्रावयन्नध्वर्युः ' उरसि ' उरःप्रदेशे ' मंद्रमिव परास्तभ्य ' गंभीरध्वनियुक्तमिव पराचीनं संस्तभ्य ' उभयतः ' आद्यंतयोः ' बार्हतम् ' बृहत्सामसंबंधी मध्यमस्वरो यथा भवति तथा ' अंततः ' आश्रावणस्यावसाने उच्चैर्निदध्यान्निक्षिपेत् । त्रीणि ह वाचः स्थानानि मंद्रमध्यताराख्यानि, तत्र मंद्रस्वरेणाश्रावणं प्रारभ्य मध्यमस्वरगर्भितेन तारस्वरेण परिसमापयेदित्यर्थः । अस्यैव षष्ठस्याश्रावणस्य दोषाभावं ब्रुवन् पश्वादिहेतुतामाह–तस्य नोपमीमांसाऽस्तीति । व्याख्यातमेतत् ॥ १२ ॥

आश्रावणानंतरंभाविनो होमस्य विशेषं वक्तुं प्रस्तौति–अथातो होमस्येति । ' अथातः ' शब्दौ पूर्ववत् योज्यौ । होमस्य विचारः अधिक्रियते इति शेषः । तत्र एकीयपक्षमाह–तद्धैतदिति । ' तत् ' तत्र होमविषये ' एतत् ' इत्थं ' एके ' केचन याज्ञिकाः कौशलयुक्तमात्मानं मन्यमानाः ' स्रुचं ' जुहूं च ' प्राचीं ' प्रागग्राम् ' उपावहृत्य ' उपभृतः अग्रदेशात् प्रागवरोप्य तया स्रुचा ' हुत्वा ' ' पर्याहृत्य ' उपभृन्मूलदेशात् उपरि नीत्वा तस्यामुपभृति ' निदधति ' स्थापयंति । ' अधि: ' सप्तम्यर्थानुवादी । तन्निषिध्य दूषयति–न तथा कुर्यादिति । अनुयुवन्वा इति । नुशब्द उपमार्थः । यजमानदेवत्यायाः जुह्वाः पर्याहरणात् ' अनुयुवन्निव ' भ्रातृव्येण संमिश्रयन्निव ' अयमध्वर्युः ' ' द्विषतः ' द्वेषणं कुर्वतः ' भ्रातृव्यस्य ' शत्रोः ' अन्ववसायिनं ' अनुगमनशीलं यजमानम् ' अकत् ' अकार्षीत् ' इति ' । इतिशब्दो वाक्यसमाप्तौ ॥ १३ ॥

( त्पा ) पार्श्वतुऽउ हैके । स्रुचमुपावहृत्य हुत्वा पर्य्याहृत्योपभृत्यधिनि-
दधति न तथा कुर्य्याद्यो हैनं तत्र ब्रूयादतीर्थेन न्वाऽअयमध्वर्य्युराहुतीः
प्रारौत्सीत्सं वा शरिष्यते घुणिर्वा भविष्यतीतीश्वरो ह तथैव स्यात् ॥ १४ ॥

( दि ) इत्थमेव कुर्य्यात् । ( त्प्रा ) प्राचीमेव स्रुचमुपावहृत्य हुत्वा तेनैवाधि-
हृत्योपभृत्यधिनिदध्यात्तस्य नोपमीमाꣳसाऽस्ति तत्पशव्यमायुष्यम् ॥ १५ ॥

( प्प्र ) प्रदग्धाहुतिर्ह वाऽ अन्योऽध्वर्य्युः । ( रा ) आहुतीर्हान्यः सन्तर्प्प-
यत्येष ह वै प्रदग्धाहुतिरध्वर्य्युर्योऽयमाज्यꣳ हुत्वाऽवदानानि जुहोत्ये-
तꣳ ह वै तददृश्यमाना वागभ्युवाद प्रदग्धाहुतिर्वा ऽअयमध्वर्य्युरित्यथ
हैनाऽ एष सन्तर्प्पयति योऽयमाज्यꣳ हुत्वाऽवदानानि जुहोत्यथ पुन-

---

पार्श्वत उ हैके स्रुचमुपावहृत्य हुत्वा पर्याहृत्योपभृत्यधिनिदधति । न तथा कुर्यात् । यो हैनं तत्र ब्रूयात् ; अतीर्थेन न्वा अयमध्वर्युराहुतीः प्रारौत्सीत् । सं वा शरिष्यते घुणिर्वा भविष्यतीति । ईश्वरो ह तथैव स्यात् ॥ १४ ॥

इत्थमेव कुर्यात् । प्राचीमेव स्रुचमुपावहृत्य हुत्वा तेनैवाधिहृत्योपभृत्यधिनिदध्यात् ; तस्य नोपमीमांसाऽस्ति । तत्पशव्यमायुष्यम् ॥ १५ ॥

प्रदग्धाहुतिर्ह वा अन्योऽध्वर्युः । आहुतीर्हान्यः सन्तर्पयति । एष ह वै प्रदग्धाहुतिरध्वर्युः । योऽयमाज्यं हुत्वाऽवदानानि जुहोति । एतं ह वै तददृश्यमाना वागभ्युवाद । प्रदग्धाहुतिर्वा अय-

---

अन्यं पक्षमुपन्यस्य दूषयति—पार्श्वत उ हैक इति । ' एके ' याज्ञिकाः ' पार्श्वत उ ह ' उपभृतः पार्श्व-देशादेव ' स्रुचं ' जुहूम् ' उपावहृत्य ' अवरोप्य आहवनीये ' हुत्वा ' पुनस्तेनैव ' पर्याहृत्य ' ' उपभृति ' जुहूं स्थापयंति । अतीर्थेन न्वा इत्यादि । ' अयमध्वर्युः ' ' अतीर्थेन नु वै ' तरति अनेनेति तीर्थं मार्गः । अमार्गेण खलु ' आहुतीः ' ' प्रारौत्सीत् ' प्रकर्षेण रुद्धगतीरकार्षीत्, तस्मात् कारणात् यजमानः ' संशरिष्यते वा ' संशीर्णो भविष्यति । ' घुणिर्वा ' भ्रांतो वा ' भविष्यतीति ' । अन्यत् पूर्ववत् ॥ १४ ॥

इत्थं पूर्वपक्षमुपन्यस्य दूषयित्वा सिद्धांतयति—इत्थमेव कुर्यादिति । इत्थमनेनैव वक्ष्यमाणप्रकारेण होमं ' कुर्यात् ' । स प्रदर्श्यते । आदिपक्षे इव ' प्राचीं ' प्रागग्रामेव ' स्रुचं ' जुहूं ' उपावहृत्य हुत्वा तेनैव ' उपभृतोऽग्रप्रदेशेनैव ' अधिहृत्य ' उपरि हृत्वा उपभृत्युपरि जुहूं स्थापयेत् । अस्य पक्षस्य उक्तपक्षदोष-विरहेण प्राशस्त्यमाह—तस्य नोपमीमांसाऽस्तीति ॥ १५ ॥

अथ संतृप्ताहुतीनां फलहेतुतां वदन् तदर्थमध्वर्युद्वैविध्यमाह—प्रदग्धाहुतिरिति । ' अन्यः ' इत्येकोऽध्वर्युः ' प्रदग्धाहुतिर्वै ' प्रकर्षेण दग्धाः भस्मसात्कृताः आहुतयो येन स प्रदग्धाहुतिः । ' अन्यः ' अपरोऽध्वर्युः

रंततऽआज्येनाभिजुहोत्येषु हैनाः सुन्तर्प्पयति तासाथ्ँ सुन्तृप्तानां देवा हिरण्मयांश्चमसान्पूरयंते ॥ १६ ॥

तदु होवाच याज्ञवल्क्यः । ( ल्क्यो ) यद्वाऽ उपस्तीर्य्यावदायाभिघारयति तदेवैनाः सुन्तर्प्पयति तासाथ्ँ सन्तृप्तानां देवा हिरण्मयांश्चमसान्पूरयंतेऽयस्थूणगृहपतीनाथ्ँ ह वै शौल्बायनोऽध्वर्य्युरास ॥ १७ ॥

---

मध्वर्युरिति । अथ हैना एष सन्तर्पयति । योऽयमाज्यं हुत्वाऽवदानानि जुहोति । अथ पुनरंतत आज्येनाभिजुहोति । एष हैनाः सन्तर्पयति । तासां संतृप्तानां देवा हिरण्मयांश्चमसान्पूरयन्ते॥१६॥

तदु होवाच याज्ञवल्क्यः । यद्वा उपस्तीर्यावदायाभिघारयति । तदेवैनाः संतर्पयति । तासां संतृप्तानां देवा हिरण्मयांश्चमसान् पूरयन्ते । अयस्थूणगृहपतीनां ह वै शौल्बायनोऽध्वर्युरास॥१७॥

---

'आहुतीः' 'संतर्पयति' संतृप्ताः करोति । स संतृप्ताहुतिरन्योऽध्वर्युरित्यर्थः । आद्यस्य स्वरूपमाह—एष ह वा इति । 'यः' खलु अध्वर्युः उपस्तरणाभिघारणसंपन्नमाज्यं प्रथमं जुह्वा 'हुत्वा' पश्चात् 'अवदानानि जुहोति' 'एष खलु प्रदग्धाहुतिः' एष खलु प्रदग्धाहुतिर्नाम अध्वर्युः, पूर्वमेव आज्यस्य हुतत्वात् शुष्कस्यैव पुरोडाशादेः प्रकर्षेण दह्यमानत्वात् । एतदेवोपपादयति—एतद्ध ह वा इति । तत्तत्र 'एतम्' पूर्वोक्तमेव अध्वर्युम् 'वाग्' वाग्देवता स्वयमदृश्यमाना सती 'अभ्युवाद' अभिलक्ष्योक्तवती । 'अयमध्वर्युः' 'प्रदग्धाहुतिर्वै' प्रदग्धाहुतिः संपन्नः । 'नु अथ वै' शब्दाः प्रसिद्धौ । यस्मादेवं वाचा अभ्युदितं तस्मात् ईदृशोऽध्वर्युः प्रदग्धाहुतिरित्यर्थः । द्वितीयस्याध्वर्योः स्वरूपमाह—अथ हैना इति । अथशब्दस्तुशब्दार्थे । 'एषः तु' खलु अध्वर्युः 'एताः' आहुतीः 'संतर्पयति' संतृप्ताः स्नेहयुक्ताः करोति । यः अयमध्वर्युः प्रथमं अभिघारणायावत्तं 'आज्यं हुत्वा' पश्चात् अवत्तद्रव्याणि 'जुहोति' । अथानंतरं 'अंततः' अवसाने उपस्तरणलब्धेनावस्थितेनाज्येन हुतं पुरोडाशं पुनरभिजुहोति । अग्नौ प्रक्षिप्तस्यापि पुरोडाशादेरधस्तादुपरिष्टाच्चाज्येन संतर्पणात् संतृप्ताहुतिर्नामाध्वर्युरित्यर्थः । उक्तं सन्तर्पणं उपसंहारव्याजेनानूद्य सन्तृप्ताहुतीनां विशिष्टफलमाह—एष हैना इति । तासां संतृप्तानामाहुतीनां भोक्तारः 'देवाः' प्रीताः सन्तः 'हिरण्मयान्' हिरण्यविकारांश्चमसान् यजमानाय दातुं अन्नेन 'पूरयन्ते' । इममेव होमपक्षमापस्तंबोऽप्याह स्म—"आज्यं प्रश्चोत्यापिदधाति वा प्रक्षिपन् हुतानाज्येनावश्चोतयति" इति ॥ १६ ॥

एवं श्रुतिः स्वाभिमतं आहुतिसंतर्पणं प्रदर्श्य याज्ञवल्कीयं मतं पक्षांतरत्वेन दर्शयति—तदु होवाचेति । 'तदु ह' तत्रैव खलु सन्तर्पणविषये उक्तवान् 'याज्ञवल्क्यः' । 'यद्वै' यस्मिन्नेव अवदानकाले प्रथमं जुह्वामुपस्तीर्य तस्मिन्नेवाज्ये पुरोडाशमवदायाभिघारयति तत्तस्मिन्नेव काले 'एताः' आहुतीः उपस्तरणाभिघारणाभ्यां 'सन्तर्पयति' । अत्रापि पूर्वोक्तफलमाह—तासां संतृप्तानामिति । गतमेतत् । यदिदं स्रुगादानादि होमांतं कर्म सविशेषं निरूपितं तत्परिज्ञानवतैवाऽध्वर्युणा भवितव्यमिति दर्शयितुं आख्यायिकां प्रस्तौति—अयस्थूणगृहपतीनामिति । अयस्थूणाख्यः कश्चित् ऋषिः । अयस्थूणो गृहपतिर्येषां ते तथोक्ताः । तेषां सत्रयागमनुतिष्ठतां 'शौल्बायनः' शौल्बायनाख्यः ऋषिः 'अध्वर्युरास' बभूव ॥ १७ ॥

स होवाच । ( चे ) इदमुहेदꣳ सत्रं कृशपश्वल्पाज्यमथायं गृहपतिरस्मीति मन्यत ऽइति ॥ १८ ॥

स होवाच । ( चा ) अध्वर्य्यवा वै नोऽक्रुक्षऽ एते वै ते स्रुचौ ये त्वꣳ सम्वत्सरन्नाशकऽ आदातुं यद्वै त्वाऽहमेतयोरनुशिष्याम्प्र प्रजया पशुभिर्ज्जायेथाऽ अभि स्वर्ग्ग लोकं व्वहेरिति ॥ १९ ॥

स होवाच । (चो) उप त्वाऽऽयानीति स होवाचात्र वाव खल्वर्हसि यो नः सम्वत्सरेऽध्वर्य्युरभूरनुपेतायैव तऽ एनद्ब्रवाणीति तस्माऽ उ हैतदेव

---

स होवाच । इदमहेदं सत्रं कृशपश्वल्पाज्यम् । अथायं गृहपतिरस्मीति मन्यत इति ॥ १८ ॥

स होवाच । अध्वर्यो आ वै नोऽक्रुक्षः । एते वै ते स्रुचौ, ये त्वं संवत्सरन्नाशक आदातुम् । यद्वै त्वाऽहम् एतयोरनुशिष्यां, प्र प्रजया पशुभिर्जायेथाः । अभि स्वर्गं लोकं वहेरिति ॥ १९ ॥

स होवाच । उप त्वाऽऽयानीति । स होवाच—अत्र वाव खल्वर्हसि । यो नः संवत्सरेऽध्वर्युरभूः ।

---

तत्र तेनाध्वर्युणा कृतं गृहपतेरधिक्षेपं तावदाह—स होवाचेति । 'सः' अध्वर्युः 'उवाच' उक्तवान् । किमिति ? 'इदं सत्रं' अयं प्रारब्धः सत्रयागः 'इदमह' ईदृक्किल ईदृग्लक्षणं 'कृशपश्वल्पाज्यम्' कृशाः अल्पतनवः पशवो यस्मिन्, अल्पमाज्यं यस्मिन्, ईदृशमेव विकलं जातम् । 'अथायं गृहपतिरस्मीति मन्यते' अभिमानयुक्तो भवति । हीनद्रव्यकत्वात् गृहपतित्वाभावात् गार्हपत्याभासो हीत्यधिक्षेपः । इतिशब्दो वाक्यपरिसमाप्तौ ॥ १८ ॥

तस्योत्तरमाह—स होवाचेत्यादि । 'सः' अधिक्षिप्तः गृहपतिः 'उवाच' उक्तवान् । हे 'अध्वर्यो !' 'नः' अस्मान् 'आक्रुक्षः' आक्रोशं कृतवानसि । अस्तु नाम स आक्रोशः । त्वदीयमिति सामर्थ्यं कीदृग् इति निन्दसीत्यभिप्रायः । 'यद्वा' पश्य 'एते' खलु 'ते' 'स्रुचौ' जुहूपभृतौ 'ये त्वं संवत्सरं' "कालाध्वनोरत्यंतसंयोगे" ( पा. सू. २ । ३ । ५ ) इति द्वितीया । संवत्सरपर्यंतं 'आदातुं' उद्यंतुं 'नाशकः' शक्तो नाभवः । संवत्सरकालेनापि स्रुगादानं कर्तुमशक्तोऽसि । ईदृशं स्वदोषमपश्यन् किमिति अस्मदीयं सत्रं कृशपश्वल्पाज्यमिति निन्दसीत्यभिप्रायः । यदि खलु त्वां 'एतयोः' स्रुचोरादाने 'अनुशिष्यां' अनुशिष्टं शिक्षितं कुर्याम् । तदा त्वं 'प्रजया पशुभिः' च 'प्रजायेथाः' तथा यजमानं 'स्वर्गं लोकमभिवहेः' अभिप्रापयेः । इतिशब्दो गृहपतिवाक्यसमाप्तौ ॥ १९ ॥

एवं प्रत्युक्तोऽध्वर्युः किमुक्तवानिति तदाह—स होवाचेति । अथ शौल्बायनः 'उवाच' हे गृहपते ! त्वां 'उपायानि' विद्यार्थमुपगच्छामि । उपगतं मां अनुशाधीति । 'सः' गृहपतिरुवाच । 'अत्र' अस्मिन् काले 'खलु' 'त्वमर्हसि' विद्योपदेशार्हो भवसि । यस्त्वं 'नः' अस्माकं संवत्सरकालसाध्ये सत्रयागे 'अध्वर्युरभूः' । 'अनुपेतायैव' उपनयनसंस्काररहितायैव च तुभ्यं 'एनत्' स्रुगादानं 'ब्रवाणि' उपदिशानीति । एव-

स्रुचोरादानमुवाच युदेतद्व्याख्याम तुस्मादेवंविदमेवाध्वर्युं कुर्वीत नानेवंविदम् ॥ २० ॥

इति द्वितीयप्रपाठकेऽष्टमं ब्राह्मणम् ॥ ११-२-८ ॥ ( ४. २. ) ॥

इति द्वितीयः प्रपाठकः समाप्तः ॥ ११-२ ॥

कंडिकासंख्या ॥ १०४ ॥

---

अनुपेतायैव त एनत् ब्रवाणीति । तस्मा उ हैतदेव स्रुचोरादानमुवाच । यदेतद्व्याख्याम । तस्मादेवं-विदमेवाध्वर्युं कुर्वीत । नानेवंविदम् ॥ २० ॥

---

मुक्त्वा ' तस्मै ' शौल्बायनायाध्वर्यवे ' एतदेव स्रुचोरादानं ' गृहपतिः 'उवाच' उक्तवान् अवदत् । 'यदेतत्' ' अथातः स्रुचोरादानस्य ' इत्यादिना ' व्याख्याम ' अवोचाम । ख्यातेर्लुङि " अस्यतिवक्ति "-( पा. सू. ३ । १ । ५२ ) इत्यादिना च्लेरङादेशः । एतद्ब्राह्मणार्थविदमेवाध्वर्युं वृणीत इति निगमयति— तस्मादिति ॥ २० ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये एकादशकाण्डे चतुर्थेऽध्याये द्वितीयं ब्राह्मणम् ॥ ( ११ । ४ । २ ) ॥

द्वितीयः प्रपाठकश्च समाप्तः ॥ ११-२ ॥



# अथ तृतीयप्रपाठके प्रथमं ब्राह्मणम् ।
# चतुर्थेऽध्याये च तृतीयं ब्राह्मणम् ।

प्रजापतिर्वै प्रजाः सृजमानोऽतप्यत । तस्माच्छ्रांतात्तेपानाच्छ्रीरुदक्रामत्सा दीप्यमाना भ्राजमाना लेलायन्त्यतिष्ठत्तां दीप्यमानां भ्राजमानां लेलायंतीं देवाऽअभ्यध्यायन् ॥ १ ॥

( यँस्ते ) ते प्रजापतिमब्रुवन् । ( न्हु ) हनामेमामेदमस्या ददामहाऽइति स होवाच स्त्री वाऽएषा यच्छ्रीर्न्न वै स्त्रियं घ्नन्त्युत त्वाऽअस्या जीवंत्याऽएवाददतऽइति ॥ २ ॥

### अथ मित्रविन्देष्टिः ।

प्रजापतिर्वै प्रजाः सृजमानोऽतप्यत । तस्माच्छ्रांतात्तेपानाच्छ्रीरुदक्रामत् । सा दीप्यमाना भ्राजमाना लेलायंत्यतिष्ठत् । तां दीप्यमानां भ्राजमानां लेलायंतीं देवा अभ्यध्यायन् ॥ १ ॥

ते प्रजापतिमब्रुवन्; हनामेमाम्; आ इदमस्या ददामहा इति । स होवाच–स्त्री वा एषा यच्छ्रीः । न वै स्त्रियं घ्नंति । उत त्वा अस्या जीवंत्या एवाददत इति ॥ २ ॥

अथ मित्रविंदाख्यां काम्येष्टिं विधास्यन् तत्र हविरुत्पत्तिक्रमं अन्नाद्यादिकामनोपेतं अधिकारिविशेषं च दर्शयितुं आख्यायिकां रचयन् आदौ श्रिय उत्पत्तिं उत्पन्नायाश्च तस्याः देवैरभिध्यानं चाह–प्रजापतिर्वा इति । देवमनुष्यादिरूपाः ‘ प्रजाः ’ ‘ सृजमानः ’ उत्पादयन् ‘ प्रजापतिः ’ तत्कारणेन तपस्तप्तवान् । ‘ तस्माच्छ्रान्तात् ’ अखिलसर्जनश्रमोपेतात् तेपानात्तपस्तप्तवतः सकाशात्–‘ श्रीरुदक्रामत् ’ सौभाग्यलक्ष्मीरुत्क्रांतवती । तेपानादिति तपेर्लिटः कानचि रूपम् । ‘ सा ’ चोत्क्रांता ‘ दीप्यमाना ’ अवयवैः शोभमाना ‘ भ्राजमाना ’ सर्वं जगत् स्वतेजसा प्रकाशयंती ‘ लेलायंती ’ स्वकीयेन तेजःपुंजेन सर्वमाश्लिष्यंती ‘ अतिष्ठत् ’ स्थितवती । ईदृग्गुणविशिष्टां श्रियं वक्ष्यमाणा अग्न्यादयो ‘ देवाः ’ ‘ अभ्यध्यायन् ’ तत्संबद्धान्नाद्यादिस्वीकाराय तां हंतुमैच्छन्नित्यर्थः ॥ १ ॥

ते प्रजापतिमित्यादि । ‘ इमां ’ श्रियं ‘ हनाम ’ ‘ अस्याः ’ संबंधि इदमन्नाद्यादिकं ‘ आददामहे ’ स्वीकुर्याम इति ‘ ते ’ देवाः ‘ प्रजापतिमब्रुवन् ’ । ‘ सः ’ प्रजापतिरेवमुक्तवान् । ‘ यत् ’ या ‘ श्रीः ’ ‘ एषा स्त्री ’ अतो न हननार्हा । ‘ न ’ खलु लोके क्रूरकर्माणोऽपि पुरुषाः ‘ स्त्रियं घ्नन्ति ’ मारयन्ति । ‘ उत तु ’ अपि तु ‘ जीवंत्याः ’ एवास्याः संबंधि धनं ‘ आददते ’ स्वीकुर्वते इत्यर्थः ॥ २ ॥

१–आद्यं विचार्यप्रयोजनः ।

तुस्याऽअग्निरन्नाद्यमादत्त । सोमो राज्यं व्वुरुणः साम्म्राज्यं मित्रः क्षत्रमिन्द्रो बुलं बृहस्पतिर्ब्रह्मवर्च्चसुꣳ सविता राष्ट्रम्पूषा भुगꣳ सुरस्वती पुष्टिं त्वुष्टा रूपाणि ॥ ३ ॥

सा प्रजापतिमब्रवीत् । ( दा ) आ वै मऽइदमदिषतेति स होवाच यज्ञेनै-नान्पुनर्य्याचस्वेति ॥ ४ ॥

सैतां दुशहविषमिष्टिमपश्यत् । ( दा ) आग्नेयमष्टाकपालं पुरोडाशꣳ सौम्युं चरुं व्वारुणं दुशकपालं पुरोडाशं मैत्रं चरुमैन्द्रमेकादशकपालं पुरोडाशं बार्हस्पत्युं चरुꣳ सावित्रं द्वादशकपालं वाऽष्टाकपालं वा पुरोडाशं पौष्णुं चरुꣳ सारस्वतुं चरुं त्वाष्ट्रं दुशकपालं पुरोडाशम् ॥ ५ ॥

---

तस्या अग्निरन्नाद्यमादत्त । सोमो राज्यम् । वरुणः साम्राज्यम् । मित्रः क्षत्रम् । इंद्रो बलम् । बृहस्पतिर्ब्रह्मवर्चसम् । सविता राष्ट्रम् । पूषा भगम् । सरस्वती पुष्टिम् । त्वष्टा रूपाणि ॥ ३ ॥

सा प्रजापतिमब्रवीत् । आ वै म इदमादिषतेति । स होवाच—यज्ञेनैनान्पुनर्याचस्वेति ॥ ४ ॥

सैतां दशहविषमिष्टिमपश्यत् । आग्नेयमष्टाकपालं पुरोडाशम् । सौम्यं चरुम् । वारुणं दशकपालं पुरोडाशम् । मैत्रं चरुम् । ऐंद्रमेकादशकपालं पुरोडाशम् । बार्हस्पत्यं चरुम् । सावित्रं द्वादशकपालं वाऽष्टाकपालं वा पुरोडाशम् । पौष्णं चरुम् । सारस्वतं चरुम् । त्वाष्ट्रं दशकपालं पुरोडाशम् ॥५॥

---

एवं प्रजापतिनोक्ते केन देवेन किं स्वीकृतमिति तद्दर्शयति—तस्या अग्निरन्नाद्यमिति । 'अन्नाद्यं' अन्नादनसामर्थ्यं, राज्ञः कर्म 'राज्यं' ऐश्वर्यमिति यावत्, सम्राजः कर्म 'साम्राज्यं' आज्ञाशक्तिरित्यर्थः । क्षतत्राणनिमित्तं सामर्थ्यं 'क्षत्रं' शरीरसामर्थ्यं 'बलं' श्रुताध्ययनसंपत्तितेजो 'ब्रह्मवर्चसं' 'राष्ट्रं' देशः, 'भगं' सौभाग्यं, 'पुष्टिः' पोषणं, 'रूपाणि' शोभनावयवरचनानि, स्पष्टमन्यत् ॥ ३ ॥

सा प्रजापतिमित्यादि । एवमग्न्यादिभिः अन्नाद्यादिषु बलात् स्वीकृतेषु सत्सु 'सा' श्रीः 'प्रजापतिमब्रवीत्' 'मे' मदीयं इदमन्नाद्यादिकं 'आदिषत' देवा अहार्षुरिति । "डुदाञ् दाने" ( धा. पा. जु. उ. ९ ) इत्यस्मात् "आङो दोऽनास्यविहरणे" ( पा. सू. १ । ३ । २० ) इत्यात्मनेपदम् । "स्थाघ्वोरिच्च" (पा. सू. १ । २ । १७) इति इत्वकित्वे । 'सः' प्रजापतिस्तां प्रत्युवाच 'यज्ञेन' मूल्यभूतेन त्वदीयानन्नाद्यादीन् अग्न्यादिभ्यः 'पुनर्याचस्व' साधयेति ॥ ४ ॥

सैतां दशहविषमिति । याचे इत्यंगीकृत्यान्नाद्यादिप्राप्तिनिमित्तभूतां 'एतां' वक्ष्यमाणां दशहविष्कामिष्टिमपश्यत् । तान्येव हवींषि गणयति—आग्नेयमष्टाकपालमित्यादि । सावित्रस्य हविषः द्वादशाष्टौ वेति संख्याविकल्पः । सावित्रादिशब्देषु सर्वत्र "साऽस्य देवता" ( पा. सू. ४ । २ । २४ ) इति देवतार्थे तद्धितोत्पत्तिः ॥ ५ ॥

तानेतयाऽनुवाक्ययाऽन्ववदत् । ( द ) अग्निः सोमो वरुणो मित्रऽ इन्द्रो बृहस्पतिः सविता यः सहस्री । पूषा नो गोभिरवसा सरस्वती त्वष्टा रूपाणि समनक्तु यज्ञैरिति ते प्रत्युपातिष्ठंत ॥ ६ ॥

तानेतया याज्यया । परस्तात्प्रतिलोमम्प्रत्यैत्त्वष्टा रूपाणि ददती सरस्वती पूषा भगꣳ सविता मे ददातु । बृहस्पतिर्ददिन्द्रो बलं मे मित्रः क्षत्रं वरुणः सोमोऽग्निरिति ते पुनर्दानायाध्रियन्त ॥ ७ ॥

सैतानुपहोमानपश्यत् । ( द ) अग्निरन्नादोऽन्नपतिरन्नाद्यमस्मिन्यज्ञे मयि दधातु स्वाहेत्याहुतिमेवाऽऽदायाग्निरुदक्रामत्पुनरस्याऽअन्नाद्यमददात् ॥ ८ ॥

---

तानेतयाऽनुवाक्ययाऽन्ववदत् । "अग्निः सोमो वरुणो मित्र इंद्रो बृहस्पतिः सविता यः सहस्री । पूषा नो गोभिरवसा सरस्वती त्वष्टा रूपाणि समनक्तु यज्ञैः"—इति । ते प्रत्युपातिष्ठंत ॥ ६ ॥

तानेतया याज्यया परस्तात्प्रतिलोमं प्रत्यैत् । "त्वष्टा रूपाणि ददती सरस्वती पूषा भगं सविता मे ददातु । बृहस्पतिर्ददिंद्रो बलं मे मित्रः क्षत्रं वरुणः सोमो अग्निः"—इति । ते पुनर्दानायाध्रियंत ॥ ७ ॥

सैतानुपहोमानपश्यत् । "अग्निरन्नादोऽन्नपतिरन्नाद्यमस्मिन्यज्ञे मयि दधातु स्वाहा"—इति । आहुतिमेवादायाग्निरुदक्रामत् । पुनरस्या अन्नाद्यमददात् ॥ ८ ॥

---

हविषां निर्वापादिसंस्कारेषु समिधो यजतीत्यादाविव पाठप्राप्तः क्रमोऽवगंतव्यः । प्रदानं तु सर्वेषां सहैवेत्यभिप्रेत्य अग्न्यादिदशदेवतानामाक्षरवतीमनुवाक्यामाह—तानेतयेति । 'अन्ववदत्' अग्न्यादिलक्षणेनानुक्रमेणावदत् । एवमेकयैवर्चा समुच्चित्यानुवादे सति 'ते' अग्न्यादयः 'प्रत्युपातिष्ठंत' प्रत्यागत्य तत्समीपे अतिष्ठन् । ऋगर्थस्तु—अग्न्यादयो देवाः तदीयैर्यज्ञैः यज्ञसाधनैर्हविर्भिः प्रीताः संतः अन्नाद्यादिभिर्मां प्रत्येकं 'समनक्तु' संयोजयतु । 'सहस्री' सहस्रसंख्याकधनवान् एतत्सवितुर्विशेषणम् । पोषणीयैर्गोभिः सहितः 'पूषा' 'अवसा' रक्षणेन सहिता 'सरस्वती' पशुसंबंधीनि रूपाणि विकुर्वन् 'त्वष्टा' ॥ ६ ॥

तादृशीं याज्यामाह—तानेतयेति । तानुपस्थितान् देवान् 'एतया' वक्ष्यमाणया 'याज्यया' परस्तादन्तात् त्वष्टारमारभ्य 'प्रतिलोमं' प्रातिलोम्येनावरोहक्रमेणाग्निपर्यंतं 'प्रत्यैत्' प्रत्यगच्छत् । त्वष्टा रूपाणीति तत्साधनभूता याज्या । 'मे' मह्यं 'त्वष्टा' देवः 'रूपाणि' पूर्वं मत्सकाशादुपपन्नानि पुनर्ददातु । तथा 'सरस्वती' देवी 'ददती' इति 'पुष्टेः' पुनर्दात्री भवतु । 'पूषा' भगं 'ददातु' । 'सविता राष्ट्रं' ददातु । 'बृहस्पतिर्ब्रह्मवर्चसं' 'ददत्' प्रयच्छन् भवतु । 'इंद्रो बलम्' मह्यम् ददातु । 'मित्रः क्षत्त्रम्' मह्यम् ददातु । 'वरुणः' साम्राज्यम्, 'सोमो' राज्यम्, अग्निरन्नाद्यम् च मह्यम् प्रयच्छत्वित्यर्थः । एवम् याज्यानुवाक्याभ्याम् प्रार्थितास्ते देवाः अन्नाद्यादीनां पुनः प्रदानाय 'अध्रियंत' अंगीकृतवंतः ॥ ७ ॥

सैतानुपहोमानित्यादि । प्रधानयागसमीपे स्विष्टकृतः पूर्वं होतव्या होमा उपहोमाः । तानप्येतान् 'सा'

( त्सो ) सोमो राजा राजपतिः । ( ती ) राज्यमस्मिन्यज्ञे मयि दधातु स्वाहेत्याहुतिमेवादाय सोमऽ उदक्रामत्पुनरस्यै राज्यमददात् ॥ ९ ॥
( ह्व ) व्वरुणः सम्म्राट्सम्म्राट्पतिः । साम्म्राज्यमस्मिन् यज्ञे मयि दधातु स्वाहेत्याहुतिमेवादाय व्वरुणऽउदक्रामत्पुनरस्यै साम्म्राज्यमददात् ॥ १० ॥
( न्मि ) मित्रः क्षत्त्रं क्षत्त्रपतिः । क्षत्त्रमस्मिन्यज्ञे मयि दधातु स्वाहेत्याहुतिमेवादाय मित्रऽउदक्रामत्पुनरस्यै क्षत्त्रमददात् ॥ ११ ॥
( द्रि ) इन्द्रो बलं बलपतिः । ( बु ) बलमस्मिन्यज्ञे मयि दधातु स्वाहेत्याहुतिमेवादायेन्द्रऽउदक्रामत्पुनरस्यै बलमददात् ॥ १२ ॥

---

“ सोमो राजा राजपती राज्यमस्मिन्यज्ञे मयि दधातु स्वाहा ”–इति । आहुतिमेवादाय सोम उदक्रामत् । पुनरस्यै राज्यमददात् ॥ ९ ॥
“ वरुणः सम्राट् सम्राट्पतिः साम्राज्यमस्मिन्यज्ञे मयि दधातु स्वाहा ”–इति । आहुतिमेवादाय वरुण उदक्रामत् । पुनरस्यै साम्राज्यमददात् ॥ १० ॥
“मित्रः क्षत्रं क्षत्त्रपतिः क्षत्त्रमस्मिन्यज्ञे मयि दधातु स्वाहा”–इति । आहुतिमेवादाय मित्र उदक्रामत् । पुनरस्यै क्षत्त्रमददात् ॥ ११ ॥
“इन्द्रो बलं बलपतिर्बलमस्मिन्यज्ञे मयि दधातु स्वाहा”–इति । आहुतिमेवादायेन्द्र उदक्रामत् । पुनरस्यै बलमददात् ॥ १२ ॥

---

श्रीरपश्यत् । अथ तानुपहोममंत्रान्पठन् तत्तदाहुत्या तस्य तस्यान्नाद्यादेः परिक्रयेण प्राप्तिमाह–अग्निरन्नाद इत्यादि । अन्नमत्ति जाठररूपेण इति ‘ अन्नादः ’ ‘ अन्नपतिः ’ अन्नस्य प्रतिपालयिता ईदृशः ‘ अग्निः ’ ‘ अस्मिन् यज्ञे ’ मूलभूते सति प्रागुपहृतं मदीयमन्नाद्यम् ‘ मयि ’ पुनर्दधातु धारयतु । तदर्थमिदम् हविः ‘ स्वाहा ’ सुहुतमस्तु । एवं होमे सति ‘ आहुतिमेव ’ स्वीकृत्याग्निरुदक्रामत् उदगच्छत् । ‘ अस्यै ’ श्रियै ‘ अन्नाद्यम् ’ पुनरददात् । एवमुत्तरत्रापि योज्यम् ॥ ८ ॥

सोमो राजेति द्वितीयो मंत्रः । राज्ञां पालयिता ‘ राजपतिः ’ स्वयमपि ‘ राजा ’ निग्रहानुग्रहक्षमः स्वामी तादृशः ‘सोमः’ । अस्मिन् यज्ञे इत्यादि पूर्ववत् ॥ ९ ॥

वरुणः सम्राडिति तृतीय उपहोममंत्रः । ये हि राजानः स्वाज्ञया कृत्स्नं भूमंडलं शासति ते सम्राजः, तेषां पतिः ‘ सम्राट्पतिः ’ स्वयमपि ‘ सम्राट् ’ ईदृशो ‘ वरुणः ’ । गतमन्यत् ॥ १० ॥

चतुर्थमुपहोममंत्रमाह–मित्रः क्षत्रमिति । क्षत्त्रस्य क्षत्रियजातेः पतिः स्वामी ‘ क्षत्त्रपतिः ’ स्वयमपि ‘ क्षत्त्रं ’ क्षत्रियजात्यात्मकः । ‘ क्षत्त्रं ’ क्षतत्राणसामर्थ्यम् । गतमन्यत् ॥ ११ ॥

इंद्रो बलमिति पंचमो मंत्रः । बलस्य पालयिता ‘ बलपतिः ’ । स्वयमपि बलात्मकः ॥ १२ ॥

( ह्वु ) बृहस्पतिर्ब्रह्म ब्रह्मपतिः । ( र्ग ) ब्रह्मवर्चसमस्मिन्यज्ञे मयि दधातु स्वाहेत्याहुतिमेवादाय बृहस्पतिरुदक्रामत्पुनरस्यै ब्रह्मवर्चसमददात् ॥ १३ ॥

( त्स ) सविता राष्ट्रꣳ राष्ट्रपतिः । ( ती ) राष्ट्रमस्मिन्यज्ञे मयि दधातु स्वाहेत्याहुतिमेवादाय सवितोदक्रामत्पुनरस्यै राष्ट्रमददात् ॥ १४ ॥

( त्पू ) पूषा भगं भगपतिः । ( भ्रं ) भगमस्मिन्यज्ञे मयि दधातु स्वाहेत्याहुतिमेवादाय पूषोदक्रामत्पुनरस्यै भगमददात् ॥ १५ ॥

( त्स ) सरस्वती पुष्टिं पुष्टिपतिः । पुष्टिमस्मिन्यज्ञे मयि दधातु स्वाहेत्याहुतिमेवादाय सरस्वत्युदक्रामत्पुनरस्यै पुष्टिमददात् ॥ १६ ॥

( त्व ) त्वष्टा रूपाणाꣳ रूपकृद्रूपपतिः । ( ती ) रूपेण पशूनस्मि-

---

" बृहस्पतिर्ब्रह्म ब्रह्मपतिर्ब्रह्मवर्चसमस्मिन् यज्ञे मयि दधातु स्वाहा "—इति । आहुतिमेवादाय बृहस्पतिरुदक्रामत् । पुनरस्यै ब्रह्मवर्चसमददात् ॥ १३ ॥

" सविता राष्ट्रं राष्ट्रपती राष्ट्रमस्मिन्यज्ञे मयि दधातु स्वाहा "—इति । आहुतिमेवादाय सवितोदक्रामत् । पुनरस्यै राष्ट्रमददात् ॥ १४ ॥

" पूषा भगं भगपतिर्भगमस्मिन्यज्ञे मयि दधातु स्वाहा "—इति । आहुतिमेवादाय पूषोदक्रामत् । पुनरस्यै भगमददात् ॥ १५ ॥

" सरस्वती पुष्टिं पुष्टिपतिः पुष्टिमस्मिन्यज्ञे मयि दधातु स्वाहा "—इति । आहुतिमेवादाय सरस्वत्युदक्रामत् । पुनरस्यै पुष्टिमददात् ॥ १६ ॥

" त्वष्टा रूपाणां रूपकृद् रूपपती रूपेण पशूनस्मिन्यज्ञे मयि दधातु स्वाहा"—इति । आहुतिमेवादाय त्वष्टोदक्रामत् । पुनरस्यै रूपेण पशूनददात् ॥ १७ ॥

---

बृहस्पतिर्ब्रह्मेति षष्ठो मंत्रः । ब्रह्मणो वेदराशेः ब्राह्मणजातेर्वा पतिर्ब्रह्मपतिः । स्वयमपि ब्रह्मात्मकः । गतमन्यत् ॥ १३ ॥

सविता राष्ट्रमिति सप्तमो मंत्रः । राष्ट्रस्य देशस्य पतिः पालयिता ' राष्ट्रपतिः ' स्वयमपि ' राष्ट्रं ' राष्ट्रात्मकः ॥ १४ ॥

पूषा भगमित्यष्टमो मंत्रः । भगस्य सौभाग्यस्य पतिः ' भगपतिः ' । पूषा यं मदीयं भगं पूर्वमगृह्णात् तं ' भगं ' ' अस्मिन् यज्ञे ' इति सम्बन्धः ॥ १५ ॥

स्वरस्वती पुष्टिमिति नवमो मंत्रः । पुष्टेः पोषस्य पतिः ' पुष्टिपतिः ' । सरस्वती यां मदीयां पुष्टिं अगृह्णीत तां ' पुष्टिं मयि दधातु ' इति संबंधः ॥ १६ ॥

त्वष्टा रूपाणामिति दशमो मंत्रः । गोमहिष्यादिपशुरूपाणां ' रूपकृत् ' अवयवसन्निवेशस्वरूपस्य

न्यङ्गे मयि दधातु स्वाहेत्याहुतिमेवाडाय त्वष्टोदक्रामत्पुनरस्यै रूपेण पशूनददात् ॥ १७ ॥

(त्ता) ता वाऽएताः। (०) दश देवता दश हवीᳬंषि दशाहुतयो दश दक्षिणा दशंदशिनी विराट्च्छ्रीर्विराट्छ्रियाᳬं हैतद्विराज्यन्नाद्ये प्रतितिष्ठति ॥ १८ ॥

तस्यै पञ्चदश सामिधेन्यो भवन्ति। (न्त्यु) उपाᳬंशु देवता यजति पञ्च प्रयाजा भवन्ति त्रयोऽनुयाजाऽ एकᳬं समिष्टयजुः पुष्टिमन्तावाज्यभागावग्निना रयिमश्नवत्पोषमेव दिवेदिवे। यशसं वीरवत्तमम् ॥ गयस्फानोऽअमीवहा वसुवित्पुष्टिवर्द्धनः। सुमित्रः सोम नो भवेति सहस्रवत्यौ संयाज्ये नू नो रास्व सहस्रवत्तोकवत्पुष्टिमद्वसु। द्युमदग्ने सुवीर्य्यं वर्षिष्ठमनुपक्षितम् ॥ उत नो ब्रह्मन्नविषऽ उक्थेषु देवहूतमः। शन्नः शोचा मरुद्वृधोऽग्ने सहस्रसातमऽइति ॥ १९ ॥

---

ता वा एता दश देवताः। दश हवींषि। दशाहुतयः। दश दक्षिणाः। दशंदशिनी विराट्। श्रीर्विराट्। श्रियां हैतद्विराज्यन्नाद्ये प्रतितिष्ठति ॥ १८ ॥

तस्यै पंचदश सामिधेन्यो भवंति। उपांशु देवता यजति। पंच प्रयाजा भवंति। त्रयोऽनुयाजाः। एकं समिष्टयजुः। पुष्टिमंतावाज्यभागौ। "अग्निना रयिमश्नवत्पोषमेव दिवेदिवे। यशसं वीरवत्तमम्"। "गयस्फानोऽअमीवहा वसुवित्पुष्टिवर्द्धनः। सुमित्रः सोम नो भव" इति। सहस्रवत्यौ संयाज्ये। "नू नो रास्व सहस्रवत्तोकवत्पुष्टिमद्वसु। द्युमदग्ने सुवीर्यं वर्षिष्ठमनुपक्षितम्"। "उत नो ब्रह्मन्नविषऽउक्थेषु देवहूतमः। शन्नः शोचा मरुद्वृधोऽग्ने सहस्रसातमः" इति ॥ १९ ॥

---

कर्ता। अत एव रूपाणां पतिः स्वामी ईदृशस्त्वष्टा 'रूपेण' विशिष्टान् 'पशून् मयि दधातु'। गतमन्यत् ॥ १७ ॥

देवताहविरूपहोमे गवां दशसंख्यामनूद्य स्तौति—ता वा एता इति। 'दश दक्षिणाः' आहुतिदक्षिणात्वेन दश गावः अस्यामिष्टौ देया इत्यप्राप्तत्वाद्विधिः। दशंदशिनीति। प्रतिपादं दशभिरक्षरैः संख्यावती 'विराट्' सा च विराट् 'श्रीः' 'एतत्' एतया दशसंख्यविराड्रूपायां तस्यां 'श्रियां' 'अन्नाद्ये' एतदुपलक्षितेषु प्रागुदीरितेषु अन्नाद्यादिफलेषु च अनया इष्ट्या यजमानः 'प्रतितिष्ठति' ॥ १८ ॥

अथ तस्यामिष्टौ चोदकप्राप्तेषु अंगेषु कंचिद्विशेषं दर्शयितुं तान्यनुक्रामति—तस्यै पंचदश इति। विकृतिषु अनारभ्याधीतेन "सप्तदश सामिधेनीरन्वाह" इति वाक्येन सामिधेनीसाप्तदश्यं नियमितम्। अत एवोक्तमापस्तम्बेन—"पंचदश सामिधेन्यो दर्शपूर्णमासयोः सप्तदशेष्टिपशुबंधानाम्" इति। तस्य साप्तदश्यस्य नियमे

ताᳬं हैतां गोतमो राहूगणः । (णो) विदाञ्चकार सा ह जनकं वैदेहं प्रत्युत्ससाद ताᳬं हाङ्गजिद्ब्राह्मणेष्वन्वियेष तामु ह याज्ञवल्क्ये विवेद स होवाच सहस्रं भो याज्ञवल्क्य दद्मो यस्मिन्वयं त्वयि मित्रविन्दामन्वविदामेति विन्दते मित्रᳬं राष्ट्रमस्य भवत्युप पुनर्मृत्युं जयति सर्वमायुरेति यऽएवं विद्वानेतयेष्ट्या यजते यो वैतदेवं वेद ॥ २० ॥

इति तृतीयप्रपाठके प्रथमं ब्राह्मणम् ॥ ११-३-१ ॥ (४. ३.) ॥

---

तां हैतां गोतमो राहूगणो विदांचकार । सा ह जनकं वैदेहं प्रत्युत्ससाद । तां हांगजिद्ब्राह्मणेष्वन्वियेष । तामु ह याज्ञवल्क्ये विवेद । स होवाच—सहस्रं भो याज्ञवल्क्य दद्मः । यस्मिन् वयं

---

प्राकृतं पांचदश्यमेव प्रतिप्रसवार्थं विधीयते । षष्ठ्यर्थे चतुर्थी (पा. सू. ३। २। ६२। वा.) । उपांशु देवतेति । अग्न्याद्याः प्रधानदेवताः 'उपांशु यजति' । तद्वाचिनः अग्न्यादिशब्दान् उपांशूच्चरेदित्यर्थः । दर्शपूर्णमासविकृतित्वानयनाय इदमंगानां प्रयाजादीनामत्र सिद्धवदनुवचनम् । न हि प्रयाजादीनां पंचत्वादिसंख्यया नियमवतां मंत्रसंख्यांतरं प्रसक्तमस्ति । 'पुष्टिमंतौ' पुष्टिशब्दयुक्तावाज्यभागौ कार्यौ । तयोः पुष्टिमत्त्वं याज्यानुवाक्यालिंगवशान्नामधेयं भवति । ते याज्यानुवाक्ये दर्शयति—अग्निना रयिमिति । 'अग्निना' देवतया 'रयिं' धनं 'अश्नवत्' यजमानः प्राप्नुयात् । तस्य धनस्य 'दिवेदिवे' प्रतिदिवसं 'पोषम्' अतिवृद्धिमेव प्राप्नोति । न तु क्षयम् । तथा 'वीरवत्तमम्' वीराः पुत्राः तदतिशयेन तद्युक्तम् । 'यशसं' यशःशब्दः अंतोदात्तः पुँल्लिंगः । उक्तलक्षणं यशः प्राप्नोतीत्यर्थः । एषा आग्नेयस्याज्यभागस्यानुवाक्या । अथ सौम्यस्य गयस्फान इत्येषा । गय इति गृहनाम । तस्य वर्द्धयिता 'अमीवाः' रोगास्तेषां हंता । वसुनो धनस्य लंभयिता । पुष्टेः पोषस्य वर्द्धयिता । हे 'सोम !' एवंगुणविशिष्टस्त्वं 'नः' अस्माकं 'सुमित्रः' शोभनसख्ययुक्तः 'भव' । अथास्यामिष्टौ स्विष्टकृद्यागस्य याज्याऽनुवाक्ये विधत्ते—सहस्रवत्यौ संयाज्ये इति । स्विष्टकृद्याज्यानुवाक्ययोः 'संयाज्ये' इति संज्ञा सूचितेति । संयाज्ये सौविष्टकृती प्रतीयादिति । ते चात्र 'सहस्रवत्यौ' सहस्रयुक्ते भवतः । ते एव दर्शयति—नू नो रास्वेति । हे 'अग्ने !' 'नः' अस्मभ्यं 'नु' क्षिप्रं 'वसु' धनं 'रास्व' देहि । "रा दाने"(धा. पा. अ.प. ४७) इति धातुः । कीदृशं 'सहस्रवत्' सहस्रसंख्यायुक्तम् । तोकमिति अपत्यनाम । बह्वपत्योपेतम् । पुष्ट्या पोषणेन युक्तम् । द्युमदीतियुक्तम् । 'सुवीर्यं' शोभनवीर्योपेतं 'वर्षिष्ठं' वृद्धतरम् 'अनुपक्षितम्' उपक्षयरहितम् । उत नो ब्रह्मन्निति याज्या । हे अग्ने ! 'देवहूतमः' देवानामाह्वाता त्वं 'उक्थेषु' शस्त्रेषु सत्सु 'नः' अस्मान् 'अविषः' रक्ष । अवतेर्लेटि रूपम् । अपि च 'मरुद्वृधः' मरुतां देवानां वर्द्धयिता । यद्वा मरुता वायुना वर्द्धितः 'नः' अस्मभ्यं 'सहस्रसातमः' सहस्रसंख्याकस्य धनस्यातिशयेन दाता सन् 'शं' सुखं यथा भवति तथा 'शोच' दीप्यस्वेति ॥ १९ ॥

अस्या इष्टेर्मित्रविन्देति नाम निर्वक्तुं संप्रदायागतिमाह—तां हैतामिति । 'तां' तादृशीं एतामुक्ताम् इष्टिं रहूगणस्य पुत्रो गोतम ऋषिः 'विदांचकार' प्रथमं ददर्श । 'सा' च विदेहदेशाधिपतिं जनकाख्यं राजानं

अथातो हविषः समृद्धिः । षुड्ढ वै ब्रह्मणो द्वारोऽग्निर्व्वायुरापश्चन्द्रमा व्विद्युदादित्यः ॥ १ ॥

स यऽ उपदग्धेन हविषा यजते । ( तेऽग्नि ) अग्निना ह स ब्रह्मणो द्वारेण प्रतिपद्यते सोऽग्निना ब्रह्मणो द्वारेण प्रतिपद्य ब्रह्मणः सायुज्यँ सलोकताञ्जयति ॥ २ ॥

---

त्वयि मित्रविन्दामन्वविदामेति । विन्दते मित्रम् । राष्ट्रमस्य भवति । अप पुनर्मृत्युं जयति । सर्वमायुरेति । य एवं विद्वानेतयेष्ट्या यजते । यो वैतदेवं वेद ॥ २० ॥

हविरादिसमृद्ध्यभिधायकं ब्राह्मणम् ।

अथातो हविषः समृद्धिः । षड् ह वै ब्रह्मणो द्वारः । अग्निर्वायुरापश्चंद्रमा विद्युदादित्यः ॥ १ ॥ स य उपदग्धेन हविषा यजते; अग्निना ह स ब्रह्मणो द्वारेण प्रतिपद्यते । सोऽग्निना ब्रह्मणो द्वारेण प्रतिपद्य ब्रह्मणः सायुज्यं सलोकतां जयति ॥ २ ॥

---

' प्रति उत्ससाद ' उत्सन्ना बभूव । स जनकः तामिष्टिं वेदांगाभिज्ञेषु ' ब्राह्मणेषु ' 'अन्वियेष' अन्विष्टवान् । तामिष्टिं ' याज्ञवल्क्ये ' महर्षौ ' विवेद ' आलेभे । अनंतरं 'सः' खलु जनकः ' उवाच ' भो ' याज्ञवल्क्य ! ' सहस्रसंख्याकं धनं तुभ्यं ' दद्मः ' प्रयच्छामः । यस्मिंस्त्वयि मित्रविंदाख्यामिमामिष्टिं ' अन्वविदाम ' अन्विष्य आलभामहे अतो ' मित्रं विंदते ' लभते अनयेति ' मित्रविंदा ' नाम संपन्नम् । पुराकल्पव्याजेन साधारण्येन विहितायामिष्टौ अधिकारिणं उपसंहारव्याजेन दर्शयति—विंदते मित्रमिति । एवमुक्तप्रकारेण ब्राह्मणार्थं ' विद्वान् ' ' यः ' यजमानः ' एतया इष्ट्या यजते ' ' यो वा ' एतदर्थजातम् ' एवं वेद ' जानाति सः ' मित्रं विंदते ' लभते । ' अस्य राष्ट्रं ' स्वकीयं ' भवति ' । ' पुनर्मृत्युमपजयति ' सकृत् मृत्वा पुनरमर्त्यात्मके स्वर्गे लोके सुखेन वर्तते । सर्वमखंडितं आयुर्जीवनं प्राप्नोति ॥ २० ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यंदिनीयशतपथब्राह्मणभाष्ये एकादशकांडे चतुर्थोऽध्याये तृतीयं ब्राह्मणम् ॥ ( ११ । ४ । ३ ) ॥

दाहविपतनादिदोषदुष्टस्यापि हविषः समृद्ध्युपायं उपासनं विधित्सुः प्रतिजानीते—अथातो हविषः समृद्धिरिति । येनोपायेन 'हविषः समृद्धिः' भवति स उच्यत इत्यर्थः । विधित्सितस्योपासनस्य विषयभूतमुपास्यं प्रतिपादयति—षड्ढ वा इति । 'ब्रह्मणः' ब्रह्मलोकस्य 'द्वारः' द्वाराणि 'षट् ' भवंति । तानि चाग्न्यादीनि ॥ १ ॥

तत्र यतोऽग्निर्ब्रह्मणो द्वारं ततः तेनोपदग्धो हविर्योगः अग्न्याख्येन ' द्वारेण ' ब्रह्मलोकप्राप्त्युपाय इत्याह—स य उपदग्धेनेति । तस्य विदुषो न केवलं ब्रह्मप्रपदनमात्रं, अपि तु तत्सायुज्यादिकमपि फलमित्याह—सोऽग्निना ब्रह्मणो द्वारेणेति ॥ २ ॥

---

१—मित्रविन्दा श्रीराष्ट्रमित्रायुष्कामस्य । का. श्रौ. सू. ५ । ३०७ ।

( त्यु ) अथ यो व्विपतितेन हविषा युजते । व्वायुना ह स ब्रह्मणो द्वारेण प्रतिपद्यते स व्वायुना ब्रह्मणो द्वारेण प्रतिपद्य ब्रह्मणः सायुज्यꣳ सलोकतां जयति ॥ ३ ॥

( त्यु ) अथ योऽश्रृतेन हविषा युजते । ( तेऽद्भि ) अद्भिर्ह स ब्रह्मणो द्वारेण प्रतिपद्यते सोऽद्भिर्ब्रह्मणो द्वारेण प्रतिपद्य ब्रह्मणः सायुज्यꣳ सलोकतां जयति ॥ ४ ॥

( त्यु ) अथ यऽउपरक्तेन हविषा युजते । चन्द्रमसा ह स ब्रह्मणो द्वारेण प्रतिपद्यते स चन्द्रमसा ब्रह्मणो द्वारेण प्रतिपद्य ब्रह्मणः सायुज्यꣳ सलोकतां जयति ॥ ५ ॥

( त्यु ) अथ यो लोहितेन हविषा युजते । व्विद्युता ह स ब्रह्मणो द्वारेण प्रतिपद्यते स व्विद्युता ब्रह्मणो द्वारेण प्रतिपद्य ब्रह्मणः सायुज्यꣳ सलोकतां जयति ॥ ६ ॥

---

अथ यो विपतितेन हविषा यजते; वायुना ह स ब्रह्मणो द्वारेण प्रतिपद्यते । स वायुना ब्रह्मणो द्वारेण प्रतिपद्य ब्रह्मणः सायुज्यं सलोकतां जयति ॥ ३ ॥

अथ योऽश्रृतेन हविषा यजते; अद्भिर्ह स ब्रह्मणो द्वारेण प्रतिपद्यते । सोऽद्भिर्ब्रह्मणो द्वारेण प्रतिपद्य ब्रह्मणः सायुज्यं सलोकतां जयति ॥ ४ ॥

अथ य उपरक्तेन हविषा यजते; चंद्रमसा ह स ब्रह्मणो द्वारेण प्रतिपद्यते । स चंद्रमसा ब्रह्मणो द्वारेण प्रतिपद्य ब्रह्मणः सायुज्यं सलोकतां जयति ॥ ५ ॥

अथ यो लोहितेन हविषा यजते; विद्युता ह स ब्रह्मणो द्वारेण प्रतिपद्यते । स विद्युता ब्रह्मणो द्वारेण प्रतिपद्य ब्रह्मणः सायुज्यं सलोकतां जयति ॥ ६ ॥

---

वायुर्ब्रह्मद्वारमित्याद्युपासनस्य फलमाह—अथ यो विपतितेनेति । 'यः' यजमानः प्रमादाद्विपतितेन भूमौ पतितेन 'हविषा यजते', तत्र विपतनक्रियाया वाय्वधीनत्वात् वायोर्बुद्धिस्तत्र कार्या । स च वायुलक्षणेन 'ब्रह्मणो द्वारेण' 'प्रतिपद्यते' । तेन ब्रह्मणा 'सायुज्यम्' एकीभावं 'सलोकतां' समानलोकतां 'जयति' । एवमुत्तरत्रापि योज्यम् ॥ ३ ॥

अथ योऽश्रृतेनेति । 'यः' यजमानः अश्रृतेनापकेन 'हविषा यजते' । तत्राश्रृतत्वं जलावयवकृतमिति तद्बुद्धिस्तत्र कार्या । तस्य फलमाह—अद्भिर्हेति । गतप्रायमेतत् ॥ ४ ॥

अथ य उपरक्तेनेति । 'अथ यः' यजमानः 'उपरक्तेन' उपांतस्थितरक्तिमगुणेन 'हविषा यजते' । तत्र हविष उपांतरक्तत्वं यत् तत् चंद्रबिंबसदृशमिति, तत्र तद्बुद्धिः कार्या । चंद्रमसा ह स इत्यादि पूर्ववत् योज्यम् ५

अथ यो लोहितेनेत्यादि । 'यः' यजमानः 'लोहितेन' सर्वतो रक्तवर्णेन 'हविषा यजते' । तत्र लोहितत्वं विद्युद्धर्म इति तद्बुद्धिस्तत्र कार्या । विद्युता हेत्यादि पूर्ववत् ॥ ६ ॥

( त्यु ) अथ यः सुश्रृतेन हविषा यजते । ( त२ ) आदित्येन ह स ब्रह्मणो द्वारेण प्रतिपद्यते स ऽ आदित्येन ब्रह्मणो द्वारेण प्रतिपद्य ब्रह्मणः सायुज्यꣳ सलोकताञ्जयति सैषा हविषः समृद्धिः स यो हैवमेताꣳ हविषः समृद्धिं वेद सर्व्वसमृद्धेन हैवास्य हविषेष्टं भवति ॥ ७ ॥

( त्य ) अथातो यज्ञस्य समृद्धिः । ( यं ) यद्वै यज्ञस्य न्यूनं प्रजननमस्य तदथ यदतिरिक्तं पशव्यमस्य तदथ यत्सङ्कसुकꣳ श्रिया ऽअस्य तदथ यत्सम्पन्नꣳ स्वर्ग्ग्यमस्य तत् ॥ ८ ॥

( त्स ) स यदि मन्येत । न्यूनम्मे यज्ञेऽभूदिति प्रजननम्म ऽ एतत्प्रजनिष्य ऽ इत्येव तदुपासीत ॥ ९ ॥

---

अथ यः सुश्रृतेन हविषा यजते; आदित्येन ह स ब्रह्मणो द्वारेण प्रतिपद्यते । स आदित्येन ब्रह्मणो द्वारेण प्रतिपद्य ब्रह्मणः सायुज्यं सलोकतां जयति । सैषा हविषः समृद्धिः । स यो हैवमेतां हविषः समृद्धिं वेद । सर्वसमृद्धेन हैवास्य हविषेष्टं भवति ॥ ७ ॥

अथातो यज्ञस्य समृद्धिः । यद्वै यज्ञस्य न्यूनं प्रजननमस्य तत् । अथ यदतिरिक्तं पशव्यमस्य तत् । अथ यत्संकसुकं श्रिया अस्य तत् । अथ यत्संपन्नं स्वर्ग्यमस्य तत् ॥ ८ ॥

स यदि मन्येत । न्यूनं मे यज्ञेऽभूदिति । प्रजननं म एतत् । प्रजनिष्य इत्येव तदुपासीत ॥ ९ ॥

---

इत्थमपाकातिपाकहविषामुपासनानि उक्तानि । सुश्रृतहविर्विषयमाह—अथ यः सुश्रृतेनेति । सुष्ठु सम्यक् श्रृतेन 'हविषा' पुरोडाशादिना 'यः यजते' तत्र सम्यक् पाक आदित्यधर्मः, अतस्तत्र हविषि आदित्यबुद्धिः कार्या । आदित्येनेत्यादि पूर्ववत् । एवमुपदग्धादीनां हविषां या इयं अग्न्याद्यात्मकता उक्ता 'सा एषा हविषः समृद्धिः' । सा उपासकस्यैव उक्तफलहेतुरित्याह—स यो हैवमेतामिति । उपदाहादिदोषस्यापि समृद्धिरूपेण वेदनात् 'अस्य' विदुषः 'सर्वसमृद्धेनैव हविषा' यागः कृतो भवतीत्यर्थः ॥ ७ ॥

इत्थं हविषः समृद्धिमुपपाद्य, अथ तत्साध्यस्य यज्ञस्यापि न्यूनत्वादिदोषपरिहाराय समृद्धिं वक्तुं प्रतिजानीते—अथातो यज्ञस्य समृद्धिरिति । यतो वक्ष्यमाणप्रकारेण न्यूनत्वादिदोषाः परिह्रियंते अतः कारणात् यज्ञस्य समृद्धिरधिक्रियत इत्यर्थः । अथ तां समृद्धिं वक्तुं न्यूनत्वादिधर्माणां तावत् यज्ञावयवत्वमाह—यद्वै यज्ञस्येति । 'यद्वै' यत् खलु यज्ञसंबंधि 'न्यूनं' प्रमादादननुष्ठितमङ्गम् । 'तदस्य' यज्ञस्य 'प्रजननं' प्रजोत्पत्तिसाधनमिन्द्रियम् । 'अथ' यज्ञसंबंधि 'यदतिरिक्तं' प्रमादादनुष्ठितमङ्गम् । 'तत्पशव्यं' पशुहितम् । 'यत् संकसुकं' दोषसंमिश्रमङ्गं कृतं 'श्रिये अस्य तत्' । 'अथ यत् संपन्नं' सम्यगनुष्ठितं कर्म 'तदस्य' यज्ञस्य 'स्वर्ग्यं' स्वर्गप्राप्त्युपायभूतं रूपम् ॥ ८ ॥

अथ एतदुपजीवनेन यज्ञसमृद्ध्यर्थं तदुपास्तिमाह—स यदि मन्येतेति । 'सः' यजमानः 'यदि मन्येत'

( तु ) अथ यदि मन्येत । ( तु ) अतिरिक्तं मे यज्ञेऽभूदिति पशव्यम्मऽ एतत्पशुमान्भविष्यामीत्येव तदुपासीत ॥ १० ॥

( तु ) अथ यदि मन्येत । सङ्कसुकम्मे यज्ञेऽभूदिति श्रियै मऽएतदा मा श्रीस्तेजसा यशसा ब्रह्मवर्चसेन परिवृता गमिष्यतीत्येव तदुपासीत ॥ ११

( तु ) अथ यदि मन्येत । सम्पन्नम्मे यज्ञेऽभूदिति स्वर्ग्यम्मऽ एतत्स्वर्ग्गलोको भविष्यामीत्येव तदुपासीत सैषा यज्ञस्य समृद्धिः स यो हैवमेतां यज्ञस्य समृद्धिं व्वेद सर्व्वसमृद्धेन हैवास्य यज्ञेनेष्टं भवति ॥ १२ ॥

इति तृतीयप्रपाठके द्वितीयं ब्राह्मणम् ॥ ११-३-२ ॥ ( ४. ४. ) ॥

इति चतुर्थोऽध्यायः समाप्तः ॥ ११-४ ॥

---

अथ यदि मन्येत । अतिरिक्तं मे यज्ञेऽभूदिति । पशव्यं म एतत् । पशुमान् भविष्यामीत्येव तदुपासीत ॥ १० ॥

अथ यदि मन्येत । संकसुकं मे यज्ञेऽभूदिति । श्रियै म एतत् । आ मा श्रीस्तेजसा यशसा ब्रह्मवर्चसेन परिवृता गमिष्यतीत्येव तदुपासीत ॥ ११ ॥

अथ यदि मन्येत । संपन्नं मे यज्ञेऽभूदिति । स्वर्ग्यं म एतत् । स्वर्गलोको भविष्यामीत्येव तदुपासीत । सैषा यज्ञस्य समृद्धिः । स यो हैवमेतां यज्ञस्य समृद्धिं वेद । सर्वसमृद्धेन हैवास्य यज्ञेनेष्टं भवति ॥ १२ ॥

---

जानीयात् । मदीये 'यज्ञे' 'न्यूनं' किमपि अंगमनुष्ठितमिति । तदानीं स यजमानः 'मे' मदीयं 'एतत् न्यूनं' यज्ञसंबंधि 'प्रजननं' प्रजासाधनम् । अतः अहं 'प्रजनिष्ये' पुत्राद्यात्मना प्रकर्षेण जनिष्ये इति अनेन रूपेण तन्न्यूनमुपासीत जानीयात् ध्यायेद्वा । अनया उपासनया न्यूनत्वदोषपरिहारे सति यज्ञसमृद्धिर्भवतीति भावः ॥ ९ ॥

अथातिरिक्तस्योपास्त्या यज्ञसमृद्धिमाह—अथ यदि मन्येतेति । यज्ञसंबंधिपशव्यरूपेणातिरिक्तस्योपासनात् अतिरेकदोषपरिहारेण यज्ञसमृद्धिर्भवतीत्यर्थः ॥ १० ॥

अथ संकसुकत्वदोषस्य उपास्त्या यज्ञस्य समृद्धिमाह—अथ यदि मन्येतेति । पूर्ववद्योज्यम् । श्रियै म एतदिति । 'एतत्' संकसुकदोषसंमिश्रमंगम् 'मे' मम 'श्रियै' लक्ष्म्यै अतो मां सा 'श्रीः' 'तेजसा' शरीरकांत्या 'यशसा' कीर्त्या 'ब्रह्मवर्चसेन' ब्रह्मतेजसा 'परिवृता' वेष्टिता सती 'आगमिष्यति' इत्यनेन प्रकारेण 'तत्' संकसुकदोषसंमिश्रयज्ञांगम् 'उपासीत' तेन च स दोषो निवर्तेत इत्यर्थः ॥ ११ ॥

इत्थं न्यूनातिरिक्तदोषस्योपासनया समीकरणमुक्त्वा सम्यगनुष्ठितस्यापि अंगस्याधिकफलसिध्यर्थं उपा-

सनमाह–अथ यदि मन्येतेति । स्पष्टमेतत् । प्रतिज्ञातां यज्ञसमृद्धिं निगमयति–सैषा यज्ञस्य समृद्धिरिति । तत्र समृद्धिरूपवेदनस्य फलमाह–स यो हैवमेतामिति । स्पष्टोऽर्थः ॥ १२ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये एकादशकाण्डे चतुर्थेऽध्याये चतुर्थं ब्राह्मणम् ॥ ( ११–४–४ ) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं,
सप्ताम्भोधीन्पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटं च ॥
धान्याद्रिं धन्यजन्मा तिलभवमतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान्गुडकृतमजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणजमनृणः शार्करं चार्कतेजा,
रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये एकादशकाण्डे चतुर्थोऽध्यायः समाप्तः ॥ ( ११ । ४ ) ॥



# अथ पञ्चमेऽध्याये प्रथमं ब्राह्मणम् ।

# तृतीयप्रपाठके च तृतीयं ब्राह्मणम् ।



उर्व्वशी हाप्सराः । पुरूरवसमैडञ्चकमे तुᳩं ह व्विन्दमानोवाच त्रिः स्म माऽह्नो व्वैतसेन दण्डेन हतादकामाᳩं स्म मा निपद्यासै मो स्म त्वा नग्नं दर्शमेष वै न स्त्रीणामुपचारऽ इति ॥ १ ॥

सा हास्मिञ्ज्योगुवास । ( सा ) अपि हास्माद्गर्भिण्यास तावज्ज्योग्घास्मिन्नुवास ततो ह गन्धर्व्वाः समूदिरे ज्योग्वाऽ इयमुर्व्वशी मनुष्येष्ववात्सीदुपजानीत यथेयम्पुनरागच्छेदिति तस्यै हाविद्व्युरणा शयनऽ उपबद्धाऽऽस ततो ह गन्धर्व्वाऽअन्यतरमुरणं प्रमेथुः ॥ २ ॥

---

### आश्वत्थ्योररण्योरुत्पत्तिख्यापकं ब्राह्मणम् ।

उर्वशी हाप्सराः पुरूरवसमैडं चकमे । तं ह विंदमानोवाच । त्रिः स्म माऽह्नो वैतसेन दंडेन हतात् । अकामां स्म मा निपद्यासै । मो स्म त्वा नग्नं दर्शम् । एष वै नः स्त्रीणामुपचार इति ॥ १ ॥

सा हास्मिन् ज्योगुवास । अपि हास्माद्गर्भिण्यास तावत् । ज्योग्घास्मिन्नुवास । ततो ह गंधर्वाः

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

इत्थं दर्शपूर्णमासौ प्रशस्य तद्विकृतिभूतान् चातुर्मास्यादीन् प्रशंसिष्यन् तत्राग्निमंथनसद्भावात् तत्साधनभूतयोररण्योरश्वत्थविकृतित्वं विधित्सुः तदर्थमाख्यायिकां रचयति–उर्वशी हाप्सरा इति । इडा नाम मनोर्दुहिता । तस्यां सोमपुत्रेण बुधेनोत्पादितं इडायाः पुत्रं 'पुरूरवसं' राजानं शापवशात् मानुषभावं प्राप्ता उर्वश्याख्या 'अप्सराः' देवस्त्री 'चकमे' कामितवती । ततः 'तं' पुरूरवसं 'विंदमाना उवाच' उक्तवती । तदुक्तिप्रकारमाह–त्रिः स्म माऽह्न इति । हे पुरूरवः ! 'अह्नः' दिवसस्य त्रिस्त्रिवारं 'मा' मां 'वैतसेन' 'दंडेन' पुंस्प्रजननेन 'हतात्' उपभुंक्ष्व । वैतस इति पुंस्प्रजननस्य नाम । उक्तं हि यास्केन "शेफो वैतस इति पुंस्प्रजननस्य" ( निरु. ३।२१।३ ) इति । तथा 'अकामां' कामरहितां सुरताभिलाषरहितां च मां 'मा स्म निपद्यासै' निगृह्य न प्राप्नुयाः । तथा 'नग्नं' आच्छादनरहितं त्वां 'मो स्म दर्शम्' नैव पश्येयम् । एतत् त्रितयं यावन्नियमेन करिष्यसि तावदहं तव जाया भविष्यामि । 'एष वै' एतादृशः खलु नोऽस्माकं 'स्त्रीणां' 'उपचारः' परिचर्या, इतिशब्दः उर्वशीवाक्यपरिसमाप्तौ ॥ १ ॥

सा हास्मिन्नित्यादि । इत्थं कृतनियमा 'सा' उर्वशी 'अस्मिन्' पुरूरवसि 'ज्योक्' चिरकालं 'उवास' निवासं कृतवती । 'अपि' खलु अस्मात्पुरूरवसः यावता कालेन 'गर्भिणी आस' गर्भयुक्ता

सा होवाच । ( चा ) अवीरऽ इव बत मेऽजनुऽ इव पुत्रꣳ हरन्तीति द्वितीयं प्रमेथुः सा ह तथैवोवाच ॥ ३ ॥

( चा ) अथ हायमीक्षाञ्चक्रे । कथन्नु तदवीरङ्कथमजनꣳ स्याद्यत्राहꣳ स्यामिति स नग्नऽ एवानूत्पपात चिरन्तन्मेने यद्वासः पर्य्यधास्यत ततो ह गन्धर्व्वा विद्युतञ्जनयाञ्चक्रुस्तं यथा दिवैवं नग्नं ददर्श ततो हैवेयं तिरोबभूव पुनरैमीत्येत्तिरोभूताꣳ सऽआध्या जलपन्कुरुक्षेत्रꣳ समया चचारान्यतःप्लक्षेति बिसवती तस्यै हाध्यन्तेन वव्राज तद्ध ताऽअप्सरसऽ आतयो भूत्वा परिपुप्लुविरे ॥ ४ ॥

---

समूदिरे । ज्योग्वा इयमुर्वशी मनुष्येष्ववात्सीत् । उपजानीत । यथेयं पुनरागच्छेदिति । तस्यै हाविद्ध्युरणा शयन उपबद्धाऽऽस । ततो ह गंधर्वा अन्यतरमुरणं प्रमेथुः ॥ २ ॥

सा होवाच । अवीर इव बत मेऽजन इव पुत्रं हरंतीति । द्वितीयं प्रमेथुः । सा ह तथैवोवाच ॥ ३ ॥

अथ हायमीक्षांचक्रे । कथं नु तदवीरं कथमजनं स्यात्; यत्राहं स्यामिति । स नग्न एवानूत्पपात । चिरं तन्मेने; यद्वासः पर्यधास्यत । ततो ह गंधर्वा विद्युतं जनयांचक्रुः । तं यथा दिवैवं

---

बभूव । तावत्पर्यंतं चिरकालं अस्मिन्नुवासेत्यर्थः । एवमुर्वश्यां चिरकालं मनुष्यलोकसंस्थायिन्यां तद्विरहमसहमानैर्गंधर्वैः कृतं तद्धरणोपायं दर्शयति—ततो ह गंधर्वा इत्यादिना । ततस्तस्मात् उर्वश्याः मनुष्योपभोगात् हेतोः 'गंधर्वाः' संभूय 'समूदिरे' संवादं मंत्रालोचनं कृतवंतः । कथमियमुर्वशी 'मनुष्येषु' 'ज्योक्' चिरकालं 'अवात्सीत्' वासमकार्षीत् । यथा येन प्रकारेण इयमस्मान्पुनरागच्छेत्, तं प्रकारं 'उपजानीत' पर्यालोचयत । एतस्मिन्नवसरे तस्याः खलु उर्वश्याः शयनप्रदेशे 'द्व्युरणा' द्वावुरणौ बालकौ मेषौ यस्यास्तादृशी अविर्मेषी 'उपबद्धा आस' उपनिबद्धा बभूव । तौ द्वावुरणौ उर्वश्या पुत्रत्वेन पालितौ । 'ततः' संवादानंतरं एतज्जानानाः 'गंधर्वाः' तयोः 'अन्यतरमुरणं' 'प्रमेथुः' अपजह्रुः ॥ २ ॥

सा होवाचेत्यादि । तस्मिन्नुरणे अपहृते सति 'सा' उर्वशी 'उवाच' उक्तवती । 'अवीरे' वीरपुरुषरहिते 'इव' देशे 'अजने' जनरहिते 'इव' देशे मदीयं उरणरूपं 'पुत्रं हरंतीति' 'बत' खेदे । एवमुक्तेऽपि पुरूरवास्तूष्णीं स्थितवान् । ततो गंधर्वा द्वितीयमप्युरणं 'प्रमेथुः' अपजह्रुः । 'सा' खलु उर्वशी पुनरपि 'तथैवोवाच' वीरपुरुषरहिते देशे जनरहितदेशे यथा चौरादयो गवादिधनमपहरंति तथा मदीयं पुत्रत्वेन स्वीकृतं उरणद्वयं गंधर्वा अपजह्रुः इति ॥ ३ ॥

एवमस्यां विलपंत्यां सत्यां पुरूरवाः किं कृतवानिति तदाह—अथ हायमीक्षांचक्रे इति । 'अथ' अनंतरं 'अयं' समीपे शयानः पुरूरवाः 'ईक्षांचक्रे' पर्यालोचितवान् । 'यत्र' यस्मिन् स्थाने 'अहं स्याम्' भवेयम् । तत्स्थानं 'कथं नु' केन खलु प्रकारेण 'अवीरं' वीररहितं तत् 'कथं वा' 'अजनं' जनरहितं 'स्यात्'

---

१—'ऐत्' इति साधीयान् । 'एत्' इति प्रमादादार्षत्वाद्वा जातं प्रतिभाति ।

तुग्ँ हेयं ज्ञात्वोवाच । ( चा ) अयं वै स मनुष्यो यस्मिन्नहमवात्समिति ता होचुस्तस्मै वाऽआविरसामेति तथेति तस्मै हाविरासुः ॥ ९ ॥

( स्ताग्ँ ) ताग्ँ हायं ज्ञात्वाऽभिपरोवाद । हये जाये मनसा तिष्ठ घोरे

---

नग्नं ददर्श । ततो हैवेयं तिरोबभूव । पुनरैमीत्येत् । तिरोभूतां स आध्या जल्पन् कुरुक्षेत्रं समया चचार । अन्यतःप्लक्षेति । बिसवती । तस्यै हाध्यंतेन वव्राज । तद्ध ता अप्सरस आतयो भूत्वा पुप्लुविरे ॥ ४ ॥

तं हेयं ज्ञात्वोवाच—अयं व स मनुष्यः, यस्मिन्नहमवात्सामिति । ता होचुः । तस्मै वा आविरसामेति । तथेति । तस्मै हाविरासुः ॥ ९ ॥

तां हायं ज्ञात्वाऽभिपरोवाद । "हये जाये मनसा तिष्ठ घोरे वचांसि मिश्रा कृणवा-

---

एवमीक्षित्वा 'सः' पुरूरवाः उर्वश्या सह शयनं त्यक्त्वा 'नग्नः' विवसनः 'एव' सन् 'अनूत्पपात' गंधर्वैः सह योद्धुमुचक्राम । नग्न एवेत्यत्र कारणमाह—चिरं तन्मेन इति । 'वासः पर्यधास्यत' वासःपरिधानं क्रियते इति यदस्ति, 'तच्चिरं मेने' कालविलंबः स्यादिति बुध्यते स्म । तस्मान्नग्न एवानूत्पपातेत्यर्थः । ततो ह गंधर्वा इत्यादि । ततोऽनंतरं 'गंधर्वाः' नग्नमागच्छंतं पुरूरवसं दृष्ट्वा उर्वशीसमयभंगाय नग्नस्यैव तस्य दर्शनार्थं 'विद्युतं जनयांचक्रुः' । तत्प्रभया 'यथा दिवा' अहनि 'एवं' 'तं' पुरूरवसं 'नग्नं' उर्वशी 'ददर्श' दृष्ट्वा च मम समयभंगो जात इति अनंतरमेव इयमुर्वशी 'तिरोबभूव' अदृश्या बभूव । 'पुनरैमि' आगच्छामि 'इति' ब्रुवाणा 'एत्' स्वर्गलोकमागच्छत् । पुनः पुरूरवसा कृतं दर्शयति—तिरोभूतामिति । 'तिरोभूतां' अंतर्हितां उर्वशीं 'सः' पुरूरवाः 'आध्या' विरहजनिता मनःपीडा आधिः, तया 'जल्पन्' प्रलपन् 'कुरुक्षेत्रं' 'समया' "अभितःपरितःसमया" (पा. सू. २।३।२ वा.) इति समयायोगे द्वितीया । कुरुक्षेत्रस्य समीपे 'चचार' उर्वशीं द्रष्टुकामो भ्रमणं कृतवान् । अन्यतःप्लक्षेत्यादि । तत्र कुरुक्षेत्रे एकत्र देशे 'अन्यतःप्लक्षा' नाम 'बिसवती' पद्मिनी सरसी 'तस्यै हाधि' तस्याः समीपदेशे 'अंतेन' अंतिकेन तटप्रदेशेन 'वव्राज' गतवान् । अथोर्वश्याः पुनः प्रादुर्भावमाह—तद्ध ता अप्सरस इति । 'तद्ध' तत्र खलु अन्यतःप्लक्षाख्ये सरसि 'ताः' उर्वशीप्रमुखाः 'अप्सरसः' 'आतयः' जलचरपक्षिविशेषस्यैषा संज्ञा, तद्रूपाः 'भूत्वा' 'परिपुप्लुविरे' परिप्लवनं जलक्रीडां कृतवत्यः ॥ ४ ॥

एतस्मिन्नंतरे तीरदेशे गच्छंतं 'तं' पुरूरवसं 'ज्ञात्वा' इयमुर्वशी सखीभिः सह उक्तवती, 'अयं' खलु 'स मनुष्यः' 'यस्मिन्नहं' एतावंतं कालं 'अवात्सं' जायात्वेन स्थिता "वस निवासे" (धा. पा. भ्वा. प. १०३०) इत्यस्माद्धातोर्लुङि सिचि "सः स्यार्धधातुके" (पा. सू. ७ । ४ । ४९) इति तत्वम् । 'ताः' सख्यः एतद्वाक्यं श्रुत्वा ऊचुरुक्तवत्यः । किमिति ? 'तस्मै' मनुष्याय वयम् 'आविरसाम' प्रादुर्भवामेति । 'तथेति' परस्परमंगीकृत्य 'तस्मै' पुरूरवसे 'आविरासुः' पक्षिरूपं विहाय स्वकीयेन रूपेण प्रादुर्बभूवुः ॥ ९ ॥

ततः 'अयम्' पुरूरवा अप्सरोगणमध्ये तामुर्वशीं 'ज्ञात्वा' अभिलक्ष्य परावृत्तः सन्नुवाद 'हये जाये'

त्वचाꣳसि मिश्रा कृणवावहै नु । न नौ मन्त्राऽअनुदितासऽ एते मयस्करन्परतरे च नाहन्नित्युप नु रम सं नु वदावहाऽ इति हैवैनां तदुवाच ॥ ६ ॥

तꣳ हेतरा प्रत्युवाच । किमेता वाचा कृणवा तवाहं प्राक्रमिषमुषसामग्रियेव । पुरूरवः पुनरस्तम्परेहि दुरापना वातऽ इवाहमस्मीति न वै त्वं तदकरोर्य्यदहमब्रवं दुरापा वाऽ अहं त्वयैतर्ह्यस्मि पुनर्गृहानिहीति हैवैनं तदुवाच ॥ ७ ॥

---

वहै नु । न नौ मंत्रा अनुदितास एते मयस्करन्परतरे च नाहन्''–इति । उप नु रम सं नुवदावहै; इति हैवैनां तदुवाच ॥ ६ ॥

तं हेतरा प्रत्युवाच । "किमेता वाचा कृणवा तवाहं प्राक्रमिषमुषसामग्रियेव । पुरूरवः पुनरस्तं परेहि दुरापना वात इवाहमस्मि''–इति । न वै त्वं तदकरोः । यदहमब्रवम् । दुरापा वा अहं त्वया एतर्ह्यस्मि, पुनर्गृहानिहि; इति हैवैनं तदुवाच ॥ ७ ॥

---

इति आबभाषे । तदेतत् उर्वशीपुरूरवसोः उक्तिप्रत्युक्तिरूपं पंचदशर्चं सूक्तम् । तत्र "हये जाये" इत्येतत् पुरूरवसो वाक्यम् । अयमर्थः–विरहव्याकुलितमनस्कतया अभिमुखीकरणार्थं हेशब्दं प्रयुंजानः 'हये' इति विपर्ययं प्रयुक्तवान्, हे 'जाये' 'मनसा' 'घोरे' क्रूरहृदये इत्यर्थः । एवंभूते हे उर्वशि ! 'तिष्ठ' मा गाः । 'नु' अद्य 'वचांसि' पूर्वोक्तशेषाणि वाक्यानि 'मिश्रा' मिश्राणि उक्तिप्रत्युक्तिरूपेण मिश्रीकृतानि 'कृणवावहै' आवां करवावहै । 'नौ' आवयोर्मंत्राः गुप्तभाषितानि रहस्योक्तिविशेषाः 'अनुदितासः' अनुक्ताः संतः यतः 'मयः' सुखनामैतत् । ( निरु. ३ । १३ । ११ ) इति । सुखम् 'न करन्' न कुर्वंति । तथा 'परतरेऽहन् च' परस्मिन्नप्यहनि अनुक्ता एते सुखम् न कुर्वंति । अतः हेतोस्तिष्ठ मा गा इत्यर्थः । अस्या ऋचस्तात्पर्यं श्रुतिः स्वयम् व्याचष्टे–उप नु रमेति । हे जाये ! 'नु' अद्य 'उपरम' गमनान्निवर्तस्व । 'नु' क्षिप्रम् आवाम् 'संवदावहै' मिश्रसंभाषणं करवावहै 'इति ह' एवमेव खलु एतया ऋचा एनामुर्वशीं पुरूरवाः 'उवाच' ॥ ६ ॥

तꣳ हेतरा इत्यादि । 'इतरा' उर्वशी पुरूरवसम् 'प्रत्युवाच' 'किमेता वाचा कृणवा' इति । हे पुरूरवः 'एता' एतया त्वदीयया अर्थशून्यया 'वाचा' 'किं कृणवा' अहं किं कुर्याम् । समयभंगान्निमित्तात् अहम् त्वत्सकाशात् 'प्राक्रमिषम्' प्रस्थानमकार्षम् । तत्र दृष्टांतः–सूर्योदयेन विनिवर्त्यानां 'उषसां' मध्ये 'अग्रिया' अग्रे भवा पूर्वा उषाः यथा प्रक्रामति न पुनरावर्तते, एवम् प्राक्रमिषमित्यर्थः । अतस्त्वं निराशो भूत्वा 'अस्तम्' गृहनामैतत् ( निरु. ३ । १३ । ९ ) इति । स्वकीयम् गृहम् 'पुनः परेहि' पराङ्मुखो निवर्तस्व । अहम् पुनर्दुरापना आप्तुमशक्या । यस्मादहम् देवस्त्री त्वं मनुष्यः । अतः 'वात इव' यथा वातो गंतुं न शक्यते एवं मत्प्राप्तिस्तव दुष्करेत्यर्थः । इमामृचं श्रुतिर्व्याकरोति–न वै त्वमिति । "मो स्म त्वा नग्नं दर्शम्" इति 'यदहमब्रवम्' 'न' खलु 'त्वम्' 'तदकरोः' । अतस्त्वया 'एतर्हि'

( च्चा ) अुथ हायं पुरिघून॑ऽ उवाच । सुदेवो॑ऽ अद्य प्रपतेदनावृत्परावुतं परमां गुन्तवा॑ऽ उ । अधा शयीत निर्ऋतेरुपस्थेऽधैनं वृका रभसासो॑ऽ अद्युरिति सुदेवोऽद्योद्वा बध्नीत प्र वा पतेत्तदेनं वृका वा श्वानो वाऽद्युरिति हैव तुदुवाच ॥ ८ ॥

तथ्ँ हेतरा प्रत्युवाच । पुरूरवो मा मृथा मा प्रपप्तो मा त्वा वृकासो॑ऽ- अशिवास॑ऽ उ क्षन् । न वै स्त्रैणानि सख्यानि सन्ति सालावृकाणाथ्ँ हृदयान्येतेति मैतदादृथा न वै स्त्रैणथ्ँ सख्यमस्ति पुनर्गृहानिहीति हैवैनं तदुवाच ॥ ९ ॥

---

अथ हायं परिघून उवाच । "सुदेवो अद्य प्रपते दनावृत्परावतं परमां गंतवा उ । अधा शयीत निर्ऋतेरुपस्थेऽधैनं वृका रभसासो अद्युः"-इति । सुदेवोऽद्योद्वा बध्नीत । प्र वा पतेत् । तदेनं वृका वा श्वानो वाऽद्युः । इति हैव तदुवाच ॥ ८ ॥

तं हेतरा प्रत्युवाच । "पुरूरवो मा मृथा मा प्रपप्तो मा त्वा वृकासो अशिवास उ क्षन् । न वै स्त्रैणानि सख्यानि संति सालावृकाणां हृदयान्येता"-इति । मैतदादृथाः । न वै स्त्रैणं सख्यमस्ति । पुनर्गृहानिहि । इति हैवैनं तदुवाच ॥ ९ ॥

---

एतस्मिन् काले 'अहम् दुरापा' आप्तुमशक्या 'अस्मि' अतस्त्वं 'गृहान्' आत्मीयान् 'पुनरिहि' गच्छ । 'इति ह' एवमेव खलु 'एनम्' पुरूरवसम् तत्तदानीं अनयर्चा 'उवाच' उर्वशी ॥ ७ ॥

उर्वश्या एवं निराकृतस्य पुरूरवसो दुःखं दर्शयति—अथ हायमिति । 'अथ ह' एवं प्रत्याख्यानानंतरमेव 'अयं' पुरूरवाः 'परिघूनः' प्राप्तपरिदेवनः सन् शोकातुरः 'उवाच' । तां परिदेवनरूपामृचं दर्शयति—सुदेवो अद्येति । 'सुदेवः' सुष्ठु दीप्यमानः अशनिः सः मम मस्तके 'प्रपतेत्' । अथ अयं जनः 'अनावृत्' अनावर्तमानः सन् प्राप्तपरिदेवनः 'परमां' उत्कृष्टां 'परावतं' दूरनामैतत् ( निरु. ३।१९।१९ ) इति । परलोकलक्षणं दूरदेशं 'गन्तवै' गंतुं प्रभवति । अथानंतरमशनिहतः सन् निर्ऋतेर्भूम्याः 'उपस्थे' उत्संगे 'शयीत' । अथानंतरं 'एनं मृतं' 'रभसासः' वेगयुक्ताः 'वृकाः' अरण्यश्वानः 'अद्युः' भक्षयेयुः । यद्वा 'सुदेवः' सुक्रीडोऽयं जनः 'अनावृतः' सन् राज्यभोगं विहाय 'परावतं' अत्यंतदूरदेशं गन्तुं 'प्रपतेत्' प्रगच्छेत् । अन्यत् पूर्ववत् । अस्या ऋचस्तात्पर्यं श्रुतिर्दर्शयति—सुदेवोऽद्येति । 'सुदेवः' सुक्रीडोऽयं जनः अद्येदानीं हे उर्वशि ! त्वद्विरहनिमित्तात् 'उद्बध्नीत वा' देहत्यागार्थं पाशेन उद्बंधनं वा कुर्यात् । 'प्रपतेद्वा' प्रपतनं महाप्रस्थानं कुर्याद्वा । तत्ततः परं 'एनं' पुरूरवसं सालावृका वा श्वानो वा अद्युर्भक्षयेयुः । 'इति ह' एवमेव खलु तत्तेन परिदेवनरूपेण मन्त्रेणोक्तवान् ॥ ८ ॥

एवं परिदेवने कृते तन्निवारणार्थं इतरा उर्वशी पुरूरवसं प्रति उक्तवती, तद्वाक्यं—पुरूरवो मा मृथा इति ऋक् । हे 'पुरूरवः !' वृथा 'मा मृथाः' न म्रियस्व । "माङि लुङ्"—( पा. सू. ३ । ३ । १७५ )

यद्विरूपाऽचरम् । ( म्मु ) मर्त्येष्ववसꣳ रात्रीः शरदश्चतस्रः । घृतस्य स्तोकꣳ सकृदह्नऽआश्नां ता देवेदं तातृपाणा चरामीति तदेतदुक्तप्रत्युक्तं पञ्चदशर्चम्बह्वृचाः प्राहुस्तस्यै ह हृदयमाव्ययाञ्चकार ॥ १० ॥

"यद्विरूपाऽचरं मर्त्येष्ववसं रात्रीः शरदश्चतस्रः । घृतस्य स्तोकं सकृदह्न

"म्रियतेर्लुङ्लिङोश्च"–( पा. सू. १ । ३ । ६१ ) इत्यात्मनेपदम्। "ह्रस्वादंगात्"–( पा. सू. ८ । २ । २७ ) इति सिचो लोपः । एवं 'मा प्रपप्तः' प्रपतनं मा कृथाः । "पत्लृ गतौ"–( धा. पा. भ्वा. प. ८७० ) इत्यस्मात् "माङि लुङ्"–( पा. सू. ३ । ३ । १७५ ) इति लुङि लृदित्वात् च्लेरङादेशः । "पतः पुम्" ( पा. सू. ७ । ४ । १९ ) इति पुमागमः । तथा 'अशिवासः' दुष्टाः 'वृकासः' वृकाः । उशब्दश्चार्थे । अरण्यश्वानश्च 'त्वा' त्वां 'मा क्षन्' मा भक्षयंतु । "अद भक्षणे"–( धा. पा. अ. प. १ ) इत्यस्माल्लुङि "लुङ्सनोर्घस्लृ"–( पा. सू. २ । ४ । ३७ ) इति घस्लादेशे "मंत्रे घस"–( पा. सू. २ । ४ । ८० ) इत्यादिना च्लेर्लुक् । ततः "गमहनजनखन०" ( पा. सू. ६ । ४ । ९८ ) इत्यादिना उपधालोपः । वर्तमाने "न माङ्योगे" ( पा. सू. ६ । ४।७४ ) इत्यडभावः । ननु–आवयोः पूर्वं महत्सख्यमस्ति स्म तदिदानीं कुत्र गतं इत्याशंक्याह–न वै स्त्रैणानीति । स्त्रियाः संबंधीनि 'सख्यानि' सखित्वानि न खलु 'संति' चिरकालरूढान्यपि सख्यानि स्त्रीषु नावतिष्ठंत इत्यर्थः । कुत एतदित्याह–सालावृकाणामिति । 'एता' एतदीयानि स्त्रीसंबंधीनि मनांसि 'सालावृकाणां' हृदयानि' तद्वत् क्रूराणीत्यर्थः । इममर्थं श्रुतिः संगृह्य व्याचष्टे–मैतदादृथा इति । 'एतत्' मत्प्राप्त्युपायचिंतनं मा कृथाः तद्विषयमादरं मा कार्षीः । 'न' खलु 'स्त्रैणं' स्त्रीसंबंधि 'सख्यमस्ति' स्थिरतरं भवति । अतः पुनरात्मीयान् 'गृहान्' गच्छेति । गतमन्यत् ॥ ९ ॥

इत्थं सहसा प्राप्तुकामं पुरूरवसं निराकृत्य उर्वशी स्वप्राप्त्युपायांतरं तस्योपदेष्टुं तत्कृतमुपकारं आविष्करोति–यद्विरूपेत्यादि । यद्विरूपोत्पन्ना या मानुषसंसर्गात् विगतदेवरूपा सती 'मर्त्येषु' मनुष्येषु मध्ये 'अचरम्' अवर्तिषि । तदानीं 'रात्रीः' रमयित्रीः 'चतस्रः शरदः'"अत्यंतसंयोगे द्वितीया"(पा. सू. २।३।५) इति संवत्सरचतुष्टयपर्यंतं त्वत्समीपे 'अवसम्' कृतनिवासाऽस्मि तस्मिन् वा समये 'अह्नः' एकस्य दिवसस्य सकृदेकवारं 'घृतस्य' सर्पिषः 'स्तोकं' विन्दुं 'आश्नाम्' अभुंजि । तव स्वभूतं घृतं अपिबम् इत्यर्थः । इदमिदानीं देवे देवत्वेऽपि सति 'तान्' ( न्–इ ) वर्णलोपश्छांदसः । तस्मादेव घृतस्तोकात् 'तातृपाणा' तृप्ता सती 'चरामि' निवसामि । अतस्त्वां न विस्मरामीत्यर्थः । एवमन्यासु ऋक्षु उर्वशीपुरूरवसोः उक्तिप्रत्युक्ती द्रष्टव्ये इत्याह–तदेतदुक्तप्रत्युक्तं पंचदशर्चं बह्वृचाः प्राहुरिति । 'तदेतत् पंचदशर्चं' सूक्तं "हये जाये मनसा तिष्ठ घोरे" इत्यादिकम् 'उक्तप्रत्युक्तं' पुरूरवस उक्तिः उर्वश्याः प्रत्युक्तिः ताभ्यामुपेतम् 'बह्वृचाः' ऋक्शाखाध्यायिनः 'प्राहुः' प्रकर्षेणाधीयते । "हये जाये" इत्युदाहृतव्यतिरिक्तास्तत्रत्या अन्या ऋचोऽपि

१–शांखायणानामेतत्सूक्तम् इति प्रतायत "पंचदशर्चम्" इति श्रुतिप्रत्यासत्त्या । आश्वलायनानां तु एतत्सूक्तमष्टादशर्चम् । शाकलसंहितायां तथाऽऽम्नानात् । अत्र तन्मध्यात्पञ्च ऋचः श्रुत्योदाहृताः अन्या अवशिष्टा ऋचस्तु ऋग्वेदे ८।५।३–१३,१७-१८ इत्यतोऽवगन्तव्याः । नात्र विस्तरभियोद्ध्रियन्ते ॥

  

सा होवाच । संवत्सरतमीᳬं रात्रिमागच्छतात्तन्मऽ एकाᳬं रात्रिमन्ते शयितासे जातुऽउ तेऽयं तर्हि पुत्रो भवितेति स ह संवत्सरतमीᳬं रात्रिमाजगामेद्धिरण्यविमितानि ततो हैनमेकमूचुरेतत्प्रपद्यस्वेति तद्धास्मै तामुपप्रजिघ्युः ॥ ११ ॥

सा होवाच । गन्धर्वा वै ते प्रातर्वरं दातारस्तं वृणासाऽ इति तं वै मे त्वमेव वृणीष्वेति युष्माकमेवैकोऽसानीति ब्रूतादिति तस्मै ह प्रातर्गन्धर्वा वरं ददुः स होवाच युष्माकमेवैकोऽसानीति ॥ १२ ॥

---

आश्वां ता देवेदं तातृपाणा चरामि " इति । तदेतदुक्तप्रत्युक्तं पञ्चदशर्चं बह्वृचाः प्राहुः । तस्यै ह हृदयमाव्ययाञ्चकार ॥ १० ॥

सा होवाच । संवत्सरतमीं रात्रिमागच्छतात् । तन्म एकां रात्रिमन्ते शयितासे । जात उ तेऽयं तर्हि पुत्रो भवितेति । स ह संवत्सरतमीं रात्रिमाजगामेद्धिरण्यविमितानि । ततो हैनमेकमूचुः–एतत्प्रपद्यस्वेति । तद्धास्मै तामुपप्रजिघ्युः ॥ ११ ॥

सा होवाच–गंधर्वा वै ते प्रातर्वरं दातारः । तं वृणासा इति । तं वै त्वमेव वृणीष्वेति । युष्माकमेवैकोऽसानीति ब्रूतादिति । तस्मै ह प्रातर्गन्धर्वा वरं ददुः । स होवाच–युष्माकमेवैकोऽसानीति ॥ १२ ॥

---

अत्रानुसंधेया इत्यर्थः । समनंतरोक्ता या ऋचः तासां तात्पर्यमाह–तस्यै ह हृदयमिति । इत्थं पुरूरवसा स्नेहप्रवाहेन उक्ते सति तस्या उर्वश्याः ' हृदयं ' मनः 'आव्ययांचकार' विगतकाठिन्यं बभूव । " घृतस्य स्तोकं सकृदह्न आश्नाम् " इति तत्कृतस्योपकारस्य स्मरणात् ॥ १० ॥

सा होवाचेत्यादि । इत्थमुक्तिप्रत्युक्तिभ्यां विलीनहृदया उर्वशी ' उवाच ' पुरूरवसं प्रत्युक्तवती । ' संवत्सरतमीं ' संवत्सरस्य पूरणीं अंतिमां रात्रिं ' आगच्छतात् ' तत्तत्र ' मे ' मम ' अंते ' अंतिके निकटे तामेकां रात्रिं ' शयितासे ' शयनं करिष्यसि । शीङो लुटि रूपम् । 'तर्हि' तथा सति ' ते ' त्वदीयोऽशोऽयं ममोदरे गर्भरूपेण वर्तमानः ' पुत्रो जातो भविता ' भविष्यति । भवतेर्लुट् । एवमुर्वश्योक्तः ' सः ' पुरूरवाः संवत्सरतमीं 'रात्रिम् आजगामेत्' संवत्सरकालं स्थित्वा तस्यान्तिमां रात्रिमवगम्य 'हिरण्यविमितानि' हिरण्यविनिर्मितानि सौधानि आजगामेव । ततस्तस्मादागमनादनन्तरम् ' एनं ' पुरूरवसं तत्रत्या जनाः ' इदमेकमूचुः ' एतत्स्थानं 'प्रपद्यस्व' आरोहेति । तद्धेति । स प्रपद्य स्थितः । तत्तत्र तस्मै पुरूरवसे तामुर्वशीं 'उपप्रजिघ्युः' प्रेषितवंतः । " हि गतौ वृद्धौ च " ( धा. पा. स्वा. प. ११ ) इत्यस्मात् लिटि रूपम् ॥ ११ ॥

सा होवाचेति । ' सा ' पुनः पुरूरवसं प्राप्य एवमब्रवीत्–हे पुरूरवः ! ' ते ' ' प्रातर्गंधर्वाः वरम् ' ' दातारः ' दास्यंति । ' तं ' वरम् त्वदभिलषितमर्थं ' वृणासै ' प्रार्थयस्वेति । अथ पुरूरवा आह–तं वा इति । हे उर्वशि ! ' मे ' मदीयम् ' तं ' वरम् अहम् न जानामि त्वमेव मदर्थं ' वृणीष्वेति ' येनोपायेन

ते होचुः । ( नं ) न वै सा मनुष्येष्वग्नेर्यज्ञिया तनूरस्ति ययेष्ट्वाऽस्माकमेकः स्यादिति तस्मै ह स्थाल्यामोप्याग्निं प्रददुरनेनेष्ट्वाऽस्माकमेको भविष्यसीति तञ्च ह कुमारञ्चादायावव्राज सोऽरण्यऽ एवाग्निं निधाय कुमारेणैव ग्राममेयाय पुनरैमीत्येत्तिरोभूतं योऽग्निरश्वत्थं तं या स्थाली शमीं ताᳬं स ह पुनर्गन्धर्व्वानेयाय ॥ १३ ॥

ते होचुः । संवत्सरञ्चातुष्प्राश्यमोदनम्पच सऽ एतस्यैवाश्वत्थस्य तिस्रस्तिस्रः समिधो घृतेनान्वज्य समिद्वतीभिर्घृतवतीभिर्ऋग्भिरभ्याधत्तात्स यस्ततोऽग्निर्जनिता सऽ एव स भवितेति ॥ १४ ॥

---

ते होचुः—न वै सा मनुष्येषु अग्नेर्यज्ञिया तनूरस्ति, ययेष्ट्वाऽस्माकमेकः स्यादिति; तस्मै ह स्थाल्यामोप्याग्निं प्रददुः; अनेनेष्ट्वाऽस्माकमेको भविष्यसीति । तं च ह कुमारं चादायावव्राज । सोऽरण्य एवाग्निं निधाय कुमारेणैव ग्राममेयाय । पुनरैमीत्येत् । तिरोभूतं योऽग्निः अश्वत्थं तं, या स्थाली शमीं ताम् । स ह पुनर्गंधर्वानेयाय ॥ १३ ॥

ते होचुः—संवत्सरं चातुष्प्राश्यमोदनं पच । स एतस्यैवाश्वत्थस्य तिस्रस्तिस्रः समिधो घृतेनान्वज्य समिद्वतीभिर्घृतवतीभिर्ऋग्भिरभ्याधत्तात् । स यस्ततोऽग्निर्जनिता, स एव स भवितेति॥ १४॥

---

त्वत्प्राप्तिर्मम भवति । तमुपायम् कथय मे इत्यर्थः । सा प्रतिवक्ति—युष्माकमिति । हे गंधर्वाः ! ' युष्माकम् ' मध्ये अहमप्येकः ' असानि ' भवानीति । एवम् मया प्रार्थनीयो वर इति गंधर्वान् प्रति ' ब्रूतात् ' ब्रूहीति । एवं प्रार्थनीयं वरमुपदिश्य सा निर्जगाम । अथ ' तस्मै ' पुरूरवसे ' प्रातः ' काले ' गंधर्वाः ' आगत्य ' वरम् ददुः ' । स च उर्वश्योपदिष्टमेव वरमयाचतेत्याह—स होवाचेत्यादि ॥ १२ ॥

एवं गंधर्वरूपत्वे पुरूरवसा प्रार्थिते सति तत्प्राप्त्युपायफलं गंधर्वैरुपदेश्यमनुक्रामति—ते होचुरिति । ' ते ' गंधर्वाः ' ऊचुः ' ' न ' खलु ' अग्नेः ' संबंधिनी ' यज्ञिया ' यज्ञार्हा सा तादृशी ' तनूः ' ' मनुष्येषु ' मनुष्यजातावस्ति । ' यया ' तन्वा ' इष्ट्वा ' यागं कृत्वा ' अस्माकम् ' मध्ये अयम् पुरूरवाः ' एकः स्यादिति ' विचार्य ' तस्मै ' पुरूरवसे यज्ञार्हमग्निं ' स्थाल्यामोप्य ' स्थापयित्वा पूरयित्वा ' प्रददुः ' दत्तवंतः । अनेनाग्निना ' इष्ट्वा ' अस्माकमेकस्त्वं ' भविष्यसीति ' । एवं गंधर्वैर्दत्ते सति ' तं ' चाग्निं उर्वशीगर्भाज्जातं च ' कुमारमादाय ' ' आवव्राज ' स्वस्थानमाजगाम । " व्रज गतौ " ( धा. पा. भ्वा. प. २५४ ) इति धातुः । ' सः ' पुरूरवाः ' अरण्य एव ' स्थालीसहितमग्निं ' निधाय ' ' कुमारेणैव ' सह ' ग्राममेयाय ' आजगाम । ततः ' सः ' पुरूरवाः ' पुनरैमि ' आगच्छामि, इति अरण्ये अभिनिहितम् तिरोभूतमन्तर्हितमग्निं ' आ ऐत् ' आगच्छत् । तत्र योऽग्निर्निहितः तमश्वत्थमपश्यत् । तत्र या तदाधारभूता स्थाली तां शमीमपश्यत् । अग्निरश्वत्थवृक्षात्मना परिणतः, स्थाली तु शमीवृक्षरूपेण परिणता । इत्थमग्नौ तिरोहिते सति ' सः ' पुरूरवाः ' पुनर्गन्धर्वानेयाय ' आजगाम ॥ १३ ॥

आगमनप्रयोजनं जानानास्ते गंधर्वाः ' ऊचुः ' । ' चातुष्प्राश्यं ' चतुर्भिर्ऋत्विग्भिः प्राशनीयं ब्रह्मौदनं

ते होचुः । पुरोऽक्षमिव वाऽ एतदाश्वत्थीमेवोत्तरारणिं कुरुष्व शमीमयीमधरारणिꣳ स यस्ततोऽग्निर्जनिता सऽ एव स भवितेति ॥ १५ ॥

ते होचुः । पुरोऽक्षमिव वाऽएतदाश्वत्थीमेवोत्तरारणिं कुरुष्वाश्वत्थीमधरारणिꣳ स यस्ततोऽग्निर्जनिता सऽ एव स भवितेति ॥ १६ ॥

सऽ आश्वत्थीमेवोत्तरारणिञ्चक्रे । ( चक्रऽ ) आश्वत्थीमधरारणिꣳ स यस्ततोऽग्निर्जज्ञे सऽएव सऽआस तेनेष्ट्वा गन्धर्वाणामेकऽ आस तस्मादाश्वत्थीमेवोत्तरारणिं कुर्वीताश्वत्थीमधरारणिꣳ स यस्ततोऽग्निर्जायते सऽ एव स भवति तेनेष्ट्वा गन्धर्वाणामेको भवति ॥ १७ ॥

इति तृतीयप्रपाठके तृतीयं ब्राह्मणम् ॥ ११-३-३ ॥ ( ५. १. ) ॥

---

ते होचुः-परोऽक्षमिव वा एतत् । आश्वत्थीमेवोत्तरारणिं कुरुष्व; शमीमयीमधरारणिम् । स यस्ततोऽग्निर्जनिता, स एव स भवितेति ॥ १५ ॥

ते होचुः-परोऽक्षमिव वा एतत् । आश्वत्थीमेवोत्तरारणिं कुरुष्व; आश्वत्थीमधरारणिम् । स यस्ततोऽग्निर्जनिता, स एव स भवितेति ॥ १६ ॥

स आश्वत्थीमेवोत्तरारणिं चक्रे; आश्वत्थीमधरारणिम् । स यस्ततोऽग्निर्जज्ञे । स एव स आस । तेनेष्ट्वा गंधर्वाणामेक आस । तस्मादाश्वत्थीमेवोत्तरारणिं कुर्वीत; आश्वत्थीमधरारणिम् । स यस्ततोऽग्निर्जायते, स एव स भवति । तेनेष्ट्वा गंधर्वाणामेको भवति ॥ १७ ॥

---

' संवत्सरं पच ' पचस्व । तत्रैतस्याश्वत्थस्य ' तिस्रस्तिस्रः समिधः ' गृहीत्वा ' घृतेनान्वज्य ' मूलादारभ्यांतपर्यंतं आज्येनाक्त्वा ' समिद्वतीभिः ' समित्पदयुक्ताभिः 'घृतवतीभिः' घृतशब्दयुक्ताभिः "समिधाऽग्निं दुवस्यत" इत्यादिभिर्ऋग्भिः अभ्याधत्स्व । अस्मिन् व्रते कृते सति ' ततः ' समिदाधानान्निमित्तात् ' योऽग्निर्जनिता ' जनिष्यते । सोऽयं ' स एव भविता ' भविष्यति । योऽस्माभिः पूर्वं दत्त इति ॥ १४ ॥

ते होचुरिति । ' ते ' पुनर्गंधर्वा विचार्योचुः । यदेतत् अश्वत्थसमिदाधानेनाग्नेः पुनः संपादनं ' एतत्परोऽक्षमिव ' व्यवहितमिव खलु भवति । तस्मादन्य उपायः कथ्यते । हे पुरूरवः ! त्वं 'आश्वत्थीं' अश्वत्थविकृतिजामेवोत्तरारणिं ' कुरुष्व ' ' अधरारणिं शमीमयीं ' तथा च अग्न्यात्मकस्य उपर्यवस्थानं, स्त्र्यात्मिकायाः शम्या अधस्तात् स्थितिश्चेत्युभयमप्युपपद्यते । ततस्तस्मादरणिद्वयात् मंथनेन यः ' अग्निर्जनिता ' इत्यादि पूर्ववत् ॥ १५ ॥

पक्षान्तरमाह-ते होचुरिति । ' ते ' गंधर्वाः पुनरप्यूचुः । यदेतत् अधरारण्युत्तरारण्योः वृक्षद्वयजत्वम् । ' एतत्परोऽक्षमिव ' अंतर्हितमिव भवति । तस्मादरणिद्वयमपि अश्वत्थवृक्षजं कुर्यात् । स यस्ततोऽग्निरित्यादि पूर्ववत् ॥ १६ ॥

स आश्वत्थीमेवेत्यादि । इत्थं गन्धर्वैरुपदिष्टे सति पुरूरवाः ' आश्वत्थीमेवोत्तरारणिं चक्रे ' कृतवान्

प्रजापतिर्ह चातुर्म्मास्यैरात्मानं विदधे । स इममेव दक्षिणं बाहुं वैश्वदेवꣳ हविरकुरुत तस्यायमेवाङ्गुष्ठ आग्नेयꣳ हविरिदꣳ सौम्यमिदꣳ सावित्रम् ॥ १ ॥

( ५ꣳ ) स वै वर्षिष्ठः पुरोडाशो भवति । तस्मादियमासां वर्षिष्ठेदꣳ सारस्वतमिदम्पौष्णमथ य एष उपरिष्टाद्धस्तस्य सन्धिस्तन्मारुतमिदं वैश्वदेवं दोर्द्यावापृथिवीयं तद्धाऽअनिरुक्तं भवति तस्मात्तदनिरुक्तम् ॥ २ ॥

---

प्रजापतिर्ह चातुर्मास्यैरात्मानं विदधे । स इममेव दक्षिणं बाहुं वैश्वदेवं हविरकुरुत । तस्यायमेवाङ्गुष्ठ आग्नेयं हविः । इदं सौम्यम् । इदं सावित्रम् ॥ १ ॥

स वै वर्षिष्ठः पुरोडाशो भवति । तस्मादियमासां वर्षिष्ठा । इदं सारस्वतम् । इदं पौष्णम् । अथ य एष उपरिष्टाद्धस्तस्य संधिस्तन्मारुतम् । इदं वैश्वदेवम् । दोर्द्यावापृथिवीयम् । तद्धा अनिरुक्तं भवति । तस्मात्तदनिरुक्तम् ॥ २ ॥

---

आश्वत्थीमेवाधरारणिं च 'चक्रे' कृतवान् । ततस्ताभ्यां मंथनात् 'सः' तादृशोऽग्निर्जज्ञे यः प्रागरण्ये निहितः । गंधर्वैर्दत्तोऽग्निः 'स एव आस' बभूव । अग्निरूपात्केवलादश्वत्थात् अव्यवधानेन जायमानत्वात् । अथ स पुरूरवाः 'तेन' मथितेनाग्निना 'इष्ट्वा' 'गंधर्वाणामेक आस' बभूव । इत्थमाख्यायिकासिद्धं अरण्योरश्वत्थोपादानत्वं अधुना यजमानस्यापि विधत्ते—तस्मादिति । यस्मादेवं पुरूरवाः अश्वत्थयोन्यग्निना इष्ट्वा स्वाभीष्टमालभत । तस्मादिदानींतनो यजमानोऽपि 'आश्वत्थीमेव अधरारणिमुत्तरारणिं च 'कुर्वीत' । 'ततः' सकाशाद्योऽग्निर्जायते 'स एव' यज्ञार्हो देवेष्ववस्थितोऽग्निर्भवति । गतमन्यत् ॥ १७ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये एकादशकाण्डे पंचमेऽध्याये प्रथमं ब्राह्मणम् ॥ ( ११–५–१ ) ॥

यथा दर्शपूर्णमासयाजिनः आत्मयाजित्वं देवयाजित्वं चेति द्वैविध्यं दर्शितम्, एवं चातुर्मास्ययाजिनोऽपि तथात्वं दर्शयितुं तत्रत्यैर्यागैः शरीरावयवकल्पनं आख्यायिकया रचयति—प्रजापतिर्ह चातुर्मास्यैरिति । चतुर्षु चतुर्षु मासेषु क्रियंत इति चातुर्मास्यानि वैश्वदेववरुणप्रघाससाकमेधशुनासीर्याणि तैरात्मानं शरीरं 'विदधे' कल्पितवान् । तस्य प्रजापतेः दक्षिणहस्तत्वेन वैश्वदेवाख्यं प्रथमं पर्व कल्पयति—स इममेव दक्षिणं बाहुमिति । इममिति इदंशब्देनाभिधाय निर्दिश्यते । आग्नेयादियागात्मकं वैश्वदेवपर्वात्मकं 'हविर्दक्षिणं बाहुमकुरुत' तत्राग्नेयादीनि पंच हवींषि अंगुष्ठाद्यंङ्गुलिपंचकत्वेन कल्पयति—तस्यायमेवांगुष्ठ आग्नेयं हविरिति । इदं सौम्यमित्यादिना तदंगुलीनामभिनयेन निर्देशः ॥ १ ॥

तृतीयस्य हविषो मध्यमांगुलेश्च सारूप्यमाह—स वै वर्षिष्ठ इति । द्वादशसु कपालेषु संस्कार्यतया संख्याधिक्यात् पुरोडाशरूपत्वाच्च हविषो वृद्धतरत्वम् । 'तस्मात्' कारणात् 'इयं' मध्यमांगुलिरपि आसामंगुलीनां

( म ) अयमेव दक्षिणऽऊरुर्वरुणप्रघासाः । ( स्तु ) तस्य यानि पञ्च हवीᳬषि समायीनि ताऽ इमाः पञ्चांगुलयः कुल्फावैवैन्द्राग्नᳬ हविस्तद्वै द्विदेवत्यं भवति तस्मादिमौ द्वौ कुल्फाविदं वारुणमिदं मारुतमनूकं कायं तद्वाऽअनिरुक्तं भवति तस्मात्तदनिरुक्तम् ॥ ३ ॥

( म्सु ) मुखमेवास्यानीकवतीष्टिः । ( मुं ) मुखᳬ हि प्राणानामनीकमुरः सांतपनीयोरसा हि समिव तप्यतऽउदरं गृहमेधीया प्रतिष्ठा वाऽउदरं प्रतिष्ठित्याऽएव शिश्नान्येवास्य क्रैडिनᳬ हविः शिश्नैर्हि क्रीडतीवायमेवा-वाङ्प्राणऽआदित्येष्टिः ॥ ४ ॥

---

अयमेव दक्षिण ऊरुर्वरुणप्रघासाः । तस्य यानि पञ्च हवींषि समायीनि । ता इमाः पञ्चाङ्गुलयः । कुल्फावैवैन्द्राग्नं हविः । तद्वै द्विदेवत्यं भवति । तस्मादिमौ द्वौ कुल्फौ । इदं वारुणम् । इदं मारुतम् । अनूकं कायम् । तद्वा अनिरुक्तं भवति । तस्मात्तदनिरुक्तम् ॥ ३ ॥

मुखमेवास्यानीकवतीष्टिः । मुखं हि प्राणानामनीकम् । उरः सांतपनीया । उरसा हि समिव तप्यते । उदरं गृहमेधीया । प्रतिष्ठा वा उदरम् । प्रतिष्ठित्या एव । शिश्नान्येवास्य क्रैडिनं हविः । शिश्नैर्हि क्रीडतीव । अयमेवावाङ् प्राण आदित्येष्टिः ॥ ४ ॥

---

'वर्षिष्ठा' सारस्वतपौष्णे अनामिकाकनिष्ठिके । उत्तरैस्त्रिभिर्हविर्भिस्त्रीनवयवानाह—अथ य एष इति । अंगुलिपंचकोपेतस्य पाणितलस्य उपरिष्टाद्यः 'सधिस्तन्मारुतम्' । इदं कूर्परस्थानं 'वैश्वदेवं' सप्तमं हविः । तदुपरि दोर्दंडः 'द्यावापृथिवीयं' हविः । तयोः साम्यमाह—तद्वा अनिरुक्तमिति । द्यावापृथिवीयं हविरुपांशु 'भवति' । 'तस्मात्' 'तत्' करदोःसंधिरूपमंगमपि 'अनिरुक्तं' अविस्पष्टं भवति ॥ २ ॥

अथ वरुणप्रघासाख्यं द्वितीयं पर्व दक्षिणपादत्वेन कल्पयति—अयमेव दक्षिण ऊरुर्वरुणप्रघासा इति । ऊरुशब्दः कृत्स्नस्य पादस्योपलक्षकः । 'समायीनि' पर्वचतुष्टयसंचारीणि 'यानि' आग्नेयादीनि 'पंच हवींषि' तानि अंगुष्ठादिपञ्चांगुलित्वेन पूर्ववत् कल्पितानि । 'ऐन्द्राग्नम्' षष्ठम् 'हविः' कुल्फावयवरूपम् । जंघापादतलयोः सन्धिः कुल्फः । देवताद्वित्वेन तत्सारूप्यं संपादयति—तद्वै द्विदेवत्यामिति । 'इदम्' जंघारूपमंगं वारुणमकुरुत । ऊर्वात्मकमिदमङ्गं 'मारुतम्' । पादस्य मध्यदेहस्य च यः सन्धिस्तदनूकम् 'कायम्' कदेवताकं नवमम् हविरकुरुत । पूर्ववत्तयोरनिरुक्तत्वसाम्यमाह—तद्वा अनिरुक्तमिति ॥ ३ ॥

अथ मध्यशरीरं संपादयति—मुखमेवास्येति । अथ साकमेधेषु "अग्नयेऽनीकवते" इति या 'अनीकवतीष्टिः' तां 'अस्य' शरीरस्य मुखमेवाकुरुत । 'हि' यस्मात् 'मुखम्' 'प्राणानाम्' चक्षुःश्रोत्रादीनाम् अनीकमास्पदम् । तस्मादनीकवद्गुणविशिष्टावयवत्वेन कल्पयितुं योग्या "मरुद्भ्यः सांतपनेभ्यः" इति विहिता या 'सांतपनीयेष्टिः' तदुरः वक्षःस्थानीयमकुरुत । तयोः साधर्म्यमाह—उरसा हीति । 'उरसा' हृदयसंबंधात् जठराग्निसन्निधिविशेषाच्च संतापनविषयत्वम् । "मरुद्भ्यो गृहमेधिभ्यः" इति विहिता या 'इयम्'

(र) अयमेवोत्तरऽ ऊरुर्म्महाहविः । (स्तु) तुस्य यानि पुञ्च हुवीᳬंषि समायीनि ताऽ इमाः पुञ्चाङ्गुलयः कुल्फावैवैन्द्राग्नᳬं हुविस्तद्धै द्विदेवुत्यं भवति तुस्मादिमौ द्वौ कुल्फाविदं माहेन्द्रमिदं व्वैश्वकर्म्मणं तद्वाऽअनिरुक्तं भवति तुस्मात्तदनिरुक्तमुथ युदिदमन्तरुदरे तृत्पितृयज्ञस्तद्वाऽअनिरुक्तं भवति तुस्मात्तदनिरुक्तम् ॥ ५ ॥

(म) अयमेवोत्तरो बाहुः शुनासीरीयम् । (न्तु) तुस्य यानि पुञ्च हुवीᳬंषि समायीनि ताऽ इमाः पुञ्चाङ्गुलयोऽथ युऽ एषऽ उपरिष्टाद्बाहुस्तस्य सन्धिस्तच्छुनासीरीयमिदं व्वायुव्व्यं दोः सौर्य्यं तद्वाऽअनिरुक्तं भवति तुस्मात्तदनिरुक्तम् ॥ ६ ॥

---

अयमेवोत्तर ऊरुर्महाहविः । तस्य यानि पंच हवींषि समायीनि । ता इमाः पञ्चाङ्गुलयः । कुल्फावैवैन्द्राग्नं हविः । तद्वै द्विदेवत्यं भवति । तस्मादिमौ द्वौ कुल्फौ । इदं माहेन्द्रम् । इदं वैश्वकर्मणम् । तद्वा अनिरुक्तं भवति । तस्मात्तदनिरुक्तम् । अथ यदिदमन्तरुदरे । तत्पितृयज्ञः । तद्वा अनिरुक्तं भवति । तस्मात्तदनिरुक्तम् ॥ ५ ॥

अयमेवोत्तरो बाहुः शुनासीरीयम् । तस्य यानि पञ्च हवींषि समायीनि । ता इमाः पञ्चाङ्गुलयः ।

---

गृहमेधीयेष्टिः सा ' उदरम् ' सा तु खलु ' प्रतिष्ठा ' भुक्तस्याहारस्याधारः । तस्मात् गृहमेधीयस्य उदररूपत्वम् ' प्रतिष्ठित्यै एव ' प्रतिष्ठारूपफलाय संपद्यत इत्यर्थः । " मरुद्भ्यः क्रीडिभ्यः " इति विहितं यत् ' क्रैडिनं हविः ' अस्ति ' शिश्नान्येवास्य ' प्रजापतेस्तद्धविः । उभयोः सारूप्यमाह—शिश्नैर्हीति । आंडौ लिंगं चेति त्रीणि शिश्नानि । तैर्हि पुरुषः ' क्रीडतीव ' । अतः क्रीडनसंबंधात् क्रैडिनस्य हविषः तद्रूपता युक्तेत्यर्थः । वायुरूपः अयमवाङ्मुखः ' प्राणः ' एव ' आदित्येष्टिः ' । " आदित्यं घृते चरुम् " इति विहितं हि वायुत्वेन निर्मितमित्यर्थः ॥ ४ ॥

एवं साकमेधेषु बर्हिस्तंत्रवर्तिभिर्यागैर्मध्यशरीरस्य क्लृप्तिं विधाय वामपादस्य क्लृप्तिमाह—अयमेवोत्तर ऊरुर्महाहविरिति । महाहविरिति वैश्वदेववरुणप्रघासशब्दवत् साकमेधाख्यस्य प्रधानस्य पर्वणो नामधेयम् । तस्य यानीत्यादि पूर्ववत् । इदं माहेन्द्रमिदं वैश्वकर्मणमिति । इदंशब्देनाभिनयात् जंघाया ऊरोश्च क्लृप्तिः । वैश्वकर्मणैककपालस्य हविषः ऊरुसंधेश्च अनिरुक्तत्वसाम्यमाह—अनिरुक्तं भवतीति । उक्तार्थमेतत् । अथ यदिदमन्तरुदर इति । ' उदरे ' अंतर्मध्ये ' यदिदम् ' अंत्रपुरीतदादिकमस्ति ' तत्पितृयज्ञः ' उदरमध्यवर्त्यवयवत्वेन पितृयज्ञः कल्पित इत्यर्थः । पितृयज्ञस्योपांशुप्रचरणमुक्तम्, तदनूद्य उक्तावयवसाम्यं संपादयति—तद्वा अनिरुक्तं भवतीति । ' तस्मात् ' कारणात् ' तत् ' उदरमध्यवर्ति अवयवजातम् । गतमन्यत् ॥ ५ ॥

अथ सव्यबाहोः क्लृप्तिमाह—अयमेवोत्तरो बाहुरिति । यच्छुनासीरीयाख्यं चतुर्थं पर्व स वामबाहुः

( न्त्रा ) तानि वा ऽएतानि । चातुर्म्मास्यानि त्रिषन्धीनि द्विसमस्तानि तस्मादिमानि पुरुषस्याङ्गानि त्रिषन्धीनि द्विसमस्तानि तेषां वै चतुर्णां द्वयोस्त्रीणि त्रीणि हवीꣳष्ष्यनिरुक्तानि भवन्ति द्वे द्वे द्वयोः ॥ ७ ॥

अर्द्धः प्रपाठकः ॥ कंडिकाः ९६ ॥

(स्तु) तेषां वै चतुर्ष्वग्निं मन्थन्ति । तस्माच्चतुर्भिरङ्गैरायुते द्वयोः प्रणयन्ति तस्माद्द्वाभ्यामेत्येवमु ह प्रजापतिश्चातुर्म्मास्यैरात्मानं विदधे तथोऽएवैवंविद्यजमानश्चातुर्म्मास्यैरात्मानं विधत्ते ॥ ८ ॥

---

अथ य एष उपरिष्टाद्धस्तस्य सन्धिः । तच्छुनासीरीयम् । इदं वायव्यम् । दोः सौर्यम् । तद्वा अनिरुक्तं भवति । तस्मात्तदनिरुक्तम् ॥ ६ ॥

तानि वा एतानि चातुर्मास्यानि त्रिषंधीनि द्विसमस्तानि । तस्मादिमानि पुरुषस्यांगानि त्रिषंधीनि द्विसमस्तानि । तेषां वै चतुर्णाम्—द्वयोस्त्रीणि त्रीणि हवींष्यनिरुक्तानि भवंति । द्वे द्वे द्वयोः ॥ ७ ॥

तेषां वै चतुर्ष्वग्निं मंथंति । तस्माच्चतुर्भिरङ्गैरायुते । द्वयोः प्रणयंति । तस्माद्द्वाभ्यामेति । एवमु ह प्रजापतिश्चातुर्मास्यैरात्मानं विदधे । तथो एवैवंविद्यजमानश्चातुर्मास्यैरात्मानं विधत्ते ॥ ८ ॥

---

कल्पित इत्यर्थः । तस्य यानीत्यादि पूर्ववत् । 'उपरिष्टाद्धस्तस्येत्यादि । पाणितलस्य 'यद्दुपरिष्टात्संधिः' मणिबंधस्थानम् 'तच्छुनासीरीयम्' हविः । 'इदम्' कूर्परम् 'वायव्यम्' वायुदेवताकं हविः । सौर्यमेककपालं हविः 'दोः' भुजमूलम् । तद्वा अनिरुक्तमित्यादि पूर्ववत् ॥ ६ ॥

तानि वा एतानीत्यादि । 'एतानि' वैश्वदेवादीनि 'चातुर्मास्यानि' चतुर्षु चतुर्षु मासेषु क्रियमाणानि चत्वारि पर्वाणि 'त्रिषंधीनि' त्रयः संधयः अंतरालकालाश्चत्वारो मासाः येषु तानि त्रिषंधीनि । 'द्विसमस्तानि' शुनासीरीयवैश्वदेवयोः फाल्गुनशुक्लचतुर्दश्यां पौर्णमास्यां च पौर्वापर्येण अनुष्ठानात् तद्वाभ्यां पर्वभ्यां समस्तानि संश्लिष्टानि । तत्रावृत्तिपक्षे "फाल्गुन्युपवसथे शुनासीरीयं प्रातर्वैश्वदेवम्"( का. श्रौ.सू. ५।२९४) इति सूत्रितम् । एतस्य प्रयोजनमाह—तस्मादिमानीति । यस्मात् उक्तविधानि चातुर्मास्यानि 'तस्मादिमानि' पुरुषशरीरस्यांगानि बाह्वादीनि 'त्रिषंधीनि' 'द्विसमस्तानि' च पाणिपादतलात् अधस्तनोपरितनसंध्योरुभयोः प्रत्यासन्नत्वात् द्विसमस्तत्वम् । तेषां वा इत्यादि । 'तेषां' वैश्वदेवादीनां 'चतुर्णां' मध्ये द्वयोर्वरुणप्रघाससाकमेधयोः 'त्रीणि त्रीणि हवींषि' 'अनिरुक्तानि' उपांशुप्रचरणीयानि 'भवंति' । 'द्वयोः' वैश्वदेवशुनासीरीययोराद्यंतपर्वणोः 'द्वे द्वे' हविषी अनिरुक्ते । तथा हि भगवता आश्वलायनेन "एककपालाः सर्वत्र सावित्रश्चातुर्मास्येषु" ( आ.श्रौ.सू. ) इति च सूत्रितत्वात् चतुर्षु पर्वसु एककपालस्य हविषः सावित्रस्य उपांशुत्वं सिद्धम् । "त्रीणि त्रीणि" इत्यस्मादेव वचनात् मध्यमयोः पर्वणोरन्यदप्येकं हविरुपांशु प्रचरितव्यमिति भावः॥७॥

अथ तेषां साधारण्येनाग्निमंथनं विधत्ते—तेषां वा इत्यादि । 'तेषां' चातुर्मास्यानां चतुर्ष्वपि पर्वसु अग्निमंथनमपरो धर्मः । यस्मादेवं 'तस्मात्' चतुर्भिर्हस्तपादलक्षणैरंगैरायुते समानपरिमाणैः संयुज्यते । " यु

तदाहुः । सर्व्वंगायत्रं व्वैश्वदेवꣳ हविः स्यात्सर्व्वंत्रैष्टुभं व्वरुणप्रघासाः सर्व्वंजागतं महाहविः सर्व्वानुष्टुभꣳ शुनासीरीयं चतुष्टोमस्याप्त्याऽइति तद्द तथा न कुर्य्याद्यत्त्वाऽएतान्यभि संपद्यन्ते तेनैवास्य स कामऽ उपाप्तो भवति ॥ ९ ॥

तानि वाऽएतानि । चातुर्म्मास्यानि द्वाषष्टानि त्रीणि शतानि बृहत्यः संपद्यन्ते तदेभिः संवत्सरं च महाव्रतं चाप्नोत्यथो द्विप्रतिष्ठो वाऽ अयं यजमानो यजमानमेवैतत्स्वर्ग्गं लोकऽआयातयति प्रतिष्ठापयति ॥ १० ॥

इति तृतीयप्रपाठके चतुर्थं ब्राह्मणम् ॥ ११-३-४ ॥ ( ९. २. ) ॥

---

तदाहुः—सर्वगायत्रं वैश्वदेवं हविः स्यात् । सर्वत्रैष्टुभं वरुणप्रघासाः । सर्वजागतं महाहविः । सर्वानुष्टुभं शुनासीरीयम् । चतुष्टोमस्याप्त्या इति । तद्ध तथा न कुर्यात् । यत्त्वा एतान्यभि संपद्यंते । तेनैवास्य स काम उपाप्तो भवति ॥ ९ ॥

तानि वा एतानि चातुर्मास्यानि द्वाषष्टानि त्रीणि शतानि बृहत्यः संपद्यंते । तदेभिः संवत्सरं च महाव्रतं चाप्नोति । अथो द्विप्रतिष्ठो वा अयं यजमानः। यजमानमेवैतत्स्वर्गे लोक आयातयति, प्रतिष्ठापयति ॥ १० ॥

---

मिश्रणामिश्रणयोः ” ( धा. पा. अ. प. १३ ) इति धातुः । अथ तेषां मध्ये वैश्वदेवशुनासीरीययोर्द्वयोः पर्वणोरुत्तरवेदिनिवपनं परित्यज्य केवलमग्निमेव प्रणयंति । ‘ तस्मात् ’ द्वाभ्यामेव पादाभ्यां पुरुषः ‘ एति ’ प्रतिगच्छति । एव मुहेति प्रतिपादितार्थस्य निगमनम् । आख्यायिकासिद्धमर्थं यजमाने योजयति—तथो एवैवंविदिति । एवमुक्तं ब्राह्मणार्थं विद्वान् ‘ यजमानः ’ अनुष्ठीयमानैः ‘ चातुर्मास्यैरात्मानं ’ यागमयं शरीरं एव ‘ विधत्ते ’ करोति ॥ ८ ॥

अथ गायत्र्यादिसंपत्तिमेषु पर्वसु दर्शयितुं पूर्वपक्षयति—तदाहुरिति । तत्तत्र चातुर्मास्येषु ‘ आहुः ’ कथयंति ब्रह्मवादिनः । तत्र वैश्वदेवाख्यं प्रथमं पर्व ‘ सर्वगायत्रम् ’ सर्वैर्याज्यानुवाक्यादिभिर्मंत्रैर्गायत्रीच्छंदस्कैरेव कार्यम् । एवं सर्वत्रैष्टुभमित्यादावपि योज्यम् । वरुणप्रघासाख्या यागा इति यत् तत्सर्वत्रैष्टुभमिति संबंधः । चतुष्टोमस्याप्त्या इति । इत्थं गायत्र्यादीनामनुष्टुबंतानां चतुर्णां छंदसां क्रमेण पर्वचतुष्टये प्रयोगः त्रिवृदादिस्तोमचतुष्टयोपेतस्य सोमयागस्य प्राप्त्यै संपद्यत इत्यर्थः । तदेव निषिध्य पक्षांतरमाह—तद्ध तथा न कुर्यादिति । ‘ यत्त्वे ’ यस्मात्खलु ‘ एतानि ’ वैश्वदेवादीनि क्रमेण गायत्र्यादिरूपेण ‘ संपद्यंते ’ । तस्मात्तेषां सर्वगायत्रत्वादिकं न कार्यम् । ‘ तेनैव ’ संपत्तिलभ्येनैव गायत्रत्वादिना ‘ सः ’ पूर्वोक्तः ‘ कामः उपाप्तो भवति ’ ॥ ९ ॥

अथ चातुर्मास्येषु संख्याविशेषघटितबृहतीसंपत्तिं दर्शयन् संवत्सरात्मकचित्याग्नेर्महाव्रतसाम्नश्च प्राप्तिरूपं फलं दर्शयति—तानि वा एतानीत्यादि । ‘ द्वाषष्टानि ’ द्विषष्ट्यधिकानि ‘ त्रीणि शतानि ’ एतत्संख्या-

शौचेयो ह प्राचीनयोग्यः । ( ऽ ) उद्दालकमारुणिमाजगाम ब्रह्मोद्यमग्निहोत्रं विविदिषिष्यामीति ॥ १ ॥

स होवाच । गौतम का तेऽग्निहोत्री को वत्सः किमुपसृष्टा किꣳ संय्योजनं किं दुह्यमानं किं दुग्धं किमाह्रियमाणं किमधिश्रितं किमवज्योत्यमानं किमद्भिः प्रत्यानीतं किमुद्वास्यमानं किमुद्वासितं किमुन्नीयमानं किमुन्नीतं किमुद्यतं किꣳ ह्रियमाणं किन्निगृहीतम् ॥ २ ॥

---

शौचेयो ह प्राचीनयोग्य उद्दालकमारुणिमाजगाम—ब्रह्मोद्यमग्निहोत्रं विविदिषिष्यामि—इति॥ १॥

स होवाच—गौतम का तेऽग्निहोत्री १ । को वत्सः २ । किमुपसृष्टा ३ । किं संयोजनम् ४ । किं दुह्यमानम् ५ । किं दुग्धम् ६ । किमाह्रियमाणम् ७। किमधिश्रितम् ८ । किमवज्योत्यमानम् ९ । किमद्भिः प्रत्यानीतम् १० । किमुद्वास्यमानम् ११ । किमुद्वासितम् १२ । किमुन्नीयमानम् १३ । किमुन्नीतम् १४। किमुद्यतम् १५ । किं ह्रियमाणम् १६ । किन्निगृहीतम् १७ ॥ २ ॥

---

संख्येयाः ' बृहत्यः ' ' संपद्यंते ' । तदेभिरित्यादि । तत्तस्मात् उक्तसंख्याकबृहतीसंपत्तिहेतोः ' एभिः ' चातुर्मास्यैः षष्टयुत्तरत्रिशतयजुष्मतीष्टकात्मकं संवत्सररूपं चित्याग्निं च ' महाव्रतं ' साम च प्राप्नोति । तस्य हि महाव्रतस्य त्रिवृच्छिरः पंचदशसप्तदशौ पक्षौ पंचविंश आत्मा एकविंशं पुच्छं एतेषां संख्याद्वारा अंतर्मावात् महाव्रतफलप्राप्तिरपि चातुर्मास्ययाजिन इत्यर्थः । अवशिष्टयोर्द्वयोः प्रयोजनमाह—अथो द्विप्रतिष्ठ इति । द्वाभ्यां पादाभ्यां प्रतितिष्ठतीति ' द्विप्रतिष्ठः ' । तथा च ' एतत् ' एतया अवशिष्टया द्विसंख्यया ' यजमानमेव ' फलभूते ' स्वर्गे लोके ' ' आयातयति ' प्रापयति । तत्र ' प्रतिष्ठापयति ' प्रतिष्ठितमचलितं करोति ॥ १० ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये एकादशकाण्डे पंचमेऽध्याये द्वितीयं ब्राह्मणम् ॥ ( ११-५-२ ) ॥

अथ प्रश्नप्रतिवचनाभ्यां अग्निहोत्रहोमस्य सर्वदेवतातृप्तिकरत्वं प्रतिपादयिष्यन् प्रष्टृप्रतिवक्तारौ दर्शयति—शौचेयो हेति । शुचिनाम्नः पुत्रः ' प्राचीनयोग्यः ' नाम महर्षिः ' आरुणिं ' अरुणपुत्रं ' उद्दालकं ', ' आजगाम ' । ' अग्निहोत्रं ' अग्निहोत्रविषयं 'ब्रह्मोद्यं' ब्रह्म तत्त्वस्वरूपं उद्यते प्रतिपाद्यते येन तत् ' विविदिषिष्यामि ' तद्विषयां वेदनेच्छां करिष्यामि इत्यनेनाभिप्रायेणागत इत्यर्थः ॥ १ ॥

आगत्य च तमुद्दालकं प्रति इमानग्निहोत्रावयवभूतान् पदार्थान् पप्रच्छेत्याह—स होवाचेत्यादिना । ' सः ' खलु प्राचीनयोग्यः ' उवाच ' उक्तवान् । हे ' गौतम ! ' गौतमगोत्रोत्पन्न भो उद्दालक ! 'ते' तवाग्निहोत्रकर्मणि ' अग्निहोत्री ' होमसाधनस्य पयसो दोग्ध्री धेनुः 'का' किंरूपा ज्ञातव्या ? । ' को वत्सः ? ' इत्यादावपि एवं योज्यम् । किमुपसृष्टेति । ' उपसृष्टा ' दोहनार्थं वत्सेन संगता धेनुः, सा किंरूपेत्यर्थः । संयुज्यते अनेनेति ' संयोजनं ' वत्सबंधनार्थं दाम । किं दुह्यमानमित्यादि । दुह्यमानत्वादयो होमसाधनस्य पयसः अवस्था-

( इ॒का२ऽऽँ ) का२ऽऽँ स॒मिध॑मा॒दधासि । का पूर्व्वाऽऽहुतिः किमु॒पासी॑षदः किमु॒पैक्षि॑ष्ठाः कोत्त॒राऽऽहुतिः ॥ ३ ॥

कि२ऽऽँ हुत्वा प्र॒कम्प॑यसि । कि२ऽऽँ स्रुचं॒ परि॑मृ॒ज्य कू॒र्चे न्य॑मार्ज्जीः किं द्वि॒तीय॒म्परि॑मृ॒ज्य दक्षिण॒तो ह॒स्तमु॒पासी॑षदः किं पूर्व्वं॑ प्राशीः किं द्वि॒तीयं॑ कि॒मुत्सृ॒प्यापाः कि२ऽऽँ स्रुच्य॒पऽ आ॒नीय॒ निरौ॑क्षीः किं द्वि॒तीयं॒ किं तृ॒तीय॑मे॒तां दिश॑मु॒दौक्षीः किञ्ज॒घने॑नाहव॒नीय॑म॒पो न्यनै॑षीः कि२ऽऽँ स॒मति॑ष्ठि॒पो यदि॒ वाऽ ए॒तद्वि॒द्वान॑ग्निहो॒त्रमहौ॑षी॒रथ ते हुतं॒ यद्यु॒ वाऽ अविद्वानहु॑तमे॒व त॒ऽ इति ॥ ४ ॥

---

कां समिधमादधासि १८ । का पूर्वाऽऽहुतिः १९ । किमुपासीषदः २० । किमपैक्षिष्ठाः २१ । कोत्तराऽऽहुतिः २२ ॥ ३ ॥

किं हुत्वा प्रकंपयसि २३ । किं स्रुचं परिमृज्य कूर्चे न्यमार्जीः २४ । किं द्वितीयं परिमृज्य दक्षिणतो हस्तमुपासीषदः २५ । किं पूर्वं प्राशीः २६ । किं द्वितीयम् २७ । किमुत्सृप्यापाः २८ । किं स्रुच्यप आनीय निरौक्षीः २९ । किं द्वितीयं किं तृतीयमेतां दिशमुदौक्षीः ३० । ३१ । किं जघनेनाहवनीयमपो न्यनैषीः ३२ । किं समतिष्ठिपः ३३ । यदि वा एतद्विद्वानग्निहोत्रमहौषीः । अथ ते हुतम् । यद्यु वा अविद्वान्, अहुतमेव त इति ॥ ४ ॥

---

विशेषाः । तत्र पूर्वपूर्वस्योत्तरोत्तरमवधिः । आह्रियमाणमिति । गोष्ठाद्गार्हपत्यसमीपं प्रति दुग्धस्य पयस आनयनम् । गार्हपत्यस्योत्तरतः पृथक् कृतेषु अंगारेषु स्थापनं अधिश्रयणम् । ज्वलता दर्भेणावाङ्मुखेन पयस उपरि द्योतनमवज्योतनम् । उदक्तस्य पयसः उपशमनाय स्रुवेणोदकस्य सेचनं अद्भिः प्रत्यानयनम् । उद्वास्यमानत्वादयः अवस्थाः स्पष्टाः । आहवनीयदेशमभिलक्षीकृत्याहर्तुं गार्हपत्यसमीपादुद्धृतमुद्यतम् । निगृहीतमाहवनीयस्य पश्चात्सादितम् ॥ २ ॥

कां समिधमिति । हे गौतम ! यां 'समिधं' होमात्पूर्वं अग्नौ 'आदधासि' सा किमर्थेत्यर्थः । या पूर्वा आहुतिः "अग्निर्ज्योतिः" इति हूयते सा कस्य देवस्य प्रीत्यर्था । एवमुत्तरा । पूर्वानुसारेण प्रश्नार्थो ज्ञातव्यः । 'उपासीषदः' पूर्वाहुत्यनंतरं स्रुचमुपसादितवानसि । 'अपैक्षिष्ठाः' गार्हपत्यस्य ईक्षणं कृतवानसि ॥ ३ ॥

द्वितीयामाहुतिं 'हुत्वा' किंकारणं स्रुचं 'कंपयसि' चालयसि । 'स्रुचं परिमृज्य' स्रुङ्मुखलेपस्य परिमार्जनं कृत्वा कुशमये 'कूर्चे न्यमार्जीः' निमृष्टवानसि । 'दक्षिणतः' वेदेर्दक्षिणभागे 'हस्तमुपासीषदः' उपसादितवानसि । 'उत्सृप्य' वेदिसमीपादुत्सर्पणं कृत्वा 'अपाः' पानं कृतवानसि । 'निरौक्षीः' निष्कृष्य उक्षणं सेचनं कृतवानसि । 'न्यनैषीः' निनयनं कृतवानसि । 'समतिष्ठिपः' संस्थापितवानसि । स्थापयतेर्लुङि "तिष्ठतेरित्" (पा. सू. ७ । ४ । ५) इतीत्त्वम् । यदि वा एतदित्यादि । एतत्पृष्टमर्थजातं 'विद्वान्' जानन् यद्यग्निहोत्रं 'अहौषीः' हुतवानसि— अथ तदेव 'ते' तवाग्निहोत्रं सम्यक् 'हुतं' भवति । अजानानस्य तु हुतमप्यहुतमेव तद्भवतीत्यर्थः ॥ ४ ॥

स ह्रोवाच । ( चे ) इडैव मे मानव्यग्निहोत्री व्वायव्व्यो व्वत्सः सजूरुपसृष्टा व्विराट् संय्योजनमाश्विनं दुह्यमानं व्वैश्वदेवं दुग्धं व्वायव्व्यमाह्रियमाणमाग्नेयमधिश्रितमैन्द्राग्नमवज्ज्योत्यमानं व्वारुणमद्भिः प्रत्यानीतं व्वायव्व्यमुद्वास्यमानं द्यावापृथिव्व्यमुद्वासितमाश्विनमुन्नीयमानं व्वैश्वदेवमुन्नीतं महादेवायोद्यतं व्वायव्व्यᳪ ह्रियमाणं व्वैष्णवं निगृहीतम् ॥५॥

( मु ) अथ याᳪ समिधमादधामि । ( म्या ) आहुतीनाᳪ सा प्रतिष्ठा या पूर्व्वाऽऽहुतिर्द्देवाँस्तयाऽप्रैषं यदुपासीषदं बार्हस्पत्यं तद्यदपैक्षिषीमञ्चामुञ्च लोकौ तेन समधां योत्तराऽऽहुतिर्म्मां तया स्वर्गे लोकेऽधाम् ॥६॥

---

स होवाच—इडैव मे मानव्यग्निहोत्री १ । वायव्यो वत्सः २ । सजूरुपसृष्टा ३ । विराट् संयोजनम् ४ । आश्विनं दुह्यमानम् ५ । वैश्वदेवं दुग्धम् ६ । वायव्यमाह्रियमाणम् ७ । आग्नेयमधिश्रितम् ८ । ऐंद्राग्नमवज्योत्यमानम् ९ । वारुणमद्भिः प्रत्यानीतम् १० । वायव्यमुद्वास्यमानम् ११ । द्यावापृथिव्यमुद्वासितम् १२ । आश्विनमुन्नीयमानम् १३ । वैश्वदेवमुन्नीतम् १४ । महादेवायोद्यतम् १५ । वायव्यं ह्रियमाणम् १६ । वैष्णवं निगृहीतम् १७ ॥ ५ ॥

अथ यां समिधमादधामि, आहुतीनां सा प्रतिष्ठा १८ । या पूर्वाऽऽहुतिः । देवांस्तयाऽप्रैषम् १९॥ यदुपासीषदम्, बार्हस्पत्यं तत् २० । यदपैक्षिषि, इमं चामुं च लोकौ तेन समधाम् २१ । योत्तराऽऽहुतिः । मां तया स्वर्गे लोकेऽधाम् २२ ॥ ६ ॥

---

एवं प्राचीनयोग्येन पृष्टानर्थान् उद्दालकः क्रमेण प्रतिवक्ति—स होवाचेत्यादिना । ' सः ' उद्दालकः ' उवाच ' ' मानवी ' मनोर्दुहिता 'इडा' सा देवतैव ' मे ' ममाग्निहोत्री । ' वत्सो वायव्यः ' वायुदेवताकः । ' सजूः ' वायुना संसृष्टा द्यौरेव ' उपसृष्टा ' धेनुः । इयं दशाक्षरा ' विराट् ' एतदेव ' संयोजनं ' दाम । ' दुह्यमानं ' दुह्यमानावस्थं पयः ' आश्विनं ' अश्विनोः प्रीतिकरम् । एवं ' वैश्वदेवं दुग्धं ' इत्यादावपि योज्यम् । वायव्यमाह्रियमाणमिति । वायुर्देवता अस्य तद्वायव्यम् । आग्नेयमधिश्रितमित्यादावपि " साऽस्य देवता "–( पा. सू. ४ । २ । २४ ) इति देवतार्थे ढगादयस्तद्धिताः । महादेवायोद्यतमिति । महादेवो रुद्रः तदर्थमुद्धृतं गार्हपत्यदेशादुद्धृतावस्थम् ॥ ५ ॥

कां समिधमित्यादेरुत्तरमाह—अथ यां समिधमादधामीति । 'प्रतिष्ठा' आधारः । समिदभावे हि आहुतिद्रव्यं भूमौ पतेत्, सत्यां त्वस्यां तदुपरि हूयमाना आहुतिः प्रतिष्ठिता भवति । या पूर्वाऽऽहुतिरित्यादि । अग्निरूपेण स्थितान् ' देवान् तया ' पूर्वाहुत्या ' अप्रैषं ' तृप्तानकार्षम् । " प्रीञ् तर्पणे "–( धा. पा. क्र्या. उ. २ ) इत्यस्माल्लुङ् । 'यदुपासीषदं' उपासादितवानस्मि स्रुचं ' तद् बार्हस्पत्यं ' बृहस्पतिप्रीतिकरम् । ' यदपैक्षिषि ' गार्हपत्यस्य ईक्षणं कृतवानस्मि ' तेन इमं ' भूलोकम् ' अमुं ' द्युलोकं स्वर्लोकं च ' समधाम् ' समयोजयम् । या द्वितीया ' आहुतिः ' ' तया स्वर्गे लोके ' ' मामधाम् ' स्थापितवानस्मि ॥ ६ ॥

( स ) अथ यदुक्त्वा प्रकम्पयामि । व्वायुव्व्यं तद्यत्स्रुचम्परिमृज्य कूर्चे न्युमार्जिषमोषधिवनस्पतींस्तेनाप्रैषं यद्द्वितीयम्परिमृज्य दक्षिणतो हस्त-मुपासीषदम्पितॄँस्तेनाप्रैषं यत्पूर्वं प्राशिषं मां तेनाप्रैषं यद्द्वितीयम्प्रजां तेनाथ यदुत्सृप्यापां पशूँस्तेनाप्रैषं यत्स्रुच्यपऽआनीय निरौक्षिषᳪ सर्प्पदेवजनाँस्तेनाप्रैषं यद्द्वितीयं गन्धर्व्वाप्सरसस्तेनाथ यत्तृतीयमेतां दिश-मुदौक्षिषᳪ स्वर्ग्गस्य लोकस्य तेन द्वारं व्यवारिषं यज्जघनेनाहवनीय-मपो न्यनैषमस्मै लोकाय तेन व्वृष्टिमदां यत्समतिष्ठिपं यत्पृथिव्याऽऊनं तत्तेनापूपुरमित्येतन्नौ भगवन्त्सहेति होवाच ॥ ७ ॥

शौचेयो ज्ञप्तः । प्रक्ष्यामि त्वेव भगवन्तमिति पृच्छैव प्राचीनयोग्येति स होवाच यस्मिन्कालऽ उद्धृतास्तेऽग्नयः स्युरुपावहृतानि पात्राणि होष्य-

---

अथ यदुक्त्वा प्रकंपयामि, वायव्यं तत् २३ । यत्स्रुचं परिमृज्य कूर्चे न्यमार्जिषम्, ओषधिवन-स्पतींस्तेनाप्रैषम् २४ । यद्द्वितीयं परिमृज्य दक्षिणतो हस्तमुपासीषदं, पितॄँस्तेनाप्रैषम् २५ । यत्पूर्वं प्राशिषं, मां तेनाप्रैषम् २६ । यद्द्वितीयं, प्रजां तेन २७ । अथ यदुत्सृप्यापां, पशूँस्तेनाप्रैषम् २८ । यत्स्रुच्यप आनीय निरौक्षिषं, सर्पदेवजनाँस्तेनाप्रैषम् २९ । यद्द्वितीयं, गन्धर्वाप्सरसस्तेन ३० । अथ यत्तृतीयमेतां दिशमुदौक्षिषं, स्वर्गस्य लोकस्य तेन द्वारं व्यवारिषम् ३१ । यज्जघनेनाहवनीय-मपो न्यनैषम्, अस्मै लोकाय तेन वृष्टिमदाम् ३२ । यत्समतिष्ठिपं, यत्पृथिव्या ऊनं तत्तेनापू-पुरम् ३३ । इत्येतन्नौ भगवन् सहेति होवाच ॥ ७ ॥

शौचेयो ज्ञप्तः । प्रक्ष्यामि त्वेव भगवन्तमिति । पृच्छैव प्राचीनयोग्येति । स होवाच—यस्मिन् काल ऽउद्धृतास्तेऽग्नयः स्युः; उपावहृतानि पात्राणि होष्यन्त्स्याः । अथ त आहवनीयोऽनु-

---

प्राशनयोः क्रमेण प्रयोजनमाह—यत्पूर्वं प्राशिषमिति । 'अथ' यदुत्सर्पणानंतरं स्रुच्यं हुतशेषं 'अपां' पीतवानस्मि तेन 'पशून्' तृप्तानकार्षम् । प्रथमस्योक्षणस्य प्रयोजनमाह—यत्स्रुच्यप इति । स्रुच्युदकमादाय यन्निरौक्षिषं 'तेन सर्पदेवजनान्' सर्पणशीलानां प्राणिनां मध्ये ये देवजना उत्कृष्टाः तानप्रैषम् । द्वितीय-तृतीययोरुक्षणयोः प्रयोजनमाह—यद्द्वितीयमिति । एतां दिशमिति । एतच्छब्देन उत्तरा दिगभिधीयते । 'एतां' उदीचीं 'दिशं' 'उदौक्षिषं' उर्ध्वमुक्षणं कृतवानस्मि इति यत् 'तेन स्वर्गस्य लोकस्य द्वारं' प्रवेशनमार्गं 'व्यवारिषं' विवृतमुद्घाटितं कृतवानस्मि । 'आहवनीयं जघनेन' आहवनीयस्य पश्चाद्भागे 'अपो न्यनैषं' इति यत् 'तेनास्मै' भूलोकाय 'वृष्टिमदाम्' दत्तवानस्मि । यदंततः संस्थापनं 'तेन पृथिव्याः' संबंधि 'यत्' किंचिन्न्यूनं तत्सर्वम् 'अपूपुरम्' पूरितवानस्मि । एतन्नौ भगवन्नित्यादि । हे भवन्नुद्दालक ! भवतोक्तमेतत्सर्वं 'नौ' आवयोः 'सह' सहितं समानमेकरूपमिति शौचेयः 'ह' उक्तवान् ॥७॥

अन्यं प्रश्नं प्रदर्शयितुं प्रस्तौति—शौचेयो ज्ञप्त इति । उक्ताग्निहोत्रविषये 'ज्ञप्तो' बोधितः 'शौचेयः'

न्तस्याऽअथ तुऽ आहवनीयोऽनुगच्छेद्वेत्थ तद्भयं यदत्र जुह्वतो भवतीति वेदेति होवाच पुराऽचिरादस्य ज्येष्ठः पुत्रो म्रियेत यस्यैतदविदितꣳ स्याद्विद्याभिस्त्वेवाहमतारिषमिति किं विदितं का प्रायश्चित्तिरिति प्राणऽ-उदानमप्यगादिति गार्हपत्यऽआहुतिं जुहुयाꣳ सैव प्रायश्चित्तिर्न्न तदागः कुर्व्वीयेत्येतन्नौ भगवन्त्सहेति होवाच ॥ ८ ॥

शौचेयो ज्ञप्तः । प्रक्ष्यामि त्वेव भगवन्तमिति पृच्छैव प्राचीनयोग्येति स होवाच यत्र तऽएतस्मिन्नेव काले गार्हपत्योऽनुगच्छेद्वेत्थ तद्भयं यदत्र

---

गच्छेत् । वेत्थ तद्भयम् । यदत्र जुह्वतो भवतीति । वेदेति होवाच । पुराऽचिरादस्य ज्येष्ठः पुत्रो म्रियेत । यस्यैतदविदितं स्यात् । विद्याभिस्त्वेवाहमतारिषमिति । किं विदितम् । का प्रायश्चित्तिरिति । " प्राण उदानमप्यगात् "—इति गार्हपत्य आहुतिं जुहुयाम् । सैव प्रायश्चित्तिः । न तदागः कुर्वीय । इत्येतन्नौ भगवन्त्सह इति होवाच ॥ ८ ॥

शौचेयो ज्ञप्तः । प्रक्ष्यामि त्वेव भगवन्तमिति । पृच्छैव प्राचीनयोग्येति । स होवाच—यत्र त एतस्मिन्नेव काले गार्हपत्योऽनुगच्छेत् । वेत्थ तद्भयम् । यदत्र जुह्वतो भवतीति । वेदेति होवाच । पुरा-

---

पुनरप्याह—हे उद्दालक ! ' भगवन्तं ' त्वां पुनः 'प्रक्ष्यामि' । अभ्यनुज्ञानार्थमेतद्वाक्यम् । सोऽपि प्रश्नान्तरमप्य-जानादित्याह—पृच्छैव प्राचीनयोग्येति । ममाभ्यनुज्ञानार्थशंकया मा भैषीरित्यर्थः । स होवाचेत्यादि । ' सः ' प्राचीनयोग्यः ' उवाच ' पप्रच्छ । ' यस्मिन् काले ' आहवनीयाद्याः ' अग्नयः ' ' ते ' तव संबंधिनो गार्हपत्यादुद्धृताः । ' पात्राणि ' स्रुक्स्रुवादीनि ' उपावहृतानि ' स्वस्थाने आसादितानि । त्वमपि ' होष्यन् स्याः ' । ' अथ ' अस्मिन् समये ' ते ' तव ' आहवनीयोऽनुगच्छेत् ' शाम्येत् । अत्रास्मिन् विषये ' जुह्वतः ' होमं कुर्वतो यजमानस्य ' यद्भयं भवति ' ' तत् किं वेत्थ ' जानासि, इत्युद्दालकं संबोध्य कृतः प्रश्नः । तस्योत्तरमुद्दालको ब्रूते—वेदेति होवाचेति । ' वेद ' वेद्मि । उत्तमे लटि रूपम् । तदेव भयस्वरूपमाह—पुराऽचिरादिति । ' पुरा ' आगामिनि काले अचिरादविलंबेनैव 'अस्य' होतुः ' ज्येष्ठः पुत्रो म्रियेत ' । ' यस्य ' यजमानस्य ' एतत् ' वक्ष्यमाणं प्रायश्चित्तं ' अविदितं ' अविज्ञातं ' स्यात् ' तस्यायं दोषः । ' अहम् ' तु ' विद्याभिः ' प्रायश्चित्तगोचरज्ञानैरेव एतद्भयं ' अतारिषं ' अतिक्रांतवानस्मि ' इति ' प्राचीनयोग्य-माह । तत्र ' किं विदितं ' ज्ञातं एतद्भयनिवारणोपायभूतं कर्म । तेन कर्मणा प्रकृतस्य दोषस्य ' का ' प्राय-श्चित्तिभूता शांतिरिति पृष्टः तां प्रायश्चित्तिमाह—प्राण उदानमप्यगादिति । अनेन मंत्रेण ' गार्हपत्ये आहुतिं जुहुयाम् ' एतस्मिन्निमित्ते अहं हुतवानस्मि । ' सैव ' तस्य दोषस्य ' प्रायश्चित्तिः ' भवति । तत्तस्मात् आगोऽपराधं प्रागुक्तलक्षणं ' न कुर्वीय ' न करवाणीति । एवं प्रत्युक्ते सति एतदावयोः समानमिति साम्येन प्रत्यवतिष्ठते—एतन्नौ भगवन्त्सहेति । एतदुक्तं अग्निहोत्रहोमकाले आहवनीयानुगतिविषयं प्रायश्चित्तं हे भगवन्नुद्दालक ! ' नौ ' आवयोः ' सह ' सहितं समानमिति बोधितः शौचेयः पुनरन्यं प्रश्नं पप्रच्छेत्यर्थः ॥ ८ ॥

प्रक्ष्यामि त्वेवेति । शापभयात्प्रश्नानभ्यनुज्ञाने पृच्छैवेति तदभ्यनुज्ञानम् । स होवाचेत्यादिना प्रश्नः ।

जुह्वतो भवतीति व्वेदेति होवाच पुराऽचिरादस्य गृहपतिर्म्म्रियेत यस्यै-तदविदितᳫँ स्याद्विद्याभिस्त्वेवाहमतारिषमिति किं व्विदितं का प्राय-श्चित्तिरित्युदानः प्राणमप्यगादित्याहवनीय ऽआहुतिं जुहुयाᳫँ सैव प्राय-श्चित्तिर्न्न तदागः कुर्व्वीयेत्येतन्नौ भगवन्त्सहेति होवाच ॥ ९ ॥

शौचेयो ज्ञप्तः । प्रक्ष्यामि त्वेव भगवन्तमिति पृच्छैव प्राचीनयोग्येति स होवाच यत्र तऽएतस्मिन्नेव कालेऽन्वाहार्य्यपचनोऽनुगच्छेद्वेत्थ तद्वयं यदत्र जुह्वतो भवतीति व्वेदेति होवाच पुराऽचिरादस्य सर्व्वे पशवो म्रियेरन्यस्यैतदविदितᳫँ स्याद्विद्याभिस्त्वेवाहमतारिषमिति किं व्विदितं का प्रायश्चित्तिरिति व्यानऽ उदानमप्यगादिति गार्हपत्य ऽआहुतिं जुहु-याᳫँ सैव प्रायश्चित्तिर्न्न तदागः कुर्व्वीयेत्येतन्नौ भगवन्त्सहेति होवाच॥ १०॥

---

ऽचिरादस्य गृहपतिर्म्रियेत । यस्यैतदविदितं स्यात् । विद्याभिस्त्वेवाहमतारिषमिति । किं विदितम् । का प्रायश्चित्तिरिति । " उदानः प्राणमप्यगात् "—इत्याहवनीय आहुतिं जुहुयाम् । सैव प्राय-श्चित्तिः । न तदागः कुर्वीय । इत्येतन्नौ भगवन्त्सह इति होवाच ॥ ९ ॥

शौचेयो ज्ञप्तः । प्रक्ष्यामि त्वेव भगवन्तमिति । पृच्छैव प्राचीनयोग्येति । स होवाच—यत्र त एतस्मिन्नेव कालेऽन्वाहार्यपचनोऽनुगच्छेत् । वेत्थ तद्वयम् । यदत्र जुह्वतो भवतीति । वेदेति होवाच । पुराऽचिरादस्य सर्वे पशवो म्रियेरन्; यस्यैतदविदितं स्यात् । विद्याभिस्त्वेवाहमतारिषमिति । किं विदितम् । का प्रायश्चित्तिरिति । " व्यान उदानमप्यगात् "इति गार्हपत्य आहुतिं जुहुयाम् । सैव प्रायश्चित्तिः । न तदागः कुर्वीय । इत्येतन्नौ भगवन्त्सह इति होवाच ॥ १० ॥

---

एवमुत्तरेष्वपि पर्यायेषु योज्यम् । यः अयमाहवनीयानुगतौ प्रागुक्तः कालः ' एतस्मिन्नेव काले ' हे उद्दा-लक ! ' ते ' तव यदि ' गार्हपत्यः अनुगच्छेत् ' शाम्येत् । वेत्थ तद्वयमित्यादि पूर्ववत् । पुराऽचिराद-स्येत्यादि । ' पुरा ' पूर्वस्मिन्नागामिनि काले ' अचिरात् ' क्षिप्रमेव ' अस्य ' जुह्वतोऽध्वर्योः ' गृहपतिः ' यजमानः ' म्रियेत ' मृतो भवेत् । यस्यैतादित्यादि गतम् । अस्मिन् गार्हपत्यानुगमने सति " उदानः प्राण-मप्यगात् " इत्याहवनीये ' आहुतिं जुहुयाम् ' हुतवानस्मि । ' सैव ' तस्य गार्हपत्यानुगमनस्य ' प्रायश्चित्तिः ' तत्तावदागोऽपराधं ' न कुर्वीयेति ' न कुर्यामिति । अनेनाभिप्रायेणोक्तप्रायश्चित्तकरणम् । एतदपि मया ज्ञातमेव त्वयोच्यते । न तत्र भवत आधिक्यमिति प्रत्यवतिष्ठते—एतन्नौ भगवन्त्सहेति ॥ ९ ॥

पुनरन्यत् प्रष्टुं प्रस्तौति—प्रक्ष्यामि त्वेवेति । यत्र त इत्यादि । ' यत्र ' यस्मिन् ' एतस्मिन्नेव ' प्रागुक्ते होमकाले ' अन्वाहार्यपचनः ' दक्षिणाग्निरनुगच्छेत् । वेत्थेत्यादि पूर्ववत् । भयस्वरूपमाह—पुराऽचिराद-स्येति । ' सर्वे ' गवाद्याः ' पशवः । व्याख्यातचरमन्यत् । प्रायश्चित्तस्वरूपमाह—व्यान उदानमप्यगा-दिति । अनेन मंत्रेण ' गार्हपत्ये ' आज्याहुतिं ' जुहुयाम् ' जुहवानि । सैव प्रायश्चित्तिरित्यादि पूर्ववत् ॥ १० ॥

शौचेयो ज्ञप्तः । प्रक्ष्यामि त्वेव भगवन्तमिति पृच्छैव प्राचीनयोग्येति स होवाच यत्र त एतस्मिन्नेव काले सर्व्वेऽग्नयोऽनुगच्छेयुर्व्वेत्थ तद्भयं यदत्र जुह्वतो भवतीति व्वेदेति होवाच पुराऽचिरादस्यादायादं कुलᳫँ स्याद्यस्यैतदविदितᳫँ स्याद्विद्याभिस्त्वेवाहमतारिषमिति किं व्विदितं का प्रायश्चित्तिरिति पुराऽचिरादग्निं मथित्वा यां दिशं व्वातो व्वायात्तां दिशमाहवनीयमुद्धृत्य व्वायव्यामाहुतिं जुहुयाᳫँ स व्विद्याᳫँ समृद्धं मेऽग्निहोत्रᳫँ सर्व्वदेवत्यं व्वायुᳫँ ह्येव सर्व्वाणि भूतान्यपियन्ति व्वायोः पुनर्व्विसृज्यन्ते सैव प्रायश्चित्तिर्न्न तदागः कुर्व्वीयेत्येतन्नौ भगवन्त्सहेति होवाच ॥ ११ ॥

---

शौचेयो ज्ञप्तः । प्रक्ष्यामि त्वेव भगवंतमिति । पृच्छैव प्राचीनयोग्येति । स होवाच । यत्र त एतस्मिन्नेव काले सर्वेऽग्नयोऽनुगच्छेयुः । वेत्थ तद्भयम् । यदत्र जुह्वतो भवतीति । वेदेति होवाच । पुराऽचिरादस्याऽदायादं कुलं स्यात्, यस्यैतदविदितं स्यात् । विद्याभिस्त्वेवाहमतारिषमिति । किं विदितम् । का प्रायश्चित्तिरिति । पुराऽचिरादग्निं मथित्वा, यां दिशं वातो वायात्, तां दिशमाहवनीयमुद्धृत्य वायव्यामाहुतिं जुहुयाम् । स विद्यां समृद्धं मेऽग्निहोत्रं सर्वदेवत्यम् । वायुं ह्येव सर्वाणि भूतान्यपियंति । वायोः पुनर्विसृज्यंते । सैव प्रायश्चित्तिः । न तदागः कुर्वीय । इत्येतन्नौ भगवन्त्सह इति होवाच ॥ ११ ॥

---

एवमेकैकानुगतौ प्रश्नप्रतिवचनाभ्यां प्रायश्चित्तं निरूप्य कृत्स्नानुगतिविषयं प्रायश्चित्तं विवक्षन् प्रस्तौति—प्रक्ष्यामि त्वेवेत्यादिना । 'यत्रैतस्मिन्' प्रागुक्ते होमकाले 'ते' तव आहवनीयादयः 'सर्वेऽग्नयोऽनुगच्छेयुः' शाम्येयुः । वेत्थ तद्भयमित्यादि पूर्ववत् । भयस्वरूपमाह—पुराऽचिरादस्येति । 'पुरा' पूर्वस्मिन्नागामिनि काले 'अस्य' वक्ष्यमाणं सर्वानुगतिविषयं प्रायश्चित्तं अविदुषो यजमानस्य 'कुलमदायादं' दायादा ज्ञातयः तच्छून्यं स्यात् । गोत्रविच्छेदो भवेदित्यर्थः । यस्यैतादित्यादि पूर्ववत् । प्रायश्चित्तस्वरूपमाह—पुराऽचिरादिति । 'पुरा' पूर्वं 'अचिरात्' क्षिप्रम् । भस्मसमारोपणपूर्वमग्निं 'मथित्वा' 'वातः' वायुः 'यां दिशं' 'वायाद्' गच्छेत् । "वा गतिगंधनयोः"—(धा. पा. अ. प. ४०) इति धातुः । 'तां' दिशमभिलक्ष्य आहवनीयमग्निमुद्धृत्य 'वायव्यां' वायुदेवताकां "वायवे स्वाहा" इति मंत्रेणाहुतिं 'जुहुयाम्' जुहवानि । 'समृद्धं' संपूर्णमित्याहुतिक्रियाविशेषणम् । 'अग्निहोत्रं सर्वदेवत्यं' नित्यकालं 'वायुमेव' 'अपियंति' 'भूतानि' लयकाले वायुमेव 'अपियंति' प्राप्नुवंति । सृष्टिकाले तस्माद्वायोः 'पुनर्विसृज्यंते' विविधमुत्पद्यंते अतः सर्वदेवतारूपो वायुः । तद्देवता सा या आहुतिः 'सैव' सर्वानुगमविषये 'प्रायश्चित्तिः' । न तदागः कुर्वीयेत्यादि पूर्ववत् ॥ ११ ॥

शौचेयो ज्ञप्तः । प्रक्ष्यामि त्वेव भगवन्तमिति पृच्छैव प्राचीनयोग्येति स होवाच यत्र त ऽएतस्मिन्नेव काले निवाते सर्व्वेऽग्नयोऽनुगच्छेयु-र्व्वेत्थ तद्भयं यदत्र जुह्वतो भवतीति व्वेदेति होवाचाप्रियमेवास्मिँल्लोके पश्येताप्रियममुष्मिन्यस्यैतदविदितꣳ स्याद्विद्याभिस्त्वेवाहमतारिषमिति किं व्विदितं का प्रायश्चित्तिरिति पुराऽचिरादग्निं मथित्वा प्राञ्चमाहवनीय-मुद्धृत्य जघनेनाहवनीयमुपविश्याहमेवैनत्पिबेयꣳ स व्विद्याꣳ समृद्धं मेऽग्निहोत्रꣳ सर्व्वदेवत्यं ब्राह्मणꣳ ह्येव सर्व्वाणि भूतान्यपियंति ब्राह्मणा-त्पुनर्व्विसृज्यन्ते सैव प्रायश्चित्तिर्न्न तदागः कुर्व्वीयेत्यथ वा ऽ अहमेतन्ना-वेदिषमिति होवाच ॥ १२ ॥

शौचेयो ज्ञप्तः । (ऽ)इमानि समित्काष्ठान्युपायानि भगवन्तमिति स होवाच

---

शौचेयो ज्ञप्तः । प्रक्ष्यामि त्वेव भगवंतमिति । पृच्छैव प्राचीनयोग्येति । स होवाच–यत्र त एत-स्मिन्नेव काले सर्वेऽग्नयोऽनुगच्छेयुः । वेत्थ तद्भयम् । यदत्र जुह्वतो भवतीति । वेदेति होवाच । अप्रि-यमेवास्मिन् लोके पश्येत, अप्रियममुष्मिन् , यस्यैतदविदितं स्यात् । विद्याभिस्त्वेवाहमतारिषमिति । किं विदितम् । का प्रायश्चित्तिरिति । पुराऽचिरादग्निं मथित्वा प्रांचमाहवनीयमुद्धृत्य जघनेनाहवनीय-मुपविश्य अहमेवैनत् पिबेयम् । स विद्यां समृद्धं मेऽग्निहोत्रं सर्वदेवत्यम् । ब्राह्मणं ह्येव सर्वाणि भूतान्यपियंति । ब्राह्मणात्पुनर्विसृज्यन्ते । सैव प्रायश्चित्तिः । न तदागः कुर्वीयेति । अथ वा अह-मेतन्नावेदिषम् । इति होवाच ॥ १२ ॥

शौचेयो ज्ञप्तः । इमानि समित्काष्ठान्युपायानि भगवंतमिति । स होवाच–यदेवं नावक्ष्यः ।

---

पूर्वोक्त एव विषये यदि वातो न स्यात् तदा किं कर्तव्यमिति पृच्छति–यत्र त एतस्मिन्निति । 'निवाते' वातरहिते देशे । व्याख्यातमन्यत् । भयस्वरूपमाह–अप्रियमेवास्मिन्निति । प्रियं सुखं 'अप्रियं' तद्विरुद्धं दुःखमेव 'अस्मिन्' भूलोके 'पश्येत' अमुष्मिन्परलोकेऽपि अप्रियमेव पश्येत । यस्यैतदविदितमित्यादि पूर्ववत् । प्रायश्चित्तस्वरूपमाह–पुराऽचिरादित्यादि पूर्ववत् । 'अग्निं मथित्वा' वाताभावे प्राग्दिक्संबंधिनमाहव-नीयमुद्धृत्य 'जघनेनाहवनीयम्' आहवनीयस्य पश्चाद्भागे 'उपविश्य' 'अहमेव' 'एतत्' अग्निहोत्रार्थं पयः 'पिबेयम्' 'सः' अहं 'विद्याम्' जानीयाम् । 'मे' ममाग्निहोत्रं 'सर्वदेवत्यं' सर्वदेवताप्रीतिकरं सत् 'समृद्धं' संपूर्णमिति । सर्वदेवत्यत्वमुपपादयति–ब्राह्मणं ह्येवेति । ब्राह्मणमेव 'हि सर्वाणि भूतानि अपियंति' प्रलयकाले प्राप्नुवंति । सृष्टिकाले तस्मात्पुनर्विसृज्यंते । ब्राह्मणानुष्ठितसत्कर्मपरिपाकवशेन हि अखिलं जगत् सृष्टिप्रलयमेतीत्यभिप्रायः । एवं 'ज्ञप्तः' बोधितः 'शौचेयः' आह स्म । अथ खलु अहमेतत् चरमोक्तं प्रायश्चित्तं 'नावेदिषम्' नाज्ञासिषमिति ॥ १२ ॥

स त इमां विद्यां भवत्सकाशादधिगन्तुम् 'इमानि' समित्काष्ठादीनि गृहीत्वा 'भगवन्तं' ज्ञानातिशयवंतं

युदेवं नावक्ष्यो मूर्द्धा ते व्यपतिष्यदेह्युपेहीति तथेति तᳫं होपनिन्ये तस्मै हैताᳫं शोकतरां व्याहृतिमुवाच युत्सत्यं तस्माद् सत्युमेव वदेत् ॥ १३॥

इति तृतीयप्रपाठके पञ्चमं ब्राह्मणम् ॥ ११-३-५ ॥ ( ५. ३. ) ॥

ब्रह्मचर्य्यमागामित्याह । ब्रह्मणऽएवैतदात्मानं निवेदयति ब्रह्मचार्य्यसानीत्याह ब्रह्मण ऽएवैतदात्मानं परिददात्यथैनमाह को नामाऽसीति प्रजापतिर्वै कः प्राजापत्यमेवैनं तत्कृत्वोपनयते ॥ १ ॥

---

मूर्द्धा ते व्यपतिष्यत् । एहि उपेहीति । तथेति तं होपनिन्ये । तस्मै हैतां शोकतरां व्याहृतिमुवाच । यत्सत्यम् । तस्माद् सत्यमेव वदेत् ॥ १३ ॥

## उपनयनधर्माभिधायकं ब्राह्मणम् ।

" ब्रह्मचर्यमागाम् "-इत्याह । ब्रह्मण एवैतदात्मानं निवेदयति । " ब्रह्मचार्यसानि "-इत्याह । ब्रह्मण एवैतदात्मानं परिददाति । अथैनमाह-" को नामासि " इति । प्रजापतिर्वै कः । प्राजापत्यमेवैनं तत्कृत्वोपनयते ॥ १ ॥

---

त्वां ' उपायानि ' उपगच्छामीति । अनंतरमुद्दालकः ' उवाच ' ' यदेवं नावक्ष्यः ' यद्येवमज्ञानं नाविष्करोषि ' ते मूर्द्धा व्यपतिष्यत् ' अधिपतेत् । तन्मूर्द्धपतनं स्वाज्ञानप्रकटनेन अत्रभवता परिहृतमिति भावः । क्रियातिपत्तौ लृङ् । हे शौचेय ! ' एहि ' आगच्छ, ' उपेहि ' समिद्धस्तः सन् मत्समीपं प्राप्नुहि । इत्थं तथेत्यंगीकृत्य शौचेयं उद्दालकः ' उपनिन्ये ' उपनीतं कृतवान् । उपनीय च ' तस्मै ' शौचेयाय ' एतां शोकतरां ' शोकः पापं तत्तरणसमर्थां ' व्याहृतिं ' ' उवाच ' ' यत्सत्यं ' या सत्यवदनरूपा व्याहृतिः तामित्यर्थः । अतः सत्यवदनं परमो धर्म इति निगमयति-तस्माद् सत्यमेवेति ॥ १३ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यंदिनीयशतपथब्राह्मणभाष्ये एकादशकांडे पंचमेऽध्याये तृतीयं ब्राह्मणम् ॥ ( ११ । ५ । ३ ) ॥

" तं होपनिन्ये " इत्युपनयनस्य प्रस्तुतत्वात् तद्धर्मा अस्मिन् ब्राह्मणे निरूप्यन्ते । तत्र गुरुं प्रत्युपनयनप्रार्थनपरमुपनेतव्यस्य मंत्रं विधाय स्तौति-[१]ब्रह्मचर्यमागामित्याहेति । ब्रह्मचारिणो भावः ' ब्रह्मचर्यं ' तदागां प्राप्नुयाम् । " आशंसायां भूतवच्च " ( पा. सू. ३ । ३ । १३२ ) इति भूतवत्प्रत्ययः । एवमनेन मंत्रेणाह गुरुं प्रार्थयेत् । मंत्रे ब्रह्मशब्दश्रवणात् 'ब्रह्मणे' वेदपुरुषायैव ' एतत् ' एतेन मंत्रेण शिष्यः स्वात्मानं ' निवेदयति' । द्वितीयमागमनूद्य व्याचष्टे-ब्रह्माचार्यसानीत्याहेति । हे गुरो ! भवत्प्रसादात् 'ब्रह्मचारी' ब्रह्म वेदः तदभ्यसनशीलो भवानि । एतेन मंत्रभागेन स्वात्मानं परिरक्षणाय तस्मा एव ' ब्रह्मणे ' ' परिददाति ' समर्पयति । अथ गुरोर्मंत्रं विधत्ते-[२]अथैनमाहेति । ' अथ'' शिष्याभिगमनानंतरं एनमुपनेतव्यम् ' को नामासि ' इति

---

१-ब्रह्मचर्यमागामिति वाचयति ब्रह्मचार्यसानीति च । ( पार. गृ. सू. २ । २ । ६ ) इति ।
२-अथास्य दक्षिणं हस्तं गृहीत्वाऽऽह को नामासीति । ( पार. गृ. सू. २ । २ । १७ ) इति ।

( तेऽथा ) अथास्य हस्तं गृह्णाति । ( त्री ) इन्द्रस्य ब्रह्मचार्य्यस्यग्निराचार्य्यस्तवाहमाचार्य्यस्तवासावित्येते वै श्रेष्ठे बलिष्ठे देवतेऽएताभ्यामेवैनꣳ श्रेष्ठाभ्यां बलिष्ठाभ्यां देवताभ्याम्परिददाति तथा हास्य ब्रह्मचारी न कांचनार्त्तिमार्च्छति न स य ऽएवं व्वेद ॥ २ ॥

---

अथास्य हस्तं गृह्णाति । " इंद्रस्य ब्रह्मचार्यस्यग्निराचार्यस्तवाहमाचार्यस्तवासौ "–इति । एते वै श्रेष्ठे बलिष्ठे देवते । एताभ्यामेवैनं श्रेष्ठाभ्यां बलिष्ठाभ्यां देवताभ्यां परिददाति । तथा हास्य ब्रह्मचारी न कां चनार्तिमार्च्छति । न स य एवं वेद ॥ २ ॥

---

मंत्रेण निरीक्षते । अत्र किंशब्दस्यानिरुक्तार्थत्वात् प्रजापतिवाचकत्वमभिप्रेतं व्याचष्टे–प्रजापतिर्वै क इति । हे शिष्य ! त्वं 'कः' प्रजापतिरेव त्वमसि । नामशब्दः प्रसिद्धौ । तथाच एतेन मंत्रेण 'एनं' माणवकं प्रजापतिसंबंधिनमेव ' कृत्वा ' ' उपनयते ' गुरुः स्वसमीपं प्रापयति । आचार्यकरणे नयतेरात्मनेपदम् ( पा. सू. १ । ३ । ३६ ) इति ॥ १ ॥

अथ समन्त्रकं हस्तग्रहणं विधत्ते–अथास्य हस्तं गृह्णातीति । 'अथास्य' ब्रह्मचारिणो दक्षिणं ' हस्तम् ' "इंद्रस्य" इति मंत्रेण आचार्यो गृह्णीयात् । असाविति मंत्रगतादःशब्दस्थाने संबुद्ध्यंतं ब्रह्मचारिणो नाम ग्राह्यम् । हे यज्ञशर्मन् ! त्वं 'इन्द्रस्य' देवतायाः संबंधी 'ब्रह्मचारी' भवसि । तवाग्निरेवाचार्यः । अतस्तव तत्प्रतिनिधित्वादहमप्याचार्यः इति मंत्रार्थः । इंद्राग्निसंबन्धं प्रशंसति–एते वै श्रेष्ठे इति । 'एते' इंद्राग्नी 'श्रेष्ठे' प्रशस्यतमे 'बलिष्ठे' बलवत्तमे ' देवते ' । परिरक्षणाय दानं 'परिदानं' स्पष्टमन्यत् । तस्य परिदानस्य फलमाह–तथा हास्येति । ' तथा ह ' तथैव इंद्राग्निभ्यां दत्ते सति अस्याचार्यस्य संबंधी 'ब्रह्मचारी' ' कांचन ' कामपि ' आर्तिम् ' पीडां ' नार्च्छति ' न प्राप्नोति । विदुषोऽप्येतत्फलमाह–न स इति । एवमुक्तार्थं ' यो वेद' जानाति सोऽपि आर्तिम् न प्राप्नोतीत्यर्थः ॥ २ ॥

---

१–अथैनमाह कस्य ब्रह्मचार्यसीति, भवत इत्युच्यमान इन्द्रस्य, इत्यादि ( पार. गृ. सू. २ । २ । १९–२० ) इति ।

२–अत्र " इन्द्रस्य ब्रह्मचार्यसि " इत्ययं मंत्रः श्रुत्या ब्रह्मचारिणो हस्तादाने विनियुक्तः । सूत्रकृता तु हस्तादानं तूष्णीं विधाय " कस्य ब्रह्मचारी असि "–" भवतः " इति प्रश्नप्रतिप्रश्नानंतरममुं मन्त्रं ब्रह्मचारिणं प्रति ब्रूयादित्येवं विनियोगो दर्शित इति विरोधः समागच्छति ।

अत्रेत्थं समाहितिः–इयं श्रुतिस्तु केवलामेकां माध्यंदिनीं शाखामधिकरोति, सूत्रं तु पञ्चदश शाखाः । सूत्रस्य पञ्चदशशाखोपनिबन्धनत्वं प्रत्यपादि कर्कोपाध्यायैः " स्मरन्ति हि पञ्चदशशाखोपनिबंधनं कृतमाचार्येणेति । तस्मान्नास्ति प्रत्यक्षकृतो विशेषः । उच्यते । शाखाद्वयमधिकृत्य तात्पर्येणानुप्रवृत्त आचार्यः । " ( का. श्रौ. सू. २ । ३–३ ) इत्यत्र सूत्रभाष्ये । इति सूत्रस्य पंचदशशाखासाधारण्याद्बहुत्र दृष्टो विनियोगः सूत्रकृतोपनिबद्धः । एतच्छ्रुतिकृतो विनियोगस्तु माध्यंदिनीयशाखामात्रगोचरः । अतश्च माध्यंदिनीयानामुपनयनप्रयोगे श्रुतिबलात् सूत्रापेक्षयाऽयं विशेषो बोद्धव्यः । सौत्रो विनियोगस्तु माध्यंदिनतदितरसाधारणः । ततश्च माध्यंदिनैः सूत्रमनुसर्तव्यं श्रुतिर्वा शरणीकर्तव्येति विकल्पः । वैकल्पिके चात्मनस्तुष्टिः प्रमाणमिति न्यायेन प्रयोगसौकर्याच्च सूत्रमेव समाश्रियते याज्ञिकवृंदेनेत्यन्यदेतत् । अस्तु । उक्तव्यवस्थया विरोधपरिहृतिर्मन्तव्या मतिमद्भिरिति ॥

( दा ) अथैनम्भूतेभ्यः परिददाति । प्रजापतये त्वा परिददामि देवाय त्वा सवित्रे परिददामीत्येते वै श्रेष्ठे वर्षिष्ठे देवते ऽएताभ्यामेवैनᳪं श्रेष्ठाभ्यां वर्षिष्ठाभ्यां देवताभ्याम्परिददाति तथा हास्य ब्रह्मचारी न कांचनार्तिमार्च्छति न स य ऽएवं वेद ॥ ३ ॥

( दा ) अद्भ्यस्त्वौषधीभ्यः परिददामीति तदेनमद्भ्यश्चौषधीभ्यश्च परिददाति द्यावापृथिवीभ्यां त्वा परिददामीति तदेनमाभ्यां द्यावा-पृथिवीभ्यां परिददाति ययोरिदᳪं सर्व्वमधि विश्वेभ्यस्त्वा भूतेभ्यः परिददाम्यरिष्ट्या ऽइति तदेनᳪं सर्व्वेभ्यो भूतेभ्यः परिददात्यरिष्ट्यै तथा हास्य ब्रह्मचारी न कांचनार्तिमार्च्छति न स य ऽएवं वेद ॥ ४ ॥

॥ शतम् ५८०० ॥

---

अथैनं भूतेभ्यः परिददाति । "प्रजापतये त्वा परिददामि देवाय त्वा सवित्रे परिददामि"–इति । एते वै श्रेष्ठे वर्षिष्ठे देवते । एताभ्यामेवैनं श्रेष्ठाभ्यां वर्षिष्ठाभ्यां देवताभ्यां परिददाति । तथा हास्य ब्रह्मचारी न कां चनार्तिमार्च्छति । न स य एवं वेद ॥ ३ ॥

"अद्भ्यस्त्वौषधीभ्यः परिददामि"–इति । तदेनमद्भ्यश्चौषधीभ्यश्च परिददाति । "द्यावा-पृथिवीभ्यां त्वा परिददामि"–इति । तदेनमाभ्यां द्यावापृथिवीभ्यां परिददाति । ययोरिदं सर्वमधि । "विश्वेभ्यस्त्वा भूतेभ्यः परिददाम्यरिष्टयै"–इति । तदेनं सर्वेभ्यो भूतेभ्यः परि-ददात्यरिष्टयै । तथा हास्य ब्रह्मचारी न कां चनार्तिमार्च्छति । न स य एवं वेद ॥ ४ ॥

---

एवं लिंगवशात् इंद्राग्निभ्यां परिदानं प्रतिपाद्य, अथ साक्षात्समंत्रकं परिदानं विधत्ते–अथैनं भूतेभ्य[1] इति । 'अथ' हस्तग्रहणानंतरं 'भूतेभ्यः' विद्यमानेभ्यः प्रजापतिप्रमुखेभ्यः 'एनं' ब्रह्मचारिणं परिदद्यात् । "प्रजापतये त्वा" इति मंत्रेण । एते वै श्रेष्ठे इत्यादि । 'एते' प्रजापतिसवितृरूपे 'श्रेष्ठे' प्रशस्यतमे 'वर्षिष्ठे' वृद्धतमे 'देवते' उत्पादकत्वेन प्रेरकत्वेन च प्रामुख्यात् । एताभ्यामेवेत्यादि सिद्धम् ॥ ३ ॥

अपामोषधीनां च सर्वकारणत्वात् ताभ्यः परिदानार्थं द्वितीयो मंत्रभाग इति व्याचष्टे–अद्भ्यस्त्वौषधीभ्य इति । तृतीयभागमनूद्य व्याचष्टे–द्यावापृथिवीभ्यामिति । सर्वाधारत्वात् द्यावापृथिव्योः, द्यावापृथिवीभ्यां परिदानम् । अत एव द्यावापृथिव्यौ विशिनष्टि–ययोरिदं सर्वमधीति । 'ययोः' द्यावापृथिव्योरुपरि । 'इदं सर्वं' जगत् आश्रितं वर्तते तथाभूताभ्यां द्यावापृथिवीभ्यामित्यर्थः । विश्वेभ्यस्त्वा भूतेभ्य इत्यादि । 'अरिष्टयै' अहिंसायै । उक्तावशिष्टानि यानि सर्वाणि भूतानि संति तेभ्यः परिरक्षार्थमनेन मन्त्रभागेन ददातीत्यर्थः । अबादिभ्यः परिदानस्य फलमाह–तथा हास्येति । अथास्याद्भ्यस्त्वौषधीभ्यः परिदाने सतीत्यर्थः । गतमन्यत् ॥ ४ ॥

---

१—अथैनं भूतेभ्यः परिददाति प्रजापतये त्वा० इत्यादि । ( पार. गृ. सू. २ । २ । २१ ) इति ।

ब्रह्मचार्य्यसीत्याह । ब्रह्मणऽएवैनं तत्परिददात्यपोऽशानेत्यमृतं वाऽआपोऽमृतमशानेत्येवैनं तदाह कर्म्म कुर्व्वित वीर्य्यं वै कर्म्म वीर्य्यं कुर्व्वित्येवैनं तदाह समिधमाधेहीति समिन्त्स्वात्मानं तेजसा ब्रह्मवर्च्चसेनेत्येवैनं तदाह मा सुषुप्थाऽइति मा मृथाऽ इत्येवैनं तदाहापोऽशानेत्यमृतं वाऽआपोऽमृतमशानेत्येवैनं तदाह तदेनमुभयतोऽमृतेन परिगृह्णाति तथा हास्य ब्रह्मचारी न कांचनार्तिमार्च्छति न स यऽएवं वेद ॥ ९ ॥

---

" ब्रह्मचार्यसि "–इत्याह । ब्रह्मण एवैनं तत्परिददाति । " अपोऽशान "–इति । अमृतं वा आपः । अमृतमशानेत्येवैनं तदाह । " कर्म कुरु "–इति । वीर्यं वै कर्म । वीर्यं कुर्वित्येवैनं तदाह । " समिधमाधेहि "–इति । समिन्त्स्वात्मानं तेजसा ब्रह्मवर्चसेनेत्येवैनं तदाह । "मा सुषुप्थाः"–इति । मा मृथा इत्येवैनं तदाह । "अपोऽशान"–इति । अमृतं वा आपः । अमृतमशानेत्येवैनं तदाह । तदेनमुभयतोऽमृतेन परिगृह्णाति । तथा हास्य ब्रह्मचारी न कां चनार्तिमार्च्छति । न स य एवं वेद ॥ ९ ॥

---

अथास्य मंत्रेणानुशासनं विधत्ते–ब्रह्मचार्यसीत्याहेत्यादि । हे यज्ञशर्मन् ! त्वं 'ब्रह्मचार्यसि' ब्रह्मचर्यनियमं प्राप्नोषि अनेनाप्रमत्तो भव । ब्रह्मण एवैनमिति । तत्तेन ब्रह्मचारीति पदेन प्रतीयमानाय 'ब्रह्मणे' वेदपुरुषायैव 'एनं' ब्रह्मचारिणं परिददातीति तात्पर्यगम्योऽर्थः । अपोऽशानेति द्वितीयमनुशासनम् । मया अनुज्ञातः सन् 'अपः' एव 'अशान' अन्यन्नाकांक्षयेत्यर्थः । तदेव तात्पर्यतो व्याचष्टे–अमृतं वा आप इति । आप्यायनकरत्वात् प्राणिस्थितिनिमित्तत्वाच्चापाममृतत्वम् । अशानेति " अश भोजने " ( धा. पा. क्र्या. प. १४ ) " इत्यस्माल्लोटि " हलः श्नः शानज्झौ " ( पा. सू. ३ । १ । ८३ ) इति शानजादेशः । कर्म कुर्विति तृतीयमनुशासनम् । गुरुशुश्रूषार्हं ब्रह्मचर्याश्रमविहितं यत्कर्मास्ति, तत्कुर्वित्यर्थः । वीर्यं वै कर्मेति । वीर्यहेतुत्वात्कर्मणस्तद्रूपत्वम् । समिधमाधेहीत्युपरितनानुशासनम् । हे ब्रह्मचारिन् ! समिधमग्नावाधेहि । अग्निपरिचर्यां कुर्वित्यर्थः । तत्समिदाधानं आत्मनः समिंधनहेतुत्वेन स्तौति–समिन्त्स्वात्मानमिति । तेजः शरीरकांतिः । ब्रह्मवर्चसं श्रुताध्ययनसंपत्तिजं ब्राह्मं तेजः । उभाभ्यामात्मानं 'समिन्त्स्व' संदीप्तं कुर्विति । एवंरूपमेवार्थमनेन वाक्येन ब्रह्मचारिणमेवाह प्रतिपादयति आचार्यः । पुनरप्यपामशनमनुशास्ति चरमेण भागेनेत्याह–अपोऽशानेति । व्याख्यातमेतत् । ननु–उक्तस्यैवार्थस्य पुनरनुशासनं किमर्थमित्याशंक्याह–तदेनमुभयतोऽमृतेनेति । तत्तेन पुनरनुशासनेन 'उभयतः' उभयत्र आदावंते च उदकलक्षणेनामृतेन 'एनं' ब्रह्मचारिणं 'परिगृह्णाति' वेष्टयति । तथा हास्येत्यादि । तथैवानुशासने सति नियमितत्वेन पीडाहेतुभूतस्य पापस्यानाचरणात् । अस्य ब्रह्मचारीत्यादि सिद्धम् ॥ ९ ॥

---

१–अथैनं[२] संशास्ति ब्रह्मचार्यस्यपोऽशान कर्म कुरु मा दिवा सुषुप्था वाचं यच्छ समिधमाधेह्यपोऽशानेति । ( पार. गृ. सू. २ । ३ । २ ) इति । २–मा सुषुप्था इति मा मृथा इत्येवैनं तदाहेत्यस्य व्याख्यानं नोपलब्धम् ।

( द्रा ) अथास्मै सावित्रीमन्वाह । ताᳫँ ह स्मैताम्पुरा संवत्सरेऽन्वाहुः संवत्सरसम्मिता वै गर्भाः प्रजायन्ते जातऽएवास्मिँस्तद्वाचं दध्मऽइति ॥६॥

( त्यु ) अथ षट्सु मासेषु । षड्वाऽऋतवः संवत्सरस्य संवत्सरसम्मिता वै गर्भाः प्रजायन्ते जातऽएवास्मिँस्तद्वाचं दध्मऽइति ॥ ७ ॥

(त्यु) अथ चतुर्व्विᳫँशत्यहे । चतुर्व्विᳫँशतिर्व्वै संवत्सरस्यार्द्धमासाः संवत्सरसम्मिता वै गर्भाः प्रजायन्ते जातऽएवास्मिँस्तद्वाचं दध्मऽ इति ॥८॥

---

अथास्मै सावित्रीमन्वाह । तां ह स्मैतां पुरा संवत्सरेऽन्वाहुः । संवत्सरसंमिता वै गर्भाः प्रजायंते । जात एवास्मिंस्तद्वाचं दध्म इति ॥ ६ ॥

अथ षट्सु मासेषु । षड्वा ऋतवः संवत्सरस्य । संवत्सरसंमिता वै गर्भाः प्रजायंते । जात एवास्मिंस्तद्वाचं दध्म इति ॥ ७ ॥

अथ चतुर्विंशत्यहे । चतुर्विंशतिर्वै संवत्सरस्यार्द्धमासाः । संवत्सरसंमिता वै गर्भाः प्रजायंते । जात एवास्मिंस्तद्वाचं दध्म इति ॥ ८ ॥

---

अथ सावित्र्यनुवाचनं विधत्ते—अथास्मा इति । "ब्रह्मचार्यसि" इति मंत्रेणानुशासनानंतर्यमथशब्दार्थः । 'अस्मै' नियमिताय शिष्याय 'सावित्रीं' सवितृदेवताकां "तत्सवितुर्वरेण्यम्" इत्यादिकां गायत्रीं 'अन्वाह' आचार्योऽनुब्रूयात् । अनुवाचनप्रकारस्त्वग्रे वक्ष्यते । अथ तदनुवाचनस्य उपनयनादूर्ध्वं संवत्सरकाले कर्तव्यतामाह—तां ह स्मैतामिति । 'पुरा' पूर्वस्मिन् उपनयनादूर्ध्वमाविनि संवत्सरकाले अतीते सति 'तामेतां' गायत्रीं 'अन्वाहुः' केचिदाचार्याः उपदिशंति । तेषामभिप्रायमाह—संवत्सरसंमिता वा इति । संवत्सरात्मना कालेन सम्यक् परिच्छिन्नाः खलु 'गर्भाः' व्यक्तावयवाः संतः 'प्रजायंते' उत्पद्यंते । अत उपनयनानंतरं आचार्यसमीपे गर्भवदवस्थितः तदुक्तं नियममाचरन् संवत्सरकाले एव पुनर्जायते । अतः 'जाते एवास्मिन्' ब्रह्मचारिणि तत्तेन सावित्र्यनुवाचनेन 'वाचं दध्मः' धारयाम इति । अनेनाभिप्रायेण संवत्सरकाले अनुवाचनमिति संबंधः ॥ ६ ॥

अथ षण्मासादिष्वपि कालेषु संवत्सरसंपत्तिं प्रतिपादयन् तदनुवाचनस्य कर्तव्यतामाह—अथ षट्सु मासेष्वित्यादिना । अथेति पक्षांतरप्रदर्शने 'षट्सु मासेषु' उपनयनादूर्ध्वं गतेषु सत्सु सावित्रीमन्वाहुरित्याद्यनुषंगः । षड्वा ऋतव इति । 'षड्वा ऋतवः संवत्सरस्य' इति मासगतषट्संख्यया संवत्सरसंपत्तिरुक्ता । अन्यत् व्याख्यातम् ॥ ७ ॥

पक्षांतरमाह—अथ चतुर्विंशत्यह इति । चतुर्विंशतिसंख्याकानामह्नां समाहारश्चतुर्विंशत्यहः कालः । चतुर्विंशतिदिवसपरिमिते काले गते सतीत्यर्थः । चतुर्विंशतिर्वा इति—दिवसगतार्द्धमाससंख्यया संवत्सरसंपत्तिः । गतमन्यत् ॥ ८ ॥

---

१–अथास्मै सावित्रीमन्वाह, संवत्सरे षण्मास्ये चतुर्विंशत्यहे द्वादशाहे षडहे त्र्यहे वा । ( पार. गृ. सू. २।३।१।६ ) इति ।

( त्यु ) अथ द्वादशाहे । द्वादश वै मासाः संवत्सरस्य संवत्सरसम्मिता वै गर्भाः प्रजायन्ते जातऽएवास्मिँस्तद्वाचं दध्म ऽइति ॥ ९ ॥

( त्यु ) अथ षडहे । षड्वा ऽऋतवः संवत्सरस्य संवत्सरसम्मिता वै गर्भाः प्रजायन्ते जातऽएवास्मिँस्तद्वाचं दध्मऽ इति ॥ १० ॥

( त्यु ) अथ त्र्यहे । त्रयो वाऽ ऋतवः संवत्सरस्य संवत्सरसम्मिता वै गर्भाः प्रजायन्ते जातऽ एवास्मिँस्तद्वाचं दध्मऽ इति ॥ ११ ॥

तदपि श्लोकं गायन्ति । ( न्त्या ) आचार्य्यो गर्भी भवति हस्तमाधाय दक्षिणम् । तृतीयस्याँ स जायते सावित्र्या सह ब्राह्मणऽइति सद्यो ह त्वाव ब्राह्मणायानुब्रूयादाग्नेयो वै ब्राह्मणः सद्यो वाऽ अग्निर्जायते तस्मात्सद्यऽएव ब्राह्मणायानुब्रूयात् ॥ १२ ॥

---

अथ द्वादशाहे । द्वादश वै मासाः संवत्सरस्य । संवत्सरसंमिता वै गर्भाः प्रजायंते । जात एवास्मिंस्तद्वाचं दध्म इति ॥ ९ ॥

अथ षडहे । षड्वा ऋतवः संवत्सरस्य । संवत्सरसंमिता वै गर्भाः प्रजायंते । जात एवास्मिंस्तद्वाचं दध्म इति ॥ १० ॥

अथ त्र्यहे । त्रयो वा ऋतवः संवत्सरस्य । संवत्सरसंमिता वै गर्भाः प्रजायंते । जात एवास्मिंस्तद्वाचं दध्म इति ॥ ११ ॥

तदपि श्लोकं गायंति—" आचार्यो गर्भी भवति हस्तमाधाय दक्षिणम् । तृतीयस्यां स जायते सावित्र्या सह ब्राह्मणः "—इति । सद्यो ह त्वाव ब्राह्मणायानुब्रूयात् । आग्नेयो वै ब्राह्मणः । सद्यो वा अग्निर्जायते । तस्मात्सद्य एव ब्राह्मणायानुब्रूयात् ॥ १२ ॥

---

अन्यं पक्षमाह—द्वादशाह इति । अत्र दिवसगतद्वादशसंख्यया मासद्वादशात्मकसंवत्सरसंपत्तिः । गतमन्यत् ॥ ९ ॥

अन्यं पक्षमाह—अथ षडह इति । दिवसगतषट्संख्यया ऋतुद्वारा अत्र संवत्सरसंपत्तिः ॥ १० ॥

चरमं पक्षमाह—अथ त्र्यह इति । ग्रीष्मो वर्षा हेमंत इति ऋतूनां त्रित्वम् ॥ ११ ॥

अस्मिन् त्र्यहपक्षे श्लोकमन्त्रं संवादयति—तदपि श्लोकं गायंतीति । तत्र त्र्यहपक्षे श्लोकरूपं मंत्रमपि ' गायंति ' पठंति । आचार्यो गर्भी भवतीति । ' आचार्यः ' माणवकमुपनीय समीपवर्तिना तेन च ' गर्भी भवति ' गर्भवान् भवति । किं कृत्वा ? आत्मीयं ' दक्षिणं हस्तं ' शिष्यमस्तके ' आधाय ' निक्षिप्य । ' सः ' गर्भरूपो माणवकः ' तृतीयस्यां ' रात्रौ व्यतीतायां ' जायते ' आचार्यत उत्पद्यते । जातश्च आचार्येणोपदिष्टया ' सावित्र्या ' सहितः सन् ' ब्राह्मणः ' भवति । सावित्रीरूपं ब्रह्म अधीते इति ब्राह्मणः, इति

(ता॒ꣳ) ता॒ꣳ है॒ता॒मेके । सा॒वि॒त्रीम॒नु॒ष्टु॒भम॒न्वा॒हु॒र्वाग्वा॒ ऽअ॒नु॒ष्टु॒प्त॒दस्मि॒न्वा॒चं द॑ध्म॒ ऽइ॒ति न त॒था कु॒र्य्याद्यो है॒नं त॒त्र ब्रू॒यादा न्वा॒ ऽअ॒यम॒स्य॒ वा॒चमा॑दित मू॒को भ॑वि॒ष्य॒तीती॒श्व॒रो ह त॒थै॒व स्या॒त्त॒स्मा॒दे॒तां गा॒य॒त्री॒मे॒व सा॒वि॒त्रीम॒नु॒ब्रू॒यात् ॥ १३ ॥

(ह) अ॒थ है॒के द॒क्षि॒ण॒तः । (स्ति॒) ति॒ष्ठ॒ते वा॒ऽऽसी॒ना॒य वा॒ऽन्वा॒हु॒र्न्न त॒था कु॒र्य्याद्यो है॒नं त॒त्र ब्रू॒याद्बु॒ल्बं न्वा॒ ऽअ॒य॒मि॒म॒मजी॒जनत बु॒ल्बो भ॑वि॒ष्य॒ती॒ती॒श्व॒रो ह त॒थै॒व स्या॒त्त॒स्मा॒त्पु॒र॒स्ता॒दे॒व प्र॒ती॒चे स॒मी॒क्ष॒मा॒णा॒या॒नु॒ब्रू॒यात् ॥ १४ ॥

---

तां हैतामेके सावित्रीमनुष्टुभमन्वाहुः । वाग्वा अनुष्टुप् । तदस्मिन्वाचं दध्म इति । न तथा कुर्यात् । यो हैनं तत्र ब्रूयात् । आ न्वा अयमस्य वाचमदित, मूको भविष्यतीति । ईश्वरो ह तथैव स्यात् । तस्मादेतां गायत्रीमेव सावित्रीमनुब्रूयात् ॥ १३ ॥

अथ हैके दक्षिणतस्तिष्ठते वाऽसीनाय वाऽऽन्वाहुः । न तथा कुर्यात् । यो हैनं तत्र ब्रूयात् । बुल्बं न्वा अयमिममजीजनत । बुल्बो भविष्यतीति । ईश्वरो ह तथैव स्यात् । तस्मात्पुरस्तादेव प्रतीचे समीक्षमाणायानुब्रूयात् ॥ १४ ॥

---

व्युत्पत्तेर्ब्राह्मणजातित्वमस्य संपन्नमित्यर्थः । इत्थं त्रैवर्णिकानां साधारणं पक्षमुक्त्वा ब्राह्मणस्य विशेषमाह—सद्यो ह त्वावेति । तुशब्दः प्रागुक्तं कालविलंबं व्यावर्तयति । 'सद्यः' उपनयनानंतरमेव 'ब्राह्मणाय' सावित्रीमनुब्रूयात् । एतदुपपादयति—आग्नेयो वा इति । प्रजापतिमुखात्सहोत्पत्तेः अग्निदेवत्यो ब्राह्मणः । ततः किमित्याह—सद्यो वा अग्निरिति । मंथनानंतरं 'सद्यः' एवाग्निर्जायते, अतस्तत्साम्यात् तद्देवत्याय ब्राह्मणाय सावित्रीं सद्य एवानुब्रूयात् ॥ १२ ॥

का पुनरसौ सावित्रीत्याशंक्य—तत्र एकीयं मतमुपन्यस्यति—तां हैतामिति । 'अनुष्टुभं' अनुष्टुप्छन्दस्कां "तत्सवितुर्वृणीमहे" इत्यादिकाम् । वाग्वा अनुष्टुबित्यादि । यस्मात् कृत्स्नवाग्रूपा 'अनुष्टुप्' तत्तस्मात् जातेऽस्मिन्माणवके 'वाचं दध्मः' धारयाम इति । अनेनाभिप्रायेणानुष्टुभ ऋचः अनुवचनम् । तदेतन्निषिद्ध्य दूषयति—न तथा कुर्यादिति । 'तत्र' तस्मिन् विषये 'यः' नाम कश्चिदभिज्ञ आगत्य एनमाचार्यं 'ब्रूयात्' । किमिति ? 'अयं' माणवकः अस्याचार्यस्य 'वाचं' नुशब्दः अद्येत्यर्थे ! अद्य खलु 'आदित' स्वीकृतवान् । वाग्रूपाया अनुष्टुभः स्वीकारात् । तथा चायमुपदेष्टा 'मूको भविष्यतीति' तथैव भवितुमयमीश्वरः समर्थः स्यात् । स्वपक्षं सिद्धांतयति—तस्मादेतामिति । "तत्सवितुर्वरेण्यम्" इत्यादिकां गायत्रीछंदस्कामेव सावित्रीमृचमनुब्रूयात् । तथा च वाचोऽप्युच्चारान्नोक्तदोष इत्यर्थः ॥ १३ ॥

तत्रानुवचनसमये शाखांतराभिमतं दक्षिणतोऽवस्थानं शिष्यस्य निषेधति—अथ हैके इति । 'एके' शाखिनः

---

१—सद्यस्त्वेव गायत्रीं ब्राह्मणायानुब्रूयादाग्नेयो वै ब्राह्मण इति श्रुतेः । (पार. गृ. सू. २ । ३ । ७) इति । २—राजन्यवैश्ययोर्विशेष उक्तः सूत्रे—त्रिष्टुभं राजन्यस्य, जगतीं वैश्यस्य, सर्वेषां वा गायत्रीम् । (पार. गृ. सू. २ । ३ । ८–१०) इति ।

( त्तां ) ताम्वै पच्छोऽन्वाह । त्रुयो वै प्राणाः प्राण ऽउदानो व्यानस्तानेवास्मिँस्तद्दधात्यथार्द्धर्चशो द्वौ वा ऽइमौ प्राणौ प्राणोदानावेव प्राणोदानावेवास्मिँस्तद्दधात्यथ कृत्स्नामेको वा ऽअयं प्राणः कृत्स्न ऽएव प्राणमेवास्मिँस्तत्कृत्स्नं दधाति ॥ १९ ॥

तदाहुः । ( नं ) न ब्राह्मणं ब्रह्मचर्य्यमुपनीय मिथुनं चरेद्गर्भो वा ऽएष भवति यो ब्रह्मचर्य्यमुपैति नेदिमं ब्राह्मणं व्विषिक्ताद्रेतसो जनयानीति ॥ १६ ॥

---

तां वै पच्छोऽन्वाह । त्रयो वै प्राणाः । प्राण उदानो व्यानः । तानेवास्मिंस्तद्दधाति । अथार्द्धर्चशः । द्वौ वा इमौ प्राणौ । प्राणोदानावेव । प्राणोदानावेवास्मिंस्तद्दधाति । अथ कृत्स्नाम् । एको वा अयं प्राणः कृत्स्न एव । प्राणमेवास्मिंस्तत्कृत्स्नं दधाति ॥ १९ ॥

तदाहुः—न ब्राह्मणं ब्रह्मचर्यमुपनीय मिथुनं चरेत् । गर्भो वा एष भवति । यो ब्रह्मचर्यमुपैति । नेदिमं ब्राह्मणं विषिक्ताद्रेतसो जनयानीति ॥ १६ ॥

---

आचार्यस्य दक्षिणभागे ' तिष्ठते वा आसीनाय वा ' वाचयंतीति स्थानासनयोर्विकल्पः । यो हैनमिति । तत्र दोषोक्तिः । बुल्बं न्वा अयमिममिति । नु, वै, अयं, इति पदच्छेदः । अयमाचार्यः इमं शिष्यं अद्य बुल्बं तिरश्चीनं प्राङ्मुखम् 'अजीजनत' अजनयत् । तथाचायं ' बुल्बः ' पराङ्मुखो ' भविष्यतीति ' । गतमन्यत् । स्वपक्षं सिद्धांतयति—तस्मात्पुरस्तादेवेति । आचार्यस्य पूर्वभागे ' प्रतीचे ' प्रत्यङ्मुखाय उपविष्टाय आचार्यं ' समीक्षमाणाय ' सावित्रीमनुब्रूयात् । तत्र नोक्तदोष इत्यर्थः ॥ १४ ॥

पच्छोऽर्द्धर्चशोऽनवानमिति क्रमेण तस्मिन्ननुवचने धर्मान् विधत्ते—तां वै पच्छे इति । ' पच्छः ' पादशः पादे पादे अवसाय । त्रयो वै प्राणा इत्यादि स्पष्टम् । ' अर्द्धर्चशः ' ऋचः अर्द्धमर्द्धर्चं तस्मिन्नर्द्धर्चे अवसायेत्यर्थः । द्वौ वा इमाविति । ऊर्ध्वाऽधोभेदेन वृत्तिद्वैविध्यात् प्राणयोर्द्वित्वम् । अथ कृत्स्नामिति । अर्द्धर्चे अवसानं परित्यज्य ' कृत्स्नाम् ' अखंडां गायत्रीमंततोऽनुब्रूयात् । एको वा अयमिति । अविवक्षितवृत्तिकोऽयं ' प्राणः ' ( विरागदोषः वराष्याख्यदेवताकः सन् ) 'कृत्स्नः' अविभक्तावयवः 'एव' भवति । तथा च कृत्स्नानुवचनेन ' कृत्स्नं प्राणमेवास्मिन् ' स्थापयति ॥ १९ ॥

अथ प्रागुक्तसंवत्सरादिपक्षेषु उपनयनानंतरं सावित्रीप्रदानात् पूर्वं आचार्यस्य नियमं दर्शयति—तदाहुरिति । तत्रोक्तविषये आहुरभिज्ञाः कथयंति । किमिति ? ' ब्राह्मणं ' शिष्यं ब्रह्मचर्यनियममुपनीय प्राप्य आचार्यः ' न मिथुनं चरेत् ' स्त्रिया सह वासं न कुर्यात् । तत्र कारणमाह—गर्भो वा एष इति । ' एषः ' उपनीतः ' गर्भः ' भवति, ' इमं ' गर्भीभूतं ' ब्राह्मणं ' ' विषिक्तात् ' विविधं सिक्ताद्रेतसो ' नेत् ' नैव ' जनयानि ' उत्पादयानि इति ॥ १६ ॥

---

१–अत्र पारस्करः—अथास्मै सावित्रीमन्वाहोत्तरतोऽग्नेः प्रत्यङ्मुखायापविष्टायोपसन्नाय समीक्षमाणाय समीक्षिताय दक्षिणतस्तिष्ठत आसीनाय वैके ( पार. गृ. सू. २ । ३ । ३–४ ) इति । अत्र अग्नेर्दक्षिणतो दक्षिणस्यां दिशि तिष्ठते स्थिताय ऊर्ध्वीभूताय वा आसीनायोपविष्टाय वेति कर्कादयः सर्वे भाष्यकाराः ।

२–पच्छोऽर्द्धर्चशः सर्वां च तृतीयेन सहानुवर्तयन् । ( पार. गृ. सू. २ । ३ । ५ ) इति ।

तदु वाऽआहुः । काममेव चरेद्द्वय्यो वा ऽइमाः प्रजा दैव्यश्चैव मानुष्यश्च ता वा ऽइमा मानुष्यः प्रजाः प्रजननात्प्रजायंते च्छंदाꣳसि वै दैव्यः प्रजास्तानि मुखतो जनयते ततऽएतं जनयते तस्मादु काममेव चरेत् ॥ १७ ॥

(त) तदाहुः । ( नं ) न ब्रह्मचारी सन्मध्वश्नीयादोषधीनां वाऽएष परमो रसो यन्मधु नेदन्नाद्यस्यान्तं गच्छानीत्यथ ह स्माह श्वेतकेतुरारुणेयो ब्रह्मचारी सन्मध्वश्नꣳस्त्रय्यै वाऽ एतद्विद्यायै शिष्टं यन्मधु स तु रसो यस्येदृक्छिष्टमिति यथा ह वा ऽऋचं वा यजुर्वा साम वाऽभिव्याहरेत्तादृक्तद्यऽ एवं विद्वान्ब्रह्मचारी सन्मध्वश्नाति तस्मादु काममेवाश्नीयात् ॥ १८ ॥

इति तृतीयप्रपाठके षष्ठं ब्राह्मणम् ॥ ११-३-६ ॥ ( ९. ४. ) ॥

---

तदु वा आहुः—काममेव चरेत् । द्वय्यो वा इमाः प्रजाः दैव्यश्चैव मानुष्यश्च । ता वा इमा मानुष्यः प्रजाः प्रजननात्प्रजायंते । छन्दांसि वै दैव्यः प्रजाः । तानि मुखतो जनयते, तत एतं जनयते । तस्मादु काममेव चरेत् ॥ १७ ॥

तदाहुः—न ब्रह्मचारी सन्मध्वश्नीयात् । ओषधीनां वा एष परमो रसो यन्मधु । नेदन्नाद्यस्यान्तं गच्छानीति । अथ ह स्माह श्वेतकेतुरारुणेयः । ब्रह्मचारी सन्मध्वश्नन् । त्रय्यै वा एतद्विद्यायै शिष्टं यन्मधु । स तु रसो यस्येदृक् शिष्टमिति । यथा ह वा ऋचं वा यजुर्वा साम वाऽभिव्याहरेत् । तादृक् तत् । य एवं विद्वान् ब्रह्मचारी सन्मध्वश्नाति । तस्मादु काममेवाश्नीयात् ॥ १८ ॥

---

एवं केषांचिन्मतमुक्त्वा अन्येषां मतमाह—तदु वा आहुरिति । 'तदु' तत्रैव अपरे अन्यथा 'आहुः' । 'कामं' यथेच्छमेव 'मिथुनं चरेत्' । उक्तदोषाभावं व्यवस्थया प्रतिपादयति—द्वय्यो वा इमा इति । द्विविधाः खलु 'इमाः प्रजाः' दैवमानुषभेदात् । तत्र 'मानुष्यः' 'प्रजाः' मिथुनीभवनेन प्रजननादुत्पद्यंते । गायत्र्यादीनि तु 'छंदांसि दैव्यः प्रजाः' तानि अयं 'मुखतः' मुखात् ताल्वोष्ठपुटादिव्यापारविशेषादुत्पादयते । 'ततः' मुखत एव उत्पद्यमानात् गायत्रीच्छंदसः सकाशात् 'एतं' ब्रह्मचारिणं जनयति । अत एव औपस्थं एनं स हि पिता सद्यस्तं जनयति । तत्र जन्मशरीरमेव मातापितरौ जनयत इति । अतोऽस्य ब्रह्मचारिणः प्रजननादनुत्पत्तेः आचार्यस्य मिथुनमपि न विरुध्यत इत्युपसंहरति—तस्मादु काममेवेति । उद्वलितरेताश्चेन्मिथुनं चरेत् । न सर्वथा वर्जननियम इत्यर्थः ॥ १७ ॥

इत्थमाचार्यस्य नियममुक्त्वा ब्रह्मचारिणोऽप्याह—तदाहुर्न ब्रह्मचारी सन्निति । तत्र केचिदाहुः—ब्रह्मचर्यधर्मं प्राप्तः सन् 'मधु' नाश्नीयान्न भक्षयेत् । कुत इत्यत आह—ओषधीनां वा इति । दृष्टसोमौषधीनां संबंधी

देवान्वाऽ ऊर्ध्वान्त्स्वर्गं लोकं यतः । (तोऽ) असुरास्तमसाऽन्तरदधुस्ते होचुर्न वाऽ अस्यान्येन सत्रादपघातोऽस्ति हंत सत्रमासामहाऽ इति ॥ १ ॥
ते शताग्निष्टोमꣳ सत्रमुपेयुः ।(स्ते)ते यावदासीनः परापश्येत्तावतस्तमोऽपाघ्नतैवमेव शतोक्थ्येन यावत्तिष्ठन्परापश्येत्तावतस्तमोऽपाघ्नत ॥ २ ॥

---

## अथ शतातिरात्रसंज्ञकं सत्रम् ।

देवान्वा ऊर्ध्वान्स्वर्गं लोकं यतोऽसुरास्तमसाऽन्तरदधुः । ते होचुः । न वा अस्यान्येन सत्रादपघातोऽस्ति । हंत सत्रमासामहा इति ॥ १ ॥

ते शताग्निष्टोमं सत्रमुपेयुः । ते यावदासीनः परापश्येत्तावतस्तमोऽपाघ्नत । एवमेव शतोक्थ्येन—यावत्तिष्ठन्परापश्येत्तावतस्तमोऽपाघ्नत ॥ २ ॥

---

'परमः' उत्कृष्टः 'एष रसः' यदेतन्मधु । अस्य हि भक्षणे सर्वौषधीरस उपभुक्तः स्यात् । तथा च ब्रह्मचर्याश्रम एव सर्वमन्नमुपभुक्तं स्यात् । 'अन्नाद्यस्यांतं' अवसानं नैव गच्छानीत्यनेनाभिप्रायेण मध्वशनं न कार्यम् । पक्षांतरमाह—अथ ह स्माहेति । 'अथ' खलु 'आह स्म' श्वेतकेतुरारुणेः पुत्रः ब्रह्मचर्याश्रमस्थ एव मध्वशनं कुर्वन् । किमिति तदुच्यते—त्रय्यै वा एतदिति । वेदत्रयरूपाया विद्यायाः खलु एतच्छिष्टं विशिष्टरूपं ( यत् ब्रुवस्य वष्टिं तच्छिष्टम् । ) अत एव तु वेदत्रयात्मको मधुनो रस इति । यत एवं श्वेतकेतुना मधुरसस्य त्रयीरूपत्वमुक्तम् । ततः कारणात् 'यथा' खलु ऋग्यजुःसाम्नां मध्ये अन्यतरतदभिव्याहारात् उक्तप्रकारेण मधुनः त्रयीशिष्टत्वं विदुषो ब्रह्मचारिणो मध्वशनं तादृगेव भवति । अतो मध्वशननिषेधः अविद्वद्विषय इत्युपसंहरति—तस्मादु काममिति ॥ १८ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये एकादशकाण्डे पंचमेऽध्याये चतुर्थं ब्राह्मणम् ॥ ( ११ । ५ । ४ ) ॥

अथ शतातिरात्राख्यं सत्रं विधास्यन्नाख्यायिकामाह—देवान्वा इति । 'स्वर्गं लोकं' 'यतः' गच्छतो देवानिति संबंधः । 'तमसा' मायात्मकेनान्धकारेण 'अंतरदधुः' यथा स्वर्गो न दृश्यते तथा अंतर्द्धानं व्यवधानं कृतवंतः । तस्य तमसः अपहननसाधनं सत्रयागादन्यन्नास्तीति निश्चितवंत इत्याह—ते होचुरिति । 'अस्य' तमसः 'अपघातः' अपहननं, तमोऽपहननसाधनदर्शनजनितहर्षद्योतको हंतशब्दः । सत्रमासामहा इति । द्वादशरात्रप्रभृतिसहस्रसंवत्सरांता अहीनसोमयागाः । तेषां मध्ये अधिकसंस्थारूपाणां केषांचित्सत्राणां तमोऽपहननहेतुत्वेन कर्तुं 'आसामहे' उपविशामः ॥ १ ॥

ते शताग्निष्टोममित्यादि । 'ते' देवाः शतसंख्याका अग्निष्टोमसंस्थाः सोमयागा यस्मिन् तच्छताग्निष्टोमं सत्रमुपेयुरुपगतवंतः । 'आसीनः' पुरुषो यावत्प्रदेशं 'परापश्येत्', तावत्प्रदेशे एतेन शताग्निष्टोमसत्रेण असुरकृतं मायामयं 'तमः' 'अपाघ्नत' अपराच्छिन्दन् । ततः कृत्स्नस्य तमसो निर्हरणार्थं अग्निष्टोमादपि अधिकसंस्थारूपं शतोक्थ्यं सत्रमेवान्वतिष्ठन् । तेन 'तिष्ठन्' पुरुषो 'यावत्' स्थानं 'परापश्येत्' 'तावतः' स्थानात्तमोऽपहतवंतः ॥ २ ॥

---

१–कंसान्तर्गतः पाठश्चिन्त्यः ।

ते होचुः । ( रु ) अप वाव तमो हन्महे न त्वेव सर्व्वमिव हन्त प्रजापतिं पितरं प्रत्ययामेति ते प्रजापतिम्पितरम्प्रतीत्योचुरसुरा वै नो भगवऽऊर्ध्वा-न्त्स्वर्ग्गं लोकं यतस्तमसाऽन्तरदधुः ॥ ३ ॥

( स्ते ) ते शताग्निष्टोमᳪं सत्रमुपैम । ते यावदासीनः परापश्येत्ताव-तस्तमोऽपाहन्मह्येवमेव शतोक्थ्येन यावत्तिष्ठन्परापश्येत्तावतस्तमोऽपा-हन्महि प्र नो भगवञ्छाधि यथाऽसुराँस्तमोऽपहत्य सर्व्वं पाप्मान-मपहत्य स्वर्ग्गं लोकं प्रज्ञास्याम ऽइति ॥ ४ ॥

स होवाच । ( चा ) असर्व्वक्रतुभ्यां वै यज्ञाभ्यामगन्त यदग्निष्टोमेन चोक्थ्येन च शतातिरात्रᳪं सत्रमुपेत तेनासुराँस्तमोऽपहत्य सर्व्वं पाप्मान-मपहत्य स्वर्ग्गं लोकं प्रज्ञास्यथेति ॥ ५ ॥

---

ते होचुः । अप वाव तमो हन्महे । न त्वेव सर्वमिव । हंत प्रजापतिं पितरं प्रत्ययामेति । ते प्रजापतिं पितरं प्रतीत्योचुः । असुरा वै नो भगव ऊर्ध्वान् स्वर्गं लोकं यतस्तमसाऽन्तरदधुः ॥ ३ ॥

ते शताग्निष्टोमं सत्रमुपैम । ते यावदासीनः परापश्येत्तावतस्तमोऽपाहन्माहि । एवमेव शतोक्थ्येन । यावत्तिष्ठन्परापश्येत्तावतस्तमोऽपाहन्महि । प्र नो भगवन् शाधि । यथाऽसुरांस्तमोऽपहत्य सर्वं पाप्मानमपहत्य स्वर्गं लोकं प्रज्ञास्याम इति ॥ ४ ॥

स होवाच । असर्वक्रतुभ्यां वै यज्ञाभ्यामगंत । यदग्निष्टोमेन चोक्थ्येन च । शतातिरात्रं सत्रमुपेत । तेनासुरांस्तमोऽपहत्य सर्वं पाप्मानमपहत्य स्वर्गं लोकं प्रज्ञास्यथेति ॥ ५ ॥

---

ते होचुरित्यादि । ' ते ' देवाः ' ऊचुः ' । शताग्निष्टोमशतोक्थ्याभ्यां सत्राभ्यां ' तमः ' ' अपहन्महे ' विनाशयामः । ' न त्वेव सर्वं ' तमः अपहंतुं सामर्थ्यमस्माकमस्ति । 'हंत ! पितरं प्रजापतिं प्रति'-' अयाम ' गच्छाम । सोऽस्माकं कृत्स्नस्य तमसः अपहननोपायं वदेदित्यभिप्रायः । ' पितरं प्रतीत्य ' प्रतिगम्येत्यर्थः । असुरा वा इत्यादि । हे 'भगवः' भगवन् ! नः अस्मान् ' स्वर्गं लोकं यतः ' गच्छतः । गतमन्यत् ॥ ३ ॥

एवं तमसा अंतर्धानानंतरं तद्धननहेतुत्वेन कृतं परिहारमपि देवाः पित्रे कथयंति—ते शताग्निष्टोमं सत्र-मुपैमेति । ' उपैम ' उपागच्छाम । ' अपाहन्महि ' व्यनाशयामहि । अन्यत्सर्वं पूर्ववत् । इत्थं स्वकीयं कृत्स्न-तमसोऽपहननविषयमसामर्थ्यं विज्ञाप्य तादृगुपायत्वेन इष्टोपवेशनप्रार्थनं दर्शयति—प्र नो भगवान्निति । हे 'भग-वन् ! ' ' नः ' अस्मान् ' प्रशाधि ' अनुगृहाण । " शासु अनुशिष्टौ " ( धा. पा. अ. प. ६९ ) इत्यस्मा-ल्लोटि " शा हौ " ( पा. सू. ६।४।३५) इति शादेशः । तस्यासिद्धत्वात् " हुझल्भ्यो हेर्धिः " ( पा. सू. ६।४।८७ ) इति हेर्धिरादेशः । यथा वयं ' असुरान् ' तत्कृतं तमश्चापहत्य तद्धेतुभूतं ' सर्वं पाप्मानं ' च ' अपहत्य ' विनाश्य ' स्वर्गं लोकं ' ' प्रज्ञास्यामः ' तथा अनुशाधीत्यर्थः ॥ ४ ॥

इत्थं प्रार्थितः सन् तेषां तदुपायत्वेन शतातिरात्राख्यं सत्रं प्रोक्तवानित्याह—स होवाचेति । अग्निष्टोमोक्थ्य-

ते श॒ताति॑रात्रꣳ स॒त्रमु॒पे॑युः । (स्ते) तेना॒सु॑राँस्तमो॒ऽपह॒त्य सर्व्वं॑ पा॒प्मान॑मप॒हत्य॑ स्व॒र्गं लो॒कम्प्रज॑ज्ञु॒स्तेषा॑मर्वाक्प॒ञ्चाशे॒ष्वेवा॑हःस्व॒हर॑भि॒ रात्रि॑सामानि पुरी॒यू रात्रि॑म॒भ्यहः॑साम॒नि ॥ ६ ॥

ते हो॑चुः । (र) अमु॒हाम॒ वै न प्रजानीमो ह॒न्त प्र॒जापतिमे॒व पि॒तरं॑ प्रत्यया॒मेति॒ ते प्र॒जापतिमेव॒ पि॒तरम्प्रती॒त्योचु॒रह॑न्नो॒ रात्रि॑साम॒नि रात्र्या॑म॒ह्नो भवन्ति नः । विपश्चि॑द्यज्ञान्मु॒ग्धान्वि॒द्वान्धीरो॒ऽनु॑शाधि नऽइति ॥ ७ ॥

---

ते शतातिरात्रं सत्रमुपेयुः । तेनासुरांस्तमोऽपहत्य सर्वं पाप्मानमपहत्य स्वर्गं लोकं प्रजज्ञुः । तेषामर्वाक् पंचाशेष्वेवाहः स्वहरभि रात्रिसामानि परीयुः । रात्रिमभ्यहःसामानि ॥ ६ ॥

ते होचुः । अमुहाम वै । न प्रजानीमः । हन्त प्रजापतिमेव पितरं प्रत्ययामेति । ते प्रजापतिमेव पितरं प्रतीत्योचुः–" अहन्नो रात्रिसामानि रात्र्यामह्नो भवंति नः । विपश्चिद्यज्ञान्मुग्धान्विद्वान्धीरोऽनुशाधि नः "–इति ॥ ७ ॥

---

संस्थौ सोमयागौ असर्वक्रतू । अधिकयोः षोडश्यतिरात्रयोर्विद्यमानत्वात् । तथा च ' असर्वक्रतुभ्यां ' खलु यज्ञाभ्यां हे देवाः ! यूयं 'अगंत' गमनं कृतवंतः स्थ । अतः सर्वक्रत्वात्मकं शतातिरात्राख्यं 'सत्रं' 'उपेत' उपगच्छत कुरुतेत्यर्थः । ' तेन ' शतातिरात्रेण असुरपरिभवेन तमश्चापहत्य तत्कारणभूतं 'सर्वं पाप्मानं' च अपहत्य ' स्वर्गं लोकं ' प्रकर्षेण ' ज्ञास्यथ ' एवमशेषेण आसुरतमसो निर्हरणोपायं प्रजापतिरुपदिदेश ॥ ५ ॥

देवाः पुनर्यथोपदिष्टं तथा कृत्वा तत्फलं प्राप्नुवंति स्मेत्याह–ते शतातिरात्रमिति । ' प्रजज्ञुः ' प्रकर्षेण ज्ञातवंत इत्यर्थः । तत्रानुष्ठानक्रमं दर्शयितुं दोषमुद्भावयति–तेषामर्वागिति । ' तेषां ' देवानाम् शतरात्रे यानि अनुष्ठीयमानानि दिनानि पंचाशत्संख्याकानि अहानि तेषु एकैकेन यथावदनुष्ठीयमानेषु सत्सु ततः प्रागेव 'रात्रिसामानि' रात्रौ प्रयोज्यानि पर्यावर्तीनि सामानि तानि ' अहरभिपरीयुः ' । तथा यानि ' अहःसामानि ' अहनि प्रयोज्यानि बहिष्पवमानादीनि तानि ' रात्रिमभिपरीयुः ' । अतिरात्रसंस्थे हि सोमयागे परदिवसे सूर्योदयादनंतरमेवाश्विनशस्त्रस्य परिसमाप्तिः । ततस्तिरोऽह्न्यः सोमयागः, ततो यागः, ततो यज्ञपुच्छम्, इति त्रिचतुर्मुहूर्तकर्तव्यं प्रयोगजातं भवति । तथा च एकैकस्मिन्नहन्यभावात् कालोत्कर्षे सति अहःकर्तव्यं रात्रिं प्राप्नोति । रात्रिकर्तव्यमहरिति विपर्ययो जात इत्यर्थः ॥ ६ ॥

एवं कालविपर्यये सति देवैर्यत्कृतं " अहन्नः " इति मंत्रवाक्येन तद्दर्शयति–ते होचुरिति । ' अमुहाम वै ' मोहेनाक्रांता अभूम । मुह्यतेर्लुङि पुषादित्वादङ् । यतो मोहाक्रांताः अतो भूयः कर्तव्यं ' न प्रजानीमः ' ' हंत ' पुनरेव ' पितरं प्रजापतिं प्रत्ययाम ' प्रतिगच्छाम इति विचार्य तं प्रतिगत्योचुः–" अहन्नः " इति मंत्रवाक्येन । हे प्रजापते ! ' नः ' अस्माकं ' रात्रिसामानि ' ' अहन् ' अह्नि ' भवंति ' । यानि ' अह्नः ' संबंधीनि सामानि तानि ' रात्र्यां ' भवंति । एतस्य दोषस्य परिहारं

तान्हैतदुपजगौ । मह्वाहिमिव वै ह्रदाद्बलीयानन्ववेत्य । अनुत्त स्वादा-स्थानात्ततः सत्रं नु तायत इति ॥ ८ ॥

( त्या ) आश्विनं वै वः शस्यमानम् । ( म्प्रा ) प्रातरनुवाकमास्थानादनुत्त यमास्थानादनुदध्वं धीराः सन्तोऽअधीरवत् । प्रशास्त्रा तमुपेत शनै-रप्रतिशᳬसतेति ॥ ९ ॥

ते होचुः । कथन्नु भगवः शस्तं कथमप्रतिशस्तमिति स होवाच यत्र होताऽऽश्विनᳬ शᳬसन्नाग्नेयस्य कृतोर्गायत्रस्य च्छन्दसः पारं गच्छा-

---

तान्हैतदुपजगौ–" मह्वाहिमिव वै ह्रदाद्बलीयानन्ववेत्य । अनुत्त स्वादास्थाना-त्ततः सत्रं न तायते "–इति ॥ ८ ॥

आश्विनं वै वः शस्यमानं प्रातरनुवाकमास्थानादनुत्त । " यमास्थानादनुदध्वं धीराः संतो अधीरवत् । प्रशास्त्रा तमुपेत शनैरप्रतिशंसत "–इति ॥ ९ ॥

ते होचुः–कथं नु भगवः शस्तं कथमप्रतिशस्तमिति । स होवाच । यत्र होताऽऽश्विनं शंसन्नाग्ने-

---

' विद्वान् ' ' धीरः ' कुशलः ' विपश्चित् ' अप्रतिहतज्ञानः स्वाज्ञानहतान् ' मुग्धान् ' मूढान् ' नः ' अस्मान् ' अनुशाधि ' सौत्येऽहनि प्रवृत्त्युपायमुपदिशेत्यर्थः ॥ ७ ॥

तान्हैतदुपजगाविति । एवं विज्ञापिते सति ' तान् ' देवान् प्रति एतद्वक्ष्यमाणप्रकारेण ' उपजगौ ' उप-न्यासपूर्वं मोहकारणमुक्तवान् प्रजापतिः । " कै गै शब्दे " ( धा. पा. भ्वा. प. ९४१–९४२ ) इत्यस्मा-ल्लिट् । मह्वाहिमित्यादि । ह्रदादगाधजलात् शस्यमानं महासर्पमिव स्थितं प्रातरनुवाकम् ' बलीयान् ' बलवत्तरः आश्विनशस्त्राख्यः शत्रुः, ' अन्ववेत्य ' अनुप्राप्य स्वकीयात् स्थानात् ' अनुत्त ' प्रच्युतमकरोत्, ' ततः ' तस्मात् बलवता आश्विनेन प्रातरनुवाकस्य स्वास्थानात् प्रच्यावितत्वात् कालोत्कर्षात् युष्माकं ' सत्रं न तायते ' न विस्तार्यते । अतः सत्रवर्तिनां अह्नां परस्परसांतत्यविरहात् कालोत्कर्षेण भवतामहोरात्र-कर्तव्यविपर्ययो जात इति भावः ॥ ८ ॥

अस्य श्लोकमंत्रस्याभिप्रायं श्रुतिराविष्करोति–आश्विनं वै वः शस्यमानमिति । प्रथमांतमेतत् । ' शस्यमानमाश्विनं ' शस्त्रं विहितात् स्वस्थानात् ' प्रातरनुवाकम् ' ' अनुत्त ' निरगमयत् इत्युदाहृत-मन्त्रस्य तात्पर्यमित्यर्थः । इत्थं देवानां सत्रमासीनानां मोहकारणमभिधाय तत्परिहारायेदमुपदिशति–यमा-स्थानादनुदध्वमिति । ' धीराः ' धीमंतः ' संतः ' यूयं ' अधीरवत् ' जडवत् ' यं ' प्रातरनुवाकं आस्थानादनुदध्वं स्वस्थानात्प्रच्यावितवन्तः । अथ ' तं ' प्रातरनुवाकं होत्रा आश्विनशस्त्रे शस्यमान एव प्रशास्त्रा मैत्रावरुणेन होतृकार्यम् ' उपेत ' उपगच्छत । ' शनैः ' नीचैःस्वरेण · ' अप्रतिशंसत ' तस्याश्विनस्य अप्रतिशंसनं प्रतिध्वनिपराहतियथा न भवति तथा प्रातरनुवाकं नीचैःस्वरेण उपगच्छतेत्यर्थः ॥ ९ ॥

तदेतत् अप्रतिशंसनविषयं देवानां प्रश्नं प्रयोगक्रमस्य कार्त्स्न्येनाभिधानहेतुत्वेनोद्भावयति–ते होचुरिति ।

त्तत्प्रतिप्रस्थाता व्वसतीवरीः परिहृत्य मैत्रावरुणस्य हविर्द्धानयोः प्रातरनुवाकमुपाकुरुतादुच्चैर्होता शꣳसति शनैरितरो जंजप्यमानऽ इवान्वाह तन्न व्वाचा व्वाचम्प्रत्येति न च्छन्दसा च्छन्दः ॥ १० ॥

परिहिते प्रातरनुवाके । यथायतनमेवोपाꣳशꣳन्तर्यामौ हुत्वा द्रोणकलशे पवित्रम्प्रपीड्य निदधाति तिरोऽह्न्यैश्चरित्वा प्रत्यञ्चः प्रतिपरेत्य

---

यस्य क्रतोर्गायत्रस्य च्छंदसः पारं गच्छात् । तत्प्रतिप्रस्थाता वसतीवरीः परिहृत्य मैत्रावरुणस्य हविर्द्धानयोः प्रातरनुवाकमुपाकुरुतात् । उच्चैर्होता शंसति । शनैरितरो जंजप्यमान इवान्वाह । तन्न वाचा वाचं प्रत्येति । न च्छंदसा च्छंदः ॥ १० ॥

परिहिते प्रातरनुवाके यथायतनमेवोपांश्वंतर्यामौ हुत्वा द्रोणकलशे पवित्रं प्रपीड्य निदधाति । तिरोऽह्न्यैश्चरित्वा प्रत्यंचः प्रतिपरेत्य तिरोऽह्न्यानेव भक्षयाध्वै । अथानुपूर्वं यज्ञपुच्छं

---

हे ' भगवः ' भगवन् ! षड्गुणैश्वर्यसंपन्न प्रजापते ! 'कथं नु शस्तं' शस्यमानमाश्विनं शस्त्रं केन खलु प्रकारेण सम्यक् शस्तं भवति । कथं वा तत्प्रातरनुवाकेनाप्रतिशस्तं भवतीति । एतत्सर्वं प्रयोगजातमुपदिशेत्यर्थः । अत्र प्रजापतिनोक्तं अह्नां परस्परसंधानप्रकारमनुवदति—स होवाचेत्यादिना । ' सः ' खलु प्रजापतिरेवमुक्तवान् ' यत्र ' यस्मिन् समये ' होता ' ' आश्विनं ' शस्त्रं ' शंसन् ', तदा यस्याग्नेयस्य अग्निदेवताकस्य ' क्रतोः ' ' गायत्रस्य च्छंदसः पारम् ' अवसानं 'गच्छात्' गच्छेत् । आश्विनशस्त्रे आग्नेय उषस्य आश्विन इति त्रयः क्रतवः । अनुवाकशब्दः ऋक्संघातवचनः । तत्र एकैकस्मिन् क्रतौ गायत्र्यादीनि सप्त च्छन्दांसि उत्तरोत्तरं चतुरक्षराधिकानि अनूच्यंते । तत्र प्रथमस्य क्रतोर्यत्प्रथमं छन्दो गायत्र्याख्यं तस्य पारं यदा होता प्राप्नोति । तत्तदानीमेव ' प्रतिप्रस्थाता ' परस्याह्नः सोमाभिषवार्था वसतीवर्याख्या अपः ' परिहृत्य ' " व्युत्क्रामतेत्याह त्रिः; शालाद्वार्यमपरेणास्ते पत्न्युत्तरवेदिमपरेण यजमान उपस्थे सोमं कृत्वा; शालाद्वार्यमपरेण वसतीवरीः परिहरति " ( का. श्रौ. सू. ८ । २९९–२९७ ) इति सूत्रोक्तक्रमेण परिहरणं कृत्वेत्यर्थः । अध्वर्योराश्विनशस्त्रप्रगरे व्यापृतत्वात् प्रतिप्रस्थातृग्रहणम् । वसतीवरीपरिहरणानन्तरमेव हविर्द्धानयोर्मध्ये उपविष्टस्य ' मैत्रावरुणस्य ' ' प्रातरनुवाकमुपाकुरुतात् ' प्रतिप्रस्थाता कुर्यादित्यर्थः । " तुह्योस्तातङ् " ( पा. सू. ७ । १ । ३९ ) इति तातङ् । तत्र होतृमैत्रावरुणयोर्मध्ये ' होता उच्चैः ' आश्विनं शस्त्रं ' शंसति ', ' इतरः ' मैत्रावरुणः जंजप्यमान इव जपन्निवेत्यर्थः । शनैरुपांशुस्वरेणान्वाह प्रातरनुवाकम् । तत्तथा सति मैत्रावरुणः स्वकीयवाचा ध्वनिना होतुर्वाचं ध्वनिं 'न प्रत्येति' न प्रतिगच्छति । तथा ' छन्दसा ' स्वप्रयोज्येन गायत्र्यादिना होत्रा प्रयुज्यमानं ' छन्दः ' न प्रत्येति । होतुर्गायत्रस्य छन्दसः परिसमाप्तौ उष्णिक्छंन्दसः प्रारम्भे सत्येव मैत्रावरुणस्य प्रातरनुवाकादिभूतस्य गायत्रस्य छन्दसः प्रारम्भविधानादित्यभिप्रायः ॥ १० ॥

एवं प्रातरनुवाकस्य स्वकाले प्रवृत्त्युपायमभिधाय तत उपरितनं प्रयोगजातमपि प्रातरनुवाकसमनंतरं कर्तव्यमित्याह—परिहिते प्रातरनुवाके इति । ' परिहिते ' परिसमाप्ते तत उपरितनं प्रयोगजातमपि प्रकृतिवत्तदानी-

ति॒रो॑ऽह्न्या॒नेव॒ भ॑क्षया॒ध्वा॒ऽअथा॑नुपू॒र्व्यं य॑ज्ञपु॒च्छ॒ᳪं स॒ᳪस्था॒प्य य॒ऽ ऊ॒र्ध्वा॒ऽअ॒न्तर्यामा॑द्ग्र॒हास्ता॒न्गृ॒हीत्वा॒ वि॑प्रु॒षा॒ᳪ हो॒म॒ᳪ हु॒त्वा॒ स॒न्त॒निं॑ च ब॒हि॒ष्प॒व॒मा॒नेन॑ स्तु॒त्वा॒ऽह॑रेव॒ प्र॒ति॒प॒द्या॒ध्वा॒ऽइ॒ति ॥ ११ ॥

त॒दे॒तेऽभि श्लो॑काः । ( श्व ) च॒तु॒र्भिः सै॑न्धवै॒र्यु॒क्तैर्धी॑रा॒ व्य॑जहु॒स्तमः॑ । वि॒द्वा॒ᳪसो॒ ये॒ श॒त॒क्रतु॑ दे॒वाः स॒त्रम॑तन्व॒तेति॑ ॥ १२ ॥

च॒त्वारो॑ ह्य॒त्र यु॒क्ता भ॑वन्ति । द्वौ होता॑रौ॒ द्वाव॑ध्व॒र्यू॒ प॑वे॒न्तुं श॒के॑व॒ ह॒नूनि॑ क॒ल्पय॑न्नहो॒रन्तौ॒ व्य॑तिषज॒न्त धी॑राः । न दा॑नवा य॒ज्ञियं॑ तन्तु॒मेषां॑

---

संस्थाप्य, य ऊर्ध्वा अंतर्यामाद्ग्रहाः, तान् गृहीत्वा विप्रुषां होमं हुत्वा सन्तानिं च बहिष्पवमानेन स्तुत्वा अहरेव प्रतिपद्याध्वा इति ॥ ११ ॥

तदेतेऽभि श्लोकाः–" **चतुर्भिः सैन्धवैर्युक्तैर्धीरा व्यजहुस्तमः । विद्वांसो ये शतक्रतु देवाः सत्रमतन्वत** "–इति ॥ १२ ॥

चत्वारो ह्यत्र युक्ता भवंति । द्वौ होतारौ । द्वावध्वर्यू । " **पवेन्तुं शकेव हनूनि कल्पयन्न-**

---

मेव कृत्वा ' उपांश्वंतर्यामौ ' ग्रहौ ' यथायतनमेव ' प्रकृतौ यस्मिन् काले हूयेते तथैव ' हुत्वा ' दशापवित्रं ' निष्पीड्य ' ' द्रोणकलशे निदधाति ' । अथ ऐन्द्रवायवादिग्रहणात् पूर्वं ' तिरोऽह्न्यैः ' तिरोहिताहःसम्बन्धिभिः सोमैश्चमसगणैः आश्विनशस्त्रानंतरमाविमिश्चरित्वा ' प्रत्यंचः ' प्रत्यङ्मुखाः संतः ' प्रतिपरेत्य ' प्रतिनिवृत्य ' तिरोऽह्न्यान् ' हुतशिष्टान् रात्रिपर्युषितान् सोमान् 'भक्षयाध्वै' हे देवाः ! यूयं भक्षयत । अथानंतरं ' अनुपूर्वं ' प्रकृतिवदेव ' यज्ञपुच्छं ' पूर्वस्याह्नः शेषं समाप्य ' अंतर्यामात् ' ' ये ऊर्ध्वाः ' ' ग्रहाः ' ऐन्द्रवायवादयः ' तान् गृहीत्वा ' विप्रुड्ढोमं प्रकृतिवदेव कृत्वा " अग्निः प्रातःसवन " इति सवनसंतन्याख्यं ' होमं ' कुर्यात् । अथ बहिष्पवमानाख्येन स्तोत्रेण ' स्तुत्वा ' उत्तरमहरेव ' प्रतिपद्याध्वै ' प्रतिपद्यध्वं प्रारभध्वम् । एवं पूर्वोत्तरयोरह्नोः आद्यंतवर्तिनामवयवानां व्यतिषज्य सत्रानुष्ठाने सति " अहरभि रात्रिसामानि परीयुः " इति प्रागुक्तो दोषो न प्रसज्यत इत्यर्थः । कात्यायनोऽपि शतातिरात्रं प्रस्तुत्य एवमेव प्रयोगमसूत्रयत्–" आश्विनस्याग्नेयांते प्रतिप्रस्थाता व्युत्क्रामतादि कृत्वा मैत्रावरुणाय प्रातरनुवाकमुपाकृत्यांतर्यामं हुत्वा प्रपीड्य पवित्रं द्रोणकलशे निदधाति; सशेषं होतृचमसं; तिरोह्न्यादि करोति पूर्वस्याह्नः; ग्रहग्रहणाद्या विप्रुड्ढोमात्कृत्वा सवनसंततिं जुहोत्यग्निः प्रातःसवन इति" ( का. सौ. सू. २४।१०९–१०८) इति॥ ११॥

श्रुत्युक्तेऽर्थे श्लोकमंत्रान् संवादयति–तदेतेऽभि श्लोका इति । उक्तमर्थमभिलक्ष्य ' एते ' वक्ष्यमाणाः ' श्लोकाः ' गीयंत इत्यर्थः । चतुर्भिः सैन्धवैरिति । होत्रध्वर्युप्रशास्तृप्रतिप्रस्थातृलक्षणैर्युक्तैः ' चतुर्भिः ' ' सैन्धवैः ' अश्वैः धीरास्ते देवास्तमः ' व्यजहुः ' विशेषेण त्यक्तवन्तः । उक्तं प्रयोगक्रमं ' विद्वांसः ' जानंतः ' ये देवाः ' ' शतक्रतु ' शतं क्रतवः सोमयागा यस्मिन् सत्रे तथाविधं ' सत्रमतन्वत ' सन्ततैः परस्परसम्बद्धैरहोभिरकुर्वतेत्यर्थः ॥ १२ ॥

उक्तार्थपरतां श्लोकस्य व्याचष्टे–चत्वारो ह्यत्रेति । द्वौ होताराविति । होतृकार्यापन्नत्वात् प्रशास्ताऽपि

विजानीमो वितंतं मोहयन्ति नः ॥ पूर्वस्याह्नः परिशिंषन्ति कर्म्म तदुत्तरेणाभिवितन्वतेऽह्ना । दुर्विज्ञानं काव्यं देवतानांᳫँ सोमाः सोमैर्व्यतिषक्ताः प्लवंते ॥ समानान्त्सदमुक्षन्ति हयान्काष्ठभृतो यथा । पूर्णान्परिस्रुतः कुम्भाञ्जनमेजयसादनऽइत्यसुररक्षसान्यपेयुः ॥ १३ ॥

इति तृतीयप्रपाठके सप्तमं ब्राह्मणम् ॥ ११–३–७ ॥ ( ५. ५. ) ॥

---

ह्नोरंतौ व्यतिषजंत धीराः । न दानवा यज्ञियं तंतुमेषां विजानीमो वितंतं मोहयन्ति नः ॥ पूर्वस्याह्नः परिशिंषन्ति कर्म तदुत्तरेणाभिवितन्वतेऽह्ना । दुर्विज्ञानं काव्यं देवतानां सोमाः सोमैर्व्यतिषक्ताः प्लवन्ते ॥ समानान् सदमुक्षन्ति हयान् काष्ठभृतो यथा । पूर्णान्परिस्रुतः कुंभान् जनमेजयसादने ॥ "–इत्यसुररक्षसान्यपेयुः ॥ १३ ॥

---

होता । एवं प्रतिप्रस्थाता अध्वर्युरित्यभिप्रेत्य द्विवचनम् । पवेर्नु शक्वेवेति द्वितीयः श्लोकः । पवेर्वज्रस्य 'शक्वेव' प्रहरणशक्तिं प्रांतवर्तिनीं धारामिव 'हनूनि' हनुवत् अहःपार्श्ववर्तीनि प्रातरनुवाकाश्विनादीनि 'कल्पयन्' । विभक्तिव्यत्ययः । कल्पयंतः । कर्तृद्वयेन सह प्रयुंजानाः पूर्वापरवर्तिनोरह्नोरंतौ 'धीराः' धीमन्तो देवाः 'व्यतिषजंत' व्यतिषक्ताः । उदीरितरीत्या परस्परसंसृष्टावकुर्वन् । "षंज संगे" ( धा. पा. भ्वा. प. १०१२ ) इति धातुः । न दानवा इति । देवानां बाह्यं 'यज्ञियं' यज्ञसम्बन्धं 'वितंतं' विस्तृतं एषामह्नां 'तन्तुं' परस्परसंतानप्रकारं प्रजापत्युपदेशात् वयमिदानीं विशेषेण 'जानीमः' यतः 'नः' अस्मान् 'दानवाः' दनोः पुत्रा असुराः इतः परं 'न मोहयंति' । पूर्वस्याह्न इति तृतीयः श्लोकः । 'पूर्वस्याह्नः' सवनत्रयात्मकस्य अतिरात्रसंस्थस्याश्विनशस्त्रादिकं 'कर्म' यदा 'परिशिंषन्ति' परिशिष्टमवशिष्टं कुर्वन्ति । तदा तत्कर्म 'उत्तरेण' 'अह्ना' परदिवसे अनुष्ठेयेन सवनत्रयात्मकेन सोमयागेन 'अभिवितन्वते' अभितो विस्तारयंति । 'काव्यं' प्रशस्तं 'देवतानां संबन्धि' 'तत्' अह्नोर्व्यतिषंजनं 'दुर्विज्ञानं' विज्ञातुमशक्यम् । किं पुनर्दुर्विज्ञानमिति तदाह–सोमाः सोमैरिति । पूर्वस्याह्नः सम्बन्धिनः 'सोमाः' उत्तरस्याह्नः सम्बन्धिभिः 'सोमैः' अत्र सोमशब्दः कर्ममात्रोपलक्षणम् । 'व्यतिषक्ताः' व्यतिहारेण परस्परसंसक्ताः सन्तः 'प्लवन्ते' प्रवर्तन्ते, इति यत् तद्दुर्विज्ञानमित्यर्थः । समानान् सदमित्यादि । समानानेकविधान् 'काष्ठभृतः' आज्यन्तः काष्ठाः बिभ्रतीति काष्ठभृतः । छांदसं पूर्वपदस्य ह्रस्वत्वम् । आजिधावनं कृतवतो हयानश्वान् 'यथा सदमुक्षंति' सदा सिंचंति । कुत्र 'जनमेजयसदने' जनमेजयो नाम राजा तस्य सदने गृहे । किं पुनस्तत्सेक्तव्यमिति तदाह–पूर्णान् परिस्रुत इति । परिस्रवणशीलस्य मधुनः 'पूर्णान् कुंभान्' अयमभिप्रायः यथा कृतकार्या अश्वाः स्वामिभिः मधुकुंभैरासिच्यमानाः स्वामीष्टं लभन्ते । एवं देवा अपि शतातिरात्रं सत्रं प्रजापत्युपदिष्टमार्गेण सम्यगनुष्ठाय स्वर्गलोकांतरायं आसुरं तमो निरस्य अमृतसेवारूपं स्वर्गफलं प्रापुरिति । ब्राह्मणार्थमुपसंहरति–इत्यसुररक्षसानीति । अनेन सत्रयागेन असुराश्च रक्षांसि च 'अपेयुः' अपजग्मुः ॥ १३ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये एकादशकाण्डे पंचमेऽध्याये पञ्चमं ब्राह्मणम् ॥ ( ११–५–५ ) ॥

पुञ्चैव महायज्ञाः । ( स्ता ) तान्येव महासत्राणि भूतयज्ञो मनुष्ययज्ञः पितृयज्ञो देवयज्ञो ब्रह्मयज्ञऽ इति ॥ १ ॥

( त्यु ) अहरहर्भूतेभ्यो बलिꣳ हरेत् । ( त्तु ) तथैतं भूतयज्ञꣳ समाप्नोत्यहरहर्दद्यादोदपात्रात्तथैतं मनुष्ययज्ञꣳ समाप्नोत्यहरहः स्वधा कुर्य्यादोदपात्रात्तथैतं पितृयज्ञꣳ समाप्नोत्यहरहः स्वाहा कुर्य्यादा काष्ठात्तथैतं देवयज्ञꣳ समाप्नोति ॥ २ ॥

---

### पंचमहायज्ञब्राह्मणम् ।

पंचैव महायज्ञाः । तान्येव महासत्राणि । भूतयज्ञः, मनुष्ययज्ञः, पितृयज्ञः, देवयज्ञः, ब्रह्मयज्ञ इति ॥ १ ॥

अहरहर्भूतेभ्यो बलिं हरेत् । तथैतं भूतयज्ञं समाप्नोति । अहरहर्दद्यादोदपात्रात् । तथैतं मनुष्ययज्ञं समाप्नोति । अहरहः स्वधा कुर्यादोदपात्रात् । तथैतं पितृयज्ञं समाप्नोति । अहरहः स्वाहा कुर्यादा काष्ठात् । तथैतं देवयज्ञं समाप्नोति ॥ २ ॥

---

अथ सत्रप्रसंगात् यावज्जीवमनुष्ठेयान् पंचमहायज्ञान् महासत्रत्वेन निरूपयितुं प्रस्तौति—पञ्चैव महायज्ञा इति । भूतयज्ञादयो वक्ष्यमाणाः ' पंचैव महायज्ञाः ' सर्वदा सर्वैरनुष्ठेयत्वात् । न केवलं तेषां महायज्ञत्वमात्रं, अपि तु महासत्रत्वमेवेति विशिनष्टि—तान्येवेति । महांति निश्चलानि सत्राणि ' महासत्राणि ' यावज्जीवमनुष्ठेयत्वादृत्विगनपेक्षत्वाच्च । तान्येवेति विधेयापेक्षया नपुंसकनिर्देशः । अथ तान् यज्ञाननुदिशति—भूतयज्ञ इति । भूतानां तृप्तिकरो यज्ञः ' भूतयज्ञः ' । एवं मनुष्ययज्ञादावपि । ब्रह्मणो वेदस्याध्ययनं ' ब्रह्मयज्ञः ' तस्य च देवर्षिपितृगणतृप्तिकरत्वात् यज्ञत्वम् ॥ १ ॥

भूतयज्ञस्य स्वरूपमाह—अहरहर्भूतेभ्य इति । "इदं भूतेभ्यः" इति संकल्प्य प्रत्यहं यत् 'भूतेभ्यः बलिहरणम्' तथा तेनैव बलिहरणेन एतमुक्तं ' भूतयज्ञं ' सम्यक् पुरुषः ' प्राप्नोति ' । भूतान्युद्दिश्य बलिहरणमेव भूतयज्ञ इत्यर्थः । एवमुत्तरत्रापि योज्यम् । अथ मनुष्ययज्ञस्य स्वरूपमाह—अहरहर्दद्यादिति । मनुष्यानुद्दिश्य ' आ उदपात्रात् ' उदकपूरितं पात्रं उदपात्रं उदकपात्रावधि यदोदनादिकं ' दद्यात् ' स मनुष्ययज्ञ इत्यर्थः । पितृयज्ञस्य स्वरूपमाह—अहरहः स्वधा कुर्यादिति । पितॄनुद्दिश्य प्रत्यहं स्वधाकारेणान्नादिकमुदपात्रपर्यंतं दद्यादिति यत्स

---

१—" भूतगृह्येभ्यो मणिके त्रीन्पर्जन्यायाद्भ्यः पृथिव्यै । धात्रे विधात्रे च द्वार्ययोः । प्रतिदिशं वायवे दिशां च । मध्ये त्रीन्ब्रह्मणेऽन्तरिक्षाय सूर्याय विश्वेभ्यो देवेभ्यो विश्वेभ्यश्च भूतेभ्यस्तेषामुत्तरतः । उषसे भूतानां च पतये परम् " । ( पार. गृ. सू. २ । ९ । ३-८ । ) इति ।

२—" पात्रं निर्णिज्योत्तरापरस्यां दिशि निनयेद्यक्ष्मैतत्त इति । उद्धृत्यान्नं ब्राह्मणायावनेज्य दद्याद्धन्त ते " । ( पार. गृ. सू. २ । ९ । १०-११ ) इति ।

३—" मनुष्येभ्यश्चोदपात्रात् " ( पार. गृ. सू. २ । ९ । १६ । ) इति ।

४—" पितृभ्यः स्वधा नम इति दक्षिणतः " ( पार. गृ. सू. २ । ९ । ९ ॥ ) इति

५—" पितृभ्यश्चोदपात्रात् " ( पार. गृ. सू. २ । ९ । १६ । ) इति ।

( त्यु ) अथ ब्रह्मयज्ञः । स्वाध्यायो वै ब्रह्मयज्ञस्तस्य वाऽएतस्य ब्रह्मयज्ञस्य व्वागेव जुहूर्म्मनऽ उपभृच्चक्षुर्ध्रुवा मेधा स्रुवः सत्यमवभृथः स्वर्गो लोकऽउदयनं यावन्तँ ह वाऽ इमां पृथिवीं व्वित्तेन पूर्णां ददल्लोकं जयति त्रिस्तावन्तं जयति भूयाँसञ्चाक्षय्यं यऽ एवं व्विद्वानहरहः स्वाध्यायमधीते तस्मात्स्वाध्यायोऽध्येतव्यः ॥ ३ ॥

---

अथ ब्रह्मयज्ञः । स्वाध्यायो वै ब्रह्मयज्ञः । तस्य वा एतस्य ब्रह्मयज्ञस्य–वागेव जुहूः । मन उपभृत् । चक्षुर्ध्रुवा । मेधा स्रुवः । सत्यमवभृथः । स्वर्गो लोक उदयनम् । यावंतं ह वा इमां पृथिवीं वित्तेन पूर्णां ददत् लोकं जयति । त्रिस्तावंतं जयति–भूयांसं चाक्षय्यम्; य एवं विद्वानहरहः स्वाध्यायमधीते । तस्मात् स्वाध्यायोऽध्येतव्यः ॥ ३ ॥

---

पितृयज्ञ इत्यर्थः । देवयज्ञं लक्षयति–अहरहः स्वाहा कुर्यादिति । प्रत्यहं स्वाहाकारेण देवानुद्दिश्य यत्काष्ठपर्यंतं हविर्दद्यात् । तेनैतं देवयज्ञमाप्नोति ॥ २ ॥

इत्थं प्रत्यहमनुष्ठेयान् चतुरो महायज्ञान् संग्रहेण प्रतिपाद्य तदुत्तरं बहुवक्तव्यत्वात् ब्रह्मयज्ञं प्रपंचयितुं प्रस्तौति–अथ ब्रह्मयज्ञ इति । इतः परं ब्रह्मयज्ञोऽधिक्रियत इत्यर्थः । तस्य स्वरूपमाह–स्वाध्यायो वै ब्रह्मयज्ञ इति । स्वशाखाध्ययनं ब्रह्मयज्ञ इत्यर्थः । यज्ञसाम्यं संपादयति–तस्य वा एतस्येति । 'तस्य' स्वशाखाध्ययनात्मकस्यैव 'एतस्य' 'ब्रह्मयज्ञस्य' वागिन्द्रियमेव 'जुहूः' । तस्य वाचोऽधिष्ठानरूपं यन्मनः 'सा उपभृत्' मनसा संस्मृतमर्थं हि वाचा व्याहरति । यद्दर्शनसाधनं चक्षुरिंद्रियं तदेव कृत्स्नयज्ञनिर्वर्तकहविर्धारणार्था 'ध्रुवा' । चक्षुषा दृष्टमर्थं हि मनसा स्मरति । अत उपजीव्यत्वात्तस्य ध्रुवारूपत्वम् । 'मेधा

---

१–" वैश्वदेवादन्नात्पर्युक्ष्य स्वाहाकारैर्जुहुयाद् ब्रह्मणे प्रजापतये गृह्याभ्यः कश्यपायानुमतये " ( पार. गृ. सू. २।९।२ ) इति ।

२–" अहरहः स्वाहा कुर्यादन्नाभावे केनचिदाकाष्ठाद्देवेभ्यः " ( पार. गृ. सू. २ । ९ । १६ । ) इति ।

३– भगवता कात्यायनेन निरग्निकानां विशेषो दर्शितः यज्ञपार्श्वे तथाहि—

सभार्यो योऽगृहीताग्निर्विधुरः स्नातकोऽपि वा । व्याहृतीभिः समस्ताभिर्व्यस्ताभिश्च ततः परम् ॥
हुत्वा तु शाकलैर्मंत्रैः प्राजापत्यं ततः परम् । स्विष्टकृच्च हुनेदंते देवयज्ञोऽयमीरितः ॥
भूतयज्ञं ततः कुर्यात्पर्जन्यादित्रिकं विना । नित्यश्राद्धं निरग्नेः स्यात्साग्नेः पित्र्यो बलिः स्मृतः ॥
पितृयज्ञोऽयमाख्यातोऽनग्नेर्वा पैतृको बलिः । निर्णिज्य ब्रह्मयज्ञः स्यात् पञ्चमो मानुषो मतः ॥
अग्निमाननग्निमान् कुर्यादिमांस्तु प्रत्यहं सकृत् । अन्यथा प्रत्यवायी स्याद्रौरवं नरकं व्रजेत् ॥
अकृत्वा वैश्वदेवं तु भुञ्जते ये द्विजातयः । तेन मिथ्याविपाकेन काकयोनिं व्रजंति ते ॥ ( इति यज्ञपार्श्वे ) ॥
अग्निं विना साग्निकानां निरग्निकानां च प्रवासे तु पृष्ठोदिविविध्युक्तः प्रकारः ॥ इति दिक् ॥

४–ब्रह्मयज्ञस्य कालमधिकृत्य कर्कोपाध्यायैर्विशेषतया किंचिन्निरणायि तत्परिज्ञानायात्रोद्ध्रियते–" हन्तकाराच्च पूर्वं ब्रह्मयज्ञस्यावसरः । नृयज्ञो हि हन्तकारादिरास्वापात् । रात्रावपि ह्यतिथिपूजा स्मयते–अतिथिं प्रकृत्य–" नास्यानश्नन्गृहे वसेत् " इति । तस्माद्ब्रह्मयज्ञोऽनिर्दिष्टकालोऽपि नृयज्ञात्पूर्वमेव " ( पार. गृ. सू. २ । ९ । ११ । इत्यत्र भाष्ये ) इति । अस्मिन्भाष्ये नृयज्ञस्य " आस्वापात् " इति कालावधिरपि दर्शित इति ध्येयम् ।

पयऽआहुतयो ह वाऽ एता देवानाम् । यदृचः स युऽएवं विद्वानृचोऽहरहः स्वाध्यायमधीते पयऽआहुतिभिरेव तद्देवाँस्तर्प्पयति तऽ एनं तृप्तास्तर्प्पयन्ति योगक्षेमेण प्राणेन रेतसा सर्व्वात्मना सर्व्वाभिः पुण्याभिः संपद्भिर्घृतकुल्या मधुकुल्याः पितॄन्त्स्वधाऽअभिवहन्ति ॥ ४ ॥

( न्त्था ) आज्याहुतयो ह वाऽ एता देवानाम् । यद्यजूꣳषि स युऽ एवं विद्वान्यजूꣳष्यहरहः स्वाध्यायमधीतऽ आज्याहुतिभिरेव तद्देवाँस्त-

---

पयआहुतयो ह वा एता देवानां यदृचः । स य एवं विद्वानृचोऽहरहः स्वाध्यायमधीते; पयआहुतिभिरेव तद्देवांस्तर्पयति । त एनं तृप्तास्तर्पयंति, योगक्षेमेण प्राणेन रेतसा सर्वात्मना सर्वाभिः पुण्याभिः संपद्भिः । घृतकुल्या मधुकुल्याः पितॄन् स्वधा अभिवहंति ॥ ४ ॥

आज्याहुतयो ह वा एता देवानां यद्यजूंषि । स य एवं विद्वान्यजूंष्यहरहः स्वाध्यायमधीते;

---

स्रुवः' मेधा धारणासामर्थ्यं सैव स्रुवः । यत्सत्यं सत्यवदनं स एव तस्य यज्ञस्यावभृथः । स्वाध्यायेन प्राप्तव्यः फलभूतो यः ' स्वर्गो लोकः ' तदुदयनं तस्य यज्ञस्य समापनं न तु प्रधानफलम् । इत्थं यज्ञात्मना निरूपयित्वा तस्य प्रधानफलमाह—यावंतमिति । ' वित्तेन ' धनेन ' पूर्णां ' ' इमां ' कृत्स्नां ' पृथिवीं ' ब्राह्मणेभ्यः प्रयच्छन् ' यावंतं ' यत्परिमाणं ' लोकं जयति ' ब्रह्मयज्ञयाजी तु ' त्रिस्तावंतं ' त्रिवृतपरिमाणं लोकं जयति । ततोऽपि भूयांसमधिकतरं ' अक्षय्यं ' क्षेतुमशक्यं क्षयरहितं लोकं प्राप्नोति । एवं विद्वानिति । वागादेर्जुह्वादिसंपत्तिपुरःसरं वेदाध्ययनस्य यज्ञरूपतां जानन्नित्यर्थः । इत्थं प्रेक्षावत्प्रवृत्तिप्रयोजनकं फलं प्रतिपाद्य तद्धेतुभूतमध्ययनं विधत्ते—तस्मात्स्वाध्याय इति । यस्मादेवं ब्रह्मयज्ञस्वाध्यायस्यैतावत् फलम् । ' तस्मात्स्वाध्यायः ' अध्ययनेन गुरुमुखादवगन्तव्यः । अध्ययनसंस्कारसंस्कृतो हि तावत्फलं साधयितुं शक्नोति । न तु प्रकारांतरादागत इति विधेरभिप्रायः ॥ ३ ॥

अथ तस्मिन् ब्रह्मयज्ञे ऋचामध्ययनं पयआहुतिरूपत्वेन प्रशंसति—पयआहुतयो ह वा एता इति । क्षीरहविष्का याः ' आहुतयः ' ता एवैताः ' देवानां ऋचः ' इति यत् । ऋचामाहुतितादात्म्यमुक्त्वा तदध्ययनस्य फलमाह—स य एवं विद्वानिति । निगदसिद्धोऽर्थः । त एनं तृप्ता इति । ' एनम् ' अध्येतारम् योगक्षेमादिभिः संतर्पयंतीत्यर्थः । अप्राप्तस्य फलस्य प्राप्तिर्योगः । लब्धपरिपालनं क्षेमः । ' प्राणः ' प्राणनं जीवनम् । ' रेतः ' सुतादिनिमित्तं वीर्यम् । सर्वश्चासावात्मा च सर्वात्मा चक्षुरादीन्द्रियसहितः कृत्स्नो देह इत्यर्थः । ' पुण्याभिः ' प्रशस्याभिः धनसंपत्तिभिरित्यर्थः । अस्य च ऋचामध्येतुः पुरुषस्य पितॄनभिलक्ष्य घृतपूर्णा मधुपूर्णाः ' कुल्याः ' सरितः स्वधारूपेण ' वहंति ' अन्नात्मना प्रवहंतीत्यर्थः ॥ ४ ॥

यजुरध्ययनमाज्याहुतित्वेन स्तौति—आज्याहुतयो ह वा इति । ' यजूंषि ' यजुर्वेदपठितानि वाक्यानि

र्प्पयति तऽएनं तृप्तास्तर्प्पयन्ति योगक्षेमेण प्राणेन रेतसा सर्व्वात्मना सर्व्वाभिः पुण्याभिः संपद्भिर्घृतकुल्या मधुकुल्याः पितॄन्त्स्वधाऽअभिवहन्ति ॥५॥

सोमाहुतयो ह वाऽ एता देवानाम् । यत्सामानि स यऽ एवं विद्वान्त्सामान्यहरहः स्वाध्यायमधीते सोमाहुतिभिरेव तद्देवाँस्तर्प्पयति तऽएनं तृप्तास्तर्प्पयन्ति योगक्षेमेण प्राणेन रेतसा सर्व्वात्मना सर्व्वाभिः पुण्याभिः सम्पद्भिर्घृतकुल्या मधुकुल्याः पितॄन्त्स्वधाऽ अभिवहन्ति ॥ ६ ॥

मेदऽआहुतयो ह वाऽ एता देवानाम् । यदथर्व्वाङ्गिरसः स यऽ एवं विद्वानथर्व्वाङ्गिरसोऽहरहः स्वाध्यायमधीते मेदऽआहुतिभिरेव तद्देवाँस्तर्प्पयति तऽएनं तृप्तास्तर्प्पयन्ति योगक्षेमेण प्राणेन रेतसा सर्व्वात्मना सर्व्वाभिः पुण्याभिः सम्पद्भिर्घृतकुल्या मधुकुल्याः पितॄन्त्स्वधाऽअभिवहन्ति ॥ ७ ॥

---

आज्याहुतिभिरेव तद्देवांस्तर्पयति । त एनं तृप्तास्तर्पयन्ति, योगक्षेमेण प्राणेन रेतसा सर्वात्मना सर्वाभिः पुण्याभिः संपद्भिः । घृतकुल्या मधुकुल्याः पितॄन् स्वधा अभिवहंति ॥ ५ ॥

सोमाहुतयो ह वा एता देवानां यत्सामानि । स य एवं विद्वान् सामान्यहरहः स्वाध्यायमधीते; सोमाहुतिभिरेव तद्देवांस्तर्पयाति । त एनं तृप्तास्तर्पयंति, योगक्षेमेण प्राणेन रेतसा सर्वात्मना सर्वाभिः पुण्याभिः संपद्भिः । घृतकुल्या मधुकुल्याः पितॄन् स्वधा अभिवहंति ॥ ६ ॥

मेदआहुतयो ह वा एता देवानां यदथर्वांगिरसः । स य एवं विद्वानथर्वांगिरसोऽहरहः स्वाध्यायमधीते; मेदआहुतिभिरेव तद्देवांस्तर्पयाति । त एनं तृप्तास्तर्पयंति, योगक्षेमेण प्राणेन रेतसा सर्वात्मना सर्वाभिः पुण्याभिः संपद्भिः । घृतकुल्या मधुकुल्याः पितॄन् स्वधा अभिवहंति ॥ ७ ॥

---

इति यदस्ति ' एता देवानामाज्याहुतयः ' । तदध्ययमस्य फलमाह—स य एवं विद्वानिति । ' अहरहः स्वाध्याय ' इति विशेषेण ग्रहणाध्ययनात् ब्रह्मयज्ञस्वाध्यायाख्यंवच्छेदः । योगक्षेमेणेत्यादि उक्तार्थम् ॥ ५ ॥

अथ सामानि सोमाहुतित्वेन स्तौति—सोमाहुतयो ह वा इति । अथैतत्सोमाहुतिरूपतामुपजीव्य तेषां ब्रह्मयज्ञकाले अध्ययनं प्रशंसति—स य एवं विद्वानिति । गतमेतत् ॥ ६ ॥

अथ तुरीयं वेदं मेदआहुतित्वेन निरूपयति—मेदआहुतयो ह वा इति । मेदो हविष्यं मांसं तत्साध्या आहुतयो मेदआहुतयः । अथर्वणा ऋषिणा अंगिरसा च दृष्टाः शाखाः ' अथर्वांगिरसः ' । स य एवं विद्वानित्यादि पूर्ववत् ॥ ७ ॥

मध्वाहुतयो ह वाऽ एता देवानाम् । यदनुशासनानि विद्या वाकोवाक्यमितिहासपुराणं गाथा नाराशꣳस्यः स यऽ एवं विद्वाननुशासनानि विद्या वाकोवाक्यमितिहासपुराणं गाथा नाराशꣳसीरित्यहरहः स्वाध्यायमधीते मध्वाहुतिभिरेव तद्देवाँस्तर्प्पयति तऽ एनं तृप्तास्तर्प्पयन्ति योगक्षेमेण प्राणेन रेतसा सर्व्वात्मना सर्व्वाभिः पुण्याभिः संपद्भिर्घृतकुल्या मधुकुल्याः पितॄन्त्स्वधाऽअभिवहन्ति ॥ ८ ॥

तस्य वाऽएतस्य ब्रह्मयज्ञस्य । चत्वारो वषट्कारा यद्वातो वाति

---

मध्वाहुतयो ह वा एता देवानां यदनुशासनानि विद्या वाकोवाक्यमितिहासपुराणं गाथा नाराशंस्यः । स य एवं विद्वाननुशासनानि विद्या वाकोवाक्यमितिहासपुराणं गाथा नाराशंसीरिति अहरहः स्वाध्यायमधीते । मध्वाहुतिभिरेव तद्देवांस्तर्पयति । त एनं तृप्तास्तर्पयंति योगक्षेमेण प्राणेन रेतसा सर्वात्मना सर्वाभिः पुण्याभिः संपाद्भिः । घृतकुल्या मधुकुल्याः पितॄन् स्वधा अभिवहंति ॥ ८ ॥

तस्य वा एतस्य ब्रह्मयज्ञस्य चत्वारो वषट्काराः । यद्वातो वाति । यद्विद्योतते । यत् स्तनयति ।

---

इत्थं चतुर्णां वेदानां ब्रह्मयज्ञकाले अध्ययनं प्रशस्य तदंगभूतानामन्यासां विद्यानां अध्ययनं वक्तुं ता मध्वाहुतित्वेन निरूपयति—मध्वाहुतयो ह वा इति । 'मधु' माक्षिकम् तत्साध्या आहुतयः 'मध्वाहुतयः' । अनुशासनानीति । अनुशिष्यन्ते व्युत्पाद्यंते एभिरित्यनुशासनानि व्याकरणनिरुक्तादीनि षडंगानि । न्यायमीमांसादयः 'विद्याः' । उक्तिप्रत्युक्तिरूपं प्रकरणं 'वाकोवाक्यम्' । 'इतिहासः' पुरावृत्तप्रतिपादकं भारतादि । 'पुराणं' वैष्णवादि । इतिहासः पुराणं चेति द्वंद्वैकवद्भावः । नरा मनुष्याः तत्प्रशंसापादकाः श्लोकाः 'नाराशंस्यः' 'गाथाः' । इत्थं चतुर्दश विद्यास्थानानि ब्रह्मयज्ञकाले अध्येतव्यत्वेन उपलक्षितानि ॥

अन्ये त्वेवं व्याकुर्वंते—मन्त्रब्राह्मणभेदेन वेदभागो द्विविधः । तत्र ऋगादिशब्दैर्मंत्रभागस्याध्ययनं प्रतिपादितम् । अधुना ब्राह्मणभागस्याध्ययनं प्रतिपाद्यते । तत्र "स वै संभारान्त्संभरति" ( श. प. १४।१।२। १) इत्यादीनि विधिवाक्यानि 'अनुशासनानि' । उपासनाविधिवाक्यानि 'विद्या' । "स वै गौतमस्य पुत्र वृतो जनं धावयेत्"—( श. प. ११।४।१।७ ) इति उक्तिप्रत्युक्तिरूपं ब्राह्मणं 'वाकोवाक्यम्' । "आपो ह वा इदमग्रे सलिलमेवास"—( श. प. ११।१।६।१ ) इत्यादिकं सृष्टिप्रतिपादकं ब्राह्मणं इतिहासः । "उर्वशी हाप्सराः पुरूरवसमैडं चकमे"—( श. प. ११।५।१।१ ) इत्यादीनि पुरातनपुरुषवृत्तांतप्रतिपादकानि 'पुराणं' । "महाहिमिव वै ह्रदात" ( श. प. ११ । ५ । ५ । ८ ) इत्यादयो मंत्राः 'गाथाः' । "समानात्सदमुक्षंति हयान्"—( श. प. ११ । ५ । ५ । १३ ) इत्यादिका मनुष्यप्रशंसापरा 'नाराशंस्यः' । एवं च "अधीते" इति अध्ययनलिंगमनुगृहीतं भवति । अन्यत्सर्वं पूर्ववत् योज्यम् ॥ ८ ॥

वातादीनि यानि अनध्यायनिमित्तानि तेषु सत्स्वपि ब्रह्मयज्ञस्यानिवृत्तिमभिप्रेत्य तेषां तदङ्गत्वमाह—तस्य वा ।

---

१—अत्र याज्ञवल्क्यस्मृतेः आचाराध्यायस्थब्रह्मचारिप्रकरणगताः ४१-४६ श्लोका अनुसंधेयाः ।

२६१७

२५१

यद्विद्योतते यत्स्तनयति यदवस्फूर्ज्जति तस्मादेवंविद्वाते वाति विद्योतमाने स्तनयत्यवस्फूर्ज्जत्यधीयीतैव वषट्काराणामच्छंबट्काराया्ति ह वै पुनर्मृत्युम्मुच्यते गच्छति ब्रह्मणः सात्मताᳬ स चेदपि प्रबलमिव न शक्नुयादप्येकं देवपदमधीयीतैव तथा भूतेभ्यो न हीयते ॥ ९ ॥

इति तृतीयप्रपाठकेऽष्टमं ब्राह्मणम् ॥ ११-३-८ ॥ ( ९. ६. ) ॥
इति तृतीयः प्रपाठकः समाप्तः ॥ ११-३ ॥

कंडिकासंख्या ॥ ११२ ॥

---

यद् अवस्फूर्जति । तस्मादेवंविद्वाते वाति, विद्योतमाने, स्तनयति, अवस्फूर्जति अधीयीतैव । वषट्काराणामच्छंबट्काराय । अति ह वै पुनर्मृत्युं मुच्यते । गच्छति ब्रह्मणः सात्मताम् । स चेदपि प्रबलमिव न शक्नुयात् । अप्येकं देवपदमधीयीतैव । तथा भूतेभ्यो न हीयते ॥ ९ ॥

---

एतस्येति । यज्ञत्वात् अस्य वषट्कारापेक्षायामुच्यते—चत्वारो वषट्कारा इति । तानेव चतुरः अनुक्रामति—यद्वातो वातीति । 'वातो' वायुः प्रबलतरं 'वाति' गच्छति इति यत् स प्रथमः 'वषट्कारः' । विद्योतनं विद्युत्, स्तनयित्नुर्मेघगर्जनं, अवस्फूर्जनं ध्वनिः, एते 'चत्वारो वषट्काराः' । यस्मादेवं तस्मादेषां वातादीनां 'एवं' वषट्काररूपतां जानन् वातादिषु सत्सु ब्रह्मयज्ञस्वाध्यायं 'अधीयीतैव' । किमर्थम् ? एषां वषट्काराणां छंबट्कारो वैयर्थ्यं तत्परिहाराय, न तु ग्रहणाध्ययनवत् अस्य नैमित्तिकानध्यायो विद्युत इति भावः । एवं वषट्कारेषु सत्सु यदध्ययनं तस्य फलमाह- अति ह वा इति । एवमधीयानः 'पुनर्मृत्युमतिमुच्यते' । 'ब्रह्मणः सात्मतां' समानरूपतां सायुज्यं 'गच्छति' । अशक्तौ पक्षान्तरमाह—स चेदिति । 'सः' चाधीयानः पुरुषो यदि 'प्रबलमिव' अधिकमध्येतुं 'न शक्नुयात्,' तथापि देवतावाचि 'एकं' वैदिकपदं 'अधीयीतैव' । न तूष्णीमासीत । तथा सति 'भूतेभ्यः' निवृत्तेभ्यस्तेभ्यो वषट्कारेभ्यः 'न हीयते' हीनः प्रच्युतो न भवति ॥ ९ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये एकादशकाण्डे पंचमेऽध्याये षष्ठं ब्राह्मणम् ॥ ( ११-५-६ ) ॥

तृतीयः प्रपाठकश्च समाप्तः ॥ ११-३ ॥

# अथ चतुर्थप्रपाठके प्रथमं ब्राह्मणम् ।
# पञ्चमेऽध्याये च सप्तमं ब्राह्मणम् ।



**अथातः स्वाध्यायप्रशꣳसा । प्रिये स्वाध्यायप्रवचने भवतो युक्तमना भवत्यपराधीनोऽहरहरर्थान्त्साधयते सुखꣳ स्वपिति परमचिकित्सकऽ आत्मनो भवतीन्द्रियसंयमश्चैकारामता च प्रज्ञाव्वृद्धिर्यशोलोकपक्तिः प्रज्ञा व्वर्द्धमाना चतुरो धर्म्मान्ब्राह्मणमभि निष्पादयति ब्राह्मण्यम्प्रतिरूपचर्य्या यशोलोकपक्तिं लोकः पच्यमानश्चतुर्भिर्द्धर्म्मैर्ब्राह्मणं भुनक्त्यर्च्चया च दानेन चाज्येयतया चावध्यतया च ॥ १ ॥**

---

## ब्रह्मयज्ञलक्षणस्वाध्यायप्रशंसाख्यं ब्राह्मणम् ।

अथातः स्वाध्यायप्रशंसा । प्रिये स्वाध्यायप्रवचने भवतः । युक्तमना भवति । अपराधीनोऽहरहरर्थान् साधयते । सुखं स्वपिति । परमचिकित्सक आत्मनो भवति । इंद्रियसंयमश्च । एकारामता च । प्रज्ञावृद्धिः । यशोलोकपक्तिः । प्रज्ञा वर्द्धमाना चतुरो धर्मान् ब्राह्मणमभि निष्पादयति । ब्राह्मण्यं प्रतिरूपचर्यां यशोलोकपक्तिम् । लोकः पच्यमानश्चतुर्भिर्धर्मैर्ब्राह्मणं भुनक्ति—अर्चया च दानेन चाज्येयतया चावध्यतया च ॥ १ ॥

---

अथास्मिन् ब्रह्मयज्ञस्वाध्याये पुरुषाणामादरातिशयं जनयितुं प्रशंसां कर्तुं प्रतिजानीते—अथातः स्वाध्यायेति । 'अतः' परं वक्ष्यमाणैः फलैः 'स्वाध्यायस्य प्रशंसा' प्रशंसनमेव क्रियते । तद्धेतुभूतानि फलान्यनुक्रामति—प्रिये इत्यादिना । 'स्वाध्यायः' स्वाध्यायाध्ययनं 'प्रवचनं' अन्यस्याध्यापनम् । ते उभे अपि ब्रह्मयज्ञस्वाध्यायमधीयानस्य 'प्रिये' अनुकूलवेदनीये 'भवतः' । युक्तमविक्षिप्तं एकाग्रं मनो यस्य स 'युक्तमनाः' पराधीनो न भवतीति 'अपराधीनः' अनन्यप्रेर्यः सन् 'अहरहः' प्रत्यहम् योगानर्थान् 'साधयते' संपादयति । तथा 'सुखं' यथा भवति तथा अव्याकुलितचित्तः 'स्वपिति' निद्राति । दुःखसंस्पर्शनिमित्ता चिंता अस्य न भवतीत्यर्थः । 'आत्मनः' स्वस्य 'परमचिकित्सको भवति' । अन्ये हि भिषज औषधादिना शरीरस्यैव तात्कालिकीमेव उदरशिरोरोगादिपीडां निवर्तयंति । विद्वांस्तु देहव्यतिरिक्तस्यात्मनः उक्तेन स्वाध्यायेन पुनर्मृत्युप्राप्तिरूपां पीडां सर्वदैव निवर्तयतीति परमचिकित्सकत्वं तस्येत्यर्थः । तथा इंद्रियसंयमश्चास्य भवति । इंद्रियाणां चक्षुःश्रोत्रादीनां संयमः अनर्थहेतुभ्यो विषयेभ्यो व्यावृत्तिः । एक एव सन् आसमंतात् भवतीत्येकारामः तस्य भावः । तथा भूतभविष्यद्वर्तमानकालतयाऽवच्छिन्नकृत्स्नपदार्थविषया बुद्धिः 'प्रज्ञा' तस्या अभिवृद्धिरस्य भवति । 'यशः' कीर्तिः तत्प्रयुक्तो 'लोकः' तस्य 'पक्तिः' परिपाको भवति । अस्य प्रज्ञा वर्द्धमाना सती अध्ययनं, अध्यापनं, यज्ञो, याजनमिति 'चतुरो धर्मान्'

ये ह वै के च श्रमाः । ( ऽ ) इमे द्यावापृथिवीऽअन्तरेण स्वाध्यायो हैव तेषां परमताकाष्ठा यऽ एवं विद्वान्त्स्वाध्यायमधीते तस्मात्स्वाध्यायोऽध्येतव्यः ॥ २ ॥

( व्यो ) यद्यद्ध वाऽअयं छन्दसः । स्वाध्यायमधीते तेन तेन हैवास्य यज्ञक्रतुनेष्टं भवति यऽएवं विद्वान्त्स्वाध्यायमधीते तस्मात्स्वाध्यायोऽध्येतव्यः ॥ ३ ॥

---

ये ह वै के च श्रमाः, इमे द्यावापृथिवी अंतरेण । स्वाध्यायो हैव तेषां परमताकाष्ठा । य एवं विद्वान् स्वाध्यायमधीते । तस्मात्स्वाध्यायोऽध्येतव्यः ॥ २ ॥

यद्यद्ध वा अयं छंदसः स्वाध्यायमधीते । तेन तेन हैवास्य यज्ञक्रतुनेष्टं भवति । य एवं विद्वान् स्वाध्यायमधीते । तस्मात्स्वाध्यायोऽध्येतव्यः ॥ ३ ॥

---

ब्राह्मणजातिमभिलक्ष्य ' निष्पादयति ' जनयति । तथा ' ब्राह्मण्यं ' ब्राह्मणभावं ' प्रतिरूपचर्यां ' तदनुरूपमाचरणं च संपादयति । प्रागुक्तां यशोलोकपक्तिमनूद्य तद्धेतुकमन्यत्फलमाह—यशोलोकपक्तिमिति । स च पच्यमानो यशसा युक्तो लोकः ' चतुर्भिः ' वक्ष्यमाणैः ' धर्मैर्ब्राह्मणं भुनक्ति ' पालयति । " भुजोऽनवने "—( पा. सू. १।३।६६ ) इति पर्युदस्तत्वात् भुजेरात्मनेपदाभावः । के पुनस्ते चत्वारो धर्माः ? इति तानाह—अर्चया चेति । " अर्च पूजायां "—( धा. पा. भ्वा. प. २०४ ) इति धातो रूपम् । अर्चा अर्चनं पूजनम् । इष्टस्य धनादेः समर्पणं दानम् । ज्यानिर्हानिः तदविषयत्वं अज्येयता । " ज्या वयोहानौ "—( धा. पा. क्र्या. प. २७ ) इत्यस्मात् " अचो यत् "—( पा. सू. ३ । १ । ९७ ) इति कर्मणि यत् । वधं हननमर्हतीति वध्यः तादृशो न भवतीत्यवध्यः तस्य भावस्तत्त्वम् । एतैश्चतुर्भिर्धर्मैः सर्वो लोको वेदाध्यायिनमाराधयतीत्यर्थः ॥ १ ॥

अथ उत्कृष्टतपोरूपत्वमध्ययनस्याह—ये ह वै के च श्रमा इति । ' द्यावापृथिवी अंतरेण ' अनयोर्द्यावापृथिव्योर्मध्ये ' ये ' केचन ' श्रमाः ' श्रमसाध्यास्तपोविशेषाः ' तेषां ' तपोविशेषाणां ' स्वाध्यायः ' एव ' परमताकाष्ठा ' परमता परमत्वमुत्कर्षः तस्यावधिभूमिः । एतावंति फलानि विदुष एवाध्येतुरित्याह—य एवं विद्वानिति । तस्मादिति । प्रकृताध्ययनविधेर्निगमनम् ॥ २ ॥

अथ वेदाध्ययनशीलस्य कायिकव्यापारनिर्वर्त्ययागहोमादिफलमपि अयत्नतः सिध्यतीत्याह—यद्यद्ध वा इति । ' यद्यत् ' यस्य यस्य यज्ञक्रतोः प्रतिपादकच्छंदसो वेदस्य संबंधिनं ' स्वाध्यायं ' स्वशाखासम्बन्धि, स्वाध्यायानुवाकादिकं ' अधीते ' ' अस्य ' अध्येतुः तत्प्रतिपादेन तेन तेनैव ' क्रतुना ' यज्ञकर्मणा ' इष्टं भवति ' यागः कृतो भवति । य एवं विद्वानित्यादि पूर्ववत् ॥ ३ ॥

( व्यो ) यदि ह वाऽअप्यभ्यक्तः । ( क्तोऽलं ) अलंकृतः सुहितः सुखे शयने शयानः स्वाध्यायमधीतऽ आ हैव स नखाग्रेभ्यस्तप्यते यऽएवं विद्वान्त्स्वाध्यायमधीते तस्मात्स्वाध्यायोऽध्येतव्यः ॥ ४ ॥

( व्यो ) मधु ह वाऽ ऋचः । ( चो ) घृतꣳ ह सामान्यमृतं यजूꣳषि यद्ध वाऽअयम्वाकोवाक्यमधीते क्षीरौदनमाꣳसौदनौ हैव तौ ॥ ५ ॥

मधुना ह वाऽ एष देवाँस्तर्प्पयति । यऽएवं विद्वानृचोऽहरहः स्वाध्याय-मधीते तऽ एनं तृप्तास्तर्प्पयन्ति सर्व्वैः कामैः सर्व्वैर्भोगैः ॥ ६ ॥

( घृं ) घृतेन ह वाऽ एष देवाँस्तर्प्पयति । यऽ एवं विद्वान्त्सामान्यहरहः स्वाध्यायमधीते तऽ एनं तृप्तास्तर्प्पयन्ति सर्व्वैः कामैः सर्व्वैर्भोगैः ॥ ७ ॥

---

यदि ह वा अप्यभ्यक्तः अलंकृतः सुहितः सुखे शयने शयानः स्वाध्यायमधीते । आ हैव स नखाग्रेभ्यस्तप्यते । य एवं विद्वान् स्वाध्यायमधीते । तस्मात्स्वाध्यायोऽध्येतव्यः ॥ ४ ॥

मधु ह वा ऋचः । घृतं ह सामानि । अमृतं यजूंषि । यद्ध वा अयं वाकोवाक्यमधीते । क्षीरौदनमांसौदनौ हैव तौ ॥ ५ ॥

मधुना ह वा एष देवांस्तर्पयति । य एवं विद्वानृचोऽहरहः स्वाध्यायमधीते । त एनं तृप्तास्त-र्पयंति सर्वैः कामैः सर्वैर्भोगैः ॥ ६ ॥

घृतेन ह वा एष देवांस्तर्पयतिं । य एवं विद्वान् सामान्यहरहः स्वाध्यायमधीते । त एनं तृप्तास्त-र्पयंति सर्वैः कामैः सर्वैर्भोगैः ॥ ७ ॥

---

अथ एतदप्यध्ययनं कृच्छ्रचांद्रायणादितपोरूपत्वेन स्तौति—यदि ह वा इति । 'अभ्यक्तः' तैलादिना कृताभ्यंगः । 'अलंकृतः' स्रक्चंदनादिभिर्भूषितः । 'सुहितः' यथेष्टभोजनेन तृप्तः । 'सुखे' सुखकरे 'शयने' शय्यायां 'शयानः' । एवमभ्यंगादीन् तपसः प्रतिकूलान् चरन्नपि यः 'स्वाध्यायमधीते' 'स आ नखा-ग्रेभ्यः' नखाग्रपर्यंतं यावच्छरीरपीडनेन तपस्तप्तवान् भवति । य एवं विद्वानित्यादि गतम् ॥ ४ ॥

अथ एतेषामृगादीनां मध्वादिरूपतया तृप्तिहेतुतां वक्तुं सारूप्यमाह—मधु ह वा ऋच इति । या 'ऋचः' तन्मधु । यानि 'सामानि' तत् घृतमाज्यम् । यानि 'यजूंषि' तदमृतम् । 'यत्' खलु 'अयं' अध्येता प्रागुक्तं वाकोवाक्यादिकमधीते 'क्षीरौदनमांसौदनावेव तौ' ॥ ५ ॥

इत्थं मध्वादिरूपतामुक्त्वा तदुपजीवनेन तेषामध्ययनं क्रमेण स्तौति—मधुना ह वा इति । निगदसिद्धोऽर्थः । ऋचामध्ययनं स्तौति—य एवं विद्वानिति । सर्वैः कामैरिति । काम्यमानैः 'सर्वैः' शब्दादिविषयैः तन्निर्वर्त्यैर्भोगैश्चेत्यर्थः ॥ ६ ॥

साम्नामध्ययनं स्तौति—घृतेन ह वा इति ॥ ७ ॥

( २ ) अमृतेन ह वाऽ एष देवाँस्तर्प्पयति । यऽ एवं विद्वान्यजूँष्यहरहः स्वाध्यायमधीते तऽ एनं तृप्तास्तर्प्पयन्ति सर्व्वैः कामैः सर्व्वैर्भोगैः ॥८॥
क्षीरौदनमाँसौदनाभ्याँ ह वाऽएष देवाँस्तर्प्पयति । यऽ एवं विद्वान्वाकोवाक्यमितिहासपुराणमित्यहरहः स्वाध्यायमधीते तऽएनं तृप्तास्तर्प्पयन्ति सर्व्वैः कामैः सर्व्वैर्भोगैः ॥ ९ ॥

( यर्थ ) यन्ति वाऽ आपः । ( ऽ ) एत्यादित्यऽ एति चन्द्रमा यन्ति नक्षत्राणि यथा ह वाऽ एता देवता नेयुर्न्न कुर्य्युरेवँ हैव तदहर्ब्राह्मणो भवति यदहः स्वाध्यायं नाधीते तस्मात्स्वाध्यायोऽध्येतव्यस्तस्मादप्यृचं वा यजुर्व्वा साम वा गाथां वा कुम्व्यां वाऽभिव्याहरेद्व्रतस्याव्यवच्छेदाय॥१०

इति चतुर्थप्रपाठके प्रथमं ब्राह्मणम् ॥ ११–४–१ ॥ ( ६. ७. ) ॥

---

अमृतेन ह वा एष देवांस्तर्पयति । य एवं विद्वान् यजूंष्यहरहः स्वाध्यायमधीते । त एनं तृप्तास्तर्पयंति सर्वैः कामैः सर्वैर्भोगैः ॥ ८ ॥

क्षीरौदनमांसौदनाभ्यां ह वा एष देवांस्तर्पयति । य एवं विद्वान् वाकोवाक्यमितिहासपुराणमित्यहरहः स्वाध्यायमधीते । त एनं तृप्तास्तर्पयंति सर्वैः कामैः सर्वैर्भोगैः ॥ ९ ॥

यंति वा आपः । एत्यादित्यः । एति चंद्रमाः । यन्ति नक्षत्राणि । यथा ह वा एता देवता नेयुर्न कुर्युः । एवं हैव तदहर्ब्राह्मणो भवति । यदहः स्वाध्यायं नाधीते । तस्मात्स्वाध्यायोऽध्येतव्यः। तस्मादपि ऋचं वा यजुर्वा साम वा गाथां वा कुम्व्यां वाऽभिव्याहरेत्–व्रतस्याव्यवच्छेदाय ॥१०॥

---

यजुषामध्ययनं स्तौति–अमृतेन ह वा इति ॥ ८ ॥

वाकोवाक्यादीनामध्ययनं स्तौति–क्षीरौदनमांसौदनाभ्यामिति । क्षीरमिश्रितमोदनं 'क्षीरौदनम्' । मांसमिश्रं शाल्योदनं 'मांसौदनम्' । गतमन्यत् । 'वाकोवाक्यमितिहासपुराणमिति' । इतिशब्दः प्रकारवाची, कार्यादीनां संग्रहार्थः ॥ ९ ॥

सूर्यादिगतिवत् अखिलजगद्व्यवहारनिर्वर्तकत्वेन ब्रह्मयज्ञस्वाध्यायं स्तौति–यन्ति वा इति । नद्यादिरूपेण स्थिताः 'आपः' खलु 'यंति' गच्छंति । 'एति आदित्यः' गच्छति । 'चंद्रमाः अप्येति' गच्छति । 'नक्षत्राण्यपि यंति' गच्छंति । तत्रापां तिर्यग्गमनं स्नानपानादिकृत्स्नलोकव्यवहारार्थम् । सूर्यगमनं अहनि प्रकाशप्रदानार्थम् । तथा चंद्रनक्षत्राणां गमनं रात्रौ प्रकाशप्रदानार्थम् । 'यथा' खलु 'एताः' अबाधाः 'देवता नेयुः' न पुनर्गच्छेयुः । तदानीं 'न कुर्युः' एव स्वस्वव्यवहारम् । ततस्तेषां निष्प्रयोजकत्वम् । एवमेतस्मिन्नहनि ब्राह्मणो निरर्थको भवति, यस्मिन्नहनि 'स्वाध्यायं नाधीते' । तस्मादित्यादि पूर्ववत् । यत

---

१–( याज्ञ. स्मृ. आ. ब्र. प्र. श्लो. ४७–४८ ) इत्यत्रत्यावपि श्लोकावत्र द्रष्टव्यौम् ।

प्रजापतिर्व्वाऽ इदमग्रऽआसीत् । ( ३ ) एकऽ एव सोऽकामयत स्याम्प्रजायेयेति सोऽश्राम्यत्स तपोऽतप्यत तस्माच्छ्रान्तात्तेपानात्त्रयो लोकाऽअसृज्यन्त पृथिव्यन्तरिक्षं द्यौः ॥ १ ॥

सऽ इमाँस्त्रींल्लोकानभितताप । तेभ्यस्तप्तेभ्यस्त्रीणि ज्योतीँष्यजायन्ताग्निर्य्योऽयं पवते सूर्य्यः ॥ २ ॥

सऽ इमानि त्रीणि ज्योतीँष्यभितताप । तेभ्यस्तप्तेभ्यस्त्रयो व्वेदाऽअजायन्ताग्नेर्ऋग्वेदो व्वायोर्य्यजुर्व्वेदः सूर्य्यात्सामवेदः ॥ ३ ॥

---

सर्वप्रायश्चित्ताविधायकं ब्राह्मणम् ।

प्रजापतिर्वा इदमग्र आसीदेक एव । सोऽकामयत । स्यां प्रजायेयेति । सोऽश्राम्यत् । स तपोऽतप्यत । तस्माच्छ्रांतात्तेपानात्त्रयो लोका अस्रज्यंत—पृथिव्यन्तरिक्षं द्यौः ॥ १ ॥

स इमांस्त्रीन् लोकानभितताप । तेभ्यस्तप्तेभ्यस्त्रीणि ज्योतींष्यजायंत—अग्निर्योऽयं पवते सूर्यः ॥ २ ॥

स इमानि त्रीणि ज्योतींष्यभितताप । तेभ्यस्तप्तेभ्यस्त्रयो वेदा अजायंत । अग्नेर्ऋग्वेदः । वायोर्यजुर्वेदः । सूर्यात्सामवेदः ॥ ३ ॥

---

एवं अतोऽनध्यायादिनिमित्तेऽपि अध्यायादिप्रयुक्तसामर्थ्यविरहे च सत्यपि सर्वथा ब्रह्मयज्ञस्य वर्जनमयुक्तमित्युपसंहारव्याजेन प्रकारांतरमाह—तस्मादप्यृचमिति । यस्मादेवं नित्यो ब्रह्मयज्ञस्वाध्यायः तस्मादनध्यायदिवसे अशक्तौ च आदावारभ्य एकामृचं वा ' अभिव्याहरेत् ' अधीयीत । एकं वा ' यजुः ' । एकं वा ' साम ' गाथारूपं मंत्रम् । कुंब्याशब्देन एकार्थस्य प्रतिपादकं विध्यर्थवादात्मकं ब्राह्मणवाक्यमुच्यते । तद्धि अधीयते । सर्वथा लोपो न कार्य इत्यर्थः । किमर्थं ? ब्रह्मयज्ञस्वाध्यायलक्षणस्य ' व्रतस्याव्यवच्छेदाय ' व्यवच्छेदाभावाय ॥ १० ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यंदिनीयशतपथब्राह्मणभाष्य एकादशकांडे पंचमेऽध्याये सप्तमं ब्राह्मणम् ॥ ( ११ । ५ । ७ ) ॥

इत्थं सत्रप्रसंगात् वेदसारभूताभिर्व्याहृतिभिः सर्वप्रायश्चित्तं होमं विधास्यन् तासामुत्पत्तिं आख्यायिकया प्रतिपादयति—प्रजापतिर्वा इदमित्यादिना । ' इदं ' दृश्यमानं सर्वं जगत् ' अग्रे ' सृष्ट्यादौ ' प्रजापतिरेवासीत् ' कारणात्मना स्थित इत्यर्थः । अतः ' सः ' प्रजापतिरेक एव तदानीमासीत् । न हि अनुद्भूतभौतिकात्मकं जगदित्यवधारणाभिप्रायात् । महत्सृष्टिमाह—सोऽकामयतेत्यादिना । ' स्याम् ' जगद्रूपेण भवेयम् । तदर्थं ' प्रजायेय ' प्रकर्षेण स्वरूपाविरोधेन देवपितृमनुष्यादिप्रजारूपेण उत्पद्येयेत्यर्थः । तत्साधनमाह—सोऽश्राम्यदिति । सृष्ट्यपर्यालोचनं ' तपः ' तद्गवेषणहेतुकः शरीरक्लेशः 'श्रमः' । तेपानादिति । तप्तवतः सका-

स इमाँस्त्रीन्वेदानभितताप । तेभ्यस्तप्तेभ्यस्त्रीणि शुक्राण्यजायंत भूरित्यृग्वेदाद्भुव इति यजुर्वेदात्स्वरिति सामवेदात्तऽऋग्वेदेनैव हौत्रमकुर्वत यजुर्वेदेनाध्वर्य्यवꣳ सामवेदेनोद्गीथं यदेव त्रय्यै विद्यायै शुक्रं तेन ब्रह्मत्वमथोच्चक्राम ॥ ४ ॥

ते देवाः प्रजापतिमब्रुवन् । ( न्यु ) यदि नऽ ऋक्तो वा यजुष्टो वा सामतो वा यज्ञो ह्वलेत्केनैनं भिषज्येमेति ॥ ५ ॥

---

स इमांस्त्रीन्वेदानभितताप । तेभ्यस्तप्तेभ्यस्त्रीणि शुक्राण्यजायंत । भूरित्यृग्वेदात् । भुव इति यजुर्वेदात् । स्वरिति सामवेदात् । ते ऋग्वेदेनैव हौत्रमकुर्वत । यजुर्वेदेनाध्वर्यवम् । सामवेदेनोद्गीथम् । यदेव त्रय्यै विद्यायै शुक्रम्, तेन ब्रह्मत्वम् । अथोच्चक्राम ॥ ४ ॥

ते देवाः प्रजापतिमब्रुवन् । यदि नः ऋक्तो वा यजुष्टो वा सामतो वा यज्ञो ह्वलेत्; केनैनं भिषज्येमेति ॥ ५ ॥

---

शादित्यर्थः । तपेर्लिटः कानचि—( पा. सू. ३ । २ । १०६ ) एत्वाभ्यासलोपौ । प्रथमं पृथिव्यादीनां त्रयाणां सृष्टिमाह—त्रयो लोका इति । अथैतेषां सारं जिघृक्षुः ' सः ' प्रजापतिः इमानेव 'त्रीन् लोकान् अभितताप' रजतसुवर्णादिलोहपिंडवत् पुटपाकेन तप्तवानित्यर्थः । अग्न्यादयो देवास्तत उत्पन्ना इत्याह—तेभ्यस्तप्तेभ्य इति । त्रीणि ज्योतींषीत्युक्तमेवार्थं विवृणोति—अग्निरिति । योऽयमन्तरिक्षे ' पवते ' संचरते स वायुर्द्वितीयं ज्योतिरित्यर्थः । अथैतेषामपि सारं जिघृक्षुः तप्तवानित्याह—स इमानीति । तत्सकाशात् त्रयाणामुत्पत्तिमाह—तेभ्यस्तप्तेभ्य इति । तत्र कस्माद्देवात्कस्य वेदस्योत्पत्तिः ? इति विविनक्ति—अग्नेर्ऋग्वेद इति ॥ १—३ ॥

अथ व्याहृतीनामुत्पत्तिमाह—स इमाँस्त्रीन्वेदानिति । त्रीणि शुक्राणीति । व्याहृतिरूपाणि तेजांसीत्यर्थः । भूरित्यृग्वेदादित्यादि । प्रजापतिना तप्यमानात् ऋग्वेदात्सकाशात् भूरिति व्याहृतिरुत्पन्ना । एवमुत्तरत्रापि योज्यम् । एवं व्याहृतीनां त्रयीसारत्वं प्रतिपाद्य यज्ञस्यापि त्रयीमयत्वमाह—ऋग्वेदेनैवेति । ' ते ' अग्न्यादयो देवाः ' ऋग्वेदेनैव होत्रं ' होतृकर्म सामिधेन्यनुवचनयाज्यानुवाक्यापाठशस्त्रशंसनादिकं यज्ञस्य तुरीयं भागं ' अकुर्वत ' कृतवंतः । तथा ' यजुर्वेदेनाध्वर्यवं ' अध्वर्योः कर्म हविःप्रचारादिकं ' अकुर्वत ' । तथा ' सामवेदेनोद्गीथं ' उद्गातृकर्म ' अकुर्वत ' कृतवंतः । ब्रह्मत्वलक्षणस्तुरीयोंऽशः केन वेदेनेत्याशंक्याह—यदेव त्रय्यै विद्यायै शुक्रमिति । त्रयः अवयवा यस्याः सा त्रयी । षष्ठ्यर्थे चतुर्थी—( पा. सू. २।३।६२ वा. ) वेदत्रयस्य ' यदेव शुक्रं ' निर्मलरूपं सारभूतोंऽशः ' तेन ब्रह्मत्वं ' ब्रह्मणः कर्म ' अकुर्वत ' । अथानंतरं कृत्स्नयज्ञात्मकः सन् प्रजापतिः ' उच्चक्राम ' उत्क्रांतवान् ॥ ४ ॥

एवं त्रयीनिष्पाद्यत्वं यज्ञस्य प्रतिपाद्य त्रयीसारभूताभिः व्याहृतिभिः तत्तद्वेदोक्तकर्मभ्रेषनिमित्तं प्रायश्चित्तहोमं विधित्सुः प्रश्नमुद्भावयति—ते देवाः प्रजापतिमब्रुवन्निति । ' नः ' अस्माकं ' यज्ञः ' ' ऋक्तः ' ऋग्वेदोक्तात्

स ह्वोवाच । यद्यृक्तो भूरिति चतुर्गृहीतमाज्यं गृहीत्वा गार्हपत्ये जुहवथ यदि यजुष्टो भुवऽ इति चतुर्गृहीतमाज्यं गृहीत्वाऽऽग्नीध्रीये जुहवथान्वाहार्य्यपचने वा हविर्य्यज्ञे यदि सामतः स्वरिति चतुर्गृहीतमाज्यं गृहीत्वाऽऽहवनीये जुहवथ यद्युऽअविज्ञातमसत्सर्व्वाण्यनुद्रुत्याहवनीये जुहवथ तदृग्वेदेनैवऽर्ग्वेदं भिषज्यति यजुर्व्वेदेन यजुर्व्वेदꣳ सामवेदेन सामवेदꣳ स यथा पर्व्वणा पर्व्व सन्दध्यादेवꣳ हैव स सन्दधाति यऽएताभिर्भिषज्यत्यथ यो हातोऽन्येन भिषज्यति यथा शीर्ण्णेन शीर्ण्णꣳ सन्धित्सेद्यथा वा शीर्ण्णे गरमभिनिदध्यादेवं तत्तस्मादेवंविदमेव ब्रह्माणं कुर्व्वीत नानेवंविदम् ॥ ६ ॥

---

स होवाच । यद्यृक्तो भूरिति चतुर्गृहीतमाज्यं गृहीत्वा गार्हपत्ये जुहवथ । यदि यजुष्टो भुव इति चतुर्गृहीतमाज्यं गृहीत्वाऽऽग्नीध्रीये जुहवथ । अन्वाहार्यपचने वा हविर्यज्ञे । यदि सामतः स्वरिति चतुर्गृहीतमाज्यं गृहीत्वाऽऽहवनीये जुहवथ । यद्यु अविज्ञातमसत् । सर्वाण्यनुद्रुत्याहवनीये जुहवथ । तदृग्वेदेनैवर्ग्वेदं भिषज्यति । यजुर्वेदेन यजुर्वेदम् । सामवेदेन सामवेदम् । स यथा पर्वणा पर्व संदध्यात् । एवं हैव स संदधाति । य एताभिर्भिषज्यति । अथ यो हातोऽन्येन भिषज्यति । यथा शीर्णेन शीर्णं संधित्सेत् । यथा वा शीर्णे गरमभिनिदध्यात् । एवं तत् । तस्मादेवंविदमेव ब्रह्माणं कुर्वीत । नानेवंविदम् ॥ ६ ॥

---

कर्मणः सकाशात् 'यदि ह्वलेत्' विनश्येत् यजुर्वेदाद्वा सामतो वा । 'एनं' विकलं यज्ञं 'केन' प्रायश्चित्तेन 'भिषज्येम' चिकित्सेमेति । "भिषज् चिकित्सायाम्"–( धा. कण्ड्वा. प. २२ ) इति धातो रूपम् ॥ ५ ॥

स होवाचेत्यादि । एवं देवैः पृष्टः 'सः' प्रजापतिः 'उवाच' उक्तवान् । 'यदि' ऋग्वेदात्सकाशात् यज्ञो 'ह्वलेत्' विनश्येत् तदा 'चतुर्गृहीतमाज्यं गृहीत्वा' ऋग्वेदात् उत्पन्नया 'भूरिति' व्याहृत्या 'गार्हपत्ये जुहवथ' यज्ञे देवाय जुहुत । लेटि अडागमः । यजुर्भ्रेषप्रायश्चित्तमाह–यदि यजुष्टो भुव इतीति । सोमयागे चेद्यजुर्भ्रेषः तदा आग्नीध्रीये होमः । दर्शपूर्णमासादौ हविर्यज्ञे तदा अन्वाहार्यपचने दक्षिणाग्नौ "भुवः स्वाहा"– इति होमः । सामभ्रेषप्रायश्चित्तमाह–यदि सामत इति । एवं हौत्राध्वर्यवादिज्ञानेन व्यवस्थितं प्रायश्चित्तमुक्त्वा अविज्ञातप्रायश्चित्तमाह–यद्यु अविज्ञातमसदिति । 'यदि' वेदत्रयस्य संबंधि किंचिदंगं लुप्तं 'अविज्ञातं' विभागेनाज्ञातं 'असत्' भवेत् । तदा सर्वाण्येतानि 'अनुद्रुत्य' उच्चार्य "भूर्भुवः स्वः स्वाहा" इत्येवं

---

१–यज्ञस्य ह्वलनं चतुर्धा संभवति–न्यूनकरणम्, अकरणम्, अन्यथाकरणम्, अतिरिक्तकरणं चेति बोध्यम् ।

२–हौत्रिके भूरिति गार्हपत्ये दक्षिणाभावाध्वर्यवे भुव इति आग्नीध्रीये सोमे स्वरित्यौद्गात्र आहवनीये । चतुर्गृहीतान्येतानि सर्वत्र । अविज्ञाते प्रतिमहाव्याहृति सर्वामिश्चतुर्थम् । का. श्रौ. सू. २५ । ५–९ । १२ ।

(न्तु) तुदाहुः । (र्ष्यु) यदृचा हौत्रं क्रियते यजुषाऽऽध्वर्य्यवꣳ साम्नो-द्गीथोऽथ केन ब्रह्मत्वमित्यनया त्रय्या विद्ययेति ह ब्रूयात् ॥ ७ ॥

इति चतुर्थप्रपाठके द्वितीयं ब्राह्मणम् ॥ ११-४-२ ॥ (५. ८.) ॥

प्रजापतिर्ह वाऽ एष यदꣳशुः । सोऽस्यैषऽ आत्मैवात्मा ह्ययं प्रजा-

---

तदाहुः । यदृचा हौत्रं क्रियते । यजुषाऽऽध्वर्यवम् । साम्नोद्गीथः । अथ केन ब्रह्मत्वमिति । अनया त्रय्या विद्ययेति ह ब्रूयात् ॥ ७ ॥

प्रजापतिर्ह वा एष, यदंशुः । सोऽस्यैष आत्मैव । आत्मा ह्ययं प्रजापतिः । वागेवादाभ्यः ।

---

' आहवनीये जुहवथ ' जुहुत । पूर्ववल्लेटि अडागमः । तत्तद्वेदोक्तकर्मप्रायश्चित्तत्वेनोक्तं तत्तद्व्याहृतिहोमं क्रमेण प्रशंसति—तदृग्वेदेनैवेति । भूरिति व्याहृतिः ऋग्वेदादुत्पन्ना, अतस्तन्मंत्रहोमात् ' ऋग्वेदेनैव ऋग्वेदं ' चिकित्सितवान् भवति । एवं यजुर्वेदेनेत्यादावपि । स यथा पर्वणेत्यादि । ' यथा ' खलु लोके भग्नं हस्त-पादादि ' पर्व ' यत्सन्निहितेनान्येन ' पर्वणा ' पुरुषाय ' संदध्यात् ' संश्लेषयेत् । एवं अनेन तत्तद्व्याहृति-ज्ञानेन तत्तद्वेदोक्तप्रभ्रष्टमंगं पुनः संहितं भवतीत्यर्थः । एतदेव व्यतिरेकेण द्रढयति—अथ यो हेति । ' यः ' खलु ' अतः ' अस्मात् उक्तव्याहृतिहोमरूपात् भेषजात् ' अन्येन ' कर्मणा ' भिषज्यति ' । तत्र दृष्टांतमाह—यथा शीर्णेनेति । ' यथा ' ' शीर्णेन ' भग्नेन अन्यत् ' शीर्णं ' भग्नं वस्तु ' संधित्सेत् ' संधातु-मिच्छेत् । ' यथा वा शीर्णे ' व्रणेऽवयवे ' गरं ' विषं ' अभिनिदध्यात् ' प्रक्षिपेत् । एवमेव तत्तद्व्याहृति-होमरूपं प्रायश्चित्तमित्यर्थः । उक्तप्रायश्चित्तपरिज्ञानवानेव ब्रह्मा कार्य इति विधत्ते—तस्मादेवंविदमेवेति । ' एवंविदं ' उक्तब्राह्मणार्थपरिज्ञानवंतम् । स्पष्टमन्यत् ॥ ६ ॥

अथ ब्रह्मत्वस्य वेदत्रयप्रतिपाद्यत्वं प्रश्नप्रतिवचनाभ्यामाह—तदाहुरिति । यद्यस्मात् ' ऋचा ' ऋग्वेदेनैव ' हौत्रं ' होतृकर्म ' क्रियते ' । यजुर्वेदेनाध्वर्यवं कर्म क्रियते । सामवेदेनोद्गीथं उद्गानं उद्गातृकर्म क्रियते । तस्मात् ब्रह्मत्वमपि केनचिद्वेदेन क्रियत इति वक्तव्यम् । स वेदः कः ? इति प्रश्नः । उत्तरं तु—अनया त्रय्येति । यैस्त्रिभिर्वेदैः पूर्वोक्तं कर्म क्रियते तैरेव ब्रह्मत्वम् इति ब्रूयादित्यर्थः । अत एव यजुर्वेदसूत्रवत् सर्वसूत्रेषु परस्पर-नैरपेक्ष्येण तत्तद्वेदोक्तं ब्रह्मत्वं सूत्रितमिति ॥ ७ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यंदिनीयशतपथब्राह्मणभाष्ये एकादशकांडे पंचमेऽध्याये अष्टमं ब्राह्मणम् ॥ ( ११ । ५ । ८ ) ॥

अथ अंश्वदाभ्याख्यौ सोमग्रहौ विधित्सुः तयोः आत्मवागादिरूपतया समुच्चित्यानुष्ठानं प्रतिपादयति—प्रजापतिर्ह वा इत्यादिना । अंश्वाख्यो ग्रह इति यदस्ति 'एषः' 'प्रजापतिर्ह वै' प्रजापतिरेव । 'सः' खलु प्रजा-

---

१—ब्रह्मा प्रायश्चित्तानि जुहुयादनादिष्टानि । ब्रह्मा विलिष्टं संदधातीति श्रुतेः । त्रिवेदसंयोगाच्च । का. श्रौ. सू. २५ । १९०–१९२ ।

पतिर्व्वागेवादाभ्यः स यदᳪंशुं गृहीत्वाऽदाभ्यं गृह्णात्यात्मानमेवास्यै-तत्सᳪंस्कृत्य तस्मिन्नेताम्वाचम्प्रतिष्ठापयति ॥ १ ॥

(त्यु) अथ मनो ह वाऽअᳪंशुः । (र्व्वा) व्वागुदाभ्यः प्राणऽ एवाᳪंशु-रुदानोऽदाभ्यश्चक्षुरेवाᳪंशुः श्रोत्रमुदाभ्यस्तद्यदेतौ ग्रहौ गृह्णन्ति सर्व्व-त्वायैव कृत्स्नतायै ॥ २ ॥

(याऽअु) अथ देवाश्च ह वाऽ असुराश्च । (श्चो) उभये प्राजापत्याऽ अस्पर्द्धन्त तऽ एतस्मिन्नेव यज्ञे प्रजापतावस्पर्द्धन्तास्माकमयᳪं स्याद-स्माकमयᳪं स्यादिति ॥ ३ ॥

---

स यदंशुं गृहीत्वाऽदाभ्यं गृह्णाति । आत्मानमेवास्यैतत्संस्कृत्य तस्मिन्नेतां वाचं प्रतिष्ठा-पयति ॥ १ ॥

अथ मनो ह वा अंशुः, वागदाभ्यः । प्राण एवांशुः, उदानोऽदाभ्यः । चक्षुरेवांशुः, श्रोत्र-मदाभ्यः । तद्यदेतौ ग्रहौ गृह्णंति, सर्वत्वायैव कृत्स्नतायै ॥ २ ॥

अथ देवाश्च ह वा असुराश्च उभये प्राजापत्या अस्पर्द्धंत । त एतस्मिन्नेव यज्ञे प्रजापतावस्प-र्द्धंत । अस्माकमयं स्यादस्माकमयं स्यादिति ॥ ३ ॥

---

पत्यात्मकः अंशुः 'अस्य' यज्ञस्य 'एष आत्मैव' मध्यमशरीरमेव । तत्समर्थयते—आत्मा ह्यय-मिति । 'हि' यस्मात् एवं प्रजापतिरात्मा तस्मात् तदात्मकः अंशुरपि आत्मैवेत्यर्थः । एवं अंशुग्रहस्यात्म-रूपतामुक्त्वा अदाभ्यस्य वाग्रूपतामाह—वागेवादाभ्य इति । योऽयम् अदाभ्याख्यो ग्रहो वक्ष्यमाणः एष वागिन्द्रियात्मकः । अनयोर्ग्रहणं विधत्ते—स यदंशुं गृहीत्वेति । अंश्वाख्यं ग्रहं प्रथमं 'गृहीत्वा' पश्चात् 'अदाभ्यं' ग्रहं 'गृह्णाति' इति यदस्ति 'एतत्' एतेन प्रथमं 'आत्मानं' शरीरमेव 'संस्कृत्य' 'तस्मिन्' शरीरे 'एतां वाचं' वागिन्द्रियं प्रतिष्ठापयति ॥ १ ॥

एतौ ग्रहौ सह प्रयोक्तव्यौ न पृथक् इत्यनेनाभिप्रायेण मनोवागादिरूपतया च स्तौति—अथ मनो ह वा इति । मनःप्राणचक्षुरात्मकः अंशुग्रहः । वागुदानश्रोत्रात्मकः अदाभ्यः । 'तदेतौ ग्रहौ' सोमयागे 'गृह्णं-तीति' यदस्ति तद्यज्ञस्य 'सर्वत्वाय' मनोवागादिसर्वावयवसंपूर्णत्वायैव 'कृत्स्नतायै' समग्रतायै सह गृह्येते ॥२॥

अथ कृत्स्नयज्ञस्यासुरेभ्यः सकाशात् आवर्जनसाधनत्वं अदाभ्यग्रहस्याख्यायिकया प्रतिपादयति—अथ देवा-श्चेति । 'अस्पर्द्धन्त' "स्पर्ध संघर्षे"—( धा. पा. भ्वा. प. ३ ) इति धातुः । एतस्मिन् यज्ञरूपे प्रजापतौ यतः 'उभये अस्पर्द्धंत' । अस्माकमेवायं यज्ञो भोग्यः स्यात्; अस्माकमयं यज्ञो भोग्यः स्यादिति । "नित्य-वीप्सयोः" ( पा. सू. १ । ४ । ८ ) इति द्विर्वचनम् ॥ ३ ॥

ततो देवाः । (२) अर्चन्तः श्राम्यन्तश्चेरुस्तऽ एतं ग्रहं ददृशुरेतमदाभ्यं तमगृह्णत ते सवनानि प्राव्वृहन्त ते सर्व्वं यज्ञꣳ समव्वृञ्जतान्तरायन्नसुरान्यज्ञात् ॥ ४ ॥

(त्ते) ते होचुः । (र)अदभाम वाऽएनानिति तस्माददाभ्यो न वै नोऽदभन्निति तस्माददाभ्यो व्वाग्वाऽअदाभ्यः सेयमदब्धा व्वाक्तस्माद्देवादाभ्यऽएवꣳ ह वै द्विषतो भ्रातृव्व्यस्य सर्व्वं यज्ञꣳ सम्वृङ्क्तऽ एवं द्विषन्तं भ्रातृव्व्यꣳ सर्व्वस्माद्यज्ञान्निर्भजति बहिर्द्धा करोति यऽ उऽ एवमेतद्वेद ॥ ५ ॥

---

ततो देवा अर्चंतः श्राम्यंतश्चेरुः । त एतं ग्रहं ददृशुः—एतमदाभ्यम् । तमगृह्णत । ते सवनानि प्रावृहंत । ते सर्वं यज्ञं समवृंजत । अंतरायन्नसुरान् यज्ञात् ॥ ४ ॥

ते होचुः—अदभाम वा एनानिति, तस्माददाभ्यः । न वै नोऽदभन्निति, तस्माददाभ्यः । वाग्वा अदाभ्यः । सेयमदब्धा वाक् । तस्माद्देवादाभ्यः । एवं ह वै द्विषतो भ्रातृव्यस्य सर्वं यज्ञं संवृंक्ते । एवं द्विषंतं भ्रातृव्यं सर्वस्माद्यज्ञान्निर्भजति । बहिर्द्धा करोति । य उ एवमेतद्वेद ॥५॥

---

एवं विवदमाना देवाः किं कृतवंतः तदाह—ततो देवा इति । ततस्तस्मात् अनंतरं 'देवा अर्चंतः श्राम्यंतः' कृत्स्नयागप्राप्त्यर्थं मनसा अभिलषन्तः तत एव श्राम्यंतश्चेरुः । 'ते' तथाविधा देवाः 'एतं' वक्ष्यमाणं अदाभ्यं 'ग्रहं' ददृशुः' । दृष्ट्वा च 'तमगृह्णत' गृहीतवंतः । ततस्ते देवाः तेन ग्रहेण प्रातःसवनादीनि त्रीणि 'सवनानि' यज्ञसंबंधीनि 'प्रावृहंत' प्रागृह्णत असुरेभ्यः सकाशात् स्वीकृतवंतः । "वृहू उद्यमने" (धा. पा. तु. आ. ६६) इति । ततस्ते 'सर्वं यज्ञं' असुरेभ्यः 'समवृंजत' सम्यक् विजितवंतः । तथा च यज्ञात्सकाशात् 'असुरान् अंतरायन्' अंतरितान् व्यवहितान् परित्यक्तभागान् अकुर्वन् ॥ ४ ॥

अदाभ्यनामनिर्वचनं करोति—ते होचुरिति । 'ते' देवाः खलु 'ऊचुः' उक्तवंतः । 'एनान्' असुरान् यतो वयं 'अदभाम' अहिंसिष्मेति । तस्मात् दभ्यते अनेनेति व्युत्पत्त्या अदाभ्यनामकरणेन ग्रहः संपन्नः । ण्यप्रत्ययोत्पत्तिः । छांदसत्वात् अडागमसहितायाः प्रकृतेः कृत । प्रकारान्तरेण निर्वक्ति—न वै न इति । 'नः' अस्मान् खलु ते असुराः 'न अदभन्' नाहिंसिषुरिति यस्मादवदन् तस्मात् न दभ्यते अनेनेति व्युत्पत्त्या अदाभ्यो ग्रहः । स्वयं न दभ्यत इति अदाभ्यः इति कर्मसाधनः क्रम इत्याह—वाग्वा अदाभ्य इति । योऽयमदाभ्यो ग्रहः तस्य वागात्मकत्वं प्रागुक्तम् । 'वागदब्धा' अहिंसिता । अतस्तदात्मको ग्रहोऽपि अहिंसित इति कृत्वा अदाभ्य इत्युच्यत इत्यर्थः । एतदेव निर्वचनं साधु इति निगमयति—तस्माद्देवेति । उशब्दस्तुशब्दार्थः । पुरावृत्तसिद्धमर्थं प्रकृते योजयति—एवं ह वा इति । यथा देवा असुरेभ्यः सकाशात् कृत्स्नं यज्ञमवृंजत; यज्ञभागाच्च असुरानंतरायन् । एवमेव अयं यजमानोऽपि विद्वेषणशीलस्य 'भ्रातृव्यस्य' संबंधिनं 'सर्वं यज्ञं संवृंक्ते' वर्जयति । एवमेव तथाविधं 'भ्रातृव्यं सर्वस्मात् यज्ञात् निर्भजति' भागरहितं करोति । अत एव तस्मात् यज्ञात् 'बहिर्द्धा' बाह्यं 'करोति' 'यः' यजमानः 'एतत्' उक्तमर्थजातं एवमुक्तप्रकारेण 'वेद' जानाति ॥ ५ ॥

स येनैव पात्रेणाꣳशुं गृह्णाति । तस्मिन्नेव पात्रे निग्राभ्याभ्योऽप ऽआनीय तस्मिन्नेतानꣳशून्गृह्णाति ॥ ६ ॥

( तु ) उपयामगृहीतोऽसि । ( स्य ) अग्नये त्वा गायत्रच्छन्दसं गृह्णामीति गायत्रम्प्रातःसवनं तत्प्रातःसवनम्प्रवृहतीन्द्राय त्वा त्रिष्टुप्छन्दसङ्गृह्णामीति त्रैष्टुभम्माध्यन्दिनꣳ सवनं तन्माध्यन्दिनꣳ सवनम्प्रवृहति विश्वेभ्यस्त्वा देवेभ्यो जगच्छन्दसङ्गृह्णामीति जागतं तृतीयसवनं तत्तृतीयसवनं प्रवृहत्यनुष्टुप्तेऽभिगरऽ इति यद्वाऽ ऊर्ध्वꣳ सवनेभ्यस्तदानुष्टुभं तदेवैतत्प्रवृहति तन्नाभिषुणोति वज्रो वै ग्रावा वागुदाभ्यो नेद्वज्रेण वाचꣳ हिनसानीति ॥ ७ ॥

---

स येनैव पात्रेणांशुं गृह्णाति । तस्मिन्नेव पात्रे निग्राभ्याभ्योऽप आनीय, तस्मिन्नेतानंशून् गृह्णाति ॥ ६ ॥

" उपयामगृहीतोऽस्यग्नये त्वा गायत्रच्छंदसं गृह्णामि "—इति गायत्रं प्रातःसवनम् । तत्प्रातःसवनं प्रवृहति । " इंद्राय त्वा त्रिष्टुप्छंदसं गृह्णामि "—इति त्रैष्टुभं माध्यंदिनं सवनम् । तन्माध्यंदिनं सवनं प्रवृहति । " विश्वेभ्यस्त्वा देवेभ्यो जगच्छन्दसं गृह्णामि "—इति जागतं तृतीयसवनम् । तत्तृतीयसवनं प्रवृहति । " अनुष्टुप् तेऽभिगरः "—( वा. सं. ८ । ४७ ) इति । यद्वा ऊर्ध्वं सवनेभ्यस्तदानुष्टुभम् । तदेवैतत्प्रवृहति । तन्नाभिषुणोति । वज्रो वै ग्रावा । वागदाभ्यः । नेद्वज्रेण वाचं हिनसानीति ॥ ७ ॥

---

अथ तस्य ग्रहस्य पात्रविशेषे ग्रहणं विधत्ते—स येनैवेति । ' येनैव ' ऊर्ध्वपात्रेण अंश्वाख्यं ग्रहं ' गृह्णाति ' ' तस्मिन्नेव पात्रे निग्राभ्याभ्यः ' निग्राभ्या इति वसतीवरीणां सोमसेकार्थानामपां संज्ञा । ताभ्यो गृहीत्वा ' अप आनीय ' अप आसिच्य ' तस्मिन् ' वसतीवरीभिः परिपूरिते पात्रे ' अंशून् ' सोमलतासंज्ञान् खंडान् ' गृह्णाति ' ॥ ६ ॥

तत्र प्रथमस्यांशोर्मंत्रमाह—उपयामगृहीत इति । हे सोम ! त्वं ' उपयामगृहीतः ' उपयम्यते धार्यते अनेनेति उपयामः पात्रं तेन गृहीतोऽसि । ' अग्नये त्वा ' त्वां ' अग्नये ' प्रातःसवनदेवतायै गृह्णामीत्यर्थः । गायत्रच्छंदसमित्यस्यार्थमाह—गायत्रं प्रातःसवनमिति । गायत्रीच्छंदस्कं हि प्रातःसवनमिति । तत्तेन गायत्रच्छन्दसमिति विशेषणेन प्रातःसवनात्मकं यज्ञस्य भागं ' प्रवृहति ' असुरेभ्यः सकाशात् उद्यच्छति स्वीकरोतीत्यर्थः । " वृहू उद्यमने " ( धा. पा. तु. आ. ६६ ) इति धातुः । द्वितीयस्यांशोर्ग्रहणमंत्रमाह—इंद्राय त्वेति । उपयामगृहीतोऽसीत्यनुषज्यते । अनेन मंत्रेण द्वितीयमंशुं गृह्णीयादित्यर्थः । सूत्रं हि—" बुभूषतोऽदाभ्यं गृह्णाति । आसिच्य निग्राभ्याः पात्रे तस्मिंस्तूष्णीं त्रीन् अंशून् अवधायाग्नये त्वा गायत्रच्छंदसमिति प्रति-

( त्यथ्ँ ) अथ्ँशूनेवाधूनोति । व्रेशीनां त्वा पत्मन्नाधूनोमि कुकूनु-नानां त्वा पत्मन्नाधूनोमि भन्दनानां त्वा पत्मन्नाधूनोमि मदिन्तमानां त्वा पत्मन्नाधूनोमि मधुन्तमानां त्वा पत्मन्नाधूनोमीत्येता वै दैवीरापस्त-द्याश्चैव दैवीरापो याश्चेमा मानुष्यस्ताभिरेवास्मिन्नेतदुभयीभी रसं दधाति॥८॥

शुक्रं त्वा शुक्रऽ आधूनोमीति । शुक्रथ्ँ ह्येतच्छुक्रऽ आधूनोत्यह्नो रूपे सूर्य्यस्य रश्मिष्विति तदह्नश्चैवैनमेतद्रूपे सूर्य्यस्य च रश्मिष्वा-धूनोति ॥ ९ ॥

---

अंशूनेवाधूनोति । " व्रेशीनां त्वा पत्मन्नाधूनोमि, कुकूननानां त्वा पत्मन्नाधूनोमि, भंदनानां त्वा पत्मन्नाधूनोमि, मदिंतमानां त्वा पत्मन्नाधूनोमि, मधुंतमानां त्वा पत्म-न्नाधूनोमि "–( वा. सं. ८ । ४८ ) इति । एता वै दैवीरापः । तद्याश्चैव दैवीरापः । याश्चेमा मानुष्यः । ताभिरेवास्मिन्नेतदुभयीभी रसं दधाति ॥ ८ ॥

" शुक्रं त्वा शुक्र आधूनोमि "–इति । शुक्रं ह्येतच्छुक्र आधूनोति । " अह्नो रूपे

---

मंत्रम् । उपयामः सर्वत्राविशेषात् " ( का. श्रौ. सू. १२ । ६–८ ) इति । त्रैष्टुभं माध्यंदिनं सवनमि-त्यादि पूर्ववद्योज्यम् । तृतीयस्यांशोर्ग्रहणमंत्रं व्याचष्टे–विश्वेभ्यस्त्वेति । जगच्छन्दसमिति जगतीछंदस्कम् । तृतीयसवनात्मकत्वादित्यर्थः । 'अनुष्टुप्तेऽभिगरः' इति मन्त्रपाठस्य प्रयोजनमाह–यद्वा ऊर्ध्वमिति । त्रिभ्यः सवनेभ्यः ' ऊर्ध्वं ' उक्थषोडशीसंस्थादिरूपं यदस्ति तत्सर्वं ' आनुष्टुभं ' अनुष्टुप्छंदस्कम् । तदेवानेन मन्त्रेण ' प्रवृहति ' असुरेभ्यः उपादत्ते । मंत्रार्थस्तु हे सोम ! ' ते ' तव अनुष्टुबाख्यं छन्दः ' अभिगरः ' अभिशंसनं स्तावकमित्यर्थः । ग्रहान्तरवत् प्राप्तमभिषवं निषेधति–तन्नाभिषुणोतीति । तत्र कारणमाह–वज्रो वा इति । ग्राव्णः कठिनत्वात् प्रहरणसाधनत्वाच्च वज्रत्वम् । अदाभ्यस्य वाग्रूपत्वमुक्तम् । ' हिनसानि ' हिंसां करवाणि । गतमन्यत् ॥ ७ ॥

अभिषवस्थाने आधवनं विधत्ते–अंशूनेवाधूनोतीति । ग्रहस्योपरि निहितान् त्रीनंशूनेव ' आधूनोति ' कंपयति । " व्रेशीनां त्वा " इत्यादयस्तन्मंत्राः स्तूयंते । "अनुष्टुप्त इत्युक्त्वाऽऽधूनोत्यंशुभिर्व्रेशीनां त्वा"(का. श्रौ. सू. १२ । ११० ) इति । व्रेश्यादयः शब्दाः देवलोकस्थानामपां संज्ञाः । व्रेश्यंते सिच्यंते आभिरिति व्रेश्यः तासां व्रेशीनां पत्मन् पतनं मार्गे हे सोम ! त्वाम् ' आधूनोमि ' कंपयामि । " सुपां सुलुक् " ( पा. सू. ७ । १ । ३९ ) इति सप्तम्या लुक् । एवमुत्तरत्रापि योज्यम् । कुत्सितं कूनंति शब्दायन्त इति कुकूननाः । मंदंते मद्रा भवंतीति मंदनाः । अत्यर्थं मदयन्ति तर्पयंतीति मदिंतमाः । अतिशयेन माधुर्यो-पेता मधुन्तमाः । एता वै दैवीरित्यादि । ' एताः ' व्रेश्याद्याः ' दैवीः ' देवसंबंधिन्यः ' आपः ' । तत्तथा सति दैवीभिरद्भिः पात्रगृहीताभिर्मानुषीभिश्च ' उभयीभिः ' एतस्मिन् ग्रहे ' रसं ' ' दधाति ' स्थापयति ॥ ८ ॥

अंतिमं आधवनमन्त्रमनूद्य व्याचष्टे–शुक्रं त्वेति । हे सोम ! ' शुक्रं ' रसवन्तं त्वां ' शुक्रे ' वसती-

ककुभꣳ रूपम्वृषभस्य रोचते बृहदिति । ( त्ये ) एतद्वै ककुभꣳ रूपम्वृषभस्य रोचते बृहद्यऽएष तपति शुक्रः शुक्रस्य पुरोगाः सोमः सोमस्य पुरोगाऽ इति तच्छुक्रमेवैतच्छुक्रस्य पुरोगाङ्करोति सोमꣳ सोमस्य पुरोगां यत्ते सोमादाभ्यन्नाम जागृवि तस्मै त्वा गृह्णामीत्येतद्ध वाऽ अस्यादाभ्यन्नाम जागृवि यद्वाक्तद्वाचमेवैतद्वाचे गृह्णाति ॥ १० ॥

( त्यु ) अथोपनिष्क्रम्य जुहोति । तस्मै ते सोम सोमाय स्वाहेति तत्सोममेवैतत्सोमाय जुहोति तथो व्वाचमग्नौ न प्रव्वृणक्त्यथ हिरण्यमभिव्यनित्यसावेव बन्धुस्तस्य तावतीरेव दक्षिणा यावतीरꣳशोः ॥ ११ ॥

---

सूर्यस्य रश्मिषु "– ( वा. सं. ८।४८ ) इति । तदह्नश्चैवैनमेतद्रूपे सूर्यस्य च रश्मिष्वाधूनोति ॥ ९ ॥

"ककुभं रूपं वृषभस्य रोचते बृहत्"–इति । एतद्वै ककुभं रूपं वृषभस्य रोचते बृहत् । य एष तपति । " शुक्रः शुक्रस्य पुरोगाः सोमः सोमस्य पुरोगाः "–इति । तच्छुक्रमेवैतच्छुक्रस्य पुरोगां करोति । सोमं सोमस्य पुरोगाम् । " यत्ते सोमादाभ्यन्नाम जागृवि तस्मै त्वा गृह्णामि "–इति । एतद्ध वा अस्यादाभ्यन्नाम जागृवि–यद्वाक् । तद्वाचमेवैतद्वाचे गृह्णाति ॥ १० ॥

अथोपनिष्क्रम्य जुहोति–" तस्मै ते सोम सोमाय स्वाहा "–( वा० सं० ८।४९ )

---

वर्याख्ये रसवत्युदके ' आधूनोमि ' कंपयामि । शुक्रशब्दाभिधेयमाचष्टे–शुक्रं ह्येतदिति । चरमभागमनूद्य व्याचष्टे–अह्नो रूप इति । ' अह्नो ' दिवसस्य संबंधिनि ' रूपे ' वसतीवर्याख्ये सूर्यसंबंधिषु ' रश्मिषु ' किरणेषु तं त्वां आधूनोमीत्यर्थः । सूर्यास्तमयात् पूर्वमेव औपवसथ्येऽहनि वसतीवरीणां ग्रहणात् एवमुच्यते । स्पष्टमन्यत् ॥ ९ ॥

( त्वां गृह्णामीति । किं तत् सत्यं; प्रकृतं तं मंत्रमाह )–ककुभं रूपमिति । व्याचष्टे–एतद्वै ककुभमिति । ' य एषः ' सूर्यस्तपति ' एतत् ' खलु बृहदधिकं ' ककुभं ' प्रशस्यं रूपम् । तत् ' वृषभस्य ' वर्षणशीलस्य सूर्यस्य रोचते । अतोऽयं ' शुक्रः ' देदीप्यमानः सोमः ' शुक्रस्य ' दीप्यमानस्य सूर्यस्य ' पुरोगाः ' पुरतो गंता । तथा होमानन्तरं ' सोमः ' अमृतमयो भूत्वा ' सोमस्य ' दिवि चन्द्रात्मना वर्तमानस्य पुरोगामी भवति । उक्तार्थपरतां मन्त्रस्याह–तच्छुक्रमेवैतदिति । यत्ते सोमादाभ्यमित्यादिमन्त्रभागस्यायमर्थः । हे सोम ! ' ते ' तव ' यत् अदाभ्यं ' अहिंसितं ' नाम जागृवि ' जागरणशीलं ' तस्मै ' नाम्ने, इत्येतद् आह–एतद्ध वा अस्यादाभ्यं नामेति । ' अस्य ' सोमस्य ' वाक् ' इत्येतत् अदाभ्यं नामेत्यर्थः । तस्याः सर्वव्यवहारहेतुत्वेन बाधानर्हत्वात् अदाभ्यत्वम् । तथा च वागात्मकमेव अदाभ्यग्रहरूपं सोमं वाग्देवतायै गृहीतवान् भवतीत्यर्थः ॥ १० ॥

अथास्य ग्रहस्य समंत्रकं होमं विधत्ते–अथोपनिष्क्रम्येति । ' उपनिष्क्रम्य ' हविर्धानान्निर्गत्य आह-

( ३ ) अ॒थाꣳशून्पुन॑रप्य॒र्जति । ( त्यु ) उ॒शिक्त्वं दे॑व सोमा॒ग्नेः प्रि॒यम्पाथो॒ऽपीहि॒ व॒शी त्वं दे॑व सो॒मेन्द्र॑स्य प्रि॒यम्पाथो॒ऽपीह्य॒स्मत्स॑खा त्वं दे॑व सोम॒ विश्वे॑षां दे॒वानां॑ प्रि॒यम्पाथो॒ऽपी॒हीति॒ सव॑नानि॒ वा अ॒दः प्र॒वृह॑ति॒ तान्ये॒वैतत्पुन॒राप्या॑यय॒त्यया॑तयामानि॒ क॑रोति॒ तैरया॑तयामै॒र्य॒ज्ञं त॑न्वते ॥ १२ ॥

इति चतुर्थप्रपाठके तृतीयं ब्राह्मणम् ॥ ११-४-३ ॥ ( ९. ९. ) ॥

इति पञ्चमोऽध्यायः समाप्तः ॥ ११ । ५ ॥

---

इति । तत्सोममेवैतत्सोमाय जुहोति । तथो वाचमग्नौ न प्रवृणक्ति । अथ हिरण्यमभिव्यनिति । असावेव बंधुः । तस्य तावतीरेव दक्षिणाः । यावतीरंशोः ॥ ११ ॥

अथांशून्पुनरप्यर्जति । " उशिक्त्वं देव सोमाग्नेः प्रियं पाथोऽपीहि, वशी त्वं देव सोमेंद्रस्य प्रियं पाथोऽपीहि, अस्मत्सखा त्वं देव सोम विश्वेषां देवानां प्रियं पाथोऽपीहि "-( वा. सं. ८ । ५० ) इति । सवनानि वा अदः प्रवृहति । तान्येवैतत्पुनराप्याययति । अयातयामानि करोति । तैरयातयामैर्यज्ञं तन्वते ॥ १२ ॥

---

वनीयदेशं गत्वा " तस्मै " ते इति मंत्रेणाहवनीये जुहुयात् । हे 'सोम !' 'तस्मै' वागात्मकाय 'ते' तुभ्यं 'सोमाय' इदं रसात्मकं हविः 'स्वाहा' सुहुतमस्तु, इति मंत्रस्यार्थः । एतदर्थपरतां व्याचष्टे—तत्सोममेवैतदिति । 'एतत्' एतेन मन्त्रेण सोमरसमेव 'सोमाय' हुतवान् भवति । तथा च सति वागात्मकस्य सोमस्य देवतात्वेनावस्थितत्वात् अग्नौ प्रक्षिप्यमाणः सोमरसो न वागात्मक इति 'वाचमग्नौ न प्रवृणक्ति' न दहतीत्यर्थः । अथास्य ग्रहस्य होमकाले म्रियमाणस्य प्राणवायोर्यदि बलान्निष्क्रमः स्यात्; तदा हिरण्यस्योपरि प्रश्वासः कार्य इत्याह—अथ हिरण्यमिति । 'अभिव्यनिति' उपर्युच्छ्वासं करोतीत्यर्थः । अस्य स्तावकं वाक्यशेषमतिदिशति—असावेव बंधुरिति । यश्चतुर्थकांडे ( श. प. ४ । १।१।१ ) अंशुग्रहप्रस्तावे हिरण्यस्य उपरि उच्छ्वसनस्य स्तावको वाक्यशेषः सः अत्रापि द्रष्टव्यः । परिमाणविशेषविशिष्टं दक्षिणाद्रव्यं विधत्ते—तस्य तावतीरेवेति । यावतीर्यत्परिमाणविशिष्टा वत्सतर्यः अंशोर्ग्रहस्य देयत्वेनोक्ताः । तस्माददाभ्यग्रहस्यापि तत्परिमाणविशिष्टा वत्सतर्यो दक्षिणात्वेन देयाः । सूत्रे हि—" द्वादश वत्सतर्यो गर्भिण्यो दक्षिणा " ( का. श्रौ. सू. १२ । १०९ ) इति ॥ ११ ॥

अथ एतेषां त्रयाणामंशूनां पुनस्त्रिभिर्मंत्रैः संसर्जनं विधत्ते—अथांशूनिति । 'अथ' एवं होमानंतरं एतान् धूतानंशून् " उशिक्त्वं " इत्यादिभिः प्रतिमंत्रं राजासंदीगते सोमे पुनरपि 'अर्जति' संसृजेत् । सूत्रे हि—"अंशून्सोमे निदधात्युशिक्त्वमिति प्रतिमंत्रम् "—( का. श्रौ. सू. १२ । १११ ) इति । मंत्राणामयमर्थः—

---

१-तस्मै त इति जुहोति । का० श्रौ० सू० १२ । ११० । २-अंशुवद्दक्षिणा । का० श्रौ० सू० । १२ । ११२ ।

हे ' देव ' दानादिगुणयुक्त ' सोम ! ' ' उशिक्त्वं ' कामयमानस्त्वं ' प्रियं पाथः ' । अन्ननामैतत् । प्रातःसवनरूपं हविः ' अपीहि ' अपिगच्छ । वशी त्वमिति द्वितीयो मंत्रः । वशः कामो यस्यास्तीति वशी । ' इन्द्रस्य प्रियं पाथः ' माध्यंदिनसवनार्थः सोमः । ' अस्मत्सखा ' सखिभूतः । ' विश्वेषां देवानां प्रियं पाथः ' तृतीयसवनार्थः सोमः । अन्यत्पूर्ववत् योज्यम् । मंत्रांस्तान् सवनार्थकथनव्याजेन व्याचष्टे—सवनानि वा अद इति । ' अदः ' अदाभ्यस्य ग्रहणकाले अंशुत्रयरूपेण त्रीण्येव ' सवनानि ' खलु ' प्रवृहति ' आदत्ते । ' तान्येव ' एतत्पुनः प्रक्षेपेण इदानीम् ' आप्याययति ' वर्द्धयति । ' अयातयामानि ' च 'करोति' । ततस्तैः सवनैः ' अयातयामैः ' अगतसारैः रसवद्भिः ' यज्ञं तन्वते ' विस्तारयंति यज्ञविदः ॥ १२ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये एकादशकाण्डे पंचमेऽध्याये नवमं ब्राह्मणम् ॥ ( ११–५–९ ) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं,
सप्ताब्धीन्पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटं च ॥
धान्याद्रिं थन्यजन्मा तिलभवमतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान्गुडकृतमजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणजमनृणः शार्करं चार्कतेजा,
रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये एकादशकाण्डे पञ्चमोऽध्यायः समाप्तः ॥ ११ । ५ ॥



# अथ षष्ठेऽध्याये प्रथमं ब्राह्मणम् ।
# चतुर्थप्रपाठके च चतुर्थं ब्राह्मणम् ।



भृगुर्ह वै व्वारुणिः । (व्वरु) व्वरुणम्पितरम्विद्ययाऽतिमेने तद्ध व्वरुणो व्विदाञ्चकारात्ति वै मा व्विद्यया मन्यतऽ इति ॥ १ ॥

स होवाच । प्राङ्पुत्रक व्व्रजतात्तत्र यत्पश्येस्तद्दृष्ट्वा दक्षिणा व्व्रजतात्तत्र यत्पश्येस्तद्दृष्ट्वा प्रत्यग्व्रजतात्तत्र यत्पश्येस्तद्दृष्ट्वोदग्व्रजतात्तत्र यत्पश्येस्तद्दृष्ट्वैतयोः पूर्व्वयोरुत्तरमन्ववान्तरदेशम्व्रजतात्तत्र यत्पश्येस्तन्मऽ आचक्षीथाऽ इति ॥ २ ॥

स ह ततऽ एव प्राङ्प्रवव्राज । (जै) एद्दु पुरुषैः पुरुषान्पर्व्वाण्येषाम्पर्व्वशः सम्व्रश्च्यम्पर्व्वशो व्विभजमानानिदं तवेदम्ममेति स होवाच भीष्मं

---

भृगुर्ह वै वारुणिर्वरुणं पितरं विद्ययाऽतिमेने । तद्ध वरुणो विदांचकार । अति वै मा विद्यया मन्यत इति ॥ १ ॥

स होवाच–प्राङ् पुत्रक व्रजतात् । तत्र यत्पश्येः; तत् दृष्ट्वा दक्षिणा व्रजतात् । तत्र यत्पश्येः; तत् दृष्ट्वा प्रत्यग् व्रजतात् । तत्र यत्पश्येः; तत् दृष्ट्वोदग् व्रजतात् । तत्र यत्पश्येः; तत् दृष्ट्वैतयोः पूर्वयोरुत्तरमन्ववांतरदेशं व्रजतात् । तत्र यत्पश्येः; तन्म आचक्षीथा इति ॥ २ ॥

स ह तत एव प्राङ् प्रवव्राजैद्दु पुरुषैः पुरुषान्पर्वाण्येषां पर्वशः संव्रश्च्यं पर्वशो विभजमानान्,

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

अथ समिदाधानादीनां वनस्पत्यादिरूपफलप्राप्तिसाधनतां विवक्षुः आख्यायिकां रचयति–भृगुर्ह वै वारुणिरिति । 'अतिमेने' अतिक्रान्तमात्मानं मन्यते स्मेत्यर्थः । तद्ध वरुण इत्यादि । 'तत्' अतिक्रमणं 'वरुणः' 'विदांचकार' ज्ञातवान् 'विद्यया' खलु 'मां' अयं पुत्रः 'अतिमन्यते' अतिशयितमात्मानं मन्यत इति ॥ १ ॥

अथ तस्य पुत्रस्य अहंकारं खण्डयितुं प्रागादिदिक्षु गत्वा तत्रत्यं दृष्टं ममाचक्ष्वेति पुत्रं नियुंक्ते–स होवाचेति । पुत्रकेति "अनुकंपायाम्"–( पा. सू. ५।३।७६ ) इति कन् । हे पुत्रक ! प्राङ्मुखः सन् प्राचीं दिशं 'व्रजतात्' व्रज । "तुह्योस्तातङ्" (पा. सू. ७।१।३५) इति तातङादेशः । 'तत्र' प्राच्यां दिशि 'यत्पश्येः' यद्वस्तु द्रक्ष्यसि, 'तत् दृष्ट्वा' 'दक्षिणा व्रजतात्' दक्षिणां दिशं गच्छेत्यर्थः । पूर्ववत् योज्यम् । एतयोरित्यादि । उदीच्यां दिशि प्रस्थितं दृष्ट्वा अनंतरमेव 'एतयोः पूर्वयोः' प्रत्यगुदग्देशयोः 'उत्तरमनु' प्राप्तं दृष्ट्वा 'अवांतरदेशं व्रजतात्' । तत्रावांतरदेशे 'यत् पश्येः' । 'तत्' प्रागादिदिक्षु दृष्टं 'आचक्षीथाः' अवब्रूहि ॥ २ ॥

इत्थं वरुणेन निरुक्तः 'सः' भृगुः 'ततः' अनन्तरमेव प्रागादिदिक्षु पर्यटनं कृतवानित्याह–स ह

बत भोः पुरुषान्वाऽएतत्पुरुषाः पुर्व्वाण्येषाम्पर्व्वशः सम्व्रुश्च्म्पर्व्वशो व्व्यभक्षतेति ते होचुरित्थं वाऽ इमेऽस्मानमुष्मिंल्लोकेऽसचन्त तान्वयमिदमिह प्रतिसचामहाऽइति स होवाचास्तीह प्रायश्चित्ती३रित्यस्तीति काऽति पिता ते व्वेदेति ॥ ३ ॥

स ह ततऽ एव दक्षिणा प्रवव्राज । (जै) एद्दु पुरुषैः पुरुषान्पुर्व्वाण्येषाम्पर्व्वशः सङ्कुर्तम्पर्व्वशो व्विभजमानानिदन्तवेदम्ममेति स होवाच भीष्मम्बत भोः पुरुषान्वाऽ एतत्पुरुषाः पुर्व्वाण्येषाम्पर्व्वशः सङ्कुर्तम्पर्व्वशो व्व्यभक्षतेति ते होचुरित्थम्वाऽ इमेऽस्मानमुष्मिंल्लोकेऽसचन्त

---

इदं तवेदं ममेति । स होवाच–भीष्मं बत भोः पुरुषान्वा एतत्पुरुषाः पर्वाण्येषां पर्वशः संव्रश्चं पर्वशो व्यभक्षतेति । ते होचुः–इत्थं वा इमेऽस्मानमुष्मिन् लोकेऽसचंत । तान् वयमिदमिह प्रतिसचामहा इति । स होवाच–अस्तीह प्रायश्चित्ती ३ रिति । अस्तीति । काऽति । पिता ते वेदेति ॥ ३ ॥

स ह तत एव दक्षिणा प्रवव्राजैद्दु पुरुषैः पुरुषान्पर्वाण्येषां पर्वशः संकर्तं पर्वशो विभजमानान्, इदं तवेदम्ममेति । स होवाच–भीष्मं बत भोः पुरुषान् वा एतत् पुरुषाः पर्वाण्येषां

---

तत एवेत्यादिना । ' प्रवव्राजैत् ' प्रवव्राजैव । एच्छब्दोऽवधारणे । उशब्दश्चार्थे । तत पूर्वस्यां दिशि व्रजित्वा इदमद्राक्षीदित्याह–पुरुषैः पुरुषानिति । ' एषां ' पुरुषाणां संबंधीनि ' पर्वाणि ' वपूंषि अवयवसंधीन् ' पर्वशः संवृश्चम् ' पर्वणि पर्वणि संवृश्च्य संच्छिद्य ' पर्वशः ' एकैकं पर्व ' तवेदं ममेदं ' इत्यन्यैः 'पुरुषैः' ' विभजमानान् पुरुषान् ' प्राच्यां दिशि दृष्ट्वा 'सः' खलु भृगुः ' उवाच ' उक्तवान् । बतेति खेदे । ' भीष्मं ' भयंकरं खलु एतत् भो पुरुषाः ! एवं भयकारणं दृष्टं विधत्ते–' पुरुषाः ' यूयं अन्यान् ' पुरुषान् पर्वशः ' पर्वणि इदं तवेदं ममेति ' व्यभक्षत ' विभक्तवंतः स्थ । किं कृत्वा ' एषां पुरुषाणां ' पर्वाणि ' अवयवसंधीन् । ' पर्वशः ' पर्वणि पर्वणि ' संवृश्चं ' संवृश्च्य । इति भृगुणोक्ते सर्वे ' ते ' विभक्तारः पुरुषा जनास्तं प्रत्यूचुः– ' इमे ' विभज्यमानाः पुरुषाः ' इत्थमेव अस्मान् ' 'अमुष्मिन्' परस्मिन् ' लोके ' ' असचंत ' प्राप्तवंतः " षच समवाये " ( धा. पा. भ्वा. आ. १०२२ ) इति धातुः । अतस्तान् वैरनिर्यातनार्थं इदमिदानीं 'वयं' इहास्मिन् लोके ' प्रतिसचामहे ' कृतसंव्रश्चनस्य प्रत्यर्पणेन संप्राप्नवामेत्यर्थः । एवमुक्ते सति ' सः ' खलु भृगुरुवाच उक्तवान् । इहास्मिन् विषये का अस्ति प्रायश्चित्तिरिति । प्रश्नार्थे प्लुतिः । ' सा अस्तीति ' तस्य प्रतिवचनम् । पुनः पृच्छति–काऽस्तीति । अस्मद्बुद्धिमतिक्रम्य वर्तमाना सा प्रायश्चित्तिः का किंरूपेत्यर्थः । पितेति प्रतिवचनम् । हे भृगो ! ' ते ' तव ' पिता वेद ' तां प्रायश्चित्तिं जानाति । एवमुत्तरेष्वपि पर्यायेषु योज्यम् ॥ ३ ॥

पर्वशः संकर्तमिति । " कृती छेदने " ( धा. पा. तु. प. १९४ ) इति धातुः । अस्मात् णमुल् । पर्वणि पर्वणि सम्यक् कर्तनं कृत्वेत्यर्थः । अन्यत्समानं पूर्वेण ॥ ४ ॥

तान्वयमिदमिह प्रतिसचामहाऽइति स होवाचास्तीह प्रायश्चित्ती३रित्यस्तीति काऽति पितैव ते व्वेदेति ॥ ४ ॥

स ह ततऽ एव प्रत्यङ्प्रवव्राज । (जै) एद पुरुषैः पुरुषाँस्तूष्णीमासीनाँस्तूष्णीमासीनैरद्यमानान्त्स होवाच भीष्मं बत भोः पुरुषान्वाऽएतत्पुरुषास्तूष्णीमासीनाँस्तूष्णीमासीनाऽ अदन्तीति ते होचुरित्थं वा इमेऽस्मानमुष्मिँल्लोकेऽसचन्त तान्वयमिदमिह प्रतिसचामहाऽ इति स होवाचास्तीह प्रायश्चित्ती३रित्यस्तीति काऽति पितैव ते व्वेदेति ॥ ५ ॥

स ह ततऽएवोदङ्प्रवव्राज । (जै) एद पुरुषैः पुरुषानाक्रन्दयतऽआक्रन्दयद्भिरद्यमानान्त्स होवाच भीष्मम्बत भोः पुरुषान्वाऽएतत्पुरुषाऽआक्रन्दयतऽआक्रन्दयन्तोऽदन्तीति ते होचुरित्थम्वाऽ इमेऽस्मानमुष्मिँल्लोकेऽसचन्त तान्वयमिदमिह प्रतिसचामहाऽ इति स होवाचाऽस्तीह प्रायश्चित्ती३रित्यस्तीति काऽति पितैव ते व्वेदेति ॥ ६ ॥

---

पर्वशः संकर्तं पर्वशो व्यभक्षतेति । ते होचुः-इत्थं वा इमेऽस्मानमुष्मिन् लोकेऽसचंत । तान् वयमिदमिह प्रतिसचामहा इति । स होवाच-अस्तीह प्रायश्चित्ती३रिति । अस्तीति । काऽति । पितैव ते वेदेति ॥ ४ ॥

स ह तत एव प्रत्यङ् प्रवव्राजैद्ध पुरुषैः पुरुषांस्तूष्णीमासीनांस्तूष्णीमासीनैरद्यमानान् । स होवाच-भीष्मं बत भोः पुरुषान्वा एतत्पुरुषास्तूष्णीमासीनाँस्तूष्णीमासीना अदंतीति । ते होचुः-इत्थं वा इमेऽस्मानमुष्मिन् लोकेऽसचंत । तान् वयमिदमिह प्रतिसचामहा इति । स होवाच-अस्तीह प्रायश्चित्ती३रिति । अस्तीति । काऽति । पितैव ते वेदेति ॥ ५ ॥

स ह तत एवोदङ् प्रवव्राजैद्ध पुरुषैः पुरुषानाक्रंदयत आक्रंदयद्भिरद्यमानान् । स होवाच-भीष्मं बत भोः पुरुषान् वा आक्रंदयत आक्रंदयंतोऽदंतीति । ते होचुः-इत्थं वा इमेऽस्मानमुष्मिन् लोकेऽसचंत । तान् वयमिदमिह प्रतिसचामहा इति । स होवाच-अस्तीह प्रायश्चित्ती३रिति । अस्तीति । काऽति । पितैव ते वेदेति ॥ ६ ॥

---

एवं दक्षिणस्यां दिशि गमनमुक्त्वा अनंतरं प्रतीच्यां दिशि आह-स ह तत एवेति । 'ततः' दक्षिणदिग्गमनानंतरमेव । 'सः' खलु भृगुः प्रत्यङ्मुखः सन् प्रतीचीं दिशं 'प्रवव्राज' इत्यादि पूर्ववत् । तूष्णीमासीनानिति । 'तूष्णीं' वाग्व्यवहारपरित्यागेन उपविशतः पुरुषान् तथाविधपुरुषैरद्यमानानित्यर्थः । गतमन्यत् ॥ ५ ॥

अथ उदीच्यां दिशि प्रव्रजनं विधत्ते-स ह तत एवेति । 'उदङ्' उदङ्मुखः । आक्रंदयत इत्यादि । आक्रंदनं आक्रोशनं कुर्वतः पुरुषान् तादृशैः 'पुरुषैः' 'अद्यमानान्' भक्ष्यमाणानित्यर्थः । गतमन्यत् ॥ ६ ॥

स ह तत॑ऽएवैतयोः पूर्व॑योः । ( रु ) उत्तरमन्ववान्तरदेशम्प्रवव्राजैदु स्त्रियौ कल्याणीञ्चातिकल्याणीञ्च तेऽअन्तरेण पुरुषः कृष्णः पिङ्गाक्षो दण्डपाणिस्तस्थौ त॒ᳪ᳭ हैनं दृष्ट्वा भीर्व्विवेद स हेत्य सम्विवेश तᳪ᳭ ह पितोवाचाधीष्व स्वाध्यायङ्कस्मान्नु स्वाध्यायं नाधीषऽइति स होवाच किमध्येष्ये न किञ्चनास्तीति तद्ध वरुणो व्विदाञ्चकाराद्रचग्वाऽइति ॥७॥

स होवाच । यान्वै तत्प्राच्यां दिश्यद्राक्षीः पुरुषैः पुरुषान्पर्व्वाण्येषा-म्पर्व्वशः सम्वृश्चं पर्व्वशो व्विभजमानानिदं त॒वेदम्ममेति व्वनस्पतयो वै

---

स ह तत एवैतयोः पूर्वयोरुत्तरमन्ववांतरदेशं प्रवव्राजेदु स्त्रियौ कल्याणीं चातिकल्याणीं च । ते अंतरेण पुरुषः कृष्णः पिंगाक्षो दण्डपाणिस्तस्थौ । तं हैनं दृष्ट्वा भीर्विवेद । स हेत्य संवि-वेश । तं ह पितोवाच—अधीष्व स्वाध्यायम् । कस्मान्नु स्वाध्यायं नाधीष इति । स होवाच—किम-ध्येष्ये, न किंचनास्तीति । तद्ध वरुणो विदांचकार—अद्रचग्वा इति ॥ ७ ॥

स होवाच—यान् वै तत् प्राच्यां दिश्यद्राक्षीः, पुरुषैः पुरुषान् पर्वाण्येषां पर्वशः संवृश्चं

---

अथ पूर्वयोरवांतरदेशस्य व्रजनं दर्शयति—स ह तत एवेति । 'सः' खलु भृगुः उदगगमनानंतरमेव 'एतयोः' पूर्वोक्तयोर्दिशोः । उत्तरभागमवांतरदेशं 'अनु' लक्ष्य 'प्रवव्राजेदु' प्रजगामैव । तत्र खलु व्रजित्वा 'कल्याणीं' शोभनां 'अतिकल्याणीं' चाशोभनां द्वे स्त्रियावद्राक्षीत् । 'ते अंतरेण' । "अंतरा-ऽन्तरेणयुक्ते" ( पा. सू. २ । ३ । ४ ) इति द्वितीया । कश्चित् 'पुरुषः' 'पिंगाक्षः' पिंगे पिंगलवर्णे अक्षिणी यस्येति "बहुव्रीहौ सक्थ्यक्ष्णोः" ( पा. सू. ५ । ४ । ११३ ) इति षच् समासांतः । 'दंड-पाणिः' उद्यतदंडहस्तः । 'तस्थौ' स्थितवान् । तं हैनं दृष्ट्वा भीर्विवेदेति । 'तं' पुरुषं 'दृष्ट्वा' 'भीर्विवेद' भीतिं लब्धवान् । "विद्लृ लाभे" ( धा. पा. तु. उ. १९१ ) इत्यस्माल्लिट् । भीरिति "सुपां सुलुक्" ( पा. सू. ७ । १ । ३९ ) इति द्वितीयैकवचनस्य सु आदेशः । एवं चतसृषु दिक्षु उग्रकर्माणि दृष्ट्वा अंते चावांतरदेशे शोभनाशोभनयोः स्त्रियोर्मध्ये स्थितं भयंकरं पुरुषविशेषं च दृष्ट्वा भीतः स किं कृतवान् इति तदाह—स हेत्यादि । 'सः' खलु । एत्यागत्य पितृगृहं प्राप्य 'संविवेश' संवेशनं शयनं कृतवान् । एवं वरुणः । पुत्रस्य भृगोः अहंकारमपनीय तस्मै उपदिदेशेत्याह—तं हेति । 'तं' खलु भृगुं पिता वरुणः 'उवाच' उक्तवान् । किमिति ? हे पुत्र ! 'स्वाध्यायं' स्वशाखामधीष्व पठ । 'कस्मात्' 'स्वाध्यायं' 'नाधीषे' न पठसि । "इङ् अध्ययने" ( धा. पा. अ. आ. ३६ ) इति धातुः । एवं पित्रा उक्ते पुत्रस्य प्रतिवचनं दर्शयति—स होवाचेति । 'सः' खलु पुत्रः 'उवाच' उक्तवान् । 'किमध्येष्ये' कस्य वेदस्याध्ययनं करिष्यामि । 'किंचन' किमपि अनधीतं अध्येतव्यं मम नास्तीति । तद्ध वरुण इति । तत्तत्र भृगुणा एवमुक्ते सति वरुणस्तस्याभिप्रायं 'विदांचकार' ज्ञातवान् । 'अद्रग्वै' अदृष्टः आहितः खलु त्वमसि ॥ ७ ॥

अथ तेन भृगुणा प्रागादिदिक्षु यत् यत् पूर्वं दृष्टं तत्सर्वं तस्योपदिशति—स होवाचेति । 'सः' खलु

तेऽ अभूवन्त्स यद्वनस्पतीनाᳩं समिधमादधाति तेन व्वनस्पतीनवरुन्धे तेन व्वनस्पतीनां लोकं जयति ॥ ८ ॥

( त्यु ) अथ यानेतद्दक्षिणायां दिश्यद्राक्षीः । पुरुषैः पुरुषान्पर्व्वाण्येषाम्पर्व्वशः सङ्कर्तम्पर्व्वशो व्विभजमानानिदं तवेदम्ममेति पशवो वै तेऽ अभूवन्त्स यत्पयसा जुहोति तेन पशूनवरुन्धे तेन पशूनां लोकञ्जयति ॥ ९ ॥

( त्यु ) अथ यानेतत्प्रतीच्यां दिश्यद्राक्षीः । पुरुषैः पुरुषाँस्तूष्णीमासीनाँस्तूष्णीमासीनैरद्यमानानोषधयो वै ताऽ अभूवन्त्स यत्तृणेनावज्योतयति तेनौषधीरवरुन्धे तेनौषधीनां लोकं जयति ॥ १० ॥

---

पर्वशो विभजमानान्, इदं तवेदं ममेति । वनस्पतयो वै ते अभूवन् । स यद्वनस्पतीनां समिधमादधाति । तेन वनस्पतीनवरुंधे । तेन वनस्पतीनां लोकं जयति ॥ ८ ॥

अथ यानेतद्दक्षिणायां दिश्यद्राक्षीः, पुरुषैः पुरुषान् पर्वाण्येषां पर्वशः संकर्तं पर्वशो विभजमानान्, इदं तवेदं ममेति । पशवो वै ते अभूवन् । स यत् पयसा जुहोति । तेन पशूनवरुंधे । तेन पशूनां लोकं जयति ॥ ९ ॥

अथ यानेतत् प्रतीच्यां दिश्यद्राक्षीः, पुरुषैः पुरुषान् तूष्णीमासीनान् तूष्णीमासीनैरद्यमानान्, ओषधयो वै ता अभूवन् । स यत् तृणेनावज्योतयति । तेनौषधीरवरुंधे । तेनौषधीनां लोकं जयति ॥ १० ॥

---

वरुणः ' उवाच ' उक्तवान् । ' यान् ' खलु पुरुषान् तत्तत्र ' प्राच्यां दिशि ' हे पुत्र ! त्वं ' अद्राक्षीः ' दृष्टवानसि । पुरुषैः पुरुषानित्यादि पूर्ववत् । वनस्पतयो वै ते इति । 'ते' पर्वशो वृश्च्यमानाः पलाशखदिरादिवनस्पतयः ' अभूवन् ' । तथा सति ' सः ' यजमानः ' वनस्पतीनां ' संबंधिनीं ' समिधं ' संवृश्च्य अग्नावादधातीति यदस्ति ' तेन वनस्पतीनवरुंधे ' स्वाधीनत्वेन लभते । तेनावरोधेन ' वनस्पतीनां ' संबंधी यो लोकः तं ' जयति ' प्राप्नोति ॥ ८ ॥

अथ दक्षिणस्यां दिशि दृष्टस्य स्वरूपं कथयति—अथ यानेतदिति । पूर्ववद्योज्यम् । पशवो वै त इति । 'ते' पर्वशः संकृत्यमानाः छिद्यमानाः पुरुषाः ' पशवः ' गवादय आसन्नित्यर्थः । तथा सति ' सः ' यजमानः ' पयसा ' अग्निहोत्रं ' जुहोतीति ' यदस्ति ' तेन पशूनवरुंधे ' तेन पश्ववरोधनेन ' पशूनां ' सम्बन्धिनं ' लोकं जयति ' लभते ॥ ९ ॥

अथ प्रतीच्यां दिशि दृष्टस्य स्वरूपमाह-अथ यानेतदिति । तूष्णीमासीनैरद्यमानानित्यंतं पूर्ववत् । ओषधयो वै ता इति । तास्तूष्णीमासीनैरद्यमानाः ' औषधयः ' खलु ' अभूवन् ' । तासामवरोधोपायमाह—स यदिति । ' सः ' यजमानः अग्निहोत्रकर्मणि तत्साधनद्रव्यं तृणेन दर्भात्मकेन ' अवज्योतयति ' अवद्योतयति अवाङ्मुखं हविष उपरि द्योतनं करोति इति यदस्ति ' तेन ' तज्जातीयाः सर्वाः ' ओषधीरवरुन्धे ' । सिद्धमन्यत् ॥ १० ॥

( त्यु ) अथ यानेतदुदीच्यां दिश्यद्राक्षीः । पुरुषैः पुरुषानाक्रन्दयतऽआक्रन्दयद्भिरद्यमानानापो वै ताऽअभूवन्त्स यदपः प्रत्यानयति तेनापोऽवरुन्धे तेनापां लोकं जयति ॥ ११ ॥

( त्यु ) अथ येऽ एते स्त्रियावद्राक्षीः । कल्याणीञ्चातिकल्याणीञ्च सा या कल्याणी सा श्रद्धा स यत्पूर्वामाहुतिञ्जुहोति तेन श्रद्धामवरुन्धे तेन श्रद्धाञ्जयत्यथ याऽतिकल्याणी साऽश्रद्धा स यदुत्तरामाहुतिञ्जुहोति तेनाश्रद्धामवरुन्धे तेनाश्रद्धाञ्जयति ॥ १२ ॥

( त्यु ) अथ यऽ एते । सोऽन्तरेण पुरुषः कृष्णः पिङ्गाक्षो दण्डपाणिरस्थात्क्रोधो वै सोऽभूत्स यत्स्रुच्यप ऽआनीय यन्निनयति तेन क्रोधमव-

---

अथ यानेतदुदीच्यां दिश्यद्राक्षीः, पुरुषैः पुरुषानाक्रंदयत आक्रंदयद्भिरद्यमानान् । आपो वै ता अभूवन् । स यदपः प्रत्यानयति । तेनापोऽवरुंधे । तेनापां लोकं जयति ॥ ११ ॥

अथ ये एते स्त्रियावद्राक्षीः कल्याणीं चातिकल्याणीं च । सा या कल्याणी सा श्रद्धा । स यत्पूर्वामाहुतिं जुहोति । तेन श्रद्धामवरुंधे । तेन श्रद्धां जयति । अथ याऽतिकल्याणी साऽश्रद्धा । स यदुत्तरामाहुतिं जुहोति । तेनाश्रद्धामवरुंधे । तेनाश्रद्धां जयति ॥ १२ ॥

अथ य एते सोऽन्तरेण पुरुषः कृष्णः पिंगाक्षो दंडपाणिरस्थात् । क्रोधो वै सोऽभूत् । स यत्

---

अथोत्तरदिशि दृष्टस्य स्वरूपमुपदिशति—अथ यानेतदिति । 'अथ यान्' पुरुषान् 'उदीच्यां दिशि अद्राक्षीः' । कथंभूतान् 'आक्रंदयतः' आक्रंदनमाक्रोशनं कुर्वाणान् 'आक्रंदयद्भिः' आक्रोशनं कुर्वद्भिः अन्यैः 'पुरुषैः' 'अद्यमानान्' भक्ष्यमाणान् । आपो वै ता इत्यादि । तथाविधाः आक्रंदयद्भिरद्यमानाः पुरुषाः 'आपः' खलु 'ता अभूवन्' । सर्वप्राणिभिरुपभुज्यमाना आप एव आक्रंदयत्पुरुषरूपेण दृष्टा इत्यर्थः । अथ तासामवरोधोपायमाह—स यदप इति । 'सः' यजमानः अग्निहोत्रसाधने तप्ते पयसि 'अपः' उदकं 'प्रत्यानयति' उपर्यासिंचतीति यदस्ति 'तेन' ताः 'अपः अवरुंधे' ॥ ११ ॥

अथ ये अवांतरदिशि स्त्रियौ दृष्टे तयोः स्वरूपमाह—अथ ये एते इति । तत्र 'या' 'कल्याणी' शोभना स्त्री दृष्टा 'सा श्रद्धा' श्रुतिस्मृत्युदितकर्मस्वभिरतिरूपा देवता । तस्या अवरोधोपायमाह—स यत्पूर्वामिति । अग्निहोत्रकर्मणि या पूर्वाहुतिः, तया श्रद्धा प्राप्यते इत्यर्थः । 'अथ या अतिकल्याणी' अशोभना स्त्री दृष्टा 'सा अश्रद्धा' श्रद्धाभावरूपा देवता । तस्या अवरोधोपायमाह—स यदुत्तरामिति । अग्निहोत्रकर्मणि या उत्तरा आहुतिर्हूयते, तया निंदितकर्मविषयामश्रद्धां पुरुषः प्राप्नोतीत्यर्थः ॥ १२ ॥

अथैनयोर्मध्ये स्थितस्य पुरुषस्य स्वरूपमाह-अथ य एते इति । 'अस्थात्' स्थितवान् । 'स कृष्णः' 'पुरुषः' 'क्रोधः अभूत्' । क्रोधरूपा देवतेत्यर्थः । तस्य जयोपायमाह—स यदिति । 'सः' यज-

रुन्धे तेन क्रोधञ्जयति स यऽ एवं विद्वानग्निहोत्रञ्जुहोति तेन सर्व्वं-ञ्जयति सर्व्वमवरुन्धे ॥ १२ ॥

इति चतुर्थप्रपाठके चतुर्थं ब्राह्मणम् ॥ ११-४-४ ॥ ( ६. १. ) ॥

जनको ह वै वैदेहः । ( हो ) ब्राह्मणैर्धावयद्भिः समाजगाम श्वेतकेतुना-ऽऽरुणेयेन सोमशुष्मेण सात्ययज्ञिना याज्ञवल्क्येन तान्होवाच कथं-ङ्कथमग्निहोत्रञ्जुहुथेति ॥ १ ॥

स होवाच श्वेतकेतुरारुणेयः । ( यो ) घर्म्मावेव सम्राडहमजस्रौ यशसा विष्यन्दमानावन्योऽन्यस्मिञ्जुहोमीति कथं तदित्यादित्यो वै घर्म्मस्तꣳ सायमग्नौ जुहोम्यग्निर्वै घर्म्मस्तम्प्रातरादित्ये जुहोमीति किꣳ स भवति

---

स्रुच्यप आनीय यन्निनयति । तेन क्रोधमवरुंधे । तेन क्रोधं जयति । स य एवं विद्वानग्निहोत्रं जुहोति । तेन सर्वं जयति । सर्वमवरुंधे ॥ १२ ॥

जनको ह वै वैदेहो ब्राह्मणैर्धावयद्भिः समाजगाम श्वेतकेतुनाऽऽरुणेयेन, सोमशुष्मेण सात्ययज्ञिना, याज्ञवल्क्येन, तान्होवाच कथं कथमग्निहोत्रं जुहुथेति ॥ १ ॥

स होवाच श्वेतकेतुरारुणेयः । घर्मावेव सम्राडहमजस्रौ यशसा विष्यंदमानावन्योऽन्यस्मिन् जुहोमीति । कथं तदिति । आदित्यो वै घर्मः । तं सायमग्नौ जुहोमि । अग्निर्वै घर्मः । तं प्रातरादित्ये

---

मानः अग्निहोत्रकर्मणि आहवनीयहोमानन्तरं 'स्रुचि' अग्निहोत्रहवण्याम् 'अपः' आनीयोदकमासिच्य 'निनयति' सिंचतीति यदस्ति 'तेन क्रोधमवरुन्धे' स्वाधीनं करोति । कृत्वा च तं क्रोधं 'जयति' निराकरोति । एवमाख्यायिकया पितापुत्रसंवादेन अग्निहोत्रसंबंधिनां समिदाधानादीनां वनस्पत्यादिलोकजयप्राप्तिरुक्ता । एतद्विदुषोऽप्यस्त्येवेत्याह—**स य एवं विद्वानिति** । तेनाग्निहोत्रेण विद्यासहितेन । सिद्धमन्यत् ॥ १२ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यंदिनीयशतपथब्राह्मणभाष्ये एकादश-काण्डे षष्ठेऽध्याये प्रथमं ब्राह्मणम् ॥ ( ११ । ६ । १ ) ॥

तथा अग्निहोत्रहोमे पूर्वोक्तयोराहुत्योरूर्ध्वगत्यादिविषयां विद्यां वक्तुं आख्यायिका प्रस्तूयते—**जनको ह वै वैदेह** इत्यादिना । 'धावयद्भिः' देशांतरादागतैः ब्राह्मणैः 'समाजगाम' संगतो बभूव । तान् ब्राह्मणानाह—**श्वेतकेतुनेति** । 'श्वेतकेतुः' नामारुणेः पुत्रः । 'सोमशुष्मः' नाम सत्ययज्ञस्य पुत्रः कश्चित् । याज्ञवल्क्यस्तृतीयः । एवमेतैस्त्रिभिः संगतो जनकः अग्निहोत्रविषयं विचारं कृतवान् इत्याह—**तान् होवाचेति** । 'तान्' श्वेतकेतुप्रमुखान् ब्राह्मणान् 'उवाच' उक्तवान् । हे ब्राह्मणाः ! यूयं केन प्रकारेण अग्निहोत्राख्यं होमं कुरुथ । तत्सर्वं ब्रूतेत्यर्थः ॥ १ ॥

तत्र प्रथमं श्वेतकेतुनोक्तं प्रतिवचनं दर्शयति—**स होवाचेति** । **घर्मावेवेत्यादि** । श्वेतकेतुवाक्यम् । हे 'सम्राट्'

य॒ऽएवञ्जु॒होतीत्यज॑स्त्रऽएव॒ श्रि॒या य॒शसा भवत्येत॒योश्च दे॒वत॑योः सा॒युज्य॑ᳬँ स॒लोक॒ताञ्जयतीति ॥ २ ॥

( त्यु ) अ॒थ हो॑वाच सो॒मशु॑ष्मः सा॒त्यय॒ज्ञिः । ( स्ते ) ते॒जऽ ए॒व सम्म्रा॒डहं ते॒जसि जु॒हो॒मी॒ति कथ॒न्तदि॒त्यादि॒त्यो वै ते॒जस्त॒ᳬँ सा॒यम॒ग्नौ जु॒हो॒म्य॒ग्निर्वै ते॒जस्तं प्रा॒तरा॒दित्ये जु॒हो॒मी॒ति कि॒ᳬँ स॒ भवति य॒ऽ ए॒वञ्जु॒होतीति ते॒जस्वी य॒शस्व्य॑न्ना॒दो भ॒वत्येत॒योश्चै॒व दे॒वत॑योः सा॒युज्य॑ᳬँ स॒लोक॒ताञ्जयतीति ॥ ३ ॥

(त्यु) अ॒थ हो॑वाच या॒ज्ञवल्क्यः । (ल्क्यो) य॒दहमग्निमु॒द्धराम्य॒ग्निहो॒त्रमे॒व त॒दु॒द्यच्छा॒म्यादि॒त्यम्वा॒ऽअस्तं य॒न्त॒ᳬँ स॒र्व्वे दे॒वाऽ अ॒नु॒यन्ति ते॒ मऽए॒तु-

जुहोमीति । किं स भवति । य एवं जुहोतीति । अजस्त्र एव श्रिया यशसा भवति । एतयोश्च देवतयोः सायुज्यं सलोकतां जयतीति ॥ २ ॥

अथ होवाच सोमशुष्मः सात्ययज्ञिः । तेज एव सम्राट् । अहं तेजसि जुहोमीति । कथं तदिति । आदित्यो वै तेजः । तं सायमग्नौ जुहोमि । अग्निर्वै तेजः । तं प्रातरादित्ये जुहोमीति । किं स भवति । य एवं जुहोतीति । तेजस्वी यशस्व्यन्नादो भवति । एतयोश्चैव देवतयोः सायुज्यं सलोकतां जयतीति ॥ ३ ॥

अथ होवाच याज्ञवल्क्यः । यदहमग्निहोत्रमुद्धरामि । अग्निहोत्रमेव तदुद्यच्छामि । आदित्यं वा

जनक ! ' अजस्त्रौ ' संततौ दीप्यमानौ ' यशसा ' प्रकाशेन 'विष्यन्दमानौ' कृत्स्नं जगत् व्याप्नुवन्तौ प्रकाशयंतौ ' घर्मौ ' अग्न्यादित्यावेव 'अन्योऽन्यस्मिन् जुहोमीति' । कथं तद्धवनमिति जनकेन पृष्टे प्रतिवक्ति—आदित्यो वै घर्म इति । दीप्यमानत्वात् घर्म आदित्यः । " घृ क्षरणदीप्त्योः "–( धा. पा. जु. प. १४ ) इत्यस्मात् औणादिको मप्रत्ययः । तं घर्मशब्दाभिधेयं आदित्यं सायंकाले अग्नावनुप्रविष्टम् ' अहं जुहोमि ' हविषा तर्पयामि । अथाग्निरपि घर्मः । स प्रातरादित्यमनुप्रविशति । तमग्निं प्रातःकाले ' आदित्ये ' स्थितं हविषा प्रीणयामि । एवं विदुषो जुह्वतः प्रश्नपूर्वकं फलमाह—किं स भवतीति । यो यजमानः अन्योऽन्यस्मिन्नवस्थितौ घर्मशब्दाभिधेयौ अग्न्यादित्यौ कालद्वये जुहोति । ' सः ' यजमानः किमात्मको भवतीत्यर्थः । य एवमिति । ' श्रिया ' लक्ष्म्या ' यशसा ' कीर्त्या च ' अजस्त्रः ' संततः ' एव भवति ' । एतदैहिकं फलम् । देहावसाने तु एतयोरग्न्यादित्ययोर्देवतयोः ' सायुज्यं ' सयुग्भावम् ' सलोकतां ' समानलोकत्वं च ' जयति ' प्राप्नोति ॥ २ ॥

एवं श्वेतकेतुना स्वाभिमतं अग्निहोत्रहोमस्वरूपमभिहितम् । अथ सोमशुष्मः स्वमतमुक्तवानिति दर्शयति—अथ होवाचेति । 'अथशब्दः' आनंतर्ये । हे ' सम्राट् ! ' तेजोरूपमेव मदीयमग्निहोत्रम् । अतोऽहमग्न्यादित्ययोरुभयत्रानुगते ' तेजसि ' तेजोरूपे जुहोमीति । कथं तदित्यादि पूर्ववत् योज्यम् ॥ ३ ॥

अथ याज्ञवल्क्यः स्वमतमुक्तवानित्याह—अथ होवाचेति । यदहमित्यादि । हे जनक ! ' यत् ' यदा

मग्निमुद्धृतं दृष्ट्वोपावर्तन्तेऽथाहम्पात्राणि निर्णिज्योपवाप्याग्निहोत्रीन्दोहयित्वा पश्यन्पश्यतस्तर्प्पयामीति त्वन्नेदिष्ठं याज्ञवल्क्याग्निहोत्रस्यामीमाᳫंसिष्ठा धेनुशतं ददामीति होवाच नु त्वेवैनयोस्त्वमुत्क्रान्तिं न गतिं नु प्रतिष्ठां न तृप्तिं न पुनरावृत्तिं नु लोकम्प्रत्युत्थायिनमित्युक्त्वा रथमास्थाय प्रधावयाञ्चकार ॥ ४ ॥

ते होचुः । ( ३ ) अति वै नोऽयᳫं राजन्यबन्धुरवादीद्धन्तैनम्ब्रह्मोद्यमाह्वयामहाऽ इति स होवाच याज्ञवल्क्यो ब्राह्मणा वै वयᳫं स्मो राजन्य-

---

अस्तं यंतं सर्वे देवा अनुयन्ति । ते म एतमग्निमुद्धृतं दृष्ट्वोपावर्तंते । अथाहं पात्राणि निर्णिज्योपवाप्याग्निहोत्रीं दोहयित्वा पश्यन् पश्यतस्तर्पयामीति । त्वं नेदिष्ठं याज्ञवल्क्याग्निहोत्रस्यामीमांसिष्ठाः । धेनुशतं ददामीति होवाच । न त्वेवैनयोस्त्वमुत्क्रांतिं न गतिं न प्रतिष्ठां न तृप्तिं न पुनरावृत्तिं न लोकं प्रत्युत्थायिनम्, इत्युक्त्वा रथमास्थाय प्रधावयांचकार ॥ ४ ॥

ते होचुः—अति वै नोऽयं राजन्यबंधुरवादीत् । हंत ! एनं ब्रह्मोद्यमाह्वयामहा इति । स होवाच याज्ञवल्क्यः—ब्राह्मणा वै वयं स्मः । राजन्यबंधुरसौ । यद्यमुं वयं जयेम; कमजैष्मेति ब्रूयाम ।

---

आहवनीयमग्निं गार्हपत्यादहमुद्धरामि । तत्तदानीं ‘ कृत्स्नं ’ अंगोपांगसहितं ‘ अग्निहोत्रमेव ’ ‘ उद्यच्छामि ’ उद्गृह्णामि । एतदेवोद्यमनं प्रतिपादयति—आदित्यं वा अस्तं यंतमित्यादिना । ‘ अस्तं ’ गच्छंतमादित्यं अन्ये ‘ सर्वे देवाः ’ ‘ अनुयन्ति ’ अनुगच्छंति । ‘ ते ’ सर्वे मदीयमेवमग्निमुद्धृतं ‘ दृष्ट्वा ’ नूनमसावग्निहोत्रं होष्यतीत्यभिप्रायेण पुनरावर्तंते । ‘ अथ ’ तेषु उपावृत्तेषु ‘ अहं पात्राणि ’ स्रुक्स्रुवादीनि ‘ निर्णिज्य ’ प्रक्षाल्य ‘ उपवाप्य ’ निधाय ‘ अग्निहोत्रीं ’ गां ‘ दोहयित्वा ’ ‘ पश्यन् ’ सन् तान् देवान् साक्षीकुर्वन् पश्यतस्तान् हविषा ‘ तर्पयामि ’ इत्येवं याज्ञवल्क्येन स्वाभिमते अग्निहोत्रस्वरूपे अभिहिते जनकेन यत् कृतम् तद्दर्शयति—हे याज्ञवल्क्य ! त्वं ‘ नेदिष्ठं ’ अन्तिकतमं अतिशयेन सम्यक् ‘ अग्निहोत्रस्य ’ स्वरूपं ‘ अमीमांसिष्ठाः ’ विचारितवानसि । “ मान पूजायाम् ” ( धा. पा. भ्वा. प. ९९७ ) इत्यस्मात् “ मान्बधदान्शान्भ्यः ”( पा. सू. ३।१।६ ) इति सन्, अभ्यासस्य च दीर्घत्वम् । “ मानेर्जिज्ञासायाम् ” ( पा. सू. ३।१।६ वा. ) इति परिगणनात् विचारार्थता । हे याज्ञवल्क्य ! विदुषे तुभ्यं धेनूनां शतं पारितोषिकं ‘ ददामि ’ ‘ इति ’ खलु तदानीं जनकः ‘ उवाच ’ । एवं त्रिषु ब्राह्मणेषु स्वाभिमतमग्निहोत्ररूपमुक्तवत्सु जनकः स्वावगतं उत्क्रांतिगत्यादिकं याज्ञवल्क्योऽपि न जानातीत्यनुक्रामति—न त्वेवैनयोरिति । तुशब्दः पक्षं व्यावर्तयति । नैव ‘ अनयोः ’ अग्निहोत्राहुत्योर्याज्ञवल्क्य ! त्वं ‘ उत्क्रांतिं ’ उत्क्रमणरूपं जानासि । ‘न गतिं’ गमनम् । ‘ प्रतिष्ठां ’ अनयोरास्पदं न जानासि । तृप्तिस्तर्पणम् । ‘ पुनरावृत्तिः ’ पुनरावर्तनम् । प्रतिलक्ष्योत्थानशीलः प्रत्युत्थायी तादृशलोकं न जानासीति सर्वत्र संबंधः । एवमुक्त्वा ‘ रथमास्थाय ’ अनुरुह्य जनकः ‘ प्रधावयांचकार ’ स्वां पुरीं प्रतिजगामेत्यर्थः ॥ ४ ॥

एवमुक्त्वा यानमारुह्य निर्गते राजनि क्रुद्धा ब्राह्मणाः किं कृतवंत ? इत्याह—ते होचुरित्यादिना । निकृष्टो

बन्धुरसौ यद्यमुम्वयञ्जयेम कुमजैष्मेति ब्रूयामाथ यद्यसावस्माञ्जये-द्ब्राह्मणान्राजन्यबन्धुरजैषीदिति नो ब्रूयुर्म्मेदमाद्द्वमिति तद्धास्य जज्ञु-रथ ह याज्ञवल्क्यो रथमास्थायानुप्रधावयाञ्चकार तᳬं हान्वाजगाम स होवाचाग्निहोत्रं याज्ञवल्क्य व्वेदितू ३ मित्यग्निहोत्रᳬं सम्राडिति ॥ ५ ॥

ते वाऽ एतेऽ आहुती हुतेऽ उत्क्रामतः । ( स्ते ) तेऽ अन्तरिक्षमावि-शतस्तेऽ अन्तरिक्षमेवाहवनीयङ्कुर्व्वाते व्वायुᳬं समिधम्मरीचीरेव शुक्रा-माहुतिन्तेऽ अन्तरिक्षन्तर्प्पयतस्ते ततऽ उत्क्रामतः ॥ ६ ॥

---

अथ यद्यसावस्मान् जयेत् । ब्राह्मणान् राजन्यबंधुरजैषीदिति नो ब्रूयुः । मेदमाद्द्वमिति । तद्धास्य जज्ञुः। अथ ह याज्ञवल्क्यो रथमास्थायानुप्रधावयांचकार ।तं हान्वाजगाम । स होवाच । अग्निहोत्रं याज्ञवल्क्य वेदितू३मिति । अग्निहोत्रं सम्राडिति ॥ ५ ॥

ते वा एते आहुती हुते उत्क्रामतः । ते अंतरिक्षमाविशतः । ते अंतरिक्षमेवाहवनीयं कुर्वाते । वायुं समिधम् । मरीचीरेव शुक्रामाहुतिम् । ते अंतरिक्षं तर्पयतः । ते तत उत्क्रामतः ॥ ६ ॥

---

राजन्यः ' राजन्यबंधुः ' । क्रोधवशात् तस्य निकृष्टत्वारोपः । ' अयं ' ' राजन्यबंधुः ' ' नः ' अस्माकं यज्ञं ' अत्यवादीत् ' अस्मत्तः अतिशयेनोक्तवान् ।' हंत ' इति खेदे । ' एनं ' राजन्यबंधुम् । ' ब्रह्मोद्यं ' ब्रह्मविषये वादं कर्तुं ' आह्वयामहै ' । तत्र चायं पराजितो भविष्यतीत्यभिप्रायः । स होवाचेत्यादि । तेषां मध्ये ' सः ' खलु ' याज्ञवल्क्यः उवाच ' उक्तवान् । वयं ब्राह्मणाः खलु भवामः । ' असौ ' जनकः क्षत्रियः । ' यदि अमुं ' जनकं ब्रह्मोद्येन ' वयं जयेम ' । तर्हि ' कं ' पुरुषं ' अजैष्मेति ब्रूयाम ' । वर्णतो निकृष्टत्वादसौ अस्माभिर्जेतुमनर्ह इत्यर्थः । ' यदि ' चासौ जनक एवास्मान् ' जयेत् ' । तदा ' राजन्यबन्धुः ' क्षत्रियः ' ब्राह्मणान् अजैषीत् ' ' इति नः ' अस्माकं ' अयशः ' सर्वे जना ब्रूयुरित्यर्थः । अतः ' इदं ' ब्रह्मोद्याह्वानं ' मा आद्द्वं ' नाद्रियध्वमित्यर्थः । कथं तर्हि राजन्यबंधुनोक्तं अर्थजातं वयं जानीम इति विचार्य तत्कारणं ऋषयो दृष्टवंत इत्याह–तद्धास्येति । अस्योक्तस्यार्थजातस्यावगमनकारणं ज्ञातवंत इत्यर्थः । तदेव प्रदर्श्यते–अथ ह याज्ञवल्क्य इति । ' अथ ' एवंविचारानंतरमेव ' याज्ञवल्क्यः ' महर्षिः स्वकीयं रथमारुह्य ' अनुप्रधावयांचकार ' शीघ्रमनुजगाम । ' तं ' जनकं ' अन्वाजगाम ' अनुप्राप । ' सः ' च गत्वा आगतं याज्ञवल्क्यं दृष्ट्वा च उक्तवान् । हे याज्ञवल्क्य ! किमग्निहोत्रं ' वेदितुं ' ज्ञातुं आगतोऽसीति । प्रश्नार्थे वाक्यस्य टेः प्लुतः । हे ' सम्राट् ! ' ' अग्निहोत्रं ' वेदितुं आगतोऽस्मीति याज्ञवल्क्यस्य प्रतिवचनम् ॥ ५ ॥

अथ जनकः प्राक् अज्ञातत्वेन आत्मना उपन्यस्तान् उत्क्रांत्यादीन् तस्मै याज्ञवल्क्याय कथयति–ते वा एते इति । ' ते ' त्वया उक्ते ' एते ' सायंप्रातःकालीने अग्निहोत्राहुती 'हुते' अग्नौ प्रक्षिप्ते सत्यौ 'उत्क्रामतः' ऊर्ध्वं गच्छतः । ' ते अंतरिक्षं ' लोकं ' आविशतः ' प्रविशतः । अनंतरं ' ते ' आहुती अंतरिक्षलोकमेव आहवनीयाग्निं ' कुर्वाते ' । अंतरिक्षलोकस्याहवनीयत्वे तत्र यो वायुः तं ' वायुं ' समिद्रूपेण कुरुतः । तथा मरीचयः सूर्यरश्मयः । ता एव ' शुक्रां ' निर्मलां ' आहुतिं ' कुरुतः । एवंभूताः ' ते ' आहुती ' अन्तरिक्षं ' लोकं ' तर्पयतः ' । तस्मादन्तरिक्षात् ' ते ' आहुती ' उत्क्रामतः ' निष्क्रामतः ऊर्ध्वं गच्छतः ॥ ६ ॥

(स्ते) ते द्दिवमुाविशतः। (स्तु) ते द्दिवमेवाहवनीयङ्कुर्व्वाते ऽआदित्यꣳ समिधञ्चन्द्रमसमेव शुक्रामाहुतिन्ते द्दिवन्तर्प्पयतस्ते तुतऽ आवर्त्तेते ॥ ७ ॥

तेऽ इमामुाविशतः। (स्तेऽ) तेऽइमामेवाहवनीयङ्कुर्व्वातेऽअग्निꣳ समिधमोषधीरेव शुक्रामाहुतिन्तेऽ इमान्तर्प्पयतस्ते तुतऽउत्क्रामतः ॥ ८ ॥

(स्ते) ते पुरुषमाविशतः। (स्तु) तस्य मुखमेवाहवनीयङ्कुर्व्वाते जिह्वाꣳ समिधमन्नमेव शुक्रामाहुतिन्ते पुरुषन्तर्प्पयतः स युऽ एवं विद्वानश्नात्यग्निहोत्रमेवास्य हुतम्भवति ते तुतऽउत्क्रामतः ॥ ९ ॥
[ अर्द्धप्रपाठकः॥ कं० ९१ ॥ ]

---

ते दिवमाविशतः। ते दिवमेवाहवनीयं कुर्वाते। आदित्यं समिधम्। चन्द्रमसमेव शुक्रामाहुतिम्। ते दिवं तर्पयतः। ते तत आवर्तेते ॥ ७ ॥

ते इमामाविशतः। ते इमामेवाहवनीयं कुर्वाते। अग्निं समिधम्। ओषधीरेव शुक्रामाहुतिम्। ते इमां तर्पयतः। ते तत उत्क्रामतः ॥ ८ ॥

ते पुरुषमाविशतः। तस्य मुखमेवाहवनीयं कुर्वाते। जिह्वां समिधम्। अन्नमेव शुक्रामाहुतिम्। ते पुरुषं तर्पयतः। स य एवं विद्वानश्नाति। अग्निहोत्रमेवास्य हुतं भवति। ते तत उत्क्रामतः ॥ ९ ॥

---

उत्क्रम्य च 'ते' आहुती 'दिवं' द्युलोकं स्वर्गाख्यं 'आविशतः'। ते दिवमेवेत्यादि। पूर्वेण समानार्थम्। अत्रोत्क्रामत इति उत्क्रांतिरुक्ता। अंतरिक्षमाविशत इति गतिरुक्ता। अंतरिक्षमेवाहवनीयं कुर्वाते इत्यादिना प्रतिष्ठा उक्ता। अंतरिक्षं तर्पयत इति तृप्तिः। अथ पुनरावृत्तिं कथयति। द्युलोकस्य प्रीणनानंतरं ततस्तस्मात् द्युलोकात् 'ते' आहुती 'आवर्तेते' ॥ ७ ॥

आवर्तमाने च ते 'इमां' पृथिवीं 'आविशतः'। ते इमामेवाहवनीयं कुर्वाते इत्यादि व्याख्यातप्रायम्। भूमिरेवाहवनीयोऽग्निः। तदधिष्ठाता अग्निरेव समित्। तत्रत्या औषधय एव शुक्रा शुद्धा आहुतिः। ईदृशी 'ते' आहुती 'इमां' पृथिवीं 'तर्पयतः' ततस्तस्याः पृथिव्याः सकाशात् 'ते' आहुती 'उत्क्रामतः' ॥ ८ ॥

उत्क्रम्य च 'ते' पुरुषं प्रविशतः। 'तस्य' मुखमेवाहवनीयोऽग्निः। जिह्वैव समित्। तेन भुज्यमानमन्नमेव शुक्रा शुद्धा आहुतिः। एतद्वेदनस्यावांतरफलमाह—स य एवं विद्वानिति। एवमनेन प्रकारेण मुखादेराहवनीयादिरूपतां जानन् 'अश्नाति'। 'अस्य' पुरुषस्य तत्सर्वमग्निहोत्रात्मकमेव 'हुतं' भवति। ते तत उत्क्रामत इत्यादि। 'ततः' पुरुषात् 'ते' आहुती 'उत्क्रामतः' ॥ ९ ॥

( स्ते ) ते स्त्रियमाविशतः । ( स्तु ) तस्या॒ उपस्थमेवाहवनीयङ्कुर्वाते धारकाꣳ समिधन्धारका ह वै नामैषैतया ह वै प्रजापतिः प्रजा धारयाञ्चकार रेत॒ एव शुक्रामाहुतिन्ते स्त्रियन्तर्प्पयतः स य॒ एवं विद्वान्मिथुनमुपैत्यग्निहोत्रमेवास्य हुतम्भवति यस्ततः पुत्रो जायते स लोकः प्रत्युत्थाय्येतदग्निहोत्रं याज्ञवल्क्य नातः परतरमस्तीति होवाच तस्मै ह याज्ञवल्क्यो वरं ददौ स होवाच कामप्रश्न॒ एव मे त्वयि याज्ञवल्क्यासदिति ततो ब्रह्मा जनक॒ आस ॥ १० ॥

इति चतुर्थप्रपाठके पञ्चमं ब्राह्मणम् ॥ ११-४-५ ॥ ( ६. २. ) ॥

---

ते स्त्रियमाविशतः । तस्या उपस्थमेवाहवनीयं कुर्वाते । धारकां समिधम् । धारका ह वै नामैषा । एतया ह वै प्रजापतिः प्रजा धारयांचकार । रेत एव शुक्रामाहुतिम् । ते स्त्रियं तर्पयतः । स य एवं विद्वान् मिथुनमुपैति । अग्निहोत्रमेवास्य हुतं भवति । यस्ततः पुत्रो जायते । स लोकः प्रत्युत्थायी । एतदग्निहोत्रं याज्ञवल्क्य ! नातः परतरमस्ति, इति होवाच । तस्मै ह याज्ञवल्क्यो वरं ददौ । स होवाच—कामप्रश्न एव मे त्वयि याज्ञवल्क्यासदिति । ततो ब्रह्मा जनक आस ॥ १० ॥

---

' ते स्त्रियमाविशतः ' । तत्राप्याहवनीयादीन् संपादयति—तस्या उपस्थमेवेति । स्त्रीसंबंधि यत्प्रजननं स आहवनीयोऽग्निः । ' धारकां समिधम् ' इति । तस्य प्रजननस्य या धारका श्रोणिः ताम् ' समिधं कुर्वाते ' । धारकाख्यां निर्ब्रूते—धारका ह वा इति । एतया खलु श्रोण्या पुरा प्रजापतिः ' प्रजा धारयांचकार ' धारितवान् । अतः अस्याः धारयत्यनयेति व्युत्पत्त्या धारकेति नाम संपन्नम् । तस्मिन्नुपस्थरूपे आहवनीयेऽग्नौ रेत एव ' शुक्रा ' निर्मला ' आहुतिः ' एवं ते अग्निहोत्राहुती स्त्रियामाविश्य तां ' स्त्रियं तर्पयतः ' प्रीणयतः । एतद्वेदनस्य फलमाह—स य एवं विद्वानिति । उपस्थादेराहवनीयादिरूपतां ' विद्वान् ' जानन् यः 'मिथुनमुपैति ' स्त्रियमुपगच्छति । ' अस्य ' तदग्निहोत्रमेव ' हुतं भवति ' । ततस्तस्याः स्त्रियाः सकाशात् ' यः पुत्रो जायते ' ' सः ' प्रत्युत्थानशीलो लोकः । एतेन तं लोकं प्रत्युत्थायिनमिति प्रागुक्तमतिदिष्टं भवति । एवं जनकः स्वाभिमतं अग्निहोत्राहुत्योरुत्क्रांत्यादिकं प्रतिपाद्य उपसंहरति—एतदग्निहोत्रमिति । अस्मदुक्तप्रकारेणानुसंधीयमानं एतदेवाग्निहोत्रं कर्म । हे याज्ञवल्क्य ! अतोऽस्मात् ' परतरम् ' अधिकं 'नास्तीति होवाच' एवं जनकेन अग्निहोत्रस्वरूपविशेषे कथिते सति ' तस्मै ' जनकाय ' याज्ञवल्क्यः ' महर्षिः तुष्टः सन् ' वरं ददौ ' । जनकः स्वाभिमतं वरं प्रार्थयते—स होवाचेति । हे याज्ञवल्क्य ! ' त्वयि ' मम ' कामप्रश्नः ' एव ' यथाकामं प्रश्नः ' एवासत् ' भवति । प्रष्टव्याप्रष्टव्यविभागो मा भूदित्यर्थः । ' ततः ' याज्ञवल्क्यवरप्रदानादनन्तरं ' सः ' जनकः ' ब्रह्मा ' ब्रह्मिष्ठः संबभूव ॥ १० ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यंदिनीयशतपथब्राह्मणभाष्ये एकादशकांडे षष्ठेऽध्याये द्वितीयं ब्राह्मणम् ॥ ( ११ । ६ । २ ) ॥

जनको ह वैदेहः । ( हो ) बहुदक्षिणेन यज्ञेनेजे स ह गवाꣳ सहस्र-मवरुन्धन्नुवाचैता वो ब्राह्मणा यो ब्रह्मिष्ठः सऽ उदजतामिति ॥ १ ॥

स होवाच । याज्ञवल्क्योऽर्वाचीरेताऽ इति ते होचुस्त्वꣳ स्विन्नो याज्ञवल्क्य ब्रह्मिष्ठोऽसी३ऽ इति स होवाच नमोऽस्तु ब्रह्मिष्ठाय गोकामाऽएव वयꣳ स्मऽ इति ॥ २ ॥

ते होचुः । को नऽ इमम्प्रक्ष्यतीति स होवाच विदग्धः शाकल्योऽहमिति तꣳ हो प्रतिख्यायोवाच त्वाꣳ स्विच्छाकल्य ब्राह्मणाऽउल्मुकावक्षयणमक्रता३ऽइति ॥ ३ ॥

---

जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेजे । स ह गवां सहस्रमवरुन्धन्नुवाच । एता वो ब्राह्मणा यो ब्रह्मिष्ठः स उदजतामिति ॥ १ ॥

स होवाच याज्ञवल्क्यः—अर्वाचीरेता इति । ते होचुः । त्वं स्विन्नो याज्ञवल्क्य ब्रह्मिष्ठोऽसी३ इति । स होवाच—नमोऽस्तु ब्रह्मिष्ठाय, गोकामा एव वयं स्म इति ॥ २ ॥

ते होचुः—को न इमं प्रक्ष्यतीति, स होवाच विदग्धः शाकल्यः—अहमिति । तं हो प्रतिख्यायोवाच । त्वां स्विच्छाकल्य ! ब्राह्मणा उल्मुकावक्षयणमक्रता ३ इति ॥ ३ ॥

---

अथ अग्निहोत्रदर्शपूर्णमासादियागदेवतानां तत्त्वतः प्राणशब्दाभिधेयपरमात्मरूपतां विजिगीषुकथामुखेन विवक्षुः आख्यायिकां प्रस्तौति—जनको ह वैदेह इति । विदेहदेशानां राजा 'वैदेहः' । बहुदक्षिणेनेति । सहस्रसर्ववेदसदक्षिणेनेत्यर्थः । 'यज्ञेन ईजे' इष्टवान् । यजेर्लिटि यजादित्वात् संप्रसारणम् । स ह गवामित्यादि । 'सः' खलु जनकः 'गवां सहस्रं' यज्ञसंभाराय 'अवरुन्धन्' स्थापयन्नुवाच । हे ब्राह्मणाः ! 'वः' युष्माकं मध्ये 'यो ब्रह्मिष्ठः' ब्रह्मनिष्ठो विद्यातिशयवान् । 'स एताः' सहस्रसंख्याका गाः 'उदजतां' उत्क्षिपतु स्वगृहं गमयत्वित्यर्थः । "अज गतिक्षेपणयोः" ( धा. पा. भ्वा. प. २३० ) इति धातुः ॥ १ ॥

एवं स राज्ञो वाक्यमाकर्ण्य याज्ञवल्क्यो मदीयं गृहं प्रति एता गावः प्रस्थापनीया इत्युक्तवानित्याह—**स होवाचेति** । 'अर्वाचीः' अस्मदभिमुखाः 'एताः' गाः उदजतामित्यनुषंगः । एतत् याज्ञवल्क्यवाक्यं श्रुत्वा क्रुद्धानां अन्येषां ब्राह्मणानां वचनं दर्शयति—त्वं स्विदिति । हे याज्ञवल्क्य ! 'नः' अस्माकं मध्ये 'त्वं स्वित्' स्विदिति वितर्के । त्वं किं ? 'ब्रह्मिष्ठोऽसि' ब्रह्मवित्तमोऽसि इति "क्षियाशीःप्रैषेषु तिङाकांक्षम्" ( पा. सू. ८ । २ । १०४ ) इति निन्दायां प्लुतिः । एवमधिक्षिप्ते सति याज्ञवल्क्येन यदुक्तं तद्दर्शयति—स होवाचेति । युष्माकं मध्ये 'ब्रह्मिष्ठाय' नमोऽस्तु । 'गोकामा एव वयं' केवलं 'स्मः' भवाम इति ॥ २ ॥

एवमुपहसिते सति अन्यैर्ब्राह्मणैर्यत् कृतं तदुपन्यस्यति—ते होचुरिति । 'ते' 'ह' खलु ब्राह्मणाः । 'ऊचुः' उक्तवंतः । 'नः' अस्माकं मध्ये 'कः' 'इमं' याज्ञवल्क्यं 'प्रक्ष्यति' प्रष्टुं समर्थो भवतीति ।

स॒ हो॑वाच । क॒ति दे॒वा या॑ज्ञवल्क्ये॒ति त्र॒यश्च॒ त्री च॑ श॒ता त्र॒यश्च॒ त्री च॑ स॒हस्रे॒त्योमि॑ति हो॑वाच क॒त्येव दे॒वा या॑ज्ञवल्क्ये॒ति त्र॒यस्त्रिँ॒शदि॒त्योमि॑ति हो॑वाच क॒त्येव दे॒वा या॑ज्ञवल्क्ये॒ति त्र॒यऽ इ॒त्योमि॑ति हो॑वाच क॒त्येव दे॒वा या॑ज्ञवल्क्ये॒ति द्वावि॒त्योमि॑ति हो॑वाच क॒त्येव दे॒वा या॑ज्ञवल्क्ये॒त्यध्य॒र्द्धऽ-इ॒त्योमि॑ति हो॑वाच क॒त्येव दे॒वा या॑ज्ञवल्क्ये॒त्येक॒ऽ इ॒त्योमि॑ति हो॑वाच क॒त॒मे ते त्र॒यश्च॒ त्री च॑ श॒ता त्र॒यश्च॒ त्री च॑ स॒हस्रे॒ति ॥ ४ ॥

स॒ हो॑वाच । म॒हि॒मान॑ऽए॒वैषा॑मे॒ते त्र॒यस्त्रिँ॒शत्त्वे॒व दे॒वा ऽइ॒ति क॒त॒मे

---

स होवाच—कति देवा याज्ञवल्क्य ! इति, त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेति, ओमिति होवाच । कत्येव देवा याज्ञवल्क्य ! इति, त्रयस्त्रिंशदिति, ओमिति होवाच । कत्येव देवा याज्ञवल्क्य ! इति, त्रय इति, ओमिति होवाच । कत्येव देवा याज्ञवल्क्य ! इति, द्वाविति, ओमिति होवाच । कत्येव देवा याज्ञवल्क्य ! इति, अध्यर्द्ध इति, ओमिति होवाच । कत्येव देवा याज्ञवल्क्य ! इति, एक इति, ओमिति होवाच । कतमे ते त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेति ॥ ४ ॥

स होवाच—महिमान एवैषामेते, त्रयस्त्रिंशत्त्वेव देवा इति । कतमे ते त्रयस्त्रिंशदिति । अष्टौ वसवः, एकादश रुद्राः, द्वादशादित्याः, त एकत्रिंशत् । इंद्रश्चैव प्रजापतिश्च त्रयस्त्रिंशाविति ॥ ५ ॥

---

एवं विचारावस्थायामेव 'विदग्धः' प्रगल्भः 'शाकल्यः' नाम प्रसिद्धो महर्षिः 'उवाच' अहं प्रक्ष्यामीति । 'तं' शाकल्यं 'प्रतिख्याय' प्रत्यवेक्ष्य याज्ञवल्क्यः 'उवाच' । हे शाकल्य ! इमे 'ब्राह्मणाः' । स्विदिति वितर्के । नूनं 'त्वां' उल्मुकावक्षयणम् । अर्द्धदग्धकाष्ठमुल्मुकं तस्य बहिर्निरसनं अवक्षयणं विनाशः । तादृग्-वक्षयणं तथाविधं त्वां 'अक्रत' अक्रषत । "मन्त्रे घस०"—( पा. सू. २ । ४ । ८० ) इत्यादिना च्लेर्लुक् । अत्रापि पूर्ववन्निन्दायां प्लुतिः ॥ ३ ॥

एतद्वाक्यमनादृत्यैव शाकल्यः प्रष्टुमुपचक्रमे इत्याह—स होवाचेति । हे याज्ञवल्क्य ! 'कति' संख्याकाः 'देवाः' अग्निहोत्रादिषु कर्मसु हविर्भोक्तृत्वेन वर्तंत इति प्रश्नः । 'त्रयस्त्रिंशदिति' अस्योत्तरं याज्ञवल्क्येनोक्तम् । ओमिति निपात एवंशब्दार्थः । हे याज्ञवल्क्य ! त्वया यदुक्तं त्रयस्त्रिंशत्संख्याका देवा इति एवमेवैतदिति शाकल्योऽङ्गीचकारेत्यर्थः । पुनरपि विशेषजिज्ञासया पृच्छति—कति देवा इति । प्रश्नस्य वक्ष्यमाणस्य सर्वस्य एकविषयत्वद्योतनाय सर्वत्र एवकारः । अन्यत् निगदसिद्धम् । द्वितीयप्रश्नस्य 'त्रयः' इत्युत्तरम् । तृतीयस्य 'द्वौ' इति । 'अध्यर्द्धः' इति चतुर्थस्य । 'एकः' इति पंचमप्रश्नस्योत्तरम् । एवं शाकल्ययाज्ञवल्क्ययोः प्रश्नप्रति-वचनाभ्यां पर्यवसितदेवतायाः एकत्वं प्रदर्श्य पुनः शाकल्यस्य उक्ताक्षेपपरं प्रश्नमुद्भावयति—कतमे ते इति । वैश्वदेवनिविदि एवमाम्नायते—"त्रयश्च त्री च शता त्रयश्च त्री च सहस्रा" इति । अयमर्थः—अधिकानि त्रीणि शतानि त्रीणि सहस्राणि च । एतत्संख्यासंख्येया विश्वे देवाः । 'ते कतमे' किंरूपाः । त्रयस्त्रिंशदादिषु त्वयो-क्तेषु यजनीयेष्वनंतर्भावादित्यर्थः ॥ ४ ॥

'सः' खलु याज्ञवल्क्यः 'उवाच' 'एषां' त्रयस्त्रिंशत्संख्याकानां देवानां 'महिमान एव' त्रयश्च त्री च

ते त्रयस्त्रिꣳशदित्यष्टौ व्वसवऽएकादश रुद्रा द्वादशादित्यास्तऽ एकत्रिꣳ शदिन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिꣳशाविति ॥ ५ ॥

कतमे व्वसवऽ इति । ( त्य ) अग्निश्च पृथिवी च व्वायुश्चान्तरिक्षश्चादित्यश्च द्यौश्च चन्द्रमाश्च नक्षत्राणि चेति व्वसवऽएते हीदꣳ सर्व्वं व्वासयन्ते ते यदिदꣳ सर्व्वं व्वासयन्ते तस्माद्वसवऽ इति ॥ ६ ॥

कतमे रुद्राऽइति । दशेमे पुरुषे प्राणाऽ आत्मैकादशस्ते यदाऽस्मान्मर्त्याच्छरीरादुत्क्रामन्त्यथ रोदयन्ति तद्यद्रोदयन्ति तस्माद्रुद्राऽइति ॥ ७ ॥

कतमऽआदित्याऽ इति । द्वादश मासाः संवत्सरस्यैतऽ आदित्याऽएते हीदꣳ सर्व्वमाददाना यन्ति ते यदिदꣳ सर्व्वमाददाना यन्ति तस्मादादित्या ऽइति ॥ ८ ॥

---

कतमे वसव इति । अग्निश्च पृथिवी च वायुश्चांतरिक्षं च आदित्यश्च द्यौश्च चंद्रमाश्च नक्षत्राणि च इति वसवः । एते हीदं सर्वं वासयन्ते । यदिदं सर्वं वासयन्ते, तस्माद्वसव इति ॥ ६ ॥

कतमे रुद्रा इति । दशेमे पुरुषे प्राणाः, आत्मैकादशः । ते यदाऽस्मान्मर्त्याच्छरीरादुत्क्रामंति । अथ रोदयंति । तद्यद्रोदयंति तस्माद्रुद्रा इति ॥ ७ ॥

कतम आदित्या इति । द्वादश मासाः संवत्सरस्य एत आदित्याः । एते हीदं सर्वमाददाना यंति, ते यदिदं सर्वमाददाना यंति; तस्मादादित्या इति ॥ ८ ॥

---

शतेत्यादीनि केवलं माहात्म्यमानान्मन्ये । 'त्रयस्त्रिंशदिति' यदुक्तं स एव परमार्थ इत्याह—त्रयस्त्रिंशत्त्वेवेति । के पुनस्ते त्रयस्त्रिंशदिति पृच्छति—कतमे त इति । 'अष्टौ वसवः' इत्यादि तस्योत्तरम् । त्रयस्त्रिंशाविति । त्रयस्त्रिंशत्संख्यापूरकावित्यर्थः । निगदसिद्धमन्यत् ॥ ५ ॥

प्रश्नपूर्वकं वसूनां स्वरूपमाह—कतमे वसव इति । अग्न्यादीनां वसुशब्दाभिधेयत्वं उपपादयति—एते हीदमिति । 'हि' यस्मादेते अग्न्यादयः 'इदं सर्वं' जगत् 'वासयन्ते' निवासात्मकं कुर्वंति । तस्माद्वसुहेतुत्वात् 'वसवः' इत्युच्यंते इत्यर्थः ॥ ६ ॥

अथ प्रश्नपूर्वकं रुद्राणां स्वरूपमाह—कतमे रुद्रा इति । दशेमे पुरुषे प्राणा इति । सप्त शीर्षण्याः प्राणाः, द्वाववांचौ, दशमः प्राणो नाभिः, तेषां सर्वेषां शब्दानामाश्रयभूतं आत्मशब्दाभिधेयं मन एव 'एकादशः' रुद्रः । तेषां रुद्रशब्दाभिधेयतामाह—ते यदाऽस्मान्मर्त्यादिति । 'ते' आत्मैकादशाः प्राणाः 'यदा' यस्मिन् काले 'अस्मान्मर्त्यात्' मरणधर्मकाच्छरीरात् 'उत्क्रामन्ति' निर्गच्छन्ति । अथानन्तरमेव बांधवान् 'रोदयन्ति' एतदपेक्षं रुद्रनामनिर्वचनं करोति—तद्यद्रोदयंतीति ॥ ७ ॥

अथ प्रश्नपूर्वकं आदित्यानां स्वरूपमाह—कतम आदित्या इत्यादिना । संवत्सरसंबंधिनः चैत्रादयः 'द्वादश मासाः' त एवादित्याः । 'एते' खलु 'इदं सर्वं' चराचरात्मकं जगत् 'आददानाः' स्वीकुर्वन्तो प्रसंतः 'यंति' गच्छंति । ते यदिदमिति । आदित्यनामनिरुक्तिः ॥ ८ ॥

कतमऽइन्द्रः कतमः प्रजापतिरिति स्तनयित्नुरेवेन्द्रो यज्ञः प्रजापतिरिति कतम स्तनयित्नुरित्यशनिरिति कतमो यज्ञऽ इति पशवऽइति ॥९॥

कतमे ते त्रयो देवाऽ इति । ( ती ) इमऽ एव त्रयो लोकाऽ एषु हीमे सर्व्वे देवाऽ इति कतमौ तौ द्वौ देवावित्यन्नं चैव प्राणश्चेति कतमोऽध्यर्द्धऽ इति योऽयम्पवतऽइति यदस्मिन्निदꣳ सर्व्वमध्यार्ध्नोत्तेनाध्यर्द्धऽइति कतमऽ एको देव ऽइति प्राणऽ इति ॥ १० ॥

स होवाच । ( चा ) अनतिप्रश्न्याम्मा देवतामत्यप्राक्षीः पुरेत्तिथ्यै मरिष्यसि न तेऽस्थीनि चन गृहान्प्राप्स्यन्तीति स ह तथैव ममार तस्य

---

कतम इंद्रः कतमः प्रजापतिरिति । स्तनयित्नुरेवेन्द्रः, यज्ञः प्रजापतिरिति । कतमः स्तनयित्नुरिति, अशनिरिति । कतमो यज्ञ इति, पशव इति ॥ ९ ॥

कतमे ते त्रयो देवा इति, इम एव त्रयो लोकाः, एषु हीमे सर्वे देवा इति । कतमौ तौ द्वौ देवाविति, अन्नं चैव प्राणश्चेति । कतमोऽध्यर्द्ध इति, योऽयं पवत इति । यदस्मिन्निदं सर्वमध्यार्ध्नोत्, तेनाध्यर्द्ध इति । कतम एको देव इति, प्राण इति ॥ १० ॥

स होवाच । अनतिप्रश्न्यां मा देवतामत्यप्राक्षीः । पुरेत्तिथ्यै मरिष्यसि । न तेऽस्थीनि चन गृहान्

---

इन्द्रप्रजापत्योः स्वरूपं प्रश्नपूर्वकमाह—कतम इंद्र इति । 'स्तनयित्नुः' स्तननशीलो गर्जन् पर्जन्य एवं 'इन्द्रः' । दर्शपूर्णमासादिः 'यज्ञ एव प्रजापतिरिति' । एकरूपतां व्युदस्य स्तनयित्नुयज्ञयोः प्रश्नपूर्वकं स्वरूपमाह—कतमः स्तनयित्नुरिति । 'अशनिः' प्रसिद्धः । यज्ञसाधनत्वात्पशूनां यज्ञत्वम् ॥ ९ ॥

'कतमे ते त्रयो देवा इति' प्रागुक्तं विवृणोति—कतमे ते त्रय इति । देवानां मध्ये किंलक्षणाः 'ते त्रयो देवाः' "वा बहूनां जातिपरिप्रश्ने डतमच्" (पा. सू. ५।३।९३) इति डतमच् प्रत्ययः । 'इमे' पृथिव्याद्याः 'त्रयो लोकाः' 'एत एव त्रयो देवाः' । 'हि' यस्मात् 'एते' अग्न्यादयो देवाः त्रिषु लोकेषु प्रतिवसंति 'तस्मात्' अग्न्यादिदेवैरधिष्ठितत्वात् अभेदोपचारेण लोका एव देवा इत्यर्थः । द्वावित्यस्य प्रश्नपूर्वकमुत्तरमाह—कतमौ ताविति । देवमनुष्याद्यात्मकं कृत्स्नं जगत् भोक्तृभोग्यात्मकं अतो भोग्यमन्नं भोक्ता प्राणश्चेति इमावेव द्वौ देवौ । अत एवमाम्नायते—" एतावद्वा इदं सर्वमन्नं चैवान्नादश्च सोम एवान्नमग्निरन्नादः " इति । कतमोऽध्यर्द्ध इत्यादि । 'योऽयं' अध्यात्ममधियज्ञं च वायुः 'पवते' अयमेवाध्यर्द्धो देवः । ननु एकस्यैवास्य कथमध्यर्द्धात्मकत्वमित्याशंक्य अध्यर्द्धशब्दं निर्वक्ति—यदस्मिन्निति । 'यत्' यस्मात् 'अस्मिन्' वायौ सूत्रात्मनि आधारभूते 'इदं सर्वं' जगत् 'अध्यार्ध्नोत्' अधिकमृद्धमभवत् । तस्मात् अधिकर्द्धिहेतुत्वात् सर्वदेवतासमष्टिरूपः प्राणः अध्यर्द्धरूप उच्यत इत्यर्थः । 'एकः' इत्येतत् प्रश्नपूर्वकं व्याचष्टे—कतम एको देव इति ॥ १० ॥

एवं याज्ञवल्क्यः शाकल्येन पृष्टं देवतास्वरूपमाविष्कृत्य शाकल्यमधिक्षिपति—स होवाचेति । याज्ञवल्क्यः

ह्राप्यन्यन्मुन्यमानाः परिमोषिणोऽस्थीन्युपजह्रुस्तस्मान्नोपवादी स्यादुत ह्येवंवित्परो भवति ॥ ११ ॥

इति चतुर्थप्रपाठके षष्ठं ब्राह्मणम् ॥ ११-४-६ ॥ ( ६. ३. ) ॥
षष्ठोऽध्यायश्च समाप्तः ॥ ११ ॥ ६ ॥

---

प्राप्स्यन्तीति । स ह तथैव ममार । तस्य ह्राप्यन्यन्मन्यमानाः परिमोषिणोऽस्थीन्यपजह्रुः । तस्मान्नोपवादी स्यात् । उत हि एवंवित्परो भवति ॥ ११ ॥

---

' उवाच ' किमिति ? हे शाकल्य ! ' अनतिप्रश्न्यां ' प्रश्नपदमतिक्रांता प्राणरूपा देवता अनतिप्रश्न्या तां देवतां ' मा अत्यप्राक्षीः ' अतिक्रम्य पृष्टवानसि । ' पुरेतिथ्यै ' पंचम्यर्थे चतुर्थी । आगामिन्यास्तिथेः पुरस्तादेव त्वं देशांतरे ' मरिष्यसि ' । ' ते ' तव ' अस्थीन्यपि ' ' न गृहान् प्राप्स्यंतीति ' । एवं याज्ञवल्क्यः शशाप । सोऽपि शाकल्यः ' तथैव ' याज्ञवल्क्यशापप्रकारेण ' ममार ' मृतो बभूव । तच्छिष्यैः गृहं प्रत्याह्रियमाणानि अस्थीन्यपि ' अन्यन्मन्यमानाः ' सुवर्णादिद्रव्यत्वेन जानंतः ' परिमोषिणः ' तस्कराः ' अपजह्रुः ' । यस्मादेवं ' तस्मात् ' विजिगीषुकथारूपेण तत्त्वनिष्ठमुपेत्य वादी न भवेत् । ' उत ' अपि तु ' एवंवित्परो भवति ' । उक्तप्रकारेण यः प्राणस्वरूपं जानाति तं विद्वांसमुपेत्य तात्पर्येण सेवायुक्तो भवेदित्यर्थः ॥ ११ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यंदिनीयशतपथब्राह्मणभाष्ये एकादशकाण्डे षष्ठेऽध्याये तृतीयं ब्राह्मणम् ॥ ११ । ६ । ३ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं,
सप्ताब्धीन्पञ्चसीरीस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटं च ॥
धान्याद्रिं धन्यजन्मा तिलभवमतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान्गुडकृतमजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणजमनृणः शार्करं चार्कतेजा,
रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये एकादशकाण्डे षष्ठोऽध्यायः समाप्तः ॥ ( ११ । ६ ) ॥

---

१-अत्र ( श. प. १४ । ६ । ९ ) बृहदारण्यकोक्तं शाकल्यब्राह्मणमप्यनुसंधेयम् ।

# अथ सप्तमेऽध्याये प्रथमं ब्राह्मणम् ।

## चतुर्थप्रपाठके च सप्तमं ब्राह्मणम् ।



पशुबन्धेन यजते । पशवो वै पशुबन्धः स यत्पशुबन्धेन यजते पशुमान-सानीति तेन गृहेषु यजेत गृहेषु पशून्बध्नाऽ इति तेन सुयवसे यजेत सुय-वसे पशून्बध्नाऽ इति जीर्य्यन्ति ह वै जुह्वतो यजमानस्याग्नयोऽग्नीञ्जी-र्य्यतोऽनु यजमानो यजमानमनु गृहाश्च पशवश्च ॥ १ ॥ शतम् ९१०० ॥

स यत्पशुबन्धेन यजते । (तेऽग्नी) अग्नीनेवैतत्पुनर्ण्णवान्कुरुतेऽग्नीनाम्पु-नर्ण्णवतामनु यजमानो यजमानमनु गृहाश्च पशवश्चायुष्यो ह वाऽ अस्यैषऽ

---

पशुबंधेन यजते । पशवो वै पशुबन्धः । स यत्पशुबंधेन यजते । पशुमानसानीति । तेन गृहेषु यजेत । गृहेषु पशून् बध्ना इति । तेन सुयवसे यजेत । सुयवसे पशून् बध्ना इति । जीर्यन्ति ह वै जुह्वतो यजमानस्याग्नयः । अग्नीन् जीर्यतोऽनु यजमानः । यजमानमनु गृहाश्च पशवश्च ॥ १ ॥

स यत् पशुबंधेन यजते । अग्नीनेवैतत् पुनर्णवान् कुरुते । अग्नीनां पुनर्णवतामनु यजमानः ।

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

अथ दर्शपूर्णमासवत् नित्यं प्रतिसंवत्सरं यष्टव्यं पशुयागं विधत्ते—पशुबन्धेन इति । पशुर्बध्यते यज्ञार्थं यस्मिन् कर्मणि स पशुबन्धः । "उद्भिदा यजेत" इतिवत् यजिसमानाधिकृतत्वात् यागनामधेयम् । अयमर्थः—पशुबन्धाख्येन यागेन वक्ष्यमाणं फलं भावयेदित्यर्थः । 'यजते' इति वर्तमानापदेशोऽपि पशुयागस्याप्राप्तत्वेन विधेयत्वात् पंचमलकाराश्रयणेन विधिः । तस्य तावत् पशुफलसाधनत्वमाह—पशवो वै पशुबन्ध इति । यः पशुबन्धाख्यो यागः । सोऽव्यभिचारेण पशुसाधनत्वात् 'पशवः' एव । तथा च 'पशुबन्धेन यजते' इति यदस्ति, तेनाहं यजमानः 'पशुमानसानि' बहुपशुको भवानीति । तेनैवाभिप्रायेण पशुयागं कुर्यादित्यर्थः । अर्थात् अनुदवसायापि तेन यष्टव्यमिति विधत्ते—तेन गृहेष्विति । 'तेन' पशुबन्धेन देवयजनांतरमनध्यवसाय स्वेष्वेव 'गृहेषु' यष्टव्यम् । एवं यष्टुरभिप्रायमाह—गृहेषु पशूनिति । 'गृहेषु' मदीयेषु यागफलभूतान् 'पशून् बध्ने' बध्नानि बद्धान् करवाणि अनेनाभिप्रायेण । देशं विधाय कालं विधत्ते—तेन सुयवस इति । शोभनानि यवसानि तृणानि यस्मिन् ऋतौ स कालः सुयवसः । गतमन्यत् । इत्थं पशुबंधस्य फलसाधनतामुक्त्वा दर्शपूर्णमासवन्नित्यत्वं प्रतिपादयितु अकरणे प्रत्यवायमाह—जीर्यंति ह वा इति । अग्निहोत्रं 'जुह्वतः' पशुयागमकुर्वतः 'यजमानस्याग्नयः' गार्हपत्याद्याः 'जीर्यंति' जीर्णा भवंति खलु । जीर्यतोऽग्नीननुलक्ष्य 'यजमानः' जीर्यति । यजमानस्य जरानन्तरं तदीयाः 'गृहाः' गवाद्याः 'पशवश्च' जीर्यन्ति ॥ १ ॥

एवं दोषमुपन्यस्य पशुबन्धस्य तत्परिहारहेतुतामाह—स यत्पशुबन्धेनेति । वपाहुत्यादिपाशुकेन हविषा अग्नीन्

---

१-गृहेषु । का. श्रौ. सू. ६ । ३ । इति ।

आत्मनिष्क्रयणो भवति माꣳसीयन्ति ह वै जुह्वतो यजमानस्याग्नयस्ते यजमानमेव ध्यायन्ति यजमानꣳ सङ्कल्पयन्ति पचन्ति वाऽ अन्येष्वग्निषु वृथा माꣳसमथैतेषान्नातोऽन्या माꣳसाशा विद्यते यस्यो चैते भवन्ति॥२॥

स यत्पशुबन्धेन यजते । (तऽ) आत्मानमेवैतन्निष्क्रीणीते व्वीरेण व्वीरम्वीरो हि पशुर्व्वीरो यजमानऽ एतद्वु ह वै परममन्नाद्यं यन्माꣳसꣳ स परमस्यैवान्नाद्यस्यात्ता भवति तम्वै सम्वत्सरो नानीजानमतीयादायुर्वै सम्वत्सरऽ आयुरेवैतदमृतमात्मन्धत्ते ॥ ३ ॥

इति चतुर्थप्रपाठके सप्तमं ब्राह्मणम् ॥ ११-४-७ ॥ ( ७. १. ) ॥

---

यजमानमनु गृहाश्च पशवश्च । आयुष्यो ह वा अस्यैष आत्मनिष्क्रयणो भवति । मांसीयंति ह वै जुह्वतो यजमानस्याग्नयः । ते यजमानमेव ध्यायन्ति । यजमानं संकल्पयन्ति । पचन्ति वा अन्येष्वग्निषु वृथा मांसम् । अथैतेषां नातोऽन्या मांसाशा विद्यते । यस्य उ चैते भवंति ॥ २ ॥

स यत्पशुबंधेन यजते । आत्मानमेवैतन्निष्क्रीणीते । वीरेण वीरम् । वीरो हि पशुः । वीरो यज-

---

तर्पयित्वा 'पुनर्णवान्' जीर्यदवस्थां विहाय पुनरुद्भूतशक्तिकान् 'कुरुते'। 'अग्नीनां' संबंधिनी या 'पुनर्णवता' पुनरुद्भूतशक्तिता तामनुलक्ष्य 'यजमानोऽपि' पुनर्णवो भवति । यजमानानंतरं तत्संभूताः 'गृहाः पशवश्च' पुनर्णवा भवंति । तस्मात्पशुकामनाभावेऽपि अग्नीनां शक्त्युद्बोधनार्थं संवत्सरे संवत्सरे सुर्यवसकाले पशुयागः कर्तव्यः । अथास्यायुर्हेतुतामाह—आयुष्यो ह वा इति । 'अस्य' यजमानस्य 'एषः' पशुबन्धः 'आयुष्यः' आयुषे हितः आयुर्वृद्ध्यर्थो भवति । कुत इत्यत आह—आत्मनिष्क्रयण इति । यस्मादयं यजमानस्यात्मनः शरीरस्य अग्निभ्यः सकाशात् निष्क्रयणार्थः तस्मादायुष्यः । एतदेव विवृणोति—मांसीयंतीति । अग्निहोत्रं 'जुह्वतो यजमानस्य' अग्नयः 'मांसीयन्ति' मांसं खादितुमिच्छंति । इच्छानन्तरं 'ते' अग्नयः कदा असौ पशुना यजते इति 'यजमानमेव' सर्वदा 'ध्यायन्ति'। काले प्राप्ते पशुना यागाकरणे सति तं यजमानं 'संकल्पयंति' भक्षयितुमध्यवस्यंति । ननु—वृथामांसेनैव क्रयलब्धेनाग्नयः कस्मान्न तोषणीया इत्याशंक्याह—पचंति वा इति । 'अन्येषु' लौकिकाग्निषु 'वृथामांसं' अवैधं हिंसया संपादितं मांसं 'पचंति'। तेन ते लौकिकाग्नयस्तृप्ता भवन्ति । अथशब्दस्तुशब्दार्थः । 'एतेषां' तु गार्हपत्यादीनां वैदिकानामग्नीनां 'नातोऽन्या' अतोऽस्मात् वैधात्मकहविषः अन्या 'मांसाशा' मांसकामना 'न विद्यते' नास्ति । 'यस्यैते' अग्नयः 'भवंति'। अतस्तमेव यजमानं हविष्ट्वेन स्वीकर्तुमुद्युक्ता भवंति ॥ २ ॥

तस्मादेवं विद्वान् यजमानः 'पशुबंधेन यजते' इति यदस्ति 'एतत्' एतेन 'आत्मानं' स्वशरीरमेव

---

१—पशविज्या संवत्सरे संवत्सरे प्रावृषि । आवृत्तिमुखयोर्वा । का. श्रौ. सू. ६ । १-२ । इति ।

**हविर्य॑ज्ञविधो ह वाऽअन्युः पशुबन्धुः । सवविधोऽन्यः स हैष हविर्य॑ज्ञविधो यस्मिन्व्रतमुपनयति यस्मिन्नपः प्रणयति यस्मिन्पूर्णपात्रन्निनयति यस्मिन्विष्णुक्रमान्क्रमयत्यथ हैष सवविधो यस्मिन्नेतानि न क्रियन्ते ॥ १ ॥**

---

मानः । एतद्ध ह वै परममन्नाद्यं यन्मांसम् । स परमस्यैवाऽन्नाद्यस्यात्ता भवति । तं वै संवत्सरो नानीजानमतीयात् । आयुर्वै संवत्सरः । आयुरेवैतदमृतमात्मन् धत्ते ॥ ३ ॥

**पशुबन्धस्येष्टिसवविधत्वेन द्वैविध्याभिधायकं ब्राह्मणम् ।**

हविर्यज्ञविधो ह वा अन्यः पशुबंधः । सवविधोऽन्यः । स हैष हविर्यज्ञविधः, यस्मिन् व्रतमुपनयति । यस्मिन्नपः प्रणयति । यस्मिन्पूर्णपात्रं निनयति । यस्मिन् विष्णुक्रमान् क्रमयति । अथ हैष सवविधः, यस्मिन्नेतानि न क्रियंते ॥ १ ॥

---

अग्निभ्यः सकाशात् ' निष्क्रीणीते ' । पशुलक्षणं हविः मूल्यत्वेन दत्त्वा पुनः स्वं शरीरं स्वीकरोति । पशोर्वीर्यवत्त्वगुणयोगात् वीर्यवतो यजमानस्य तेन निष्क्रय उपपद्यते इत्याह–**वीरेण वीरमिति** । ' निष्क्रीणीते ' इति संबंधः । पशुयजमानयोरुभयोरपि वीर्यवत्त्वात् वीरशब्दाभिधेयता प्रसिद्धा इत्याह–**वीरो हीति** । मांसात्मकं हविः उत्कृष्टान्नत्वेन स्तुवन् तद्यागस्य फलमाह–**एतद्ध ह वा इति** । ' मांसं ' इति यदस्ति । एतदेव खलु ' परमं ' उत्कृष्टं ' अन्नाद्यम् ' । अतस्तेन इष्टवान् यजमानः ' परमस्य ' उत्कृष्टस्यैव ' अन्नाद्यस्य ' ' अत्ता ' भोक्ता ' भवति ' । ' तं ' तथाविधं यजमानं पशुना इष्टवंतं ' संवत्सरो नातीयात् ' नातिक्रामेत् । सर्वथा संवत्सरमध्ये पशुयागः कर्तव्य इत्यर्थः । एवं पशुयागसाधनत्वात् संवत्सरोऽप्यायुरात्मक इत्याह–**आयुर्वै संवत्सर इति** । संवत्सरकालोऽप्यायुरात्मकः । तस्मिन् काले पशुयागं कुर्वन् ' अमृतं ' अखिलं एतत्संवत्सरात्मकमायुरेव ' आत्मन् ' आत्मनि यजमानः ' धत्ते ' धारयति ॥ ३ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यंदिनीयशतपथब्राह्मणभाष्ये एकादशकांडे सप्तमेऽध्याये प्रथमं ब्राह्मणम् ॥ ( ११–७–१ ॥ )

अथ इष्टिविधत्वं सवविधत्वं चेति पशुबंधस्य द्वैविध्यं दर्शयति–**हविर्यज्ञविधो ह वा इति** । ' अन्यः ' एकः ' पशुबंधः ' ' हविर्यज्ञविधः ' हविर्यज्ञो दर्शपूर्णमासेष्टिः तत्प्रकारकः । ' अन्यः ' एकः ' पशुबन्धः ' ' सवविधः ' । सवः सोमः अभिषवयुक्तः सोमयागः तत्प्रकारक इत्यर्थः । तत्र हविर्यज्ञविधस्य स्वरूपमाह–**स हैष हविर्यज्ञविध इति** । ' यस्मिन् ' पशुबंधकर्मणि ' व्रतमुपनयति ' उपगच्छति । प्रणीताख्यानामपां प्रणयनं करोति । अंते पूर्णपात्रनिनयनं विष्णुक्रमणं च यस्मिन् भवति । स पशुबंधो व्रतोपायनादीष्टिधर्माणां योगात् हविर्यज्ञविध इत्यर्थः । एतेषां व्रतोपायनादीनां विरह एव सवविधस्य लक्षणमित्याह–**अथ हैष सवविध इति** ॥ १ ॥

---

१–व्रतोपायनप्रणीताज्यभागावदानपूर्णपात्रविष्णुक्रमान्कुर्याद्धविर्विधयज्ञविधे । का. श्रौ. सू. ६ । ३८ ।

तदाहुः । ( रि ) इष्टिः पशुबन्धा३ महायज्ञा ३ऽ इति महायज्ञऽ इति ह ब्रूयादिष्टिं वै तर्हि पशुबन्धमकुऽर्येनमकृक्षथाऽ इत्येनं ब्रूयात् ॥ २ ॥

( त्तु ) तस्य प्रयाजाऽ एव प्रातःसवनम् । ( म ) अनुयाजास्तृतीयसवनम्पुरोडाशऽ एव माध्यन्दिनꣳ सवनम् ॥ ३ ॥

( न्त ) तद्धैके । वपायाꣳ हुतायान्दक्षिणा नयन्ति तदु तथा नु कुर्य्याद्यो हैनन्तत्र ब्रूयाद्बहिर्द्धा न्वाऽअयम्प्राणेभ्यो दक्षिणाऽ अनैषीन्न प्राणानददक्षदन्धो वा स्रामो वा बधिरो वा पक्षहतो वा भविष्यतीतीश्वरो ह तथैव स्यात् ॥४॥

---

तदाहुः–इष्टिः पशुबंधा३ महायज्ञा३ इति । महायज्ञ इति ह ब्रूयात् । इष्टिं वै तर्हि पशुबंधमकः । उ एनमकृक्षथा इत्येवं ब्रूयात् ॥ २ ॥

तस्य प्रयाजा एव प्रातःसवनम् । अनुयाजास्तृतीयसवनम् । पुरोडाश एव माध्यंदिनं सवनम् ॥ ३ ॥

तद्धैके वपायां हुतायां दक्षिणा नयन्ति । तदु तथा न कुर्यात् । यो हैनं तत्र ब्रूयात् । बहिर्द्धा न्वा अयं प्राणेभ्यो दक्षिणा अनैषीत् । न प्राणानददक्षत् । अंधो वा स्रामो वा बधिरो वा पक्षहतो वा भविष्यतीति । ईश्वरो ह तथैव स्यात् ॥ ४ ॥

---

सवविधत्वमेव सिद्धांतयितुं मीमांसामाह–तदाहुरिति । तत्तत्र पशुयागविषये आहुर्विचारयंति । किमयं पशुयागः ‘ इष्टिः ’ उत ‘महायज्ञः’ ? इति । महांश्चासौ यज्ञश्चेति महायज्ञः सोमयागः । “विचार्यमाणानाम्” (पा. सू. ८ । २ । ९७) इति उभयत्र प्लुतिः । तत्र सिद्धांतमाह–महायज्ञ इति हेति । पशुयागः ‘ महायज्ञः ’ इत्येव ‘ ब्रूयात् ’ । ‘ तर्हि ’ पशुबंधस्य इष्टिरूपत्वे ‘ पशुबंधं ’ पशुयागं पुरोडाशसाध्यामिष्टिमेव ‘ अकः ’ कृतवान् भवति । उशब्दस्तुशब्दार्थे । अपि तु–‘ एनं ’ पशुबंधं ‘ अकृक्षथाः ’ कृष्टवानसीति एवमेव खलु एनमिष्टिविधं पशुबंधं कुर्वाणं ‘ ब्रूयात् ’ । अतो महायज्ञ एव पशुबंध इति साधीयान् पक्षः ॥२॥

ननु–तस्य महायज्ञत्वे कानि पुनस्तत्संबंधीनि त्रीणि सवनानीति तान्याह–तस्य प्रयाजा एवेति । ये इमे एकादश ‘ प्रयाजाः ’ पशुयागात्पुरस्तादनुष्ठीयंते । ‘ त एव ’ पशुयागसंबंधि ‘ प्रातःसवनम् ’ । तथा एकादशानुयाजाः पशुयागस्योपरिष्टात् अनुष्ठीयमाना एव ‘ तृतीयं सवनम् ’ प्रयाजादनंतरं अंगयागात्पूर्वं क्षिप्रविधानात् “ यद्देवत्यः पशुस्तद्देवत्यः पुरोडाशः कार्यः ” इति यः पुरोडाशयागो मध्ये अनुष्ठीयते एतदेव ‘ माध्यंदिनं सवनम् ’ ॥ ३ ॥

एवं त्रीणि सवनानि कल्पयित्वा तदुपजीवनेन दक्षिणाकालं विधित्सुः शाखांतरीयं दक्षिणाकालमनुवदति–तद्धैक इति । ‘ वपायां हुतायां ’ सत्यां मार्जनं कृत्वा पशुपुरोडाशात् प्रागेव ‘ एके ’ शाखिनः पश्वंगभूता ‘ दक्षिणा नयन्ति ’ ऋत्विग्भ्यः प्रयच्छंतीत्यर्थः । तदेतन्निराकरोति–तदु तथेति । यो हैनमित्यादि । ‘एनं’ पूर्वोक्ते काले दक्षिणा नयन्तम् । तत्र कश्चिदभिज्ञ आगत्य ‘ब्रूयात्’ । किमिति ? ‘ अयं ’ यजमानः प्राणेभ्योऽपि ‘ बहिर्द्धा ’ बाह्यदेशे ‘ न्वै ’ खलु ‘ दक्षिणाः अनैषीत् ’ । तया दक्षिणया तान् ‘ प्राणान् ’ ‘ नादद-

---

१–अयं संधिश्छांदस इतिध्येयम् ।

( दि ) इत्थमेव कुर्य्यात् । (त्पु) पुरोडाशेडायामेवोपहूतायां दक्षिणा नये-दैन्द्रो वाऽ अयम्मध्यतः प्राणऽइममेवैतदैन्द्रम्मध्यतः प्राणन्दक्षिणाभि-र्दक्षयत्यैन्द्रम्वै माध्यन्दिनꣳ सवनम्माध्यन्दिने वै सवने दक्षिणा नीयन्ते तस्मात्पुरोडाशेडायामेवोपहूतायान्दक्षिणा नयेत् ॥ ९ ॥

( त्त ) तदाहुः । ( र ) अध्वर्य्यो यद्दीक्षितस्य नानवभृथोऽवकल्पते क्वैनमदिदीक्षऽ इत्यावभृथादनूद्दहꣳहेयुरध्वर्य्युश्च प्रतिप्रस्थाता च होता च मैत्रावरुणश्च ब्रह्मा चाग्नीद्ध्रश्चैतैर्वाऽ एष षड्ढोता तमनुद्रुत्य षड्ढो-तारं जुहोत्येकामाहुतिङ्कृत्वा पञ्च वाऽऽज्याद्द्यौष्पृष्ठमन्तरिक्षमात्माऽङ्गै-र्यज्ञम्पृथिवीꣳ शरीरैः ॥ व्वाचस्पतेऽच्छिद्रया व्वाचाऽच्छिद्रया जुह्वा दिवि देवावृधꣳ होत्रामैरयत्स्वाहेति सैव दीक्षा ॥ ६ ॥

---

इत्थमेव कुर्यात् । पुरोडाशेडायामेवोपहूतायां दक्षिणा नयेत् । ऐंद्रो वा अयं मध्यतः प्राणः । इममेव तदैन्द्रं मध्यतः प्राणं दक्षिणाभिर्दक्षयति । ऐन्द्रं वै माध्यंदिनं सवनम् । माध्यंदिने वै सवने दक्षिणा नीयन्ते । तस्मात्पुरोडाशेडायामेवोपहूतायां दक्षिणा नयेत् ॥ ९ ॥

तदाहुः—अध्वर्यो यद्दीक्षितस्य नानवभृथोऽवकल्पते । क्वैनमदिदीक्ष इति । आवभृथादनूद्दह९ हेयुः । अध्वर्युश्च प्रतिप्रस्थाता च । होता च मैत्रावरुणश्च । ब्रह्मा चाग्नीध्रश्च । एतैर्वा एष षड्ढोता । तमनु-

---

क्षत् ' नावीवृधत् । " दक्ष वृद्धौ " ( धा. पा. भ्वा. प. ६०९ ) इत्यस्माल्लुङि चङि रूपम् । एवं दक्षि-णायां प्राणबाह्यदेशस्थायां प्राणवृद्ध्यभावे सति स यजमानः ' अंधो वा ' ' स्रामः ' व्रणी वा ' बधिरो वा ' ' पक्षहतः ' एकांगवातेन शुष्कार्द्रकायो वा ' भविष्यतीति ' । एवमुक्ते सति ' तथैव ' भवितुं अयं ' ईश्वरः स्यात् ' ॥ ४ ॥

तर्हि कस्मिन् काले दक्षिणादानमित्याशंक्य स्वमतमाह—इत्थमेवेति । ' इत्थं ' अनेन वक्ष्यमाणप्रकारेण दक्षिणादानं कुर्यात् । स एव प्रकार उच्यते—पुरोडाशेडायामिति । वपायागानन्तरं क्षिप्रविधानार्थो निरुक्तो यः पुरोडाशः तस्य या इडा तस्यामेवोपहूतायां मार्जनांते पशुयागांगभूता ' दक्षिणा नयेत् ' । ' अयं मध्यतः ' शरीरमध्ये वर्तमानः ' प्राणः ' ' ऐंद्रो वै ' इंद्रदेवताकः । ' एतत् ' एतर्हि ' इममेवैन्द्रं ' मध्यतो-ऽवस्थितं प्राणं मध्यतो नीयमानाभिः ' दक्षिणाभिः ' ' दक्षयति ' वर्द्धयति बलयति । अपि च पुरोडाशस्य माध्यंदिनसवनरूपत्वमुक्तम् । तत्सवनं साकल्येन ' ऐंद्रं ' इंद्रदेवताकम् । " प्रातःसुतमपिबो हर्यश्व माध्यंदिनं सवनं केवलं ते " इति मंत्रवर्णात् सोमयागे हि ' माध्यंदिने ' तदंगभूताः ' दक्षिणाः ' ऋत्विगर्थं ' नीयन्ते ' । तस्मात् माध्यंदिनसवनत्वेन संस्तुतपुरोडाशेडायामुपहूतायां दक्षिणानयनं कार्यमित्यर्थः ॥ ९ ॥

अथ षड्ढोतृहोमं विधित्सुः तस्य दीक्षारूपतां संपादयितुं प्रश्नमुद्भावयति—तदाहुरिति । हे ' अध्वर्यो ! ' ' दीक्षितस्य ' दीक्षया संस्कृतस्य यजमानस्य ' अनवभृथः ' अवभृथाभावः ' नावकल्पते '

तदाहुः । ( ७ ) अध्वर्यो यदीक्षितस्य नानवभृथोऽवकल्पते क्वैनमवभृथमवनेष्यसीति स यद्धृदयशूलेन चरन्ति स हैवैतस्यावभृथः ॥ ७ ॥ ( थो ) मधुको ह स्माह पैङ्ग्यः । ( ङ्ग्यो ) विसोमेन वाऽ एके पशु-

---

हुत्य षड्ढोतारं जुहोति । एकामाहुतिं कृत्वा पंच वाऽऽज्यात्—"द्यौष्पृष्ठमन्तरिक्षमात्माऽङ्गैर्यज्ञं पृथिवीं शरीरैः । वाचस्पतेऽच्छिद्रया वाचाऽच्छिद्रया जुह्वा दिवि देवावृधं होत्रामैरयत्स्वाहा "—इति । सैव दीक्षा ॥ ६ ॥

तदाहुः—अध्वर्यो यद्दीक्षितस्य नानवभृथोऽवकल्पते । क्वैनमवभृथमवनेष्यसीति । स यत् हृदयशूलेन चरन्ति । स ह एवैतस्यावभृथः ॥ ७ ॥

मधुको ह स्माह पैंग्यः । विसोमेन वा एके पशुबंधेन यजंते । ससोमेनैके । दिवि वै सोम

---

अवभृथस्य दीक्षामोचनरूपत्वात् । 'एनं' पशुबन्धयाजिनं 'क' कुत्र 'अदिदीक्षः' दीक्षया संस्कृतवानसि । ( धा. पा. भ्वा. आ. ६१० ) इति दीक्षेर्ण्यंताल्लुङि रूपम् । इतिशब्दो हेतौ । यस्मादेवं पशुबंधयाजिनः अध्वर्युकृता दीक्षा नास्ति, तस्मात् तन्मोचनरूपात् 'अवभृथात्' 'एनं' 'अनूद्दहेयुः' । सर्वे जना इति शेषः । षट् ऋत्विजः । एतेन ऋत्विग्भिः 'एषः' वक्ष्यमाणो मन्त्रः 'षड्ढोता' षट् यज्ञहोतारो होमनिष्पादकाः यस्मिन्निति व्युत्पत्तेः । 'षड्ढोतारमनुद्रुत्य' पठित्वा पंचगृहीतेनाज्येन 'एकामाहुतिं' जुहुयात् । पंच वेति । एकैकेन स्रुवेण एकैकाहुतिरिति 'पंच वा' आज्याहुतयो होतव्याः । अत एवोक्तं सूत्रकृता " षड्ढोतारं पंचगृहीतं मनसाऽनुद्रुत्य जुहोत्येकामाहुतिं पंच वा "—( का. श्रौ. सू. ६ । ३३ ) इति । तं षड्ढोतृमन्त्रं पठति—द्यौष्पृष्ठमिति । हे 'वाचस्पते !' ब्रह्मन् ! विराडात्मक 'द्यौः' द्युलोकः तव 'पृष्ठं' पृष्ठभागः । अंतरिक्षलोकः 'आत्मा' हृदयस्थानीयः । सः त्वं 'अंगैः' स्वकीयैरवयवैः । 'यज्ञं' च प्राप्नोषि । तथा तव व्यष्टिभूतैर्मनुष्यादिशरीरैः 'पृथिवीं' व्याप्नोषि । व्याप्य च 'अच्छिद्रया वाचा' स्तोत्रशस्त्रादिलक्षणया । तथा च्छिद्ररहितया 'जुह्वा' स्रुचा साधनभूतया । 'दिवि' द्युलोके । 'देवावृधं' देवानां वर्द्धयित्रीम् । 'होत्रां' हूयमानां आहुतिम् । 'ऐरयत्' पुरुषव्यत्ययः । 'अगमयः' । 'स्वाहा' ॐ इदं हविः सुहुतमस्तु । इति मन्त्रार्थः । एषैवाहुतिः पशुबन्धस्य दीक्षा । अतः पशुबन्धात्मकस्य महायज्ञस्य दीक्षाभावादवभृथो न युक्त इति न चोद्यमित्यर्थः ॥ ६ ॥

कः पुनरवभृथ इत्याशंक्य प्रश्नमुद्भावयति—तदाहुरिति । तत्त्र पशुबंधे आहुश्चोदयंति । हे अध्वर्यो ! यद्यस्मात् दीक्षासंस्कृतस्य यजमानस्य महायज्ञस्यावभृथः सन्नवभृथाभावो नावकल्पते । तस्मादवभृथोऽवश्यं संपादनीयः । तमवभृथं 'क' कुत्र प्रदेशे 'एनं' पशुबंधयाजिनं 'अवनेष्यसि' प्रापयिष्यसीति । एवं ब्रह्मवादिनां प्रश्नमुपन्यस्य श्रुतिः स्वयमुत्तरं ब्रूते—स यत् हृदयशूलेनेति । हृदयलक्षणमवदानं यस्मिन् काष्ठे प्रतृद्य पच्यते तत् 'हृदयशूलं' तेन 'चरंति' तस्योद्वासनं कुर्वंतीति यदस्ति । 'एतस्य' पशुबंधस्य 'स एवावभृथः' ॥ ७ ॥

निरूढपशुबंधरूपस्य पालाशयूपस्य पालाशवृक्षद्रव्यं विधित्सुः उपोद्घातयति—मधुको ह स्मेति । पैङ्गि-

---

१—पालाशं बहुलपर्णम् । अभावे खदिरबिल्वरौहितकान् खदिराभावे इतरान् । का. श्रौ. सू. ६।८।१० इति ॥

बन्धेन यजन्ते ससोमेनैके दिवि वै सोमऽआसीत्तङ्गायत्री वयो भूत्वाऽऽहरत्तस्य यत्पर्णमच्छिद्यत तत्पर्णस्य पर्णत्वमिति न्वाऽएतद् ब्राह्मणमुद्यते विसोमेन वाऽ एके पशुबन्धेन यजन्ते ससोमेनैके स हैष विसोमेन पशुबन्धेन यजते योऽन्यम्पालाशाद्यूपङ्कुरुतेऽथ हैष ससोमेन पशुबन्धेन यजते यः पालाशं यूपङ्कुरुते तस्मात्पालाशमेव यूपङ्कुर्वीत ॥ ८ ॥

इति चतुर्थप्रपाठकेऽष्टमं ब्राह्मणम् ॥ ११-४-८ ॥ ( ७. २. ) ॥

स यऽएष बहुसारः । स हापशव्यस्तस्मात्तादृशम्पशुकामो यूपन्न

---

आसीत् । तं गायत्री वयो भूत्वाऽऽहरत् । तस्य यत्पर्णमच्छिद्यत, तत्पर्णस्य पर्णत्वम् । इति न्वा एतत् ब्राह्मणमुद्यते । विसोमेन वा एके पशुबंधेन यजंते । ससोमेनैके । स हैष विसोमेन पशुबंधेन यजते । योऽन्यं पालाशाद्यूपं कुरुते । अथ हैष ससोमेन पशुबंधेन यजते । यः पालाशं यूपं कुरुते । तस्मात् पालाशमेव यूपं कुर्वीत ॥ ८ ॥

स य एष बहुसारः स ह अपशव्यः । तस्मात्तादृशं पशुकामो यूपं न कुर्वीत । अथ य एष फल्गुप्रासहः । स ह पशव्यः । तस्मात् तादृशं पशुकामो यूपं कुर्वीत ॥ १ ॥

---

गोत्रः ' मधुकः ' नाम महर्षिः ' आह स्म ' । ' एके ' केचन यजमानाः ' विसोमेन ' सोमरहितेन ' पशुबन्धेन यजंते ' । इममेव सोमसद्भावं दर्शयितुं पलाशवृक्षस्य सोमविकृतित्वं प्रागुक्तं ( श. प. १ । ७ । १ । १; ३ । ३ । ४ । १० ) स्मारयति—दिवि वै सोम इति । ' दिवि ' द्युलोके खलु पुरा ' सोम आसीत् ' । न पृथिव्यां, नांतरिक्षे । ' तं ' सोमं ' गायत्री ' छंदः ' वयो भूत्वा ' पक्षिरूपमास्थाय ' आहरत् ' आहृतवती । आहरणसमये ' तस्य ' सोमस्य ' यत्पर्णमच्छिद्यत ' । स एव पलाशवृक्षः अभवत् । तस्मादेव कारणात् तस्य ' पर्णवृक्षस्य ' ' पर्णत्वं ' पर्णभावः " पलाशः " इति नाम संपन्नमिति । एवं खलु पुरा ' एतत् ब्राह्मणं ' पलाशोत्पत्तिप्रतिपादकं वाक्यं ' उद्यते ' पठ्यते । एवं पलाशवृक्षस्य सोमविकृतित्वमभिधाय प्रागुक्तमेव द्वैविध्यं अनुवादपूर्वकं विवृणोति—विसोमेन वा इति । ' यः ' यजमानः पलाशवृक्षादन्यवृक्षांतरोत्पन्नं ' यूपं कुरुते ' । एष खलु सोमविकृतिभूतपलाशस्य विरहात् सोमविकृतिरहितेन ' पशुबंधेन यजते ' । अथ खलु ' एषः ' वक्ष्यमाणो यजमानः ' ससोमेन पशुबंधेन यजते ' ' यः ' तत्र पालाशवृक्षाद्दं ' यूपं कुरुते ' । पालाशयूपस्य सोमरूपत्वेन तद्वत्पशुबंधस्य ससोमकत्वं प्रतिपाद्य तत्प्रयोजनसिद्ध्यै तमेव पक्षं निगमयति—तस्मात्पालाशमेवेति ॥ ८ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यंदिनीयशतपथब्राह्मणभाष्ये एकादशकाण्डे सप्तमेऽध्याये द्वितीयं ब्राह्मणम् ॥ ११ । ७ । २ ॥

इत्थं यूपस्य पालाशत्वं प्रतिपाद्य तत्रापि बहुसारस्य पशुविरोधित्वमल्पसारस्य पशुसमृद्धिकारणत्वं च क्रमेण

कुर्व्वीताथ युऽ एषु फल्गुप्रासहः स ह पशुव्यस्तस्मात्तादृशम्पशुकामो यूपङ्कुर्व्वीत ॥ १ ॥

(ता) अथ यस्यैतद्वक्रस्य सतः । शूलऽइवाग्रम्भवति स ह कपोती नाम स यो ह तादृशं यूपङ्कुरुते पुरा ह्यायुषोऽमुं लोकमेति तस्मात्तादृशमायुष्कामो यूपन्न कुर्व्वीत ॥ २ ॥

(ता) अथ यऽएषऽआनतः । (ऽ) उपरिष्टादुपनतो मध्ये सोऽशनायै रूपᳫँ स यो ह तादृशं यूपं कुरुतेऽशनायुका हास्य भार्य्या भवन्ति तस्मात्तादृशमन्नाद्यकामो यूपन्न कुर्व्वीताथ यऽ एषऽ आनतऽउपरिष्टादुपनतो मध्ये सोऽन्नाद्यस्य रूपं तस्मात्तादृशमन्नाद्यकामो यूपङ्कुर्व्वीत ॥ ३ ॥

इति चतुर्थप्रपाठके नवमं ब्राह्मणम् ॥ ११-४-९ ॥ (७. ३.) ॥

---

अथ यस्यैतत् वक्रस्य सतः शूल इवाग्रं भवति । स ह कपोती नाम । स यो ह तादृशं यूपं कुरुते । पुरा ह आयुषोऽमुं लोकमेति । तस्मात्तादृशमायुष्कामो यूपं न कुर्वीत ॥ २ ॥

अथ य एष आनत उपरिष्टादपनतो मध्ये । सोऽशनायै रूपम् । स यो ह तादृशं यूपं कुरुते ।

---

दर्शयति—**स एष बहुसार** इत्यादिना । 'सः अपशव्यः' पशूनामहितः । **अथ य एष फल्गुप्रासह** इति । अथशब्दः उक्तवैलक्षण्यद्योतनार्थ उक्तः । प्रकर्षेण सहते अभिभवतीति 'प्रासहः' बलम् । फल्गु इति तुच्छनाम । अल्पवाचक इत्यर्थः । 'स पशव्यः' । **तस्मात्तादृश**मित्यादि स्पष्टम् ॥ १ ॥

इत्थमल्पसारस्य यूपार्हतामुक्त्वा तस्यैव सन्निवेशविशेषमुपजीव्य दोषमाह—**अथ यस्यैतद्वक्रस्ये**ति । यश्च पलाशवृक्षो वक्रः सन् तीक्ष्णाग्रश्च भवति । 'स ह' स खलु तादृशः 'कपोती' कपोताख्या स्त्री पक्षिसन्निवेशसाम्यात् स पक्षी यथा दुर्निमित्तः स यथा आयुः क्षपयति । एवमेषोऽपीत्यर्थः । तथाविधस्य परिग्रहे सति शतायुर्लक्षणस्य नियतस्य 'आयुषः' मध्ये 'अमुं' 'लोकमेति' म्रियत इत्यर्थः । 'तस्मात्' तादृशः आयुष्कामस्य नेष्ट इत्युक्तं भवति ॥ २ ॥

अथ उक्तयूपवृक्षे अपनत्युपनत्योः क्रमेण अन्नविरोधित्वं अन्नसमृद्धिकरत्वं च दर्शयति—**अथ य एष आनत उपरिष्टादि**त्यादि । अत्यन्तं नम्रः 'अपनतः' । ईषन्नम्र 'उपनतः' । 'भार्याः' भरणीयाः पुत्रभृत्यादयः । ते 'अशनायुकाः' सर्वदा क्षुत्पीडया अशनमेवेच्छन्तो भवन्ति । समानमन्यत् ॥ ३ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये
एकादशकाण्डे सप्तमेऽध्याये तृतीयं ब्राह्मणम् ॥ ११ । ७ । ३ ॥

---

१—"शूलाग्रं वर्जयेन्नित्यं सर्वयज्ञेषु निन्दितम् । उच्छ्रयणे तथाऽनर्हं यूपं वक्रं तु नाहरेत्" इति । का. यूपलक्षणपरि. सू. ॥ १५ ॥

२—शीर्णाकृतिर्विपर्यस्तस्तथैव धनुराकृतिः । उच्छ्रितो यजमानस्य पशुपुत्रविनाशकृत् ॥ १६ ॥ अव्रणो न च शुष्काग्रो मध्ये चोपनतो भवेत् । अग्राच्चैवोन्नतः किंचिद्यूपो वै यज्ञियः स्मृतः" इति । का. यूपलक्षणपरि. सू. ॥ १६ ॥ १७ ॥

३—अशुष्काग्रमूर्ध्वसकलशाखं मध्याग्रोपनतमव्रणम् । का. श्रौ. सू. ६ । ८ । इति ।

स युत्पशुना युक्ष्युमाणः । ( ण्ऽ ) एुकारत्निं यूपङ्कुरुतु ऽइमुमेव तुेन लोकुञ्जयत्युथ युद्द्वयरत्निमन्तुरिक्षलोकुमेव तुेन जयत्युथ युत्त्र्यरत्निन्दिवमेव तुेन जयत्युथ युच्चुतुररत्निन्दिशुऽ एव तुेन जयति सु वाऽएषु त्र्यरत्निर्वैव चुतुररत्निर्वा पशुबन्धयूपो भवत्युथ युोऽत ऊर्ध्वः सौम्युस्यैवु सोऽध्वरस्य ॥ १ ॥

तुदाहुः । (र्ख्) युजेदुाज्यभागौ ना ३ऽ इति युजेदित्याहुश्चुक्षुषी वुाऽ एतेु युज्ञस्य युदुाज्यभागौ किमृते पुरुषश्चक्षुभ्याँ स्यादिति युावद्वै भागिनँ स्वेुन भागधेुयेन नु निर्भजन्त्युनिर्भक्तो वै स तावन्मन्युतेऽथ युदैव तँ स्वेुन भागधेुयेन निर्भजन्त्युथैव स निुर्भक्तो मन्यते स युत्रै-

---

अशनायुका हास्य भार्या भवन्ति। तस्मात्तादृशमन्नाद्यकामो यूपं न कुर्वीत। अथ य एष आनत उपरिष्टादुपनतो मध्ये। सोऽन्नाद्यस्य रूपम्। तस्मात्तादृशमन्नाद्यकामो यूपं कुर्वीत ॥ ३ ॥

स यत्पशुना यक्ष्यमाण एकारत्निं यूपं कुरुते। इममेव तेन लोकं जयति। अथ यत् द्वयरत्निम्, अंतरिक्षलोकमेव तेन जयति। अथ यत् त्र्यरत्निं, दिवमेव तेन जयति। अथ यच्चतुररत्निं, दिश एव तेन जयति। स वा एष त्र्यरत्निर्वैव चतुररत्निर्वा पशुबंधयूपो भवति। अथ योऽत ऊर्ध्वः; सौम्यस्यैव सोऽध्वरस्य ॥ १ ॥

तदाहुः—यजेदाज्यभागौ ना३ इति। यजेदित्याहुः। चक्षुषी वा एते यज्ञस्य। यदाज्यभागौ। किमृते पुरुषश्चक्षुर्भ्यां स्यादिति। यावद्वै भागिनं स्वेन भागधेयेन न निर्भजंति।

---

इत्थं यूपार्हं वृक्षं तत्स्वरूपं चाभिधाय, अथ यूपप्रमाणमाह—स यत् पशुना यक्ष्यमाण इत्यादिना। 'तेन' एकारत्नियूपस्वीकारेण 'इमं लोकं जयति'। परं न स्वर्गमित्यर्थः। एवं 'द्व्यरत्निमंतरिक्षलोकमेव'। एवं त्र्यरत्निचतुररत्निभ्यां द्युलोकं दश दिशश्च जयति। तस्मात्तथाविधोभयजयस्य इष्टत्वात् त्र्यरत्निं चतुररत्निं वा कुर्यात्। ननु—इतः परमपि अरत्निप्रमाणविशेषोऽस्ति; स किं नोपादीयते इत्याकांक्षायां तस्य सोमयागविषयतामाह—अथ योऽत ऊर्ध्वं इति ॥ १ ॥

इत्थं यूपस्योपादेयं प्रमाणमभिधाय तस्याज्यभागयोरवश्यकर्तव्यतामाह—तदाहुर्यजेदाज्यभागौ ना इतीती। आज्यभागौ हि यज्ञस्य चक्षुषी। यथा 'चक्षुर्भ्यामृते' दृशोरभावे 'पुरुषः' 'किं स्यात्?' न किंचिद्भवति। नश्यत्येवेत्यर्थः। तस्मादवश्यमनुष्ठेयौ इत्यभिप्रायः। अथ पशुविशंसनविषयप्रैषमध्ये "अस्ना रक्षः

---

१—त्र्यरत्निश्चतुररत्निर्वा। एकारत्निप्रभृतीनेके। का. श्रौ. सू. ६। २४। २५। २—पञ्चारत्निः पञ्चदशपर्यन्तः सोमे दशसप्तचतुर्दशवर्जमपरिमितो वा। सप्तदश वाजपेये। एकविंशतिरश्वमेधे। का. श्रौ. सू. ६। २९—३१॥

३—सूत्रे तु विकल्पः। तथाच कात्यायनः—हुत्वा वपामभिघारयति पृषदाज्यं ध्रुवां प्रथममाज्यभागौ चेत्। आज्यभागौ कुर्वन्। का. श्रौ. सू. ६। १३९—१४० इति।

तद्धोताऽन्वाहास्ना रक्षः सᳫँसृजताादिति तदेनᳫँ स्वेन भागधेयेन निर्भजति ॥ २ ॥

( त्ये ) एतद्वै पशोः संज्ञप्यमानस्य । हृदयᳫँ शुक्समवैति हृदयाच्छूलन्तद्ये सह हृदयेन पशुᳫँ श्रपयन्ति पुनः पशुᳫँ शुगनुविष्यन्देत पार्श्वतऽ एवैनत्काष्ठे प्रतृद्य श्रपयेत् ॥ ३ ॥

( द्रु ) उपस्तृणीतऽ आज्यम् । ( न्तु ) तत्पृथिव्यै रूपङ्करोति हिरण्य-

---

अनिर्भक्तो वै स तावन्मन्यते । अथ यदैव तं स्वेन भागधेयेन निर्भजन्ति । अथैव स निर्भक्तो मन्यते । स यत्रैतद्धोताऽन्वाह । "अस्रा रक्षः संसृजतात्"–इति । तदेनं स्वेन भागधेयेन निर्भजति ॥ २ ॥

एतद्वै पशोः संज्ञप्यमानस्य हृदयं शुक् समवैति । हृदयाच्छूलम् । तत् ये सह हृदयेन पशुं श्रपयंति । पुनः पशुं शुगनुविष्यंदेत । पार्श्वत एवैनत्काष्ठे प्रतृद्य श्रपयेत् ॥ ३ ॥

उपस्तृणीत आज्यम्; तत्पृथिव्यै रूपं करोति । हिरण्यशकलमवदधाति; तदग्ने रूपं करोति ।

---

संसृजतात् " इति यः प्रैषभागः तेन रक्षोभ्यः स्वभागप्रदानं कृतं भवतीति लोकदृष्टांतेन दर्शयति—यावद्वै भागिनमित्यादिना । 'यावद्वै भागिनं' भागार्हं 'स्वेन भागधेयेन' तवायं भागो दत्त इति वा तस्य तदीयं भागं प्रयच्छत इति वा अभिधानपुरःसरं 'न निर्भजंति' निर्णीतभागं कुर्वंति । 'सः' पुमान् 'अनिर्भक्तो वै' भागान्निष्कासितो न भवति खलु । अनिर्भक्तः अहमिति 'तावन्मन्यते' संपूर्णं मन्यते । 'अथ' उक्तवैपरीत्येन 'यदैव' खलु लोभादिना 'तं' भागार्हं पुरुषं 'स्वेन भागधेयेन निर्भजंति' निर्णीतभागं न कुर्वंति । 'अथैव' तदा खलु । 'सः' तु भागान्निर्भक्तोऽहं भागान्निर्गतोऽहं इत्यात्मानं 'मन्यते' । तस्माल्लोके एवं दर्शनात् 'स होता' 'यत्र' यदा एतदिदानीं 'अन्वाह' । कथं ? "अस्रा रक्षः संसृजतात्" इति । 'अस्रा' पशुरक्तेन 'रक्षः' राक्षसं 'संसृजतादिति' ब्रूयात् । 'तदा एनं स्वेन भागधेयेन निर्भजति' अनेन इतरादेयांगविषयप्रैषवत् एतत् प्रैषवाक्यमपि अवश्यं वक्तव्यमिति उक्तं भवति ॥ २१ ॥

अथ पश्ववयवपाकविषये कंचिद्विशेषमाह—एतद्वै पशोरित्यादिना । 'संज्ञप्यमानस्य' पशोः 'शुक्' मरणजन्यः शोकः 'हृदयं' संप्राप्नोति, तस्य सुखदुःखोपलंभनस्थानत्वात् । ततः 'हृदयात्' हृदयशूलं 'समवैति' । तस्मात् 'हृदयेन सह' इतरपश्ववयवानां पाके सति कृत्स्नं पश्ववयवं पुनः पुनः शुचं प्राप्नोति, तत्परिहारोपायमाह—पार्श्वत एवैनदिति । 'एनत्' हृदयपुण्डरीकं 'काष्ठे' शूलाकारे 'प्रतृद्य' प्रविद्धं कृत्वा कुंभ्यां पार्श्वत एव 'श्रपयेत्' ॥ ३ ॥

अथ वपावदानस्य पञ्चावत्तत्वप्रकारं संपादयन् पृथिव्यादिलोकत्रयात्मना अग्न्यादित्यात्मना च प्रशंसति—

---

१–शूले हृदयं प्रतृद्य शामित्रे श्रपयति । का. श्रौ. सू. ६ । १६२ । इति ।

२–वपया चरिष्यन्नुपस्तीर्य हिरण्यमवधाय वपामवद्यन्नाहेन्द्राग्निभ्यां छागस्य वपायै मेदसोऽनुब्रूहीति । हिरण्यमवधाय द्विरभिघारण१ सोमे । का. श्रौ. सू. ६ । १४१—१४२ । इति ।

शकलमुवदधाति तुदग्ने रूपङ्करोति व्वपामुवदधाति तुदन्तुरिक्षस्य रूपङ्करोति हिरण्यशकलमुवदधाति तुदादित्युस्य रूपङ्करोत्युथ युदु- परिष्टादभिघारुयति तुद्दिवो रूपङ्करोति सा वुाऽ एषा पञ्चावत्ता व्वपा भवति पाङ्क्तो यज्ञः पाङ्क्तः पशुः पुञ्चर्तुवः सम्वत्सुरस्य तुस्मात्पञ्चा- वत्ता व्वपा भवति ॥ ४ ॥

इति चतुर्थप्रपाठके दशमं ब्राह्मणम् ॥ ११–४–१० ॥ ( ७. ४. ) ॥
सप्तमोऽध्यायश्च समाप्तः ॥ ( ११ । ७ ) ॥

---

वपामवदधाति; तदन्तरिक्षस्य रूपं करोति । हिरण्यशकलमवदधाति; तदादित्यस्य रूपं करोति । अथ यदुपरिष्टादभिघारयति; तद्दिवो रूपं करोति । सा वा एषा पञ्चावत्ता वपा भवति । पांक्तो यज्ञः, पांक्तः पशुः, पञ्चर्तवः संवत्सरस्य, तस्मात्पञ्चावत्ता वपा भवति ॥ ४ ॥

---

उपस्तृणीत आज्यमित्यादिना । धानाकरंभादिपञ्चद्रव्यसाध्यत्वात् ‘ यज्ञः पांक्तः ’ । लोमत्वङ्मांसास्थिमज्जा- ख्यपञ्चधातुमयत्वात् ‘ पशुः पांक्तः ’ । सुगममन्यत् ॥ ४ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये एकादशकाण्डे
सप्तमेऽध्याये चतुर्थं ब्राह्मणम् ॥ ११ । ७ । ४ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं,
सप्ताब्धीन्पञ्चसीरीँस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटं च ॥
धान्याद्रिं धन्यजन्मा तिलभवमतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान्गुडकृतमजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणजमनृणः शार्करं चार्कतेजा,
रत्नाढयो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण
विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये एकादशकाण्डे
सप्तमोऽध्यायः समाप्तः ॥ ( ११ । ७ ) ॥

# अथाष्टमेऽध्याये प्रथमं ब्राह्मणम् ।
# चतुर्थप्रपाठके च एकादशं ब्राह्मणम् ।

तद्यथा ह वै । ( वाऽ ) इदᳬं रथचक्रं वा कौलालचक्रम्वा प्रतिष्ठितङ्क्रन्देदेवᳬं हैवेमे लोकाऽ अध्रुवाऽअप्रतिष्ठिताऽ आसुः ॥ १ ॥

स ह प्रजापतिरीक्षाञ्चक्रे । कथन्न्विमे लोका ध्रुवाः प्रतिष्ठिताः स्युरिति सऽ एभिश्चैव पर्व्वतैर्न्नदीभिश्चेमामदृᳬं हद्वयोभिश्च मरीचिभिश्चान्तरिक्षञ्जीमूतैश्च नक्षत्रैश्च दिवम् ॥ २ ॥

( ᳬं ) स महऽ इति व्याहरत् । ( त्प ) पशवो वै महस्तस्माद्यस्यैते बहवो भवन्ति भूयिष्ठमस्य कुले महीयन्ते बहवो ह वाऽअस्यैते भवन्ति भूयिष्ठᳬं हास्य कुले महीयन्ते तस्माद्येनमायतनाद्धाधेरन्वा प्र वा यापयेयुरग्निहोत्रᳬं हुत्वा महऽ इत्युपतिष्ठेत प्रति प्रजया पशुभिस्तिष्ठति नायतनाच्च्यवते ॥ ३ ॥

इति चतुर्थप्रपाठके एकादशं ब्राह्मणम् ॥ ११।४।११ ॥ ( ८-१ ) ॥

---

**अग्निहोत्रे महउपस्थानम् ।**

तद्यथा ह वा इदं रथचक्रं वा कौलालचक्रं वा प्रतिष्ठितं क्रंदेत् । एवं हैवेमे लोका अध्रुवा अप्रतिष्ठिता आसुः ॥ १ ॥

स ह प्रजापतिरीक्षांचक्रे । कथं न्विमे लोका ध्रुवाः प्रतिष्ठिताः स्युरिति । स एभिश्चैव पर्वतैर्नदीभिश्चेमामदृंहत् । वयोभिश्च मरीचिभिश्चान्तरिक्षम् । जीमूतैश्च नक्षत्रैश्च दिवम् ॥ २ ॥

स मह इति व्याहरत् । पशवो वै महः । तस्माद्यस्यैते बहवो भवन्ति । भूयिष्ठमस्य कुले महीयंते । बहवो ह वा अस्यैते भवंति । भूयिष्ठं हास्य कुले महीयंते । तस्माद्येनमायतनाद्धाधेरन्

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

अग्निहोत्रे कर्मणि मह इत्युपस्थानं तद्दाढर्याय कर्तव्यनिमित्तं विधातुं आख्यायिकामाह—तद्यथा ह वा इदमित्यादिना । यथा लोके रथादिचक्रं आलम्बनकाष्ठादिराहित्येन भूमाववस्थितं सत् चलति । 'एवमिमे' त्रयः 'लोकाः' 'अप्रतिष्ठिता आसुः' ॥ १ ॥

तस्य परिहारोपायं प्रजापतिर्विचिंत्य 'नदीभिः' 'पर्वतैश्च' उर्वीं, पक्षिभिः रश्मिभिश्च 'अन्तरिक्षम्,' मेघैर्नक्षत्रैश्च 'दिवं,' दृढीचकार ॥ २ ॥

'सः' तथा दृढान् दृष्ट्वा 'महः' इत्युवाच । तत्र महःशब्दार्थमाह—पशवो वै मह इति । उक्तमर्थं लोकप्रसिद्धया प्रमाणयति—तस्माद्यस्यैते बहव इति । यत एभिः पशुभिः 'महीयन्ते' । अतः 'एते'

चत्वारो ह वा ऽ अग्नयः । (ऽ) आहितऽ उद्धृतः प्रहृतो विहृतोऽयमेव लोक ऽआहितोऽन्तरिक्षलोकऽ उद्धृतो द्यौष्प्रहृतो दिशो विहृतोऽग्निरेवाहितो वायुरुद्धृतऽ आदित्यः प्रहृतश्चन्द्रमा विहृतो गार्हपत्यऽ एवाहितऽ आहवनीयऽ उद्धृतोऽथ यमेतमाहवनीयात्प्राञ्चम्प्रणयन्ति स प्रहृतोऽथ यमेतमुदञ्चं पशुश्रपणायाहरन्ति यञ्चोपयड्भ्यः स विहृतस्तस्मात्प्रहार्य्येऽग्नौ पशुबन्धेन यजेत ॥ १ ॥

इति चतुर्थप्रपाठके द्वादशं ब्राह्मणम् ॥ ११-४-१२ ॥ ( ८. २. ) ॥

---

वा, प्र वा यापयेयुः । अग्निहोत्रं हुत्वा मह इत्युपतिष्ठेत । प्रति प्रजया पशुभिस्तिष्ठति । नायतनाच्च्यवते ॥ ३ ॥

### अग्नेश्चातुर्विध्याभिधायकं ब्राह्मणम् ।

चत्वारो ह वा अग्नयः । आहितः, उद्धृतः, प्रहृतः, विहृतः । अयमेव लोक आहितः । अन्तरिक्षलोक उद्धृतः । द्यौष्प्रहृतः । दिशो विहृतः । अग्निरेवाहितः । वायुरुद्धृतः । आदित्यः प्रहृतः । चंद्रमा विहृतः । गार्हपत्य एवाहितः । आहवनीय उद्धृतः । अथ यमेतमाहवनीयात्प्रांचं प्रणयन्ति स प्रहृतः । अथ यमेतमुदंचं पशुश्रपणायाहरंति यं चोपयड्भ्यः स विहृतः । तस्मात्प्रहार्येऽग्नौ पशुबन्धेन यजेत ॥ १ ॥

---

'महः' । उक्तार्थज्ञानं प्रशंसति—बहवो ह वा इति । एते भवन्ति परत्र इत्यर्थः । इदानीं मह इत्युपस्थानं विधत्ते—तस्माद्यद्येनमिति । एनमग्निं 'आयतनात्' स्वस्थानात् 'बाधेरन्' किंचिदुपद्रवं चक्रुः । 'प्र वा यापयेयुः' आयतनादन्यत्र गमयेयुर्वा । तदा 'अग्निहोत्रं हुत्वा' 'महः इत्युपतिष्ठेत' । तथा सति सोऽग्निः प्रतिष्ठितो भवति । यजमानोऽपि प्रजादिभिः प्रतिष्ठितो भवति । न प्रच्युतो भवति । अथवा 'महः' इत्युपस्थानविधातुः फलप्रदर्शनपरमिदं वाक्यम् । तस्मिन्पक्षे एवमुक्तविधिना उपस्थानकर्तारम् 'आयतनात्' स्वगृहक्षेत्रादेः सकाशात् । गतमन्यत् ॥ ३ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यंदिनीयशतपथब्राह्मणभाष्ये एकादशकाण्डेऽष्टमेऽध्याये प्रथमं ब्राह्मणम् ॥ ११।८।१ ॥

अथाहवनीयात्प्राक्प्रहृते उत्तरवेदिके अग्नौ पशुयागः कर्तव्य इति विधातुं अग्नेराहितादिभेदेन चातुर्विध्यं दर्शयति—चत्वारो ह वा अग्नय इत्यादिना । अन्यदायतनं कृत्वा नूतनमुत्पाद्य स्थापितोऽग्निः 'आहितः' । उद्धरणात्संपादितः 'उद्धृतः' । प्राकृतप्रणयनात्संपादितः 'प्रहृतः' । इतस्ततो विहरणात् 'विहृतः' । उक्तमाहितादिचतुष्टयं भूराद्यात्मना अग्न्याद्यात्मना च स्तौति—अयमेव लोक इत्यादिना । भूरादीनामग्न्यादीनां आहितादिरूपत्वकल्पनायां पूर्वं पूर्वं प्रति उत्तरस्योत्तरस्य उपर्युपरि वर्तमानत्वं साम्यम् । इदानीं आहितादीनां अभिप्रेतमर्थं स्वयमेव विवृणोति—गार्हपत्य एवाहित इत्यादिना । पशुश्रपणार्थो यः अग्निः स

तुदाहुः । किन्देवुत्यऽ एषु पशुः स्यादिति प्राजापत्युः स्यादित्याहुः प्रजापतिर्वाऽएतमुग्रेऽभ्यपश्यत्तुस्मात्प्राजापत्युऽ एवैषु पशुः स्यादिति॥१॥

( त्यु ) अुथोऽअुप्याहुः । सौर्य्युऽ एवैषु पशुः स्यादिति तुस्मादेतुस्मिन्नुस्तमिते पशुवो बध्यन्ते बध्नन्त्येकान्यथा गोष्ठमेकऽ उप समायन्ति तुस्मात्सौर्य्युऽएवैषु पशुः स्यादिति ॥ २ ॥

(त्यु) अुथोऽअुप्याहुः । (रै) ऐन्द्राग्नुऽ एवैषु पशुः स्यादित्येते वै देवुतेऽ अुन्वन्ये देवा यद्यार्तो यजते पारयतऽ एव युदि मुहसा युजते पारुयतऽ एव तुस्मादैन्द्राग्नुऽ एवैषु पशुः स्यादिति ॥ ३ ॥

---

पशुदेवताविकल्पाभिधायकं ब्राह्मणम् ।

तदाहुः-किंदेवत्य एष पशुः स्यादिति । प्राजापत्यः स्यादित्याहुः । प्रजापतिर्वा एतमग्रेऽभ्यपश्यत् । तस्मात्प्राजापत्य एवैष पशुः स्यादिति ॥ १ ॥

अथो अप्याहुः । सौर्य एवैष पशुः स्यादिति । तस्मादेतस्मिन्नस्तमिते पशवो बध्यन्ते । बध्नन्त्येकान्यथा गोष्ठम् एक उप समायन्ति । तस्मात्सौर्य एवैष पशुः स्यादिति ॥ २ ॥

अथो अप्याहुः । ऐन्द्राग्न एवैष पशुः स्यादिति । एते वै देवते अन्वन्ये देवाः । यद्यार्तो यजते पारयत एव । यदि महसा यजते पारयत एव । तस्मादैन्द्राग्न एवैष पशुः स्यादिति ॥ ३ ॥

---

शामित्रः, यश्च गुदकांडहोमार्थः सः ' विहृतः ' । उप समीपे अंगयागानन्तरं यष्टव्या गुदहोमा ' उपयजः ' । तदर्थं हृत इत्यर्थः । तदर्थमेव वर्णितं तत्प्रयोजनमाह—तस्मात् प्रहार्येऽग्नौ पशुबन्धेन यजेतेति । 'प्रहार्ये' उत्तरवेदिके इत्यर्थः ॥ १ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यंदिनीयशतपथब्राह्मणभाष्ये एकादशकांडेऽष्टमेऽध्याये द्वितीयं ब्राह्मणम् ॥ ११ । ८ । २ ॥

अथास्य पशोः प्रजापतिः सूर्य इन्द्राग्नी चेति त्रयो देवा विकल्पिता इति दर्शयितुं क्रमेण तं तं पक्षं सोपपत्तिकमाह—तदाहुः किंदेवत्य एष पशुः स्यादित्यादिना । प्रजापतिना आदौ दृष्टत्वात् अस्य पशोः प्रजापतिर्देवतेति केचिदाहुः ॥ १ ॥

अपरे सूर्ये अस्तमिते पशूनां स्वस्वस्थाने बन्धनदर्शनात् सर्वेषां स्वस्वस्थाने प्राप्तेश्च हेतोः सूर्यायत्तस्थितित्वात् ' सौर्य एव ' इत्याहुः ॥ २ ॥

अन्ये तु इन्द्राग्न्योः सर्वदेवताप्राधान्यात् स्वोद्देशेन यागं कृतवतां क्रमेणार्तिनाशकत्वात् महसः प्रापकत्वाच्च पशोरिन्द्राग्नी एव देवते इत्याहुः ॥ ३ ॥

---

१—ऐन्द्राग्नः सौर्यः प्राजापत्यो वा ग्रमिच्छेत् । का. श्रौ. सू. ६ । ८० ।

प्राण॒ऽ ए॒व प॑शुब॒न्धः । ( स्तु ) तस्मा॒द्याव॒ज्जीव॑ति॒ नास्या॒न्यः प॒शूना॑मीष्टे ब॒द्धा ह्य॒स्मिन्ने॒ते भ॑वन्ति ॥ ४ ॥

स ह॑ प्र॒जाप॑तिर॒ग्निमु॑वाच । य॒जै त्वया॑ त्वाऽऽऽलभाऽ इति॒ नेति॑ होवाच वा॒युम्ब्रू॑हीति॒ स ह॑ वा॒युमु॑वाच य॒जै त्वया॑ त्वाऽऽऽलभाऽ इति॒ नेति॑ होवाच पुरु॑षम्ब्रूहीति॒ स ह॑ पुरु॑षमुवाच य॒जै त्वया॑ त्वाऽऽऽलभाऽ इति॒ नेति॑ होवाच प॒शून्ब्रू॑हीति॒ स ह॑ प॒शूनु॑वाच य॒जै यु॒ष्माभि॑रा वो लभाऽ इति॒ नेति॑ होचु॒श्च॒न्द्रम॑सम्ब्रूहीति॒ स ह॑ च॒न्द्रम॑समुवाच य॒जै त्वया॑ त्वाऽऽऽलभाऽ इति॒ नेति॑ होवाचादि॒त्यम्ब्रू॑हीति॒ स हा॑दि॒त्यमु॑वाच य॒जै त्वया॑ त्वाऽऽऽलभा इति॒ तथेति॑ होवाच य॒ऽ उ॒ तऽ ए॒ते नाची॑कमन्त॒ किमु॒ मऽ ए॒तेषु॑ स्या॒दिति॒ य॒द्यत्का॒मये॑थाऽ इति॒ तथेति॒ तमा॑लभत॒ सोऽस्या॒यम्प॑शु॒राल॑ब्धः संज्ञ॒प्तोऽश्रयत्त॒मेता॑भिरा॒प्रीभि॑रा॒प्रीणा॒त्तद्यदे॒नमे॒ता॑भिरा॒प्रीभि॑रा॒प्रीणा॒त्तस्मा॑दा॒प्रियो॒ नाम॒ तस्मा॑दु प॒शुँ सं॑ज्ञ॒प्तं ब्रू॑या॒च्छ्रेता॒न्नु मु॒हूर्त॒मिति॒ स या॒वन्त॒मश्वमेधे॒नेष्ट्वा लो॒कञ्जय॑ति ता॒वन्त॒मेते॑न जयति ॥ ५ ॥

---

प्राण एव पशुबन्धः । तस्माद्यावज्जीवति । नास्यान्यः पशूनामीष्टे । बद्धा ह्यस्मिन्नेते भवन्ति ॥ ४ ॥

स ह प्रजापतिरग्निमुवाच । यजै त्वया त्वाऽऽलभा इति । नेति होवाच । वायुं ब्रूहीति । स ह वायुमुवाच । यजै त्वया त्वाऽऽलभा इति । नेति होवाच । पुरुषं ब्रूहीति । स ह पुरुषमुवाच । यजै त्वया त्वाऽऽलभा इति । नेति होवाच । पशुन् ब्रूहीति । स ह पशूनुवाच । यजै युष्माभिरा वो लभा इति । नेति होचुः । चंद्रमसं ब्रूहीति । स ह चंद्रमसमुवाच । यजै त्वया त्वाऽऽलभा

---

पशुत्वस्य प्राणात्मकतां तत्परिज्ञातुः पशुना आर्तिहेतुतां समर्थयते—प्राण एव पशुबन्ध इति । तस्मात् पशोः प्राणाभिमानित्वात् स पशुबन्धयाजी यावन्तं कालं 'जीवति' 'अस्य' यजमानस्य 'पशूनाम्' 'नान्यः' तस्करादिः स्वामी भवति । किं तु 'अस्मिन्' संबद्धा एव 'एते' पशवः 'भवन्ति' । तस्मात् प्राणरूपता युक्ता ॥ ४ ॥

विहितस्य पशोः उक्तप्राणरूपतोपपादनाय तस्यैव अग्न्यादिषड्देवतामयत्वोपपादनाय च आख्यायिकामाह— स ह प्रजापतिरग्निमुवाचेत्यादिना । पुरा किल 'प्रजापतिरग्निमुवाच' । किमिति ? यजै त्वयेति । त्वां पशुं कृत्वा 'यजै' इति । तस्यैव व्याख्यानम्—त्वाऽऽलभै इति । पशुभूतस्य तव आलंभं करिष्यामीति स प्रजापतिना पृष्टोऽपि अग्निः 'नेति होवाच' निराचकारेत्यर्थः । हेत्यनेन पुरावृत्तत्वं द्योत्यते । एवं निराकुर्वन्नग्निः अन्ते आदित्य एव पशुर्भविष्यतीति अमुमर्थं मनसि कृत्वा 'वायुं ब्रूहि' इत्युवाच । एवं वायुपुरुषपशुचन्द्राः प्रजापतिना पशुभावाय पृष्टाः स्वं स्वं प्रतिषिध्य उत्तरमुत्तरं पृच्छेत्यूचुः । अथ तेषु निरा-

तम्प्राची दिक् । ( क्प्रा ) प्राणेत्यनुप्राणत्प्राणमेवास्मिँस्तद्दधात्तन्दक्षिणा दिग्व्यानेत्यनुप्राणद्व्यानमेवास्मिँस्तद्दधात्तम्प्रतीची दिगपानेत्यनुप्राणदपानमेवास्मिँस्तद्दधात्तमुदीची दिगुदानेत्यनुप्राणदुदानमेवास्मिँस्तद्दधात्तमूर्ध्वा दिक्समानेत्यनुप्राणंत्समानमेवास्मिँस्तद्दधात्तस्माद्पुत्रञ्जातमकृत्तनाभिं पुञ्च ब्राह्मणान्ब्रूयादित्येनमनुप्राणितेति यद्य

---

इति । नेति होवाच । आदित्यं ब्रूहीति । स हादित्यमुवाच । यजै त्वया त्वाऽऽलभा इति । तथेति होवाच । य उ त एते नाचीकमन्त । किमु म एतेषु स्यादिति । यद्यत्कामयेथा इति । तथेति तमालभत । सोऽस्यायं पशुरालब्धः संज्ञप्तः अश्वयत् । तमेताभिराप्रीभिराप्रीणात् । तद्यदेनमेताभिराप्रीभिराप्रीणात् । तस्मादाप्रियो नाम । तस्माद्ु पशुं संज्ञप्तं ब्रूयाच्छेतान्नुमुहूर्तमिति । स यावन्तमश्वमेधेनेष्ट्वा लोकं जयति । तावन्तमेतेन जयति ॥ ९ ॥

तं प्राची दिक् प्राणेत्यनुप्राणत्; प्राणमेवास्मिंस्तद्दधात् । तं दक्षिणा दिग्व्यानेत्यनुप्राणत्; व्यानमेवास्मिंस्तद्दधात् । तं प्रतीची दिगपानेत्यनुप्राणत्; अपानमेवास्मिंस्तद्दधात् । तमुदीची दिगुदानेत्यनुप्राणत्; उदानमेवास्मिंस्तद्दधात् । तमूर्ध्वा दिक् समानेत्यनुप्राणत्; समानमेवास्मिं-

---

कर्तृषु सत्सु चंद्रमसा आदित्यं पृच्छेत्युक्तः प्रजापतिः 'आदित्यमुवाच' 'त्वया यजै' इति । स तु तथेत्युवाच । अंगीकृत्य पुनरब्रवीत् । 'एते' पुनः पशुभावं नाकामयन्त । कामयतः 'मे' एतेष्वग्न्यादिषु किं स्यात् । एतेषां स्वभूतं वस्तु किं लब्धं भवेदिति । स प्रजापतिरादित्यमुवाच—यद्यत्कामयेथा इति । तत्तद्दास्यामीति शेषः । कामितस्वरूपमुपरि वक्ष्यति—"स प्रागमेवाग्नेरादत्त" इत्यादिना । एवमुक्त्वा वाचं स्वीकृत्य तथाऽस्त्वित्युक्ते स प्रजापतिस्तमालभत । 'स आलब्धः' 'संज्ञप्तः' पशुः 'अश्वयत्' उच्छूनः अभवत् । तं उच्छूनं पशुं 'एताभिः' प्रसिद्धाभिः "समिद्धो अद्य" (वा. सं. २९ । २९) इत्यादिभिराप्रीभिः 'आप्रीणात्' अतर्पयत् । प्रसंगादाप्रीशब्दं निर्वक्ति—तद्यदेनमेताभिरिति । यस्मादेनं पशुं 'एताभिराप्रीणात्' । आप्रीतं संतुष्टं चक्रे । 'तस्मात्' आप्रीणमन्त्रसाधनत्वात् 'आप्रियः' इति 'नाम' संपन्नम् । तदेव प्रीणनजनितं शयनं विधत्ते—'तस्माद्ु पशुं संज्ञप्तं ब्रूयात्'—शेतान्नुमुहूर्तमिति । तदाह 'शेतान्नुमुहूर्तमिति' । मुहूर्तो घटिकाद्वयम् । अत्यंतसंयोगे द्वितीया (पा. सू. २ । ३ । ५) इति । 'शेताम्' तावंतं कालं आप्रीणनेन आत्यन्तिकं सुखं प्राप्त इव अयं पशुः शयनं करोत्वित्यर्थः । अथ यथा अश्वमेधेन इष्टभावनापुरःसरं पशुनेष्टवतः फलमाह—स यावन्तमश्वमेधेनेष्ट्वा लोकं जयति तावन्तमेतेन जयति इति । एतेन आदित्यात्मना भावितेन पशुनेत्यर्थः । वेदितुः फलं चैतत् द्रष्टव्यम् । एतेनोक्तार्थज्ञानेनेत्यर्थः ॥ ९ ॥

'तं' निष्प्राणत्वेन उच्छूनं आदित्यलक्षणं पशुं 'प्राची' दिग्देवता हे गतप्राण पशो ! त्वं 'प्राण' प्राणवायुविशिष्टो भव 'इति अनुप्राणत्' । तस्योपरि श्वासं दत्तवतीत्यर्थः । अस्मिन्पशौ 'प्राणमेव' तत्तेनानु-

---

१—"समिद्धोऽद्य" इत्याद्याः—"हविरदन्तु देवाः" इत्यन्ताः (वा. सं. २९ । २५–३६) जमदग्निदृष्टास्त्रिष्टुप्छन्दस्का द्वादश मन्त्रा आप्रिय इत्युच्यन्ते । २—संज्ञप्तः पशुरिति प्रोक्ते शेतान्नु मुहूर्तमित्याहासोमे । का. श्रौ. सू. ६ । ११७ ॥

तान्नु व्विन्देदपि स्वयमेवानुपरिक्रामममनुप्राण्यात्स सुर्व्वमायुरेत्याहैव जरायै जीवति ॥ ६ ॥

स प्राणमेवाग्नेरादत्त । तस्मादेष नानुपध्मातो नानुपज्वालितो ज्वल-त्यात्तो ह्यस्य प्राणऽआ ह वै द्विषतो भ्रातृव्यस्य प्राणन्दत्ते यऽ एवं व्वेद ॥ ७ ॥

रूपमेव व्वायोरादत्त । तस्मादेतस्य लेलयतऽ इवैवोपशृण्वन्ति न त्वेनं पश्यन्त्यात्तᳪ ह्यस्य रूपमा ह वै द्विषतो भ्रातृव्यस्य रूपन्दत्ते यऽएवं व्वेद ॥ ८ ॥

---

स्तददधात् । तस्माद्व पुत्रं जातमकृत्तनाभिं पंच ब्राह्मणान् ब्रूयादित्येनमनुप्राणितेति । यद्युतान्न विंदेत् । अपि स्वयमेवानुपरिक्राममनुप्राण्यात् । स सर्वमायुरेति । आ हैव जरायै जीवति ॥ ६ ॥

स प्राणमेवाग्नेरादत्त । तस्मादेष नानुपध्मा नानुपज्वालितो ज्वलति । आत्तो ह्यस्य प्राणः । आ ह वै द्विषतो भ्रातृव्यस्य प्राणं दत्ते । य एवं वेद ॥ ७ ॥

रूपमेव वायोरादत्त । तस्मादेतस्य लेलयत इवैवोपशृण्वंति । न त्वेनं पश्यंति । आत्तं ह्यस्य रूपम् । आ ह वै द्विषतो भ्रातृव्यस्य रूपं दत्ते । य एवं वेद ॥ ८ ॥

---

प्राणनेन 'अदधात्' स्थापितवति । तथा 'दक्षिणा दिक्' 'व्यान' इत्युक्त्वा 'अनुप्राणत्' तेन 'व्यान-मस्मिन्नदधात्' । एवं प्रतीच्युदीच्यूर्ध्वाऽऽख्यास्तिस्रोऽपि दिशः क्रमेण 'अपानं उदानं समानं' च 'तस्मिन्' अदधुः । प्रसंगात् किंचित्पुरुषार्थं प्रयोगमाह—तस्माद्व पुत्रं जातमकृत्तनाभिमिति । नाभिच्छेदनात्पूर्वं पंच ब्राह्मणान् "एत्य एनमनुप्राणित" 'इति ब्रूयात्' । इतिशब्देन दिक्कृतः प्रकारः प्रदर्श्यते । पंच ब्राह्मणान् पंच दिक्षु अवस्थाप्य प्रागादिक्रमेण प्राणेत्येवमुक्त्वा शिशोरुपरि श्वासं प्रक्षिपेदित्यर्थः । ब्राह्मणाना-मलाभे कथमिति तत्राह—यद्यु तानिति । ब्राह्मणालाभे स्वपितैव सर्वतः परिक्रम्योक्तप्रकारं कुर्यात् । एवं कृते सति शिशुः 'सर्वं' शतसंवत्सररूपम् 'आयुरेति' च 'आ हैव जरायै जीवति' जरापर्यंतं जीवती-त्यर्थः । अनेन प्राण एव पशुबंध इति अधिभावना प्रदर्शिता भवति ॥ ६ ॥

"किमु म एतेषु स्यात्" इति आदित्येन उक्ते सति "यद्यत्कामयेथाः" इति प्रजापतिना यत् प्राक् दत्तम्, तस्य स्वीकारं दर्शयति—स प्राणमेवाग्नेरादत्तेत्यादिना । प्राण आत्तोऽग्नेरिति कथं निश्चीयत इति ? । तत्र लिंगमाह—तस्मादेष इति । तस्मादात्तप्राणत्वादेव अग्निरनुपध्मातो मुखस्थेन वायुनाऽप्रेर्यमाणः तथा काष्ठा-दिना उपज्वलनमप्राप्तः कदाचिदपि 'न ज्वलति' । अतः अधिगम्यते प्राण आदित्येन स्वीकृत इति आ ह वै द्विषत इति । वेदितुः फलकथनम् ॥ ७ ॥

वायोः सकाशात् रूपादाने कारणमाह—तस्मादेतस्य लेलयत इवैवोपशृण्वंतीति । 'लेलयतः' चलतः

---

१—प्रतिदिशं पंच ब्राह्मणानवस्थाप्य ब्रूयादिममनुप्राणितेति । पूर्वो ब्रूयात्प्राणेति । व्यानेति दक्षिणः । अपानेत्यपरः । उदानेत्युत्तरः । समानेति पञ्चम उपरिष्टादवेक्षमाणो ब्रूयात् । स्वयं वा कुर्यादनुपरिक्राममविद्यमानेषु । पार. गृ. सू. १ । १६ । १०–१६ ॥ इति ।

चित्तमेव पुरुषस्यादत्त । तस्मादाहुर्देवचित्तन्त्वाऽवतु मा मनुष्यचित्तमित्यात्तᳫँ ह्यस्य चित्तमा ह वै द्विषतो भ्रातृव्यस्य चित्तन्दत्ते यऽएवं वेद ॥ ९ ॥

चक्षुरेव पशूनामादत्त । तस्मादेते चाकश्यमानाऽ इवैव न जानन्त्यथ यदैवोपजिघ्रन्त्यथ जानन्त्यात्तᳫँ ह्येषाञ्चक्षुरा ह वै द्विषतो भ्रातृव्यस्य चक्षुर्दत्ते यऽ एवम्वेद ॥ १० ॥

भामेव चन्द्रमस आदत्त । तस्मादेनयोः सदृशयोः सतोर्नतराञ्चन्द्रमा भात्यात्ता ह्यस्य भाऽआ ह वै द्विषतो भ्रातृव्यस्य भान्दत्ते यऽ एवं वेद तद्यदादत्त तस्मादादित्यः ॥ ११ ॥

इति चतुर्थप्रपाठके त्रयोदशं ब्राह्मणम् ॥ ११-४-१३ ॥ ( ८. ३. ) ॥

---

चित्तमेव पुरुषस्यादत्त, तस्मादाहुः, देवचित्तं त्वाऽवतु, मा मनुष्यचित्तमिति । आत्तं ह्यस्य चित्तम् । आ ह वै द्विषतो भ्रातृव्यस्य चित्तं दत्ते, य एवं वेद ॥ ९ ॥

चक्षुरेव पशूनामादत्त, तस्मादेते चाकश्यमाना इवैव न जानन्ति । अथ यदैवोपजिघ्रन्ति । अथ जानन्ति । आत्तं ह्येषां चक्षुः । आ ह वै द्विषतो भ्रातृव्यस्य चक्षुर्दत्ते, य एवं वेद ॥ १० ॥

भामेव चन्द्रमस आदत्त; तस्मादेनयोः सदृशयोः सतोर्नतरां चन्द्रमा भाति । आत्ता ह्यस्य भाः । आ ह वै द्विषतो भ्रातृव्यस्य भां दत्ते । य एवं वेद । तद्यदादत्त, तस्मादादित्यः ॥ ११ ॥

---

अस्य शृण्वंति । किं त्वेनं अग्न्यादिवन्न साक्षात्पश्यन्ति । आ ह वा इति वेदितुः फलश्रुतिः । एवं सर्वत्रादत्त इति संबंधः ॥ ८ ॥

तथा 'पुरुषस्य' 'चित्तमेवादत्त' आदित्यः । 'तस्मात्' कश्चित् आशास्यं पुरुषमाहुः । कथं ? 'देवचित्तं त्वाऽवतु, मा मनुष्यचित्तमिति' । आ ह वा इत्यादि पूर्ववत् ॥ ९ ॥

पशुभ्यः सकाशात् चक्षुष आदाने लिंगमाह-तस्मादेते चाकश्यमाना इवैव न जानन्ति । अथ यदैवोपजिघ्रंत्यथ जानन्ति इति । यस्मात्पशवो भृशं पश्यन्त इव वर्तमाना अपि न 'जानन्ति' । किंतु आघ्राणेन सर्वं 'जानन्ति' । तस्माच्चक्षुरात्तमिति निश्चीयते । शिष्टं पूर्ववत् ॥ १० ॥

भामेव चन्द्रमस आदत्त इत्यादि । यस्माच्चन्द्रमसः सकाशात् प्रभा आहृता । तस्मात्समानप्रभयोरपि सतोश्चन्द्रसूर्ययोर्मध्ये 'चन्द्रमाः' 'नतरां भाति' नैव भाति । आत्तेत्यादि पूर्ववत् । उक्तविधमादानं निमित्तीकृत्य आदित्यशब्दो निष्पन्न इति दर्शयति-तद्यदादत्त तस्मादादित्य इति ॥ ११ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये एकादशकाण्डे अष्टमेऽध्याये तृतीयं ब्राह्मणम् ॥ ११ । ८ । ३ ॥

केशिगृहपतीनामु ह । सम्राड्दुघाᳬं शार्दूलो जघान सह स सत्रिणऽ आमन्त्रयाञ्चक्रे केह प्रायश्चित्तिरिति ते होचुर्नेह प्रायश्चित्तिरस्ति खण्डिकऽएवौद्भारिरस्य प्रायश्चित्तिम्वेद सऽउ तऽएतादृक्चैव कामयतेऽतश्च पापीयऽइति ॥ १ ॥

स होवाच । संग्रहीतर्युङ्धि मेऽस्यन्त्स्यामि स यद्यह मे वक्ष्यति समाप्स्यामि यद्यु मा मारयिष्यति यज्ञम्विकृष्टमनुविक्रक्ष्यऽइति ॥ २ ॥

स ह युक्त्वा ययावाजगाम । तᳬं ह प्रतिख्यायोवाच यन्न्वेतान्येवाजिनानि मृगेषु भवन्त्यथैषाम्पृष्टीरपि शीर्ष्ण पचामहे कृष्णाजिनम्मे ग्रीवास्वाबद्धमित्येव मेदमधृषोऽभ्यवस्यन्तूᳬ३मिति ॥ ३ ॥

---

अथ पशुप्रायश्चित्तीयाः स्मृतिहोमाः ।

केशिगृहपतीनामु ह सम्राड्दुघां शार्दूलो जघान । सह स सत्रिण आमंत्रयांचक्रे; केह प्रायश्चित्तिरिति । ते होचुः—नेह प्रायश्चित्तिरस्ति । खण्डिक एवौद्भारिरस्य प्रायश्चित्तिं वेद । स उ त एतादृक् चैव कामयते । अतश्च पापीय इति ॥ १ ॥

स होवाच—संग्रहीतर्युङ्धि मे । स्यन्त्स्यामि । स यद्यह मे वक्ष्यति । समाप्स्यामि । यद्यु मा मारयिष्यति । यज्ञं विकृष्टमनुविक्रक्ष्य इति ॥ २ ॥

स ह युक्त्वा ययौ । आजगाम । तं ह प्रतिख्यायोवाच । यन्नु एतान्येवाजिनानि मृगेषु

---

अथ स्मृत्याख्यान् होमान् पशुप्रायश्चित्ततया विधातुं आख्यायिकामाह—केशिगृहपतीनामु हेत्यादिना । पुरा किल केशिनो नाम राजानः सत्रयागमनुतिष्ठन्तः गृहपतय आसुः । तेषां 'सम्राड्दुघां' प्रवर्ग्यदोहनार्थां गां 'शार्दूलः' दुष्टमृगः 'जघान' । तेन च 'सह स सत्रिणः' उपेत्य 'आमन्त्रयांचक्रे' । कथमिह घर्मधुग्हननविषये 'का प्रायश्चित्तिरिति' तेन पृष्टास्ते 'नेह प्रायश्चित्तिः अस्ति इति उक्त्वा प्रायश्चित्तज्ञमकथयन् । उद्भारिपुत्रः 'खण्डिक एवास्य प्रायश्चित्तं' जानाति । 'सः' एव 'एतादृक्' एतादृशमेव 'कामयते' । कीदृशमिति तदाह—**अतश्च पापीय** इति । अत्यन्तं पापयुक्तं गोवधादिदोषयुक्तमित्यर्थः । तस्मात्तमेव पृच्छेति ॥ १ ॥

अथ गृहपतिषु प्रधानभूतः केशिराजः रथयंतारमुवाच-मे रथं 'युङ्धि' योजय । 'स्यन्त्स्यामि' गमिष्यामि । 'सः' ह खण्डिकः 'यदि अह मे वक्ष्यति' प्रायश्चित्तिं तर्हि 'समाप्स्यामि' सत्रम् । अथ प्रायश्चित्तिकथनमकृत्वा निराकरिष्यति । तदा 'विकृष्टं' विकारं प्राप्तं 'यज्ञमनु' अहमपि 'विक्रक्ष्ये' विकारं प्राप्स्ये ॥ २ ॥

'स ह' रथमश्वैः संयोज्य खंडिकसमीपं 'ययौ' । सोऽपि खण्डिकः 'तं' केशिनं 'आजगाम' । गत्वा च विवक्तुं केशिनं 'प्रतिख्याय' निराकृत्य स्वयमेव प्रथमं 'उवाच' । हे केशिन् ! त्वया यत् घर्मदुघाया

नेति होवाच । सम्राड्दुघाम्वै मे भगवः शार्दूलोऽवधीत्स यद्यह मे व्वक्ष्यसि समाप्स्यामि यद्यु मा मारयिष्यसि यज्ञम्विकृष्टमनुविक्रक्ष्यऽ इति ४ स होवाच । ( चा ) आमंत्रणीयान्वामंत्रयाऽ इति तान्हामंत्र्योवाच यद्यस्मै व्वक्ष्याम्यमुष्यैवेदम्प्रजा भविष्यति न मम लोकी त्वहम्भविष्यामि यद्यु वाऽ अस्मै न व्वक्ष्यामि ममैवेदम्प्रजा भविष्यति नामुष्य लोकी त्वसौ भविष्यतीति ते होचुर्म्मा भगवो व्वोचोऽयम्वाव क्षत्रियस्य लोकऽ इति स होवाच व्वक्ष्याम्येवामूर्व्वै रात्रयो भूयस्यऽ इति ॥ ५ ॥

---

भवन्ति । अथैषां पृष्ठीरपि शीर्य पचामहे । कृष्णाजिनं मे ग्रीवास्वाबद्धमिति । एव मेदमधृषोऽभ्यवस्यन्तु ३ मिति ॥ ३ ॥

नेति होवाच । सम्राड्दुघां वै मे भगवः शार्दूलोऽवधीत् । स यद्यह मे वक्ष्यासि । समाप्स्यामि । यद्यु मा मारयिष्यसि । यज्ञं विकृष्टमनुविक्रक्ष्य इति ॥ ४ ॥

स होवाच—आमंत्रणीयान्वामंत्रया इति । तान् हामंत्र्योवाच । यद्यस्मै वक्ष्यामि; अमुष्यैवेदं प्रजा भविष्यति, न मम, लोकी त्वहं भविष्यामि । यद्यु वा अस्मै न वक्ष्यामि; ममैवेदं प्रजा भविष्यति, नामुष्य, लोकी त्वसौ भविष्यतीति । ते होचुः—मा भगवो वोचः । अयं वाव क्षत्रियस्य लोक इति । स होवाच—वक्ष्याम्येव, अमूर्वै रात्रयो भूयस्य इति ॥ ५ ॥

---

गोः अजिनं ग्रीवासु धृतम् । ‘ एतान्येव ’ एतादृशान्येव ‘ आजिनानि मृगेषु भवंति ’ उपलभ्यन्ते । ‘ अथैषां ’ मध्ये ‘ पृष्ठीः ’ अल्पशरीरा मृगीरपि ‘ शीर्य ’ विशरणं कृत्वा ‘ पचामहे ’ । तदीयं ‘ कृष्णाजिनं मे ग्रीवासु ’ कण्ठे ‘ आबद्धं ’ ‘ इति ’ ‘ अभ्यवस्यन्तुं ’ हन्तुं ‘ मा ’ मां ‘ इदमधृषः ’ धाष्टर्यं कृतवान् ॥ ३ ॥

एवं तेन खंडिकेनोक्ते ‘ सः ’ ‘ राजा ‘ नेति होवाच ’ अयमभिप्रायो न भवति । किंतु हे भगवन् ! ‘ सम्राड्दुघां ’ ‘ शार्दूलोऽवधीत् ’ । तस्मात् ‘ सः ’ त्वं ‘ यद्यह ’ यद्येव ‘ मे ’ ‘ वक्ष्यसि ’ तस्य समाधानोपायं तर्हि यज्ञं ‘ समाप्स्यामि ’ । अथ ‘ यदि उ ’ ‘ मा ’ मां ‘ मारयिष्यसि ’ तदा यज्ञं न समाप्स्यामि । तथा सति तदा स यज्ञो विकृष्टो भविष्यति । तं ‘ विकृष्टं यज्ञमनु ’ अहमपि ‘ विक्रक्ष्ये ’ इत्युवाच ॥ ४ ॥

‘ स होवाच ’ एवमुक्तः खंडिकः कथनविषये संदिहानः सन् ‘ आमंत्रणीयान् ’ आत्मीयान् ‘ उत् ’ क्षिप्रं ‘ आमंत्रयै ’ आह्वये इत्युवाच । तानामंत्रणीयान् ‘ आमंत्र्य ’ इत्थमुवाच । हे विचारकाः ! श्रृणुत । ‘ यदि अस्मै ’ केशिने ‘ वक्ष्यामि ’ प्रायश्चित्तविधां तर्हि ‘ अमुष्य ’ केशिनः ‘ एव ’ ‘ इदं ’ सर्वं ‘ प्रजा ’ भविष्यति, ‘ न मम ’ भविष्यति प्रजा । विद्याप्राप्तये अस्मत्तोऽपगतत्वात् । परं ‘ अहं ’ ‘ लोकी ’ विद्याप्रदानसुकृतेन परलोकवानेव भविष्यामि । यदि ‘ अस्मै न वक्ष्यामि ’ । तर्हि ‘ ममैव ’ ‘ प्रजा भविष्यति ’ । ‘ नामुष्य ’ राज्ञः, प्रजाफलसाधनविद्याया अप्राप्तत्वात् । न पुनः ‘ लोकी ’ लोकवान् ‘ असौ ’ राजा ‘ भविष्यति ’ । कर्मवैगुण्यस्य अपरिहारिष्यमाणत्वात् । एवं विरोधे उद्भाविते सति ‘ ते ’ आप्ता ‘ ऊचुः ’—

तस्मा॑ऽ उ है॒तदु॑वाच । स्पृती॒र्हु॒त्वाऽन्या॑मा॒जते॒ति ब्रूतात्सा ते सम्राड्दु॒घा स्या॑दि॒ति च॒न्द्रात्ते॒ मनः॑ स्पृणोमि॒ स्वाहा॑ सू॒र्यात्ते॒ चक्षुः॑ स्पृणोमि॒ स्वाहा॒ वाता॑त्ते प्रा॒णान्त्स्पृ॑णोमि॒ स्वाहा॑ दि॒ग्भ्यस्ते॒ श्रोत्र॑ꣳ स्पृणोमि॒ स्वाहा॒ऽद्भ्यस्ते॒ लोहि॑तꣳ स्पृणोमि॒ स्वाहा॑ पृथि॒व्यै ते॒ शरी॑रꣳ स्पृणोमि॒ स्वाहेत्यथा॒न्यामा॒जते॒ति ब्रूतात्सा ते॒ सम्राड्दु॒घा स्या॑दि॒ति त॒तो है॒व स॒ऽउत्स॑साद के॒शिनी॒रि॒वेमा॒ऽअ॒प्येत॒र्हि प्र॒जा जा॑यन्ते ॥ ६ ॥

इति चतुर्थप्रपाठके चतुर्दशं ब्राह्मणम् ॥ ११–४–१४ ॥ (८.४.) ॥

इति चतुर्थः प्रपाठकः समाप्तः ॥ ११–४ ॥

कण्डिकासंख्या ॥ १०२ ॥ अष्टमोऽध्यायश्च समाप्तः ॥ ११–८ ॥

अस्मिन्काण्डे कण्डिकासंख्या ॥ ४३७ ॥

इति माध्यन्दिनीये शतपथब्राह्मणे संग्रहापरनामधेयम् अष्टाध्यायीनामकमेकादशं काण्डं समाप्तम् ॥ ११ ॥

---

तस्मा उ हैतदुवाच–स्पृतीर्हुत्वाऽन्यामाजतेति ब्रूतात् । सा ते सम्राड्दुघा स्यादिति । " चंद्रात्ते मनः स्पृणोमि स्वाहा । सूर्यात्ते चक्षुः स्पृणोमि स्वाहा । वातात्ते प्राणान् स्पृणोमि स्वाहा । दिग्भ्यस्ते श्रोत्रं स्पृणोमि स्वाहा । अद्भ्यस्ते लोहितं स्पृणोमि स्वाहा । पृथिव्यै ते शरीरं स्पृणोमि स्वाहा " इति । अथान्यामाजतेति ब्रूतात् । सा ते सम्राड्दुधा स्यादिति । ततो हैव स उत्ससाद । कैशिनीरिवेमा अप्येतर्हि प्रजा जायन्ते ॥ ६ ॥

---

हे भगवः ! विद्यां ' मा वोचः ' । क्षत्रियस्यास्य लोको न भविष्यतीति । ननु–तवानुशयः स तस्य नास्तीति । ' अयं वाव ' अयमेव खलु ' क्षत्रियस्य लोकः ' । तस्मात् सोऽस्त्यत्र । तैः एवमुक्ते सति ' सः ' खंडिकः तद्वचनमतिक्रम्य ' उवाच ' । एतल्लोकसंबंधिन्यो रात्रयः अल्पीयस्यः । ' अमू रात्रयः ' परलोकसंबंधिन्यो बह्व्यो भवंति । अतः ' वक्ष्याम्येव ' इत्युवाच ॥ ५ ॥

एवमुक्त्वा खंडिकः ' तस्मै ' खलु ' एतत् ' वक्ष्यमाणमुवाच–स्पृतीर्हुत्वेति । होममंत्रेषु " स्पृणोमि "–इति लिंगात् एता आहुतयः स्पृतयः प्रापकत्वात् 'स्पृतीः' ताः 'हुत्वा' ' अन्यां ' दोहार्थं ' आजत ' दोग्ध्रीमाजत आगमयत ' इति ब्रूतात् ' । तथाभिधानस्य प्रयोजनकथनम्–सा त इति । घर्मधुगिति । ' घर्मः ' प्रवर्ग्यः तदर्थं या दुह्यते सा ' घर्मदुघा ' । इदानीं स्पृतीराह–चंद्रात्ते मनः स्पृणोमीत्यादिना । प्रस्तुत-

---

१–घर्मधुक्छार्दूलहता चेत्स्पृतीर्जुहुयाच्चन्द्रात्ते मनः स्पृणोमि स्वाहा, सूर्यात्ते चक्षुः स्पृणोमि स्वाहा, वातात्ते प्राणान्स्पृणोमि स्वाहा, दिग्भ्यस्ते श्रोत्रꣳ स्पृणोमि स्वाहा, अद्भ्यस्ते लोहितꣳ स्पृणोमि स्वाहा, पृथिव्यै ते शरीरꣳ स्पृणोमि स्वाहेति । हुत्वाऽन्यामाजतेति ब्रूयात् । का. श्रौ. सू. २५ । १४७–१४८ । इति ॥

त्वात् घर्मदुघा संबोध्यते । अथवा पशोर्मारणात् संज्ञप्यमानः पशुः संबोध्यते । हे गौः ! हे पशो ! वा 'ते' तव 'मनः' चंद्रात्सकाशात् तेन च मनः 'स्पृणोमि' प्रीणयामि प्रलयामि वा मनसश्चंद्रदेवताकत्वात्। तद्देवताभ्यः एता आहुतयः 'स्वाहा' सुहुता भवन्तु । एवं 'सूर्यात्ते चक्षुः' । 'वाताते प्राणान्' । 'दिग्भ्यस्ते श्रोत्रम्।' 'अद्भयस्ते लोहितम्'। 'पृथिव्यै ते शरीरम्'। इति पंचमन्त्रेषु सूर्यादेश्चक्षुराद्यभिमानित्वात् । 'तस्मात्ते' तव चक्षुरादीन् स्पृणोमीति व्याख्येयम् । स्पृतीर्हुत्वाऽन्यामाजतेति वचनं दर्शयति—**अथान्यामाजतेति** । व्याख्यातम् । एवमुपदिष्टः 'सः' केशी 'ततः' देशात् 'उत्ससाद' गतवानभूत् । तस्मात् 'अप्येतर्हि' इदानीमपि इमा वर्तमानाः 'प्रजाः' 'केशिनीरिव' केशवत्य एव । अथवा केशसंबंधिन्यः 'जायन्ते' । केशिना प्रजाभिवृद्धिकरविद्याया लब्धत्वात् ॥ ६ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये एकादशकाण्डेऽष्टमेऽध्याये चतुर्थं ब्राह्मणम् ॥ ( ११ । ८ । ४ ) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं,
सप्ताब्धीन्पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटं च ॥
धान्याद्रिं धन्यजन्मा तिलभवमतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान्गुडकृतमजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणजमनृणः शार्करं चार्कतेजा,
रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये एकादशकाण्डे अष्टमोऽध्यायः समाप्तः ॥ ( ११–८ ) ॥

## इति संग्रहापरनामधेयमष्टाध्यायीनामकम् एकादशं काण्डं समाप्तम् ॥



ॐ

श्रीमद्वाजसनेयिमाध्यन्दिन-

# शतपथब्राह्मणम् ।

हरिस्वामिभाष्यसमेतम् ।

तत्र

## द्वादशं काण्डम् १२ ।

गङ्गाविष्णु श्रीकृष्णदास,

मालिक-" लक्ष्मीवेङ्कटेश्वर " स्टीम्-प्रेस,

कल्याण-बंबई.

संवत् १९९६, शके १८६१.

1939.

# अथात्र शतपथब्राह्मणस्य परिशेषाख्यो भागः ।

## अथ मध्यमसौत्रामण्युभयनामकं द्वादशं काण्डम् ।

### प्रथमोऽध्यायः प्रारभ्यते ।

तत्र प्रथमं ब्राह्मणम् ।

प्रथमप्रपाठके च प्रथमं ब्राह्मणम् ।

अयं वै यज्ञो योऽयम्पुवते । तुमेतुऽ ईप्सन्ति ये संवत्सराय दीक्षन्ते तेषाङ्गृहपतिः प्रथमो दीक्षतेऽयम्वै लोको गृहपतिरस्मिन्वै लोकुऽ इदꣳ सर्व्वम्प्रतिष्ठितङ्गृहपताऽउ वै सुसत्रिणः प्रतिष्ठिताः प्रतिष्ठायामेवैतत्प्रति-ष्ठाय दीक्षन्ते ॥ १ ॥

---

**गवामयनब्राह्मणम् ।**

अयं वै यज्ञो योऽयं पवते । तमेत ईप्सन्ति; संवत्सराय दीक्षन्ते । तेषां गृहपतिः प्रथमो दीक्षते । अयं वै लोको गृहपतिः । अस्मिन् वै लोक इदं सर्वं प्रतिष्ठितम् । गृहपता उ वै ससत्रिणः प्रति-ष्ठिताः । प्रतिष्ठायामेवैतत् प्रतिष्ठाय दीक्षन्ते ॥ १ ॥

---

**हरिस्वामिभाष्यमाकाण्डान्तम् ।**

अथ गवामयनम् । तत्रेह यजमानानां दीक्षाक्रम उच्यते । एष श्रुत्यन्तरेषु द्वादशाह एवोच्यते । अत्रैवं वक्तव्यम् । कथं ? गवामयनं हि संवत्सरसत्रम् । तत्र सत्रात्मकस्य द्वादशाहस्य विकार इति द्वादशाह एवोच्यते । विहितो दीक्षाक्रमः तत एव लभ्यते । ननु–गवामयने क्रमो विहितः सन् द्वादशाहे प्राप्नोति । अपेक्षितश्च तेनापि यजमा-नानां दीक्षाक्रमः । कथम् ? बहुकर्तृकत्वात्–" सप्तदशावराश्चतुर्विंशतिपरमाः सत्रमासीरन् " इति हि वचनात् द्वादशाहो बहुयजमानकः । तेन सर्वे दीक्षणीयाः फलप्रतिग्रहीतृसंस्कारत्वाद्दीक्षायाः । तेषां च यजमानानामेकः क्रत्वर्थान् याजमानान् करोति । स तेनासाधारणात् गृहपतिकर्मणो गृहपतिरिति व्यपदिश्यते । अन्ये तु–" य उ वा ऋत्विजस्ते यजमानाः" इति वचनात् ब्रह्मत्वादिनिश्चयं कुर्वंतस्तन्निमित्तकैः ब्रह्मा उद्गाता इत्यादिविशेषणैः ख्यायन्ते । ततः स्वापेक्षितत्वासम्भवदर्थत्वात् द्वादशाह एव । " तेषां गृहपतिः प्रथमो दीक्षते अथ ब्रह्माणं दीक्षयति " इत्यादि क्रमविधानं शाखान्तरोक्तमप्यत्र योज्यत्वात्तद्वेदस्येदमिह पठ्यते । दर्शनं विशेषार्थम् । 'अयं वै ' यज्ञस्य कारणं आश्रयश्चेति ' यज्ञः ' ' यः अयं पवते ' वायुः, स हि सर्वभूतानां साधारणः

---

ततः षष्ठिपथं कृत्स्नं सरहस्यं ससंग्रहम् । चक्रे सप-

१–अनयोर्द्वादशत्रयोदशकाण्डयोः " परिशेषः " इति संज्ञान्तरम् । " ततः षष्ठिपथं कृत्स्नं सरहस्यं ससंग्रहम् । चक्रे सप-रिशेषं च " ( म. भा. शां. प. मो. ध. ४३ । १६ ) इत्यत्र प्रतिपादितम् ॥ २–सायणभाष्यं नोपलब्धम् ।

( न्तेऽथ ) अथ ब्रह्माणं दीक्षयति । चन्द्रमा वै ब्रह्मा सोमो वै चन्द्रमाः सौम्याऽओषधयऽओषधीस्तदनेन लोकेन सन्दधाति तस्मादेतावन्तरेणान्यो न दीक्षेत स यद्धैतावन्तरेणान्यो दीक्षेतौषधीस्तदनेन लोकेन नाना कुर्य्यादुच्छोषुका ह स्युस्तस्मादेतावन्तरेणान्यो न दीक्षेत ॥ २ ॥

( ता ) अथोद्गातारन्दीक्षयति । पर्ज्जन्यो वाऽउद्गाता पर्ज्जन्याद्वै वृष्टिर्ज्जायते वृष्टिं तदोषधिभिः सन्दधाति तस्मादेतावन्तरेणान्यो न दीक्षेत स यद्धैतावन्तरेणान्यो दीक्षेत वृष्टिन्तदोषधिभिर्न्नाना कुर्य्यादवर्षुको ह स्यात्तस्मादेतावन्तरेणान्यो न दीक्षेत ॥ ३ ॥

---

अथ ब्रह्माणं दीक्षयति । चन्द्रमा वै ब्रह्मा । सोमो वै चन्द्रमाः । सौम्या ओषधयः । ओषधीस्तदनेन लोकेन संदधाति । तस्मादेतावंतरेणान्यो न दीक्षेत । स यद्धैतावन्तरेणान्यो दीक्षेत । ओषधीस्तदनेन लोकेन नाना कुर्यात् । उच्छोषुका ह स्युः । तस्मादेतावन्तरेणान्यो न दीक्षेत ॥ २ ॥

अथोद्गातारं दीक्षयति । पर्जन्यो वा उद्गाता । पर्जन्याद्वै वृष्टिर्जायते । वृष्टिं तदोषधिभिः संदधाति । तस्मादेतावंतरेणान्यो न दीक्षेत । स यद्धैतावंतरेणान्यो दीक्षेत । वृष्टिं तदोषधिभिर्नाना कुर्यात् । अवर्षुको ह स्यात् । तस्मादेतावंतरेणान्यो न दीक्षेत ॥ ३ ॥

---

प्राणः । प्राणेनैव यज्ञस्तायते । प्राण एवामृते संस्काररूपः प्रतितिष्ठति । 'तं' वायुं साधारणमेते आतुमिच्छन्ति । ये संवत्सराय दीक्षंत इति । संवत्सरसत्रिण उपन्यास उत्तरवाक्यसंम्बधार्थः । तेषां गृहपतिरिति । क्रमनियमवचनम् । 'गृहपतिः' गृहपतिग्रहणं यजमानोपलक्षणार्थम् । यज्ञपतिरित्यर्थः । सर्वे च ते यज्ञस्य पतयः । श्रुत्या च विशेषवचनात् क्रत्वर्थयाजमानकारी गृहपतिर्गृह्यते ।'अयं वै लोको गृहपतिः'। कस्मात् ? सामान्यादित्यत आह—अस्मिन् वै लोक इदं सर्वं प्रतिष्ठितमित्यादि ॥ १ ॥

अथ ब्रह्माणमिति । 'ब्रह्माणं' ब्रह्मत्वकारिणं 'दीक्षयति' अध्वर्युः । प्रकृतौ तेन दीक्षितत्वात् । 'चन्द्रमा वै ब्रह्मा' । दैवः 'सोमो वै चन्द्रमाः' सोमरसमयः । 'सौम्याः' सोमदेवत्याः 'ओषधयः' । सोम ओषधीनामधिदैवमित्यर्थः । गृहपतेरनन्तरं ब्रह्माणं दीक्षयति । 'ओषधीस्तदनेन सन्दधाति' । 'उच्छोषुकाः' शोषणधर्मकाः 'स्युः' ॥ २ ॥

अथोद्गातारमिति । प्रसन्नप्रायमतः परम् । 'अवर्षुकः' अवर्षणधर्मकः ॥ ३ ॥

---

१—अध्वर्युर्दीक्षयति ब्रह्मादीश्च । का. श्रौ. सू. १२ । ४३ ।

( त्ता ) अथ होतारं दीक्षयति। (त्य) अग्निर्वै होताऽधिदेवतं व्वागध्यात्ममन्नम्वृष्टिरग्निश्च तद्वाचञ्चान्नेन सन्दधाति तस्मादेतावन्तरेणान्यो न दीक्षेत स यद्धैतावन्तरेणान्यो दीक्षेताग्निश्च तद्वाचञ्चान्नेन नाना कुर्य्यादशनायुका ह स्युस्तस्मादेतावन्तरेणान्यो न दीक्षेतैतांश्चतुरोऽध्वर्य्युर्दीक्षयति ॥ ४ ॥

( त्यु ) अथाध्वर्य्युम्प्रतिप्रस्थाता दीक्षयति। मनो वाऽअध्वर्य्युर्व्वाग्घोता मनश्च तद्वाचञ्च सन्दधाति तस्मादेतावन्तरेणान्यो न दीक्षेत स यद्धैतावन्तरेणान्यो दीक्षेत मनश्च तद्वाचञ्च नाना कुर्य्यात्प्रमायुका ह स्युस्तस्मादेतावन्तरेणान्यो न दीक्षेत ॥ ५ ॥

( त्ता ) अथ ब्रह्मणे ब्राह्मणाच्छꣳसिनन्दीक्षयति। तꣳ हि सोऽन्वथोद्गात्रे प्रस्तोतारन्दीक्षयति तꣳ हि सोऽन्वथ होत्रे मैत्रावरुणन्दीक्षयति तꣳ हि सोऽन्वेतांश्चतुरः प्रतिप्रस्थाता दीक्षयति ॥ ६ ॥

( त्यु ) अथाध्वर्य्यवे प्रतिप्रस्थातारन्नेष्टा दीक्षयति। तꣳ हि सोऽन्वे-

अथ होतारं दीक्षयति। अग्निर्वै होताऽधिदेवतम्। वागध्यात्मम्। अन्नं वृष्टिः। अग्निं च तद्वाचं चान्नेन सन्दधाति। तस्मादेतावन्तरेणान्यो न दीक्षेत। स यद्धैतावन्तरेणान्यो दीक्षेत। अग्निं च तद्वाचं चान्नेन नाना कुर्यात्। अशनायुका ह स्युः। तस्मादेतावन्तरेणान्यो न दीक्षेत। एतांश्चतुरोऽध्वर्युर्दीक्षयति ॥ ४ ॥

अथाध्वर्युं प्रतिप्रस्थाता दीक्षयति। मनो वा अध्वर्युः। वाग् होता। मनश्च तद्वाचं च सन्दधाति। तस्मादेतावन्तरेणान्यो न दीक्षेत। स यद्धैतावन्तरेणान्यो दीक्षेत। मनश्च तद्वाचं च नाना कुर्यात्। प्रमायुका ह स्युः। तस्मादेतावन्तरेणान्यो न दीक्षेत ॥ ५ ॥

अथ ब्रह्मणे ब्राह्मणाच्छंसिनं दीक्षयति। तं हि सोऽनु। अथोद्गात्रे प्रस्तोतारं दीक्षयति। तं हि सोऽनु। अथ होत्रे मैत्रावरुणं दीक्षयति। तं हि सोऽनु। एतांश्चतुरः प्रतिप्रस्थाता दीक्षयति ॥ ६ ॥

अथाध्वर्यवे प्रतिप्रस्थातारं नेष्टा दीक्षयति। तं हि सोऽनु। एतेषां वै नवानां क्लृप्तिमन्वितरे

'अशनायुकाः' बहुक्षुधाकुलाः ॥ ४ ॥

'प्रमायुकाः'। "मीञ् हिंसायाम्" ( धा. पा. क्र्या. उ. ४ ) इति धातुः। विनाशधर्माणः ॥ ५ ॥

ब्रह्मणे ब्राह्मणाच्छंसिनमिति। चतुर्थी षष्ठ्यर्थे द्रष्टव्या ( पा. सू. २। ३। ६२ वा. ) कुतः? चतुर्थ्यनुपपत्तेः। न तावद्देवतावाची, अत एषा चतुर्थी न संप्रदाने। न तादर्थ्ये। न हि ब्रह्मार्थं ब्राह्मणाच्छंसी

१–अध्वर्य्वादीन्प्रतिप्रस्थाता। का. श्रौ. सू. १२। ४३। २–प्रतिप्रस्थात्रादीन्नेष्टा। का. श्रौ. सू. १२। ४३॥

तेषाम्वै नवानाङ्क्लृप्तिमन्वितरे कल्पन्ते नव वै प्राणाः प्राणानेवैष्वेतद्दधाति तथा सर्वमायुर्यन्ति तथो ह न पुराऽऽयुषोऽस्माल्लोकात्प्रयन्ति ॥ ७ ॥

( न्यु ) अथ ब्रह्मणे पोतारन्दीक्षयति । तᳪं हि सोऽन्वथोद्गात्रे प्रतिहर्तारन्दीक्षयति तᳪं हि सोऽन्वथ होत्रेऽच्छावाकन्दीक्षयति तᳪं हि सोऽन्वेतांश्चतुरो नेष्टा दीक्षयति ॥ ८ ॥

( त्यु ) अथाध्वर्य्यवे नेष्टारमुन्नेता दीक्षयति । तᳪं हि सोऽन्वथ ब्रह्मणऽआग्नीध्रन्दीक्षयति तᳪं हि सोऽन्वथोद्गात्रे सुब्रह्मण्यां दीक्षयति तᳪं हि सोऽन्वथ होत्रे ग्रावस्तुतन्दीक्षयति तᳪं हि सोऽन्वेतांश्चतुरऽउन्नेता दीक्षयति ॥ ९ ॥

---

कल्पन्ते । नव वै प्राणाः । प्राणानेवैष्वेतद्दधाति । तथा सर्वमायुर्यन्ति । तथा उ ह न पुराऽऽयुषोऽस्माल्लोकात् प्रयंति ॥ ७ ॥

अथ ब्रह्मणे पोतारं दीक्षयति । तं हि सोऽनु । अथोद्गात्रे प्रतिहर्तारं दीक्षयति । तं हि सोऽनु । अथ होत्रेऽच्छावाकं दीक्षयति । तं हि सोऽनु । एतांश्चतुरो नेष्टा दीक्षयति ॥ ८ ॥

अथाध्वर्यवे नेष्टारमुन्नेता दीक्षयति । तं हि सोऽनु । अथ ब्रह्मण आग्नीध्रं दीक्षयति । तं हि सोऽनु । अथोद्गात्रे सुब्रह्मण्यां दीक्षयति । तं हि सोऽनु । अथ होत्रे ग्रावस्तुतं दीक्षयति । तं हि सोऽनु । एतांश्चतुर उन्नेता दीक्षयति ॥ ९ ॥

---

दीक्ष्यते । किं तर्हि ब्राह्मणाच्छंस्यर्थमेव । परिशेषात् संबंधमात्रे षष्ठ्यर्थे यथा चतुर्थी । एवमुद्गात्रे इत्यादयोऽपि । कः पुनर्ब्रह्मणो ब्राह्मणाच्छंसिनः स्वं प्रत्यात्मिकः संबंधः । न खलु कश्चित्, अस्ति तु प्रकृतौ ज्योतिष्टोमे तस्यादीक्षितत्वेऽपि । अत्र वाक्योपदेशत् भविष्यति । कः पुनः सः, यावत्यो ब्रह्मणो दक्षिणाः । तावतीनामर्द्धं ब्राह्मणाच्छंसिनः इत्येषः संबंधः । एतावती तृतीयादेः । तुरीयमग्नीधश्चेति । एष ब्रह्मणस्तत्पुरुषाणां संबंधः । एवमुद्गात्रादीनां प्रस्तोत्रादीनां च । वाक्यं शाखांतरेषु स्पष्टमाम्नातम् । चोदितः संबंधः—"ततस्तं प्रतिप्रस्थाता दीक्षयित्वा; अर्द्धिनो दीक्षयति ब्राह्मणाच्छंसिनं ब्राह्मणम्" इत्यादिना । ननु च—अर्द्धिनः, तृतीयिणः, तुरीयिणः, इत्येते व्यपदेशाः प्रकृतौ उपयुज्यंते । ब्राह्मणाच्छंस्यादीनां भागविशेषाः कल्प्यन्ते । एते ब्राह्मणा उद्गातुरित्यादयो व्यपदेशा एते न किंचिदुपयुज्यंते । ब्राह्मणादीनां तुल्यभागत्वात् । एवं तर्हि अन्येऽप्येवमुपात्ता व्यपदेशा उपयोक्ष्यन्ते । "तत्प्राची दिक् होतुः दक्षिणा ब्रह्मणः" इत्यादीननुक्रम्य "तदेवं होत्रिका अन्वाभक्ता" इत्युच्यन्ते । तत्रैतेभ्यो व्यपदेशेभ्यः होतृपुरुषाः प्राच्यां दिशि तु आम-

---

१-नेष्टारीमुन्नेता । का. श्रौ. सू. १२ । ४३ ॥

( त्यु ) अथोन्नेतारम् । ( ध्रुँ ) स्नातको वा ब्रह्मचारी वाऽन्यो वा दीक्षितो दीक्षयति न पूतः पावयेदिति ह्याहुः सैषाऽनुपूर्व्वदीक्षा स यत्र हैवम्विद्वाᳬसो दीक्षन्ते दीक्षमाणा हैव ते यज्ञङ्कल्पयन्ति यज्ञस्य क्लृप्तिमनु सत्त्रिणां योगक्षेमः कल्पते सत्त्रिणां योगक्षेमस्य क्लृप्तिमन्वपि तस्यार्द्धस्य योगक्षेमः कल्पते यस्मिन्नर्द्धे यजन्ते ॥ १० ॥

तेषां वाऽ उन्नेतोत्तमो दीक्षते । प्रथमोऽवभृथादुदायतामुदैति प्राणो वाऽउन्नेता प्राणमेवैष्वेतदुभयतो दधाति तथा सर्व्वमायुर्यन्ति तथो ह न पुराऽऽयुषोऽस्माल्लोकात्प्रयान्ति सैषाऽनुपूर्व्वदीक्षा स यत्र हैवं विद्वाᳬसो दीक्षेरंस्तदेव दीक्षेत ॥ ११ ॥

इति प्रथमप्रपाठके प्रथमं ब्राह्मणम् ॥ १२।१।१ ॥ ( १-१ ) ॥

---

अथोन्नेतारं स्नातको वा ब्रह्मचारी वाऽन्यो वा दीक्षितो दीक्षयति । न पूतः पावयेत् इति ह्याहुः । सैषाऽनुपूर्वदीक्षा । स यत्र हैवं विद्वांसो दीक्षन्ते । दीक्षमाणा हैव ते यज्ञं कल्पयन्ति । यज्ञस्य क्लृप्तिमनु सत्रिणां योगक्षेमः कल्पते । सत्रिणां योगक्षेमस्य क्लृप्तिमन्वपि तस्यार्द्धस्य योगक्षेमः कल्पते । यस्मिन्नर्द्धे यजन्ते ॥ १० ॥

तेषां वा उन्नेतोत्तमो दीक्षते । प्रथमोऽवभृथादुदायतामुदैति । प्राणो वा उन्नेता । प्राणमेवै-

---

ज्यन्ते । दक्षिणस्यां ब्राह्मणाच्छंस्यादयो ब्रह्मपुरुषाः । इत्यादि सेत्स्यति । तस्मादुपपन्नमेतत् षष्ठ्यर्थे चतुर्थ्या । ( पा. सू. २ । ३ । ६२ वा. ) इति ॥ ६-९ ॥

'स्नातको वा' तस्यैवोन्नेतुः शिष्यः । 'ब्रह्मचारी वा' तस्यैव शिष्यः । कुत एतत् । 'अन्यो वा दीक्षितः' इति पृथगुपदेशात् । यदि तु सामान्येन स्नातको ब्रह्मचारी वा गृह्यते । ततः अन्यो वेति नोपपद्येत । न हि स्नातकब्रह्मचारिभ्यामन्यो दीक्षणयोग्योऽस्ति । न तावदनुपनीतः स्तोत्रियाः कर्तुम् ईशः स्नातको वा निवृत्ताधिकारात् । कात्यायनोऽप्येवं सूत्रयामास " अध्वर्युर्गृहपतिं दीक्षयति ब्रह्मादींश्च इति " ब्रह्मोद्गातृहोतॄन् इत्यर्थः । " अध्वर्य्वादीन् प्रतिप्रस्थाता " । अध्वर्युब्राह्मणाच्छंसिप्रस्तोतृमैत्रावरुणान् इत्यर्थः । " प्रतिप्रस्थात्रादीन्नेष्टा " इति । प्रतिप्रस्थातृपोतृप्रतिहर्त्रच्छावाकान् इत्यर्थः । " नेष्ट्रादीनुन्नेता " इति । नेष्ट्रग्नीत्सुब्रह्मण्याग्रावस्तुत इत्यर्थः । " उन्नेतारं ब्रह्मचारी स्नातकोऽन्यो वा ब्राह्मणो न पूतः पावयेत् इति श्रुतेः " ( का. श्रौ. सू. १२ । ४३ ) इति ॥ १० ॥

प्राणो वा उन्नेता । उन्नेतृत्वस्योत्तमत्वात् । अनुपूर्वदीक्षेति । 'तदेव दीक्षेत' तत्रैव विद्वद्भिः सह दीक्षेत, नाविद्वद्भिरित्यर्थः ॥ ११ ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये द्वादशकाण्डे प्रथमेऽध्याये प्रथमं ब्राह्मणम् ॥ ( १२ । १ । १ ) ॥

श्रद्धाया वै देवाः । ( ० ) दीक्षान्निरमिमतादित्यै प्रायणीयꣳ सोमा-त्क्रयम्विष्णोरातिथ्यमादित्यात्प्रवर्ग्यꣳ स्वधायाऽउपसदोऽग्नीषोमाभ्या-मुपवसथमस्माल्लोकात्प्रायणीयमतिरात्रम् ॥ १ ॥

( ꣳ ) संवत्सराच्चतुर्विꣳशमहः । ( ब्रं ) ब्रह्मणोऽभिप्लवं क्षत्त्रात्पृष्ठ्य-मग्नेरभिजितमद्भ्यः स्वरसाम्नऽ आदित्याद्विषुवन्तमुक्ताः स्वरसामानऽ इन्द्राद्विश्वजितमुक्तौ पृष्ठ्याभिप्लवौ मित्रावरुणाभ्यां गोऽआयुषी विश्वेभ्यो देवेभ्यो दशरात्रं दिग्भ्यो दाशरात्रिकम्पृष्ठ्यꣳ षडहमेभ्यो लोकेभ्य-श्छन्दोमान् ॥ २ ॥

( न्त्सं ) संवत्सराद्दशममहः । प्रजापतेर्म्महाव्व्रतꣳ स्वर्ग्गाल्लोकादुद-यनीयमतिरात्रन्तदेतत्संवत्सरस्य जन्म स यो हैवमेतत्सम्वत्सरस्य जन्म व्वेदा हास्माच्छ्रेयाञ्जायते सात्मा भवति संवत्सरो भवति संवत्सरो भूत्वा देवानप्येति ॥ ३ ॥

इति प्रथमप्रपाठके द्वितीयं ब्राह्मणम् ॥ १२।१।२॥ ( १-२ ) ॥

---

ष्वेतदुभयतो दधाति । तथा सर्वमायुर्यन्ति । तथा उ ह न पुराऽऽयुषोऽस्माल्लोकात्प्रयन्ति । सैषा-ऽनुपूर्वदीक्षा । स यत्र हैवं विद्वांसो दीक्षेरन् । तदेव दीक्षेत ॥ ११ ॥

श्रद्धाया वै देवा दीक्षां निरमिमत । अदित्यै प्रायणीयम् । सोमात् क्रयम् । विष्णोरातिथ्यम् । आदित्यात्प्रवर्ग्यम् । स्वधाया उपसदः । अग्नीषोमाभ्यामुपवसथम् । अस्माल्लोकात् प्रायणीयमति-रात्रम् ॥ १ ॥

संवत्सरात् चतुर्विंशमहः । ब्रह्मणोऽभिप्लवम् । क्षत्त्रात् पृष्ठ्यम् । अग्नेरभिजितम् । अद्भ्यः स्वरसाम्नः । आदित्याद्विषुवंतम् । उक्ताः स्वरसामानः । इंद्राद्विश्वजितम् । उक्तौ पृष्ठ्याभिप्लवौ । मित्रावरुणाभ्यां गोआयुषी । विश्वेभ्यो देवेभ्यो दशरात्रम् । दिग्भ्यो दाशरात्रिकं पृष्ठ्यं षडहम् । एभ्यो लोकेभ्यश्छन्दोमान् ॥ २ ॥

संवत्सराद्दशममहः । प्रजापतेर्महाव्रतम् । स्वर्गाल्लोकादुदयनीयमतिरात्रम् । तदेतत्संवत्सरस्य जन्म । स यो हैवमेतत्संवत्सरस्य जन्म वेद । आ हास्माच्छ्रेयान् जायते । सात्मा भवति । संवत्सरो भवति । संवत्सरो भूत्वा देवानप्येति ॥ ३ ॥

---

'श्रद्धाया वै' । श्रद्धादिभ्यो देवताभ्यः दीक्षाद्यभिमानिनो विग्रहवन्तो देवाः देवैर्निर्मिताः । सम्भूय च इति प्रादुर्भाविका इत्येषा उपासना अत्र ब्राह्मणे उच्यते । प्रसन्नम् एव ॥ १-३ ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये द्वादशकाण्डे प्रथमेऽध्याये द्वितीयं ब्राह्मणम् ॥ १२ । १ । २ ॥

यद्वै दीक्षन्ते । ( न्तेऽग्ना ) अग्नाविष्णूऽएव देवते यजन्तेऽग्नाविष्णू देवते भवन्त्यग्नाविष्णवोः सायुज्यꣳ सलोकतां जयन्ति ॥ १ ॥

( न्त्यु ) अथ यत्प्रायणीयेन यजन्ते । ( न्तेऽदि ) अदितिमेव देवतां यजन्तेऽदितिर्देवता भवन्त्यदितेः सायुज्यꣳ सलोकतां जयन्ति ॥ २ ॥

( न्त्यु ) अथ यत्क्रयेण चरन्ति । सोममेव देवतां यजन्ते सोमो देवता भवन्ति सोमस्य सायुज्यꣳ सलोकताञ्जयन्ति ॥ ३ ॥

( न्त्यु ) अथ यदातिथ्येन यजन्ते । विष्णुमेव देवतां यजन्ते विष्णुर्देवता भवन्ति विष्णोः सायुज्यꣳ सलोकतां जयन्ति ॥ ४ ॥

( न्त्यु ) अथ यत्प्रवर्ग्येण यजन्ते । ( न्तऽआ ) आदित्यमेव देवतां यजन्तऽआदित्यो देवता भवन्त्यादित्यस्य सायुज्यꣳ सलोकतां जयन्ति॥५॥

( न्त्यु ) अथ यदुपसदऽ उपयन्ति । ( न्त्ये ) एताऽ एव देवता यजन्ते याऽएताऽउपसत्स्वेता देवता भवन्त्येतासां देवतानाꣳ सायुज्यꣳ सलोकतां जयन्ति ॥ ६ ॥

---

देवविद्याब्राह्मणम् ।

यद्वै दीक्षन्ते । अग्नाविष्णू एव देवते यजन्ते । अग्नाविष्णू देवते भवन्ति । अग्नाविष्णवोः सायुज्यं सलोकतां जयन्ति ॥ १ ॥

अथ यत् प्रायणीयेन यजन्ते । अदितिमेव देवतां यजन्ते । अदितिर्देवता भवन्ति । अदितेः सायुज्यं सलोकतां जयन्ति ॥ २ ॥

अथ यत् क्रयेण चरन्ति । सोममेव देवतां यजन्ते । सोमो देवता भवन्ति । सोमस्य सायुज्यं सलोकतां जयन्ति ॥ ३ ॥

अथ यदातिथ्येन यजन्ते । विष्णुमेव देवतां यजन्ते । विष्णुर्देवता भवन्ति । विष्णोः सायुज्यं सलोकतां जयन्ति ॥ ४ ॥

अथ यत्प्रवर्ग्येण यजन्ते । आदित्यमेव देवतां यजन्ते । आदित्यो देवता भवन्ति । आदित्यस्य सायुज्यं सलोकतां जयन्ति ॥ ५ ॥

अथ यदुपसद उपयन्ति । एता एव देवता यजन्ते । या एता उपसत्सु । एता देवता भवन्ति । एतासां देवतानां सायुज्यं सलोकतां जयन्ति ॥ ६ ॥

---

'यद्वै दीक्षन्ते'। एतदपि कर्मसु देवविद्याब्राह्मणम् । प्रसन्नमेव । 'अग्नाविष्णू देवते भवन्ति' अभेद-

( न्त्यु ) अथ यदग्नीषोमीयेण पशुना यजन्ते । ( न्तेऽग्नी ) अग्नीषोमावेव देवते यजन्तेऽग्नीषोमौ देवते भवन्त्यग्नीषोमयोः सायुज्यꣳ सलोकतां जयन्ति ॥ ७ ॥

( न्त्यु ) अथ यत्प्रायणीयमतिरात्रमुपयन्ति । ( न्त्य ) अहोरात्रेऽ एव देवते यजन्तेऽहोरात्रे देवते भवन्त्यहोरात्रयोः सायुज्यꣳ सलोकतां जयन्ति ॥ ८ ॥

( न्त्यु ) अथ यच्चतुर्विꣳशमहरुपयन्ति । संवत्सरमेव देवतां यजन्ते संवत्सरो देवता भवन्ति सम्वत्सरस्य सायुज्यꣳ सलोकतां जयन्ति ॥ ९ ॥

( न्त्यु ) अथ यदभिप्लवꣳ षडहमुपयन्ति । ( न्त्य ) अर्द्धमासांश्च मासांश्च देवता यजन्तेऽर्द्धमासाश्च मासाश्च देवता भवन्त्यर्द्धमासानाञ्च मासानाञ्च सायुज्यꣳ सलोकतां जयन्ति ॥ १० ॥

( न्त्यु ) अथ यत्पृष्ठ्यꣳ षडहमुपयन्ति । ( न्त्यृ ) ऋतूनेव देवता यजन्तऽऋतवो देवता भवन्त्यृतूनाꣳ सायुज्यꣳ सलोकतां जयन्ति ॥ ११ ॥

( न्त्यु ) अथ यदभिजितमुपयन्ति । ( न्त्य ) अग्निमेव देवतां यजन्तेऽग्निर्देवता भवन्त्यग्नेः सायुज्यꣳ सलोकतां जयन्ति ॥ १२ ॥

---

अथ यदग्नीषोमीयेण पशुना यजन्ते । अग्नीषोमावेव देवते यजन्ते । अग्नीषोमौ देवते भवन्ति । अग्नीषोमयोः सायुज्यं सलोकतां जयन्ति ॥ ७ ॥

अथ यत् प्रायणीयमतिरात्रमुपयन्ति । अहोरात्रे एव देवते यजन्ते । अहोरात्रे देवते भवन्ति । अहोरात्रयोः सायुज्यं सलोकतां जयन्ति ॥ ८ ॥

अथ यच्चतुर्विंशमहरुपयन्ति । संवत्सरमेव देवतां यजन्ते । संवत्सरो देवता भवन्ति । संवत्सरस्य सायुज्यं सलोकतां जयन्ति ॥ ९ ॥

अथ यदभिप्लवं षडहमुपयन्ति । अर्द्धमासांश्च मासांश्च देवता यजन्ते । अर्द्धमासाश्च मासाश्च देवता भवन्ति । अर्द्धमासानां च मासानां च सायुज्यं सलोकतां जयन्ति ॥ १० ॥

अथ यत्पृष्ठ्यं षडहमुपयन्ति । ऋतूनेव देवता यजन्ते । ऋतवो देवता भवन्ति । ऋतूनां सायुज्यं सलोकतां जयन्ति ॥ ११ ॥

अथ यदभिजितमुपयन्ति । अग्निमेव देवतां यजन्ते । अग्निर्देवता भवन्ति । अग्नेः सायुज्यं सलोकतां जयन्ति ॥ १२ ॥

---

र्दर्शिनः । 'अग्नाविष्ण्वोः सायुज्यं सलोकतां जयन्ति' देवदर्शिनः । तत्रापि प्रहृष्टविद्याः 'सायुज्यं जयन्ति'। अन्तराः 'सलोकताम्' इति विशेषः । एवमुत्तरत्रापि वाच्यम् ॥ १–२१ ॥

( न्त्यु ) अथ यत्स्वरसाम्नऽउपयन्ति । ( न्त्य ) अपऽएव देवता यजन्त ऽआपो देवता भवन्त्यपाᳪं सायुज्यᳪं सलोकतां जयन्ति ॥ १३ ॥

( न्त्यु ) अथ यद्विषुवन्तमुपयन्ति । ( न्त्या ) आदित्यमेव देवतां यजन्तऽआदित्यो देवता भवन्त्यादित्यस्य सायुज्यᳪं सलोकतां जयन्त्युक्ताः स्वरसामानः ॥ १४ ॥

( न्तोऽथ ) अथ यद्विश्वजितमुपयन्ति । ( न्ती ) इन्द्रमेव देवतां यजन्त ऽइन्द्रो देवता भवन्तीन्द्रस्य सायुज्यᳪं सलोकतां जयन्त्युक्तौ पृष्ठ्याभिप्लवौ ॥ १५ ॥

( वावु ) अथ यद्गोऽआयुषीऽउपयन्ति । मित्रावरुणावेव देवते यजन्ते मित्रावरुणौ देवते भवन्ति मित्रावरुणयोः सायुज्यᳪं सलोकतां जयन्ति ॥ १६ ॥

( न्त्यु ) अथ यद्दशरात्रमुपयन्ति । विश्वानेव देवान्देवता यजन्ते विश्वे देवा देवता भवन्ति विश्वेषान्देवानाᳪं सायुज्यᳪं सलोकतां जयन्ति ॥ १७ ॥

( न्त्यु ) अथ यद्दाशरात्रिकम्पृष्ठ्यᳪं षडहमुपयन्ति । दिशऽ एव देवता यजन्ते दिशो देवता भवन्ति दिशाᳪं सायुज्यᳪं सलोकतां जयन्ति ॥१८॥

---

अथ यत् स्वरसाम्न उपयन्ति । अप एव देवता यजन्ते । आपो देवता भवन्ति । अपां सायुज्यं सलोकतां जयन्ति ॥ १३ ॥

अथ यद्विषुवन्तमुपयन्ति । आदित्यमेव देवतां यजन्ते । आदित्यो देवता भवन्ति । आदित्यस्य सायुज्यं सलोकतां जयन्ति । उक्ताः स्वरसामानः ॥ १४ ॥

अथ यद्विश्वजितमुपयन्ति । इन्द्रमेव देवतां यजन्ते । इन्द्रो देवता भवन्ति । इन्द्रस्य सायुज्यं सलोकतां जयन्ति । उक्तौ पृष्ठ्याभिप्लवौ ॥ १५ ॥

अथ यत् गोआयुषी उपयन्ति । मित्रावरुणावेव देवते यजन्ते । मित्रावरुणौ देवते भवन्ति । मित्रावरुणयोः सायुज्यं सलोकतां जयन्ति ॥ १६ ॥

अथ यद्दशरात्रमुपयन्ति । विश्वानेव देवान् देवता यजन्ते । विश्वे देवा देवता भवन्ति । विश्वेषां देवानां सायुज्यं सलोकतां जयन्ति ॥ १७ ॥

अथ यद्दाशरात्रिकं पृष्ठ्यं षडहमुपयन्ति । दिश एव देवता यजन्ते । दिशो देवता भवन्ति । दिशां सायुज्यं सलोकतां जयन्ति ॥ १८ ॥

( न्त्यु ) अथ यच्छन्दोमानुपयन्ति । ( न्ती ) इमानेव लोकान्देवता यजन्तऽइमे लोका देवता भवन्त्येषां लोकानाᳬं सायुज्यᳬं सलोकतां जयन्ति ॥ १९ ॥

( न्त्यु ) अथ यद्दशममहरुपयन्ति । संवत्सरमेव देवतां यजन्ते संवत्सरो देवता भवन्ति संवत्सरस्य सायुज्यᳬं सलोकतां जयन्ति ॥ २० ॥

( न्त्यु ) अथ यन्महाव्रतमुपयन्ति । प्रजापतिमेव देवतां यजन्ते प्रजापतिर्देवता भवन्ति प्रजापतेः सायुज्यᳬं सलोकतां जयन्ति ॥ २१ ॥

( न्त्यु ) अथ यदुदयनीयमतिरात्रमुपयन्ति । संवत्सरमेव तदाप्त्वा स्वर्गे लोके प्रतितिष्ठन्ति तान्यदि पृच्छेयुः कामद्य देवतां यजध्वे का देवता स्थ कस्यान्देवतायां वसथेत्यतऽएवैकतमाम्ब्रूयुर्यस्यै तु नेदिष्ठᳬं स्युरेते ह वै सतिसदऽएते हि सतीषु देवतासु सीदन्तो यन्ति सत्रसदो हैवेतरे स यो हैवं विदुषां दीक्षितानां पापकᳬं सत्रे कीर्तयेदेताभ्यस्त्वा देवताभ्यऽआवृश्चामऽइत्येनम्ब्रूयुः स पापीयान्भवति श्रेयाᳬंसऽ आत्मना ॥ २२ ॥

---

अथ यच्छंदोमानुपयन्ति । इमानेव लोकान् देवता यजन्ते । इमे लोका देवता भवन्ति । एषां लोकानां सायुज्यं सलोकतां जयन्ति ॥ १९ ॥

अथ यद्दशममहरुपयन्ति । संवत्सरमेव देवतां यजन्ते । संवत्सरो देवता भवन्ति । संवत्सरस्य सायुज्यं सलोकतां जयन्ति ॥ २० ॥

अथ यन्महाव्रतमुपयन्ति । प्रजापतिमेव देवतां यजन्ते । प्रजापतिर्देवता भवन्ति । प्रजापतेः सायुज्यं सलोकतां जयन्ति ॥ २१ ॥

अथ यदुदयनीयमतिरात्रमुपयन्ति । संवत्सरमेव तदाप्त्वा स्वर्गे लोके प्रतितिष्ठन्ति। तान् यदि पृच्छेयुः । कामद्य देवतां यजध्वे । का देवता स्थ । कस्यां देवतायां वसथेति । अत एवैकतमां ब्रूयुः। यस्यै तु नेदिष्ठं स्युः। एते सतिसदः । एते हि सतीषु देवतासु सीदन्तो यन्ति। सत्रसदो हैवेतरे । स यो हैवं विदुषां दीक्षितानां पापकं सत्रे कीर्तयेत् । "एताभ्यस्त्वा देवताभ्य आवृश्चामः" इत्येनं ब्रूयुः। स पापीयान् भवति । श्रेयांस आत्मना ॥ २२ ॥

---

'यस्यै' यस्या देवतायाः 'नेदिष्ठं' अन्तिकतमं भवेयुः। तामेव ब्रूयुरग्नाविष्णू अदो यजामहे इति । 'एते ह वै सतिसदः' यदि ते वै उपासका उच्यन्ते। इत्युपासनागुणव्यपदेशेन वचनम्। 'सतीषु देवतासु' सीदन्तीति

स॒ऽ ए॒ष सं॑वत्सरस्त्रि॒महा॑व्रतः । (अ) च॒तु॒र्व्वि॒ᳪ॑शे म॒हा॑व्र॒तं विषु॑-व॒ति म॒हा॑व्र॒तम्म॒हा॑व्र॒तऽ ए॒व म॒हा॑व्रत॒न्त॒ᳪ॑ ह॒ स्मै॒तं पू॒र्व्वऽउ॒पय॑न्ति त्रि॒महा॑व्रत॒न्ते तु॒ तेज॒स्वि॒नऽ आ॒सुः स॒त्यवा॑दिनः सᳪ॑शि॒तव्र॑ताऽअ॒थ य॒ ऽउ॒ हैन॒मप्ये॒तर्हि॒ त॒थोपे॑यु॒र्य्य॒था॒ऽऽमपा॒त्रमु॒दक॒ऽआ॑सि॒क्ते वि॒म्रि॒त्ये॒देव॒ᳪ॑ हैव॒ ते वि॒म्रि॒त्येयु॑रुप॒र्य्यु॒पय॑न्ति त॒देषा॒ᳪ॑ स॒त्येन॒ श्र॒मेण॒ तप॑सा श्र॒द्धया॑ य॒ज्ञेना॒हुति॑भि॒रव॑रुद्धम्भवति ॥ २३ ॥

इति प्रथमप्रपाठके तृतीयं ब्राह्मणम् ॥ १२-१-३ ॥ ( १. ३. ) ॥

पु॒रु॑षो वै॒ सं॑वत्स॒रः । ( स्तु ) तस्य॒ पा॒दावे॒व प्रा॑य॒णी॒योऽतिरा॒त्रः पा॒दाभ्या॒ᳪ॑ हि॒ प्रय॑न्ति त॒योर्य्य॒च्छु॒क्ल॒न्तद॑ह्नो रू॒पं य॒त्कृ॒ष्णं तद्रा॒त्रेर्न॒खा॒न्ये॑-वौषधि॒वन॒स्पती॑ना॒ᳪ॑ रू॒पमू॒रू च॒तु॒र्व्वि॒ᳪ॑शमह॑रुरोऽभिप्ल॒वः पृ॒ष्ठ्यम्पृ॒ष्ठ्यः॥१॥

---

स एष संवत्सरस्त्रिमहाव्रतः । चतुर्विंशे महाव्रतम् । विषुवति महाव्रतम् । महाव्रत एव महाव्रतम् । तं ह स्मैतं पूर्व उपयंति त्रिमहाव्रतं ते । ते तेजस्विन आसुः । सत्यवादिनः । संशितव्रताः । अथ य उ ह एनमप्येतर्हि तथोपेयुः । यथाऽऽमपात्रमुदक आसिक्ते विम्रित्येत् । एवं हैव ते विम्रित्येयुः । उपर्युपयंति । तदेषां सत्येन श्रमेण तपसा श्रद्धया यज्ञेनाहुतिभिरवरुद्धं भवति ॥ २३ ॥

## अध्यात्मविद्ब्राह्मणम् ।

पुरुषो वै संवत्सरः । तस्य पादावेव प्रायणीयोऽतिरात्रः । पादाभ्यां हि प्रयन्ति । तयोर्यच्छुक्लं

---

सतिसदः । सत्रे सीदन्तीति सत्रसदः इतरे केवलं सत्रैककर्मात्मके सीदन्ति । न देवतास्विति सत्रसदः अनुपासकाः ॥ २२ ॥

तमेतं 'त्रिमहाव्रतं' संवत्सरं 'पूर्वे' प्राक्कलियुगादुपयन्ति स्म न संप्रति । किं कारणम् । यस्मात्ते 'तेजस्विनः' बभूवुः ॥

**सत्यवादिन** इति । तीक्ष्णीकृतव्रताः इति येषां आख्याऽस्ति, ते त्रिमहाव्रतयाजिन इत्येतत् गृह्यते अन्यथा विम्रित्येत् कर्म विनश्येत् तेऽपि विम्रित्येयुः विनश्येयुरित्यर्थः । 'उपरि' उपांत्यदिवसे 'उपयन्ति' यत्तर्हि कलियुगे तत्र कथं ? विनाशदोषो न भविष्यतीत्यत आह—तदुपर्युपगम्यमानमेषां सांप्रतिकानां श्रमादिभिरवरुद्धं भवति । न हिनस्तीति ॥ २३ ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये द्वादशकाण्डे प्रथमेऽध्याये तृतीयं ब्राह्मणम् ॥ १२ । १ । ३ ॥

'पुरुषो वै' । कर्मगतौ अध्यात्मविदां ब्राह्मणमेतत् । प्रसन्नप्रायम् । पुरुष इति । 'अध्यात्मं' संवत्सर-

---

१–प्रसाध्यत्वादध्यारनकः ।

( ष्ट्योऽय ) अयमेव दक्षिणो बाहुरभिजित् । ( दि ) इमुऽ एव दक्षिणे त्रयः प्राणाः स्वरसामानो मूर्द्धा विषुवानिमुऽ एवोत्तरे त्रयः प्राणाः स्वरसामानः ॥ २ ॥

( नोऽयु ) अयमेवोत्तरो बाहुर्व्विश्वजित् । ( डु ) उक्तौ पृष्ठ्याभिप्लवौ यावुवाञ्चौ प्राणौ तु गोऽआयुषीऽ अङ्गानि दशरात्रो मुखं महाव्व्रतꣳ हुस्तावेवोदयनीयोऽतिरात्रो हुस्ताभ्याꣳ ह्युद्यन्ति तयोर्य्यच्छुक्लं तदह्नो रूपं युत्कृष्णं तद्रात्रेर्न्नखान्येव नुक्षत्राणाꣳ रूपꣳ सुऽएषु संवत्सरोऽध्यात्मम्प्रतिष्ठितः स यो हैवमेतꣳ संवत्सरमुध्यात्मम्प्रतिष्ठितं ᳚वेद प्रतितिष्ठति प्रजया पशुभिरस्मिंल्लोकेऽमृतत्वेनामुष्मिन् ॥ ३ ॥

इति प्रथमप्रपाठके चतुर्थं ब्राह्मणम् ॥ १२।१।४ ॥ ( १–४ )

प्रथमोऽध्यायः समाप्तः ॥ १२ । १ ॥ कण्डिकासंख्या ४० ॥

---

तदह्नो रूपम् । यत्कृष्णं तद्रात्रेः । नखान्येवौषधिवनस्पतीनां रूपम् । ऊरू चतुर्विंशमहः । उरोऽभिप्लवः । पृष्ठं पृष्ठ्यः ॥ १ ॥

अयमेव दक्षिणो बाहुरभिजित् । इम एव दक्षिणे त्रयः प्राणाः स्वरसामानः । मूर्द्धा विषुवान् । इम एवोत्तरे त्रयः प्राणाः स्वरसामानः ॥ २ ॥

अयमेवोत्तरो बाहुर्विश्वजित् । उक्तौ पृष्ठ्याभिप्लवौ । यावुवांचौ प्राणौ ते गोआयुषी । अङ्गानि दशरात्रः । मुखं महाव्रतम् । हस्तावेवोदयनीयोऽतिरात्रः । हस्ताभ्यां ह्युद्यन्ति । तयोर्यच्छुक्लं तदह्नो रूपम् । यत्कृष्णं तद्रात्रेः । नखान्येव नक्षत्राणां रूपम् । स एष संवत्सरोऽध्यात्मं प्रतिष्ठितः । स यो हैवमेतं संवत्सरमध्यात्मं प्रतिष्ठितं वेद । प्रतितिष्ठति प्रजया पशुभिरस्मिन् लोके; अमृतत्वेनामुष्मिन् ॥ ३ ॥

---

प्रसवत्वादध्यात्मकः, साधिदेवो गृह्यते । कुत एतत् " नखान्येवौषधिवनस्पतीनां रूपं नक्षत्राणां वेति " वचनात् । उरोऽभिप्लव इति । दक्षिण उरसो भागः । पृष्ठभागस्य उत्तरः । " उक्तौ पृष्ठ्याभिप्लवौ " इति वामस्य पृथग्वचनात् ॥ १–३ ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये द्वादशकाण्डे प्रथमेऽध्याये चतुर्थं ब्राह्मणम् ॥ १२ । १ । ४ ॥

नागस्वामिसुतोऽवन्त्यां पाराशर्यो वसन् हरिः । श्रुत्यर्थं दर्शयामास शक्तितः पौष्करीयकः ॥

श्रीमतोऽवन्तिनाथस्य विक्रमार्कस्य भूपतेः । धर्माध्यक्षो हरिस्वामी व्याख्यच्छातपथीं श्रुतिम् ॥

भूभर्त्रा विक्रमार्केण क्लृप्तां कनकवेदिकाम् । दानायाध्यस्य कृतवान् श्रुत्यर्थविवृतिं हरिः ॥

इति श्रीसर्वविद्यानिधानकवीन्द्राचार्यसरस्वतीनां श्रीहरिस्वामिनां, कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये द्वादशकाण्डे प्रथमोऽध्यायः समाप्तः ॥ ( १२–१ ) ॥

# अथ द्वितीयेऽध्याये प्रथमं ब्राह्मणम् ।

## प्रथमप्रपाठके च पञ्चमं ब्राह्मणम् ।



समुद्रं वाऽ एते प्रतरन्ति । ये संवत्सराय दीक्षन्ते तस्य तीर्थमेव प्रायणीयोऽतिरात्रस्तीर्थेन हि प्रस्नान्ति तद्यत्प्रायणीयमतिरात्रमुपयन्ति यथा तीर्थेन समुद्रम्प्रस्नायुस्तादृक्तत् ॥ १ ॥

( द्वा ) गाधमेव प्रतिष्ठा चतुर्विꣳशमहः । ( स्यु ) यथोपपक्षदघ्नम्वा कण्ठदघ्नं वा यतो विश्रम्य प्रस्नान्ति प्रस्नेयोऽभिप्लवः प्रस्नेयः पृष्ठ्यः॥२॥

( ष्ठ्यो ) गाधमेव प्रतिष्ठाऽभिजित् । ( द्यु ) यथोपपक्षदघ्नं वा कण्ठदघ्नं वा यतो विश्रम्योत्क्रामन्त्यूरुदघ्नऽएव प्रथमः स्वरसामा जानुदघ्नो द्वितीयः कुल्फदघ्नस्तृतीयो द्वीपः प्रतिष्ठा विषुवान्कुल्फदघ्नऽएव प्रथमोऽर्वाक्सामा जानुदघ्नो द्वितीयऽऊरुदघ्नस्तृतीयः ॥ ३ ॥

---

### सम्वत्सरे समुद्रप्रतरणोपासनम् ।

समुद्रं वा एते प्रतरन्ति । ये संवत्सराय दीक्षन्ते । तस्य तीर्थमेव प्रायणीयोऽतिरात्रः । तीर्थेन हि प्रस्नांति । तद्यत्प्रायणीयमतिरात्रमुपयन्ति । यथा तीर्थेन समुद्रं प्रस्नायुः । तादृक्तत् ॥ १ ॥

गाधमेव प्रतिष्ठा चतुर्विंशमहः । यथोपपक्षदघ्नं वा कंठदघ्नं वा यतो विश्रम्य प्रस्नांति । प्रस्नेयोऽभिप्लवः । प्रस्नेयः पृष्ठ्यः ॥ २ ॥

गाधमेव प्रतिष्ठाऽभिजित् । यथोपपक्षदघ्नं वा कण्ठदघ्नं वा यतो विश्रम्योत्क्रामन्ति । ऊरुदघ्न एव प्रथमः स्वरसामा । जानुदघ्नो द्वितीयः । कुल्फदघ्नस्तृतीयः । द्वीपः प्रतिष्ठा विषुवान् । कुल्पदघ्न एव प्रथमोऽर्वाक्सामा । जानुदघ्नो द्वितीयः । ऊरुदघ्नस्तृतीयः ॥ ३ ॥

---

" समुद्रं वा " एताभिः पंचभिः कण्डिकाभिः संवत्सरे समुद्रप्रतरणोपासनमुच्यते । तीर्थगाधोद्धृयुत्तरणपुनःप्रतरणानि च प्रायणीयादीनां नामान्येतानि प्रदर्श्यन्ते । उपासनारूपत्वाच्च फलम् । संवत्सरोऽप्यत्र ईदृश एव द्रष्टव्यः । ' प्रस्नांति ' " ष्णा शौचे " ( धा. पा. अ. प. ४२ ) इत्येषः प्रपूर्वः प्रतरणे वर्त्तते । प्रतरतीत्यर्थः । ' प्रस्नायुः ' प्रतरेयुः ॥ १ ॥

गाधमेव ग्राह्यम् अल्पोदकम् । प्रतितिष्ठत्यस्यामिति ' प्रतिष्ठा ' । ' उपपक्षदघ्नं ' पक्षयोः समीपमुपपक्षं प्रमाणमस्य उपपक्षदघ्नम् । कण्ठप्रमाणं ' कण्ठदघ्नं ' ।' प्रस्नेयः ' प्रस्नानार्हः प्रतरणार्ह इत्यर्थः ॥ २ ॥

सर्वान् कामान् अर्वाक् सुवृत्तः । अर्वाक् स च सामा इत्येवं प्राप्ते शाकपार्थिवादिवत्तत्पदलोपसमासः ॥ ३ ॥ ४ ॥

( यो ) गाधुमेवु प्रतिष्ठा व्विश्वजित् । ( ह्य ) युथोपपक्षदघ्नं वा कण्ठदघ्नं वा युतो व्विश्रुम्य प्रस्नुान्ति प्रस्नेयः पृष्ठ्यः प्रस्नेयोऽभिप्लुवः प्रस्नेये गोऽआयुषी प्रस्नेयो दशरात्रः ॥ ४ ॥

( त्रो ) गाधुमेवु प्रतिष्ठा महाव्व्रतम् । युथोपपक्षदघ्नं वा कण्ठदघ्नं वा युतो व्विश्रुम्योत्स्नुान्ति तीर्थमेवोदयनीयोऽतिरात्रुस्तीर्थेनु ह्युत्स्नुान्ति तद्य-दुदयनीयमतिरात्रमुपयुन्ति युथा तीर्थेन समुद्रम्प्रस्नाय तीर्थेनोत्स्नायु-स्तादृक्तत् ॥ ५ ॥

( तु ) तुदाहुः । कुति सम्वत्सरुस्यातिरात्राः कुत्यग्निष्टोमाः कुत्युक्थ्याः कुति षोडशिनः कुति षडहा ऽइुति ऽद्वावतिरात्रौ षुट्शतमग्निष्टोमा द्वे चत्वारिंशे शतेऽ उुक्थ्यानामिति नु युऽ उुक्थ्यान्त्स्वुरसाम्नऽ उपयन्ति॥६॥

---

गाधमेव प्रतिष्ठा विश्वजित् । यथोपपक्षदघ्नं वा कण्ठदघ्नं वा यतो विश्रम्य प्रस्नान्ति । प्रस्नेयः पृष्ठ्यः । प्रस्नेयोऽभिप्लवः । प्रस्नेये गोआयुषी । प्रस्नेयो दशरात्रः ॥ ४ ॥

गाधमेव प्रतिष्ठा महाव्रतम् । यथोपपक्षदघ्नं वा कण्ठदघ्नं वा यतो विश्रम्योत्स्नान्ति । तीर्थमेवो-दयनीयोऽतिरात्रः । तीर्थेन ह्युत्स्नान्ति । तद्यदुदयनीयमातिरात्रमुपयन्ति । यथा तीर्थेन समुद्रं प्रस्नाय तीर्थेनोत्स्नायुः । तादृक्तत् ॥ ५ ॥

तदाहुः—कति संवत्सरस्यातिरात्राः । कत्यग्निष्टोमाः । कत्युक्थ्याः । कति षोडशिनः । कति षडहा इति । द्वावतिरात्रौ । षट्शतमग्निष्टोमाः । द्वे चत्वारिंशे शते उक्थ्यानाम् । इति नु य उक्थ्यान् स्वरसाम्न उपयन्ति ॥ ६ ॥

---

'उत्स्नांति' उत्तरन्ति ॥ ५ ॥

तदाहुः । 'कति' "श्रद्धाया वै देवाः" इत्यत्र प्रायणीयादीनि सप्तत्रिंशत् सौम्यान्युपक्रम्य "तदेतत्संवत्स-रस्य जन्म" इत्युक्तम् । तथा "यद्वै दीक्षंते" इत्यत्रापि तान्येव सप्तत्रिंशतमुपन्यस्य "स एष संवत्सरस्त्रि-महाव्रतः" इत्युक्तम् । तथा "पुरुषो वै संवत्सरः" इत्यत्रापि तान्येवानुक्रांतानि । तथा "समुद्रं वा एते प्रतरन्ति" इत्यत्रापि तान्येवानुक्रांतानि । न च तावतीभिः संवत्सरः पूर्यते । तत्रावश्यं तेषामभ्यासेन संवत्सरः पूरणीयः प्राप्नोति । सः अभ्यासोऽविशेषात् सर्वेषां तुल्यः प्रसज्यते । तन्निवृत्त्यर्थं पृष्ठ्याभिप्लवयोरेवाभ्यास उच्यते । सोऽपि च प्रतिमासं चतुःकृत्वः अभिप्लवस्य षष्ठसप्तमद्वादशेषु मासेषु त्रिस्त्रिः, पृष्ठ्यस्य तु सकृत् प्रयोगः, इत्येष कल्पः । संख्याप्रश्नप्रतिवचनाभ्यां कथं (विदेशत्रा ?) क्रियते । द्वावतिरात्राविल्यतिरात्रयोरना-वृत्तिं दर्शयति । षट्शतमग्निष्टोमा इति पंचचत्वारिंशदभिप्लवाभ्यासाः । तत्र प्रथमांत्यावग्निष्टोमौ उक्थ्या इतरे इति नवतिरभिप्लवाका अग्निष्टोमाः । पार्ष्ठिका द्वादश । प्रतिमासं पृष्ठ्यस्य प्रयोगात् । अभिजित् विश्वजित् महाव्रतं विषुवान् इत्येवं चत्वारोऽग्निष्टोमाः । इत्येतदंगीकृत्याह—षट्शतमग्निष्टोमा इति । चतुर्विंशं

( न्त्यु ) अथ येऽग्निष्टोमान् । (न्द्वा) द्वादशशतमग्निष्टोमा द्वे चतुस्त्रिंशे शते ऽउक्थ्यानां द्वादश षोडशिनः षष्टिः षडहाऽ इति नु सम्वत्सरस्याप्तिः ॥ ७ ॥

( द्वा ) द्वादश वै मासाः संवत्सरस्य । तेषामेतत्तेजऽइन्द्रियं यत्पृष्ठानि तद्यन्मासि मासि पृष्ठान्युपयन्ति मासश ऽएव तत्सम्वत्सरस्य तेजऽ आप्नुवन्त्यथ कथं त्रयोदशस्य मासस्य तेजऽ आप्नुवन्तीत्युपरिष्टाद्विषुवतो विश्वजितं सर्व्वपृष्ठमग्निष्टोममुपयन्त्येवमु त्रयोदशस्य मासस्य तेजऽ आप्नुवन्ति ॥ ८ ॥

( न्त्ये ) एतद्ध स्म वै तद्विद्वानाह । श्वेतकेतुरारुणेयः संवत्सराय न्वाऽ अहं दीक्षिष्यऽ इति तं ह पितोपेक्ष्योवाच वेत्थ न्वायुष्मन्तसम्वत्सरस्य गाधप्रतिष्ठाऽइति वेदेति होवाचैतद्ध तद्विद्वानुवाच ॥ ९ ॥

इति प्रथमप्रपाठके पञ्चमं ब्राह्मणम् ॥ १२।१९ ॥ ( २-१ ) ॥

---

अथ येऽग्निष्टोमान् । द्वादशशतमग्निष्टोमाः । द्वे चतुस्त्रिंशे शते उक्थ्यानाम् । द्वादश षोडशिनः । षष्टिः षडहाः । इति नु संवत्सरस्याप्तिः ॥ ७ ॥

द्वादश वै मासाः संवत्सरस्य । तेषामेतत्तेजः, इंद्रियं—यत्पृष्ठानि । तद्यन्मासि मासि पृष्ठान्युपयन्ति । मासश एव तत्संवत्सरस्य तेज आप्नुवन्ति । अथ कथं त्रयोदशस्य मासस्य तेज आप्नुवन्ति इति । उपरिष्टात् विषुवतो विश्वजितं सर्वपृष्ठमग्निष्टोममुपयन्ति । एवमु त्रयोदशस्य मासस्य तेज आप्नुवन्ति ॥ ८ ॥

एतद्ध स्म वै तद्विद्वानाह श्वेतकेतुरारुणेयः । संवत्सराय न्वा अहं दीक्षिष्य इति । तं ह पितोपेक्ष्योवाच । वेत्थ न्वायुष्मन् संवत्सरस्य गाधप्रतिष्ठा इति । वेदेति होवाच । तद्ध तद्विद्वानुवाच ॥९॥

---

त्वहः अत्र उक्थ्या एव अभिप्रेतम् । द्वे चत्वारिंशे शते उक्थ्यानाम् । प्रतिमासं विंशतिरुक्थ्या भवन्तीत्यभिप्रायः । चतुरभिप्लविके अर्थे स्पष्टमेव षष्ठे मासेऽत्र छन्दोमाः आयुश्च । अविवाक्यं तु आंतरालिकम् । नोक्थ्येषु नाग्निष्टोमेषु संख्यातम् । एवं तावत् ये उक्थ्याः 'ते स्वरसाम्न उपयन्ति' । तेषां संख्या पूरणीया ॥ ६ ॥

अथ येऽग्निष्टोमानिति । 'ये' तु 'अग्निष्टोमान्' स्वरसाम्न उपयन्ति । तेषां तैः षड्भिरग्निष्टोमैः सह 'द्वादशशतं' अग्निष्टोमानां भवति । तैरेव ऊनाः उक्थ्याः 'द्वे चतुस्त्रिंशे शते' भवन्ति । द्वादश षोडशिन इति । तेन द्वादशकृत्वः पृष्ठ्यः अभ्यस्यते इति गम्यते । षष्टिः षडहा इति । सप्तपंचाशत् पार्ष्ठिकाभिप्लविकास्त्रयः प्रायणीयादिभिः सह भाषिता इत्यभिप्रायः । विषुवांस्तु संवत्सरस्यात्मेति न संख्यातः । 'इति नु' तावत् संवत्सरस्याप्तिः पूरणमित्युपसंहारः ॥ ७ ॥

द्वादश वै मासा इति । 'द्वादश मासाः' प्रकल्प्यंते । पुनः प्रतिमासं 'पृष्ठ्यः' प्रयोक्तव्य इति पाठ

तुद्दाहुः । कुस्मादुभयुतोज्योतिषोऽभिप्लुवा भुवन्त्यन्युतोज्योतिः पृष्ठ्यऽ इुतीमे वै लोकाऽ अभिप्लुवाऽ उभयुतोज्योतिषो वा ऽइमे लोकाऽ अग्निनेतुऽ आदित्येनामुतऽऋतुवः पृष्ठ्योऽन्युतोज्योतिषो वाऽ ऋतुवऽ एषुऽ एषां ज्योतिर्य्युऽ एष तुपति ॥ १ ॥

देवचक्रे वाऽ एते पृष्ठ्यप्रतिष्ठिते । यजमानस्य पाप्मानं तृꣳहती पुरिप्लुवेते स यो हैवं विद्वुषां दीक्षितानां पापकꣳ सत्रे कीर्तुयत्येते हास्य देवचक्रे शिरश्छिन्तो दशरात्रऽ उद्धिः पृष्ठ्याभिप्लुवौ चक्रे ॥ २ ॥

---

तदाहुः—कस्मादुभयतोज्योतिषोऽभिप्लवा भवन्ति । अन्यतोज्योतिः पृष्ठ्य इति । इमे वै लोका अभिप्लवाः । उभयतोज्योतिषो वा इमे लोकाः—अग्निनेतः, आदित्येनामुतः । ऋतवः पृष्ठ्यः । अन्यतोज्योतिषो वा ऋतवः । एष एषां ज्योतिः । य एष तपति ॥ १ ॥

देवचक्रे वा एते पृष्ठ्यप्रतिष्ठिते यजमानस्य पाप्मानं तृंहती परिप्लवेते । स यो हैवं विद्वुषां

---

क्रमाच्च पूर्वपक्षे अभिप्लवपूर्वा मासाः । उत्तरपक्षे तु—पृष्ठ्यपूर्वाः सेत्स्यंति । तदाह—द्वादश मासाः । माससम्मिताः त्रिंशत्संख्याका अस्य कर्मसंवत्सरस्य भागाः कल्प्या इति शेषः । तेषां द्वादशानां माससम्मितानां कर्मभागानामन्तःस्थानां 'तेजः'। "तिज निशाने"। ( धा. पा. चु. प. ११९ ) इति धातुः । अतिशयेन तीक्ष्णं इन्द्रियं वर्द्धयन् स्वकार्यक्षमतममित्यर्थः । 'यत्पृष्ठानि' पृष्ठस्तोत्रसाधनानि रथंतरादीनि । तैरत्र पृष्ठ्याः षडहमुपयन्ति । तेन 'मासशः' मासे मासे संवत्सरस्य तेजसि स्थानमंगम् । तदाप्नुवन्तीत्येवं प्रतिमासं पृष्ठ्यस्यावृत्तिरुच्यते । अथ कथमिति । त्रयोदशमासस्य यत् । एतद्ध स्मेति । 'गाधप्रतिष्ठा' ( संवत्सराग्नितेजःस्वयेच्छेति द्रष्टव्यम् ? ) सर्वेषामेतेषामत्र वचनात् ॥ ८ ॥ ९ ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये द्वादशकाण्डे
द्वितीयेऽध्याये प्रथमं ब्राह्मणम् ॥ ( १२ । २ । १ ) ॥

**तदाहुः कस्मादिति** । प्रतिमासं पृष्ठ्याभिप्लवौ उपेतव्याविल्युक्तम् । तावेव तु अत्र आधियज्ञिकेन आधिदैविकेन च रूपेण निरूप्येते । ज्योतिःशब्देनाग्निष्टोम उच्यते । 'उभयतः' अदावन्ते च ज्योतिरग्निष्टोमो यस्य मध्ये, चत्वार उक्थ्याः । एकश्च षोडशी सोऽन्यतोज्योतिः । कुत एतत्, उत्तरत्रास्य 'उभयतोज्योतिः' । तादृशाश्चत्वारः अभिप्लवाः । 'अन्यतः' अन्यतरः आदावेव ज्योतिरग्निष्टोमो यस्य अन्ये चत्वार उक्थ्याः, 'एकश्च षोडशी, स 'अन्यतोज्योतिः' । कुत एतत् । उत्तरस्य क्षीरकरणात् । नव अग्रिमा मासि संपद्यन्ते । एकविंशतिरुक्थ्याः । एक उक्थ्यः षोडशिमानिति । सर्वमिदं स्पष्टीकरिष्यते । इमे वै लोका अभिप्लुवा इति । ज्योतिर्गौरायुरित्येत एव तु ये अनुलोमाः प्रतिलोमाश्च अभिप्लवाः ते त्रित्वसामान्याल्लोका इति अभिप्रायः । 'ऋतवः पृष्ठ्याः' षट्त्वसामान्यात् ॥ १ ॥

'देवचक्रे' । 'एते' यौ पृष्ठ्याभिप्लवौ एते देवानां रथचक्रे । कुत एतत् रथचक्रे इति । "दशरात्र

तदाहुः । (स्र्यु) यत्समेऽएव चक्रे भवतोऽथैते विषमा स्तोमाः कथमस्यैते समा स्तोमाऽउपेता भवन्तीति यदेव षडन्यान्यहानि षडन्यानि तेनेति ब्रूयात् ॥ ३ ॥

( त्पृ ) पृष्ठ्याभिप्लवौ तन्त्रे कुर्व्वीतेति ह स्माह पैङ्ग्यः । ( स्तु ) तयो स्तोत्राणि च शस्त्राणि च सञ्चारयेदिति स यत्सञ्चारयति तस्मादिमे प्राणा नाना सन्तऽएकोतयः समानमूतिमनु सञ्चरन्त्यथ यन्न सञ्चारयेत्प्रमायुको यजमानः स्यादेष ह वै प्रमायुको योऽन्धो वा बधिरो वा ॥ ४ ॥

---

दीक्षितानां पापकं सत्रे कीर्तयति । एते हास्य देवचक्रे शिरश्छितः । दशरात्र उद्धिः । पृष्ठ्याभिप्लवौ चक्रे ॥ २ ॥

तदाहुः—यत्समे एव चक्रे भवतः । अथैते विषमाः । स्तोमाः । कथमस्यैते समा स्तोमाः । उपेता भवन्तीति । यदेव षडन्यान्यहानि षडन्यानि । तेनेति ब्रूयात् ॥ ३ ॥

पृष्ठ्याभिप्लवौ तन्त्रे कुर्वीत । इति ह स्माह पैंग्यः । तयोः स्तोत्राणि च शस्त्राणि च संचारयेदिति । स यत्संचारयति । तस्मादिमे प्राणा नाना सन्त एकोतयः समानमूतिमनु सञ्चरन्ति । अथ यन्न संचारयेत् । प्रमायुको यजमानः स्यात् । एष ह वै प्रमायुकः । योऽन्धो वा बधिरो वा ॥४॥

---

उद्धिः " इति वचनात् । पृष्ठ्यप्रतिष्ठिते इति । 'पृष्ठ्यप्रतिष्ठिते' 'यजमानस्य पाप्मानम्' पापमपहन्तव्यम् 'तृंहती' यती परिप्लवेते । कथं पुनः पृष्ठ्यप्रतिष्ठिते मासे अभिप्लवे नारभ्ये ? पृष्ठ्ये मासः तिष्ठते । स च बलवत्तर इत्येतत् एतेन प्रकारेणोच्यते च । केनेति च पृष्ठ्यस्य गुरुत्वं चेति । " अंगिरसः सर्वैः स्तोमैः सर्वैः पृष्ठ्यैः गुरुभिः सामभिः स्वर्गं लोकमस्पृशन् " । तस्मात् पृष्ठ्य इति । ततश्च पृष्ठ्यो महावीर्यत्वात् आत्मप्रतिष्ठित इत्येतदभिप्रायं पृष्ठ्यप्रतिष्ठितत्वं द्रष्टव्यम् । 'दशरात्र उद्धिः' दीर्घत्वात् ॥ २ ॥

तदाहुः यत्समे एव चक्रे भवतोऽथ विषमा एते स्तोमा इति । पृष्ठ्याभिप्लवयोः स्तोमाः । पृष्ठ्ये त्रिवृदादयः षट्, प्रतिदिनमेकैकः । अभिप्लवे चत्वार एव त्रिवृदादयः । यदेव षडन्यानीति । यद्यपि स्तोमैयून साम एते चक्रे । तथापि अहःसंख्यया समे इत्यर्थः । ततश्च स्तोमसंघाता अपि ते षट् भवन्तीत्यभिप्रायः॥३॥

'पृष्ठ्याभिप्लवौ' न केवलं पृष्ठ्याभिप्लवौ उपेतदेवचक्रे इत्युपासीत किं तर्हि तन्त्रे एते इत्युपासीत नोपेते इति । तन्त्रता च का । ( यथा कुर्विंदर्यदंच यतानकं कुर्यात् । तत्र वनलभम् । ते तं भृशं वारयेदेव । तत्रोपृष्ठ्याभिप्लवाश्रूयानीववयो न युज्यते । तत्र स्वस्वसाधनभूतान् षडहस्तोत्रियाद्यान् त्रिवृदादयस्ते संचाराः । यद्धोत्रासत्सीर्यः । पूर्वस्मिन् ताः हन्यत रूपस्तमुत्तरतः । स्तोत्रियं कुर्यात् ? ) तदनुकाराः पृष्ठ्यादयो नामिन्नाः स्वरूपैः सन्तः समानमभितः स्वर्गादुदयनाडीमनुसञ्चरन्ति ॥ ४ ॥

२६८९

१६१

नुवाग्निष्टोमा मासि संपद्यन्ते । नुव वै प्राणाः प्राणानेवैष्वेतद्दधाति तुथा सुर्व्वमायुर्य्यन्ति तुथो ह नु पुराऽऽयुषोऽस्माल्लोकात्प्रयन्ति ॥ ५ ॥

(न्त्ये) एकविꣳशतिरुक्थ्याः । (०) द्वादश वै मासाः सम्वत्सरस्य पुञ्चर्तुव-स्त्रयो लोकास्तद्विꣳशतिरेषऽएवैकविꣳशो युऽ एष तुपत्येतामभिस-म्पदꣳ सुऽ एतुया सम्पुदा मासि मासि स्वर्ग्गु लोकꣳ रोहति मासशः स्वर्ग्गु लोकꣳ सुमश्नुतऽ एकविꣳशुञ्च स्तोमम्बृहतीञ्च छन्दः ॥ ६ ॥

( श्च ) चतुस्त्रिꣳशदग्निष्टोमा मासि सुम्पद्यन्ते । त्रयस्त्रिꣳशद्वै देवाः प्रजापतिश्चतुस्त्रिꣳशः सुर्व्वासान्देवतानामाप्त्याऽ एकऽ उक्थ्यः षोड-शिमानन्नं वाऽउक्थ्यो व्वीर्यꣳ षोडशी ॥ ७ ॥

( इये ) एतेन वै देवाः । ( ० ) व्वीर्य्येणान्नेन सुर्व्वान्कामानाप्नुवन्त्सुर्व्वा-न्कामानाश्नुवत तुथोऽएवैषऽएतेन व्वीर्य्येणान्नेन सुर्व्वान्कामानाप्नोति

---

नवाग्निष्टोमा मासि संपद्यन्ते । नव वै प्राणाः । प्राणानेवैष्वेतद्दधाति । तथा सर्वमायुर्यन्ति । तथा उ ह न पुराऽऽयुषोऽस्माल्लोकात्प्रयन्ति ॥ ५ ॥

एकविंशतिरुक्थ्याः । द्वादश वै मासाः संवत्सरस्य । पंचर्तवः । त्रयो लोकाः । तद्विंशतिः । एष एवैकविंशः । य एष तपति एतामभिसंपदम् । स एतया संपदा मासि मासि स्वर्गं लोकं रोहति । मासशः स्वर्गं लोकं समश्नुते । एकविंशं च स्तोमं बृहतीं च च्छन्दः ॥ ६ ॥

चतुस्त्रिंशदग्निष्टोमा मासि संपद्यन्ते । त्रयस्त्रिंशद्वै देवाः । प्रजापतिश्चतुस्त्रिंशः । सर्वासां देवताना-माप्त्यै । एक उक्थ्यः षोडशिमान् । अन्नं वा उक्थ्यः । वीर्यं षोडशी ॥ ७ ॥

एतेन वै देवा वीर्येणान्नेन सर्वान् कामानाप्नुवन् । सर्वान् कामानाश्नुवत । तथा उ एवैष एतेन

---

'नवाग्निष्टोमाः' स्पष्टा एव मासे भवन्ति चतुर्थाभिप्लवे पृष्ठौ पार्ष्ठिकौ नवमः । 'प्राणानेवैषु' । एतद् एव कुर्वन् आयुर्दधाति ॥ ५ ॥

'एकविंशतिः' आभिप्लवाकाः षोडश उक्थ्याः । पार्ष्ठिकाः पंच । सहषोडशिमानिति चतुस्त्रिंशत् सा एक-विंशतिरुक्थ्याः । तेषां द्वादशभिः स्तोत्रैर्विंशतिरग्निष्टोमो भवति । त्रीणि त्रीणि च स्तोत्राणि अपिशिविना तानि पृष्ठिमैर्भवन्ति । पूर्वैः सह चतुस्त्रिंशदग्निष्टोमा मासशः संपद्यंते । अपरा एकउक्थ्याः षोडशिनोऽभ्यासे भवन्ति । उक्थ्यस्योपरि षोडश्यतिरिक्तो भवतीत्यर्थः । (अत वै उच्छामूस्य त्रिंशस्वो प्रसः १) स्तोत्रशस्त्राणि भवंति । (सदमद-करोविविराट्विराट् इत्याद्युमिति श्रुतेर्वीर्यंषोडशःपर्वाणक्रवीर्यंतद्वानिंद्रो अस्य देवतः सोऽपि वीर्यतदीयं स्तोत्रम् । तदन्वयाः षोडशिनोऽवक्ष्यंस्तदुत्तरवीर्यवदित्यभिप्रायः १) 'एतेन वै' वीर्येणान्नेन चेति चशब्दो वक्तव्यः ॥६—८॥

सर्व्वान्कामानश्नुते तस्मात्पृष्ठ्याभिप्लवाऽ उपैवेयात्सम्वत्सराय दीक्षितऽ एतस्मै कामाय ॥ ८ ॥

( ग्रा ) अथादित्याश्च ह वाऽ अङ्गिरसश्च । ( श्रो ) उभये प्राजापत्याऽ अस्पर्द्धन्त व्वयम्पूर्व्वे स्वर्गं लोकमेष्यामो व्वयम्पूर्व्वऽ इति ॥ ९ ॥

तऽ आदित्याः । ( श्र ) चतुर्भि स्तोमैश्चतुर्भिः पृष्ठैर्लघुभिः सामभिः स्वर्गं लोकमभ्यप्लवन्त यदभ्यप्लवन्त तस्मादभिप्लवाः ॥ १० ॥

अन्वञ्चऽ इवाङ्गिरसः । सर्व्वैः स्तोमैः सर्व्वैः पृष्ठैर्गुरुभिः सामभिः स्वर्गं लोकमस्पृशन्यदस्पृशँस्तस्मात्पृष्ठ्यः ॥ ११ ॥

( ष्ठ्योऽभि ) अभिप्लवः षडहः । षड्ढ्यहानि भवन्त्यभिप्लवः पञ्चाहः पञ्च ह्यहानि भवन्ति यद्धेव प्रथममहस्तदुत्तममभिप्लवश्चतुरहश्चत्वारो हि स्तोमा भवन्ति त्रिव्वृत्पञ्चदशः सप्तदशऽ एकविᳫँशऽ इत्यभिप्लवस्त्र्यहस्त्र्यावृद्धि ज्योतिर्गौरायुरभिप्लवो द्व्यहो द्वे ह्येव सामनी भवतो बृहद्रथन्तरेऽ एवाभिप्लवऽ एकाहऽएकाहस्यो हि स्तोमैस्तायते चतुर्णामुक्थ्यानां द्वादश स्तोत्राणि द्वादश शस्त्राण्यतियन्ति स सप्तमोऽग्निष्टोमऽ एवमु सप्ताग्निष्टोमाः संपद्यन्ते ॥ १२ ॥

---

वीर्येणान्नेन सर्वान् कामानाप्नोति । सर्वान् कामानश्नुते । तस्मात् पृष्ठ्याभिप्लवाउपैवेयात्–संवत्सराय दीक्षित एतस्मै कामाय ॥ ८ ॥

अथादित्याश्च ह वा अंगिरसश्च उभये प्राजापत्या अस्पर्द्धंत । वयं पूर्वे स्वर्गं लोकमेष्यामो वयं पूर्व इति ॥ ९ ॥

त आदित्याश्चतुर्भिः स्तोमैश्चतुर्भिः पृष्ठैर्लघुभिः सामभिः स्वर्गं लोकमभ्यप्लवन्त । यदभ्यप्लवन्त । तस्मादभिप्लवाः ॥ १० ॥

अन्वंच इवांगिरसः सर्वैः स्तोमैः सर्वैः पृष्ठैर्गुरुभिः सामभिः स्वर्गं लोकमस्पृशन् । यदस्पृशन् । तस्मात् पृष्ठ्यः ॥ ११ ॥

अभिप्लवः षडहः । षड्ढ्यहानि भवन्ति । अभिप्लवः पञ्चाहः । पञ्च ह्यहानि भवन्ति । यद्धेव प्रथममहः । तदुत्तमम् । अभिप्लवश्चतुरहः । चत्वारो हि स्तोमा भवन्ति । त्रिवृत् पञ्चदशः सप्तदश

---

अथादित्याश्चेति । निर्वचनकंडिका एताः प्रश्नांताः । अभिप्लवाः षडहा उपास्या इति शेषः ॥ ९–११ ॥ यद्धेव प्रथममहस्तदुत्तममिति । एक एव सोऽग्निष्टोमः चोद्यत इत्यभिप्रायः । 'चत्वारो हि स्तोमा भवन्तीति' इमामन्तर्भूतस्तोमसंख्यामहर्मध्ये चत्वारि सामान्युपासीतेत्यभिप्रायः । त्र्यावृद्धि त्रयाणामह्ना

प्रोतिर्ह कौशांबेयः । कौसुरिबिन्दिरुद्दालकऽआरुणौ ब्रह्मचर्य्यमुवास तꣳ हाचार्य्यः पप्रच्छ कुमार कति ते पिता सम्वत्सरस्याहान्यमन्यतेति ॥ १३ ॥

दशेति होवाच । दश वाऽइति होवाच दशाक्षरा व्विराड्वैराजो यज्ञः ॥ १४ ॥

---

एकविंश इति । अभिप्लवस्त्र्यहः । त्र्यावृद्धि ज्योतिर्गौरायुः । अभिप्लवो द्व्यहः । द्वे ह्येव सामनी भवतः । बृहद्रथन्तरे एव । अभिप्लव एकाहः । एकाहस्य उ हि स्तोमैस्तायते । चतुर्णामुक्थ्यानां द्वादश स्तोत्राणि द्वादश शस्त्राण्यतियन्ति । स सप्तमोऽग्निष्टोमः । एवमु सप्ताग्निष्टोमाः सम्पद्यन्ते ॥ १२ ॥

प्रोतिर्ह कौशांबेयः कौसुरिबिंदिरुद्दालके आरुणौ ब्रह्मचर्यमुवास । तं हाचार्यः पप्रच्छ । कुमार ! कति ते पिता संवत्सरस्याहान्यमन्यतेति ॥ १३ ॥

दशेति होवाच । दश वा इति होवाच । दशाक्षरा विराट् । वैराजो यज्ञः ॥ १४ ॥

---

आवृत्तिरेषोऽभिप्लवो नाहरंतरं संख्याजनकमस्तीत्यर्थः । केषां पुनरह्नामावृदभिप्लव इत्यत आह—ज्योतिर्गौरायुः इति । एत एव त्रय आवृत्ता अभिप्लव इति । **द्वे ह्येव सामनी भवत** इति । अन्तर्भूतसामसंख्यया महास्वरसामोपासीतेत्यभिप्रायः । कथं पुनरभिप्लवे द्वे एव सामनी भवतः । पृष्ठ्यस्थाने नियमोऽयं, वैरूपादीनि भवन्ति । बृहद्रथंतरे एव भवतः । न स्तोत्रांतरे । 'एकाहस्यो हि स्तोमैः' । (श्विशब्दादिभिस्तायते न क्रुणवादिभिः । ?) स्ववर्णान् ज्यायान्पंचस्तोत्राणां द्वादशस्तोत्रकात् अग्निष्टोमात्तु द्वादश स्तोत्राणि द्वादश शस्त्राणि अतिरिच्यन्ते । स सप्तमोऽग्निष्टोमः अभिप्लवे संपद्यते । एवं ये अभिप्लवस्योपनिषद्यन्ते । तथा संवत्सरे वक्ष्यते । शेषाः संवत्सरस्य । एवमु इति ॥ १२ ॥

**प्रोतिर्ह कौशांबेयः** इति । 'प्रोतिः' प्रकृष्टभूगतिः 'कौशांबेयः' कोशांबिनिवासी 'कौसुरिबिंदिः' कुसुरिबिंदस्यापत्यम् । 'उद्दालके' अरुणपुत्रे । 'ब्रह्मचर्यं' चरितुमुषितः । किंचित्कालांते 'तं ह आचार्यः पप्रच्छ' तस्यैवात्र वचनं प्रकृतार्थज्ञापनार्थम् 'कुमार !' तव 'पिता' महायाज्ञिकः संवत्सरस्यास्य याज्ञिकस्य 'अहानि कति मन्यते स्म' उपास्ते स्मेत्यर्थः ॥ १३ ॥

**दशेति** । 'दश वा' दशैवामन्यत मम पितेत्येवमुवाच कुमारः । 'दश वै' । स वै एतान्यहानि इत्येवाचार्यः । कथं पुनरेष त्र्यधिकानि त्रीणि शतानि संति । दशैते शतादतिरिच्येरन्नित्यत आह—**दशाक्षरा** इति । (विराट्भस्यत्तस्वयज्ञशतस्व ?) विराडक्षरसंख्यया दशसंख्याहान्युपासितव्यानि । कतमानि पुनस्तानि दशाहान्यनुगृह्यन्ते । प्रायणीयोदयनीयौ दशरात्रश्च चतुर्विंशमहाव्रते पृष्ठ्याभिप्लवौ अभिजिद्विश्वजितौ स्वरसामानि इत्येतानि । कुत एतत् । उत्तरत्र एतेषां परस्परानुप्रवेशनं च । "समानमेतत् अहर्यत् प्रायणीयोदयनीयौ" इत्यादि । ह्येतेषां योन्यंतर्भावा वक्ष्यन्ते । तेनास्यामवस्थायां एतान्यंतर्गतानि गण्यंते इति गम्यते । गोआयुषी तु अभिप्लव एवांतर्गतौ इत्यभिप्रायः । दशरात्रेऽपि वस्तुतः पृष्ठ्यः षडहः । सपृष्ठ्य एव । ये च्छन्दोमाः ते परतन्त्रान्तर्गताः । यद्दशममहः तदग्निष्टोमे । (कचिद्वा स्वात्सासंवत्सरस्य शोचयत्वैः सह तैव गण्यत इत्यभिप्रायः ?) ॥ १४ ॥

कुति त्वेवेति । नवेति होवाच नुव वाऽ इति होवाच नुव वै प्राणाः प्राणैरु यज्ञस्तायते ॥ १९ ॥

कुति त्वेवेति । ( त्य ) अष्टेति होवाचाष्टौ वा ऽइति होवाचाष्टाक्षरा गायत्री गायत्रो यज्ञः ॥ १६ ॥

कुति त्वेवेति । सप्तेति होवाच सुप्त वाऽइति होवाच सप्त च्छन्दाᳬसि चतुरुत्तराणि च्छन्दोभिरु यज्ञस्तायते ॥ १७ ॥ ( अर्द्धप्रपाठकः ॥ ६६ ॥ )

कुति त्वेवेति । षडिति होवाच षड्वा ऽइति होवाच षुडृतवः सम्वत्सरः सम्वत्सरो यज्ञः समानुमेतदुहर्य्युत्प्रायणीयोदयनीयौ ॥ १८ ॥

---

कति त्वेवेति । नवेति होवाच । नव वा इति होवाच । नव वै प्राणाः । प्राणैरु यज्ञस्तायते ॥ १९ ॥

कति त्वेवेति । अष्टेति होवाच । अष्टौ वा इति होवाच । अष्टाक्षरा गायत्री । गायत्रो यज्ञः ॥ १६ ॥

कति त्वेवेति । सप्तेति होवाच । सप्त वा इति होवाच । सप्त च्छंदांसि चतुरुत्तराणि । छन्दोभिरु यज्ञस्तायते ॥ १७ ॥

कति त्वेवेति । षडिति होवाच । षड्वा इति होवाच । षड् ऋतवः संवत्सरः । संवत्सरो यज्ञः । समानमेतदहः—यत् प्रायणीयोदयनीयौ ॥ १८ ॥

---

कति त्वेवेति । ( अश्वेवन्येदपिसंक्ष्ययदशनममिति मन्यमान ? ) आचार्यः पुनः पुनः पप्रच्छ कति त्वेवेति । पुनरपि कति तव पिता सम्वत्सरस्य अवयवभूतानि अहानि उपास्ते स्मेति । ' नवेति होवाच ' । ' नवाहानि संवत्सरस्य मम पिताऽमन्यतेत्युवाच ' कुमारः । ' नव वै इति होवाच ' । नव वै संवत्सरस्याहानि यथा असौ मन्यते तथैव तत् इति आचार्यः परममनुमेने । नव वै प्राणा इत्युपपत्तिमाचार्य एवाह । स च कति प्राणसख्यया शक्यान्यहानि संग्रहीतुमित्युपपत्तिः । अथ यानि पूर्वकंडिकायां दशाहानि गणितानि । तेषां यत् दशमं तदिदानीं कांतर्गच्छति ? उच्यते—उदयनीयः प्रायणीये न भवति अतिरात्रत्वादंतत्वाच्चेत्यभिप्रायः । यतः तत्र वक्ष्यति । " समानमेतदहर्यत्प्रायणीयोदयनीयौ " इति । तत् अत्रैव कण्डिकायां आहत्य द्रष्टव्यं, तत्रानुपयोगात् । कथमनुपयोगः । प्रायणीयोदयनीययोर्हि अनन्यत्वे सति नवाहानीत्युपपद्यते न षडिति । ( सप्तानां ह्येकस्मिन्नंतर्गतषद्भावर्तु दशानां दशवै ताननुक्रमिष्यामः । ? ) प्रायणीयोदयनीयावित्यादि ॥ १९ ॥

कति त्वेवेति । " समानमेतदहर्यच्चतुर्विंशमहाव्रते "—इत्येतदत्र द्रष्टव्यम् तयोर्ह्येकत्वे सति अहानि भवन्ति ॥ १६ ॥

कति त्वेवेति । " समानमेतदहः यत्पृष्ठ्याभिप्लवौ "—इत्येतदत्र द्रष्टव्यम् । तयोर्ह्येकत्वे सति सप्ताहानि भवन्ति ॥ १७ ॥ १८ ॥

कति त्वेवेति । पञ्चेति होवाच पञ्च वाऽइति होवाच पाङ्क्तो यज्ञः पाङ्क्तः पशुः पञ्चर्तवः सम्वत्सरस्य सम्वत्सरो यज्ञः समानमेतदहर्य्यच्चतुर्व्विꣳशमहाव्रते ॥ १९ ॥

कति त्वेवेति । चत्वारीति होवाच चत्वारि वाऽइति होवाच चतुष्पादाः पशवः पशवो यज्ञः समानमेतदहर्य्यत्पृष्ठ्याभिप्लवौ ॥ २० ॥

कति त्वेवेति । त्रीणीति होवाच त्रीणि वाऽइति होवाच त्रीणि च्छन्दाꣳसि त्रयो लोकास्त्रिसवनो यज्ञः समानमेतदहर्य्यदभिजिद्विश्वजितौ ॥ २१ ॥

कति त्वेवेति । द्वेऽइति होवाच द्वे वाऽ इति होवाच द्विपाद्वै पुरुषः पुरुषो यज्ञः समानमेतदहर्य्यत्स्वरसामानः ॥ २२ ॥

कति त्वेवेति । (त्ये) एकमिति होवाचाहरेवेति तदेतदहरहरिति सर्व्वꣳ संवत्सरꣳ सैषा संवत्सरस्योपनिषत्स यो हैवमेताꣳ संवत्सरस्योपनिषदं

---

कति त्वेवेति । पञ्चेति होवाच । पञ्च वा इति होवाच । पांक्तो यज्ञः । पांक्तः पशुः । पंचर्तवः संवत्सरस्य । संवत्सरो यज्ञः । समानमेतदहः–यत् चतुर्विंशमहाव्रते ॥ १९ ॥

कति त्वेवेति । चत्वारीति होवाच । चत्वारि वा इति होवाच । चतुष्पादाः पशवः । पशवो यज्ञः । समानमेतदहः–यत् पृष्ठ्याभिप्लवौ ॥ २० ॥

कति त्वेवेति । त्रीणीति होवाच । त्रीणि वा इति होवाच । त्रीणि च्छंदांसि । त्रयो लोकाः । त्रिसवनो यज्ञः । समानमेतदहः–यदभिजिद्विश्वजितौ ॥ २१ ॥

कति त्वेवेति । द्वे इति होवाच । द्वे वा इति होवाच । द्विपाद्वै पुरुषः । पुरुषो यज्ञः । समानमेतदहः–यत्स्वरसामानः ॥ २२ ॥

कति त्वेवेति । एकमिति होवाच । अहरेवेति । तदेतदहरहरिति सर्वं संवत्सरम् । सैषा संवत्सर-

---

कति त्वेवेति । " समानमेतदहर्यदभिजिद्विश्वजितौ "–इत्येते स्वरसामान इत्येतदत्र द्रष्टव्यम् । तयोर्हि समुदितयोरेकत्वे सति पंच वा अहानि भवंति ॥ १९ ॥

कति त्वेवेति । अत्राप्येतत् द्रष्टव्यम् । समानमेतदहर्यदभिजित् । कुतः ? पूर्वेषां समानानुवचनानां प्रदर्शनार्थत्वात् । एवं सति चतुष्कोपपत्तेः ॥ २० ॥

कति त्वेवेति । ' समानमेतदहर्यदभिजिद्विश्वजितौ ' इत्येतदत्र द्रष्टव्यम् । एवं सति त्रित्वोपपत्तेः ॥ २१ ॥

कति त्वेवेति. । ' समानमेतदहर्यत् स्वरसामानः ' इति चतुर्विंशाभिप्लवौ इत्येतदत्र द्रष्टव्यम् । एवमेतद्वित्वोपपत्तेः ॥ २२ ॥

कति त्वेवेति । "समानमेतदहर्यत्प्रायणीयश्चतुर्विंशः" इत्येतदत्र द्रष्टव्यम् । एवमेवैकत्वोपपत्तेः । (सर्वेषु । तवैतेष्वस्तेसिति ? ) अहरिति प्रत्यासत्तिकृतमेकत्वमिति वाच्यम् । तदेतदहहररिति सर्वं संवत्सरारंभाय वक्ष्यते प्रति-

व्वेद्॒ हास्माच्छ्रेयाञ्जायते सात्मा भवति सम्वत्सरो भवति सम्वत्सरो भूत्वा देवानप्येति ॥ २३ ॥

इति प्रथमप्रपाठके षष्ठं ब्राह्मणम् ॥ १२-१-६ ॥ (२. २.) ॥

स वा॒ऽ एष सम्वत्सरो बृहतीमभिसम्पन्नः । ( ब्रो ) द्वावाक्ष्यंतामह्नाऽ॒ँ षडहौ द्वौ पृष्ठ्याभिप्लवौ गोऽआयुषी दशरात्रस्तत्षट्त्रिऽ॒ँशत्षट्त्रिऽ॒ँश-दक्षरा वै बृहती बृहत्या वै देवाः स्वर्गं लोकेऽयतन्त बृहत्या स्वर्गं लोकमाप्नुवंस्तथोऽ एवैषऽ एतद्बृहत्यैव स्वर्गे लोके यतते बृहत्या स्वर्गं लोकमाप्नोत्यथ यो बृहत्यां कामस्तमेवैतेनैवम्विदवरुन्धे ॥ १ ॥

यद्वै चतुर्विऽ॒ँशमहः । ( र्द ) दशरात्रस्य वै तत्सप्तमं वा नवमं वाऽभिप्लवात्पृष्ठ्यो निर्म्मितः पृष्ठ्यादभिजिदभिजितः स्वरसामानः स्वर-

---

स्योपनिषत् । स यो हैवमेतां संवत्सरस्योपनिषदं वेद । आ हास्मात् श्रेयान् जायते । सात्मा भवति । संवत्सरो भवति । संवत्सरो भूत्वा देवानप्येति ॥ २३ ॥

स वा एष संवत्सरो बृहतीमभिसंपन्नः । द्वावाक्ष्यंतामह्नां षडहौ । द्वौ पृष्ठ्याभिप्लवौ । गोआयुषी । दशरात्रः । तत् षट्त्रिंशत् । षट्त्रिंशदक्षरा वै बृहती । बृहत्या वै देवाः स्वर्गे लोकेऽयंतत । बृहत्या स्वर्गं लोकमाप्नुवन् । तथा उ एवैष एतद् बृहत्यैव स्वर्गे लोके यतते । बृहत्या स्वर्गं लोकमाप्नोति । अथ यो बृहत्यां कामः । तमेवैतेनैवम्विदवरुंधे ॥ १ ॥

यद्वै चतुर्विंशमहः । दशरात्रस्य वै तत्सप्तमं वा नवमं वा । अभिप्लवात् पृष्ठ्यो निर्मितः । पृष्ठ्यादभिजित् । अभिजितः स्वरसामानः । स्वरसामभ्यो विषुवान् । विषुवतः स्वरसामानः ।

---

पत्तिर्वेति प्रत्यभिज्ञायैकमाह—एवं चात्र प्रायणीयेऽतिरात्रे संवत्सर उपसंहृतः । तथा च—“ यदेवादः प्रायणीयेऽतिरात्रमुपयन्ति ” इत्येतद्दर्शयिष्यति । ‘ सैषा संवत्सरस्योपनिषत् ’ । संक्षिप्ता सा एषा दशरात्रपृष्ठ्यविंशत्यादिः संवत्सरस्योपनिषत् । उप समीपे प्राप्ताया सर्तुनियतं सीदंत्यनयेत्युपनिषत् । संक्षिप्तः संवत्सरस्य प्रतिपत्त्युपाय इत्यर्थः । आजायते एवास्मात् श्रेयान् पुत्रः । स्वयं च सात्मा भवति । अहमात्मना स्थिरेण दैवेनेत्यभिप्रायः । संवत्सरः स्वभूत्या देवानां स्वेंद्रियाधिष्ठाता भूत्वा देवानाप्नोति ॥ २३ ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये द्वादशकाण्डे द्वितीयेऽध्याये द्वितीयं ब्राह्मणम् ॥ १२ । २ । २ ॥

‘ स वा एषः ’ । एष एव संवत्सरः संवत्सरदिवससम्मितः श्रुत्युक्तः कर्मराशिः बृहतीच्छंदोऽभिसंपन्नः । यावन्ति बृहतीषु ऋक्षु अक्षराणि तावन्ति अहानि संपन्नतया उपास्यानीति शेषः । बृहत्या असौ उपनिषदित्यर्थः । कथं बृहतीमभिसंपन्न इत्याह—‘ द्वौ आक्ष्यंतामह्नां षडहौ ’ यावन्त्यहानि पृष्ठ्याभिप्लवदशरात्रगोआयुषि

समभ्यो विषुवान्विषुवतः स्वरसामानः स्वरसामभ्यो विश्वजिद्विश्वजितः पृष्ठ्यः पृष्ठ्यादभिप्लवोऽभिप्लवाद्गोऽआयुषी गोऽआयुर्भ्यां दशरात्रः ॥ २ ॥

( त्रोऽथै ) अथैतदहराक्ष्यंत् । ( य ) यन्महाव्रतं पञ्चविंशो ह्येतस्य स्तोमो भवति नाक्षराच्छन्दो व्येत्येकस्मान्न द्वाभ्यान्न स्तोत्रियया स्तोमः ॥ ३ ॥

( मोऽभि ) अभिप्लवं पूर्व्वं पुरस्ताद्विषुवत ऽउपयन्ति । पृष्ठ्यमुत्तरम्पुत्रा वाऽअभिप्लवः पिता पृष्ठ्यस्तस्मात्पूर्व्ववयसे पुत्राः पितरमुपजीवन्ति पृष्ठ्यमुपरिष्टाद्विषुवतः पूर्व्वमुपयन्त्यभिप्लवमुत्तरन्तस्मादुत्तर-

---

स्वरसामभ्यो विश्वजित् । विश्वजितः पृष्ठ्यः । पृष्ठ्यादभिप्लवः । अभिप्लवात् गोआयुषी । गोआयुर्भ्यां दशरात्रः ॥ २ ॥

अथैतदहराक्ष्यंत्, यन्महाव्रतम् । पंचविंशो ह्येतस्य स्तोमो भवति । नाक्षराच्छन्दो व्येत्येकस्मात् । न द्वाभ्याम् । न स्तोत्रियया स्तोमः ॥ ३ ॥

अभिप्लवं पूर्वः पुरस्तात् विषुवत उपयन्ति । पृष्ठ्यमुत्तरम् । पुत्रा वा अभिप्लवः । पिता पृष्ठ्यः । तस्मात् पूर्ववयसे पुत्राः पितरमुपजीवन्ति । पृष्ठ्यमुपरिष्टात् विषुवतः पूर्वमुपयन्ति । अभिप्लवमुत्तरम् ।

---

स्युः । तावती षट्त्रिंशदक्षरा बृहतीत्याचक्षते । ( आङ्पूर्वस्य क्रियतेः सतरिणादयः । शभद्रागमच्छांदसः । ? ) आकण्ठात्स्वस्थान एवाधिक्षिपयति न प्रदेशांतर आवर्तत इत्यर्थः । एतेषां द्वौ षडहौ द्वादशशतानीत्यर्थः । प्रायणीयोदयनीयाभिजिद्विश्वजित्विषुवन्महाव्रतानीत्येकः षडहः । स्वरसामा द्वितीयः । चतुर्विंशो दशरात्रश्च स्वरसामा तृतीयः । ( सप्तमास्वतिरवक्ष्यति ? ) ततश्च न द्वावाक्ष्यंतामहां षडहावित्युपपन्नाः । अनया 'बृहत्या' 'वै देवाः' स्वर्गे लोके निमित्ते स्वगार्थमित्यर्थः । 'अयतंत' प्रयत्नं कृतवन्तः । अनया बृहत्या आप्नुवंस्ते स्वर्गम् । अथ यो बृहत्यां द्वादशमासाश्चतुर्विंशतिरर्द्धमासा इत्येवमात्मिकाः । समस्तमेव ते बृहतीसंपन्नेन संवत्सरेण 'एवमुपासकोऽवरुंद्धे' स्वीकरोति । यद्वै चतुर्विंशमपि अहः अस्ति । तत्र कथं द्वावाक्ष्यंतामहां षडहा इत्युच्यते । कथं वा बृहतीमभिसंपन्न इति अत आह—यद्वै चतुर्विंशमहरीति । दशरात्रप्रबन्धमेतत् । तत्र प्रतिबद्धमाक्ष्यंत् । तेन च बृहती एव प्रतिबद्धेत्यर्थः । अभिप्लवात्पृष्ठ्यो निर्मित ( इत्यादिभिर्वाणमागमिक ? ) ततश्चातिरात्रस्यांतराले सर्वाण्येवाहानि पृष्ठ्याभिप्लवप्रतिबद्धया निर्मितत्वादिति महाव्रतमेव तत्रैकमाक्ष्यंत् नवममिति दर्शनम् । पंचविंशो ह्येतस्य महाव्रतस्य स्तोमो भवति । नान्यः कस्यचित् । ततश्च स्तोमसामान्येऽपि सैकं तत् क्वचिदन्तर्भवतीत्यभिप्रायः । नाक्षराच्छन्दो व्येतीति । ( तस्याप्यनन्तनविंचनं यदापि तस्य ये सवितुः स्तोमस्तथापि तयोर्व्यर्के त्रिणवेऽहनि धोव्योमसाम्यादन्तर्गानमेया नह्येकपात्स्तोत्रियया द्वाभ्यां स्वास्तौभिर्घाते यथा च्छन्द एकस्मात् द्वाभ्यामक्षराभ्यामिति । ततश्चाभिप्लवेनैव प्रकृतिभूतेन आत्रिरात्रात् तरन्मभिपूरितं भवतीति दर्शयति ? ) ॥ १—३ ॥

अभिप्लवं पूर्वमिति । पूर्वेषु षट्सु मासेषु अभिप्लवः पृष्ठ्यात् पूर्वं विपरीतमुत्तरेषु इत्येतत् । अत्रापि पिता

वयसे पुत्रान्पितोपजीवत्युप ह वाऽ एनं पूर्व्ववयसे पुत्रा जीवन्त्युपो-त्तरवयसे पुत्राञ्जीवति यऽएवमेतद्वेद ॥ ४ ॥

तदाहुः । ( र्य्यं ) यच्चतुर्व्विंशमहरुपेत्य प्रेयात्कथमनागूर्ती भव-तीति यदेवादः प्रायणीयमतिरात्रमुपयन्ति तेनेति ब्रूयात् ॥ ५ ॥

( न ) तदाहुः । ( र्यं ) यद्द्वादश मासाः सम्वत्सरस्याथैतदहरत्येति यद्वै-षुवतमवरेषामेता ३ त्परेषा ३ मित्यवरेषाञ्चैव परेषाञ्चेति ह ब्रूयादात्मा वै सम्वत्सरस्य व्विषुवानङ्गानि मासा यत्र वा ऽआत्मा तदङ्गानि यत्रोऽ अङ्गानि तदात्मा न वाऽ आत्माऽङ्गान्यतिरिच्यते नात्मानमङ्गान्यतिरि-च्यन्तऽएवमु हैतदवरेषाञ्चैव परेषाञ्च भवति ॥ ६ ॥

( त्य ) अथ ह वाऽ एष महासुपर्ण्णऽएव यत्संवत्सरः । ( स्त ) तस्य यान्पुरस्ताद्विषुवतः षण्मासानुपयन्ति सोऽन्यतरः पक्षोऽथ यान्षडुपु-रिष्टात्सोऽन्यतरऽआत्मा व्विषुवान्यत्र वाऽआत्मा तत्पक्षौ यत्र वा पक्षौ तदात्मा न वाऽ आत्मा पक्षावतिरिच्यते नात्मानम्पक्षावतिरिच्येतेऽ-एवमु हैतदवरेषाञ्चैव परेषाञ्च भवति ॥ ७ ॥

---

तस्मादुत्तरवयसे पुत्रान् पितोपजीवति । उप ह वा एनं पूर्ववयसे पुत्रा जीवन्ति । उपोत्तरवयसे पुत्रान् जीवति । य एवमेतद्वेद ॥ ४ ॥

तदाहुः—यच्चतुर्विंशमहरुपेत्य प्रेयात् । कथमनागूर्ती भवतीति । यदेवादः प्रायणीयमतिरात्र-मुपयन्ति । तेनेति ब्रूयात् ॥ ५ ॥

तदाहुः—यत् द्वादश मासाः संवत्सरस्य । अथैतदहरत्येति । यत् वैषुवतम् । अवरेषामेता ३ त् परेषा ३ मिति । अवरेषां चैव परेषां चेति ह ब्रूयात् । आत्मा वै संवत्सरस्य विषुवान् । अंगानि मासाः । यत्र वा आत्मा तदंगानि । यत्रो अंगानि तदात्मा । न वा आत्मा अंगान्यतिरिच्यते । नात्मानमंगान्यतिरिच्यन्ते । एवमु हैतत् अवरेषां चैव परेषां च भवति ॥ ६ ॥

अथ ह वा एष महासुपर्ण एव । यत् संवत्सरः । तस्य यान् पुरस्तात् विषुवतः षण्मासानुप-यन्ति । सः अन्यतरः पक्षः । अथ यान् षडुपरिष्टात् सः अन्यतरः । आत्मा विषुवान् । यत्र वा

---

पुत्रदर्शनं संयुक्तमुच्यते । तदाहुः—यदेवादः प्रायणीयमिति । प्रायणीय एवातिरात्रः सर्वसंवत्सरसंपादितः "कति त्वेवेत्येकमिति होवाच" इत्यत्राभिप्रायः । तदाहुर्यत् पुरुषविधस्य विषुवान् शरीरलवणोदकबन्धांगभूतेषु पूर्वोत्तरेषु मासेषु अंतर्गतानेव पृथगाक्षिप्यते । पूर्वोत्तरग्रहणाभ्यां च गृह्यते । इत्येतदनुकण्डिकाद्वयेन निद-

तदाहुः । (खं) यत्पुरस्ताद्विषुवत ऽऊर्ध्वान्त्स्तोमान्षण्मासानुपयन्ति षडुपरिष्टादावृत्तान्कथमस्यैत ऽऊर्ध्वा स्तोमाऽ उपेता भवन्तीति यमेवामुमूर्ध्वस्तोमन्दशरात्रमुपयन्ति तेनेति ब्रूयाद्देवेभ्यो ह वै महाव्रतन्न तस्थे कथमूर्ध्वैस्स्तोमैर्व्विषुवन्तमुपागातावृत्तैर्म्मासिति ॥ ८ ॥

ते ह देवाऽ ऊचुः । (रु) उप तं यज्ञक्रतुं जानीत यऽऊर्ध्वस्तोमो येनेदमाप्नवामेति तऽ एतमूर्ध्वस्तोमन्दशरात्रमपश्यन्त्सम्वत्सरविधन्तस्य यः पृष्ठ्यः षडहऽ ऋतवः सऽ इमे लोकाश्छन्दोमाः सम्वत्सरो दशममहस्तेनैनदाप्नुवंस्तदेभ्योऽतिष्ठत तिष्ठते ह वा ऽअस्मै महाव्रतं य ऽएवमेतद्वेद ॥ ९ ॥

(दा) अथ वाऽ अतोऽह्नामभ्यारोहः । प्रायणीयेनातिरात्रेणोदयनीयमतिरात्रमभ्यारोहन्ति चतुर्विंशेन महाव्रतमभिप्लवेन परमभिप्लवं पृष्ठ्येन परम्पृष्ठ्यमभिजिता विश्वजितँ स्वरसामभिः परान्त्स्वर-

---

आत्मा तत्पक्षौ। यत्र वा पक्षौ तदात्मा । न वा आत्मा पक्षावतिरिच्यते । नात्मानं पक्षावतिरिच्येते । एवमु हैं तत् । अवरेषां चैव परेषां च भवति ॥ ७ ॥

तदाहुः—यत् पुरस्तात् विषुवत ऊर्ध्वान् स्तोमान् षण्मासानुपयन्ति । षडुपरिष्टादावृत्तान् । कथमस्यैत ऊर्ध्वाः स्तोमा उपेता भवंतीति । यमेवामुमूर्ध्वंस्तोमं दशरात्रमुपयन्ति । तेनेति ब्रूयात् । देवेभ्यो ह वै महाव्रतं न तस्थे । कथमूर्ध्वैं स्तोमैर्विषुवन्तमुपागात । आवृत्तैर्मामिति ॥ ८ ॥

ते ह देवा ऊचुः । उप तं यज्ञक्रतुं जानीत । य ऊर्ध्वस्तोमः । येनेदमाप्नवामेति । त एतमूर्ध्वस्तोमं दशरात्रमपश्यन् संवत्सरविधन् तस्य यः पृष्ठ्यः षडहः । ऋतवः सः । इमे लोकाश्छन्दोमाः । संवत्सरो दशममहः । तेनैनदाप्नुवन् । तदेभ्योऽतिष्ठत । तिष्ठते ह वा अस्मै महाव्रतम् । य एवमेतद्वेद ॥ ९ ॥

अथ वा अतोऽह्नामभ्यारोहः। प्रायणीयेनातिरात्रेणोदयनीयमतिरात्रमभ्यारोहन्ति । चतुर्विंशेन महाव्रतम् । अभिप्लवेन परमभिप्लवम् । पृष्ठ्येन परं पृष्ठ्यम् । अभिजिता विश्वजितम् । स्वर-

---

र्श्यते । तदाहुः—पूर्वेषु षट्सु मासेषु त्रिविधा ये स्तोमाः पार्ष्ठिकेष्वहःसु ऊर्ध्वा भवन्ति । ( उत्तरेषु त्रयस्त्रिंशा-रस्तृरणा अर्वा एव ? )। दशरात्रे ऊर्ध्वा एव । तैरेवोर्ध्वैरिति।ऊर्ध्वा एवोपासनीया इत्येतदनुकण्डिकाद्वयेन प्रदर्श्यते । तन्महाव्रतमभ्यसेदेव । 'एभ्योऽतिष्ठत' तस्मादावृत्तादात्मानं प्रकाशितवत् । प्रकाशने तिष्ठतेरात्मनेपदम् ॥ ४–९ ॥

"अथ वा" अत ऊर्ध्वं अह्नां अभ्यारोहणसादृश्येनाशीर्विक्ष्यत इति शेषः। प्रायणीयेनातिरात्रेण उदयनीय-

साम्नोऽथैतदहरनभ्यारूढं यद्वैषुवतमभि ह वै श्रेयाᳬंसᳬं रोहति नैनम्पापीयानभ्यारोहति य ऽ एवमेतद्वेद ॥ १० ॥

( द्वा ) अथ वाऽअतोऽह्नान्निवाहः । प्रायणीयोऽतिरात्रश्चतुर्विᳬं- शायाह्ने निवहति चतुर्विᳬंशमहरभिप्लवायाऽभिप्लवः पृष्ठ्याय पृष्ठ्यो- ऽभिजितेऽभिजित्स्वरसामभ्यः स्वरसामानो विषुवते विषुवान्त्स्वर- सामभ्यः स्वरसामानो विश्वजिते विश्वजित्पृष्ठ्याय पृष्ठ्योऽभिप्लवाया- भिप्लवो गोऽआयुर्भ्यां गोऽआयुषी दशरात्राय दशरात्रो महाव्रताय महाव्रतमुदयनीयायातिरात्रायोदयनीयोऽतिरात्रः स्वर्ग्याय लोकाय प्रतिष्ठायाऽ अन्नाद्याय ॥ ११ ॥

तानि वाऽ एतानि । यज्ञारण्यानि यज्ञकृन्तत्राणि तानि शतᳬं शतᳬं रथाह्न्यान्यन्तरेण तानि ये विद्वाᳬंसऽउपयन्ति यथाऽऽरण्यान्यां मुग्धां- श्चरतोऽशनाया वा पिपासा वा पाप्मानो रक्षाᳬंसि सचेरन्नेवᳬं हैवैना- नशनाया वा पिपासा वा पाप्मानो रक्षाᳬंसि सचन्तेऽथ ये विद्वाᳬंसो

---

सामभिः परान् स्वरसाम्नः । अथैतदहरनभ्यारूढम् । यत् वैषुवतम् । अभि ह वै श्रेयांसं रोहति । नैनं पापीयानभ्यारोहति । य एवमेतद्वेद ॥ १० ॥

अथ वा अतोऽह्नां निवाहः । प्रायणीयोऽतिरात्रश्चतुर्विंशायाह्ने निवहति । चतुर्विंशमहरभिप्लवाय । अभिप्लवः पृष्ठ्याय । पृष्ठ्योऽभिजिते । अभिजित् स्वरसामभ्यः । स्वरसामानो विषुवते । विषुवान् स्वरसामभ्यः । स्वरसामानो विश्वजिते । विश्वजित् पृष्ठ्याय । पृष्ठ्योऽभिप्लवाय अभिप्लवो गोआयुर्भ्याम् । गोआयुषी दशरात्राय । दशरात्रो महाव्रताय । महाव्रतमुदयनीयायातिरात्राय । उदयनीयोऽतिरात्रः स्वर्गाय लोकाय प्रतिष्ठाया अन्नाद्याय ॥ ११ ॥

तानि वा एतानि यज्ञारण्यानि यज्ञकृंतत्राणि । तानि शतं शतं रथाह्न्यानि । अंतरेण तानि ये विद्वांस उपयन्ति । यथाऽऽरण्यान्यां मुग्धाँश्चरतोऽशनाया वा पिपासा वा पाप्मानो रक्षांसि सचे-

---

सदृशतया यान्यहान्यारोहन्ति प्राप्नुवन्ति सत्रिणः । अथ कस्मादभ्यारोहंति आक्रमन्ति । शरीरैरित्येवन्न गृह्यते । अथैतदहरनभ्यारूढमित्याह—सादृश्येन च वैषुवतमनभ्यारूढम् । स सत्रिभिः कथं तत्राभ्यारुह्येत । तथा च प्रायणीयोऽतिरात्रः चतुर्विंशायाह्ने निवहतीति क्रमांतरेण अभि ह वै श्रेयांसं स्वगुणैरभ्यारोहति । पापतरश्चैनं गुणैर्नाप्नोतीति फलवचनं युज्यते ॥

अथवा अभिशब्दः संशब्दस्यार्थे सम्यग्वचने । ( संप्रयाणत्तिर्वाहः १ ) । वक्ष्यत इति शेषः । प्रायणीयातिरात्रो देवतारूपः । चतुर्विंशायाह्ने निवहतीत्यादि प्रसन्नम् ॥ १० ॥ ११ ॥

' तानि वा एतानि ' यज्ञाश्च ते आरण्यानि च ' यज्ञारण्यानि ' । यज्ञाश्च ते कृंतत्राणि च ' यज्ञकृंतत्राणि ' ।

यथा प्रवाहात्प्रवाहमभयादभयमेवꣳ हैव ते देवतायै देवतामुपसंयन्ति ते स्वस्ति स्वर्ग्गं लोकꣳ समश्नुवते ॥ १२ ॥

तदाहुः । कति संवत्सरस्याहानि पराञ्चि कत्यर्व्वाञ्चीति स यानि सकृत्सकृदुपयन्ति तानि पराञ्च्यथ यानि पुनः पुनस्तान्यर्व्वाञ्च्यर्व्वाञ्चीति ह त्वेवैनान्युपासीत षडहयोर्ह्यावृत्तिमन्वावर्त्तन्ते ॥ १३ ॥

इति प्रथमप्रपाठके सप्तमं ब्राह्मणम् ॥ १२-१-७ ॥ (२. ३.) ॥

पुरुषो वै सम्वत्सरः । ( स्तु ) तस्य प्राणऽएव प्रायणीयोऽतिरात्रः प्राणेन हि प्रयन्ति व्वागेवारम्भणीयमहर्व्वाचा ह्यारभन्ते यद्यदारभन्ते ॥ १ ॥

( न्तेऽय ) अयमेव दक्षिणो हस्तोऽभिप्लवः षडहः । ( स्तु ) तस्येदमेव प्रथममहस्तस्येदमेव प्रातःसवनमिदम्माध्यंदिनꣳ सवनमिदन्तृतीयसवनङ्गायत्र्याऽआयतने तस्मादियमासाꣳ ह्रसिष्ठा ॥ २ ॥

---

रन् । एवं हैवैनानशनाया वा पिपासा वा पाप्मानो रक्षांसि सचंते । अथ ये विद्वांसो यथा प्रवाहात्प्रवाहं अभयादभयम् । एवं हैव ते देवतायै देवतामुपसंयन्ति । ते स्वस्ति स्वर्गं लोकं समश्नुवते ॥ १२ ॥

तदाहुः-कति संवत्सरस्याहानि पराञ्चि । कत्यर्वांचीति । स यानि सकृत्सकृदुपयन्ति । तानि परांचि । अथ यानि पुनः पुनः । तान्यर्वांचि अर्वांचि इति ह त्वेवैनान्युपासीत । षडहयोर्हि आवृत्तिमन्वावर्तते ॥ १३ ॥

### गवामयनीयसंवत्सरस्य पुरुषविधोपासनम् ।

पुरुषो वै संवत्सरः । तस्य प्राण एव प्रायणीयोऽतिरात्रः । प्राणेन हि प्रयन्ति । वागेवारंभणीयमहः । वाचा ह्यारभन्ते । यद्यदारभन्ते ॥ १ ॥

अयमेव दक्षिणो हस्तोऽभिप्लवः षडहः । तस्येदमेव प्रथममहः । तस्येदमेव प्रातःसवनम् । इदं माध्यंदिनं सवनम् । इदं तृतीयसवनम् । गायत्र्या आयतने । तस्मादियमासां ह्रसिष्ठा ॥ २ ॥

---

अविदुषां कृतत्राणि । तानि तु विधेयजिज्ञासामुपासका उपसंयन्ति एतान् । तात्पर्यात् आरण्यात् महति आरण्ये कांश्चिच्चरतः । अशनाया बुभुक्षा पिपासा वा । पाप्मानश्च पातनीयाः । रक्षांसि सचेरन् । एवं अशनाया वा पिपासा पाप्मानो रक्षांसि सचंते । अथ ये विद्वांस उपसंयन्तीत्यादि प्रसन्नम् ॥ १२ ॥

तदाहुः-'स यानि सकृत्सकृदुपयंति' । प्रायणीयचतुर्विंशाभिजिद्विश्वजिच्छन्दोमाऽविवाक्यमहाव्रतोदयनीयानि पुनःपुनरिदत्राणि 'अर्वाञ्चि' आवृत्तिधर्मकाणीति प्रायणीयादीन्यप्युपासीत । कथम् षडहयोर्हीति । आवृत्तिमनु षडहावृत्त्यैव तान्यप्यावर्तंते । मनःसाम्येन तदभिनिर्माणत्वेन च तदन्तर्भावादित्यर्थाभिप्रायः ॥ १३ ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये द्वादशकांडे द्वितीयेऽध्याये तृतीयं ब्राह्मणम् ॥ ( १२ । २ । ३ ) ॥

'पुरुषो वै' । पुरुषः 'संवत्सरः' उपास्य इति शेषः । गायत्र्येवेन्द्रियात्मिका । 'आरंभणीयं' आर-

( छेदु ) इदुमेवु द्वितीयमुहः । ( स्तु ) तुस्येदुमेवु प्रातःसवनुमिदम्मुाध्यन्दिनथ्ँ सुवनमिदुन्तृतीयसवनुन्त्रिष्टुभऽआयुतने तुस्मादियुमस्यै व्वुर्षीयसी ॥ ३ ॥

( सीदु ) इदुमेवु तृतीयमुहः । ( स्तु ) तुस्येदुमेवु प्रातःसवनुमिदम्मुाध्यन्दिनथ्ँ सुवनमिदुन्तृतीयसवनं जुगत्याऽ आयुतने तुस्मादियुमासाम्वुर्षिष्ठा ॥ ४ ॥

( छेदु ) इदुमेवु चतुर्थमुहः । ( स्तु ) तुस्येदुमेवु प्रातःसवनुमिदम्मुाध्यन्दिनथ्ँ सुवनमिदुन्तृतीयसवनुम्विराजऽ आयुतनेऽन्नम्वै व्विराट्तुस्मादियुमासामन्नादितमा ॥ ५ ॥

(मेदु) इदुमेवु पञ्चममुहः । (स्तु) तुस्येदुमेवु प्रातःसवनुमिदम्मुाध्यन्दिनथ्ँ सुवनमिदुन्तृतीयसवनुम्पङ्क्तेरायतने पृथुरिव वै पङ्क्तिस्तुस्मादयुमासाम्प्रुथिष्ठः ॥ ६ ॥

( ऽ ) इदुमेवु षष्ठमुहः । ( स्तु ) तुस्येदुमेवु प्रातःसवनुमिदम्मुाध्यन्दिनथ्ँ सुवनमिन्दुतृतीयसवनमुतिच्छन्दसऽआयुतने तुस्मादयुमासा-

---

इदमेव द्वितीयमहः । तस्येदमेव प्रातःसवनम् । इदं माध्यन्दिनं सवनम् । इदं तृतीयसवनम् । त्रिष्टुभ आयतने । तस्मादियमस्यै वर्षीयसी ॥ ३ ॥

इदमेव तृतीयमहः । तस्येदमेव प्रातःसवनम् । इदं माध्यन्दिनं सवनम् । इदं तृतीयसवनम् । जगत्या आयतने । तस्मादियमासां वर्षिष्ठा ॥ ४ ॥

इदमेव चतुर्थमहः । तस्येदमेव प्रातःसवनम् । इदं माध्यन्दिनं सवनम् । इदं तृतीयसवनम् । विराज आयतने । अन्नं वै विराट् । तस्मादियमासामन्नादितमा ॥ ५ ॥

इदमेव पंचममहः । तस्येदमेव प्रातःसवनम् । इदं माध्यन्दिनं सवनम् । इदं तृतीयसवनम् । पंक्तेरायतने । पृथुरिव वै पंक्तिः । तस्मादयमासां प्रथिष्ठः ॥ ६ ॥

इदमेव षष्ठमहः । तस्येदमेव प्रातःसवनम् । इदं माध्यंदिनं सवनम् । इदं तृतीयसवनम् । अति-

---

भ्यते ऽनेन विशेषतः संवत्सरं सत्रमित्यारंभणीयम् । चतुर्विंशमहः वाचा हि पुनरारंभते प्रायः । अयमेव तस्येदमिति कनिष्ठिका । कुत एतत् । " तस्मादियमासां ह्रसिष्ठा " इति वचनात् । 'तस्येदमेव प्रातःसवनं' । इति कनिष्ठिकायाः प्रथमं पर्व । ' इदं माध्यन्दिनम् ' इति मध्यमं पर्व । ' इदं तृतीयसवनम् ' इति अंत्यं पर्व । गायत्र्या आयतन इति । यदस्याभिप्लवस्य प्रथमः प्रथमावयवः । (स पृथिव्य अग्रे य आस्व फलम् ?)। माध्यन्दिनं सवनम् । यस्माच्चेदं षष्ठमहरतिच्छंदसः स्थाने । तस्मादतिच्छन्दसोऽनुकारेण अयं बाहुरासामंगुलीनां

र्वर्षिष्ठो गायत्रमेतदहर्भवति तस्मादिदम्फलकꣳ ह्रसिष्ठꣳ स इतो- ऽभिप्लवः षडहः स इतः स इतः स इत आत्मा पृष्ठ्यः ॥ ७ ॥

( ऽ ) एतद्ध स्म वै तद्विद्वानाह पैङ्ग्यः । प्लवन्त इव वा अभिप्लवा- स्तिष्ठतीव पृष्ठ्य इति प्लवत इव ह्ययमङ्गैस्तिष्ठतीवात्मनेति ॥ ८ ॥

शिर एवास्य त्रिवृत् । ( तु ) तस्मात्तत्त्रिविधं भवति त्वगस्थि मस्तिष्कः ॥ ९ ॥

( ष्को ) ग्रीवाः पञ्चदशः । ( श्च ) चतुर्दश वा एतासाङ्करूकराणि वीर्यम्पञ्चदशन्तस्मादेताभिरण्वीभिः सतीभिर्गुरुं भारꣳ हरति तस्माद्ग्रीवाः पञ्चदशः ॥ १० ॥

( ऽ ) उरः सप्तदशः । ( शोऽष्टा ) अष्टावन्ये जत्रवोऽष्टावन्यऽउरः सप्त- दशन्तस्मादुरः सप्तदशः ॥ ११ ॥

---

च्छंदस आयतने । तस्मादयमासां वर्षिष्ठः । गायत्रमेतदहर्भवति । तस्मादिदं फलकं ह्रसिष्ठम् । स इतोऽभिप्लवः षडहः । स इतः । स इतः । स इत आत्मा पृष्ठ्यः ॥ ७ ॥

एतद्ध स्म वै तद्विद्वानाह पैंग्यः । प्लवन्त इव वा अभिप्लवाः । तिष्ठतीव पृष्ठ्य इति । प्लवत इव ह्ययमंगैः । तिष्ठतीवात्मनेति ॥ ८ ॥

शिर एवास्य त्रिवृत् । तस्मात्तत् त्रिविधं भवति । त्वगस्थि मस्तिष्कः ॥ ९ ॥

ग्रीवाः पंचदशः । चतुर्दश वा एतासां करूकराणि । वीर्यं पंचदशम् । तस्मादेताभिरण्वीभिः सतीभिर्गुरुं भारं हरति । तस्मात् ग्रीवाः पंचदशः ॥ १० ॥

उरः सप्तदशः । अष्टावन्ये जत्रवोऽष्टावन्ये । उरः सप्तदशम् । तस्मादुरः सप्तदशः ॥ ११ ॥

---

वृद्धतमः । यस्मात् 'गायत्र्या' गायत्रीच्छन्दसामेतत् षष्ठमहर्भवति । तस्मादिदं फलकं त्रयाणां बाहुपर्वणां ह्रस्व- तमम् । स इतराभ्योऽपि दृश्यते । ( इत एवमत्र प्रथमयासूभिः ? ) । स हि दक्षिणो हस्तोऽभिप्लवः षडहः । स इतो दक्षिणः ऊरुः स इतः सव्य ऊरुः । स इतः ( इत्युपाध्या याहस्तपाध्याहस्त ? ) आत्मा शरीरं पृष्ठ्यः ॥ १—७ ॥

'एतद्ध स्म' । एतदभिप्लवांगत्वं पृष्ठ्यस्य च । विद्वानात्मतत्त्ववाददर्शी पिंगपुत्र उक्तवान् । प्लवन्त इव वा अभिप्लवाः तिष्ठतीव पृष्ठ्यः । सकृत् प्रयोगादेव तावदेकस्मिन्नेव मासेऽगानि चात्मा च कल्पितः । पुनर्मासा- न्तरेष्वपि कल्पितेषु पुनश्चोत्तरस्मिन्नपि प्राक् च प्रतिमासं तत्प्राक् च वक्ष्यति । उक्तौ पृष्ठ्याभिप्लवौ । ते इति चलति ह्ययं पुरुषोऽगैर्वाऽभिप्लवादिभिस्तिष्ठति । शरीरिणामंगापेक्षयाऽऽत्मनः स्थिरत्वात् ॥ ८ ॥

'शिर एव' तस्यैव पृष्ठ्यस्य यानि अहानि त्रिवृदादीनि शिरआदित्वेन विभजति षड्भिः कंडिकाभिः । 'करूकराणि' अत्यर्थं ततानि पदानि । ( पतनमेवं द्वितीयादयस्तूब्जमादीनां तवंगीकृत्योवाच ? ) । 'गायत्र्या

( ऽ ) उदुरमेकविꣳशः । ( शो ) विꣳशतिर्व्वाऽ अन्तुरुदरे कुन्तापान्युदुरमेकविꣳशन्तुस्मादुदुरमेकविꣳशः ॥ १२ ॥

पार्श्वे त्रिणवः । ( स्तु ) त्रुयोदशान्याः पुर्शवस्त्रयोदशान्याः पार्श्वे त्रिणवे तुस्मात्पार्श्वे त्रिणवः ॥ १३ ॥

( शोऽनू ) अुनूकं त्रयस्त्रिꣳशः । ( शो ) द्वात्रिꣳशद्वाऽ एतुस्य करूकराण्युनूकं त्रयस्त्रिꣳशन्तुस्मादनूकं त्रयस्त्रिꣳशः ॥ १४ ॥

( शोऽयु ) अयुमेव दुक्षिणः कुर्णोऽभिजित् । ( स्तु ) युदिदमक्ष्णः शुक्लꣳ स प्रथमः स्वुरसामा युत्कृष्णꣳ स द्वितीयो यन्मुण्डलꣳ स तृतीयो नासिके विषुवान्युदिदुमक्ष्णो मुण्डलꣳ सु प्रथमोऽर्व्वाक्सामा युत्कृष्णꣳ सु द्वितीयो युच्छुक्लꣳ सु तृतीयः ॥ १५ ॥

( योऽयु ) अयुमेवोत्तरः कुर्णो विश्वजित् । ( दु ) उक्तौ पृष्ठ्याभिप्लवौ यावुवाञ्चौ प्राणौ ते गोऽआयुषीऽअङ्गानि दशरात्रो मुखम्महाव्व्रतमुदानुऽएवोदयनीयोऽतिरात्रुऽ उदानेन ह्युद्यन्ति सुऽएषु सम्वत्सुरोऽध्यात्मं प्रुतिष्ठितः स यो हैवुमेतꣳ सम्वत्सरमध्यात्मं प्रतिष्ठितम्वेद प्रतितिष्ठति प्रजुया पशुभिरस्मिँल्लोकेऽमृतत्वेनामुष्मिन् ॥ १६ ॥

इति प्रथमप्रपाठकेऽष्टमं ब्राह्मणम् ॥ १२–१–८ ॥ ( २. ४. ) ॥

द्वितीयोऽध्यायश्च समाप्तः ॥ १२ । २ ॥

कण्डिकासंख्या ॥ ६५ ॥

---

उदरमेकविंशः । विंशतिर्वा अंतरुदरे कुंतापानि । उदरमेकविंशम् । तस्मादुदरमेकविंशः ॥१२॥

पार्श्वे त्रिणवः । त्रयोदशान्याः पर्शवस्त्रयोदशान्याः । पार्श्वे त्रिणवे । तस्मात्पार्श्वे त्रिणवः ॥ १३॥

अनूकं त्रयस्त्रिंशः । द्वात्रिंशद्वा एतस्य करूकराणि । अनूकं त्रयस्त्रिंशम् । तस्मादनूकं त्रयस्त्रिंशः ॥ १४ ॥

अयमेव दक्षिणः कर्णोऽभिजित् । यदिदमक्ष्णः शुक्लम् । स प्रथमः स्वरसामा । यत् कृष्णं, स द्वितीयः । यन्मंडलं, स तृतीयः । नासिके विषुवान् । यदिदमक्ष्णो मंडलम् । स प्रथमोऽर्वाक्सामा । यत् कृष्णं, स द्वितीयः । यत् शुक्लं, स तृतीयः ॥ १५ ॥

अयमेवोत्तरः कर्णो विश्वजित् । उक्तौ पृष्ठ्याभिप्लवौ । यावर्वांचौ प्राणौ, ते गोआयुषी ।

---

आयतने ' प्रथमे स्थाने इदं प्रथममहरिति । इदमेव नासिका यत् । द्वितीयमहः । इयमनामिका अस्याः कनिष्ठिका न वृद्धतरा । इयमेव मध्यमा तृतीयमहः । इयं मध्यमा आसामंगुलीनां वृद्धतरा । इयमेव प्रदेशिनी

अंगानि दशरात्रः । मुखं महाव्रतम् । उदान एवोदयनीयोऽतिरात्रः । उदानेन ह्युद्यंति । स एष संवत्सरोऽध्यात्मं प्रतिष्ठितः । स यो हैवमेतं संवत्सरमध्यात्मं प्रतिष्ठितं वेद । प्रतितिष्ठति प्रजया पशुभिरस्मिन् लोके, अमृतत्वेनामुष्मिन् ॥ १६ ॥

---

चतुर्थमहः । इयं प्रदेशिनी आसामंगुलीनां अतिशयेनान्नदितमा प्रायेण ह्यनयैवान्नमदन्ति । तदेव त्वंगीकृत्यान्नादितमत्वमुच्यते । इदमेवांगुष्ठः आसामंगुलीनां पृथुतमः । इदमेव वहेः पृथुत्वमाह—तस्येदमेव पाणिफलकं प्रातःसवनं ( इदमरतिसंकलिकस्थीनि वीर्यशक्तिजत्रवः । उरस्यस्थीनि कृत्वाप्यभियत्तदादीनि मासानि कल्पितानि नोपयन्तीति कृत्वा यानि ? )॥ ८–१६ ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये द्वादशकाण्डे द्वितीयेऽध्याये चतुर्थं ब्राह्मणम् ॥ १२ । २ । ४ ॥

नागस्वामिसुतोऽवन्त्यां पाराशर्यो वसन्हरिः ।
श्रुत्यर्थं दर्शयामास शक्तितः पौष्करीयकः ॥ १ ॥
श्रीमतोऽवन्तिनाथस्य विक्रमार्कस्य भूपतेः ।
धर्माध्यक्षो हरिस्वामी व्याख्यच्छातपथीं श्रुतिम् ॥ २ ॥
भूभर्त्रा विक्रमार्केण क्लृप्तां कनकवेदिकाम् ।
दानायाध्यस्य कृतवान् श्रुत्यर्थविवृतिं हरिः ॥ ३ ॥

इति श्रीसर्वविद्यानिधानकवीन्द्राचार्यसरस्वतीनां श्रीहरिस्वामिनां कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये द्वादशकाण्डे द्वितीयोऽध्यायः समाप्तः ॥ १२–२ ॥



# अथ तृतीयेऽध्याये प्रथमं ब्राह्मणम् ।
# प्रथमप्रपाठके च नवमं ब्राह्मणम् ।



युद्दालाके । (कऽइ) इदन्त्रिवृदेति सुर्व्वमुन्योऽन्युमभिसम्पुद्यमानम् । कथुꣳ स्विद्यज्ञः पुरुषः प्रजापतिरुन्योऽन्यन्नातिरिच्यन्तऽ एते ॥ १ ॥
युदूर्ध्वा स्तोमाऽअनुयुन्ति । यज्ञमभ्यावुर्तꣳ सामभिः कुल्पमानाः । कथुꣳ स्वित्ते पुरुषमाविशन्ति कथुम्प्राणैः सयुजो भवन्ति ॥ २ ॥
प्रायणीयोऽतिरात्रः । (श्च) चतुर्विꣳशमहश्चत्वारोऽभिप्लवाः पृष्ठचऽ इत्येते । कथुꣳ स्वित्ते पुरुषमाविशन्ति कथुम्प्राणैः सयुजो भवन्ति ॥ ३ ॥
अभिजिता स्वरसामानः । (नोऽभि) अभिक्लृप्ता ऽउभयुतो व्विषुवुन्तमुपयन्ति । कथुꣳ स्वित्ते पुरुषमाविशन्ति कथुम्प्राणैः सयुजो भवन्ति ॥ ४ ॥

---

"यद्दालाके त्रिवृदेति सर्वमन्योन्यमभिसंपद्यमानम् ।
कथं स्विद्यज्ञः पुरुषः प्रजापतिरन्योऽन्यं नातिरिच्यन्त एते ॥ १ ॥
यदूर्ध्वाः स्तोमा अनुयन्ति यज्ञमभ्यावर्तं सामभिः कल्पमानाः ।
कथं स्वित्ते पुरुषमाविशन्ति कथं प्राणैः सयुजो भवन्ति ॥ २ ॥
प्रायणीयोऽतिरात्रश्चतुर्विंशमहश्चत्वारोऽभिप्लवाः पृष्ठ्य इत्येते ।
कथं स्वित्ते पुरुषमाविशन्ति कथं प्राणैः सयुजो भवन्ति ॥ ३ ॥
अभिजिता स्वरसामानोऽभिक्लृप्ता उभयतो विषुवन्तमुपयन्ति ।
कथं स्वित्ते पुरुषमाविशन्ति कथं प्राणैः सयुजो भवन्ति ॥ ४ ॥

---

अथ ब्राह्मणद्वये गवामयनपुरुषप्रजापतीनां कलासाम्यमुच्यते—प्रश्नप्रतिवचनाभ्यां—यद्दालाक इति । श्लोकाः एते नव । बलाकस्यापत्यं बालाकिः । सपृष्ठयतो पृष्टान् अनिर्दिष्टः । हे बालाके ! यदिदं अधियज्ञाध्यात्माधिदैवम् सर्वं त्रिवृत् अन्योऽन्यस्मिन् संपद्यमानम् । एतदनु स्वीक्रियते । ततः कथं यज्ञादयः अन्योऽन्यमतिरिक्ता भवन्तीति प्रश्नः ॥ १ ॥

यदूर्ध्वाः स्तोमाः । अनुयन्ति इति लिङ्वचनव्यत्ययः । ये ऊर्ध्वाः वर्द्धमानकाः स्तोमाः त्रिवृदादयः आनुपूर्व्येण यन्ति प्रवर्तन्ते । यज्ञमभ्यावर्तं आवृत्त्या इति च स्पष्टमित्यर्थः । सामभिः ससंख्येयैः । ये कल्पमानाः आत्मनो लभमानाः । कथं ते पुरुषमाविशंति ? उपासकैराश्रियमाणा अपि निरालम्बनत्वाद्दुरावेशा इत्यभिप्रायः । कथं च 'प्राणैः' पुरुषगतैः सयुजः सहयुक्ता अतिरिक्ता भवन्ति ॥ २ ॥

प्रायणीयः प्रायणीयादिरूपं न किंचित् पुरुषैर्दृश्यते इत्यभिप्रायः ॥ ३ ॥

अभिजिता विश्वजिता वा इति विशेषः । अभिक्लृप्ताः परितो ह्यभिमुखीकृताः । अनुलोमा, इत्यर्थः ।

त्रिवृत्प्रायाः । सप्तदशाभिक्लृप्तास्त्रयस्त्रिꣳशान्ताश्चतुरुत्तरेण । कथꣳ स्वित्ते पुरुषमाविशन्ति कथम्प्राणैः सयुजो भवन्तीति ॥ ५ ॥

शिरस्त्रि॒वृत् । (त्प) पञ्चदशोऽस्य ग्रीवाऽ उरऽ आहुः सप्तदशाभिक्लृप्तम् । एकविꣳशमुदरङ्कल्पयन्ति पार्श्वे पर्शूस्त्रिणवेनाभिक्लृप्ते ॥ ६ ॥

अभिप्लवाऽ उभयतोऽस्य बाहू । पृष्ठचम्पृष्ठचऽ इति धीरा व्वदन्ति । अनूकमस्य चतुरुत्तरेण संवत्सरे ब्राह्मणाः कल्पयन्ति ॥ ७ ॥

कर्णावस्याभिजिद्विश्वजिच्च । ( च्चा ) अक्ष्या बाहुः स्वरसामाभिक्लृप्ते । नस्यम्प्राणम्विषुवन्तमाहुर्गोऽआयुषी प्राणावेतावपाञ्चौ ॥ ८ ॥

अङ्गान्यस्य दशरात्रमाहुः । ( र्मु ) मुखम्महाव्व्रतꣳ सम्वत्सरे

---

त्रिवृत्प्रायाः सप्तदशाभिक्लृप्तास्त्रयस्त्रिशांताश्चतुरुत्तरेण ।
कथं स्वित्ते पुरुषमाविशन्ति कथं प्राणैः सयुजो भवन्ति"—इति ॥ ५ ॥
" शिरस्त्रिवृत पंचदशोऽस्य ग्रीवा उर आहुः सप्तदशाभिक्लृप्तम् ।
एकविंशमुदरं कल्पयन्ति पार्श्वे पर्शूस्त्रिणवेनाभिक्लृप्ते ॥ ६ ॥
अभिप्लवा उभयतोऽस्य बाहू पृष्ठचं पृष्ठच इति धीरा वदन्ति ।
अनूकमस्य चतुरुत्तरेण संवत्सरे ब्राह्मणाः कल्पयन्ति ॥ ७ ॥
कर्णावस्याभिजिद्विविश्वजिच्चाक्ष्या बाहुः स्वरसामाऽभिक्लृप्ते ।
नस्यं प्राणं विषुवन्तमाहुर्गोआयुषी प्राणावेतावपांचौ ॥ ८ ॥
अङ्गान्यस्य दशरात्रमाहुर्मुखं महाव्रतं संवत्सरे ब्राह्मणाः कल्पयन्ति ।

---

उभयतः पुरस्तात् परस्ताच्च । विषुवन्तं मध्ये स्थितं उपगच्छन्ति । कथं स्वित्ते इति । न च अध्यातमं किंचित् दृश्यते इत्यभिप्रायः ॥ ४ ॥

'त्रिवृत्प्रायाः' त्रिवृता प्रयन्ति प्रवर्तंते इति त्रिवृत्प्रायाः । त्रिवृदादय इत्यर्थः । सप्तदशेन मध्ये स्थितेन अभिक्लृप्ताः अभिगताः 'सप्तदशाभिक्लृप्ताः' । सप्तदशमध्या इत्यर्थः । 'त्रयस्त्रिशांताः' त्रयस्त्रिंशः अन्तो येषां ते त्रयस्त्रिंशांताः पार्ष्ठिका स्तोमाः । चतुरुत्तरेण स्तोमेन सह ये दशरात्रे वर्तन्ते । छन्दोमेषु हि चतुर्विंशचतुश्चत्वारिंशस्तोमाः । तेषु ये चतुरुत्तरस्तोमाः । तेषु दिवसेषु स्थिता इत्यर्थः । कथं स्वित्ते पुरुषमिति व्याख्यातम् ॥ ५ ॥

'शिरस्त्रिवृत् इति ।' 'त्रिवृत्प्रायाः' इत्येतस्य उत्तरम् । शिरः पुरुषस्य त्रिवृत् स्तोमः । तदपि त्रिष्टुबङ्गम् । अन्यानि स्पष्टानि च ॥ ६–९ ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये द्वादशकांडे तृतीयेऽध्याये प्रथमं ब्राह्मणम् ॥ १२ । ३ । १ ॥

ब्राह्मणाः कल्पयन्ति । सर्वस्तोमꣳ सर्वसामानमेतꣳ सम्वत्सरमध्यात्मम्प्रविष्टम् । समन्धीरऽ आत्मना कल्पयित्वा ब्रध्नस्यास्ते विष्टपेऽजातशोकः ॥ ९ ॥

इति प्रथमप्रपाठके नवमं ब्राह्मणम् ॥ १२-१-९ ॥ ( ३. १ ) ॥

पुरुषो वै सम्वत्सरः । पुरुषऽइत्येकꣳ सम्वत्सरऽइत्येकमत्र तत्समन्द्वे वै सम्वत्सरस्याहोरात्रे द्वाविमौ पुरुषे प्राणावत्र तत्समन्त्रयऽ ऋतवः सम्वत्सरस्य त्रयऽइमे पुरुषे प्राणाऽअत्र तत्समञ्चतुरक्षरो वै सम्वत्सरश्चतुरक्षरोऽयं यजमानोऽत्र तत्समम्पञ्चर्तवः सम्वत्सरस्य पञ्चेमे पुरुषे प्राणाऽ अत्र तत्समꣳ षडृतवः सम्वत्सरस्य षडिमे पुरुषे प्राणाऽ अत्र तत्समꣳ सप्तर्तवः सम्वत्सरस्य सप्तेमे पुरुषे प्राणाऽअत्र तत्समम् ॥ १ ॥

( न्द्वा ) द्वादश वै मासाः सम्वत्सरस्य । द्वादशेमे पुरुषे प्राणाऽ अत्र तत्समन्त्रयोदश वै मासाः सम्वत्सरस्य त्रयोदशेमे पुरुषे प्राणा नाभिस्त्रयोदश्यत्र तत्समञ्चतुर्विꣳशतिर्वै सम्वत्सरस्यार्द्धमासाश्चतुर्विꣳशोऽयम्पुरुषो विꣳशत्यङ्गुलिश्चतुरङ्गोऽत्र तत्समꣳ षड्विꣳशतिर्वै सम्वत्सरस्यार्द्धमासाः षड्विꣳशोऽयम्पुरुषः प्रतिष्ठे षड्विꣳश्यावत्र तत्समम् ॥ २ ॥

---

सर्वस्तोमं सर्वसामानमेतं संवत्सरमध्यात्मं प्रविष्टम् ।
समं धीर आत्मना कल्पयित्वा ब्रध्नस्यास्ते विष्टपेऽजातशोकः" ॥ ९ ॥

पुरुषो वै संवत्सरः । पुरुष इत्येकम् । संवत्सर इत्येकम् । अत्र तत्समम् । द्वे वै संवत्सरस्याहोरात्रे । द्वाविमौ पुरुषे प्राणौ । अत्र तत्समम् । त्रय ऋतवः संवत्सरस्य । त्रय इमे पुरुषे प्राणाः । अत्र तत्समम् । चतुरक्षरो वै संवत्सरः । चतुरक्षरोऽयं यजमानः । अत्र तत्समम् । पंचर्तवः संवत्सरस्य । पंचेमे पुरुषे प्राणाः । अत्र तत्समम् । षड् ऋतवः संवत्सरस्य । षडिमे पुरुषे प्राणाः । अत्र तत्समम् । सप्तर्तवः संवत्सरस्य । सप्तमे पुरुषे प्राणाः । अत्र तत्समम् ॥ १ ॥

द्वादश वै मासाः संवत्सरस्य । द्वादशेमे पुरुषे प्राणाः । अत्र तत्समम् । त्रयोदश वै मासाः संवत्सरस्य । त्रयोदशेमे पुरुषे प्राणाः । नाभिस्त्रयोदशी । अत्र तत्समम् । चतुर्विंशतिर्वै संवत्सरस्यार्द्धमासाः । चतुर्विंशोऽयं पुरुषः । विंशत्यंगुलिः । चतुरंगः । अत्र तत्समम् । षड्विंशतिर्वै संवत्सरस्यार्द्धमासाः । षड्विंशोऽयं पुरुषः । प्रतिष्ठे षड्विंश्यौ । अत्र तत्समम् ॥ २ ॥

( न्त्री ) त्रीणि च वै शतानि षष्टिश्च । सम्वत्सरस्य रात्रयस्त्रीणि च शतानि षष्टिश्च पुरुषस्यास्थीन्यत्र तत्समं त्रीणि च वै शतानि षष्टिश्च सम्वत्सरस्याहानि त्रीणि च शतानि षष्टिश्च पुरुषस्य मज्जानोऽत्र तत्समम् ॥ ३ ॥

( पुँ ) सप्त च वै शतानि विᳫँशतिश्च । सम्वत्सरस्या होरात्राणि सप्त च शतानि विᳫँशतिश्च पुरुषस्यास्थीनि च मज्जानश्चात्र तत्समम् ॥ ४ ॥

( न्दु ) दश चँ वै सहस्राण्यष्टौ च शतानि । सम्वत्सरस्य मुहूर्ता यावन्तो मुहूर्तास्तावन्ति पञ्चदशकृत्वः क्षिप्राणि यावन्ति क्षिप्राणि तावन्ति पञ्चदशकृत्वऽ एतर्हीणि यावन्त्येतर्हीणि तावन्ति पञ्चदशकृत्व ऽइदानीनि यावन्तीदानीनि तावन्तः पञ्चदशकृत्वः प्राणा यावन्तः प्राणास्तावन्तोऽक्तना यावन्तोऽक्तनास्तावन्तो निमेषा यावन्तो निमेषास्तावन्तो लोमगर्ता यावन्तो लोमगर्तास्तावन्ति स्वेदायनानि यावन्ति स्वेदायनानि तावन्तऽ एते स्तोका वर्षन्ति ॥ ५ ॥

---

त्रीणि च वै शतानि षष्टिश्च संवत्सरस्य रात्रयः । त्रीणि च शतानि षष्टिश्च पुरुषस्यास्थीनि । अत्र तत्समम् । त्रीणि च वै शतानि षष्टिश्च संवत्सरस्याहानि । त्रीणि च शतानि षष्टिश्च पुरुषस्य मज्जानः । अत्र तत्समम् ॥ ३ ॥

सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्राणि । सप्त च शतानि विंशतिश्च पुरुषस्यास्थीनि च मज्जानश्च । अत्र तत्समम् ॥ ४ ॥

दश च वै सहस्राण्यष्टौ च शतानि संवत्सरस्य मुहूर्ताः । यावन्तो मुहूर्तास्तावन्ति पंचदशकृत्वः क्षिप्राणि । यावन्ति क्षिप्राणि तावन्ति पंचदशकृत्व एतर्हीणि । यावन्त्येतर्हीणि तावन्ति पंचदशकृत्व इदानीनि । यावन्तीदानीनि तावन्तः पंचदशकृत्वः प्राणाः । यावन्तः प्राणास्तावन्तोऽक्तनाः । यावन्तोऽक्तनास्तावन्तो निमेषाः । यावंतो निमेषास्तावंतो लोमगर्ताः । यावंतो लोमगर्तास्तावन्ति स्वेदायनानि । यावंति स्वेदायनानि तावंत एते स्तोका वर्षंति ॥ ५ ॥

---

मुहूर्तेन समं पुरुषस्य न किंचिदप्यस्ति । बहुतरास्तु लोमगर्ताः सन्ति स्वेदायनान्यपि हि । तैः साम्यं वक्तुं मुहूर्ताः पञ्चदशगुणाः क्षिप्राणि क्रियन्ते । तानि च षोडशायुतानि भवन्ति । द्वे सहस्रे तानि क्षिप्राणि पञ्चदश-गुणानि एतर्हीणि भवन्ति । तानि च चतुर्विंशतिर्लक्षाणि भवन्ति । त्रीणि चायुतानि एतर्हीणि पञ्चदशगुणानि इदानीनि भवन्ति । तानि च चतुःषष्टिर्लक्षाणि तिस्रः कोटयः, पञ्चाशत्सहस्राणि । इदानीनि पञ्चदशगुणानि प्राणा भवन्ति । एते च चतुःपञ्चाशत्कोटयः, सप्तषष्टिलक्षाणि, पञ्चाशत्सहस्राणि । एते च प्राणा नोच्छ्वास-निश्वासा व्यस्ताः । वामे हि नैतावन्तः संवत्सरस्य भवन्ति । अष्टाशीतिसहस्राणि अष्टात्रिंशत् सर्वलक्षाणीति समस्तानां तान्येव द्विगुणानि व्यस्तानाम् । केवलं ह्येते प्राणाः सूक्ष्ममर्माभिघातव्यंग्याः । यावन्तः प्राणाः

( न्त्ये ) एतुद्ध स्म वै तुद्विद्वानाह वार्क्कलिः । सार्व्वभौमं मेघं व्वर्षन्तं व्वेदाहमस्य व्वर्षस्य स्तोकानिति ॥ ६ ॥

तुदेष श्लोकोऽभ्युक्तः । श्रमादन्यत्र परिवर्तमानस्तिष्ठन्नासीनो यदि वा स्वपन्नपि । अहोरात्राभ्याम्पुरुषः समेन कतिकृत्वः प्राणिति चाप चानितीति ॥ ७ ॥

तुदेष श्लोकः प्रत्युक्तः । शतꣳ शतानि पुरुषः समेनाष्टौ शता यन्मितं तद्वदन्ति । अहोरात्राभ्यां पुरुषः समेन तावत्कृत्वः प्राणिति चाप चानितीति ॥ ८ ॥

इति प्रथमप्रपाठके दशमं ब्राह्मणम् ॥ १२–१–१० ॥ ( ३. २. ) ॥

---

एतद्ध स्म वै तद्विद्वानाह वार्कलिः । सार्वभौमं मेघं वर्षंतं वेदाहम् । अस्य वर्षस्य स्तोकानिति॥६॥
तदेष श्लोकोऽभ्युक्तः–" श्रमादन्यत्र परिवर्तमानस्तिष्ठन्नासीनो यदि वा स्वपन्नपि । अहोरात्राभ्यां पुरुषः समेन कतिकृत्वः प्राणिति चाप चानिति " इति ॥ ७ ॥
तदेष श्लोकः प्रत्युक्तः–" शतं शतानि पुरुषः समेनाष्टौ शता यन्मितं तद्वदंति । अहोरात्राभ्यां पुरुषः समेन तावत्कृत्वः प्राणिति चाप चानिति " इति ॥ ८ ॥

---

मर्माभिघाताः । तावन्तः अक्तना अग्निवृत्तयः । तावन्त एव निमेषाः । एतेन संवत्सरस्थाः पुरुषस्था अपि प्राणादयस्तुः काललक्षणार्थमुपात्ता न आध्यात्मिका इति कृत्वा तावन्तो लोमगर्ता स्वेदायनानि चेत्येतत्त्वेन ध्यानम् । अत्र संवत्सरपुरुषावयवानां च साम्यम् । तावन्त एते स्तोकाः बिंदवः वर्षंति । सार्वभौमस्य मेघस्य युगपदेकस्मिन् क्षणे । स हि मेघः वृत्रः । तस्यापि यावन्ति स्वेदायनानि तावन्त एते स्तोकाः पतन्तीत्यभिप्रायः । तथा चाह–अपां बिलमपिहितं यदासीच्छत्रं ( जघत्वं अचतद्वचारेति ? ) ॥ १–५ ॥

' एतद्ध स्म ' एतदेव वर्षतो मेघस्य स्वेदायने परिमाणम् वर्कलस्यापत्यं वार्कलिः आह स्म–असावस्यां भूमौ विदितं मेघं वर्षंतमस्य च स्तोकानहं वेद, यावन्तः एकस्मिन् क्षणे पतंतीति । कियंतः पुनः ? मेघस्य तावंतः स्तोका भवंति समे भूमिप्रदेशे स्थितः समः पुरुषो यावत् भूमिमंडलं पश्यति । तत्परिमाणस्य श्वसनवाचा व्यवहारोपपत्तेः ॥ ६ ॥

तदेषः श्लोकः । तत्रैव प्रश्नावेतौ उच्छ्वासनिःश्वासलक्षणौ प्राणापानावधिकृत्य एष संख्याप्रश्नश्लोको वक्तव्यः–श्रमादन्यत्रेति । शांतो भूमिस्थमुच्छ्वसिति निःश्वसिति, उच्छ्वासनिःश्वासलक्षणौ प्राणापानावित्यभिप्रायः । ' परिवर्तमानः ' परिभ्रमन् । समेनेति । प्राणापानाभ्यां स्वस्थो मध्यमः पुरुष इत्यर्थः । अहोरात्राभ्यां समः । ताभ्यां न प्रत्येकं कतिकृत्वः प्राणिति च उच्छ्वसिति अपानिति च । कर्षति च शब्दात्समः । तं द्वयमपि पृच्छते । कतिकृत्वोऽहोरात्रेण वायुमाकृष्य विमुंचति पुरुष इत्यर्थः ॥ ७ ॥

तदेष श्लोकः–शतं शतानीति । दशसहस्राणीत्यर्थः । अष्टौ वै शता शतानि यस्मिंस्तत्स्वाभाविकं तदेव

देवा ह वै सहस्रसम्वत्सराय दिदीक्षिरे । तेषाम्पञ्च शतानि सम्वत्सराणां पर्य्यवेतान्यासुरथेदᳬ सर्व्वमेव शश्राम ये स्तोमा यानि पृष्ठानि यानि च्छन्दाᳬसि ॥ १ ॥

ततो देवाः । ( ऽ ) एतद्यज्ञस्यायातयाममपश्यंस्तेनायातयाम्ना या व्वेदे व्यष्टिरासीत्तां व्याश्नुवतायातयामा वाऽ अस्य व्वेदाऽ अयातयाम्न्या हास्य त्रय्या व्विद्ययाऽऽर्त्विज्यं कृतं भवति य ऽएवमेतद्वेद ॥ २ ॥

तदेतद्यज्ञस्यायातयाम ।(मौ) ओश्रावयास्तु श्रौषडयज येयजामहे व्वौषडिति तासाम्वाऽ एतासाम्पञ्चानाम्व्याहृतीनाᳬ सप्तदशाक्षराण्योश्रावयेति चतुरक्षरमस्तु श्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं येयजामह ऽइति पञ्चाक्षरम् ॥ ३ ॥

( न्द्वच ) द्व्यक्षरो व्वषट्कारः । सऽ एष सप्तदशः प्रजापतिरधिदेवतं चाध्यात्मञ्च प्रतिष्ठितः स यो हैवमेतᳬ सप्तदशम्प्रजापतिमधिदेवतञ्चा-

---

प्रायश्चित्तसत्रम् ।

देवा ह वै सहस्रसंवत्सराय दिदीक्षिरे । तेषां पंच शतानि संवत्सराणां पर्यवेतान्यासुः । अथेदं सर्वमेव शश्राम । ये स्तोमा यानि पृष्ठानि यानि च्छंदांसि ॥ १ ॥

ततो देवा एतद्यज्ञस्यायातयाममपश्यन् । तेनायातयाम्ना या वेदे व्यष्टिरासीत्—तां व्याश्नुवत । अयातयामा वा अस्य वेदाः । अयातयाम्न्या हास्य त्रय्या विद्यया आर्त्विज्यं कृतं भवति । य एवमेतद्वेद ॥ २ ॥

तदेतद्यज्ञस्यायातयाम । ओश्रावयास्तु श्रौषड्यज येयजामहे वौषडिति । तासां वा एतासां पंचानां व्याहृतीनां सप्तदशाक्षराणि । ओश्रावयेति चतुरक्षरम् । अस्तु श्रौषडिति चतुरक्षरम् । यजेति द्व्यक्षरम् । येयजामह इति पंचाक्षरम् ॥ ३ ॥

द्व्यक्षरो वषट्कारः । स एष सप्तदशः प्रजापतिः अधिदेवतं चाध्यात्मं च प्रतिष्ठितः । स यो हैवमेतं सप्तदशं प्रजापतिमधिदेवतं चाध्यात्मं च प्रतिष्ठितं वेद । प्रतितिष्ठति प्रजया पशुभिरस्मिन् लोके । अमृतत्वेनामुष्मिन् ॥ ४ ॥

---

वदन्ति । समेन समवर्तिना समेनेति समः । ( पुरुषं मर्चालस्थविरोवातिमहात्वाकारिवदित्यर्थः । ? ) एतच्च पुरुषस्य प्राणानां संवत्सरस्य च मुहूर्तानां साम्योपदेशतः द्रष्टव्यम् ॥ ८ ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये द्वादशे कांडे तृतीयेऽध्याये द्वितीयं ब्राह्मणम् ॥ १२ । ३ । २ ॥

' देवा ह वै ' । प्रसन्नमेतत् । अनेन ब्राह्मणेन प्रायश्चित्तसत्रं विधीयते । तत्र च दर्शनम् । सहस्रसंवत्सरस्य तत्प्रतिमा दीक्षोपसत्सुत्याभिश्च सहस्रसंवत्सरस्य पूर्वार्द्धमध्योत्तमार्द्धा अवाप्यंते तैरेव च दीक्षादिभिरगन्यवर्यमहदु-

ध्यात्मुश्च प्रतिष्ठितम्वेद प्रतितिष्ठति प्रजया पशुभिरस्मिँल्लोकेऽमृतत्वे- नामुष्मिन् ॥ ४ ॥

( ष्मिस्ते ) ते ह देवा ऽऊचुः । ( क्रु ) ॒रुप तं यज्ञक्रतुञ्जानीत युः सहस्र- सम्वत्सरस्य प्रतिमा को हि तस्मै मनुष्यो युः सहस्रसम्वत्सरेण समा- प्नुयादिति ॥ ५ ॥

ते विश्वजितमेव सुर्व्वपृष्ठम् । (म्पृ) पृष्ठ्यस्य षडहस्याञ्जःसवमपश्यंस्ते हि स्तोमा भवन्ति तानि पृष्ठानि तानि च्छुन्दाꣳसि ॥ ६ ॥

पृष्ठ्यमेव षडहम् । ( न्द्वा ) द्वादशाहस्याञ्जःसवमपश्यंस्ते हि स्तोमा भवन्ति तानि पृष्ठानिं तानि च्छुन्दाꣳसि ॥ ७ ॥

द्वादशाहमेव । सम्वत्सरुस्याञ्जःसवमपश्यंस्ते हि स्तोमा भवन्ति तानि पृष्ठानि तानि च्छुन्दाꣳसि ॥ ८॥

सम्वत्सरमेव । तापश्चितुस्याञ्जःसवमपश्यंस्ते हि स्तोमा भवन्ति तानि पृष्ठानि तानि च्छुन्दाꣳसि ॥ ९ ॥

तापश्चितमेव । सहस्रसम्वत्सरुस्याञ्जःसवमपश्यंस्ते हि स्तोमा भवन्ति तानि पृष्ठानि तानि च्छुन्दाꣳसि ॥ १० ॥

स वै सम्वत्सरन्दीक्षाभिरेति । सम्वत्सरमुपसद्भिः सम्वत्सरꣳ सुत्याभिः ॥ ११ ॥

---

ते ह देवा ऊचुः । उप तं यज्ञक्रतुं जानीत । यः सहस्रसंवत्सरस्य प्रतिमा । को हि तस्मै मनुष्यो यः सहस्रसंवत्सरेण समाप्नुयादिति ॥ ५ ॥

ते विश्वजितमेव सर्वपृष्ठं पृष्ठ्यस्य षडहस्यांजःसवमपश्यन् । ते हि स्तोमा भवन्ति । तानि पृष्ठानि । तानि च्छन्दांसि ॥ ६ ॥

पृष्ठ्यमेव षडहं द्वादशाहस्यांजःसवमपश्यन् । ते हि स्तोमा भवन्ति । तानि पृष्ठानि । तानि च्छन्दांसि ॥ ७ ॥

द्वादशाहमेव संवत्सरस्यांजःसवमपश्यन् । ते हि स्तोमा भवंति । तानि पृष्ठानि । तानि च्छंदांसि ॥ ८ ॥

संवत्सरमेव तापश्चितस्यांजःसवमपश्यन् । ते हि स्तोमा भवन्ति । तानि पृष्ठानि । तानि च्छंदांसि ॥ ९ ॥

तापश्चितमेव सहस्रसंवत्सरस्यांजःसवमपश्यन् । ते हि स्तोमा भवन्ति । तानि पृष्ठानि । तानि च्छंदांसि ॥ १० ॥

स वै संवत्सरं दीक्षाभिरेति । संवत्सरमुपसद्भिः । संवत्सरं सुत्याभिः ॥ ११ ॥

---

क्ष्या आप्यंत इति प्रासंगिकेतिहासमुपजीव्य सप्तदशस्य प्रजापतेर्देवा द्रष्टार अयातयामत्वं तदुपासनफलम् ।

स युत्सम्वत्सुरन्दीक्षाभिरेति । पूर्व्वार्द्धमेव तेन सहस्रसम्वत्सरस्यावरुन्द्धेऽथ युत्सम्वत्सुरमुपसुद्भिर्म्मुध्यमेव तेन सहस्रसम्वत्सरस्यावरुन्द्धेऽथ युत्सम्वत्सरꣳ सुत्याभिरुत्तमार्द्धमेव तेन सहस्रसम्वत्सरस्यावरुन्द्धे ॥१२॥

स वै द्वादश मुासान्दीक्षाभिरेति । द्वादशोपसुद्भिर्द्द्वादश सुत्याभिस्तत्षुट्त्रिꣳशत्षुट्त्रिꣳशदक्षरा वै बृहुती बृहत्या वै देवाः स्वर्ग्गं लोकेऽयतन्त बृहत्या स्वर्ग्गं लोकुमाप्नुवंस्तुथोऽ एवैषुऽ एतद्बृहुत्यैवु स्वर्ग्गे लोके युतते बृहत्या स्वर्ग्गं लोकुमाप्नोत्यथ यो बृहत्यां कामस्तुमेवैतेनैवम्विदुवरुन्द्धे॥१३॥

तद्वाऽ एतुत् । ( त्र ) त्रयुꣳ सह क्रियतेऽग्निरर्क्क्यं महुदुक्थ्यꣳ स युत्सम्वत्सुरन्दीक्षाभिरेति सम्वत्सरमुपसुद्भिस्तेनास्याग्न्यर्क्कावाप्तौ भवतोऽथ युत्सम्वत्सरꣳ सुत्याभिरेति तेनोऽएवास्य महुदुक्थ्यमाप्तं भवति स वाऽ एषु ऽएवु सहस्रसम्वत्सरस्य प्रतिमा यत्तापश्चितुऽएषु प्रजानाम्प्रजात्यै युत्तापश्चितः ॥ १४ ॥

इति प्रथमप्रपाठके एकादशं ब्राह्मणम् ॥ १२-१-११ ॥ ( ३. ३. ) ॥

इति प्रथमप्रपाठकः समाप्तः ॥१२।१॥ कण्डिकासंख्या ॥ १३२ ॥

---

स यत्संवत्सरं दीक्षाभिरेति । पूर्वार्द्धमेव तेन सहस्रसंवत्सरस्यावरुन्द्धे । अथ यत्संवत्सरमुपसद्भिः मध्यमेव तेन सहस्रसंवत्सरस्यावरुन्धे । अथ यत्संवत्सरं सुत्याभिः। उत्तरार्द्धमेव तेन सहस्रसंवत्सरस्यावरुन्धे ॥ १२ ॥

स वै द्वादश मासान्दीक्षाभिरेति द्वादशोपसद्भिः । द्वादश सुत्याभिः। तत्षट्त्रिंशत् । षट्त्रिंशदक्षरा वै बृहती । बृहत्या वै देवाः स्वर्गे लोकेऽयतंत। बृहत्या स्वर्गं लोकमाप्नुवन् । तथो एवैष एतद्बृहत्यैव स्वर्गे लोके यतते । बृहत्या स्वर्गं लोकमाप्नोति। अथ यो बृहत्यां कामः । तमेवैतेनैवंविदवरुन्धे ॥ १३॥

तद्वा एतत्त्रयं सह क्रियते। अग्निरर्क्यं महदुक्थ्यम् । स यत्संवत्सरं दीक्षाभिरेति; संवत्सरमुपसद्भिः। तेनास्याग्न्यर्कावाप्तौ भवतः । अथ यत्संवत्सरं सुत्याभिरेति, तेनो एवास्य महदुक्थ्यमाप्तं भवन्ति । स वा एष एव सहस्रसंवत्सरस्य प्रतिमा, यत्तापश्चितः । एष प्रजानां प्रजात्यै । यत्तापश्चितः ॥१४॥

---

अधिदैवाध्यात्मप्रतिष्ठा उपासनफलवदेतत् पृष्ठमेव द्वादशाहस्य अंजः स्वल्पः सदृशः सवो यस्य सः अंजःसवः । ' ते हि स्तोमाः ' इति सादृश्योपपादनम् ॥ १-१० ॥

' स वै ' । द्वादश मासानिति बृहतीतत्फलोपासनावत्त्ववचनम् । ' तद्वा एतत्त्रयम् ' इति अग्न्यर्क्यंमहदुक्थ्योपासनवचनम् ॥ ११-१४ ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यंदिनीयशतपथब्राह्मणभाष्ये द्वादशे कांडे तृतीयेऽध्याये तृतीयं ब्राह्मणम् ॥ १२ । ३ । ३ ॥

# अथ द्वितीयप्रपाठके प्रथमं ब्राह्मणम् ।
# तृतीयेऽध्याये च चतुर्थं ब्राह्मणम् ।



पुरुषꣳ ह नारायणम्प्रजापतिरुवाच । युजस्वयजस्वेति स होवाच युजस्वयजस्वेति वाव त्वम्मामात्थ त्रिरयक्षि व्वसवः प्रातःसवनेनागू रुद्रा माध्यन्दिनेन सवनेनादित्यास्तृतीयसवनेनाथ मम यज्ञवास्त्वेव यज्ञवास्तावेवाहमासऽ इति ॥ १ ॥

स होवाच । युजस्वैवाहम्वै ते तद्वक्ष्यामि यथा तऽउक्थ्यानि मणिरिव सूत्रऽ ओतानि भविष्यन्ति सूत्रमिव वा मणाविति ॥ २ ॥

तस्मा उ हैतदुवाच । प्रातःसवने बहिष्पवमानऽ उद्गातारमन्वारभासै श्येनोऽसि गायत्रच्छन्दाऽ अनु त्वाऽऽरभे स्वस्ति मा सम्पारयेति ॥ ३ ॥

(त्यु) अथ माध्यन्दिने पवमाने । (नऽ) उद्गातारमन्वारभासै सुपर्णोऽसि त्रिष्टुप्छन्दाऽअनु त्वाऽऽरभे स्वस्ति मा सम्पारयेति ॥ ४ ॥

( त्यु ) अथ तृतीयसवनऽ आर्भवे पवमाने । ( नऽ ) उद्गातारमन्वारभासाऽ ऋभुरसि जगच्छन्दाऽ अनु त्वाऽऽरभे स्वस्ति मा सम्पारयेति ॥५॥

---

पुरुषं ह नारायणं प्रजापतिरुवाच यजस्वयजस्वेति । स होवाच । यजस्वयजस्वेति वाव त्वं मामात्थ । त्रिरयक्षि । वसवः प्रातःसवनेनागुः । रुद्रा माध्यंदिनेन सवनेन । आदित्यास्तृतीयसवनेन । अथ मम यज्ञवास्त्वेव । यज्ञवास्तावेवाहमास इति ॥ १ ॥

स होवाच । यजस्वैव । अहं वै ते तद्वक्ष्यामि । यथा त उक्थ्यानि मणिरिव सूत्र ओतानि भविष्यन्ति । सूत्रमिव वा मणाविति ॥ २ ॥

तस्मा उ हैतदुवाच । प्रातःसवने बहिष्पवमान उद्गातारमन्वारभासै । "श्येनोऽसि गायत्रच्छन्दा अनु त्वाऽऽरभे स्वस्ति मा संपारय"–इति ॥ ३ ॥

अथ माध्यन्दिने पवमाने उद्गातारमन्वारभासै । "सुपर्णोऽसि त्रिष्टुप्छन्दा अनु त्वाऽऽरभे स्वस्ति मा संपारय"–इति ॥ ४ ॥

अथ तृतीयसवन आर्भवे पवमाने उद्गातारमन्वारभासै । "ऋभुरसि जगच्छन्दा अनु त्वाऽऽरभे स्वस्ति मा संपारय"–इति ॥ ५ ॥

---

'पुरुषं' ह अनेनापि ब्राह्मणेन संवत्सरसत्रे पवमानत्रये उद्गातुरन्वारम्भविधेयतावचनम् । संस्थासु च जपाः ।

---

१–पवमानेषूद्गातारमन्वारभेरन् श्येनोऽसि गायत्रच्छन्दा अनु त्वाऽऽरभे स्वस्ति मा संपारय सुपर्णोऽसि त्रिष्टुप्छन्दा ऋभुरसि जगच्छन्दा इतीतरयोः सवनयोः । का. श्रौ. सू. १३ । २ । ११ ।

( त्यु ) अथ सुर्ठ्ँस्थितेषु सर्ठ्ँस्थितेषु सुवनेषु जपेः । ( र्म ) मुयि भुर्ग्गो मुयि महो मुयि युशो मुयि सुर्व्वमिति ॥ ६ ॥

( त्य ) अयम्वै लोको भुर्ग्गः । ( ग्गोऽन्त ) अन्तरिक्षलोको मुहो द्यौर्य्युशो येऽन्ये लोकास्तत्सुर्व्वम् ॥ ७ ॥

( म ) अग्निर्व्वै भुर्ग्गः । ( ग्गो ) व्वायुर्म्मुहऽ आदित्यो युशो येऽन्ये देवास्तत्सुर्व्वम् ॥ ८ ॥

( मृ ) ऋग्वेदो वै भुर्ग्गः । ( र्गो ) यजुर्व्वेदो मुहः सामवेदो युशो येऽन्ये व्वेदास्तत्सुर्व्वम् ॥ ९ ॥

व्वाग्वै भुर्ग्गः । प्राणो मुहश्चक्षुर्य्युशो येऽन्ये प्राणास्तत्सुर्व्वम् ॥ १० ॥

तुद्विद्यात् । ( त्सु ) सुर्व्वांल्लोकानात्मुन्नधिषि सुर्व्वेषु लोकेष्वात्मान मधार्ठ्ँ सुर्व्वान्देवानात्मुन्नधिषि सुर्व्वेषु देवेष्वात्मानमधार्ठ्ँ सुर्व्वान्व्वेदानात्मुन्नधिषि सुर्व्वेषु व्वेदेष्वात्मानमधार्ठ्ँ सुर्व्वान्प्राणानात्मुन्नधिषि सुर्व्वेषु प्राणेष्वात्मानमधामित्यक्षिता वै लोकाऽ अक्षिता देवाऽ अक्षिता व्वेदाऽ अक्षिताः प्राणाऽअक्षितर्ठ्ँ सुर्व्वमक्षिताद्ध वाऽअक्षितमुपसङ्क्रामत्युप पुनर्म्मृत्युञ्जयति सुर्व्वमायुरेति युऽएवुमेतद्वेद ॥ ११ ॥

इति द्वितीयप्रपाठके प्रथमं ब्राह्मणम् ॥ १२।२।१ ॥ ( ३-४ ) ॥

---

अथ संस्थितेषु संस्थितेषु सवनेषु जपेः । "मयि भर्गो मयि महो मयि यशो मयि सर्वम्"—इति ॥ ६ ॥

अयं वै लोको भर्गः । अंतरिक्षलोको महः । द्यौर्यशः । येऽन्ये लोकास्तत्सर्वम् ॥ ७ ॥

अग्निर्वै भर्गः । वायुर्महः । आदित्यो यशः । येऽन्ये देवास्तत्सर्वम् ॥ ८ ॥

ऋग्वेदो वै भर्गः । यजुर्वेदो महः । सामवेदो यशः । येऽन्ये वेदास्तत्सर्वम् ॥ ९ ॥

वाग्वै भर्गः । प्राणो महः । चक्षुर्यशः । येऽन्ये प्राणास्तत्सर्वम् ॥ १० ॥

तद्विद्यात् सर्वान् लोकानात्मन्नधिषि । सर्वेषु लोकेषु आत्मानमधाम् । सर्वान् वेदान् आत्मन्नधिषि सर्वेषु वेदेष्वात्मानमधाम् । सर्वान् प्राणानात्मन्नधिषि । सर्वेषु प्राणेष्वात्मानमधामिति । अक्षिता

---

तत्र च प्रजापतिरुवाचेति । 'अधिषि' अयक्षि । "डुधाञ् धारणपोषणयोः"—( धा. पा. जु. उ. १० )

---

१—सवनांतेषु जपन्ति मयि भर्गो मयि महो मयि यशो मयि सर्वमिति । सर्वत्रैके यजतिशब्दात् । न प्रकरणात् । का. श्रौ. सू. १२ । २ । १३-१४ ।

सावित्रꣳ ह स्मैतम्पूर्वे पशुमालभन्ते । ( न्तेऽथै ) अथैतर्हि प्राजापत्यं यो ह्येव सविता स प्रजापतिरिति व्वदन्तस्तस्मात्सन्न्युप्याग्नींस्तेन यजेरन्गृहपतेरेवाग्निषु ययेदञ्जाघन्या पत्नीः संयाजयन्ति तस्यान्नोऽप्यसदिति ते ततो यदानिकामन्दीक्षन्ते ॥ १ ॥

---

वै लोकाः । अक्षिता देवाः । अक्षिता वेदाः । अक्षिताः प्राणाः । अक्षितं सर्वम् । अक्षिताद्ध वा अक्षितमुपसंक्रामति । अप पुनर्मृत्युं जयति । सर्वमायुरेति । य एवमेतद्वेद ॥ ११ ॥

सावित्रं ह स्मैतं पूर्वे पशुमालभन्ते । अथैतर्हि प्राजापत्यम् । यो ह्येव सविता स प्रजापतिरिति वदन्तः । तस्मात् संन्युप्याग्नीन् तेन यजेरन् । गृहपतेरेवाग्निषु । ययेदं जाघन्या पत्नीः संयाजयन्ति । तस्यां नोप्यऽसदिति । ते ततो यदानिकामं दीक्षन्ते ॥ १ ॥

---

इत्यस्य धातोरनद्यतने भूते काले लुट् । हितवान् स्थापितवान् । सर्वमित्यर्थः । अक्षिताः अक्षीणाः ॥ १–११ ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनशतपथब्राह्मणभाष्ये द्वादशकांडे तृतीयेऽध्याये चतुर्थं ब्राह्मणम् ॥ १२ । ३ । ४ ॥

' सावित्रं ह ' अत्र ब्राह्मणे श्रीकामानां सत्रिणाम् एककल्पो गवामयनोऽभिगम्यते । यज्ञक्रतूनां च संवत्सरस्य पक्षयोः समता । एतमिष्टकापशुं गवामयने सावित्रं पूर्वे सत्रिण आलभन्ते स्म, इति पुराकल्पः । अथ अधुना वर्तमाने युगे प्राजापत्यमेवालभन्ते । संवत्सरसत्रेऽपि न केवलम्, इतरत्र साग्निचित्ये क्रतावित्यभिप्रायः । तस्मात् संन्युप्येति वक्ष्यमाणहेतुत्वेन परामर्शेन पूर्वोक्तस्य हेतुत्वानुपपत्तेः । यदि हि पूर्वैः सावित्र आलब्धः अधुना च प्राजापत्य आलभ्यते । ततः किमिति अग्नयः सन्ति । उपपत्तेः कस्तर्ह्यत्र हेतुः । वक्ष्यमाणं "ययेदं जाघन्या" इदं प्रसिद्धम् । पत्नीः संयाजयन्ति पत्नीसंयाजान् कुर्वति । तस्यामपि जाघन्यां नः अस्माकं भागः स्यादित्येवम् । यस्मात् सत्रिणो गृहपतिव्यतिरिक्ताः अकामयन्त तस्मात् संवत्सरसदः नीचैः स्थापयित्वा अग्नीन् सर्वेषां सत्रिणां ' संन्युप्याग्नीन् ' गृहपतेरेवाग्निषु जातं गृहपतेर्गार्हपत्ये प्रास्येत्यर्थः । गार्हपत्यसन्निवापेनैव सर्वेष्वग्निषु संन्युप्ता भवन्तीत्यभिप्रायः । गृहपतेरेवारण्योः सन्निवापोक्तिः । तथापि हि गृहपतेरेवाग्निषु संन्युप्ता एव भवन्ति । नानागार्हपत्यपक्षनिवृत्तिमात्रमेव ह्यत्र विवक्षितं वाक्यशेषात् । तेनेष्टकाश्रयनीया यजेरन् कस्मादेवं न संबध्यते । गृहपतेरेवाग्निषु यजेरन्निति नैवं संबध्यते सन्निवापवचनात् । संन्युप्ताः साधारणाश्च एतेऽग्नयो भवन्ति । कथं गृहपतेरेवेत्युच्यते । ' ययेदं जाघन्येति ' कः अभिप्रायः । यदि किल अग्नयः संन्युप्येरन् । ततः पृथग्गार्हपत्या भवेयुः । तदा च गृहपतेरेव गार्हपत्ये जाघन्या पत्नीः संयाजयन्त्याज्यं नेतरे प्रतियजंत आसत इत्येष कल्पः स्यात् । तथा च सति जाघन्या सत्रिणोऽन्तरिताः स्युरिति । ते सत्रिणस्ततः इष्टकापशोः . परतो यदानिकामम् । निशब्दः संशब्दस्यार्थे यथा संगतः । एकार्थत्वात्सर्वेषां ( कतेमाभवंतत्यदा वयं दीक्षाम इति ? ) यदा दीक्षन्ते तदा निकामस्तदेत्येतस्मिन्नर्थे यदानिकाममित्यव्ययीभावसमासः ॥ १ ॥

तदु वाऽ आहुः । ( न्नां ) नानाधिष्ण्याऽ एव स्युर्य्यदि दीक्षितस्योपतपेत्पार्श्वतोऽग्निहोत्रञ्जुह्वद्वसेत्स यद्यगदो भवति सꣳसृज्यैनम्पुनरुपह्वयन्ते यद्यु म्रियते स्वैरेव तमग्निभिर्दहन्त्यशवाग्निभिरितरे यजमानाऽ आसतऽ इति तदुहैवाहिताग्नेः कर्म्म समानधिष्ण्यास्त्वेव भवन्ति तस्य तदेव ब्राह्मणं यत्पुरश्चरणे ॥ २ ॥

तदाहुः । ( ख्युं ) यत्सम्वत्सराय सम्वत्सरसदो दीक्षन्ते कथमेषामग्निहोत्रमनन्तरितं भवतीति व्रतेनेति ब्रूयात् ॥ ३ ॥

( त्रु ) तदाहुः । ( ख्युं ) यत्सम्वत्सराय सम्वत्सरसदो दीक्षन्ते कथमेषाम्पौर्णमासꣳ हविरनन्तरितम्भवतीत्याज्येन च पुरोडाशेन चेति ब्रूयात् ॥ ४ ॥

---

तदु वा आहुः । नानाधिष्ण्या एव स्युः । यदि दीक्षितस्योपतपेत् । पार्श्वतः अग्निहोत्रं जुह्वत् वसेत् । स यद्यगदो भवति । संसृज्यैनं पुनरुपह्वयन्ते । यद्यु म्रियते । स्वैरेव तमग्निभिर्दहन्ति । अशवाग्निभिरितरे यजमाना आसत इति । तदुहैवाहिताग्नेः कर्म । समानधिष्ण्यास्ते भवन्ति । तस्य तदेव ब्राह्मणं यत् पुरश्चरणे ॥ २ ॥

तदाहुः—यत् संवत्सराय संवत्सरसदो दीक्षन्ते । कथमेषामग्निहोत्रमनन्तरितं भवतीति । व्रतेनेति ब्रूयात् ॥ ३ ॥

तदाहुः—यत्संवत्सराय संवत्सरसदो दीक्षन्ते । कथमेषां पौर्णमासं हविरनन्तरितं भवतीति । आज्येन च पुरोडाशेन चेति ब्रूयात् ॥ ४ ॥

---

'तदु वा आहुः' । 'नानाधिष्ण्या एव स्युः' इति कल्पांतरोपन्यासः । तेषां समान आहवनीयो भवति । नानागार्हपत्याः इत्येष कल्पः स्यादित्यर्थः । यदि दीक्षितस्योपतपेदिति । (दीक्षितास्तौ नांसं कंदारमेव परिवृत्तं भविष्यतीत्युपपत्तिवचने । ) यदि दीक्षितस्य किंचिदंगं व्याधिना उपतपेत् । ततः स तत एव प्रत्यात्मिकात् गार्हपत्यादाहवनीयमुद्धृत्य पार्श्वे आहवनीये अग्निहोत्रं जुह्वत् वसेत् । यदि अगदः आरोग्यं भवति । ततः संसृज्याग्निं गार्हपत्यं स्वस्थानमानीयेत्यर्थः । एनमातुरं पुनरुपह्वयंते यागेन याजयंते । यदि तु स म्रियते । ततः संसृष्टैरग्निभिः तत्पुत्रादयो दहंति । इतरे तु सत्रिणः अशवाग्निभिः शुद्धैरेव यजमानाः संतु । आसत इति संकटपरिहारः । तदुहैवाहिताग्नेः कर्म । तदेतत् यथोक्तं आहिताग्नेरेव । ( सत्रस्य विना सत्राकर्म उक्तम् ? ) न सत्रिणः । अस्य हि गार्हपत्ये भिन्नेऽपि आहवनीयादिसर्वं संसृष्टमेवास्ते । तत्र कुत इतरे अशवाग्निभिर्यजमाना आसीरन् । समानधिष्ण्याः साधारणगार्हपत्या एव ते सर्वे सत्रिणो भवंति । यथोक्तेन सन्निवापेन तस्य तु समानधिष्ण्यत्वम् । तस्य तदेव ब्राह्मणं यत्पुरश्चरणे । सत्रान्ते अग्निब्राह्मणे । तदपेक्ष्यया सत्रान्तः पुरश्चरणमुच्यते ॥ २ ॥

'तदाहुर्यत्' प्रसन्नप्रायमतः परम् । यत् यदा संवत्सराय सत्रात्मकाय संवत्सरं सीदन्ति यांति इति संवत्सरसदः

(त्त) तदाहुः । (र्ख्यु) यत्सम्वत्सराय सम्वत्सरसदो दीक्षन्ते कथमेषाम्पितृयज्ञोऽनन्तरितो भवतीत्यौपासनैरिति ब्रूयात् ॥ ५ ॥

(त्त) तदाहुः । (र्ख्यु) यत्सम्वत्सराय सम्वत्सरसदो दीक्षन्ते कथमेषामामावास्यꣳ हविरनन्तरितम्भवतीति दध्ना च पुरोडाशेन चेति ब्रूयात् ॥ ६ ॥

(त्त) तदाहुः । (र्ख्यु) यत्सम्वत्सराय सम्वत्सरसदो दीक्षन्ते कथमेषामाग्रयणेष्टिरनन्तरिता भवतीति सौम्येन चरुणेति ब्रूयात् ॥ ७ ॥

(त्त) तदाहुः । (र्ख्यु) यत्सम्वत्सराय सम्वत्सरसदो दीक्षन्ते कथमेषाञ्चातुर्म्मास्यान्यनन्तरितानि भवन्तीति पयस्ययेति ब्रूयात् ॥ ८ ॥

(त्त) तदाहुः । (र्ख्यु) यत्सम्वत्सराय सम्वत्सरसदो दीक्षन्ते कथमेषाम्पशुबन्धोऽनन्तरितो भवतीति पशुना च पुरोडाशेन चेति ब्रूयात् ॥ ९ ॥

---

तदाहुः—यत्संवत्सराय संवत्सरसदो दीक्षन्ते । कथमेषां पितृयज्ञोऽनन्तरितो भवतीति । औपासनैरिति ब्रूयात् ॥ ५ ॥

तदाहुः—यत्संवत्सराय संवत्सरसदो दीक्षन्ते । कथमेषामामावास्यं हविरनन्तरितं भवतीति । दध्ना च पुरोडाशेन चेति ब्रूयात् ॥ ६ ॥

तदाहुः—यत्संवत्सराय संवत्सरसदो दीक्षन्ते । कथमेषामाग्रयणेष्टिरनन्तरिता भवतीति । सौम्येन चरुणेति ब्रूयात् ॥ ७ ॥

तदाहुः—यत्संवत्सराय संवत्सरसदो दीक्षन्ते । कथमेषां चातुर्मास्यान्यनन्तरितानि भवन्तीति । पयस्ययेति ब्रूयात् ॥ ८ ॥

तदाहुः—यत्संवत्सराय संवत्सरसदो दीक्षन्ते । कथमेषां पशुबन्धोऽनन्तरितो भवतीति । पशुना च पुरोडाशेन चेति ब्रूयात् ॥ ९ ॥

---

संवत्सरसत्रिणः दीक्षंते तदा कथमेषां सत्रिणां अग्निहोत्रं नित्यं सत् अनंतरितं सत्रेऽन्तर्गतमाप्तं भवतीति प्रश्नः । कोऽभिप्रायः ? " दीक्षितो न ददाति न यजते न जुहोति नानृतं वदति " इति सर्वाण्येव नित्यानि कर्माणि दीक्षितस्य पर्युदस्तानि । ततश्च सत्रिणो बहुतराश्च यागा हीयेरन् इति । व्रतेनेति ब्रुवति । दीक्षितव्रतेनाग्निहोत्रमनंतरितं भवति । तत्र ह्युक्तम् । " एष ह्यस्यात्र यज्ञो भवत्येतद्धविर्यथा पुराऽग्निहोत्रम् " इति ॥ ३ ॥ ४ ॥

औपासनैः पुरोडाशमात्रा अनुदकाः पिंडपितृयज्ञवत् यथास्वं चमसेषु उप अस्यंते इत्युपासनानि, तेषु भवानि कर्माणि औपासनानि । तैः पितृयज्ञोऽनंतरितो भवति ॥ ५ ॥ ६ ॥

सौम्येन चरुणा तार्तीयसवनिकेन ॥ ७ ॥

पयस्यया प्रातःसवनीयाऽनूबंध्यास्थाने या पयस्या सा अनित्यत्वादत्र गृह्यते । भवंत्येता अस्य उपासकस्य स्वाग्नेः विकल्पके ॥ ८—१० ॥

( त्त ) तदाहुः । ( र्थ्यु ) यत्सम्वत्सराय सम्वत्सरसदो दीक्षन्ते कथ-मेषाᳫँ सोमोऽनन्तरितो भवतीति सवनैरिति ब्रूयात् ॥ १० ॥

( त्ते ) ते वा ऽ एवमेते यज्ञक्रतवः । सम्वत्सरमपियन्ति स यो हैवमेतां यज्ञक्रतूनाᳫँ सम्वत्सरेऽपीतिम्वेदाप्यस्य स्वर्गे लोके भवति ॥ ११ ॥

सम्वत्सरस्य समता व्वेदितव्व्या । ( व्यैकं ) एकम्पुरस्ताद्विषुवतो-ऽतिरात्रमुपयन्त्येकमुपरिष्टात्त्रयःपञ्चाशतम्पुरस्ताद्विषुवतोऽग्निष्टोमानुप-यन्ति त्रयःपञ्चाशतमुपरिष्टाद्विᳫँशतिशतम्पुरस्ताद्विषुवतऽ उक्थ्यान्य-हान्युपयन्ति व्विᳫँशतिशतमुपरिष्टादिति नु यऽ उक्थ्यान्त्स्वरसाम्नऽ उपयन्ति ॥ १२ ॥

(न्त्य) अथ येऽग्निष्टोमान् ।(न्ष)षट्पञ्चाशतम्पुरस्ताद्विषुवतोऽग्निष्टोमानु-पयन्ति षट्पञ्चाशतमुपरिष्टात्सप्तदशᳫँ शतम्पुरस्ताद्विषुवतऽ उक्थ्यान्य-हान्युपयन्ति सप्तदशमुपरिष्टात्षट्पुरस्ताद्विषुवतः षोडशिनऽ उपयन्ति षडुपरिष्टात्त्रिᳫँशतम्पुरस्ताद्विषुवतः षडहान्युपयन्ति त्रिᳫँशतमुपरिष्टा-

---

तदाहुः—यत् संवत्सराय संवत्सरसदो दीक्षंते । कथमेषां सोमोऽनन्तरितो भवतीति । सवनैरिति ब्रूयात् ॥ १० ॥

ते वा एवमेते यज्ञक्रतवः संवत्सरमपियन्ति । स यो हैवमेतां यज्ञक्रतूनामपीतिं वेद । अप्यस्य स्वर्गे लोके भवति ॥ ११ ॥

संवत्सरस्य समता वेदितव्या । एकं पुरस्तात् विषुवतोऽतिरात्रमुपयन्ति । एकमुपरिष्टात् । त्रयःपञ्चाशतं पुरस्ताद्विषुवतोऽग्निष्टोमानुपयन्ति । त्रयःपंचाशतमुपरिष्टात् । विंशतिशतं पुरस्तात् विषुवत उक्थ्यान्यहान्युपयन्ति । विंशतिशतमुपरिष्टात् । इति नु य उक्थ्यान् स्वरसाम्न उपयन्ति ॥ १२ ॥

अथ येऽग्निष्टोमान् षट्पंचाशतं पुरस्तात् विषुवतोऽग्निष्टोमानुपयंति । षट्पंचाशतमुपरिष्टात् ।

---

अपीतिमिति । संवत्सरसापेक्षयोः संबंधतुल्यत्वं वेदितव्यम् ॥ ११ ॥

उपयन्ति इति विधिः समेन वा अस्योपासकस्यात्रायनेन कर्मानुष्ठानेन इतम् ईप्सितं नूनं भवति । य एवमेतद्वेद उपास्ते इति वचनात् ॥ १२ ॥ १३ ॥

देषा हास्य समता समेन ह वाऽ अस्या व्व्यृद्धेनान्यूनेनानतिरिक्तेनायनेनै-तम्भवति यऽ एवमेतद्वेद ॥ १३ ॥

इति द्वितीयप्रपाठके द्वितीयं ब्राह्मणम् ॥ १२।२।२ ॥ ( ३-५ )
तृतीयोऽध्यायः समाप्तः ॥ १२।३ ॥ कण्डिकासंख्या ॥ ५५ ॥

---

सप्तदशं शतं पुरस्तात् विषुवत उक्थ्यान्यहान्युपयंति । सप्तदशमुपरिष्टात् । षट्पुरस्ताद्विषुवतः षोडशिन उपयंति । षडुपरिष्टात् । त्रिंशतं पुरस्ताद्विषुवतः षडहान्युपयंति । त्रिंशतमुपरिष्टात् । एषा हास्य समता । समेन ह वा अस्या व्यृद्धेनान्यूनेनानतिरिक्तेनायनेनेतं भवति । य एवमेतद्वेद॥१३॥

---

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये द्वादशकांडे
तृतीयेऽध्याये पंचमं ब्राह्मणम् ॥ १२ । ३ । ५ ॥

नागस्वामिसुतोऽवन्त्यां पाराशर्यो वसन्हरिः ।
श्रुत्यर्थं दर्शयामास शक्तितः पौष्करीयकः ॥ १ ॥
श्रीमतोऽवन्तिनाथस्य विक्रमार्कस्य भूपतेः ।
धर्माध्यक्षो हरिस्वामी व्याख्यच्छातपथीं श्रुतिम् ॥ २ ॥
भूभर्त्रा विक्रमार्केण क्लृप्तां कनकवेदिकाम् ।
दानायाध्यस्य कृतवान् श्रुत्यर्थविवृतिं हरिः ॥ ३ ॥

इति श्रीसर्वविद्यानिधानकवीन्द्राचार्यसरस्वतीनां श्रीहरिस्वामिनां कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये द्वादशकाण्डे तृतीयोऽध्यायः समाप्तः ॥ १२–३ ॥



# अथ चतुर्थेऽध्याये प्रथमं ब्राह्मणम् ।
# द्वितीयप्रपाठके च तृतीयं ब्राह्मणम् ।



दीर्घसत्रᳫँ ह वा एत उपयन्ति । येऽग्निहोत्रञ्जुह्वत्येतद्वै जरामर्य्यᳫँ सत्रं यदग्निहोत्रञ्जरया वा ह्येवास्मान्मुच्यन्ते मृत्युना वा ॥ १ ॥

तदाहुः । ( खं ) यदेतस्य दीर्घसत्रिणोऽग्निहोत्रञ्जुह्वतोऽन्तरेणाग्नी युक्तम्वा विवायात्सम्वा चरेयुः किन्तत्र कर्म्म का प्रायश्चित्तिरिति कुर्वीत हैव निष्कृतिमपीष्ट्या यजेत तदु तन्नाद्रियेतेमान्वा एष लोकाननु वितनुते योऽग्नी आधत्ते ॥ २ ॥

तस्यायमेव लोको गार्हपत्यः । ( त्योऽन्त ) अन्तरिक्षलोकोऽन्वाहार्य्यपचनोऽसौ लोक आहवनीयः कामन्वा एषु लोकेषु व्वयाᳫँसि युक्तञ्चायुक्तञ्च सञ्चरन्ति स यदि हास्याप्यन्तरेण ग्रामोऽग्नीन्वियायान्नैव मे काचनार्त्तिरस्ति न रिष्टिरिति हैव विद्यात् ॥ ३ ॥

( त्र ) त्रयो ह त्वाव पशवोऽमेध्याः । ( ० ) दुर्व्वराहऽ ऐडकः श्वा तेषां यद्यधिश्रितेऽग्निहोत्रेऽन्तरेण कश्चित्सञ्चरेत्किन्तत्र कर्म्म का प्रायश्चित्तिरिति तद्धैके गार्हपत्याद्भस्मोपहत्याहवनीयान्निवपन्तो यन्तीदम्विष्णुर्व्विचक्रमऽइत्येतयर्च्चा यज्ञो वै व्विष्णुस्तद्यज्ञेनैव यज्ञमनुसन्तन्मो भस्म-

---

दीर्घसत्रं वा एत उपयंति । येऽग्निहोत्रं जुह्वति । एतद्वै जरामर्यं सत्रम् । यदग्निहोत्रम् । जरया वा ह्येवास्मान्मुच्यंते मृत्युना वा ॥ १ ॥

तदाहुः—यदेतस्य दीर्घसत्रिणोऽग्निहोत्रं जुह्वतोऽन्तरेणाग्नी । युक्तं वा विवायात् । सं वा चरेयुः । किं तत्र कर्म । का प्रायश्चित्तिरिति । कुर्वीत हैव निष्कृतिम् । अपीष्ट्या यजेत । तद्धु तन्नाद्रियेत । इमान्वा एष लोकाननु वितनुते । योऽग्नी आधत्ते ॥ २ ॥

तस्यायमेव लोको गार्हपत्यः । अन्तरिक्षलोकोऽन्वाहार्यपचनः । असौ लोक आहवनीयः । कामं न्वा एषु लोकेषु वयांसि युक्तं चा युक्तं च संचरन्ति । स यदि हास्याप्यंतरेण ग्रामोऽग्नीन् वियायात् । नैव मे काचनार्तिरस्ति । न रिष्टिः । इति हैव विद्यात् ॥ ३ ॥

त्रयो ह त्वाव पशवोऽमेध्याः—दुर्वराहः, ऐडकः, श्वा । तेषां यद्यधिश्रितेऽग्निहोत्रेऽन्तरेण कश्चित्सं-

---

१—अंतरा गमनेऽनाद्रियेत । का. श्रौ. सू. २५-७३ ।

२—मैडकवराहैष्वधारा प्राचीदं विष्णुरिति । भस्मना वा । का. श्रौ. सू. २५ । ७४-७५ ।

नाऽस्य पदमपि व्वपामऽ इति व्वदन्तस्तदु तथा न कुर्य्याद्यो हैनन्तत्र ब्रूयादासान्वाऽ अयं यजमानस्यावाप्सीत्क्षिप्रे परमा सा नावप्स्यते ज्येष्ठ-गृह्यश्ँ रोत्स्यतीतीश्वरो ह तथैव स्यात् ॥ ४ ॥

( दि ) इत्थमेव कुर्य्यात् । ( हु ) उदस्थालीम्वैवोदकमण्डलुम्वाऽऽ-दाय गार्हपत्यादग्रऽ आहवनीयान्निनयन्नियादिदम्विष्णुर्व्विचक्रमऽइत्ये-तयैवर्चा यज्ञो वै व्विष्णुस्तद्यज्ञेनैव यज्ञमनुसन्तनोति यद्वै यज्ञस्य रिष्टं यदशांतमापो वै तस्य सर्व्वस्य शान्तिरद्भिरेवैनत्तच्छान्त्या शमयत्ये-तदेव तत्र च कर्म्म ॥ ५ ॥

तदाहुः । ( र्य्यु ) यस्याग्निहोत्रन्दोह्यमानश्ँ स्कन्देत्किन्तत्र कर्म्म का प्रायश्चित्तिरिति स्कन्नप्रायश्चित्तेनाभिमृश्याद्भिरुपनिनीय परिशिष्टेन जुहुयाद्यद्यु नीची स्थाली स्याद्यदि वा भिद्येत स्कन्नप्रायश्चित्तेनैवाभि-मृश्याद्भिरुपनिनीय यदन्यद्विन्देत्तेन जुहुयात् ॥ ६ ॥ शतम् ६१०० ॥

( दु ) अथ यत्र स्कन्नश्ँ स्यात् । ( चु ) तदभिमृशेदस्कन्नधित प्राज-नीति यदा वै स्कन्दत्यथ धीयते यदा धीयतेऽथ प्रजायते योनिर्व्वाऽ इयश्ँ

---

चरेत्; किं तत्र कर्म, का प्रायश्चित्तिरिति । तद्धैके—गार्हपत्याद्भस्मोपहत्याहवनीयान्निवपन्तो यंति । " इदं विष्णुर्विचक्रमे " ( वा. सं. ५ । १५ ) इत्येतयर्चा । यज्ञो वै विष्णुः । तद्यज्ञेनैव यज्ञमनुसन्तन्मः । भस्मनाऽस्य पदमपि वपाम इति वदन्तः । तद्धु तथा न कुर्यात् । यो हैनं तत्र ब्रूयात् । आसां न्वा अयं यजमानस्यावाप्सीत् । क्षिप्रे परमा सा नावप्स्यते । ज्येष्ठगृह्यं रोत्स्यतीति । ईश्वरो ह तथैव स्यात् ॥ ४ ॥

इत्थमेव कुर्यात् । उदस्थालीं वैवोदकमण्डलुं वाऽऽदाय । गार्हपत्यादग्र आहवनीयान्निनयन्नि-यात् । " इदं विष्णुर्विचक्रमे " ( वा. सं. ५ । १५ ) इत्येतयैवर्चा । यज्ञो वै विष्णुः । तद्यज्ञेनैव यज्ञमनुसंतनोति । यद्वै यज्ञस्य रिष्टम् । यदशान्तम् । आपो वै तस्य सर्वस्य शान्तिः । अद्भिरेवैनत्तच्छांत्या शमयति । एतदेव तत्र च कर्म ॥ ५ ॥

तदाहुः—यस्याग्निहोत्रं दोह्यमानं स्कन्देत् । किं तत्र कर्म । का प्रायश्चित्तिरिति । स्कन्नप्रायश्चि-त्तेनाभिमृश्य । अद्भिरुपनिनीय परिशिष्टेन जुहुयात् । यद्यु नीची स्थाली स्यात् । यदि वा भिद्येत । स्कन्नप्रायश्चित्तेनैवाभिमृश्य अद्भिरुपनिनीय । यदन्यद्विंदेत्—तेन जुहुयात् ॥ ६ ॥

अथ यत्र स्कन्नं स्यात् । तदभिमृशेत् " अस्कन्नाधित प्राजनि "—इति । यदा वै स्कन्दति ।

---

१—स्कंदेच्चेदस्कन्नमधित प्राजनीत्यभिमृश्य शेषेण जुहुयात् । का. श्रौ. सू. २५ । २४ ।

२—भिद्येत चेदवापद्येत स्कन्नप्रायश्चित्तेनाभिमृश्य व्याहृतिभिश्चाद्भिरुपनिनीय कपालानि भस्मोद्वापे कुर्यात् । का. श्रौ. सू. २५।२५।

रेतः पयस्तदस्यां योनौ रेतो दधात्यनुष्ठ्या हास्य रेतः सिक्तम्प्रजायते य एवमेतद्वेदामुतो वै दिवो व्वर्षतीहौषधयो व्वनस्पतयः प्रजायन्ते पुरुषाद्रेतः स्कन्दति पशुभ्यस्तत इदꣳ सर्व्वम्प्रजायते तद्विद्याद्भूयसी मे प्रजातिरभूद्बहुः प्रजया पशुभिर्भविष्यामि श्रेयान्भविष्यामीति ॥ ७ ॥

( त्यु ) अथ यत्रावभिन्नꣳ स्यात् । ( त्तु ) तदुदस्थालीं वैवोदकमण्डलुम्वा निनयेद्यद्वै यज्ञस्य रिष्टं यदशान्तमापो वै तस्य सर्व्वस्य शान्ति रद्भिरेवैनत्तच्छान्त्या शमयति भूर्भुवः स्वरित्येताभिर्व्याहृतिभि रेता वै व्याहृतयः सर्व्वप्रायश्चित्तीस्तदनेन सर्व्वेण प्रायश्चित्तिङ्कुरुते तानि कपालानि सञ्चित्य यत्र भस्मोद्धृतꣳ स्यात्तन्निवपेदेतदेव तत्र कर्म्म ॥ ८ ॥

तदाहुः । ( र्थ्य ) यस्याग्निहोत्री दोह्यमानोपविशेत्किन्तत्र कर्म्म का प्रायश्चित्तिरिति ताꣳ हैके यजुषोत्थापयन्त्युदस्थाद्देव्यदितिरितीयम्वा अदितिरिमामेवास्मा एतदुत्थापयाम इति व्वदन्त आयुर्यज्ञपतावधादित्यायुरेवास्मिंस्तद्दध्म इति व्वदन्त इन्द्राय कृण्वती भागमितीन्द्रियमेवास्मिंस्तद्दध्म इति व्वदन्तो मित्राय व्वरुणाय चेति प्राणोदानौ

---

अथ धीयते । यदा धीयते । अथ प्रजायते । योनिर्वा इयम् । रेतः पयः । तदस्यां योनौ रेतो दधाति । अनुष्ठ्या हास्य रेतः सिक्तं प्रजायते । य एवमेतद्वेद । अमुतो वै दिवो वर्षति । इहौषधयो वनस्पतयः प्रजायन्ते । पुरुषाद्रेतः स्कन्दति । पशुभ्यस्तत इदं सर्वं प्रजायते । तद्विद्यात् । भूयसी मे प्रजातिरभूत् । बहुः प्रजया पशुभिर्भविष्यामि । श्रेयान् भविष्यामीति ॥ ७ ॥

अथ यत्रावभिन्नं स्यात् । तदुदस्थालीं वै वा उदकमण्डलुं वा निनयेत् । यद्वै यज्ञस्य रिष्टम् । यदशान्तम् । आपो वै तस्य सर्वस्य शान्तिः । अद्भिरेवैनत्तच्छांत्या शमयति । "भूर्भुवः स्वः" (वा. सं. ३।५) इत्येताभिर्व्याहृतिभिः । एता वै व्याहृतयः सर्वप्रायश्चित्तीः । तदनेन सर्वेण प्रायश्चित्तिं कुरुते । तानि कपालानि संचित्य । यत्र भस्मोद्धृतं स्यात् । तन्निवपेत् । एतदेव तत्र कर्म ॥ ८ ॥

तदाहुः—यस्याग्निहोत्री दोह्यमानोपविशेत् । किं तत्र कर्म । का प्रायश्चित्तिरिति । तां हैके यजुषोत्थापयन्ति । "उदस्थाद्देव्यदितिः"—इति । इयं वा आदितिः । इमामेवास्मा एतदुत्था-

---

१—भिद्येत चेदवापद्येत स्कन्नप्रायश्चित्तेनाभिमृश्य व्याहृतिभिश्चाद्भिरुपनिनीय कपालानि भस्मोद्वापे कुर्यात् । का. श्रौ. सू. २५-२५ ।

२—अग्निहोत्री चेद्दुह्यमानोपविशेद्यजुषोत्थापनमेक उदस्थाद्देव्यदितिरायुर्यज्ञपतावधादिन्द्राय कृण्वती भागं मित्राय वरुणाय चेति । दुग्ध्वा ब्राह्मणायैनां दद्याद्यमनभ्यागमिष्यन् स्यात् । का. श्रौ. सू. २५ । १४-१५ ।

वै मित्रावरुणौ प्राणोदानावेवास्मिंस्तद्दध्मऽ इति व्वदन्तस्तां तस्या-माहुत्याम्ब्राह्मणाय दद्याद्यमनभ्यागमिष्यन्मन्येतार्त्तिम्वाऽ एषा पाप्मानं यजमानस्य प्रतिदृश्योपाविक्षदार्त्तिमेवास्मिंस्तत्पाप्मानम्प्रतिमुञ्चामऽइति व्वदन्तः ॥ ९ ॥

( स्त ) तद्ध होवाच याज्ञवल्क्यः । ( ल्क्योऽश्र ) अश्रद्दधानेभ्यो हैभ्यो गौरपक्रामत्यार्त्यौं वाऽ आहुतिम्विध्यन्तीत्थमेव कुर्य्याद्दण्डेनैवै-नाम्विपिष्योत्थापयेदिति तद्यथैवादो धावयतोऽश्वो वाऽश्वतरो वा गदा-येत बलीवर्द्दो वा युक्तस्तेन दण्डप्रजितेन तोत्त्रप्रजितेन यमध्वानꣳ समीप्सति तꣳ समश्नुतऽ एवमेवैतया दण्डप्रजितया तोत्त्रप्राजितया यꣳ स्वर्ग्गं लोकꣳ समीप्सति तꣳ समश्नुते ॥ १० ॥

( तेऽथ ) अथ होवाचारुणिः । ( द्यौं ) द्यौर्व्वाऽ एतस्याग्निहोत्रस्याग्नि-होत्र्ययमेव व्वत्सो योऽयम्पवतऽ इयमेवाग्निहोत्रस्थाली न वाऽ एवम्वि-दुषोऽग्निहोत्री नश्यति क्व ह्यसौ नश्येन्नैवम्विदुषोऽग्निहोत्री व्वत्सो नश्यति क्व ह्येष नश्येन्नैवम्विदुषोऽग्निहोत्रस्थाली भिद्यते क्व हीयं भिद्येत श्रियो वै पर्ज्जन्यो व्वर्षति तद्दिद्याच्छ्रेमाणम्मे महिमानमधारय-

---

पयाम इति वदन्तः । " आयुर्यज्ञपतावधात् "–इति । आयुरेवास्मिंस्तद्दध्म इति वदन्तः । " इन्द्राय कृण्वती भागम् "–इति । इन्द्रियमेवास्मिंस्तद्दध्म इति वदन्तः । " मित्राय वरु-णाय च "–इति । प्राणोदानौ वै मित्रावरुणौ । प्राणोदानावेवास्मिंस्तद्दध्म इति वदन्तः । तां तस्यामाहुत्यां ब्राह्मणाय दद्यात्; यमनभ्यागमिष्यन्मन्येत । आर्तिं वा एषा पाप्मानं यजमानस्य प्रतिदृश्योपाविक्षत् । आर्तिमेवास्मिंस्तत्पाप्मानं प्रतिमुंचाम इति वदन्तः ॥ ९ ॥

तद्ध होवाच याज्ञवल्क्यः । अश्रद्दधानेभ्यो हैभ्यो गौरपक्रामति । आर्त्यौं वा आहुतिं विध्यन्ति । इत्थमेव कुर्यात् । दण्डेनैवैनां विपिष्योत्थापयेदिति । तद्यथैवादः धावयतोऽश्वो वाऽश्वतरो वा गदायेत । बलीवर्दो वा युक्तः । तेन दण्डप्रजितेन तोत्रप्रजितेन यमध्वानं समीप्सति तं समश्नुते । एवमेवैतया दण्डप्रजितया तोत्रप्रजितया यं स्वर्गं लोकं समीप्सति तं समश्नुते ॥ १० ॥

अथ होवाचारुणिः । द्यौर्वा एतस्याग्निहोत्रस्याग्निहोत्री । अयमेव वत्सः । योऽयं पवते । इयमे-वाग्निहोत्रस्थाली । न वा एवं विदुषोऽग्निहोत्री नश्यति । क्व ह्यसौ नश्येत् । नैवं विदुषोऽग्निहोत्री । वत्सो नश्यति । क्व ह्येष नश्येत् । नैवं विदुषोऽग्निहोत्रस्थाली भिद्यते । क्व हीयं भिद्येत । श्रियो

---

१–दंडेन वाऽनुपिष्योत्थाप्य वा दोहनम् । अदानं च । का. श्रौ. सू. २५ । १६–१७ ।

माणोपाविक्षच्छ्रेयान्भविष्यामीति तामात्मन्न्येव कुर्वीतात्मन्न्येव तच्छ्रियन्धत्तऽइति ह स्माहारुणिरेतदेव तत्र कर्म्म ॥ ११ ॥

तदाहुः । ( र्यं ) यस्याग्निहोत्री दोह्यमाना व्वाश्येत किन्तत्र कर्म्म का प्रायश्चित्तिरिति स्तम्बमाच्छिद्य ग्ग्रासयेदेतदेव तत्र कर्म्म ॥ १२ ॥

इति द्वितीयप्रपाठके तृतीयं ब्राह्मणम् ॥ १२।२।३ ॥ ( ४–१ ॥

तदाहुः । ( र्यं ) यस्याग्निहोत्री लोहितं दुहीत किन्तत्र कर्म्म का प्रायश्चित्तिरिति व्व्युत्क्रामतेत्युक्त्वा मेक्षणङ्कृत्वाऽन्वाहार्य्यपचनम्परिश्रयितवै ब्रूयात्तस्मिन्नेनच्छ्रपयित्वा तस्मिंस्तूष्णीञ्जुहुयादनिरुक्तो वै प्रजापतिः प्राजापत्यमग्निहोत्रꣳ सर्व्वम्वाऽ अनिरुक्तन्तदनेन सर्व्वेण प्रायश्चित्तिं कुरुते तान्तस्यामाहुत्याम्ब्राह्मणाय दद्याद्यमनभ्यागमिष्यन्मन्न्येतार्त्तिम्वाऽ एषा पाप्मानं यजमानस्य प्रतिदृश्य दुहे या लोहितन्दुहऽ आर्त्तिमेवास्मिंस्तत्पाप्मानम्प्रतिमुञ्चत्यथ यदन्यद्विंदेत्तेन जुहुयादनार्त्तेनैव तदार्त्तं यज्ञस्य निष्करोत्येतदेव तत्र कर्म्म ॥ १ ॥

---

वै पर्जन्यो वर्षति । तद्विद्यात् । श्रेमाणं मे महिमानमधारयमाणोपाविक्षत् । श्रेयान् भविष्यामीति । तामात्मन्येव कुर्वीत । आत्मन्येव तच्छ्रियं धत्ते । इति ह स्माहारुणिः । एतदेव तत्र कर्म ॥ ११ ॥

तदाहुः–यस्याग्निहोत्री दोह्यमाना वाश्येत । किं तत्र कर्म । का प्रायश्चित्तिरिति । स्तंबमाच्छिद्य ग्रासयेत् । एतदेव तत्र कर्म ॥ १२ ॥

तदाहुः–यस्याग्निहोत्री लोहितं दुहीत । किं तत्र कर्म । का प्रायश्चित्तिरिति । व्युत्क्रामतेत्युक्त्वा मेक्षणं कृत्वा । अन्वाहार्यपचनं परिश्रयितवै ब्रूयात् । तस्मिन्नेतच्छ्रपयित्वा । तस्मिंस्तूष्णीं जुहुयात् । अनिरुक्तो वै प्रजापतिः । प्राजापत्यमग्निहोत्रम् । सर्वं वा अनिरुक्तम् । तदनेन सर्वेण प्रायश्चित्तिं कुरुते । तां तस्यामाहुत्यां ब्राह्मणाय दद्यात् यमनभ्यागमिष्यन्मन्येत । आर्तिं वा एषा पाप्मानं यजमानस्य प्रतिदृश्य दुहे । या लोहितं दुहे । आर्तिमेवास्मिंस्तत्पाप्मानं प्रतिमुञ्चति । अथ यदन्यद्विंदेत । तेन जुहुयात् । अनार्तेनैव तदार्तं यज्ञस्य निष्करोति । एतदेव तत्र कर्म ॥ १ ॥

---

१–वाश्येत चेत्तृणान्याञ्छ्य ग्रासयेत् । सूयवसाद्भगवति हि भूया अथो वयं भगवंतः स्याम । अद्धि तृणमघ्न्ये विश्वदानीं पिब शुद्धमुदकमाचरंतीति । का. श्रौ. सू. २५ । १९ ।

२–लोहितदोहे दक्षिणाग्निं परिश्रित्य व्युत्क्रामतेत्युक्त्वोष्णे भस्मनि स्थाय हुत्वा पूर्ववद्दानम् । का. श्रौ. सू. २५ । २१ ।

तदाहुः । ( यस्य ) यस्याग्निहोत्रन्दोह्यमानममेध्यमापद्येत किन्तत्र कर्म्म का प्रायश्चित्तिरिति तद्धैके होतव्यम्मन्यन्ते प्रयतमेतन्नैतस्या होमोऽवकल्पते न वै देवाः कस्माच्चन बीभत्सन्ते बीभत्सन्ता३ऽइ तु देवाऽ इत्थमेव कुर्य्याद्गार्हपत्यादुष्णम्भस्म निरुह्य तस्मिन्नेनदुष्णे भस्मंस्तूष्णीन्निनयेदद्भिरुपनिनयत्यद्भिरेनदाप्नोत्यथ यदन्यद्दिन्देत्तेन जुहुयादेतदेव तत्र कर्म्म ॥ २ ॥

तदाहुः । ( यस्य ) यस्याग्निहोत्रन्दोहितममेध्यमापद्येत किन्तत्र कर्म्म का प्रायश्चित्तिरिति यऽ एवैतेऽङ्गारा निरूढा येष्वधिश्रयिष्यन्भवति तान्प्रत्युह्य तस्मिन्नेनदुष्णे भस्मंस्तूष्णीन्निनयेदद्भिरुपनिनयत्यद्भिरेनदाप्नोत्यथ यदन्यद्दिन्देत्तेन जुहुयादेतदेव तत्र कर्म्म ॥ ३ ॥

तदाहुः । ( यस्य ) यस्याग्निहोत्रमधिश्रितममेध्यमापद्येत किन्तत्र कर्म्म का प्रायश्चित्तिरिति यऽ एवैतेऽङ्गारा निरूढा येष्वधिश्रितं भवति तेष्वेनत्तूष्णीञ्जुहुयात्तद्धुतमहुतं यदहैनत्तेषु जुहोति तेन हुतं यद्वेनाँस्तेनैवानुगमयति तेनाहुतमद्भिरुपनिनयत्यद्भिरेनदाप्नोत्यथ यदन्यद्दिन्देत्तेन जुहुयादेतदेव तत्र कर्म्म ॥ ४ ॥

---

तदाहुः—यस्याग्निहोत्रं दोह्यमानममेध्यमापद्येत । किं तत्र कर्म । का प्रायश्चित्तिरिति । तद्धैके होतव्यं मन्यन्ते । प्रयतमेतत् । नैतस्या होमोऽवकल्पते । न वै देवाः कस्माच्चन बीभत्सन्ते । बीभत्संता ३ इ तु देवाः । इत्थमेव कुर्यात् । गार्हपत्यादुष्णं भस्म निरुह्य । तस्मिन्नेनदुष्णे भस्मंस्तूष्णीं निनयेत् । अद्भिरुपनिनयति । अद्भिरेनदाप्नोति । अथ यदन्यद्विंदेत् । तेन जुहुयात् । एतदेव तत्र कर्म ॥ २ ॥

तदाहुः—यस्याग्निहोत्रं दोहितममेध्यमापद्येत । किं तत्र कर्म । का प्रायश्चित्तिरिति । य एवैतेऽङ्गारा निरूढाः । येष्वधिश्रयिष्यन् भवति । तान्प्रत्युह्य तस्मिन्नेनदुष्णे भस्मंस्तूष्णीं निनयेत् । अद्भिरुपनिनयति । अद्भिरेनदाप्नोति । अथ यदन्यद्विंदेत् । तेन जुहुयात् । एतदेव तत्र कर्म ॥ ३ ॥

तदाहुः—यस्याग्निहोत्रमधिश्रितममेध्यमापद्येत । किं तत्र कर्म । का प्रायश्चित्तिरिति । य एवैतेऽङ्गारा निरूढाः । येष्वधिश्रितं भवति । तेष्वेनत्तूष्णीं जुहुयात् । तद्धुतमहुतम् । यदहैनत्तेषु

---

१–दुह्यमानमाश्विनम् । का. श्रौ. सू. २५ । २२ । २–दुग्धं सौम्यम् । का. श्रौ. सू. २५ । २२ ।

३–अधिश्रितं वारुणम् । का. श्रौ. सू. २५ । २२ ।

तदाहुः । ( ख् ) यदधिश्रितेऽग्निहोत्रे यजमानो म्रियेत किन्तत्र कर्म्म का प्रायश्चित्तिरिति तदेवैनदभिपर्य्याधाय विष्यन्दयेदथो खल्वाहुरेतावती सर्व्वस्य हविर्य्यज्ञस्य प्रायश्चित्तिरित्येतदेव तत्र कर्म्म ॥ ५ ॥

तदाहुः । ( ख् ) यस्याग्निहोत्रꣳ स्रुच्युन्नीतꣳ स्कन्देत्किन्तत्र कर्म्म का प्रायश्चित्तिरिति स्कन्नप्रायश्चित्तेनाभिमृश्याद्भिरुपनिनीय परिशिष्टेन जुहुयाद्यद्यु नीची स्रुक्स्याद्यदि वा भिद्येत स्कन्नप्रायश्चित्तेनैवाभिमृश्याद्भिरुपनिनीय यत्स्थाल्याम्परिशिष्टꣳ स्यात्तेन जुहुयात् ॥ ६ ॥

( त् ) तद्धैके प्रतिपरेत्य । यत्स्थाल्याम्परिशिष्टम्भवति तेन जुह्वति तदु तथा न कुर्य्यात्स्वर्ग्यम्वाऽ एतद्यदग्निहोत्रं यो हैनन्तत्र ब्रूयात्प्रति न्वाऽ अयꣳ स्वर्ग्गाल्लोकादवारुक्षन्नास्येदꣳ स्वर्ग्यमिव भविष्यतीतीश्वरो ह तथैव स्यात् ॥ ७ ॥

( दि ) इत्थमेव कुर्य्यात् । ( त् ) तदेवोपविशेद्यत्स्थाल्याम्परिशिष्टꣳ

---

जुहोति । तेन हुतम् । यद्देनांस्तेनैवानुगमयति । तेनाहुतम् । अद्भिरुपनिनयति । अद्भिरेनदाप्नोति । अथ यदन्यद्विन्देत् । तेन जुहुयात् । एतदेव तत्र कर्म ॥ ४ ॥

तदाहुः—यदधिश्रितेऽग्निहोत्रे यजमानो[१] म्रियेत । किं तत्र कर्म । का प्रायश्चित्तिरिति । तदेवैनदभिपर्याधाय विष्यंदयेत् । अथो खल्वाहुः—एतावती सर्वस्य हविर्यज्ञस्य प्रायश्चित्तिरिति । एतदेव तत्र कर्म ॥ ५ ॥

तदाहुः—यस्याग्निहोत्रं स्रुच्युन्नीतं[२] स्कन्देत् । किं तत्र कर्म । का प्रायश्चित्तिरिति । स्कन्नप्रायश्चित्तेनाभिमृश्य अद्भिरुपनिनीय परिशिष्टेन जुहुयात् । यद्यु नीची[३] स्रुक् स्यात् । यदि वा भिद्येत । स्कन्नप्रायश्चित्तेनैवाभिमृश्य अद्भिरुपनिनीय यत्स्थाल्यां परिशिष्टं स्यात् । तेन जुहुयात् ॥ ६ ॥

तद्धैके प्रतिपरेत्य यत् स्थाल्यां परिशिष्टं भवति तेन जुह्वति । तदु तथा न कुर्यात् । स्वर्ग्यं वा एतत् । यदग्निहोत्रम् । यो हैनं तत्र ब्रूयात् । प्रति न्वा अयं स्वर्गाल्लोकादवारुक्षत् । नास्येदं स्वर्ग्यमिव भविष्यतीति । ईश्वरो ह तथैव स्यात् ॥ ७ ॥

इत्थमेव कुर्यात् । तदेवोप[४]विशेत् । यत् स्थाल्यां परिशिष्टं स्यात् । तदस्मा उन्नीयाहरेयुः । तद्धैक

---

१–हविष्यवद्दौम्यम् । का. श्रौ. सू. २५ । १६१ । हविष्येषु चेदाह्रियमाणेषु मरणं दक्षिणाग्नावेनान् संदहेत् । न वाऽयुक्तत्वात् । गार्हपत्ये ग्रहणादि प्रागासादनात् । आसादनाद्याहवनीये । का. श्रौ. सू. २५ । १५५–१५८ । २–उन्नीतं बार्हस्पत्यम् । का. श्रौ. सू. २५ । २२ । स्कन्देच्चेदस्कन्नमधित प्राजनीत्यभिमृश्य शेषेण जुहुयात् । का. श्रौ. सू. २५ । २४ । ३–भिद्येत चेदवापयेत स्कन्नप्रायश्चित्तेनाभिमृश्य व्याहृतिमिश्राद्भिरुपनिनीय कपालानि भस्मोद्वापे कुर्यात् । का. श्रौ. सू. २५ । २५ ।

४–उन्नीतसर्वस्कन्दनस्रुग्भेदयोस्तत्रैवासनम् । अन्यदुन्नीयान्योऽस्मै प्रयच्छेत्तेन होमः । का. श्रौ. सू. २५ । २९–३० ।

  

स्यात्तदस्माऽ उन्नीयाहरेयुस्तद्धैकऽ उपवल्हन्ते हुतोच्छिष्टम्वाऽ एतद्यातयाम वाऽ एतन्नैतस्य होतव्यमिति तदु तन्नाद्रियेत यदा वाऽ एतद्यातयामाथैनद्धविरातञ्चनङ्कुर्वते तस्माद्यत्स्थाल्याम्परिशिष्टँ स्यात्तदस्माऽ उन्नीयाहरेयुर्य्युद्यु तत्र न स्याद्यदन्यद्विन्देत्तदग्नावधिश्रित्यावज्योत्यापः प्रत्यानीयोद्वास्य तदद्धो हैवोन्नेष्यामीत्युक्तम्भवत्यथात्र यथोन्नीतमेवास्माऽ उन्नीयाहरेयुस्तेन काममञ्जुहुयादेतदेव तत्र कर्म्म ॥ ८ ॥

तदाहुः । ( स्रु ) यस्याग्निहोत्रँ स्रुच्युन्नीतममेध्यमापद्येत किन्तत्र कर्म्म का प्रायश्चित्तिरिति तद्धैके होतव्यम्मन्यन्ते प्रयतमेतन्नैतस्या होमोऽवकल्पते न वै देवाः कस्माच्चन बीभत्सन्तऽ इति तद्धैकऽ उत्सिच्य च्छर्दयन्ति तदु तथा न कुर्य्याद्यो हैनन्तत्र ब्रूयात्परासिचत न्वाऽ अयमग्निहोत्रं क्षिप्रेऽयं यजमानः परासेक्ष्यतऽ इतीश्वरो ह तथैव स्यादित्थमेव कुर्य्यादाहवनीये समिधमभ्याधायाहवनीयादेवोष्णम्भस्म निरुह्य तस्मिन्नेनदुष्णे भस्मँस्तूष्णीन्निनयेदद्भिरुपनिनयत्यद्भिरेनदाप्नोत्यथ यदन्यद्विन्देत्तेन जुहुयादेतदेव तत्र कर्म्म ॥ ९ ॥

तदाहुः । ( स्रु ) यस्याग्निहोत्रँ स्रुच्युन्नीतमुपरिष्टादववर्षेत्किन्तत्र

---

उपवल्हन्ते । हुतोच्छिष्टं वा एतत् । यातयाम वा एतत् । नैतस्य होतव्यमिति । तदु तन्नाद्रियेत । यदा वा एतद्यातयाम । अथैनद्धविरातंचनं कुर्वते । तस्माद्यत्स्थाल्यां परिशिष्टं स्यात् । तदस्मा उन्नीयाहरेयुः । यद्यु तत्र न स्यात् । यदन्यत् विंदेत् । तदग्नावधिश्रित्यावज्योत्यापः प्रत्यानीयोद्वास्य । तदद्धो हैवोन्नेष्यामीत्युक्तं भवति । अथात्र यथोन्नीतमेवास्मा उन्नीयाहरेयुः । तेन कामं जुहुयात् । एतदेव तत्र कर्म ॥ ८ ॥

तदाहुः—यस्याग्निहोत्रं स्रुच्युन्नीतममेध्यमापद्येत । किं तत्र कर्म । का प्रायश्चित्तिरिति । तद्धैके होतव्यं मन्यंते । प्रयतमेतत् । नैतस्या होमोऽवकल्पते । न वै देवाः कस्माच्चन बीभत्संत इति । तद्धैक उत्सिच्य च्छर्दयन्ति । तदु तथा न कुर्यात् । यो हैनं तत्र ब्रूयात् । परासिचत न्वा अयमग्निहोत्रम् । क्षिप्रेऽयं यजमानः परासेक्ष्यत इति । ईश्वरो ह तथैव स्यात् । इत्थमेव कुर्यात् । आहवनीये समिधमभ्याधाय आहवनीयादेवोष्णं भस्म निरुह्य तस्मिन्नेनदुष्णे भस्मंस्तूष्णीं निनयेत् । अद्भिरुपनिनयति । अद्भिरेनदाप्नोति । अथ यदन्यत् विंदेत्, तेन जुहुयात् । एतदेव तत्र कर्म ॥९॥

तदाहुः—यस्याग्निहोत्रं स्रुच्युन्नीतमुपरिष्टादववर्षेत् । किं तत्र कर्म । का प्रायश्चित्तिरिति ।

कुर्म्म का प्रायश्चित्तिरिति तद्विद्यादुपरिष्टान्मा शुक्रमागन्नुप मान्देवाः प्राभूवञ्छ्रेयान्भविष्यामीति तेन काममुहुयादेतदेव तत्र कुर्म्म ॥ १० ॥

इति द्वितीयप्रपाठके चतुर्थं ब्राह्मणम् ॥ १२।२।४ ॥ (४–२) ॥

तदाहुः । (र्य) यत्पूर्व्वस्यामाहुत्याᳬहुतायामथाग्निरनुगच्छेत्किन्तत्र कुर्म्म का प्रायश्चित्तिरिति यम्प्रतिवेशᳬशकलम्विन्देत्तमभ्यस्याभिजुहुयाद्दारौ दारावग्निरिति व्वदन्दारौ दारौ ह्येवाग्निर्य्यद्युऽ अस्य हृदयं व्व्येव लिखेद्धिरण्यमभिजुहुयादग्नेर्व्वाऽ एतद्रेतो यद्धिरण्यं युऽ उ वै पुत्रः स पिता युः पिता स पुत्रस्तस्माद्धिरण्यमभिजुहुयादेतदेव तत्र कर्म ॥ १ ॥

तदाहुः । (र्यु) यस्याहवनीयऽ उद्धृतः पुराऽग्निहोत्रादनुगच्छेत्किन्तत्र कुर्म्म का प्रायश्चित्तिरिति गार्हपत्यादेवैनम्प्राञ्चमुद्धृत्योपसमाधायाग्निहोत्रञ्जुहुयात्स यद्यपि शतमेव कृत्वः पुनः पुनरुद्धृतोऽनुगच्छेद्गार्हपत्यादेवैनम्प्राञ्चमुद्धृत्योपसमाधायाग्निहोत्रञ्जुहुयादेतदेव तत्र कुर्म्म ॥ २ ॥ ( अर्द्धः प्रपाठकः कं० ४८ ) ॥

---

तद्विद्यात् । उपरिष्टान्मा शुक्रमागन्नुप मां देवाः प्राभूवन् श्रेयान् भविष्यामि इति । तेन कामं जुहुयात् । एतदेव तत्र कर्म ॥ १० ॥

तदाहुः—यत् पूर्वस्यामाहुत्यां हुतायाम् । अथाग्निरनुगच्छेत् । किं तत्र कर्म । का प्रायश्चित्तिरिति । यं प्रतिवेशं शकलं विंदेत् । तमभ्यस्याभिजुहुयात् । "दारौ दारावग्निः"—इति । वदन् । दारौ दारौ ह्येवाग्निम् । यद्यु अस्य हृदयं व्व्येव लिखेत् । हिरण्यमभिजुहुयात् । अग्नेर्वा एतद्रेतः, यद्धिरण्यम् । य उ वै पुत्रः, स पिता । यः पिता, स पुत्रः । तस्माद्धिरण्यमभिजुहुयात् । एतदेव तत्र कर्म ॥ १ ॥

तदाहुः—यस्याहवनीय उद्धृतः । पुराऽग्निहोत्रादनुगच्छेत् । किं तत्र कर्म । का प्रायश्चित्तिरिति । गार्हपत्यादेवैनं प्रांचमुद्धृत्य, उपसमाधाय, अग्निहोत्रं जुहुयात् । स यद्यपि शतमेव कृत्वः पुनः पुनरुद्धृतोऽनुगच्छेत् । गार्हपत्यादेवैनं प्रांचमुद्धृत्योपसमाधायाग्निहोत्रं जुहुयात् । एतदेव तत्र कर्म ॥२॥

---

१–पूर्वाहुतौ हुतायां चेदाहवनीयोऽनुगच्छेत्तदुक्तम् । काष्ठं हिरण्यं वाऽभिजुहुयाच्छ्रुतेः । का. श्रौ, सू. २५ । ३१–३२ ।

२–निरुद्धृतश्चेदाहवनीयोऽनुगच्छेदुदक् स्थानान्युपलिप्य निर्मंथ्य सकृदुद्धृते तस्मिन् सायंप्रातर्होममेके । का. श्रौ, सू. २५।३३ ।

तुदाहुः । ( र्स्१ ) युस्य गार्हपत्योऽनुगच्छेत्किन्तत्र कर्म्म का प्रायश्चित्तिरिति तथ्ँ हैकऽ उल्मुकादेव निर्म्मन्थन्ति यतो वै पुरुषस्यान्ततो नश्यति तुतो वै स तुस्य प्रायश्चित्तिमिच्छतऽ इति व्वुदन्तस्तुदु तथा न कुर्य्यादुल्मुकथ्ँ ह वैवादाय चरेयुरुल्मुकस्य वाऽवच्चुश्चमित्थमेव कुर्य्यादुल्मुकादङ्गारमादाय तुमरण्योरभिविमथ्नीयादुप ह तङ्कामममाप्नोति युऽउल्मुकमुथ्यऽ उपो तुं योऽरण्योरेतुदेव तुत्र कुर्म्म ॥ ३ ॥

तुदाहुः । (र्स्२) युस्याग्नावग्निमभ्युद्धरेयुः किन्तत्र कुर्म्म का प्रायश्चित्तिरितीश्वरौ वाऽ एतौ सम्पाद्याशान्तौ युजमानस्य प्रजाञ्च पशूंश्च निर्द्दहतस्तुदभिमन्त्रयेत सुमितथ्ँ सुङ्कल्पेथाथ्ँ सुम्प्रियौ रोचिष्णू सुमनस्युमानौ । इषमूर्ज्जमभिसम्वुसानौ ॥ सुम्वाम्मनाथ्ँसि सुम्व्रता सुमु चित्तान्याकरम् । अग्ने पुरीष्याधिपा भव त्वन्नऽइषमूर्ज्जं युजमानाय धेहीति शान्तिमेवाभ्यामेतुद्दधाति युजमानस्य प्रजायै पशूनामुहिथ्ँसायै ॥ ४ ॥

यद्युऽ अस्य हृदयं व्येव लिखेत् । ( द ) अग्नयेऽग्निमतेऽष्टाकपालम्पुरोडाशन्निर्व्वपेत्तस्यावृत्सप्तदश सामिधेनीरनुब्रूयाद्वार्त्रघ्नावाज्यभागौ वि-

तदाहुः—यस्य गार्हपत्योऽनुगच्छेत् । किं तत्र कर्म । का प्रायश्चित्तिरिति । तं हैक उल्मुकादेव निर्मन्थन्ति । यतो वै पुरुषस्यांततो नश्यति । ततो वै स तस्य प्रायश्चित्तिमिच्छते इति वदन्तः । तदु तथा न कुर्यात् । उल्मुकं ह वैवादाय चरेयुः । उल्मुकस्य वाऽवप्रश्नम् । इत्थमेव कुर्यात् । उल्मुकादंगारमादाय । तमरण्योरभिविमथ्नीयात् । उप ह तं काममाप्नोति । य उल्मुकमथ्ये । उपो तं, योऽरण्योः । एतदेव तत्र कर्म ॥ ३ ॥

तदाहुः—यस्याग्नावग्निमभ्युद्धरेयुः । किं तत्र कर्म । का प्रायश्चित्तिरिति । ईश्वरौ वा एतौ संपाद्याशांतौ यजमानस्य प्रजां च पशूंश्च निर्दहतः । तदभिमन्त्रयेत । “ समितꣳ संकल्पेथाꣳ संप्रियौ रोचिष्णू सुमनस्यमानौ । इषमूर्जमभिसंवसानौ ॥ सं वां मनाꣳसि संव्रता समु चित्तान्याकरम् । अग्ने पुरीष्याधिपा भव त्वन्न इषमूर्जं यजमानाय धेहि ”—( वा. सं. १२ । ५७–५८ ) इति । शांतिमेवाभ्यामेतद्दधाति । यजमानस्य प्रजायै पशूनामहिंसायै ॥ ४ ॥

यद्यु अस्य हृदयं व्येव लिखेत् । अग्नयेऽग्निमतेऽष्टाकपालं पुरोडाशं निर्वपेत् । तस्यावृत् । सप्तदश सामिधेनीरनुब्रूयात् । वार्त्रघ्नावाज्यभागौ । विराजौ संयाज्ये । अथैते याज्यानुवाक्ये ।

१–गार्हपत्येऽनुगते भस्मनाऽरणी सꣳस्पृश्य मन्थनम् । का. श्रौ. सू. २५ । ३४ ।
२–अग्निनिधानेऽग्नयेऽग्निमते पुरोडाशः । समितमिति वोपस्थानं द्वाभ्याम् । का. श्रौ. सू. २५ । ४३–४४

राजौ संयाज्ये॒ऽ अथैते याज्याऽनुवाक्ये॒ऽ अग्निनाऽग्निः समिध्यते कविर्गृहपतिर्युवा । हव्यवाड्जुह्वास्य॒ऽ इत्यथ याज्या त्वᳬᳬ ह्यग्ने॒ऽ अग्निना विप्रो विप्रेण सन्त्सता । सखा सख्या समिध्यस॒ऽ इति शान्तिमेवाभ्यामेतद्दधाति यजमानस्य प्रजायै पशूनामहिᳬᳬसायाऽ एतदेव तत्र कर्म्म ॥ ५ ॥

तदाहुः । ( स्सं ) यस्याहवनीये॒ऽननुगते गार्हपत्यो॒ऽनुगच्छेत्किन्तत्र कर्म्म का प्रायश्चित्तिरिति तᳬᳬ हैके ततऽ एव प्राञ्चमुद्धरन्ति प्राणा वाऽ अग्नयः प्राणानेवास्माऽ एतदुद्धरामऽ इति वदन्तस्तदु तथा न कुर्य्याद्यो हैनन्तत्र ब्रूयात्प्राचो न्वाऽ अयं यजमानस्य प्राणान्प्रारौत्सीन्मरिष्यत्ययं यजमानऽइतीश्वरो ह तथैव स्यात् ॥ ६ ॥

( द ) अथ हैके प्रत्यञ्चमाहरन्ति । प्राणोदानाविमाविति वदन्तस्तदु तथा न कुर्य्यात्स्वर्ग्यं वाऽ एतद्यदग्निहोत्रं यो हैनन्तत्र ब्रूयात्प्रति न्वाऽ अयᳬᳬ स्वर्गाल्लोकादवारुक्षन्नास्येदᳬᳬ स्वर्ग्यमिव भविष्यतीतीश्वरो ह तथैव स्यात् ॥ ७ ॥

( द ) अथ हैके॒ऽन्यङ्गार्हपत्यम्मन्थन्ति । तदु तथा न कुर्य्याद्यो हैनन्तत्र

---

"अग्निनाऽग्निः समिध्यते कविर्गृहपतिर्युवा । हव्यवाड् जुह्वास्यः"—इति । अथ याज्या । "त्वᳬ ह्यग्नेऽअग्निना विप्रो विप्रेण सन्त्सता । सखा सख्या समिध्यसे"—इति । शांतिमेवाभ्यामेतद्दधाति । यजमानस्य प्रजायै पशूनामहिंसायै । एतदेव तत्र कर्म ॥ ५ ॥

तदाहुः—यस्याहवनीयेऽननुगते गार्हपत्योऽनुगच्छेत् । किं तत्र कर्म । का प्रायश्चित्तिरिति । तं हैके तत एव प्रांचमुद्धरन्ति । प्राणा वा अग्नयः । प्राणानेवास्मा एतदुद्धराम इति वदंतः । तदु तथा न कुर्यात् । यो हैनं तत्र ब्रूयात् । प्राचो न्वा अयं यजमानस्य प्राणान् प्रारौत्सीत् । मरिष्यत्ययं यजमानः । इति ईश्वरो ह तथैव स्यात् ॥ ६ ॥

अथ हैके प्रत्यंचमाहरन्ति । प्राणोदानाविमाविति वदंतः । तदु तथा न कुर्यात् । स्वर्ग्यं वा एतत्, यदग्निहोत्रम् । यो हैनं तत्र ब्रूयात् । प्रति न्वा अयं स्वर्गाल्लोकादवारुक्षत् । नास्येदं स्वर्ग्यमिव भविष्याति इति । ईश्वरो ह तथैव स्यात् ॥ ७ ॥

अथ हैकेऽन्यं गार्हपत्यं मन्थन्ति । तदु तथा न कुर्यात् । यो हैनं तत्र ब्रूयात् । अग्नेर्वा अय-

---

१—आहवनीयजागरणे वा तत एवोद्धरणम् । आहृत्य वा । कपलराज्यांगताद्वा । निर्मथ्य वा । समारोप्यसमारोप्य पूर्वमुपशमय्य पूर्ववद्धोमः । का. श्रौ. सू. २५ । ३५–३९ ।

ब्रूयादग्नेर्वाऽ अयमधि द्विषन्तम्भ्रातृव्यमजीजनत क्षिप्रेऽस्य द्विषन्भ्रातृव्यो जनिष्यते प्रियतमᳫ्ँ रोत्स्यतीतीश्वरो ह तथैव स्यात् ॥ ८ ॥

( ड ) अथ हैकेऽनुगमय्यान्यम्मन्थन्ति । तस्याशान्नेयादपि यत्परिशिष्टमभूत्तदजीजसत नास्य दायादश्चन परिशेक्ष्यतऽ इतीश्वरो ह तथैव स्यात् ॥ ९ ॥

( दि ) इत्थमेव कुर्य्यात् । ( द ) अरण्योरग्नी समारोह्योदङ्ङुदवसाय निर्म्मथ्य जुहुयात्तथा ह न काञ्चन परिचक्षाङ्करोति नवावसानऽ उऽ अस्याभितो रात्रᳫ्ँ हुतम्भवति ॥ १० ॥

इति द्वितीयप्रपाठके पंचमं ब्राह्मणम् ॥ १२ । २ । ५ ॥ ( ४-३ ) ॥

अथ प्रातर्भस्मान्युद्धृत्य । गोमयेनालिप्यारण्योरेवाग्नी समारोह्य प्रत्यवस्यति मथित्वा गार्हपत्यमुद्धृत्याहवनीयमाहृत्यान्वाहार्य्यपचनमग्नये पथिकृतेऽष्टाकपालम्पुरोडाशन्निर्व्वपेत्तस्यावृत्ताऽ एव सप्तदश सामिधेनीरनुब्रूयाद्वार्त्रघ्नावाज्यभागौ विराजौ संय्याज्येऽ अथैते याज्याऽनुवाक्ये व्वेत्था हि व्वेधोऽ अध्वनः पथश्च देवाञ्जसा । अग्ने यज्ञेषु सुक्रत-

---

मधिद्विषन्तं भ्रातृव्यमजीजनत । क्षिप्रेऽस्य द्विषन् भ्रातृव्यो जनिष्यते । प्रियतमं रोत्स्यति । इति । ईश्वरो ह तथैव स्यात् ॥ ८ ॥

अथ हैके अनुगमय्यान्यं मन्थन्ति । तस्याशां नेयात् । अपि यत्परिशिष्टमभूत् । तदजीजसत । नास्य दायादश्चन परिशेक्ष्यत इति । ईश्वरो ह तथैव स्यात् ॥ ९ ॥

इत्थमेव कुर्यात् । अरण्योरग्नी समारोह्य उदङ्ङुदवसाय निर्मथ्य जुहुयात् । तथा ह न कांचन परिचक्षां करोति । नवावसान उ अस्याभितो रात्रं हुतं भवति ॥ १० ॥

अथ प्रातर्भस्मान्युद्धृत्य, गोमयेनालिप्य, अरण्योरेवाग्नी समारोह्य प्रत्यवस्यति । मथित्वा गार्हपत्यम् , उद्धृत्याहवनीयम् , आहृत्यान्वाहार्यपचनम्, अग्नये पथिकृतेऽष्टाकपालं पुरोडाशं निर्वपेत् । तस्यावृत् । ता एव सप्तदश सामिधेनीरनुब्रूयात् । वार्त्रघ्नावाज्यभागौ । विराजौ संयाज्ये । अथैते याज्यानुवाक्ये-" वेत्था हि वेधो अध्वनः पथश्च देवांजसा । अग्ने यज्ञेषु सुक्रतो "-इति । अथ याज्या-" देवानामपि पन्थामगन्म यच्छक्नवाम तदनु प्रवोढुम् । अग्निर्वि-

---

१-चक्रीवत्यग्नये पथिकृते । प्रज्ञातेष्ट्यतिपत्तौ च नियतास्वतिपत्तिश्रुतेः । स्तोत्रमोहे शस्त्रस्य च । जनमरणे च । उपपातसामर्थ्यात्स्वजने । नित्यत्वाच्च । चक्रीवान् रासभः । तदन्तरागमने इयम् । तदन्तरागमनं सर्वविषयमिति कर्कः । प्रज्ञाता नित्याः । का. श्रौ. सू. २५ । ७६-८२ ।

वित्युथ याज्या देवानामुपि पुंथामगन्म युच्छक्नुवाम तदुनुप्रवोढुम् । अग्निर्व्विद्वान्त्सु यजात्सेदु होतासोऽ अध्वरान्त्सुऽ ऋतून्कल्पयातीत्यग्निर्व्वै पथिकृत्पथामपिनेता सुऽ एवैनं यज्ञपथमुपिनयत्येतुदेव तुत्र कुर्म्म ॥ १ ॥

तुदाहुः । ( र्खु ) युस्याग्नयः सꣳसृज्येरन्किन्तुत्र कुर्म्म का प्रायश्चित्तिरिति स युदि पुरस्तादहं न भीयात्तद्विद्यात्पुरस्तान्मा शुक्रमागन्नुप मान्देवाः प्राभूवञ्छ्रेयान्भविष्यामीति युद्युऽ अस्य हृदयुम्व्येव लिखेदग्नये व्विविचयेऽष्टाकपालम्पुरोडाशन्निर्व्वपेत्तुस्यावृत्ताऽ एवु सप्तदश सामिधेनीरुनुब्रूयाद्वार्त्रघ्नावुाज्यभागौ व्विराजौ संय्याज्येऽ अुथैते याज्याऽनुवाक्ये वि ते व्विष्वग्वातजूतासोऽ अग्ने भामासः शुचे शुचयश्चरन्ति । तुविम्म्रक्षासो दिव्या नुवग्वा व्वना व्वनन्ति धृषता रुजन्तऽ इत्युथ याज्या त्वामग्ने मानुषीरीडते व्विशो होत्राविदम्विविचिꣳ रत्नधातमम् । गुहा सन्तꣳ सुभग व्विश्वदर्शतन्तुविष्वणसꣳ सुयजङ्घृतश्रियमित्युथो ह यो द्विषतो भ्रातृव्व्याद्व्याविवृत्सेत तुत्कामऽ एतुया यजेत वि हैवास्माद्वर्त्ततऽ एतुदेव तुत्र कुर्म्म ॥ २ ॥

---

द्वान्त्स यजात्सेदु होतासो अध्वरान्त्स ऋतून्कल्पयाति"—इति। अग्निर्वै पथिकृत्। पथामपि नेता। स एवैनं यज्ञपथमपिनयति। एतदेव तत्र कर्म ॥ १ ॥

तदाहुः—यस्याग्नयः संसृज्येरन्। किं तत्र कर्म। का प्रायश्चित्तिरिति। स यदि परस्तादहं न भीयात्। तद्विद्यात्। परस्तान्मा शुक्रमागन्नुप मां देवाः प्राभूवन् श्रेयान् भविष्यामि इति। यद्यु अस्य हृदयं व्येव लिखेत्। अग्नये विविचयेऽष्टाकपालं पुरोडाशं निर्वपेत्। तस्यावृत्। ता एव सप्तदश सामिधेनीरनुब्रूयात्। वार्त्रघ्नावाज्यभागौ। विराजौ संयाज्ये। अथैते याज्याऽनुवाक्ये—"वि ते विष्वग्वातजूतासो अग्ने भामासः शुचे शुचयश्चरन्ति। तुविम्रक्षासो दिव्या नवग्वा वना वनन्ति धृषता रुजन्तः"—इति। अथ याज्या—"त्वामग्ने मानुषीरीडते विशो होत्राविदं विविचिꣳ रत्नधातमम्। गुहा संतꣳ सुभग विश्वदर्शतं तुविष्वणसꣳ सुयजं घृतश्रियम्"—इति। अथो ह यो द्विषतो भ्रातृव्याद्व्याविवृत्सेत। तत्काम एतया यजेत। वि हैवास्माद्वर्तते। एतदेव तत्र कर्म ॥ २ ॥

---

१-संसर्गे नाद्रियेत। अग्नये विविचये मिथश्चेत्। का. श्रौ. सू. २५। ८५-८७।

यद्ब्रयमितोदहन्न भीयात् । ( ७ ) तद्विद्यादभि द्विषन्तम्भ्रातृव्यम्भविष्यामि श्रेयान्भविष्यामीति यद्यु अस्य हृदयं व्येव लिखेदग्नये सम्वर्गायाष्टाकपालम्पुरोडाशन्निर्व्वपेत्तस्यावृत्ता एव सप्तदश सामिधेनीरनुब्रूयाद्वार्त्रघ्नावाज्यभागौ व्विराजौ संय्याज्येऽअथैते याज्याऽनुवाक्ये परस्याऽअधि सम्वतोऽवराँ२ऽ अभ्यातर । यत्राहमस्मि ताँ२ऽ अवेत्यथ याज्या मा नोऽअस्मिन्महाधने पराववर्भारभृद्यथा । सम्वर्गछं सछं रयिञ्जयेत्यथो ह यो द्विषतो भ्रातृव्यात्सम्विवृक्षेत तत्कामऽ एतया यजेत सछं हैवास्माद्वृङ्क्तऽ एतदेव तत्र कर्म्म ॥ ३ ॥

तदाहुः । ( ४ ) यस्य व्वैद्युतो दहेत्किन्तत्र कर्म्म का प्रायश्चित्तिरिति तद्विद्यादुपरिष्टान्मा शुक्रमागन्नुप मान्देवाः प्राभूवञ्छ्रेयान्भविष्यामीति यद्यु अस्य हृदयव्व्येव लिखेदग्नयेऽप्सुमतेऽष्टाकपालम्पुरोडाशन्निर्व्वपेत्तस्यावृत्ताऽ एव सप्तदश सामिधेनीरनुब्रूयाद्वार्त्रघ्नावाज्यभागौ व्विराजौ संय्याज्येऽ अथैते याज्याऽनुवाक्येऽ अप्स्वग्ने सधिष्टव सौषधीरनुरुध्यसे । गर्भे सञ्जायसे पुनरित्यथ याज्या गर्भोऽ अस्योषधीनाङ्गर्भो व्वनस्पतीनाम् । गर्भो व्विश्वस्य भूतस्याग्ने गर्भोऽ अपामसीति

---

यद्ब्रयमितोदहं न भीयात् । तद्विद्यात् । अभि द्विषंतं भ्रातृव्यं भविष्यामि, श्रेयान् भविष्यामीति । यद्यु अस्य हृदयं व्येव लिखेत् । अग्नये संवर्गायाष्टाकपालं पुरोडाशं निर्वपेत्[1] । तस्यावृत् । ता एव सप्तदश सामिधेनीरनुब्रूयात् । वार्त्रघ्नावाज्यभागौ । विराजौ संयाज्ये । अथैते याज्यानुवाक्ये— " परस्या अधि संवतोऽवराँ२ऽ अभ्यातर । यत्राहमस्मि ताँ२ऽ अव "—( वा. सं. ११ । ७१ ) इति । अथ याज्या—" मा नो अस्मिन्महाधने परावर्भारभृद्यथा । संवर्गं संरयिं जय "—इति । अथो ह यो द्विषतो भ्रातृव्यात् संविवृक्षेत । तत्काम एतया यजेत । सं हैवास्मात् वृंक्ते । एतदेव तत्र कर्म ॥ ३ ॥

तदाहुः—यस्य वैद्युतो दहेत् । किं तत्र कर्म । का प्रायश्चित्तिरिति । तद्विद्यात् । उपरिष्टान्मा शुक्रमागन्नुप मां देवाः प्राभूवन् श्रेयान् भविष्यामि इति । यद्यु अस्य हृदयं व्येव लिखेत् । अग्नयेऽप्सुमतेऽष्टाकपालं पुरोडाशं निर्वपेत्[2] । तस्यावृत् । ता एव सप्तदश सामिधेनीरनुब्रूयात् । वार्त्रघ्नावाज्यभागौ । विराजौ संयाज्ये । अथैते याज्याऽनुवाक्ये—

---

१—अग्नये संवर्गाय प्रदव्याच्चेत् । का. श्रौ. सू. २५ । ८८ । २—अग्नयेऽप्सुमते वैद्युताच्चेत् । का. श्रौ. सू. २५ । ८९ ।

शान्तिमेवाभ्यामेतद्दधाति यजमानस्य प्रजायै पशूनामहिᳮसायाऽ एतदेव तत्र कर्म्म ॥ ४ ॥

तदाहुः । ( स्त्रुं ) यस्याग्नयोऽमेध्यैरग्निभिः सᳮसृज्येरन्किन्तत्र कर्म्म का प्रायश्चित्तिरित्यग्नये शुचयेऽष्टाकपालम्पुरोडाशन्निर्वपेत्तस्यावृत्ताऽ एव सप्तदश सामिधेनीरनुब्रूयाद्वार्त्रघ्नावाज्यभागौ विराजौ संयाज्येऽ अथैते याज्याऽनुवाक्येऽ अग्निः शुचिव्रततमः शुचिर्विप्रः शुचिः कविः । शुची रोचतऽआहुतऽइत्यथ याज्योदग्ने शुचयस्तव शुक्रा भ्राजन्तऽईरते । तव ज्योतीᳮष्यर्चयऽ इति शान्तिमेवाभ्यामेतद्दधाति यजमानस्य प्रजायै पशूनामहिᳮसाया ऽएतदेव तत्र कर्म्म ॥ ५ ॥

तदाहुः । ( स्त्रुं ) यस्याहवनीयमनुद्धृतमादित्योऽभ्यस्तमियात्किन्तत्र कर्म्म का प्रायश्चित्तिरित्येते वै रश्मयो विश्वे देवास्तेऽस्मादपप्रयन्ति तदस्मै व्यृध्यते यस्माद्देवाऽ अप प्रयन्ति तामनु व्यृद्धिं यश्च वेद यश्च न ताऽ उभावाहतुरनुद्धृतमस्याभ्यस्तमगादिति तत्रेत्थङ्कुर्य्याद्ध-

---

" अप्स्वग्ने सधिष्टव सौषधीरनुरुध्यसे । गर्भे सञ्जायसे पुनः "–इति । अथ याज्या– " गर्भो अस्योषधीनां गर्भो वनस्पतीनाम् । गर्भो विश्वस्य भूतस्याग्ने गर्भो अपामसि "–( वा. सं. १२ । ३६–३७ ) इति । शांतिमेवाभ्यामेतद्दधाति । यजमानस्य प्रजायै पशूनामहिंसायै । एतदेव तत्र कर्म ॥ ४ ॥

तदाहुः–यस्याग्नयोऽमेध्यैरग्निभिः संसृज्येरन् । किं तत्र कर्म । का प्रायश्चित्तिरिति । अग्नये शुचयेऽष्टाकपालं पुरोडाशं निर्वपेत् । तस्यावृत् । ता एव सप्तदश सामिधेनीरनुब्रूयात् । वार्त्रघ्नावाज्यभागौ । विराजौ संयाज्ये । अथैते याज्याऽनुवाक्ये–" अग्निः शुचिव्रततमः शुचिर्विप्रः शुचिः कविः । शुची रोचत आहुतः "–इति । अथ याज्या–" उदग्ने शुचयस्तव शुक्रा भ्राजंत ईरते । तव ज्योतींष्यर्चयः "–इति । शांतिमेवाभ्यामेतद्दधाति । यजमानस्य प्रजायै पशूनामहिंसायै । एतदेव तत्र कर्म ॥ ५ ॥

तदाहुः–यस्याहवनीयमनुद्धृतमादित्योऽभ्यस्तमियात् । किं तत्र कर्म । का प्रायश्चित्तिरिति । एते वै रश्मयो विश्वे देवाः । तेऽस्मादपप्रयन्ति । तदस्मै व्यृध्यते । यस्माद्देवा अपप्रयन्ति । तामनुव्यृद्धिं यश्च वेद । यश्च न । ता उभावाहतुः । अनुद्धृतमस्याभ्यस्तमगादिति । तत्रेत्थं कुर्यात् । हरितं हिरण्यं दर्भे प्रबध्य पश्चाद्धर्तवै ब्रूयात् । तदेतस्य रूपं क्रियते । य एष तपति । अहर्वा

---

१–अग्नये शुचयेऽशुच्यायतनाच्चेत् । का. श्रौ. सू. २५ । ९० ।

रितꣳ हिरण्यन्दर्भे प्रबध्य पश्चाद्धर्त्तवै ब्रूयात्तदेतस्य रूपङ्क्रियत यऽ एष तपत्यहर्व्वाऽ एष तदह्नो रूपङ्क्रियते पवित्रन्दर्भाः पवयत्येवैनन्तदथेध्ममादीप्य प्राञ्चꣳ हर्त्तवै ब्रूयाद्ब्राह्मणऽ आर्षेयऽ उद्धरेद्ब्राह्मणो वाऽ आर्षेयः सर्व्वा देवताः सर्व्वाभिरेवैनन्तद्देवताभिः समर्द्धयति तमुपसमाधाय प्रतिपरेत्य गार्हपत्यऽ आज्यमधिश्रित्योद्वास्योत्पूयावेक्ष्य चतुर्गृहीतमाज्यङ्गृहीत्वा समिधमुपसंगृह्य प्राङुदाद्रवत्यथाहवनीये समिधमभ्याधाय दक्षिणञ्जान्वाच्य जुहोति विश्वेभ्यो देवेभ्यः स्वाहेति स यथा ब्राह्मणमावसथवासिनङ्क्रुद्धं यन्तमुक्षवे हतोपमन्त्रयेतैवमेवैतद्विश्वान्देवानुपमन्त्रयते जानन्ति हैनमुप हैनमावर्त्तन्तऽ एतदेव तत्र कर्म्म ॥ ६ ॥

तदाहुः । ( ख्युं ) यस्याहवनीयमनुद्धृतमादित्योऽभ्युदियात्किन्तत्र कर्म्म का प्रायश्चित्तिरित्येते वै रश्मयो विश्वे देवास्तेऽस्मादूषिवाꣳसोऽपप्रयन्ति तदस्मै व्यृध्यते यस्माद्देवाऽ अपप्रयन्ति तामनुव्यृद्धिं यश्च वेद यश्च न ताऽ उभावाहतुरनुद्धृतमस्याभ्युदगादिति तत्रेत्थङ्कुर्याद्रजतꣳ हिरण्यन्दर्भे प्रबध्य पुरस्ताद्धर्त्तवै ब्रूयात्तच्चन्द्रमसो रूपङ्क्रियते रात्रिर्व्वै चन्द्रमास्तद्रात्रे रूपङ्क्रियते पवित्रन्दर्भाः पवयत्येवैनन्तदथेध्ममादीप्यान्वञ्चꣳ हर्त्तवै ब्रूयाद्ब्राह्मणऽआर्षेयऽ उद्धरेद्ब्राह्मणो वाऽआर्षेयः सर्व्वा देवताः सर्व्वाभिरेवैनन्तद्देवताभिः समर्द्धयति

---

एषः । तदह्नो रूपं क्रियते । पवित्रं दर्भाः । पवयत्येवैनं तत् । अथेध्ममादीप्य प्रांचं हर्तवै ब्रूयात् । ब्राह्मण आर्षेय उद्धरेत् । ब्राह्मणो वा आर्षेयः सर्वा देवताः । सर्वाभिरेवैनं तद्देवताभिः समर्द्धयति । तमुपसमाधाय प्रतिपरेत्य गार्हपत्य आज्यमधिश्रित्य उद्वास्योत्पूयावेक्ष्य चतुर्गृहीतमाज्यं गृहीत्वा समिधमुपसंगृह्य प्राङुदाद्रवति । अथाहवनीये समिधमभ्याधाय दक्षिणं जान्वाच्य जुहोति— "विश्वेभ्यो देवेभ्यः स्वाहा"—इति । स यथा,ब्राह्मणमावसथवासिनं क्रुद्धं यंतमुक्षवे हतोपमन्त्रयेत । एवमेवैतत् विश्वान्देवानुपमन्त्रयते । जानन्ति हैनम् । उप हैनमावर्तंते । एतदेव तत्र कर्म ॥६॥

तदाहुः—यस्याहवनीयमनुद्धृतम् आदित्योऽभ्युदियात् । किं तत्र कर्म । का प्रायश्चित्तिरिति । एते वै रश्मयो विश्वे देवाः । तेऽस्मादूषिवांसोऽपप्रयंति । तदस्मै व्यृध्यते । यस्माद्देवा अपप्रयंति । तामनुव्यृद्धिं यश्च वेद । यश्च न । ता उभावाहतुः । अनुद्धृतमस्याभ्युदगादिति । तत्रेत्थं कुर्यात् । रजतं हिरण्यं दर्भे प्रबध्य पुरस्ताद्धर्तवै ब्रूयात् । तच्चंद्रमसो रूपं क्रियते । रात्रिर्वै चंद्रमाः । तद्रात्रे रूपं क्रियते । पवित्रं दर्भाः । पवयत्येवैनं तत् । अथेध्ममादीप्य अन्वंचं हर्तवै ब्रूयात् । ब्राह्मण

तमुपसमाधाय प्रतिपरेत्य गार्हपत्यऽआज्यमधिश्रित्योद्वास्योत्पूयावेक्ष्य यथागृहीतमाज्यं गृहीत्वा समिधमुपसंगृह्य प्राङुदाद्रवत्यथाहवनीये समिधमभ्याधाय दक्षिणं जान्वाच्य जुहोति विश्वेभ्यो देवेभ्यः स्वाहेति सोऽसावेव बन्धुर्न्न ह वै तत्र काचनार्त्तिर्न्न रिष्टिर्भवति यत्रैषा प्रायश्चित्तिः क्रियतऽ एतदेव तत्र कर्म्म ॥ ७ ॥

इति द्वितीयप्रपाठके षष्ठं ब्राह्मणम् ॥ १२-२-६ ॥ ( ४. ४. ) ॥

चतुर्थोऽध्यायश्च समाप्तः ॥ १२ । ४ ॥

कण्डिकासंख्या ॥ ३९ ॥

---

आर्षेय उद्धरेत् । ब्राह्मणो वा आर्षेयः सर्वा देवताः । सर्वाभिरेवैनं तद्देवताभिः समर्द्धयति । तमुपसमाधाय प्रतिपरेत्य गार्हपत्य आज्यमधिश्रित्य उद्वास्योत्पूयावेक्ष्य यथागृहीतमाज्यं गृहीत्वा समिधमुपसंगृह्य प्राङुदाद्रवति । अथाहवनीये समिधमभ्याधाय दक्षिणं जान्वाच्य जुहोति— " विश्वेभ्यो देवेभ्यः स्वाहा "—इति । सोऽसावेव बंधुः । न ह वै तत्र काचनार्तिः । न रिष्टिर्भवति । यत्रैषा प्रायश्चित्तिः क्रियते । एतदेव तत्र कर्म ॥ ७ ॥

---

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये द्वादशकाण्डे चतुर्थेऽध्याये चतुर्थं ब्राह्मणम् ॥ ( १२ । ४ । ४ ) ॥

नागस्वामिसुतोऽवन्त्यां पाराशर्यो वसन् हरिः । श्रुत्यर्थं दर्शयामास शक्तितः पौष्कर्रीयकः ॥
श्रीमतोऽवन्तिनाथस्य विक्रमार्कस्य भूपतेः । धर्माध्यक्षो हरिस्वामी व्याख्यच्छातपथीं श्रुतिम् ॥
भूभर्त्रा विक्रमार्केण क्लृप्तां कनकवेदिकाम् । दानायाध्यस्य कृतवान् श्रुत्यर्थविवृतिं हरिः ॥

इति श्रीसर्वविद्यानिधानकवीन्द्राचार्यसरस्वतीनां श्रीहरिस्वामिनां कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये द्वादशकाण्डे चतुर्थोऽध्यायः समाप्तः ॥ ( १२-४ ) ॥

---

१-अजकर्णे वा दक्षिणे । अभोजनं तस्य । कुशस्तम्बे वा अनासनं तस्मिन् अप्सु वा नाऽश्यो बीभत्सेतेति श्रुतेः । अहुताभ्युदित अश्नीयातमितोरासति । हुत्वा भूरित्यनुमंत्रणम् , वरदानं च । का. श्रौ. सू. । २५ । ६०-६८ ।

# अथ पञ्चमेऽध्याये प्रथमं ब्राह्मणम् ।
## द्वितीयप्रपाठके च सप्तमं ब्राह्मणम् ।

तुदाहुः । ( स्खुं ) युदेषु दीर्घसुत्त्र्यग्निहोत्रं जुह्वत्प्रवसन्म्रियेत जुहुयु-रस्मा३ऽइ ना३ऽ इति तद्धैके होतुव्यम्मन्यन्तऽ आगन्तोर्रिति तुदु तुथा नु कुर्य्यादुतस्थानो वाऽ एष तुस्मै युदेनꣳ शवदह्याऽ इव जुहुयु-र्य्यज्ञाय वाऽ एषऽ आहुतिभ्यस्तस्थानः सु हैनमुमृष्यमाणस्तृप्रꣳ सचते १॥

( तेऽथ ) अथ हैकऽ आहुः । ( रे ) एवमेवान्वाहिताऽ अहूयमानाः शयीरन्निति तुदु तुथा नु कुर्य्यादुतस्थानो वाऽ एष तुस्मै युदेनꣳ शव-दह्याऽ इवेन्धीरुन्यज्ञाय वाऽ एषऽ आहुतिभ्यस्तस्थानः सु हैनमुमृष्य-माणस्तृप्रꣳ सचते ॥ २ ॥

( तेऽथ ) अथ हैकेऽरण्योः । ( र ) अग्नी समारोह्य निदधति तमाहृते निर्म्मन्थन्ति तुदु तुथा नु कुर्य्यादुतस्थानो वाऽ एष तुस्मै युदेनꣳ शवदह्याऽ इव निर्म्मन्थेयुर्य्यज्ञाय वाऽ एषऽ आहुतिभ्यस्त-स्थानः सु हैनमुमृष्यमाणस्तृप्रꣳ सचते ॥ ३ ॥

---

तदाहुः—यदेष दीर्घसत्र्यग्निहोत्रं जुह्वत् प्रवसन् म्रियेत । जुहुयुरस्मा ३ इ । ना ३ इति । तद्धैके होतव्यं मन्यन्ते । आगन्तोरिति । तदु तथा न कुर्यात् । अतस्थानो वा एष तस्मै । यदेनं शवदह्याया इव जुहुयुः । यज्ञाय वा एष आहुतिभ्यस्तस्थानः । स हैनममृष्यमाणस्तृप्रं सचते ॥ १ ॥

अथ हैक आहुः । एवमेवान्वाहिता अहूयमानाः शयीरन्निति । तदु तथा न कुर्यात् । अत-स्थानो वा एष तस्मै । यदेनं शवदह्याया इवेन्धीरन् । यज्ञाय वा एष आहुतिभ्यस्तस्थानः । स हैनममृष्यमाणस्तृप्रं सचते ॥ २ ॥

अथ हैके । अरण्योरग्नी समारोह्य निदधति तम् । आहृते निर्मन्थन्ति । तदु तथा न कुर्यात् । अतस्थानो वा एष तस्मै । यदेनं शवदह्याया इव निर्मन्थेयुः । यज्ञाय वा एष आहुतिभ्यस्त-स्थानः । सहैनममृष्यमाणस्तृप्रं सचते ॥ ३ ॥

---

तदाहुः—प्रोषितस्याग्निहोत्रिणः प्रेतस्य प्रागंत्यकर्मणः किं ? गृहे अग्निहोत्रं होतव्यम्, तद्वेष्टं निवान्याः पयसा होतव्यमित्येतत् एताभिर्द्वादशभिः कण्डिकाभिरुच्यते प्रसन्नप्रायाभिरेव । अस्मै इत्यत्र ऐकारस्य " विचार्यमाणानाम् "—( पा. सू. ८ । २ । ९७ ) इति प्लुतिः । " एचोऽप्रगृह्यस्यादूराद्-

( तऽइ ) इत्थमेव कुर्य्यात् । ( न्नि ) निवान्यवत्सामेष्टवै ब्रूयात्तस्यै पयसा जुहुयादार्त्तम्वाऽ एतत्पयो यन्निवान्यवत्सायाऽआर्त्तमेतदग्निहोत्रं यन्मृतस्य तदार्त्तेनैव तदार्त्तन्निष्कृत्य श्रेयान्भवति ॥ ४ ॥

तदप्युपमाऽस्ति । यद्द्वौ रथौ मृदितौ समागच्छेताथँ स्यादेवान्यतरः स्यदयिति ॥ ५ ॥

तस्य वाऽ एतस्याग्निहोत्रस्योपचारः । प्राचीनावीती दोहयति यज्ञोपवीती वै देवेभ्यो दोहयत्यथैवम्पितृणाम् ॥ ६ ॥

( न्ना ) नाङ्गारेष्वधिश्रयति । यद्धाङ्गारेष्वधिश्रयेद्देवत्रा कुर्य्याद्गार्हपत्यादुष्णं भस्म दक्षिणा निरुह्य तस्मिन्नेनदधिश्रयति पितृदेवत्यमेवैनत्तत्करोति ॥ ७ ॥

नावज्योतयति नापः प्रत्यानयति । यद्धावज्योतयेद्यदपः प्रत्यानयेद्देवत्रा कुर्य्यान्न त्रिः प्रतिष्ठापथँ हरति यत्त्रिः प्रतिष्ठापथँ हरेद्देवत्रा कुर्य्यात्सकृदेव निकर्षन्हरति पितृदेवत्यमेवैनत्तत्करोति ॥ ८ ॥

---

इत्थमेव कुर्यात् । निवान्यवत्सामेष्टवै ब्रूयात् । तस्यै पयसा जुहुयात् । आर्तं वा एतत्पयः । यन्निवान्यवत्सायाः । आर्तमेतदग्निहोत्रम् । यन्मृतस्य तत् । आर्तेनैव तदार्तं निष्कृत्य श्रेयान् भवति ॥ ४ ॥

तदपि उपमाऽस्ति । यत् द्वौ रथौ मृदितौ समागच्छेताम् । स्यादेवान्यतरः स्यदयिति ॥ ५ ॥

तस्य वा एतस्याग्निहोत्रस्योपचारः । प्राचीनावीती दोहयति । यज्ञोपवीती वै देवेभ्यो दोहयति । अथैवं पितृणाम् ॥ ६ ॥

नांगारेष्वधिश्रयति । यद्धांगारेष्वधिश्रयेत् । देवत्रा कुर्यात् । गार्हपत्याद्धुष्णं भस्म दक्षिणा निरुह्य । तस्मिन्नेनदधिश्रयति । पितृदेवत्यमेवैनत् तत्करोति ॥ ७ ॥

नावज्योतयति । नापः प्रत्यानयति । यद्धावज्योतयेत्, यदपः प्रत्यानयेत् । देवत्रा कुर्यात् । न त्रिः प्रतिष्ठापं हरति । यत् त्रिः प्रतिष्ठापं हरेत् । देवत्रा कुर्यात् । सकृदेव निकर्षन्न हरति । पितृदेवत्यमेवैनत् तत्करोति ॥ ८ ॥

---

धूते पूर्वस्यार्द्धस्याऽऽदुत्तरस्येदुतौ "–( पा. सू. ८ । २ । ९७ ) इति इमावः । नाऽ३इत्यत्रापि " विचार्यमाणानाम् "–( पा. सू. ८ । २ । ९७ ) इत्येव प्लुतिः । आ आगन्तोः होतव्यमग्निहोत्रं मन्यन्ते । अतस्थानः । " प्रकाशनस्थेयाख्ययोश्च " ( पा. सू. १ । ३ । २३ ) इति प्रकाशने तिष्ठतेरात्मनेपदम् । आत्मानं तादर्थ्येन प्रकाशितत्वात्तप्रमिति वेदितवान् । न तस्थानः अतस्थानः । एषः अग्निराहवनीयः। गार्हपत्यस्य तदर्थ-

नोन्नेष्यामीत्याह । न चतुरुन्नयति यद्वोन्नेष्यामीति ब्रूयाद्यच्चतुरुन्नयेद्दे-वत्रा कुर्य्यात्सकृदेव तूष्णीन्न्यक्पर्य्यस्यति पितृदेवत्यमेवैनत्तत्करोति ॥९॥

नोपरिष्टात्समिधमभ्यस्य हरति । यद्वोपरिष्टात्समिधमभ्यस्य हरेद्देवत्रा कुर्य्यादधस्तादुपास्य हरति पितृदेवत्यमेवैनत्तत्करोति ॥ १० ॥

नोत्तरेण गार्हपत्यमेति । यद्वोत्तरेण गार्हपत्यमियाद्देवत्रा कुर्य्याद्दक्षि-णेन गार्हपत्यमेति पितृदेवत्यमेवैनत्तत्करोति ॥ ११ ॥

( त्यु ) अथ यान्यमून्युदीचीनाग्राणि तृणानि भवन्ति । दक्षिणाग्राणि तानि करोति पितृदेवत्यमेवैनत्तत्करोत्यथाहवनीये समिधमभ्याधाय सव्यञ्जान्वाच्य सकृदेव तूष्णीन्न्यक्पर्य्यस्यति पितृदेवत्यमेवैनत्त-त्करोति नोदिङ्गयति नोपमृष्टेन प्राश्नाति नोदुक्षति पितृदेवत्यमेवै-नत्तत्करोति ॥ १२ ॥

---

नोन्नेष्यामीत्याह । न चतुरुन्नयति । यद्वोन्नेष्यामीति ब्रूयात् । यच्चतुरुन्नयेत् । देवत्रा कुर्यात् । सकृदेव तूष्णीं न्यक् पर्यस्यति । पितृदेवत्यमेवैनत् तत्करोति ॥ ९ ॥

नोपरिष्टात् समिधमभ्यस्य हरति । यद्वोपरिष्टात् समिधमभ्यस्य हरेत् । देवत्रा कुर्यात् । अध-स्तादुपास्य हरति । पितृदेवत्यमेवैनत् तत्करोति ॥ १० ॥

नोत्तरेण गार्हपत्यमेति । यद्वोत्तरेण गार्हपत्यमियात् । देवत्रा कुर्यात् । दक्षिणेन गार्हपत्यमेति । पितृदेवत्यमेवैनत् तत्करोति ॥ ११ ॥

अथ यान्यमून्युदीचीनाग्राणि तृणानि भवन्ति दक्षिणाग्राणि तानि करोति । पितृदेवत्यमेवैनत् तत्करोति । अथाहवनीये समिधमभ्याधाय । सव्यं जान्वाच्य । सकृदेव तूष्णीं न्यक् पर्यस्यति । पितृदेवत्यमेवैनत् तत्करोति । नोदिंगयति । नोपमृष्टेन प्राश्नाति । नोदुक्षति । पितृदेवत्यमेवैनत् तत्करोति ॥ १२ ॥

---

त्वात् व्यपदेशः । अनित्यहोमत्वाच्च । कस्मै पुनः कर्मणे अतस्थान आहवनीयः ? अतः तस्मपदेन आहवनी-यस्य दाहायाह । शवदह्या " छन्दसि निष्टर्क्यदेवहूय० "–( पा. सू. ३ । १ । १२३ ) इत्यादिषु शवदह्या द्रष्टव्या । शवदह्यायै इव शवदाहायैव केवलाय ते एनमाहवनीयं जुहुयुः पुत्रादयः । समासेऽपि यावज्जीविकेऽग्निहोत्रे इत्येतस्मै कर्मण अतस्थान एष आत्मानमत्राधितवानित्यर्थः । तस्थे इति तस्थानः । यज्ञाय आहुतिभ्यः । क्रव्या-दाभ्य आहुतिभ्यः इत्यर्थः । यत्तुरेव प्रेतत्वात् । स एवं सत्याहवनीयः अमृष्यमाणः । "मृष तितिक्षायाम्"– (धा.पा.चु.उ.२१६) अमृष्यमाण एवमकार्ये नियोगे एनं प्रेतं तृप्रं तृपेर्हिंसार्थत्वात् दुःखं सचते सेवते । एवमेव यथा होमवेलायां तथा अन्वाहिताः इंधनैः समाहिताः संदीपिताः । अहूयमानाः शयीरन् निश्चेष्टाः सन्तः कालं

तदाहुः । (स्थे) यदेष दीर्घसत्त्र्यग्निहोत्रञ्जुह्वत्प्रवसन्म्रियेत कथमेनमग्निभिः कुर्य्युरिति तर्ठ॑ हैकेऽदग्ध्वाऽऽ हरन्ति तमाहृतमग्निभिः सम्प्रापयन्ति तदु तथा न कुर्य्याद्यथाऽन्यस्यां योनौ रेतः सिक्तन्तदन्यस्यां प्रजिजनयिषेत्तादृक्तदस्थीन्येतान्याहृत्य कृष्णाजिने न्युप्य पुरुषविधिम्विधायोर्णाभिः प्रच्छाद्याज्येनाभिघार्य्य तमग्निभिः समुपोषेत्तदेनर्ठ॑ स्वाद्योनेः प्रजनयतीति ॥ १३ ॥

तर्ठ॑ हैके ग्रामाग्निना दहन्ति । तदु तथा न कुर्य्यादेष वै विश्वात्क्रव्याग्निः स हैनमीश्वरः सपुत्रर्ठ॑ सपशुर्ठ॑ समत्तोः ॥ १४ ॥

( र ) अथ हैके प्रदव्येन दहन्ति । तदु तथा न कुर्य्यादेष वाऽअशान्तोऽग्निः स नैहमीश्वरः सपुत्रर्ठ॑ सपशुम्प्रदग्धोः ॥ १५ ॥

---

तदाहुः—यदेष दीर्घसत्र्यग्निहोत्रं जुह्वत् प्रवसन् म्रियेत । कथमेनमग्निभिः कुर्युरिति । तं हैकेऽदग्ध्वाऽऽ हरन्ति । तमाहृतमग्निभिः संप्रापयन्ति । तदु तथा न कुर्यात् । यथाऽन्यस्यां योनौ रेतः सिक्तम् । तदन्यस्यां प्रजिजनयिषेत् । तादृक्तत् । अस्थीन्येतान्याहृत्य । कृष्णाजिने न्युप्य । पुरुषविधिं विधाय । ऊर्णाभिः प्रच्छाद्य । आज्येनाभिघार्य । तमग्निभिः समुपोषेत् । तदेनं स्वाद्योनेः प्रजनयतीति ॥ १३ ॥

तं हैके—ग्रामाग्निना दहन्ति । तदु तथा न कुर्यात् । एष वै विश्वात् क्रव्यादग्निः । स हैनमीश्वरः सपुत्रं सपशुं समत्तोः ॥ १४ ॥

अथ हैके—प्रदव्येन दहन्ति । तदु तथा न कुर्यात् । एष वा अशान्तोऽग्निः । स हैनमीश्वरः सपुत्रं सपशुं प्रदग्धोः ॥ १५ ॥

---

प्रतीक्षेरन् निदधति आशरीरानयनात् । तं आहवनीयं आहृते शरीरे निर्मथन्ति गार्हपत्ये गच्छन् द्वारेण । निवान्यः संबन्धनीयः परवत्सो यस्याः सा निवानी अवत्सा गौः । तां एष्टवै गवेषणीयान् ब्रूयादादिशो निवान्यामानयतेति । कः पुनरेतत् कुर्यात् । यस्तस्य यजमानस्य प्राज्यतरो ज्येष्ठपुत्रो रिक्थहरः पिंडप्रदः संप्रीतिभाजनं च स एव कुर्यात् तस्योक्तं कर्म पूरयति । यन् यदि द्वौ रथौ मृदितौ भग्नौ समागच्छेतां सज्जनार्थं कुशलैः समीपमानीतौ स्यातामेव तयोरेकः स्यदयिति यजमानाय गमनक्षमः स्यादित्येवं वक्तारो भवन्ति जनाः । "प्राचीनावीती"—इत्यादयो विधयः " यज्ञोपवीती देवेभ्यः " इत्यादयोऽपि ये अप्राप्तार्थाः ते जीवदग्निहोत्रे विधय एव । ये तु प्राप्तार्था " अवज्योतयति " इत्यादयस्ते अर्थवादाः ॥ १–१२ ॥

' तदाहुर्यत् ' एताभिः पञ्चभिः कण्डिकाभिः अदग्ध्वाऽऽहृतस्य दाहकल्प एकैः विधीयते । तस्यैव निरसनं कुर्वन्त्यन्ये । संप्रापयन्ति "प्रा गन्धोपादाने" ( धा. पा. भ्वा. प. ९९१ ) दग्धप्राय एव । पुनर्मृता गृह्णन्तीत्येवं

( रु ) अथ हैके ऽउल्मुक्येन दहन्ति । तदु तथा नु कुर्य्यादेष वै रुद्रियो-ऽग्निः स हैनमीश्वरः सपुत्रᳯँ सपशुमभिमन्तोः ॥ १६ ॥

( रु ) अथ हैकेऽन्तरेणाग्नींश्चितिञ्चित्वा तमग्निभिः समुपोषन्त्येतद्वै यज-मानस्यायतनं यदन्तरेणाग्नीनिति तदु तथा नु कुर्य्याद्यो हैनन्तत्र ब्रूया-न्मध्ये न्वाऽ अयङ्ग्रामस्याशसनमजीजनत क्षिप्रेऽस्याशसनञ्जनिष्यते प्रियतमᳯँ रोत्स्यतीतीश्वरो ह तथैव स्यात् ॥ १७ ॥

इति द्वितीयप्रपाठके सप्तमं ब्राह्मणम् ॥ १२-२-७ ॥ ( ५. १ ) ॥

अथ ह स्माह नाको मौद्गल्यः । ( ल्यो ) मरिष्यन्तञ्चेद्यजमानम्मन्येत यत्रैवास्माऽ आशसनञ्जोषितᳯँ स्यात्तदरण्योरग्नी समारोह्य निर्म्मथ्य जुहृद्वसेत्स यदाऽस्माल्लोकाद्यजमानः प्रेयात् ॥ १ ॥

---

अथ हैके—उल्मुक्येन दहन्ति । तदु तथा न कुर्यात् । एष वै रुद्रियोऽग्निः । स हैनमीश्वरः सपुत्रं सपशुमभिमन्तोः ॥ १६ ॥

अथ हैके—अन्तरेणाग्नींश्चितिं चित्वा तमग्निभिः समुपोषन्ति । एतद्वै यजमानस्यायतनम् । यद-न्तरेणाग्नीनिति । तदु तथा न कुर्यात् । यो हैनं तत्र ब्रूयात् । मध्ये न्वा अयं ग्रामस्याशसनमजी-जनत । क्षिप्रेऽस्याशसनं जनिष्यते । प्रियतमं रोत्स्यतीति । ईश्वरो ह तथैव स्यात् ॥ १७ ॥

अथ ह स्माह नाको मौद्गल्यः । मरिष्यंतं चेद्यजमानं मन्येत । यत्रैवास्मा आशसनं जोषितं स्यात् । तदरण्योरग्नी समारोह्य निर्मंथ्य जुहृद्वसेत् । स यदाऽस्माल्लोकाद्यजमानः प्रेयात् ॥ १ ॥

---

संप्रापणेन लक्ष्यते । प्रजिजनयिषेत् । प्रजनयितुमिच्छेत् । तं समुपोषेत् । " उष दाहे " ( धा. पा. भ्वा. प. ६९० ) । "तं हैके प्रवसन्म्रियेत" इत्युक्तविधानमुक्तम् । अतः प्रवसति अन्ये (वृत्तं वधा?) " दीर्घसत्त्र-म्ग्निहोत्रं जुहृत्प्रवसन् म्रियेत कथमेनमग्निभिः कुर्युः " इत्येतावदनिविवर्ततेऽतश्च प्रोषितविषयोऽयं पक्षः । तत्र पञ्चदाहपक्षान् दूषयित्वा "इत्थमेव कुर्यात्" ( श. प. १२ । ५ । २ । ३ ) इत्युपसंहारे उल्मुक्येन स समत्तोः संभक्षयः (नुर्मास्वरः?) । प्रदग्धोः प्रदग्धः । अभिमन्तोरभिमन्तुमर्हः । मध्ये अयमग्निर्ग्रामस्य अग्निसमूहस्य आश-सनम् । " शसु हिंसायाम् " ( धा. पा. भ्वा. प. ७२८ ) इति । आशस्यते आलभ्यते दह्यते प्रेतोऽस्मि-न्नित्याशसनम् । प्रियतमं पुत्रादिमेव आत्मनः रोत्स्यति मरणायति । तथा कात्यायनोऽसूत्रयत् । " प्रोषित-श्चेत्प्रेयात् प्राचीनावीती निवान्यां दुग्ध्वा दक्षिणतोऽधिश्रियणोद्वासने । तत एव हरणम् । अधस्तात् समिधं धारयन् । उदगग्रान् कुशान् दक्षिणाग्रान् कृत्वा । सकृद्वा पितृवत् पर्यस्य । शरीराण्याहृत्य कृष्णाजिने पुरुषविधिं विधायोर्णाभिः प्रच्छाद्याज्येनाभिघार्य पूर्ववद्दाहः " ( का. श्रौ. सू. २५ । १९८-२०३ ) इति ॥ १३-१७ ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये द्वादशकाण्डे पञ्चमेऽध्याये प्रथमं ब्राह्मणम् ॥ १२ । ५ । १ ॥

' अथ ह स्माह ' । अप्रोषितस्यैव प्रेतस्य अंत्यकर्म । अत्र ब्राह्मणे प्रसन्नम् । प्रसन्नमेव प्रायः उच्यते ।

( तु ) अथैनमन्तरेणाग्नींश्चितिञ्चित्वा । तमग्निभिः समुपोषेदिति तदु तथा न कुर्य्यादतस्थानो वाऽएष तस्मै यदेनᳬं शवदह्यायाऽइव जुहुयुर्यज्ञाय वाऽएषऽआहुतिभ्यस्तस्थानः स हैनममृष्यमाणस्तृप्रᳬं सचते २ ॥

( तऽइ ) इत्थमेव कुर्य्यात् । ( त्ति ) तिस्रऽ एव स्थालीरेष्टवै ब्रूयात्तासु गोमयानि च शुम्बलानि चावधाय नाना त्रिष्वग्निषु प्रवृञ्ज्यात्ते ये ततः सन्तापादग्नयो जायेरंस्तैरेनं दहेयुस्तथा ह तैरेव दग्धो भवति नो प्रत्यक्षमिव ॥ ३ ॥

तस्मादप्येतदृषिणाऽभ्युनूक्तम् । योऽ अग्निरग्नेरध्यजायत शोकात्पृथिव्याऽउत वा दिवस्परि । येन प्रजा विश्वकर्म्मा जजान तमग्ने हेडः परि ते वृणक्त्विति यथर्क्तथा ब्राह्मणम् ॥ ४ ॥

---

अथैनमन्तरेणाग्नींश्चितिं चित्वा । तमग्निभिः समुपोषेदिति । तदु तथा न कुर्यात् । अतस्थानो वा एष तस्मै । यदेनं शवदह्याया इव जुहुयुः । यज्ञाय वा एषः । आहुतिभ्यस्तस्थान स हैनममृष्यमाणस्तृप्रं सचते ॥ २ ॥

इत्थमेव कुर्यात् । तिस्र एव स्थालीरेष्टवै ब्रूयात् । तासु गोमयानि च शुंबलानि चावधाय । नाना त्रिष्वग्निषु प्रवृंज्यात् । ते ये ततः सन्तापादग्नयो जायेरन् । तैरेनं दहेयुः । तथो ह तैरेव दग्धो भवति । नो प्रत्यक्षमिव ॥ ३ ॥

तस्मादपि एतत् ऋषिणाऽभ्यनूक्तम्—" यो अग्निरग्नेरध्यजायत शोकात्पृथिव्या उत वा दिवस्परि । येन प्रजा विश्वकर्मा जजान तमग्ने हेडः परि ते वृणक्तु"—( वा.सं. १३ । ४५ ) इति । यथा ऋक् तथा ब्राह्मणम् ॥ ४ ॥

---

तत्राद्ययोः कण्डिकयोः । समारूढनिर्मथितैः अग्निभिर्दग्धव्यः इत्येष कल्प उपन्यस्य निरस्यते नाको नाम मुद्गलस्यापत्यं स आह स्म । यदि मरिष्यंतं प्रत्यासन्नमरणं यजमानं मन्येत पुत्रादिरंत्यकर्मयोग्यम् । अतोऽरण्योरग्नी समारोह्य यत्रैव देशे अस्मै यजमानाय आशसनं दाहस्थानं जोषितं आचितं स्यात् । इह स्थाने यत्र मृतः तत्र स्थाने निर्मथ्य जुह्वत् वसेत् । यावत्स प्रेयात् । स यदाऽस्मात् लोकात् यजमानः पुष्करेण लोकान्तरं गच्छेत् ॥ १ ॥

अथ तदा एनं अंतरेणाग्नीन् चितिं काष्ठमयीं चित्वा । तमिति तत्रेत्यर्थे लिंगविभक्तिव्यत्ययः । तत्राग्निभिः संदहेदिति ॥ २ ॥

इत्थमेव संताप्यैरग्निभिर्दग्धव्यः ते चैवमुत्पाद्याः इत्येतत् अत्र कंडिकाद्वये उच्यते । शुंबलानि तृणानि अल्पतृणानि ॥ ३ ॥ ४ ॥

( मु ) अथैनम्विपुरीषङ्कृत्वा । (त्वाऽस्या) अस्याम्पुरीषम्प्रतिष्ठापयति पुरीषम्वाऽ इयन्तत्पुरीषऽ एवैतत्पुरीषन्दधाति या ह वाऽ अस्यैषा वृकला सपुरीषा तस्यै ह विदग्धायै सृगालः संभवति नेत्सृगालः संभवदिति तदु तथा न कुर्य्यात्क्षोधुका हास्य प्रजा भवति तमन्तरतः प्रक्षाल्याज्येनान्वनक्ति मेध्यमेवैनन्तत्करोति ॥ ५ ॥

( त्यु ) अथास्य सप्तसु प्राणायतनेषु । सप्त हिरण्यशकलान्प्रत्यस्यति ज्योतिर्व्वाऽ अमृतᳬं हिरण्यं ज्योतिरेवास्मिंस्तदमृतन्दधाति ॥ ६ ॥

( त्यु ) अथैनमंतरेणाग्नींश्चितिञ्चित्वा । कृष्णाजिनमुत्तरलोम प्राचीनग्रीवम्प्रस्तीर्य्य तस्मिन्नेनमुत्तानन्निपाद्य जुहूङ्घृतेन पूर्णान्दक्षिणे पाणावादधाति सव्व्युऽ उपभृतमुरसि ध्रुवाम्मुखेऽग्निहोत्रहवणीन्नासिकयोः स्रुवौ कर्ण्णयोः प्राशित्रहरणे शीर्षञ्चमसम्प्रणीताप्रणयनम्पार्श्वयोः शूर्प्पेऽ उदरे पात्रीᳬं समवत्तधानीम्पृषदाज्यवतीᳬं शिश्नस्यान्ते शम्म्या-

---

अथैनं विपुरीषं कृत्वा अस्यां पुरीषं प्रतिष्ठापयति । पुरीषं वा इयम् । तत्पुरीष एवैतत्पुरीषं दधाति । या ह वा अस्यैषा वृकला सपुरीषा । तस्यै ह विदग्धायै सृगालः संभवति । नेत् सृगालः संभवदिति । तदु तथा न कुर्यात् । क्षोधुका हास्य प्रजा भवति । तमंतरतः प्रक्षाल्य, आज्येनान्वनक्ति । मेध्यमेवैनं तत्करोति ॥ ५ ॥

अथास्य सप्तसु प्राणायतनेषु सप्त हिरण्यशकलान् प्रास्यति । ज्योतिर्वा अमृतं हिरण्यम् । ज्योतिरेवास्मिंस्तदमृतं दधाति ॥ ६ ॥

अथैनमंतरेणाग्नीन् चितिं चित्वा । कृष्णाजिनमुत्तरलोम प्राचीनग्रीवं प्रस्तीर्य । तस्मिन्नेनमुत्तानं निपाद्य । जुहूं घृतेन पूर्णां दक्षिणे पाणावादधाति । सव्य उपभृतम् । उरसि ध्रुवाम् । मुखेऽग्निहोत्रहवणीम् । नासिकयोः स्रुवौ । कर्णयोः प्राशित्रहरणे । शीर्षंश्चमसं प्रणीताप्रणयनम् ।

---

अथैनं विपुरीषं एनं यजमानं कृत्वा अस्यां पृथिव्यां पुरुषं प्रतिष्ठापयति । या ह वै अस्य यजमानस्य । एषा वृकला वृत्ता क्षत्रा कला वृकला । सपुरीषा अंत्रात्मिका । तस्यै तस्याः विदग्धायाः सकाशात् सृगालः संभवति । तत्त्वाहारेण पृष्ठतरेण ( उकोत्रेन १ ) सृगालः संभवतीति युक्तं, नेत्सृगालः संभवत् शरीरजन्म परिहरणीयमित्यभिप्रायः । क्षोधुका "क्षुध बुभुक्षायाम्" ( धा. पा. दि. प. ८४ ) अल्पान्ना बुभुक्षाशीला प्रजा भवति । यं विपुरीषं कुर्वंति । यदि तु विपुरीषं कुर्यात् । ततः तमंतरतः प्रक्षाल्य, आज्येनान्वनक्ति ॥ ५ ॥ १ ॥

शूर्पे द्वे ऐष्टिकं शूर्पं करंभपात्रशूर्पं च । उदरे पात्रीम् इडापात्रीम् । समवत्तं धीयते यस्यामिति समवत्तधानी

माण्डयोरुन्ते वृषास्वावन्वुगुलूखलं च मुसलञ्चान्तरेणोरूऽ अन्यानि यज्ञपात्राणि दुक्षिणे पाणौ स्फ्यम् ॥ ७ ॥

(र्थ्ं) सुऽ एष यज्ञायुधी युजमानः । (नो) युथा बिभ्यदामोषमतीयादेवुमेवु योऽस्य स्वर्ग्गो लोको जितो भवति तुमभ्युत्येति तुमेते सन्ताप्याऽ अग्नयो युथा पुत्राः पितुरम्प्रोषुषमागतर्थ्ं शिवुमुपस्पृशन्त्येवर्थ्ं शिवर्थ्ं हैवैनमुपस्पृशन्ति प्र हैवैनङ्कल्पयन्ति ॥ ८ ॥

तं युदि गार्हपत्यः पूर्व्वः प्राप्नुयात् । (च्च) तुद्विद्यात्प्रतिष्ठऽ एनमाग्निः पूर्व्वः प्रापत्प्रतिष्ठास्यति प्रत्येवु तेऽस्मिंल्लोके स्थास्यन्ति येऽस्मात्प्रत्यञ्चऽ इति ॥ ९ ॥

(त्यु) अथ युद्याहवनीयः । (स्तु) तुद्विद्यान्मुख्युऽएनमाग्निः पूर्व्वः प्रापन्मुखतो लोकानजैषीन्मुखमेवु तेऽस्मिंल्लोके भविष्यन्ति येऽस्मात्प्रत्यञ्चऽइति ॥ १० ॥

---

पार्श्वयोः शूर्पे । उदरे पात्रीं समवत्तधानीं पृषदाज्यवतीम् । शिश्नस्यांते शम्याम् । आंडयोरंते वृषास्वौ । अन्वगुलूखलं च मुसलं च । अंतरेणोरू अन्यानि यज्ञपात्राणि । दक्षिणे पाणौ स्फ्यम् ॥७॥

स एष यज्ञायुधी यजमानः यथा विभ्यदामोषमतीयात् । एवमेव । योऽस्य स्वर्गो लोको जितो भवति । तमभ्युत्येति । तमेते संताप्या अग्नयो यथा पुत्राः पितरं प्रोषुषमागतं शिवमुपस्पृशंति । एवं शिवं हैवैनमुपस्पृशंति । प्र हैवैनं कल्पयंति ॥ ८ ॥

तं यदि गार्हपत्यः पूर्वः प्राप्नुयात् । तद्विद्यात् । प्रतिष्ठ एनमग्निः पूर्वः प्रापत् । प्रतिष्ठास्यति । प्रत्येव तेऽस्मिन् लोके स्थास्यंति । येऽस्मात्प्रत्यंच इति ॥ ९ ॥

अथ यद्याहवनीयः । तद्विद्यात् । मुख्य एनमग्निः पूर्वः प्रापत् । मुखतो लोकानजैषीत् । मुखमेव तेऽस्मिन् लोके भविष्यंति । येऽस्मात्प्रत्यंच इति ॥ १० ॥

---

तां पृषदाज्यवतीं च । शिश्नस्यांते समीपे शम्याम् । आंडयोः समीपे वृषास्वौ अरणी । वृषा उत्तरारणिः आसीतास्मिन्नित्यास्वः अधरारणिः । तावन्वक् उलूखलं च मुसलं च ॥ ७ ॥

स एष यज्ञायुधीति । यज्ञायुधानि यज्ञसाधनानि तानि आयुधस्थानीयानि यस्य स यज्ञायुधी इति प्राप्ते उत्तरपदलोपः । आमोषम् । "मुष स्तेये" (धा. पा. क्र्या. प. ९८) आमुष्यंतेऽस्मिन्निति आमोषः अक्षेमः प्रदेशो यः । सः अस्य यजमानस्य कर्मभिर्लोको जितो भवति । 'तमभ्यत्येति' अतिक्रम्य एति । तमेते संतापजाः संताप्याः । प्रोषुषं प्रोषितम् । एवमुपस्पृशंतीति क्रियाविशेषणम् । एवं वै शांतमेव । एनमुपस्पृशंति अतोऽत्र हिंसंतीत्यर्थः । प्रकृष्टमेवैनं स्वर्गे कल्पयंति ॥ ८ ॥

प्रतिष्ठः, नित्यस्थितत्वात् पृथिवीशक्तित्वात् प्रतिष्ठो गार्हपत्यः । ये पुत्रादयः अस्मात् यजमानात् प्रत्यंचः पृष्ठतः श्रिताः ॥ ९ ॥

मुख्यस्थानीये पूर्वार्द्धे आहृतः आहवनीयः ॥ १० ॥

( त्यु ) अथ युद्यन्वाहार्य्यपुचनः । ( स्तु ) तुद्विद्यादन्नाद्ऽ एन-मग्निः पूर्व्वः प्रापदुन्नमत्स्यत्युन्नमेवु तेऽस्मिंल्लोकेऽत्स्यन्ति येऽस्मा-त्प्रत्युञ्च ऽइति ॥ ११ ॥

( त्यु ) अथ युदि सर्व्वे सकृत् । ( त्तु ) तुद्विद्यात्कल्याणं लोकमजैषी-दित्येतान्यस्मिन्विज्ञानानि ॥ १२ ॥

ताम्वाऽएताम् । युजमानात्माहुतिमन्ततो जुहोति स् योऽस्य स्वर्गो लोको जितो भवति तुतऽआहुतिमुयोऽमृतः सम्भवति ॥ १३ ॥

( त्यु ) अथ यान्यश्ममुयानि च मृन्मुयानि च भुवन्ति । तानि ब्राह्म-णाय दद्याच्छवोद्वहमु ह तम्मन्यन्ते यस्तानि प्रतिगृह्णात्यपुऽ एवैनान्य-भ्युवहरेयुरापो वाऽ अस्य सुर्व्वस्य प्रतिष्ठा तुदेनमुप्स्वेव प्रतिष्ठापयति॥१४॥

( त्यु ) अथैतामाहुतिञ्जुहोति । पुत्रो वा भ्राता वा यो वाऽन्यो ब्राह्मणः

---

अथ यद्यन्वाहार्यपचनः । तद्विद्यात् । अन्नाद एनमग्निः पूर्वः प्रापत् । अन्नमत्स्यति । अन्नमेव तेऽस्मिन् लोकेऽत्स्यन्ति । येऽस्मात्प्रत्यंच इति ॥ ११ ॥

अथ यदि सर्वे सकृत् । तद्विद्यात् । कल्याणं लोकमजैषीदिति । एतान्यस्मिन् विज्ञानानि ॥ १२ ॥

तां वा एतां यजमानात्माहुतिमंततो जुहोति । स योऽस्य स्वर्गे लोको जितो भवति । तत आहुतिमयोऽमृतः संभवति ॥ १३ ॥

अथ यान्यश्ममयानि च मृन्मयानि च भवन्ति । तानि ब्राह्मणाय दद्यात् । शवोद्वहमु ह तं मन्यन्ते । यस्तानि प्रतिगृह्णाति । अप एवैनान्यभ्यवहरेयुः । आपो वा अस्य सर्वस्य प्रतिष्ठा । तदेनमप्स्वेव प्रतिष्ठापयति ॥ १४ ॥

अथैतामाहुतिं जुहोति । पुत्रो वा भ्राता वा यो वाऽन्यो ब्राह्मणः स्यात्—" अस्मात्त्व-

---

' अन्नादः ' पुरुषाणामन्नमन्वाहार्यमत्ति पचतीति अन्वाहार्यपचनः ॥ ११ ॥ १२ ॥

यजमानस्यात्मा शरीरम् । तदेवाहुतिः तां जुहोति । यः अस्य स्वर्गे लोकः स्थानं जितो भवति कर्मभिः । ततस्तत्र आहुतिपरिणाममयः अमृतः स्थिरशरीरः संभवति ॥ १३ ॥

अश्ममयानि दृषदुपलादीनि । लौहानि तप्योपरवादीनि । मृन्मयानि आज्यस्थाली उखा अग्निहोत्रस्थाली च । शवोद्वहम् । शवद्रव्यस्य उद्वहनरतं तं मन्यन्ते । न च सत्यां गतौ ब्राह्मणः संकटमापद्येत इत्यर्थः ॥ १४ ॥

अथैतामाहुतिं जुहोति । एतामिति सन्निहितपरामर्शात् पूर्वैव यजमानशरीराहुतिरिति केचित् । न तु

स्यादस्मात्त्वमधि जातोऽसि त्वदयञ्जायताम्पुनः । असौ स्वर्ग्गाय लोकाय स्वाहेत्युनपेक्षमेत्यापऽउपस्पृशन्ति ॥ १९ ॥

इति द्वितीयप्रपाठकेऽष्टमं ब्राह्मणम् ॥ १२।२।८ ॥ ( ५-२ )

पंचमोऽध्यायः समाप्तः ॥ १२।५ ॥ कण्डिकासंख्या ॥ ३२ ॥

द्वितीयः प्रपाठकश्च समाप्तः ॥ कण्डिकासंख्या ॥९५॥

---

मधि जातोऽसि त्वदयं जायतां पुनः । असौ स्वर्गाय लोकाय स्वाहा "–( वा. सं. ३५ । २२ ) इति । अनपेक्षमेत्य अप उपस्पृशंति ॥ १९ ॥

---

साहुतित्वम् । पुत्रादेवोदितत्वात्तैरेव न दहेयुरिति दाहमात्रस्य चोदितत्वात् । अथ तस्यैव शरीरस्याहुतित्वमुच्यते । न तु आहुतित्वं पुत्रादयो विधीयन्ते । इति वाक्यं निर्येत । तस्मात् प्राच्यैवैवमपूर्वाज्याहुतिर्विधीयते । तस्यां मांत्रवार्णिक्यग्निर्देवता द्रष्टव्या । अनपेक्षम् । अपेक्षं न भवति इति अनपेक्षम् अनवलोकम् । एत्य अपः उपस्पृशन्ति । तदेतत्सर्वं कात्यायनोऽसूत्रयत्–" संदीपनवतीः प्रत्यग्न्यधिश्रयंत्युखाः । संतापजानग्नीनादाय सशरीरा दक्षिणा गच्छन्ति । अनसा । वितान[१] साधयित्वा समे बहुलतृणेऽन्तराग्नी चितिं चिनोति । उद्धृत्य क्षीरिणीः पुरुषाहुतीः । विशाखशराश्मगन्धापृश्निपर्ण्यध्यांडाश्च । केशश्मश्रुनखलोमनिकृन्तनानि कृत्वा विपुरीषं चेच्छन् । केशादि निखाय सर्पिषाऽन्तरक्त्वा चितावेनमादधाति कृष्णाजिनमास्तीर्य प्राक्शिरसम् । सप्तसु प्राणायतनेषु सप्त हिरण्यशकलान् प्रास्यति मुखे प्रथमम् । दक्षिणहस्ते जुहू[२] सादयति घृतपूर्णाम् । स्फ्यं च । उपभृत[२] सव्ये । उरसि ध्रुवाम् । मुखेऽग्निहोत्रहवणीम् । नासिकयोः स्रुवौ । कर्णयोः प्राशित्रहरणे शिरसि चमसं प्रणीताप्रणयनम् । कपालानि चैके । पार्श्वयोः शूर्पे । उदरे पात्री[२] समवत्तधानीं पृषदाज्यवतीम्, शिश्ने शम्याम्, अरणी वृषणयोः । अन्तरोरू यज्ञपात्राण्यन्यानि । अप्स्ववहरणं मृन्मयाश्ममयानाम् । अयस्मयानि वा ब्राह्मणाय दद्यात् । आहुतिं जुहोति पुत्रो भ्राताऽन्यो वा ब्राह्मणोऽस्मात्त्वमधि जातोऽसि त्वदयं जायतां पुनः । असौ स्वर्गाय लोकाय स्वाहेति । अनपेक्षमेत्योपस्पृशंत्यपः । (का. श्रौ. सू. २५ । १६२ । १८३ । १८८ । १८९ । ) ॥ १९ ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये द्वादशकांडे पञ्चमेऽध्याये द्वितीयं ब्राह्मणम् ॥ ( १२ । ५ । २ ) ॥

नागस्वामिसुतोऽवन्त्यां पाराशर्यो वसन्हरिः । श्रुत्यर्थं दर्शयामास शक्तितः पौष्करीयकः ॥ १ ॥

श्रीमतोऽवन्तिनाथस्य विक्रमार्कस्य भूपतेः । धर्माध्यक्षो हरिस्वामी व्याख्यच्छातपथीं श्रुतिम् ॥ २ ॥

भूमर्त्रो विक्रमार्केण क्लृप्तां कनकवेदिकाम् । दानायाध्यस्य कृतवान् श्रुत्यर्थविवृतिं हरिः ॥ ३ ॥

इति श्रीसर्वविद्यानिधानकवीन्द्राचार्यसरस्वतीनां श्रीहरिस्वामिनां कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये द्वादशकाण्डे पञ्चमोऽध्यायः समाप्तः ॥ १२–५ ॥

---

१–एकः खादिर ऐष्टिकः, अपरो वैकंकतः अग्निहोत्रहोमार्थः । २–एकमौष्टिकं द्वितीयं वारुणप्रघासिकं प्रतिप्रस्थातुः । अकृतचातुर्मास्ये तु ऐष्टिकमेव द्विधा क्रियते । ३–समवत्तधानी इडापात्री ।

# अथ षष्ठेऽध्याये प्रथमं ब्राह्मणम् ।

# तृतीयप्रपाठके च प्रथमं ब्राह्मणम् ।



सोमो वै राजा यज्ञः प्रजापतिः । ( स्तु ) तस्यैतास्तन्वो या एता देवता या एता आहुतीर्जुहोति ॥ १ ॥

स यद्यज्ञस्याच्छेत् । ( या ) यान्तत्प्रति देवताम्मन्येत तामनुसमीक्ष्य जुहुयाद्यदि दीक्षोपसत्स्वाहवनीये यदि प्रसुतऽआग्नीध्रे वि वाऽएतद्यज्ञस्य पर्व स्रꣳसते यद्ध्वलति सा यैव तर्हि तत्र देवता भवति तयैवैतद्देवतया यज्ञम्भिषज्यति तया देवतया यज्ञम्प्रतिसन्दधाति ॥ २ ॥

---

अथ ज्योतिष्टोमप्रायश्चित्तब्राह्मणम् ।

सोमो वै राजा यज्ञः प्रजापतिः । तस्यैतास्तन्वः । या एता देवताः । या एता आहुतीर्जुहोति ॥ १ ॥

स यद्यज्ञस्याच्छेत् । यां तत्प्रति देवतां मन्येत । तामनुसमीक्ष्य जुहुयात् । यदि दीक्षोपसत्स्वाहवनीये । यदि प्रसुत आग्नीध्रे । वि वा एतत् यज्ञस्य पर्व स्रंसते—यत् ह्वलति । सा यैव तर्हि तत्र देवता भवति । तयैवैतत् देवतया यज्ञं भिषज्यति । तया देवतया यज्ञं प्रतिसंदधाति ॥ २ ॥

---

'सोमो वै राजा' । सोमप्रायश्चित्तब्राह्मणमेतत् । प्रायश्चित्तसम्बधार्थमेव पुनः सोमयागः प्रक्रियते । सोमो वै राजेति । सोमः अनंतौधीषनां राजा । देवराजचंद्रमसो न न्यूनभूतः । तेनात्र यज्ञसामानाधिकरण्यान्मत्वर्थो लक्ष्यते । सोमसाधनको यज्ञः प्रजापतिरित्यधिदैवमित्यध्याहार्यम् । सोमसाधनको यज्ञः प्रजापतिः । तस्य एतास्तन्वः शरीराणि । या एता देवता वक्ष्यमाणाः परमेष्ठ्यादयः । प्रजापत्यात्मकस्य सोमस्येति विशेषाः । इत्यधिदैवम् ॥

याश्चैता आहुतीः । आहूयन्त इत्याहुतयः । परमेष्ठ्याद्याः ताः सोमद्रव्यात्मकस्य यज्ञस्य तन्वः । जुहोतीति क्रियात्मकस्य यज्ञस्य हवनक्रियास्तन्वः । एवं द्रव्यं देवता क्रिया च । पुनः यज्ञस्य द्रव्यदेवताक्रियाविशेषात्मिका एव प्रायश्चित्तीयास्तन्वः इत्युपन्यासः ॥ १ ॥

'स यद्यज्ञस्य' । किं पुनर्नित्या एवैतास्तन्वः ? नेत्याह—यत्सोमयज्ञस्यांगम् आच्छेत् विनश्येत् । तदंगं तत्प्रति तस्मिन्नंगे यां देवतां परमेष्ठ्यादिकां मन्येत । "परमेष्ठ्यभिधीतः" ( वा. सं. ८ । ५४ ) इत्यादेरागमात् । अवगच्छेच्च । तामनुपूर्वं सम्यक् ज्ञात्वा तस्यै देवतायै आज्याहुतिं जुहुयात् । यदि दीक्षोपसत्सु यज्ञस्य किंचिदाच्छेत् तदा आहवनीये जुहुयात् । यदि तु प्रसुत्यायां तत आग्नीध्रीये । प्रायणीयादूर्ध्वं प्राक् सुत्यायाः क होतव्यं ? आहवनीये, कुतः ? "दीक्षोपसत्स्वाहवनीये" इत्यनुवादत एव प्राप्तत्वात् । एतावदेव ह्यनुविधीयते—"प्रसुत आग्नीध्रे" जुहोतीति । ततश्च सुत्यायामेव आग्नीध्रता प्राप्तेति । विस्रंसते

स युद्येनम्मुनसाऽभिध्यातः । ( तो ) यज्ञो नोपनुमेत्परमेष्ठिने स्वाहेति जुहुयात्परमेष्ठी हि स तुर्हि भुवत्युप पाप्मानᳪं हतऽ ड्रुपैनं यज्ञो नमति ॥ ३ ॥ कांडस्यार्द्धम् २३० ॥

( त्यु ) अथ युद्येनम्वाचाऽभिव्याहृतः । (तो) यज्ञो नोपनुमेत्प्रजापतये स्वाहेति जुहुयात्प्रजापतिर्हि स तुर्हि भुवत्युप पाप्मानᳪं हतऽ ड्रुपैनं यज्ञो नमति ॥ ४ ॥

( त्यु ) अथ युस्य राजानमुच्छेत्त्वा । नाहरन्तऽ एयुरन्धसे स्वाहेति जुहुयादुन्धो हि स तुर्हि भुवत्युप पाप्मानᳪं हतऽड्रुपैनं यज्ञो नमति ॥ ५ ॥

( त्यु ) अथ युदि सातः । किञ्चिदापुद्येत सवित्रे स्वाहेति जुहुयात्सविता हि स तुर्हि भुवत्युप पाप्मानᳪं हतऽ ड्रुपैनं यज्ञो नमति ॥ ६ ॥

( त्यु ) अथ युदि दीक्षासु । किञ्चिदापुद्येत विश्वकर्म्मणे स्वाहेति जुहुयाद्विश्वकर्म्मा हि स तुर्हि भुवत्युप पाप्मानᳪं हतऽ ड्रुपैनं यज्ञो नमति ॥ ७ ॥

---

स यद्येनं मनसाऽभिध्यातो यज्ञो नोपनमेत् । "परमेष्ठिने स्वाहा"—इति जुहुयात् परमेष्ठी हि स तर्हि भवति । अप पाप्मानं हते । उपैनं यज्ञो नमति ॥ ३ ॥

अथ यद्येनं वाचाऽभिव्याहृतो यज्ञो नोपनमेत् । "प्रजापतये स्वाहा"—इति जुहुयात् । प्रजापतिर्हि स तर्हि भवति । अप पाप्मानं हते । उपैनं यज्ञो नमति ॥ ४ ॥

अथ यस्य राजानमच्छेत्त्वा नाहरन्त एयुः । "अन्धसे स्वाहा"—इति जुहुयात् । अन्धो हि स तर्हि भवति । अप पाप्मानं हते । उपैनं यज्ञो नमति ॥ ५ ॥

अथ यदि सातः किंचिदापद्येत । "सवित्रे स्वाहा"—इति जुहुयात । सविता हि स तर्हि भवति । अप पाप्मानं हते । उपैनं यज्ञो नमति ॥ ६ ॥

अथ यदि दीक्षासु, किंचिदापद्येत । "विश्वकर्मणे स्वाहा"—इति जुहुयात् । विश्वकर्मा हि स तर्हि भवति । अप पाप्मानं हते । उपैनं यज्ञो नमति ॥ ७ ॥

---

वै एतद्यज्ञस्य पर्व अंगं यत् ह्वलति । स्वभावाद्विगुणं भवतीत्यर्थः । ततश्च 'या' एव पर्वपर्वणि अभिध्यानादौ देवता परमेष्ठ्यादिर्भवति । तस्या देवताया एतदेव कुर्वन् यज्ञं भिषज्यति संदधाति । इति संक्षेपवचनम् ॥ २ ॥

'स यद्येनम्' । विशेषवचनानि एतानि प्रसन्नानि । परमेष्ठी हि स यज्ञस्तदा भवति । अन्यया वाऽऽहुत्या प्रतिबन्धकं पाप्मानं अपहन्ति यज्ञश्च तस्मिन्नपहते एनं यजमानं उपनमति ॥ ३—३७ ॥

( त्यु ) अथ यदि सोमक्रयण्याम् । ( क्लि ) किञ्चिदापद्येत पूष्णे स्वाहेति जुहुयात्पूषा हि स तर्हि भवत्युप पाप्मानꣳ हतऽ उपैनं यज्ञो नमति ॥ ८ ॥

( त्यु ) अथ यदि क्रयायोपोत्थितः । किञ्चिदापद्येतेन्द्राय च मरुद्भ्यश्च स्वाहेति जुहुयादिन्द्रश्च हि स तर्हि मरुतश्च भवत्युप पाप्मानꣳ हतऽउपैनं यज्ञो नमति ॥ ९ ॥

( त्यु ) अथ यदि पण्यमानः । किञ्चिदापद्येतासुराय स्वाहेति जुहुयादसुरो हि स तर्हि भवत्युप पाप्मानꣳ हतऽ उपैनं यज्ञो नमति ॥ १० ॥

( त्यु ) अथ यदि क्रीतः । किञ्चिदापद्येत मित्राय स्वाहेति जुहुयान्मित्रो हि स तर्हि भवत्युप पाप्मानꣳ हतऽउपैनं यज्ञो नमति ॥ ११ ॥

( त्यु ) अथ यद्यूरावासन्नः । किञ्चिदापद्येत विष्णवे शिपिविष्टाय स्वाहेति जुहुयाद्विष्णुर्हि स तर्हि शिपिविष्टो भवत्युप पाप्मानꣳ हतऽ उपैनं यज्ञो नमति ॥ १२ ॥

( त्यु ) अथ यदि पर्युह्यमाणः । किञ्चिदापद्येत विष्णवे नरन्धिषाय स्वाहेति जुहुयाद्विष्णुर्हि स तर्हि नरन्धिषो भवत्युप पाप्मानꣳ हतऽ उपैनं यज्ञो नमति ॥ १३ ॥

---

अथ यदि सोमक्रयण्यां किंचिदापद्येत । "पूष्णे स्वाहा"–इति जुहुयात् । पूषा हि स तर्हि भवति । अप पाप्मानं हते । उपैनं यज्ञो नमति ॥ ८ ॥

अथ यदि क्रयायोपोत्थितः किंचिदापद्येत । "इन्द्राय च मरुद्भ्यश्च स्वाहा"–इति । जुहुयात् । इन्द्रश्च हि स तर्हि मरुतश्च भवति । अप पाप्मानं हते । उपैनं यज्ञो नमति ॥ ९ ॥

अथ यदि पण्यमानः किंचिदापद्येत । "असुराय स्वाहा"–इति जुहुयात् । असुरो हि स तर्हि भवति । अप पाप्मानं हते । उपैनं यज्ञो नमति ॥ १० ॥

अथ यदि क्रीतः किंचिदापद्येत । "मित्राय स्वाहा"–इति जुहुयात् । मित्रो हि स तर्हि भवति । अप पाप्मानं हते । उपैनं यज्ञो नमति ॥ ११ ॥

अथ यद्यूरावासन्नः किंचिदापद्येत । "विष्णवे शिपिविष्टाय स्वाहा"–इति जुहुयात् । विष्णुर्हि स तर्हि शिपिविष्टो भवति । अप पाप्मानं हते । उपैनं यज्ञो नमति ॥ १२ ॥

अथ यदि पर्युह्यमाणः किंचिदापद्येत । "विष्णवे नरंधिषाय स्वाहा"–इति जुहुयात् । विष्णुर्हि स तर्हि नरन्धिषो भवति । अप पाप्मानं हते । उपैनं यज्ञो नमति ॥ १३ ॥

( त्यु ) अथ यद्यागतः । किञ्चिदापद्येत सोमाय स्वाहेति जुहुयात्सोमो हि स तर्हि भवत्युप पाप्मानꣳ हतऽउपैनं यज्ञो नमति ॥ १४ ॥

( त्यु ) अथ यद्यासन्द्यामासन्नः । किञ्चिदापद्येत वरुणाय स्वाहेति जुहुयाद्वरुणो हि स तर्हि भवत्युप पाप्मानꣳ हतऽउपैनं यज्ञो नमति ॥ १५ ॥

( त्यु ) अथ यद्याग्नीध्रगतः । किञ्चिदापद्येताग्नये स्वाहेति जुहुयादग्निर्हि स तर्हि भवत्युप पाप्मानꣳ हतऽउपैनं यज्ञो नमति ॥ १६ ॥

( त्यु ) अथ यदि हविर्द्धानगतः । किञ्चिदापद्येतेन्द्राय स्वाहेति जुहुयादिन्द्रो हि स तर्हि भवत्युप पाप्मानꣳ हतऽउपैनं यज्ञो नमति ॥ १७ ॥

( त्यु ) अथ यद्युपावह्रियमाणः । किञ्चिदापद्येताथर्व्वणे स्वाहेति जुहुयादथर्व्वा हि स तर्हि भवत्युप पाप्मानꣳ हतऽउपैनं यज्ञो नमति ॥ १८ ॥

( त्यु ) अथ यद्यꣳशुषु न्युप्तः । किञ्चिदापद्येत विश्वेभ्यो देवेभ्यः स्वाहेति जुहुयाद्विश्वे हि स तर्हि देवा भवत्युप पाप्मानꣳ हतऽउपैनं यज्ञो नमति ॥ १९ ॥

( त्यु ) अथ यद्याप्याय्यमानः । किञ्चिदापद्येत विष्णवऽआप्रीतपाय

---

अथ यद्यागतः किंचिदापद्येत । "सोमाय स्वाहा"—इति जुहुयात् । सोमो हि स तर्हि भवति । अप पाप्मानं हते । उपैनं यज्ञो नमति ॥ १४ ॥

अथ यद्यासंद्यामासन्नः किंचिदापद्येत । "वरुणाय स्वाहा"—इति जुहुयात् । वरुणो हि स तर्हि भवति । अप पाप्मानं हते । उपैनं यज्ञो नमति ॥ १५ ॥

अथ यद्याग्नीध्रगतः किंचिदापद्येत । "अग्नये स्वाहा"—इति जुहुयात् । अग्निर्हि स तर्हि भवति । अप पाप्मानं हते । उपैनं यज्ञो नमति ॥ १६ ॥

अथ यदि हविर्द्धानगतः किंचिदापद्येत । "इन्द्राय स्वाहा"—इति जुहुयात् । इन्द्रो हि स तर्हि भवति । अप पाप्मानं हते । उपैनं यज्ञो नमति ॥ १७ ॥

अथ यद्युपावह्रियमाणः किंचिदापद्येत । "अथर्वणे स्वाहा"—इति जुहुयात् । अथर्वा हि स तर्हि भवति । अप पाप्मानं हते । उपैनं यज्ञो नमति ॥ १८ ॥

अथ यद्यंशुषु न्युप्तः किंचिदापद्येत । "विश्वेभ्यो देवेभ्यः स्वाहा"—इति जुहुयात् । विश्वे हि स तर्हि देवा भवति । अप पाप्मानं हते । उपैनं यज्ञो नमति ॥ १९ ॥

अथ यद्याप्याय्यमानः किंचिदापद्येत । "विष्णव आप्रीतपाय स्वाहा"—इति जुहुयात् । विष्णुर्हि स तर्ह्याप्रीतपा भवति । अप पाप्मानं हते । उपैनं यज्ञो नमति ॥ २० ॥

स्वाहेति जुहुयाद्विष्णुर्हि स तर्ह्याप्रीतपा भवत्युप पाप्मानꣳ हतऽ उपैनं यज्ञो नमति ॥ २० ॥

( त्यु ) अथ यद्यभिषूयमाणः । किञ्चिदापद्येत यमाय स्वाहेति जुहुयाद्यमो हि स तर्हि भवत्युप पाप्मानꣳ हतऽ उपैनं यज्ञो नमति ॥ २१ ॥

( त्यु ) अथ यदि सम्भ्रियमाणः । किञ्चिदापद्येत विष्णवे स्वाहेति जुहुयाद्विष्णुर्हि स तर्हि भवत्युप पाप्मानꣳ हतऽ उपैनं यज्ञो नमति ॥ २२ ॥

( त्यु ) अथ यदि पूयमानः । किञ्चिदापद्येत वायवे स्वाहेति जुहुयाद्वायुर्हि स तर्हि भवत्युप पाप्मानꣳ हतऽ उपैनं यज्ञो नमति ॥ २३ ॥

( त्यु ) अथ यदि पूतः । किञ्चिदापद्येत शुक्राय स्वाहेति जुहुयाच्छुक्रो हि स तर्हि भवत्युप पाप्मानꣳ हतऽ उपैनं यज्ञो नमति ॥ २४ ॥

( त्यु ) अथ यदि क्षीरश्रीः । किञ्चिदापद्येत शुक्राय स्वाहेति जुहुयाच्छुक्रो हि स तर्हि भवत्युप पाप्मानꣳ हतऽ उपैनं यज्ञो नमति ॥ २५ ॥

( त्यु ) अथ यदि सक्तुश्रीः । किञ्चिदापद्येत मन्थिने स्वाहेति जुहुयान्मन्थी हि स तर्हि भवत्युप पाप्मानꣳ हतऽ उपैनं यज्ञो नमति ॥ २६ ॥

( त्यु ) अथ यदि चमसेषून्नीतः । किञ्चिदापद्येत विश्वेभ्यो देवेभ्यः

---

अथ यद्यभिषूयमाणः किंचिदापद्येत । " यमाय स्वाहा "—इति जुहुयात् । यमो हि स तर्हि भवति । अप पाप्मानं हते । उपैनं यज्ञो नमति ॥ २१ ॥

अथ यदि संभ्रियमाणः किञ्चिदापद्येत । " विष्णवे स्वाहा "—इति जुहुयात् । विष्णुर्हि स तर्हि भवति । अप पाप्मानं हते । उपैनं यज्ञो नमति ॥ २२ ॥

अथ यदि पूयमानः किंचिदापद्येत । " वायवे स्वाहा "—इति जुहुयात् । वायुर्हि स तर्हि भवति । अप पाप्मानं हते । उपैनं यज्ञो नमति ॥ २३ ॥

अथ यदि पूतः किंचिदापद्येत । " शुक्राय स्वाहा "—इति जुहुयात् । शुक्रो हि स तर्हि भवति । अप पाप्मानं हते । उपैनं यज्ञो नमति ॥ २४ ॥

अथ यदि क्षीरश्रीः किंचिदापद्येत । " शुक्राय स्वाहा "—इति जुहुयात् । शुक्रो हि स तर्हि भवति । अप पाप्मानं हते । उपैनं यज्ञो नमति ॥ २५ ॥

अथ यदि सक्तुश्रीः किंचिदापद्येत । " मंथिने स्वाहा "—इति जुहुयात् । मंथी हि स तर्हि भवति । अप पाप्मानं हते । उपैनं यज्ञो नमति ॥ २६ ॥

अथ यदि चमसेषून्नीतः किंचिदापद्येत । " विश्वेभ्यो देवेभ्यः स्वाहा "—इति जुहुयात् । विश्वे हि स तर्हि देवा भवति । अप पाप्मानं हते । उपैनं यज्ञो नमति ॥ २७ ॥

स्वाहेति जुहुयाद्विश्वे हि स तर्हि देवा भवत्युप पाप्मानꣳ हतऽ उपैनं यज्ञो नमति ॥ २७ ॥

(त्यु) अथ यदि होमायोद्यतः । किञ्चिदापद्येतासवे स्वाहेति जुहुया-दसुर्हि स तर्हि भवत्युप पाप्मानꣳ हतऽ उपैनं यज्ञो नमति ॥ २८ ॥

(त्यु) अथ यदि हूयमानः । किञ्चिदापद्येत रुद्राय स्वाहेति जुहुयाद्रुद्रो हि स तर्हि भवत्युप पाप्मानꣳ हतऽउपैनं यज्ञो नमति ॥२९॥

(त्यु) अथ यद्यभ्यावृत्तः । किञ्चिदापद्येत वाताय स्वाहेति जुहुया-द्वातो हि स तर्हि भवत्युप पाप्मानꣳ हतऽउपैनं यज्ञो नमति ॥ ३० ॥

(त्यु) अथ यदि प्रतिख्यातः । किञ्चिदापद्येत नृचक्षसे स्वाहेति जुहुया-न्नृचक्षा हि स तर्हि भवत्युप पाप्मानꣳ हतऽउपैनं यज्ञो नमति ॥ ३१ ॥

(त्यु) अथ यदि भक्ष्यमाणः । किञ्चिदापद्येत भक्षाय स्वाहेति जुहुयाद्भक्षो हि स तर्हि भवत्युप पाप्मानꣳ हतऽउपैनं यज्ञो नमति ॥३२

(त्यु) अथ यदि नाराशꣳसेषु सन्नः । किञ्चिदापद्येत पितृभ्यो नाराशꣳ-सेभ्यः स्वाहेति जुहुयात्पितरो हि स तर्हि नाराशꣳसा भवत्युप पाप्मानꣳ हतऽउपैनं यज्ञो नमति ॥ ३३ ॥

---

अथ यदि होमायोद्यतः किंचिदापद्येत । "असवे स्वाहा"–इति जुहुयात् । असुर्हि स तर्हि भवति । अप पाप्मानं हते । उपैनं यज्ञो नमति ॥ २८ ॥

अथ यदि हूयमानः किंचिदापद्येत । "रुद्राय स्वाहा"–इति जुहुयात् । रुद्रो हि स तर्हि भवति । अप पाप्मानं हते । उपैनं यज्ञो नमति ॥ २९ ॥

अथ यद्यभ्यावृत्तः किंचिदापद्येत । "वाताय स्वाहा"–इति जुहुयात् । वातो हि स तर्हि भवति । अप पाप्मानं हते । उपैनं यज्ञो नमति ॥ ३० ॥

अथ यदि प्रतिख्यातः किंचिदापद्येत । "नृचक्षसे स्वाहा"–इति जुहुयात् । नृचक्षा हि स तर्हि भवति । अप पाप्मानं हते । उपैनं यज्ञो नमति ॥ ३१ ॥

अथ यदि भक्ष्यमाणः किंचिदापद्येत । "भक्षाय स्वाहा"–इति जुहुयात् । भक्षो हि स तर्हि भवति । अप पाप्मानं हते । उपैनं यज्ञो नमति ॥ ३२ ॥

अथ यदि नाराशंसेषु सन्नः किंचिदापद्येत । "पितृभ्यो नाराशंसेभ्यः स्वाहा"–इति जुहुयात् । पितरो हि स तर्हि नाराशंसा भवति । अप पाप्मानं हते । उपैनं यज्ञो नमति ॥ ३३ ॥

(त्यु) अथ युद्यवभृथायोद्यतः । किञ्चिदापद्येत सिन्धवे स्वाहेति जुहुयात्सिन्धुर्हि स तर्हि भवत्युप पाप्मानᳬं हतऽउपैनं यज्ञो नमति ॥ ३४ ॥

( त्यु ) अथ युद्यभ्यवह्रियमाणः । किञ्चिदापद्येत समुद्राय स्वाहेति जुहुयात्समुद्रो हि स तर्हि भवत्युप पाप्मानᳬं हतऽ उपैनं यज्ञो नमति ॥ ३५ ॥ ( शतम् ६२०० ) ॥

( त्यु ) अथ युदि प्रप्लुतः । किञ्चिदापद्येत सलिलाय स्वाहेति जुहुयात्सलिलो हि स तर्हि भवत्युप पाप्मानᳬं हतऽ उपैनं यज्ञो नमति ॥ ३६ ॥

ता वाऽ एताः । ( श्रु ) चतुस्त्रिᳬंशतमाज्याहुतीर्जुहोति त्रयस्त्रिᳬंशद्वै देवाः प्रजापतिश्चतुस्त्रिᳬंशऽ एतदु सर्वैर्देवैर्यज्ञम्भिषज्यति सर्वैर्देवैर्यज्ञम्प्रतिसन्दधाति ॥ ३७ ॥

ता ब्रह्मैव जुहुयात् । ( ब्रा ) नाब्रह्मा ब्रह्मा वै यज्ञस्य दक्षिणतऽआस्ते ब्रह्मा यज्ञन्दक्षिणतो गोपायति यदि तु ब्रह्मा न विद्यादपि यऽएव कश्च विद्यात्स जुहुयाद्ब्राह्मणन्त्वामन्त्र्य ब्रह्मणाऽतिसृष्टस्तासाम्वाऽएतासाम्व्याहृतीनाम्बन्धुता व्वसिष्ठो ह व्विराजम्विदाञ्चकार ताᳬं हेन्द्रोऽभिदध्यौ ॥ ३८ ॥

---

अथ यद्यवभृथायोद्यतः किंचिदापद्येत । " सिंधवे स्वाहा "–इति जुहुयात् । सिंधुर्हि स तर्हि भवति । अप पाप्मानं हते । उपैनं यज्ञो नमति ॥ ३४ ॥

अथ यद्यभ्यवह्रियमाणः किंचिदापद्येत । " समुद्राय स्वाहा "–इति जुहुयात् । समुद्रो हि स तर्हि भवति । अप पाप्मानं हते । उपैनं यज्ञो नमति ॥ ३५ ॥

अथ यदि प्रप्लुतः किंचिदापद्येत । " सलिलाय स्वाहा "–इति जुहुयात् । सलिलो हि स तर्हि भवति । अप पाप्मानं हते । उपैनं यज्ञो नमति ॥ ३६ ॥

ता वा एताश्चतुस्त्रिंशतमाज्याहुतीर्जुहोति । त्रयस्त्रिंशद्वै देवाः । प्रजापतिश्चतुस्त्रिंशः । एतदु सर्वैर्देवैर्यज्ञं भिषज्यति । सर्वैर्देवैर्यज्ञं प्रतिसंदधाति ॥ ३७ ॥

ता ब्रह्मैव जुहुयात् । नाब्रह्मा । ब्रह्मा वै यज्ञस्य दक्षिणत आस्ते । ब्रह्मा यज्ञं दक्षिणतो गोपा-

---

बन्धुता ब्राह्मणसमूहः । तां इन्द्रः अभिध्यातवान् । यदि मह्यं विराजं ब्रवीषि, तर्हि ममाहंजातीयं रूपं अहं त्वा

---

१–अत्रैताः परमेष्ठ्यादिसलिलान्ताश्चतुस्त्रिंशत्प्रायश्चित्ताहुतयो वाजसनेयसंहितायां ( ८ । ५४–५९ ) मंत्रेषु समाम्नाता इति बोध्यम् ।

स होवाच । (८)ऋषे विराजꣳ ह वै वेत्थ ताम्मे ब्रूहीति स होवाच किम्मम ततः स्यादिति सर्वस्य च ते यज्ञस्य प्रायश्चित्तिम्ब्रूयाꣳ रूपञ्च त्वा दर्शयेयेति स होवाच यन्नु मे सर्वस्य यज्ञस्य प्रायश्चित्तिम्ब्रूयाः किमु स स्याद्यन्त्वꣳ रूपन्दर्शयेथाऽइति जीवस्वर्गꣳऽएवास्माल्लोकात्प्रेयादिति ॥ ३९ ॥

ततो हैतामृषिरिन्द्राय विराजमुवाच । (चे) इयम्वै विराडिति तस्माद्योऽस्यै भूयिष्ठं लभते सऽएव श्रेष्ठो भवति ॥ ४० ॥

(त्यु) अथ हैतामिन्द्रऽ ऋषये । प्रायश्चित्तिमुवाचाग्निहोत्रादग्रऽ आ महतऽ उक्थात्ता ह स्मैताः पुरा व्याहृतीर्वसिष्ठाऽ एव विदुस्तस्माद्ध स्म पुरा वासिष्ठऽ एव ब्रह्मा भवति यतस्त्वेनाऽ अप्येतर्हि यऽ एव कश्चाधीते ततोऽप्येतर्हि यऽ एव कश्च ब्रह्मा भवति स ह वै ब्रह्मा भवितुमर्हति स वा ब्रह्मन्नित्यामन्त्रितः प्रतिशृणुयाद्यऽ एवमेता व्याहृतीर्वेद ॥ ४१ ॥

इति तृतीयप्रपाठके प्रथमं ब्राह्मणम् ॥ १२-३-१ ॥ ( ६. १. ) ॥

षष्ठोऽध्यायश्च समाप्तः ॥ १२ । ६ ॥ कण्डिकासंख्या ४१ ॥

---

यति । यदि तु ब्रह्मा न विद्यात् । अपि य एव कश्च विद्यात् । स जुहुयात् । ब्रह्माणं त्वामंत्र्य । ब्रह्मणाऽतिसृष्टः । तासां वा एतासां व्याहृतीनां बन्धुता । वसिष्ठो ह विराजं विदांचकार । तां हेन्द्रोऽभिदध्यौ ॥ ३८ ॥

स होवाच—ऋषे विराजं ह वै वेत्थ । तां मे ब्रूहीति । स होवाच—किं मम ततः स्यादिति । सर्वस्य च ते यज्ञस्य प्रायश्चित्तिं ब्रूयाम् । रूपं च त्वा दर्शयेय इति । स होवाच—यन्नु मे सर्वस्य यज्ञस्य प्रायश्चित्तिं ब्रूयाः । किमु स स्यात् । यं त्वं रूपं दर्शयेथा इति । जीवस्वर्ग एवास्माल्लोकात्प्रेयादिति ॥ ३९ ॥

ततो हैतामृषिरिन्द्राय विराजमुवाच । इयं वै विराडिति । तस्माद्योऽस्यै भूयिष्ठं लभते । स एव श्रेष्ठो भवति ॥ ४० ॥

अथ हैतामिंद्र ऋषये प्रायश्चित्तिमुवाच । अग्निहोत्रादग्र आ महत उक्थात् । ता ह स्मैताः

---

दर्शयेयेति । तया करोमि यथा मदीयं रूपं अवश्यं त्वां दर्शयेय तथा सर्वस्य यज्ञस्य प्रायश्चित्तिं च ब्रूयात् । त्वयोक्तं रूपं दर्शयिष्यामीति । किन्त्वेव त्वदीयरूपेण दृष्टेनेत्येतदाह—किं सः स्यात् । कीदृशः स स्यात् । यं मां स्वमध्यात्मं रूपं दर्शयेथाः । तत्राह—जीवस्वर्ग इति । जीवतां स्वर्गो जीवस्वर्गः तस्मिन् जीवस्वर्गो एव स प्रेयात् प्रागच्छेत् ।

पुरा व्याहृतीर्वसिष्ठा एव विदुः । तस्माद्ध स्म पुरा वासिष्ठ एव ब्रह्मा भवति । यतस्त्वेना अप्येतर्हि य एव कश्चाधीते । ततोऽप्येतर्हि य एव कश्च ब्रह्मा भवति । स ह वै ब्रह्मा भवितुमर्हति । स वा ब्रह्मन्नित्यामन्त्रितः प्रतिशृणुयात् । य एवमेता व्याहृतीर्वेद ॥ ४१ ॥

## समाप्तानि प्रायश्चित्तानि ॥

---

तस्माल्लोकात् येन यत्र स्वर्गे शक्यं गन्तुम् । तत्र मद्दशां गच्छेदित्यर्थः । इयं वै पृथिवी दिग्भेदेन दशाक्षरात्मकं छन्दः विराजोऽधिदैवतम् । इत्येतां विराजमुवाच । अग्निहोत्रमारभ्य दीर्घसत्रं ह वा एत उपयन्ति इति या एताः सौमिक्यः प्रायश्चित्तयः प्रकृतिप्रविष्टाः सन्ति । ताः चोदकपरंपरया संवत्सरसत्रेष्वतिदिष्टाः तत्र च महदुक्थ्यम्—उपांत्ये दिवसे । तेन एतदुक्तं भवति । आ संवत्सरसत्रेभ्य इति[1] ॥ ३८–४१ ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये द्वादशकांडे षष्ठेऽध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

नागस्वामिसुतोऽवन्त्यां पाराशर्यो वसन् हरिः । श्रुत्यर्थं दर्शयामास शक्तितः पौष्करीयकः ॥
श्रीमतोऽवन्तिनाथस्य विक्रमार्कस्य भूपतेः । धर्माध्यक्षो हरिस्वामी व्याख्यच्छातपथीं श्रुतिम् ॥
भूभर्त्रा विक्रमार्केण क्लृप्तां कनकवेदिकाम् । दानायाध्यस्य कृतवान् श्रुत्यर्थविवृतिं हरिः ॥

इति श्रीसर्वविद्यानिधानकवीन्द्राचार्यसरस्वतीनां श्रीहरिस्वामिनां कृतौ माध्यन्दिनीय-शतपथब्राह्मणभाष्ये द्वादशकाण्डे षष्ठोऽध्यायः समाप्तः ॥ १२–६ ॥

## उत्तरक्रतुनिरूपकं प्रकरणं समाप्तम् ॥

---

१–महर्षिः कात्यायनः श्रुत्यनुयायिसूत्रजातमरीचत् । परमेष्ठ्यादींश्चतुस्त्रिंशतं जुहोति । घर्मधुग्ध्वाले चादोहे च । उदीच्या दोहस्थानेऽन्यस्याः । शालाया वा पुरस्तात्प्राच्याः । पुच्छकांडाद्दक्षिणेऽश्मनि हुत्वा दोहयेत् । पृषदाज्यस्कन्दने चैके । सोमेज्योपपाते चैकैकां यथाकालं हुत्वा यज्ञस्य दोह इति वाचयति । आग्नीध्रीये सुत्यासु । का. श्रौ. सू. २५ । १३७–१४४ ।



अत्रादितः शतपथब्राह्मणस्याशीतिपथसंज्ञको ऽशीत्यध्यायात्मक उत्तरक्रतुनिरूपणान्तो विभागः सम्पूर्णः ॥

# अथ सप्तमेऽध्याये प्रथमं ब्राह्मणम् ।
# तृतीयप्रपाठके च द्वितीयं ब्राह्मणम् ।

व्विश्वरूपम्वै त्वाष्ट्रमिन्द्रोऽहन् । ( हंस्त ) तन्त्वष्टा हतपुत्रोऽभ्यचरत्सोऽभिचरणीयमपेन्द्रꣳ सोममाहरत्तस्येन्द्रो यज्ञवेशसङ्कृत्वा प्रासहा सोममपिबत्स व्विष्वङ्व्यार्च्छत्तस्येन्द्रियम्वीर्य्यमङ्गादङ्गादस्रवत् ॥ १ ॥

( त्त ) तस्याक्षिभ्यामेव तेजोऽस्रवत् । ( त्सो ) सोऽजः पशुरभवद्धूम्रोऽथ यत्पक्ष्मभ्यस्ते गोधूमा यदश्रुभ्यस्तत्कुवलम् ॥ २ ॥

( त्ता ) नासिकाभ्यामेवास्य व्वीर्य्यमस्रवत् । ( त्सो ) सोऽविः पशुरभवन्मेषोऽथ यच्छ्लेष्मणस्ताऽउपवाका यत्स्नीहा तद्बदरम् ॥ ३ ॥

( म्मु ) मुखादेवास्य बलमस्रवत् । ( त्स ) स गौः पशुरभवदृषभोऽथ ये फेनास्ते यवा यत्स्नेहस्तत्कर्कन्धु ॥ ४ ॥

श्रोत्रादेवास्य यशोऽस्रवत् । ( त्त ) तदेकशफमभवदश्वोऽश्वतरो गर्द्दभः ॥ ५ ॥

---

अथ सौत्रामणी यागः ।

विश्वरूपं वै त्वाष्ट्रमिन्द्रोऽहन् । तं त्वष्टा हतपुत्रोऽभ्यचरत् । सोऽभिचरणीयमपेन्द्रꣳ सोममाहरत् । तस्येन्द्रो यज्ञवेशसं कृत्वा प्रासहा सोममपिबत् । स विष्वङ्व्यार्च्छत् । तस्येन्द्रियं वीर्यमङ्गादङ्गादस्रवत् ॥ १ ॥

तस्याक्षिभ्यामेव तेजोऽस्रवत्; सोऽजः पशुरभवद्धूम्रः । अथ यत्पक्ष्मभ्यस्ते गोधूमाः । यदश्रुभ्यस्तत्कुवलम् ॥ २ ॥

नासिकाभ्यामेवास्य वीर्यमस्रवत्; सोऽविः पशुरभवन्मेषः । अथ यत् श्लेष्मणस्ता उपवाकाः । यत् स्नीहा तद्बदरम् ॥ ३ ॥

मुखादेवास्य बलमस्रवत्; स गौः पशुरभवदृषभः । अथ ये फेनास्ते यवाः । यत् स्नेहः तत्कर्कन्धु ॥ ४ ॥

श्रोत्रादेवास्य यशोऽस्रवत्; तदेकशफमभवत्, अश्वोऽश्वतरो गर्द्दभः ॥ ५ ॥

---

विश्वरूपं वै इति सौत्रामणीब्राह्मणमेतत् त्रयोऽध्यायाः । ( एतवाग्निब्राह्मणानन्तरमेवमनुक्तमेवमादात्तास्तं-युक्तस्वेदस्यतुपर्यन् योत्नत्पादाध्यानदर्शपूर्णमासाग्निहोत्रखिलैर्वातहितमधुनांतं १ ) । तत्रेह ब्राह्मणे सौत्रा-

( स्स्तु ) स्तुनाभ्यामेवास्य शुक्रमस्रवत् । ( त्त ) तत्पयोऽभवत्पशूना-ञ्ज्योतिरुरसऽ एवास्य हृदयात्त्विषिरस्रवत्स श्येनोऽपाष्ठिहाऽभवद्वयसाᳬँ राजा ॥ ६ ॥

नाभ्याऽ एवास्य शूषोऽस्रवत् । ( त्त ) तत्सीसमभवन्नायो न हिरण्यᳬँ रेतसऽ एवास्य रूपमस्रवत्तत्सुवर्णᳬँ हिरण्यमभवच्छिश्नाडेवास्य रसोऽस्रवत्सा परिस्रुदभवत्स्फिग्भ्यामेवास्य भामोऽस्रवत्सा सुराऽभवदन्नस्य रसः ॥ ७ ॥

---

स्तनाभ्यामेवास्य शुक्रमस्रवत्; तत्पयोऽभवत्, पशूनां ज्योतिः । उरस एवास्य हृदयात्त्विषिरस्रवत्; स श्येनोऽपाष्ठिहाऽभवत्, वयसां राजा ॥ ६ ॥

नाभ्या एवास्य शूषोऽस्रवत्; तत्सीसमभवत्, नायः, न हिरण्यम् । रेतस एवास्य रूपमस्र-

---

मण्याः । सौत्रामणीत्वोद्भावनार्थं विश्वरूपेतिहासेन सौत्रामण्युपकरणानामजाविगवां त्रयाणां च पशुयागानामुत्पत्तिः सौत्रामणीशब्दनिर्वचनं दक्षिणाधिकारविधिश्च । (परतमुनिमित्त फलग्रहणसंयोगाः) प्रसन्नं प्रायः । विशेषं तु दर्शयिष्यामः । अभिचरत्यनेनेति अभिचरणीयम् । करणे कृत्यः । स्नानीयं चूर्णमिति यथा । अपेत इन्द्रोऽस्मादित्यपेन्द्रम् । सोमं यागतस्त्वष्टा आहृतवान् । तस्य च स इन्द्रो यज्ञविनाशं कृत्वा प्रासहा प्रसहनेन, प्रसह्य वा सोमं पीतवान् । स च सोमः विष्वङ् विषुशब्दो व्याप्तिवचनः । सर्वाभिः शरीरनाडीभिः गत्वा । अधि आच्छैत् । ( इतश्चेतश्च सफलं भवद्विपसस्विपूर्वतम् ऐंस्वतारेभ्यः अतनरोवेसण्डवायाः स्वर्गो द्रष्टव्यः ?) सर्वः स रसः । ताभिर्निर्गतस्तस्य चेन्द्रस्य तेन सोमेन सह इन्द्रियमिन्द्रियकारणं तेजःप्रभृति वीर्यं वीरयति विक्रमयते कार्येणेष्टेनेति वीर्यवत्तेज अंगादंगादवयवादस्रवदिति सामान्यसृष्टिः । तस्याक्षिभ्यामेव तेजः सोमेन सह व्यस्रवत् । तेजः स्रुतं भवितव्यं वाव सा देवता महाभाग्या च । अजः पशुः धूम्रवर्णो भारं वहति । प्रेरयति न च प्रेर्यते । यत् स्नेहः स्रुतं तच्च कर्कन्धुकल्पतरं बदराकारम् । यशः यशसः कारणम् । भूतविशेषा एव दशः । कोऽपि यो यशस्वी भवति । (तद्याच लणं ?) जातमात्रस्यैव छायामन्यां स्वभूतविशेषानेव दृष्टाः स्रवन्तीत्युपपद्यते । (तामृत्तां ऐशवादयः ? ) । तदेकशफानां–अश्वादीनामपि तु प्रदेशस्थानासुपयोक्ष्यते ॥ १–५ ॥

तत्पयोऽभवदिति पयसः सृष्टिः पयोग्रहेषूपयोक्ष्यते । उरसः उरःस्थानात् । हृदयात् त्विषिर्दीप्तिः । श्येनः पक्षी । स्वानपहन्तीति अपाष्ठिहाऽस्य पत्रे भवतीति वयसः सृष्टिः ॥ ६ ॥

सृष्टः बलविशेषः परिशोषयिता । रस आपः परिस्पन्दनस्य परिपक्ष्याः । स्फिग्भ्यां[1] भामः क्रोधः । सुरापक्षोऽन्न जयहेतुः ॥ ७ ॥

---

[1]—स्त्रियां स्फिचौ कटिप्रोथावित्यमरः ।

( सो ) मूत्राद्देवास्यौजोऽस्रवत् । ( त्स ) स वृकोऽभवदारण्यानाम्पशूनाञ्जूतिरूवध्याद्देवास्य मन्युरस्रवत्स व्याघ्रोऽभवदारण्यानाम्पशूनाॅं राजा लोहिताद्देवास्य सहोऽस्रवत्स सिॅंहोऽभवदारण्यानाम्पशूनामीशः ॥ ८ ॥

( शो ) लोमभ्यऽएवास्य चित्तमस्रवत् । ( त्ते ) ते श्यामाकाऽअभवँस्त्वचऽएवास्यापचितिरस्रवत्सोऽश्वत्थो वनस्पतिरभवन्माॅंसेभ्यऽएवास्योर्गस्रवत्सऽउदुम्बरोऽभवदस्थिभ्यऽएवास्य स्वधाऽस्रवत्स न्यग्रोधोऽभवन्मज्जभ्यऽएवास्य भक्षः सोमपीथोऽस्रवत्ते व्रीहयोऽभवन्नेवमस्येन्द्रियाणि वीर्य्याणि व्युदक्रामन् ॥ ९ ॥

( न्नु ) अथ ह वै तर्हि । नमुचिनैवासुरेण सह चचार सऽऐक्षत नमुचिरपुनर्वाऽअयमभूद्धन्तास्येन्द्रियम्वीर्य्यॅं सोमपीथमन्नाद्यॅं हराणीति तस्यैतयैव सुरयेन्द्रियं वीर्य्यॅं सोमपीथमन्नाद्यमहरत्स ह न्यर्णः शिश्ये

---

वत्; तत् सुवर्णं हिरण्यमभवत् । शिश्नादेवास्य रसोऽस्रवत्; सा परिस्रुदभवत् । स्फिगीभ्यामेवास्य भामोऽस्रवत्, सा सुराऽभवत्; अन्नस्य रसः ॥ ७ ॥

मूत्रादेवास्यौजोऽस्रवत्; स वृकोऽभवत्, आरण्यानां पशूनां जूतिः । ऊवध्यादेवास्य मन्युरस्रवत्; स व्याघ्रोऽभवत्, आरण्यानां पशूनां राजा । लोहितादेवास्य सहोऽस्रवत्; स सिंहोऽभवत्, आरण्यानां पशूनामीशः ॥ ८ ॥

लोमभ्य एवास्य चित्तमस्रवत्; ते श्यामाका अभवन् । त्वच एवास्यापचितिरस्रवत्; सोऽश्वत्थो वनस्पतिरभवत् । मांसेभ्य एवास्योर्गस्रवत्; स उदुंबरोऽभवत् । अस्थिभ्य एवास्य स्वधाऽस्रवत्; स न्यग्रोधोऽभवत् । मज्जभ्य एवास्य भक्षः सोमपीथोऽस्रवत्; ते व्रीहयोऽभवन् । एवमस्येन्द्रियाणि वीर्याणि व्युदक्रामन् ॥ ९ ॥

अथ ह वै तर्हि नमुचिनैवासुरेण सह चचार । स ऐक्षत नमुचिः, अपुनर्वा अयमभूत् । हंत ! अस्ये-

---

आरण्यानां पशूनां मध्यत इति द्वारेण । षष्ठीतिर्गतिमान् वेगादत ऊवध्यमजीर्णम् आहो मन्युः सप्रयः कोशः । सहः पराभवहेतुर्बलविशेषः । ईशा ईश्वरः ॥ ८ ॥

चित्तं चिद्धेतुः । अपचितिरादरकृतो भूतोपचयविशेषः । ऊर्क् बलकरो रसः । स्वधा पित्रन्नम् ॥ ९ ॥

अथ तर्हि तदा नमुचिनाऽसुरेण सह चचारेन्द्रः स नमुचिः ऐक्षत । अपुनर्भावी तु पुनः अयं इन्द्रः अभूद्धंत अस्य इन्द्रियाणि संहराणीति यदवशिष्टं तदपीत्यभिप्रायः । स इन्द्रः न्यर्णः । अणअर्दगतौ ।

तुन्देवाऽ उपसुञ्जग्मिरे श्रेष्ठो वै नोऽयुमभूत्तमिमुम्पाप्माऽविदद्धुन्तेमुं भिषज्यामेति ॥ १० ॥

तेऽश्विनावब्रुवन् । ( न्यु ) युवम्वै ब्रह्माणौ भिषुजौ स्थो युवुमिमुम्भिषज्यतमिति तावब्रूतामुस्तु नौ भागऽ इति तेऽब्रुवन्युऽ एुषोऽजः सु वां भागऽइति तथेति तुस्मादाश्विनो धूम्रो भवति ॥ ११ ॥

ते सुरस्वतीमब्रुवन् । ( वंस्त्वं ) त्वम्वै भैषज्यमसि त्वमिमुम्भिषज्येति साऽब्रवीदस्तु मे भागऽ इति तेऽब्रुवन्युऽ एषोऽविः सु ते भागऽ इति तथेति तुस्मात्सारस्वतो मेषो भवति ॥ १२ ॥

(त्यु) अथाब्रुवन् । (न्ने) एतावद्वाऽ अस्मिन्नेतर्हि यावदयमृषुभोऽस्यैवायमस्त्विति तथेति तुस्मादैन्द्रऽ ऋषभो भवति ॥ १३ ॥

तावश्विनौ च सुरस्वती च । ( चे ) इन्द्रियुम्वीर्य्यन्नमुचेराहृत्य तदस्मिन्पुनरदधुस्तुम्पाप्मनोऽत्रायन्त सुत्रातम्बतैनम्पाप्मनोऽत्रास्महीति

---

न्द्रियं वीर्यं सोमपीथमन्नाद्यं हराणीति । तस्यैतयैव सुरयेन्द्रियं वीर्यं सोमपीथमन्नाद्यमहरत् । स ह न्यर्णः शिश्ये । तं देवा उपसंजग्मिरे । श्रेष्ठो वै नोऽयमभूत् । तामिमं पाप्माऽविदत् । हन्त ! इमं भिषज्यामेति ॥ १० ॥

तेऽश्विनावब्रुवन् । युवं वै ब्रह्माणौ भिषजौ स्थः । युवमिमं भिषज्यतमिति । तावब्रूताम् । अस्तु नौ भाग इति । तेऽब्रुवन् । य एषोऽजः, स वां भाग इति । तथेति । तस्मादाश्विनो धूम्रो भवति ॥ ११ ॥

ते सरस्वतीमब्रुवन् । त्वं वै भैषज्यमसि । त्वमिमं भिषज्येति । साऽब्रवीत् । अस्तु मे भाग इति । तेऽब्रुवन् । य एषोऽविः, स ते भाग इति । तथेति । तस्मात्सारस्वतो मेषो भवति ॥ १२ ॥

अथाब्रुवन् । एतावद्वा अस्मिन् एतर्हि । यावत् अयमृषभः । अस्यैवायमस्त्विति । तथेति । तस्मादैन्द्र ऋषभो भवति ॥ १३ ॥

तावश्विनौ च सरस्वती च इंद्रियं वीर्यं नमुचेराहृत्य तदस्मिन्पुनरदधुः । तं पाप्मनोऽत्रायंत । सुत्रातं बतैनं पाप्मनोऽत्रास्महीति । तद्वाव सौत्रामण्यभवत् । तत्सौत्रामण्यै सौत्रा-

---

नितरां निःशेषम् शयितवान् । तं देवा उपसंगताः किं ? वदन्तः । अयमिन्द्रोऽस्माकं प्रशस्यतम आसीत । अधुना त्वयं पाप्मानं प्राप्तः । हन्त इमं भिषिज्यामेति ॥ १० ॥

तस्मादाश्विनो धूम्रो भवतीत्यादीनि उत्पत्तिवाक्यानि पशुयागांगानि ॥ ११—१३ ॥

तावश्विनौ च सरस्वती च-यथा यथा सुतं तत्सर्वं नमुचेः सकाशादाहृत्य तदिन्द्रे पुनरदधुः । तदा त्विद्रः पुनः

तद्वाव सौत्रामुण्यभवत्तुत्सौत्रामण्यै सौत्रामणीत्वं त्रायते मृत्योरात्मानमुप पाप्मानᳫँ हते यु॒ऽ एवमेतुत्सौत्रामण्यै सौत्रामणीत्वम्वेद त्रुयस्त्रिᳫँशद्दक्षिणा भवन्ति त्रुयस्त्रिᳫँशद्धि तुन्देवुताऽ अभिषज्यंस्तुस्मादाहुर्भेषजन्दुक्षिणाऽइति ॥ १४ ॥

इति तृतीयप्रपाठके द्वितीयं ब्राह्मणम् ॥ १२।३।२ ॥ ( ७-१ )

अप वुाऽ एतुस्मात् । ( त्ते ) तेजऽइन्द्रियम्वीर्य्यङ्क्रामति यᳫँ सोमोऽतिपवतऽऊर्ध्वम्वुाऽवाञ्चम्वा ॥ १ ॥

तुदाहुः । ( रु ) अुन्नम्वुाऽ एतुद्ब्राह्मणस्य यत्सोमो न वै सोमेन ब्राह्मणः सोमवामी स यो वाऽअुलम्भूत्यै सम्भूतिन्न प्राप्नोति यो वुाऽलम्पशुभ्यः सुन्पशून्न विन्दुते सु सोमवामी पशुवो हि सोमऽइति ॥ २ ॥

---

मणीत्वम् । त्रायते मृत्योरात्मानम् । अप पाप्मानं हते । य एवमेतत्सौत्रामण्यै सौत्रामणीत्वं वेद । त्रयस्त्रिंशद्दक्षिणा भवंति । त्रयस्त्रिंशद्धि तं देवता अभिषज्यन् । तस्मादाहुः । भेषजं दक्षिणा इति ॥ १४ ॥

अप वा एतस्मात्तेज इंद्रियं वीर्यं क्रामति । यं सोमोऽतिपवते–ऊर्ध्वं वा, अवांचं वा ॥ १ ॥

तदाहुः–अन्नं वा एतद् ब्राह्मणस्य–यत्सोमः । न वै सोमेन ब्राह्मणः सोमवामी सः । यो वा अलं भूत्यै सम्भूतिं न प्राप्नोति । यो वाऽलं पशुभ्यः सन्पशून्न विंदते । स सोमवामी । पशवो हि सोम इति ॥ २ ॥

---

स्थापितः । तद् वदन्ति स्म । ततस्तमिन्द्रं पाप्मनस्त्रातवन्तः ( अत्रास्माहि तावत्तोपयामेति । यस्मादेवविमधुसुत्रमां सौत्रामणीनेत्राजापता । प्रकृतात्रयः । पयधगास्तदनन्तरमेव स्ववचनात् १ )॥ १२–१४ ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये द्वादशकाण्डे सप्तमेऽध्याये प्रथमं ब्राह्मणम् ॥ १२ । ७ । १ ॥

अप वा एतस्मात् । सोमोऽतिपवते । ऊर्ध्वमधस्ताद्वा अतिवर्तते । ततः तेज इन्द्रियं अपक्रामति । प्रकृतान्येव सन्निधानात् । तानि च यजमानस्यैव सोमपीथेन क्रियंते । तदर्थत्वात् कर्मणः । न ऋत्विजां अतदर्थत्वात् । ततश्च यजमान एवातिपूतः । सौत्रामणीं कुर्वन् । नर्त्विग् अतोऽयं सोमोऽतिपवते । स एतं आश्विनं धूम्रमालभेतेति संबंधः । एवं तावत् सोमातिपवनं निमित्तं प्रकल्प्य स्थापितम् ॥ १ ॥

अधुना निमित्तान्तरं प्रकल्पयति । तदाहुरन्नमेवैतद्ब्राह्मणस्य यत्सोमः । नित्यत्वादित्यभिप्रायः । ब्राह्मण-

---

१–त्रयस्त्रिंशतं दक्षिणा ददात्यन्नुशिष्टं च वडवयेनुम् का. श्रौ. सू. १९ । ८८ ।

सुऽएतुमाश्विनुन्धूम्रमालभेत । सारस्वतुम्मेषुमैन्द्रमृषभुमश्विनौ वै देवानाम्भिषजौ ताभ्यामेवैनम्भिषज्यति सरस्वती भेषजन्तयैवास्मै भेषजङ्करोतीन्द्रऽइन्द्रियम्वीर्य्यन्तेनैवास्मिन्निन्द्रियम्वीर्य्यन्दधाति ॥ ३ ॥

चक्षुर्व्वा अश्विनौ तेजः । (जो) यदाश्विनो भवति चक्षुरेवास्मिँस्तत्तेजो दधात्यथो श्रोत्रꣳ समानꣳ हि चक्षुश्च श्रोत्रञ्च ॥ ४ ॥

प्राणः सरस्वती व्वीर्य्यम् । यत्सारस्वतो भवति प्राणमेवास्मिँस्तद्वीर्य्यन्दधात्यथोऽअपानꣳ समानꣳ हि प्राणश्चापानश्च ॥ ५ ॥ ( अर्द्धः प्रपाठकः ) ॥

व्वागिन्द्रो बलम् । यदैन्द्रो भवति व्वाचमेवास्मिँस्तद्बलन्दधात्यथो मनः समानꣳ हि व्वाक्च मनश्च ॥ ६ ॥

( श्वा ) आश्विनीरजाः । सारस्वतीरवीरैन्द्रीर्ग्गाव ऽइत्याहुर्य्यदेते पशव ऽआलभ्यन्त ऽएताभिरेव देवताभिरेतान्पशूनवरुन्धे ॥ ७ ॥

---

(१) स एतमाश्विनं धूम्रमालभेत । (२) सारस्वतं मेषम् । (३) ऐन्द्रमृषभम् । अश्विनौ वै देवानां भिषजौ । ताभ्यामेवैनं भिषज्यति । सरस्वती भेषजम् । तयैवास्मिन् भेषजं करोति । इंद्र इंद्रियं वीर्यम् । तैनवास्मिन्निन्द्रियं वीर्यं दधाति ॥ ३ ॥

चक्षुर्वा अश्विनौ तेजः । यदाश्विनो भवति । चक्षुरेवास्मिंस्तत्तेजो दधाति, अथो श्रोत्रम् । समानं हि चक्षुश्च श्रोत्रं च ॥ ४ ॥

प्राणः सरस्वती वीर्यम् । यत्सारस्वतो भवति । प्राणमेवास्मिंस्तद्वीर्यं दधाति, अथो अपानम् । समानं हि प्राणश्चापानश्च ॥ ५ ॥

वागिंद्रो बलम् । यदैंद्रो भवति । वाचमेवास्मिंस्तद्बलं दधाति, अथो मनः । समानं हि वाक् च मनश्च ॥ ६ ॥

आश्विनीरजाः सारस्वतीरवीरैंद्रीर्गाव इत्याहुः । यदेते पशव आलभ्यंते । एताभिरेव देवताभिरेतान्पशूनवरुन्धे ॥ ७ ॥

---

ग्रहणं क्षत्रियवैश्ययोरसोमत्वोपप्रदर्शनार्थम् । तत्तूचितमेव । अनुचितेनापि सोमपानेन सोमवामी भवति, इतरयोः सोमवमनेऽप्रायश्चित्तार्थतेत्यभिप्रायः । कस्तर्हि सोमवामीत्यभिप्रायः । यो वा अलं भूत्यै सन् भूतिं न प्राप्नोति । यो वाऽलं पशुभ्यः सन् पशून्न विंदते । स सोमवामीति गौणं सोमवमनं निमित्तमुपन्यस्तम् । तौ अधुना द्वावप्येतौ मुख्य गौणौ सोमवामिनौ स इत्यनेन शब्देन परामृशति । द्विनिमित्तिका सौत्रामणी । तत्र द्विप्रकारेणापि निमित्ते स

---

१–आश्विनोऽजो धूम्रः । सारस्वतो मेषः, ऐंद्र ऋषभः । का. श्रौ. सू. १९ । ५८–५९ ।

व्वडवाऽनु शिशुर्भवति । युशऽ एवैकशफमुवरुन्धऽ आरण्यानाम्पशूनां लोमानि भवन्त्यारण्यानाम्पशूनामुवरुद्धचै व्वृकलोमानि भवन्त्योजऽ एव जूतिमारण्यानाम्पशूनामुवरुन्धे व्व्याघ्रलोमानि भवन्ति मन्युमेव राज्यमारण्यानाम्पशूनामुवरुन्धे सिᳪँहलोमानि भवन्ति सुहऽ एवेशा-मारण्यानाम्पशूनामुवरुन्धे ॥ ८ ॥

व्व्रीहयश्च श्यामाकाश्च भवन्ति । गोधूमाश्च कुवलानि चोपवाकाश्च बद-राणि च यवाश्च कर्कन्धूनि च शष्पाणि च तोक्मानि चोभयमेव ग्राम्यञ्चान्न-मारण्यञ्चावरुन्धेऽथोऽउभयेनैवान्नेन यथा रूपमिन्द्रियव्वीर्य्यमात्मन्धत्ते॥९॥

सीसेन शष्पाणि क्रीणाति । ( त्यू ) ऊर्णाभिस्तोक्मानि सूत्रैर्व्व्रीहीनु-भयोर्व्वाऽ एतद्रूपमुयसश्च हिरण्यस्य च यत्सीसमुभयᳪँ सौत्रामणीष्टिश्च पशुबन्धश्चोभयस्यावरुद्धचै ॥ १० ॥

( द्व्याऽङ्क ) ऊर्ण्णासूत्रेण क्रीणाति । तद्वाऽ एतत्स्त्रीणाङ्कर्म्म यदूर्ण्णा-

---

( ४ ) वडवाऽनुशिशुर्भवति । यश एवैकशफमवरुंधे । आरण्यानां पशूनां लोमानि भवंति । आरण्यानां पशूनामवरुद्धचै । ( ५ ) वृकलोमानि भवंति । ओज एव जूतिमारण्यानां पशूनामवरुंधे । ( ६ ) व्याघ्रलोमानि भवंति । मन्युमेव राज्यमारण्यानां पशूनामवरुंधे । ( ७ ) सिंहलोमानि भवंति । सह एवेशामारण्यानां पशूनामवरुन्धे ॥ ८ ॥

( ८ ) व्रीहयश्च ( ९ ) श्यामाकाश्च भवन्ति । ( १० ) गोधूमाश्च ( ११ ) कुवलानि च । ( १२ ) उपवाकाश्च ( १३ ) बदराणि च । ( १४ ) यवाश्च ( १५ ) कर्कन्धूनि च । ( १६ ) शष्पाणि च ( १७ ) तोक्मानि च । उभयमेव ग्राम्यं चान्नमारण्यं चावरुन्धे । अथो उभये-नैवान्नेन यथा रूपमिन्द्रियं वीर्यमात्मन्धत्ते ॥ ९ ॥

( १८ ) सीसेन शष्पाणि क्रीणाति । ( १९ ) ऊर्णाभिस्तोक्मानि । ( २० ) सूत्रैर्व्रीहीन् । उभयोर्वा एतद्रूपम् । अयसश्च हिरण्यस्य च । यत्सीसम् । उभयं सौत्रामणी । इष्टिश्च पशुबन्धश्च । उभयस्यावरुद्धचै ॥ १० ॥

( २१ ) ऊर्णासूत्रेण क्रीणाति । तद्वा एतत् स्त्रीणां कर्म, यदूर्णासूत्रम् । कर्म वा इन्द्रियं वीर्यम् । तदेतदुत्सन्नं स्त्रीषु । तद्यदेवेन्द्रियं वीर्यमुत्सन्नं स्त्रीषु तदेवावरुन्धे ॥ ११ ॥

---

एतमाश्विनमित्यादि चक्षुर्वा अश्विनौ तेज इत्यादिना कण्डिकात्रयेण । देवतास्वाध्यात्ममाह—का अश्विनी ? अश्विन्यः अश्विभक्तास्तदनूक्ताः प्रत्याहुरिति संबन्धः । सारस्वत्यः अवय इत्याहुः । ऐन्द्रो गाव इत्याहुः । यदेते धूम्रादयः पशव आलभ्यन्ते । तदेताभिरेवैतानजादीन्पशून् अवरुन्धे इति धूम्रादीनामधिभूतवचनम् ॥ २—७ ॥

वडवाऽनुशिशुर्भवतीत्यादि सौत्रामण्याम् ॥ ८—११ ॥

सूत्रं कुम्भं वाऽ इन्द्रियम्वीर्य्यं तदेतदुत्सन्नᳬं क्लीबे तद्यदेवेन्द्रियम्वीर्य्यमुत्सन्नᳬं क्लीबे तदेवावरुन्धे ॥ ११ ॥

तद्धैतदन्येऽध्वर्य्यवः । सीसेन क्लीबाच्छष्पाणि क्रीणन्ति तत्तदिति न वाऽएष स्त्री न पुमान्यत्क्लीबो नेष्टिर्न पशुबन्धः सौत्रामणीति वदन्तस्तदु तथा न कुर्य्यादुभयम्वै सौत्रामणीष्टिश्च पशुबन्धश्च व्यृद्धमु वाऽएतन्मनुष्येषु यत्क्लीबो यज्ञमुखऽ एव ते यज्ञस्य व्यृद्धिन्दधति ये तथा कुर्वन्ति सोमविक्रयिणऽएव क्रीणीयात्सोमो वै सौत्रामणी यज्ञमुखऽएव तत्सोमरूपङ्करोति यज्ञस्य समृद्ध्यै ॥ १२ ॥

शतातृण्णा कुम्भी भवति । बहुधेव हि स व्यस्रवदथो शतोन्मानो वै यज्ञो यज्ञमेवावरुन्द्धे सुतम्भवति सदेवावरुन्धे चप्पम्भवत्यन्नाद्यस्यैवावरुद्ध्यै पवित्रम्भवति पुनन्ति ह्येनम्वालो भवति पाप्मनो व्यावृत्त्यै सुवर्ण्णᳬं हिरण्यं भवति रूपस्यैवावरुद्ध्यै शतमानं भवति शतायुर्वै पुरुषः शतेन्द्रियऽ आयुरेवेन्द्रियम्वीर्य्यमात्मन्धत्ते ॥ १३ ॥

---

तद्धैतत् अन्येऽध्वर्यवः—सीसेन क्लीबाच्छष्पाणि क्रीणंति । तत्तदिति । न वा एष स्त्री, न पुमान् । यत् क्लीबः । नेष्टिर्न पशुबंधः सौत्रामणीति वदंतः । तदु तथा न कुर्यात् । उभयं वै सौत्रामणी । इष्टिश्च पशुबंधश्च । व्यृद्धमु वा एतन्मनुष्येषु । यत् क्लीबः । यज्ञमुख एव ते यज्ञस्य व्यृद्धिं दधति । ये तथा कुर्वन्ति । सोमविक्रयिण एव क्रीणीयात् । सोमो वै सौत्रामणी यज्ञमुख एव तत्सोमरूपं करोति । यज्ञस्य समृद्ध्यै ॥ १२ ॥

( २२ ) शतातृण्णा कुंभी भवति । बहुधेव स व्यस्रवत् । अथो शतोन्मानो वै यज्ञो यज्ञमेवावरुंधे । ( २३ ) सतं भवति । सदेवावरुंधे । ( २४ ) चप्पं भवति । अन्नाद्यस्यैवावरुद्ध्यै ( २५ ) पवित्रं भवति । पुनंति ह्येनम् । ( २६ ) वालो भवति । पाप्मनो व्यावृत्त्यै । (२७) सुवर्णं ( २८ ) हिरण्यं भवति । रूपस्यैवावरुद्ध्यै । ( २९ ) शतमानं भवति । शतायुर्वै पुरुषः शतेंद्रियः । आयुरेवेन्द्रियं वीर्यमात्मन्धत्ते ॥ १३ ॥

---

अन्येऽध्वर्यवश्चरकाः । सीसेन क्लीबात् शष्पाणि क्रीणन्ति । न केवलं तर्हि तत्तत् अनेन निमित्तशब्द एवमर्थेन वा । ( एषष्ठीत्यादिवत् ? ) ॥ १२ ॥

'शतातृण्णा' शतमातृण्णानि छिद्राणि यस्याः सा शतातृण्णा । बहुधा हि सुतः सोमः । अथो अपि च 'शतोन्मानः, शतं उन्मानानि दक्षिणा अस्येति शतोन्मानः 'यज्ञः' ऊर्ध्वं मीयते । यजनार्थे

---

१-अंतःपात्यस्थाने चर्मणि सुरासोमविक्रयिणः सीसेन शष्पक्रयस्तोक्मानामूर्णाभिर्लाजानां सूत्रैः सुरासोमविक्रयिन् कव्यास्ते सुरासोमा इत्यामन्त्र्यामन्त्र्य सर्वेषु । क्लीबादेके का. श्रौ. सू. १९ । '८ १९ ।

( त्तऽआ ) आश्वत्थम्पात्रं भवति । ( त्यु ) अपचितिमेवावरुन्द्धऽ औदुम्बरं भवत्यूर्जमेवावरुन्द्धे नैयग्रोधम्भवति स्वधामेवावरुन्द्धे स्थाल्यो भवन्ति पृथिव्याऽ एवान्नाद्यमवरुन्द्धे ॥ १४ ॥

पालाशान्युपशयानि भवन्ति । ब्रह्म वै पलाशो ब्रह्मणैव स्वर्गं लोकं जयत्यपाष्ठिहस्य पत्रे भवतस्त्विषिमेव राज्यम्वयसामवरुन्धे षट्त्रिँशदेतानि भवन्ति षट्त्रिँशदक्षरा वै बृहती बार्हताः पशवो बृहत्यैवास्मै पशूनवरुन्धे ॥ १५ ॥

तदाहुः । ( र ) अन्यदेवत्याः पशवो भवन्त्यन्यदेवत्याः पुरोडाशा

---

( ३० ) आश्वत्थं पात्रं भवति । अपचितिमेवावरुंधे । ( ३१ ) औदुंबरं भवंति । ऊर्जमेवावरुंधे । ( ३२ ) नैयग्रोधं भवति । स्वधामेवावरुंधे । ( ३३ ) स्थाल्यो भवंति । पृथिव्या एवान्नाद्यमवरुंधे ॥ १४ ॥

( ३४ ) पालाशान्युपशयानि भवंति । ब्रह्म वै पलाशः । ब्रह्मणैव स्वर्गं लोकं जयति । अपाष्ठिहस्य ( ३५, ३६ ) पत्रे भवतः । त्विषिमेव राज्यं वयसामवरुंधे । षट्त्रिंशदेतानि भवंति । षट्त्रिंशदक्षरा वै बृहती । बार्हताः पशवः । बृहत्यैवास्मै पशूनवरुंधे ॥ १५ ॥

तदाहुः—अन्यदेवत्याः पशवो भवंति । अन्यदेवत्याः पुरोडाशाः । विलोमैतत्क्रियते । कथमेत-

---

भवति सुरायाः पयसोऽपि वा । सत्सतं सतशब्द उभयलिंग इति प्रदर्शितम् । वै मत्सः । सत इति अहिर्लिंगः । कबंधं वेति । सुरापचनार्थमेव सच्छब्दः । इति च लोके प्रसिद्धम् । शतमानं शतकृष्णलम् ॥ १३ ॥

आश्वत्थं पात्रं भवतीत्यादि । अश्वत्थादीनां विकार्यवचनम् । स्थाल्यो मार्तिक्यः सुराग्रहणार्थाः ॥ १४ ॥

पालाशान्युपशयानि भवंति । सुराग्रहाणां होमार्थानि पात्राणि । अस्य पार्ष्णिना श्येनादित्यागास्तात् । अपाष्ठिहा । आशिषि हन. डप्रत्ययः । अपाष्ठिहेत्यत्र क्विप् । अपाष्ठिहस्य पत्रे यजमानपावनार्थे भवतः । षट्त्रिंशत् । सर्वाण्यैवैतानि द्रव्याणि धूम्रादारम्य भवंति ॥ १५ ॥

अन्यदेवत्याः पशवः अन्यदेवत्याः पुरोडाशाः । इत्येतद्विलोम क्रियते । कथमेतत् सलोम भवतीति पशुपुरो-

---

१–आश्विनमाश्वत्थेन । का. श्रौ. सू. १९ । ४२ । ग्रहं गृह्णीयादित्यर्थः । एवमग्रेऽपि ।

२–सारस्वतमौदुंबरेण । का. श्रौ. सू १९ । ४४ । ३—ऐन्द्रं नैयग्रोधेन । का. श्रौ. सू. १९ । ४५ ।

४–आश्विनो धूम्रोऽजः १ सारस्वतो मेषः २ ऐंद्र ऋदभः ३ अनुशिशुर्वडवा ४ वृकलोमानि ५ व्याघ्रलोमानि ६ सिंहलोमानि ७ व्रीहयः ८ श्यामाकाः ९ गोधूमाः १० कुवलानि ११ उपवाकाः १२ बदराणि १३ यवाः १४ कर्कन्धूनि १५ शष्पांणि १६ तोक्मानि १७ सीसम् १८ ऊर्णाः १९ सूत्राणि २० ऊर्णासूत्रम् २१ शतातृण्णा कुंभी २२ सतम् २३ चप्पम् २४ पवित्रम् २५ वालः २६ सुवर्णम् २७ हिरण्यम् २८ शतमानम् २९ आश्वत्थं पात्रम् ३० औदुंबरं पात्रम् ३१ नैयग्रोधं पात्रम् ३२ पार्थिव्यः स्थाल्यः ३३ पालाशानि उपशयानि ३४ श्येनपत्रे ३५–३६ इति षट्त्रिंशत् द्रव्याणि ।

व्विलोमैतत्क्रियते कथमेतत्सुलोम भवतीत्यैन्द्रः पशूनामुत्तमो भवत्यैन्द्रः पुरोडाशानां प्रथमऽइन्द्रियम्वै व्वीर्य्यमिन्द्रऽ इन्द्रियेणैवास्माऽ इन्द्रियव्वीर्य्यꣳ सन्दधातीन्द्रियेणेन्द्रियम्वीर्य्यमवरुन्धे ॥ १६ ॥

सावित्रः पुरोडाशो भवति । सवितृप्रसूततायै व्वारुणो भवति व्वरुणो वाऽएतङ्गृह्णाति यः पाप्मना गृहीतो भवति व्वरुणेनैवैनम्वरुण्यान्मुञ्चत्यन्त्यो भवत्यन्ततऽएवैनम्वरुणपाशात्प्रमुञ्चति ॥ १७ ॥

( त्ये ) एकादशकपालऽऐन्द्रो भवति । ( त्ये ) एकादशाक्षरा वै त्रिष्टुबिन्द्रियमु वै व्वीर्य्यं त्रिष्टुबिन्द्रियस्यैव व्वीर्य्यस्यावरुद्ध्यै ॥ १८ ॥

द्वादशकपालः सावित्रो भवति । द्वादश वै मासाः सम्वत्सरस्य सम्वत्सरम्वाऽ अन्नाद्यमन्वायत्तꣳ सम्वत्सरादेवास्माऽअन्नाद्यमवरुन्धे ॥ १९ ॥

दशकपालो व्वारुणो भवति । दशाक्षरा वै व्विराडन्नं व्विराड्वरुणोऽन्नपतिर्व्वरुणेनैवास्माऽअन्नमवरुन्धे मध्यतऽएतैः पुरोडाशैः प्प्रचरति मध्यम्वाऽएतेषां योनिः स्वादेवैनान्योनेः प्रजनयति ॥ २० ॥

---

त्सलोम भवतीति । ऐंद्रः पशूनामुत्तमो भवति । ऐंद्रः पुरोडाशानां प्रथमः । इंद्रियं वै वीर्यम् इंद्रः । इंद्रियेणैवास्मा इंद्रियं वीर्यं संदधाति । इंद्रियेणेंद्रियं वीर्यमवरुंधे ॥ १६ ॥

सावित्रः पुरोडाशो भवति । सवितृप्रसूततायै । वारुणो भवति । वरुणो वा एतं गृह्णाति । यः पाप्मना गृहीतो भवति । वरुणेनैवैनं वरुण्यान्मुंचति । अंत्यो भवति । अंतत एवैनं वरुणपाशात्प्रमुंचाति ॥ १७ ॥

एकादशकपाल ऐंद्रो भवति । एकादशाक्षरा वै त्रिष्टुप् । इंद्रियमु वै वीर्यं त्रिष्टुप् । इन्द्रियस्यैव वीर्यस्यावरुद्ध्यै ॥ १८ ॥

द्वादशकपालः सावित्रो भवति । द्वादश वै मासाः संवत्सरस्य । संवत्सरं वा अन्नाद्यमन्वायत्तम् । संवत्सरादेवास्मा अन्नाद्यमवरुंधे ॥ १९ ॥

दशकपालो वारुणो भवति । दशाक्षरा वै विराट् । अन्नं विराट् । वरुणोऽन्नपतिः । वरुणेनै-

---

डाशानामुपन्यासो देवतांतरसंबन्धार्थः । इतरथा तु ऐन्द्रः पुरोडाशः सावित्रो वारुण इत्युक्ते कर्मान्तराणि वा प्राप्तान्येतानि । अनियमेन वा पशुपुरोडाशेषु देवताविचारः । न च प्रथमो देवताविधिः । प्रथमे पशुपुरोडाशे द्वितीयतृतीयः युज्यते । इह पुरोडाशानां क्रमाभावात् कर्मणश्च क्रमो विनियोजको भवति । पुनः पुरोडाशानां विशेषकस्तस्मादुपपन्नम् । गुणादसंबन्धार्थोऽयमुपन्यास इति । तत्रैन्द्रः प्रथमः । सावित्रो द्वितीयः । वारुणस्तृतीय इति देवता विधाय एकादशकपाल इति विधेयम् । मध्यत एतैरित्यनुवाद एव ॥ १६-२० ॥

---

१-पशुपुरोडाशान्निर्वपत्यैन्द्रं सावित्रं वारुणं दशकपालम् । का. श्रौ. सू. १९-८४ ।

वडवाऽनुशिशुर्द्दक्षिणा भवति । (त्यु) उभयम्वाऽएषा जनयत्यश्वञ्चा-श्वतरञ्चोभयꣳ सौत्रामणीष्टिश्च पशुबन्धश्चोभयस्यैवावरुद्ध्यै ॥ २१ ॥

इति तृतीयप्रपाठके तृतीयं ब्राह्मणम् ॥ १२ । ३ । ३ ॥ (७-२)

इन्द्रस्येन्द्रियमन्नस्य रसम् । (ꣳ) सोमस्य भक्षꣳ सुरयाऽऽसुरो नमुचिरहरत्सोऽश्विनौ च सरस्वतीञ्चोपाधावच्छेपानोऽस्मि नमुचये न त्वा दिवा न नक्तꣳ हनानि न दण्डेन न धन्वना न पृथेन न मुष्टिना न शुष्केण नार्द्रेणाथ मऽ इदमहार्षीदिदम्मऽआजिहीर्षथेति ॥ १ ॥

तेऽब्रुवन् । (न्नु) अस्तु नोऽत्राप्यथाहरामेति सह नऽएतदथाहरते-त्यब्रवीदिति ॥ २ ॥

तावश्विनौ च सरस्वती च । (चा) अपाम्फेनं वज्रमसिञ्चन्न शुष्को

---

वास्मा अन्नमवरुन्धे । मध्यत एतैः पुरोडाशैः प्रचरति । मध्यं वा एतेषां योनिः । स्वादेवैनान् योनेः प्रजनयति ॥ २० ॥

वडवाऽनुशिशुर्दक्षिणा भवति । उभयं वा एषा जनयति । अश्वं चाश्वतरं च । उभयं सौत्रा-मणी । इष्टिश्च पशुबन्धश्च । उभयस्यैवावरुद्ध्यै ॥ २१ ॥

इन्द्रस्येन्द्रियम् अन्नस्य रसम्, सोमस्य भक्षं सुरयाऽऽसुरो नमुचिरहरत् । सोऽश्विनौ च सरस्वतीं चोपाधावत् । शेपानोऽस्मि नमुचये । न त्वा दिवा न नक्तं हनानि । न दंडेन । न धन्वना । न पृथेन । न मुष्टिना । न शुष्केण । नार्द्रेण । अथ म इदमहार्षीत् । इदं म आजि-हीर्षथेति ॥ १ ॥

तेऽब्रुवन् । अस्तु नोऽत्रापि । अथाहरामेति । सह न एतत् अथाहरतेत्यब्रवीदिति ॥ २ ॥

तावश्विनौ च सरस्वती च अपां फेनं वज्रमसिञ्चन् । न शुष्को नार्द्र इति । तेनेंद्रो नमुचे-रासुरस्य व्युष्टायां रात्रौ, अनुदित आदित्ये, न दिवा न नक्तमिति शिर उदवासयत् ॥ ३ ॥

---

वडवाऽनुशिशुरिति । यदि गुणविधिः । यदि विशिष्टविधिः । उभयथा त्रयस्त्रिंशद्दक्षिणा भवन्तीत्यनेन (श. प. १२ । ७ । १ । १४) सह विकल्पे प्राप्ते सति षट्त्रिंशदेतानि भवन्तीति नित्यवत् वडबाय.: संख्यानात् समुच्चयो गम्यते ॥ २१ ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये द्वादशे कांडे सप्तमेऽध्याये द्वितीयं ब्राह्मणम् ॥ १२ । ७ । २ ॥

इन्द्रस्येन्द्रियमिति । "स यो भ्रातृव्यवान् स्यात् स सौत्रामण्या यजेत" इति । अयमपरो विनियोगः

---

१–त्रयस्त्रिंशतं दक्षिणा ददात्यनुशिशुं च वडवधेनुम् । का. श्रौ. सू. । १९–८८ ।

नार्द्रऽइति तेनेन्द्रो नमुचेरासुरस्य व्व्युष्टायाᳫं रात्रावनुदितऽ आदित्ये न दिवा न नक्तमिति शिरऽउदवासयत् ॥ ३ ॥

( च ) तस्मादेतदृषिणाऽभ्यनूक्तम् । ( म ) अपाम्फेनेन नमुचेः शिरऽ इन्द्रोदवर्त्तयः । व्विश्वा यदजय स्पृधऽ इति पाप्मा वै नमुचिः पाप्मानम्वाव तद्द्विषन्तं भ्रातृव्यᳫं हत्वेन्द्रियम्वीर्य्यमस्यावृङ्क्त स यो भ्रातृव्यवान्त्स्यात्स सौत्रामण्या यजेत पाप्मानमेव तद्द्विषन्तं भ्रातृव्यᳫं हत्वेन्द्रियम्वीर्य्यमस्य व्वृङ्क्ते तस्य शीर्षंश्छिन्ने लोहितमिश्रः सोमोऽतिष्ठत्तस्मादबीभत्सन्त तऽ एतदन्धसो व्विपानमपश्यन्त्सोमो राजाऽमृतᳫं सुतऽ इति तेनैनᳫं स्वदयित्वाऽऽत्मन्नदधत ॥ ४ ॥

स्वाद्वीन्त्वा स्वादुनेति सुराᳫं सन्दधाति । स्वदयत्येवैनां तीव्व्रान्तीव्व्रेणेतीन्द्रियमेवास्मिन्दधात्यमृताममृतेनेत्यायुरेवास्मिन्दधाति मधुमतीम्मधुमतेति रसमेवास्यान्दधाति सृजामि सᳫं सोमेनेति सोमरूपमेवैनाङ्करोति ॥ ५ ॥

---

तस्मादेतदृषिणाऽभ्यनूक्तम् । " अपां फेनेन नमुचेः शिर इन्द्रोदवर्तयः । विश्वा यदजयः स्पृधः "–( वा. सं. १९ । ७१ ) इति । पाप्मा वै नमुचिः । पाप्मानं वाव तद्द्विषंतं भ्रातृव्यं हत्वा, इन्द्रियं वीर्यमस्यावृंक्त । स यो भ्रातृव्यवान् स्यात् । स सौत्रामण्या यजेत । पाप्मानमेव तद्द्विषंतं भ्रातृव्यं हत्वा, इन्द्रियं वीर्यमस्य वृंक्ते । तस्य शीर्षंश्छिन्ने लोहितमिश्रः सोमोऽतिष्ठत् । तस्मादबीभत्संत । त एतदन्धसो विपानमपश्यन् । "सोमो राजाऽमृतं सुतः" ( वा. सं. १९ । ७२ । ७९ ) इति । तेनैनं स्वदयित्वाऽऽत्मन्नदधत ॥ ४ ॥

"स्वाद्वीं त्वा स्वादुना"–इति सुरां सन्दधाति । स्वदयत्येवैनाम् । " तीव्रां तीव्रेण "–इति । इन्द्रियमेवास्मिन् दधाति । "अमृताममृतेन"–इति । आयुरेवास्मिन् दधाति । "मधुमतीं

---

एतेन इतिहासेन दर्श्यते । तस्य नमुचेः शिरसि छिन्ने लोहितमिश्रः सोमः स्थितः । तस्मात् सोमात् देवा अबीभत्सन्त उद्विग्नाः । ते देवा एतत् शुक्रम् अन्धसः विपानं दृष्टवन्तः । दोषाद् विविच्य पीयते पानयोग्यं क्रियते अनेनेति विपानम् । कतमः । सोमो राजाऽमृतं सुत इति । तयोरेव वा सोमलोहिताधारत्वाय विपानं अपश्यन् । तेन एनं सोमं स्वदयित्वा अदनयोग्यं कृत्वा । आत्मनि अदधत स्थापितवन्तः । तद्वै देवा

---

१–ओदनौ चूर्णमासरैः संसृज्य स्वाद्वीं त्वाऽ स्वादुना त इति त्रिरात्रं निदधाति । का. श्रौ. सू. १९–२१ ।

सोमोऽस्यश्विभ्याम्पच्यस्व । सरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णे पच्यस्वेत्येता वाऽएतन्देवताऽअग्ग्रे यज्ञꣳ समभरंस्ताभिरेवैनꣳ सम्भरत्यथोऽएताऽएवैतद्देवता भागधेयेन समर्द्धयत्यासुनोति सुत्यायै तिस्रो रात्रीर्व्वसति तिस्रो हि रात्रीः सोमः क्रीतो व्वसति सोमरूपमेवैना-ङ्करोति ॥ ६ ॥

द्वे व्वेदी भवतः । ( तौ ) द्वा वाव लोकावित्याहुर्देवलोकश्चैव पितृलोकश्चेत्युत्तराऽन्या भवति दक्षिणाऽन्योत्तरो वै देवलोको दक्षिणः पितृलोकऽउत्तरयैव देवलोकमवरुन्धे दक्षिणया पितृलोकम् ॥ ७ ॥

( म्पु ) पयश्च सुरा च भवतः । सोमो वै पयोऽन्नꣳ सुरा पयसैव सोमपीथमवरुन्धे सुरयाऽन्नाद्यं क्षत्त्रम्वै पयो व्विट् सुरा सुराम्पूत्वा पयः पुनाति व्विशऽएव तत्क्षत्त्रञ्जनयति व्विशो हि क्षत्त्रञ्जायते ॥ ८ ॥

---

मधुमता"–इति । रसमेवास्यां दधाति । "सृजामि सं सोमेन"–( वा. सं. १९ । १ ) इति । सोमरूपमेवैनां करोति ॥ ५ ॥

"सोमोऽस्यश्विभ्यां पच्यस्व, सरस्वत्यै पच्यस्व, इन्द्राय सुत्राम्णे पच्यस्व"–( वा. सं. १९।१) इति । एता वा एतं देवता अग्रे यज्ञं समभरन् । ताभिरेवैनं संभरति । अथो एता एवैतद्देवता भागधेयेन समर्द्धयति । आसुनोति सुत्यायै । तिस्रो रात्रीर्वसति । तिस्रो हि रात्रीः सोमः क्रीतो वसति । सोमरूपमेवैनां करोति ॥ ६ ॥

द्वे वेदी[1] भवतः । द्वौ वाव लोकावित्याहुः । देवलोकश्चैव पितृलोकश्चेति । उत्तराऽन्या भवति । दक्षिणाऽन्या । उत्तरो वै देवलोकः । दक्षिणः पितृलोकः । उत्तरयैव देवलोकमवरुन्धे । दक्षिणया पितृलोकम् ॥ ७ ॥

पयश्च सुरा च भवतः । सोमो वै पयः । अन्नं सुरा । पयसैव सोमपीथमवरुन्धे । सुरयाऽन्ना-

---

अद्यापि " सोमो राजा "–( वा. सं. १९ । ७२–७९ ) इत्यनुवाकेन पयोग्रहांश्चोपतिष्ठमानाः स्वदयन्तीत्युपसंहारो द्रष्टव्यः । स सवग्रहणोत्तरकालमेव वक्तव्यः । स तत्रेतिहासप्रसङ्गात् अकृत । " स्वाद्वीं त्वा स्वादुना " इत्यनेन मन्त्रेण " अꣳशुना ते अꣳशुः"–( वा. सं. २० । २७) इत्यनेन च लिंगकरणाभ्यां पुरा कृतमिति शेषः । सुरार्थानि ओदनचूर्णमासराणि सन्दधाति स्थापयति ॥ १–९ ॥

आसुनोति । तानि च द्रवद्रव्याणि । किमर्थं ? सुत्यायै अभिषवाय सौमिकाय । सोमो हि संपाद्यते इत्यभिप्रायः ॥ १–१२ ॥

---

१–वेदी मिमीते वरुणप्रघासवत् । प्रक्रमत् तर्विनाहतेनोत्तरा ९ सोमवत् । का. श्री. सू. १९ । १८–१९ ।

व्वायोः पूतः पवित्रेण । प्प्रत्यङ्क्सोमोऽ अतिद्रुतऽ इति सोमातिपूतस्य पुनाति यथारूपमेवैनम्पुनातीन्द्रस्य युज्यः सखेति यदेवास्य तेनेन्द्रियम्वीर्य्यमतिक्रान्तं भवति तदस्मिन्पुनर्दधाति ॥ ९ ॥

व्वायोः पूतः पवित्रेण । प्प्राङ्क्सोमोऽ अतिद्रुत ऽइति सोमवामिनः पुनाति यथारूपमेवैनम्पुनातीन्द्रस्य युज्यः सखेति यदेवास्य तेनेन्द्रियम्वीर्य्यमतिक्रान्तम्भवति तदस्मिन्पुनर्दधाति ॥ १० ॥

पुनाति ते परिस्रुतमिति । समृद्धिकामस्य पुनाति समृद्ध्यै सोमꣳ सूर्य्यस्य दुहितेति श्रद्धा वै सूर्य्यस्य दुहिता श्रद्धयैष सोमो भवति श्रद्धयैवैनꣳ सोमङ्करोति व्वारेण शश्वता तनेति व्वालेन ह्येषा पूयते ॥ ११ ॥

ब्रह्म क्षत्त्रम्पवतऽ इति पयः पुनाति । ब्रह्मणऽएव तत्क्षत्त्रञ्जनयाति ब्रह्मणो हि क्षत्त्रञ्जायते तेजऽइन्द्रियमिति तेजऽएवास्मिन्निन्द्रियम्वीर्य्यन्दधाति सुरया सोमऽइति सुरया हि सोमः सुतऽ आसुतऽ इत्यासुताद्धि सूयते मदायेति मदाय वाव सोमो मदाय सुराभावेतु सोममदश्च सुरा-

---

धम् । क्षत्रं वै पयः । विट् सुरा । सुरां पूत्वा पयः पुनाति । विश एव तत् क्षत्रं जनयाति । विशो हि क्षत्रं जायते ॥ ८ ॥

"वायोः पूतः पवित्रेण प्रत्यङ्क्सोमो अतिद्रुतः"–इति सोमातिपूतस्य पुनाति । यथारूपमेवैनं पुनाति । "इन्द्रस्य युज्यः सखा"–( वा. सं. १९ । ३ ) इति । यदेवास्य तेनेन्द्रियं वीर्यमतिक्रान्तं भवति । तदस्मिन् पुनर्दधाति ॥ ९ ॥

"वायोः पूतः पवित्रेण प्राङ्क्सोमो अतिद्रुतः"–इति सोमवामिनः पुनाति । यथारूपमेवैनं पुनाति । "इन्द्रस्य युज्यः सखा"–( वा० सं० १९ । ३ ) इति । यदेवास्य तेनेन्द्रियं वीर्यमतिक्रान्तं भवति । तदस्मिन्पुनर्दधाति ॥ १० ॥

"पुनाति ते परिस्रुतम्"–इति समृद्धिकामस्य पुनाति । समृद्ध्यै । "सोमं सूर्यस्य दुहिता"–इति । श्रद्धा वै सूर्यस्य दुहिता । श्रद्धयैष सोमो भवति । श्रद्धयैवैनं सोमं करोति । "वारेण शश्वता तना"–( वा० सं० १९ । ४ ) इति । वालेन ह्येषा पूयते ॥ ११ ॥

"ब्रह्म क्षत्रं पवते"–इति पयः पुनाति । ब्रह्मण एव तत्क्षत्रं जनयाति । ब्रह्मणो हि क्षत्रं जायते । "तेज इन्द्रियम्"–इति । तेज एवास्मिन्निन्द्रियं वीर्यं दधाति । "सुरया सोमः"–

---

१–वायोः पूत इति सोमातिपूतस्य । का. श्रौ. सू. १९ । ३५ । २–प्राङिति तद्वामिनः । का. श्रौ. सू. १९ । ३६ ।
३–सते पुनाति गोऽश्ववाल्लेन पुनाति ते परिस्रुतमिति ( का. श्रौ. सू. १९ । ३४ ) समृद्धिकामस्येति अग्रत्यश्रुतेरेव ॥
४–उत्तरस्यां पयो वैतसेऽजाविलोमपवित्रेण ब्रह्म क्षत्रमिति । का. श्रौ. सू. १९ । ३७ ।

मदश्चावरुन्धे शुक्रेण देव देवताः पिपृग्धीति शुक्रेण देव देवताः प्रीणीहीत्येवैतदाह रसेनान्नं यजमानाय धेहीति रसमेवान्नं यजमाने दधाति पूर्वे पयोग्रहा गृह्यन्ते परे सुराग्रहा विशन्तत्क्षत्त्रस्यानुवर्त्मानङ्करोति ॥ १२

कुविदङ्ग यवमन्तो यवञ्चिदिति । पयोग्रहान्गृह्णाति सोमाᳫँशवो वै यवाः सोमः पयः सोमेनैवैनᳫँ सोमङ्करोत्येकया गृह्णात्येकधैव यजमाने श्रियन्दधाति श्रीर्हि पयः ॥ १३ ॥

(यो) नाना हि वान्देवहितᳫँ सदस्कृतमिति । सुराग्रहान्गृह्णाति नाना हि सोमश्च सुरा च देवहितमिति देवहिते ह्येते नाना सदस्कृतमिति द्वे हि व्वेदी भवतो मा सᳫँसृक्षाथाम्परमे व्योमन्निति पाप्मनैवैनं व्व्यावर्तयति सुरा त्वमसि शुष्मिणीति सुरामेव सुराङ्करोति सोमऽ एषऽ इति सोममेव सोमङ्करोति मा मा हिᳫँसीः स्वां योनिमाविशन्तीति यथायोन्येवैनां व्व्यावर्तयत्यात्मनोऽहिᳫँसायाऽ एकया गृह्णात्येकधैव यजमाने यशो दधाति यशो हि सुरा ॥ १४ ॥

---

इति । सुरया हि सोमः । " सुत आसुतः "—इति । आसुताद्धि सूयते । " मदाय "—इति । मदाय वाव सोमः । मदाय सुरा । उभावेव सोममदं च सुरामदं चावरुन्धे । " शुक्रेण देव देवताः पिपृग्धि "—इति । शुक्रेण देव देवताः प्रीणीहीत्येवैतदाह । " रसेनान्नं यजमानाय धेहि "—( वा० सं० १९ । ९ ) इति । रसमेवान्नं यजमाने दधाति । पूर्वे पयोग्रहा गृह्यन्ते । परे सुराग्रहाः । विशं तत्क्षत्त्रस्यानुवर्त्मानं करोति ॥ १२ ॥

" कुविदंग यवमन्तो यवं चित "—( वा० सं० १९ । ६ ) इति पयोग्रहान् गृह्णाति । सोमांशवो वै यवाः । सोमः पयः । सोमेनैवैनं सोमं करोति । एकया गृह्णाति । एकधैव यजमाने श्रियं दधाति । श्रीर्हि पयः ॥ १३ ॥

" नाना हि वां देवहितं सदस्कृतम् "—इति सुराग्रहान् गृह्णाति । नाना हि सोमश्च सुरा च । देवहितमिति । देवहिते ह्येते । नाना सदस्कृतमिति । द्वे हि वेदी भवतः । " मा सं-

---

कुविदंग यवमन्तो यवं चिदिति पयोग्रहान् गृह्णातीति, पयोग्रहाणामुत्पत्तिवाक्यम् । मान्त्रवार्णिक्य एव सुरासोमादयो देवताः ॥ १३ ॥

नाना हि वां देवहितं सदस्कृतमिति सुराग्रहान् गृह्णातीति, सुराग्रहाणामुत्पत्तिवाक्यम् । मान्त्रवार्णिक्य एव सुरासोमादयो देवताः ॥ १४ ॥

---

१—पयोग्रहान् गृह्णाति कुविदंगेति । पृथगुपयामयोनी । का. श्रौ. सू. १९ । ३९ । ४० ।

२—स्थालीभिः सौरान्नाना हि वामिति । व्यत्यासम् । पयोग्रहान्वा पूर्वम् । का. श्रौ. सू. १९ । ४७ । ४८ ।

क्षत्त्रम्वै पयोग्ग्रहाः । ( ० ) व्विट् सुराग्ग्रहा यदुव्यतिषक्तान्गृह्णीयाद्विशं क्षत्त्राद्व्युवच्छिन्द्यात्क्षत्त्रम्विशः पापवस्यसङ्कुर्य्याद्यज्ञस्य व्यृद्धिं व्युतिषक्तान्गृह्णाति व्विशमेवु क्षत्त्रेण सुन्दधाति क्षत्त्रम्विशा पापवस्यसुस्य व्युावृत्त्यै यज्ञस्य सुमृद्ध्यै ॥ १९ ॥

प्राणा वै पयोग्ग्रहाः । शुरीरꣳ सुराग्ग्रहा यदुव्यतिषक्तान्गृह्णीयाच्छुरीरम्प्राणेभ्यो व्युवच्छिन्द्यात्प्राणाञ्छुरीरात्प्रमायुको युजमानः स्याद्व्यतिषक्तान्गृह्णाति शुरीरमेवु प्राणैः सुन्दधाति प्राणाञ्छुरीरेणाथोऽ आयुरेवास्मिन्दधाति तुस्मात्सौत्रामुण्येजानः सुर्व्वमायुरेत्युथो युऽ एवुमेतद्वेद ॥ १६ ॥

सोमो वै पयोग्ग्रहाः । (ऽ) अुन्नꣳ सुराग्ग्रहा युत्पयोग्ग्रहाश्च सुराग्ग्रहाश्च गृह्युन्ते सोमपीथं चैवान्नाद्यञ्चावरुन्धे ॥ १७ ॥

---

सक्षाथां परमे व्योमन् "–इति । पाप्मनैवैनं व्यावर्तयति । "सुरा त्वमसि शुष्मिणी "–इति । सुरामेव सुरां करोति । "सोम एषः "–इति । सोममेव सोमं करोति । "मा मा हिंसीः स्वां योनिमाविशन्ती "–( वा. सं. १९ । ७ ) इति । यथायोन्यैवैनां व्यावर्तयति । आत्मनोऽहिंसायै । एकया गृह्णाति । एकधैव यजमाने यशो दधाति । यशो हि सुरा ॥ १४ ॥

क्षत्त्रं वै पयोग्रहाः । विट् सुराग्रहाः । यदव्यतिषक्तान् गृह्णीयात् । विशं क्षत्त्रात् व्यवच्छिन्द्यात् । क्षत्त्रं विशः पापवस्यसं कुर्यात् । यज्ञस्य व्यृद्धिम् । व्यतिषक्तान् गृह्णाति । विशमेव क्षत्त्रेण सन्दधाति । क्षत्त्रं विशा । पापवस्यसस्य व्यावृत्त्यै । यज्ञस्य समृद्ध्यै ॥ १९ ॥

प्राणा वै पयोग्रहाः । शरीरं सुराग्रहाः । यदव्यतिषक्तान् गृह्णीयात् । शरीरं प्राणेभ्यो व्यवच्छिन्द्यात् । प्राणान् शरीरात् । प्रमायुको यजमानः स्यात् । व्यतिषक्तान् गृह्णाति । शरीरमेव प्राणैः सन्दधाति । प्राणान् शरीरेण । अथो आयुरेवास्मिन् दधाति । तस्मात् सौत्रामण्येजानः सर्वमायुरेति । अथो य एवमेतद्वेद ॥ १६ ॥

सोमो वै पयोग्रहाः । अन्नं सुराग्रहाः । यत्पयोग्रहाश्च सुराग्रहाश्च गृह्यन्ते । सोमपीथं चैवान्नाद्यं चावरुन्धे ॥ १७ ॥

---

व्यतिषक्ताः अन्योऽन्यमतिक्रान्ताः । सक्तांश्च गृह्णाति । पयोग्रहं गृहीत्वा सुराग्रहं गृह्णाति । सुराग्रहं गृहीत्वा पयोग्रहान् गृह्णाति । पुनरप्येवमेव । इत्येवं ब्राह्मणमेव ॥ १९ ॥

गोधूमोपवाकयवचूर्णैः आरण्येन कुवलबदरकर्कन्धुचूर्णैः । अथ पिप्पली वचा वली हंत्री । देवता रुद्रः । घोराः

---

१–गोधूमकुवलचूर्णानि चावपति तेजोऽसीति । ( आश्विने ग्रहे ) उपवाकबदरचूर्णानि च वीर्यमसीति । ( सारस्वते ग्रहे ) यवकर्कन्धुचूर्णानि बलमसीति । ( ऐन्द्रे ग्रहे ) का. श्रौ. सू. १९ । ४३–४४–४६ ।

२–खर्जूरकं त्रिफला चैव शुण्ठी चैव पुनर्नवा । चतुर्जातकसंयुक्तं पिप्पली गजपिप्पली । वंशो वका बृहच्छत्रा चित्रकं चेन्द्रवारुणी । अश्वगन्धा समुत्पाटय मूलान्येतानि निर्दिशेत् । धान्यकं च यवानी च जरिक कृष्णजीरकम् । द्वे हरिद्रे वचा चैवेति ॥

पशुवो वै पयोग्ग्रहाः । (ऽ) अन्नᳪ सुराग्ग्रहा यत्पयोग्ग्रहाश्च सुराग्ग्रहाश्च गृह्यन्ते पशूंश्चैवान्नाद्यञ्चावरुन्धे ॥ १८ ॥

ग्ग्राम्या वै पशुवः पयोग्ग्रहाः । (ऽ) आरण्याः सुराग्ग्रहा यत्पयोग्ग्रहाश्च सुराग्ग्रहाश्च गृह्यन्ते ग्ग्राम्यांश्चैव पशूनारण्यांश्चावरुन्धे ग्ग्राम्येण चान्नेनारण्येन च पयोग्ग्रहाञ्छ्रीणाति तस्माद्ग्राम्याणाम्पशूनाङ्ग्राम्यञ्चैवान्नाद्यमारण्यञ्चावरुद्धम् ॥ १९ ॥

( न्तु ) तदाहुः । ( रे ) एतस्यै वाऽ एतदघलायै देवतायै रूपं यदेते घोराऽ आरण्याः पशुवो यदेतेषाम्पशूनां लोमभिः पयोग्ग्रहाञ्छ्रीणीयाद्रुद्रस्यास्ये पशूनुपिदध्यादपशुर्य्यजमानः स्याद्यन्न श्रीणीयादनवरुद्धाऽ अस्य पशुवः स्यू रुद्रो हि पशूनामीष्टऽ इति सुराग्ग्रहानेवैतेषाम्पशूनां लोमभिः श्रीणाति सुरायामेव तद्रौद्रन्दधाति तस्मात्सुराम्पीत्वा रौद्रमनाऽ अथोऽ आरण्येष्वेव पशुषु रुद्रस्य हेतिन्दधाति ग्ग्राम्याणाम्पशूनामुहिᳪसायाऽ अवरुद्धाऽ अस्य पशुवो भवन्ति न रुद्रस्यास्ये पशूनुपिदधाति ॥ २० ॥

---

पशवो वै पयोग्रहाः । अन्नं सुराग्रहाः । यत्पयोग्रहाश्च सुराग्रहाश्च गृह्यन्ते । पशूंश्चैवान्नाद्यं चावरुन्धे ॥ १८ ॥

ग्राम्या वै पशवः पयोग्रहाः । आरण्याः सुराग्रहाः । यत्पयोग्रहाश्च सुराग्रहाश्च गृह्यन्ते । ग्राम्यांश्चैव पशूनारण्यांश्चावरुन्धे । ग्राम्येण चान्नेनारण्येन च पयोग्रहान् श्रीणाति । तस्मात् ग्राम्याणां पशूनां ग्राम्यं चैवान्नाद्यमारण्यं चावरुद्धम् ॥ १९ ॥

तदाहुः—एतस्यै वा एतदघलायै देवतायै रूपम् । यदेते घोरा आरण्याः पशवः । यदेतेषां पशूनां लोमभिः पयोग्रहान् श्रीणीयात् । रुद्रस्यास्ये पशूनपिदध्यात् । अपशुर्यजमानः स्यात् । यन्न

---

हर्तारः आरण्याः पशवः सिंहवृकव्याघ्राः । रुद्रस्य आरण्यपशुलोमानि । वृकस्य आस्ये मुखे । पशून् ग्रहान् । यान्युग्ररूपार्थत्वात् । अपिदध्यात् संस्थापयेत् । ( तृयावत्यः ? )। अपशुर्यजमानः स्यात् । आरण्यानां लोमभिः किंचिदपि श्रीणीयात् । ततः अनवरुद्धाः अस्वीकृताः । अनादृताः अस्य यजमानस्य अनवरुद्धाः पशवः स्युः । (क्वचिदपि रुद्रस्य नक्तावक्तत्वाच्छाणं सुलोमद्वारेण मन्वीभक्ष्याराच्यं)। तदधीनान् पशूनवलेत्स्यतीत्यभिप्रायः । कथं पुना रुद्रे आमक्षायास्ये पशवोऽवरुद्धा भवन्तीत्यर्थः । सुराग्रहानेव एतेषामारण्यानां लोमभिः श्रीणाति श्रयति ।

---

१–सुराग्रहान् श्रीणात्योजोऽसीति वृकव्याघ्रसिंहलोमभिः प्रतिमन्त्रं मिश्रैः । एके यथासंख्यम् । का॰ श्रौ॰ सू॰ १९ । ४२।५० ।

या व्याघ्रम्विषूचिका । ( को ) उभौ व्वृकञ्च रक्षति । श्येनम्पतत्रिणꣳ सिꣳहꣳ सेमम्पात्वꣳहसः ॥ यदापिपेष मातरम्पुत्रः प्रमुदितो धयन् । एतत्तदग्ने ऽ अनृणो भवाम्यहतौ पितरौ मयेति ॥ २१ ॥

( त्य ) अध्वर्युश्च प्रतिप्रस्थाता च । जघनेन व्वेदिं प्राञ्चमावृत्तं यज-मानꣳ श्येनपत्राभ्यामूर्ध्वञ्चावाञ्चञ्च पावयतः प्राणोदानयोस्तद्रूपम्प्राणो-दानावेवावरुन्धऽऊर्ध्वश्च ह्ययमवाङ्च प्राणऽ आत्मानमनुसञ्चरति सम्पृच स्थ सम्मा भद्रेण पृङ्क्तेति पयोग्रहान्त्सम्मृशति श्रियैवैनं यशसा समर्द्धयति व्विपृच स्थ व्वि मा पाप्मना पृङ्क्तेति सुराग्रहान्पाप्मनैवैनं व्व्यावर्तयति ॥ २२ ॥

इति तृतीयप्रपाठके चतुर्थं ब्राह्मणम् ॥ १२–३–४ ॥ ( ७. ३. ) ॥

सप्तमोऽध्यायश्च समाप्तः ॥ १२ । ७ ॥

कण्डिकासंख्या ॥ ५७ ॥

---

श्रीणीयात् । अनवरुद्धा अस्य पशवः स्युः । रुद्रो हि पशूनामीष्टे इति । सुराग्रहानेवैतेषां पशूनां लोमभिः श्रीणाति । सुरायामेव तत् रौद्रं दधाति । तस्मात् सुरां पीत्वा रौद्रमनाः । अथो आरण्ये-ष्वेव पशुषु रुद्रस्य हेतिं दधाति । ग्राम्याणां पशूनामहिंसायै । अवरुद्धा अस्य पशवो भवंति । न रुद्रस्यास्ये पशूनपिदधाति ॥ २० ॥

" यो व्याघ्रं विषूचिकोभौ वृकं च रक्षति । श्येनं पतत्रिणं सिंहं सेमं पात्वंहसः ॥ यदापिपेष मातरं पुत्रः प्रमुदितो धयन् । एतत्तदग्ने अनृणो भवाम्यहतौ पितरौ मया " ( वा. सं. १९ । १० । ११ ) इति ॥ २१ ॥

अध्वर्युश्च प्रतिप्रस्थाता च जघनेन वेदिं प्राचमावृत्तं यजमानं श्येनपत्राभ्यामूर्ध्वं चावांचं च पावयतः । प्राणोदानयोस्तत् रूपम् । प्राणोदानावेवावरुंधे । ऊर्ध्वश्च ह्ययमवाङ्च प्राण आत्मा-नमनु संचरति । " संपृचः स्थ सं मा भद्रेण पृंक्त "–इति पयोग्रहान् संमृशति । श्रियैवैनं

---

सुरायामेवैतत् रौद्रं रूपं दधाति । तस्मात् यज्ञानुकारेण लोकेऽपि सुरां पीत्वा रौद्रचित्तः जिघांसुः पुरुषो भवतीति । अथ अयो आरण्येष्वेव पशुमृगवराहमहिषगवयादिषु रुद्रस्य स्वभूतं हेतिमायुधम्, सिंहस्य वृक-व्याघ्रात्मकं दधाति । किमर्थं ? ग्राम्याणां गवादीनां पशूनामहिंसायै । व्याघ्रादयः सामान्यतः एनानारण्यानिव हिंसिष्यंति । न ग्राम्यान्हित्वा हिंसाभिप्रायः । कथं पुनः । सुराग्रहान् श्रीणन्ति । आस्येषु रुद्रस्य हि निदधाति ।

---

१ दीक्षावत्पावयतोऽन्तःपात्ये श्येनपत्राभ्यां या व्याघ्रमिति । अग्निं प्रेक्षयति यदापिपेषेति । पयोग्रहसंमर्शनं संपृच स्थेति । विपृच स्थेति सौराणाम् का. श्रौ. सू. १९ । ५३–५६ ।

  

यशसा समर्द्धयति । " विपृचः स्थ वि मा पाप्मना पृंक्त "–( वा. सं. १९ । ११ ) इति सुराग्रहान् । पाप्मनैवैनं व्यावर्तयति ॥ २२ ॥

---

ग्राम्या वै पशवः पयोग्रहा आरण्याः सुराग्रहा इति । सुराग्रहाणामारण्यपशुत्ववचनात् । एवं हि पशुपतिमाभजतोऽस्य यजमानस्यावरुद्धा अस्य पशवो भवंति पशवो गृहपतिव्यवहाराच्च । न रुद्रस्य मुखे पशून्दधाति । या व्याघ्रमिति द्वाभ्यामृग्भ्यां यजमानं यावतः पाप्मनो व्यावर्तयति वियोजयति ॥ १६–२२ ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये द्वादशकाण्डे सप्तमेऽध्याये तृतीयं ब्राह्मणम् ॥ १२ । ७ । ३ ॥

नागस्वामिसुतोऽवन्त्यां पाराशर्यो वसन्हरिः ।
श्रुत्यर्थं दर्शयामास शक्तितः पौष्करीयकः ॥ १ ॥
श्रीमतोऽवन्तिनाथस्य विक्रमार्कस्य भूपतेः ।
धर्माध्यक्षो हरिस्वामी व्याख्यच्छातपथीं श्रुतिम् ॥ २ ॥
भूभर्त्रा विक्रमार्केण क्लृप्तां कनकवेदिकाम् ।
दानायाध्यस्य कृतवान् श्रुत्यर्थविवृतिं हरिः ॥ ३ ॥

इति श्रीसर्वविद्यानिधानकवीन्द्राचार्यसरस्वतीनां श्रीहरिस्वामिनां कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये द्वादशकाण्डे सप्तमोऽध्यायः समाप्तः ॥ १२–७ ॥



# अथाष्टमेऽध्याये प्रथमं ब्राह्मणम् ।
## तृतीयप्रपाठके च पञ्चमं ब्राह्मणम् ।

इन्द्रस्य वै यत्र । ( त्रे ) इन्द्रियाणि वीर्य्याणि व्युदक्रामंस्तानि देवाऽ एतेनैव यज्ञेन पुनः समदधुर्य्यत्पयोग्रहाश्च सुराग्रहाश्च गृह्यन्तऽ इन्द्रियाण्येवास्मिंस्तद्वीर्य्याणि पुनः सन्दधत्युत्तरेऽग्नौ पयोग्रहाञ्जुह्वति शुक्रेणैवैनन्तत्सोमपीथेन समर्द्धयति ॥ १ ॥

स जुहोति । सुरावन्तम्बर्हिषदꣳ सुवीरमिति सुरावान्वाऽ एष बर्हिषद्यज्ञो यत्सौत्रामणी बर्हिषैवैनं यज्ञेन समर्द्धयति यज्ञꣳ हिन्वन्ति महिषा नमोभिरित्यृत्विजो वै महिषा यज्ञो नम ऽऋत्विग्भिरेव यज्ञꣳ समर्द्धयति यज्ञेन यजमानन्दधानाः सोममिति सोमपीथमेवास्मिन्दधाति दिवि देवतास्विति दिव्येवैनन्देवतासु दधाति मदेमेन्द्रमिति मदाय वाव सोमो मदाय सुरोभावेव सोममदश्च सुरामदश्चावरुन्धे यजमानाः स्वर्काऽइत्यर्को वै देवानामन्नमन्नं यज्ञो यज्ञेनैवैनमन्नाद्येन समर्द्धयति हुत्वा भक्षयन्ति समृद्धमेवास्य तद्वर्द्धयन्ति ॥ २ ॥

---

इन्द्रस्य वै यत्रेन्द्रियाणि वीर्याणि व्युदक्रामन् । तानि देवा एतेनैव यज्ञेन पुनः समदधुः । यत्पयोग्रहाश्च सुराग्रहाश्च गृह्यन्ते । इन्द्रियाण्येवास्मिन् तद्वीर्याणि सन्दधाति । उत्तरेऽग्नौ पयोग्रहान् जुह्वति । शुक्रेणैवैनं तत्सोमपीथेन समर्द्धयति ॥ १ ॥

स जुहोति " सुरावन्तं बर्हिषदꣳ सुवीरम् "–इति । सुरावान्वा एष बर्हिषद्यज्ञो यत्सौत्रामणी । बर्हिषैवैनं यज्ञेन समर्द्धयति । " यज्ञं हिन्वन्ति महिषा नमोभिः "–इति । ऋत्विजो वै महिषाः । यज्ञो नमः । ऋत्विग्भिरेव यज्ञं समर्द्धयति । यज्ञेन यजमानम् । "दधानाः सोमम्"–इति । सोमपीथमेवास्मिन् दधति । "दिवि देवतासु"–इति । दिव्येवैनं देवतासु दधाति । "मदेमेन्द्रम्"–

---

इंद्रस्य वै यत्र । उत्तरेऽग्नौ पयोग्रहान् दक्षिणे सुराग्रहान् हुत्वा भक्षयन्ति । परिक्रीतो वा भक्षयेत् ।

---

१–सुरावन्तमिति जुहोति । ( का. श्रौ. सू. १९ । ६४ ) त्रीनपि पयोग्रहान् सहैवाध्वर्युः ॥

२–पालाशैः सौरान् न मृन्मयमाहुतिमानश इति श्रुतेर्यस्त इति । (का. श्रौ. सू. १९।६५) पालाशैरुलूखलैः प्रतिप्रस्थाताऽत्र ।

३–अध्वर्युप्रतिप्रस्थाताऽग्नीध्रमश्विनेत्याश्विनं भक्षयन्ति द्विर्द्विरावर्तम् । का. श्रौ. सू. १९ । ६६ । होतृब्रह्ममैत्रावरुणाः सारस्वतमाश्विनवत् । शेषꣳ शेषमासिंचत्युत्तरे पूर्वस्य । ऐन्द्रं यजमानः । का. श्रौ. सू. १९ । ६७–६९ ।

४–यदत्रेति सौरान् भक्षयन्ति यथाभक्षितं प्राचीनावीतिनो दक्षिणतः । दक्षिणतो विहारस्य । प्राणभक्षमेके । का. श्रौ. सू. १९ । ७० । ७१ ।

५–परिक्रीतो वा वैश्यराजन्ययोरन्यतरः । का. श्रौ. सू. १९ । ७२ ।

स भक्षयति । यमश्विना नमुचेरासुरादधीत्यश्विनौ ह्येतन्नमुचेरध्या- हरताꣳ सरस्वत्यसुनोदिन्द्रियायेति सरस्वती ह्येतमसुनोदिन्द्रियाये- मन्तꣳ शुक्रम्मधुमन्तमिन्दुमिति शुक्रो वाऽ एष मधुमानिन्दुर्य्यत्सोमः सोमꣳ राजानमिह भक्षयामीति सोमऽएवास्य राजा भक्षितो भवति दक्षिणेऽग्नौ सुराग्रहाञ्जुहोति पाप्मनैवैनं तद्व्यावर्तयन्ति ॥ ३ ॥

---

इति । मदाय वाव सोमः । मदाय सुरा । उभावेव सोममदं च सुरामदं चावरुन्धे । " यजमानाः स्वर्काः "-( वा० सं० १९ । ३२ ) इति । अर्को वै देवानामन्नम् । अन्नं यज्ञः । यज्ञेनैवैनमन्नाद्येन समर्द्धयति । हुत्वा भक्षयन्ति । समृद्धमेवास्य तद् वर्द्धयन्ति ॥ २ ॥

स भक्षयति " यमश्विना नमुचेरासुरादधि "-इति । अश्विनौ ह्येतन्नमुचेरध्याहरताम् । " सरस्वत्यसुनोदिंद्रियाय "-इति । सरस्वती ह्येतमसुनोत् इंद्रियाय । " इमन्तं शुक्रं मधुमंतमिंदुम् "-इति । शुक्रो वा एष मधुमानिन्दुः यत्सोमः । " सोमं राजानमिह भक्षयामि "-( वा० सं० १९ । ३४ । ) इति । सोम एवास्य राजा भक्षितो भवति । दक्षिणेऽग्नौ सुराग्रहान् जुहोति । पाप्मनैवैनं तद् व्यावर्तयंति ॥ ३ ॥

---

अंगारेषु[1] वा जुहोति । प्रक्षालनेनोपसिंचति[2] पितरः[3] शुंधध्वमिति जपति । परिस्रुच्छेषं[4] शतातृण्णाऽधिक्षारयति पुनंतुमेति नवर्चं वाचयन् क्षारपाते यजमानश्च दक्षिणेऽग्नावाज्याहुतिं[5] च जुहोति । उत्तरेऽग्नौ[6] पयआहुतिं च । भक्षयंति[7] । हिरण्येन[8] च मार्जयंते । इत्येतदत्र ब्राह्मणे प्रसन्नप्रायमेव । उत्तरेऽग्नौ पयोग्रहान् जुहोतीति बहुवचनं होत्रादिसहकार्यपेक्षम् । शुक्रेणैवैनं तत्सोमपीथेनेति । न पुनः पयआत्मकेनासोमपीथेन । एवं यजमानः समर्द्धयति । सुराबंध एष पथः । या सौत्रामणी नाम्नः । तत्र ग्रहद्वारेण सुराः । तान्निपशुबर्हिषदः । यद्बर्हिरेव एनं यजमानं समर्द्धयति । ऋत्विजो वै महिषाः महांतः । यज्ञः यज्ञसाधनं मनस्वतीर्वा । ऋत्विग्भिरेव यज्ञं समर्द्धयति यज्ञं हविर्ऋत्विग्भिर्वर्द्धयति । महिषा ऋत्विज इति कथं । ते चाधियज्ञेन यजमानं समर्द्धयंति । तदर्थत्वात् । दधानाः । सोमं पयआत्मकमिति सोमपीथमेवमवहितमस्मिन् यजमाने दधति । एवमेनं सोमपीथं पयोरूपं

---

१-अंगारेषु वा बहिष्परिधि दक्षिणतो जुहोत्याश्विनमुत्तरे मध्यमे सारस्वतमैन्द्रं दक्षिणे पितृभ्य इति प्रतिमन्त्रम् । का. श्रौ. सू. १९ । ७३ ।

२-अक्षन्पितर इति प्रक्षालनेनोपसिञ्चति । का. श्रौ. सू. १९ । ७४ ।

३-पितरः शुंधध्वमिति जपति । का. श्रौ. सू. १९ । ७५ ।

४-कुंभीमासज्य कुंभवच्छतवितृण्णां वालपवित्रहिरण्यान्यन्तर्द्धाय नवर्चं वाचयति पुनंतु मेति । सोमवतां बर्हिषदामग्निष्वात्तानां च । ( नवर्चमिति शेषः ) । पूर्ववत्सोमातिपूतश्चेत् ( पूर्ववदिति चरकसौत्रामणीवत् सोमवदादितृचैः । कुंभ्याः स्रवन्तीं सुरामुपतिष्ठेतेत्यर्थः ) । का. श्रौ. सू. १९ । ७६-७८ ।

५-ये समाना इति यजमानो जुहोति ( दक्षिणेऽग्नौ ) का. श्रौ. सू. १९ । ७९ ।

६-उत्तरे च यज्ञोपवीत्युत्तरया । ( उत्तरेऽग्नौ ) । अन्वारब्धेषु पयो जुहोति द्वे सती इति । का. श्रौ. सू. १९ । ८० । ८१

७-शेषं यजमानो भक्षयतीदꣳ हविरिति । का. श्रौ. सू. १९ । ८२ ।

८-वालवाले मार्जयन्ते सपत्नीका हिरण्यमन्तर्द्धाय । का. श्रौ. सू. १९ । ८३ ।

स जुहोति । यस्ते रसः सम्भृतऽ ओषधीष्वित्यपाञ्च वाऽ एषऽ ओषधीनाञ्च रसो यत्सुराऽपाञ्चैवैनमेतदोषधीनाञ्च रसेन समर्द्धयति सोमस्य शुष्मः सुरया सुतस्येति यऽ एव सोमे शुष्मो यः सुरायान्तमेवावरुन्द्धे तेन जिन्व यजमानम्मदेनेति तेन प्प्रीणीहि यजमानम्मदेनेत्येवैतदाह सरस्वतीमश्विनाविन्द्रमग्निमिति देवताभिरेव यज्ञꣳ समर्द्धयति देवताभिर्य्यज्ञेन यजमानꣳ हुत्वा भक्षयन्ति व्यृद्धमेवास्य तत्समर्द्धयति ॥ ४ ॥

स भक्षयति । यदत्र रिप्तꣳ रसिनः सुतस्येति सुतासुतयोरेव रसमव-

---

स जुहोति "यस्ते रसः संभृत ओषधीषु"–इति । अपां च वा एष ओषधीनां च रसः । यत्सुरा । अपां चैवैनमेतदोषधीनां च रसेन समर्द्धयति । "सोमस्य शुष्मः सुरया सुतस्य"–इति । य एव सोमे शुष्मः । यः सुरायाम् । तमेवावरुंधे । "तेन जिन्व यजमानं मदेन"–इति । तेन प्रीणीहि यजमानं मदेन इत्येवैतदाह । "सरस्वतीमश्विनाविंद्रमग्निम्"–( वा० सं० १९ । ३३ ) इति । देवताभिरेव यज्ञं समर्द्धयति । देवताभिर्यज्ञेन यजमानम् । हुत्वा भक्षयंति । व्यृद्धमेवास्य तत्समर्द्धयति ॥ ४ ॥

स भक्षयति "यदत्र रिप्तं रसिनः सुतस्य"–इति । सुतासुतयोरेव रसमवरुंधे ।

---

देवतासु अश्विसरस्वतीन्द्राख्यासु दधति । तदनुकरणेन एनं यजमानं देवतामध्ये दधति । मदाय वाव सोमः पयोलक्षणः । मदाय सुरा । उभावेव मदाववरुंधे इति । द्वयोर्होममंत्रेऽपि मदशब्देन सुरामदोऽवरुद्ध इत्यर्थः । अर्को वै देवानामन्नम् । यद्देवानामन्नं हविः तत् स्वर्क इति अर्कोऽभिप्रेतः तच्च हविर्लक्षणमन्नं यज्ञसाधनम् । यज्ञसाधनत्वात् यज्ञः । तेन यज्ञेनान्नाद्येन समर्द्धयति । हुत्वा भक्षयंति पयोग्रहान् यजमानसप्तमाः । समृद्ध मेव यः स्वभावादस्य यजमानस्य वर्द्धयति । एवं च सति अयं मंत्रार्थो द्रष्टव्यः । अंशुसुरामध्वादिगुणं यज्ञं सौत्रामण्यात्मकं तन्वन्ति महिषा उ । स हि ससत्रयज्ञे सोमपयोलक्षणो दिवि देवतासु, देवताश्च अश्विसरस्वतीन्द्राः संस्कार्यास्त्रयः वयं यजमाना इति । दक्षिणेऽग्नौ पयोग्रहान् जुह्वतीति तत्तेन यानेव पयोलक्षणं सोमसुरालक्षणेन पाप्मना व्यावर्तयति । नानादेशं वर्तयति । न संसृजति । एवं तदनुकारेण यजमानमपि पाप्मनैव व्यावर्तयति ॥ १–३ ॥

स जुहोति यस्ते रस इति । ते तव सोमस्य सोमात्मिकायाः सुरायाः सुतस्य त्वदात्मना सुतस्य । शुष्मः बलवान् । रसः संभृतः ओषधीषु । तेन रसेन त्वं उदकाकारेण तर्पय सरस्वत्यादीन् । तद्द्वारेण यजमानमपि प्रीणीहि । सोमाधारमित्येवं मन्त्रार्थमादरीकृत्य यजमानमेव ओषधीनां च रसेन समर्द्धयतीत्याद्याह । देवताभिरेवाश्व्यादिभिर्यज्ञं समर्द्धयति । देवताभिर्यज्ञेन च यजमानम् । तदर्थत्वात् यज्ञस्य । हुत्वा सुरां भक्षयन्ति यजमानसप्तमा ऋत्विज एव इति यत् तत्तेन व्यृद्धेनैव लोकदृष्ट्या अस्य यजमानस्य समर्द्धयति । सोमं राजानमिह भक्षयामीत्यनयोपासनयेत्यभिप्रायः ॥ ४ ॥

स भक्षयति । आश्विनं तावदध्वर्युः प्रतिप्रस्थाता आग्नीध्रः, सारस्वतं होता ब्रह्मा मैत्रावरुणः, ऐन्द्रं यज-

रुन्द्धे यदिन्द्रोऽ अपिबच्छचीभिरितीन्द्रो ह्येतदपिबच्छचीभिरहन्तदस्य मनसा शिवेनेत्यशिवऽ इव वा ऽएष भक्षो यत्सुरा ब्राह्मणस्य शिवमेवैनमेतत्कृत्वाऽऽत्मन्धत्ते सोमꣳ राजानमिह भक्षयामीति सोमऽ एवास्य राजा भक्षितो भवति ॥ ५ ॥

तद्धैतदन्येऽध्वर्य्यवः । ( वो ) राजन्यम्वा वैश्यम्वा परिक्रीणन्ति सऽ एतद्भक्षयिष्यतीति तदु तथा न कुर्य्याद्यो ह वा ऽएतद्भक्षयति तस्य हैवं पितॄन्पितामहानेष सोमपीथोऽन्वेति दक्षिणस्यैवाग्नेस्त्रीनङ्गारान्निर्व्वर्त्त्य बहिष्परिधि तदेताभिर्व्याहृतिभिर्जुहुयात् ॥ ६ ॥

( तिप ) पितृभ्यः स्वधायिभ्यः स्वधा नमऽइति पितॄनेव पितृलोके स्वधायान्दधाति पितामहेभ्यः स्वधायिभ्यः स्वधा नम ऽइति पितामहानेव पितामहलोके स्वधायान्दधाति प्प्रपितामहेभ्यः स्वधायिभ्यः स्वधा नमऽइति प्रपितामहानेव प्प्रपितामहलोके स्वधायान्दधाति ॥ ७ ॥

---

" यदिंद्रो अपिबच्छचीभिः "–इति । इंद्रो ह्येतदपिबत् शचीभिः । " अहं तदस्य मनसा शिवेन "–इति । अशिव इव वा एष भक्षः । यत्सुरा ब्राह्मणस्य । शिवमेवैनमेतत् कृत्वाऽऽत्मन्धत्ते । " सोमं राजानमिह भक्षयामि "–( वा. सं. १९ । ३५ ) इति । सोम एवास्य राजा भक्षितो भवति ॥ ५ ॥

तद्धैतत् अन्येऽध्वर्यवः राजन्यं वा वैश्यं वा परिक्रीणंति । स एतत् भक्षयिष्यतीति । तदु तथा न कुर्यात् । यो ह वा एतद् भक्षयति । तस्य हैव पितॄन् पितामहान् एष सोमपीथोऽन्वेति । दक्षिणस्यैवाग्नेस्त्रीनंगारान्निर्वर्त्य बहिष्परिधि । तदेताभिर्व्याहृतिभिर्जुहुयात् ॥ ६ ॥

" पितृभ्यः स्वधायिभ्यः स्वधा नमः "–( वा० सं० १९ । ३६ ) इति । पितॄनेव पितृलोके स्वधायां दधाति । " पितामहेभ्यः स्वधायिभ्यः स्वधा नमः "–इति । पितामहानेव पितामहलोके स्वधायां दधाति । " प्रपितामहेभ्यः स्वधायिभ्यः स्वधा नमः "–इति । प्रपितामहानेव प्रपितामहलोके स्वधायां दधाति ॥ ७ ॥

---

मान इति वचनात् तत्र यो नाम भक्षयति सः अनेन मन्त्रेणेति प्रत्येकं मन्त्रो वर्तत इत्येवैकवचनम् । सुतः सोमः, असुतः सुरा, तयो रसमवरुन्धे इति सुरायाः साक्षात्सोमस्याप्युपासनम् " यदत्र रिसं रसिनः सुतस्य " इति वचनात् । इन्द्रो हि एतत् सुरालिप्तं सोमलिप्तं सोममत्रापि पीतवान् । शचीभिः कर्मभिर्हेतुभूतैः । पुनरिन्द्रकर्तृकं कर्म करिष्यामीत्येवमर्थम् ॥ ५ ॥

तद्धैतदिति । एतत् मन्त्रसुरापाने कर्तव्ये । यो ह वै एतत् हुतोच्छिष्टं भक्षयति । तस्यैवं पितॄन् एष

( त्य ) अपऽआनीय निनयति । ( त्य ) अक्षन्पितरऽ इत्यन्नाद्यमेवैषु दधात्यमीमदन्त पितर ऽइति मदयत्येवैनानतीतृपन्त पितर ऽइति तर्प्पयत्येवैनान्पितरः शुन्धध्वमित्यनुपूर्व्वमेवैनान्त्सर्वान्पावयति पवित्रम्वै सौत्रामणी ॥ ८ ॥

त्रिभिः पवित्रैः पावयन्ति । त्रयो वा इमे लोकाऽएभिरेवैनं लोकैः पुनन्ति ॥ ९ ॥

पावमानीभिः पावयन्ति । पवित्रम्वै पावमान्यः पवित्रेणैवैनम्पुनन्ति॥ १०॥
तिसृभिस्तिसृभिः पावयन्ति । त्रयो वै प्प्राणाः प्प्राणऽ उदानो व्व्यान स्तैरेवैनम्पुनन्ति ॥ ११ ॥

---

अप आनीय निनयति । " अक्षन्पितरः "-इति । अन्नाद्यमेवैषु दधाति । " अमीमदन्त पितरः "-इति । मदयत्येवैनान् । " अतीतृपन्त पितरः "-इति । तर्पयत्येवैनान् । "पितरः शुंधध्वम्"-( वा० सं० १९ । ३६ )-इति अनुपूर्वमेवैनान् सर्वान्पावयति । पवित्रं वै सौत्रामणी ॥ ८ ॥

त्रिभिः पवित्रैः पावयन्ति । त्रयो वा इमे लोकाः । एभिरेवैनं लोकैः पुनन्ति ॥ ९ ॥

पावमानीभिः पावयन्ति । पवित्रं वै पावमान्यः । पवित्रेणैवैनं पुनन्ति ॥ १० ॥

तिसृभिस्तिसृभिः पावयन्ति । त्रयो वै प्राणाः । प्राण उदानो व्यानः । तैरेवैनं पुनन्ति ॥११॥

---

सोमपीथः सोमपानं मन्त्रवर्णिकं अस्त्येवेति । न च राजन्यवैश्ययोः सोमपीथोऽस्तीत्यभिप्रायः । दक्षिणस्यैवाग्नेरेकदेशभूतानंगारान्निर्वर्त्य बहिःकृत्वा । पितृवद्दक्षिणोत्तरात् तत् तेषु एताभिर्व्याहृतिभिर्जुहुयात् । " पितृभ्यः स्वधायिभ्यः स्वधानमः " इत्याश्विनशेषमुत्तरार्द्धे जुहोति । एतेन च पितॄनेव यजमानस्य पितृलोके दधातिस्थापयति । पितामहेभ्य इति सारस्वतं मध्यमे । प्रपितामहेभ्य इत्यैन्द्रं दक्षिणे ॥ ६-७ ॥

अप आनीय ग्रहपात्रेषु । ततस्तत् होमदेशे च यथाक्रमं निनयति । अन्नाद्यमेवैषु दधातीत्येतदन्नस्यादनविषयत्वादपक्वं नित्यमनेनैवान्नाद्यमुपात्तमित्यभिप्रायः । पितरः शुंधध्वमिति जपति क्रियांतरस्यानुपदेशात् । अनुपूर्वमेव एनान् पित्रादीन् पावयति तर्पयति इति ॥ ८ ॥

त्रिभिः पवित्रैः । गोऽश्ववालपवित्रेण, अजाविलोमपवित्रेण, हिरण्येन, इत्येतैस्त्रिभिः पवित्रैः । परिस्रुच्छेषं शतातृण्णायां दक्षिणेऽग्नौ कार्यमाणं पुनस्तदनुकारेण यजमानं पावयन्ति अध्वर्य्वादयः सहचारिणः पावमानीभिः । " पुनन्तु मा पितरः "-( वा. सं. १९ । ३७-४४ ) इत्याभिः सहकारिणः पावयन्ति । अध्वर्युर्वाचयत्येनं पावमानम् । ( कवनवद्यामनेक्षमाणः ? ) ॥ ९ ॥ १० ॥

तिसृभिस्तिसृभिस्त्रिभिः पावयन्तीत्यनुवाद एवाभिप्रायः । नवभिः प्राणेषु पूतं पूतत्वेन प्रतिष्ठापयन्ति । ते

नुवभिः पावयन्ति । नुव वै प्प्राणाः प्प्राणैरेवैनम्पुनन्ति प्प्राणेषु पुनः पूतम्प्रुतिष्ठापयन्ति ॥ १२ ॥

पवित्रेण पावयन्ति । ( न्त्य ) अजाविकुस्य वाऽ एतद्रूपं यत्पवित्रमजाविकेनैवैनम्पुनन्ति ॥ १३ ॥

व्वालेन पावयन्ति । गोऽश्वुस्य वाऽ एतुद्रूपं यद्वालो गोऽश्वेनैवैनम्पुनन्ति ॥ १४ ॥

हिरण्येन पावयन्ति । देवानाम्वाऽ एतुद्रूपं यद्धिरण्यन्देवानामेवैनꣳ रूपेण पुनन्ति ॥ १५ ॥

सुरया पावयन्ति । सुरा हि पूता पूतयैवैनम्पुनन्ति तद्यथा सुरा पूयमाना वल्कसेन व्विविच्यतऽ एवमेवैतद्यजमानः सर्व्वस्मात्पाप्मनो निर्म्मुच्यते यऽ एवं व्विद्वान्त्सौत्रामण्या यजते यो वैतदेवम्वेद ॥ १६ ॥

तुदाहुः । ( र्ष्वा ) याजयितव्यꣳ सौत्रामण्या ३ नु याजयितव्या३मित्युनन्तरायꣳ ह्येवास्मात्सर्व्वम्पाप्मानमपघ्नन्तीति तदु ह स्माह

---

नवभिः पावयन्ति । नव वै प्राणाः । प्राणैरेवैनं पुनन्ति । प्राणेषु पुनः पूतं प्रतिष्ठापयन्ति॥ १२॥
पवित्रेण पावयन्ति । अजाविकस्य वा एतद् रूपम् । यत् पवित्रम् । अजाविकेनैवैनं पुनन्ति ॥ १३ ॥
वालेन पावयन्ति । गोश्वस्य वा एतद् रूपम् । यद्वालः । गोश्वेनैवैनं पुनन्ति ॥ १४ ॥
हिरण्येन पावयन्ति । देवानां वा एतद्रूपम् । यद्धिरण्यम् । देवानामेवैनं रूपेण पुनन्ति ॥ १५ ॥
सुरया पावयन्ति । सुरा हि पूता । पूतयैवैनं पुनन्ति । तद्यथा सुरा पूयमाना वल्कसेन विविच्यते । एवमेवैतद् यजमानः सर्वस्मात् पाप्मनो निर्मुच्यते । य एवं विद्वान् सौत्रामण्या यजते । यो वैतदेवं वेद ॥ १६ ॥
तदाहुः—याजयितव्यं सौत्रामण्या ३ न याजयितव्या३मिति । अनन्तरायं ह्येवास्य सर्वं पाप्मान-

---

अपि इन्द्रियसंस्कृताः प्राणात्मको हि भवति । पवित्रेण अजाविलोममयेन वाक्यशेषात् । वालेन गोऽश्ववालेन वाक्यशेषात् । हिरण्येन एतानि त्रीण्यन्तर्द्धाय सुरां क्षारयन्तो वाचयन्ति । सुरया पावयन्ति । सुरया यजमानस्य प्रकृतपूतया वालपवित्रहिरण्यैः पूयमानया यजमानं वाचयन्ति । वल्कसेन किदिसेन विविच्यते । तस्मात् पृथक् भवति ॥ ११–१६ ॥

तदाहुर्याजयितव्यमिति । 'अनन्तरायं ह्येवास्य , अन्तरायं न भवतीत्यनन्तरायं किंचिदपि पाप्मानं न

---

१–( वा. सं. १९ । ३७–४४ ) इत्येतैर्नवभिर्मन्त्रैरिति ।

रेवोत्तरास्स्थपतिः पाटवुश्चाक्रोऽपि प्प्रदानम्प्रदाय याजयितव्यमेवात्मा वै यज्ञस्य यजमानोऽङ्गान्यृत्विजो यत्र वा ऽआत्मा पूतः पूतानि तत्रा-ङ्गान्युभय ऽएव पुनत ऽउभये पाप्मानमपघ्नते तस्मादपि प्प्रदानम्प्रदाय याजयितव्यमेवेति ॥ १७ ॥

पितृलोकम्वाऽ एतेऽन्ववयन्ति । ये दक्षिणेऽग्नौ चरन्त्याज्याहुति-ञ्जुहोति यज्ञो वाऽआज्यं यज्ञादेव यज्ञे प्रतितिष्ठन्ति ॥ १८ ॥

स जुहोति । ये समानाः सुमनसः पितरो यमराज्ये । तेषां लोकः स्वधा नमो यज्ञो देवेषु कल्पतामिति पितॄनेव यमे परिदधात्यथो पितृ-लोकमेव जयति सर्व्वे यज्ञोपवीतानि कृत्वोत्तरमग्निमुपसमायन्त्ययम्वै लोक ऽउत्तरोऽग्निरस्मिन्नेव लोके प्रतितिष्ठन्त्याज्याहुतिञ्जुहोति यज्ञो वाऽआज्यं यज्ञादेव यज्ञे प्रतितिष्ठन्ति ॥ १९ ॥

---

मपघ्नन्तीति । तद्ध ह स्माह रेवोत्तरास्थपतिः पाटवश्चाक्रोऽपि । प्रदानं प्रदाय याजयितव्यमेव । आत्मा वै यज्ञस्य यजमानः । अंगानि ऋत्विजः । यत्र वा आत्मा पूतः । पूतानि तत्रांगानि । उभय एव पुनते । उभये पाप्मानमपघ्नते । तस्मादपि प्रदानं प्रदाय याजयितव्यमेवेति ॥ १७ ॥

पितृलोकं वा एतेऽन्ववयन्ति । ये दक्षिणेऽग्नौ चरन्ति । आज्याहुतिं जुहोति । यज्ञो वा आज्यम् । यज्ञादेव यज्ञे प्रतितिष्ठन्ति ॥ १८ ॥

स जुहोति । " ये समानाः समनसः पितरो यमराज्ये । तेषां लोकः स्वधा नमो यज्ञो देवेषु कल्पताम् "–( वा० सं० १९ । ४५ ) इति । पितॄनेव यमे परिदधाति । अथो पितृलोकमेव जयति । सर्वे यज्ञोपवीतानि कृत्वा उत्तरमग्निमुपसमायन्ति । अयं वै लोक उत्त-रोऽग्निः । अस्मिन्नेव लोके प्रतितिष्ठन्ति । आज्याहुतिं जुहोति । यज्ञो वा आज्यम् । यज्ञादेव यज्ञे प्रतितिष्ठन्ति ॥ १९ ॥

---

विमुंचयन्तीत्यर्थः । यस्माचास्य यजमानस्य सर्वं पाप्मानमपघ्नन्ति सौत्रामण्या याजयन्तः । तस्मात्त्वनया याज-यितव्यम् । पावयतामालेयस्यावश्यंभावित्वादित्यभिप्रायः । तस्मादुत्तरत्र विचारे आह स्म उक्तवान् । रेवोत्तरा-श्वक्रिः स्थपतिः बृहस्पतिसवयाजयितुः पटोरपत्यं चाक्रः । प्रदानमपि प्रदाय याजयितव्यमेवेत्युत्तरपक्षो विद्व-द्विषयः पूर्वस्तु केवलयाज्ञिकविषयः ॥ १७ ॥

' पितृलोकं ' ये दक्षिणेऽग्नौ चरन्ति ते पितृलोकमनुयन्ति दक्षिणात्वसामान्यात् । यज्ञो वै यज्ञसाधनं वै आज्यम् तत् हुत्वा । प्रत्याग्नन्त यज्ञादेवाज्याहुतिमदत्त । यज्ञादेव यज्ञे प्रतितिष्ठन्ति ॥ १८ ॥

स जुहोति । पितॄनेवानयाऽऽहुत्या तर्पयित्वा । यमे यमाय परिदधाति परित्राणायार्पयति । अथो पितॄंस्तर्प-यित्वा पितृलोकमेव जयति । यजमानो जुहोति लिङ्गात् ॥ १९ ॥

  

स जुहोति । ये समानाः सुमनसो जीवा जीवेषु मामकाः । तेषाᳪं श्रीर्म्मयि कल्पतामस्मिँल्लोके शतᳪं समाऽ इति स्वानामेव श्रियमवरुन्द्धेऽथो ज्ज्योग्जीवातुमेवैषु दधाति पयः समन्वारब्धेषु जुहोति प्राणो वा ऽअन्नम्पयः प्राण ऽएवान्नाद्येऽन्ततः प्रतितिष्ठन्ति ॥ २० ॥

स जुहोति । द्वे सृतीऽ अशृणवम्पितॄणामहमिति द्वे वाव सृती ऽइत्याहुर्द्देवानाञ्चैव पितॄणाञ्चेति ताभ्यामिदम्विश्वमेजत्समेतीति ताभ्याᳪं हीदᳪं सर्व्वमेजत्समेति यदन्तरा पितरम्मातरञ्चेत्यसौ वै पितेयम्माताऽऽभ्यामेव पितॄन्देवलोकमपिनयत्येकाकी हुतोच्छिष्टम्भक्षयत्येकधैव श्रियमात्मन्धत्ते श्रीर्हि पयः ॥ २१ ॥

स भक्षयति । ( ती ) इदᳪं हविः प्रजननम्मे ऽअस्त्विति प्रजननᳪं हि यदि पयो यदि सोमो दशवीरमिति प्राणा वै दश व्वीराः प्राणानेवात्मन्धत्ते सर्व्वगणमित्यङ्गानि वै सर्व्वे गणा ऽअङ्गान्येवात्मन्धत्ते

---

स जुहोति । " ये समानाः समनसो जीवा जीवेषु मामकाः । तेषां श्रीर्मयि कल्पतामस्मिन् लोके शतᳪं समाः "–( वा० सं० १९ । ४६ ) इति । स्वानामेव श्रियमवरुन्धे । अथो ज्योग् जीवातुमेवैषु दधाति । पयः समन्वारब्धेषु जुहोति । प्राणो वा अन्नं पयः । प्राण एव अन्नाद्येऽन्ततः प्रतितिष्ठन्ति ॥ २० ॥

स जुहोति । " द्वे सृती अशृणवं पितॄणामहम् "–इति । द्वे वाव सृती इत्याहुः । देवानां चैव पितॄणां चेति । " ताभ्यामिदं विश्वमेजत् समेति "–इति । ताभ्यां हीदं सर्वमेजत्समेति । " यदन्तरा पितरं मातरं च "–( वा० सं० १९ । ४७ ) इति । असौ वै पिता । इयं माता । आभ्यामेव पितॄन् देवलोकमपिनयति । एकाकी हुतोच्छिष्टं भक्षयति । एकधैव श्रियमात्मन् धत्ते । श्रीर्हि पयः ॥ २१ ॥

स भक्षयति । " इदं हविः प्रजननं मे अस्तु "–इति । प्रजननं हि । यदि पयो यदि सोमः । " दशवीरम् "–इति । प्राणा वै दश वीराः । प्राणानेवात्मन्धत्ते । " सर्वगणम् "–

---

स्वानां ज्ञातीनां या श्रीः तामवरुन्धे । यष्टुरवस्थितामात्मोपकारिणीं तर्पयित्वा करोति । तेषां विधेयत्वात् । अथो ज्योक् चिरं जीविकां यजमानस्य एषु ज्ञातिषु दधाति । ज्ञातिमध्ये यजमानश्चिरं जीवतीत्यर्थः । श्रीरेव चास्य होमस्य मन्त्रवर्णाद् देवता । समन्वारब्धेषु ऋत्विक्षु यजमानः पयः उत्तरया जुहोति ॥ २० ॥

स जुहोति । ताभ्यामिदं द्यावापृथिव्योः सकाशात् पितॄन् देवलोकमपिनयत्यनेन देवयानपितृयानौ तर्पयित्वा । ततश्च द्वे एव सृती, ये अत्र देवते । एकाकी असहायः हुतोच्छिष्टं भक्षयति ॥ २१ ॥

प्रजननं हि हविः यदि पयो लोकदृष्ट्या । यदि सोम उपासनया । प्राणा वै दश विक्रांता वीराः । ते तर्पयि-

स्वस्तय ऽआत्मसनीत्यात्मानमेव सनोति प्रजासनीति प्रजामेव सनोति पशुसनीति पशूनेव सनोति लोकसनीति लोकाय वै यजते तमेव जयत्यभयसनीति स्वर्गो वै लोकोऽभयँ स्वर्ग ऽएव लोकेऽन्ततः प्रतितिष्ठत्यग्निः प्रजाम्बहुलाम्मे करोत्वन्नम्पयो रेतो ऽअस्मासु धत्तेति तद्य ऽएवैनमेते याजयन्ति तानेतदाहैतन्मयि सर्वन्धत्तेति हिरण्येन मार्ज्जयन्तेऽमृतम्वै हिरण्यममृत ऽएवान्ततः प्रतितिष्ठन्ति ॥ २२ ॥

इति तृतीयप्रपाठके पञ्चमं ब्राह्मणम् ॥ १२।३।५ ॥ ( ८–१ )

इति तृतीयः प्रपाठकः समाप्तः ॥८।३॥ कण्डिकासंख्या ॥१२०॥

---

इति । अङ्गानि वै सर्वे गणाः । अंगान्येवात्मन् धत्ते । "स्वस्तय आत्मसनि"–इति । आत्मानमेव सनोति । "प्रजासनि"–इति । प्रजामेव सनोति । "पशुसनि"–इति । पशूनेव सनोति । "लोकसनि"–इति । लोकाय वै यजते । तमेव जयति । "अभयसनि"–इति । स्वर्गो वै लोकोऽभयम् । स्वर्ग एव लोकेऽन्ततः प्रतितिष्ठति । "अग्निः प्रजां बहुलां मे करोत्वन्नं पयो रेतो अस्मासु धत्त"–( वा० सं० १९ । ४८ ) इति हिरण्येन मार्जयन्ते । अमृतं वै हिरण्यम् । अमृत एवांततः । प्रतितिष्ठन्ति ॥ २२ ॥

---

तव्या अस्य सतीति दशवीरम् । एवं सर्वाण्यंगानि तर्पयितव्यानि अस्य विद्यन्ते इति सर्वगणम् । अंगान्येवात्मनि धत्ते । स्वस्तये अविनाशायेति च्छेदः । आत्मानमेव यजमानोऽमृतं करोति । "षण संभक्तौ"–( धा. पा. भ्वा. प. ४६९ ) ददाति हविः । एवं प्रजासनीत्यादि द्रष्टव्यम् ॥ २२ ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये द्वादशकाण्डे अष्टमेऽध्याये प्रथमं ब्राह्मणम् ॥ ( १२ । ८ । १ ) ॥



# अथ चतुर्थप्रपाठके प्रथमं ब्राह्मणम् ।
# अष्टमेऽध्याये च द्वितीयं ब्राह्मणम् ।

प्रजापतिर्य्यज्ञमसृजत । ( त्त ) तमाहरत्तेनायजत तेनेष्ट्वा रिरिचानऽइवामन्यत सऽ एतं यज्ञक्रतुमपश्यत्सौत्रामणीन्तेनायजत ततो वै स पुनराप्यायत रिच्युतऽइव वा ऽएष यः सोमेन यजते व्वीव ह्यस्य व्वित्तं व्वेदो हरन्ति ॥ १ ॥

सोमेनेष्ट्वा सौत्रामण्या यजेत यथा धेनुर्दुग्धा पुनराप्यायेतैवꣳ हैव पुनराप्यायतऽ आ प्प्रजया पशुभिः प्यायते प्रत्यस्मिंल्लोके तिष्ठत्यभि स्वर्गं लोकञ्जयति यऽ एवं व्विद्वान्त्सौत्रामण्या यजते यो वैतदेवम्वेद ॥२॥

---

### अथ सौत्रामण्यां सोमसम्पत्तिः ।

प्रजापतिर्यज्ञमसृजत् । तमाहरत् । तेनायजत । तेनेष्ट्वा रिरिचान इवामन्यत । स एतं यज्ञक्रतुमपश्यत् सौत्रामणीम् । तेनायजत । ततो वै स पुनराप्यायत । रिच्यत इव वा एषः—यः सोमेन यजते । वीव ह्यस्य वित्तं वेदो हरन्ति ॥ १ ॥

सोमेनेष्ट्वा सौत्रामण्या यजेत । यथा धेनुर्दुग्धा पुनराप्यायेत । एवं हैव पुनराप्यायते । आ प्रजया पशुभिः प्यायते । प्रत्यस्मिन् लोके तिष्ठति । अभि स्वर्गं लोकं जयति । य एवं विद्वान् सौत्रामण्या यजते । यो वैतदेवं वेद ॥ २ ॥

---

प्रजापतिर्यज्ञमसृजदिति । यज्ञं सोमयागं 'यः सोमेन यजते' इति वाक्यशेषात् । रिरिचानः रिक्तः । वीव ह्यस्य वित्तं वेदो हरंति । अस्यर्त्विजः सदस्याश्च वित्तं लब्धं वेदो धनं हरन्ति ॥ १ ॥

सोमेनेष्ट्वेति । सोमयागांगत्वेन सौत्रामणी विधीयते । कुतः ? न तावत्सोमयागस्य सौत्रामण्या निमित्तत्वं प्रमाणाभावात् । यत्तु, रेचनाप्यायनार्थत्ववचनम् । यद्ददाति तमेवातस्त्रिभिः पुनराप्याययतीति । अथ सोमयाग एव सौत्रामण्याः कस्मादंगं न भवति ? तथा हि—सौत्रामण्याः प्रकरणमनुग्रहीष्यते । नैतदेवमिष्टमिति । सोमयागः सिद्ध एवमुपात्तस्य प्रयोजनापेक्षया विधेयत्वं नास्ति । न सौत्रामणी अनुविधीयमाना प्रयोजनमपेक्षत इति तस्या एवांगत्वं युक्तम् । यथा वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेतेति वाजपेयांगत्वं बृहस्पतिसवस्य । तथा च रिरिचानाप्यायनमुपकारविशेषः सौत्रामणीकार्यम् । एवं च श्रूयते । तस्मात्सोमांगं सौत्रामणीत्युपपन्नम् । स च सोमयागो ज्योतिष्टोमः । स हि प्रकृतिः । प्रकृतिगामिनश्चानारभ्यविषया भवंति । अयं चापि सोमोऽनारभ्यविधिः । एवं च सति सांगज्योतिष्टोमदक्षिणाभिरेव च सौत्रामण्या दक्षिणार्थः सिद्ध इति न पृथक् सौत्रामण्यां दक्षिणा देया । न च तदंगविधिप्रत्यक्षश्रुतौ त्रयस्त्रिंशद्दक्षिणा देयाः । तस्य वचनस्य स्वतन्त्रप्रयोगकृतार्थत्वात् । "स यो भ्रातृव्यवान् स्यात् स सौत्रामण्या यजेत"—इत्येवमादयो हि स्वतन्त्रा एव सौत्रामण्याः प्रयोगा इति तेषां दक्षिणा । एवमेव च अग्निचितः सोमातिपूतस्य सोमवामिनश्च सौत्रामणीप्रयोग अदक्षिणाः । वचनादन्यत्र कर्तव्यं विज्ञायते चेत्तत्रैव दक्षिणेति ॥ २ ॥

तुद्धैतुत्पप्रच्छ । सुप्ला सार्ञ्जयः प्रतीदर्शुमैभावतं यन्न दीक्षयेव दीक्षते नु सोमाॐशवऽ इव न्युप्यन्तेऽथ कथुॐ सौत्रामणी सोमयज्ञो भवतीति॥३॥

सु होवाच। शिरो वाऽ एतुद्यज्ञस्य युद्व्रतमात्मा दीक्षैतत्खलु वै व्व्रतुस्य रूपं युत्सत्युमेतुद्दीक्षायै युच्छ्रद्धा मुनो युजमानस्य रूपं व्वाग्यज्ञस्येति ॥४॥

स युद्वाचा व्व्रतमुपैति । (त्या) आत्मुन्येवैतुद्यज्ञस्य शिरः प्रतिदधाति सत्युॐ श्रद्धायान्दधाति युजमानं यज्ञे ॥ ५ ॥

तुस्मादेतुस्य यज्ञस्य व्व्रतुमेवु दीक्षा वृषो वै व्व्रतं योषा दीक्षा वृषा सत्यं योषा श्रद्धा वृषा मुनो योषा व्वाग्वृषा पुत्न्यै युजमानस्तुस्माद्यु-त्रैव पुतिस्तुत्र जायाऽथो यज्ञमुख ऽएव तुन्मिथुनानि करोति प्रजात्यै॥ ६ ॥

---

तद्धैतत् पप्रच्छ सुप्ला सार्ञ्जयः प्रतीदर्शमैभावतम् । यन्न दीक्षयेव दीक्षते । न सोमांशव इव न्युप्यंते । अथ कथं सौत्रामणी सोमयज्ञो भवतीति ॥ ३ ॥

स होवाच । शिरो वा एतद्यज्ञस्य । यद् व्रतम् । आत्मा दीक्षा । एतत् खलु वै व्रतस्य रूपम् । यत् सत्यम् । एतद्दीक्षायै । यत् श्रद्धा । मनो यजमानस्य रूपम् । वाग् यज्ञस्येति ॥ ४ ॥

स यत् वाचा व्रतमुपैति । आत्मन्येवैतद्यज्ञस्य शिरः प्रतिदधाति । सत्यं श्रद्धायां दधाति । यजमानं यज्ञे ॥ ५ ॥

तस्मात् एतस्य यज्ञस्य व्रतमेव दीक्षा । वृषा उ वै व्रतम् । योषा दीक्षा । वृषा सत्यम् । योषा श्रद्धा । वृषा मनः । योषा वाग् । वृषा पत्न्यै यजमानः । तस्मात् यत्रैव पतिस्तत्र जाया । अथो यज्ञमुख एव तन्मिथुनानि करोति प्रजात्यै ॥ ६ ॥

---

तद्धैतत्पप्रच्छ । तत्तत्र सौत्रामण्यां एतत् वक्ष्यमाणं पप्रच्छ पृष्टवान् । सुप्ला नाम राजपुत्रो याज्ञिकः । सार्ञ्जयः संजयस्यापत्यम् । प्रतीदर्श नाम राजानमिभावतोऽपत्यमैभावतम् । किं पृष्टवान् इत्यत आह—यन्न दीक्षयेवेति । अत्र सौत्रामण्यां न दीक्षते नापि तद्दीक्षादिक्रिया । नैव सोमांशवः । अभिषवार्थं अधिषवणे न्युप्यन्ते । अथ ततः कथं सौत्रामण्यां सोमयज्ञो भवतीति अवयवाः पृष्टाः । दीक्षासोमांशुग्रहणं च प्रदर्शनार्थम् । किमस्य व्रतस्य शिरः । क आत्मा । इत्येतदपि पृष्टम् । प्रतिद्रव्यं प्रतिवचनदर्शनात् ॥ ३ ॥

स होवाच—ज्योतिष्टोम एव तद्दीक्षाव्रतयोरध्यात्ममाह—शिर एव तद्यज्ञस्य । यद्दीक्षितव्रतं सत्यवदनादि । आत्मा दीक्षा । सोमयज्ञस्यात्मा शरीरान्तस्थः । स च तादृशस्य ज्योतिष्टोमिकस्याध्यात्मकस्य व्रतस्यैतद्रूपं यत्सत्यं सौत्रामण्यामेतच्च दीक्षाया रूपं या श्रद्धा । अथ यजमानस्य किमत्राध्यात्मिकं रूपं किं वा यज्ञस्येत्यत आह—यजमानस्याध्यात्मं रूपं मनः पिंडस्यलिंगं च तत्प्रधानत्वात् । वागिंद्रियं यज्ञस्याध्यात्ममिह रूपम् । वागमिद्वारा मन्त्रसाध्यत्वाद्यज्ञस्य ॥ ४ ॥

स यद्वाचा व्रतमिति । यदत्र सौत्रामण्यां वागिन्द्रियेण व्रतमुपवसथलक्षणम् ॥ ५ ॥

दीक्षा कथम्? वृषा उ वै व्रतम् । योषा दीक्षा । वृषयोषयोश्च संसर्गादभेद इत्यभिप्रायः । वृषा सत्यम् । अस्त्रीलिंगस्य

( त्याऽए ) एते खलु वा ऽएतस्य यज्ञस्य । सोमाᳫँशव ऽइत्याहुर्यच्छष्पाणि तोक्मानि लाजा ऽइति ॥ ७ ॥

प्रातःसवनस्यैतद्रूपम् । यच्छष्पाण्ययम्वै लोकः प्रातःसवनᳫँ स ऽआश्विन ऽआश्विनेन पयसा प्रथमाᳫँ रात्रिम्परिषिञ्चति स्वेनैवैनमेतल्लोकेन स्वया देवतया स्वेन रूपेण प्रातःसवनेन समर्द्धयति ॥ ८ ॥

माध्यन्दिनस्यैतत्सवनस्य रूपम् । यत्तोक्मान्यन्तरिक्षम्वै माध्यन्दिनᳫँ सवनं तत्सारस्वतᳫँ सारस्वतेन पयसा द्वितीयाᳫँ रात्रिम्परिषिञ्चति स्वेनैवैनमेतल्लोकेन स्वया देवतया स्वेन रूपेण माध्यन्दिनेन सवनेन समर्द्धयति ॥ ९ ॥

तृतीयसवनस्यैतद्रूपम् । यल्लाजा द्यौर्वै तृतीयसवनᳫँ सैन्द्र्यैन्द्रेण पयसा तृतीयाᳫँ रात्रिम्परिषिञ्चति स्वेनैवैनमेतल्लोकेन स्वया देवतया स्वेन रूपेण तृतीयसवनेन समर्द्धयति ॥ १० ॥

---

एते खलु वा एतस्य यज्ञस्य सोमांशव इत्याहुः । यच्छष्पाणि तोक्मानि लाजा इति ॥ ७ ॥

प्रातःसवनस्यैतद् रूपं यच्छष्पाणि । अयं वै लोकः प्रातःसवनम् । स आश्विनः । आश्विनेन पयसा प्रथमां रात्रिं परिषिंचति । स्वेनैवैनमेतल्लोकेन स्वया देवतया स्वेन रूपेण प्रातःसवनेन समर्द्धयति ॥ ८ ॥

माध्यंदिनस्यैतत्सवनस्य रूपं यत्तोक्मानि । अंतरिक्षं वै माध्यंदिनं सवनम् । तत्सारस्वतम् । सारस्वतेन पयसा द्वितीयां रात्रिं परिषिंचति । स्वेनैवैनमेतल्लोकेन स्वया देवतया स्वेन रूपेण माध्यंदिनेन सवनेन समर्धयति ॥ ९ ॥

तृतीयसवनस्यैतद् रूपं यत् लाजाः । द्यौर्वै तृतीयसवनम् । सैन्द्री । ऐंद्रेण पयसा तृतीयां रात्रिं परिषिंचति । स्वेनैवैनमेतल्लोकेन स्वया देवतया स्वेन रूपेण तृतीयसवनेन समर्द्धयति ॥ १० ॥

---

चान्वयत्वात् । ततश्च संपर्काच्छ्रद्धायाः सत्यस्याभेदः । श्रद्धायै दीक्षाया रूपमित्युक्तम् । तस्याश्चाभिन्नत्वात् । अन्यव्रतमपि दीक्षेत्युपपन्नम् । वृषा मनः । ततश्च वृषात्वेन व्रतादभिन्नयोषावान् । ततश्च योषात्वेन दीक्षया संसर्गाच्च तया सह समासः । एकत्वाच्च मनोऽपि दीक्षा । वृषा पत्न्यै यजमानः । वृषा पत्नी च योषा दीक्षाया अभेदाच्च यजमानोऽपि दीक्षा । यस्माच्चैवम् तस्मात् मिथुनभेदात् । यत्रैव पतिस्तत्र जायेति मिथुनैकत्वम् । अथो यज्ञमुख एव तन्मिथुनानि करोति । यद्वाचा व्रतमुपैति । तेनाऽऽत्मादिषु शिरआदिषु दीक्षामादधाति । एतानि च मिथुनानि यज्ञमुखे व्रतमुपैति करोत्युपासकः ॥ ६ ॥

एते खलु वा । सोमोपपादनमेतत् ॥ ७ ॥

प्रातःसवनस्येति पंचभिः कण्डिकाभिः परिषेक उच्यते । प्रातःसवनस्य शष्पाणि रूपं रूपसामान्यात् ।

---

१–अत्र " देवा यज्ञमतन्वत " इत्यादयः–" सौत्रामणी सुते " इत्यन्ताः ( वा. सं. १९ । १२–३१ ) विंशतिकंडिकाः सौत्रामण्यां सोमावयवसंपत्त्यभिधायिका अनुसन्धेयाः ।

(त्ये) एकस्यै दुग्धेन प्रथमाᳬं रात्रिम्परिषिञ्चति द्वयोर्दुग्धेन द्वितीयां तिसृणां दुग्धेन तृतीयां यथारूपमेवैनं यथादेवतᳬं सवनैः समर्द्धयति ॥ ११ ॥

परीतो षिञ्चता सुतमिति । परिषिञ्चति सुत्यायै सोमो य उत्तमᳬं हविरित्युत्तमम्वा ऽएतद्धविर्य्यत्सोम ऽ उत्तममेवैनᳬं हविष्करोति दधन्वा यो नर्य्यो ऽअप्स्वन्तरेत्यद्भिश्च ह्येषो ऽन्तरेण च सूयते सुषाव सोममद्रिभिरित्यद्रिभिर्व्वै सोमः सूयते ऽद्रिभिरेवैनᳬं सुनोति सोमसुत्यायै ॥ १२ ॥

तदाहुः । (रु) उभयोर्व्वा ऽएतद्रूपᳬं सुतस्य चासुतस्य च यत्सौत्रामण्यपामेष ऽओषधीनाᳬं रसो यत्पयस्तत्सुतस्य रूपमन्नस्यैष रसो यत्परिस्रुत्तदासुतस्य रूपमुभाभ्यामेवैनᳬं सवाभ्याᳬं सुनोत्युभाभ्याᳬं सवाभ्यामवरुन्द्धे ॥ १३ ॥

---

एकस्यै दुग्धेन प्रथमां रात्रिं परिषिंचति । द्वयोर्दुग्धेन द्वितीयाम् । तिसृणां दुग्धेन तृतीयाम् । यथारूपमेवैनं यथादेवतं सवनैः समर्द्धयति ॥ ११ ॥

"परीतो षिंचता सुतम्"—इति परिषिंचति सुत्यायै । "सोमो य उत्तमं हविः"—इति । उत्तमं वा एतद्धविः । यत्सोमः । उत्तममेवैनं हविष्करोति । "दधन्वा यो नर्यो अप्स्वंतरा"—इति । अद्भिश्च ह्येषोऽन्तरेण च सूयते । "सुषाव सोममद्रिभिः"—( वा० सं० १९ । २ ) इति । अद्रिभिर्वै सोमः सूयते । अद्रिभिरेवैनं सुनोति । सोमसुत्यायै ॥ १२ ॥

तदाहुः । उभयोर्वा एतद् रूपम् । सुतस्य चासुतस्य च । यत् सौत्रामणी । अपामेष ओषधीनां रसः । यत्पयः । तत्सुतस्य रूपम् । अन्नस्यैष रसः । यत्परिस्रुत् । तदासुतस्य रूपम् । उभाभ्यामेवैनं सवाभ्यां सुनोति । उभाभ्यां सवाभ्यामवरुन्धे ॥ १३ ॥

---

एवमेवायं लोकः प्रातःसवनम् । स आश्विन इति । आश्विनेन पयसा सत्यपि क्रयसामान्यादेव गौणं आश्विनत्वम् । तत्त यागादेव मुख्यमुपपद्यते । सूत्रकारेण तु एकस्याः पयसा अपाकृतेन आश्विनेन परिषिंचतीत्युक्तम् । तद्वचनान्त[illegible]त् विज्ञेयम् । एवं सारस्वतेनैन्द्रेणेत्यपि ज्ञातव्यम् । शष्पादीनां च प्रातःसवनरूपत्वं वचनात् । शष्पाण्यपि परिषेककाले आवपतीति गम्यते । "परीतो षिंचता सुतम्" इत्यनेन मन्त्रेण परिषिंचति । किमर्थं ? सुत्यायै । एतेन हि परिषिच्यमाने सोमे स तु सुत्यायै भवति । ( इयं समादातेसोमाभिषवत्वादस्य?) । अद्रिभिः सह संसर्गिभिः । एषोऽन्तरेण च । अन्तर्वर्तिना रसेन भूयात् कार्यत इत्यत आह—सोमसुत्यायै । अस्यैव गम्यामानार्थवचनम् ॥ ८–१२ ॥

तदाहुरिति । उभयोः सुतस्यासुतस्य च सवस्याविकृतस्यासुतस्य सत्त्वात् परिस्रुद्रसस्य रूपं सौत्रामणी । कथम् ? अपामोषधीनां चैष रसः । असंहितः अतीव्रीकृतः । यत्पयस्तत्सुतस्य असंहितस्य सवस्य रूपम् ।

तदाहुः । (र्य्य) यद्ग्रावभिः सोमः सूयतेऽथ कथꣳ सौत्रामणीति प्रैषाप्रीभीरिति ब्रूयाद्बार्हता वै प्रैषा बार्हता ग्ग्रावाणो ग्ग्रावभिर्व्वै सोमः सूयते ग्ग्रावभिरेवैनꣳ सुनोति सोमसुत्यायै ॥ १४ ॥

सर्व्वे पयस्वन्तो भवन्ति । पयसा हि सूयते सर्व्वे सोमवन्तो भवन्ति सोमरूपतायै सर्व्वे परिस्रुन्मन्तो भवन्ति परिस्रुता हि सूयते सर्व्वे घृतवन्तो भवन्त्येतद्वै प्रत्यक्षाद्यज्ञरूपं यद्घृतम्प्रत्यक्षादेवैनं यज्ञरूपङ्करोति सर्व्वे मधुमन्तो भवन्त्येतद्वै प्रत्यक्षात्सोमरूपं यन्मधु प्रत्यक्षादेवैनꣳ सोमरूपङ्करोति ॥ १५ ॥

---

तदाहुः—यद् ग्रावभिः सोमः सूयते । अथ कथं सौत्रामणीति । प्रैषाप्रीभिरिति ब्रूयात् । बार्हता वै प्रैषाः । बार्हता ग्रावाणः । ग्रावभिर्वै सोमः सूयते । ग्रावभिरेवैनं सुनोति । सोमसुत्यायै ॥१४॥

सर्वे पयस्वन्तो भवन्ति । पयसा हि सूयते । सर्वे सोमवन्तो भवन्ति । सोमरूपतायै । सर्वे परिस्रुन्मन्तो भवन्ति । परिस्रुता हि सूयते । सर्वे घृतवन्तो भवन्ति । तद्वै प्रत्यक्षाद्यज्ञरूपम् । यद् घृतम् । प्रत्यक्षादेवैनं यज्ञरूपं करोति । सर्वे मधुमन्तो भवन्ति । तद्वै प्रत्यक्षात्सोमरूपम् । यन्मधु । प्रत्यक्षादेवैनं सोमरूपं करोति ॥ १५ ॥

---

अतश्चान्नस्य एष रसः या परिस्रुत् । य आसुतस्य सन्धानजस्य रूपमेतत् । उभाभ्यामपि सवाभ्यामेनं सोमं सुनोति स्रावयति अवरुन्धे च ॥ १३ ॥

तदाहुर्यदिति । ‘ प्रैषाः ’ । “ होता यक्षत्समिधाग्निम् ” ( वा. सं. २१ । २९–४० ) इत्येवमादयः । ‘ आप्रियः ’ । “ समिद्धो अग्निरश्विना ”–( वा. सं. २० । ३९–३६ ) इत्येवमादयः । कथं पुनः प्रैषाप्रीभिर्ब्रूयादित्यत आह–‘ बार्हताः ’ बृहत्या संमिताः बार्हताः । बृहद्रथन्तरयोर्हि रथन्तरमल्पं संक्षिप्तम् । बृहच्च विलम्बितं महत् । तदनुकारेण यदल्पं संक्षिप्तं च तत् रथन्तरमुच्यते । यत्तु महत् विलम्बितं तत् बार्हतमुच्यते । प्रैषास्तु महांतः, ग्रावोल्लेखसामान्यात् । एवं संभावना ॥ १४ ॥

तयाऽपि च संभावनेत्याह–‘ सर्वे पयस्वंतः ’ । यज्ञाः पयस्वंतो भवन्ति । पयः सोमः परिस्रुत् इत्याद्युक्तमित्यर्थः । पयसा हि ग्रहगतेन परिषेकेनाभिवपवमानपूते सौत्रामणी सोमो जन्यत इत्यर्थः । एवं परिस्रुत उपायभूतः सौत्रामणिकः सोमः सूयते । प्रत्यक्षमिव प्रथमाया आदादेशः । प्रत्यक्षं साक्षात् । तत् परोऽक्षं यज्ञसाधनं घृतम् । प्रायेण घृतस्य यज्ञसाधनत्वात् । प्रत्यक्षः सौम्यरूपो यन्मधु ओषधिवनस्पतिरसत्वात् ॥ १९ ॥

---

१–होता यक्षत्समिधाऽग्निमिति प्रयाजप्रैषास्त्रिपशोः । का. श्रौ. सू. १९ । १४४ । २–आप्रियश्च समिद्धो अग्निरश्विनेति चशब्दात्त्रिपशोरेव । का. श्रौ. सू. १९ । १४५ ।

सुर्व्वेऽ आश्विना भवन्ति । भैषज्याय सुर्व्वे सारस्वताऽअन्नाद्यस्यै-वावरुद्ध्यै सुर्व्वे ऽऐन्द्राऽइन्द्रियस्यैव व्वीर्य्यस्यावरुद्ध्यै ॥ १६ ॥

युद्वेव सुर्व्वेऽ आश्विना भुवन्ति । सुर्व्वे सारस्वताः सुर्व्वे ऽऐन्द्रा ऽएता वा ऽएतन्देवता ऽअुग्ग्रे यज्ञँ सुमभरंस्ताभिरेवैनँ सुम्भरत्युथो ऽएताऽ एुवैतद्देवुता भागधेयेन सुमर्द्धयति ॥ १७ ॥

सुन्तता याज्यापुरोऽनुवाक्या भवन्ति । समानदेवत्याः प्रजानाँ सुन्तत्या ऽअव्यवच्छेदाय सुर्व्वाऽ आश्विन्यो भुवन्ति सुर्व्वाः सारस्वुत्यः सुर्व्वाऽ ऐन्द्र्यः समानी बन्धुता ॥ १८ ॥

---

सर्वे आश्विना भवन्ति । भैषज्याय । सर्वे सारस्वताः । अन्नाद्यस्यैवावरुद्ध्यै । सर्वे ऐन्द्राः । इन्द्रियस्यैव वीर्यस्यावरुद्ध्यै ॥ १६ ॥

यद्वेव सर्वे आश्विना भवन्ति । सर्वे सारस्वताः । सर्वे ऐन्द्राः । एता वा एतं देवता अग्रे यज्ञं समभरन् । ताभिरेवैनं संभरति । अथो एता एवैतद्देवता भागधेयेन समर्द्धयति ॥ १७ ॥

सन्तता याज्यापुरोऽनुवाक्या भवन्ति समानदेवत्याः । प्रजानां सन्तत्या अव्यवच्छेदाय । सर्वा आश्विन्यो भवन्ति । सर्वाः सारस्वत्यः । सर्वा ऐन्द्र्यः । समानी बन्धुता ॥ १८ ॥

---

आश्विना इत्यादयोऽनुपदं दर्शितार्थाः । लिंगक्रमादेव एवंरूपाणां प्रयाजैस्ते प्रैषाः प्राप्ताः । ततश्च अश्वि-सरस्वतीन्द्राः श्रुत्या प्रयाजप्रैषेषु देवतात्वेन न विहिताः । नैतद्युक्तमुपपद्यत इति प्राकृत्य एव प्रयाजेषु समिदादयो देवताः । नाश्व्यादयः । तद्धितोऽपि च "तस्येदम्" ( पा. सू. ४ । ३ । १२० ) इत्येवं द्रष्टव्यः । न "साऽस्य देवता"–( पा. सू. ४ । २ । २४ ) इति । एवमाप्रीष्वपि । नैतदुक्ता अश्व्यादयः । भैषज्या-येति । अश्विनौ देवानां भिषजावित्यभिप्रायः । अन्नाद्यस्यैवावरुद्ध्यै चरौ सरस्वतीति वाचा तान् चरध्वै इत्यभिप्रायः । तस्मात् यो वाचा प्रशाम्यान्नादौ हैव भवतीति ॥ १६ ॥

यथाह–यद्वेव सर्वे इति । ताभिर्यज्ञः संभवति । अथो एता एव तेन संकीर्त्यमानेन भागधेयेन एतदुक्ताभिः समर्द्धयन् । वचनादेव देवता विधीयते । तन्मन्यते । प्रैषवत्स्वादिप्रधानेनाचक्षते ॥ १७ ॥

संतता याज्येति । वपानां तावत्तिसृणामपि "आश्विना हविः" ( वा. सं. २० । ६७–६९ ) इत्येताः याज्यानुवाक्याः संतता अविच्छिन्ना भवंति । प्रथमामनूच्य द्वितीया याज्या । द्वितीयामनूच्य तृतीया याज्या । तृतीयामनूच्य प्रथमा याज्या । इत्येवमेव "य इंद्र इंद्रियम्" ( वा. सं. २० । ७०–७२ ) इत्येतास्तिस्रः । त्रयाणामपि पशुपुरोडाशानां संतता याज्याः । तृतीयामनूच्य प्रथमा याज्येत्येवम् । एवं "अश्विना गोभिः" ( वा. सं. २० । ७३–७९ ) इत्येतास्तिस्रो हविषां संतता याज्यापुरोऽनुवाक्या भवंति । 'समानदेवत्याः' ।

---

१–अश्विना हविरिंति तिस्रो वपानां याज्यानुवाक्याः । प्रथमामनूच्य द्वितीया याज्या, द्वितीयामनूच्य तृतीया याज्या, तृतीयामनूच्य प्रथमा याज्या । य इंद्र इति पुरोडाशानां पूर्ववत् ( पूर्ववदिति प्रथमामनूच्येत्येवमादि सर्वम् ) अश्विना गोभिरिति च हविषाम् । ( चकारात्प्रथमामनूच्येत्यादि ) का. श्रौ. सू. १९ । १४६–१४९ ।

२७९०

(ताऽनु) अनुष्टुभऽआप्रियो भवन्ति व्वाग्वा ऽअनुष्टुब्वाचो वै सोमः सूयते व्वाचैवैनᳬं सुनोति सोमसुत्यायै सर्व्वाऽआश्विन्यो भवन्ति सर्व्वाः सारस्वत्यः सर्व्वा ऽऐन्द्र्यः समानी बन्धुता ॥ १९ ॥

जागताऽअनुप्प्रैषा भवन्ति । (न्ती) इयम्वै जगत्यनया वै सोमः सूयतेऽनयैवैनᳬं सुनोति सोमसुत्यायै सर्व्वऽआश्विना भवन्ति सर्व्वे सारस्वताः सर्व्व ऽऐन्द्राः समानी बन्धुता ॥ २० ॥

स वाऽएष प्रत्यक्षात्सोमयज्ञऽएव यत्सौत्रामणी । तं यद्येकाकी यजमानो भक्षयेदिष्टिर्व्वैव स्यात्पशुबन्धो वा सर्व्वऽऋत्विजो भक्षयन्ति सर्व्वे वाऽ ऋत्विजः सोमम्भक्षयन्ति सोमरूपतायै ॥ २१ ॥

---

अनुष्टुभ आप्रियो भवन्ति । वाग्वा अनुष्टुप् । वाचा वै सोमः सूयते । वाचैवैनं सुनोति । सोमसुत्यायै । सर्वा आश्विन्यो भवन्ति । सर्वाः सारस्वत्यः । सर्वा ऐन्द्र्यः । समानी बन्धुता ॥१९॥

जागता अनुप्रैषा भवन्ति । इयं वै जगती । अनया वै सोमः सूयते । अनयैवैनं सुनोति । सोमसुत्यायै । सर्वे आश्विना भवन्ति । सर्वे सारस्वताः । सर्व ऐन्द्राः । समानी बन्धुता ॥ २० ॥

स वा एष प्रत्यक्षात् सोमयज्ञ एव । यत् सौत्रामणी । तं यद्येकाकी यजमानो भक्षयेत् । इष्टिर्वैव स्यात्पशुबन्धो वा । सर्वे ऋत्विजो भक्षयन्ति । सर्वे वा ऋत्विजः सोमं भक्षयन्ति । सोमरूपतायै ॥ २१ ॥

---

समाना अग्न्यादयो देवता आसामिति समानदेवत्याः । सर्वा आश्विन्य इत्यादिर्विपाहविषां च पुरोडाशानां च याज्यानुवाक्या भवंति । एवमेव तासामिंद्रसवितृवरुणदेवताः । 'समानी बंधुता' । "एता वा एतं देवता अग्रे यज्ञं समभरन्" इत्यादिब्राह्मणसमूहस्तुल्यप्रैषैः सह याज्यानुवाक्यानाम् ॥ १८ ॥

अनुष्टुभः आप्रियः । "समिद्धो अग्निरश्विना" ( वा. सं. २० । ५५–६६ ) इत्यादय अनुष्टुभः ॥१९॥

जागताः । जगत्यां भवा जागताः । अनुयाजप्रैषाः "देवं बर्हिः सरस्वती" ( वा. सं. २१ । ४७–५८ ) इत्येते । वकारद्वयविश्लेषेण तेषां पूर्वार्द्धा अष्टादशाक्षराः संपद्यंते । उत्तरार्द्धास्त्रयस्त्रिंशदक्षराः । 'इयं वै जगती' दूरंगतत्वात् । भूतानि चास्या गच्छंति द्वादश एवाभिन्नेति । अनया वै पृथिव्या सोमः सूयते । ग्राव्णां पार्थिवत्वात् ॥ २० ॥

'स वा एषः' । यस्मादेव मंत्रदीक्षादयः समग्राः तस्मादेषः प्रत्यक्षं सोमयज्ञ एव. सौत्रामणीत्युपसंहारश्चोत्तरोपन्यासश्च । न सोमयज्ञं सौत्रामण्याख्यम् । तेनात्र तदंशसाधनग्रहद्रव्यं पयः सुरा चोपलक्ष्यते । तं ग्रहशेषं सोमसुतं यदा उपहवो यजमान उपहूयस्व । उपहूत इति । ताभ्यां विना भक्षयेत् । न इष्टिर्वा एषा स्यात्

---

१–आप्रियश्च समिद्धे अग्निरश्विनेति । का. श्रौ. सू. १९ । १४६ । २–अनुयाजप्रैषा देवं बर्हिरिति । याज्याश्च । देवं बर्हिरित्यादयः प्रैषा एव याज्याः इत्यर्थः । का. श्रौ. सू. १९ । १६३ ।

( याऽआ ) आश्विनमध्वर्य्यवो भक्षयन्ति । ( न्त्य ) अश्विनौ वै देवाना-मध्वर्य्यू स्वमेवैतद्भागधेयꣳ स्वऽ आयतने भक्षयन्ति ॥ २२ ॥

सारस्वतꣳ होता ब्रह्मा मैत्रावरुणः । ( णो ) व्वाग्वै यज्ञस्य होता हृदय-म्ब्रह्मा मनो मैत्रावरुणः स्वमेवैतद्भागधेयꣳ स्वऽआयतने भक्ष-यन्ति ॥ २३ ॥

( न्त्यै ) ऐन्द्रं यजमानो भक्षयति । ( त्यै ) ऐन्द्रो वाऽएष यज्ञो यत्सौत्रामणीन्द्रायतनऽ एष ऽएतर्हि यो यजते स्वमेवैतद्भागधेयꣳ स्व ऽआयतने भक्षयति ॥ २४ ॥

चक्षुर्व्वा ऽआश्विनो ग्ग्रहः । प्राणः सारस्वतो व्वागैन्द्र ऽआश्विनात्सार-स्वतेऽवनयति चक्षुरेवास्य तत्प्राणैः सन्दधाति सारस्वतादैन्द्रे प्राणाने-

---

आश्विनमध्वर्यवो भक्षयन्ति । अश्विनौ वै देवानामध्वर्यू । स्वमेवैतत् भागधेयं स्व आयतने भक्षयन्ति ॥ २२ ॥

सारस्वतं होता ब्रह्मा मैत्रावरुणः । वाग्वै यज्ञस्य होता । हृदयं ब्रह्मा । मनो मैत्रावरुणः । स्वमेवैतत् भागधेयं स्व आयतने भक्षयन्ति ॥ २३ ॥

ऐन्द्रं यजमानो भक्षयति । ऐन्द्रो वा एष यज्ञः । यत्सौत्रामणी । इन्द्रायतन एष एतर्हि । यो यजते । स्वमेवैतत् भागधेयं स्व आयतने भक्षयति ॥ २४ ॥

चक्षुर्वा आश्विनो ग्रहः । प्राणः सारस्वतः । वागैन्द्रः । आश्विनात्सारस्वतेऽवनयति । चक्षु-

---

पशुबंधो वा तत्र हि—यथा सर्वर्त्विजः शेषं भक्षयंतः परस्परानपेक्षाः असहाया एव भक्षयंति । तथा यजमानोऽप्यसहायो भक्षयति । सोमे त्वनुज्ञाप्य यदा सहाया भक्षयंति तदा इत्यभिप्रायः ॥ २१ ॥

'आश्विनमध्वर्यवः' अध्वर्युः प्रतिप्रस्थाताऽग्नीध्र इत्येते आध्वर्यववेदात्मकं कर्म कुर्वन्तीत्येतेऽत्राध्वर्यवो गृह्यंते । आश्विनं पयोग्रहं वाक्यशेषात् ॥ २२ ॥

'सारस्वतम्' वाग्वै वागिंद्रियं 'यज्ञस्य होता' तेन च वागिंद्रियेण प्रायो यज्ञो व्याप्रियते । हृदयस्थानात् हृदयस्थो न बहिर्ब्रह्मा । स हि बुद्धिप्रधानः अप्रत्यक्षत्वात् । मनो मैत्रावरुणः । स हि मनसि वसत्यतस्तद्धोत्रा प्रेष्यते चान्वाहरंतश्च सहसैव सैव भेदेन दर्शी । तं होता वाग्भूतः अनुवदति । इति मनो मैत्रावरुण इत्यापाद्यते ॥ २३ ॥

'ऐन्द्रं यजमानः' । ऐन्द्रो वै स एष यज्ञः सौत्रामणी इंद्रस्य । संस्कार्यत्वादिन्द्रस्य स्थानं यजमानत्वं इंद्रायतनम् । तस्मिन्निन्द्रायतने एषोऽधुना वर्तते यो यजते ॥ २४ ॥

'चक्षुर्वा आश्विनः' । आश्विने ग्रहे त्रिभिरप्यध्वर्युभिर्भक्षिते स सनिःशेषं सारस्वते अवनयति । चक्षुरेवास्य यज्ञस्याश्विनात्मकम् । तत् प्राणैः प्राणोदानव्यानैः संदधाति । सारस्वतोऽपि यदा अग्नीधैव भक्षितः । तदा

वास्य तद्वाचा सन्दधात्यथो प्राणानेवास्य तद्वाचि प्रतिष्ठापयति तस्मात्सर्वे प्राणा वाचि प्रतिष्ठिताः ॥ २५ ॥

(ब्र) त्रयऽ आश्विनम्भक्षयन्ति (न्त्य) अध्वर्युः प्रतिप्रस्थाता ऽऽग्नीध्रस्त्रिवृद्वा ऽइदञ्चक्षुः शुक्लं कृष्णङ्कनीनका यथारूपमेवास्मिंश्चक्षुर्दधाति ॥ २६ ॥

त्रयः सारस्वतम् । (थ्ँ) होता ब्रह्मा मैत्रावरुणस्त्रेधाविहितो वा ऽअयम्प्राणः प्राणऽ उदानो व्यानऽ इति यथारूपमेवास्मिन्प्राणन्दधाति ॥ २७ ॥

(त्ये) एकाक्यैन्द्रं यजमानो भक्षयति । (त्ये) एकधा वा ऽएषा प्राणानाथ्ँ श्रीर्य्यद्वागेकधैव वाचथ्ँ श्रियमात्मन्धत्ते तस्मात्सौत्रामण्येजानऽएकधा स्वानाथ्ँ श्रेष्ठो भवत्यथो य ऽएवमेतद्वेद ॥ २८ ॥

(ऽ) ऋतवो वाऽऋत्विजः । (जो) मासा भक्षाः षडृत्विजो भक्षयन्ति षड्वाऽ ऋतवऽ ऋत्विग्भिरेवर्तूनवरुन्द्धे ॥ २९ ॥

---

रेवास्य तत्प्राणैः सन्दधाति । सारस्वतादैन्द्रे । प्राणानेवास्य तद्वाचा सन्दधाति । अथो प्राणानेवास्य तद्वाचि प्रतिष्ठापयति । तस्मात्सर्वे प्राणा वाचि प्रतिष्ठिताः ॥ २५ ॥

त्रय आश्विनं भक्षयन्ति । अध्वर्युः प्रतिप्रस्थाताऽऽग्नीध्रः । त्रिवृद्वा इदं चक्षुः । शुक्लं कृष्णं कनीनका । यथारूपमेवास्मिन् चक्षुर्दधाति ॥ २६ ॥

त्रयः सारस्वतम् । होता ब्रह्मा मैत्रावरुणः । त्रेधाविहितो वा अयं प्राणः । प्राण उदानो व्यान इति । यथारूपमेवास्मिन् प्राणं दधाति ॥ २७ ॥

एकाक्यैन्द्रं यजमानो भक्षयति । एकधा वा एषा प्राणानां श्रीः । यद् वाक् । एकधैव वाचं श्रियमात्मन्धत्ते । तस्मात्सौत्रामण्येजान एकधा स्वानां श्रेष्ठो भवति । अथो य एवमेतद्वेद ॥ २८ ॥

ऋतवो वा ऋत्विजः । मासा भक्षाः । षड् ऋत्विजो भक्षयन्ति । षड्वा ऋतवः । ऋत्विग्भिरेव ऋतूनवरुन्धे ॥ २९ ॥

---

भक्षितशेषम् अभक्षिते ऐन्द्रे आनयति । प्राणोदानव्यानानेवास्य यजमानस्य तेन वाचा वागिन्द्रियेण संदधाति । अथो प्राणोदानव्यानानेवास्य तेन वागिन्द्रियेण प्रतिष्ठापयति । तस्मात् सर्वे प्राणाः वागिन्द्रिये प्रतिष्ठिताः । स्वेन ह्येतदपि दधते । तदधीनस्थितयः सर्वे प्राणाः ॥ २५ ॥

त्रय आश्विनम् । प्रसन्ने द्वे ॥ २६ ॥ २७ ॥

'एकाक्यैन्द्रम्' एकधा एकाधिकरणा । एषा प्राणानां श्रीः श्रयणीया उपजीव्या वाक् । तदधीनस्थितित्वात् । एकधा एव यतः तां श्रयतीति श्रियं वाचं एव श्रियं उपजीव्यामात्मनि स्थापयति । तस्मात्सौत्रामण्या इष्ट्वा तुलीकृतो ज्ञातीनां श्रेष्ठः प्रशस्यतमो भवति ॥ २८ ॥

'ऋतवो वा ऋत्विजः' ऋतव ऋत्विजः । 'मासा भक्षाः' । संख्यासामान्यात् ॥ २९ ॥

द्वादश भक्षा भवन्ति । द्वादश वै मासा भक्षैरेव मासानवरुन्द्धे पुनः-पुनरभिनिवर्त्तमृत्विजो भक्षयन्ति तस्मादृतवश्च मासाश्चान्योऽन्यमभि-निवर्त्तन्ते ॥ ३० ॥

त्रयोदशं यजमानो भक्षयति । यो ह वाऽएष त्रयोदशो मासऽएषऽ एव प्रत्यक्षात्सम्वत्सर ऽएतमेवाप्त्वाऽवरुन्द्धे स वाऽ एष सम्वत्सरऽएव यत्सौत्रामणी तेन सर्व्वञ्जयति सर्व्वमवरुन्द्धे ॥ ३१ ॥

त्रयः पशवो भवन्ति । त्रयो वाऽइमे लोका ऽइमानेव तैर्ल्लोकानवरुन्द्ध ऽइममेव लोकमाश्विनेनान्तरिक्षꣳ सारस्वतेन दिवमैन्द्रेण यथारूपमेव यथादेवतमिमाँल्लोकाञ्जयति चाव च रुन्द्धे ॥ ३२ ॥

त्रयः पुरोडाशा भवन्ति । त्रयो वा ऽऋतव ऽऋतूनेवैतैरवरुन्द्धे ग्रीष्म-मेवैन्द्रेण व्वर्षाः सावित्रेण हेमन्तं व्वारुणेन यथारूपमेव यथादेवतमृतू-ञ्जयति चाव च रुन्द्धे ॥ ३३ ॥

---

द्वादश भक्षा भवन्ति । द्वादश वै मासाः । भक्षैरेव मासानवरुन्धे । पुनःपुनरभिनिवर्तमृत्विजो भक्षयन्ति । तस्मात् ऋतवश्च मासाश्चान्योऽन्यमभिनिवर्तन्ते ॥ ३० ॥

त्रयोदशं यजमानो भक्षयति । यो ह वा एष त्रयोदशो मासः । एष एव प्रत्यक्षात्संवत्सरः । एतमेवाप्त्वाऽवरुन्धे । स वा एष संवत्सर एव । यत्सौत्रामणी । तेन सर्वं जयति । सर्वमवरुन्धे ॥ ३१ ॥

त्रयः पशवो भवन्ति । त्रयो वा इमे लोकाः । इमानेव तैर्लोकानवरुन्धे । इममेव लोकमाश्विनेन । अन्तरिक्षं सारस्वतेन । दिवमैन्द्रेण । यथारूपमेव यथादेवतमिमान् लोकान् जयति चाव च रुन्धे ॥ ३२ ॥

त्रयः पुरोडाशा भवन्ति । त्रयो वा ऋतवः । ऋतूनेवैतैरवरुन्धे । ग्रीष्ममेवैन्द्रेण । वर्षाः सावित्रेण । हेमन्तं वारुणेन । यथारूपमेव यथादेवतमृतून् जयति चाव च रुन्धे ॥ ३३ ॥

---

' द्वादश भक्षाः ' अभिनिवर्त्याभिनिवर्त्याभिनिवर्त्य त्रयोऽप्याश्विनं भक्षयित्वा । पुनश्चैवाभिनिवर्तन्ते आलं-भयन्ते । एवं सारस्वतम् । एवं सुराग्रहान् । तस्मादेते ऋतवश्च मासाश्च अन्योऽन्यमृतवो मासान्मासाश्च ऋतू-नभिनिवर्तंते ते त्रयः फाल्गुनमभिनिवर्तन्ते ॥ ३० ॥

' त्रयोदशम् ' ' यो ह वा एष त्रयोदशो मासः ' । अधिमासः । को नाम । यः क्षयात् संवत्सरः समाप्यते, नेतरेष्विल्यभिप्रायः । एतमेव प्राप्यानपायिनं वाऽस्य करोति । ततश्च संवत्सर एवैष ( करेरुषो । या सौत्रामणी । तेन सौत्रामणीरूपेण संवत्सरेण सर्वं जगत्कार्यं संवत्सराष्टकम् । यजतित्वात् वरुणत्वे च अयं करोति ? ) ॥ ३१ ॥

' त्रयः पशवः ' । प्रसन्नास्तिस्रः ॥ ३२–३४ ॥

षड्ग्रहा भवन्ति । षड्वाऽ ऋतवऽ ऋतूनेवैतैरवरुन्द्धे व्वसन्तग्रीष्मावेवाश्विनाभ्याम्वर्षाशरदौ सारस्वताभ्याᳫं हेमन्तशिशिरावैन्द्राभ्यां यथारूपमेव यथादेवतमृतूञ्जयति चाव च रुन्द्धे ॥ ३४ ॥

सन्तता याज्यापुरोऽनुवाक्या भवन्ति । समानदेवत्याऽ ऋतूनाᳫं सन्तत्याऽअव्यवच्छेदाय सर्वाः पुरोऽनुवाक्या भवन्ति सर्वा याज्यास्तस्मादृतवः सर्वे पराञ्चः सर्वे प्रत्यञ्चः सर्वाः प्रथमा भवन्ति सर्वा मध्यमाः सर्वा ऽउत्तमास्तस्मादृतवः सर्वे प्रथमाः सर्वे मध्यमाः सर्वेऽउत्तमाः सर्वेषां ग्रहाणां द्वे याज्यापुरोऽनुवाक्ये भवतोऽहोरात्रयोस्तद्रूपमहोरात्रे ऽएवावरुन्द्धे तस्मादृतवश्च मासाश्चाहोरात्रयोरेव प्रतिष्ठिताः॥३९॥

---

षड् ग्रहा भवन्ति । षड्वा ऋतवः । ऋतूनेवैतैरवरुन्धे । वसन्तग्रीष्मावेवाश्विनाभ्याम् । वर्षाशरदौ सारस्वताभ्याम् । हेमन्तशिशिरावैन्द्राभ्याम् । यथारूपमेव यथादेवतमृतून् जयति चाव च रुन्धे ॥ ३४॥

संतता याज्यापुरोऽनुवाक्या भवन्ति समानदेवत्याः । ऋतूनां संतत्या अव्यवच्छेदाय । सर्वाः पुरोऽनुवाक्या भवन्ति । सर्वा याज्याः । तस्मात् ऋतवः सर्वे परांचः । सर्वे प्रत्यंचः । सर्वाः प्रथमा भवन्ति । सर्वा मध्यमाः । सर्वा उत्तमाः । तस्मात् ऋतवः सर्वे प्रथमाः । सर्वे मध्यमाः । सर्वे उत्तमाः । सर्वेषां ग्रहाणां द्वे याज्यापुरोऽनुवाक्ये भवतः । अहोरात्रयोस्तद्रूपम् । अहोरात्रे एवावरुन्धे । तस्मात् ऋतवश्च मासाश्चाहोरात्रयोरेव प्रतिष्ठिताः ॥ ३९ ॥

---

'सन्तता याज्यापुरोऽनुवाक्याः' । संतताः । प्रथमस्य याज्या द्वितीयस्यानुवाक्या क्रियते, पूर्वोत्तरयोर्युगलयोः सन्तत्यै । एवं द्वितीयस्य याज्या तृतीयस्यानुवाक्या । तृतीयस्य प्रथमा याज्या । एवं सन्ततास्ता भवन्ति । एवमेव च सर्वाः पर्यायेण पुरोऽनुवाक्या याज्याश्च भवन्ति । तस्मात् ऋतवः सर्वे परांचः स्वस्थानेनावर्तंते । ग्रीष्मणोऽनन्तरं वर्षा भवन्ति । न पुनः ग्रीष्मः । एवं वर्षाणामनन्तरं हेमन्तो भवति । न पुनर्वर्षाः । इत्येवं सर्वे परांचः । सर्वे प्रत्यंचः पुनरावर्तंत इत्यर्थः । सर्वाः प्रथमा इति । प्रथमाद्वितीयायोगयोस्तिस्र ऋचः प्रयुज्यन्ते । तत्रैका प्रथमा भवति, द्वितीया मध्यमा, तृतीया चोत्तमा । द्वितीयातृतीयायोगयोः प्रयोगेणाभिषवस्य मध्यमा सा प्रथमा भवति । या अन्त्या सा मध्यमा भवति । या अन्त्या द्वितीयाऽन्त्या सा प्रथमा भवति । तस्मादृतवः सर्वे प्रथमाः । यो हेमन्तस्तस्य हेमन्तादय इत्यर्थः । सर्वेषामपि ग्रहाणां द्वे एव याज्यानुवाक्ये । सर्वदेवत्येषु "युवᳫं सुरामं, पुत्रमिव" ( वा. सं. २० । ७६–७७ ) इत्येते भवतः । तस्य देवतात्रयस्य युगपदेव आह्वानोपदेशाच्च प्रदानमपि सहैव युगपदेव कार्यम् । पयोग्रहाणामध्वर्युः । सुराग्रहाणां प्रतिप्रस्थाता । तस्मात् ऋतवश्च मासाः अहोरात्रयोरेव प्रतिष्ठिता इति । तत्राहोरात्राभ्यामृतवो मासाश्च वर्तन्त इत्यर्थः ॥ ३९ ॥

स वा ऽएष सम्वत्सर ऽएव यत्सौत्रामणी । चन्द्रमा ऽएव प्रत्यक्षादा- दित्यो यजमानस्तस्येयमेव पृथिवी व्वेदिरन्तरिक्षमुत्तरवेदिर्द्यौर्बर्हिर्दिश ऽऋत्विजो व्वनस्पतय ऽइध्मऽआपऽ आज्यमोषधय ऽआहुतयोऽग्नि- रेवाग्निः सम्वत्सरः सꣳस्था तद्वाऽ इदꣳ सर्व्वꣳ सम्वत्सर ऽएव यदिदं किञ्च तस्मात्सौत्रामण्येजानः सर्व्वञ्जयति सर्व्वमवरुन्द्धे ॥ ३६ ॥

इति चतुर्थप्रपाठके प्रथमं ब्राह्मणम् ॥ १२।४।१ ॥ ( ८-२ ) ॥

त्वष्टा हतपुत्रः । (त्रोऽभि) अभिचरणीयमपेन्द्रꣳ सोममाहरत्तस्येन्द्रो यज्ञ-

---

स वा एष संवत्सर एव । यत्सौत्रामणी । चंद्रमा एव प्रत्यक्षात् आदित्यो यजमानः । तस्ये- यमेव पृथिवी वेदिः । अंतरिक्षमुत्तरवेदिः । द्यौर्बर्हिः । दिश ऋत्विजः । वनस्पतय इध्मः । आप आज्यम् । ओषधय आहुतयः । अग्निरेवाग्निः । संवत्सरः संस्था । तद्वा इदं सर्वं संवत्सर एव । यदिदं किंच । तस्मात् सौत्रामण्येजानः सर्वं जयति । सर्वमवरुन्धे ॥ ३६ ॥

त्वष्टा हतपुत्रोऽभिचरणीयमपेन्द्रं सोममाहरत् । तस्येन्द्रो यज्ञवेशसं कृत्वा प्रासहा सोम-

---

'स वा एष संवत्सर एव' । एषा सौत्रामणी । उपासने विशेषः । कीदृशः ? संवत्सर एव यत्सौत्रामणी । चन्द्रमा एव प्रत्यक्षात् । चन्द्रो हि वृद्धिक्षयविशिष्ट आवर्तमानः न क्रीतेन सोमेन स एव संवत्सरः स पशुमत्सौत्राम- णीत्युक्तम् । पयःसुरयोः सोमत्वात् । यदा चंद्रमाः सौत्रामणी । ततस्तदा आदित्यो यजमानः द्वयोः सामान्यात् । पृथिवी वेदिः, आधारत्वात् । अन्तरिक्षमुत्तरवेदिः, पृथिव्या उत्तरत्वात् । तथैव द्यौर्बर्हिः । दिश ऋत्विजः । वन- स्पतय इध्मः, इन्धनत्वात् । आप आज्यं, द्रवत्वात् । ओषधय आहुतयः, आहुतिप्रकृतित्वात् । संवत्सर एव संस्था समाप्तिः । संवत्सरे हि सर्वमिदं सन्तिष्ठते । तद्वा इदमिति संवत्सरोपासनावचनम् ॥ ३६ ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यंदिनीयशतपथब्राह्मणभाष्ये द्वादशे कांडे अष्टमेऽध्याये द्वितीयं ब्राह्मणम् ॥ १२ । ८ । २ ॥

त्वष्टा हतपुत्रः । प्रसन्नप्रायमेव ब्राह्मणम् । वैसाहोमः[1] । तैच्छेषेणाभिषेकः[2] । अंगालम्भः[3] । अभिषिक्तस्य[4]

---

१–शामित्रनुशासनप्रभृति वनस्पत्यन्तं कृत्वा सोमासन्दीवदासंदीं जानुमात्रपादीं वेद्योर्निदधाति क्षत्रस्य योनिरिति । कृष्णा- जिनमस्यामास्तृणाति मा त्वेति । तस्मिन्नास्ते यजमानो निषसादेति । पादयो रुक्मा उपास्यति राजतꣳ सव्ये मृत्योरिति । खुरैर्वसा- प्रहान् द्वात्रिꣳशतं जुहोति सीसेनेति प्रत्यृचम् । ( खुराश्वार्षभाः । सीसेन तन्त्रमित्यारभ्य तेजः पशूनामित्यन्ताः षोडश मन्त्राः । एकैकेन मंत्रेण द्वयोर्द्वयोर्होमः इत्यर्थः । ) द्वौ द्वौ हुत्वा शेषान् सते करोति । ( सतं पात्रं तच वैतसम् ) । का. श्रौ. सू. १९ । ९०–९६ ।

२–सर्वसुरभ्युन्मृदितꣳ शेषैरभिषिंचत्यामुखादवस्रावयन् प्रतिदिशं सर्वत्र सावित्रमश्विनोः सरस्वत्या इन्द्रस्येति प्रतिमन्त्रम् । सर्वाभिश्चतुर्थम् । महाव्याहृतिभिरेके । उत्तमेन वा । उन्मर्दनमभिषेकेऽवनीयैके । । यजमानमालभते कोऽसीति । सुश्लोकेत्यालब्धो ह्वयति का. श्रौ. सू. १९ । ९७–१०३ ।

३–अंगानि चालभते यथालिंगं शिरो म इति प्रतिमन्त्रम् । का. श्रौ. सू. १९ । –१०४ ।

४–उद्यच्छन्त्येनꣳ शतरुद्रियवत्प्रमाणेषु । ( आहूताः सुश्लोकसुमंगलादयः कर्तारः । कृष्णाजिनेऽवरोहति प्रतिक्षत्र इति । ( अवरोहणं अवतरणं आसन्दीतः कृष्णाजिनेऽवतरणमित्यर्थः । ) का. श्रौ. सू. १९ । १०५–१०६ ।

वेशसं कृत्वा प्रासहा सोममपिबत्स विष्वङ् व्याच्छंत्तस्य मुखा-त्प्राणेभ्यः श्रीयशसान्यूर्ध्वान्युदक्रामंस्तानि पशून्प्राविशंस्तस्मात्पशवो यशो यशो ह भवति य एवं विद्वान्त्सौत्रामण्याऽभिषिच्यते ॥ १ ॥

ततोऽस्माऽएतमश्विनौ च सरस्वती च। यज्ञᳩ समभरन्त्सौत्रामणीम्भैषज्याय तयैनमभ्यषिञ्चंस्ततो वै स देवानाᳩ श्रेष्ठोऽभवच्छ्रेष्ठः स्वानाम्भवति य एनयाऽभिषिच्यते ॥ २ ॥

कृष्णाजिनेऽभिषिञ्चति । यज्ञो वै कृष्णाजिनं यज्ञ ऽएवैनमेतदभिषिञ्चति लोमतश्छन्दाᳩसि वै लोमानि च्छन्दःस्वेवैनमेतदभिषिञ्चति ॥ ३ ॥

---

मपिबत् । स विष्वङ् व्याच्र्छत् । तस्य मुखात् प्राणेभ्यः श्रीयशसान्यूर्ध्वान्युदक्रामन् । तानि पशून् प्राविशन् । तस्मात्पशवो यशः । यशो ह भवति । य एवं विद्वान् सौत्रामण्याऽभिषिच्यते ॥ १ ॥

ततोऽस्मा एतमश्विनौ च सरस्वती च यज्ञं समभरन् सौत्रामणीं भैषज्याय । तयैनमभ्यषिंचन् । ततो वै स देवानां श्रेष्ठोऽभवत् । श्रेष्ठः स्वानां भवति । य एनयाऽभिषिच्यते ॥ २ ॥

कृष्णाजिनेऽभिषिंचति । यज्ञो वै कृष्णाजिनम् । यज्ञ एवैनमेतदभिषिंचति । लोमतः । छन्दांसि वै लोमानि । छन्दस्स्वेवैनमेतदभिषिंचति ॥ ३ ॥

---

उद्ग्रहणावतरणे अंगालंभाः । त्रयस्त्रिंशवसाग्रहग्रहणहोमभक्षाः । मुखात्प्राणेभ्यश्च इति चशब्दो द्रष्टव्यः । मुखात्तदितरेभ्यश्चेत्यर्थः । श्रीयशसानि इति श्रेयस्यः सुखनीयाः । कायस्य साराः । ताः यशांसि च । लोके अगर्हितानि यशस्वीनि तेजआदीनि यथोक्तानि । ऊर्ध्वानि उत्क्रांतानि सोमेन सह । तानि पशून् सोममिव आत्तप्रभावात् पशुषु प्रविविशुः । तैरेवोपेतास्ते पशवो जायन्त इत्यर्थः । यस्मात्तानि पशून् अजात्सोममिश्रत्वात्प्रतिष्ठानि । तस्मात्ते पशवो यशश्विनः अभ्यर्हिताः लोको यशस्वी एव संबंधनीय इति एवमुपासीत ॥ १–४ ॥

---

१–त्रयस्त्रिंशं वसाग्रहं गृह्णाति यो भूतानामिति । ( आर्षभेण खुरेण ) आज्यग्रहमाश्वत्थेनैके । ( ततश्चाहवनीययजतित्वात् ध्रुवायाः सवषट्कारत्वात् चतुर्ग्रहणमाप्यायनं चेति कर्कः । ( का. श्रौ. सू. १९ । १०७–१०८ ।

२–साम प्रेष्यति । ( साम गाय साम ब्रूहीति वा प्रैषः । ) ऐंद्र्यां बृहत्यां गायति । ( ब्रह्मा गायतीति कर्कः । ) ऐंद्री बृहती " बृहदिंद्राय गायत " ( वा. सं. २० । ३० ) इयं ऋक् बृहत्साम्नो योनिः । सश्रवसे, विश्रवसे, सत्यश्रवसे, श्रवसे इति सर्वे निधनमुपयंति । ( सर्वे ऋत्विग्यजमानाः । उपयंति पठंतीत्यर्थः । ) संजित्यै, विजित्यै सत्यजित्यै, जित्या इति क्षत्रियस्य । संपुष्ट्यै, विपुष्ट्यै, सत्यपुष्ट्यै, पुष्ट्या इति वैश्यस्य । यथाम्नातं वा सर्वेषाम् । आस्ते प्रतिगरिष्यन् । ( सामगानानंतरं होता शस्त्रं शंसति । तत्र प्रतिगरदानार्थं अध्वर्युर्होतुरग्रत उपविशति । ( आस उपवेशने इति धात्वर्थः । ) त्रया देवा इति शस्त्रांते जुहोति । ( त्रयस्त्रिंशं वसाग्रहम् । स च होमः अनुवाचनयजप्रैषपूर्वकम् । देवताश्चात्र प्रकृता एव । " अश्विना तेजसा " " अश्विना पिबतम् " ( वा. सं. २० । ८०–९० ) इति याज्यानुवाक्ययोस्तदभिधानादिति कर्कः । ) का. श्रौ, सू. १९ । १०९–११६ ।

३–शेषमृत्विजः प्राणभक्षं भक्षयंति प्राणपा म इति । ( शेषस्त्रयस्त्रिंशवसाग्रहहोमशेषः । प्रत्यक्षभक्षं यजमानो लोमानि प्रयतिरिति । का, श्रौ. सू. १९ । ११७–११८ ।

(त्या) आसन्द्यामभिषिञ्चति (त्या) आसन्दीसद्वै साम्राज्यꣳ साम्राज्ये-नैवैनꣳ साम्राज्यङ्गमयति ॥ ४ ॥

( त्यौ ) औदुम्बरी भवति । ( त्यू ) ऊर्ग्वा ऽउदुम्बर ऽऊर्ज्यैवाध्यभि-षिच्यते जानुसम्मिता भवति जानुसम्मितो वा ऽअयं लोकोऽस्माऽउ वै लोकाय क्षत्त्रियोऽभिषिच्यते क्षत्त्रमु वा ऽएष भवति यः सौत्रामण्या-ऽभिषिच्यते तस्माज्जानुसम्मिता परिमिता तिरश्ची ॥ ५ ॥

राष्ट्रम्वा ऽआसन्दी । ( न्त्र ) अपरिमितसमृद्धमु वै राष्ट्रं मुञ्जविवयना भवति यज्ञिया हि मुञ्जा द्वा ऽउत्तरस्यांवेद्याम्पादौ भवतो द्वौ दक्षि-णस्यामयम्वै लोकऽ उत्तरा व्वेदिर्दक्षिणा पितृलोकस्तदेनमुभयोर्ल्लोकयो-रध्यभिषिञ्चति ॥ ६ ॥

( त्ये ) एतद्ध स्म वै तद्विद्वानाह । गोरीवीतिः शाक्त्यः क्षत्त्रमिवाह किल व्वयममुष्मिंल्लोके भवितास्म ऽइति शश्वद्धास्माऽ ऋषभो याज्ञतुरः प्रोवाच शिक्नानाꣳ राजा ॥ ७ ॥

---

आसंद्यामभिषिंचति । आसंदीसद्वै साम्राज्यम् । साम्राज्येनैवैनं साम्राज्यं गमयति ॥ ४ ॥

औदुम्बरी भवति । ऊर्ग्वा उदुम्बरः । ऊर्ज्यैवाध्यभिषिच्यते । जानुसंमिता भवति । जानु-संमितो वा अयं लोकः । अस्मा उ वै लोकाय क्षत्रियोऽभिषिच्यते । क्षत्त्रमु वा एप भवति । यः सौत्रामण्याऽभिषिच्यते । तस्मात् जानुसंमिता । परिमिता तिरश्ची ॥ ५ ॥

राष्ट्रं वा आसंदी । अपरिमितसमृद्धमु वै राष्ट्रम् । मुंजविवयना भवति । यज्ञिया हि मुंजाः । द्वा उत्तरस्यां वेद्यां पादौ भवतः । द्वौ दक्षिणस्याम् । अयं वै लोक उत्तरवेदिः । दक्षिणा पितृलोकः । तदेनमुभयोर्लोकयोरध्यभिषिंचति ॥ ६ ॥

एतद्ध स्म वै तद्विद्वानाह गोरीवीतिः शाक्त्यः । क्षत्रमिवाह किल वयममुष्मिन् लोके भवि-तास्म इति । शश्वद्धास्मा ऋषभो याज्ञतुरः प्रोवाच श्विक्नानां राजा ॥ ७ ॥

---

सौत्रामण्या अभिषिच्यते । सौत्रामण्या यजत इत्याह–क्षत्त्रमु वा एष भवति । क्षत्त्रियो वै । ( क्षत्रियपदा-दिति सितान्येषां भवति ? ) । ततश्चैश्वर्यं तस्मिन्नेव लोके इत्यभिप्रायः ॥ ५ ॥

' राष्ट्रं वा आसंदी ' । राष्ट्रं जनपदः । तत् आसंदी उपास्या । ततः किं ? अपरिमितं बहुना अपरिमितेन ध्नते । मुंजानि विवयनानि यस्यामेव मुंजविवयना ॥ ६ ॥ विधिवद्-

एतद्ध स्म । उभयोर्लोकयोरेनमभिषिंचति । क्षत्त्रं वैष भवति यः सौत्रामण्याऽभिषिच्यते । एतद्वि-

स॒ऽ आसन्दीमा॒स्तृणाति । क्षत्त्र॒स्य यो॒निरसि क्षत्त्र॒स्य ना॒भिरसी॒ति क्षत्त्र॒स्य वा॒ऽ एषा यो॒निः क्षत्त्र॒स्य ना॒भिः ॥ ८ ॥

( रु ) अ॒थैनाङ्कृष्णाजिनेना॒स्तृणाति । मा॒ त्वा हिᳬसीन्मा॒ मा हिᳬसी-दि॒ति य॒ज्ञो वै॒ कृ॒ष्णाजि॒नं य॒ज्ञस्य चै॒वात्म॒नश्चाहिᳬसायै ॥ ९ ॥

( याऽअ ) अथा॒धिरोहति । व्वा॒रुण्यर्चा व्व॒रुणो वै॒ देवा॒नाᳬ राजा स्वयै॒वैनमेत॒द्देव॒तयाऽभि॒षिञ्चति नि॒षसाद धृत॒व्व्रतो व्व॒रुणः प॒स्त्यास्वा । सा॒म्म्राज्याय सु॒क्रतु॒रिति ॥ १० ॥

( त्यु ) अ॒थ सु॒वर्णरज॒तौ रु॒क्मौ व्यु॒पास्यति । मृत्योः पाहि व्विद्यो॒-त्पाद्धी॒ति व्वृ॒ष्टिर्व्वै॒ व्वि॒राट्त॒स्याऽ ए॒ते घो॒रे त॒न्वौ व्वि॒द्युच्च ह्रादु॒निश्च त॒तः सु॒व॒र्ण ऽए॒व रु॒क्मो व्वि॒द्युतो रू॒पᳬ रजतो ह्रादु॒नेस्त॒भ्यामे॒वास्मै दे॒व॒ताभ्याᳬ शर्म्म यच्छति त॒स्मात्सौत्रा॒मण्येजा॒नस्यै॒ताभ्यां दे॒व॒-ताभ्यां न॒ शङ्का॒ भवत्य॒थो य॒ऽ ए॒वमेतद्वे॒द ॥ ११ ॥

पशू॒नाम्व॒सयाऽभि॒षिञ्चति । श्रीर्व्वै॒ पशू॒नाम्व॒सा श्रि॒यै॒वैनमेत॒त्पशू॒नाᳬ

---

स आसंदीमास्तृणाति। "क्षत्त्रस्य योनिरसि क्षत्त्रस्य नाभिरसि"–इति । क्षत्त्रस्य वा एषा योनिः। क्षत्त्रस्य नाभिः ॥ ८ ॥

अथैनां कृष्णाजिनेनास्तृणाति । "मा त्वा हिंसीन्मा मा हिंसीः"–(वा. सं. २०।१) इति । यज्ञो वै कृष्णाजिनम् । यज्ञस्य चैवात्मनश्चाहिंसायै ॥ ९ ॥

अथाधिरोहति वारुण्यर्चा । वरुणो वै देवानां राजा । स्वयैवैनमेतद्देवतयाऽभिषिंचति । "निषसाद धृतव्रतो वरुणः पस्त्यास्वा । साम्राज्याय सुक्रतुः"–(वा. सं. २०।२) इति ॥ १० ॥

अथ सुवर्णरजतौ रुक्मौ व्युपास्यति । "मृत्योः पाहि विद्योत्पाहि"–(वा. सं २०।२) इति। वृष्टिर्वै विराट् । तस्या एते घोरे तन्वौ । विद्युच्च–ह्रादुनिश्च । ततः सुवर्ण एव रुक्मो विद्युतो रूपम् । रजतो ह्रादुनेः । ताभ्यामेवास्मै देवताभ्यां शर्म यच्छति । तस्मात् सौत्रामण्येजानस्यैताभ्यां देवताभ्यां न शंका भवति। अथो य एवमेतद्वेद ॥ ११ ॥

पशूनां वसयाऽभिषिंचति । श्रीर्वै पशूनां वसा । श्रियैवैनमेतत् पशूनां रसेनाभिषिंचति । अथो परमं वा एतदन्नाद्यम् । यद्वसा । परमेणैवैनमेतदन्नाद्येनाभिषिंचति ॥ १२ ॥

---

द्वानाह–गौरीवीतस्यापत्यं गौरीवीतिः। शक्तस्यापत्यं शाक्त्यः । सौत्रामणीयाजी राजा आह, उक्तवान्। क्षत्रं किल वयममुष्मिन् लोके पतिर्भवितास्म इत्येतदुक्तवान् । केभ्यः स्वयं दृष्टे अहकिलशब्दौ अवधारणार्थौ । कुतः ? पुनः शक्यत एव श्रुतत्वात् । मनः क्षत्रियभवनमिश्यत आह शश्वच बहुकृत्वः। अस्मै ऋषभो यज्ञतुरस्यापत्यम् ॥ ७–१२॥

रसेनाभिषिञ्चत्यथो परमम्वा ऽ एतदन्नाद्यं यद्रसा परमेणैवैनमेतदन्नाद्येनाभिषिञ्चति ॥ १२ ॥

शफग्ग्रहा भवन्ति । शफैर्व्वै पशवः प्रतितिष्ठन्ति प्प्रतिष्ठामेवैनङ्गमयति त्रयस्त्रिᳬंशद्ग्रहा भवन्ति त्रयस्त्रिᳬंशद्वै सर्व्वा देवताः सर्व्वाभिरेवैनमेतद्देवताभिरभिषिञ्चति जगतीभिर्ज्जुहोति जागता वै पशवो जगत्यैवास्मै पशूनवरुन्द्धे षोडशभिर्ऋग्भिर्ज्जुहोति षोडशकला वै पशवोऽनुकलमेवास्मिञ्छ्रियन्दधाति ॥ १३ ॥

सीसेन तन्त्रम्मनसा मनीषिण ऽइति । द्वौ द्वौ समासᳬं हुत्वा सुते सᳬंस्रवान्त्समवनयत्यहोरात्राण्येवैतदर्द्धमासान्मासानृतून्त्सम्वत्सरे प्प्रतिष्ठापयति तानीमान्यहोरात्राण्यर्द्धमासा मासा ऽ ऋतवः सम्वत्सरे प्प्रतिष्ठिताः ॥ १४ ॥

(०) वैतसः सुतो भवति । (त्य) अप्सुयोनिर्व्वै वेतस ऽ आपो वै सर्व्वा देवताः सर्व्वाभिरेवैनमेतद्देवताभिरभिषिञ्चति ॥ १५ ॥

---

शफग्रहा भवंति । शफैर्वै पशवः प्रतितिष्ठंति । प्रतिष्ठामेवैनं गमयति । त्रयस्त्रिंशत् ग्रहा भवंति । त्रयस्त्रिंशद्वै सर्वा देवताः । सर्वाभिरेवैनमेतद्देवताभिरभिषिंचति । जगतीभिर्जुहोति । जागता वै पशवः । जगत्यैवास्मै पशूनवरुंधे । षोडशभिर्ऋग्भिर्जुहोति । षोडशकला वै पशवः । अनुकलमेवास्मिन् श्रियं दधाति ॥ १३ ॥

" सीसेन तंत्रं मनसा मनीषिणः "—( वा. सं. १९ । ८० ) इति द्वौ द्वौ समासं हुत्वा । सते संस्रवान् समवनयति । अहोरात्राण्येवैतदर्धमासान् मासान् ऋतून् संवत्सरे प्रतिष्ठापयति । तानीमान्यहोरात्राण्यर्द्धमासा मासा ऋतवः संवत्सरे प्रतिष्ठिताः ॥ १४ ॥

वैतसः सतो भवति । अप्सुयोनिर्वै वेतसः । आपो वै सर्वा देवताः । सर्वाभिरेवैनमेतद्देवताभिरभिषिंचति ॥ १५ ॥

---

शफैर्वसाग्रहा गृह्यंते । प्रत्यर्चं द्वौ द्वौ हुत्वा । तेच्छेषान्वैतसे सते पात्रे समवनीय । तैस्तैः संस्रवैः सः संहितो यजमानोऽभिषिच्यत इत्येतत् अतः परमुच्यते—त्रयस्त्रिंशद्ग्रहा इति । यः अभिषेकोत्तरकालं सस्तोत्रशस्त्रो वसाग्रहो गृह्यते स त्रयस्त्रिंशः ॥ १३ ॥

समस्य समस्य समासम् । अहोरात्राण्येवैतदर्धमासान् । अहोरात्राभ्यामहोरात्रं चतुर्विंशत्यर्द्धमासान् । तेषामेव द्वादशभिर्युगलैर्मासान् । षड्भिर्मासयुगलैः षड्ऋतूनित्यभिप्रायः ॥ १४ ॥ १५ ॥

सर्व्वसुरभ्युन्मर्दनम्भवति । परमो वा ऽएष गन्धो यत्सर्व्वसुरभ्युन्मर्दनङ्गन्धेनैवैनमेतदभिषिञ्चति ॥ १६ ॥

पुरस्तात्प्रत्यङ्ङभिषिञ्चति । पुरस्ताद्धि प्रत्यगन्नमद्यते शीर्षतः शीर्षतो ह्यन्नमद्यत ऽआ मुखादन्ववस्रावयति मुखेन ह्यन्नमद्यते सर्व्वतः परिक्रामᳪं सर्व्वाभ्य ऽएवास्मिन्नेतद्दिग्भ्योऽन्नाद्यन्दधाति तस्मात्सौत्रामण्येजानस्य सर्व्वासु दिक्ष्वन्नाद्यमवरुद्धम्भवत्यथो य ऽएवमेतद्वेद॥१७॥

(दा) आश्विनेन प्रथमेन यजुषाऽभिषिञ्चति । (त्य) अथ सारस्वतेनाथैन्द्रेणैताभिरेवैनमेतद्देवताभिरभिषिञ्चति तᳪं हैक ऽएताभिश्च देवताभिरभिषिञ्चन्ति भूर्भुवः स्वरित्येताभिरु च व्याहृतिभिरेता वै व्याहृतय ऽइदᳪं सर्व्वं तदेनमनेन सर्व्वेणाभिषिञ्चाम ऽइति न तथा कुर्य्यादेताभिरेवैनन्देवताभिरभिषिञ्चेदेता ऽउ ह्येव देवता ऽइदᳪं सर्व्वम् ॥ १८ ॥

---

सर्वसुरभ्युन्मर्दनं भवति । परमो वा एष गंधः । यत्सर्वसुरभ्युन्मर्दनम् । गंधेनैवैनमेतदभिषिंचति ॥ १६ ॥

पुरस्तात्प्रत्यङ्ङभिषिंचति । पुरस्ताद्धि प्रत्यगन्नमद्यते शीर्षतः । शीर्षतो ह्यन्नमद्यते । आ मुखादन्ववस्रावयति । मुखेन ह्यन्नमद्यते । सर्वतः परिक्रामम् । सर्वाभ्य एवास्मिन्नेतद्दिग्भ्योऽन्नाद्यं दधाति । तस्मात्सौत्रामण्येजानस्य सर्वासु दिक्ष्वन्नाद्यमवरुद्धं भवति । अथो य एवमेतद्वेद ॥ १७ ॥

आश्विनेन प्रथमेन यजुषाऽभिषिंचति । अथ सारस्वतेन । अथैन्द्रेण एताभिरेवैनमेतद्देवताभिरभिषिंचति । तं हैके—एताभिश्च देवताभिरभिषिंचन्ति । भूर्भुवः स्वरित्येताभिरु च व्याहृतिभिः । एता वै व्याहृतय इदं सर्वम् । तदेनमनेन सर्वेणाभिषिंचाम इति । न तथा कुर्यात् । एताभिरेवैनं देवताभिरभिषिंचेत् । एता उ ह्येव देवता इदं सर्वम् ॥ १८ ॥

---

सर्वसुरभि चंदनादि उन्मर्दनं उद्वर्तनं यजमानस्य भवति । तेनोन्मृदितसर्वगात्रोऽभिषेक्तव्य इत्यभिप्रायः ॥ १६ ॥

'पुरस्तात्प्रत्यङ्' । यजमानस्य पुरस्तात् । उदङ्मुखः सन्नध्वर्युः यजमानमभिषिंचति । तैः पुरस्ताद्धि अग्रतः अवस्थितमन्नं प्रत्यक् समीपमद्यते । अभिषेकस्यापि यज्ञे अन्नादनादित्यभिप्रायः । 'शीर्षतः' । शिरसि अभिषिंचति । शिरसा हि मुखेनान्नमद्यते ॥ १७ ॥

आश्विनेन "अश्विनोर्भैषज्येन" (वा. सं. २० । ३) इत्यनेन । अथ सारस्वतेन । "सरस्वत्यै भैषज्येन" (वा. सं. २० । ३) इति । ऐन्द्रेण । "इंद्रस्येन्द्रियेण" (वा. सं. २०।३.) इति । एताभिरेवैनमेतद्देवताभिरिति । यत्तदश्विनोः सरस्वत्या भैषज्यम् । यच्च तदिन्द्रस्येन्द्रियम् । एताभ्यो देवताभ्यः अन्यत् व्यतिरिक्तमात्मा वै देवस्य देवतेत्यभिप्रायः । 'इदं सर्वं' त्रैलोक्यं ( कविवादभिप्रानसव्यविविधेयगर्भत्वादित्यभिप्रायः ) ॥ १८ ॥

( म्पु ) पुरस्तात्स्विष्टकृतोऽभिषिञ्चति । क्षत्त्रम्वै स्विष्टकृत्क्षत्त्रेणैवैनमेतदभिषिञ्चत्यन्तरा व्वनस्पतिञ्च स्विष्टकृतञ्चाभिषिञ्चति सोमो वै व्वनस्पतिरग्निः स्विष्टकृदग्नीषोमाभ्यामेवैनमेतत्परिगृह्याभिषिञ्चति तस्माद्ये चैतद्विदुर्य्ये च न तु ऽआहुः क्षत्त्रियो वाव क्षत्त्रियस्याभिषेक्तेति ॥ १९ ॥

(त्यु) अथैनञ्जानुमात्रे धारयन्ति । (न्त्यु) अथ नाभिमात्रेऽथ मुखमात्रुऽ एष्वेवास्माऽएतल्लोकेष्वायतनानि कल्पयत्यभिषेको वा ऽएष यद्वाजपेयमभिषेकः सौत्रामणी तद्यथैवादो व्वाजपेये यूपꣳ रोहति तदेवैतद्रूपङ्क्रियते ॥ २० ॥ ( अर्द्धः प्रपाठकः ॥ कं. ९६ ॥ )

तदाहुः । प्प्रेव वाऽ एषोऽस्माल्लोकाच्च्यवते यः सौत्रामण्याऽभिषिच्यत ऽइति कृष्णाजिने प्प्रत्यवरोहति यज्ञो वै कृष्णाजिनं यज्ञऽ एवान्ततः प्प्रतितिष्ठति ॥ २१ ॥

प्प्रति क्षत्त्रे प्प्रतितिष्ठामि राष्ट्रऽइति क्षत्त्रऽएव राष्ट्रे प्प्रतितिष्ठति क्षत्त्राद्राष्ट्रादप्रभ्रꣳशाय प्प्रत्यश्वेषु प्प्रतितिष्ठामि गोष्वित गोऽश्वऽएव प्प्रतितिष्ठति गोऽश्वादप्रभ्रꣳशाय प्प्रत्यङ्गेषु प्प्रतितिष्ठाम्यात्मान्नि-

---

पुरस्तात् स्विष्टकृतोऽभिषिंचति । क्षत्त्रं वै स्विष्टकृत् । क्षत्त्रेणैवैनमेतदभिषिंचति । अंतरा वनस्पतिं च स्विष्टकृतं चाभिषिंचति। सोमो वै वनस्पतिः । अग्निः स्विष्टकृत् । अग्नीषोमाभ्यामेवैनमेतत्परिगृह्याभिषिंचति । तस्मात् ये चैतद्विदुः । ये च न । त आहुः । क्षत्रियो वाव क्षत्रियस्याभिषेक्तेति ॥ १९ ॥

अथैनं जानुमात्रे धारयंति । अथ नाभिमात्रे । अथ मुखमात्रे । एष्वेवास्मा एतल्लोकेष्वायतनानि कल्पयति । अभिषेको वा एषः । यत् वाजपेयम् । अभिषेकः सौत्रामणी । तद्यथैवादो वाजपेये यूपं रोहति । तदेवैतत् रूपं क्रियते ॥ २० ॥

तदाहुः-प्रेव वा एषोऽस्माल्लोकाच्च्यवते । यः सौत्रामण्याऽभिषिच्यत इति । कृष्णाजिने प्रत्यवरोहति । यज्ञो वै कृष्णाजिनम् । यज्ञ एवांततः प्रतितिष्ठति ॥ २१ ॥

"प्रति क्षत्त्रे प्रतितिष्ठामि राष्ट्रे"-इति । क्षत्त्र एव राष्ट्रे प्रतितिष्ठति । क्षत्त्रात् राष्ट्रादप्रभ्रंशाय । "प्रत्यश्वेषु प्रतितिष्ठामि गोषु"-इति । गोऽश्व एव प्रतितिष्ठति । गोऽश्वादप्रभ्रं-

---

'पुरस्तात्स्विष्टकृतः' । 'क्षत्त्रं वै स्विष्टकृत्' । आयतनाद्योत्तरत उपस्याद इति हि वीर्येण स्विष्टकृतो भागः कल्पित इति क्षत्रमित्युच्यते । क्षत्रियेण राज्ञा अभिषिक्तो भवति । पूर्वो हि राजैव वृद्धः कुमारं चाभिषिंचतीत्यर्थः ॥ १९-२२ ॥

त्युङ्गेष्वेवात्मन्प्रुतितिष्ठत्युङ्गेभ्यऽआत्मनोऽप्रभ्रᳪंशाय प्रुति प्प्राणेषु प्प्रुतितिष्ठामि पुष्टऽइति प्प्राणेष्वेवु पुष्टे प्प्रुतितिष्ठति प्प्राणेभ्यः पुष्टा-दुप्रभ्रᳪंशाय प्प्रुति द्यावापृथिव्योः प्प्रुतितिष्ठामि यज्ञऽ इति तुद-नुयोर्द्यावापृथिव्योः प्प्रुतितिष्ठति युयोरिदᳪं सुर्व्वमधि ॥ २२ ॥

( द्वयु ) अुथ सुाम गायति । क्षत्रम्वै सुाम क्षत्त्रेुणैवैनमेतुदभिषिञ्चत्युथो सुाम्राज्यम्वै सुाम सुाम्राज्येनैवैनᳪं सुाम्राज्यङ्गमयाति सुर्व्वेषा-म्वा ऽएष व्वेदानाᳪं रुसो यत्सुाम सुर्व्वेषामेुवैनमेतद्वेदानाᳪं रुसेना-भिषिञ्चति ॥ २३ ॥

बृहत्युाङ्गायति । बृहत्याम्वा ऽअसुावादित्युः श्रियाम्प्रतिष्ठायाम्प्रति-ष्ठितस्तपति बृहत्युामेुवैनमेतुच्छ्रियाम्प्रतिष्ठायां प्रुतिष्ठापयति ॥ २४ ॥

---

शाय । "प्रत्यंगेषु प्रतितिष्ठाम्यात्मन्"–इति । अङ्गेष्वेवात्मन्प्रतितिष्ठति । अंगेभ्य आत्मनो-ऽप्रभ्रंशाय । " प्रति प्राणेषु प्रतितिष्ठामि पुष्टे "–इति । प्राणेष्वेव पुष्टे प्रतितिष्ठति । प्राणेभ्यः पुष्टादप्रभ्रंशाय । " प्रति द्यावापृथिव्योः प्रतितिष्ठामि यज्ञे "–( वा. सं. २० । १० ) इति । तदनयोर्द्यावापृथिव्योः प्रतितिष्ठति । ययोरिदं सर्वमधि ॥ २२ ॥

अथ साम गायति । क्षत्रं वै साम । क्षत्रेणैवैनमेतदभिषिंचति । अथो साम्राज्यं वै साम । साम्राज्येनैवैनं साम्राज्यं गमयति । सर्वेषां वा एष वेदानां रसः । यत्साम । सर्वेषामेवैनमेतद्वेदानां रसेनाभिषिंचति ॥ २३ ॥

बृहत्यां गायति । बृहत्यां वा असावादित्यः श्रियां प्रतिष्ठायां प्रतिष्ठितस्तपति । बृहत्यामेवैन-मेतच्छ्रियां प्रतिष्ठायां प्रतिष्ठापयति ॥ २४ ॥

---

त्रयस्त्रिंशत् वसाग्रहा भवंतीत्युक्तम् । तेषां द्वात्रिंशत् ग्रहाः खुरगृहीताः । " सीसेन तंत्रम् " ( वा. सं. १९ । ८०–९० ) इत्येताभिश्च षोडशभिर्ऋग्भिर्द्वौ द्वौ हुताः । तच्छेषेण च यजमानोऽभिषिक्तः । त्रयस्त्रिंशस्य तु " त्रया देवा एकादश " ( वा. सं. २० । ११ ) इत्येष होममंत्रो वक्ष्यते । " लोमानि प्रयतिः " ( वा. सं. २० । १३ ) इति भक्षमंत्रः । ततश्च लिंगक्रमाभ्यां सौत्रामणौ समाख्याभावाच्च " यो भूतानाम्" ( वा. सं. २० । ३२ ) इत्ययमपि तस्यैव ग्रहणमंत्रः । ततश्च क्रमादिदमपि सामगानं च तस्यैव ग्रहस्येति गम्यते । क्षत्रं वै सामेति । " सुक्षत्रं तस्मादु ह एतयः सर्वः कृत्स्नो मन्यते गायति वैव गीतेय रमते " इति वचनात् । अथो साम्राज्यं एकैश्वर्यरूपम् । सम्राडेव हि कृत्स्नमात्मानं मन्यते । न तस्य परतंत्रं राज्यमित्य-भिप्रायः । सर्वेषां वेदानां रस इति प्रगीत इति प्रथमस्य प्रीत्यभिप्रायहेतुत्वात् । एतानि च संज्ञानाख्यानि चत्वारि सामानि भिन्ननिधनानि दर्शयिष्यंते । ततश्च सामेत्येकवचनं ऋच एकत्वात् द्रष्टव्यम् ॥ २३ ॥

बृहत्यां गायति । बृहत्यां वा असावादित्य इति । द्वादश मासाश्चतुर्विंशतिरर्द्धमासा इति अस्या बृहत्या एवोपजीवित्वाच्छ्रीः । एषैव भूतानां प्रतिष्ठा ॥ २४ ॥

( त्यै ) ऐन्द्र्याम्बृहत्याङ्गायति । ( त्यै ) ऐन्द्रो वा॒ऽ एष य॒ज्ञो य॒त्सौत्रा॑मणीन्द्रायतन॒ऽ एष॒ऽ एतर्हि॒ यो य॒जते॒ स्व॒ऽ एवैनमे॒तदा॒यत॒नेऽभिषि॑ञ्चति ॥ २९ ॥

( त्यु ) अथ य॒स्मात्सꣳशानानि॒ नाम । ( मै ) एतैर्वै सा॒मभिर्देवा॒ऽ इन्द्रमिन्द्रियाय वी॒र्य्याय समश्यंस्त॒थो॒ऽ एवैतमृत्विजो य॒जमानमेतैरेव सा॒मभिरिन्द्रियाय वी॒र्य्याय स॒ꣳश्यन्ति सꣳश्रवसे॒ विश्रवसे स॒त्य॒श्रवसे श्रवस॒ ऽइति सा॒मानि भवन्त्येष्वेवैनमेतल्लोकेषु श्रावयन्ति च॒तु॒र्न्निधनम्भवति च॒तस्रो वै दि॒शः स॒र्व्वास्वे॒वैनमेत॒द्दि॒क्षु॒ प्र॒तिष्ठापयन्ति स॒र्व्वे नि॒धनमु॒पाव॒यन्ति स॒म्विदाना॒ ऽएवा॒स्मिन्छ्रियन्दधाति ॥ २६ ॥

त॒दा॒हुः । ( र्ख्यु ) य॒देतत्सा॒म गीयते॒ऽथ क्वैतस्य सा॒म्न ऽउक्थ॒ङ्का प्र॒तिष्ठा व्यृ॒द्धꣳ हि त॒द्यत्स्तुतम॒ननुशस्तमि॒ति ॥ २७ ॥

त्रया॒ दे॒वा॒ऽ ए॒का॒दशेति । ( त्ये ) एतद्वा ऽएत॒स्य सा॒म्नऽउक्थ॒मेषा॒ प्र॒तिष्ठा ॥ २८ ॥

---

ऐंद्र्यां बृहत्यां गायति । ऐंद्रो वा एष यज्ञः । यत्सौत्रामणी । इंद्रायतन एष एतर्हि । यो यजते । स्व एवैनमेतदायतनेऽभिषिंचति ॥ २९ ॥

अथ यस्मात् संशानानि नाम । एतैर्वै सामभिर्देवा इंद्रमिंद्रियाय वीर्याय समश्यन् । तथो एवैतमृत्विजो यजमानमेतैरेव सामभिरिंद्रियाय वीर्याय संश्यंति । संश्रवसे विश्रवसे सत्यश्रवसे श्रवस इति सामानि भवंति । एष्वेवैनमेतल्लोकेषु श्रावयंति । चतुर्निधनं भवति । चतस्रो वै दिशः । सर्वास्वेवैनमेतद्दिक्षु प्रतिष्ठापयंति । सर्वे निधनमुपावयंति । संविदाना एवास्मिन् श्रियं दधाति ॥ २६ ॥

तदाहुः—यदेतत् साम गीयते । अथ क्वैतस्य साम्न उक्थम् । का प्रतिष्ठा । व्यृद्धं हि तत् । यत् स्तुतम् अननुशस्तम् इति ॥ २७ ॥

त्रया देवा एकादशेति । एतद्वा एतस्य साम्न उक्थम् । एषा प्रतिष्ठा ॥ २८ ॥

---

'ऐन्द्र्यां बृहत्याम्' । "बृहदिन्द्राय गायत" ( वा. सं. २० । ३० । ) इत्येतस्याम् ॥ २९ ॥

अथ यस्मात् एतैः सामभिः इन्द्रं संशितवन्त इति संशानानि । संश्रवसे विश्रवसे सत्यश्रवसे श्रवसे इत्यभिप्रायः ॥ २६ ॥ २७ ॥

त्रया देवाः । "अश्विना तेजसा" ( वा. सं. २० । ८०–९० ) इत्यनुवाकं शंसति । वचनांतरात्तत् । "त्रया देवा एकादश" इत्येषा निविद्भिर्वचनांतरादेवमारभते । तां प्रकृत्याह—एतद्वा एतस्य साम्नः उक्थं शस्त्रम् । एषा च प्रतिष्ठेति ॥ २८ ॥

( ब्रा०थो ) अथो त्रया देवाऽएकादशेति । त्रयस्त्रिंशं ग्रहं जुहोति त्रया हि देवाऽएकादश त्रयस्त्रिंशाः सुराधसऽइति त्रयस्त्रिंशद्धि देवा बृहस्पतिपुरोहिताऽ इति ब्रह्म वै बृहस्पतिर्ब्रह्मपुरोहिताऽइत्येवैतदाह देवस्य सवितुः सवऽ इति देवेन सवित्रा प्रसूता ऽइत्येवैतदाह देवा देवैरवन्तु मेति देवा ह्येतन्देवैरभिषिञ्चन्ति ॥ २९ ॥

प्रथमा द्वितीयैरिति । प्रथमा ह्येतन्द्वितीयैरभिषिञ्चन्ति द्वितीयास्तृतीयैरिति द्वितीया ह्येतन्तृतीयैरभिषिञ्चन्ति तृतीयाः सत्येनेति तृतीया ह्येतꣳ सत्येनाभिषिञ्चन्ति सत्यं यज्ञेनेति सत्यꣳ ह्येतं यज्ञेनाभिषिञ्चति यज्ञो यजुर्भिरिति यज्ञो ह्येतं यजुर्भिरभिषिञ्चति यजूꣳषि सामभिरिति यजूꣳषि ह्येतꣳ सामभिरभिषिञ्चन्ति सामान्यृग्भिरिति सामानि ह्येतमृग्भिरभिषिञ्चन्त्यृचः पुरोऽनुवाक्याभिरित्यृचो ह्येतम्पुरोऽनुवाक्याभिरभिषिञ्चन्ति पुरोऽनुवाक्या याज्याभिरिति पुरोऽनुवाक्या ह्येतं याज्याभिरभिषिञ्चन्ति याज्या व्वषट्कारैरिति याज्या ह्येतम्वषट्कारैरभिषिञ्चन्ति व्वषट्काराऽ आहुतिभिरिति व्वषट्कारा ह्येतमाहुतिभिरभिषिञ्चन्त्याहुतयो मे कामान्त्समर्द्धयन्तु भूः स्वाहेति तदेनमेताभि-

---

अथो "त्रया देवा एकादश"–इति त्रयस्त्रिंशं ग्रहं जुहोति । त्रया हि देवा एकादश । "त्रयस्त्रिंशाः सुराधसः"–इति । त्रयस्त्रिंशद्धि देवाः । "बृहस्पतिपुरोहिताः"–इति । ब्रह्म वै बृहस्पतिः । ब्रह्मपुरोहिताः इत्येवैतदाह । "देवस्य सवितुः सवे"–इति । देवेन सवित्रा प्रसूता इत्येवैतदाह । "देवा देवैरवंतु मा"–( वा० सं० २० । ११ ) इति । देवा ह्येतं देवैरभिषिंचन्ति ॥ २९ ॥

"प्रथमा द्वितीयैः"–इति । प्रथमा ह्येतं द्वितीयैरभिषिंचन्ति । "द्वितीयास्तृतीयैः"–इति । द्वितीया ह्येतं तृतीयैरभिषिंचन्ति । "तृतीयाः सत्येन"–इति । तृतीया ह्येतं सत्येनाभिषिंचन्ति । "सत्यं यज्ञेन"–इति । सत्यं ह्येतं यज्ञेनाभिषिंचति । "यज्ञो यजुर्भिः"–इति । यज्ञो ह्येतं यजुर्भिरभिषिंचति । "यजूंषि सामभिः"–इति । यजूंषि ह्येतं सामभिरभिषिंचन्ति । "सामानि ऋग्भिः"–इति । सामानि ह्येतमृग्भिरभिषिञ्चन्ति । "ऋचः पुरोऽनुवाक्याभिः"–इति । ऋचो ह्येतं पुरोऽनुवाक्याभिरभिषिंचन्ति । "पुरोऽनु-

---

अथो त्रया देवाः । त्रया हि ते देवा एकादश त्रिभागाः । एकादश त्रयस्त्रिंशदित्यर्थः । देवा हि एतं देवाः अप्सु आहितवीर्यैः अभिषिंचन्ति ॥ २९ ॥

प्रथमा द्वितीयैरिति । परोऽवरं परावरया आद्यया परया चेत्येवं परोऽवरम् । अभिषिच्य । अथर्त्विक्षु

दैवताभिः परोऽवरमभिषिच्याथास्मा ऽ आहुतिभिः सर्व्वान्कामान्त्समर्द्धयन्त्यथर्त्विक्षूपहवमिष्ट्वा भक्षयत्यृतवो वाऽ ऋत्विज ऽऋतुष्वेवैतदुपहवमिच्छते ॥ ३० ॥

स भक्षयति लोमानि । प्रयतिर्म्मम त्वङ्मऽ आनतिरागतिः । माᳪँसम्म ऽउपनतिर्व्वस्वस्थि मज्जा मऽआनतिरिति प्रेव वा ऽएष लोकांश्च देवताश्च विशति यः सौत्रामण्याऽभिषिच्यते तदेतदवान्तरामात्मानमुपह्वयते तथा कृत्स्न ऽएव सर्व्वतनूः साङ्गः सम्भवति ॥ ३१ ॥

इति चतुर्थप्रपाठके द्वितीयं ब्राह्मणम् ॥ १२–४–२ ॥ ( ८. ३. ) ॥

इत्यष्टमोऽध्यायः समाप्तः ॥१२।८॥ कण्डिकासंख्या ॥ ८९ ॥

---

वाक्या याज्याभिः ”–इति । पुरोऽनुवाक्या ह्येतं याज्याभिरभिषिंचन्ति । “ याज्या वषट्कारैः ”–इति । याज्या ह्येतं वषट्कारैरभिषिंचन्ति । “ वषट्कारा आहुतिभिः ”–इति । वषट्कारा ह्येतमाहुतिभिरभिषिंचन्ति । “ आहुतयो मे कामान् समर्द्धयन्तु भूः स्वाहा ”–( वा० सं० २० । १२ ) इति । तदेनमेताभिर्देवताभिः परोऽवरमभिषिच्य, अथास्मा आहुतिभिः सर्वान् कामान् समर्द्धयन्ति । अथर्त्विक्षूपहवमिष्ट्वा भक्षयति । ऋतवो वा ऋत्विजः । ऋतुष्वेवैतदुपहवमिच्छते ॥ ३० ॥

स भक्षयति । “ लोमानि प्रयतिर्मम त्वङ्म आनतिरागतिः । मांसं म उपनतिर्वस्वस्थि मज्जा म आनतिः ”– । ( वा० सं० २० । १३ ) इति प्रेव वा एष लोकांश्च देवताश्च विशति । यः सौत्रामण्याऽभिषिच्यते । तदेतदवांतरामात्मानमुपह्वयते । तथा कृत्स्न एव सर्वतनूः सांगः संभवति ॥ ३१ ॥

---

ऋत्विक्षु विषयभूतेषु उपहवमिष्ट्वा “ ब्रह्मन्नुपह्वयस्व ” “ होतरुपह्वयस्व ” इत्येवमिष्ट्वा प्रार्थयित्वा भक्षयति यजमानः ॥ ३० ॥

‘स भक्षयति’ । यः सौत्रामण्या अभिषिच्यते । स लोकान् देवताश्च प्रविशति विशति । ( तांस्वउपवेशा ? ) इत्यग्रे उपह्वयत इति संप्रदानविशेषेण सौत्रामण्या यागेनादः पुरुषस्यांगं संस्कृतमन्यूनं संभवति ॥ ३१ ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये द्वादशकाण्डे अष्टमेऽध्याये तृतीयं ब्राह्मणम् ॥ १२ । ८ । ३ ॥

नागस्वामिसुतोऽवन्त्यां पाराशर्यो वसन्हरिः । श्रुत्यर्थं दर्शयामास शक्तितः पौष्करीयकः ॥ १ ॥
श्रीमतोऽवन्तिनाथस्य विक्रमार्कस्य भूपतेः । धर्माध्यक्षो हरिस्वामी व्याख्यच्छातपथीं श्रुतिम् ॥ २ ॥
भूभर्त्रा विक्रमार्केण वल्लप्तां कनकवेदिकाम् । दानायाध्यस्य कृतवान् श्रुत्यर्थविवृतिं हरिः ॥ ३ ॥

इति श्रीसर्वविद्यानिधानकवीन्द्राचार्यसरस्वतीनां श्रीहरिस्वामिनां कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये द्वादशकाण्डेऽष्टमोऽध्यायः समाप्तः ॥ १२–८ ॥

# अथ नवमेऽध्याये प्रथमं ब्राह्मणम् ।

## चतुर्थप्रपाठके च तृतीयं ब्राह्मणम् ।

एतुस्माद्वै युज्ञात्पुरुषो जायते । स युद्ध वाऽअस्मिँल्लोके पुरुषोऽन्नमृत्ति तुदेनममुष्मिँल्लोके प्प्रुत्यत्ति स वाऽ एष परिस्रुतो यज्ञस्त्तायते ऽन्नाद्या वै ब्राह्मणेन परिस्रुत्स ऽएतुस्मादन्नाद्याज्जायते तुँ हामुष्मिँल्लोकेुऽन्नं न प्रुत्यत्ति तुस्मादेषु ब्राह्मणयज्ञ ऽएव युत्सौत्रामणी ॥ १ ॥

तुस्य लोमान्येव शुष्पाणि त्वक्तोक्मानि माꣳसं लाजाऽअुस्थि कारोतरो मज्जा मासरꣳ रसः परिस्रुन्नग्नुहुर्लोहितꣳ रेतः पयो मूत्रꣳ सुरोवध्यं बुल्कसम् ॥ २ ॥

---

अथ सौत्रामणीयज्ञात्पुरुषोत्पत्तिः ।

एतस्मात् वै यज्ञात् पुरुषो जायते । स यत् ह वा अस्मिन् लोके पुरुषोऽन्नमत्ति । तदेनममुष्मिन् लोके प्रत्यत्ति । स वा एष परिस्रुतो यज्ञस्तायते । अन्नाद्या वै ब्राह्मणेन परिस्रुत् । स एतस्मादन्नाद्यात् जायते । तं हामुष्मिन्लोकेऽन्नं न प्रत्यत्ति । तस्मादेष ब्राह्मणयज्ञ एव । यत्सौत्रामणी ॥ १ ॥

तस्य लोमान्येव शष्पाणि । त्वक् तोक्मानि । मांसं लाजाः । अस्थि कारोतरः । मज्जा मासरम् । रसः परिस्रुत् । नग्नहुर्लोहितम् । रेतः पयः । मूत्रं सुरा । ऊवध्यं बल्कसम् ॥ २ ॥

---

'एतस्माद्वा' । प्रकृतात्सौत्रामणीयज्ञात् पुरुषो यजमानो जायत इत्युपन्यासः । स वा एष परिस्रुतो यज्ञस्तायते । स वा एष ब्राह्मणस्यैव क्रतुर्यज्ञो यत्सौत्रामणीति कर्तुर्नियमः "दुष्टरीतुर्ह पौंसायनो दशपुरुषं राज्यादपरुद्ध आस स हि एतेन यजेत" (श. प. १२।९।३।१) इत्यनेन वक्ष्यमाणेन इतिहासेन अपरुद्धस्य राज्ञोऽयं भविष्यति । सोमयाजिनां त्रयाणामपि वर्णानां भविष्यति । ब्राह्मणस्य नियमेन । काम्ये तु योगानुबंधात् । निधनविशेषस्य प्रयोगेऽपि दर्शनात् ॥ १ ॥

तस्य लोमान्येव शष्पाणि । आत्मकलासु यज्ञकलान्यासः । कारोतरः सच्छिद्रं पात्रम् । परिस्रुतः सुरायाः

---

१-ब्राह्मणयज्ञः सौत्रामण्यृद्धिकामस्य । ( ऋद्धिकामस्येति शाखांतरादिति कर्कः । साऽपि ऋद्धिकामस्य ब्राह्मणस्यैव । नेतरयोर्वर्णयोरिति च कर्कः । ) का. श्रौ. सू. १९ । १ ।

२-निधनविशेषस्तु संजित्यै, विजित्यै, सत्यजित्यै, जित्यै, इति क्षत्रियस्य । संपुष्ट्यै, विपुष्ट्यै, सत्यपुष्ट्यै, पुष्ट्यै इति वैश्यस्यैति, अयं निधनविशेषः अग्न्यंगभूतसौत्रामणीविषयः क्षत्रियवैश्ययोः । इति । का. श्रौ. सू. १९ । ११३ ।

३-अत्र "सीसेन तन्त्रम्" इत्यादिः "सोम इन्दुः" इत्यन्तोऽनुवाको (वा, सं. १९ । ८०-९५) व्ययः ।

( ष्टँ ) हृदयमेवास्यैन्द्रः पुरोडाशः । (शो) य॒कृत्सावित्रः क्लोमा व्वारुणो म॒तस्ने॑ऽएवास्या॒श्वत्थश्च पा॒त्रमौदुम्बरश्च पित्तन्नैय्यग्रोधमान्त्राणि स्थाल्यो गु॒दा॑ऽउपश॒यानि श्येनपत्रे प्लीहाऽऽसन्दी ना॒भिः कुम्भो व्वनिष्ठुः प्लाशिः श॒ता॒तृण्णा तद्यत्सा बहुधा व्वितृण्णा भ॒वति त॒स्मात्प्ला॒शिर्बहुधा व्वि॒कृतो मुखष्टँ स॒तं जिह्वा पवित्रञ्चप्पम्पायुर्बस्तिर्व्वालः ॥ ३ ॥

( लोऽङ्गा ) अ॒ङ्गान्येवास्याश्विनः पशुः । ( रा ) आत्मा सारस्वतो रू॒प-मैन्द्र ऽऋषभस्त॒स्मादाहु॒र्ग्गावः पु॒रुषस्य रू॒पमित्यायु॒र्हिरण्यन्त॒च्छत-मानम्भवति त॒स्माच्छतायुः पु॒रुषः ॥ ४ ॥

( श्र ) चक्षुषीऽ एवास्याश्विनौ ग्ग्रहौ । प॒क्ष्माणि गोधूमसक्तवश्च कुवल-सक्तवश्च ना॒सिके॑ऽ एवास्य सारस्वतौ ग्ग्रहावथ यानि ना॒सिकयोर्ल्लोमानि ता॒न्युपवाकसक्तवश्च बदरसक्तवश्च श्रोत्रेऽ एवास्यैन्द्रौ ग्ग्रहावथ यानि कु॒र्णयोर्ल्लोमानि यानि च भ्रुवोस्तानि य॒वसक्तवश्च कर्क्कन्धुसक्तवश्च ॥५॥

---

हृदयमेवास्यैन्द्रः पुरोडाशः । यकृत् सावित्रः । क्लोमा वारुणः । मतस्ने एवास्याश्वत्थं च पात्र-मौदुम्बरं च । पित्तं नैयग्रोधम् । आंत्राणि स्थाल्यः । गुदा उपशयानि । श्येनपत्रे प्लीहा । आसन्दी नाभिः । कुंभो वनिष्ठुः । प्लाशिः शतातृण्णा । तद्यत् सा बहुधा वितृण्णा भवति । तस्मात् प्लाशिर्बहुधा विकृता उ । मुखं सतम् । जिह्वा पवित्रम् । चप्पं पायुः । बस्तिर्वालः ॥ ३ ॥

अंगान्येवास्याश्विनः पशुः । आत्मा सारस्वतः । रूपमैन्द्र ऋषभः । तस्मादाहुर्गावः पुरुषस्य रूपमिति । आयुर्हिरण्यम् । तत् शतमानं भवति । तस्मात् शतायुः पुरुषः ॥ ४ ॥

चक्षुषी एवास्याश्विनौ ग्रहौ । पक्ष्माणि गोधूमसक्तवश्च कुवलसक्तवश्च । नासिके एवास्य सार-स्वतौ ग्रहौ । अथ यानि नासिकयोर्लोमानि तान्युपवाकसक्तवश्च बदरसक्तवश्च । श्रोत्रे एवा-स्यैन्द्रौ ग्रहौ । अथ यानि कर्णयोर्लोमानि । यानि च भ्रुवोः । तानि यवसक्तवश्च कर्कन्धु-सक्तवश्च ॥ ५ ॥

---

पात्रमेकम् । व्रीहिश्यामाकौदनयोः पृथगाचामौ निषिच्य चूर्णैः संसृज्य निदधाति तन्मासरम् । यस्तु श्लेष्मणो रसः । स परिस्रुत् । ऊवध्यं भक्षितमपरिणतमामाशयस्थमन्नम् । हृदयं सुषिरावंसमीपम् । यकृत् कालेयम् । क्लोमा लोहिताधारः । मतस्ने वृक्कौ वर्तुलौ । पित्तं नैयग्रोधं पात्रम् । प्लाशिः प्राग्भारके उपस्थादिकम् । शता-तृण्णा च । तस्यां छिद्रकं सुष्यावनम् ॥ २–४ ॥

पक्ष्माणि अक्षिलोमानि ॥ ५–१० ॥

(अथ) अथ यान्युपस्थे लोमानि। यानि चाधस्तात्तानि वृकलोमान्यथ यान्युरसि लोमानि यानि च निकक्षयोस्तानि व्याघ्रलोमानि केशाश्च श्मश्रूणि च सिꣳहलोमानि ॥ ६ ॥

त्रयः पशवो भवन्ति। त्रेधाविहितो वाऽअयम्पुरुषस्यात्माऽऽत्मानमेवास्य तैः स्पृणोति यदवाङ्नाभेस्तदाश्विनेन यदूर्ध्वन्नाभेरवाचीनꣳ शीर्ष्णस्तत्सारस्वतेन शिर ऽऐन्द्रेण यथारूपमेव यथादेवतमात्मानम्मृत्योः स्पृत्वाऽमृतङ्कुरुते ॥ ७ ॥

त्रयः पुरोडाशा भवन्ति। त्रेधाविहितम्वाऽइदम्पुरुषस्य व्वयो व्वयऽएवास्य तैः स्पृणोति पूर्व्ववयसमैवेन्द्रेण मध्यमवयसꣳ सावित्रेणोत्तमवयसम्वारुणेन यथारूपमेव यथादेवतम्वयो मृत्योः स्पृत्वाऽमृतङ्कुरुते ॥ ८ ॥

षड्ग्रहा भवन्ति। षड्वाऽइमे शीर्षन्प्राणाः प्प्राणानेवास्य तैः स्पृणोति चक्षुषीऽएवाश्विनाभ्यान्नासिके सारस्वताभ्याꣳ श्रोत्रेऽ ऐन्द्राभ्यां यथारूपमेव यथादेवतं प्प्राणान्मृत्योः स्पृत्वाऽमृतान्कुरुते ॥ ९ ॥

सन्तता याज्यापुरोऽनुवाक्या भवन्ति। समानदेवत्याः प्प्राणानाꣳ सन्तत्याऽअव्यवच्छेदाय सर्व्वाः पुरोऽनुवाक्या भवन्ति सर्व्वा याज्यास्तस्मात्प्राणाः सर्व्वे पराञ्चः सर्व्वे प्प्रत्यञ्चः सर्व्वाः प्प्रथमा भवन्ति

---

अथ यान्युपस्थे लोमानि। यानि चाधस्तात्। तानि वृकलोमानि। अथ यान्युरसि लोमानि। यानि च निकक्षयोः। तानि व्याघ्रलोमानि। केशाश्च श्मश्रूणि च सिंहलोमानि ॥ ६ ॥

त्रयः पशवो भवन्ति। त्रेधाविहितो वा अयं पुरुषस्यात्मा। आत्मानमेवास्य तैः स्पृणोति। यदवाङ् नाभेः। तदाश्विनेन। यदूर्ध्वं नाभेः। अवाचीनं शीर्ष्णः। तत्सारस्वतेन। शिर ऐन्द्रेण। यथारूपमेव यथादेवतमात्मानं मृत्योः स्पृत्वा, अमृतं कुरुते ॥ ७ ॥

त्रयः पुरोडाशा भवन्ति। त्रेधाविहितं वा इदं पुरुषस्य वयः। वय एवास्य तैः स्पृणोति। पूर्ववयसमैन्द्रेण। मध्यमवयसं सावित्रेण। उत्तमवयसं वारुणेन। यथारूपमेवं यथादेवतं वयो मृत्योः स्पृत्वा, अमृतं कुरुते ॥ ८ ॥

षड् ग्रहा भवंति। षड् वा इमे शीर्षन्प्राणाः। प्राणानेवास्य तैः स्पृणोति। चक्षुषी एवाश्विनाभ्याम्। नासिके सारस्वताभ्याम्। श्रोत्रे ऐन्द्राभ्याम्। यथारूपमेव यथादेवतं प्राणान् मृत्योः स्पृत्वा, अमृतान् कुरुते ॥ ९ ॥

संतता याज्यापुरोऽनुवाक्या भवंति। समानदेवत्याः। प्राणानां संतत्या अव्यवच्छेदाय। सर्वाः पुरोऽनुवाक्या भवंति। सर्वा याज्याः। तस्मात् प्राणाः सर्वे परांचः सर्वे प्रत्यंचः। सर्वाः

सुर्व्वा मध्यमाः सुर्व्वाऽउत्तमास्तुस्मात्प्राणाः सुर्व्वे प्प्रथमाः सुर्व्वे मध्यमाः सुर्व्व ऽउत्तमाः सुर्व्वेषाङ्ग्रहाणान्द्वे याज्यापुरोऽनुवाक्ये भवतः प्प्राणोदानुयोस्तद्रूपम्प्राणोदानावेवावरुन्द्धे तुस्मात्सुर्व्वे प्प्राणाः प्प्राणोदानुयोरेव प्प्रतिष्ठिताः ॥ १० ॥

स वाऽएषऽ आत्मैव यत्सौत्रामणी । मुनऽ एव प्प्रत्युक्षाद्वाग्युजमानस्तुस्यात्मैव व्वेदिः प्प्रजोत्तरवेदिः पशुवो बर्हिरङ्गान्यृत्विजोऽस्थीनीध्म ऽआज्यम्मज्जा मुखमग्निरन्नमाहुतिर्व्वयः सध्ँस्था तुस्मात्सौत्रामुण्येजानो व्वयऽ उपगच्छति ॥ ११ ॥

तद्यौ ह वा ऽइमौ पुरुषाविवाक्ष्योः । ( रे ) एतावेवाश्विनावथ यत्कृष्णं तुत्सारस्वतं यच्छुक्लन्तुदैन्द्रन्तद्यदाश्विने पशौ सत्यथैता देवताः सह यजत्येतान्येवैतत्सार्द्धङ्कृत्वाऽऽत्मुन्धत्ते ॥ १२ ॥

मुन ऽएवेन्द्रः । ( न्द्रो ) व्वाक्सरस्वती श्रोत्रेऽअश्विनौ यद्वै मुनसा ध्यायति तद्वाचा व्वदति यद्वाचा व्वदति तत्कुर्णाभ्याध्ँ शृणोति

---

प्रथमा भवंति । सर्वा मध्यमाः । सर्वा उत्तमाः । तस्मात् प्राणाः सर्वे प्रथमाः । सर्वे मध्यमाः । सर्वे उत्तमाः । सर्वेषां ग्रहाणां द्वे याज्यापुरोऽनुवाक्ये भवतः । प्राणोदानयोस्तद्रूपम् । प्राणोदानावेवावरुंधे । तस्मात् सर्वे प्राणाः प्राणोदानयोरेव प्रतिष्ठिताः ॥ १० ॥

स वा एष आत्मैव । यत्सौत्रामणी । मन एव प्रत्यक्षात् । वाक् यजमानः । तस्यात्मैव वेदिः । प्रजोत्तरवेदिः । पशवो बर्हिः । अंगानि ऋत्विजः । अस्थीनीध्मः । आज्यं मज्जा । मुखमग्निः । अन्नमाहुतिः । वयः संस्था । तस्मात् सौत्रामण्येजानो वय उपगच्छति ॥ ११ ॥

तद्यौ ह वा इमौ पुरुषाविवाक्ष्योः । एतावेवाश्विनौ । अथ यत् कृष्णम् । तत्सारस्वतम् । यच्छुक्लम् । तदैन्द्रम् । तद्यदाश्विने पशौ संति, अथैता देवताः सह यजति । एतान्येवैतत् सार्द्धं कृत्वाऽऽत्मन् धत्ते ॥ १२ ॥

मन एवेन्द्रः । वाक् सरस्वती । श्रोत्रे अश्विनौ । यद् वै मनसा ध्यायति । तद्वाचा वदति ।

---

स वा एष आत्मैव यत्सौत्रामणी । निदर्शनांतरोपन्यासः । मन एव प्रत्यक्षाद्वाग्यजमानः स हि यज्ञे वागात्मापि मनोभिगंतृ इत्याभिप्रायः । वाक्पतिरिति शेषात् गम्यत इति न पठितम् । सा हि स्त्री । वाक् कारिणीति । तस्यात्मैव शरीरं वेदिः । वयः स्थाविरं संस्था ॥ ११ ॥

तद्यौ ह वा इमाविति । पशुदेवतानां संसृष्टानां संसृष्टान्येव आध्यात्मिकानि त्रीणि रूपाणि ॥ १२–१४ ॥

तद्यत्सारस्वते पशौ सत्यथैता देवताः सह यजत्येतान्येवैतत्सार्द्धं-ङ्कृत्वाऽऽत्मन्धत्ते ॥ १३ ॥

प्राणऽ एवेन्द्रः । (न्द्रो) जिह्वा सरस्वती नासिकेऽअश्विनौ यद्वै प्राणेनान्नमात्मन्प्रणयते तत्प्राणस्य प्राणत्वं जिह्वया वाऽअन्नस्य रसम्विजानाति नासिके ऽउ वै प्राणस्य पन्थास्तद्यदैन्द्रे पशौ सत्यथैता देवताः सह यजत्येतान्येवैतत्सार्द्धङ्कृत्वाऽऽत्मन्धत्ते ॥ १४ ॥

हृदयमेवेन्द्रः । (न्द्रो) यकृत्सविता क्लोमा वरुणस्तद्यदैन्द्रे पुरोडाशे सत्यथैता देवताः सह यजत्येतान्येवैतत्सार्द्धङ्कृत्वाऽऽत्मन्धत्ते ॥ १५ ॥

प्राणऽ एव सविता । व्यानो वरुणः शिश्नमिन्द्रो यद्वै प्राणेनान्नमत्ति तद्व्यानेन व्यनिति शिश्नेन वाऽ अन्नस्य रसᳬं रेतः सिञ्चति तद्यत्सावित्रे पुरोडाशे सत्यथैता देवताः सह यजत्येतान्येवैतत्सार्द्धङ्कृत्वा-ऽऽत्मन्धत्ते ॥ १६ ॥

योनिरेव वरुणः । (णो) रेतऽ इन्द्रः सवितैव रेतसः प्रजनयिता तद्य-द्वारुणे पुरोडाशे सत्यथैता देवताः सह यजत्येतान्येवैतत्सार्द्धङ्कृत्वा-ऽऽत्मन्धत्ते स य ऽएवमेतद्वेदैताऽएव देवताऽअनुसम्भवत्येता देवताऽ-

---

यद्वाचा वदति । तत् कर्णाभ्यां शृणोति । तद् यत् सारस्वते पशौ सति, अथैता देवताः सह यजति । एतान्येवैतत् सार्धं कृत्वाऽऽत्मन् धत्ते ॥ १३ ॥

प्राण एवेन्द्रः । जिह्वा सरस्वती । नासिके अश्विनौ । यद्वै प्राणेनान्नमात्मन् प्रणयते । तत् प्राणस्य प्राणत्वम् । जिह्वया वा अन्नस्य रसं विजानाति । नासिके उ वै प्राणस्य पंथाः । तद्यदैन्द्रे पशौ सति, अथैता देवताः सह यजति । एतान्येवैतत्सार्द्धं कृत्वाऽऽत्मन् धत्ते ॥ १४ ॥

हृदयमेवेन्द्रः । यकृत् सविता । क्लोमा वरुणः । तद्यदैन्द्रे पुरोडाशे सति, अथैता दैवताः सह यजति । एतान्येवैतत्सार्द्धं कृत्वाऽऽत्मन् धत्ते ॥ १५ ॥

प्राण एव सविता । व्यानो वरुणः । शिश्नमिन्द्रः । यत् वै प्राणेनान्नमत्ति । तत् व्यानेन व्यनिति । शिश्नेन वा अन्नस्य रसं रेतः सिंचति । तद्यत् सावित्रे पुरोडाशे सति, अथैता देवताः सह यजति । एतान्येवैतत् सार्द्धं कृत्वाऽऽत्मन् धत्ते ॥ १६ ॥

योनिरेव वरुणः । रेत इन्द्रः । सवितैव रेतसः प्रजनयिता । तद्यत् वारुणे पुरोडाशे सति, अथैता देवताः सह यजति । एतान्येवैतत् सार्द्धं कृत्वाऽऽत्मन् धत्ते । स य एवमेतत् वेद । एता

---

हृदयमेवेन्द्र इति । पुरोडाशदेवतानाम् ॥ १५-१७ ॥

अनुप्प्रजायत ऽआ प्प्रजया पशुभिः प्प्यायते प्प्रत्यस्मिँल्लोके तिष्ठत्यभि स्वर्गं लोकञ्जयति य ऽएवं विद्वान्त्सौत्रामण्या यजते यो वैतदेवं वेद ॥ १७ ॥

इति चतुर्थप्रपाठके तृतीयं ब्राह्मणम् ॥ १२ । ४ । ३ ॥ ( ९–१ )

अवभृथमिष्ट्वा यन्ति । ( न्त्य ) अवभृथम्वै सोमेनेष्ट्वा यन्ति सोम ऽ एष यत्सौत्रामणी ॥ १ ॥

यद्देवा देवहेडनमिति । देवकृताद्वैवैनमेनसो मुञ्चति यदि दिवा यदि नक्तमिति यद्देवाहोरात्राभ्यामेनः करोति तस्माद्वैवैनम्मुञ्चति यदि जाग्रद्यदि स्वप्न ऽ इति मनुष्या वै जागरितम्पितरः सुप्तम्मनुष्यकिल्बिषाच्चैवैनम्पितृकिल्बिषाच्च मुञ्चति ॥ २ ॥

---

एव देवता अनुसंभवति । एता देवता अनुप्रजायते । आ प्रजया पशुभिः प्यायते । प्रत्यस्मिन् लोके तिष्ठति । अभि स्वर्गं लोकं जयति । य एवं विद्वान् सौत्रामण्या यजते । यो वैतदेवं वेद ॥ १७ ॥

## अथ सौत्रामण्यामवभृथः ।

अवभृथमिष्ट्वा यन्ति । अवभृथं वै सोमेनेष्ट्वा यन्ति । सोम एषः । यत्सौत्रामणी ॥ १ ॥

"यद्देवा देवहेडनम्"–( वा. सं. २० । १४ ) इति । देवकृताद्देवैनमेनसो मुंचति । "यदि दिवा यदि नक्तम्"–( वा. सं. २० । १९ ) इति । यद्देवाहोरात्राभ्यामेनः करोति । तस्माद्देवैनं मुंचति । "यदि जाग्रत् यदि स्वप्ने"–( वा. सं. २० । १६ ) इति । मनुष्या वै जागरितम् । पितरः सुप्तम् । मनुष्यकिल्बिषाच्चैवैनं पितृकिल्बिषाच्च मुंचति ॥ २ ॥

---

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये द्वादशकांडे नवमेऽध्याये प्रथमं ब्राह्मणम् ॥ १२ ॥ ९ ॥ १ ॥

अवभृथमिष्ट्वा यन्ति । त्रिपशूनिष्ट्वा अवभृथयागं कर्तुं यन्तीत्यवभृथविधिः ॥ १ ॥
यद्देवा देवहेडनमिति । इत्येतैर्मंत्रैः मासरकुंभं प्लावयति इति शाखांतरात् ॥ २ ॥

---

१–स्विष्टकृत्प्रभृत्यावर्हिर्होमात्कृत्वा परिस्रुत् क्षीरलिप्तान्यादायावभृथवद्गमनम् । ( शूलावभृथेन व्यवधानादवभृथवद्गमनामिति वचनम् । ) आशूलाभिमन्त्रणात् कृत्वोदकाधिष्ठानप्रभृत्यावभृथेष्टेः । ( हृदयशूलमुपगूहतीत्यारभ्य शूलाभिमन्त्रणांतं कृत्वा उदकाधिष्ठानमुदके प्रवेशनं इत्यत उपक्रम्य आ अवभृथेष्टेः । ) का. श्रौ. सू. १९ । ११९ । १२० ।

२–मासरकुंभं प्लावयति यद्देवा इति । ( मासरकुंभः सुराकुंभः । यद्देवा इति सार्द्धकंडिकाचतुष्कात्मको वरुण नो मुंचेत्यंतो मन्त्रः । प्लावयति तारयति । ) पूर्ववन्मज्जनम् । ( पूर्ववदिति । मासरकुंभस्यैवावभृथेति जले मज्जनम् । ) का. श्रौ. सू. १९ । १२१ । १२२ ।

यद्ग्रामे यदरण्यऽ इति । ग्रामे वा ह्यरण्ये वैनः क्रियते तस्मादेवैनं मुञ्चति यत्सभायामिति सभ्यादेवैनमेनसो मुञ्चति यदिन्द्रियऽ इति दैवादेवैनमेनसो मुञ्चति यच्छूद्रे यदर्य्ये यदेनश्चकृमा व्वयं यदेकस्याधि धर्म्मणि तस्यावयजनमसीति सर्व्वस्मादेवैनमेतस्मादेनसो मुञ्चति ३

यदापोऽ अघ्न्याः । ( ऽ ) इति व्वरुणेति शपामहे ततो व्वरुण नो मुञ्चेति व्वरुण्यादेवैनमेनसो मुञ्चत्यवभृथ निचुम्पुण निचेरुरसि निचुम्पुणऽ इति यो ह वाऽ अयमपामावर्त्तः स हावभृथः स हैष व्वरुणस्य पुत्रो वा भ्राता वा तमेवैतत्स्तौत्यव देवैर्देवकृतमेनोऽयक्षीति देवकृतमेवैनोऽवयजतेऽव मर्त्यैर्म्मर्त्यकृतमिति मर्त्यकृतमेवैनोऽवयजते पुरुराव्णो देव रिषस्पाहीति सर्व्वाभ्यो माऽऽर्त्तिभ्यो गोपायेत्येवैतदाह ॥ ४ ॥

समुद्रे ते हृदयमप्स्वन्तरिति । ( त्या ) आपो वै समुद्रो रसो वा ऽआपस्तदेनमेतेन रसेन सᳫँसृजति सन्त्वा व्विशन्त्वोषधीरुताप ऽइति तदेनमेतेनोभयेन रसेन सᳫँसृजति यश्चौषधिषु यश्चाप्सु द्वौ व्विक्रमाऽ उदङ्ङुत्क्रामत्येतावती वै मनुष्ये जूतिर्य्यावान्विक्रमस्तद्यावत्येवास्मिञ्जूतिस्तयैव पाप्मानव्विजहाति ॥ ५ ॥

---

" यत ग्रामे यदरण्ये "–इति । ग्रामे वा ह्यरण्ये वैनः क्रियते । तस्मादेवैनं मुंचति । " यत् सभायाम् "–इति । सभ्यादेवैनमेनसो मुंचति । "यदिन्द्रिये"–इति । दैवादेवैनमेनसो मुंचति । " यत् शूद्रे यदर्ये यदेनश्चकृमा वयं यदेकस्याधि धर्मणि तस्यावयजनमसि "–( वा. सं. २० । १७ ) इति । सर्वस्मादेवैनमेतस्मादेनसो मुंचति ॥ ३ ॥

" यदापो अघ्न्या इति वरुणेति शपामहे ततो वरुण नो मुंच "–इति । वरुण्यादेवैनमेनसो मुंचति । " अवभृथनिचुंपुण निचेरुरसि निचुंपुणः "–इति । यो ह वा अयमपामावर्तः । स हावभृथः । स हैष वरुणस्य पुत्रो वा भ्राता वा । तमेवैतत् स्तौति । " अवदेवैर्देवकृतमेनोऽयक्षि "–इति । देवकृतमेवैनोऽवयजते । " अव मर्त्यैर्मर्त्यकृतम् "– इति । मर्त्यकृतमेवैनोऽवयजते । " पुरुराव्णो देव रिषस्पाहि "–( वा. सं. २० । १८ ) इति । सर्वाभ्यो माऽऽर्तिभ्यो गोपायेत्येवैतदाह ॥ ४ ॥

" समुद्रे ते हृदयमप्स्वंतः "–इति । आपो वै समुद्रः । रसो वा आपः । तदेनमेतेन रसेन संसृजति । " सं त्वा विशंत्वोषधीरुतापः "–( वा. सं. २० । १९ ) इति तदेनमेतेन

---

प्रसलं ब्राह्मणम् ॥ ३–५ ॥

सुमित्रिया नऽ आपऽओषधयः सन्त्वित्ति । ( त्य ) अञ्जलिनाऽपऽ उपाचति व्वज्रो वाऽआपो व्वज्रेणैवैतन्मित्रधेयङ्कुरुते दुर्म्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यञ्च व्वयन्द्विष्मऽइति ग्रामस्य दिशन्द्वेष्यः स्यात्तान्दिशम्परासिञ्चेत्तेनैव तम्पराभावयति ॥ ६ ॥

द्रुपदादिव मुमुचानः । स्विन्नः स्नातो मलादिव । पूतम्पवित्रेणेवाज्यमापः शुन्धन्तु मैनसऽ इति व्वासोऽपप्लावयति यथेषीकां मुञ्जाद्विवृहेदेवमेनᳫँ सर्व्वस्मात्पाप्मनो व्विवृहति स्नाति तमऽएवापहते ॥ ७ ॥

उद्वयन्तमसस्परीति । पाप्मा वै तमः पाप्मानमेव तमोऽपहते स्वः पश्यन्त ऽउत्तरमित्ययम्वै लोकोऽद्भ्यऽ उत्तरोऽस्मिन्नेव लोके प्रतितिष्ठति देवन्देवत्रा सूर्य्यमगन्म ज्योतिरुत्तममिति स्वर्ग्गो वै लोकः सूर्य्यो ज्योतिरुत्तमᳫँ स्वर्ग्गऽ एव लोकेऽन्ततः प्रतितिष्ठत्यनपेक्षमेत्याहवनीयमुपतिष्ठते ॥ ८ ॥

---

उभयेन रसेन संसृजति । यश्च ओषधिषु, यश्चाप्सु । द्वौ विक्रमा उदङुत्क्रामति । एतावती वै मनुष्ये जूतिः । यावान् विक्रमः । तत् यावत्येवास्मिन् जूतिः । तयैव पाप्मानं विजहाति ॥ ९ ॥

" सुमित्रिया न आप ओषधयः सन्तु "–इति अंजलिना अप उपाचति । वज्रो वा आपः । वज्रेणैवैतन्मित्रधेयं कुरुते । " दुर्मित्रियास्तस्मै सन्तु योऽस्मान् द्वेष्टि यं च वयं द्विष्मः "–( वा. सं. २० । १९ ) इति ग्रामस्य दिशं द्वेष्यः स्यात्, तां दिशं परासिंचेत् । तेनैव तं पराभावयति ॥ ६ ॥

–" द्रुपदादिव मुमुचानः स्विन्नः स्नातो मलादिव । पूतं पवित्रेणेवाज्यमापः शुन्धन्तु मैनसः "–( वा. सं. २० । २० ) इति वासोऽपप्लावयति । यथेषीकां मुंजात् विवृहेत् । एवमेनं सर्वस्मात् पाप्मनो विवृहति । स्नाति । तम एवापहते ॥ ७ ॥

–" उद्वयं तमसस्परि "–इति । पाप्मा वै तमः । पाप्मानमेव तमोऽपहते । " स्वः पश्यन्त

---

उपाचति उपगच्छति ॥ ६ ॥

विवृहति विमुंचति । स्नाति । तूष्णीमेव ॥ ७ ॥

उद्वयन्तमसस्परीति । प्रतितिष्ठति उत्तिष्ठति ॥ ८–१० ॥

---

१–सुमित्रिया न इत्यपोऽञ्जलिनाऽऽदाय दुर्मित्रिया इति द्वेष्यं परिषिंचाति द्वौ विक्रमा उदङ् गत्वा । का. श्रौ.सू. १९।१२३।
२–अवभृथवत्स्नात्वा वासोऽपासनं द्रुपदादिवेति । ( अपासनं प्रक्षेपणं असु क्षेपणे ) का. श्रौ. सू. १९ । १२४ ।
३–सोमवदुत्क्रमणमागमनं च । (सोमवदिति उद्वयमिति जलान्निष्क्रमणं आमहीयमन्त्रजपवदागमनम्) का. श्रौ.सू. १९।१२५।

(ते॒ऽपो) अपो॑ऽ अ॒द्यान्व॑चारिष॒मिति । (त्य) अपामे॒व रस॑मव॒रुन्द्धे र॒सेन॒ सम॑सृक्ष्मही॒त्यपामे॒व रस॑मा॒त्मन्ध॑त्ते॒ पय॑स्वानग्न॒ऽआग॑मन्तम्मा स॒ꣳसृ॑ज व॒र्च्चसा प्र॒जया॑ च॒ धने॑न चे॒त्याशिष॑मे॒वैत॒दाशा॑स्ते ॥ ९ ॥

( स्त॒ऽ ) एधो॑ऽस्ये॒धिषीमहीति स॒मिध॒माद॑त्ते (त॒ऽ) एधो॑ ह॒ वाऽ अ॒ग्नेः स॒मित्स॒मिद॑सि॒ तेजो॑ऽसि॒ तेजो॒ मयि॑ धेही॒त्याह॑वनी॒ये स॒मिध॑मभ्या॒दधा॑त्य॒ग्निमे॒वैत॑या॒ समि॑न्धे॒ स ऽएन॑ꣳ स॒मिद्ध॒स्तेज॑सा॒ समि॑न्द्धे ॥ १० ॥

( न्द्धऽआ ) आदि॒त्यञ्च॒रुं य॒क्ष्यमा॑णो॒ निर्व॑पति । ( त्या॒ ) आदि॒त्य-मी॑जा॒न ऽइ॒यम्वाऽ अदि॑तिर॒स्यामे॒व य॒ज्ञन्त॑नु॒तेऽस्या॑मि॒ष्ट्वा प्रति॑तिष्ठति धे॒नुर्द॒क्षिणे॒यम्वै धे॒नुरि॒मामे॒व सर्वा॒न्कामा॑न्दुहे॒ व॒त्सम्पू॒र्वस्या॒न्ददा॑ति मा॒तर॑मुत्त॒रस्यां॒ य॒दा वै व॒त्सो मा॒तर॑न्ध॒यत्यथ॒ सा प्र॒त्ता दु॑हे प्र॒त्ता-मे॒वैमा॑ꣳ सर्वा॒न्कामा॑न्दुहे ॥ ११ ॥

---

उत्तरम्"—इति । अयं वै लोकोऽह्नच उत्तरः । अस्मिन्नेव लोके प्रतितिष्ठति । " देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् "—( वा. सं. २० । २१ ) इति । स्वर्गो वै लोकः सूर्यो ज्योतिरुत्तमम् । स्वर्ग एव लोकेऽन्ततः प्रतितिष्ठति । अनपेक्षमेत्य आहवनीयमुपतिष्ठते ॥ ८ ॥

" अपो अद्यान्वचारिषम् "—इति । अपामेव रसमवरुन्धे । " रसेन समसृक्ष्महि "—इति । अपामेव रसमात्मन् धत्ते । " पयस्वानग्न आगमं तं मा संसृज वर्चसा प्रजया च धनेन च "—( वा. सं. २० । २२ ) इति । आशिषमेवैतदाशास्ते ॥ ९ ॥

" एधोऽस्येधिषीमहि "—इति समिधमादत्ते । एधो ह वा अग्नेः समित् । " समिदसि तेजोऽसि तेजो मयि धेहि "—( वा. सं. २० । २३ ) इति । आहवनीये समिधमभ्यादधाति । अग्निमेवैतया समिन्धे । स एनं समिद्धस्तेजसा समिन्धे ॥ १० ॥

आदित्यं चरुं यक्ष्यमाणो निर्वपति । आदित्यमीजानः । इयं वा अदितिः । अस्यामेव यज्ञं

---

प्रत्ता प्रसूता ॥ ११ ॥ १२ ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये द्वादशकाण्डे नवमेऽध्याये द्वितीयं ब्राह्मणम् ॥ १२ । ९ । २ ॥

---

१—आहवनीयमुपतिष्ठतेऽपोऽद्येति । का. श्रौ. सू. १९ । १२६ ।

२—एधोऽसीति समिधमादायाहवनीयेऽभ्यादधाति समिदसीति । ( श्रूलावभृथसमिदाधानं सौत्रामणिकं च तन्त्रेण कालेकरवादिति । कर्कः । ) जुहोति च समाववर्तीति । ( चशब्दाच्छेषपरिसमाप्तिरिति कर्कः । ) का. श्रौ. सू. १९ । १२७–१२८ ।

३—आदित्यश्चरुः । अन्ते च । आमिक्षाया वा पूर्वः । का. श्रौ. सू. १९ । ५–७

तदाहुः । प्रेव वाऽ एषाऽस्माल्लोकाच्च्यवते योऽपोऽवभृथमभ्यवैतीत्यव- भृथादुदेत्य मैत्रावरुण्या पयस्यया यजतेऽयम्वै लोको मित्रोऽसौ व्वरुणो यदेवेदमन्तरेण तत्पयस्या तद्यन्मैत्रावरुण्या पयस्यया यजत ऽएष्वे- वैतल्लोकेषु प्रतितिष्ठति प्राणो वै मित्रोऽपानो व्वरुणोऽन्नमेव पयस्या तद्यन्मैत्रावरुण्या पयस्यया यजते प्राणऽएवान्नाद्येऽन्ततः प्रतितिष्ठति १२

इति चतुर्थप्रपाठके चतुर्थं ब्राह्मणम् ॥ १२–४–४ ॥ ( ९.२. ) ॥

दुष्टरीतुर्ह पौंसायनः । ( नो ) दशपुरुषं राज्यादपरुद्ध आस रेवो- त्तरसमु ह पाटवञ्चाक्रं स्थपतिं सृञ्जया ऽअपरुरुधुः ॥ १ ॥

---

ततुते । अस्यामिष्ट्वा प्रतितिष्ठति । धेनुर्दक्षिणा । इयं वै धेनुः । इमामेव सर्वान् कामान् दुहे । वत्सं पूर्वस्यां दधाति । मातरमुत्तरस्याम् । यदा वै वत्सो मातरं धयति । अथ सा प्रत्ता दुहे । प्रत्तामेवैमां सर्वान् कामान् दुहे ॥ ११ ॥

तदाहुः । प्रेव वा एषोऽस्मात् लोकात् च्यवते । योऽपोऽवभृथमभ्यवैतीति । अवभृथादुदेत्य मैत्रावरुण्या पयस्यया यजते । अयं वै लोको मित्रः । असौ वरुणः । यदेवेदमन्तरेण । तत्पयस्या । तत् यत् मैत्रावरुण्या पयस्यया यजते । एष्वेवैतल्लोकेषु प्रतितिष्ठति । प्राणो वै मित्रः । अपानो वरुणः । अन्नमेव पयस्या । तद्यत् मैत्रावरुण्या पयस्यया यजते । प्राण एवान्नाद्येऽन्ततः प्रति- तिष्ठति ॥ १२ ॥

दुष्टरीतुर्ह पौंसायनो दशपुरुषं राज्यादपरुद्ध आस । रेवोत्तरसम् उ ह पाटवं चाक्रं स्थपतिं सृंजया अपरुरुधुः ॥ १ ॥

---

दुष्टरीतुर्ह पौंसायनः । दर्शनानि अत्र सौत्रामण्यंगगतानि इतिहासेनोच्यन्ते । त्रिपंशोर्दक्षिणोत्तरेण च ऐन्द्रं- वायोधंसयोः पशू । दुष्टरीतुर्नाम पुंसोऽपत्यं पौंसायनः । दशपुरुषम् । पूर्वपुरुषादेव । यस्मिन्नेव काले राज्यादपरुद्धः । अपनीतस्वामित्वः आस बभूव । अथ तस्मिन्नेव काले । रेवोत्तरसं नाम ब्राह्मणम् पटोरपत्यं चाक्रं सृंजया राजानः स्वराष्ट्रात् अपरुरुधुः अपरुद्धवंतः ॥ १ ॥

---

१–धेनुर्दक्षिणा । का. श्रौ. सू. १९ । ८ ।
२–वत्सः पूर्वे । का. श्रौ. सू. १९ । ९ ।
३–मातोत्तरे । का. श्रौ. सू. १९ । १० ।
४–उदवसाय पयस्यां मैत्रावरुणी । उदवसानं त्रिपशुदेशाद्देशांतरे गमनम् । का. श्रौ. सू. १९ । १२९ ।
५–मध्ये यूपः दक्षिणोत्तरावैन्द्रवायोधसयोः । का. श्रौ. सू. १९ । ५९ ।
६–ऐन्द्रः पशुः । चरुपश्वोर्विपर्यासमेके । ( चरुरादित्यः ) का. श्रौ. सू. १९ । १६–१७ ।
७–तदन्त पशुरिन्द्राय वयोधसे । ( तच्छब्देन पयस्यायाः परामर्शः ) का. श्रौ. सू. १९ । १३० ।

स होवाच । दुष्टरीतुं पौᳬसायनᳬ सौत्रामण्या त्वा याजयानि यदिदᳬ सृञ्जयेषु राष्ट्रन्तत्त्वयि धास्यामीति तथेति तयैनमयाजयत् ॥ २ ॥

( स ) तदु ह बल्हिकः प्रातिपीयः शुश्राव । कौरव्यो राजा यो ह वाऽअयन्दुष्टरीतुः पौᳬसायनो दशपुरुषᳬ राज्यादपरुद्धोऽभूत्तमयञ्चाक्रस्थपतिः सौत्रामण्या याजयिष्यति यदिदᳬ सृञ्जयेषु राष्ट्रन्तद्धास्मिन्धास्यतीति ॥ ३ ॥

स होवाच । तन्वाऽअहन्तं व्वेदिष्यामि यदि स तस्मिन्राष्ट्रन्धास्यति बहिर्धा वैनᳬ राष्ट्राद्धास्यतीति सऽआजगाम यस्याम्वेलायां ग्ग्रहा गृह्यन्ते ॥ ४ ॥

स होवाच । स्थपते चाक्र नाहवनीये सुरा होतव्येत्याहुर्नान्यत्राहवनीयाद्यद्याहवनीये सुराᳬ होष्यसि पापवस्यसङ्करिष्यसि जामि यज्ञस्य यद्यन्यत्राहवनीयाद्बहिर्द्धैनᳬ राष्ट्राद्धास्यसि नैनᳬ राष्ट्रे धास्यसि नास्मिन्राष्ट्रन्धास्यसीति ॥ ५ ॥

---

स होवाच दुष्टरीतुं पौंसायनम् । सौत्रामण्या त्वा याजयानि । यदिदं सृंजयेषु राष्ट्रम् । तत् त्वयि धास्यामीति । तथेति । तयैनमयाजयत् ॥ २ ॥

तदु ह बल्हिकः प्रातिपीयः शुश्राव कौरव्यो राजा । यो ह वा अयं दुष्टरीतुः पौंसायनो दशपुरुषं राज्यादपरुद्धोऽभूत् । तमयं चाक्रः स्थपतिः सौत्रामण्या याजयिष्यति । यदिदं सृञ्जयेषु राष्ट्रम् । तद्धास्मिन् धास्यतीति ॥ ३ ॥

स होवाच । तन्वा अहं तं वेदिष्यामि । यदि स तस्मिन् राष्ट्रं धास्यति । बहिर्धा वैनं राष्ट्रात् धास्यतीति । स आजगाम । यस्यां वेलायां ग्रहा गृह्यन्ते ॥ ४ ॥

स होवाच । स्थपते चाक्र नाहवनीये सुरा होतव्येत्याहुः । नान्यत्राहवनीयात् । यद्याहवनीये सुरां होष्यसि । पापवस्यसं करिष्यसि । जामि यज्ञस्य । यद्यन्यत्राहवनीयात् । बहिर्धैनं राष्ट्रात् धास्यसि । नैनं राष्ट्रे धास्यसि । नास्मिन् राष्ट्रं धास्यसीति ॥ ५ ॥

---

स होवाच । स खेोत्तराः । दुष्टरीतुं पौंसायनम् । इत्यादि स्पष्टम् ॥ २ ॥

तदु ह बल्हिकः । तत्तथा वृत्तम् । बल्हिको नाम राजा कुरुवंशजः । शुश्राव श्रुत्वा ऊचे । एत्य आस्याय ग्रहग्रहणवेलायाम् ॥ ३ ॥ ४ ॥

ततो यज्ञगृहमागत्य स्थपतिः सुराहोमस्याग्निप्रतिपर्यंतं उक्तवान् । आहवनीये तस्याहोमे दोषदर्शनम् ।

स होवाच । नाहवनीये सुराᳫँ होष्यामि नान्यत्राहवनीयान्न पापवस्यसं करिष्यामि न जामि यज्ञस्य नैनं बहिर्द्धा राष्ट्राद्धास्यामि राष्ट्रऽएनन्धास्यामि राष्ट्रमस्मिन्धास्यामीति ॥ ६ ॥

स होवाच । कथᳫँ हि करिष्यसी३ऽइति स हैतदुवाचासुरेषु वा ऽएषोऽग्रे यज्ञ ऽआसीत्सौत्रामणी स देवानुपप्रैत्सोऽपऽ आगच्छत्तमापः प्रत्यनन्दंस्तस्मादु श्रेयाᳫँसमागतम्प्रत्येव नन्दन्ति तᳫँ होचुरेह्येव भगव ऽइति ॥ ७ ॥

स होवाच । बिभेमि वै प्रणयत मेति कस्माद्भगवो बिभेषीत्यसुरेभ्य ऽइति तथेति तमापः प्राणयंस्तस्माद्यो वधत्रो भवति स बिभ्यतं प्रणयति यदापः प्राणयंस्तस्मादापः प्रणीतास्तत्प्रणीतानाम्प्रणीतात्वं प्रति ह तिष्ठति यऽएवमेतत्प्रणीतानाम्प्रणीतात्वम्वेद ॥ ८ ॥

तदिष्टाः प्रयाजाऽआसुः । ( र ) अपर्य्यग्निकृतमथासुरा ऽअन्वाजग्मुस्ते देवाः पर्य्यग्निनैवासुरान्त्सपत्नान्भ्रातृव्यान्यज्ञादन्तरायंस्तथोऽ एवैष ऽएतत्पर्य्यग्निनैव द्विषन्तं भ्रातृव्यं यज्ञादन्तरेति ॥ ९ ॥

---

स होवाच । नाहवनीये सुरां होष्यामि । नान्यत्राहवनीयात् । न पापवस्यसं करिष्यामि । न जामि यज्ञस्य । नैनं बहिर्द्धा राष्ट्रात् धास्यामि । राष्ट्र एनं धास्यामि । राष्ट्रमस्मिन् धास्यामीति ॥६॥

स होवाच । कथं हि करिष्यसी३ इति । स हैतदुवाच । असुरेषु वा एषोऽग्रे यज्ञ आसीत् सौत्रामणी । स देवानुपप्रैत् । सोऽप आगच्छत् । तमापः प्रत्यनंदन् । तस्मात् उ श्रेयांसमागतं प्रत्येव नंदंति । तं होचुः । एह्येव भगव इति ॥ ७ ॥

स होवाच । बिभेमि वै । प्रणयत मेति । कस्मात् भगवो बिभेषीति । असुरेभ्य इति । तथेति । तमापः प्राणयन् । तस्मात् यो वधत्रो भवति । स बिभ्यतं प्रणयति । यदापः प्राणयन् । तस्मादापः प्रणीताः । तत् प्रणीतानां प्रणीतात्वम् । प्रति ह तिष्ठति । य एवमेतत् प्रणीतानां प्रणीतात्वं वेद ॥ ८ ॥

तदिष्टाः प्रयाजा आसुः । अपर्यग्निकृतम् । अथासुरा अन्वाजग्मुः । ते देवाः पर्यग्निनैवासुरान् सपत्नान् भ्रातृव्यान् यज्ञादंतरायन् । तथो एवैष एतत् पर्यग्निनैव द्विषन्तं भ्रातृव्यं यज्ञादंतरेति ॥९॥

---

स्थपतिरपि उभयदोषपरिहारं प्रतिज्ञाय कथं करिष्यसीत्यनुयुक्तः सन्नसुरेषु सौत्रामणीयज्ञः आसीत्स देवान् उपागच्छत् देवाः पर्यग्निकृता अपाऽनन्नित्याख्याय ॥ ५—९ ॥

देवयोनिर्व्वाऽएष युदाहवनीयः । (स्त) तस्यैतावमृतपक्षौ यावेतावभितोऽग्नी तद्युदाहवनीये यज्ञन्तन्वते देवयोनावेवैतद्देवेभ्यो यज्ञन्तन्वतऽउप हैनम्पुनर्यज्ञो नमति नास्माद्यज्ञो व्युवच्छिद्यते युऽएवमेतद्वेद यस्य वैवं विदुषऽएतत्कर्म्म क्रियते ॥ १० ॥

( तऽउ ) उत्तरेऽग्नौ पयोग्रहाञ्जुहोति । ( त्यु ) उत्तरेऽग्नौ पशूञ्छ्रपयन्ति पशूनेव तन्मर्त्यान्त्सतोऽमृतयोनौ दधाति मर्त्यान्त्सतोऽमृतयोनेः प्रजनयत्युप ह वै पशूनाम्पुनर्म्मृत्युञ्जयति नास्माद्यज्ञो व्युवच्छिद्यते यु ऽएवमेतद्वेद युस्य वैवम्विदुषऽएतत्कर्म्म क्रियते ॥ ११ ॥

दक्षिणेऽग्नौ सुराग्रहाञ्जुहोति । दक्षिणेऽग्नौ पावयन्ति पवित्राभिस्त्रिषंयुक्ताभिः पितृनेव तन्मुर्त्यान्त्सतोऽमृतयोनौ दधाति मर्त्यान्त्सतोऽमृतयोनेः प्रजनयत्युप ह वै पितृणाम्पुनर्मृत्युञ्जयति नास्माद्यज्ञो व्युवच्छिद्यते युऽएवमेतद्वेद युस्य वैवम्विदुष ऽएतत्कर्म्म क्रियते ॥ १२ ॥

तद्यदेतावग्नीऽआहवनीयाद्विह्रियेते । तेनाहवनीयावथ युदाहवनीय-

---

देवयोनिर्वा एषः । यदाहवनीयः । तस्यैतावमृतपक्षौ । यावेतावभितोऽग्नी । तत् यदाहवनीये यज्ञं तन्वते । देवयोनावेवैतद्देवेभ्यो यज्ञं तन्वते । उप हैनं पुनर्यज्ञो नमति । नास्मात् यज्ञो व्यवच्छिद्यते । य एवमेतद्वेद । यस्य वैवं विदुष एतत् कर्म क्रियते ॥ १० ॥

उत्तरेऽग्नौ पयोग्रहान् जुहोति । उत्तरेऽग्नौ पशून् श्रपयंति । पशूनेव तन्मर्त्यान् सतोऽमृतयोनौ दधाति । मर्त्यान् सतोऽमृतयोनेः प्रजनयति । अप ह वै पशूनां पुनर्मृत्युं जयति । नास्मात् यज्ञो व्यवच्छिद्यते । य एवमेतद्वेद । यस्य वैवं विदुष एतत् कर्म क्रियते ॥ ११ ॥

दक्षिणेऽग्नौ सुराग्रहान् जुहोति । दक्षिणेऽग्नौ पावयंति पवित्राभिस्त्रिषंयुक्ताभिः । पितृनेव तन्मर्त्यान् सतोऽमृतयोनौ दधाति । मर्त्यान् सतोऽमृतयोनेः प्रजनयति । अप ह वै पितृणां पुनर्मृत्युं जयति । नास्मात् यज्ञो व्यवच्छिद्यते । य एवमेतद्वेद । यस्य वैवं विदुष एतत् कर्म क्रियते ॥ १२ ॥

तद्यदेतावग्नी आहवनीयात् विहियेते । तेनाहवनीयौ । अथ यदाहवनीयं पुनर्नाश्नुवाते । तेना-

---

देवानां योनिः स्थानं आहवनीयः । तत्र यदन्यो यज्ञस्तायते । देवस्थान एवं नाश्नुते । सौत्रामणी तु आहवनीयाच्चोपाहृताग्न्योरुत्तरदक्षिणयोस्तायते । तौ तु आहवनीयायतनौ द्वौ तेनाभिन्नाविति दक्षिणाग्नौ सुरायां हूयमानायां उभावपि दोषौ न भविष्यत इत्युवाच ॥ १०—१२ ॥

पुनर्हार्यमित्वोवाचेति । बह्लिकः चाक्रस्थपतिवृत्तांतमाचष्टे— बह्लिकः स्वगृहमागत्योवाच । न तदस्ति

म्पुनर्न्नाश्नुवाते तेनानाहवनीयौ तेनोभौ होमा ऽ उपाप्नोति यश्चाहवनीये यश्चानाहवनीये यच्च हुतं यच्चाहुतम्पुनर्हायमित्त्वोवाच न तदस्ति यत्सृञ्जयानाᳬ राष्ट्रं दुष्टरीतोस्तदद्य तथाऽयञ्चाक्रु स्थपतिर्य्यज्ञेऽकरिति १३

( त्यु ) उत्तरेऽग्नौ पशुभिः पुरोडाशैः पयोग्ग्रहैरिति चरन्ति । यदु चान्यत्तेन देवानेव तद्देवलोके प्प्रीणाति तऽएनम्प्रीताः प्प्रीणन्त्यथो देवलोकमेव जयति ॥ १४ ॥

दक्षिणेऽग्नौ सुराग्ग्रहाञ्जुहति । दक्षिणेऽग्नौ पावयन्ति पवित्त्राभिस्त्रि- षंयुक्ताभिः पितॄनेव तत्पितृलोके प्प्रीणाति तऽएनम्प्रीताः प्प्रीणन्त्यथो पितृलोकमेव जयति ॥ १५ ॥

स वा ऽएषऽ आत्मैव यत्सौत्रामणी । तस्मात्सा निरुक्ता निरुक्तो ह्यात्मा लोको व्वयोधास्तस्मात्सोऽनिरुक्तोऽनिरुक्तो हि लोकऽआत्मा

---

नाहवनीयौ । तेनोभौ होमा उपाप्नोति । यश्चाहवनीये । यश्चानाहवनीये । यच्च हुतम् । यच्चाहुतम् । पुनर्हायमित्वोवाच । न तदस्ति यत् सृंजयानां राष्ट्रम् । दुष्टरीतोस्तत् । अद्य तथाऽयं चाक्र- स्थपतिर्यज्ञेऽकरिति ॥ १३ ॥

उत्तरेऽग्नौ पशुभिः पुरोडाशैः पयोग्रहैरिति चरन्ति । यदु चान्यत् । तेन देवानेव तद्देवलोके प्रीणाति । त एनं प्रीताः प्रीणन्ति । अथो देवलोकमेव जयति ॥ १४ ॥

दक्षिणेऽग्नौ सुराग्रहान् जुह्वति । दक्षिणेऽग्नौ पावयन्ति पवित्रीभिस्त्रिषंयुक्ताभिः। पितॄनेव तत्पितृ- लोके प्रीणाति । त एनं प्रीताः प्रीणन्ति । अथो पितृलोकमेव जयति ॥ १५ ॥

स वा एष आत्मैव । यत्सौत्रामणी । तस्मात् सा निरुक्ता । निरुक्तो ह्यात्मा । लोको वयोधाः । तस्मात् सोऽनिरुक्तः । अनिरुक्तो हि लोकः । आत्मा वै यज्ञस्य यत्सौत्रामणी । बाहू

---

यदस्माभिः समीहितम् । सृंजयानां राज्यमिति शेषः । कथं प्रसन्ना अस्ति । अत आह यत् सृंजयानां राष्ट्रमिति । दुष्टरीतोस्तत् कथं दुष्टरीतोर्जातम् । इत्यत आह—अद्य तथा अयं चाक्रः स्थपतिर्यज्ञं कृतवान् । ( आहवनीयप्रथमयोग्नौ सौत्रामणीनां तद्द्वितीयमभिप्रायः ? ) ॥ १३ ॥ १४ ॥

दक्षिणेऽग्नौ पावंति सुरानुकारेण यजमानपवित्राणि । तिस्रस्तिस्रः संयुक्तास्तिस्रः ऋचः ताभिः पावयंति ॥ १५ ॥

'स वै'। आत्मा यजमान एव । या सौत्रामणी त्रिपशुः । तस्मात्साऽनिरुक्ता उच्चैर्धर्मिका । निरुक्तो हि

---

१–सौत्रामणीति कर्मनामधेयम् । तच्च त्रिपशोरेव । नैन्द्रवायोधसपश्चोः प्रयोजनम् । त्रिपशोरेवांतराये प्रयोक्तृत्वमिति कर्कः या तु उभय वै सौत्रामण्यिष्टिश्च पशुबन्धश्चेति लिंगश्रुतिः । सा इतरेषामंगत्वेऽपि संभवत्येव । यद्वा पयोग्रहसुराग्रहसंबंधेनोभयरूपा सौत्रामणात कर्कः । यत्तु–सौत्रामण्यामिष्टिपशवो भिन्नतन्त्राः कालभेदादित्याचार्यप्रस्थानं तत्तु प्रकरणांतरोपलक्षणार्थमिति कर्कः । का. श्रौ. सू. १९ । १ । इत्यत्र भाष्ये ।

वै यज्ञस्य सौत्रामणी बाहूऽऐन्द्रश्च वयोधाश्च तद्युदेतावभितः पशू भवतस्तस्मादिमावात्मानमभितो बाहू यथो वै पशुरेवं यूपस्तद्युदेतᳪ सौत्रामणिकं यूपमेतौ यूपावभितो भवतस्तस्मादिमावात्मानमभितो बाहू १६

इति चतुर्थप्रपाठके पञ्चमं ब्राह्मणम् ॥ १२-४-५ ॥ ( ९. ३. ) ॥

इति चतुर्थः प्रपाठकः समाप्तः ॥ १२-४ ॥

कण्डिकासंख्या ॥ ११२ ॥

नवमोऽध्यायश्च समाप्तः ॥ १२-९ ॥

कंडिकासंख्या ॥ ४५ ॥

अस्मिन्काण्डे काण्डिकासंख्या ॥ ४५९ ॥

---

ऐन्द्रश्च वयोधाश्च। तद्यदेतावभितः पशू भवतः। तस्मादिमावात्मानमभितो बाहू । यथा उ वै पशुः । एवं यूपः । तद्यदेतं सौत्रामणिकं यूपमेतौ यूपावभितो भवतः । तस्मादिमावात्मानमभितो बाहू ॥१६॥

---

स्पष्टप्रकाशो यजमानः । ( प्रामियकर्महिते वयोधा वायोधीयो पशुः । तस्माल्लोकवायोदनघासः ?) । अनिरुक्तः उपांशुधर्मकः । अनिरुक्तो हि स्वर्लोकः । किंच । ( लागनगमाः ? ) । आत्मा शरीरं वै यज्ञस्य सौत्रामणी । (विपस्वः?)। बाहू ऐंद्रश्च पशुवयोधाश्च (स्वौति तद्धितलोपः?)। एष एव ऐंद्रवायोधसयोर्वितद्यदेतौ पशुसौत्रामणी सुहितः कालतो देशतश्च भवतः । तस्मादिमौ शरीरमभितो बाहू । यथा च पशुस्तथैव एतौ भवतः ॥ १६ ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये द्वादशकांडे नवमेऽध्याये तृतीयं ब्राह्मणम् ॥ ( १२ । ९ । ३ ) ॥

नागस्वामिसुतोऽवन्त्यां पाराशर्यो वसन्हरिः ।
श्रुत्यर्थं दर्शयामास शक्तितः पौष्करीयकः ॥ १ ॥
श्रीमतोऽवन्तिनाथस्य विक्रमार्कस्य भूपतेः ।
धर्माध्यक्षो हरिस्वामी व्याख्यच्छातपथीं श्रुतिम् ॥ २ ॥
भूभर्त्रा विक्रमार्केण क्लृप्तां कनकवेदिकाम् ।
दानायाध्यस्य कृतवान् श्रुत्यर्थविवृतिं हरिः ॥ ३ ॥

इति श्रीसर्वविद्यानिधानकवीन्द्राचार्यसरस्वतीनां श्रीहरिस्वामिनां कृतौ माध्यन्दिनीयशतपथ-ब्राह्मणभाष्ये द्वादशकाण्डे नवमोऽध्यायः समाप्तः ॥ १२-९ ॥

इति शतपथब्राह्मणस्य परिशेषाख्ये भागे सौत्रामण्यपरनामकं मध्यमं नाम द्वादशं काण्डं समाप्तम् ॥ १२ ॥

---

१-आश्विनोऽज्ञो धूम्रः सारस्वतो मेष ऐन्द्र ऋषभः मध्ये यूपो दक्षिणोत्तरावैन्द्रवायोधसयोः । का. श्रौ. सू. १९ । ५९ ।

इति माध्यन्दिनीये शतपथब्राह्मणे परिशेषाख्ये भागे
सौत्रामण्यपरनामकं मध्यमं नाम द्वादशं
काण्डं समाप्तम् ॥ १२ ॥



श्रीमद्वाजसनेयिमाध्यन्दिन-

# शतपथब्राह्मणम् ।

हरिस्वामिभाष्यसमेतम् ।

तत्र

## त्रयोदशं काण्डम् १३ ।



गङ्गाविष्णु श्रीकृष्णदास,

मालिक-"लक्ष्मीवेङ्कटेश्वर" स्टीम्-प्रेस,

कल्याण-बंबई.

संवत् १९९६, शके १८६१.

1939.

# अथ परिशेषाख्ये भागे अश्वमेधसंज्ञकं त्रयोदशं काण्डम्।



## प्रथमोऽध्यायः प्रारभ्यते।

### तत्र प्रथमं ब्राह्मणम्।

### प्रथमप्रपाठके च प्रथमं ब्राह्मणम्।



**ब्रह्मौदनम्पचति। रेतऽ एव तद्धत्ते यदाज्यमुच्छिष्यते तेन रशनामभ्यज्यादत्ते तेजो वाऽ आज्यम्प्राजापत्योऽश्वः प्रजापतिमेव तेजसा समर्द्धयत्यपूतो वाऽ एषोऽमेध्यो यदश्वः॥ १॥**

---

ब्रह्मौदनं पचति। रेत एव तद्धत्ते। यदाज्यमुच्छिष्यते। तेन रशनामभ्यज्यादत्ते। तेजो वा आज्यम्। प्राजापत्योऽश्वः। प्रजापतिमेव तेजसा समर्द्धयति। अपूतो वा एषोऽमेध्यो यदश्वः॥१॥

---

### हरिस्वामिभाष्यम्।

इदानीमश्वमेधस्य यत् अप्रसन्नं तत् दर्शयिष्यामः। तत्राश्वमेधोत्पत्तिः फलं च "प्रजापतिरकामयत सर्वान्कामानाप्नुयाम्" ( श. प. १३।४।१।१ ) इत्यत्र कंडिकायाम्। अवशिष्टेषु पंचस्वध्यायेषु ४–८ तस्य धर्मविधयः। आध्वर्यवहौत्रौद्गात्रब्रह्मत्वयाजमानविषयाः। तत्र च त्रिभिरध्यायैः सह मन्त्रव्याख्यानेन विशेषधर्मा अनुक्रांताः। पुनरध्यायद्वयेन त एव धर्मान्तरसहिता अनुक्रांताः। अपर्यनुयोज्यत्वाद्वेदस्य। ब्रह्मभ्यो ब्राह्मणेभ्य ऋत्विग्भ्यो देय ओदनो ब्रह्मौदनः। तमध्वर्युः पचति। तस्य कालादीन् विशेषान् वक्ष्यति। "सा याऽसौ फाल्गुनी पौर्णमासी भवति तस्यै पुरस्तात् षडहे वा सप्ताहे वा ऋत्विजः उपसमायन्त्यध्वर्युश्च होता च ब्रह्मा चोद्गाता चैतान्वा अन्वन्य ऋत्विजस्तेभ्योऽध्वर्युश्चातुष्प्राश्यं ब्रह्मौदनं निर्वपति" इत्यादि ( श. प. १३।४।१।४–९ )। रेत एव तद्धत्त इति। ऋत्विजः किल अन्यं च यजमानस्यात्मानं यज्ञं ऋगादिना संस्कुर्वंति। एतेन ब्रह्मौदनेन ऋगादिप्रयोगसामर्थ्यात्मकं कुर्वंति। रेतो देवतेत्याह–यदाज्यमुच्छिष्यते। यदाज्यं ब्रह्मौदने ऋत्विग्भिर्भुज्यमाने परिशिष्यते। तेनोत्तरेद्युः पौष्ण्या इष्टेरनंतरं अश्वाभिधानिकां रशनां तेनाज्यशेषेणाभ्यज्य देवस्य त्वेत्यादत्ते। तेन च प्राजापत्योऽश्वः। तेन रशनाद्वारेण प्रजापतिमेव तेजसा समर्द्धयति। अपूतश्चामेध्यश्चाश्वो भवति। एतस्मादेवाज्योच्छेषणवचनादाज्यमिश्रः स ओदनः ऋत्विग्भ्यो देय इति गम्यते। प्राग्दर्भरशनासंपर्कादिति शेषः॥ १॥

---

१–अक्त्वाऽऽज्यशेषेण रशनाम्। आदानं काले वाऽञ्जनम्। ( वाशब्दः पक्षव्यावृत्तौ। पौष्णीष्टेरनन्तरं रशनाऽऽदानकालः, अतस्तदर्थं आज्यशेषरक्षणम्। ) का. श्रौ. सू. २०।७।८।

( श्वो ) दर्भमयी रशना भवति । पवित्रं वै दर्भाः पुनात्येवैनम्पूतमेवैनम्मेध्यमालभते ॥ २ ॥

( तेऽश्व ) अश्वस्य वाऽआलब्धस्य रेतऽउदक्रामत् । ( तत् ) तत्सुवर्णꣳ हिरण्यमभवद्यत्सुवर्णꣳ हिरण्यं ददात्यश्वमेव रेतसा समर्द्धयति ॥ ३ ॥ ( शतम् ६४०० ) ॥

प्रजापतिर्यज्ञमसृजत । तस्य महिमाऽपाक्रामत्स महर्त्विजः प्राविशत्तम्महर्त्विग्भिरन्वैच्छत्तम्महर्त्विग्भिरन्वविन्दद्यन्महर्त्विजो ब्रह्मौदनम्प्राश्नन्ति महिमानमेव तद्यज्ञस्य यजमानोऽवरुन्धे ब्रह्मौदने सुवर्णꣳ हिरण्यन्ददाति रेतो वाऽओदनो रेतो वा हिरण्यꣳ रेतसैवास्मिंस्तद्रेतो दधाति शतमानम्भवति शतायुर्वै पुरुषः शतेन्द्रियऽआयुरेवेन्द्रियं वीर्य्यमात्मन्धत्ते चतुष्टयीरपो वसतीवरीर्मध्यमायाह्ने गृह्णाति ता दिग्भ्यः समाहृता भवन्ति दिक्षु वाऽअन्नमन्नमापोऽन्नेनैवास्माऽअन्नमवरुन्द्धे ॥ ४ ॥

इति प्रथमप्रपाठके प्रथमं ब्राह्मणम् ॥ १३-१-१ ॥ ( १. १. ) ॥

---

दर्भमयी रशना भवति । पवित्रं वै दर्भाः । पुनात्येवैनम् । पूतमेवैनं मेध्यमालभते ॥ २ ॥

अश्वस्य वा आलब्धस्य रेत उदक्रामत् । तत्सुवर्णं हिरण्यमभवत् । यत्सुवर्णं हिरण्यं ददाति । अश्वमेव रेतसा समर्द्धयति ॥ ३ ॥

प्रजापतिर्यज्ञमसृजत । तस्य महिमाऽपाक्रमत् । स महर्त्विजः प्राविशत् । तं महर्त्विग्भिरन्वैच्छत् । तं महर्त्विग्भिरन्वविंदत् । यन्महर्त्विजो ब्रह्मौदनं प्राश्नंति । महिमानमेव तद्यज्ञस्य यजमानोऽवरुन्धे । ब्रह्मौदने सुवर्णं हिरण्यं ददाति । रेतो वा ओदनः । रेतो हिरण्यम् । रेतसैवास्मिंस्तद्रेतो दधाति । शतमानं भवति । शतायुर्वै पुरुषः शतेन्द्रियः । आयुरेवेन्द्रियं वीर्यमात्मन् धत्ते ।

---

तस्य मेध्यतायै दर्भमयी रशना भवतीति संबंधः ॥ २ ॥

यत्सुवर्णं हिरण्यं ब्रह्मौदनेन तमात्मानमेकैकस्मै महर्त्विजे ददातीति वचनांतरेभ्यः ॥ ३ ॥

महिमा महत्त्वस्य कारणं वाक् ऋगादिलक्षणा । तथा चोक्तम् "कदाऽस्य तेन प्राणा" इति । ब्रह्मौदने अंगिनि सुवर्णं हिरण्यं ददाति । " न रूपशतमानं भवत्येकैकस्मै 'चत्वारि सुवर्णानि शतमानानि " इति वचनात् । शतायुर्वर्षशतायुः । शतेन्द्रियः अवस्थाभेदात् प्रतिवर्षमिन्द्रीयते इत्यभिप्रायः । चतुष्टयीश्चतुरवयवाः ॥ ४ ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये त्रयोदशकाण्डे प्रथमेऽध्याये प्रथमं ब्राह्मणम् ॥ ( १३ । १ । १ ) ॥

---

१—वसतीवरीर्गृहीत्वा प्रतिदिशं समासिच्य परिहरति । का. श्रौ. सू. २० । ११२ ।

व्यृद्धमु वाऽ एतद्यज्ञस्य । यदयजुष्केण क्रियतऽइमामगृभ्णन्नरशना-मृतस्येत्यश्वाभिधानीमादत्ते यजुष्कृत्यै यज्ञस्य समृद्ध्यै द्वादशारत्नि-र्भवति द्वादश मासाः सम्वत्सरः सम्वत्सरमेव यज्ञमाप्नोति ॥ १ ॥

तदाहुः। (द्वा)द्वादशारत्नी रशना कार्य्या३ त्रयोदशारत्नी३ इत्यृषभो वाऽ एषऽऋतूनां यत्सम्वत्सरस्तस्य त्रयोदशो मासो विष्टपमृषभऽएष यज्ञानां यदश्वमेधो यथा वाऽ ऋषभस्य विष्टपमेवमेतस्य विष्टपन्त्रयोदशमर-त्निᳬ रशनायामुपादध्यात्तद्यथाऽ ऋषभस्य विष्टपᳬ सᳬस्क्रियते तादृक्तत् ॥ २ ॥

( ८ ) अभिधाऽ असीति । तस्मादश्वमेधयाजी सर्व्वा दिशोऽभिजयति भुवनमसीति भुवनन्तज्जयति यन्ताऽसि धर्त्तेति यन्तारमेवैनं धर्त्तार-ङ्करोति स त्वमग्निं वैश्वानरमित्यग्निमेवैनं वैश्वानरङ्गमयति सप्रथसं गच्छेति प्रजयैवैनम्पशुभिः प्रथयति स्वाहाकृतऽइति वषट्कारऽ एवास्यैष स्वगा त्वा देवेभ्यऽ इति देवेभ्यऽ एवैनᳬ स्वगा करोति प्रजा-पतयऽ इति प्राजापत्योऽश्वः स्वयैवैनन्देवतया समर्द्धयति ॥ ३ ॥

---

चतुष्टयीरपो वसतीवरीर्मध्यमायाह्नि गृह्णाति । ता दिग्भ्यः समाहृता भवन्ति । दिक्षु वा अन्नम् । अन्नमापः । अन्नेनैवास्मा अन्नमवरुंधे ॥ ४ ॥

व्यृद्धमु वा एतद्यज्ञस्य । यदयजुष्केण क्रियते । " इमामगृभ्णन् रशनामृतस्य "–( वा० सं० २२ । २ ) इत्यश्वाभिधानीमादत्ते । यजुष्कृत्यै, यज्ञस्य समृद्ध्यै । द्वादशारत्निर्भवति । द्वादश मासाः संवत्सरः । संवत्सरमेव यज्ञमाप्नोति ॥ १ ॥

तदाहुः–द्वादशारत्नी रशना कार्या३त्रयोदशारत्नी३रिति । ऋषभो वा एष ऋतूनां यत्संवत्सरः । तस्य त्रयोदशो मासो विष्टपम् । ऋषभ एष यज्ञानां यदश्वमेधः । यथा वा ऋषभस्य विष्टपम् । एव-मेतस्य विष्टपम्, त्रयोदशमरत्निं रशनायामुपादध्यात् । तद्यथा ऋषभस्य विष्टपं संस्क्रियते । तादृक् तत् ॥ २ ॥

" अभिधा असि "–इति । तस्मादश्वमेधयाजी सर्वा दिशोऽभिजयति । " भुवनमसि "–इति । भुवनं तज्जयति । " यन्ताऽसि धर्त्ता "–इति । यन्तारमेवैनं धर्तारं करोति । " स त्वमग्निं

---

व्यृद्धमु वा इति अत्र ब्राह्मणे रशनादानादिमन्त्रव्याख्यानम् । रशनापरिमाणम् । वचनानुज्ञापनम् । अनुज्ञातं प्रोक्षणम् । शुन उपप्लावनम् । एतदुच्यते ॥ १–८ ॥

---

१–रशनां द्वादशारत्निं त्रयोदशारत्निं वा निदधाति । का. श्रौ. सू. २० । ७ ।

( ती ) ईश्वरो वा॒ऽ एषः । ( ऽ ) आर्त्तिमार्त्तोर्य्यो ब्रह्मणे देवेभ्योऽप्रतिप्प्रोच्याश्वं बध्नाति ब्रह्मन्नश्वम्भन्त्स्यामि देवेभ्यः प्प्रजापतये तेन राध्यासमिति ब्रह्माणमामन्त्रयते ब्रह्मणऽएवैनं प्प्रतिप्प्रोच्य बध्नाति नार्त्तिमार्च्छति तम्बधान देवेभ्यः प्प्रजापतये तेन राध्नुहीति ब्रह्मा प्प्रसौति स्वयैवैनन्देवतया समर्द्धयत्यथ प्प्रोक्षत्यसावेव बन्धुः ॥ ४ ॥

स प्प्रोक्षति । प्प्रजापतये त्वा जुष्टम्प्प्रोक्षामीति प्प्रजापतिर्व्वै देवानाम्वीर्य्यवत्तमो व्वीर्य्यमेवास्मिन्दधाति तस्मादश्वः पशूनाम्वीर्य्यवत्तमः ॥५॥ ( ऽ ) इन्द्राग्निभ्यां त्वा जुष्टम्प्रोक्षामीति । ( ती ) इन्द्राग्नी वै देवानामोजस्वितमाऽ ओजऽ एवास्मिन्दधाति तस्मादश्वः पशूनामोजस्वितमः६॥ ( मो ) व्वायवे त्वा जुष्टम्प्रोक्षामीति । व्वायुर्व्वै देवानामाशिष्ठो जवमेवास्मिन्दधाति तस्मादश्वः पशूनामाशिष्ठः ॥ ७ ॥

---

वैश्वानरम् "–इति । अग्निमेवैनं वैश्वानरं गमयति । " सप्रथसं गच्छ "–इति । प्रजयैवैनं पशुभिः प्रथयति । " स्वाहाकृतः "–( वा. सं. २२ । ३ ) इति । वषट्कार एवास्यैषः । " स्वगा त्वा देवेभ्यः "–इति । देवेभ्य एवैनं स्वगा करोति । " प्रजापतये "–( वा. सं. २२ । ४ ) इति । प्राजापत्योऽश्वः । स्वयैवैनं देवतया समर्द्धयाति ॥ ३ ॥

ईश्वरो वा एष आर्तिमार्तोः । यो ब्रह्मणे देवेभ्योऽप्रतिप्रोच्याश्वं बध्नाति । " ब्रह्मन्नश्वं भन्त्स्यामि देवेभ्यः प्रजापतये तेन राध्यासम् "–इति ब्रह्माणमामंत्रयते । ब्रह्मण एवैनं प्रतिप्रोच्य बध्नाति । नार्तिमार्च्छति । " तं बधान देवेभ्यः प्रजापतये तेन राध्नुहि "–( वा. सं. २२ । ४ ) इति ब्रह्मा प्रसौति । स्वयैवैनं देवतया समर्द्धयति । अथ प्रोक्षति । असावेव बन्धुः ॥ ४ ॥

स प्रोक्षति । " प्रजापतये त्वा जुष्टं प्रोक्षामि "–इति । प्रजापतिर्वै देवानां वीर्यवत्तमः । वीर्यमेवास्मिन् दधाति । तस्मादश्वः पशूनां वीर्यवत्तमः ॥ ५ ॥

" इन्द्राग्निभ्यां त्वा जुष्टं प्रोक्षामि "–इति । इन्द्राग्नी वै देवानामोजस्वितमौ । ओज एवास्मिन् दधाति । तस्मादश्वः पशूनामोजस्वितमः ॥ ६ ॥

" वायवे त्वा जुष्टं प्रोक्षामि "–इति । वायुर्वै देवानामाशिष्ठः । जवमेवास्मिन् दधाति । तस्मादश्वः पशूनामाशिष्ठः ॥ ७ ॥

---

१–देवस्य त्वेति रशनामादाय ब्रह्मन्नश्वं भन्त्स्यामीत्याह । का. श्रौ. सू. २० । २६ । २–तं बधानेति ब्रह्मानुज्ञातोऽभिधा नसीति बध्नात्यश्वम् । का. श्रौ. सू. २० । २७ । ३–प्रजापतये त्वेति प्रोक्षत्यश्वं प्रतिमन्त्रम् । का. श्रौ. सू. २० । ३६ ।

( ष्टो ) व्विश्वेभ्यस्त्वा देवेभ्यो जुष्टम्प्प्रोक्षामीति व्विश्वे वै देवा देवानां यशस्वितमा यश ऽ एवास्मिन्दधाति तस्मादश्वः पशूनां यशस्वितमः सर्व्वेभ्यस्त्वा देवेभ्यो जुष्टम्प्प्रोक्षामीति ॥ ८ ॥

तदाहुः । ( र्षुं ) यत्प्राजापत्योऽश्वोऽथ कथाऽप्यन्याभ्यो देवताभ्यः प्प्रोक्षतीति सर्व्वा वै देवताऽ अश्वमेधेऽन्वायत्ता यदाह सर्व्वेभ्यस्त्वा देवेभ्यो जुष्टम्प्प्रोक्षामीति सर्व्वाऽएवास्मिन्देवताऽ अन्वायातयति तस्मा-दश्वमेधे सर्व्वा देवताऽ अन्वायत्ताः पाप्मा वाऽ एतम्भ्रातृव्यऽ ईप्सति योऽश्वमेधेन यजते व्वज्रोऽश्वः परो मर्त्तः परः श्वेति श्वानं चतुरक्षꣳ हत्वाऽधस्पदमश्वस्योपप्लावयति व्वज्रेणैवैनमवक्रामति नैनम्पाप्मा भ्रातृव्यऽआप्नोति ॥ ९ ॥

इति प्रथमप्रपाठके द्वितीयं ब्राह्मणम् ॥ १३।१।२ ॥ ( १-२ ) ॥

---

" विश्वेभ्यस्त्वा देवेभ्यो जुष्टं प्रोक्षामि "—इति । विश्वे वै देवा देवानां यशस्वितमाः । यश एवास्मिन् दधाति । तस्मादश्वः पशूनां यशस्वितमः । " सर्वेभ्यस्त्वा देवेभ्यो जुष्टं प्रोक्षामि "—( वा. सं. २२ । ५ ) इति ॥ ८ ॥

तदाहुः—यत्प्राजापत्योऽश्वः । अथ कथाऽप्यन्याभ्यो देवताभ्यः प्रोक्षतीति । सर्वा वै देवता अश्वमेधेऽन्वायत्ताः । यदाह । " सर्वेभ्यस्त्वादेवेभ्योजुष्टंप्रोक्षामि " इति । सर्वा एवास्मिन् देवता अन्वायातयति । तस्मादश्वमेधे सर्वा देवता अन्वायत्ताः । पाप्मा वा एतं भ्रातृव्य ईप्सति योऽश्वमेधेन यजते । वज्रोऽश्वः । " परो मर्तः परः श्वा "—(वा. सं. २२।५) इति श्वानं चतुरक्षं हत्वा, अधस्पदमश्वस्योपप्लावयति । वज्रेणैवैनमवक्रामति । नैनं पाप्मा भ्रातृव्य आप्नोति ॥ ९ ॥

---

यस्याक्षिसमीपे द्वे पौण्ड्रे अक्षिरूपवद्दिक्कोणके स चतुरक्षः श्वा । अधस्पदमश्वस्येति पादानामधस्तात् अधस्पदम् । न च पादानामधस्ताच्छक्येत आप्लावयितुम् । इत्यधस्पदमित्यनेनात्र पादांतरालं लक्ष्यते ॥ ९ ॥

इति श्रीमंदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशत.पथब्राह्मणभाष्ये त्रयोशकाण्डे प्रथमाध्याये द्वितीयं ब्राह्मणम् ॥ १३ । १ । २ ॥

---

१-आयोगवमाह श्वानं चतुरक्षमभिहन्यस्वेति । पुंश्चल्यंके । सिध्रकमुसलेनैन९ हंति । वेतसकटेनाधोऽश्वं प्लावयति परो मर्त्त इति । का. श्रौ. सू. २० । ३७, ३९,४१ ।

यथा वै हविषो ऽहुतस्य स्कन्देत् । ( दे ) एवमेतत्पशो स्कन्दति यन्नि-क्तमनालब्धमुत्सृजन्ति यत्स्तोकीया जुहोति सर्व्वहुतमेवैनञ्जुहोत्यु-स्कन्दायास्कन्नँ हि तद्यद्धुतस्य स्कन्दति सहस्रञ्जुहोति सहस्र-सम्मितो वै स्वर्गो लोकः स्वर्गस्य लोकस्याभिजित्यै ॥ १ ॥

तदाहुः । ( ख्यु ) यन्मिता जुहुयात्परिमितमवरुन्धीतेत्यमिता जुहोत्यु-परिमितस्यैवावरुद्ध्या ऽ उवाच ह प्रजापति स्तोकीयासु वा ऽअहमश्व-मेधँ सँस्थापयामि तेन सँस्थितेनैवात ऽ ऊर्ध्वञ्चरामीति ॥ २ ॥

(त्य) अग्नये स्वाहेति । (त्य) अग्नय ऽ एवैनञ्जुहोति सोमाय स्वाहेति सोमा-

---

यथा वै हविषोऽहुतस्य स्कन्देत् । एवमेतत्पशोः स्कन्दति । यन्निक्तमनालब्धमुत्सृजन्ति । यत् स्तोकीया जुहोति । सर्वहुतमेवैनं जुहोति, अस्कन्दाय । अस्कन्नं हि तत् । यद्धुतस्य स्कंदति । सहस्रं जुहोति । सहस्रसम्मितो वै स्वर्गो लोकः । स्वर्गस्य लोकस्याभिजित्यै ॥ १ ॥

तदाहुः—यन्मिता जुहुयात् । परिमितमवरुन्धीत । इत्यमिता जुहोति । अपरिमितस्यैवावरुद्ध्यै । उवाच ह प्रजापतिः । स्तोकीयासु वा अहमश्वमेधं संस्थापयामि । तेन संस्थितेनैवात ऊर्ध्वं चरामीति ॥ २ ॥

“ अग्नये स्वाहा ”–इति । अग्नय एवैनं जुहोति । “ सोमाय स्वाहा ”–इति । सोमा॰

---

हविषः अहुतस्य स्कन्देदप्यथ चेत्तत्र चावश्यं प्रतिक्रियते । एवमेतत् । अश्वस्य पशोः स्कन्दति । निक्तं प्रक्षालितम् । अनालब्धं पोषणाय । उत्सृजन्ति । त्वचम् । तत्र कः प्रतीकार इत्यपेक्षिते आह–यत् स्तोकीयाः । स्तोकमानां प्रस्रवणबिन्दूनां निष्क्रयणतया संबन्धिनीराहुतीर्जुहोति । सर्वहुतमेव एनमश्वं जुहोति अस्कन्दाय हविषः अविप्रणाशाय । ( किमेतास्वाहुतिषु जुह्वता स नो विन्दते । न वै श्रोतॄन स्वपितु हविषः स्कन्दनेति?) । अस्कन्नं हि तद्यस्य हुतस्य स्कन्दति । एताभिश्च निष्क्रयणीभिराहुतिभिस्तद्धुतमेव भवतीत्यभिप्रायः । सहस्रं जुहोति । अग्नये स्वाहेत्येताः दशाहुतीः शतकृत्व आवृत्ता जुहोति । तथा जुहोति यथा आवृत्त्या सहस्रं भवतीत्यर्थः । सहस्रसंमितो वै स्वर्गो लोक इति । गायत्रीरात्रे गोसहस्रं प्रकृत्याह–“ यावदस्य सहस्रस्योत्तरा गौर्गतिप्रतिष्ठा भवति । तावत् अस्माल्लोकात् असौ लोक इत्येवं सहस्रसंमितः स्वर्गलोकः ” इति ॥ १ ॥

अमिता जुहोतीति कल्पान्तरम् । स्तोकीयासु वा अहमिति । सर्वेभ्यः अश्व आलभ्यत इति तेषां निष्क्रयणीभिराहुतिभिः संस्थापित एवाश्वमेधो भवतीत्यभिप्रायः । अथ सर्वाभ्यो वै देवताभ्यः अश्व आलभ्यते । एतावंतश्च सर्वे देवाः यावंतोऽग्न्यादयः तेभ्यो हुतः संस्थापित एव भवतीति ॥ २ ॥

अग्नय एवैनमिति । नाग्नये एनमेवाश्वं जुहोति न केवलमाज्यमिति । एवं सोमायैवैनमश्वं जुहोतीत्या॰

---

१–अग्निसमीपमानीयाग्नये स्वाहेति जुहोत्यनुवाकेन प्रतिमन्त्रम् । का. श्रौ. सू. २० । २ ।

२–सहस्रं वाऽऽवर्तम् । आऽश्वस्रवणविरमणाद्वा । ( इति तु शाखान्तरादिति देवयाज्ञिकः । ) का. श्रौ. सू. २० । ४३ । ४४ ।

एवैनं जुहोत्यपाम्मोदाय स्वाहेत्यद्भ्युऽ एवैनं जुहोति सवित्रे स्वाहेति सवित्रऽ एवैनञ्जुहोति व्वायवे स्वाहेति व्वायवऽ एवैनञ्जुहोति व्विष्णवे स्वाहेति व्विष्णवऽ एवैनञ्जुहोतीन्द्राय स्वाहेतीन्द्रायैवैनञ्जुहोति बृहस्पतये स्वाहेति बृहस्पतयऽ एवैनञ्जुहोति मित्राय स्वाहेति मित्रायैवैनञ्जुहोति व्वरुणाय स्वाहेति व्वरुणायैवैनञ्जुहोत्येतावन्तो वै सर्व्वे देवास्तेभ्यऽ एवैनं जुहोति पराचीर्जुहोति पराङिव वै स्वर्गो लोकः स्वर्गस्य लोकस्याभिजित्यै ॥ ३ ॥

( त्याऽई ) ईश्वरो वाऽ एषः । (ष) पराङ्प्रदघोर्य्यः पराचीराहुतीर्जुहोति पुनरावर्त्ततेऽस्मिन्नेव लोके प्रतितिष्ठत्येताᳬं ह वाव स यज्ञस्य सᳬंस्थिति-मुवाचास्कन्दायास्कन्नᳬं हि तद्यद्धुतस्य स्कन्दति ॥ ४ ॥

यथा वै हविषोऽहुतस्य स्कन्देत् । ( दे ) एवमेतत्पशो स्कन्दति यम्प्रोक्षितमनालब्धमुत्सृजन्ति यद्रूपाणि जुहोति सर्व्वहुतमेवैनञ्जुहोत्यस्क-

---

यैवैनं जुहोति । “ अपां मोदाय स्वाहा ”–इति । अद्भ्य एवैनं जुहोति । “सवित्रे स्वाहा”–इति । सवित्र एवैनं जुहोति । “ वायवे स्वाहा ”–इति । वायव एवैनं जुहोति । “ विष्णवे स्वाहा ”–इति । विष्णव एवैनं जुहोति । “ इंद्राय स्वाहा ”–इति । इंद्रायैवैनं जुहोति । “ बृहस्पतये स्वाहा ”–इति । बृहस्पतय एवैनं जुहोतिं । “ मित्राय स्वाहा ”–इति । मित्रायैवैनं जुहोति । “ वरुणाय स्वाहा ”– ( वा. सं. २२ । ६ ) इति । वरुणायैवैनं जुहोति । एतावन्तो वै सर्वे देवाः। तेभ्य एवैनं जुहोति। पराचीर्जुहोति । पराङिव वै स्वर्गो लोकः। स्वर्गस्य लोकस्याभिजित्यै ॥ ३ ॥

ईश्वरो वा एष पराङ्प्रदघोः । यः पराचीराहुतीर्जुहोति । पुनरावर्तते । अस्मिन्नेव लोके प्रतितिष्ठति । एतां ह वाव स यज्ञस्य संस्थितिमुवाचास्कंदाय। अस्कन्नं हि तत् । यद्धुतस्य स्कन्दति॥४॥

यथा वै हविषोऽहुतस्य स्कन्देत् । एवमेतत्पशोः स्कन्दति । यं प्रोक्षितमनालब्धमुत्सृजन्ति । यद्रूपाणि जुहोति । सर्वहुतमेवैनं जुहोत्यस्कन्दाय। अस्कन्नं हि तत्। यद्धुतस्य स्कन्दति । “हिंका-

---

वृत्त्या पराचीरनावृत्ताः सकृदेव दशैता आहुतीरिति कल्पान्तरम् । पराङ् स्वर्गो लोक इति परतः श्रेय इत्यभिप्रायः ॥ ३ ॥

प्रदघोरिति प्राप्ते तोसुन आदिलोपः । हकारस्य घत्वम् । पराचीराहुतीर्जुहोतीत्यावृत्तिपक्षस्य निन्दा । पुनरावर्तत इत्यावृत्तिपक्षस्योपसंहारः । तेन च पुनरावर्तनेन अस्मिन्नेव लोके प्रतितिष्ठति । न पराङेव प्रैतीत्यर्थः । एतां ह वाव । एतामेव च स प्रजापतिः आवृतिमत्तां यज्ञस्य संस्थितिं स्तोकीयास्वाहुताः पराचीः ॥ ४ ॥

यथा वै हविषः इति । चतसृभिरेताभिः कंडिकाभिः अश्वरूपाणां हिंकारादीनां निष्क्रयणात्मिका रूपाख्या

न्दायास्कन्नᳫं हि तद्यद्धुतस्य स्कन्दति हिङ्काराय स्वाहा हिङ्कृताय स्वाहेत्येतानि वा अश्वस्य रूपाणि तान्येवावरुन्द्धे ॥ ५ ॥

तदाहुः । ( ग ) अनाहुतिर्वै रूपाणि नैता होतव्याऽइत्यथो खल्वाहुरत्र वाऽअश्वमेधः सन्तिष्ठते यद्रूपाणि जुहोति होतव्याऽएवेति बहिर्द्धा वाऽएतमायतनात्करोति भ्रातृव्यमस्मै जनयति यस्यानायतनेऽन्यत्राग्नेराहुतीर्जुहोति ॥ ६ ॥

सावित्र्याऽएवेष्टेः । पुरस्तादनुद्रुत्य सकृदेव रूपाण्याहवनीये जुहोत्यायतनऽएवाहुतीर्जुहोति नास्मै भ्रातृव्यञ्जनयति यज्ञमुखे यज्ञमुखे जुहोति यज्ञस्य सन्तत्याऽअव्यवच्छेदाय ॥ ७ ॥

तदाहुः । ( घ ) यद्यज्ञमुखेयज्ञमुखे जुहुयात्पशुभिर्व्यृध्येत पापीयान्स्यात्सकृदेव होतव्या न पशुभिर्व्यृध्यते न पापीयान्भवत्यष्टाचत्वारिᳫंशतञ्जुहोत्यष्टाचत्वारिᳫंशदक्षरा जगती जागताः पशवो जगत्यैवास्मै पशूनवरुन्द्धऽ एकमतिरिक्तञ्जुहोति तस्मादेकः प्रजास्वृद्धकः ॥८॥

इति प्रथमप्रपाठके तृतीयं ब्राह्मणम् ॥ १३।१।३ ॥ ( १-३ ) ॥

---

राय स्वाहा हिंकृताय स्वाहा "–( वा. सं. २२ । ७ ) इति । एतानि वा अश्वस्य रूपाणि । तान्येवावरुन्धे ॥ ५ ॥

तदाहुः–अनाहुतिर्वै रूपाणि । नैता होतव्या इति । अथो खल्वाहुः । अत्र वा अश्वमेधः संतिष्ठते । यद्रूपाणि जुहोति । होतव्या एवेति । बहिर्द्धा वा एतमायतनात्करोति । भ्रातृव्यमस्मै जनयति । यस्यानायतनेऽन्यत्राग्नेराहुतीर्जुहोति ॥ ६ ॥

सावित्र्या एवेष्टेः पुरस्तादनुद्रुत्य सकृदेव रूपाण्याहवनीये जुहोति । आयतन एवाहुतीर्जुहोति । नास्मै भ्रातृव्यं जनयति । यज्ञमुखे यज्ञमुखे जुहोति । यज्ञस्य संतत्या अव्यवच्छेदाय ॥ ७ ॥

तदाहुः–यद्यज्ञमुखे यज्ञमुखे जुहुयात् । पशुभिर्व्यृध्येत । पापीयान् स्यात् । सकृदेव होतव्याः । न पशुभिर्व्यृध्यते । न पापीयान् भवति । अष्टाचत्वारिंशतं जुहोति । अष्टाचत्वारिंशदक्षरा

---

आहुतय उच्यन्ते । ता एवात्र प्रक्रम्या इति वक्ष्यते । यस्यास्यानायतने आहुतीर्जुहोतीति । किं पुनस्तदायतनम् । अत आह–अन्यत्राग्नेरिति । अन्वाहार्यपचने वा अश्वपदे वा परिलिखिते । वक्ष्यमाणकल्पांतरनिन्दा ॥ ५ ॥ ६ ॥

सावित्र्या एवेष्टेः पुरस्तात् । स्तोकीयानंतरमेवेत्यर्थः । ननु च–यागदेववत् तत्स्थानं प्राप्नोति । किं ? तदर्थवचनेन । नैष दोषः कल्पांतरं हि वक्ष्यते । सावित्रीष्टिषु संस्थितासु प्रयुक्तेऽश्वे पारिप्लवं आख्याते वीणा–

प्र॒जाप॑तिरश्वमे॒धम॑सृजत॒ । सो॑ऽस्मात्सृ॒ष्टः परा॑ङैत्स दिशो॑ऽनु॒प्रा-विश॒त्तं दे॒वाः प्रै॒षमै॑च्छँ॒स्तमि॒ष्टिभि॑रनु॒प्रायु॑ञ्जत॒ तमि॒ष्टिभि॑र॒न्वैच्छँ॒स्तमि॒-ष्टिभि॑र॒न्वविन्द॒न्यदि॒ष्टिभि॒र्यज॑ते॒ऽश्वमे॒व तन्मे॒ध्यं यज॑मानो॒ऽन्विच्छति ॥ १ ॥

सा॒वि॒त्र्यो भवन्ति (न्ती) इ॒यं वै स॑वि॒ता यो वा॒ऽअ॒स्यां नि॒लय॑ते॒ यो॒ऽन्यत्रै॒-त्य॒स्यांवाव तम॑नु॒विन्द॑न्ति॒ न वा॒ऽइ॒मां कश्च॒न ति॒र्यङ्नोर्ध्वो॒ऽत्येतु॒-मर्ह॑ति॒ यत्सा॑वि॒त्र्यो भव॑न्त्यश्व॒स्यै॒वानु॑वित्त्यै ॥ २ ॥

---

जगती । जागताः पशवः । जगत्यैवास्मै पशूनवरुन्धे । एकमतिरिक्तं जुहोति । तस्मादेकः प्रजास्वर्द्धुकः ॥ ८ ॥

प्रजापतिरश्वमेधमसृजत । सोऽस्मात्सृष्टः पराङैत् । स दिशोऽनुप्राविशत् । तं देवाः प्रैषमैच्छन् । तमिष्टिभिरनुप्रायुंजत । तामिष्टिभिरन्वैच्छन् । तामिष्टिभिरन्वविन्दन् । यदिष्टिभिर्यजते । अश्वमेव तन्मेध्यं यजमानोऽन्विच्छाति ॥ १ ॥

सावित्र्यो भवन्ति । इयं वै सविता । यो वा अस्यां निलयते । योऽन्यत्रैति । अस्यां वाव तमनुविन्दान्ति । न वा इमां कश्चन तिर्यङ् नोर्ध्वोऽत्येतुमर्हति । यत्सावित्र्यो भवन्ति । अश्वस्यैवानुवित्त्यै ॥ २ ॥

---

गाथिनः संप्रेष्य अध्वर्युः प्रक्रमान् जुहोति, अन्वाहार्यपचने वा अश्वस्य पदं वा परिलिख्येति । तस्य वाचनिकस्य क्रमस्य बाधनार्थं पुरस्तादित्याह । सूत्रकारेण तु स एव कल्पः सूत्रितः । नायम् । अनुद्रुत्य आनुपूर्व्येणोच्चार्य " हिंकाराय स्वाहा " इत्यादिकं आज्येनैव जुहुयादित्यभिप्रायः । सकृदेवेति न स्तोकीयावदावर्तयेदित्यर्थः । आहवनीये इति । न पदे अन्वाहार्यपचने वेत्यर्थः । यज्ञमुखे यज्ञमुख इति । दीक्षणीया प्रायणीया आतिथ्या प्रवर्ग्य उपसदः अग्नीषोमीयाः सुत्या अवभृथ उदयनीया अनूबंध्या उदवसानीया इत्येतेषु एकरूपमष्टाचत्वारिंशतम् । अतिरिक्तं जुहोति । तस्मादेकः प्रजासु अर्द्धुकः साधु समृद्धो भवति । अनेन तु तमनुवर्तते ॥ ७ ॥ ८ ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये त्रयोदशकाण्डे प्रथमेऽध्याये तृतीयं ब्राह्मणम् ॥ १३ । १ । ३ ॥

प्रजापतिरश्वमेधमसृजत । सृष्टः भ्रष्टः । अस्मात्प्रजापतेः । पराङ् पराङ्मुखः । ऐत् गतः । स दिशः अनुप्राविशत् प्रविष्टः । अस्तं गत इत्यर्थः । तं देवास्तदीया ऋत्विजः । प्रैषं द्रष्टुं अन्वेषणे प्रकर्षेण अन्विष्यान्विष्य ऐच्छन् । तं इष्टिभिः सावित्रीभिः । अनु पश्चात् प्रकर्षेणायुंक्त । ताभिः यथा न प्रणश्यति तथा अकुर्वत । तं इष्टिभिरन्वियेषुः । अन्वविन्दंश्च ॥ १ ॥

इयं वै सविता अनुज्ञाता । कथं ? यो वै अस्यां पृथिव्यां निलयते गृहाद्बहिर्भूमिं गच्छति । पश्चादंतरिक्षे गच्छति । अस्यामेव च तमनुविन्दंति लभंते । न च इमां कश्चिदपि तिर्यगूर्ध्वं च अतिवर्तते ॥ २ ॥

तदाहुः । प्र वा॒ऽ एतदश्वो मीयते यत्पराङेति न ह्येनं प्रत्यावर्तयन्तीति यत्सायं धृतीर्जुहोति क्षेमो वै धृतिः क्षेमो रात्रिः क्षेमेणैवैनं दाधार तस्मात्सायम्मनुष्याश्च पशवश्च क्षेम्या भवन्त्यथ यत्प्रातरिष्टिभिर्यजत ऽइच्छत्येवैनन्तत्तस्माद्दिवा नष्टैषऽ एति यद्वेव सायं धृतीर्जुहोति प्रातरिष्टिभिर्यजते योगक्षेममेव तद्यजमानः कल्पयते तस्माद्यत्रैतेन यज्ञेन यजन्ते क्लृप्तः प्रजानां योगक्षेमो भवति ॥ ३ ॥

इति प्रथमप्रपाठके चतुर्थं ब्राह्मणम् ॥ १३।१।४ ॥ ( १-४ )

अप वा॒ऽ एतस्मात् । ( च्छ्री ) श्री राष्ट्रङ्क्रामति योऽश्वमेधेन यजते यदा वै पुरुषः श्रियं गच्छति वीणाऽस्मै वाद्यते ब्राह्मणौ वीणागाथिनौ सम्वत्सरं गायतः श्रियै वा॒ऽ एतद्रूपं यद्वीणा श्रियमेवास्मिंस्तद्धत्तः ॥ १ ॥

---

तदाहुः—प्र वा एतदश्वो मीयते । यत्पराङेति । न ह्येनं प्रत्यावर्तयन्तीति । यत्सायं धृतीर्जुहोति । क्षेमो वै धृतिः । क्षेमो रात्रिः । क्षेमेणैवैनं दाधार । तस्मात्सायं मनुष्याश्च पशवश्च क्षेम्या भवन्ति । अथ यत्प्रातरिष्टिभिर्यजते । इच्छत्येवैनं तत् । तस्माद्दिवा नष्टैष एति । यद्वेव सायं धृतीर्जुहोति । प्रातरिष्टिभिर्यजते । योगक्षेममेव तद्यजमानः कल्पयते । तस्माद्यत्रैतेन यज्ञेन यजन्ते । क्लृप्तः प्रजानां योगक्षेमो भवति ॥ ३ ॥

अप वा एतस्माच्छ्री राष्ट्रं क्रामति। योऽश्वमेधेन यजते। यदा वै पुरुषः श्रियं गच्छति। वीणाऽस्मै

---

तदाहुः । धृतयो विधीयंते । प्रमीयते हिंस्यते। "मीञ् हिंसायाम्" (धा.पा. क्र्या.आ. ४) हिंसने न हि तमश्वं हिंसेभ्योऽपि प्रत्यावर्तयंतीति यत्सायं धृतीः । यदवधारणार्थः । "इह रतिरिह रमताम्" इत्येता आहुतीर्जुहोतीति तत्क्षणेनैव रात्रिलक्षणेन एनमश्वं दाधार धारयत्यध्वर्युः । तस्मात् सायं मनुष्याश्च पशवश्चक्षेम्याः क्षेमसंबद्धा भवंति । कथं ? पुनः क्षेमेण एनं धारयतीत्यत आह—क्षेमो वै धृतिर्धारणम् । गृहेषु यदिह धृतिरस्तु इत्येवं प्रार्थ्यते। क्षेमो रात्रिः । तत्र हि गृहे स्थितानां सर्वतो भयं न भवति । ततश्च तस्यां धृतीराहुतीर्जुहोति। जुहुतः प्रकर्षोऽर्थः । इच्छत्येवेति । अन्विच्छति । गवेषत इत्यर्थः । तस्मात्तदनुकारेण दिवा नष्टैष एति गच्छति । नष्टमन्विच्छति गवेषयति इति नष्टैषः । योगक्षेमं योगसहितं क्षेमम् । इष्टिभिः सावित्रीभिः योगम् । धृतिभिः क्षेमम् । यजमानं प्रजाभ्यः कल्पयते ॥ ३ ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये त्रयोदशकाण्डे प्रथमेऽध्याये चतुर्थं ब्राह्मणम् ॥ १३ ॥ १ ॥ ४ ॥

अप वा एतस्मात् । एतेभ्यो योऽश्वमेधेन यजते । तस्मात् श्रीश्च समृद्धिः राष्ट्रं च जनपदः अपक्रामति ।

( स्तु ) तदाहुः । ( स्र्ह् ) यदुभौ ब्राह्मणौ गायेतामपास्मात्क्षत्त्रङ्क्रामेद्ब्रह्मणो वाऽएतद्रूपं यद्ब्राह्मणो न वै ब्रह्मणि क्षत्त्रꣳ रमतऽइति ॥ २ ॥

यदुभौ राजन्यौ । ( न्याव् ) अपास्माद्ब्रह्मवर्चसङ्क्रामेत्क्षत्त्रस्य वाऽएतद्रूपं यद्राजन्यो न वै क्षत्त्रे ब्रह्मवर्चसꣳ रमतऽ इति ब्राह्मणोऽन्यो गायति राजन्योऽन्यो ब्रह्म वै ब्राह्मणः क्षत्त्रꣳ राजन्यस्तदस्य ब्रह्मणा च क्षत्त्रेण चोभयतः श्रीः परिगृहीता भवति ॥ ३ ॥

तदाहुः । ( स्र्ह् ) यदुभौ दिवा गायेताम्प्रभ्रꣳशुकाऽस्माच्छ्रीः स्याद्ब्रह्मणो वाऽ एतद्रूपं यदहर्यदा वै राजा कामयतेऽथ ब्राह्मणं जिनाति पापीयांस्तु भवति ॥ ४ ॥

यदुभौ नक्तम् । ( म ) अपास्माद्ब्रह्मवर्चसङ्क्रामेत्क्षत्त्रस्य वाऽएतद्रूपं यद्रात्रिर्न्न वै क्षत्त्रे ब्रह्मवर्चसꣳ रमत ऽइति दिवा ब्राह्मणो गायति

---

वाद्यते । ब्राह्मणौ वीणागाथिनौ संवत्सरं गायतः । श्रियै वा एतद्रूपम् । यद्वीणा । श्रियमेवास्मिंस्तद्धत्तः ॥ १ ॥

तदाहुः—यदुभौ ब्राह्मणौ गायेताम् । अपास्मात्क्षत्रं क्रामेत् । ब्रह्मणो वा एतद्रूपम् । यद् ब्राह्मणः । न वै ब्रह्मणि क्षत्रं रमत इति ॥ २ ॥

यदुभौ राजन्यौ । अपास्माद् ब्रह्मवर्चसं क्रामेत् । क्षत्रस्य वा एतद्रूपम् । यद्राजन्यः । न वै क्षत्रे ब्रह्मवर्चसं रमत इति । ब्राह्मणोऽन्यो गायति । राजन्योऽन्यः । ब्रह्म वै ब्राह्मणः । क्षत्रं राजन्यः । तदस्य ब्रह्मणा च क्षत्रेण चोभयतः श्रीः परिगृहीता भवति ॥ ३ ॥

तदाहुः—यदुभौ दिवा गायेताम् । प्रभ्रंशुकाऽस्माच्छ्रीः स्यात् । ब्रह्मणो वा एतद्रूपम् । यदहः । यदा वै राजा कामयते । अथ ब्राह्मणं जिनाति । पापीयांस्तु भवति ॥ ४ ॥

यदुभौ नक्तम् । अपास्माद्ब्रह्मवर्चसं क्रामेत् । क्षत्रस्य वा एतद्रूपम् । यद्रात्रिः । न वै क्षत्रे ब्रह्मवर्चसं

---

( ऋत्स्यौदीयानम् । ! ) तत्प्रतीकाराय । ब्राह्मणौ वीणागाथिनौ संवत्सरं गायतः । श्रियो ह्येतत् रूपम् । या वीणा । श्रियमेवास्मिन्नेव धत्तः । कथं पुरा एतत् श्रियो रूपम्, इत्यत आह—यदा वै पुरुष इति । अर्थवादार्थ एवायमुपन्यासः । तस्यै प्रयाजेषु तायमानेषु । ( अथ सायं धृतिषु हूयमानास्वश्विनोपबंधने च गुणत्वाद्गानोत्पत्तौ वाक्ये द्रष्टव्ये इतरे तावृत्तिवाक्यविशिष्टयोर्ब्राह्मणयोरन्यतरेऽन्ये राजन्येन कथं बाध्येत ! ) ॥ १–३ ॥

प्रभ्रंशुका प्रकर्षेण भ्रंशनधर्मिका इत्येवंबहुलक्षणं बह्वन्नमभक्षत् । बहुभिर्ऋतुभिरयं राजा अयजत इष्टवान्

नक्तꣳ राजन्यस्तथो हास्य ब्रह्मणा च क्षत्त्रेण चोभयतः श्रीः परिगृहीता भवतीति—॥ ५ ॥

( त्य ) अयजतेत्यददादिति । ब्राह्मणो गायतीष्टापूर्तम्वै ब्राह्मणस्येष्टापूर्त्तेनैवैनꣳ समर्द्धयतीत्ययुध्यतेत्यमुꣳ सङ्ग्राममजयादिति राजन्यो युद्धं वै राजन्यस्य व्वीर्य्यंव्वीर्य्येणैवैनꣳ समर्द्धयति तिस्रोऽन्यो गाथा गायति तिस्रोऽन्यः षट्सम्पद्यन्ते षडृतवः सम्वत्सरऽऋतुष्वेव सम्वत्सरे प्रतितिष्ठति ताभ्याꣳ शतं ददाति शतायुर्वै पुरुषः शतेन्द्रियऽआयुरेवेन्द्रियम्वीर्यमात्मन्धत्ते ॥ ६ ॥

इति प्रथमप्रपाठके पञ्चमं ब्राह्मणम् ॥ १३।१।५ ॥ ( १–५ )

व्विभूर्मात्रा प्रभूः पित्रेति । ( ती ) इयम्वै माताऽसौ पिताऽऽभ्यामेवैनम्परिददात्यश्वोऽसि हयोऽसीति शास्त्येवैनन्तत्तस्माच्छिष्टाः प्रजा जायं-

---

रमत इति । दिवा ब्राह्मणो गायति । नक्तं राजन्यः । तथो हास्य ब्रह्मणा च क्षत्त्रेण चोभयतः श्रीः परिगृहीता । भवति इति—॥ ५ ॥

अयजतेत्यददादिति ब्राह्मणो गायति । इष्टापूर्तं वै ब्राह्मणस्य । इष्टापूर्तेनैवैनं समर्द्धयति । इत्ययुध्यतेत्यमुं संग्राममजयादिति राजन्यः। युद्धं वै राजन्यस्य वीर्यम्। वीर्येणैवैनं समर्द्धयति। तिस्रोऽन्यो गाथा गायति । तिस्रोऽन्यः । षट् संपद्यन्ते । षट् ऋतवः संवत्सरः । ऋतुष्वेव संवत्सरे प्रतितिष्ठति । ताभ्यां शतं ददाति । शतायुर्वै पुरुषः । शतेन्द्रियः । आयुरेवेन्द्रियं वीर्यमात्मन्धत्ते ॥ ६ ॥

"विभूर्मात्रा प्रभूः पित्रा"—इति । इयं वै माता । असौ पिता । आभ्यामेवैनं परिददाति । "अश्वोऽसि हयोऽसि"—इति । शास्त्येवैनं तत् । तस्माच्छिष्टाः प्रजा जायन्ते ।

---

इति । एवं प्रभूतं सारं अचितमक्लिष्टं सात्विकं पात्रेषु अददात् दत्तवानिति ब्राह्मणो गायति । एवं बहुभिः शूरैः सह निर्यात्यम्, जयोत्तरमविक्रव्यं अयुध्यत इति । एवं चतुरंगेण बलेन वक्रादिना व्यूहेन अनीकोरः-कक्ष्यादिमबध्नन् । असुं चतुर्दत्तकूटयुद्धादिकं संग्रामम् । अथवा कुरुसंग्रामं वालसंग्रामं प्राच्यसंग्रामं उदीच्यमपीत्यादिकं अजयज्जितवान् । अयं राजेति राजन्यो गायति । नान्यं प्रत्येकं शतं ददाति । परिक्रीयमाणयोस्तयोः प्राधान्यात् । ऋत्विजां तु क्रतुदक्षिणोक्तपरिमाणा दीयते । इति न प्रत्येकं सकला दीयते ॥ ४—६ ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये त्रयोदशकाण्डे प्रथमेऽध्याये पञ्चमं ब्राह्मणम् ॥ १३ । १ । ५ ॥

विभूर्मात्रेति । तृतीयायां सावित्र्यामिष्टौ " संस्थितायामुपोत्थायाध्वर्युश्च यजमानश्चाश्वस्य दक्षिणे कर्णे

---

१ 'इत्यपचत्' 'इत्याजि नात्' इति क्रमेण ब्राह्मणराजन्यगाने शाखान्तरीयवाक्ययोजननोक्तषट्त्वसंपत्तिर्द्रष्टव्या ।

२—वीणागाथिभ्यां पृथक् शतं ददाति । का. श्रौ. सू. २०।६८ ॥

न्त्येऽत्योऽसि मयोऽसीत्यत्येवैनन्नयति तस्मादश्वः पशूनत्येति तस्मादश्वः पशूनाᳬ श्रैष्ठ्यङ्गच्छत्यर्व्वाऽसि सप्तिरसि व्वाज्यसीति यथा यजुरेवैतद्वृषाऽसि नृमणाऽअसीति मिथुनत्वाय ययुर्न्नामाऽसि शिशुर्न्नामाऽसीत्येतद्वाऽअश्वस्य प्प्रियन्नामधेयं प्प्रियेणैवैनन्नाम्नाऽभिवदति तस्मादप्यामित्रौ सङ्गत्य नाम्ना चेदभिवदतोऽन्योऽन्यᳬ समेव जानाते ॥ १ ॥

( तेऽआ ) आदित्यानाम्पत्वाऽन्विहीति । ( त्या ) आदित्यानेवैनङ्गमयति देवाऽ आशापालाऽ एतन्देवेभ्योऽश्वम्मेधाय प्प्रोक्षितᳬ रक्षतेति शतं वै तल्प्या राजपुत्त्राऽआशापालास्तेभ्यऽ एवैनम्परिददातीह

"अत्योऽसि मयोऽसि"—इति । अत्येवैनं नयति । तस्मादश्वः पशूनत्येति । तस्मादश्वः पशूनां श्रैष्ठ्यं गच्छति । "अर्वासि सप्तिरसि वाज्यसि"—इति । यथा यजुरेवैतत् । "वृषाऽसि नृमणा असि"—इति, मिथुनत्वाय । "ययुर्नामाऽसि शिशुर्नामाऽसि"—इति । एतद्वा अश्वस्य प्रियं नामधेयम् । प्रियेणैवैनं नाम्नाऽभिवदति । तस्मादप्यामित्रौ संगत्य नाम्ना चेदभिवदतः । अन्योऽन्यं समेव जानाते ॥ १ ॥

"आदित्यानां पत्वाऽन्विहि"—इति । आदित्यानेवैनं गमयति । "देवा आशापाला एतं देवेभ्योऽश्वं मेधाय प्रोक्षितं रक्षत"—इति । शतं वै तल्प्या राजपुत्रा आशा-

आजपतो विभूर्मात्रा प्रभूः पित्रेति" वक्ष्यति ( श. प. १३।४।२।१९ ) । अत्र तु मन्त्रो व्याख्यायते । 'इयं वै माता' । एम्य आध्वर्यवाद्वृष्टिलक्षणरेतःप्रतिग्रहाच्च । 'असौ पितेति' उक्तत्वादुदकासेकाच्च । तदुदकं तैलं पतिश्वास्यासौ पितेत्युच्यते। आभ्यामेवैनं परिददातीति । विभूर्मात्रा प्रभूः पित्रा सन् । आदित्यानां पत्वानामनुगच्छेति कृत्वा द्यावापृथिवीभ्यामेवैनमश्वं परित्रातुं निवेदयति—शास्त्येवैनं तदिति । महाशनस्त्वं गतौ विनिशास्ति शिक्षयत्येनं तदनुकारेण शिष्टाः स्वकर्मकुशलाः प्रजा जायंते । अत एव स तमश्वं नयतीति ब्रुवन् । अतिशब्दादव्ययादयमत्यशब्दो दर्शयति । अतिक्रम्यान्यान् यश्च भवतीत्यत्यः । अथवा "अत सातत्यगमने" इत्यस्मात्कर्तरि यत्प्रत्ययः । वर्षति सिञ्चति इति वृषा अन्यथा वर्षप्राप्तोऽत्र दर्शितः । अन्यान्पशूनत्येति अतः अयमेवाश्व इत्युच्यते । अतिशयेन अश्नोतीति । यथा यजुरेवैतत् ब्राह्मणमिव ब्रुवन् अर्वतेः प्राप्तिकर्मणः । अर्वतीत्यर्वा । सर्पतीति सप्तिः । साधु वाजतीति वाजी । बुद्ध्यावुत्पत्तिं दर्शयति—मिथुनत्वायेति । वृषावान् मिथुनेन विना न भवतीति । नृमणा अपि नृभिर्विषयभूतैर्विना न भवतीति । सोऽपि मिथुनरूपं विना साक्षीत्यभिप्रायः । एतद्वा अश्वस्य । प्रियं नामधेयमिति । विषयानत्यर्थं यातीति ययुः । अत्यर्थत्वं प्रशस्तार्थं चेति प्रियं । शिशुः शंसनीयो भवतीत्येतदपि प्रशंसानिमित्तत्वात् प्रियम् । आमित्रौ अमित्रायाः पुत्रौ ॥ १ ॥

तल्प्याः । तल्पसाधवस्तल्प्याः । शतं शय्या गताः तल्पेन समं रात्रौ ये साधु रक्षंति राजपुत्राः । तेभ्य

रन्तिरिह रमतामिह धृतिरिह स्वधृतिः स्वाहेति सम्वत्सरमाहुतीर्ज्जुहोति षोडश नवतीरेता वाऽअश्वस्य बन्धनन्ताभिरेवैनम्बध्नाति तस्मादश्वः प्रमुक्तो बन्धनमागच्छति षोडश नवतीरेता वाऽ अश्वस्य बन्धनन्ताभिरेवैनम्बध्नाति तस्मादश्वः प्रमुक्तो बन्धनन्न जहाति ॥ २ ॥

राष्ट्रम्वाऽ अश्वमेधः । (धो) राष्ट्रऽ एते व्व्यायच्छन्ति येऽश्वᳪ रक्षन्ति तेषां यऽ उद्दृचङ्गच्छन्ति राष्ट्रेणैव ते राष्ट्रम्भवन्त्यथ ये नोद्दृचङ्गच्छन्ति राष्ट्रात्ते व्व्यवच्छिद्यन्ते तस्माद्राष्ट्र्यश्वमेधेन यजेत परा वाऽएष सिच्यते योऽबलोऽश्वमेधेन यजते यद्यमित्राऽ अश्वम्विन्देरन्यज्ञोऽस्य व्विच्छिद्येत पापीयान्त्स्याच्छतङ्कवचिनो रक्षन्ति यज्ञस्य सन्तत्याऽअव्यवच्छेदाय न पापीयान्भवत्यथान्यमानीय प्रोक्षेयुः सैव तत्र प्रायश्चित्तिः ॥ ३ ॥

इति प्रथमप्रपाठके षष्ठं ब्राह्मणम् ॥ १३–१–६ ॥ ( १. ६. ) ॥

---

पालाः । तेभ्य एवैनं परिददाति । " इह रन्तिरिह रमतामिह धृतिरिह स्वधृतिः स्वाहा "–( वा. सं. २२ । १९ । ) इति । संवत्सरमाहुतीर्जुहोति षोडश नवतीः । एता वा अश्वस्य बन्धनम् । ताभिरेवैनं बध्नाति । तस्मादश्वः प्रमुक्तो बन्धनमागच्छति । षोडश नवतीः । एता वा अश्वस्य बन्धनम् । ताभिरेवैनं बध्नाति । तस्मादश्वः प्रमुक्तो बन्धनं न जहाति ॥ २ ॥

राष्ट्रं वा अश्वमेधः । राष्ट्र एते व्यायच्छन्ति । येऽश्वं रक्षन्ति । तेषां य उदृचं गच्छन्ति । राष्ट्रेणैव ते राष्ट्रं भवन्ति । अथ ये नोदृचं गच्छन्ति । राष्ट्रात्ते व्यवच्छिद्यन्ते । तस्माद्राष्ट्र्यश्वमेधेन यजेत । परा वा एष सिच्यते । योऽबलोऽश्वमेधेन यजते । यद्यमित्रा अश्वं विन्देरन् । यज्ञोऽस्य विच्छिद्येत ।

---

एवैनं परिददातीति । ब्रुवन् देवशब्दं तेष्टे गौणं दर्शयति । अथैते देवा इत्यत्र तु देवा आशापाला लक्ष्यन्ते । " इह रंतिरिह रमताम् " इति क्रमप्राप्तमंत्रानुक्रमणार्थं पुनर्वचनम् । षोडश नवतीरिति । ता एताः संवत्सरे संपद्यन्ते । एतामिति । इह रंतिरित्येवं प्रार्थना । ' बन्धनं ' बध्यतेऽस्मिन्निति बंधनं स्थानं तस्मात्प्रमुक्तः स्वयमप्यागच्छति । ( सत्ये च सत्यजन्यम् ? ) ॥ २ ॥

राष्ट्रं जनपदम् । अश्वमेधकारणम् । कथं ? यस्मात् राष्ट्रे एते विविधं आयच्छन्ते व्याप्रियंते । तेषां ये राजपुत्रादयो राजन्यादयः उदृचं समाप्तिं गच्छंति । अश्वमात्राद्रक्षंति । ते राष्ट्रेणैवाश्वमेधेन हेतुना राष्ट्रं राष्ट्रात् स्वं रक्षंति राजपुत्रादयो भवंति । तथैव सेवया देशा आप्ताश्च प्राप्नुवंतीत्यर्थः । तस्मात् राष्ट्री राष्ट्रपतिः । अश्वमेधेन यजेतेति विधिः । परा बहिः । परासिच्यते क्षीयंतेऽरातयः । अबलो मंदबलः सामंतेभ्यः । अश्वमेधेन यजते ॥ ३ ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये त्रयोदशकाण्डे प्रथमेऽध्याये षष्ठं ब्राह्मणम् ॥ १३ । १ । ६ ॥

प्रजापतिरकामयत । ( ता ) अश्वमेधेन यजेयेति सोऽश्राम्यत्स तपोऽतप्यत तस्य श्रान्तस्य तप्तस्य सप्तधाऽऽत्मनो देवताऽ अपाक्रामन्त्सा दीक्षाऽभवत्सऽ एतानि वैश्वदेवान्यपश्यत्तान्यजुहोत्तैर्वै स दीक्षामवारुन्ध यद्वैश्वदेवानि जुहोति दीक्षामेव तैर्यजमानोऽवरुन्धेऽन्वहञ्जुहोत्यन्वहमेव दीक्षामवरुन्धे सप्त जुहोति सप्त वै ता देवताऽअपाक्रामंस्ताभिरेवास्मै दीक्षामवरुन्धे ॥ १ ॥

( न्धेऽप ) अप वाऽ एतेभ्यः प्राणाः क्रामन्ति । ये दीक्षामतिरेचयन्ति सप्ताहम्प्रचरन्ति सप्त वै शीर्षण्याः प्राणाः प्राणा दीक्षा प्राणैरेवास्मै प्राणान्दीक्षामवरुन्धे त्रेधा विभज्य देवताञ्जुहोति त्र्यावृतो वै देवास्त्र्यावृतऽ इमे लोकाऽ ऋध्यामेव वीर्य्यऽएषु लोकेषु प्रतितिष्ठति ॥ २ ॥

---

पापीयान् स्यात् । शतं कवचिनो रक्षन्ति । यज्ञस्य सन्तत्या अव्यवच्छेदाय । न पापीयान् भवति । अथान्यमानीय प्रोक्षेयुः । सैव तत्र प्रायश्चित्तिः ॥ ३ ॥

प्रजापतिरकामयत । अश्वमेधेन यजेयेति । सोऽश्राम्यत् । स तपोऽतप्यत । तस्य श्रान्तस्य तप्तस्य सप्तधाऽऽत्मनो देवता अपाक्रामन् । सा दीक्षाऽभवत् । स एतानि वैश्वदेवान्यपश्यत् । तान्यजुहोत् । तैर्वै स दीक्षामवारुन्ध । यत् वैश्वदेवानि जुहोति । दीक्षामेव तैर्यजमानोऽवरुन्धे । अन्वहं जुहोति । अन्वहमेव दीक्षामवरुन्धे । सप्त जुहोति । सप्त वै ता देवता अपाक्रामन् । ताभिरेवास्मै दीक्षामवरुन्धे ॥ १ ॥

अप वा एतेभ्यः प्राणाः क्रामन्ति । ये दीक्षामतिरेचयन्ति । सप्ताहं प्रचरन्ति । सप्त वै शीर्षण्याः प्राणाः । प्राणा दीक्षा । प्राणैरेवास्मै प्राणान् दीक्षामवरुन्धे । त्रेधा विभज्य देवतां जुहोति । त्र्यावृतो वै देवाः । त्र्यावृत इमे लोकाः । ऋध्यामेव वीर्यं एषु लोकेषु प्रतितिष्ठति ॥ २ ॥

---

प्रजापतिः इति । तस्य य आत्मा शरीरम् । तस्मात्सप्तभेदात् चक्षुरादिभिश्छिद्रैः देवता अपक्रान्ताः सा च दीक्षा देवता आश्वमेधिकी अभवत् । स प्रजापतिः तस्या अवरोधार्थम् एतानि वक्ष्यमाणानि " काय स्वाहा " इत्यादिमंत्रकाणि अपक्रांतसप्तदेवताकानि वैश्वदेवानि नामानि हवनानि अपश्यत् । अन्वहमहन्यहनि जुहोति । न तु सर्वाणि । किंतु, वक्ष्यमाणेन विभागेन सप्त जुहोति । समानदेवतानि त्रीण्येकीकृत्य एवं सप्तेति । ताभिरेव देवताभिस्तर्पिताभिः अस्मै यजमानाय दीक्षामवरुन्धे ॥ १ ॥

अप वा एतेभ्यः । ये दीक्षामवरुध्य वैश्वदेवानि अतिरेचयन्ति । एकाहदीक्षया सप्ताहदीक्षया प्रचरन्ति । सप्त वैश्वदेवानि जुह्वति । दीक्षायाः सकाशात् वैश्वदेवानि व्यतिरेचयन्ति । तेभ्यः प्राणा अपक्रामन्ति । तत्प्रतीकाराय सप्ताहं दीक्षया प्रचरन्ति । सप्त ये शीर्षण्याः प्राणास्ते आश्वमेधिकीदीक्षाभूताः । ततश्च प्राणैरेव

(त्ये) एकविंशतिः सम्पद्यन्ते । द्वादश मासाः पञ्चर्त्तवस्त्रयऽइमे लोकाऽ असावादित्यऽ एकविंशस्तदैवं क्षत्त्रꣳ सा श्रीस्तदाधिपत्यन्तद्ब्रध्नस्य विष्टपन्तत्स्वाराज्यमश्नुते ॥ ३ ॥

त्रिꣳशतमौद्ग्रभणानि जुहोति । त्रिꣳशदक्षरा विराड्विराड्ड कृत्स्नमन्नं कृत्स्नस्यैवान्नाद्यस्यावरुद्ध्यै चत्वार्यौद्ग्रभणानि जुहोति त्रीणि वैश्वदेवानि सप्त सम्पद्यन्ते सप्त वै शीर्षण्याः प्राणाः प्राणा दीक्षा प्राणैरेवास्मै प्राणान्दीक्षामवरुन्धे पूर्णाहुतिमुत्तमाञ्जुहोति प्रत्युत्तब्ध्यै सयुक्त्वाय॥४॥

इति प्रथमप्रपाठके सप्तमं ब्राह्मणम् ॥ १३।१।७ ॥ ( १-७ ॥ )

---

एकविंशतिः संपद्यन्ते । द्वादश मासाः । पञ्चर्तवः । त्रय इमे लोकाः । असावादित्य एकविंशः । तदैवं क्षत्त्रं । सा श्रीः । तदाधिपत्यम् । तत् ब्रध्नस्य विष्टपम् । तत् स्वाराज्यमश्नुते ॥ ३ ॥

त्रिंशतमौद्ग्रभणानि जुहोति । त्रिंशदक्षरा विराट् । विराड्ड कृत्स्नमन्नम् । कृत्स्नस्यैवान्नाद्यस्यावरुद्ध्यै । चत्वार्यौद्ग्रभणानि जुहोति । त्रीणि वैश्वदेवानि । सप्त संपद्यन्ते । सप्त वै शीर्षण्याः प्राणाः । प्राणा दीक्षा । प्राणैरेवास्मै प्राणान्दीक्षामवरुन्धे । पूर्णाहुतिमुत्तमां जुहोति । प्रत्युत्तब्ध्यै सयुक्त्वाय ॥ ४ ॥

---

दीक्षात्मकैः प्राणात्मिकां दीक्षामवरुन्धे । त्रेधा त्रीणि रूपाणि विभज्य देवतां जुहोति । " काय स्वाहा कस्मै स्वाहा" इत्येवमादिना । त्र्यावृतो वसुरुद्रादित्यात्मकैरवयवैस्त्रिगुणा देवाः । अग्निः सोम इन्द्र इत्येवमाद्यात्मिकात्र्यावृतो वा । एवं लोका अपि त्रिगुणाः । समस्ताः प्रत्येकं चादिमध्यान्तविभागेन त्र्यावृतः । ततश्च त्रिगुणाभिर्देवताभिरिष्टाभिः त्रिगुणश्च दीर्घवत्सु समृद्धेषु एषु लोकेषु प्रतितिष्ठति ॥ २ ॥

तानि च सप्त । सप्त त्रिकाणि । एकविंशतिः संगच्छन्ते । अथ तैः किमधिदैवमपि इत्यत आह–**द्वादश मासा** इत्यादि । उत्तरत्र तच्छब्दश्च अतो यच्छब्दः अध्याहार्यः । यदेव द्वादश मासा इत्यादि तदैवं देवेषु भवं क्षत्त्रं । मासादींस्तान् देवानभिप्रेत्याह–**सा श्रीरिति** । तत्सौभाग्यतामाश्रित्याह–तदेव ब्रध्नस्यादित्यस्य संबन्धि प्रकाश्यम् । तत् आधिपत्यं अधिपतिभवम् । तत् स्वाराज्यमेकैश्वर्यम् अश्नुते ॥ ३ ॥

तैरेकविंशत्या वैश्वदेवैस्त्रिंशतमौद्ग्रभणानि जुहोति । सप्तभिर्दिवसैः कृते एकविंशतिः संपद्यते इति संपदधिकारात् । चत्वारि औद्ग्रभणानि जुहोतीति च एकस्मिन्नहनि चतुर्होमवचनाच्च । चत्वारि औद्ग्रभणानि प्रत्यहं जुहोति । प्रागल्भ्येन सप्तमे तु षडाग्निकानि जुहोति । कुत एवम् । त्रिंशत्संपद्वचनात्तेषां च साग्निचित्ये अवश्यं होम्यत्वात् । अध्वरस्य तु अनग्नेरित्येतेनापि तत्प्राप्तेः । शीर्षण्याः शिरसि भवाः । यति तद्धिते शिरसः शीर्षन्नादेशः । **प्राणा दीक्षेति** । याः सप्त प्राणदेवता अपाक्रामन् । सा दीक्षाऽभवदित्येवं प्राणदीक्षया प्राणैरेव सप्तभिरधियज्ञियैः प्राणान् दीक्षात्मकान् अधिदैवकान् अवरुन्धे । पूर्णाहुतिं " विश्वो देवस्य " इत्येता-

प्रजापतिरश्वमेधमसृजत । स सृष्टः प्रर्चमुम्लीनात्प्र साम तम्वैश्वदेवान्युदयच्छन्यद्वैश्वदेवानि जुहोत्यश्वमेधस्यैवोद्यत्यै ॥ १ ॥

काय स्वाहा । कस्मै स्वाहा कतमस्मै स्वाहेति प्राजापत्यम्मुख्यङ्करोति प्रजापतिमुखाभिरेवैनन्देवताभिरुद्यच्छति ॥ २ ॥

स्वाहाऽऽधिमाधीताय स्वाहा । मनः प्रजापतये स्वाहा चित्तम्विज्ञातायेति यदेव पूर्वासाम्ब्राह्मणन्तदत्र ॥ ३ ॥

( त्रा ) अदित्यै स्वाहा । ( हाऽदि ) अदित्यै मह्यै स्वाहाऽदित्यै सुमृडीकायै स्वाहेतीयम्वाऽअदितिरनयैवैनमुद्यच्छति ॥ ४ ॥

सरस्वत्यै स्वाहा । सरस्वत्यै पावकायै स्वाहा सरस्वत्यै बृहत्यै स्वाहेति व्वाग्वै सरस्वती व्वाचैवैनमुद्यच्छति ॥ ५ ॥

---

प्रजापतिरश्वमेधमसृजत । स सृष्टः प्रर्चमम्लीनात्प्र साम । तं वैश्वदेवान्युदयच्छन् । यद्वैश्वदेवानि जुहोति । अश्वमेधस्यैवोद्यत्यै ॥ १ ॥

" काय स्वाहा कस्मै स्वाहा कतमस्मै स्वाहा "–इति प्राजापत्यं मुख्यं करोति । प्रजापतिमुखाभिरेवैनं देवताभिरुद्यच्छति ॥ २ ॥

" स्वाहाऽऽधिमाधीताय स्वाहा मनः प्रजापतये स्वाहा चित्तं विज्ञाताय "–इति । यदेव पूर्वासां ब्राह्मणम् । तदत्र ॥ ३ ॥

" अदित्यै स्वाहाऽदित्यै मह्यै स्वाहाऽदित्यै सुमृडीकायै स्वाहा "–इति । इयं वा अदितिः । अनयैवैनमुद्यच्छति ॥ ४ ॥

" सरस्वत्यै स्वाहा सरस्वत्यै पावकायै स्वाहा सरस्वत्यै बृहत्यै स्वाहा "–इति । वाग्वै सरस्वती । वाचैवैनमुद्यच्छति ॥ ५ ॥

---

मुत्तमां जुहोति । किमर्थं ? प्रत्युत पूर्वेषामौद्ग्रभणानाम् । उत्तब्ध्यै महत्यै । कथं नाम । प्रतिष्टंभः स्यात् । प्रतिस्तब्धानि च सयुंजि समानयोगीनि कथं स्युरिति । प्रतिस्तब्धानि हि वर्तुलानि हि संहत्यकारीणि भवंतीत्यर्थः ॥ ४ ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये प्रथमेऽध्याये सप्तमं ब्राह्मणम् ॥ १३ । १ । ७ ॥

प्रजापतिः अश्वमेधं यजुरात्मकं विग्रहवन्तं सृष्टवान् । स एव सृष्टः सन् यजुषामपूर्वाणां बहुत्वाद्बलवत्त्वाद्बलवत्तर इति कृत्वा ऋचं ऋग्यजुषमश्वमेधं 'साम' सामयजुषं च 'प्राम्लीनात्' । " म्ली वरणे " ( धा. पा. क्र्या. प. ३० ) प्रावृणोत् अवष्टभ्य संकोचितवान् । तं यजुरात्मकमश्वमेधमतिगुरुमपाक्रामंतिवैश्वदेवानि होमकर्माणि उत्तंभनस्थानीयानि भूत्वा उत् ऊर्ध्वं अयच्छन् । उद्यतवंति उत्क्षिप्तवंति ॥ १ ॥

प्राजापत्यं वैश्वदेवं त्रिप्रभेदं मुख्यं मुखमिव प्रथमं करोति । यदेव पूर्वासां व्याहृतीनां वा प्राजापत्यानां

पूष्णे स्वाहा । पूष्णे प्रपथ्याय स्वाहा पूष्णे नरन्धिषाय स्वाहेति पशवो वै पूषा पशुभिरेवैनमुद्यच्छति ॥ ६ ॥

त्वष्ट्रे स्वाहा । त्वष्ट्रे तुरीपाय स्वाहा त्वष्ट्रे पुरुरूपाय स्वाहेति त्वष्टा वै पशूनाम्मिथुनानाꣳ रूपकृद्रूपैरेवैनमुद्यच्छति ॥ ७ ॥

विष्णवे स्वाहा । विष्णवे निभूयपाय स्वाहा विष्णवे शिपिविष्टाय स्वाहेति यज्ञो वै विष्णुर्यज्ञेनैवैनमुद्यच्छति विश्वो देवस्य नेतुरिति पूर्णाहुतिमुत्तमाञ्जुहोतीयम्वै पूर्णाहुतिरस्यामेवान्ततः प्रतितिष्ठति ॥ ८ ॥

इति प्रथमप्रपाठकेऽष्टमं ब्राह्मणम् ॥ १३।१।८ ॥ ( १-८ ) ॥

आ ब्रह्मन् । ( न्ब्रा ) ब्राह्मणो ब्रह्मवर्चसी जायतामिति ब्राह्मणऽ एव ब्रह्मवर्चसन्दधाति तस्मात्पुरा ब्राह्मणो ब्रह्मवर्चसी जज्ञे ॥ १ ॥

---

" पूष्णे स्वाहा पूष्णे प्रपथ्याय स्वाहा पूष्णे नरंधिषाय स्वाहा "–इति । पशवो वै पूषा । पशुभिरेवैनमुद्यच्छति ॥ ६ ॥

"त्वष्ट्रे स्वाहा त्वष्ट्रे तुरीपाय स्वाहा त्वष्ट्रे पुरुरूपाय स्वाहा"–इति । त्वष्टा वै पशूनां मिथुनानां रूपकृत् । रूपैरेवैनमुद्यच्छति ॥ ७ ॥

" विष्णवे स्वाहा विष्णवे निभूयपाय स्वाहा विष्णवे शिपिविष्टाय स्वाहा "–( वा. सं. २२ । २० ) इति । यज्ञो वै विष्णुः । यज्ञेनैवैनमुद्यच्छति । " विश्वो देवस्य नेतुः "–( वा. सं. २२ । २१ ) इति पूर्णाहुतिमुत्तमां जुहोति । इयं वै पूर्णाहुतिः । अस्यामेवान्ततः प्रतितिष्ठति ॥ ८ ॥

" आ ब्रह्मन्ब्राह्मणो ब्रह्मवर्चसी जायताम् "–इति । ब्राह्मण एव ब्रह्मवर्चसं दधाति । तस्मात्पुरा ब्राह्मणो ब्रह्मवर्चसी जज्ञे ॥ १ ॥

---

ब्राह्मणं–" प्रजापतिमुखाभिरेवैनं देवताभिरुद्यच्छति " इति । तदत्र ब्राह्मणमिति ब्रुवत आह । " आधिमाधीताय मनश्चित्तम् " इत्येता द्वितीयाहे पूर्वोत्तरेष्टौ हूयमाना चतुर्थी द्रष्टव्या ॥ २–६ ॥

' त्वष्टा वै ' । आत्मिकं वाऽध्यात्मकः । पशूनां मिथुनानाम् । आध्यात्मिकं तावत् रूपकृत् । रूपाणि नानाविधानि करोति इति ॥ ७ ॥ ८ ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये प्रथमेऽध्याये-ऽष्टमं ब्राह्मणम् ॥ १३ । १ । ८ ॥

आ ब्रह्मन् । ओं समिदाधानात् कृत्वा आब्रह्मन्निति अध्वर्युर्जपति । आशीरूपत्वात् क्रियांतरे चाविनियोगात् ।

---

१–कृष्णाजिनाद्यासमिदाधानात्कृत्वाऽब्रह्मन्निति जपति । ( आ समिदाधानात्–उखायां त्रयोदशसमिदाधानांतम् । ) उत्सर्गकाले एके । का. श्रौ. सू. २० । ९२ । ९३ ॥ उपातिष्ठत उत्सर्गैः का. श्रौ. सू. १७ । ११८ ( इत्युत्सर्गोपस्थानकालः । ) पशुवत्सर्जनं निरष्टेऽश्वशते । का. श्रौ. सू. २० । ४९ । इत्यश्वोत्सर्गकालो वा ।

( ह्ऽओ ) आ राष्ट्रे राजन्यः । शूरऽइषव्योऽतिव्याधी महारथो जायतामिति राजन्यऽ एव शौर्य्यम्महिमानन्दधाति तस्मात्पुरा राजन्यः शूरऽ इषव्योऽतिव्याधी महारथो जज्ञे ॥ २ ॥

दोग्ध्री धेनुरिति । धेन्वामेव पयो दधाति तस्मात्पुरा धेनुर्दोग्ध्री जज्ञे ॥ ३ ॥

वोढाऽनड्वानिति । ( त्य ) अनुडुह्येव बलन्दधाति तस्मात्पुराऽनड्वान्वोढा जज्ञे ॥ ४ ॥

( ह्ऽओ ) आशुः सप्तिरिति । ( त्य ) अश्वऽ एव जवन्दधाति तस्मात्पुराऽश्वः सर्त्ता जज्ञे ॥ ५ ॥

पुरन्धिर्योषेति । योषित्येव रूपन्दधाति तस्माद्रूपिणी युवतिः प्रिया भावुका ॥ ६ ॥

जिष्णू रथेष्ठाऽइति । राजन्यऽ एव जैत्रम्महिमानन्दधाति तस्मात्पुरा राजन्यो जिष्णुर्जज्ञे ॥ ७ ॥

सभेयो युवेति । ( त्ये ) एष वै सभेयो युवा यः प्रथमवयसी तस्मात्प्रथमवयसी स्त्रीणाम्प्रियो भावुकः ॥ ८ ॥

---

" आ राष्ट्रे राजन्यः शूर इषव्योऽतिव्याधी महारथो जायताम् "–इति । राजन्य एव शौर्यं महिमानं दधाति । तस्मात्पुरा राजन्यः शूर इषव्योऽतिव्याधी महारथो जज्ञे ॥ २ ॥

" दोग्ध्री धेनुः "–इति । धेन्वामेव पयो दधाति । तस्मात्पुरा धेनुर्दोग्ध्री जज्ञे ॥ ३ ॥

" वोढाऽनड्वान् "–इति । अनडुह्येव बलं दधाति । तस्मात्पुराऽनड्वान्वोढा जज्ञे ॥ ४ ॥

" आशुः सप्तिः "–इति । अश्व एव जवं दधाति । तस्मात्पुराऽश्वः सर्ता जज्ञे ॥ ५ ॥

" पुरंधिर्योषा "–इति । योषित्येव रूपं दधाति । तस्मात् रूपिणी युवतिः प्रिया भावुका ॥ ६ ॥

" जिष्णू रथेष्ठाः "–इति । राजन्य एव जैत्रं महिमानं दधाति । तस्मात्पुरा राजन्यो जिष्णुर्जज्ञे ॥ ७ ॥

" सभेयो युवा "–इति । एष वै सभेयो युवा । यः प्रथमवयसी । तस्मात् प्रथमवयसी स्त्रीणां प्रियो भावुकः ॥ ८ ॥

---

एवमाशासानोऽध्वर्युः ब्राह्मणे ब्रह्मवर्चसं दधाति, तस्माच्च पुरा यदा राजानः अश्वमेधैरीजिरे । तदा ब्रह्मवर्चसी जज्ञे । य एष एव तस्मात् एवमन्यानि ईदृशानि वचनानि व्याख्येयानि । शूरयतीति शूरः पराक्रमी ।

(८) आऽस्य युजमानस्य व्वीरो जायतामिति युजमानस्यैव प्प्रजायाम्वीर्य्यन्दधाति तुस्मात्पुरेजानुस्य व्वीरो जज्ञे ॥ ९ ॥ अर्द्धः प्रपाठकः ॥ ६४ ॥

निकामेनिकामे नः पर्ज्जुन्यो व्वर्षत्विति । निकामेनिकामे वै तुत्र पर्ज्जुन्यो व्वर्षति युत्रैतेन यज्ञेन युजन्ते फुलवत्यो नऽओषधयः पच्यन्तामिति फुलवत्यो वै तत्रौषधयः पच्यन्ते युत्रैतेन यज्ञेन युजन्ते योगक्षेमो नः कल्पतामिति योगक्षेमो वै तुत्र कल्पते युत्रैतेन यज्ञेन युजन्ते तुस्माद्युत्रैतेन यज्ञेन युजन्ते क्लृप्तः प्प्रजानां योगक्षेमो भवति ॥ १० ॥

इति प्रथमप्रपाठके नवमं ब्राह्मणम् ॥ १३।१।९॥(१-९) ॥

प्रथमोऽध्यायश्च समाप्तः ॥ १३ । १ ॥

कण्डिकासंख्या ॥ ९९ ॥

---

"आऽस्य यजमानस्य वीरो जायताम्"–इति । यजमानस्यैव प्रजायां वीर्यं दधाति । तस्मात्पुरेजानस्य वीरो जज्ञे ॥ ९ ॥

"निकामेनिकामे नः पर्जन्यो वर्षतु"–इति । निकामेनिकामे वै तत्र पर्जन्यो वर्षति । यत्रैतेन यज्ञेन यजन्ते । "फलवत्यो न ओषधयः पच्यन्ताम्"–इति । फलवत्यो वै तत्रौषधयः पच्यन्ते । यत्रैतेन यज्ञेन यजन्ते । "योगक्षेमो नः कल्पताम्"–( वा. सं. २२ । २२ ) इति । योगक्षेमो वै तत्र कल्पते । यत्रैतेन यज्ञेन यजन्ते । तस्माद्यत्रैतेन यज्ञेन यजन्ते । क्लृप्तः प्रजानां योगक्षेमो भवति ॥ १० ॥

---

"शूरविक्रांतौ" ( धा. पा. चु. प. ३१९ ) 'इषव्यः' इषुषु साधुः । 'अतिव्याधी' अतिक्रम्य अन्येषां लक्ष्यं विध्यतीति अतिव्याधी । दोग्ध्री साधुदुग्धा । वोढा साधु वहति । जिष्णुः साधु जयति । सभेयः सभायां साधुः । 'प्रथमवयसी' प्रथमं वयः तदस्य विद्यते स प्रथमवयसी । तस्मात् पुरा ईजानस्य अश्वमेधेन इष्टवतः वीरो जायते स्म । सस्यानुपरोधादिनियतः कामः ॥ १-१० ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये त्रयोदशे काण्डे प्रथमेऽध्याये नवमं ब्राह्मणम् ॥ १३ । १ । ९ ॥

नागस्वामिसुतोऽवन्त्यां पाराशर्यो वसन्हरिः । श्रुत्यर्थं दर्शयामास शक्तितः पौष्करीयकः ॥ १ ॥
श्रीमतोऽवन्तिनाथस्य विक्रमार्कस्य भूपतेः । धर्माध्यक्षो हरिस्वामी व्याख्यच्छातपथीं श्रुतिम् ॥ २ ॥
भूमर्त्रा विक्रमार्केण क्लृप्तां कनकवेदिकाम् । दानायाध्यस्य कृतवान् श्रुत्यर्थविवृतिं हरिः ॥ ३ ॥

इति श्रीसर्वविद्यानिधानकवीन्द्राचार्यसरस्वतीनां श्रीहरिस्वामिनां कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये त्रयोदशकाण्डे प्रथमोऽध्यायः समाप्तः ॥ (१३-१) ॥

# अथ द्वितीयेऽध्याये प्रथमं ब्राह्मणम् ।
# प्रथमप्रपाठके च दशमं ब्राह्मणम् ।



प्रजापतिर्देवेभ्यो यज्ञान्व्यादिशत् । ( त्स ) स आत्मन्नश्वमेधमधत्त ते देवाः प्रजापतिमब्रुवन्नेष वै यज्ञो यदश्वमेधोऽपि नोऽत्रास्तु भागऽइति तेभ्यऽएतानन्नहोमानकल्पयद्यदन्नहोमाञ्जुहोति देवानेव तत्प्रीणाति॥१॥

( त्या ) आज्येन जुहोति । तेजो वाऽआज्यन्तेजसैवास्मिंस्तत्तेजो दधात्याज्येन जुहोत्येतद्वै देवानां प्रियन्धाम यदाज्यं प्रियेणैवैनान्धाम्ना समर्द्धयति ॥ २ ॥

सक्तुभिर्जुहोति । देवानाम्वाऽएतद्रूपं यत्सक्तवो देवानेव तत्प्रीणाति॥३॥

धानाभिर्जुहोति । ( त्य ) अहोरात्राणाम्वाऽएतद्रूपं यद्धानाऽअहोरात्राण्येव तत्प्रीणाति ॥ ४ ॥

लाजैर्जुहोति । नक्षत्राणाम्वाऽ एतद्रूपं यल्लाजा नक्षत्राण्येव तत्प्रीणाति प्राणाय स्वाहाऽपानाय स्वाहेति नामग्राहञ्जुहोति नामग्राहमेवै-

---

## अथान्नहोमब्राह्मणम् ।

प्रजापतिर्देवेभ्यो यज्ञान् व्यादिशत् । स आत्मन्नश्वमेधमधत्त । ते देवाः प्रजापतिमब्रुवन् । एष वै यज्ञः यदश्वमेधः । अपि नोऽत्रास्तु भाग इति । तेभ्य एतान् अन्नहोमान् अकल्पयत् । यदन्नहोमान् जुहोति । देवानेव तत्प्रीणाति ॥ १ ॥

आज्येन जुहोति । तेजो वा आज्यम् । तेजसैवास्मिंस्तत्तेजो दधाति । आज्येन जुहोति एतद्वै देवानां प्रियं धाम, यदाज्यम् । प्रियेणैवैनान् धाम्ना समर्द्धयति ॥ २ ॥

सक्तुभिर्जुहोति । देवानां वा एतद्रूपम्, यत्सक्तवः । देवानेव तत्प्रीणाति ॥ ३ ॥

धानाभिर्जुहोति । अहोरात्राणां वा एतद्रूपम्, यद्धानाः । अहोरात्राण्येव तत्प्रीणाति ॥ ४ ॥

लाजैर्जुहोति । नक्षत्राणां वा एतद्रूपम्, यल्लाजाः । नक्षत्राण्येव तत्प्रीणाति । "प्राणाय स्वाहाऽपानाय स्वाहा"-( वा० सं० २२ । २३ ) इति नामग्राहं जुहोति । नाम ग्राह-

---

प्रजापतिरिति । अन्नहोमब्राह्मणमेतत् । देवानां सक्तवो रूपं संततत्वात् । नक्षत्राणां लाजा रूपं समर्थत्वात् । प्राणादीनां नामगृहीतत्वात् नामग्राहम् । एकैक उत्तरद्रष्टव्यो देवो यास्वाहुतिषु ता एकोत्तरा

---

१-आज्यसक्तुधानालाजानामेकैकं जुहोति प्राणाय स्वहेति प्रतिमंत्रः सर्वरात्रमावर्तम् व्युष्ट्या इति व्युष्टायाम् । स्वर्गायेत्युदिते । का. श्रौ. सू. २० । ११३-११५ ॥

नांस्तत्प्रीणात्येकस्मै स्वाहा द्वाभ्याᳬं स्वाहा शताय स्वाहैकशताय स्वाहेत्यनुपूर्व्वञ्जुहोत्यनुपूर्व्वमेवैनांस्तत्प्रीणात्येकोत्तरा जुहोत्येकवृद्वै स्वर्ग्गो लोकऽ एकधैवैनᳬं स्वर्ग्गं लोकङ्गमयति पराचीर्ज्जुहोति पराङिव वै स्वर्ग्गो लोकः स्वर्ग्गस्य लोकस्याभिजित्यै ॥ ५ ॥

(त्याऽई) ईश्वरो वाऽएषः (०) पराङ्प्रदघोर्य्यः पराचीराहुतीर्ज्जुहोति नैकशतमत्येति यदेकशतमतीयादायुषा यजमानं व्यर्द्धयेदेकशतञ्जुहोति शतायुर्व्वै पुरुषऽआत्मैकशतऽआयुष्येवात्मन्प्रतितिष्ठति व्युष्ट्यै स्वाहा स्वर्ग्गाय स्वाहेत्युत्तमेऽ आहुती जुहोति रात्रिर्व्वै व्युष्टिरहः स्वर्ग्गोऽहो रात्रेऽ एव तत्प्रीणाति ॥ ६ ॥

तदाहुः। (खं) यदुभे दिवा वा नक्तम्वा जुहुयादहोरात्रे मोहयेद्व्युष्ट्यै स्वाहेत्यनुदितऽ आदित्ये जुहोति स्वर्ग्गाय स्वाहेत्युदितेऽहोरात्रयोरव्यतिमोहाय ॥ ७ ॥

इति प्रथमप्रपाठके दशमं ब्राह्मणम् ॥ १३ । १ । १० ॥ (२-१)

मेवैनांस्तत्प्रीणाति । "एकस्मै स्वाहा द्वाभ्यां स्वाहा शताय स्वाहैकशताय स्वाहा"–(वा. सं. २२ । २४) इत्यनुपूर्वं जुहोति । अनुपूर्वमेवैनांस्तत्प्रीणाति । एकोत्तरा जुहोति । एकवृद्वै स्वर्गो लोकः । एकधैवैनं स्वर्गं लोकं गमयति । पराचीर्जुहोति । पराङ्, इव वै स्वर्गो लोकः । स्वर्गस्य लोकस्याभिजित्यै ॥ ५ ॥

ईश्वरो वा एष पराङ् प्रदघोः । यः पराचीराहुतीर्जुहोति । नैकशतमत्येति । यदेकशतमतीयात् । आयुषा यजमानं व्यर्द्धयेत् । एकशतं जुहोति । शतायुर्वै पुरुषः । आत्मैकशतः । आयुष्येवात्मन्प्रतितिष्ठति । "व्युष्ट्यै स्वाहा स्वर्गाय स्वाहा"–(वा. सं. २२ । २४) इत्युत्तमे आहुती जुहोति । रात्रिर्वै व्युष्टिः । अहः स्वर्गः । अहोरात्रे एव तत्प्रीणाति ॥ ६ ॥

तदाहुः–यदुभे दिवा वा नक्तं वा जुहुयात् । अहोरात्रे मोहयेत् । व्युष्ट्यै स्वाहेत्यनुदित आदित्ये जुहोति । स्वर्गाय स्वाहेत्युदिते । अहोरात्रयोरव्यतिमोहाय ॥ ७ ॥

आहुतीर्जुहोतीति विधिः । पूर्वपूर्वमनूत्तरस्मै इत्येतस्मिन्नर्थे अनुपूर्वमित्यव्ययीभावः । एषोऽपि विधिरभावः । ततश्च "त्रिभ्यः स्वाहा, चतुर्भ्यः स्वाहा, पंचभ्यः स्वाहा" इत्यादि तावज्जुहुयात् । यावच्छताय स्वाहैकशताय स्वाहेति । पराचीः वृत्ताः । सर्वां रात्रिं जुहोति । द्विशताय चतुःशताय स्वाहेत्यादिका इति हेयः कल्पः॥ १–५॥

ईश्वरो वा पराङ् प्रदघोः । यः पराचीराहुतीर्जुहोति । नैकशतमतिक्रामतीति स्थितिकल्पः ॥ ६॥७ ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये त्रयोदशकाण्डे द्वितीयेऽध्याये प्रथमं ब्राह्मणम् ॥ (१३ । २ । १) ॥

१–"त्रिभ्यः स्वाहा" इत्यारभ्य–"नवनवतिभ्यः स्वाहा" इत्यन्तः स्वाध्यायः उपसंहृतस्वाध्यायः, क्वचिच्च लुप्तस्वाध्याय इत्युच्यते । स च जपपारायणहवनादिकर्मस्वनुसंधेयः ॥

राजा वाऽ एष यज्ञानां यदश्वमेधः । ( धो ) यजमानो वाऽअश्वमेधो यजमानो यज्ञो यदश्वे पशून्नियुनक्ति यज्ञऽएव तद्यज्ञमारभते ॥ १ ॥

( तेऽश्वं ) अश्वन्तूपरङ्गोमृगमिति । तान्मध्यमे यूपऽ आलभते सेनामुखमेवास्यैतेन सᳫँश्यति तस्माद्राज्ञः सेनामुखम्भीष्मम्भावुकम् ॥ २ ॥

( कङ्कू ) कृष्णग्रीवमाग्नेयᳫँ रराटे पुरस्तात् । ( त्पू ) पूर्व्वाग्निमेव तं कुरुते तस्माद्राज्ञः पूर्व्वाग्निर्भावुकः ॥ ३ ॥

सारस्वतीम्मेषीमधस्ताद्धन्वोः । स्त्रीरेव तदनुगाः कुरुते तस्मात्स्त्रियः पुᳫँसोऽनुवर्त्मानो भावुकाः ॥ ४ ॥

---

राजा वा एष यज्ञानां यदश्वमेधः । यजमानो वा अश्वमेधः । यजमानो यज्ञः । यदश्वे पशून्नियुनक्ति । यज्ञ एव तद्यज्ञमारभते ॥ १ ॥

अश्वं तूपरं गोमृगमिति । तान्मध्यमे यूप आलभते । सेनामुखमेवास्यैतेन संश्यति । तस्माद्राज्ञः सेनामुखं भीष्मं भावुकम् ॥ २ ॥

कृष्णग्रीवमाग्नेयं रराटे पुरस्तात् । पूर्वाग्निमेव तं कुरुते । तस्माद्राज्ञः पूर्वाग्निर्भावुकः ॥ ३ ॥

सारस्वतीं मेषीमधस्ताद्धन्वोः । स्त्रीरेव तदनुगाः कुरुते । तस्मात् स्त्रियः पुंसोऽनुवर्त्मानो भावुकाः ॥ ४ ॥

---

राजा वा एषः । राजेव राजा । अनुचरभूतानां तूपरादीनां अग्रे सरस्वत्याः संस्कार........ रेकाच्च । एष यज्ञानां यज्ञसाधनानां पशूनां यदश्वमेधः । अश्वश्चासौ मेधश्च । यज्ञसाधनमश्वमेधः । अश्वः पशूनां राजेव राजते इत्यर्थः । ततश्च “ सेनामुखमेवास्यैतेन संश्यति ” इत्यादिभी राजोपकरणैर्योक्ष्यते । यजमानो वा अश्वमेधः पशुर्यज्ञसाधनभूतः । यज्ञसाधनत्वात् यजमान एव । ततश्च यज्ञात्मकाद्यजमानादभिन्नत्वात् अश्वोऽपि यज्ञः । तूपरादयोऽपि इति कृत्वा यदश्वे पशून् कृष्णग्रीवादीन्नियुनक्ति, तद्यज्ञ एव । कृष्णग्रीवात्मके यज्ञमश्वात्मकमारभते प्राप्नोति । उपकरणभूत उपकार्यभूतम् ॥ १ ॥

अश्वम् । तूपरं । अशृंगमजम् । गोमृगं मृगाकारं गाम् । इत्येवमेव यथा निदर्शितान् । तानिति एतदः स्थाने तदः प्रयोगः । एतान् मध्यमे यूपे आलभते । सेनामुखमेव अस्याश्वस्य राजभूतस्य एतेन रूपेण मध्यमे यूपे आलब्धानेतान् संश्यति संस्करोति । राजभूतमप्यश्वं सेनामुख एव करोतीत्यर्थः ॥ २ ॥

कृष्णग्रीवमजमग्निदेवत्यम् । रराटे ललाटे अश्वस्य यूपभूते उपायेनालभते नियुनक्ति । पुरस्तात् अग्रतोऽश्वस्येत्यर्थः । ननु—पूर्वस्यां दिशि पशूनां प्रत्यङ्मुखानां सामर्थ्यादेवालंभे सति पूर्वस्यां दिश्यालंभानुपपत्तेः पूर्वाग्निमेव त्रेतायाः प्रथमतरं भवतीत्यावसथ्यः । पूर्वाग्निमेव तं अश्वस्य राजभूतस्य कुरुते । तस्मात्तदनुकारेण राज्ञः पूर्वाग्निः साधुर्भवति । तत्राहितस्य शांतिकपौष्टिकाभिचारिकादीनि बहूनि कर्माणि क्रियन्ते ॥ ३ ॥

सारस्वतीं मेषीं हन्वोर्यूपभूतयोः उपायेनालभते । हन्वोर्हि मेष्यालंभ्या सा चाधस्तादेव भवति । स्त्रीरेव

---

१-( कं० २-९ ) इत्यत्र ( वा. सं. २४ । १ ) इत्ययं मन्त्रोऽनुसंधेयः ।

( ऽ ) आश्विनावधोरामौ बाह्वोः । ( बा ) बाह्वोरेव बलन्धत्ते तस्माद्राजा बाहुबली भावुकः ॥ ५ ॥

सौमापौष्णꣳ श्यामन्नाभ्याम् । ( म्प्र ) प्प्रतिष्ठामेव ताङ्कुरुतऽइयम्वै पूषाऽस्यामेव प्प्रतितिष्ठति ॥ ६ ॥

सौर्य्ययामौ श्वेतञ्च कृष्णञ्च पार्श्वयोः । कवचेऽएव ते कुरुते तस्माद्राजा सन्नद्धो व्वीर्य्यङ्करोति ॥ ७ ॥

त्वाष्ट्रौ लोमशसक्थौ सक्थ्योः । ( रू ) ऊर्व्वोरेव बलन्धत्ते तस्माद्राजोरुबली भावुकः ॥ ८ ॥

(को) व्वायव्यꣳ श्वेतम्पुच्छे । (च्छऽउ) उत्सेधमेव तङ्कुरुते तस्मादुत्सेधम्प्रजा भयेऽभिसꣳश्रयन्तीन्द्राय स्वपस्याय व्वेहतं यज्ञस्य सेन्द्रतायै व्वैष्णवो व्वामनो यज्ञो वै व्विष्णुर्य्यज्ञऽ एवान्ततः प्प्रतितिष्ठति ॥ ९ ॥

---

आश्विनावधोरामौ बाह्वोः । बाह्वोरेव बलं धत्ते । तस्मात् राजा बाहुबली भावुकः ॥ ५ ॥

सौमापौष्णं श्यामं नाभ्याम् । प्रतिष्ठामेव तां कुरुते । इयं वै पूषा । अस्यामेव प्रतितिष्ठति ॥६॥

सौर्ययामौ श्वेतं च कृष्णं च पार्श्वयोः । कवचे एव ते कुरुते । तस्माद्राजा सन्नद्धो वीर्यं करोति ॥ ७ ॥

त्वाष्ट्रौ लोमशसक्थौ सक्थ्योः । ऊर्वोरेव बलं धत्ते । तस्माद्राजोरुबली भावुकः ॥ ८ ॥

वायव्यं श्वेतं पुच्छे । उत्सेधमेव तं कुरुते । तस्मादुत्सेधं प्रजा भयेऽभिसंश्रयन्ति । इन्द्राय स्वपस्याय वेहतम् । यज्ञस्य सेन्द्रतायै । वैष्णवो वामनः । यज्ञो वै विष्णुः । यज्ञ एवान्ततः प्रतितिष्ठति ॥ ९ ॥

---

ततेन अनुगाः अनुगामिनीः पुंसः कुरुते । तस्मात् स्त्रियः पुरुषस्यानुवर्तमानाः साधु भवंति । अनुवर्त्मत्वेन कृतानुकारता । अनुकारकारिणीति आनुकूल्यं लक्ष्यते ॥ ४ ॥

'बाहुबली' बाहुबलमस्यास्तीति बाहुबली ॥ ५–८ ॥

उत्सेधमुच्छ्रायं पर्वतादिकं स्थलं प्रासादं वा तत्कुरुते । वायुर्हि स्कंधस्य उच्छ्रित इत्यभिप्रायः । तस्मादुत्सेधं स्थलं प्रासादं वा पर्वतं सप्रोदं भये सति प्रजा अभिसंश्रयन्ति । स हि राजसंबंधो राजवत्पालयतीति मन्यमाने । वेहतं गर्भघातिनम् ॥ ९ ॥

ते वाऽ एते । पञ्चदश पर्य्यङ्ग्याः पशवो भवन्ति पञ्चदशो वै वज्रो वीर्य्यं वज्रो वज्रेणैवैतद्वीर्य्येण यजमानः पुरस्तात्पाप्मानमपहते ॥ १० ॥

पञ्चदश पञ्चदशोऽ एवेतरेषु । पञ्चदशो वै वज्रो वीर्य्यं वज्रो वज्रेणैवैतद्वीर्य्येण यजमानोऽभितः पाप्मानमपहते ॥ ११ ॥

तदाहुः । ( २ ) अपाहैवैतैः पाप्मानꣳ हताऽइत्यकृत्स्नञ्च त्वै प्रजापतिꣳ सꣳस्करोति न चेदꣳ सर्व्वमवरुन्द्धे ॥ १२ ॥

सप्तदशैव पशून्मध्यमे यूपऽआलभेत । सप्तदशो वै प्रजापतिः प्रजापतिरश्वमेधोऽश्वमेधस्यैवाप्त्यै षोडश षोडशेतरेषु षोडशकलम्वाऽइदꣳ सर्व्वन्तदिदꣳ सर्व्वमवरुन्द्धे ॥ १३ ॥

---

ते वा एते पंचदश पर्यंग्याः पशवो भवन्ति । पंचदशो वै वज्रः । वीर्यं वज्रः । वज्रेणैवैतद्वीर्येण यजमानः पुरस्तात्पाप्मानमपहते ॥ १० ॥

पंचदश पंचदश उ एवेतरेषु । पंचदशो वै वज्रः । वीर्यं वज्रः । वज्रेणैवैतद्वीर्येण यजमानोऽभितः पाप्मानमपहते ॥ ११ ॥

तदाहुः । अपाहैवैतैः पाप्मानं हता इति । अकृत्स्नं च त्वै प्रजापतिं संस्करोति । न चेदं सर्वमवरुन्धे ॥ १२ ॥

सप्तदशैव पशून्मध्यमे यूप आलभेत । सप्तदशो वै प्रजापतिः । प्रजापतिरश्वमेधः । अश्वमेधस्यैवाप्त्यै । षोडश षोडशेतरेषु । षोडशकलं वा इदं सर्वम् । तदिदं सर्वमवरुन्धे ॥ १३ ॥

---

ते वा एते पर्यंग्याः । राज्ञः पर्यंगानि सेनापत्यादीनि यूपेषु सर्वेषु पंचदशसु एव नियुज्यन्त इत्यर्थः । अश्वो ह्यग्निष्टे नियुज्यते इत्यर्थः । ( कृष्णग्रीवादयोऽप्यश्वं इतिषु नदाः पर्यंग्या एव ही ते च विंशदश्वस्तूपरगोमृगैर्भवन्ति ? ) । यदि पुनरश्वस्य पर्यंगानि रराटादीनि तेषु भवाः पर्यंग्या इति स्यात् । ततः कृष्णग्रीवादयो द्वादशैव पर्यंग्याः, स्युः । पंचदशैव पशव इतरेषु नियुज्यंते नियुक्ता भवन्ति । तेन विधीयमानत्वात्तत्र दुरितशयहतैरपहतैरेव केवलमेतैः पंचदशभिः पाप्मानं हताः इतिकरणं उत्तरकंडिकाया इति वाक्यसमाप्त्यर्थो द्रष्टव्यः । अकृत्स्नं तु प्रजापतिं संस्करोति । न चेदं सर्वमवरुंध इति दूषणम् । कथं तर्हि कुर्यात् ? इत्यत एवाहुः ॥ १०–१२ ॥

सप्तदशैवेत्यादि । पंचदश पर्यंग्याः । द्वौ चाग्नेयावैकादशिनौ । एते सप्तदश मध्यमे । इतरेषु पंचदश पंचदश रोहितादयः । एकैकश्चैकादशिनः । एवं षोडश षोडश भवन्ति । इत्येवं कात्यायनो मेने । एतदेवांगीकृत्याऽन्येऽप्याहुः । षट्शतानि नियुज्यन्ते पशूनां मध्यमेऽहनि । अश्वमेधस्य यज्ञस्य न्यूनानि पशुभिस्त्रिभिरिति । एवं वर्ण्यमाने द्वादश पशवोऽतिरिच्येरन् । अश्वादयो ह्येकोनविंशतिः । पंचदशकाः[1] पठ्यन्ते । चत्वारश्च

---

१–कंडिका इत्यर्थः । तत्र पंचदशकंडिकाः पंचदशकाः । ततश्चतस्रः कंडिकास्त्रिकाः १५–४–१९ । इत्यर्थः । चतसृषु कंडिकासु त्रिकाः पशवश्चत्वारः । द्वादशेत्यर्थः ।

तान्कथमाप्रीणीयादित्याहुः । समिद्धोऽअञ्जन्कृदरम्मतीनामिति बार्हदुक्थीभिराप्रीणीयाद्बृहदुक्थो ह वै वामदेव्योऽश्वो वा साम्रुद्रिरश्वस्याप्रीर्ददर्श ताऽएतास्ताभिरेवैनमेतदाप्रीणीमऽ इति वदन्तो न तथा कुर्य्याज्जामदग्नीभिरेवाप्रीणीयात्प्रजापतिर्वै जमदग्निः सोऽश्वमेधः स्वयैवैनन्देवतया समर्द्धयति तस्माज्जामदग्नीभिरेवाप्रीणीयात् ॥१४॥

(त्त) तद्धैके । (कऽए) एतेषाम्पर्य्यङ्ग्याणां नाना याज्यापुरोऽनुवाक्याः कुर्व्वन्ति विन्दामऽएतेषामवित्येतरेषान्न कुर्म्मऽइति न तथा कुर्य्यात्क्षत्रम्वाऽअश्वो विडितरे पशवः प्रतिप्रतिनीᳬ ह ते प्रत्युद्यामिनीं क्षत्राय विशङ्कुर्व्वन्त्यथोऽआयुषा यजमानं व्यर्द्धयन्ति ये तथा कुर्व्वन्ति तस्मात्प्राजापत्यऽएवाश्वो देवदेवत्या ऽइतरे क्षत्रायैव तद्विशङ्कृतानुकरामनुवर्त्मानङ्करोत्यथोऽआयुषैव यजमानᳬ समर्द्धयति ॥ १५ ॥

---

तान्कथमाप्रीणीयादित्याहुः—" समिद्धो अंजन्कृदरं मतीनाम् "—( वा. सं. २९ । १ ) इति बार्हदुक्थीभिराप्रीणीयात् । बृहदुक्थो ह वै वामदेव्योऽश्वो वा साम्रुद्रिरश्वस्याप्रीर्ददर्श । ता एताः । ताभिरेवैनमेतदाप्रीणीमः, इति वदन्तः । न तथा कुर्यात् । जामदग्नीभिरेवाप्रीणीयात् । प्रजापतिर्वै जमदग्निः । सोऽश्वमेधः । स्वयैवैनं देवतया समर्द्धयति । तस्माज्जामदग्नीभिरेवाप्रीणीयात् ॥ १४ ॥

तद्धैके । एतेषां पर्यंग्याणां नाना याज्यापुरोऽनुवाक्याः कुर्वंति । विन्दाम एतेषामविति[1] ( ? )। आ (?) इतरेषां न कुर्म इति । न तथा कुर्यात् । क्षत्रं वा अश्वः । विडितरे पशवः । प्रतिप्रतिनीं ह ते प्रत्युद्यामिनीं क्षत्राय विशं कुर्वंति । अथो आयुषा यजमानं व्यर्द्धयन्ति । ये तथा कुर्वंति । तस्मात्प्राजापत्य एवाश्वः । देवदेवत्या इतरे । क्षत्रायैव तद्विशं कृतानुकरामनुवर्त्मानं करोति । अथो आयुषैव यजमानं समर्द्धयति ॥ १५ ॥

---

त्रिकाः । ततश्च एते चत्वारस्त्रिकाः । तेषां यूपो नोक्तः स्यात् । मध्यमे च यूपे साक्षात् सप्तदशैवालभ्येरन् । तत्र सप्तदशैव पशून्मध्यमे यूप आलभेतेति गौणो मध्यमस्याधिकरणभावो द्वादशसु स्यात् । तस्मादेवमवगच्छामः । त्रयः अश्वादयो द्वादश रोहितादयो द्वौ चाग्नेयौ इत्येते सप्तदश मध्यमे यूपे । षोडश षोडशेति तु यथोक्तमेवेति ॥ १३ ॥

जामदग्नीभिः । जामदग्न्यः " समिद्धो अद्य मनुषो दुरोणे " इत्येताः ( वा. सं. २९ । २९–३६ ) ॥ १४ ॥

तद्धैके । एतेषामश्वादीनां एके नाना पृथक् पृथक् याज्यापुरोऽनुवाक्याः कुर्वंति । भिन्नदेवत्यानामिति द्रष्टव्यम् । ये तु समानदेवा अश्वतूपरगोमृगाः, तेषां तन्त्रेणैव प्रदानम् । याज्यापुरोऽनुवाक्याभेदद्वारेण च प्रदानभेद एवायमुपन्यस्तो द्रष्टव्यः । एष एव प्रदानभेदो वपानामप्युपन्यस्तः । पुरोडाशानामपि अंगानामपीति क्षाच्यमविशेषात् । विंदामः लभामहे " विद्लृ लाभे "—(धा. पा. तु. उ. १९१)—एषातेमश्वादीनां प्राजापत्या-

---

[1] १–अत्र मूलमेवान्यथा जातमिति प्रतीयते । परं स्वादर्शपुस्तकेषु सर्वेष्वयमेव पाठ उपलभ्यते । अतः स एवात्र स्थापितः । इति ध्येयम् ।

हिरण्मयोऽश्वस्य शासो भवति । लोहमयाः पर्य्यङ्ग्याणामायसाऽ इतरेषाञ्ज्योतिर्वै हिरण्यꣳ राष्ट्रमश्वमेधो ज्योतिरेव तद्राष्ट्रे दधात्यथो हिरण्यज्ज्योतिषैव यजमानः स्वर्ग्गं लोकमेत्यथोऽ अनूकाशमेव तङ्कुरुते स्वर्ग्गस्य लोकस्य समष्ट्यै ॥ १६ ॥

( पृच्याऽभ्र ) अथो क्षत्रम्वाऽ अश्वः । क्षत्रस्यैतद्रूपं यद्धिरण्यं क्षत्रमेव तत्क्षत्रेण समर्द्धयति ॥ १७ ॥

---

हिरण्मयोऽश्वस्य शासो भवति । लोहमयाः पर्यंग्याणाम् । आयसा इतरेषाम् । ज्योतिर्वै हिरण्यम् । राष्ट्रमश्वमेधः । ज्योतिरेव तद्राष्ट्रे दधाति । अथो हिरण्यज्योतिषैव यजमानः स्वर्गं लोकमेति । अथो अनूकाशमेव तं कुरुते । स्वर्गस्य लोकस्य समष्ट्यै ॥ १६ ॥

अथो क्षत्रं वा अश्वः । क्षत्रस्यैतद् रूपम् । यद्धिरण्यम् । क्षत्रमेव तत्क्षत्रेण समर्द्धयति ॥ १७ ॥

---

दिका याज्याऽनुवाक्याः । ताः किमिति न पृथक्कुर्मः । इतरेषां तु रोहितादीनां न विद्मः । त्र्यवयो गायत्र्य इत्यादयो देवताः । तद्देवत्याश्च दुर्लभाः लक्षणोपेता याज्याऽनुवाक्या इत्यभिप्रायः । क्षत्रं वै अश्वः, महत्त्वात् बहूपकरणत्वात् एकत्वाद्वा । विडितरे पशवः, अल्पत्वात् अल्पोपकरणत्वाच्च । 'प्रतिप्रतिनीं' प्रतिप्रति वर्तत इति प्रतिप्रति प्रतिस्पर्द्धा, सा अस्यां विद्यत इति प्रतिप्रतिनी विट् । "व्रीह्यादिभ्यश्च"-( पा. सू. ५-२-११६) इति इनिर्मत्वर्थे द्रष्टव्यः । प्रत्युद्यामिनी प्रत्युद्गमनशीला । क्षत्रस्येति प्राप्ते क्षत्रायेति षष्ठ्यर्थे छन्दसि चतुर्थी ( पा. सू. २।३।६२ वा. ) यद्येवं न कुर्यात् । कथं ? तर्हि कुर्यादित्यत आह—तस्मात्प्राजापत्य एवाश्वः । कर्तव्य इति शेषः । देवदेवत्या इतरे । कर्तव्या इति शेषः । एतदुक्तं भवति—प्राजापत्यस्याश्वादेः पृथक् याज्या-ऽनुवाक्ये कर्तव्ये । इतरेषां सर्वेषां साधारण्यौ देवदेवत्ये द्वे एव कार्ये । ततश्च भिन्नदेवत्या अपि ते सहैव प्रदेय इति । अश्वग्रहणं चाशेषाणां प्राजापत्यानां दर्शनार्थम् । ततश्च सर्वे प्राजापत्या अश्वेनैव सह प्रदेयाः । तथा च वक्ष्यति—" सकृदेव प्राजापत्याभिः प्रचरेयुः सकृद्देवदेवत्याभिः "-( श. प. १३ । ५ । ३ । ६ । ) इति । तत्र च वपाग्रहणं मुख्यत्वाद्धविषामपि प्रदर्शनार्थम् । एवं ह्यपेक्षितम् । न तु विशेषमेतद्वचनं वक्ष्यति ॥ १५ ॥

हिरण्मयः । हिरण्यपरिष्कृतं शासम् । लोहमयाः लोहं ताम्रम् । ताम्रपरिष्कृताः स्वरवः शासाः । कुत एतत् । तथैव विशसनसामर्थ्यात् । यदि तु ताम्रहिरण्यगर्भधारा एव स्युः । ततो विशसनमेव तैर्न शक्यते कर्तुम् । पर्यंग्याश्चात्राश्वव्यतिरिक्ता द्रष्टव्याः, अश्वस्य पृथग्वचनात् । आयसाः अयस एव अयोविकारास्त एव । न तत्परिष्कृताः । इतरेषां रोहितादीनां ज्योतिष्मद्धिरण्यं ज्योतिरेव । दीप्तिः शोभा राष्ट्रे स्वानुकारेण ज्योतिः । तेन युक्तो यजमानः स्वर्गं लोकं गच्छति । अपि च अनूकाशमालोकमनातपं कुरुते स्वर्गस्य प्राप्तये । पशवः पशून्मध्यमे यूपे ॥ १६ ॥

अथो क्षत्रं वै अश्वः, अभ्यर्हितत्वात् । हिरण्यमपि अभ्यर्हितत्वादेव क्षत्रस्य रूपम् ॥ १७ ॥

( त्यु ) अथ यल्लोहमयाः पर्य्यङ्ग्याणाम् । यथा वै राज्ञोऽराजानो राजकृतः सूतग्रामण्य ऽएवम्वाऽएतेऽश्वस्य यत्पर्य्यङ्ग्याऽ एवमु वाऽएतद्धिरण्यस्य यल्लोहथ्ँ स्वेनैवैनांस्तद्रूपेण समर्द्धयति ॥ १८ ॥

( त्यु ) अथ यदायसाऽ इतरेषाम् । ( म्वि ) विड्वाऽइतरे पशवो विशऽ एतद्रूपं यदयो विशमेव तद्विशा समर्द्धयति वैतसऽइटसूनऽ उत्तरतोऽश्वस्यावद्यन्त्यानुष्टुभो वाऽअश्वऽआनुष्टुभैषा दिक्स्वायामेवैनन्तद्दिशि दधात्यथ यद्वैतसऽ इटसूनेऽप्सुयोनिर्वाऽअश्वोऽप्सुजा वेतसः स्वयैवैनं योन्या समर्द्धयति ॥ १९ ॥

इति प्रथमप्रपाठके एकादशं ब्राह्मणम् ॥ १३।१।११ ॥ ( २–२ ) ॥

देवा वाऽअश्वमेधे पवमानम् । ( थ्ँ ) स्वर्ग्गं लोकन्न प्राजानंस्तमश्वः

---

अथ यल्लोहमयाः पर्यंग्याणाम् । यथा वै राज्ञोऽराजानो राजकृतः सूतग्रामण्यः । एवं वा एतेऽश्वस्य यत्पर्यंग्याः । एवमु वा एतद्धिरण्यस्य यल्लोहम् । स्वेनैवैनांस्तद्रूपेण समर्द्धयति ॥१८॥

अथो यदायसा इतरेषाम् । विड्वा इतरे पशवः । विश एतद् रूपं यदयः । विशमेव तद्विशा समर्द्धयति । वैतस इटसूने । उत्तरतोऽश्वस्यावद्यान्ति । आनुष्टुभो वा अश्वः । आनुष्टुभैषा दिक् । स्वायामेवैनं तद्दिशि दधाति । अथ यद्वैतस इटसूने । अप्सुयोनिर्वा अश्वः । अप्सुजा वेतसः । स्वयैवैनं योन्या समर्द्धयति ॥ १९ ॥

देवा वा अश्वमेधे पवमानं स्वर्गं लोकं न प्राजानन् । तमश्वः प्राजानात् । यदश्वमेधेऽश्वेन पव-

---

अथ यत् । यथा वै राज्ञः । अराजानः राजकृतः मंत्रिपुरोहितस्वभूताः अराजानः । सूतग्रामण्यश्चोपकरणभूताः ये तूरादयः पर्यंग्याः । एवमेवैतद्धिरण्यस्योपकरणभूतं यत्ताम्रम् । तत्र हि तत् प्रतिबाध्यते तेन च रक्ष्यते॥ १८॥

विड्वै इतरे पशवः, बहुत्वात् । विश एतद्रूपं यदयः । तद्वत्वात्सर्वकर्मकरणत्वाच्च । वैतसे वेतसविकारे । 'इटसूने' इटः कटः । इटश्चासौ सूनं च इटसूनम् । तस्मिन्नेव शाखामये कटे । उत्तरत उत्तरपार्श्वे आहवनीयस्य अश्वस्य यान्यवदानानि तान्यवद्यंति । 'आनुष्टुभः' अनुष्टुभा सम्मितास्तस्य हि चत्वारः खुरा भवंति । अनुष्टुबपि चतुष्पदा । 'आनुष्टुभा' अनुष्टुभा सम्मिता एषा उत्तरा दिक् । एषा हि प्राच्या आरभ्य चतुर्थी भवति । अनुष्टुबपि चतुष्पदा । आनुष्टुभीति प्राप्ते छांदसः । य एव 'अप्सुयोनिः' आपो योनिरस्य सः अप्सुयोनिः । अब्योनिरिति प्राप्ते प्रथमायाः सप्तमी । तस्यां छांदसः अप्सु जायत इत्यत्र लुकि प्राप्ते "तत्पुरुषे कृति बहुलम्" (पा. सू. ६ । ३ । १४ ) इति सप्तम्या अलुक् ॥ १९ ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये त्रयोदशकाण्डे द्वितीयाऽध्याये द्वितीयं ब्राह्मणम् ॥ ( १३ । २ । २ ) ॥

'देवा वा अश्वमेधे' अश्वमेधे मध्यमेऽहनीति शेषः । कुत एतत् अधिकारात् । तथा च उत्तराश्वमेधे

प्राजानात्तदश्वमेधेऽश्वेन पवमानाय सर्प्पन्ति स्वर्ग्गस्य लोकस्य प्रज्ञात्यै पुच्छमन्वारभन्ते स्वर्ग्गस्यैव लोकस्य समष्ट्यै न वै मनुष्यः स्वर्ग्गं लोकमञ्जसा व्वेदाश्वो वै स्वर्ग्गं लोकमञ्जसा व्वेद ॥ १ ॥

यदुद्गातोद्गायेत् । (य) यथाऽक्षेत्रज्ञोऽन्येन पथा नयेत्तादृक्तदथ यदुद्गातारमवरुध्याश्वमुद्गीथाय व्वृणीते यथा क्षेत्रज्ञोऽञ्जसा नयेदेवमेवैतद्यजमानमश्वः स्वर्ग्गं लोकमञ्जसा नयति हिङ्करोति सामैव तद्धिङ्करोत्युद्गीथऽएव स व्वडवाऽउपरुन्धन्ति सᳬंशिञ्जते यथोपगातारऽउपगायन्ति तादृक्तद्धिरण्यन्दक्षिणा सुवर्ण्णᳬं शतमानन्तस्योक्तं ब्राह्मणम् ॥ २॥

इति प्रथमप्रपाठके द्वादशं ब्राह्मणम् ॥ १३।१।१२ ॥ ( २-३ ॥ )

---

मानाय सर्प्पन्ति । स्वर्गस्य लोकस्य प्रज्ञात्यै । पुच्छमन्वारभन्ते । स्वर्गस्यैव लोकस्य समष्ट्यै । न वै मनुष्यः स्वर्गं लोकमञ्जसा वेद । अश्वो वै स्वर्गं लोकमञ्जसा वेद ॥ १ ॥

यदुद्गातोद्गायेत् । यथाऽक्षेत्रज्ञोऽन्येन पथा नयेत् । तादृक्तत् । अथ यदुद्गातारमपरुध्याश्वमुद्गीथाय वृणीते । यथा क्षेत्रज्ञोऽञ्जसा नयेत् । एवमेवैतत् यजमानमश्वः स्वर्गं लोकमञ्जसा नयति । हिं करोति । सामैव तत् । हिं करोति । उद्गीथ एव सः वडवा उपरुन्धन्ति संशिञ्जते । यथोपगातार उपगायन्ति । तादृक्तत् । हिरण्यं दक्षिणा । सुवर्णं शतमानम् । तस्योक्तं ब्राह्मणम् ॥ २ ॥

---

" एकविंशं मध्यममहर्भवति " इत्येवमेव प्रकृत्य वक्ष्यति यत् " अश्वं नित्कोदानयन्ति " इति ( श. प. १३। ५।१। ९-१६ ) पवमानं प्रातःसवनिकं बहिष्पवमानम् । कुत एतत् । स हि नौर्ह वा एषोऽस्य ज्योतिःसंस्तुत इह च स्वर्गं लोकमित्याह-स एष जीवत्यश्वे वर्तते । उत्तरौ तु पवमानौ संज्ञतेऽश्वे वर्तेते । तदर्थे कथमश्वेन सर्पेत् । यः स्वर्गं लोकं स्वर्गलोकसंस्तुतं प्रज्ञातवंतः । बहिष्पवमानं च स्वर्गं लोकमश्वः प्रज्ञातवान् । यदश्वमेधे मध्यमेऽहनि अश्वेनोद्गातृस्थानीयेन सह बहिष्पवमानायाश्वाय यजमानो ब्रह्माऽऽवसथात्सर्पति, तत्स्वर्गस्य प्रज्ञात्यै पुच्छमन्वारभंते स्वर्गस्यैव । अश्वो वै स्वर्गं लोकं अंजसा ऋजुना मार्गेण वेद । स हि प्रजापतिरित्यभिप्रायः॥ १॥

यद्यदि उद्गाता स्तोतृप्रतिहर्तृभ्यां सह उद्गायेत् स्तोत्रं कुर्यात् । ततो यथा अक्षेत्रज्ञः अन्येन पथा गंतव्ये नयेत् । तद्वत्तेऽन्येन गच्छंति स्वदर्शनप्राप्तायाः तादृक्तत् । अथ यत् उद्गातारं ससहायमपरुध्यापनीय अश्वमुद्गीथाय स्तोत्राय वृणते । तद्यथा क्षेत्रज्ञः देशज्ञः अंजसा नयेत् । एवं यजमानमश्वः स्वर्गं पवमानमंजसा नयति । ' हिं करोति ' हेषितशब्दं करोति । सोऽश्वः बहिष्पवमानदेशं गत्वा यच्च हिं करोति । तत्साम हिं करोति । साम एव तत् हिंकारं करोतीत्यर्थः । उद्गीथ एव स इति । न

---

१- बहिष्पवमानाय सर्पणमश्वमालभ्यं । का. श्रौ. सू. २० । ११८ ।

प्रजापतिरकामयत । ( तो ) उभौ लोकावभिजयेयन्देवलोकम्मनुष्य-लोकञ्चेति सऽएतान्पशूनपश्यद्ग्राम्याँश्चारण्याँश्च तानालभत तैरिमौ लोकाववारुन्ध ग्राम्यैरेव पशुभिरिमं लोकमवारुन्द्धारण्यैरमुमयम्वै लोको मनुष्यलोकोऽथासौ देवलोको यद्ग्राम्यान्पशूनालभतऽ इममेव तैर्ल्लोकं यजमानोऽवरुन्धे यदारण्यानमुन्तैः ॥ १ ॥

स यद्ग्राम्यैः सꣳस्थापयेत् । ( त्स ) समध्वानः क्रामेयुः समन्तिक-ङ्ग्रामयोर्ग्रामान्तौ स्यातां नऽर्क्षीकाः पुरुषव्याघ्राः परिमोषिणऽ आव्याधिन्यस्तस्कराऽअरण्येष्वाजायेरन्यदारण्यैर्व्यध्वानः क्रामेयु-र्विदूरङ्ग्रामयोर्ग्रामान्तौ स्यातामृक्षीकाः पुरुषव्याघ्राः परिमोषिणऽ आव्याधिन्यस्तस्कराऽअरण्येष्वाजायेरन् ॥ २ ॥

---

प्रजापतिरकामयत । उभौ लोकावभिजयेयम् । देवलोकं मनुष्यलोकं चेति । स एतान्पशूनपश्यत् । ग्राम्यांश्चारण्यांश्च । तानालभत । तैरिमौ लोकाववारुन्ध । ग्राम्यैरेव पशुभिरिमं लोकमवारुन्ध; आरण्यैरमुम् । अयं वै लोको मनुष्यलोकः । अथासौ देवलोकः । यद्ग्राम्यान्पशूनालभते । इममेव तैर्लोकं यजमानोऽवरुन्धे । यदारण्यान् । अमुं तैः ॥ १ ॥

स यत् ग्राम्यैः संस्थापयेत् । समध्वानः क्रामेयुः । समन्तिकं ग्रामयोर्ग्रामान्तौ स्याताम् । नऽर्क्षीकाः पुरुषव्याघ्राः परिमोषिण आव्याधिन्यस्तस्करा अरण्येष्वाजायेरन् । यदारण्यैः व्यध्वानः क्रामेयुर्विदूरं ग्रामयोर्ग्रामान्तौ स्याताम् । ऋक्षीकाः पुरुषव्याघ्राः परिमोषिण आव्याधिन्यस्तस्करा अरण्येष्वाजायेरन् ॥ २ ॥

---

हिंकारमात्रं तत् । किं तर्हि सकलमेव तत्स्तोत्रं द्रष्टव्यमित्यर्थः । वडवा उप अस्याश्वस्य समीपे रुंधंति । यजमानपुरुषा अश्वाश्च तेन संशिजते । अव्यक्तं स्वनंति । तथा कार्यम्, यथा ताः संशिज्यंते । अथ कस्मात् उद्गीथभक्तेरेवायं विकारो न भवति । नैतदेवम् । उपक्रमे हि पवमानस्तोत्रमेव देवा न प्राजानंस्तमश्वः प्राजानादित्याह—ततश्च स्तोत्रविकार एवायं लक्षणया गम्यते । तेन च स्वभक्तिमात्रविकारः । अन्ये त्वाहुः अश्वस्य पुच्छमन्वारभ्य बहिष्पवमानाय सर्पंति । वडवा दर्शयति । अभिरसं शिंजाना इत्येतावदनुविधीयते । तत्रोद्गीथोपगीतवचनं भक्तिमात्रमिति तेषामुद्गातारः स्तुवीत एवेति ॥ २ ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये त्रयोदशकाण्डे द्वितीयेऽध्याये तृतीयं ब्राह्मणम् ॥ १३ । २ । ३ ॥

प्रजापतिरिति । आरण्यान्पशून्पर्यग्निकृतानेवोत्सृजंति ग्राम्यैः संस्थापयतीत्येतावदत्र विधीयते । पश्चालंभस्तु सत्रयागादेव प्राप्तोऽनूच्यते । स यदि ग्राम्यैः पशुभिः अश्वादिभिर्यज्ञं ब्राह्मणतर्पणांतं संस्थापयेत् । आरण्यान्पर्यग्निकृतानुत्सृज्य ततः पूर्वदेशपश्चाद्देश उत्तरापथदक्षिणापथ इत्येवमादयः परस्परं संक्रामयेयुः । संचरेयु-

---

१–वडवा दर्शयत्यभिरसति तत्स्तोत्रम् । का. श्रौ. सू. २० । ११९ । २–शतमानं ददाति । का. श्रौ. सू. २० । १२१ ।

( रंस्तु ) तुदाहुः । ( ३ ) अपशुर्व्वाऽएष युदारण्यो नैतुस्य होतुव्यं युज्जुहुयात्क्षिप्रं युजमानमुरण्यम्मृतुर्ठुं हरेयुरुरण्यभागा ह्यारण्याः पशुवो यन्न जुहुयाद्यज्ञवेशसुर्ठुं स्यादिति पुर्य्यग्निकृतानेवोत्सृजन्ति तुन्नैव हुतन्नाहुतन्न युजमानमुरण्यम्मृतुर्ठुं हरन्ति नु यज्ञवेशसुं भवति ॥ ३ ॥

ग्राम्यैः सुर्ठुंस्थापयति । व्वि पितापुत्रावुवस्यतः समुध्वानः क्रामन्ति सुमंतिकद्ग्रामयोर्ग्ग्रामान्तौ भवतो नर्क्षीकाः पुरुषव्याघ्राः परिमोषि-णऽआव्याधिन्यस्तुस्कराऽ अुरण्येष्वाजायन्ते ॥ ४ ॥

इति प्रथमप्रपाठके त्रयोदशं ब्राह्मणम् ॥ १३।१।१३ ॥ ( २–४ ) ॥

---

तदाहुः—अपशुर्वा एष यदारण्यः । नैतस्य होतव्यम् । यत् जुहुयात् । क्षिप्रं यजमानमरण्यं मृतं हरेयुः । अरण्यभागा ह्यारण्याः पशवः । यन्न जुहुयात् । यज्ञवेशसं स्यात् इति । पर्यग्निकृता-नेवोत्सृजंति । तन्नैव हुतम् । नाहुतम् । न यजमानमरण्यं मृतं हरंति । न यज्ञवेशसं भवति ॥ ३ ॥

ग्राम्यैः संस्थापयति । वि पितापुत्राववस्यतः । समध्वानः क्रामंति । समंतिकं ग्रामयोर्ग्रामांतौ भवतः । नर्क्षीकाः पुरुषव्याघ्राः परिमोषिणः आव्याधिन्यस्तस्करा अरण्येष्वाजायंते ॥ ४ ॥

---

रित्यर्थः । अध्वभिरत्रार्द्रस्थलना लक्ष्यन्ते । क्षेमे सति मनुष्याः सर्वान् देशान् संचरेयुरित्यभिप्रायः । क्षेम एव सति निमित्तांत्तरे विप्रिये च वसति । समंतिकं समीपे ग्रामयोः ग्रामांतौ सीमान्तौ स्याताम् । अन्यासु हि सीमासु ग्रामस्य समीप एव सीमांतो भवति । नर्क्षा एव नर्क्षीकाः । पुरुषाश्च ते व्याघ्राश्च पुरुषव्याघ्राः । म्लेच्छा हि व्याघ्ररूपाः पुरुषा वदन्ति ते पुरुषव्याघ्राः । परिमोषिणश्चौराः । 'आव्याधिन्यः' आविध्यंत्या-युधैरित्याव्याधिन्यः चोरसेनाः । तस्करास्तत्पापं कुर्वंतीत्यतोऽन्ये चौराः । न आजायेरन् क्षेमत्वाद्राष्ट्रस्य । यत् यदि आरण्यैः संस्थापयेत् । तत अध्वानः पूर्वदेशादयो विक्रामेयुः विरुद्धं क्रामयेयुः । स्वदेश एव मनुष्याः संचरेयुः, न देशांतरेषु अंतरालानामभिन्नत्वात् अक्षेमत्वाच्च । विदूरं ग्रामयोर्ग्रामांतौ स्याताम् । अक्षेमे हि सति प्रविरला ग्रामा भवन्ति' । तेषां च सीमांता दूरे भवंति ॥ १ ॥ २ ॥

कथं पुनरालब्धैरारण्यैर्न संस्थाप्यते यज्ञ इत्यत आह-तदाहुरिति । तत्रारण्यैरसंस्थापने आह-अपशुर्वा । यान्वा पशूनपेक्ष्य न्यूनगुण एष स आरण्यः । नैतस्यारण्यस्य बहिर्वपामिर्होतव्यम् । यदि जुहुयादयं दोषः स्यात् । यदि न जुहुयात्, यज्ञविनाशः स्यात् । कथं हि देवतायै संकल्पः । सर्वं तदीयेन तेनैव तद्धुतमिति । साक्षादभाव-पक्षे यन्न हुतम् । पर्यग्निकरणेन तु प्रसितमिति भवतीति । नाहुतम् । यथा संकल्पितानां च त्यागांते यज्ञ-विनाशः । वचनाच्च पर्यग्निकरणम् । तैरेवांगैरवैगुण्यमित्यभिप्रायः ॥ ३ ॥

ग्राम्यैः संस्थापयति । पितापुत्रौ वै पृथग्व्यवस्यतः । क्षेमे हि सति विपृथग्वसतः । अक्षेमे तु संबद्धावप्येकत्र वसतः ॥ ४ ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये त्रयोदशकाण्डे द्वितीयेऽध्याये चतुर्थं ब्राह्मणम् ॥ १३ । २ । ४ ॥

प्रजापतिरश्वमेधमसृजत । सोऽस्मात्सृष्टः पराङैत्स पङ्क्तिर्भूत्वा सम्वत्सरं प्राविशत्तेऽर्द्धमासा अभवंस्तं पञ्चदशिभिरनु प्रायुङ्क्त तमाप्नोत्तमाप्त्वा पञ्चदशिभिरवारुन्द्धार्द्धमासानाम्वाऽ एषा प्रतिमा यत्पञ्चदशिनो यत्पञ्चदशिनऽआलभतेऽर्द्धमासानेव तैर्य्यजमानोऽवरुन्धे ॥ १ ॥

तदाहुः । ( २ ) अनवरुद्धो वाऽएतस्य सम्वत्सरो भवति योऽन्यत्र चातुर्म्मास्येभ्यः सम्वत्सरन्तनुतऽइत्येष वै साक्षात्सम्वत्सरो यच्चातुर्म्मास्यानि यच्चातुर्म्मास्यान्पशूनालभते साक्षादेव तत्सम्वत्सरमवरुन्द्धे वि

---

प्रजापतिरश्वमेधमसृजत । सोऽस्मात्सृष्टः पराङैत् । स पंक्तिर्भूत्वा संवत्सरं प्राविशत् । तेऽर्द्धमासा अभवन् । तं पंचदशिभिरनु प्रायुंक्त । तमाप्नोत् । तमाप्त्वा पंचदशिभिरवारुन्ध । अर्द्धमासानां वा एषा प्रतिमा । यत्पंचदशिनः । यत्पंचदशिन आलभते । अर्द्धमासानेव तैर्यजमानोऽवरुन्धे ॥ १ ॥

तदाहुः–अनवरुद्धो वा एतस्य संवत्सरो भवति । योऽन्यत्र चातुर्मास्येभ्यः संवत्सरं तनुत इति । एष वै साक्षात्संवत्सरः । यच्चातुर्मास्यानि । यच्चातुर्मास्यान्पशूनालभते । साक्षादेव तत् संवत्सरमवरुन्धे ।

---

प्रजापतिरिति–पञ्चदशिनश्चातुर्मास्या एकादशिना इत्येवं त्रिधा ग्राम्यान्पशूनवस्थाप्य त्रीणि दर्शनानि । तेष्वत्रोच्यते तत्र पंचदशसु तावत् अर्द्धमासातिमाह–प्रजापतिः अश्वमेधं अश्वमेधयज्ञसाधनं दृष्टवान् । सोऽस्मात् प्रजापतेः पराङ्मुखो गतः । देवतामहाभाग्येन स पंक्तिः पंचविभागो भूत्वा संवत्सरं प्रविष्टः । ये पंच विभागास्ते अर्धमासाभिमानिनः अभवन् । एतस्मादेव अर्द्धमासांतर्भावात् ते विभागाः प्रत्येकं त्रिभेदा बभूवुरिति गम्यते । तं पंचदशिभिरनुप्रायुंक्त । तमश्वमेधं अर्द्धमासतां प्राप्तं पंचदशिभिरहोरात्रादिभिरन्वेष्टुं प्रयुक्तवान् । पंचदशसंख्या प्रमाणं येषां ते पंचदशिनः । पंचदशशब्दात् "शन्शतोर्डिनिश्छन्दसि तदस्य परिमाणमित्यर्थे वाच्यः" इति वार्तिकात् डिनिप्रत्ययः । क्वासुचित् कंडिकासु ( वा. सं. २४ । १९ ) पंचदश पशवः पठ्यन्ते । क्वासुचिदधिकाः । कासुचिदूनाः । तत्र यासु पञ्चदश पठयन्ते । तासु ये पशवः ते पंचदशिन इत्युच्यंते । तमाप्नोत् । तमश्वं अर्द्धमासाख्यं च प्रविष्टः सः प्रजापतिः पंचदशिभिः पशुभिः आप्तवान् । यद्देवतामहाभाग्येनाश्वार्द्धमासेषु अश्ववीर्यं प्रवेशयति । प्रजापतिः पंचदश पशुयागैः प्रत्याहरत । वशीकृतश्चेत्यर्थः । अर्द्धमासानां वै एषा प्रतिमा ये पंचदशिनः । ते हि पंचदशवत्स्वर्द्धमासेष्वपि पंचदशरात्रिका इत्यभिप्रायः ॥ १ ॥

तदाहुः–तत्र पंचदशभिः संवत्सराप्तो य आहुः आप्नोति संवत्सरस्य । एतस्यानवरुद्धः । अनवरुद्धः । अवश्यंपुनरपापी भवति । यश्चातुर्मास्येभ्यो वैश्वदेववरुणप्रघाससाकमेधशुनासीरीयात्मकेभ्यः अन्यत्र संवत्सरं तनुते । ततश्च पञ्चदशभिरनवरुद्धो भवति । संवत्सरो नात्र रुध्येतेत्यर्थः । कथं हि संवत्सरो रुध्यत इत्यत

---

१–:२७ । २–१२६ । ३–२२ । शेषा ग्राम्याः । १५२ । ४–४३२७ इति ।

वृाऽएष प्प्रजया पशुभिर्ऋध्यतेऽप स्वर्ग्गं लोकुं राध्नोति योऽन्यत्रैका-दशिनेभ्यः सम्वत्सरन्तनुतऽइत्येष वै सम्प्रति स्वर्ग्गो लोको यदेकाद-शिनी प्रजा वै पशवऽएकादशिनी यदैकादशिनान्पशूनालभते न स्वर्ग्गं लोकमपराध्नोति न प्रजया पशुभिर्व्यृध्यते ॥ २ ॥

प्रजापतिर्विराजमसृजत । साऽस्मात्सृष्टा पराच्यैत्साऽश्वम्मेध्यं प्राविशत्तां दशिभिरनु प्रायुङ्क्त तामाप्नोत्तामाप्त्वा दशिभिरवारुन्द्ध यद्दशिनऽआलभते विराजमेव तैर्यजमानोऽवरुन्द्धे शतमालभते शता-युर्वै पुरुषः शतेन्द्रियऽआयुरेवेन्द्रियं वीर्य्यमात्मन्धत्ते ॥ ३ ॥

---

वि वा एष प्रजया पशुभिर्ऋध्यते । अप स्वर्गं लोकं राध्नोति । योऽन्यत्रैकादशिनेभ्यः संवत्सरं तनुत इति । एष वै संप्रति स्वर्गो लोकः । यदेकादशिनी । प्रजा वै पशवः एकादशिनी । यदै-कादशिनान्पशूनालभते । न स्वर्गं लोकमपराध्नोति । न प्रजया पशुभिर्व्यृध्यते ॥ २ ॥

प्रजापतिर्विराजमसृजत । साऽस्मात्सृष्टा पराच्यैत् । साऽश्वं मेध्यं प्राविशत् । तां दशिभिरनु प्रायुंक्त । तामाप्नोत् । तामाप्त्वा दशिभिरवारुन्ध । यद्दशिन आलभते । विराजमेव तैर्यजमानो-ऽवरुन्धे । शतमालभते । शतायुर्वै पुरुषः । शतेन्द्रियः । आयुरेवेन्द्रियं वीर्यमात्मन्धत्ते ॥ ३ ॥

---

आह—एष वै साक्षात्संवत्सरः । यानि चातुर्मास्यानि । चातुर्मास्यदेवताकान्पशून् " कृष्णग्रीवा आग्नेया बभ्रवः सौम्या उपध्वस्ता सावित्राः " ( वा. सं. २४ । १४ ) इत्यादीन् एकादशिनान्पशूनालभन्ते । साक्षादेव संवत्सरमवरुन्धे इति चातुर्मास्यदेवतापशुषु दर्शनम् । वि वै एष प्रजया पशुभिश्च ऋध्यते । य एकादशिनेभ्यः अन्यत्र पञ्चदशिभिश्चातुर्मास्यैश्च केवलं संवत्सरं तनुते इत्याहुरिति वर्तते । कथं ? पुनरेष दोषो न भवतीत्यत आह—एष वै संप्रति स्वर्गो लोकः । या एकादशिनी, स्वर्गस्य कारणमेकादशिनीत्यर्थः । यदैकादशिनान्पशून्, " आग्नेयः कृष्णग्रीवः " ( वा. सं. २९ । ५८ । ५९ ) इत्यादीनालभते । तेन च न स्वर्गं लोकमपरा-ध्नोति । इत्येकादशिनां विधिनैव द्वे एकादशिन्यौ द्रष्टव्ये । " सप्तदशैव पशून्मध्यमे यूप आलभेत " " षोडश षोडशेतरेषु " इति वचनात् । ( श. प. १३ । २ । २ । १३ ) ॥ २ ॥

प्रजापतिर्विराजं विराडभिमानिनीं दशावयवां देवतां असृजत । देवतामहाभाग्येन तमेव प्राजापत्यमेत्य प्रविष्टां तां तत्रैव स्थितां दशिभिः पशुभिरन्वेष्टुं प्रयुक्तवान् । दशसंख्या प्रमाणं येषां ते दशिनः पशवः । " प्रजापतये च वायवे च गोमृगः " इत्येवमादयः ( वा. सं. २४ । ३० ) ( तेनान्यत्सवानवषाद्ववाश्च । ? ) शतमालभते । दशिनां तत्र शतं यदपि दशोत्तरं, तथापि शतमुष्टा ( ? ) दशनार्थं शतमित्याह ॥ ३ ॥

( त्तऽए ) एकादश दशुतऽआलभते । ( तऽए ) एकादशाक्षरा वै त्रिष्टु-बिन्द्रियम्मु वै व्वीर्य्यन्त्रिष्टुबिन्द्रियुस्यैवु व्वीर्य्यस्यावरुद्धचाऽएकादश दशुतऽआलभते दुश वै पशोः प्प्राणाऽआत्मैकादशुः प्प्राणैरेवु पशून्त्सुम-र्द्धयति व्वैश्वदेवा भवन्ति व्वैश्वदेवो वाऽअश्वोऽश्वस्यैवु सर्व्वत्वाय बहु-रूपा भवन्ति तुस्माद्बहुरूपाः पशवो नानारूपा भवन्ति तुस्मान्नाना-रूपाः पशवः ॥ ४ ॥

इति प्रथमप्रपाठके चतुर्दशं ब्राह्मणम् ॥ १३।१।१४ ॥ ( २।५ ) ॥

युञ्जन्ति ब्रध्नुमरुषञ्चरन्तमिति । ( त्य ) असौ वाऽआदित्यो ब्रध्नोऽ-रुषोऽमुमेवास्माऽ आदित्यं युनक्ति स्वर्ग्गस्य लोकुस्य समष्ट्यै ॥ १ ॥

तुदाहुः । पराङ्वाऽएतुस्माद्यज्ञऽएति युस्य पशुरुपाकृतोऽन्यत्र व्वेदे-

---

एकादश दशत आलभते । एकादशाक्षरा वै त्रिष्टुप् । इंद्रियम्मु वै वीर्यं त्रिष्टुप् । इन्द्रियस्यैव वीर्यस्यावरुद्धचै । एकादश दशत आलभते । दश वै पशोः प्राणाः । आत्मैकादशः । प्राणैरेव पशून्त्समर्द्धयति । वैश्वदेवा भवन्ति । वैश्वदेवो वा अश्वः । अश्वस्यैव सर्वत्वाय । बहुरूपा भवन्ति । तस्माद्बहुरूपाः पशवः । नानारूपा भवन्ति । तस्मान्नानारूपाः पशवः ॥ ४ ॥

" युंजंति ब्रध्नमरुषं चरंतम् "–( वा० सं० २३ । ५ ) इति । असौ वा आदित्यो ब्रध्नोऽरुषः । अमुमेवास्मा आदित्यं युनक्ति । स्वर्गस्य लोकस्य समष्ट्यै ॥ १ ॥

तदाहुः–पराङ्वा एतस्माद्यज्ञ एति । यस्य पशुरुपाकृतोऽन्यत्र वेदेरोति । इति । " एतं स्तोतरनेन

---

एकादश दशत इति । " प्रजापतये च वायवे च " इत्यत आरभ्य एकादशैवैताः कंडिकाः । ( वा. सं. २४ । ३०–४० ) यासु दश दश पशवः ॥ ४ ॥

इति श्रीमदाचार्यहरिस्वामिना कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये त्रयोदशे काण्डे द्वितीयेऽध्याये पञ्चमं ब्राह्मणम् ॥ १३ । २ । ५ ॥

युंजंतीति । " अमुमेवास्मा आदित्यं युनक्ति " इति वाक्यशेषात् मंत्रवर्णात् शाखांतरवचनाच्च अश्वं रथेन युनक्तीति गम्यते । " युंजन्त्यस्य " इत्यनेनान्यान् त्रीन् युनक्ति । तेन च रथेनापो गच्छति । अवगाढेषु अश्वेषु " यद्वातः " इति वाचयति ॥ १–३ ॥

---

१–युनक्त्येनं युंजन्ति ब्रध्नमिति । का. श्रौ. सू. २० । १२५ । २–इतरांश्च युंजंत्यस्येति । अश्वाः सौवर्णालंकाराः । रथ्य । का. श्रौ. सू. २० । १२६–१२८ । ३–अपो यात्यवाऽवगाढेषु वाचयति यद्वात इति । का. श्रौ. सू. २० । १२९ ।

रेतीत्येतुᳩँ स्तोतरनेन पथा पुनरश्वमावर्तयासि नऽइति वायुर्वै स्तोता तमेवास्माऽएतत्परस्ताद्दधाति तथा नात्येति ॥ २ ॥

( त्यु ) अप वाऽएतस्मात् । ( त्ते ) तेजऽ इन्द्रियम्पशवः श्रीः क्रामन्ति योऽश्वमेधेन यजते ॥ ३ ॥

वसवस्त्वाऽञ्जन्तु । गायत्रेण च्छन्दसेति महिष्यभ्यनक्ति तेजो वाऽआज्यन्तेजो गायत्री तेजसीऽएवास्मिन्त्समीची दधाति ॥ ४ ॥

रुद्रास्त्वाऽञ्जन्तु त्रैष्टुभेन च्छन्दसेति वावाता तेजो वाऽआज्यमिन्द्रियन्त्रिष्टुप्तेजश्चैवास्मिन्निन्द्रियञ्च समीची दधाति ॥ ५ ॥

( त्या ) आदित्यास्त्वाऽञ्जन्तु । जागतेन च्छन्दसेति परिवृक्ता तेजो वाऽआज्यं पशवो जगती तेजश्चैवास्मिन्पशूंश्च समीचो दधाति ॥ ६ ॥

पत्न्योऽभ्यञ्ज्यन्ति । श्रियै वाऽएतद्रूपं यत्पत्न्यः श्रियमेवास्मिंस्तद्दधाति नास्मात्तेजऽइन्द्रियं पशवः श्रीरुपक्रामन्ति ॥ ७ ॥

---

पथा पुनरश्वमावर्तयासि नः"–( वा० सं० २३ । ७ ) इति । वायुर्वै स्तोता । तमेवास्मा एतत्परस्ताद्दधाति । तथा नात्येति ॥ २ ॥

अप वा एतस्मात्तेज इंद्रियं पशवः श्रीः क्रामंति । योऽश्वमेधेन यजते ॥ ३ ॥

"वसवस्त्वाऽञ्जन्तु गायत्रेण च्छन्दसा"–इति महिष्यभ्यनक्ति । तेजो वा आज्यम् । तेजो गायत्री । तेजसी एवास्मिन् समीची दधाति ॥ ४ ॥

"रुद्रास्त्वाऽञ्जन्तु त्रैष्टुभेन च्छन्दसा"–इति वावाताः । तेजो वा आज्यम् । इंद्रियं त्रिष्टुप् । तेजश्चैवास्मिन्निंद्रियं च समीची दधाति ॥ ५ ॥

"आदित्यास्त्वाऽञ्जन्तु जागतेन च्छन्दसा"–( वा० सं० २३ । ८ ) इति परिवृक्ता । तेजो वा आज्यम् । पशवो जगती । तेजश्चैवास्मिन्पशूंश्च समीचो दधाति ॥ ६ ॥

पत्न्योऽभ्यंज्यंति । श्रियै वा एतद्रूपम् । यत्पत्न्यः । श्रियमेवास्मिंस्तद्दधाति । नास्मात्तेज इन्द्रियं पशवः श्रीरपक्रामन्ति ॥ ७ ॥

---

"वसवस्त्वेति" तिसृभिरेताभिरश्वस्याभ्यंजनमुच्यते । महिषी प्रथमोढा । वावाता प्रिया । परिवृक्ता परिवित्ता दुर्भगा ॥ ४–७ ॥

---

१–आयायं विमुक्तमश्वं महिषी वावाता परिवृक्ताऽऽज्येनाभ्यंज्यंति पूर्वकायमध्यापरकायान्यथादेशं वसवस्त्वेति प्रतिमंत्रम् । का. श्रौ. सू. २० । १३० ॥



२८१

यथा वै हविषो हुतस्य स्कन्देत् । ( दे ) एवमेतत्पशो स्कन्दति यस्य निक्तस्य लोमानि शीयन्ते यत्काचानावयन्ति लोमान्येवास्य सम्भरन्ति हिरण्मया भवन्ति तस्योक्तं ब्राह्मणमेकशतमेकशतङ्काचानावयन्ति शतायुर्वै पुरुषऽआत्मैकशतऽआयुष्येवात्मन्प्रतितिष्ठति भूर्भुवः स्वरिति प्राजापत्याभिरावयन्ति प्राजापत्योऽश्वः स्वयैवैनन्देवतया समर्द्धयन्ति लाजी३ञ्छाची ३ न्यव्ये गव्यऽइत्यतिरिक्तमन्नमश्वायोपावहरति प्रजामेवान्नादीं कुरुतऽ एतदन्नमत्त देवाऽएतदन्नमद्धि प्रजापतऽइति प्रजामेवान्नाद्येन समर्द्धयति ॥ ८ ॥

( त्यु ) अप वाऽ एतस्मात् । ( त्ते ) तेजो ब्रह्मवर्चसङ्क्रामति योऽश्वमेधेन यजते होता च ब्रह्मा च ब्रह्मोद्यम्वदतऽआग्नेयो वै होता बार्हस्पत्यो ब्रह्मा ब्रह्म बृहस्पतिस्तेजश्चैवास्मिन्ब्रह्मवर्चसञ्च समीची धत्तो

यथा वै हविषो हुतस्य स्कन्देत् । एवमेतत्पशोः स्कंदति । यस्य निक्तस्य लोमानि शीयंते । यत् काचानावयंति । लोमान्येवास्य संभरंति । हिरण्मया भवन्ति । तस्योक्तं ब्राह्मणम् । एकशतमेकशतं काचानावयन्ति । शतायुर्वै पुरुषः । आत्मैकशतः । आयुष्येवात्मन्प्रतितिष्ठति । "भूर्भुवः स्वः"–इति प्राजापत्याभिरावयन्ति । प्राजापत्योऽश्वः । स्वयैवैनं देवतया समर्द्धयन्ति । "लाजी ३ ञ्छाची ३ न्यव्ये गव्ये"–इत्यतिरिक्तमन्नमश्वायोपावहरति । प्रजामेवान्नादीं कुरुते । "एतदन्नमत्त देवा एतदन्नमद्धि प्रजापते"–( वा. सं. २३ । ८ ) इति । प्रजामेवान्नाद्येन समर्द्धयति ॥ ८ ॥

अप वा एतस्मात्तेजो ब्रह्मवर्चसं क्रामति । योऽश्वमेधेन यजते । होता च ब्रह्मा च ब्रह्मोद्यं

निक्त इति वक्तव्ये प्रथमास्थाने षष्ठी छांदसी । शीयंते सद्यशानने पतंति । काचा मणयः । तस्योक्तं ब्राह्मणम्–" ज्योतिर्वै हिरण्यं राष्ट्रमश्वमेधः " इत्यादि ( १३ । २ । २ । १६ । एकशतमेकशतम् । एकैका पत्नी आवयति आवध्नाति । केसरपुच्छेषु भूर्भुवः स्वरित्येताभिर्व्याहृतिभिर्यथासंख्यम् । प्रथमया महिषी, द्वितीयया वावाता, तृतीयया परिवृक्ता, अतिरिक्तमन्नं आज्यसक्तुलाजाधानालाजात्मकं रात्रिहुतशेषं अश्वायोपावहरति अश्वार्थं तत्समीपमवनयति । यथा स तद्भक्षयति तथा ढौकयतीत्यर्थः ॥ ८ ॥

अप वा एतस्मात् । ब्रह्मणि वेदे वदनं ब्रह्मोद्यं प्रश्नप्रतिवचनात्मकम् । आग्नेयः अग्नेरधिदैवात्मकस्याधिष्ठेयो

१–अश्रंश्यमानान्मणीन्सौवर्णानेकशतमेकशतं केसरपुच्छेष्वावयन्ति भूर्भुवः स्वरिति प्रतिमहाव्याहृति । अनुचर्यस्य तूष्णीमेकेषाम् । का. श्रौ. सू. २० । १३१ । १३२ ।

२–अश्वाय रात्रिहुतशेषं प्रयच्छति लाजी ३ ञ्छाची ३ न् इति । अप्स्ववहरणमखादति । का. श्रौ. सू. । २० । १३३ । १३४ । ( शाखांतराविदम् । )

यूपमभितो व्वदतो यजमानो वै यूपो यजमानमेवैतत्तेजसा च ब्रह्मवर्च्च-सेन चोभयतः परिधत्तः ॥ ९ ॥

कः स्विदेकाकी चरतीति । ( त्य ) असौ वाऽआदित्यऽएकाकी चर-त्येष ब्रह्मवर्च्चसं ब्रह्मवर्च्चसमेवास्मिंस्तद्धत्तः ॥ १० ॥

कऽउ स्विज्जायते पुनरिति । चन्द्रमा वै जायते पुनरायुरेवास्मि-स्तद्धत्तः ॥ ११ ॥

किᳩ स्विद्धिमस्य भेषजमिति । ( त्य ) अग्निर्व्वै हिमस्य भेषज-न्तेजऽएवास्मिंस्तद्धत्तः ॥ १२ ॥ शतम् ६९०० ॥

किम्वाऽऽवपनम्महदिति । ( त्य ) अयम्वै लोकऽआवपनम्महदस्मि-न्नेव लोके प्रतितिष्ठति ॥ १३ ॥

---

वदतः । आग्नेयो वै होता । बार्हस्पत्यो ब्रह्मा । ब्रह्म बृहस्पतिः । तेजश्चैवास्मिन् ब्रह्मवर्चसं च समीची धत्तः । यूपमभितो वदतः । यजमानो वै यूपः । यजमानमेवैतत्तेजसा च ब्रह्मवर्चसेन चोभयतः परिधत्तः ॥ ९ ॥

“ कः स्विदेकाकी चरति ”–इति । असौ वा आदित्य एकाकी चरति । एष ब्रह्मवर्चसम् । ब्रह्मवर्चसमेवास्मिंस्तद्धत्तः ॥ १० ॥

“ क उ स्विज्जायते पुनः ”–इति । चंद्रमा वै जायते पुनः । आयुरेवास्मिंस्तद्धत्तः ॥ ११ ॥

“किं स्विद्धिमस्य भेषजम्”–इति अग्निर्वै हिमस्य भेषजम् । तेज एवास्मिंस्तद्धत्तः ॥ १२ ॥

“ किं वाऽऽवपनं महत् ”–( वा सं. २३ । ९ ) इति । अयं वै लोक आवपनं महत् । अस्मिन्नेव लोके प्रतितिष्ठति ॥ १३ ॥

---

होता । बार्हस्पत्यो बृहस्पतेरधिदैवभूतस्याधिष्ठेयो ब्रह्मा । ब्रह्म किं ? इत्यत आह–ब्रह्म बृहस्पतिः । इति तु प्रसिद्धत्वात्तेनोक्तम् । ततश्च तेजश्च ब्रह्मवर्चसं च अस्मिन् यजमाने धत्त इत्युपपन्नम् ॥ ९ ॥

कः स्विदेकाकी चरति । ब्रह्मा पृच्छति होतारम् । कुत एतत् शाखांतरात् । असौ वा आदित्य एकाकी चरतीति प्रतिवचनार्थः । एवं प्रश्नप्रतिप्रश्नान् विवृणोति । वचनान्यपि व्याचष्टे । तेनैव वचनानि न पुनर्विवृणोति । एकाकी असहाय आदित्यो भ्रमति । तेन सहान्यस्य कस्यचिददर्शनात् । अस्मिन् यजमाने ॥ १० ॥

चन्द्रमा वै जायते पुनः । मासांतर इत्यभिप्रायः । यश्च पुनःपुनर्नवो जायते स आयुष्मानिति गम्यते । ततश्च तत्प्रश्नप्रतिवचनाभ्यामायुरेवास्मिन् यजमाने ब्रह्महोतारौ धत्तः ॥ ११ ॥ १२ ॥

अस्मिन्नेव लोके प्रतितिष्ठति । एताभ्यां प्रश्नप्रतिवचनाभ्याम् ॥ १३ ॥

का स्विदासीत्पूर्व्वचित्तिरिति । द्यौर्व्वै व्वृष्टिः पूर्व्वचित्तिर्दिवमेव व्वृष्टिमुवरुन्धे ॥ १४ ॥

किंᳬ स्विदासीद्बृहद्वयऽइति । ( त्यु ) अश्वो वै बृहद्वय ऽआयुरेवावरुन्धे ॥ १५ ॥

का स्विदासीत्पिलिप्पिलेति । श्रीर्व्वै पिलिप्पिला श्रियमेवावरुन्धे ॥ १६ ॥

का स्विदासीत्पिशङ्गिलेति । ( त्य ) अहोरात्रे वै पिशङ्गिलेऽ अहोरात्रयोरेव प्रतितिष्ठति ॥ १७ ॥

इति प्रथमप्रपाठके पञ्चदशं ब्राह्मणम् ॥ १३।१।१५ ॥ ( २-६ ) ॥

इति प्रथमः प्रपाठकः समाप्तः ॥ १३-१ ॥

कण्डिकासंख्या ॥ १०८ ॥

---

" का स्विदासीत् पूर्वचित्तिः "–इति । द्यौर्वै वृष्टिः पूर्वचित्तिः । दिवमेव वृष्टिमवरुन्धे ॥ १४ ॥

" किं स्विदासीद् बृहद्वयः "–इति । अश्वो वै बृहद्वयः । आयुरेवावरुन्धे ॥ १५ ॥

" का स्विदासीत्पिलिप्पिला "–इति । श्रीर्वै पिलिप्पिला । श्रियमेवावरुन्धे ॥ १६ ॥

" का स्विदासीत्पिशंगिला "–( वा. सं. २३ । ११ ) इति । अहोरात्रे वै पिशंगिले । अहोरात्रयोरेव प्रतितिष्ठति ॥ १७ ॥

---

का स्विदासीत्पूर्वचित्तिरिति । " होता ब्रह्माणं पृच्छति " इति शाखांतरात् । द्यौर्वै वृष्टेर्हेतुः । ततश्च राष्ट्रोपकाराय दिवं वृष्टिमेवावरुंधे यजमानः । एताभ्यां प्रश्नप्रतिवचनाभ्याम् ॥ १४ ॥

अश्वो वै बृहद्वयः । महान् पशुरिति श्रुवद्वयां शब्दसामान्यात् महद्वयः शतार्द्धकं आयुः यजमानः अवरुन्धे ॥ १५ ॥

श्रीर्वै पिलिप्पिला । रूपानुकरणशब्दोऽयम् बहुरूपविलासोद्द्योतनवती श्रीः । मंत्रे तु ( वा. सं. २३।१२ ) अविः पिलिप्पिला उक्ता । सा तु श्रीरेवेति ब्राह्मणे विवृतम् । कथमियं वै अविः पृथिवी । सा च श्रीः । " श्रीर्वा इयम् " इति वचनात् ॥ १६ ॥

अहोरात्रे वै पिशंगिले इति । मंत्रे ( वा. सं. २३ । १२ ) रात्रिग्रहणेनैव अहरपि संगृहीतमिति दर्शयति । ततश्च एताभ्यां प्रश्नप्रतिवचनाभ्याम् । अहोरात्रयोर्यजमानः प्रतितिष्ठति । उभयोरपि राज्यं करोतीत्यर्थः ॥ १७ ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये त्रयोदशे कांडे द्वितीयेऽध्याये षष्ठं ब्राह्मणम् ॥ १३ ॥ २ ॥ ६ ॥

# अथ द्वितीयप्रपाठके प्रथमं ब्राह्मणम् ।
# द्वितीयेऽध्याये च सप्तमं ब्राह्मणम् ।



नियुक्तेषु पशुषु । प्रोक्षणीरध्वर्युरादत्तेऽश्वं प्रोक्षिष्यन्नन्वारब्धे यजमानऽआध्वरिकं यजुरनुद्रुत्याश्वमेधिकं यजुः प्रतिपद्यते ॥ १ ॥

वायुष्ट्वा पचतैरवत्विति । वायुरेवैनं पचत्यसितग्रीवश्छागैरित्यग्निर्वाऽअसितग्रीवोऽग्निरेवैनञ्छागैः पचति ॥ २ ॥

न्यग्रोधश्चमसैरिति । यत्र वै देवा यज्ञेनायजन्त तऽएतांश्चमसान्न्यौब्जंस्ते न्यञ्चोऽरोहंस्तस्मान्न्यञ्चो न्यग्रोधा रोहन्ति ॥ ३ ॥

---

नियुक्तेषु पशुषु प्रोक्षणीरध्वर्युरादत्ते । अश्वं प्रोक्षिष्यन्नन्वारब्धे यजमान आध्वरिकं यजुरनुद्रुत्याश्वमेधिकं यजुः प्रतिपद्यते ॥ १ ॥

" वायुष्ट्वा पचतैरवतु "–इति । वायुरेवैनं पचति । " असितग्रीवश्छागैः "–इति । अग्निर्वा असितग्रीवः । अग्निरेवैनं छागैः पचति ॥ २ ॥

" न्यग्रोधश्चमसैः "–इति । यत्र वै देवा यज्ञेनायजंत । त एतांश्चमसान्न्यौब्जन् । ते न्यंचोऽरोहन् । तस्मान्न्यंचो न्यग्रोधा रोहन्ति ॥ ३ ॥

---

नियुक्तेषु पशुषु । अन्वारब्धे यजमाने । आध्वरिकं प्रोक्षणयजुः " अद्भ्यस्त्वौषधीभ्यः " इत्येतत् ( वा. सं. ६ । ९ ) अनुद्रुत्योच्चार्य । " वायुष्ट्वा " इत्येतदारभ्यते । यजुरिति चैकवचनाच्चतस्रोऽप्येता मंत्रकंडिकाः ( वा. सं. २३ । १३–१६ ) एकं वाक्यमिति दर्शयति–वायुष्ट्वेति । वायुरेवैनमश्वं पचति अग्निमुपोद्बलयति इति ब्रुवत्पाकैर्वायुस्तावन्नित्ये तमर्थं दर्शयति । अग्निर्वै कृष्णग्रीवः, धूममिश्रत्वात् । स च एनं छागैः सह पचति ॥ १ ॥ २ ॥

' न्यग्रोधश्चमसैः ' । न्यग्रोधः स्वकीयैश्चमसैः सोमांगभूतैश्चावत्विति मंत्रार्थः प्रसिद्ध एवेति न व्याख्यातः । चरकाणां हि नैयग्रोधाश्चमसाः पच्यंते तेषु च सत्सु अश्वं आलभते नासत्स्विति। तानुपपादयन् न्यग्रोधाश्चमुपाकरोति । चमसभवत्वं न्यग्रोधस्याह । कथं नाम देवचमसप्रकृतिकन्यग्रोधविकाराश्चमसा मंस्यते । न्यौब्जन् । " उब्ज आर्जवे "–( धा. पा. तु. प. २३ ) अवोमुखांश्चक्रुरित्यर्थः ॥ ३ ॥

---

१–अश्वप्रोक्षणमद्भ्यस्त्वा वायुष्ट्वेति । का. श्रौ. सू. २०। १४५।

शल्मलिर्व्वृध्येति । शल्मलौ व्वृद्धिन्दधाति तस्माच्छल्मलिर्व्वनस्पतीनां व्वर्षिष्ठं व्वर्द्धते ॥ ४ ॥

( तऽए ) एष स्य राथ्यो व्वृषेति । ( स्य ) अश्वेनैव रथꣳ सम्पादयति तस्मादश्वो नान्यद्रथाद्वहति ॥ ५ ॥

पड्भिश्चतुर्भिरेदगन्निति । तस्मादश्वस्त्रिभिस्तिष्ठंस्तिष्ठत्यथ युक्तः सर्वैः पद्भिः सममायुते ॥ ६ ॥

ब्रह्माऽकृष्णश्च नोऽवत्विति । चन्द्रमा वै ब्रह्माऽकृष्णश्चन्द्रमसऽएवैनम्परिददाति नमोऽग्नयऽइत्यग्नयऽएव नमस्करोति ॥ ७ ॥

सꣳशितो रश्मिना रथऽ इति । रश्मिनैव रथꣳ सम्पादयति तस्माद्रथः पर्य्युतो दर्शनीयतमो भवति ॥ ८ ॥

सꣳशितो रश्मिना हयऽ इति । रश्मिनैवाश्वꣳ सम्पादयति तस्मादश्वो रश्मिना प्रतिहतो भूयिष्ठꣳ रोचते ॥ ९ ॥

---

"शल्मलिर्व्वृध्या"–इति । शल्मलौ वृद्धिं दधाति । तस्माच्छल्मलिर्वनस्पतीनां वर्षिष्ठं वर्द्धते ॥४॥

"एष स्य राथ्यो वृषा"–इति । अश्वेनैव रथं संपादयति । तस्मादश्वो नान्यद्रथाद्वहति ॥५॥

" पड्भिश्चतुर्भिरेदगन् " इति । तस्मादश्वस्त्रिभिस्तिष्ठंस्तिष्ठति । अथ युक्तः सर्वैः पड्भिः सममायुते ॥ ६ ॥

" ब्रह्माऽकृष्णश्च नोऽवतु "–इति । चन्द्रमा वै ब्रह्माऽकृष्णः । चन्द्रमस एवैनं परिददाति । " नमोऽग्नये "–( वा. सं. २३ । १३ ) इति । अग्नय एव नमस्करोति ॥ ७ ॥

" संशितो रश्मिना रथः "–इति । रश्मिनैव रथं संपादयति । तस्माद्रथः पर्युतो दर्शनीयतमो भवति ॥ ८ ॥

" संशितो रश्मिना हयः "–इति । रश्मिनैवाश्वं संपादयति । तस्मादश्वो रश्मिना प्रतिहतो भूयिष्ठं रोचते ॥ ९ ॥

---

शल्मलिः । शल्मलिरुपमानभूतः । वृध्या त्वां चतुःसंस्करोति । शाल्मलिरिव कायतो वर्द्धस्वेति मंत्रार्थः । नाप उद्वृद्धे शल्मलिमुपाददानः शल्मलौ वृद्धिं दधातीति गम्यते । नानार्थकार्यवचनम् ॥ ४ ॥

एष स्य राथ्यः । रथे साधुः रथाय हितः राथ्य इत्युक्तेः श्वेतरथस्य संपत्तिर्गम्यते ॥ ५ ॥

आयुते आगच्छति ॥ ६ ॥ ७ ॥

पर्युतः परिवेष्टितः रज्जुभिः परितः प्रतिक्षतः । प्रति ........॥ ८ ॥ ९ ॥

---

१–" पिच्छिला पूर्णी मोचा स्थिरायुः शाल्मलिर्द्वयोः "–( २ । ४ । ४६ ) इत्यमरः । शल्मलिरित्यपि । षष्टिर्वर्षसहस्राणि वने जीवति शाल्मलिरिति तट्टीकायाम् । ( सांवरी ) इति महाराष्ट्रभाषायामुच्यते ॥

सᳬशितोऽअप्स्वप्सुजाऽइति । (त्य) अप्सुयोनिर्वाऽअश्वः स्वयै-वैनं योन्या समर्द्धयति ब्रह्मा सोमपुरोगवऽ इति सोमपुरोगवमेवैनᳬ स्वर्गं लोकङ्गमयति ॥ १० ॥

स्वयम्वाजिंस्तन्वं कल्पयस्वेति । स्वयᳬ रूपं कुरुष्व याद्दशमिच्छसी-त्येवैनं तदाह स्वयं यजस्वेति स्वाराज्यमेवास्मिन्दधाति स्वयं जुषस्वेति स्वयं लोकᳬ रोचयस्व यावन्तमिच्छसीत्येवैनन्तदाह महिमा तेऽन्येन न सन्नशऽइत्यश्वमेव महिम्ना समर्द्धयति ॥ ११ ॥

न वाऽ उऽ एतन्म्रियसे न रिष्यसीति । प्राश्वासयत्येवैनन्तद्देवाँ २॥ऽ इदेषि पथिभिः सुगेभिरिति देवयानानेवैनम्पथो दर्शयति यत्रासते सुकृतो यत्र ते ययुरिति सुकृद्भिरेवैनᳬ सलोकङ्करोति तत्र त्वा देवः सविता दधात्विति सवितैवैनᳬ स्वर्गे लोके दधाति प्रजापतये त्वा जुष्टम्प्रोक्षा-मीत्युपाᳬश्वथोपगृह्णाति ॥ १२ ॥

---

“ संशितो अप्स्वप्सुजाः ”-इति । अप्सुयोनिर्वा अश्वः । स्वयैवैनं योन्या समर्द्धयति । “ ब्रह्मा सोमपुरोगवः ”-इति । सोमपुरोगवमेवैनं स्वर्गं लोकं गमयति ॥ १० ॥

“ स्वयं वाजिंस्तन्वं कल्पयस्व ”-इति । स्वयं रूपं कुरुष्व यादृशमिच्छसीत्येवैनं तदाह-“ स्वयं यजस्व ”-इति । स्वाराज्यमेवास्मिन्दधाति । “ स्वयं जुषस्व ”-इति । स्वयं लोकं रोचयस्व । यावन्तमिच्छसीत्येवैनं तदाह-“ महिमा तेऽन्येन न सन्नशे ”-( वा. सं. २३ । १५ ) इति । अश्वमेव महिम्ना समर्द्धयति ॥ ११ ॥

“ न वा उ एतन्म्रियसे न रिष्यसि ”-इति । प्रश्वासयत्येवैनं तत् । “ देवाँ २ इदेषि पथिभिः सुगेभिः ”-इति । देवयानानेवैनं पथो दर्शयति । “यत्रासते सुकृतो यत्र ते ययुः”-इति । सुकृद्भिरेवैनं सलोकं करोति । “ तत्र त्वा देवः सविता दधातु ”-( वा. सं. २३।१६ ) इति । सवितैवैनं स्वर्गे लोके दधाति । “ प्रजापतये त्वा जुष्टं प्रोक्षामि ”-इत्युपांशु । अथोपगृह्णाति ॥ १२ ॥

---

सोमपुरोगवम् । पूर्वं सोमः प्रदीयते पश्चादश्व इत्येतदभिप्रायमेतत् ॥ १० ॥

स्वयं वाजिंस्तन्वम् यजस्व यजिर्दानकर्मा । यः स्वयं ददाति स्वशरीरादि चेत्यभिप्रायः । “ महिमा तेऽन्येन न सन्नशे ” इति ब्रुवन् अश्वमेव केवलं महिम्ना समर्द्धयति ॥ ११ ॥

प्रजापतये त्वा जुष्टं प्रोक्षामीति । एनं देवतादेशमस्मिन् कुरुते । उपांशु ब्रूयात् । क्रमार्थं चेदं वचनं अप्राप्तत्वात् । आध्वरिकत्वाद्धि पूर्वमेवायं देवतादेशः प्राप्नुयात् । उपांशुत्वं तु सर्वेषां यजुषां सिद्धमनूद्यते ।

(त्य) अग्निः पशुरासीत् । (त्ते) तेनायजन्त सऽ एतं लोकमजयद्यस्मिन्नग्निः स ते लोको भविष्यति तञ्जेष्यसि पिबैताऽअपऽइति यावानग्नेर्व्विजयो यावांल्लोको यावदैश्वर्य्यं तावांस्ते विजयस्तावांल्लोकस्तावदैश्वर्य्यम्भविष्यतीत्येवैनन्तदाह ॥ १३ ॥

वायुः पशुरासीत् । (त्ते) तेनायजन्त सऽ एतं लोकमजयद्यस्मिन्वायुः स ते लोको भविष्यति तञ्जेष्यसि पिबैताऽअपऽइति यावान्वायोर्व्विजयो यावांल्लोको यावदैश्वर्य्यं तावांस्ते विजयस्तावांल्लोकस्तावदैश्वर्य्यम्भविष्यतीत्येवैनन्तदाह ॥ १४ ॥

सूर्य्यः पशुरासीत् । (त्ते) तेनायजन्त सऽएतं लोकमजयद्यस्मिन्त्सूर्य्यः स ते लोको भविष्यति तञ्जेष्यसि पिबैताऽअपऽइति यावान्त्सूर्य्यस्य विजयो यावांल्लोको यावदैश्वर्य्यं तावांस्ते विजयस्तावांल्लोकस्तावदैश्वर्य्यम्भविष्यतीत्येवैनन्तदाह तर्प्पयित्वाऽश्वम्पुनः संस्कृत्य प्रोक्षणीरितरान्पशून्प्रोक्षति तस्यातः ॥ १५ ॥

इति द्वितीयप्रपाठके प्रथमं ब्राह्मणम् ॥ १३।२।१ ॥ (२–७) ॥

---

"अग्निः पशुरासीत । तेनायजंत । स एतं लोकमजयत् । यस्मिन्नग्निः । स ते लोको भविष्यति । तं जेष्यसि । पिबैता अपः"–इति । यावानग्नेर्विजयः । यावान् लोकः । यावदैश्वर्यं तावांस्ते विजयः । तावान् लोकः । तावदैश्वर्यं भविष्यतीत्येवैनं तदाह ॥ १३ ॥

"वायुः पशुरासीत् । तेनायजंत । स एतं लोकमजयत् । यस्मिन् वायुः । स ते लोको भविष्यति । तं जेष्यसि । पिबैता अपः"–इति । यावान् वायोर्विजयः । यावान् लोकः । यावदैश्वर्यम् । तावांस्ते विजयः । तावान् लोकः । तावदैश्वर्यं भविष्यतीत्येवैनं तदाह ॥ १४ ॥

"सूर्यः पशुरासीत् । तेनायजंत । स एतं लोकमजयत् । यस्मिन् सूर्यः । स ते लोको भविष्यति । तं जेष्यसि । पिबैता अपः"–(वा० सं० २३ । १७)–इति । यावान् सूर्यस्य

---

अथोपगृह्णाति । आध्वरिकं यजुरनुद्रुत्येति वर्तते । "आध्वरिकमपां पेरुः" (वा. सं. ६ । १०) इत्युक्त्वा । अग्निः पशुरिति (वा. सं. २३ । १७ ।) आश्वमेधिकैरुपगृह्णाति ॥ १२ ॥

विजयः विजितः । लोकः स्थानं ऐश्वर्यमिच्छानुविधानम् । पुनः संस्कृत्येति वचनं अप्राप्तत्वात् तस्य प्रोक्षणीनां पुनः संस्करणस्यातः परं ब्राह्मणं वक्ष्यत इति शेषः । "अन्यैरेवैनं तत्पशुभिर्व्याकुर्वैति" (श. प.

---

१–अथोपगृह्णात्यपां पेरुरग्निः पशुरिति का. श्रौ. २० । १४६ ॥

देवा वाऽउदञ्चः । स्वर्गं लोकन्न प्प्राजानंस्तमश्वः प्राजानाद्यदश्वेनो-दञ्चो यन्ति स्वर्गस्य लोकस्य प्प्रज्ञात्यै व्वासोऽधिवासं हिरण्यमित्यु-श्वायोपस्तृणन्ति यथा नान्यस्मै पशवे तस्मिन्नेनमधि संज्ञपयन्त्यन्यैरेवैन-न्तत्पशुभिर्व्यावर्त्तयन्ति ॥ १ ॥

घ्नन्ति वाऽएतत्पशुम् । यदेनं संज्ञपयन्ति प्प्राणाय स्वाहाऽपानाय स्वाहा व्व्यानाय स्वाहेति संज्ञप्यमानऽआहुतीर्जुहोति प्प्राणानेवास्मि-न्नेतद्दधाति तथो हास्यैतेन जीवतैव पशुनेष्टम्भवति ॥ २ ॥

---

विजयः । यावान् लोकः । यावदैश्वर्यं तावांस्ते विजयः । तावान् लोकः । तावदैश्वर्यं भविष्यती-त्येवैनं तदाह । तर्पयित्वाऽश्वम् । पुनः संस्कृत्य प्रोक्षणीरितरान्पशून्प्रोक्षति । तस्यातः ॥ १९ ॥

देवा वा उदंचः स्वर्गं लोकं न प्राजानन् । तमश्वः प्राजानात् । यदश्वेनोदंचो यंति । स्वर्गस्य लोकस्य प्रज्ञात्यै । वासोऽधिवासं हिरण्यमित्यश्वायोपस्तृणन्ति । यथा नान्यस्मै पशवे । तस्मिन्नेन-मधि संज्ञपयन्ति । अन्यैरेवैनं तत्पशुभिर्व्याकुर्वन्ति ॥ १ ॥

घ्नन्ति वा एतत्पशुं यदेनं संज्ञपयन्ति । "प्राणाय स्वाहाऽपानाय स्वाहा व्यानाय स्वाहा"–( वा. सं.२३ । १८ ) इति संज्ञप्यमान आहुतीर्जुहोति । प्राणानेवास्मिन्नेतद्द-धाति । तथो हास्यैतेन जीवतैव पशुनेष्टं भवति ॥ २ ॥

---

१३ । २ । ८ । १ ) इति तदत्रापि द्रष्टव्यम् । तर्पयित्वाऽश्वम् । पुनः संस्कृत्य प्रोक्षणीरितरान् पशून् प्रोक्षति । अन्यैरेवैनं तत्पशुभिर्व्याकुर्वंति । इति ॥ १३–१९ ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये त्रयोदशे काण्डे द्वितीयेऽध्याये सप्तमं ब्राह्मणम् ॥ १३ ॥ २ ॥ ७ ॥

देवा वा उदंचः । यदश्वेनोदंचो यंतीत्यनुवाद एव । वासोऽधिवासं हिरण्यमित्येतत् त्रयमश्वायोपस्तृणंती-त्येतत्संबंधार्थम् । वासो यदंतर्द्धानायालम् । अधिवासो यत् आच्छादनायाप्यलम् । तच्च वास उपर्यास्तरणीयम् । तयोरुपरि हिरण्यम् । तस्मिन् त्रय एनं अधि उपरि संज्ञपयन्ति । अन्यैरेव एनमश्वं तत् पशुभिर्विलक्षणं तेभ्यः अधिकं कुर्वंति । एतेन च त्रयेण दर्भो न निवर्त्यते भिन्नार्थत्वात् । एतद्धि तस्मिन्नेनमधि संज्ञपयंतीति संज्ञपनार्थः । "तद्यदेवास्यात्र विशस्यमानस्य किंचित्स्कंदति तदेतस्मिन् प्रतितिष्ठति" इति वचनात् ॥ १ ॥

घ्नंति वा एतत् पशुं यदेनम् । "संज्ञप्यमाने" इति वचनात् परिपशव्यान्तराल इति प्राप्नोति । सूत्र-कारस्तु–"परिपशव्ये हुत्वा प्राणाय स्वाहेति तिस्रोऽपरां जुहोति" ( का. श्रौ. सू. २० । १४९ ) इत्याह ।

---

१–एतत्सूत्रकारेणानुपनिबद्धमप्यनुष्ठेयामिति, अत्र सूत्रे देवयाज्ञिकः ।

२–"हिरण्यवासोऽधिवासेष्वश्वसंज्ञपनम्" ( हिरण्यस्याभ्यर्हितत्वात्सूत्रे पूर्वमुच्चारणमिति देवयाज्ञिकभाष्ये । अतः श्रुत्युक्तः क्रमः ) का. श्रौ. सू. २० । १४८ ॥

३–"पश्चात्तृणमुपास्यति व्वर्षो वर्षीयसीति" ( का. श्रौ. सू. ६ । ४ । १४ ) इति संज्ञपनतृणः ।

( त्यु ) अम्बेऽअम्बिकेऽम्बालिके । न मा नयति कश्चनेति पत्नीरुदानयत्यह्वतैवैनाऽएतदथो मेध्याऽएवैनाः करोति ॥ ३ ॥

गणानां त्वा गणपतिँ हवामहऽइति । पत्न्यः परियन्त्यपह्नुवतऽएवास्माऽएतदतो न्वेवाऽस्मै ह्नुवतेऽथो धुवतऽएवैनन्त्रिः परियन्ति त्रयो वाऽइमे लोकाऽएभिरेवैनं तल्लोकैर्धुवते त्रिः पुनः परियन्ति षट् सम्पद्यन्ते षड्वाऽऋतवऽऋतुभिरेवैनन्धुवते ॥ ४ ॥

---

"अम्बे अम्बिकेऽम्बालिके न मा नयति कश्चन"–( वा. सं. २३।१८ ) इति पत्नीरुदानयति । अह्वतैवैना एतत् । अथो मेध्या एवैनाः करोति ॥ ३ ॥

"गणानां त्वा गणपतिं हवामहे"–( वा. सं. २३ । १९ ) इति पत्न्यः परियन्ति । अपह्नुवत एवास्मा एतत् । अतो न्वेवाऽस्मै ह्नुवते । अथो धुवत एवैनम् त्रिः परियन्ति ।

---

तस्याभिप्रायः–संज्ञप्यमाने इति "वर्तमानसामीप्ये वर्तमानवद्वा" ( पा. सू. ३ । ३ । १३१ ) इत्येवं वर्तमानोपदेशोऽयमिति । कुतः ? "प्राणानेवास्मिन्नेतद्दधाति" इति वाक्यशेषात् । उत्क्रांतानां हि प्राणानां पुनर्विधानं युक्तं, नानुत्क्रांतानामिति ॥ २ ॥

अंबेऽअंबिके इति । "उदानयति" इति वचनात् उदानकरण एष मंत्रः प्रतिभाति । सूत्रकारस्त्वाह–"वाचयति पत्नीर्नयन्नमस्तेऽम्ब इति"–( का. श्रौ. सू. २० । १५० ) तस्याभिप्रायः । इति वाचयन् पत्नीरुदानयतीत्येष श्रुत्यर्थ इति । कुतः ? लिप्सन्तावदेष पत्नीकर्तृकः प्राप्नोति । कथं ? एकैका हि पत्नी इतरास्तिस्र आमन्त्र्य शेषाः परिदेवयमाना दृश्यंते । हे अंबे ! हे अंबिके ! हे अंबालिके ! ( यूयमपुण्यानीषदोत्वस्य ? ) समीपम् । स च पक्षपाती कुत्सितोऽश्वः । कामपि युष्माकं ससस्ति । सुभद्रिकां सुष्ठु भद्रिकां कांपीलवासिनीमिव सुरूपाम् । न तु मां तत्र कश्चिन्नयतीति सप्तमीत्यर्थः । "वर्तमानसामीप्ये वर्तमानवद्वा"–( पा. सू. ३ । ३ । १३१ ) इत्यासन्नसेवने द्रष्टव्यः । एषः ससस्ति । "सस्ति स्वप्ने"–( धा. पा. अ. प. ६९ ) इति धातुः स्रुतिः स्वप्नवचनः सर्वान् लक्षयति । एवं तावत्पत्नीकर्तृकत्वमस्य मंत्रस्य सिद्धम् । अनेनापि तु वाचयतीति वाक्यशेषाद्गम्यते । एवं ह्याह–अह्वत । "ह्वेञ् स्पर्द्धायां शब्दे च"–( धा. पा. भ्वा. उ. १०३३ ) एवैना एतदिति मेध्यतामुच्चारयतश्च उपपन्नं वाचनम् । अथो मेध्याः मेधार्हा एव एनाः करोति मंत्रेण वाचनेनेत्यभिप्रायः । एतदपि वाचने लिंगम् ॥ ३ ॥

गणानां त्वा गणपतिमिति । अनेन मंत्रेण सकृदेव अर्थात्सर्वाः पत्न्यः अश्वं परिभ्रमंति । अपन्हुवते विस्मरंत्येवास्मै । एतत्प्रदक्षिणावर्तनेन संज्ञपनमुन्नयतीत्यर्थः । अपिवाऽविस्मृतमपि निह्नुवति क्षमयंति च ऋत्विग्यजमानाः । एतत्संज्ञपने प्रदक्षिणकरणेन । अथो धुवते । "धूञ् विधूनने"–( धा. पा. तु. उ.

---

१–पत्नीरिति बहुवचनात् सर्वाः पत्नीरिति, अत्रैव सूत्रे देवयाज्ञिकः । अत्रैव सूत्रे कर्कदेवयाज्ञिकौ । "पान्नेजनहस्ता वाचयति नयन्नमस्त आतानेति" का. श्रौ. सू. ६ । ७ । १ । इति प्राकृतवैकृतमंत्रयोर्वाचने समुच्चय इति ।

( तेऽप ) अप वाऽएतेभ्यः प्राणाः क्रामन्ति । ये यज्ञे धुवनन्तन्वते नवः कृत्वः परियन्ति नव वै प्राणाः प्राणानेवात्मन्दधते नैभ्यः प्राणाऽअपक्रामन्त्याहमजानि गर्भधमा त्वमजासि गर्भधमिति प्रजा वै पशवो गर्भः प्रजामेव पशूनात्मन्धत्ते ता ऽउभौ चतुरः पदः सम्प्रसारयावेति मिथुनस्यावरुद्ध्यै स्वर्गे लोके प्रोर्णुवाथामित्येष वै स्वर्गो लोको यत्र पशुँ संज्ञपयन्ति तस्मादेवमाह वृषा वाजी रेतोधा रेतो दधात्विति मिथुनस्यैवावरुद्ध्यै ॥ ९ ॥

इति द्वितीयप्रपाठके द्वितीयं ब्राह्मणम् ॥ १३।२।२ ॥ ( २-८ )

---

त्रयो वा इमे लोकाः । एभिरेवैनं तल्लोकैर्धुवते । त्रिः पुनः परियन्ति । षट् संपद्यन्ते । षड्वा ऋतवः । ऋतुभिरेवैनं धुवते ॥ ४ ॥

अप वा एतेभ्यः प्राणाः क्रामन्ति । ये यज्ञे धुवनं तन्वते । नवकृत्वः परियन्ति । नव वै प्राणाः । प्राणानेवात्मन्दधते । नैभ्यः प्राणा अपक्रामन्ति । " आऽहमजानि गर्भधमा त्वमजासि गर्भधम् "–( वा. सं. २३ । १९ ) इति । प्रजा वै पशवो गर्भः । प्रजामेव पशूनात्मन्धत्ते । " ता उभौ चतुरः पदः संप्रसारयाव "–इति । मिथुनस्यावरुद्ध्यै । " स्वर्गे लोके प्रोर्णुवाथाम् "–इति । एष वै स्वर्गो लोकः । यत्र पशुं संज्ञपयन्ति । तस्मादेवमाह–" वृषा वाजी रेतोधा रेतो दधातु "–( वा. सं. २३ । २० ) इति । मिथुनस्यैवावरुद्ध्यै ॥ ९ ॥

---

(११७) धवित्रैरुपवाजयंति एनमश्वं राजानमिव व्यजनैरेतत् । त्रिः पुनः परियन्ति पत्न्यः । प्रियाणां त्वा प्रियमिति । कुतः ? मंत्रक्रमात् ॥ ४ ॥

अप वा एतेभ्यः । ये यज्ञे धुवनं तन्वते ऋत्विग्यजमानाः । पत्नीप्रयोगद्वारेण तेषामयं दोषः । नवकृत्वः परियन्ति । पत्न्यः पुनरपि त्रिः परियंतीत्यर्थः । नैभ्यः ऋत्विग्यजमानेभ्यः प्राणा अपक्रामंति पत्नीष्वेवं परियंतीषु । आहमजानि गर्भधमिति, महिषी अश्वमुपसंविशति लिंगात् । **स्वर्गे लोके प्रोर्णुवाथामिति ।** एतावपि अधिवासे न संप्रोर्णुवंति यस्मादेष स्वर्गो लोको यत्र पशुं संज्ञपयन्ति तस्मादेवमाह–स्वर्गे लोके प्रोर्णुवाथामिति, वृषा वाजी रेतोधा इति, महिषी अश्वशिश्नमुपस्थे कुरुते ॥ ९ ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये त्रयोदशकाण्डे द्वितीयेऽध्याये अष्टमं ब्राह्मणम् ॥ १३ । २ । ८ ॥

---

१–अश्वं त्रिस्त्रिः परियंति पितृवन्मध्ये गणानां प्रियाणां निधीनामिति । ( का. श्रौ. सू. २० । ६ । १३ ) अत्र कर्कः– गणानां त्वेति त्रिः प्रदक्षिणं, प्रियाणामिति त्रिरप्रदक्षिणं, निधीनां त्वेति च त्रिः प्रदक्षिणं, वसो ममेति च सर्वत्रानुषंगः, तुल्ययोगादिति । सर्वाः पात्नेजनहस्ता एवेति देवयाज्ञिकः ॥

अप वाऽ एतस्मात् । (च्छ्री) श्री राष्ट्रङ्क्रामति योऽश्वमेधेन यजते ॥ १ ॥

(तऽऊ) ऊर्ध्वामेनामुच्छ्रापयेति । श्रीर्वै राष्ट्रमश्वमेधः श्रियमेवास्मै राष्ट्रमूर्ध्वमुच्छ्रयति ॥ २ ॥

गिरौ भारᳬ हरन्निवेति । श्रीर्वै राष्ट्रस्य भारः श्रियमेवास्मै राष्ट्रᳬ सन्नह्यत्यथो श्रियमेवास्मिन्राष्ट्रमधि निदधाति ॥ ३ ॥

(त्यु) अथास्यै मध्यमेधतामिति । श्रीर्वै राष्ट्रस्य मध्यᳬ श्रियमेव राष्ट्रे मध्यतोऽन्नाद्यन्दधाति ॥ ४ ॥

शीते वाते पुनन्निवेति । क्षेमो वै राष्ट्रस्य शीतं क्षेममेवास्मै करोति॥५॥

---

अप वा एतस्माच्छ्री राष्ट्रं क्रामति । योऽश्वमेधेन यजते ॥ १ ॥

" ऊर्ध्वामेनामुच्छ्रापय "–इति । श्रीर्वै राष्ट्रमश्वमेधः । श्रियमेवास्मै राष्ट्रमूर्ध्वमुच्छ्रयति॥२॥

" गिरौ भारं हरन्निव "–इति । श्रीर्वै राष्ट्रस्य भारः । श्रियमेवास्मै राष्ट्रं सन्नह्यति । अथो श्रियमेवास्मिन् राष्ट्रमधि निदधाति ॥ ३ ॥

" अथास्यै मध्यमेधताम् "–इति । श्रीर्वै राष्ट्रस्य मध्यम् । श्रियमेव राष्ट्रे मध्यतोऽन्नाद्यं दधाति ॥ ४ ॥

" शीते वाते पुनन्निव "–( वा. सं. २३ । २६ ) इति । क्षेमो वै राष्ट्रस्य शीतम् । क्षेममेवास्मै करोति ॥ ५ ॥

---

अप वा एतस्मात् । " तयोः शयानयोरश्वं यजमानोऽभिमेथत्युत्सक्थ्या अवगुदं व्रेहीति " ( श. प. १३ । ५ । २ । ३ । ) " अथाध्वर्युः कुमारीमभिमेथति " ( श. प. १३ । ५ । २ । ४ ) इत्यादि वक्ष्यते । तत्र यासु अभिमेथिकासु किंचिद्दर्शनं गूढमस्ति । तासु तदत्र ब्राह्मणमुच्यते । अपक्रामति वै एतस्मात् श्रीः राष्ट्रात्मिका ऋत्विग्भ्यो दीयमाना । यः अश्वमेधेन यजते । तत्प्रतिसमाधौ भार्या अभिमेथिका कर्त्तव्या । तासु एतानि वचनानि संति ॥ १ ॥

ऊर्ध्वामेनामुच्छ्रापयेत्यादि । तैश्चलं श्रियोऽपक्रमणं चेति प्रतिसमाधीयते इति ब्राह्मणस्य समस्तस्यार्थः ऊर्ध्वामेनां योनिकां शाटिकां वा । उच्छ्रापयेति बाह्यः प्रसिद्ध एव अभिमेथिकार्थः । आंतरस्तु श्रीर्वै राष्ट्रं अश्वमेधश्रियः कारणमित्यर्थः । ततश्च श्रियमेव राष्ट्रमस्मै यजमानाय दूहता ऊर्ध्वमुच्छ्रयतोऽवक्रमत ॥ २ ॥

एवं गिरौ भारं हरन्निवेत्यादिष्वपि आंतरार्थं ब्राह्मणं व्याख्येयम् ॥ ३–५ ॥

यकाऽसकौ शकुंतिकेति । विड्वै शकुन्तिकाऽऽहलगिति वञ्चतीति विशो वै राष्ट्राय वञ्चन्त्याहन्ति गभे पसो निगल्गलीति धारकेति विड्वै गभो राष्ट्रम्पसो राष्ट्रमेव विश्याहन्ति तस्माद्राष्ट्री विशङ्घातुकः ॥ ६ ॥

( को ) माता च ते पिता च तऽ इति । ( तौ ) इयम्वै माताऽसौ पिताऽऽभ्यामेवैनᳪं स्वर्गं लोकङ्गमयत्यग्रम्वृक्षस्य रोहतऽइति श्रीर्वै राष्ट्रस्याग्रᳪं श्रियमेवैनᳪं राष्ट्रस्याग्रङ्गमयति प्रतिलामीति ते पिता गभे मुष्टिमतᳪंसयदिति विड्वै गभो राष्ट्रं मुष्टी राष्ट्रमेव विश्याहन्ति तस्माद्राष्ट्री विशङ्घातुकः ॥ ७ ॥

( को ) यद्धरिणो यवमत्तीति । विड्वै यवो राष्ट्रᳪं हरिणो विशमेव राष्ट्रायाद्याङ्करोति तस्माद्राष्ट्री विशमत्ति न पुष्टम्पशु मन्यतऽइति तस्माद्राजा पशून्न पुष्यति शूद्रा यदर्य्यजारा न पोषाय धनायतीति तस्माद्वैशीपुत्रन्नाभिषिञ्चति ॥ ८ ॥

( त्यु ) अप वाऽ एतेभ्यः प्राणाः क्रामन्ति । ये यज्ञे पूताम्वाचं वदन्ति

---

"यकाऽसकौ शकुन्तिका"–इति । विड्वै शकुन्तिका । "आहलगिति वञ्चति"–इति । विशो वै राष्ट्राय वञ्चन्ति । "आहन्ति गभे पसो निगल्गलीति धारका"–( वा. सं. २३ । २२ ) इति । विड्वै गभः । राष्ट्रं पसः । राष्ट्रमेव विश्याहन्ति । तस्माद्राष्ट्री विशं घातुकः ॥ ६ ॥

"माता च ते पिता च ते"–इति । इयं वै माता । असौ पिता । आभ्यामेवैनं स्वर्गं लोकं गमयति । "अग्रं वृक्षस्य रोहतः"–इति । श्रीर्वै राष्ट्रस्याग्रम् । श्रियमेवैनं राष्ट्रस्याग्रं गमयति । "प्रतिलामीति ते पिता गभे मुष्टिमतंसयत्" ( वा. सं. २३ । २४ ) इति । विड्वै गभः । राष्ट्रं मुष्टिः । राष्ट्रमेव विश्याहन्ति । तस्मात् राष्ट्री विशं घातुकः ॥ ७ ॥

"यद्धरिणो यवमत्ति"–इति । विड् वै यवः । राष्ट्रं हरिणः । विशमेव राष्ट्रायाद्यां करोति । तस्माद्राष्ट्री विशमत्ति । "न पुष्टं पशु मन्यते"–इति । तस्मात् राजा पशून्न पुष्यति । "शूद्रा यदर्यजारा न पोषाय धनायति"–( वा. सं. २३ । ३० ) इति । तस्माद्वैशीपुत्रं नाभिषिञ्चति ॥ ८ ॥

अप वा एतेभ्यः प्राणाः क्रामन्ति । ये यज्ञे पूतां वाचं वदन्ति । "दधिक्राव्णो अकारि-

दधिक्राव्णोऽअकारिषमिति सुरभिमतीमृचमन्ततोऽन्वाहुर्व्वाचमेव पुनते नैभ्यः प्राणाऽअपक्रामन्ति ॥ ९ ॥

इति द्वितीयप्रपाठके तृतीयं ब्राह्मणम् ॥ १३।२।३ ॥ ( २-९ ॥ )

यदसिपथान्कल्पयन्ति । सेतुमेव तᳫं सङ्क्रमणं यजमानः कुरुते स्वर्ग्गस्य लोकस्य समष्ट्यै ॥ १ ॥

सूचीभिः कल्पयन्ति । विशो वै सूच्यो राष्ट्रमश्वमेधो विशश्चैवास्मिन्राष्ट्रञ्च समीची दधाति हिरण्मय्यो भवन्ति तस्योक्तं ब्राह्मणम् ॥ २ ॥

(त्र)त्रय्यः सूच्यो भवन्ति । लोहमय्यो रजता हरिण्यो दिशो वै लोहमय्योऽवान्तरदिशो रजताऽऊर्ध्वा हरिण्यस्ताभिरेवैनङ्कल्पयन्ति तिरश्चीभिश्चोर्ध्वाभिश्च बहुरूपा भवन्ति तस्माद्बहुरूपा दिशो नानारूपा भवन्ति तस्मान्नानारूपा दिशः ॥ ३ ॥

इति द्वितीयप्रपाठके चतुर्थं ब्राह्मणम् ॥ १३-२-४ ॥ ( २-१० ) ॥

---

षम् "-( वा. सं. २३ । ३२ ) इति सुरभिमतीमृचमन्ततोऽन्वाहुः । वाचमेव पुनते । नैभ्यः प्राणा अपक्रामन्ति ॥ ९ ॥

यदसिपथान् कल्पयन्ति । सेतुमेव तं संक्रमणं यजमानः कुरुते । स्वर्गस्य लोकस्य समष्ट्यै॥ १॥
सूचीभिः कल्पयन्ति । विशो वै सूच्यः । राष्ट्रमश्वमेधः । विशं चैवास्मिन् राष्ट्रं च समीची दधाति । हिरण्मय्यो भवन्ति । तस्योक्तं ब्राह्मणम् ॥ २ ॥

त्रय्यः सूच्यो भवन्ति । लोहमय्यो रजता हरिण्यः । दिशो वै लोहमय्यः । अवान्तरादिशो रजताः । ऊर्ध्वा हरिण्यः । ताभिरेवैनं कल्पयन्ति । तिरश्चीभिश्चोर्ध्वाभिश्च । बहुरूपा भवन्ति । तस्माद्बहुरूपा दिशो नानारूपा भवन्ति । तस्मान्नानारूपा दिशः ॥ ३ ॥

---

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये त्रयोदशे कांडे द्वितीयेऽध्याये नवमं ब्राह्मणम् ॥ १३ । २ । ९ ॥

यदसिपथान् । असेः शासस्य मार्गाः असिपथाः, तान् सूचीभिः लौह्यादिभिः कल्पयंति । इत्येतदत्र ब्राह्मणमुच्यते ॥ १ ॥

विशो वै सूच्यः । बहुत्वात् क्षुद्रत्वाच्च । तास्ताम्रमय्यः । रजतमय्यः । हिरण्यलोहमय्यः । दिशो वै लोहमय्यः । इत्याद्यागामिकाः ॥ २ ॥ ३ ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये त्रयोदशे काण्डे द्वितीयेऽध्याये दशमं ब्राह्मणम् ॥ १३ । २ । १० ॥

प्रजापतिरकामयत । महान्भूयान्त्स्यामिति सऽएतावश्वमेधे महिमानौ ग्रहावपश्यत्तावजुहोत्ततो वै स महान्भूयानभवत्स यः कामयेत महान्भूयान्त्स्यामिति सऽएतावश्वमेधे महिमानौ ग्रहौ जुहुयान्महान्हैव भूयान्भवति ॥ १ ॥

वपामभिजुहोति । यजमानो वाऽ अश्वमेधो राजा महिमा राज्येनैवैनमुभयतः परिगृह्णाति पुरस्तात्स्वाहाकृतयो वाऽअन्ये देवाऽउपरिष्टात्स्वाहाकृतयोऽन्ये तानेवैतत्प्रीणाति स्वाहा देवेभ्यो देवेभ्यः स्वाहेति राज्ञा वपाम्परियजति ये चैवास्मिंल्लोके देवा यऽउ चामुष्मिंस्तानेवैतत्प्रीणाति तऽएनमुभये देवाः प्रीताः स्वर्गं लोकमभिवहन्ति ॥ २ ॥

इति द्वितीयप्रपाठके पञ्चमं ब्राह्मणम् ॥ १३।२।५ ॥ ( २–११ )

इति द्वितीयोऽध्यायः समाप्तः ॥ १३–२ ॥
कंडिकासंख्या ॥ ८७ ॥

---

प्रजापतिरकामयत । महान् भूयान् स्यामिति । स एतावश्वमेधे महिमानौ ग्रहावपश्यत् तावजुहोत् । ततो वै स महान् भूयानभवत् । स यः कामयेत–महान् भूयान् स्यामिति । स एतावश्वमेधे महिमानौ ग्रहौ जुहुयात् । महान् हैव भूयान् भवति ॥ १ ॥

वपामभिजुहोति । यजमानो वा अश्वमेधः । राजा महिमा । राज्येनैवैनमुभयतः परिगृह्णाति । पुरस्तात्स्वाहाकृतयो वा अन्ये देवाः । उपरिष्टात्स्वाहाकृतयोऽन्ये । तानेवैतत्प्रीणाति । "स्वाहा देवेभ्यः, देवेभ्यः स्वाहा"–( वा० सं० २३ । २ । ४ ) इति राज्ञा वपां परियजति । ये चैवास्मिन् लोके देवाः । य उ चामुष्मिन् । तानेवैतत्प्रीणाति । त एनमुभये देवाः प्रीताः स्वर्गं लोकमभिवहन्ति ॥ २ ॥

---

प्रजापतिः महान् व्यापिशरीरः । यद्वक्ष्यति–"सर्वा व्यष्टीर्व्यश्नुवीयेति"–( श. प. १३ । ४ । १ । १ ) तदेतद्यूपात्प्रागवस्थायाः बहुतरः कामः । यद्वक्ष्यति–"सर्वान्कामानाप्नुयामिति"–( श. प. १३ । ४ । १ । १ ) तदेतत् महिमानौ महिमप्राप्त्यर्थौ ग्रहौ–"हिरण्यगर्भो, यः प्राणतः"–( वा. सं. २३ । १–३ ) इत्येतन्मंत्रकौ । "स यः कामयेत" इति तु क्रतुफलानुवाद एव प्राप्तत्वात् । "महिमानौ ग्रहौ जुहुयात्" इति ग्रहयोर्होमोत्पत्तिवाक्यम् ॥ १ ॥

वपामभिजुहोति । वपाहोममभितो महिमानौ जुहोतीति क्रमवचनम् । यजमानो वै । अश्ववपाहोमः अश्वमेधः । राजा राज्यकारणं महिमा ग्रहः । राज्येनैव महिमात्मकेन एनं यजमानमुभयतः परिगृह्णाति । पुरस्तात्स्वाहाकृतयश्च केचिद्देवाः । उपरिष्टात्स्वाहाकृतयः केचित् । तानेव एतत्प्रीणाति । महिमानौ "स्वाहा देवेभ्यो

देवेभ्यः स्वाहा" इत्येवं जुहोति । राज्ञा च महिमावपां परियजति इति परिगृह्य, यजति इति यत्; तेन च अस्मिन् लोके काले वा ये देवाः चामुष्मिन् तानेवैतत्प्रीणातीति दर्शनांतरम् ॥ २ ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये त्रयोदशे काण्डे द्वितीयेऽध्याये एकादशं ब्राह्मणम् ॥ ( १३ । २ । ११ ) ॥

नागस्वामिसुतोऽवन्त्यां पाराशर्यो वसन्हरिः ।
श्रुत्यर्थं दर्शयामास शक्तितः पौष्करीयकः ॥ १ ॥

श्रीमतोऽवन्तिनाथस्य विक्रमार्कस्य भूपतेः ।
धर्माध्यक्षो हरिस्वामी व्याख्यच्छातपथीं श्रुतिम् ॥ २ ॥

भूभर्त्रा विक्रमार्केण क्लृप्तां कनकवेदिकाम् ।
दानायाध्यस्य कृतवान् श्रुत्यर्थविवृतिं हरिः ॥ ३ ॥

इति श्रीसर्वविद्यानिधानकवीन्द्राचार्यसरस्वतीनां श्रीहरिस्वामिनां कृतौ माध्यन्दिनीयशतपथ-ब्राह्मणभाष्ये त्रयोदशे काण्डे द्वितीयोऽध्यायः समाप्तः ॥ १३–२ ॥



# अथ तृतीयेऽध्याये प्रथमं ब्राह्मणम् ।
## द्वितीयप्रपाठके च षष्ठं ब्राह्मणम् ।

प्रजापतेरक्ष्यश्वयत् । (त) तत्परापतत्ततोऽश्वः समभवद्यदश्वयत्तदश्वस्याश्वत्वन्तद्देवाऽअश्वमेधेनैव प्रत्यदधुरेष ह वै प्रजापतिꣳ सर्वङ्करोति योऽश्वमेधेन यजते सर्वऽएव भवति सर्वस्य वाऽएषा प्रायश्चित्तिः सर्वस्य भेषजꣳ सर्वम्वाऽएतेन पाप्मानन्देवाऽ अतरन्नपि वाऽएतेन ब्रह्महत्यामतरंस्तरति सर्वम्पाप्मानन्तरति ब्रह्महत्यां योऽश्वमेधेन यजते ॥ १ ॥

(तऽउ) उत्तरम्वै तत्प्रजापतेरक्ष्यश्वयत् । (त) तस्मादुत्तरतोऽश्वस्यावद्यन्ति दक्षिणतोऽन्येषाम्पशूनाम् ॥ २ ॥

---

**अथाश्वस्य प्राजापत्याक्षिप्रभवत्वं, ब्रह्महत्याप्रायश्चित्तिश्च ।**

प्रजापतेरक्ष्यश्वयत् । तत्परापतत् । ततोऽश्वः समभवत् । यदश्वयत् । तदश्वस्याश्वत्वम् । तद्देवा अश्वमेधेनैव प्रत्यदधुः । एष ह वै प्रजापतिं सर्वं करोति । योऽश्वमेधेन यजते । सर्व एव भवति । सर्वस्य वा एषा प्रायश्चित्तिः । सर्वस्य भेषजम् । सर्वं वा एतेन पाप्मानं देवा अतरन् । अपि वा एतेन ब्रह्महत्यामतरन् । तरति सर्वं पाप्मानम् । तरति ब्रह्महत्याम् । योऽश्वमेधेन यजते ॥ १ ॥

उत्तरं वै तत्प्रजापतेरक्ष्यश्वयत् । तस्मादुत्तरतोऽश्वस्यावद्यन्ति । दक्षिणतोऽन्येषां पशूनाम् ॥२॥

---

प्रजापतेरक्षीति । "सोऽकामयत मेध्यं म इदं स्यादात्मन्व्यनेन स्यामिति ततोऽश्वः समभवत्" (श. प. १० । ६ । ५ । ७ ।) इति सकलप्राजापत्यकायात्मता अश्वस्य दर्शिता । "उषा वा अश्वस्य मेध्यस्य शिरः" (श. प. १० । ६ । ४ । १) इति तस्यैवावयवा दर्शिताः । तस्यैव सर्वप्राप्तिफलं वक्ष्यते । इह तु प्राजापत्याक्षिप्रभवत्वं ब्रह्महत्याप्रायश्चित्तं चोच्यते । कथं नाम ? अनेनैव दर्शनेन प्रायश्चित्तिं प्रयुञ्जीत । अश्वयत् । स्वतंत्रतया बहिः पतितं गतम् । ततः अक्ष्णः देवतामहाभाग्यात् अश्वः संबभूव । यत् अश्वशब्दनिर्वचनम् । दर्शनार्थं तत् । तत् अक्षि देवा अश्वमेधेन क्रतुना तस्मिन्प्रजापतौ प्रतीपं स्थापितवन्तः । एष एव प्रजापतिं सर्वमविकलं अधियज्ञं करोति । योऽश्वमेधेन क्रतुना यजते । स च तदनुकारेणाविकल एव भवति । सर्वस्य च सर्वप्रकारस्य पातकोपपातकादेः पापस्य एषा अश्वमेधात्मिका प्रायश्चित्तिः । सर्वस्य भेषजम् । सर्वस्य जन्मान्तरेकृतपापप्रभवव्याधेः एषः अश्वमेधः भेषजम् । "तरति ब्रह्महत्याम्" इति प्रायश्चित्तान्तरैः सह विकल्पसिद्ध्यर्थः । इतरत् सर्वं पाप्मानमित्येव तरति ॥ १ ॥

उत्तरं वै । "तस्मादुत्तरतोऽश्वस्यावद्यन्ति" इति पुनर्वचनं दर्शनसंबंधार्थम् ॥ २ ॥

---

१—उत्क्रांते यजमाने पापकृतोऽश्वयंस्यचरित्वा व्रतानि । अश्वमेधपूताख्यास्ते । का. श्रौ. सू. २० । २०४ । २०५ ॥

( म्वै ) व्वैतसः कुटो भवति । ( त्य ) अप्सुयोनिर्व्वाऽअश्वोऽप्सुजा व्वेतसः स्वयैवैनं योन्या समर्द्धयति ॥ ३ ॥

चतुष्टोम स्तोमो भवति । सरड्वाऽअश्वस्य सक्थ्यावृहत्तद्देवाश्चतुष्टोमेनैव स्तोमेन प्प्रत्यदधुर्य्यच्चतुष्टोम स्तोमो भवत्यश्वस्यैव सर्व्वत्वाय सर्व्वस्तोमोऽतिरात्रऽउत्तममहर्भवति सर्व्वम्वै सर्व्वस्तोमोऽतिरात्रः सर्व्वमश्वमेधः सर्व्वस्याप्त्यै सर्व्वस्यावरुद्ध्यै ॥ ४ ॥

इति द्वितीयप्रपाठके षष्ठं ब्राह्मणम् ॥ १३।२।६ ॥ ( ३–१ ) ॥

परमेण वाऽ एष स्तोमेन जित्वा । चतुष्टोमेन कृतेनायानामुत्तरेऽहन्नेकविᳬंशे प्प्रतिष्ठायाम्प्रतितिष्ठत्येकविᳬंशात्प्रतिष्ठायाऽ उत्तरमहरृतूनन्वारोहत्यृतवो वै पृष्ठान्यृतवः सम्वत्सरऽ ऋतुष्वेव सम्वत्सरे प्रतितिष्ठति ॥ १ ॥

---

वैतसः कटो भवति । अप्सुयोनिर्वा अश्वः । अप्सुजा वेतसः । स्वयैवैनं योन्या समर्द्धयति ॥ ३॥ चतुष्टोमः स्तोमो भवति । सरड्वा अश्वस्य सक्थ्यावृहत् । तद्देवाश्चतुष्टोमेनैव स्तोमेन प्रत्यदधुः । यच्चतुष्टोमः स्तोमो भवति । अश्वस्यैव सर्वत्वाय सर्वस्तोमोऽतिरात्र उत्तममहर्भवति । सर्वं वै सर्वस्तोमोऽतिरात्रः । सर्वमश्वमेधः सर्वस्याप्त्यै । सर्वस्यावरुद्ध्यै ॥ ४ ॥

परमेण वा एष स्तोमेन जित्वा चतुष्टोमेन कृतेनायानाम् उत्तरेऽहन्नेकविंशे प्रतिष्ठायां प्रति-

---

वैतसः कटो भवति । अश्वैवतसावप्सुयोनी इति यत्र वदंतीत्यपि दर्शनसम्बधार्थमेव पुनर्वचनम् ॥ ३ ॥ चतुष्टोमः । " चतुरुत्तर स्तोमोः भवति तस्य चतसृषु बहिःपवमानमष्टास्वष्टास्वाज्यानि "–( श. प. १३ । ९ । १ । १ ) इत्यादिश्चतुष्टोमः । उत्तरपदलोपात् । स चतुरुत्तरः स्तोमः । अश्वमेधस्य प्रथमेऽहनि भवति । कुतः ? " एकविंशं मध्यममहः "–( श. प. १३ । ३ । ३ । ३ ) "सर्वस्तोमोऽतिरात्र उत्तममहः "–( श. प. १३ । ३ । ३ । ६ । ) इत्युत्तरयोरह्नोः स्तोमांतरवचनात् । " अथ प्रातर्गोलमस्य चतुरुत्तरस्तोमो भवति"–( श. प. १३ । ९ ।१।१ ) इति सरट् कृकलासः । अश्वस्य सक्थि आवृहत् आवृढवान् अर्चनात् । सर्वं वै सर्वस्तोमोऽतिरात्रः । स्तोमात्मनैव सर्वम् । सर्वमश्वमेधः सर्वाप्तिकारणत्वात् ॥ ४ ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये त्रयोदशे काण्डे तृतीयेऽध्याये प्रथमं ब्राह्मणम् ॥ १३ । ३ । १ ॥

परमेण वा इति । एष प्रकृतो यजमानः परमेण उत्कृष्टेन स्तोमेन एनं लोकं प्रथमेऽहनि जित्वा, उत्तरं

---

१–वेतसशाखाश्च प्राजापत्यानाम् । अश्वस्य वा । का. श्रौ. सू. २० । १८९ । १९० ॥ ( वाऽवधारणे, अश्वस्यैवावस्तीत्यर्थः । न प्राजापत्यानामिति सूत्रार्थः । )

शक्कर्य्यः पृष्ठम्भवन्ति । (न्त्य) अन्युदन्यच्छन्दोऽन्येऽन्ये वाऽ अत्र पशवऽ आलभ्यन्तऽ उतेव ग्राम्याऽ उतेवारण्या यच्छक्कर्य्यः पृष्ठम्भवन्त्यश्वस्यैव सर्वत्वायान्ये पशवऽ आलभ्यन्तेऽन्येऽन्ये हि स्तोमाः क्रियन्ते ॥ २ ॥

तदाहुः । (न्नैं) नैते सर्व्वे पशवो यदजावयश्चारण्याश्चैते वै सर्व्वे पशवो यद्गव्याऽइति गव्यानुत्तमेऽहन्नालभतऽ एते वै सर्व्वे पशवो यद्गव्याः

---

तिष्ठति । एकविंशात्प्रतिष्ठाया उत्तरमहर्ऋतूनन्वारोहति । ऋतवो वै पृष्ठानि । ऋतवः संवत्सरः । ऋतुष्वेव संवत्सरे प्रतितिष्ठति ॥ १ ॥

शाक्कर्यः पृष्ठं भवन्ति । अन्यदन्यच्छन्दः । अन्येऽन्ये वा अत्र पशव आलभ्यन्ते । उतेव ग्राम्याः । उतेवारण्याः । यच्छक्कर्यः पृष्ठं भवन्ति । अश्वस्यैव सर्वत्वायान्ये पशव आलभ्यन्ते । अन्येऽन्ये हि स्तोमाः क्रियन्ते ॥ २ ॥

तदाहुः—नैते सर्वे पशवः । यदजाऽवयश्च आरण्याश्च । एते वै सर्वे । पशवः । यद्गव्या इति ।

---

अहनि एकविंशे प्रतितिष्ठतीति संबंधः । कीदृशेन ? पुनः परमेण स्तोमेन इत्यत आह चतुष्टोमेन वक्ष्यमाणेन चतुरक्षराधिकेनेत्यर्थः । किंच—कृतेनायानाम् । अधर्मपादाः कलिद्वापरत्रेताकृताख्या द्यूतानुरूपेण जयाय पराजयाय द्यूतपरावर्ताय परिवस्थानं यंति य इति अयाः । तेषां मध्ये , यश्चातुष्कात्मकः अयः । स चतुष्पादधर्मकस्य कृतयुगस्य प्रतिरूपमिति स चतुष्कसामान्यात् कृतमित्युच्यते लोके । अत्र चतुकसामान्यादेव चतुरुत्तरस्तोमः कृतमित्युक्तः । तेन कृतस्थानीयेन स्तोमेन जित्वा अधियज्ञमुत्तरेऽहनि एकविंशे स्तोमको अधिदैवम्—“ द्वादश मासाः पंचर्तवस्त्रयो लोका आदित्य एकविंशः ”—( श. प. १३ । ९ । ४ । २६ ) इत्येतस्मिन्नेकविंशे सर्वभूतप्रतिष्ठात्मके प्रतितिष्ठति । एकविंशाद्वितीयायाः बहुप्रतिष्ठात्मकात् उत्तरं उत्तर तृतीयमहः उच्चरन् आरोहति । ऋत्वात्मके तृतीये अहन्यारोहति । कथं ? पुनस्तद्दतव इत्यत आह—‘ ऋतवो वै पृष्ठानि ’ पृष्ठसाधनानि रथंतरादीनि सामानि षट्सामन्यात् । ऋतवः किमित इत्यत आह—ऋतवः संवत्सरः ऋतुष्वेव संवत्सरे औद्गात्रेणानेन प्रतितिष्ठति ॥ १ ॥

शक्कय इति । शक्कर्यः, पृथक्कायो महानाम्न्यः सीमा इत्येवमाख्याः “ विदामघवन् ”—इत्यादयः । ताभिः अत्र तत्स्थं शाकरं नाम साम लक्ष्यते । शक्कर्यः स्वसामप्रतीताः । पृष्ठं भवन्ति । शाकरं साम स्वासु ऋक्षु गीतं पृष्ठसाधनं भवतीत्यर्थः । अन्यदन्यच्छन्दः शक्करीषु । अन्ये अन्ये वा अत्र मध्यमे अहनि पशव आलभ्यंते उत ग्राम्या उतारण्याः । तत्र यत् शक्कर्यः पृष्ठं भवंति । तत् अश्वस्य सर्वत्वाय शक्तयो हि शक्कर्यः । तासु क्रियमाणासु शक्तिमान् सकलो अश्वो भवतीत्यभिप्रायः । अन्ये पशव आलभ्यंते । कस्मादिति शेषः । अन्ये अन्ये हि स्तोमाः अश्वमेधे क्रियन्ते चतुष्टोमाः एकविंशत्रिवृदादयः । ततश्चाध्वर्यवेऽपि पशुभिरन्यैर्भाव्यमित्यभिप्रायः ॥ २ ॥

ये पूर्वयोरह्नोरालभ्यंते अजावयः । ते न सर्वे पशवः । एते त्रयः प्रतितिष्ठाः सर्वे पशवो वै गव्याः ।

सर्व्वानेव पशूनालभते व्वैश्वदेवा भवन्ति व्वैश्वदेवो वाऽअश्वोऽश्वस्यैव सर्व्वत्वाय बहुरूपा भवन्ति तस्माद्बहुरूपाः पशवो नानारूपा भवन्ति तस्मान्नानारूपाः पशवः ॥ ३ ॥

इति द्वितीयप्रपाठके सप्तमं ब्राह्मणम् ॥ १३-२-७ ॥ (३-२) ॥

यत्तिस्रोऽनुष्टुभो भवन्ति । तस्मादश्वस्त्रिभिस्तिष्ठंस्तिष्ठति यच्चतस्रो गायत्र्यस्तस्मादश्वः सर्व्वैः पद्भिः प्रतिदधत्पलायते परमम्वाऽ एतच्छन्दो यदनुष्टुप्परमोऽश्वः पशूनाम्परमश्चतुष्टोम स्तोमानाम्परमेणैवैनम्परमतां गमयति ॥ १ ॥

---

गव्यानुत्तमेऽहन्नालभते । एते वै सर्वे पशवः । यद्गव्याः । सर्वानेव पशूनालभते । वैश्वदेवा भवन्ति । वैश्वदेवो वा अश्वः । अश्वस्यैव सर्वत्वाय । बहुरूपा भवन्ति । तस्माद्बहुरूपाः पशवः । नानारूपा भवन्ति । तस्मान्नानारूपाः पशवः ॥ ३ ॥

यत्तिस्रोऽनुष्टुभो भवन्ति । तस्मादश्वस्त्रिभिस्तिष्ठंस्तिष्ठति । यच्चतस्रो गायत्र्यः । तस्मादश्वः सर्वैः पद्भिः प्रतिदधत्पलायते । परमं वा एतच्छन्दः । यदनुष्टुप् । परमोऽश्वः पशूनाम् । परमश्चतुष्टोमः स्तोमानाम् । परमेणैवैनं परमतां गमयति ॥ १ ॥

---

गाव इति प्राप्ते स्वार्थिकस्तद्धितः क्रियते । पुनस्तानालभत इति वक्ष्यति । "चतुर्विंशतिं त्वेवैतान् गव्यानालभेत द्वादशभ्यो देवताभ्यः"—(श. प. १३। ९। ३। ११) इति । एकादशिन्यौ द्वे द्वौ च प्राजापत्यौ गावौ चेत्यभिप्रायः । वैश्वदेवाः ते गव्याः भवन्ति । ता एव द्वादश देवताः वैश्वदेवा इत्यनुवाद एव । वैश्वदेवो वै अश्वः । (सादोदयः । तस्मिन् या देवता नंता भक्ता इत्यभिप्रायः । ?) बहुरूपाः । यः एकैकः पशुर्बहुरूपः । नैकवर्ण इत्यर्थः । नानारूपाः यादृश एको न तादृशः अन्य इत्यर्थः ॥ ३ ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये त्रयोदशे काण्डे तृतीयेऽध्याये द्वितीयं ब्राह्मणम् ॥ १३ । ३ । २ ॥

यत्तिस्रोऽनुष्टुभः । चतुष्टोमः स्तोमो भवतीत्यत्रैव दर्शनांतरमुच्यते । तस्मिन् हि चतुष्टोमे चतसृषु गायत्रीषु बहिष्पवमानो भवति । याश्च तिस्रोऽनुष्टुभो भवंति । तत्रेदमुच्यते । यस्मात् तिस्रः अनुष्टुभस्तद्बहिष्पवमानो भवति । तस्मात्तदनुकारेण अश्वस्त्रिभिः पादैस्तिष्ठति । यस्मात्तु स्वाभाविक्यश्चतस्रो गायत्र्यः । तस्मादश्वः चतुर्भिः पादैः पलायते धावति । परमं वा एतच्छंद इति दर्शनान्तरम् । वाग्वै अनुष्टुप् वाक् सर्वाणि च्छन्दांसि । इत्येवमनुष्टुप् परमं छन्दः । परमोऽश्वः पशूनां महोपकारकत्वात् प्रजापतिकायावयवत्वाच्च । परमश्चतुष्टोमः कृतात्मकत्वात्, अश्वसक्थिप्रतिसमाधानकरणत्वाच्च । परमेणैवैनं एतेन त्रयेण एनं यजमानं परमतां श्रेष्ठतां गमयत्युद्गाता ॥ १ ॥

शुक्कर्य्यः पृष्ठम्भवन्ति । ( न्त्य ) अन्युदन्यच्छुन्दोऽन्येऽन्ये हि स्तोमाः क्रियन्ते यच्छुक्कर्य्यः पृष्ठम्भुवन्त्युश्वस्यैव सर्व्वत्वाय ॥ २ ॥

( यै ) एकविᳬँशुम्मध्यमम्हर्भवति । ( त्य ) असौ वाऽ आदित्युऽएकविᳬँशुः सोऽश्वमेधः स्वेनैवैनᳬँ स्तोमेन स्वायान्देवुतायाम्प्रतिष्ठापयति ॥ ३ ॥

वामदेव्युम्मैत्रावरुणसाम भवति । प्रजापतिर्वै वामदेव्युम्प्राजापत्योऽश्वः स्वयैवैनन्देवुतया समर्द्धयति ॥ ४ ॥

पार्थुरश्मं ब्रह्मसाम भवति । रश्मिना वाऽ अश्वो यतुऽ ईश्वरो वाऽ अश्वोऽयतोऽधृतोऽप्रतिष्ठितः पुराम्परावतङ्गन्तोर्य्यत्पार्थुरश्मं ब्रह्मसाम भुवत्यश्वस्यैव धृत्यै ॥ ५ ॥

---

शक्वर्यः पृष्ठं भवन्ति । अन्यदन्यच्छन्दः । अन्येऽन्ये हि स्तोमाः क्रियन्ते । यच्छक्वर्यः पृष्ठं भवन्ति । अश्वस्यैव सर्वत्वाय ॥ २ ॥

एकविंशं मध्यममहर्भवति । असौ वा आदित्य एकविंशः । सोऽश्वमेधः । स्वेनैवैनं स्तोमेन स्वायां देवतायां प्रतिष्ठापयति ॥ ३ ॥

वामदेव्यं मैत्रावरुणसाम भवति । प्रजापतिर्वै वामदेव्यम् । प्राजापत्योऽश्वः । स्वयैवैनं देवतया समर्धयति ॥ ४ ॥

पार्थुरश्मं ब्रह्मसाम भवति । रश्मिना वा अश्वो यतः । ईश्वरो वा अश्वोऽयतोऽधृतोऽप्रतिष्ठितः परां परावतं गन्तोः । यत्पार्थुरश्मं ब्रह्मसाम भवति । अश्वस्यैव धृत्यै ॥ ५ ॥

---

शक्वर्यः पुनर्वचनं ब्राह्मणेष्वनुरूपसिद्ध्यर्थम् । नार्थांतरमाशंकनीयम् ॥ २ ॥

एकविंशं एकविंशस्तोमकं मध्यममहर्भवति । सर्वाणि स्तोत्राणि एकविंशानि तस्येत्यर्थः । असौ वा आदित्य एकविंशः स्तोमसंख्यासाम्यात् ( तत्तु लोकेषु हिष्वमणुलौकैकविंशति वा ? ) । तस्य विभक्तं तेजः । स चासौ मेध्यः । "एष वा अश्वमेधो य एष तपति"—( श. प. १० । ६ । ५ । ८ ) इति दर्शनात् । स्वेनैवैनं स्तोमेन एनमश्वम् स्वायां देवतायां सूर्ये प्रतिष्ठापयति ॥ ३ ॥

वामदेव्यं वामदेवेन दृष्टं साम "कया नश्चित्र आभुवत्"—इत्येतत् मैत्रावरुणसाम भवति माध्यंदिने सवने प्रथमे उक्थ्यविग्रहे मैत्रावरुणः शंसति । तेन स्तोत्रं व्यपदिश्यते । तत् मैत्रावरुणशस्त्रसंबद्धं स्तोत्रं वामदेव्यसामसाधनकं भवतीत्यनुवाद एव । दर्शनसंबद्धः स्वार्थप्रकृतिभाव एव प्राप्तत्वात् । प्रजापतिर्वै वामदेव्यम् । अनिरुक्तायां हि तदुत्पन्नम् । कद्वत्यां वा ॥ ४ ॥

पार्थुरश्मं ब्रह्मसाम । ब्राह्मणाच्छंस्यत्र ब्रह्मा नैकम् । नापि तत्कर्तृकं द्वितीयमुक्थ्यविग्रहशस्त्रं लक्ष्यते । नापि तत्संबद्धं स्तोत्रं व्यपदिश्यते । ब्राह्मणाच्छंसिशस्त्रसंबद्धं स्तोत्रं पार्थुरश्मसाधनकं भवतीत्यर्थः । रश्मिना वै अश्वः

सुङ्कृत्यच्छावाकसाम भवति । ( त्यु ) उत्सन्नयज्ञऽ इव वाऽ एष यदश्वमेधः किम्वा ह्येतस्य क्रियते किम्वा न यत्सङ्कृत्यच्छावाकसाम भवत्यश्वस्यैव सर्वत्वाय सर्वस्तोमोऽतिरात्रऽ उत्तममहर्भवति सर्वम्वै सर्वस्तोमोऽतिरात्रः सर्वमश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै ॥ ६ ॥

( द्व्याऽए ) एकविंशोऽग्निर्भवति । (त्ये) एकविंश स्तोमऽ एकविंशतिर्यूपा यथा वाऽ ऋषभा वा वृषाणो वा सँस्फुरेरन्नेवमेते स्तोमाः समृच्छन्ते यदेकविंशास्तान्युत्समर्प्पयेदार्तिमार्च्छेद्यजमानो हन्येतास्य यज्ञः ॥ ७ ॥

---

संकृत्यच्छावाकसाम भवति। उत्सन्नयज्ञ इव वा एष यदश्वमेधः । किं वा ह्येतस्य क्रियते । किं वा न। यत्संकृत्यच्छावाकसाम भवति। अश्वस्यैव सर्वत्वाय। सर्वस्तोमोऽतिरात्र उत्तममहर्भवति । सर्वं वै सर्वस्तोमोऽतिरात्रः । सर्वमश्वमेधः । सर्वस्याप्त्यै । सर्वस्यावरुद्ध्यै ॥ ६ ॥

एकविंशोऽग्निर्भवति । एकविंशः स्तोमः । एकविंशतिर्यूपाः । यथा वा ऋषभा वा वृषाणो वा संस्फुरेरन् । एवमेते स्तोमाः समृच्छन्ते । यदेकविंशाः। तान्यत्समर्पयेत् । आर्तिमार्च्छेद्यजमानः । हन्येतास्य यज्ञः ॥ ७ ॥

---

यतः बद्धः । सम्यक् प्रवर्तत इति शेषः । कथमित्यत आह । ईश्वरः ईशिता समर्थः दूरं गन्तुम् । अयतः अबद्धो रश्मिनेत्यर्थः । ततः किं इत्यत आह—यत् पृथुरश्मिसंबद्धं साम भवति तत् अश्वस्य धृत्यै धारणाय ॥ ५ ॥

संकृत्यच्छावाकसाम। उच्चैः कलापग्रामादौ सिद्धस्थाने सत्रस्थिताद् ग्रन्थतः अर्थतश्च विच्छिन्नः यज्ञः उत्सन्नयज्ञः एष यः अश्वमेधः । कथमुत्सन्न इत्यत आह—किं वा हीति । यस्य धर्मापूर्वयोः युगयोस्तौ प्रयुज्येते स्म तेषां किंचित् कलौ क्रियते किंचिन्न क्रियते । ततश्च यत्संकृत्यच्छावाकसाम भवति तत् ॥ ६ ॥

एकविंशः । एकविंशतिः पुरुषाः परिमाणमस्याग्नेरित्येतस्मिन्नर्थे एकविंशतिशब्दात् डप्रत्ययोऽयं द्रष्टव्यः । ततश्चैकविंशतिविधोऽग्निरश्वमेधे स्यादित्यर्थः । ननु च अनेन वाक्येन अग्नेः परिमाणमश्वमेधे नियम्यते । नाग्निरित्ययं साग्निरश्वमेधः स्यात् । नैतदेवं, वचनांतरेण चाग्निर्नियतः । तौ एतौ अर्काश्वमेधौ । तौ पुनरेकैव देवता भवति । मृत्युरेवाग्निः । एकविंशतिपरिमाणमस्य स्तोमस्येत्येतस्मिन्नर्थे एकविंशतिशब्दादुपसंख्यानात् "स्तोमे डविधिः पंचदशाद्यर्थः" इति स्तोमस्तोत्रियसंख्या सर्वाऽपि एकविंशस्तोमकानि मध्यमेऽहनि भवंतीत्यर्थः । ऋषभाः प्रजननसमर्था अनुत्सृष्टाः । वृषाणः उत्सृष्टाः सेक्तारः । गोवृषाः । ते यथा परस्परविरुद्धं संस्फुरंति । एवमेते त्रय एकमुख्या एव स्तोमाः । इतरे त्वेकविंशतिसामान्याः स्तोमाः । एवं त्रयः एकविंशकाः संघा इत्यर्थः ।

---

१–नित्योदकं देवयजनं पुरस्तात् । का. श्रौ. सू. २० । ९५ । ( तत्र देवयजने अग्निप्रमाणम् आह । ) आद्योऽग्निर्द्विगुणत्रिगुण एकविंशतिविधो वा । का. श्रौ. सू. २० । ९६ । ( द्विगुणस्त्रिगुणो वेति विकल्पः शाखांतरादिति कर्कः । ) ( द्विगुणत्रिगुणैकविंशतिविधानां कल्पत्रिप्रकारः शुल्बे पंचम्यां कंडिकायां कात्यायनेनाभिहितः । )

( ज्ञो ) द्वादशऽ एवाग्निः स्यात् । ( डे ) एकादश यूपा यद्द्वादशोऽग्नि-र्भवति द्वादश मासाः सम्वत्सरः सम्वत्सरमेव यज्ञमाप्नोति यदेकादश यूपा विराड्वाऽ एषा सम्मीयते यदेकादशिनी तस्यै यऽ एकादश स्तनऽ-एवास्यै स दुह ऽएवैनान्तेन ॥ ८ ॥

तदाहुः । ( र्धु ) यद्द्वादशोऽग्निः स्यादेकादश यूपा यथा स्थूरिणा यायात्तादृक्तदित्येकविꣳशऽ एवाग्निर्भवत्येकविꣳश स्तोमऽ एक-विꣳशतिर्यूपास्तद्यथा प्रष्टिभिर्यायात्तादृक्तत् ॥ ९ ॥

( च्छि ) शिरो वाऽ एतद्यज्ञस्य यदेकविꣳशः । ( ञो ) यो वाऽ अश्व-मेधे त्रीणि शीर्षाणि वेद शिरो ह राज्ञाम्भवत्येकविꣳशोऽग्निर्भव-त्येकविꣳश स्तोमऽएकविꣳशतिर्यूपाऽ एतानि वाऽ अश्वमेधे त्रीणि

---

द्वादश एवाग्निः स्यात् । एकादश यूपाः । यद्द्वादशोऽग्निर्भवति । द्वादश मासाः संवत्सरः । संवत्सरमेव यज्ञमाप्नोति । यदेकादश यूपाः । विराड्वा एषा संमीयते । यदेकादशिनी । तस्यै य एकादशः । स्तन एवास्यै सः । दुह एवैनां तेन ॥ ८ ॥

तदाहुः—यद्द्वादशोऽग्निः स्यात् । एकादश यूपाः । यथा स्थूरिणा यायात् । तादृक्तत् । इत्येक-विंश एवाग्निर्भवति । एकविंशः स्तोमः । एकविंशतिर्यूपाः । तद्यथा प्रष्टिभिर्यायात् । तादृक्तत् ॥९॥

शिरो वा एतद्यज्ञस्य यदेकविंशः । यो वा अश्वमेधे त्रीणि शीर्षाणि वेद । शिरो ह राज्ञां भवति । एकविंशोऽग्निर्भवति । एकविंशः स्तोमः । एकविंशतिर्यूपाः । एतानि वा अश्वमेधे त्रीणि शीर्षाणि ।

---

तान् एकविंशान् यत्समर्पयेद्यजमानः । ततः आर्तिम् आर्च्छेत्प्राप्नुयात् । स्वयं यज्ञस्तु अस्य हन्येत । इत्येक-विंशत्रयस्य निंदा कल्पांतरोपन्यासार्था ॥ ७ ॥

द्वादश एवाग्निः । अग्नौ यूपेषु कल्पांतरोपन्यासो यस्तस्य च प्रशंसा निंदा च । पूर्वकल्पप्रशंसेत्यर्थः । द्वादशपुरुषपरिमाणो द्वादशः । एकविंशतिविधादारभ्य द्वादशानां पूरणो द्वादशः । सवविध. एतद्भवति । एकविंशे एव वाच्यम् । विराड्रूपा एषा अविर्यूपं संमीयते । एकत्र देशे यूपैकादशिनी । ननु च—दशाक्षिका विराट् दशभिरेव यूपैः संपद्यते । किं तत्रैकादशिन्या ? इत्यत आह—तस्याः एकादशिन्याः य एकादशो यूपः । सः स्तनः एवास्या विराजः । दुहे दुग्धे एनां विराजं तेन स्तनेन यजमान इति ॥ ८ ॥

'तदाहुर्यत्' । यत् यदि । द्वादशोऽग्निः स्यात् एकादश च यूपाः । तत एव एकविंशस्य अनेन चैकेन यथा कश्चित् स्थूरिणा । ( नु सहाये । मीयते अनेन दुहा वा दुःखं ? ) गच्छेत् । तादृक् तत्स्यात् । इत्येवमाहुः । कथं हि न दोष इत्यत आह—एकविंशतिर्यूपाः । तच्च यथा कश्चित्प्रष्टिभिः अपि अक्लेशेन यायात् । तादृक्तत् । बहवो हि तदा एकविंशतिर्भवंति । ते चालं धुर्यतायै इत्यभिप्रायः ॥ ९ ॥

शिरो वा एतत् । एतेष्वेकविंशेषु शिरसां दर्शनं ककुदां दर्शनं चात्रोच्यते । शिर एकविंशो यज्ञस्य

शीर्षाणि तानि यऽ एवम्वेद शिरो ह राज्ञाम्भवति यो वाऽ अश्वमेधे तिस्रः ककुदो व्वेद ककुद्ध राज्ञां भवत्येकविॅंशोऽग्निर्भवत्येकविॅंश स्तोमऽएकविॅंशतिर्य्यूपाऽएता वाऽ अश्वमेधे तिस्रः ककुदस्ता यऽ एवम्वेद ककुद्ध राज्ञां भवति ॥ १० ॥

इति द्वितीयप्रपाठकेऽष्टमं ब्राह्मणम् ॥ १३।२।८ ॥ ( ३-३ ) ॥

सर्व्वाभ्यो वै देवताभ्योऽश्वऽआलभ्यते । यत्प्राजापत्यङ्कुर्य्याद्या देवताऽअपिभागास्ता भागधेयेन व्यर्द्धयेच्छादन्दद्भिरवकां दन्तमूलै-रित्याज्यमवदानी कृत्वा प्रत्याख्यायन्देवताभ्यऽआहुतीर्ज्जुहोति याऽ एव देवताऽअपिभागास्ता भागधेयेन समर्द्धयत्यरण्येऽनूच्यान्हुत्वा द्यावापृथिव्यामुत्तमामाहुतिं जुहोति द्यावापृथिव्योर्वै सर्व्वा देवताः प्रतिष्ठितास्ताऽएवैतत्प्रीणाति देवासुराः संयत्ताऽआसन् ॥ १ ॥

---

तानि य एवं वेद । शिरो ह राज्ञां भवति । यो वा अश्वमेधे तिस्रः ककुदो वेद । ककुद्ध राज्ञां भवति । एकविंशोऽग्निर्भवति । एकविंशः स्तोमः । एकविंशतिर्यूपाः । एता वा अश्वमेधे तिस्रः ककुदः । ता य एवं वेद । ककुद्ध राज्ञां भवति ॥ १० ॥

सर्वाभ्यो वै देवताभ्योऽश्व आलभ्यते । यत् प्राजापत्यं कुर्यात् । या देवता अपिभागास्ता भागधेयेन व्यर्द्धयेत्–" शादं दद्भिरवकां दन्तमूलैः "–( वा. सं. २५ । १ ) इत्याज्य-मवदानी कृत्वा प्रत्याख्यायं देवताभ्य आहुतीर्जुहोति । या एव देवता अपिभागास्ता भागधेयेन समर्द्धयति । अरण्येऽनूच्यान् हुत्वा । द्यावापृथिव्यामुत्तमामाहुतिं जुहोति । द्यावापृथिव्योर्वै सर्वा देवताः प्रतिष्ठिताः । ता एवैतत्प्रीणाति । देवासुराः संयत्ता आसन् ॥ १ ॥

---

प्रकृतौ यज्ञायज्ञियम् । तेन त्रिवृदादीनां चतुर्णां मध्ये महत्त्वात् । एतानि वा अश्वमेधे त्रीणि शीर्षाणीति । एकविंशस्तोमतुल्यत्वात् । इतरे अपि शिरसी इत्यभिप्रायः । एता वा अश्वमेधे तिस्रः ककुद इति । उत्तुंगत्वात् मध्यमाहर्वर्तित्वाच्च । ककुद इव ककुदः ॥ १० ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये त्रयोदशे कांडे तृतीयेऽध्याये तृतीयं ब्राह्मणम् ॥ १३ । ३ । ३ ॥

सर्वाभ्यो वै इति । सर्वाभ्यो देवताभ्यः अश्व आलभ्यते । " स्वगा त्वा देवेभ्यः " " तं बधान देवेभ्यः " " विश्वेभ्यस्त्वा देवेभ्यो जुष्टं प्रोक्षामि " " सर्वेभ्यस्त्वा देवेभ्यो जुष्टं प्रोक्षामि "–( वा. सं. २२ । ४ । ५ ) इति मंत्रवर्णेभ्य इत्यभिप्रायः । तं यद्यदि प्राजापत्यमेव कुर्यात् । तत्प्रदानकाले " तस्मात्प्राजा-पत्य एवाश्वः "– इति वचनात् । ततः याः देवता अश्वेऽपिभागाः संसृष्टभागाः ता अपि तेन

( सु॒स्ते ) तेऽब्रुवन् । ( न्न ) अ॒ग्नय॑ः स्विष्ट॒कृतो॒ऽश्वस्य॒ व्वय॑मु॒द्धार॑मु॒द्ध॑रामहै॒ तेना॒सुरा॑न॒भिभ॑विष्या॒मऽइति॒ ते लोहि॑तमु॒दह॑रन्त॒ भ्रातृ॑व्याभिभूत्यै॒ यत्स्वि॑ष्ट॒कृद्भ्यो॒ लोहि॑तञ्जु॒होति॒ भ्रातृ॑व्याभिभूत्यै॒ भव॑त्या॒त्मना॒ परा॑ऽस्य॒ द्वि॒षन्भ्रातृ॑व्यो भवति॒ यऽ ए॒वम्वेद॑ ॥ २ ॥

---

तेऽब्रुवन्नग्नयः स्विष्टकृतः—अश्वस्य वयमुद्धारमुद्धरामहै, तेनासुरानभिभविष्यामः, इति। ते लोहितमुदहरन्त, भ्रातृव्याभिभूत्यै। यत् स्विष्टकृद्भ्यो लोहितं जुहोति, भ्रातृव्याभिभूत्यै। भवत्यात्मना। पराऽस्य द्विषन् भ्रातृव्यो भवति, य एवं वेद ॥ २ ॥

---

भागेन मंत्रवर्णावगतेन व्यर्द्धयेत् ऋद्धया वियोजयेत्। ततश्च प्राजापत्यमेवाश्वं कृत्वा उक्तदोषपरिहाराय शादं नाम देवं दद्भिर्दन्तैः अश्वस्य प्रीणामीति वाक्यशेषः। स्वाहाकारश्च प्रदानार्थः। अवका नाम देवता दंतमूलैः अश्वस्य प्रीणामि स्वाहेति। एवमन्यान्यपि मांत्रवर्णिक्यानि अवदानानि। आज्यमवदानी कृत्वा मन्त्रवचनेन ध्यानेन वा आज्यमेव अश्वांगत्वेन परिकल्प्य। 'प्रत्याख्यायम्' अवदानमवदानं प्रति आख्यायाख्याय देवतां शादादिकाम्। ताभ्यो देवताभ्यः आहुतीर्जुहोति आज्यमयी संकल्पिताश्वांगता वा। तथा च कुर्वन् या देवता अश्वसंसृष्टभागा मांत्रवर्णिक्यः। ताः भागधेयेन समर्द्धयति। ताश्च तावत् जुहोति। यावत् "पृथिवीं त्वचा प्रीणामि स्वाहा" ( वा.सं.२९।९ ) इति। "जुंबकाय स्वाहा" (वा.सं.२९।९) इत्यवभृथे होष्यते। ततः अरण्येऽनूच्यान् अरण्ये पठितव्यान् " अग्निꣳ हृदयेनाशनिꣳ हृदयाग्रेण " इत्यादीन् "विश्वेभ्यो देवेभ्यः स्वाहा " ( वा. सं. ३९। ८-१३ ) इत्येवमंतान् होमान् हुत्वा। द्यावापृथिव्यामुत्तमामाहुतिं जुहोति। ( वा. सं. ३९। १३ )। अत्र च शादः अवकाः शैवालानि। तेगाः गोकंटकाः इत्यादिदेवतारूपाणि निगमेभ्य अवगमयेत्। बर्स्वानि दंतपीठानि। अग्रजिह्वं जिह्वाग्रम् इत्येवमादीनि चाश्वांगानि। काश्चिचात्र प्रसिद्धा एव देवता आदित्यादयः। काश्चित् अप्रसिद्धाः शादादयः। काश्चित्तु अश्वांगात्मिका एव देवताः। "कर्णाभ्याꣳ श्रोत्रꣳ श्रोत्राभ्यां कर्णौ" (वा. सं. २९। २) इत्यादयः। काश्चित्तत्र चतुर्थ्या निर्दिश्यंते। तत्र सरस्वत्यै अग्रजिह्वं ददामीति शेषः। क्वचित् षष्ठ्या अश्वांगानि निर्दिश्यंते। देवता द्वितीयया। तत्र विभक्तिर्द्रष्टव्या। जिह्वया उत्सादं प्रीणामीति। क्वचित् देवतायाश्च तृतीया अवक्रंदेनेति। अश्वांगे द्वितीया। तालिविति। तत्रापि व्यत्ययः। अवक्रंदं तालुनेति। क्वचिदश्वांगमेव चतुर्थीनिर्दिष्टमस्ति न पृथग्देवता। "शुक्राय स्वाहा" ( वा. सं. २९। १ ) "लोमभ्यः स्वाहा" ( वा. सं. ३९। १० ) इत्यादौ। तत्र तदेव शुक्रादिहैरण्यगर्भदेवता चतुर्थ्या निर्दिष्टा। प्रकृतांश्वांगं तु तदेव हविः। तादर्थ्ये चतुर्थी। शुक्राय शुक्रं जुहोमीत्यर्थः। क्वचित् तद्धितेन देवतासंयोगः। पारदेवत्यानि पार्याणि पक्ष्माणि। संतीत्यत्र शेषः। क्वचित् षष्ठ्या देवता। प्रथमया चाङ्गम्। "अग्नेः पक्षतिः" ( वा. सं. २९। ४ ) अस्त्वित्यत्र शेषः। क्वचित्तु "यमाय स्वाहा" ( वा. सं. ३९। १३ ) इत्यादौ आज्याहुतिः शुद्धैव हूयते। अश्वांगस्याभावात् इति द्रष्टव्यम्। देवासुराः संयत्ता इत्यादि तिसृणां लोहिताहुतीनां ब्राह्मणम् ॥ १ ॥

उद्धारं असाधारणमतिरिक्तं भागं उत्कृष्टमुद्धरामहै। ते लोहितमुदहरंत भ्रातृव्याभिभवाय। अधुनाऽपि यत् "अग्निभ्यः स्विष्टकृद्भ्यः स्वाहा" इति लोहितं जुहोति तत् भ्रातृव्याभिभवायैव ॥ २ ॥

गोमृगकण्ठेन प्प्रथमामाहुतिञ्जुहोति । पशुवो वै गोमृगा रुद्रः स्विष्टकृत्पशूनेवु रुद्रादन्तुर्दधाति तुस्माद्युत्रैषाऽश्वमेधऽआहुतिर्हूयुते न तुत्र रुद्रः पशूनभिमन्यते ॥ ३ ॥

( तेऽश्व ) अश्वशफेन द्वितीयामाहुतिञ्जुहोति । पशुवो वाऽएकशफा रुद्रः स्विष्टकृत्पशूनेवु रुद्रादन्तुर्दधाति तुस्माद्युत्रैषाऽश्वमेधऽआहुतिर्हूयुते न तुत्र रुद्रः पशूनभिमन्यते ॥ ४ ॥

( तेऽय ) अयस्मुयेन चरुणा तृतीयामाहुतिञ्जुहोति । ( त्या ) आयास्या वै प्प्रजा रुद्रः स्विष्टकृत्प्रजाऽएवु रुद्रादन्तुर्दधाति तुस्माद्युत्रैषाऽश्वमेधऽआहुतिर्हूयुते न तुत्र रुद्रः प्प्रजाऽअभिमन्यते ॥ ५ ॥

इति द्वितीयप्रपाठके नवमं ब्राह्मणम् ॥ १३।२।९ ॥ ( ३—४ ) ॥

---

गोमृगकण्ठेन प्रथमामाहुतिं जुहोति । पशवो वै गोमृगाः । रुद्रः स्विष्टकृत् । पशूनेव रुद्रादन्तर्दधाति । तस्माद्यत्रैषाऽश्वमेध आहुतिर्हूयते । न तत्र रुद्रः पशूनभिमन्यते ॥ ३ ॥

अश्वशफेन द्वितीयामाहुतिं जुहोति । पशवो वा एकशफाः । रुद्रः स्विष्टकृत् । पशूनेव रुद्रादन्तर्दधाति । तस्माद्यत्रैषाऽश्वमेध आहुतिर्हूयते । न तत्र रुद्रः पशूनभिमन्यते ॥ ४ ॥

अयस्मयेन चरुणा तृतीयामाहुतिं जुहोति । आयास्या वै प्रजाः । रुद्रः स्विष्टकृत् । प्रजा एव रुद्रादन्तर्दधाति । तस्माद्यत्रैषाऽश्वमेध आहुतिर्हूयते । न तत्र रुद्रः प्रजा अभिमन्यते ॥ ५ ॥

---

गोमृगस्य कंठेन पात्रेण प्रथमां लोहिताहुतिं जुहोति । पशूनेव रुद्रादंतर्दधाति । किंचित्पशुसंबद्धानेवोपयोगि रुद्रस्य चित्तं प्रसादयतीत्यर्थः । यस्मादेव पशून् रुद्रादंतर्द्धत्ते । तस्माद्यत्र राष्ट्रे काले च एषा लोहिताहुतिरश्वमेधांतर्गता हूयते । तत्र राष्ट्रे काले च रुद्रः पशूनाभिमन्यते । अभिपूर्वो मन्यतिर्वधे वर्तते ॥ ३ ॥ ४ ॥

'अयस्मयेन' । आयास्याः प्रजाः । अयास्यो मध्यमः प्राणः, तन्मय्यः, तदात्मिकाः प्रजाः, शब्दसारूप्याच्च अयः अपि आयास्य एव इति कृत्वा एतेन संबंधेनैव अयस्मयचरू रुद्रस्योपयुंक्ते । रुद्रः प्रजापतावन्तर्हितः । तेनोपचारेण भवति । एताश्च शाखांतरवचनात् स्विष्टकृदंते होतव्याः । स्विष्टकृदवदानसामान्याद्वा प्राधान्यात् रुद्रत्वे सिद्धे आगन्तुत्वात् स्विष्टकृत ऊर्ध्वं भविष्यति ॥ ५ ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये त्रयोदशे काण्डे तृतीयेऽध्याये चतुर्थं ब्राह्मणम् ॥ ( १३ । ३ । ४ ) ॥

सर्वेषु वै लोकेषु । मृत्यवोऽन्वायत्तास्तेभ्यो यदाहुतीर्न जुहुयाल्लोके लोकऽ एनं मृत्युर्विन्देद्यन्मृत्युभ्यऽआहुतीर्जुहोति लोके लोकऽएव मृत्युमपजयति ॥ १ ॥

तदाहुः । ( र्थ्यु ) यदमुष्मै स्वाहाऽमुष्मै स्वाहेति जुह्वत्सञ्चक्षीत बहुम्मृत्युममित्रङ्कुर्वीत मृत्यव ऽआत्मानमपिदध्यादिति मृत्यवे स्वाहेत्येकस्माऽ एवैकामाहुतिं जुहोत्येको ह वाऽ अमुष्मिँल्लोके मृत्युरशनायैव तमेवामुष्मिँल्लोकेऽपजयति ॥ २ ॥

ब्रह्महत्यायै स्वाहेति द्वितीयामाहुतिञ्जुहोति । ( त्यु ) अमृत्युर्ह वाऽअन्यो ब्रह्महत्यायै मृत्युरेष ह वै साक्षान्मृत्युर्यद्ब्रह्महत्या साक्षादेव मृत्युमपजयति ॥ ३ ॥ ( अर्द्धः प्रपाठकः ॥ कण्डिकाः ॥ ५९ ॥ )

---

सर्वेषु वै लोकेषु मृत्यवोऽन्वायत्ताः । तेभ्यो यदाहुतीर्न जुहुयात् । लोके लोक एनं मृत्युर्विन्देत् । यन्मृत्युभ्य आहुतीर्जुहोति । लोके लोक एव मृत्युमपजयति ॥ १ ॥

तदाहुः—यत् " अमुष्मै स्वाहाऽमुष्मै स्वाहा ".इति जुह्वत्संचक्षीत । बहुं मृत्युममित्रं कुर्वीत । मृत्यव आत्मानमपिदध्यात्, इति । " मृत्यवे स्वाहा "—( वा. सं. ३९।१३ ) इत्येकस्मा एवैकामाहुतिं जुहोति । एको ह वा अमुष्मिँल्लोके मृत्युः—अशनायैव । तमेवामुष्मिन् लोकेऽपजयति २॥

" ब्रह्महत्यायै स्वाहा " ( वा. सं. ३९।१३ ) इति द्वितीयामाहुतिं जुहोति । अमृत्युर्ह वा अन्यो ब्रह्महत्यायै मृत्युः । एष ह वै साक्षान्मृत्युः, यद्ब्रह्महत्या । साक्षादेव मृत्युमपजयति ॥ ३ ॥

---

सर्वेषु वै इति । अरण्येऽनूच्यान् हुत्वा । एतदंगतां गता " मृत्यवे स्वाहा " इत्याहुतिः " ब्रह्महत्यायै स्वाहा " ( वा. सं. ३९।१३ ) इति च । तयोरेतद्दर्शनार्थं ब्राह्मणम् । सर्वेषु पितृलोकादिषु । मृत्यवः विनाशकाः अन्वायत्ता अनुबद्धा इति सर्वे लोका अशाश्वताः सभियश्चेति दर्शयति । यन्मृत्युभ्यो बहुभ्यो बह्वीराहुतीर्जुहोति । शाखान्तरीयाणां निंदार्थं उपन्यासः । तद्धियां चैकत्वप्रशंसार्थः ॥ १ ॥

तदाहुर्यत् । अमुष्मै पितृलोकाय मृत्यवे इत्येवं यदि जुह्वत् संचक्षीत मृत्युं परिगणयेत् । तं बहुं मृत्युं अमित्रं यजमानः कुर्वीत । तस्मै मृत्यवे अमित्रभूताय आत्मानमपि च दध्यात् संपीडितमर्पयेत् । तत्परिहाराय " मृत्यवे स्वाहा " इत्येवमेकस्मा एव एतामाहुतिं जुहोति । एको ह वै अमुष्मिन् लोके मृत्युरिति स्थितिहेतुः । कर्म देहिनं तर्पयति । तस्मिन् क्षीणे जिघत्साप्रत्ययेन प्रच्यवन्ते प्राणिनः । स सामान्यः सर्वमृत्युः । तस्मिन्प्रतिहते सर्वे तद्विशेषाः प्रतिहताः भवंतीत्यभिप्रायः ॥ २ ॥

ब्रह्महत्यायै । ब्रह्महत्यैव मृत्युर्नान्यः । स्वस्यावीच्यादौ नरके अतिमहत्तरं दुःखं करोति । न तादृगशनायाकृतं दुःखमित्यभिप्रायः ॥ ३ ॥

( त्ये ) एताᳫँ ह वै मुण्डिभऽऔदन्यः । ( न्यो ) ब्रह्महत्यायै प्प्रायश्चित्तिम्विदाञ्चकार यद्ब्रह्महत्याया ऽआहुतिं जुहोति मृत्युमेवाहुत्या तर्प्पयित्वा परिपाणङ्कृत्वा ब्रह्मघ्ने भेषजङ्करोति तस्माद्यस्यैषाऽश्वमेध ऽआहुतिर्हूयतेऽपि योऽस्यापरीषु प्प्रजायाम्ब्राह्मणᳫँ हन्ति तस्मै भेषजङ्करोति ॥ ४ ॥

इति द्वितीयप्रपाठके दशमं ब्राह्मणम् ॥ १३।२।१० ॥ ( ३--६ ) ॥

अश्वस्य वाऽआलब्धस्य । मेधऽउदक्रामत्तदश्वस्तोमीयमभवद्यदश्वस्तोमीयञ्जुहोत्यश्वमेव मेधसा समर्द्धयति ॥ १ ॥

( त्या ) आज्येन जुहोति । मेधो वाऽआज्यम्मेधोऽश्वस्तोमीयम्मेधसैवास्मिंस्तन्मेधो दधात्याज्येन जुहोत्येतद्वै देवानाम्प्रियन्धाम यदाज्यम्प्रियेणैवैनान्धाम्ना समर्द्धयति ॥ २ ॥

---

एतां ह वै मुण्डिभ औदन्यो ब्रह्महत्यायै प्रायश्चित्तिं विदांचकार । यद्ब्रह्महत्याया आहुतिं जुहोति । मृत्युमेवाहुत्या तर्पयित्वा परिपाणं कृत्वा ब्रह्मघ्ने भेषजं करोति । तस्मात् यस्यैषाऽश्वमेध आहुतिर्हूयते । अपि योऽस्यापरीषु प्रजायां ब्राह्मणं हन्ति । तस्मै भेषजं करोति ॥ ४ ॥

अश्वस्तोमीयद्विपदाहोमब्राह्मणम् ।

अश्वस्य वा आलब्धस्य मेध उदक्रामत् । तदश्वस्तोमीयमभवत् । यदश्वस्तोमीयं जुहोति । अश्वमेव मेधसा समर्द्धयति ॥ १ ॥

आज्येन जुहोति । मेधो वा आज्यम् । मेधोऽश्वस्तोमीयम् । मेधसैवास्मिन् तन्मेधो दधाति । आज्येन जुहोति । एतद्वै देवानां प्रियं धाम—यदाज्यम् । प्रियेणैवैनान् धाम्ना समर्द्धयति ॥ २ ॥

---

एतां ह वै । मुंडिभो नाम उदनस्यापत्यम् औदन्यः । स एतामेवाहुतिं अश्वमेधान्तर्गतां ब्रह्महत्यायाः प्रायश्चित्तिं मेने । ततश्च ब्रह्महत्यायै आहुतिं जुहोति । तत् मृत्युमेव तर्पयित्वा परिशिष्टं पानं तं मृत्यवे कृत्वा ब्राह्मणं हतवते भेषजं चिकित्सां करोति । यस्माच्चैवमेव तद्भेषजं क्रियते । तस्मात् यस्य राज्ञः अश्वमेधे एषा आहुतिर्हूयते । तस्य प्रजायां राष्ट्रे योऽपि अपरीषु अपक्रांतासु अतीतासु समासु ब्राह्मणं हंति । तस्मै अपि चिरकृतपापस्य भेषजं चिकित्सां करोति । सोऽपि हि तस्यावभृथे स्नातः शुध्यतीत्यभिप्रायः ॥ ४ ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये त्रयोदशे काण्डे तृतीयेऽध्याये पञ्चमं ब्राह्मणम् ॥ ( १३ । ३ । ५ ) ॥

अश्वस्य वा इति—अश्वस्तोमीयद्विपदाहोमब्राह्मणमेतत् । अश्वस्य प्राजापत्यात्मकस्यालब्धस्य मेधो यज्ञसाधनभूतो रसः सार उत्क्रांतः । तत् अश्वस्तोमीयहोमः अभवत् । स मेधः अश्वस्तोमीयः प्रतिसमाधेयः

(त्य) अश्वस्तोमीयꣳ हुत्वा द्विपदा जुहोति । (त्यु) अश्वो वाऽ अश्वस्तोमीयम्पुरुषो द्विपदा द्विपाद्वै पुरुषो द्विप्रतिष्ठस्तुदेनम्प्रातिष्ठया सुमर्द्धयति ॥ ३ ॥

तुदाहुः । (र) अश्वस्तोमीयम्पूर्व्वꣳ होतव्यां ३ द्विपदा ३ ऽइति पशुवो वाऽअश्वस्तोमीयम्पुरुषो द्विपदा यदश्वस्तोमीयꣳ हुत्वा द्विपदा जुहोति तस्मात्पुरुषऽउपरिष्टात्पशूनुधितिष्ठति ॥ ४ ॥

षोडशाश्वस्तोमीया जुहोति । षोडशकला वै पशवः सा पशूनाम्मात्रा पशूनेव मात्रया सुमर्द्धयति यत्कनीयसीर्व्वा भूयसीर्व्वा जुहुयात्पशून्मात्रया व्यर्द्धयेत्षोडश जुहोति षोडशकला वै पशवः सा पशूनाम्मात्रां

---

अश्वस्तोमीयं हुत्वा द्विपदा जुहोति । अश्वो वा अश्वस्तोमीयम् । पुरुषो द्विपदाः । द्विपाद्वै पुरुषो द्विप्रतिष्ठः । तदेनं प्रतिष्ठया समर्द्धयति ॥ ३ ॥

तदाहुः—अश्वस्तोमीयं पूर्वं होतव्यां ३ द्विपदाः ३ इति । पशवो वा अश्वस्तोमीयम् । पुरुषो द्विपदाः । यदश्वस्तोमीयं हुत्वा द्विपदा जुहोति । तस्मात् पुरुष उपरिष्टात् पशूनधितिष्ठति ॥ ४ ॥

षोडशाश्वस्तोमीया जुहोति । षोडशकला वै पशवः । सा पशूनां मात्रा । पशूनेव मात्रया समर्द्धयति । यत्कनीयसीर्वा भूयसीर्वा जुहुयात् । पशून् मात्रया व्यर्द्धयेत् । षोडश जुहोति ।

---

अभवदित्यर्थः । तदनुकारेण योऽपि यदश्वस्तोमीयं जुहोति । तेन अश्वं मेधसा समर्द्धयति । अश्वस्य स्तुतिः अश्वस्तोमः, अश्वस्तोमः अस्मिन् सूक्ते अस्तीत्यश्वस्तोमीयं "मा नो मित्रः" ( वा. सं. २९ । २४–३९ ) इति । "मतौ छः" । सूक्तसाम्नोः ( पा.सू. ) संबंधात् तत्साध्यं होमजातमपि अश्वस्तोमीयम् । जुहोतीति विधिः ॥ १ ॥ २ ॥

अश्वस्तोमीयं हुत्वा द्विपदा जुहोति । "इमानुकम्" इत्येता ऋचो (वा० सं० २९।४६।४७) द्विपदाः । तत्संबंधात् तत्साध्या आहुतयोऽपि द्विपदाः । ता जुहोतीति विधिः । अश्वो वै अश्वस्तोमीयं अश्वप्रधानत्वात् । पुरुषो द्विपदाः द्विपात्त्वादेव । द्विपाच्च पुरुषो द्विप्रतिष्ठः । यदश्वस्तोमीयं हुत्वा द्विपदा जुहोति । तदेवमश्वं तदनुकारेण यजमानं प्रतिष्ठया समर्द्धयति । एताश्च पूर्वा आहुतयो मंत्रब्राह्मणपाठक्रमेण संलग्ना एव प्राप्नुवंति । सूत्रकारेण तु शाखांतरात् क्रमांतरं लब्धम् । "विमुखाच्च परेभ्यः मा नो मित्रः" इति च प्रत्यृचमनुवाकाभ्याम्, अन्त्यां द्यावापृथिवीयाम्, स्विष्टकृदंतेऽग्निभ्यः स्विष्टकृद्भ्यः स्वाहेति लोहितं जुहोति यथावत्तम्, अश्वशफेन वाऽनुयाजांते, "अयस्मयेन पत्नीसंयाजांते, इमानुकमिति च द्विपदाः" इति ( का. श्रौ. सू. २० । ८ । १९२–१९८ ) ॥ ३ ॥ ४ ॥

खलतेः पतितकेशस्य विक्लिधस्य दंतुरस्य पुरुषस्य मूर्द्धनि जुहोति ॥ ९ ॥

---

१–शाखान्तरं चात्र माध्यन्दिनव्यतिरिक्तं कण्वादिशुक्लयजुःपंचदशशाखाऽन्तरशाखात्मकं विज्ञेयम् । न त्वन्यदृगादिरूपमिति ॥ २–विक्लिधशुक्लस्य मूर्द्धनि जुहोति जुम्बकाय स्वाहेति । का. श्रौ. सू. २० । २०३ ।

पशूनेव मात्रया समर्द्धयति नान्यामुत्तमामाहुतिञ्जुहोति यदन्यामुत्तमामाहुतिञ्जुहुयात्प्र प्रतिष्ठायै च्यवेत द्विपदाऽउत्तमा जुहोति प्रतिष्ठा वै द्विपदाः प्रत्येव तिष्ठति जुम्बकाय स्वाहेत्यवभृथऽ उत्तमामाहुतिञ्जुहोति व्वरुणो वै जुम्बकः साक्षादेव व्वरुणमवयजते शुक्लस्य खलतेर्व्विक्लिधस्य पिङ्गाक्षस्य मूर्द्धनि जुहोत्येतद्वै व्वरुणस्य रूपꣳ रूपेणैव व्वरुणमवयजते ॥ ५ ॥

द्वादश ब्रह्मौदनानुत्थाय निर्व्वपति । द्वादशभिर्व्वेष्टिभिर्य्यजते तदाहुर्य्यज्ञस्य वाऽ एतद्रूपं यदिष्टयो यदिष्टिभिर्य्यजेतोपनामुकऽएनं यज्ञः स्यात्पापीयांस्तु स्याद्यातयामानि वाऽ एतदीजानस्य च्छन्दाꣳसि भवन्ति तानि किमेतावदाशु प्रयुञ्जीत सर्व्वा वै सꣳस्थिते यज्ञे व्वागाप्यते साऽत्राऽऽप्ता यातयाम्नी भवति क्रूरीकृतेव हि भवत्यरुष्कृता व्वाग्वै यज्ञस्तस्मान्न प्रयुञ्जीतेति ॥ ६ ॥

द्वादशैव ब्रह्मौदनानुत्थाय निर्व्वपेत् । (त्प्र) प्रजापतिर्व्वाऽओदनः

---

षोडशकला वै पशवः । सा पशूनां मात्रा । पशूनेव मात्रया समर्द्धयति । नान्यामुत्तमामाहुतिं जुहोति । यदन्यामुत्तमामाहुतिं जुहुयात् । प्र प्रतिष्ठायै च्यवेत । द्विपदा उत्तमा जुहोति । प्रतिष्ठा वै द्विपदाः । प्रत्येव तिष्ठति । "जुंबकाय स्वाहा"–(वा० सं० २५ । ९) इत्यवभृथ उत्तमामाहुतिं जुहोति । वरुणो वै जुंबकः । साक्षादेव वरुणमवयजते । शुक्लस्य खलतेर्विक्लिधस्य पिंगाक्षस्य मूर्द्धनि जुहोति । एतद्वै वरुणस्य रूपम् । रूपेणैव वरुणमवयजते ॥ ५ ॥

द्वादश ब्रह्मौदनानुत्थाय निर्वपति । द्वादशभिर्वेष्टिभिर्यजते । तदाहुः—यज्ञस्य वा एतद्रूपम्, यदिष्टयः । यदिष्टिभिर्यजेत । उपनामुक एनं यज्ञः स्यात् । पापीयांस्तु स्यात् । यातयामानि वा एतदीजानस्य च्छन्दांसि भवंति । तानि किमेतावदाशु प्रयुंजीत । सर्वा वै संस्थिते यज्ञे वागाप्यते । साऽत्राऽऽप्ता यातयाम्नी भवति । क्रूरीकृतेव हि भवत्यरुष्कृता । वाग्वै यज्ञः । तस्मान्न प्रयुंजीतेति ॥ ६ ॥

द्वादशैव ब्रह्मौदनानुत्थाय निर्वपेत् । प्रजापतिर्वा ओदनः । प्रजापतिः संवत्सरः । प्रजापतिर्यज्ञः । संवत्सरमेव यज्ञमाप्नोति । उपनामुक एनं यज्ञो भवति । न पापीयान् भवति ॥ ७ ॥

---

द्वादश ब्रह्मौदनान् । प्रसन्ने द्वे ॥ ६ ॥ ७ ॥

प्प्रजापतिः सम्वत्सरः प्प्रजापतिर्य्यज्ञः सम्वत्सरमेव यज्ञमाप्नोत्युपनामुक-ऽएनं यज्ञो भवति न पापीयान्भवति ॥ ७ ॥

इति द्वितीयप्रपाठके एकादशं ब्राह्मणम् ॥ १३।२।११ ॥ ( ३–६ ॥ )

एष वै प्प्रभूर्न्नाम यज्ञः । ( ज्ञो ) यत्रैतेन यज्ञेन यजन्ते सर्व्वमेव प्प्रभूतम्भवति ॥ १ ॥

( त्ये ) एष वै व्विभूर्न्नाम यज्ञः । ( ज्ञो ) यत्रैतेन यज्ञेन यजन्ते सर्व्वमेव व्विभूतम्भवति ॥ २ ॥

( त्ये ) एष वै व्यष्टिर्न्नाम यज्ञः । ( ज्ञो ) यत्रैतेन यज्ञेन यजन्ते सर्व्वमेव व्यष्टम्भवति ॥ ३ ॥

( त्ये ) एष वै व्विधृतिर्न्नाम यज्ञः । (ज्ञो) यत्रैतेन यज्ञेन यजन्ते सर्व्वमेव व्विधृतम्भवति ॥ ४ ॥

( त्ये ) एष वै व्यावृत्तिर्न्नाम यज्ञः । ( ज्ञो ) यत्रैतेन यज्ञेन यजन्ते सर्व्वमेव व्यावृत्तम्भवति ॥ ५ ॥

---

अथाश्वमेधस्य यौगिकसंज्ञाद्वादशकाभिधायकं ब्राह्मणम् ।

एष वै प्रभूर्नाम यज्ञः । यत्रैतेन यज्ञेन यजंते । सर्वमेव प्रभूतं भवति ॥ १ ॥
एष वै विभूर्नाम यज्ञः । यत्रैतेन यज्ञेन यजंते । सर्वमेव विभूतं भवति ॥ २ ॥
एष वै व्यष्टिर्नाम यज्ञः । यत्रैतेन यज्ञेन यजंते । सर्वमेव व्यष्टं भवति ॥ ३ ॥
एष वै विधृतिर्नाम यज्ञः । यत्रैतेन यज्ञेन यजंते । सर्वमेव विधृतं भवति ॥ ४ ॥
एष वै व्यावृत्तिर्नाम यज्ञः । यत्रैतेन यज्ञेन यजंते । सर्वमेव व्यावृत्तं भवति ॥ ५ ॥

---

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये त्रयोदशे काण्डे तृतीयेऽध्याये षष्ठं ब्राह्मणम् ॥ १३ । ३ । ६ ॥

एष वै प्रभूर्नामेति । अत्र ब्राह्मणे अश्वमेधस्य द्वादश नामानि यौगिकानि इति दर्शनार्थं तानि प्रदर्श्यन्ते । यत्र देशे काले च एतेनाश्वमेधेन यजंते । तत्र सर्वमेव प्रभूतं बहु भवति । यदिष्टं प्राणिनामन्नपानाच्छादनांगपुष्ट्यादीति शेषः ॥ १ ॥

विभूतं सर्वकार्येभ्यः ॥ २ ॥
व्यष्टं प्राप्तं यजमानेन ॥ ३ ॥
विधृतं स्वकर्मसु विभागेन स्थापितम् ॥ ४ ॥
व्यावृत्तं अकार्येभ्यः ॥ ५ ॥

(त्ये) एष वाऽऊर्ज्जस्वान्नाम यज्ञः । (ज्ञो) यत्रैतेन यज्ञेन यजन्ते सर्व्वमेवोर्ज्जस्वद्भवति ॥ ६ ॥

(त्ये) एष वै पयस्वान्नाम यज्ञः । (ज्ञो) यत्रैतेन यज्ञेन यजन्ते सर्व्वमेव पयस्वद्भवति ॥ ७ ॥

(त्ये) एष वै ब्रह्मवर्च्चसी नाम यज्ञः । (ज्ञो) यत्रैतेन यज्ञेन यजन्तऽआ ब्राह्मणो ब्रह्मवर्च्चसी जायते ॥ ८ ॥

(तऽए) एष वाऽ अतिव्याधी नाम यज्ञः । (ज्ञो) यत्रैतेन यज्ञेन यजन्तऽ आ राजन्योऽतिव्याधी जायते ॥ ९ ॥

(तऽए) एष वै दीर्घो नाम यज्ञः । (ज्ञो) यत्रैतेन यज्ञेन यजन्तऽआ दीर्घारण्यञ्जायते ॥ १० ॥

(तऽए) एष वै क्लृप्तिर्न्नाम यज्ञः । (ज्ञो) यत्रैतेन यज्ञेन यजन्ते सर्व्वमेव क्लृप्तम्भवति ॥ ११ ॥

(त्ये) एष वै प्रतिष्ठा नाम यज्ञः । (ज्ञो) यत्रैतेन यज्ञेन यजन्ते सर्व्वमेव प्रतिष्ठितम्भवति ॥ १२ ॥

इति द्वितीय प्रपाठके द्वादशं ब्राह्मणम् ॥ १३।२।१२ ॥ (३–७) ॥

---

एष वा ऊर्जस्वान्नाम यज्ञः । यत्रैतेन यज्ञेन यजंते । सर्वमेवोर्जस्वद्भवति ॥ ६ ॥
एष वै पयस्वान्नाम यज्ञः । यत्रैतेन यज्ञेन यजंते । सर्वमेव पयस्वद्भवति ॥ ७ ॥
एष वै ब्रह्मवर्चसी नाम यज्ञः । यत्रैतेन यज्ञेन यजंते । आ ब्राह्मणो ब्रह्मवर्चसी जायते ॥ ८ ॥
एष वा अतिव्याधी नाम यज्ञः । यत्रैतेन यज्ञेन यजंते । आ राजन्योऽतिव्याधी जायते ॥ ९ ॥
एष वै दीर्घो नाम यज्ञः । यत्रैतेन यज्ञेन यजंते । आ दीर्घारण्यं जायते ॥ १० ॥
एष वै क्लृप्तिर्नाम यज्ञः । यत्रैतेन यज्ञेन यजंते । सर्वमेव क्लृप्तं भवति ॥ ११ ॥
एष वै प्रतिष्ठा नाम यज्ञः । यत्रैतेन यज्ञेन यजंते । सर्वमेव प्रतिष्ठितं भवति ॥ १२ ॥

---

ऊर्जस्वत् रसवत् । यत्संभाव्यरसमौषध्यादि ॥ ६ ॥
पयस्वत् । प्यायत्ववत् संभाव्यवर्द्धनम् ॥ ७ ॥
आजायते ॥ ८ ॥ ९ ॥
दीर्घारण्यम् उत्तरकालमिति शेषः । कुत एतत्, प्रभूतं भवतीत्यादिविधानात् ॥ १० ॥
क्लृप्तं सज्जनभोग्यम् ॥ ११ ॥
भोगेभ्यः प्रतिष्ठितं स्वायत्तने ॥ १२ ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये त्रयोदशे काण्डे तृतीयेऽध्याये सप्तमं ब्राह्मणम् ॥ १३ । ३ । ७ ॥

अथातः प्प्रायश्चित्तीनाम् । यद्यश्वो व्वडवाᳬ स्कन्देद्वायव्यम्पयोऽनुनिर्व्वपेद्वायुर्व्वै रेतसाम्विकर्त्ता प्प्राणो वै व्वायुः प्राणो हि रेतसाम्विकर्त्ता रेतसैवास्मिंस्तद्रेतो दधाति ॥ १ ॥

( त्यु ) अथ यदि स्रामो व्विन्देत् । ( त्पौ ) पौष्णं चरुमनुनिर्व्वपेत्पूषा वै पशूनामीष्टे स यस्यैव पशवो यः पशूनामीष्टे तमेवैतत्प्रीणात्यगदो हैव भवति ॥ २ ॥

( त्यु ) अथ यद्यक्षतामयो व्विन्देत् । ( द्वै ) व्वैश्वानरन्द्वादशकपालम्भूमिकपालम्पुरोडाशमनुनिर्व्वपेदियम्वै वैश्वानरऽइमामेवैतत्प्रीणात्यगदो हैव भवति ॥ ३ ॥

---

## अथाश्वमेधीयप्रायश्चित्तानि ।

अथातः प्रायश्चित्तीनाम् । यद्यश्वो वडवां स्कन्देत् । वायव्यं पयोऽनुनिर्वपेत् । वायुर्वै रेतसां विकर्ता । प्राणो वै वायुः । प्राणो हि रेतसां विकर्ता । रेतसैवास्मिंस्तद्रेतो दधाति ॥ १ ॥

अथ यदि स्रामो विंदेत् । पौष्णं चरुमनुनिर्वपेत् । पूषा वै पशूनामीष्टे । स यस्यैव पशवः । यः पशूनामीष्टे । तमेवैतत्प्रीणाति । अगदो हैव भवति ॥ २ ॥

अथ यद्यक्षतामयो विंदेत् । वैश्वानरं द्वादशकपालं भूमिकपालं पुरोडाशमनुनिर्वपेत् । इयं वै वैश्वानरः । इमामेवैतत्प्रीणाति । अगदो हैव भवति ॥ ३ ॥

---

अथातः प्रायश्चित्तीनामिति । वडवां स्कंदेत् । "स्कंदिर् गतिशोषणयोः"–( धा. पा. भ्वा. प. १००४ ) । वडवां गच्छेत् । तस्यां रेतः सिंचेदित्यर्थः । रेतसा वायव्येन पयसा अस्मिन्नश्वे तद्रेतो दधाति । यद्वायव्यं पयो निर्वपति ॥ १ ॥

स्रामः प्रतिश्रयः । यत् यदि प्राप्नुयात् । 'अगदः' । गदो रोगः । अरोगः अश्वो भवति ॥ २ ॥

अक्षतस्य आमयो रोगो ज्वरादिः अक्षतामयः । स यदश्वं प्राप्नुयात् । भूमिरेव द्वादशविभागा लोष्टा वा द्वादश कपालकार्ये यस्य स भूमिकपालः ॥ ३ ॥

---

१–अश्वापदीज्याचरुभिः साविञ्यन्ते । का. श्रौ. सू. २० । ७३ ।

२–प्रजाते वायव्यम् । का. श्रौ. सू. २० । ८१ । प्रजातो वडवायां कृतरेतःस्कन्दनः इति देवयाज्ञिकः ॥

३–पौष्णः स्रामे । का. श्रौ. सू. २० । ७४ ।

४–भूमिकपालो वैश्वानरोऽरिष्टयामये । लोष्टकपालं जातूकर्ण्यो भेदात् । का. श्रौ. सू. २० । ७७ । ७८ ।

( त्यु ) अथ यद्यक्ष्यामयो विन्देत् । ( त्सौ ) सौर्य्यञ्चरुमनुनिर्व्वपे-त्सूर्य्यो वै प्रजानाञ्चक्षुर्य्यदा ह्येवैषऽ उदेत्यथैतꣳ सर्व्वञ्चरति चक्षुषैवा-स्मिँस्तच्चक्षुर्दधाति स यच्चरुर्भ्भवति चक्षुषा ह्ययमात्मा चरति ॥ ४ ॥

( त्यु ) अथ यद्युदके म्म्रियेत । व्वारुणं यवमयञ्चरुमनुनि-र्व्वपेद्वरुणो वाऽएतङ्गृह्णाति योऽप्सु म्म्रियते सा यैवैनन्देवता गृह्णाति तामेवैतत्प्रीणाति साऽस्मै प्प्रीताऽन्यमालम्भायानुमन्यते तयाऽनुमत-मालभते स यद्यवमयो भवति व्वरुण्या हि यवाः ॥ ५ ॥

( वाऽअ ) अथ यदि नश्येत् । ( त्रि ) त्रिहविषमिष्टिमनुनिर्व्वपेद्द्यावा-पृथिव्यमेककपालम्पुरोडाशम्वायव्यम्पयः सौर्य्यञ्चरुं यद्वै किञ्च नश्यत्य-न्तरैव तद्द्यावापृथिवी नश्यति तद्वायुरुपवात्यादित्योऽभितपति नैताभ्यो देवताभ्यऽऋते किञ्चन नश्यति सैषा पृथगेव नष्टवेदनी स यद्यस्याप्य-

---

अथ यद्यक्ष्यामयो विन्देत् । सौर्यं चरुमनुनिर्वपेत् । सूर्यो वै प्रजानां चक्षुः । यदा ह्येवैष उदेति । अथैतं सर्वं चरति । चक्षुषैवास्मिंस्तच्चक्षुर्दधाति । स यच्चरुर्भवति । चक्षुषा ह्यय-मात्मा चरति ॥ ४ ॥

अथ यद्युदके म्रियेत । वारुणं यवमयं चरुमनुनिर्वपेत् । वरुणो वा एतं गृह्णाति । योऽप्सु म्रियते । सा यैवैनं देवता गृह्णाति । तामेवैतत्प्रीणाति । साऽस्मै प्रीताऽन्यमालंभायानुमन्यते । तयाऽनुमतमालभते । स यद्यवमयो भवति । वरुण्या हि यवाः ॥ ५ ॥

## अथ प्रायश्चित्तीया त्रिहविषेष्टिः ।

अथ यदि नश्येत् । त्रिहविषमिष्टिमनुनिर्वपेत् । द्यावापृथिव्यमेककपालं पुरोडाशम् । वायव्यं पयः । सौर्यं चरुम् । यद्वै किंचन नश्यति । अंतरैव तद् द्यावापृथिवी नश्यति । तद्वायुरुपवाति । आदित्योऽभितपति । नैताभ्यो देवताभ्य ऋते किंचन नश्यति । सैषा पृथगेव नष्टवेदनी । स यद्य-

---

अक्ष्णोरामयो रोगः अक्ष्यामयः । स यद्यश्वमाप्नुयात् ॥ ४ ॥ ५ ॥

सा एषा त्रिहविरिष्टिः पृथगेव अश्वमेधात्पृथगपि बहिरपि भवति । एवशब्दः अपिशब्दस्यार्थे । कुत एतत् । "स यद्यस्याप्यन्यन्नश्येत् " ततः " एतयैव यजेत " इत्युत्तरत्र अपिशब्दश्रवणात् । नष्टं विन्दते अनयेति

---

१—वारुणोऽप्सु मृते । का. श्रौ. सू. २० । ७६ । २—नाशे तंत्रेण द्यावापृथिव्यः पयो वायव्यं सौर्यः । अन्यत्रापि । का. श्रौ. सू. २० । ७९ । ८० । ३—सौर्योऽक्ष्यामये । का. श्रौ. सू. २० । ७५ ।

न्यन्नुश्येदेतुयैव यजेतानु हैवैनद्विन्दत्युथ युद्यमित्राऽअश्वम्विन्देरन्यदि वा म्म्रियेत युदि वाऽप्स्वन्यमानीय प्प्रोक्षेयुः सैव तत्र प्प्रायश्चित्तिः ॥ ६ ॥

इति द्वितीयप्रपाठके त्रयोदशं ब्राह्मणम् ॥ १३।२।१३ ॥( ३–८ ) ॥

इति तृतीयोऽध्यायश्च समाप्तः ॥ १३ । ३ ॥

कण्डिकासंख्या ॥ ५१ ॥

---

स्याप्यन्यन्नश्येत् । एतयैव यजेत । अनु हैवैनद्विन्दति । अथ यद्यमित्रा अश्वं विन्देरन् । यदि वा म्रियेत । यदि वाऽप्सु अन्यमानीय प्रोक्षेयुः । सैव तत्र प्रायश्चित्तिः ॥ ६ ॥

---

नष्टवेदनी । स यदि अस्याहिताग्नेः अन्यत् अपि अश्वाद्धिरण्यादि किंचित्पुरुषार्थं नश्येत् । तत एतयैव त्रिहविषा यजेत । अनुविन्दत्येव तन्नष्टं लभत एव । इति पुरुषार्थो विधिः पृथक् वचनादर्थवत्त्वात् । यदि तु आश्वमेधिके एव अन्यस्मिन्नपि नष्टे विधीयते सा । तेनैषा अश्वमेधात्पृथक् स्यात् ॥ ६ ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये त्रयोदशे काण्डे तृतीयेऽध्याये अष्टमं ब्राह्मणम् ॥ १३ । ३ । ८ ॥

नागस्वामिसुतोऽवन्त्यां पाराशर्यो वसन्हरिः । श्रुत्यर्थं दर्शयामास शक्तितः पौष्करीयकः ॥ १ ॥
श्रीमतोऽवन्तिनाथस्य विक्रमार्कस्य भूपतेः । धर्माध्यक्षो हरिस्वामी व्याख्यच्छातपथीं श्रुतिम् ॥ २ ॥
भूभर्त्रा विक्रमार्केण क्लृप्तां कनकवेदिकाम् । दानायाध्यस्य कृतवान् श्रुत्यर्थविवृतिं हरिः ॥ ३ ॥

इति श्रीसर्वविद्यानिधानकवीन्द्राचार्यसरस्वतीनां श्रीहरिस्वामिनां कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये त्रयोदशे काण्डे तृतीयोऽध्यायः समाप्तः ॥ ( १३–३ ) ॥

---

१–मृतादर्शनयोरन्यस्य रशनादानादि करोत्यश्वयुक्तम् । का. श्रौ. सू. २० । ८२ ।



# अथ चतुर्थेऽध्याये प्रथमं ब्राह्मणम् ।
# द्वितीयप्रपाठके च चतुर्दशं ब्राह्मणम् ।

प्प्रजापतिरकामयत । सुर्व्वान्कामानाप्नुयाथ्ँ सुर्व्वा व्व्यष्टीर्व्यश्नुवीयेति सुऽएतमश्वमेधं त्रिरात्रं यज्ञक्रतुमपश्यत्तमाहरत्तेनायजत तेनेष्ट्वा सुर्व्वान्कामानाप्नोत्सुर्व्वा व्व्यष्टीर्व्याश्नुत सुर्व्वान्ह वै कामानाप्नोति सुर्व्वा व्व्यष्टीर्व्यश्नुते योऽश्वमेधेन यजते ॥ १ ॥

तुदाहुः । कुस्मिन्नृतावभ्यारम्भऽइति ग्ग्रीष्मेऽभ्यारभेतेत्यु हैकऽआहु-ग्ग्रीष्मो वै क्षत्रियस्यर्त्तुः क्षत्रिययज्ञऽउ वाऽएष युदश्वमेधऽइति ॥ २ ॥

---

### अथाश्वमेधस्य फलाधिकारिकालादिकम् ।

प्रजापतिरकामयत । सर्वान्कामानाप्नुयाम् । सर्वा व्यष्टीर्व्यश्नुवीयेति । स एतमश्वमेधं त्रिरात्रं यज्ञक्रतुमपश्यत् । तमाहरत् । तेनायजत । तेनेष्ट्वा सर्वान्कामानाप्नोत् । सर्वा व्यष्टीर्व्याश्नुत । सर्वान् ह वै कामानाप्नोति । सर्वा व्यष्टीर्व्यश्नुते । योऽश्वमेधेन यजते ॥ १ ॥

तदाहुः—कस्मिन् ऋतौ अभ्यारंभ इति । ग्रीष्मेऽभ्यारभेत—इत्यु हैक आहुः । ग्रीष्मो वै क्षत्रियस्यर्तुः । क्षत्रिययज्ञ उ वा एषः । यदश्वमेध इति ॥ २ ॥

---

प्रजापतिरकामयत । सर्वान्कामान् जगद्गतानाप्नुयाम्, सर्वा व्यष्टीः व्याप्या अवस्थाः विभागेनाश्नुवीयेति । सर्वान् ह वै कामानाप्नोति इति फलत एवाश्वमेधस्योत्पत्तिः ॥ १ ॥

ग्रीष्मो वै क्षत्रियस्य उचितऋतुः स हि तत्राग्नी आधत्ते । ग्रीष्मवच्च करैः संतापयति । अर्थवादोऽयम् । क्षत्रियस्य चैष यज्ञो यः अश्वमेधः । एतस्मादेव वचनात् राष्ट्री अश्वमेधेन यजेत । "प्राची दिग्वोतुर्दक्षिणा" (श. प. १३ । ९ । ४ । २४) इत्यादिवचनसामर्थ्याच्च क्षत्रियस्य हि राज्यमुचितम् । राजा च राष्ट्री भवति । ननु च—अन्ये अपि महीं पालयंतो दृश्यंते । सत्यम् । न च ते वृत्तच्युताः शास्त्रेणाधिक्रियंते । तच्चापदि प्रायोऽनन्तरावृत्तिर्विहिता । सत्यम् । तावदेव तु सा । यावत् तया दीनमात्मानमुद्धरति । नित्यानि च कर्माणि करोति । काम्यस्तु अश्वमेधो महाप्रपंचश्च । न तम् आपत्कल्पचोदना क्षमते । न चान्यः अश्वमेधचोदनायां विशेषः अस्ति । येन एषा प्रायश्चित्तचोदनैव अश्वविषये स्यात् । तस्मात् क्षत्रियस्यैवाश्वमेध इत्युपपन्नम् । अत एव कारणात् प्रायश्चित्तभूतोऽप्येष क्षत्रियस्यैव, नान्यस्य । अवभृथस्नानप्रायश्चित्तं तु सर्ववर्णानां अविशेषात् ॥ २ ॥

---

१–राजयज्ञोऽश्वमेधः सर्वकामस्य का. श्रौ. सू. २० । १ । ( सर्वकामस्येति, सर्वकामावाप्तिश्च परमात्माख्यस्वत्वप्राप्तिमन्तरेण न भवति, यावच्छरीरकालभाविनो हि कामा इति तेन सर्वकामस्येति मुमुक्षोरित्येतदुक्तं भवतीत्यत्र कर्कः । )

२–राजशब्दो अभिषेकवति क्षत्रिये वर्तते इत्युक्तं प्रदेशांतरे । तथा च "क्षत्रिययज्ञ उ वा एष यदश्वमेधः तस्माद्राष्ट्र्यश्वमेधेन यजेत" इति । राज्ञो यज्ञः राजयज्ञः न ब्राह्मणवैश्ययोः इत्यत्र कर्कः ।

तद्वै व्वसन्तऽएवाभ्यारभेत । व्वसन्तो वै ब्राह्मणस्यर्तुर्य्यऽउ वै कश्च यजते ब्राह्मणीभूयेवैव यजते तस्माद्वसन्तऽ एवाभ्यारभेत ॥ ३ ॥

सा याऽसौ फाल्गुनी पौर्णमासी भवति । तस्यै पुरस्तात्षडहे वा सप्ताहे वर्त्त्विजऽउपसमायन्त्यध्वर्य्युश्च होता च ब्रह्मा चोद्गाता चैतान्वाऽअन्वन्यऽऋत्विजः ॥ ४ ॥

( स्ते ) तेभ्योऽध्वर्य्युश्चातुष्प्राश्यम्ब्रह्मौदनन्निर्व्वपति । तस्योक्तम्ब्राह्मणश्चतुरः पात्रांश्चतुरोऽञ्जलींश्चतुरः प्प्रसृतान्द्वादशविधन्द्वादश मासाः सम्वत्सरः सर्व्वᳪं सम्वत्सरः सर्व्वमश्वमेधः सर्व्वस्याप्त्यै सर्व्वस्यावरुद्ध्यै ॥ ५ ॥

---

तद्वै वसंत एवाभ्यारभेत । वसंतो वै ब्राह्मणस्यर्तुः । य उ वै कश्च यजते । ब्राह्मणीभूयेवैव यजते । तस्माद्वसंत एवाभ्यारभेत ॥ ३ ॥

सा याऽसौ फाल्गुनी पौर्णमासी भवति । तस्यै पुरस्तात् षडहे वा सप्ताहे वा ऋज उपसमायंति । अध्वर्युश्च होता च ब्रह्मा चोद्गाता च । एतान्वा अन्वन्य ऋत्विजः ॥ ४ ॥

तेभ्योऽध्वर्युश्चातुष्प्राश्यं ब्रह्मौदनं निर्वपति । तस्योक्तं ब्राह्मणम् । चतुरः पात्रांश्चतुरोऽञ्जलींश्चतुरः प्रसृतान् द्वादशविधम् । द्वादश मासाः संवत्सरः । सर्वं संवत्सरः । सर्वमश्वमेधः । सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै ॥ ५ ॥

---

तद्वै वसंते । वसंतप्रत्यासन्नः फाल्गुनीशुक्ल एवात्र वसंत उक्तः । " सा याऽसौ फाल्गुनी "—इत्युत्तरवचनानुरोधात् । तथा च सति तत एव वचनात् ऋतुर्मासः पक्षस्तिथिरपि एतत्सर्वं विशेषतः सिद्धमित्ययं दर्शनार्थमुपन्यासः । एवं विधेरन्वारंभश्चात्र ब्रह्मौदनपाकादिरेवेत्यभिप्रायः । वसंतो वै ब्राह्मणस्यर्तुः । स हि तत्राधानोपनयनादि करोति । स स्पर्शतो दमत्वाच्च ब्राह्मण इव शांतः । य उ वै कश्च यजते । यश्च वै कश्च यजते । स दीक्षया ब्राह्मणीभूय एव यजते । तथा च " दीक्षयेद्ब्राह्मण इत्याह " इत्यत्रोक्तम् ॥ ३ ॥

सा याऽसौ फाल्गुनी । तस्यैतस्याः पुरस्तात्षडहे वा सप्ताहे । षडहे नवम्याम् । सप्ताहे अष्टम्याम् । तैः एतान् अध्वर्य्वादीन् अनु अन्ये ऋत्विजस्त्रयस्त्रयः प्रतिप्रस्थात्रादयः उपसमायन्ति । तदनुगुणवचनम् । सभक्ष्या इत्यर्थः ॥ ४ ॥

तेभ्यः आध्वर्यवेभ्यः अध्वर्य्वादिभ्यश्चतुर्भ्यः अध्वर्युः चतुर्भिः प्राश्यः चतुष्प्राश्यः । स एव चातुष्प्राश्यः । स्वार्थिकस्तद्धितः । चातुर्वर्ण्यादिवत् । ब्राह्मणेभ्य ओदनो ब्रह्मौदनः । तस्योक्तं ब्राह्मणम् । " रेत एव तद्धत्ते " ( श. प. १३।१।१।१। ) इति चतुरः पात्रान् शेनिकान्निर्वपति ॥ ५ ॥

---

१–अष्टम्यां नवम्यां वा फाल्गुनीशुक्लस्य ग्रीष्म एके । का. श्रौ. सू. २०।२।३। ग्रीष्मेऽभ्यारभेतेत्यु हैक आहुर्ग्रीष्मो वै क्षत्रियस्यर्तुः ( श. प. १३।४।१।२।) इति श्रुतेः ॥

२–ब्रह्मौदनं पचति चतुर्णां पात्राणामंजलिप्रसृतानां च । का. श्रौ. सू. २०।४।

तमेते चत्वारऽऋत्विजः प्प्राश्नन्ति । तेषामुक्तम्ब्राह्मणं तेभ्यश्चत्वारि सहस्राणि ददाति सर्व्वं वै सहस्रꣳ सर्व्वमश्वमेधः सर्व्वस्याप्त्यै सर्व्वस्यावरुद्ध्यै चत्वारि च सुवर्ण्णानि शतमानानि हिरण्यानि तस्यो ऽएवोक्तम् ॥ ६ ॥

(मु) अथास्माऽ अध्वर्य्युर्न्निष्कम्प्रतिमुञ्चन्वाचयति । तेजोऽसि शुक्रममृतमिति तेजो वै शुक्रममृतꣳ हिरण्यन्तेजऽएवास्मिञ्छुक्रममृतं दधात्यायुष्पाऽआयुर्म्मे पाहीत्यायुरेवास्मिन्दधात्यथैनमाह व्वाचं यच्छेति व्वाग्वै यज्ञो यज्ञस्यैवाभ्यारम्भाय ॥ ७ ॥

चतस्रो जायाऽ उपक्लृप्ता भवन्ति । महिषी व्वावाता परिवृक्ता पाला-

---

तमेते चत्वार ऋत्विजः प्राश्नन्ति । तेषामुक्तं ब्राह्मणम् । तेभ्यश्चत्वारि सहस्राणि ददाति । सर्वं वै सहस्रम् । सर्वमश्वमेधः । सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै । चत्वारि सुवर्णानि शतमानानि हिरण्यानि । तस्य उ एवोक्तम् ॥ ६ ॥

अथास्मै अध्वर्युर्निष्कं प्रतिमुञ्चन् वाचयति । "तेजोऽसि शुक्रममृतम्" इति । तेजो वै शुक्रम् । अमृतं हिरण्यम् । तेज एवास्मिञ्छुक्रममृतं दधाति । "आयुष्पा आयुर्मे पाहि" (वा. सं. २२ । १ ) इति । आयुरेवास्मिन्दधाति । अथैनमाह वाचं यच्छेति । वाग्वै यज्ञः । यज्ञस्यैवाभ्यारंभाय ॥ ७ ॥

चतस्रो जाया उपक्लृप्ता भवंति । महिषी वावाता परिवृक्ता पालागली । सर्वा निष्किण्यो-

---

तमेते चत्वार ऋत्विजः अध्वर्य्वादयः प्राश्नन्ति । तेषामुक्तं ब्राह्मणम् । "यन्महर्त्विजो ब्रह्मौदनं प्राश्नंति महिमानमेव तद्यज्ञस्य यजमानोऽवरुंधे" ( श.प. १३।१।१।४ ) इति । तेभ्यः चत्वारि सहस्राणि गवां ददाति । तस्यो एवोक्तं--"रेतो वा ओदनो रेतो हिरण्यम्" ( श. प. १३।१।१।४ ) इति ॥ ६ ॥

अथास्मा अध्वर्युः । अस्मै यजमानाय अध्वर्युः निष्कं सौवर्णमलंकारं प्रतिमुंचन् गले आबध्नन् वाचयति । अस्मिन् यजमाने दधाति । अथैनं यजमानं आह वाचं यच्छेति ॥ ७ ॥

चतस्रो जायाः भार्याः उप समीपे क्लृप्ताः स्थिता भवन्ति । पालागली दूतदुहिता ॥ ८ ॥

---

१–अक्त्वैनमाद्यर्त्विभ्यः प्रयच्छति । का. श्रौ. सू. २०।५ ।

२–तेभ्यश्चत्वारि सहस्राणि ददाति शतमानांश्च तावतः । का. श्रौ. सू. २०।६ । तावतः तावत्संख्यान् हिरण्यस्य शतमानांश्चेत्यर्थः, ब्रह्मौदने सुवर्णं हिरण्यं ददाति शतमानं भवतीति च श्रुतेः । श. प. १३ । १ । १ । ४ । सुवर्णरक्तिकाशतानि शतमानं इति कर्कः ॥

३–निष्कं प्रतिमुंचन्वाचयति तेजोऽसीति का. श्रौ. सू. २० । ९ । चतुःसौवर्णिकः आभरणविशेषो निष्कः इति कर्कः ॥

४–वाचं यच्छेति चाह आवरदानाद्वाग्यमनम् । का. श्रौ. सू. २०।१०।११ ॥

५–पत्न्यश्चायंत्यलंकृता निष्किण्यो महिषी १ वावाता २ परिवृक्ता ३ पालागलीति । का. श्रौ. सू. २० । १२ । ( महिषी प्रथमपरिणीता पत्नी १, वावाता वल्लभा २, परिवृक्ता अवल्लभा ३ पालागली दूतपुत्री ।

गली सर्व्वां निष्किण्योऽलङ्कृता मिथुनस्यैव सर्व्वत्वाय ताभिः सहाग्न्यगारम्प्रपद्यते पूर्व्वया द्वारा यजमानो दक्षिणया पत्न्यः ॥ ८ ॥

सायमाहुत्याᳫँ हुतायाम् । (अ) जघनेनः गार्हपत्यमुदङ्वावातया सह सम्विशति तदेवापीतराः सम्विशन्ति सोऽन्तरोरूऽअसम्वर्त्तमानः शेतेऽनेन तपसा स्वस्ति संवत्सरस्योदृचᳫँ समश्नवाऽइति ॥ ९ ॥

प्रातराहुत्याᳫँ हुतायाम् । ( म ) अध्वर्य्युः पूर्ण्णाहुतिञ्जुहोति सर्व्वम्वै पूर्ण्णᳫँ सर्व्वमश्वमेधः सर्व्वस्याप्त्यै सर्व्वस्यावरुद्ध्यै तस्याम्वरेण व्वाचम्विसृजते व्वरन्ददामि ब्रह्मणऽइति सर्व्वम्वै व्वरः सर्व्वमश्वमेधः सर्व्वस्याप्त्यै सर्व्वस्यावरुद्ध्यै ॥ १० ॥ ॥ शतम् ६६०० ॥

( द्व्याऽअ ) अथ योऽस्य निष्कः प्रतिमुक्तो भवति । तमध्वर्य्यवे ददात्यध्वर्य्यवे ददद्मृतमायुरात्मन्धत्तेऽमृतᳫँ ह्यायुर्हिरण्यम् ॥ ११ ॥

---

ऽलंकृताः । मिथुनस्यैव सर्वत्वाय । ताभिः सहाग्न्यगारं प्रपद्यते पूर्वया द्वारा यजमानः । दक्षिणया पत्न्यः ॥ ८ ॥

सायमाहुत्यां हुतायां जघनेन गार्हपत्यमुदङ् वावातया सह संविशति । तदेवापीतराः संविशंति । सोऽन्तरोरू असंवर्तमानः शेते । अनेन तपसा स्वस्ति संवत्सरस्योदृचं समश्नवा इति ॥ ९ ॥

प्रातराहुत्यां हुतायामध्वर्युः पूर्णाहुतिं जुहोति । सर्वं वै पूर्णम् । सर्वमश्वमेधः । सर्वस्याप्त्यै । सर्वस्यावरुद्ध्यै । तस्यां वरेण वाचं विसृजते । वरं ददामि ब्रह्मण इति । सर्वं वै वरः । सर्वमश्वमेधः । सर्वस्याप्त्यै । सर्वस्यावरुद्ध्यै ॥ १० ॥

अथ योऽस्य निष्कः प्रतिमुक्तो भवति । तमध्वर्यवे ददाति । अध्वर्यवे दददमृतमायुरात्मन्धत्ते । अमृतं ह्यायुर्हिरण्यम् ॥ ११ ॥

---

सायमाहुत्यां हुतायां जघनेन गार्हपत्यं पश्चाद्गार्हपत्यस्य समीपे । उदङ् उदक्शिराः । तदेव तत्रैव इतरा अपि जायाः संविशंति । ता अंतरोरू शेते । असंवर्तमानः मैथुनमनुपगच्छन् । अनेन तपसा सन्निहितप्रियाऽनुपगमनेन स्वस्ति क्षेमेण अश्वरक्षणसंवत्सरस्य उदृचं समाप्तिं सम्यक् अश्नवै । " अशू व्याप्तौ "— ( धा. पा. स्वा. आ. १८ ) प्राप्नुयाम् । इति प्रार्थयमानः शेते ॥ ९ ॥

प्रातराहुत्यां हुतायाम् ॥ १० ॥ ११ ॥

---

१–अग्न्याधेयवत्प्रविश्य हुतेऽग्निहोत्रेऽपरेण गार्हपत्यमुदक्शिराः संविशति । ऊर्वन्तरे वावातायाः ब्रह्मचारी । इतराश्चान्वक् इति च । का. श्रौ. सू. २० । १७–१९ ।

२–प्रातराहुत्यां हुतायां पूर्णाहुत्यंते वरदानं ब्रह्मणे । का. श्रौ. सू. २० । १९ । २० । आवरदानाद्वाग्यमनम् । का. श्रौ. सू. २० । ११ । अध्वर्यवे च प्रतिमुक्तं निष्कम् । का. श्रौ. सू. २० । २१ ।

( मु ) अथाग्नेयीमिष्टिन्निर्व्वपति । पथश्च कामाय यज्ञमुखस्य चाछम्बट्कारायाथोऽअग्निमुखाऽउ वै सर्व्वा देवताः सर्व्वे कामाऽअश्वमेधे मुखतः सर्व्वान्देवान्प्रीत्वा सर्व्वान्कामानाप्नवानीति ॥ १२ ॥

तस्यै पञ्चदश सामिधेन्यो भवन्ति । पञ्चदशो वै व्वज्रो व्वीर्य्यम्वज्रो व्वज्रेणैवैतद्वीर्य्येण यजमानः पुरस्तात्पाप्मानमपहते व्वार्त्रघ्नावाज्यभागौ पाप्मा वै व्वृत्रः पाप्मनोऽपहत्याऽअग्निर्म्मूर्द्धा दिवः ककुद्भुवो यज्ञस्य रजसश्च नेतेत्युपाꣳशु हविषो याज्याऽनुवाक्ये मूर्द्धन्वत्यन्या भवति सद्वत्यन्यैष वै मूर्द्धा यऽएष तपत्येतस्यैवावरुद्ध्याऽअथ यत्सद्वती सदेवावरुन्द्धे व्विराजौ संयाज्ये सर्व्वदेवत्यम्वाऽएतच्छन्दो यद्विराट् सर्व्वे कामाऽअश्वमेधे सर्व्वान्देवान्प्रीत्वा सर्व्वान्कामानाप्नवानीति हिरण्यं दक्षिणा सुवर्णꣳ शतमानन्तस्योक्तम्ब्राह्मणम् ॥ १३ ॥

---

अथाग्नेयीष्टिः ।

अथाग्नेयीमिष्टिं निर्वपति । पथश्च कामाय । यज्ञमुखस्य चाछंबट्काराय । अथो अग्निमुखा उ वै सर्वा देवताः । सर्वे कामा अश्वमेधे । मुखतः सर्वान्देवान्प्रीत्वा । सर्वान्कामानाप्नवानीति॥ १२॥

तस्यै पंचदश सामिधेन्यो भवंति । पंचदशो वै वज्रः । वीर्यं वज्रः । वज्रेणैवैतद्वीर्येण यजमानः पुरस्तात्पाप्मानमपहते । वार्त्रघ्नावाज्यभागौ । पाप्मा वै वृत्रः । पाप्मनोऽपहत्यै । " अग्निर्मूर्द्धा दिवः ककुत "–( वा. सं. १३ । १४ ) " भुवो यज्ञस्य रजसश्च नेता "–( वा. सं १३ । १५ ) इति उपांशु हविषो याज्याऽनुवाक्ये । मूर्द्धन्वत्यन्या भवति । सद्वत्यन्या । एष वै मूर्द्धा । य एष तपति । एतस्यैवावरुद्धयै । अथ यत्सद्वती । सदेवावरुन्धे । विराजौ संयाज्ये । सर्वदेवत्यं वा

---

अथाग्नेयीमिष्टिमिति । पुरोडाशहविषम् । पथः यज्ञपथस्य कामाय प्राप्तये । न यज्ञपथादयानीति । इत्येवाग्नेयः क्रियत इत्यर्थः । यज्ञमुखस्य चारंभस्य । अछंबट्काराय अनंतरा कथं हि यज्ञमुखं यज्ञशून्यं स्यादित्यर्थः ॥ १२ ॥

तस्यै पंचदश । मूर्द्धन्वत्यन्या । एते हविषो याज्याऽनुवाक्ये उपांशु भवतः । मूर्द्धन्वती एव । न सद्वती । अन्या एका च प्रथमा भवति । सा सद्वती अन्या " भुवो यज्ञस्य "–इत्येषा । भुवः भवसि इत्यनेन पादसत्ता भवन-

---

१–पुरोडाशोऽग्नये पथिकृते । का. श्रौ. सू. २० । २२ ।

२–कर्कः–स चोपांशुर्भवतीति अत्रैव सूत्रे व्याख्यत् । का. श्रौ. सू. २० । २२ भाष्ये । शतमानं दक्षिणा सौवर्णम् । का. श्रौ. सू. २० । २३ । ( शतमाने सौवर्णमानं न राजतं, इति अत्रैव कर्कः । सौवर्णं शतमानं सुवर्णरक्तिकाशतानि, इति कर्कः ) । हिरण्यपरिमाणेऽन्यत्रापि । का. श्रौ. सू. २० । २४ । ( अन्यत्रापि दाक्षायणादावपि सौवर्णमेव न राजतम् ) ।

३–पादसत्ताभवनमुपात्तम् । एकादशाक्षरात्मकपादचतुष्केण चतुश्चत्वारिंशदक्षरायाश्चतुष्पदाया भुवो यज्ञस्येति त्रिष्टुभः प्रथमे पादे ' भवसि ' ' भविता ' वा इत्यस्य स्थाने ' भुवः ' इति एकाक्षरसंकोचात्मकपदविन्यासेन, एकादशाक्षरात्मकपादन्यास-स्थितिसंपादनमिति भावः ॥

( मु ) अथ पौष्णीन्निर्व्वपति । पूषा वै पथीनामधिपतिरश्वायैवैतत्स्व-
स्त्ययनङ्करोत्यथोऽइयम्वै पूषेमामेवास्माऽ एतद्गोप्त्रीङ्करोति तस्य हि
नार्त्तिरस्ति न ह्वला यमियमध्वन्गोपायतीमामेवास्माऽएतद्गोप्त्री-
ङ्करोति ॥ १४ ॥

तस्यै सप्तदश सामिधेन्यो भवन्ति । सप्तदशो वै प्रजापतिः प्रजापति-
रश्वमेधोऽश्वमेधस्यैवाप्त्यै वृधन्वन्तावाज्यभागौ यजमानस्यैव व्वृद्ध्यै
पूषँस्तव व्व्रते व्वयम्पथस्पथः परिपतिम्वचस्येत्युपाँशु हविषो याज्याऽ-
नुवाक्ये व्व्रतवत्यन्या भवति पथन्वत्यन्या व्वीर्य्यम्वै व्व्रतम्वीर्य्यस्याप्त्यै
व्वीर्य्यस्यावरुद्ध्याऽअथ यत्पथन्वत्यश्वायैवैतत्स्वस्त्ययनङ्करोत्यनुष्टुभौ
संयाज्ये व्वाग्वाऽअनुष्टुब्वाग्वै प्रजापतिः प्रजापतिरश्वमेधोऽश्वमेध-
स्यैवाप्त्यै व्वासःशतन्दक्षिणा रूपम्वाऽएतत्पुरुषस्य यद्वासस्तस्माद्य-
मेव कञ्च सुवाससमाहुः को न्वयमिति रूपसमृद्धो हि भवति रूपेणैवैनँ

---

एतच्छंदः । यद्विराट् । सर्वे कामा अश्वमेधे । सर्वान् देवान्प्रीत्वा । सर्वान्कामानाप्नवानीति । हिरण्यं दक्षिणा । सुवर्णं शतमानम् । तस्योक्तं ब्राह्मणम् ॥ १३ ॥

अथ पौष्णीष्टिः ।

अथ पौष्णीं निर्वपति । पूषा वै पथीनामधिपतिः । अश्वायैवैतत्स्वस्त्ययनं करोति । अथो इयं वै पूषा । इमामेवास्मा एतत् गोप्त्रीं करोति । तस्य हि नार्तिरस्ति । न ह्वला । यमियमध्वन् गोपायति । इमामेवास्मा एतत् गोप्त्रीं करोति ॥ १४ ॥

तस्य सप्तदश सामिधेन्यो भवन्ति । सप्तदशो वै प्रजापतिः । प्रजापतिरश्वमेधः । अश्वमेधस्यैवाप्त्यै । वृधन्वन्तावाज्यभागौ । यजमानस्यैव वृद्ध्यै । " पूषंस्तव व्रते वयम् " । " पथस्पथः

---

मुपात्तम् । भविता वा " अग्निस्तिग्मेन "–( वा. सं. १७ । ७६ ) सा 'या सद्वती एका । मूर्धन्वत्यपि तु भवत्येव सा " मूर्द्धानं दधिषे " इत्यनेन मूर्धन्वत्येव अन्या भवति । न सद्वती । इत्येवमवधृतम् । नत्वेव सर्वं धार्यते । इत्येव मूर्द्धन्वती भवति । सदेवेति ॥ १३ ॥

अथ पौष्णीम् । पौष्णं चरुमित्यर्थः । पूषा वै पथीनां पथां यः अधिपतिः ॥ १४ ॥ १९ ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये त्रयोदशे कांडे चतुर्थेऽध्याये प्रथमं ब्राह्मणम् ॥ १३ ॥ ४ ॥ १ ॥

---

१–पौष्णं चरुं निर्व्वपति व्वासःशतं दक्षिणा का. श्रौ. सू. २० । २५ । ( अयमप्युपांश्वेव ) तथाऽस्यां कंडिकायां श्रुतिः " पूषंस्तव व्व्रते व्वयं पथस्पथः परिपतिं वचस्येति उपांशु हविषो याज्याऽनुवाक्ये व्रतवत्यन्या भवति पथन्वत्यन्येति । व्रतवती पूषंस्तव व्व्रते व्वयमिति वा. सं. ३४–४१ । पथन्वती पथस्पथः परिपतिं व्वचस्येति वा. सं. ३४–४२ ॥

सुमर्द्धयति शतम्भवति शतायुर्व्वै पुरुषः शतेन्द्रियऽआयुरेवेन्द्रियम्वीर्य्य- मात्मन्धत्ते ॥ १९ ॥

इति द्वितीयप्रपाठके चतुर्दशं ब्राह्मणम् ॥ १३।२।१४ ॥ ( ४।१ ) ॥

एतस्यान्तायमानायाम् । ( म ) अश्वन्निक्त्वोदानयन्ति यस्मिन्त्सर्व्वाणि रूपाणि भवन्ति यो वा जवसमृद्धः सहस्राईम्पूर्व्यं यो दक्षिणायां धुर्य्य- प्प्रतिधुरः ॥ १ ॥

( स्त ) तद्यत्सर्व्वरूपो भवति । सर्व्वं वै रूपथ्ं सर्व्वमश्वमेधः सर्व्व- स्याप्त्यै सर्व्वस्यावरुद्धयाऽअथ यज्जवसमृद्धो व्वीर्य्यम्वै जवो व्वीर्य्य-

---

परिपातिं वचस्या "–( वा. सं. ३४ । ४१ । ४२ ) इत्युपांशु हविषो याज्यानुवाक्ये । व्रतवत्यन्या भवति । पथन्वत्यन्या । वीर्यं वै व्रतम् । वीर्यस्याप्त्यै । वीर्यस्यावरुद्धये । अथ यत्पथन्वती । अश्वायैवैतत्स्वस्त्ययनं करोति । अनुष्टुभौ संयाज्ये । वाग्वा अनुष्टुप् । वाग्वै प्रजापतिः । प्रजापतिरश्वमेधः । अश्वमेधस्यैवाप्त्यै । वासःशतं दक्षिणा । रूपं वा एतत्पुरुषस्य–यद्वासः । तस्माद्यमेव कं च सुवाससमाहुः । को न्वयमिति । रूपसमृद्धो हि भवति । रूपेणैवैनं समर्द्धयति । शतं भवति । शतायुर्वै पुरुषः शतेन्द्रियः । आयुरेवेन्द्रियं वीर्यमात्मन्धत्ते ॥ १९ ॥

एतस्यां तायमानायामश्वं निक्त्वोदानयन्ति । यस्मिन्सर्वाणि रूपाणि भवन्ति । यो वा जवसमृद्धः । सहस्राहं पूर्व्यम् । यो दक्षिणायां धुर्यप्रतिधुरः ॥ १ ॥

तद्यत्सर्वरूपो भवति । सर्वं वै रूपम् । सर्वमश्वमेधः । सर्वस्याप्त्यै । सर्वस्यावरुद्ध्यै । अथ यत् जवसमृद्धः । वीर्यं वै जवः । वीर्यस्याप्त्यै । वीर्यस्यावरुद्ध्यै । अथ यत्सहस्राहः । सर्वं वै सहस्रम् । सर्वमश्वमेधः । सर्वस्याप्त्यै । सर्वस्यावरुद्ध्यै । अथ यत् पूर्व्यः । एष वा अपरिमितं वीर्यमभिवर्धते । यत् पूर्व्यः । अपरिमितस्यैव वीर्यस्यावरुद्ध्यै । अथ यद्दक्षिणायां धुर्यप्रतिधुरः । एष वा एषः । य एष तपति । न वा एतं कश्चन प्रतिप्रतिः । एतस्यैवावरुद्ध्यै ॥ २ ॥

---

एतस्यां तायमानायामिति । एतस्यां पौष्ण्यामिष्टौ तायमानायां निक्त्वा अश्वं स्नापयित्वा आनयंति यजमानपुरुषाः । यस्मिन्नश्वे सर्वाणि शुक्लरक्तपीतकृष्णानि रूपाणि भवंति । यो वा जवसमृद्धः । सर्वसमुच्चये वाशब्दः । इति स्वभावेन वेगेन जवनत्वेन समृद्धः स्यादित्यवधारणं विरुध्येत । सहस्राहं सहस्रं गवां मूल्यं यः अर्हति स सहस्राहः । पूर्व्यं प्रथमे वयसि वर्तमानायां प्रथमायां जातम् । दक्षिणायां धुरि अप्रतिधुरः । प्रतिधारयिता प्रतिधुरः । नास्ति प्रतिधुरो यस्येति अप्रतिधुरः । अन्येभ्यो दक्षिणधुर्येभ्य उत्कृष्ट इत्यर्थः ॥ १ ॥

य एष तपति । य एषः अश्वो मध्यः आदित्यः अधिदैवमित्यर्थः । न वा एतमादित्यं कश्चिदपि प्रतिप्रतिः ( मासाम्यः ? ) समोऽस्तीत्यर्थः ॥ २ ॥ ३ ॥

---

१–सर्वरूपं वा । का. श्रौ. सू. २० । २७ । २–शीघ्रम् । का. श्रौ. सू. २० । २८ । ३–साहस्रम् । का. श्रौ. सू. २० । ३० । ४–दक्षिणाधुर्यसमम् । का. श्रौ. सू. २० । २९ ॥

स्याप्त्यै व्वीर्य्यस्यावरुद्धचाऽअथ युत्सहस्राहैः सुर्व्वम्वै सहस्रᳪ सुर्व्वमश्वमेधः सुर्व्वस्याप्त्यै सुर्व्वस्यावरुद्धचाऽअथ युत्पूर्व्यूऽ एष वाऽ अपरिमितम्वीर्य्यमभिवुर्द्धते युत्पूर्व्योऽपरिमितुस्यैवु व्वीर्य्यस्यावरुद्धचाऽअथ यद्दक्षिणायान्धुर्य्यप्प्रतिधुर ऽएष वुाऽएष युऽ एष तुपति न वुाऽ एतं कुश्चन प्प्रातिप्प्रातिरेतुस्यैवुावरुद्धचै ॥ २ ॥

तुदु होवाच भाल्लवेयः । ( यो ) द्विरूपऽएवैषोऽश्वः स्यात्कृष्णुसारङ्गः प्प्रजापतेर्व्वा एषोऽक्ष्णः सुमभवद्द्विरूपम्वाऽ इदञ्चक्षुः शुक्लुञ्चैव कृष्णुञ्च तुदेनᳪ स्वेन रूपेण सुमर्द्धयतीति ॥ ३ ॥

( त्यु ) अुथ होवाच सुात्ययज्ञिः । ( श्रि ) त्रिरूपऽएवैषोऽश्वः स्यात्तुस्य कृष्णुः पूर्व्वार्द्धः शुक्लोऽपरार्द्धः कृत्तिकाञ्जिः [1]पुरस्तात्तद्युत्कृष्णुः पूर्व्वार्द्धो भवति युदेवेदुङ्कृष्णुमक्ष्णस्तुदस्य तदुथ युच्छुक्लोऽपरार्द्धो युदेवेदुᳪ शुक्लुमक्ष्णस्तुदस्य तदुथ यत्कृत्तिकाञ्जिः पुरस्तात्सा कनीनका सुऽ एवु रूपसमृद्धोऽतो यतमोऽस्योपकल्पेत बहुरूपो वा द्विरूपो वा त्रिरूपो वा कृत्तिकाञ्जिस्तमालभेत जवेनु त्वेव सुमृद्धः स्यात् ॥ ४ ॥

---

तदु होवाच भाल्लवेयः । द्विरूप एवैषोऽश्वः स्यात्, कृष्णसारङ्गः । प्रजापतेर्वा एषोऽक्ष्णः समभवत् । द्विरूपं वा इदं चक्षुः–शुक्लं चैव कृष्णं च । तदेनं स्वेन रूपेण समर्धयतीति ॥ ३ ॥

अथ होवाच सात्ययज्ञिः । त्रिरूप एवैषोऽश्वः स्यात् । तस्य कृष्णः पूर्वार्धः । शुक्लोऽपरार्द्धः । कृत्तिकांजिः पुरस्तात् । तद्यत् कृष्णः पूर्वार्द्धो भवति । यदेवेदं कृष्णमक्ष्णः । तदस्य तत् । अथ यत् शुक्लोऽपरार्द्धः । यदेवेदं शुक्लमक्ष्णः । तदस्य तत् । अथ यत् कृत्तिकांजिः पुरस्तात् । सा कनीनका । स एव रूपसमृद्धः । अतो यतमोऽस्योपकल्पेत । बहुरूपो वा द्विरूपो वा त्रिरूपो वा कृत्तिकांजिः । तमालभेत । जवेन त्वेव समृद्धः स्यात् ॥ ४ ॥

---

कृत्तिकांजिः कृत्तिका शकटं अंजि पुंड्रं यस्य सः कृत्तिकांजिः ॥ ४ ॥

---

१–त्रिरूपं वा ललामम् । कृत्तिकांजिं वा । पूर्वकायकृष्णं शुक्लापरम् कृष्णसारंगं वा । का. श्रौ. सू. २०।२७।३३–३५ ॥

(त्तु) तस्यैते पुरस्ताद्रक्षितार उपक्लृप्ता भवन्ति । राजपुत्राः कवचिनः शतꣳ राजन्या निषङ्गिणः शतꣳ सूतग्रामण्याम्पुत्रा इषुपर्षिणः शतं क्षात्त्रसंग्रहीतॄणाम्पुत्रा दण्डिनः शतमश्वशतन्निरष्टन्निरमणं यस्मिन्नेनमपिसृज्य रक्षन्ति ॥ ९ ॥

(न्त्यु) अथ सावित्रीमिष्टिन्निर्वपति । सवित्रे प्रसवित्रे द्वादशकपालम्पुरोडाशꣳ सविता वै प्प्रसविता सविता म इमं यज्ञम्प्रसुवादिति ॥ ६ ॥ तस्यै पञ्चदश सामिधेन्यो भवन्ति । व्वार्त्रघ्नावाज्यभागौ य इमा व्विश्वा जातान्या देवो यातु सविता सुरत्न इत्युपाꣳशु हविषो याज्याऽनु-

---

तस्यैते पुरस्तात् रक्षितार उपक्लृप्ता भवंति । राजपुत्राः कवचिनः शतम् । राजन्या निषंगिणः शतम् । सूतग्रामण्यां पुत्रा इषुपर्षिणः शतम् । क्षात्त्रसंग्रहीतॄणां पुत्रा दंडिनः शतम् । अश्वशतं निरष्टं निरमणम् । यस्मिन्नेनमपिसृज्य रक्षंति ॥ ९ ॥

अथ सावित्रीष्टिः ।

अथ सावित्रीमिष्टिं निर्वपति । सवित्रे प्रसवित्रे द्वादशकपालं पुरोडाशम् । सविता वै प्रसविता । सविता म इमं यज्ञं प्रसुवादिति ॥ ६ ॥

तस्यै पंचदश सामिधेन्यो भवंति । वार्त्रघ्नावाज्यभागौ । "य इमा विश्वा जातानि"

---

राजपुत्राः अभिषिक्तपुत्राः । कवचः सन्नाहः तद्वंतः कवचिनः । राजन्याः क्षत्रियाः । निषंगिणः खड्गिनः । इषुपर्षिणः "पृषु वृषु मृषु सेचने" (धा. पा. भ्वा. प. ७०६) इषून् साधु पर्षंति अस्यंतीति इषुपर्षिणः । क्षत्तारः आयव्ययाध्यक्षाः तेषां समूहः क्षात्रम् । संग्रहीतारः स्वभूताः । क्षात्रं च संग्रहीतारश्च तेषां पुत्रा दंडिनः । अश्वशतं यस्मिन्नेनमश्वं संसृज्य रक्षंति । कीदृशं तत् । निरष्टम् । अश्वस्य दंतगतानि अष्टौ वयोव्यंजनानि भवंति । तेषामेकैकं त्रीणि त्रीणि वर्षाण्यनुवर्तते । तानि अष्टौ व्यंजनानि निर्गतानि यस्मात् शतात् इति निरष्टम् । अतीतचतुर्विंशतिवर्षमित्यर्थः । पुनः कीदृशं ? निरमणम् निर्गतं रमणं क्रीडनं वृद्धतया यस्मात् इति निरमणं गतयौवनम् ॥ ९ ॥ ६ ॥

"य इमा[3] विश्वा जातानि" "आ देवो यातु सविता सुरत्नः" इत्याद्याः तिसृष्वपीष्टिषु याज्याऽनु-

---

१—द्वादशकपालान्निर्वपति भिन्नतंत्रान्छतमानदक्षिणान् मध्यमस्य राजतः सवित्रे प्रसवित्रे सवित्र आसवित्रे सवित्रे सत्यप्रसवायेति । का. श्रौ. सू. २०।४५। आश्वलायनश्रौतसूत्रे तु सावित्र्यस्तिस्र इष्टयोऽहरहर्वै राजतंत्राः सविता सत्यप्रसवः प्रसावित आसावितेति । उ. ष. ६।४।६ । इतीष्टीनां व्युत्क्रमः प्रतिपादितः ॥

२—देवा आशापाला इति रक्षिणोऽस्यादिशत्यनुचरीजातीयांस्तावतस्तावतः । कवचिनिषंगिकलापिदंडिनो यथासंख्यम् । का. श्रौ. सू. २०।५० । अनुचरीजातयस्तु "राजदुहितरः प्रथमायाः" । "राजन्यानां द्वितीयायाः" । "सूतग्रामण्यां तृतीयायाः" । "क्षात्रसंग्रहीतॄणां चतुर्थ्याः" । का. श्रौ. सू. २०।१३--१६। तावतस्तावतः शतं शतमित्यर्थः ॥

३—ऋग्वेद—अ. ४ अ. ४ व. २६ ऋ. ४ "य इमा विश्वा जातान्यो श्रावयेति श्लोकेन । प्र च सुवाति सविता । १ । ऋग्वे. ५।४।१२।१। आ देवो याति सविता सुरत्नोऽन्तरिक्षप्रा वहमानो अश्वैः । हस्ते दधानो नर्या पुरूणि निवेशयं च प्रसुवं च भूम ।२।

वाक्ये व्विराजौ संयाज्ये हिरण्यन्दक्षिणा सुवर्ण्णᳪ शतमानन्तस्योक्त-म्ब्राह्मणम् ॥ ७ ॥

( न्तु ) तस्यै प्प्रयाजेषु तायमानेषु । ब्राह्मणो व्वीणागाथी दक्षिणत ऽउत्तरमन्द्रामुदाघ्नँस्तिस्रः स्वयᳪ सम्भृता गाथा गायतीत्ययजतेत्यददा-दिति तस्योक्तम्ब्राह्मणम् ॥ ८ ॥

( मु ) अथ द्वितीयान्निर्व्वपति । सवित्रऽआसवित्रे द्वादशकपालम्पु-रोडाशᳪ सविता वाऽआसविता सविता मऽइमं यज्ञमासुवादिति ॥ ९ ॥
कांडस्यार्द्धम् ॥ २१६ ॥

तस्यै सप्तदश सामिधेन्यो भवन्ति । सद्वन्तावाज्यभागौ सदेवावरुन्द्धे व्विश्वानि देव सवितः सघा नो देवः सविता सहावेत्युपाᳪशु हविषो याज्याऽनुवाक्येऽअनुष्टुभौ संयाज्ये रजतᳪ हिरण्यन्दक्षिणा नानारूप-

---

" आदेवो यातु सविता सुरत्नः " इत्युपांशु हविषो याज्याऽनुवाक्ये । विराजौ संयाज्ये । हिरण्यं दक्षिणा । सुवर्णं शतमानम् । तस्योक्तं ब्राह्मणम् ॥ ७ ॥

तस्यै प्रयाजेषु तायमानेषु ब्राह्मणो वीणागाथी दक्षिणत उत्तरमंद्रामुदाघ्नन् तिस्रः स्वयं-संभृता गाथा गायति, इत्ययजत, इत्यददादिति । तस्योक्तं ब्राह्मणम् ॥ ८ ॥

अथ द्वितीयां निर्वपति । सवित्र आसवित्रे द्वादशकपालं पुरोडाशम् । सविता वा आसविता । सविता म इमं यज्ञमासुवादिति ॥ ९ ॥

तस्यै सप्तदश सामिधेन्यो भवन्ति । सद्वन्तावाज्यभागौ । सदेवावरुन्धे । " विश्वानि देव सवितः " " सघा नो देवः सविता सहाव " इत्युपांशु हविषो याज्याऽनुवाक्ये । अनु-

---

वाक्याः ब्राह्मणे समाम्नाताः । तासां एषः लिंगक्रमसमाख्यानैरेव विनियोगो द्रष्टव्यः । न वाचनिकः । तथा हि सति " तत्सवितुर्वरेण्यम् " ( वा.सं. ३।२ ) इत्यादयो गायत्र्यो मंत्रसमाम्नायपठिता याज्याऽनुवाक्याकार्ये एतास्ताभिः सह विकल्पमाना अर्थवंत्यो भविष्यंति । इतरथा तु अनवकाशा एव स्युः ॥ ७–९ ॥

सद्वंतावाज्यभागौ । नानारूपतायै । मध्ये रजतं अभितः सुवर्णं, इत्येवं क्रियमाणे नानारूपास्तिस्रोऽपीष्यो

---

१–प्रयाजेषु दक्षिणतो ब्राह्मणो यजमानस्य यज्ञदानयुक्ताः स्वयं कृतास्तिस्रो गाथा गायत्युत्तरमंद्रायाम् । का.श्रौ.सू. २०।२।७। ब्राह्मणग्रहणात् ऋत्विग्व्यतिरिक्तो ब्राह्मणः;उत्तरमन्द्रा गायनप्रसिद्धा उत्तरमंद्रानाम्नी वीणा, तस्योक्तं ब्राह्मणम् । श. प. १३ । १ । ५ । १–६ । २–ऋग्वे. ४ । ४ । २५ । ५ । विश्वानि देव सवितर्दुरितानि परा सुव । यद्भद्रं तन्न आसुव ॥ १ ॥ ऋग्वे. । ५ । ४।१२।३। सघा नो देवः सविता सहावासाविषद्वसु पतिर्वसूनि ॥ विश्रयमाणो अमतिमुरूचीं मर्तभोजनमघ रासते नः ॥ २ ॥

३–वा. सं. २२।९।१४ । तत्सवितुः हिरण्यपा देवस्यचे सुष्टुतिम् रातिंस० देवस्य स० ६ ।

ताया॒ऽ अ॒थो॒ऽ उत्क्रमायानपक्रमाय श॒तमा॑नं भवति श॒तायु॒र्वै पु॒रुषः श॒तेन्द्रिय॒ऽआ॒युरे॒वेन्द्रि॒यम्वी॒र्य॑मात्म॒न्धत्ते ॥ १० ॥

त॒स्यै प्र॑याजे॒षु ता॒यमा॑नेषु । ब्रा॒ह्म॒णो वी॑णागा॒थी द॒क्षिण॒तऽउ॒त्तर॒मन्द्रामु॒दाघ्नं॑स्ति॒स्रः स्व॒यꣳ सम्भृता गा॒था गा॑य॒तीत्यय॑ज॒तेत्यद॑दा॒दिति त॒स्योक्तम्ब्रा॒ह्मण॑म् ॥ ११ ॥

(म) अथ तृतीयान्निर्वपति । सवि॒त्रे स॒त्यप्र॑सवाय॒ द्वाद॑शकपालम्पु॒रो॒डाश॑मे॒ष ह॒ वै स॒त्यः प्र॑सवो॒ यः सवि॒तुः स॒त्येन॑ मे प्रस॒वेने॒मं य॒ज्ञम्प्र॑सु॒वादि॒ति ॥ १२ ॥

त॒स्यै स॒प्तद॑शै॒व सा॑मिधे॒न्यो भवन्ति । र॒यिम॒न्तावा॒ज्यभा॒गौ वी॒र्य॑म्वै र॒यिर्वी॒र्य॑स्याप्त्यै वी॒र्य॑स्याव॑रुद्ध्या॒ऽ आ वि॒श्वदे॑वꣳ स॒त्पति॒न्न प्रामि॑ये सवि॒तुर्दैव्य॑स्य त॒दित्यु॑पाꣳशु ह॒विषो॑ या॒ज्याऽनु॑वा॒क्ये नि॒त्ये सं॑या॒ज्ये ने॒द्य॒ज्ञप॒थाद॒यानी॒ति क्लृ॒प्तऽ ए॒व य॒ज्ञोऽन्त॒तः प्रति॑तिष्ठति त्रि॒ष्टुभौ भव-

---

ष्टुभौ संयाज्ये । रजतं हिरण्यं दक्षिणा । नानारूपतायै । अथो उत्क्रमायानपक्रमाय । शतमानं भवति । शतायुर्वै पुरुषः शतेन्द्रियः । आयुरेवेन्द्रियं वीर्यमात्मन् धत्ते ॥ १० ॥

तस्यै प्रयाजेषु तायमानेषु । ब्राह्मणो वीणागाथी दक्षिणत उत्तरमंद्रामुदाघ्नन् तिस्रः स्वयं संभृता गाथा गायति, इत्ययजत, इत्यददादिति । तस्योक्तं ब्राह्मणम् ॥ ११ ॥

अथ तृतीयां निर्वपति । सवित्रे सत्यप्रसवाय द्वादशकपालं पुरोडाशम् । एष ह वै सत्यः प्रसवः । यः सवितुः । सत्येन मे प्रसवेनेमं यज्ञं प्रसुवादिति ॥ १२ ॥

तस्यै सप्तदशैव सामिधेन्यो भवंति । रयिमंतावाज्यभागौ । वीर्यं वै रयिः । वीर्यस्याप्त्यै । वीर्यस्यावरुद्धयै । "आ विश्वदेवं सत्पतिम्"। "न प्रमिये सवितुर्दैव्यस्य तत्" इत्युपांशु हविषो याज्याऽनुवाक्ये । नित्ये संयाज्ये । नेद्यज्ञपथादयानीति । क्लृप्त एव यज्ञोऽन्ततः प्रतिति-

---

भवंति । अथो उत्क्रमाय । सुवर्णं प्रथमामिष्टिमुत्क्रम्य उत्तमायां वर्तते इत्युक्तः सः किमर्थं ? अनपक्रमाय । एवं रजतान्तरितम् ॥ १०—१९ ॥

---

१--ऋग्वे. । ४ । ४ । २६ । २ । आ विश्वदेवं सत्पतिं सूक्तैरद्या वृणीमहे ॥ सत्यसवं सवितारम् ॥ १ ॥ न प्रमिये सवितुर्दैव्यस्य तद्यथा विश्वं भुवनं धारयिष्यति ॥ यत्पृथिव्या वरिमन्नास्वंगुरिर्वर्ष्मन्दिवः सुवति सत्यमस्य तत् ॥ २ ॥ अ. ३ अ. ८ व. ५ ऋ. । ४ । शांखायनानां वर्ष्मन् इत्यत्र चर्ष्मन् इति पाठः ।

२-राजतं शतमानं, देवयाज्ञिकभाष्ये । द्वे कृष्णले समधृते विज्ञेयो रूप्यमाषकः ॥ तैः षोडशभिर्धरणम् । धरणानि दशैव स्यात् शतमानं तु राजतमिति ॥

तऽ इन्द्रियम्वै व्वीर्य्यं त्रिष्टुबिन्द्रियस्यैव व्वीर्य्यस्यावरुद्ध्यै हिरण्यन्दक्षिणा सुवर्णᳫं शतमानं तस्योक्तम्ब्राह्मणम् ॥ १३ ॥

( न्तु ) तस्यै प्रयाजेषु तायमानेषु । ब्राह्मणो व्वीणागाथी दक्षिणतऽ-उत्तरमन्द्रामुदाघ्नँस्तिस्रः स्वयᳫं सम्भृता गाथा गायतीत्ययजतेत्यद-दादिति तस्योक्तम्ब्राह्मणम् ॥ १४ ॥

( मे ) एतस्याᳫं सᳫंस्थितायाम् । ( मु ) उपोत्थायाध्वर्य्युश्च यज-मानश्चाश्वस्य दक्षिणे कर्ण्णऽआजपतो व्विभूर्म्मात्रा प्रभूः पित्रेति तस्योक्त-म्ब्राह्मणमथैनमुदञ्चम्प्राञ्चम्प्रसृजतऽ एषा ह्युभयेषान्देवमनुष्याणां दिग्य-दुदीची प्राची स्वायामेवैनं तद्दिशि धत्तो न वै स्वऽआयतने प्रतिष्ठितो रिष्यत्यरिष्ट्यै ॥ १५ ॥

सऽआह देवाऽआशापालाः । ( ऽ ) एतन्देवेभ्योऽश्वम्मेधाय प्रोक्षि-तᳫं रक्षतेत्युक्ता मानुषाऽआशापालाऽअथैते देवाऽआप्याः साध्याऽ

---

श्चाति । त्रिष्टुभो भक्तः । इंद्रियं वै वीर्यं त्रिष्टुप् इन्द्रियस्यैव वीर्यस्यावरुद्ध्यै । हिरण्यं दक्षिणा । सुवर्णं शतमानम् । तस्योक्तं ब्राह्मणम् ॥ १३ ॥

तस्यै प्रयाजेषु तायमानेषु ब्राह्मणो वीणागाथी दक्षिणत उत्तरमंद्रामुदाघ्नन् तिस्रः स्वयं संभृता गाथा गायति, इत्ययजत, इत्यददादिति । तस्योक्तं ब्राह्मणम् ॥ १४ ॥

एतस्यां संस्थितायाम्, उपोत्थायाध्वर्युश्च यजमानश्च अश्वस्य दक्षिणे कर्णे आजपतः । "विभूर्मात्रा प्रभूः पित्रा"-( वा.सं.२२।१९ ) इति । तस्योक्तं ब्राह्मणम् । अथैनमुदंचं प्रांचं प्रसृजतः । एषा ह उभयेषां देवमनुष्याणां दिक् । यदुदीची प्राची । स्वायामेवैनं तद्दिशि धत्तः । न वै स्व आयतने प्रतिष्ठितो रिष्यत्यरिष्ट्यै ॥ १५ ॥

स आह-" देवा आशापाला एतं देवेभ्योऽश्वं मेधाय प्रोक्षितं रक्षत "-( वा. सं.

---

मानुषा दिक्पालाः राजपुत्राः कवचिन इत्यादयः । अथ एते वक्ष्यमाणाः देवा दिक्पालाः । आप्याः साध्या इत्यादयः ॥ १६ ॥

---

१-तस्योक्तं ब्राह्मणम् श. प. १३ । १ । १ । ३ । ४ ॥ १३ । १ । ५ । ६ । आ. श्रौ. सू. उ. ष. ६ । ४ । ६ । " य इमा विश्वा जातानि " " आ देवो यातु सविता सुरत्नः " इति । १ । ५ । ४ । १२ । ३ । सघा नो देवः सविता सहावेति द्वे, इत्येवं सावित्रीष्टीनां याज्यापुरोऽनुवाक्याः ॥ २ ॥ ऋग्वे० । ५ । ४ । १२ । ४ । इमा गिरः सवितारं सुजिह्वं पूर्णगभस्तिमीळते सुपाणिम् ॥ चित्रं नमो बृहदस्मे दधातु यूयं पात स्वस्तिभिः सदा नः । २ । इति सघा नो देव इत्यस्या द्वितीया ऋक् ॥

२-अध्वर्युयजमानौ दक्षिणेऽश्वकर्णे जपतो व्विभूर्मात्रेति । का. श्रौ. सू. २० । ४८ । व्विभूर्मात्रा ( वा. सं. २२ । १९ ) तस्योक्तं ब्राह्मणम् ( श, प. १३ । १ । ६ । १ । २ । ) पशुवदुत्सर्जनं निरष्टेऽश्वशते । का. श्रौ. सू. २० । ४९ । पशुवदिति उत्तरपूर्वा दिक् । ३-देवा आशापाला इति रक्षिणोऽस्यादिशति । का. श्रौ. सू. २० । ५० ।

अन्वाध्या मरुतस्तमेतऽ उभये देवमनुष्याः सम्विदानाऽ अप्रत्यावर्त्तयन्तः सम्वत्सरᳫँ रक्षन्ति तद्यन्न प्रत्यावर्त्तयन्त्येष वाऽएष यऽएष तपति कऽ उ ह्येतमर्हति प्रत्यावर्त्तयितुं यद्धचेनम्प्रत्यावर्त्तयेयुः परागेवेदᳫँ सर्व्वᳫँ स्यात्तस्मादप्रत्यावर्त्तᳫँ रक्षन्ति ॥ १६ ॥

सऽआहाशापालाः । ( ० ) ये वाऽ एतस्योदृचङ्गमिष्यन्ति राष्ट्रन्ते भविष्यन्ति राजानो भविष्यन्त्यभिषेचनीयाऽअथ यऽ एतस्योदृचन्न गमिष्यन्त्यराष्ट्रन्ते भविष्यन्त्यराजानो भविष्यन्ति राजन्या व्विशोऽन-भिषेचनीयास्तस्मान्मा प्रमदत स्नात्वाञ्चैवैनमुदकान्निरुन्धीध्वम्वडबा-भ्यश्च ते यद्यद्ब्राह्मणजातमुपनिगच्छेत तत्तत्पृच्छेत ब्राह्मणाः कियद्यूय-मश्वमेधस्य व्वित्थेति ते ये न व्विद्युर्जिनीयात तान्त्सर्व्वं वाऽअश्वमेधः सर्व्वस्यैष न वेद यो ब्राह्मणः सन्नश्वमेधस्य न व्वेद सोऽब्राह्मणो ज्येयऽ-

---

२२।१९ ) इति उक्ता मानुषा आशापालाः । अथो ते देवा आप्याः साध्या अन्वाध्या मरुतः । तमेत उभये देवमनुष्याः संविदाना अप्रत्यावर्तयंतः संवत्सरं रक्षंति । तद्यन्न प्रत्यावर्तयंति । एष वा एषः । य एष तपति । क उ ह्येतमर्हति प्रत्यावर्तयितुम् । यद्धचेनं प्रत्यावर्तयेयुः । परागेवेदं सर्वं स्यात् । तस्मादप्रत्यावर्तं रक्षंति ॥ १६ ॥

स आह—आशापाला ये वा एतस्योदृचं गमिष्यंति । राष्ट्रं ते भविष्यंति । राजानो भविष्यंत्य-भिषेचनीयाः । अथ य एतस्योदृचं न गमिष्यंति । अराष्ट्रं ते भविष्यंति । अराजानो भविष्यन्ति । राजन्या विशोऽनभिषेचनीयाः । तस्मान्मा प्रमदत । स्नात्वाञ्चैवैनमुदकान्निरुंधीध्वम् । वडवाभ्यश्च । ते यद्यत् ब्राह्मणजातमुपनिगच्छेत । तत्तत्पृच्छेत । ब्राह्मणाः कियद्यूयमश्वमेधस्य वित्थेति । ते

---

सोऽध्वर्युराह । हे आशापालाः ! युष्माकं मध्ये एतस्य कर्मणः उदृचं समाप्तिं ये गमिष्यंति ते राष्ट्रवंतो भविष्यंति राजानश्च । अराजानः अनीश्वराः । राजन्याः संतो विशः कुटुंबिनः अनभिषेकार्हा भविष्यंति । यस्मादेवं तस्मात्प्रमादं मा कुरुध्वम् । स्नात्वाञ्चैवैनम् । स्नात्वात् स्नानार्हात्प्रस्नेयादुदकात् एनमश्वं निरुन्धी-ध्वम् । वडवाभ्यश्चैनं निरुन्धीध्वम् । ब्राह्मणजातं ब्राह्मणसमूहं तत्तत्र ये ब्राह्मणाः अश्वमेधस्य न किंचिदपि

---

१—प्रस्नेयाचोदकात् । का. श्रौ. सू. २० । ५२ । पूर्वसूत्रात् वारणमित्यनुवर्तते तदश्वस्येत्यार्थिकम् । यत् स्नानार्हं तोयं ततोऽपि प्रकृष्टं मज्जनपर्याप्तं यत्तोयं तत्प्रस्नेयमुच्यते इति देवयाज्ञिकाः ।

२—वडवाभ्यो वारणम् । का. श्रौ. सू. २० । ५१ । अश्वस्येत्यार्थिकम् ।

एव स पानङ्करवाथ खादन्निवपाथाथ यत्किञ्च जनपदे ऽकृतान्नँ सर्व्वं वस्तत्सुतन्तेषाँ रथकारकुल ऽएव वो व्वसतिस्तद्ध्यश्वस्यायतनमिति॥१७

इति द्वितीयप्रपाठके पञ्चदशं ब्राह्मणम् ॥ १३।२।१५ ॥ (४–२ ॥)

इति द्वितीयः प्रपाठकः समाप्तः ॥ १३–२ ॥

कण्डिकासंख्या ॥ ११७ ॥

---

ये न विद्युः । जिनीयात तान् । सर्वं वा अश्वमेधः । सर्वस्यैष न वेद । यो ब्राह्मणः सन्नश्वमेधस्य न वेद । सोऽब्रह्मणः । ज्येय एव सः । पानं करवाथ । खादं न्निवपाथ । अथ यत्किंच जनपदे । अकृतान्नम् । सर्वं वस्तत्सुतम् । तेषां रथकारकुल एव वो वसतिः । तद्ध्यश्वस्यायतनमिति ॥ १७ ॥

---

आध्वर्यवं हौत्रं औद्गात्रं वा तदेकदेशं वा किंचिन्न विद्युः न जानीयुः । किं कारणं ? यस्मादश्वमेधः सर्वं सर्वाण्येव ऐष्टिकपाशुकसौमिकदार्विहौमिकानि कर्माणि तत्रांतर्गतानि तन्मंत्रब्राह्मणानि चेत्यर्थः । ततश्चांततः सावित्री तत्र विद्यते । तामपि यो न वेद । स ब्राह्मणो न । ब्राह्मणः सन्नपि अब्राह्मणः व्रात्यः पतितसावित्रीकः सः । यथा पुत्रः कार्यहीनः पुत्रोऽपि अपुत्र उच्यते । एवं स ब्राह्मणः अब्राह्मण उच्यते । ततश्च ज्येय एव सः ।"ज्या वयोहानौ"–(धा.पा.क्र्या.प.२८) हानिमात्रे वर्तते । वित्तमानादिना वैश्यवत् हापनीयः । सर्वप्रकारमुपजीव्य इत्यर्थः । पानमुदकं करवाथ कुर्वीत । यूयं अश्वाय खादम् । खाद्यत इति खादः यवसादिः । तं नीचैरश्वाय वपाथ । लिङर्थे लेट् । निवपाथ निक्षिपतेत्यर्थः । यत्किंच, यत्किंचित् जनपदे अकृतान्नं असंस्कृतमन्नं सक्तुतंडुलादि । तत्सर्वं युष्मभ्यं सुतं संस्तुतं तदपि भवदुपयोज्यमित्यर्थः । तेषां यजमानानां मध्ये रथकारो यः । तस्य गृहे युष्माकं वसतिः । तद्ध्यश्वस्यायतनमिति । तद्धि ( अश्वस्य स्थानस्तरादत्वं वसंतो रिनिसृतं तो रथकारवदिति निगमो भवति ? ) ॥ १७ ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये त्रयोदशे काण्डे चतुर्थेऽध्याये द्वितीयं ब्राह्मणम् ॥ १३ ॥ ४ ॥ २ ॥

---

१–ब्राह्मणोऽश्वमेधाऽविद्वान् वृत्तिः सवः । का. श्रौ. सू. २० । ५३ । वृत्तिर्जीविकोपायः ।

२–पक्वान्नं च सर्वेषु । का. श्रौ. सू. २० । ५४ ।

३–रथकारगृहवासाश्च । अभिषेक्या भविष्यत समाध्वुवंतमित्याह राजपुत्रान् । का. श्रौ. सू. २० । ५५ । ५६ ।

# अथ तृतीयप्रपाठके प्रथमं ब्राह्मणम् ।
# चतुर्थेऽध्याये च तृतीयं ब्राह्मणम् ।



प्रमुच्याश्वन्दक्षिणेन व्वेदिम् । ( ५ँ ) हिरण्मयङ्कशिपूपस्तृणाति तस्मिन्होतोपविशति दक्षिणेन होतारथ्ँ हिरण्मये कूर्च्चे यजमानो दक्षिणतो ब्रह्मा चोद्गाता च हिरण्मय्योः कशिपुनोः पुरस्तात्प्रत्यङ्ङध्वर्य्यु-र्हिरण्मये वा कूर्च्चे हिरण्मये वा फलके ॥ १ ॥

समुपविष्टेष्वध्वर्य्युः सम्प्रेष्यति । होतर्भूतान्याचक्ष्व भूतेष्विमं यज-मानमध्यूहेति सम्प्रेषितो होताऽध्वर्य्युमामन्त्रयते पारिप्लवमाख्यान-माख्यास्यन्नध्वर्य्यविति हवै होतरित्यध्वर्य्युः ॥ २ ॥

---

### पारिप्लवाख्यानब्राह्मणम् ।

प्रमुच्याश्वं दक्षिणेन वेदिं हिरण्मयं कशिपूपस्तृणाति । तस्मिन् होतोपविशति । दक्षिणेन होतारं हिरण्मये कूर्चे यजमानः । दक्षिणतो ब्रह्मा चोद्गाता च हिरण्मयोः कशिपुनोःपुरस्तात् । प्रत्यङ्ङध्वर्युर्हिरण्मये वा कूर्चे हिरण्मये वा फलके ॥ १ ॥

समुपविष्टेष्वध्वर्युः संप्रेष्यति–" होतर्भूतान्याचक्ष्व, भूतेष्विमं यजमानमध्यूह "–इति । संप्रेषितो होताऽध्वर्युमामंत्रयते । पारिप्लवमाख्यानमाख्यास्यन् " अध्वर्यो "–इति । " हवै होतः "–इत्यध्वर्युः ॥ २ ॥

---

प्रमुच्याश्वमिति । पारिप्लवाख्यानब्राह्मणमेतत् । दक्षिणेन वेदिम् । कशिपु आसनविशेषः । ( पावणिन्मुख्यानां भवति ? ) । कूर्चः कूर्चाकृतिपीठमात्रम् ॥ १ ॥

आख्यास्यन् । तत्कथं ? अध्वर्यो इति । हवै । " ह्वेञ् स्पर्द्धायां शब्दे च " ( धा.पा.भ्वा.उ. १०३३ ) तस्य लेडुत्तमपुरुषैकवचने संप्रसारणे कृते एतद्रूपं भवति । अहमेव त्वां प्रतिह्वये । सज्जोऽहं प्रतिगराय त्वं वदेत्यर्थः । एतदध्वर्युराह प्रतिगरार्थम् ॥ २ ॥

---

१–पारिप्लवं ऋग्वृंद्वमाख्यानम् । २–दक्षिणतो वेदेर्हिरण्मयेपूविशति । का. श्रौ. सू. २० । ५७ ॥ संप्रत्यभावात् भूतकालीना वेदिरिति कर्कः ॥ ३–अध्वर्युयजमानौ कूर्चयोः फलकयोर्वा का. श्रौ. सू. २० । ५८ । ५९ । अध्वर्युब्रह्मोद्गातारः कशिपुषु । का. श्रौ. सू. २० । ६० ।

४–होतर्भूतान्याचक्ष्व भूतेष्विमं यजमानमध्यूहेति पारिप्लवं प्रेष्यति । का. श्रौ सू. २० । ६१ । ६२ । अध्वर्युरिति शेषः । पारिप्लवाख्यानप्रैषोऽयम् ॥

५–हवै होतरिति प्रतिगृणाति तदंते प्रेष्यति वीणागणगिनो राजर्षिभिर्यजमानं संगायतेति । का. श्रौ. सू. २० । ६३ । तदंते पारिप्लवांते राजर्षिभिः संगायत याया संगायनमादीक्षणीयायाः का. श्रौ. सू. २० । ६९ । पारिप्लवे शस्यमाने । अध्वर्युरिति शेषः । का. श्रौ. सू. २० । २ । २३ ॥ " कशिपुर्मसूरकः "–इति निगमे कात्यायनः । " कूर्चः सपादं कूर्चाकृतिपीठम् " " कूर्चःसिंहासनम् " इति निगमे कात्यायनः " फलकं पादरहितं पीठम् " इति निगमे कात्यायनः ।

( मर्सु ) मनुर्वैवस्वतो राजेत्याह । तस्य मनुष्या विशस्तऽइमऽआसतऽइत्यश्रोत्रिया गृहमेधिनऽउपसमेता भवन्ति तानुपदिशत्यृचो वेदः सोऽयमित्यृचाᳬ सूक्तं व्याचक्षाणऽइवानुद्रवेद्वीणागणगिनऽउपसमेता भवन्ति तानध्वर्युः सम्प्रेष्यति वीणागणगिनऽ इत्याह पुराणैरिमं यजमानᳬ राजभिः साधुकृद्भिः सङ्गायतेति तन्ते तथा सङ्गायन्ति तद्यदेनमेवᳬ सङ्गायन्ति पुराणैरेवैनन्तद्राजभिः साधुकृद्भिः सलोकङ्कुर्वन्ति ॥ ३ ॥

सम्प्रेष्याध्वर्युः प्रक्रमाञ्जुहोति । ( त्य ) अन्वाहार्यपचने वाऽश्वस्य वा पदं परिलिख्य यतरथाऽस्य तत्रावृद्भवति पूर्वा त्वेव स्थितिः ॥ ४ ॥

सावित्र्याऽएवेष्टेः । पुरस्तादनुद्रुत्य सकृदेव रूपाण्याहवनीये जुहो-

---

मनुर्वैवस्वतो राजेत्याह । तस्य मनुष्या विशः । त इम आसत इति । अश्रोत्रिया गृहमेधिन उपसमेता भवन्ति । तानुपदिशति । ऋचो वेदः सोऽयमिति । ऋचां सूक्तं व्याचक्षाण इवानुद्रवेत् । वीणागणगिन उपसमेता भवन्ति । तानध्वर्युः संप्रेष्यति । वीणागणगिन इत्याह । पुराणैरिमं यजमानं राजभिः साधुकृद्भिः संगायतेति । तं ते तथा संगायन्ति । तद्यदेनमेवं संगायन्ति । पुराणैरेवैनं तद्राजभिः साधुकृद्भिः सलोकं कुर्वंति ॥ ३ ॥

संप्रेष्याध्वर्युः प्रक्रमान् जुहोति । अन्वाहार्यपचने वा, अश्वस्य वा पदं परिलिख्य । यतरथाऽस्य तत्रावृत् भवति । पूर्वा त्वेव स्थितिः ॥ ४ ॥

सावित्र्या एवेष्टेः पुरस्तादनुद्रुत्य । सकृदेव रूपाण्याहवनीये जुहोति । अथ सायंधृतिषु हूय-

---

मनुर्वैवस्वतो राजेत्याह । होता । अश्रोत्रियाः सकलवेदानध्यायिनः । गृहमेधिनः पाकयज्ञयाजिनः । व्याचक्षाण इवेति । वाक्यशश्छिन्दन् । अंगैश्चामिन्दन्नित्यर्थः । वीणानां अलाबुवीणा त्रितंतिः सप्ततंतिः शततंतिरित्यादीनां गणः वीणागणः । तेन वीणागणसंघातं ये गायन्ति शब्दयंति ते वीणागणगाः । ते शिष्यभूता येषां गायनाचार्यादीनां सन्ति ते वीणागणगिनः । संगायंतीति उपमानभूतैः पुराणैः राजर्षिभिः सह उपमेयभूतं यजमानं गायंतीत्यर्थः ॥ ३ ॥

संप्रेष्य गायनान् अध्वर्युः । न होता । प्रक्रमान् " हिंकाराय स्वाहा " ( वा. सं. २२।७।८।४९ ) इत्येतान् होमान् जुहोति । अन्वाहार्यपचने वा । दक्षिणाग्नौ वा । अश्वस्य वा पदं परिलिख्य । अश्वपदे वा परिलिखिते । यतरथा एतयोरन्यतरेण प्रकारेण अस्य यजमानस्य तत्रावृत् कर्म आदावेवांगीकृतं भवति । तथा जुहोति इति शेषः । पूर्वा त्वेव स्थितिः । पूर्वैव तु स्थितिः या प्रथमाध्याये पठिता ( श. प. १३ । १ । ३ । ५-७ ) ॥ ४ ॥

काऽसावित्यत आह सावित्र्या एवेष्टेः । पुरस्तात् अनुपूर्वमुच्चार्य । सकृदेव प्रथमे दिवसे । न प्रतिदिनम् ।

त्यथ सायन्धृतिषु हूयमानासु राजन्यो वीणागाथी दक्षिणतऽउत्तरमन्द्रामुदाघ्नंस्तिस्रः स्वयꣳ सम्भृता गाथा गायतीत्ययुद्ध्यतेत्यमुꣳ सङ्ग्राममजयदिति तस्योक्तम्ब्राह्मणम् ॥ ५ ॥

(मु) अथ श्वोभूते द्वितीयेऽहन् । (न्ने) एवमेवैतासु सावित्रीष्टिषु सꣳस्थितास्वेषैवावृदध्वर्य्यविति हवै होतरित्येवाध्वर्य्युर्य्यमो वैवस्वतो राजेत्याह तस्य पितरो विशस्तऽ इमऽ आसतऽ इति स्थविराऽ उपसमेता भवन्ति तानुपदिशति यजूꣳषि वेदः सोऽयमिति यजुषामनुवाकं व्याचक्षाणऽइवानुद्रवेदेवमेवाध्वर्य्युः सम्प्रेष्यति न प्रक्रमाञ्जुहोति ॥ ६ ॥

(त्यु) अथ तृतीयेऽहन् । (न्ने) एवमेवैतास्विष्टिषु सꣳस्थितास्वेषैवावृदध्वर्य्यविति हवै होतरित्येवाध्वर्य्युर्व्वरुणऽआदित्यो राजेत्याह तस्य गन्धर्व्वा विशस्तऽइमऽआसतऽ इति युवानः शोभनाऽ उपसमेता भवन्ति तानुपदिशत्यथर्व्वाणो वेदः सोऽयमित्यथर्व्वणामेकं

---

मानासु राजन्यो वीणागाथी दक्षिणत उत्तरमन्द्रामुदाघ्नन् तिस्रः स्वयं संभृता गाथा गायति । इत्ययुध्यत, इत्यमुं संग्राममजयदिति । तस्योक्तं ब्राह्मणम् ॥ ५ ॥

अथ श्वोभूते द्वितीयेऽहन्नेवमेव । एतासु सावित्रीष्टिषु संस्थितासु । एषैवावृदध्वर्यविति । हवै होतरित्येवाध्वर्युः । यमो वैवस्वतो राजेत्याह । तस्य पितरो विशः । तत इम आसत इति । स्थविरा उपसमेता भवन्ति । तानुपदिशति । यजूंषि वेदः सोऽयमिति । यजुषामनुवाकं व्याचक्षाण इवानुद्रवेत् । एवमेवाध्वर्युः संप्रेष्यति । न प्रक्रमान् जुहोति ॥ ६ ॥

अथ तृतीयेऽहन्नेवमेव । एतास्विष्टिषु संस्थितासु । एषैवावृदध्वर्यविति । हवै होतरित्येवाध्वर्युः । वरुण आदित्यो राजेत्याह । तस्य गंधर्वा विशः । त इम आसत इति । युवानः शोभना उपस-

---

रूपाणि हिंकारादीनि आज्यमयानि परिकल्प्य आहवनीये जुहोति । न पदे अन्वाहार्यपचने वा ॥ ५ ॥

एवमेवाध्वर्युः संप्रेष्यति वीणागणगिनः । न प्रक्रमान् जुहोति । इत्यनुवाद एव ॥ ६ ॥

अथर्वणा प्रोक्ता मंत्रा ब्राह्मणानुवाकाश्च अथर्वाणः ॥ ७ ॥

---

१--आहवनीयेऽस्तमिते चतस्रो धृतीरिह रंतिरिति । ( वा. सं. २२--१९ । ) राजन्यो धृतिषु युद्धजययुक्ताः । का. श्रौ. सू. २० । ६५ । ४७ । गाथा गायतीत्यर्थः ।

२--तस्योक्तं ब्राह्मणम् । श. प. १३ । १ । ३ । ५-८ । । ( १३।१।३।४।१-३ । ) ( १३।१।५।१--६ । )

३--कात्यायनस्तु " दक्षिणाग्नौ जुहोति हिंकाराय स्वाहेति प्रक्रमान् " का. श्रौ. सू. २० ।३।३ इति दक्षिणाग्नौ प्रक्रमहोममाह । न पदे नाहवनीये वेति । प्रक्रमहोमाश्चैकोनपंचाशत् ( वा. सं. अ. २२ । ७ । ८ । )

पुर्व्वं व्याचुक्षाणऽ इवानुद्रवेदेवमेवाध्वर्य्युः सम्प्रेष्यति नु प्प्रक्रमा-ञ्जुहोति ॥ ७ ॥

( त्यु ) अुथ चतुर्थेऽहन् । ( न्ने ) एवमेवैतास्विष्टिषु सुᳪस्थितास्वेषै-वावृदुध्वर्य्युर्व्विति हवै होतरित्येवाध्वर्य्युः सोमो व्वैष्णवो राजेत्याह तुस्याप्सरसो व्विशस्ताऽइमाऽ आसतऽ इति युवतयः शोभनाऽउप-समेता भवन्ति ताऽउपदिशत्युङ्गिरसो व्वेदः सोऽयमित्युङ्गिरसामेक-म्पुर्व्वं व्याचुक्षाणऽ इवानुद्रवेदेवमेवाध्वर्य्युः सम्प्रेष्यति नु प्प्रक्रमा-ञ्जुहोति ॥ ८ ॥

( त्यु ) अुथ पञ्चमेऽहन् । ( न्ने ) एवमेवैतास्विष्टिषु सुᳪस्थितास्वे-षैवावृदुध्वर्य्युर्व्विति हवै होतरित्येवाध्वर्य्युरर्व्बुदः काद्रवेयो राजेत्याह तस्य सर्प्पा व्विशस्तऽइमऽ आसतऽइति सर्प्पाश्च सर्प्पविदश्चोपसमेता भवन्ति तानुपदिशति सर्प्पविद्या व्वेदः सोऽयमिति सर्प्पविद्यायाऽएकम्पुर्व्वं व्याचुक्षाणऽइवानुद्रवेदेवमेवाध्वर्य्युः सम्प्रेष्यति नु प्रक्रमाञ्जुहोति ॥ ९ ॥

---

मेता भवन्ति । तानुपदिशति । अथर्वाणो वेदः सोऽयमिति । अथर्वणामेकम्पर्व्वं व्याचक्षाण इवानुद्रवेत् । एवमेवाध्वर्युः संप्रेष्यति । न प्रक्रमान् जुहोति ॥ ७ ॥

अथ चतुर्थेऽहन्नेवमेव । एतास्विष्टिषु संस्थितासु । एषैवावृदध्वर्यविति । हवै होतरित्येवाध्वर्युः । सोमो वैष्णवो राजेत्याह । तस्याप्सरसो विशः । ता इमा आसत इति । युवतयः शोभना उप-समेता भवंति । ता उपदिशति । अंगिरसो वेदः सोऽयमिति । अंगिरसामेकं पर्व व्याचक्षाण इवानुद्रवेत् । एवमेवाध्वर्युः संप्रेष्यति । न प्रक्रमान् जुहोति ॥ ८ ॥

अथ पंचमेऽहन्नेवमेव । एतास्विष्टिषु संस्थितासु । एषैवावृदध्वर्यविति । हवै होतरित्येवा-ध्वर्युः । अर्बुदः काद्रवेयो राजेत्याह । तस्य सर्पा विशः । त इम आसत इति । सर्पाश्च सर्प-विदश्चोपसमेता भवंति । तानुपदिशति । सर्पविद्या वेदः सोऽयमिति । सर्पविद्याया एकं पर्व व्याच-क्षाण इवानुद्रवेत् । एवमेवाध्वर्युः संप्रेष्यति । न प्रक्रमान् जुहोति ॥ ९ ॥

---

एवमंगिरसा प्रोक्ता अंगिरसः ॥ ८ ॥

कद्रोरपत्यं काद्रवेयः ॥ ९ ॥

(त्यु) अुथ षष्ठेऽह्न् । (न्ने) एवुमेवैतास्विष्टिषु सुꣳस्थितास्वेषैवावृद्ध्वर्य्यविति हवै होतरित्येवाध्वर्य्युः कुवेरो व्वैश्रवणो राजेत्याह तुस्य रुक्षाꣳसि व्विशस्तानीमान्यासतऽइति सेलगाः पापकृतऽउपसमेता भवन्ति तानुपदिशति देवजनविद्या व्वेदः सोऽयमिति देवजनविद्याया ऽएकम्पुर्व्वं व्याचुक्षाणऽइवानुद्रवेदेवुमेवाध्वर्य्युः सम्प्रेष्यति नु प्प्रक्रमाञ्जुहोति ॥ १० ॥

(त्यु) अुथ सप्तमेऽह्न् । (न्ने) एवुमेवैतास्विष्टिषु सुꣳस्थितास्वेषैवावृद्ध्वर्य्यविति हवै होतरित्येवाध्वर्य्युरसितो धान्वो राजेत्याह तस्यासुरा व्विशस्तऽइमुऽआसतऽइति कुसीदिनऽ उपसमेता भवन्ति तानुपदिशति माया व्वेदः सोऽयमिति काञ्चिन्मायां कुर्य्यादेवुमेवाध्वर्य्युः सम्प्रेष्यति नु प्रक्रमाञ्जुहोति ॥ ११ ॥

(त्यु) अुथाष्टमेऽह्न् । (न्ने) एवुमेवैतास्विष्टिषु सुꣳस्थितास्वेषैवावृद्ध्वर्य्यविति हवै होतरित्येवाध्वर्य्युर्म्मत्स्यः साम्मदो राजेत्याह तुस्यो-

---

अथ षष्ठेऽह्नन्नेवमेव । एतास्विष्टिषु संस्थितासु ।[1] एषैवावृदध्वर्यविति । हवै होतरित्येवाध्वर्युः । कुबेरो वैश्रवणो राजेत्याह । तस्य रक्षांसि विशः । तानीमान्यासत इति । सेलगाः पापकृत उपसमेता भवंति । तानुपदिशति । देवजनविद्या वेदः सोऽयमिति । देवजनविद्याया एकं पर्व व्याचक्षाण इवानुद्रवेत् । एवमेवाध्वर्युः संप्रेष्यति । न प्रक्रमान् जुहोति ॥ १० ॥

अथ सप्तमेऽह्नन्नेवमेव । एतास्विष्टिषु संस्थितासु । एषैवावृदध्वर्यविति । हवै होतरित्येवाध्वर्युः । असितो धान्वो राजेत्याह । तस्यासुरा विशः । त इम आसत इति । कुसीदिन उपसमेता भवन्ति । तानुपदिशति । माया वेदः सोऽयमिति । कांचिन्मायां कुर्यात् । एवमेवाध्वर्युः संप्रेष्यति । न प्रक्रमानं जुहोति ॥ ११ ॥

अथाष्टमेऽह्नन्नेवमेव । एतास्विष्टिषु संस्थितासु । एषैवावृदध्वर्यविति । हवै होतरित्येवाध्वर्युः । मत्स्यः साम्मदो राजेत्याह । तस्योदकेचरा विशः । त इम आसत इति । मत्स्याश्च मत्स्यहन-

---

विश्रवसः अपत्यं वैश्रवणः । विश्रवसः अणि शिवादिगणत्वात् ( पा. सू. ४ । १ । ११२ ) विश्रवणरवणावादेशौ भवतः । सेलगाः सेलं गायन्तीति सेलगाः । सेलो वंशग्रामरागसदृशो वंशमुखेन आश्वासोच्छ्वासैः क्रियते गोपालादिभिः । देवजनविद्या भूतविद्या ॥ १०–१३ ॥

---

१–"अष्टमेऽह्नि पुराणविद्या वेदः सोऽयमिति पुराणमाचक्षीत " इति । व्यत्यासः । आ. श्रौ. सू. उ. ष. ४ । ७ ।

दकेचरा व्विशस्तुऽ इमुऽ आसतऽ इति मत्स्याश्च मत्स्यहनश्चोपसमेता भवन्ति तानुपदिशतीतिहासो व्वेदः सोऽयमिति कञ्चिदितिहासमाचक्षीतैवमेवाध्वर्युः सम्प्रेष्यति नु प्प्रक्रमाञ्जुहोति ॥ १२ ॥

( त्यु ) अथ नवमेऽहन् । ( न्ने ) एवमेवैतास्विष्टिषु सᳪस्थितास्वेषैवावृदुध्वर्य्यविति हवै होतरित्येवाध्वर्युस्तार्क्ष्यो व्वैपश्यतो राजेत्याह तस्य व्वयाᳪसि व्विशस्तानीमान्यासतऽइति व्वयाᳪसि च व्वायोविद्यिकाश्चोपसमेता भवन्ति तानुपदिशति पुराणम्वेदः सोऽयमिति किञ्चित्पुराणमाचक्षीतैवमेवाध्वर्युः सम्प्रेष्यति नु प्प्रक्रमाञ्जुहोति ॥ १३ ॥

( त्यु ) अथ दशमेऽहन् । ( न्ने ) एवमेवैतास्विष्टिषु सᳪस्थितास्वेषैवावृदुध्वर्य्यविति हवै होतरित्येवाध्वर्युर्द्धर्म्मऽइन्द्रो राजेत्याह तस्य देवा व्विशस्तुऽ इमुऽ आसतऽ इति श्रोत्रियाऽअप्रतिग्राहकाऽउपसमेता भवन्ति तानुपदिशति सामानि व्वेदः सोऽयमिति साम्नान्दशतम्ब्रूयादेवमेवाध्वर्युः सम्प्रेष्यति नु प्रक्रमाञ्जुहोतीति ॥ १४ ॥

---

श्चोपसमेता भवंति । तानुपदिशति । इतिहासो वेदः सोऽयमिति । कंचिदितिहासमाचक्षीत । एवमेवाध्वर्युः संप्रेष्यति । न प्रक्रमान् जुहोति ॥ १२ ॥

अथ नवमेऽहन्नेवमेव । एतास्विष्टिषु संस्थितासु । एषैवावृदध्वर्यविति । हवै होतरित्येवाध्वर्युः । तार्क्ष्यो वैपश्यतो राजेत्याह । तस्य वयांसि विशः । तानीमान्यासत इति । वयांसि च वायोविधिकाश्चोपसमेता भवंति । तानुपदिशति । पुराणं वेदः सोऽयमिति । किंचित् पुराणमाचक्षीत । एवमेवाध्वर्युः संप्रेष्यति । न प्रक्रमान् जुहोति ॥ १३ ॥

अथ दशमेऽहन्नेवमेव । एतास्विष्टिषु संस्थितासु । एषैवावृदध्वर्यविति । हवै होतरित्येवाध्वर्युः । धर्म इंद्रो राजेत्याह । तस्य देवा विशः । त इम आसत इति । श्रोत्रिया अप्रतिग्राहका उपसमेता भवन्ति । तानुपदिशति । सामानि वेदः सोऽयमिति । साम्नां दशतं ब्रूयात् । एवमेवाध्वर्युः संप्रेष्यति । न प्रक्रमान् जुहोतीति ॥ १४ ॥

---

अनुज्ञा धर्मः धर्मवान् । इंद्रः शक्रो राजा तस्य देवाः विशः सेवकाः । त इम आसत इति । श्रोत्रियाः अप्रतिग्राहकाः । तानुपदिशति अभिनयति । होता । सामानि वेदः । तस्येन्द्रस्येति वर्तते । सोऽयं वेदः अतः परमुच्यत इति शेषः ॥ १४ ॥

---

१—नवमेऽहनि इतिहासो वेदः सोऽयमितीतिहासमाचक्षीतेति व्यत्यासः । आ. श्रौ. सू. उ. ष. ४–७ ।

(त्ये)एतत्पारिप्लवम्।(१९)सर्वाणि राज्यान्याचष्टे सर्वा विशः सर्वान्वेदान्त्सर्वान्देवान्त्सर्वाणि भूतानि सर्वेषाᳬं ह वै सऽएतेषाᳬं राज्यानाᳬं सायुज्यᳬं सलोकतामश्नुते सर्वासाम्विशामैश्वर्य्यमाधिपत्यङ्गच्छति सर्वान्वेदानवरुन्द्धे सर्वान्देवान्प्रीत्वा सर्वेषु भूतेष्वन्ततः प्रतितिष्ठति यस्यैवम्विदेतद्धोता पारिप्लवमाख्यानमाचष्टे यो वैतदेवम्वेदैतदेव समानमाख्यानम्पुनःपुनः सम्वत्सरम्परिप्लवते तद्यत्पुनःपुनः परिप्लवते तस्मात्पारिप्लवᳬं षट्त्रिᳬंशतन्दशाहानाचष्टे षट्त्रिᳬंशदक्षरा बृहती बार्हताः पशवो बृहत्यैवास्मै पशूनवरुन्द्धे ॥ १९ ॥

## इति तृतीयप्रपाठके प्रथमं ब्राह्मणम् ॥ १३-३-१ ॥ (४-३) ॥

---

एतत्पारिप्लवम् । सर्वाणि राज्यान्याचष्टे । सर्वा विशः । सर्वान् वेदान् । सर्वान् देवान् । सर्वाणि भूतानि । सर्वेषां ह वै स एतेषां राज्यानां सायुज्यं सलोकतामश्नुते । सर्वासां विशामैश्वर्यमाधिपत्यं गच्छति । सर्वान् वेदानवरुन्धे । सर्वान् देवान् प्रीत्वा । सर्वेषु भूतेष्वंततः प्रतितिष्ठति । यस्यैवंवित् एतद्धोता पारिप्लवमाख्यानमाचष्टे । यो वैतदेवं वेद । एतदेव समाख्यानं पुनःपुनः संवत्सरं परिप्लवते । तद्यत् पुनःपुनः परिप्लवते । तस्मात्पारिप्लवम् । षट्त्रिंशतं दशाहानाचष्टे । षट्त्रिंशदक्षरा बृहती । बार्हताः पशवः । बृहत्यैवास्मै पशूनवरुन्धे ॥ १९ ॥

---

एतत्पारिप्लवम् आख्यानम् इत्युपसंहारः । सर्वाणि राज्यान्याचष्टे होता । तत्र पारिप्लवमिति दर्शनार्थानुवादः । एतदेव तु आवृत्तिविधिः । तद्यत्पुनःपुनरिति । पारिप्लवमिति सावनसंवत्सरपरिग्रहार्थं वचनम् । इतरथा पार्वणो वा सौरो वा नाक्षत्रो वा संवत्सरः पक्षे परिगृह्येत । अथवा दर्शनार्थ एवायमनुवादः । ततः श्रुतिवाक्यशेषबलादेव सावनः संवत्सरो नियम्यते । बार्हताः पशवः । बृहतीतृचमध्ये अन्यत् द्रष्टव्यम् । संवत्सरे सावने "षट्त्रिंशतं दशाहानाचष्टे"—इति वचनात् । स च अश्वोत्सर्गदिवसादारभ्य गणनीयः । न ब्रह्मौदनदिवसात् । कुतः ? "संवत्सरमश्वं रक्षंति"—इत्यस्य क्लृप्तत्वात् (श. प. १३।४।२।११।) ॥ १९ ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये त्रयोदशे काण्डे चतुर्थेऽध्याये तृतीयं ब्राह्मणम् ॥ १३ । ४ । ३ ॥

---

१—वावातासंवेशनसावित्र्युत्तरमन्त्रागानपारिप्लवधृतीः संवत्सरम् । का. श्रौ. सू. २० । ६६ । वावातासंवेशनं सावित्रीणां चान्द्रमसः संवत्सरः तेन हि सर्वत्र व्यवहारः पारिप्लवधृतीनां तु सावनः इति कर्कः । अर्द्धमासमासत्रैमास्यषाण्मास्यानि चैके । का. श्रौ. सू. २० । ६७ । (शाखांतरादिदमिति कर्कः ।) सावनस्य दिनानि षष्ट्यधिकत्रिशतानि ।

संवत्सरे पर्य्युवेते दीक्षा । प्राजापत्यमालभ्योत्सीदन्तीष्टयः पुरोहितस्याग्निषु यजेतेत्यु हैक ऽ आहुः किमु दीक्षितो यजेत द्वादश दीक्षा द्वादशोपसदस्तिस्रः सुत्यास्तत्त्रिणवमभिसम्पद्यते व्वज्रो वै त्रिणवः क्षत्त्रमश्वः क्षत्त्रꣳ राजन्यो व्वज्रेण खलु वै क्षत्त्रꣳ स्पृतन्तद्वज्रेणैव क्षत्त्रꣳ स्पृणोति ॥ १ ॥

दीक्षणीयायाꣳ सꣳस्थितायाम् । (ꣳ) सायम्वाचि व्विसृष्टायां व्वीणागणगिन ऽ उपसमेता भवन्ति तानध्वर्युः सम्प्रेष्यति व्वीणागणगिन ऽ इत्याह देवैरिमं यजमानꣳ सङ्गायतेति तन्ते तथा सङ्गायन्ति ॥ २ ॥

( न्त्यु ) अहरहर्व्वाचि व्विसृष्टायाम् । ( म ) अग्नीषोमीयाणामन्ततः सꣳस्थायाम्परिहृतासु व्वसतीवरीषु तद्यदेनन्देवैः सङ्गायन्ति देवैरेवैनन्तत्सलोकङ्कुर्व्वन्ति ॥ ३ ॥

---

संवत्सरे पर्यवेते दीक्षा । प्राजापत्यमालभ्य, उत्सीदन्तीष्टयः । पुरोहितस्याग्निषु यजेतेत्यु हैक आहुः । किमु दीक्षितो यजेत । द्वादश दीक्षाः । द्वादशोपसदः । तिस्रः सुत्याः । तत्त्रिणवमभिसंपद्यते । वज्रो वै त्रिणवः । क्षत्रमश्वः । क्षत्रं राजन्यः । वज्रेण खलु वै क्षत्रं स्पृतम् । तद्वज्रेणैव क्षत्रं स्पृणोति ॥ १ ॥

दीक्षणीयायां संस्थितायाम् । सायं वाचि विसृष्टायाम् । वीणागणगिन उपसमेता भवंति । तानध्वर्युः संप्रेष्यति । वीणागणगिन इत्याह—" देवैरिमं यजमानं संगायत "—इति । तं ते तथा संगायंति ॥ २ ॥

अहरहर्वाचि विसृष्टायाम् । अग्नीषोमीयाणामंततः संस्थायाम् । परिहृतासु वसतीवरीषु । तद्यदेनं देवैः संगायंति । देवैरेवैनं तत्सलोकं कुर्वंति ॥ ३ ॥

---

संवत्सरे सावने पर्यवेते समाप्ते अश्वोत्सर्गदिवसादारम्य संवत्सरे अतिक्रांते प्राजापत्यम् इष्टकापशुम् । न वायव्यं न वा पञ्च पशून् । आलभ्य स्वकाल एव । उत्तरस्यां फाल्गुन्यां तद्बाधकारणाभावात् । दीक्षौ कर्तव्येति

---

१–दीक्षांते देवैरौपवसथ्यात् । का. श्रौ. सू. २० । ७० । देवैर्यजमानꣳ संगायतेति प्रैषः । एतत्संगायनं आ औपवसथ्यात् अग्नीषोमीयसमाप्तिं यावदित्यर्थः । पश्चादौ प्रजापतिना सुत्यासु का. श्रौ. सू. २० । ७१ । पश्चादौ सवनीयपश्वादौ प्रजापतिना यजमानꣳ संगायतेति प्रैषः इत्यर्थः । अंते च " का. श्रौ. सू. २० । ७२ । ( अंतग्रहणेनोदवसानीयांत उच्यते । एवमेव अहरहः परिहृतास्वेव वसतीवरीष्वपि तत् अंतग्रहणेन सूचितं इति कर्कः ) प्रजापतिना यजमानꣳ संगायतेति प्रैष इत्यर्थः । )

२–पश्वालंभनाद्ध्वरदीक्षणीयायाः कृत्वा चत्वार्यौद्ग्रभणानि जुहोत्याध्वरिकाणि । ( का. श्रौ. सू. २० । ८३ । ) कर्कमतं त्वत्र च,–चैत्र्या पौर्णमास्यां पश्वालंभनादि चैत्रकृष्णाष्टम्यां सप्तमी दीक्षणीया ततः प्रभृति द्वादश दीक्षाः ततो वैशाखशुक्लतृतीयायां

प्रजापतिना सुत्यासु । (स्वे) एवमेवाहरहः परिहृतास्वेव व्वसतीवरीषूदवसानीयायामन्ततः सꣳस्थितायान्तद्यदेनम्प्रजापतिना सङ्गायन्ति प्प्रजापतिनैवैनन्तदन्ततः सलोकङ्कुर्व्वन्ति ॥ ४ ॥

(न्त्ये) एकविꣳशतिर्य्यूपाः । सर्व्वऽएकविꣳशत्यरत्नयो रज्जुदालोऽग्निष्ठो भवति पैतुदारवावभितः षड्बैल्वास्त्रयऽइत्थात्त्रयऽइत्थात्षट् खादिरास्त्रयऽ एवेत्थात्त्रयऽइत्थात्षट्पालाशास्त्रयऽ एवेत्थात्त्रयऽइत्थात् ५॥

(त्त) तद्यदेतऽएवं यूपा भवन्ति । प्प्रजापतेः प्प्राणेषूत्क्रान्तेषु शरी-

---

प्रजापतिना सुत्यास्वेवमेव । अहरहः परिहृतास्वेव वसतीवरीषु । उदवसानीयायामंततः संस्थितायाम् । तद्यदेनं प्रजापतिना संगायन्ति । प्रजापतिनैवैनं तदन्ततः सलोकं कुर्वंति ॥ ४ ॥

एकविंशतिर्यूपाः । सर्वे एकविंशत्यरत्नयः । रज्जुदालोऽग्निष्ठो भवति । पैतुदारवावभितः । षड्बैल्वाः । त्रय इत्यात् त्रय इत्यात् । षट् खादिराः । त्रय एवेत्थात् । त्रय इत्यात् । षट् पालाशाः । त्रय एवेत्यात् । त्रय इत्यात् ॥ ५ ॥

तद्यदेत एवं यूपा भवंति । प्रजापतेः प्राणेषूत्क्रांतेषु शरीरं श्वयितुमाध्रियत । तस्य यः

---

शेषः । सा च अष्टम्यां–उखां संभृत्य इष्टकाः कृत्वा उत्तरस्याममावास्यायामामावास्येनेष्ट्वा आरब्धव्या प्रतिदिनं च आग्नावैष्णवम् औद्ग्रभणानि आध्वरिकाणि चत्वारि त्रीणि आश्वमेधिकानि, कृष्णाजिनदीक्षा च

---

–त्रयः वैशाखशुक्लचतुर्दश्यामग्नीषोमीयः वैशाख्यां च प्रथमा सुत्येति । काय स्वाहेति चाश्वमेधिकानि त्रीणि का. श्रौ. सू. २० । ८४ । अत्र ब्राह्मणम्–"अन्वहं जुहोति" "सप्त जुहोति" "काय स्वाहा कस्मै स्वाहा कतमस्मै स्वाहेत्यादि" श. प. १३।१।७।८।१–४। १–८।९ कृष्णाजिनदीक्षाऽतः । का. श्रौ. सू. २० । ८५ । अत औद्ग्रभणहोमानंतरं दीक्षा तत्रोपवेशनांता । अध्वरदीक्षणीयायाश्चत्वारि त्रीणि त्रीणि चाश्वमेधिकानि । का. श्रौ. सू. २० । ८६ । सप्ताहं प्रचरतीति श्रुतेः श. प. १३ । १ । ७ । २ । सप्ताहं दीक्षणीया तत्र प्रत्यहं पूर्वमौद्ग्रभणहोमः । कृष्णाजिनांतमन्वहं का. श्रौ. सू. २० । ८६ । दीक्षणीयेष्ट्यादिकं प्रत्यहं षट्स्वपि दीक्षणीयासु इत्यर्थः । "प्राकृतव्रतोऽकृतत्वात्"–(का. श्रौ. सू. २० । ८७) प्राकृतव्रतः प्राकृतभोजनः इष्टाश्येव । न पयोव्रतीत्यर्थः । सप्तम्यां दीक्षणीयायां विशेषः । "आग्निके च सप्तम्यां निर्वपति ।" का. श्रौ. सू. २० । ८८ । आग्निके हविषी "वैश्वानरो द्वादशकपालो घृते चरुरादित्येभ्यः । इति का. श्रौ. सू. १६ । १२८–१२९ । चकारात् आध्वरिक आग्नावैष्णवश्च सप्तम्यामपरो विशेषः । अभ्यंजनप्रभृति करोति का. श्रौ. सू. २० । ८९ । सप्तम्यामभ्यंजनविधानापूर्वासु षट्सु नवनीतेनाभ्यंजनं नेति निष्कर्षः । सप्तम्यामेव विशेषः । षडाग्निकानि चतुःस्थाने । दशमं विश्वो देवस्येति । का. श्रौ. सू. २० । ९० । ९१ । चतुर्णामाध्वरिकाणामौद्ग्रभणानां स्थाने षडाग्निकान्यौद्ग्रभणानि आकूतिमग्निमित्यादीनि त्रीणि चाश्वमेधिकानि एवं नव, दशमं विश्वो देवस्येतीत्यर्थः । दीक्षा द्वादशोपसदश्च का. श्रौ. सू. २० । ९४ । सुत्याश्च तिस्रः तथा च श्रुतिः–"द्वादश दीक्षा द्वादशोपसदास्तिस्रः सुत्या इति" । श. प. १३ । ४ । ४ । १ ।

१–एकादशिनीवदेकविꣳशतिर्यूपाः । का. श्रौ. सू. २० । ९७ सर्वे । एकविंशत्यरत्नयः । तथाह कात्यायनः–"एकविꣳशतिरश्वमेधे । का. श्रौ. सू. ६ । ३१ पूर्वसूत्रात् अरत्निपदमनुवर्तते एकादशिनीवदित्यतिदेशेन रथाक्षमात्राण्यंतराणि पूर्वार्द्धे वा समं विभज्य पक्षसम्मितावाऽग्नौ यूपाहुत्ययञ्ज्यादानादि यथाखातमुच्छ्रयतीत्यंतमतिदिश्यते । का. श्रौ. सू. ८ । २१२ । २१३ । रज्जुदालो मध्ये । का. श्रौ. सू. २० । ९८ । रज्जुदालः श्लेष्मातकः । अभितः पैतुदारवौ । २० । ४ । १८ । पीतुदारुर्देवदारुः । षट्षट्बैल्वखादिरपालाशाः का. श्रौ. सू. २० । १०० । त्रयस्त्रयोऽभितः । का. श्रौ. सू. २० । १०१ ।

रथँ॒ श्वयितुमध्रियत तस्य॒ यः श्लेष्माऽऽसीत्स॒ सार्द्धँ॑ समवद्रुत्य मध्यतो नस्तऽउदभिनत्सऽएष व॒नस्पतिरभवद्रज्जुदालस्तस्मात्स श्लेष्मणः श्लेष्मणो हि समभवत्तेनैवैनन्तद्रूपेण समर्द्धयति तद्यत्सोऽग्निष्ठो भवति मध्यम्वाऽएतद्यूपानां यदग्निष्ठो मध्यमेतत्प्राणानां यन्नासिके स्वऽएवैनन्तदायतने दधाति ॥ ६ ॥

(त्य) अथ यदापोमयन्तेजऽआसीत् । (द्यो) यो गन्धः स सार्द्धँ॑ समवद्रुत्य चक्षुष्टऽउदभिनत्सऽएष व॒नस्पतिरभवत्पीतुदारुस्तस्मात्स सुरभिर्गन्धाद्धि समभवत्तस्मादुज्ज्वलनस्तेजसो हि समभवत्तेनैवैनन्तद्रूपेण समर्द्धयति तद्यत्तावभितोऽग्निष्ठम्भवतस्तस्मादिमेऽअभितो नासिकाञ्चक्षुषी स्वऽएवैनौ तदायतने दधाति ॥ ७ ॥

(त्य) अथ यत्कुन्तापमासीत् । (द्यो) यो मज्जा स सार्द्धँ॑ समवद्रुत्य श्रोत्रतऽउदभिनत्सऽएष व॒नस्पतिरभवद्बिल्वस्तस्मात्तस्यान्तरतः सर्वमेव फलमाद्यम्भवति तस्माद्ध हारिद्रऽइव भवति हारिद्र-

---

श्लेष्माऽऽसीत् । स सार्द्धं समवद्रुत्य मध्यतो नस्त उदभिनत् । स एष वनस्पतिरभवत् रज्जुदालः । तस्मात्स श्लेष्मणः । श्लेष्मणो हि समभवत् । तेनैवैनं तद्रूपेण समर्द्धयति । तद्यत्सोऽग्निष्ठो भवति । मध्यं वा एतद्यूपानां यदग्निष्ठः । मध्यमेतत्प्राणानां, यन्नासिके । स्वे एवैनं तदायतने दधाति ॥ ६ ॥

अथ यदापोमयं तेज आसीत् । यो गंधः । स सार्द्धं समवद्रुत्य चक्षुष्ट उदभिनत् । स एष वनस्पतिरभवत् पीतुदारुः । तस्मात्स सुरभिः । गंधाद्धि समभवत् । तस्मादुज्ज्वलनः । तेजसो हि समभवत् । तेनैवैनं तद्रूपेण समर्द्धयति । तद्यत्तावभितोऽग्निष्ठं भवतः । तस्मादिमे अभितो नासिकां चक्षुषी । स्व एवैनौ तदायतने दधाति ॥ ७ ॥

अथ यत् कुंतापमासीत् । यो मज्जा । स सार्धं समवद्रुत्य श्रोत्रत उदभिनत् । स एष वनस्पतिरभवत् बिल्वः । तस्मात्तस्यांतरतः सर्वमेव फलमाद्यं भवति । तस्माद्ध हारिद्र इव भवति ।

---

कुर्वद्भिः सप्तम्यां संस्थापनीया । ततश्चैत्रकृष्णद्वितीयायां दीक्षां समाप्य चैत्रांतचतुर्दश्यामुपवसथः कार्यः, चैत्रांतामावास्यादिषु सुत्याः । ततो ब्रह्मौदनाः क्रतुपशवश्च कार्याः । उत्सीदंति नानुष्ठीयन्ते इष्टयः साविस्यः । संवत्सरे पर्यवेते इत्यनुवर्तते । पुरोहितस्य भूतेषु अग्निषु यजेतैव सावित्रीमिरिष्टिभिः । पूर्णेऽपि संवत्सरे चैव । ता उत्सीदेयुरित्यन्ये शाखिन आहुः । वाजिनस्त्वाहुः किमु दीक्षितो यजेत । किं क्षेपे । उशब्दस्तुशब्दस्थाने । किंतु कस्मात् कारणात् । न कुतश्चिदपीत्यर्थः । दीक्षितः सावित्रीभिर्विशेषेण विहिताभिर्यजेत ॥ १-६ ॥

दीक्षितस्य हि यागदानहोमाः सामान्येन प्रतिषिद्धाः । अयं च इष्टकापशून् दीक्षित एवेत्यभिप्रायः । तथा

ऽइव हि मज्जा तेनैवैनन्तद्रूपेण समर्द्धयत्यन्तरे पैतुदारवौ भवतो बाह्ये बैल्वाऽअन्तरे हि चक्षुषी बाह्ये श्रोत्रे स्वऽएवैनांस्तदायतने दधाति ॥ ८ ॥

( त्यु ) अस्थिभ्यऽ एवास्य खदिरः समभवत् । ( त्तु ) तस्मात्स दारुणो बहुसारो दारुणमिव ह्यस्थि तेनैवैनन्तद्रूपेण समर्द्धयत्यन्तरे बैल्वा भवन्ति बाह्ये खादिराऽअन्तरे हि मज्जानो बाह्यान्यस्थीनि स्वऽएवैनांस्तदायतने दधाति ॥ ९ ॥

माᳬसेभ्यऽएवास्य पलाशः समभवत् । ( त्तु ) तस्मात्स बहुरसो लोहितरसो लोहितमिव हि माᳬसन्तेनैवैनं तद्रूपेण समर्द्धयत्यन्तरे खादिरा भवन्ति बाह्ये पालाशाऽअन्तराणि ह्यस्थीनि बाह्यानि माᳬसानि स्वऽएवैनांस्तदायतने दधाति ॥ १० ॥

( त्यु ) अथ यदेकविᳬशतिर्भवन्ति । ( न्त्यु ) एकविᳬशत्यरत्नयऽ एकविᳬशो वाऽ एष यऽएष तपति द्वादश मासाः पञ्चर्त्तवस्त्रयऽइमे लोकाऽअसावादित्यऽएकविᳬशः सोऽश्वमेधऽएष प्रजापतिरेवमेतम्प्रजापतिं यज्ञङ्कृत्स्नᳬ सᳬस्कृत्य तस्मिन्नेकविᳬशतिमग्नीषोमीयान्पशूनालभते तेषाᳬ समानङ्कर्म्मैत्येतत्पूर्व्वैर्यः कर्म्म ॥ ११ ॥

इति तृतीयप्रपाठके द्वितीयं ब्राह्मणम् ॥ १३।३।२ ॥ ( ४-४ ) ॥

इति चतुर्थोऽध्यायः समाप्तः ॥ १३-४ ॥

कण्डिकासंख्या ॥ ५८ ॥

---

हारिद्र इव हि मज्जा । तेनैवैनं तद्रूपेण समर्द्धयति । अंतरे पैतुदारवौ भवतः । बाह्ये बैल्वाः । अंतरे हि चक्षुषी । बाह्ये श्रोत्रे । स्व एवैनांस्तदायतने दधाति ॥ ८ ॥

अस्थिभ्य एवास्य खदिरः समभवत् । तस्मात् स दारुणो बहुसारः । दारुणमिव ह्यस्थि । तेनैवैनं तद्रूपेण समर्द्धयति । अंतरे बैल्वा भवन्ति । बाह्ये खादिराः । अंतरे हि मज्जानः । बाह्यान्यस्थीनि । स्व एवैनांस्तदायतने दधाति ॥ ९ ॥

मांसेभ्य एवास्य पलाशः समभवत् । तस्मात् स बहुरसो लोहितरसः । लोहितमिव हि मांसम् । तेनैवैनं तद्रूपेण समर्द्धयति । अंतरे खादिरा भवन्ति । बाह्ये पालाशाः । अंतराणि ह्यस्थीनि । बाह्यानि मांसानि । स्व एवैनांस्तदायतने दधाति ॥ १० ॥

अथ यदेकविंशतिर्भवंति । एकविंशत्यरत्नयः । एकविंशो वा एषः । य एष तपति । द्वादश

---

आह—पूर्वा दीक्षा वा एष पशुः । अहीनत्वाद्धि द्वादशैव दीक्षा उपसदश्च प्राप्ताः । सुत्याश्च तिस्र उत्पत्तावेव

मासाः। पंच ऋतवः। त्रय इमे लोकाः। असावादित्य एकविंशः। सोऽश्वमेधः। एष प्रजापतिः। एवमेतं प्रजापतिं यज्ञं कृत्स्नं संस्कृत्य तस्मिन्नेकविंशतिमग्नीषोमीयान्पशूनालभते। तेषां समानं कर्म। इत्येतत्पूर्वेद्युः कर्म ॥ ११ ॥

---

सिद्धाः। तत्सर्वं दीक्षादि त्रिणवं स्तोममभिसंपद्यते। स च वज्रसंस्तुतः। वज्रेण खलु वै क्षत्त्रं स्पृतम्। "स्पृ प्रीतिपालनयोः" (धा. पा. स्वा.प.१३।) क्षत्त्रिया आयुधैर्वज्ररूपै रक्षिताः। दीक्षणीयायाम् ॥७–११॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये त्रयोदशे काण्डे चतुर्थेऽध्याये चतुर्थं ब्राह्मणम् ॥ ( १३ । ४ । ४ ) ॥

नागस्वामिसुतोऽवन्त्यां पाराशर्यो वसन्हरिः।
श्रुत्यर्थं दर्शयामास शक्तितः पौष्करीयकः,॥ १ ॥
श्रीमतोऽवन्तिनाथस्य विक्रमार्कस्य भूपतेः।
धर्माध्यक्षो हरिस्वामी व्याख्यच्छातपथीं श्रुतिम् ॥ २ ॥
भूभर्त्रा विक्रमार्केण क्लृप्तां कनकवेदिकाम्।
दानायाध्यस्य कृतवान् श्रुत्यर्थविवृतिं हरिः ॥ ३ ॥

इति श्रीसर्वविद्यानिधानकवीन्द्राचार्यसरस्वतीनां श्रीहरिस्वामिनां कृतौ माध्यन्दिनीयशतपथ-ब्राह्मणभाष्ये त्रयोदशे काण्डे चतुर्थोऽध्यायः समाप्तः ॥ १३–४ ॥



# अथ पञ्चमेऽध्याये प्रथमं ब्राह्मणम् ।
# तृतीयप्रपाठके च तृतीयं ब्राह्मणम् ।

अथ [1]प्रातर्गोतमस्य । चतुरुत्तर स्तोमो भवति तस्य चतसृषु बहिष्पवमानमष्टास्वष्टास्वाज्यानि द्वादशसु माध्यन्दिनः पवमानः षोडशसु पृष्ठानि विꣳशत्यामार्भवः पवमानश्चतुर्विꣳशत्यामग्निष्टोमसाम ॥ १ ॥

तस्य हैके । (केऽग्नि) अग्निष्टोमसाम चतुःसाम कुर्वन्ति नाग्निष्टोमो नोक्थ्यऽ इति वदन्तस्तद्यदि तथा कुर्युः सार्द्धꣳ स्तोत्रियꣳ शस्त्वा सार्द्धमनुरूपꣳ शꣳसेद्रथन्तरम्पृष्ठꣳ राथन्तरꣳ शस्त्रमग्निष्टोमो यज्ञस्तेनेमं लोकमृध्नोति ॥ २ ॥

(त्ये) एकविꣳशतिः सवनीयाः पशवः । सर्व्वऽआग्नेयास्तेषाꣳ समानङ्कर्म्मेत्यु हैकऽ आहुर्द्वे त्वेवैतेऽएकादशिन्यावालभेत यऽएवैकादशिनेषु कामस्तस्य कामस्याप्त्यै ॥ ३ ॥

---

अथ प्रातर्गोतमस्य चतुरुत्तरः। स्तोमो भवति । तस्य चतसृषु बहिष्पवमानम् । अष्टास्वष्टास्वाज्यानि । द्वादशसु माध्यन्दिनः पवमानः । षोडशसु पृष्ठानि । विंशत्यामार्भवः पवमानः । चतुर्विंशत्यामग्निष्टोमसाम ॥ १ ॥

तस्य हैकेऽग्निष्टोमसाम चतुःसाम कुर्वंति । नाग्निष्टोमः । नोक्थ्य इति वदंतः । तत् यदि तथा कुर्युः । सार्धं स्तोत्रियं शस्त्वा सार्द्धमनुरूपं शंसेत् रथंतरं पृष्ठम् । राथंतरं शस्त्रम् । अग्निष्टोमो यज्ञः । तेनेमं लोकमृध्नोति ॥ २ ॥

एकविंशतिः सवनीयाः पशवः । सर्वे आग्नेयाः । तेषां समानं कर्म । इति उहैक आहुः । द्वे त्वेव एते एकादशिन्यौ आलभेत । य एवैकादशिनेषु कामः । तस्य कामस्याप्त्यै ॥ ३ ॥

---

अथ प्रातर्गोतमस्य स एष स पूर्वापत्यः । त एवं उक्थ्यानुरूपैः सार्द्धं सह एकीभूय एव शंसेत् । तथाहि—त्रीण्यपि आध्वर्यवौद्गात्रहौत्राणि अविलक्षणानि भवन्तीत्यभिप्रायः ॥ १ ॥

रथंतरं पृष्ठसाधनम् । तच्च प्रथमेऽहनि भवति न बृहत् इति नियमवचनम् । राथंतरं च शस्त्रं रथंतरपृष्ठसंबद्धं यादृशं निष्केवल्यशस्त्रं तादृशमत्र भवति । अग्निष्टोमः अग्निष्टोमसंस्थोऽयं यज्ञो भवति । न उक्थ्यादिसंस्थः ॥ २ ॥

एकविंशतिः सवनीयाः आग्नेयाः समानकर्माणः अत्र प्रथमे अहनि भवन्तीत्येक आहुः । न तु तथा

---

[1] १–प्रातरग्निष्टोमः । का. श्रौ. सू. २० । १०३ ।

सुᳬस्थितेऽग्निष्टोमे । परिहृतासु व्वसतीवरीष्वध्वर्युरन्नहोमाञ्जुहोति तेषामुक्तम्ब्राह्मणम्प्राणाय स्वाहाऽपानाय स्वाहेति द्वादशभिरनुवाकैर्द्वादश मासाः सम्वत्सरः सुर्व्वᳬ सम्वत्सरः सुर्व्वमश्वमेधः सुर्व्वस्याप्त्यै सुर्व्वस्यावरुद्ध्यै ॥ ४ ॥

---

संस्थितेऽग्निष्टोमे । परिहृतासु वसतीवरीषु । अध्वर्युरन्नहोमान् जुहोति । तेषामुक्तं ब्राह्मणम् । " प्राणाय स्वाहाऽपानाय स्वाहा "–( वा. सं. २२ । २३ ) इति द्वादशभिरनुवाकैः । द्वादश मासाः संवत्सरः । सर्वं संवत्सरः । सर्वमश्वमेधः । सर्वस्याप्त्यै । सर्वस्यावरुद्ध्यै ॥ ४ ॥

---

कुर्यात् । कथं तर्हि कुर्यात् ? द्वे त्वेवैते । सहिते आश्वमेधिके । किं खिलपरिपठिते एकादशिन्यौ–" आग्नेयः कृष्णग्रीवः, अग्नयेऽनीकवते, रोहितांजिरनड्वान् " इत्येते ( वा. सं. २९ । ५८ । ५९ ) आलमेत य एवैकादशिनेषु कामः आपन्नः । तस्मै काममेकादशिन्या यजेतेत्यादि । यदेकादशिनान्पशूनालभते न स्वर्गं लोकमपराध्नोति । न प्रजया पशुभिर्व्यृद्ध्यते इत्यादिश्च, तस्याप्त्यै ॥ ३ ॥

संस्थितेऽग्निष्टोमे । क्रमार्थमिदं पुनर्वचनम् । अध्वर्युग्रहणं औद्गात्रहौत्रव्यवधानार्थम् ॥ ४ ॥

---

१–एकादशिन्यौ सवनीयाः पशवो भवंति । का.श्रौ. सू. २०।१०४ । ( द्वे एकादशिन्यौ, खिलपरिपठिते, इति हरिस्वामिनः । खिलपरिपठिता प्रथमैवैकादशिनी द्विरावृत्ता भवतीति कर्कसंप्रदायकारौ । ) उत्तरयोश्च । का.श्रौ.सू. २०।१०६। ( उत्तरयोर्द्वितीयतृतीययोरह्वोर्द्वे द्वे एकादशिन्यौ खिलपरिपठिते सवनीयाः पशवो भवंतीत्यर्थः । ) उत्तमे गावो बहुरूपाः । का. श्रौ. सू. २०।१०७। ( उत्तमेऽहनि सर्वस्तोमातिरात्रे गावो गोजातीयाः बहुरूपा विचित्रवर्णाः एकादशिन्यः पशवो भवंतीत्यर्थः । तत्र च द्वयोरेकादशिन्योर्द्वाविंशतिर्द्वौ च प्राजापत्यौ एवं चतुर्विंशतिपशवः । मध्यम आग्नेयौ । का. श्रौ. सू २० । १०५ । इति सवनीयानां यूपेषु नियोजनक्रमः । स चेत्थं–मध्यमे अग्निष्ठे यूपे द्वावाग्नेयौ, दक्षिणोत्तरयोर्द्वौ सारस्वतौ चतुर्थपंचमयोर्द्वौ सौम्यौ षष्ठसप्तमयोर्द्वौ पौष्णौ अष्टमनवमयोर्द्वौ बार्हस्पत्यौ दशमैकादशयोर्द्वौ वैश्वदेवौ द्वादशत्रयोदशयोर्द्वावैन्द्रौ चतुर्दशपंचदशयोर्द्वौ मारुतौ षोडशसप्तदशयोर्द्वावैंद्राग्नौ अष्टादशैकोनविंशयोर्द्वौ सावित्रौ विंशैकविंशयोर्द्वौ वारुणौ । इति एकविंशतियूपेषु द्वाविंशतिपशूनां नियोगक्रमः । अथ प्रत्यभिज्ञानार्थं सवनीयानां वर्णाः । तत्र प्रथमैकादशनीपशुवर्णाः । १ अग्नये=कृष्णवर्णकंठश्छागः, २ सरस्वत्यै मेषी, ३ सोमाय बभ्रुः कपिलवर्णश्छागः, ४ पूष्णे श्यामः कृष्णलोमश्छागः, ५ बृहस्पतये शितिपृष्ठः श्यामपृष्ठश्छागः, ६ विश्वेभ्यो देवेभ्यः शिल्पः विचित्रवर्णश्छागः, ७ इंद्राय अरुणः व्यक्तरक्तवर्णश्छागः, ८ मरुद्भ्यः कल्माषः कर्बुरश्छागः, ९ इंद्राग्निभ्यां संहितः दृढांगश्छागः, १० सवित्रे अधोरामः अधोदेशे श्वेतश्छागः, ११ वरुणाय कृष्णः एकशितिपात् पेत्वः एकपदे श्वेतः अन्येषु त्रिषु पदेषु कृष्णः पेत्वः पतनशीलो वेगवान् छागः, इति प्रथमैकादशिनीपशुवर्णाः । अथ द्वितीयैकादशिनी । १ अग्नयेऽनीकवते रोहितांजिः रक्तपुंड्रोऽनड्वान्, २ सवित्रे अधोरामौ अधोदेशे श्वेतौ छागौ, २ पूष्णे रजतनाभी रजतवर्णनाभी छागौ, २ विश्वेभ्यो देवेभ्यः पिशंगौ पीतवर्णौ तूपरौ शृंगहीनौ छागौ, १ मरुद्भ्यः कल्माषः विचित्रवर्णश्छागः, १ अग्नये कृष्णः कृष्णवर्णः अजो मेषः, १ सरस्वत्यै मेषी, १ वरुणाय पेत्वः पीतवर्णः छागः । इति द्वितीयैकादशिनी । उत्तमेऽहनि सर्वस्तोमातिरात्रे तु, सर्वे सवनीयाः पशवः गोजातीया एव बहुरूपा विचित्रवर्णा एवेति ।

२–वसतीवरीर्गृहीत्वा गृहीत्वा प्रतिदिशं समासिच्य परिहरति । आज्यसक्तुधानालाजानामेकैकं जुहोति प्राणाय स्वाहेति प्रतिमंत्रं सर्वरात्रमावर्तम् । का. श्रौ. सू. २० । ११२ । ११३ । इह च एकस्मै स्वाहा द्वाभ्यां स्वाहा वा. सं. २२ । ३४ । इत्येवमादौ त्रिभ्यः स्वाहा चतुर्भ्यः स्वाहा पंचभ्यः स्वाहा इत्येवमादिः, आ एकशतात् लुप्तः स्वाध्यायो द्रष्टव्यः । तथा च श्रुतिः–" एकस्मै स्वाहा द्वाभ्यां स्वाहा शताय स्वाहैकशताय स्वाहेत्यनुपूर्वं जुहोति, एकोत्तरा जुहोति नैकशतमत्येतीति च "–( श. प. १३ । २ । १ । ५ । ६ ) व्युष्ट्या इति व्युष्टायां स्वर्गायेत्युदिते । ( का. श्रौ. सू. २० । ११४ । ११५ ) । इत्येवमन्नहोमः ॥

(द्व्याऽए) एकविꣳशम्मध्यममहर्ब्भवति । (त्य) असौ वाऽआदित्यऽएकविꣳशः सोऽश्वमेधः स्वेनैवैनꣳ स्तोमेन स्वायां देवतायाम्प्रतिष्ठापयति तस्मादेकविꣳशम् ॥ ५ ॥

यद्वेवैकविꣳशम् । (मे) एकविꣳशो वै पुरुषो दश हस्त्याऽअङ्गुलयो दश पाद्याऽआत्मैकविꣳशस्तदनेनैकविꣳशेनात्मनैतस्मिन्नेकविꣳशे प्रतिष्ठायाम्प्रतितिष्ठति तस्मादेकविꣳशम् ॥ ६ ॥

यद्वेवैकविꣳशम् । (मे) एकविꣳशो वै स्तोमानाम्प्रतिष्ठा बहु खलु वाऽएतदेतस्मिन्नहन्युच्चावचमिव कर्म्म क्रियते तद्यदेतदेतस्मिन्नहन्युच्चावचम्बहु कर्म्म क्रियते तदेतस्मिन्नेकविꣳशे प्रतिष्ठायाम्प्रतिष्ठितं क्रियाताऽइति तस्माद्वेवैतदेकविꣳशमहः ॥ ७ ॥

(स्त) तस्य प्रातःसवनम् । (म) अग्निं तम्मन्ये यो वसुरिति होता पाङ्क्तमाज्यꣳ शस्त्वैकाहिकमुपसꣳशꣳसति बार्हतञ्च प्रऽउगम्माधुच्छन्दसञ्च त्रिचशऽउभे सꣳशꣳसति यश्च बार्हते प्रऽउगे कामो यऽउ च माधुच्छन्दसे तयोरुभयोः कामयोराप्त्यै क्लृप्तम्प्रातःसवनम् ॥ ८ ॥

---

एकविंशं मध्यममहर्भवति । असौ वा आदित्य एकविंशः । सोऽश्वमेधः । स्वेनैवैनं स्तोमेन स्वायां देवतायां प्रतिष्ठापयति । तस्मादेकविंशम् ॥ ५ ॥

यद्वेवैकविंशम् । एकविंशो वै पुरुषः । दश हस्त्या अंगुलयः । दश पाद्याः । आत्मैकविंशः । तदनेनैकविंशेनात्मनैतस्मिन्नेकविंशे प्रतिष्ठायां प्रतितिष्ठति । तस्मादेकविंशम् ॥ ६ ॥

यद्वेवैकविंशम् । एकविंशो वै स्तोमानां प्रतिष्ठा । बहु खलु वा एतत् एतस्मिन्नहन्युच्चावचमिव कर्म क्रियते । तद्यदेतदेतस्मिन्नहन्युच्चावचं बहु कर्म क्रियते । तदेतस्मिन्नेकविंशे प्रतिष्ठायां प्रतिष्ठितं क्रियाता इति । तस्मात् उ एवैतदेकविंशमहः ॥ ७ ॥

तस्य प्रातःसवनम् । "अग्निं तं मन्ये यो वसुः"–(वा. सं. १५ । ४१ । ) इति होता पाङ्क्तमाज्यं शस्त्वा ऐकाहिकमुपसंशंसति । बार्हतं च प्रउगं माधुच्छन्दसं च । त्रिचशः

---

एकविंशमिति । औद्गात्रमेतत् दर्शनार्थं पुनरुच्यते । नाम्येन च । स्वायां देवतायां आदित्ये प्रतिष्ठापयति ॥ ५ ॥

यद्वेवैकविंशम् । तत् अनेन एकविंशतिविभागेन आत्मना प्राणेन तम् एतस्मिन्नादित्ये एकविंशे एव ॥ ६ ॥ सामान्यात् प्रकृतौ च । स्तोमानाम् अभ्यद्धा । यत् उच्चावचं नानारूपम् ॥ ७ ॥

तस्य प्रातःसवनम् । तस्य मध्यमाह्नः हौत्रे प्रातःसवनं विशेषेण कल्पयिष्ये इति शेषः । "अग्निं तं

(म) अथातो माध्यन्दिनꣳ सवनम् । (म) अतिच्छन्दाः प्रतिपन्मरुत्वतीयस्य त्रिकद्रुकेषु महिषो यवाशिरमित्यतिष्ठा वाऽएषा छन्दसां यदतिच्छन्दाऽअतिष्ठाऽअश्वमेधो यज्ञानामश्वमेधस्यैवाप्त्यै सैषैव त्रिः शस्ता त्रिचः सम्पद्यते तेनो तं काममाप्नोति यस्त्रिचऽइदं वसो सुतमन्धऽ इत्यनुचरऽएषऽएव नित्यऽएकाहातानऽ इत्था हि सोमऽइन्मदेऽवितासि सुन्वतो वृक्तबर्हिषऽइति पङ्क्तीश्च षट्पदाश्च शस्त्वैकाहिके निविदन्दधातीति मरुत्वतीयम् ॥ ९ ॥

---

उभे संशंसति । यश्च बार्हते प्रउगे कामः । य उ च माधुच्छन्दसे । तयोरुभयोः कामयोराप्त्यै । क्लृप्तं प्रातःसवनम् ॥ ८ ॥

अथातो माध्यंदिनं सवनम् । अतिच्छंदाः प्रतिपन्मरुत्वतीयस्य । " त्रिकद्रुकेषु महिषो यवाशिरम् "–इति । अतिष्ठा वा एषा छंदसां यदतिच्छंदाः । अतिष्ठा अश्वमेधो यज्ञानाम् । अश्वमेधस्यैवाप्त्यै । सैषैव त्रिः शस्ता त्रिचः संपद्यते । तेन उ तं काममाप्नोति। यस्त्रिचे । " इदं

---

मन्ये यो वसुः " इत्येतत्सूक्तम् । पांक्तं पंक्तीनां समूहः । आज्यं आज्यशस्त्रात्मकमाश्वमेधिकं शस्त्वा ऐकाहिकं ज्यौतिष्टोमिकमाज्यमाज्यसूक्तं उप उपचिन्वन् स एकाहादपूर्वेण आश्वमेधिकेन शंसति एष तावत् आज्ये प्रथमे शस्त्रे विशेषः । अथ द्वितीये शस्त्रे विशेषमाह–बार्हतं च । " आ नो यज्ञं दिविस्पृशं " बृहतीनां समूहः । प्रउगं शस्त्रं माधुच्छंदसं मधुच्छंदस आर्षं ज्यौतिष्टोमिकम् । प्रउगं " वायुरग्रेगाः " इत्येतत्, त्रिचशः तृचं तृचं शंसति । माधुच्छंदसे हि वायवायादयः सप्त तृचाः सप्तैव बार्हताः । तेषामेकं बार्हतं एकं च माधुच्छंदसं समानेन शंसति । एवं सर्वान् । यश्च बार्हते प्रउगे कामो ब्राह्मणे पठितः । यश्च माधुच्छंदसे च । तयोरुभयोराप्त्यै । क्लृप्तं प्रातःसवनं एतवानेवात्र विशेषः नान्योऽस्तीत्यर्थः ॥ ८ ॥

अथातो माध्यंदिनं सवनं, विशेषयतीति शेषः । मरुत्वतीयस्य शस्त्रस्य " त्रिकद्रुकेषु महिषः " इत्येषा [६]अतिच्छन्दाः [७]प्रतिपत्प्रथमा च भवति । "इदं वसो सुतमंधः" इत्यनु[८]चरस्तृचः प्राकृत एव । एष एव नित्यः

---

१–शांखायनीयं दशर्चम् । अग्निं तं मन्ये १ सो अग्निर्यो २ अग्निर्हि वाजिनं ३ आ ते अग्न इधीमहि ४ आ ते अग्न ऋचा हविः ५ प्रोत्ये अग्नयो ६ तवत्ये अग्ने ७ नवानो अग्न आ भर ८ वमे सुश्चंद्र ९ एवां अग्निर्मनुः १० इति । आश्वलायनीयं दशर्चं चेदमेव । २–शांखायनीयं सप्तर्चम् । प्र वो देवायाग्नये १ ऋतावा यस्य २ स यंता विप्र ३ स नः शर्माणि ४ दीदिवांसं ५ उत नो ब्रह्मन् ६ नूनो रास्व ७ इति । आश्वलायनीयं च सप्तर्चं चेदमेव । आ. श्रौ. सू. उ. ष. ६ । ४ । १० । अग्निं तम्मन्य इत्याज्यं तस्यैकाहिकमुपरिष्टादिति । ३–आ नो यज्ञं दिविस्पृशमिति द्वे आ नो वायो महेतन इत्येका रथेन पृथुपाजसा बहवः सूर चक्षस इमा उ वां दिविष्टयः । पिबासुतस्य रसिनो देवंदेवं वोऽवसे देवंदेवं बृहदु गायिषे वच इति बार्हतं प्रउगमिति । आ. श्रौ. सू. उ. ष. ६ । १ । २ ॥ ४–तृचाः प्रउगे सर्वाः । इति आ. श्रौ. सू. उ. ष. ६ । १ । १ ॥

५–" त्रिकद्रुकेषु महिषो यवाशिरं तुविशुष्म ( १ ) तृपत्सोममपिबद्विष्णुना सुतं यथा वशत् ( २ ) स ईं ममाद महि कर्म कर्तवे महामुरुं ( ३ ) सैनं सश्चद्देवोदेवं (४) सत्यमिंद्रं सत्य इंदुः " ( ५ ) ।१। "ऋग्वेदः" अ. २ अ. ६ व. २८मं. १ । सू.२२।

६–सप्तविधेषु अतिच्छंदस्सु चतुःषष्ट्यक्षरा ६४ अष्टिर्नाम्नी अतिच्छंदस्का । ७–प्रतिपत् प्रारंभरूपा प्रथमा ऋक् । प्रतिपद्यते प्राप्यते शस्त्रं येन तृचेन सोऽयं प्रतिपत् । ८–"इदं वसो सुतमंधः " ऋ. सं. मं. ८ सू. २ अ. १ । प्रतिपदमनुचरतीत्यनुचरः अनंतरं पठनीयः इत्यर्थः ।

(म) अथातो निष्केवल्यम् । (म्म) महानाम्न्यः पृष्ठम्भवन्ति सानुरूपाः सप्रगाथाः शꣳसति सर्व्वे वै कामा महानाम्नीषु सर्व्वे कामाऽअश्वमेधे सर्व्वेषाङ्कामानामाप्त्याऽइन्द्रो मदाय व्वावृधे प्रेदम्ब्रह्म व्वृत्रतूर्य्ये-ष्वाविथेति पङ्क्तीश्च षट्पदाश्च शस्त्वैकाहिके निविदन्दधाति क्लृप्त-म्माध्यन्दिनꣳ सवनम् ॥ १० ॥

वसो सुतमंधः"–इत्यनुचरः। एष एव नित्य एकाहातानः । "इत्था हि सोम इन्मदे अवि-तासि सुन्वतो वृक्तबर्हिषः"–इति पंक्तीश्च षट्पदाश्च शस्त्वा ऐकाहिके निविदं दधाति । इति मरुत्वतीयम् ॥ ९ ॥

अथातो निष्केवल्यम् । महानाम्न्यः पृष्ठं भवंति । सानुरूपाः सप्रगाथाः शंसति । सर्वे वै

एकाहातानः । एकाहे आतानः "इंद्र नेदीयः" इत्यादिः । एकाहातानादूर्ध्वम् "इत्था हि सोम इन्मदे" इति पंक्तीः शंसति । ततः "अवितासि सुन्वतो वृक्तबर्हिषः" इति षट्पदाः । ततः "ऐकाहिकं सूक्तं" शंसति । तत्र च प्रागुत्तमाया ऋचो निविदं दधाति । इति मरुत्वतीयम्–इत्युपसंहारः ॥ ९ ॥

अथातो निष्केवल्यमिति । निष्केवल्यं माहेंद्रशस्त्रं तत् विशेषयिष्यत इति शेषः । महानाम्न्यः शक्कर्यः । सिमास्वसाक्षरस्य । ताभिः शाक्करं लक्ष्यते । शाक्करं मध्यमे अहनि पृष्ठं भवति । पुरविवक्षयो-पन्यासः । एषः अंगं तस्य ता महानाम्नीः स्तोत्रियाः । सहानुरूपेण तृचेन "स्वादोः" "इत्था" "विषूवतः" इति सह च प्रगाथेन होता शंसति । सर्वे कामा महानाम्नीषु । आयताः सर्वकामप्रदातार इत्यर्थः । "इन्द्रो मदाय" इति पंक्तीः । "प्रेदं ब्रह्म" इति षट्पदाः शस्त्वा ऐकाहिके "इंद्रस्य नु वीर्याणि प्रवोचम्" इत्येतस्मिन् सूक्ते निविदं दधाति ॥ १० ॥

१–"इंद्र नेदीयः" ऋ. सं. मं. ८ सू. ५३ ऋ. ५ । आतानः, पुनरपि विस्तारः । २–"इत्था हि सोम इन्मदे" ऋ. सं. मं. १ सू. ८ ऋ. १ पंक्तिच्छंदस्केयमृक् । पंक्तीः पंक्तिच्छंदस्काः ॥ ३–"अवितासि सुन्वतो" ऋ, सं. मं. ९ सू. ७ अ. ४३ ॥ ४–षट्पदाः महापंक्तिच्छंदस्काः । तथा च का. सर्वा. अ. ५ कं. ८ "अष्टकौ सप्तकः षट्को दशको नवकश्च षडष्टका महापंक्तिः" इति । तत्रैव भाष्ये–"आदावष्टाक्षरौ यस्याः सप्तकोऽथ षडक्षरः । दशाक्षरोऽथ नवकः सा महापंक्तिरुच्यते । अष्टाक्षरा वा यस्याः पद सा महापंक्तिरेवहि"। इति । पादा इति शेषः । अष्टाचत्वारिंशद-क्षरेति यावत् । ५–ऐकाहिकं सूक्तं "जनिष्ठा उग्रः सहसे तुरायेति" इत्यादिकमेकादशर्चं सूक्तं एकाहे मूलप्रकृतिरूपे अग्निष्टोमे समुत्पन्नमिति ऐकाहिकमित्युच्यते । ऋ. सं. मं. १० सू. ७३ ऋ. १ । ६–मूलप्रकृतिरूपे अग्निष्टोमे षण्णामृचां शंसनं कृत्वा तत ऊर्ध्वं "इंद्रो मरुत्वान्" इत्यादीनि निवित्पदानि सूक्तमध्ये धीयंते तस्मादेतत् ऐकाहिकं निविद्धानमित्यप्युच्यते । अत्र तु तानि निवित्पदानि सूक्तस्य उत्तमाया "मन्योरियायं" इत्यस्या ऋचः प्राक् निवित्पदानि धीयंते इति विशेषः । ९ । ७–"महा-नाम्न्यः विदामघवान्" इत्याद्या नव ऋचः । ऐतरेयारण्यके ४।१।१। ताः शक्कर्यः शाक्करपृष्ठसंबंधिन्यः न तु शक्करीच्छंदस्काः । ८–शाक्करं शाक्करनाम्नः साम्नः पृष्ठस्तोत्रं तस्य महानाम्न्यः स्तोत्रियाः । ९-अनुरूपः एकं साम तृचे गीयते तत् तृचं स्तोत्रियम् । स प्रथमस्तृचस्तोत्रियः शस्त्रस्यादौ प्रयोक्तव्यः । तत् तृचमनुपश्चात् रूप्यते पठ्यते यो द्वितीयस्तृचः स अनुरूप इत्युच्यते एवं च द्वावेतौ तृचौ शस्त्रस्यादौ पठेदित्यर्थः। स्वादोः स्वादीयः स्वादुना । ऋ. सं. मं.१० सू. १२ ऋ.३ "इत्था हि सोम" ऋ. सं. मं. १ सू. ८० ऋ. १ विषुवत् । १०–प्रगाथः अनुरूपमनुपठ्यमानः द्व्यर्चः प्रगाथः । ११–"इंद्रो मदाय" ऋ. सं. मं. १ सू. १ अ. ६ । १२–"प्रेदं ब्रह्म" ऋ. सं. मं. ९ सू. ८ अ. ४३ ॥ १३–"इंद्रस्य नु वीर्याणि" ऋ. । सं. मं १ सू. ३२ ऋ. १। इतीदं सूक्तं पंचदशर्चम् ॥

( म ) अथातस्तृतीयसवनम् । ( मु ) अतिच्छन्दाऽएव प्रतिपद्वैश्वदेवस्याभि त्यन्देवꣳ सवितारमोण्योरिति तस्याऽएतदेव ब्राह्मणं यत्पूर्वस्याऽअभि त्वा देव सवितरित्यनुचरोऽभिवानभिभूत्यै रूपमुदुष्य देवः सविता दमूनाऽइति सावित्रꣳ शस्त्वैकाहिके निविदन्दधाति मही द्यावापृथिवीऽइह ज्येष्ठेऽइति चतुर्ऋचन्द्यावापृथिवीयꣳ शस्त्वैकाहिके निविदन्दधात्यृभुर्विभ्वा वाजऽइन्द्रो नोऽअच्छेत्यार्भवꣳ शस्त्वैकाहिके निविदन्दधाति को नु वां मित्रावरुणावृतायन्निति वैश्वदेवꣳ शस्त्वैकाहिके निविदन्दधातीति वैश्वदेवम् ॥ ११ ॥

( म ) अथातऽआग्निमारुतम् । ( मू ) मूर्द्धानन्दिवोऽ अरतिम्पृथिव्याऽइति वैश्वानरीयꣳ शस्त्वैकाहिके निविदन्दधात्या रुद्रासऽइन्द्रवन्तः सजोषसऽइति मारुतꣳ शस्त्वैकाहिके निविदन्दधातीमम्मू-

---

कामा महानाम्नीषु । सर्वे कामा अश्वमेधे । सर्वेषां कामानामाप्त्यै । " इन्द्रो मदाय वावृधे प्रेदं ब्रह्म वृत्रतूर्येष्वाविथ "-इति पंक्तीश्च षट्पदाश्च शस्त्वा ऐकाहिके निविदं दधाति । क्लृप्तं माध्यंदिनं सवनम् ॥ १० ॥

अथातस्तृतीयसवनम् । अतिच्छन्दा एव प्रतिपत् वैश्वदेवस्य । " अभि त्यं देवꣳ सवितारमोण्योः "-( वा. सं. ४ । २५ ) इति । तस्या एतदेव ब्राह्मणम् , यत्पूर्वस्याः । " अभि त्वा देव सवितः "-इत्यनुचरः । अभिवानभिभूत्यै रूपम् । " उदुष्य देवः सविता दमूनाः "-इति सावित्रं शस्त्वा ऐकाहिके निविदं दधाति । "मही द्यावापृथिवी इह ज्येष्ठे"-इति चतुर्ऋचं द्यावापृथिवीयं शस्त्वा ऐकाहिके निविदं दधाति । " ऋभुर्विभ्वा वाज इंद्रो नो अच्छ "-इत्यार्भवं शस्त्वा ऐकाहिके निविदं दधाति । " को नु वां मित्रावरुणावृतायन् "-इति वैश्वदेवं शस्त्वा ऐकाहिके निविदं दधाति । इति वैश्वदेवम् ॥ ११ ॥

अथात आग्निमारुतम् । " मूर्द्धानं दिवो अरतिं पृथिव्याः "-( वा. सं. ७ । २४ ) इति वैश्वानरीयं शस्त्वा ऐकाहिके निविदं दधाति । " आ रुद्रास इंद्रवंतः सजोषसः "-

---

[1]अथातस्तृतीयसवनम् । " अभि त्वा देव सवितः " इत्येषः अनुचरस्तृचः अभिवान्, शत्रूणां अभिभवस्य रूपम् । " उदुष्य देवः सविता दमूनाः " इत्यादीनि [2]चत्वारि आश्वमेधिकानि सूक्तानि ऐकाहिकानां पुरस्तात्

---

१–' अभि त्यꣳ सावित्र्यष्टिः " इति सर्वानुक्रमे कात्यायनः । " अभित्यं देवꣳ सवितारमोण्योः इति ऋक् सप्तस्वतिच्छंदस्सु चतुःषष्ट्यक्षरा अष्टिर्नाम्नी अतिच्छंदस्केयं प्रतिपदभिधेया भवति ।

२–उदुष्य देवः सविता दमूनाः । ५ । १ । १५ । ४ । इति सावित्रम् । ( १ ) मही द्यावापृथिवी इह ज्येष्ठे० ।३।८।८।१। इति चतुर्ऋचं द्यावापृथिवीयम् । ( २ ) ऋभुर्विभ्वा वाज इंद्रो नो अच्छ ० । ३ । ७ । ३ । १। इत्यार्भवम् । ( ३ ) को नु वां मित्रावरुणावृतायन्० । ४ । २ । १२ । १ । इति वैश्वदेवम् । ( ४ ) ।

वोऽअतिथिमुषर्ब्बुधमिति नवर्च्चञ्जातवेदसीयᳬं शस्त्वैकाहिके निविदन्दधाति तद्यदैकाहिकानि निविद्धानानि भवन्ति प्रतिष्ठा वै ज्योतिष्टोमः प्प्रतिष्ठाया ऽअप्रच्युत्यै ॥ १२ ॥

तस्यैते पशवो भवन्ति । ( न्त्यु ) अश्वस्तूपरो गोमृगऽइति पञ्चदश पर्य्यङ्ग्यास्तेषामुक्तम्ब्राह्मणमथैतऽआरण्या व्वसन्ताय कपिञ्जलानालभते ग्रीष्माय कलविङ्कान्वर्षाभ्यस्तित्तिरीनिति तेषाम्वेवोक्तम् ॥ १३ ॥

( मु ) अथैतानेकविᳬंशतये । चातुर्म्मास्यदेवताभ्यऽ एकविᳬंशतिमेकविᳬंशतिम्पशूनालभतऽएतावन्तो वै सर्व्वे देवा यावत्यश्चातुर्मास्यदेवताः सर्व्वे कामाऽअश्वमेधे सर्व्वान्देवान्प्रीत्वा सर्व्वान्कामानाप्नवानीति न तथा कुर्य्यात् ॥ १४ ॥

---

इति मारुतं शस्त्वा ऐकाहिके निविदं दधाति । " इममूषु वो अतिथिमुषर्बुधम् "–इति । नवर्चं जातवेदसीयं शस्त्वा ऐकाहिके निविदं दधाति । तद्यत् ऐकाहिकानि निविद्धानानि भवंति । प्रतिष्ठा वै ज्योतिष्टोमः । प्रतिष्ठाया अप्रच्युत्यै ॥ १२ ॥

तस्यैते पशवो भवंति । " अश्वः तूपरः गोमृगः "–( वा. सं. २४ । १ ) इति पंचदश पर्यंग्याः । तेषामुक्तं ब्राह्मणम् । अथैत आरण्याः । " वसंताय कपिंजलानालभते, ग्रीष्माय कलविंकान्, वर्षाभ्यस्तित्तिरीन् "–( वा. सं. २४ । २० ) इति । तेषाम् उ एवोक्तम् ॥ १३ ॥

अथैतानेकविंशतये चातुर्मास्यदेवताभ्य एकविंशतिमेकविंशतिं पशूनालभते । एतावन्तो वै सर्वे देवाः । यावत्यश्चातुर्मास्यदेवताः । सर्वे कामा अश्वमेधे । सर्वान् देवान् प्रीत्वा सर्वान् कामानाप्नवानीति । न तथा कुर्यात् ॥ १४ ॥

---

शंसनीयान्येव । साग्निमारुतैर्द्वे इत्यादीनि त्रीणि आश्वमेधिकानि ऐकाहिकेनैव निविद्धानीयैः समुच्चिनोति ॥ ११ ॥ १२ ॥

तस्यैते पशवः । तस्य मध्यमस्याह्नः एते अश्वादयः पशवो भवंति । इति कंडिकाद्वयेन ऐकः पशुकल्पः उपन्यस्य प्रतिषिद्धः ॥ १३ ॥ १४ ॥

---

१–" तेषामुक्तं ब्राह्मणम् " । ( श. प. १३ । २ । १ । १२ । )
२–तेषाम्वेवोक्तम् । ब्राह्मणमिति शेषः । ( श. प. १३ । २ । ४ । १--४ । )
३–साग्निमारुतैर्द्वे इत्यादीनि । त्रीणि सूक्तानि । ( ५ )
४–" वैश्वदेवस्य " इत्युपक्रम्य सूक्तेषु च ऐकाहिकान्युपसंशस्य तेषु निविदो दध्यात् । आश्व. श्रौ. सू. उ. ष. ६ । ४ । १० ।
५–आरण्यकः पशुकल्पः । पर्यग्निकरणांतं संस्कुर्यात् । ततस्तेषां नालंभः । किंतूत्सर्गः । तथा च कात्यायनः–कपिंजलादीनुत्सृजंति पर्यग्निकृतानिति । का. श्रौ. सू. २० । १४७ ।

( त्स ) सप्तदशैव पशून्मध्यमे यूपऽआलभेत । प्रजापतिः सप्तदशः सर्व्वᳪ सप्तदशः सर्व्वमश्वमेधः सर्व्वस्याप्त्यै सर्व्वस्यावरुद्ध्यै षोडश षोडशेतरेषु षोडश कलम्वाऽ इदᳪ सर्व्वᳪ सर्व्वमश्वमेधः सर्व्वस्याप्त्यै सर्व्वस्यावरुद्ध्यै त्रयोदश त्रयोदशारण्यानाकाशेष्वालभते त्रयोदश मासाः सम्वत्सरः सर्व्वᳪ सम्वत्सरः सर्व्वमश्वमेधः सर्व्वस्याप्त्यै सर्व्वस्यावरुद्ध्यै ॥ १९ ॥

( द्ध्याऽअ ) अथ पुरा बहिष्पवमानात् । ( तु ) अश्वन्निक्त्वोदानयन्ति तेन पवमानाय सर्प्पन्ति तस्योक्तम्ब्राह्मणᳪ स्तुते बहिष्पवमानेऽश्वमास्तावमाक्रमयन्ति स यद्यव वा जिघ्रेद्वि वा वर्त्तेत समृद्धो मे यज्ञऽइति ह विद्यात्तमुपाकृत्याध्वर्य्युराह होतरभिष्टुहीति तमेकादशभिर्होताऽभिष्टौति ॥ १६ ॥

---

सप्तदशैव पशून्मध्यमे यूप आलभेत । प्रजापतिः सप्तदशः । सर्वं सप्तदशः । सर्वमश्वमेधः । सर्वस्याप्त्यै । सर्वस्यावरुद्ध्यै । षोडश षोडशेतरेषु । षोडशकलं वा इदं सर्वम् । सर्वमश्वमेधः । सर्वस्याप्त्यै । सर्वस्यावरुद्ध्यै । त्रयोदश त्रयोदशारण्यानाकाशेष्वालभते । त्रयोदश मासाः संवत्सरः । सर्वं संवत्सरः । सर्वमश्वमेधः । सर्वस्याप्त्यै । सर्वस्यावरुद्ध्यै ॥ १९ ॥

अथ पुरा बहिष्पवमानात् अश्वं निक्त्वोदानयन्ति । तेन पवमानाय सर्पन्ति । तस्योक्तं ब्राह्मणम् । स्तुते बहिष्पवमानेऽश्वमास्तावमाक्रमयन्ति । स यद्यव वा जिघ्रेत् । वि वा वर्तेत । समृद्धो मे यज्ञ इति ह विद्यात् ; तमुपाकृत्य, अध्वर्युराह । " होतरभिष्टुहि "–इति । तमेकादशभिर्होताऽभिष्टौति ॥ १६ ॥

---

सप्तदशैव पशून् इति कल्पान्तरं पूर्वोपसंहृतम् ॥ १९ ॥

अथ पुरा बहिष्पवमानात् । अथ पुरा तेनानेनाश्वेन सह सर्पंति[1] । स्तुते बहिष्पवमाने[3] उद्गातृभिः अस्[illegible] देव वचनात् " यदुद्गातोद्गायेत् " इत्यत्र च । उद्गातुरपरः अवजिघ्रेत् वा विवर्तेत तत्र लोठेत् । ततः समृ[illegible] यज्ञं विद्यात् ॥ १६ ॥

---

१–" तस्योक्तं ब्राह्मणम् । " ( श. प. १३ । २ । ३ । १–२ । ) २–स्तुवरिन्वा । का. श्रौ. सू. २० । १२० ।

३–अश्वेनाक्रामयंत्यास्तावम् । ( का. श्रौ. सू. २० । १२२ । ) आस्तावो बहिष्पवमानस्तवनप्रदेशः । ऐकादशिनानुपाकृत्या-श्वावीक्ष्य । होतरश्वमभिष्टुहीति प्रेष्यति । ( का. श्रौ. सू २० । १२३ । १२४ ) " तमेकादशभिरिति " अग्रिमकंडिकायां वक्ष्य-माणाभिः " यदक्रंदः प्रथमं जायमानः " इत्याद्याभिः " तव शरीरं पतयिष्णु " ( वा. सं. २९ । १२-२२ । इत्यंताभिः एका-दशभिर्ऋग्भिः । तथा च सर्वानुक्रमण्यां कात्यायनः–" यदक्रंदस्त्रयोदशाश्वस्तुतिस्त्रिष्टुभो भार्गवो जमदग्निर्ददर्श दीर्घतमाश्चेति " । अश्वसूक्ते त्रयोदशर्चेऽपि "उप प्रागाच्छसनम्वाज्यर्वोप प्रागात्परमं यत्सधस्थम्" ( वा. सं. २९ । २३ । २४ ) इत्येते उद्धृत्येति अग्रिमकंडिकोक्तश्रुतेर्द्वयोर्द्वादशीत्रयोदश्योर्ऋचोरश्वसूक्तादुद्धृतयोः सत्योरेकादशभिरेवेत्यर्थः ।

यदक्रन्दः प्रथमं जायमानऽइति । त्रिः प्रथमया त्रिरुत्तमया ताः पञ्चदश सम्पद्यन्ते पञ्चदशो वै वज्रो वीर्यं वज्रो वज्रेणैवैतद्वीर्येण यजमानः पुरस्तात्पाप्मानमपहते तद्वै यजमानायैव वज्रः प्रदीयते योऽस्य स्तृत्यस्तꣳ स्तर्तवऽ उप प्रागाच्छसनं वाज्यर्वोप प्रागात्परमं यत्सधस्थमिति ॥ १७ ॥

(त्ये) एतेऽउद्धृत्य । मा नो मित्रो वरुणोऽअर्यमाऽऽयुरित्येतत्सूक्तमध्रिगावावपति चतुस्त्रिꣳशद्वाजिनो देवबन्धोरित्यु हैकऽएतां वङ्क्रीणाम्पुरस्ताद्दधति नेदनायतने प्रणवन्दधामेत्यथो नेदेकवचनेन बहुवचनम्व्यवायामेति न तथा कुर्य्यात्साद्धमेव सूक्तमावपेदुप प्रागाच्छसनं वाज्यर्वोप प्रागात्परमं यत्सधस्थमिति ॥ १८ ॥

इति तृतीयप्रपाठके तृतीयं ब्राह्मणम् ॥ १३।३।३ ॥ ( ५-१ ) ॥

---

" यदक्रंदः प्रथमं जायमानः "–( वा. सं. २९ । १२ । २२ ) इति त्रिः प्रथमया, त्रिरुत्तमया, ताः पंचदश संपद्यन्ते । पंचदशो वै वज्रः । वीर्यं वज्रः । वज्रेणैवैतद्वीर्येण यजमानः पुरस्तात्पाप्मानमपहते । तद्वै यजमानायैव वज्रः प्रदीयते । योऽस्य स्तृत्यः । तं स्तर्तवे । " उप प्रागाच्छसनं वाज्यर्वा, उप प्रागात्परमं यत्सधस्थम् "–( वा. सं. २९ । २३ । २४ ) इति ॥ १७ ॥

एते उद्धृत्य । "मा नो मित्रो वरुणो अर्यमाऽऽयुः"–( वा. सं. २५ । २४–४० ) इत्येतत्सूक्तमध्रिगावावपति । " चतुस्त्रिंशद्वाजिनो देवबंधोः "–( वा. सं. २९ । ४१ ) इति उ हैके । एतां वंक्रीणां पुरस्ताद्दधति । नेदनायतने प्रणवं दधामेति । अथो नेत् एकवचनेन बहुवचनं

---

तद्वै यजमानायैव । तद्वै इत्यत्र स वै इति लिंगव्यत्ययः । पंचदशो वज्रः यजमानायैव प्रदीयते । किमर्थं ? यः अस्य यजमानस्य स्तृत्यः । "स्तृ हिंसायाम्"–( धा. पा. स्वा. प. ६ ) हिंसनीयः शत्रुः सन् वर्तते । तुमर्थे तवेङ् प्रत्ययः । तं स्तर्तुं स्तरीतुं हंतुमित्यर्थः । " उप प्रागात् " इत्येते उद्धृत्य अश्वसूक्तात् । " यदक्रंदः" इत्येतत् एकादशभिरयं होता अभिष्टौति इति संबंधः ॥ १७ ॥

एते उद्धृत्य । " मा नो मित्रः " इत्येतत्सूक्तं होता वाचयति " अध्रिगो शमीध्वं " इत्येतस्मात् प्राक् । अत्र सूक्ते उच्यमाने " चतुस्त्रिंशद्वाजिनः " इत्येतामृचं स्वस्थानादपनीय वंक्रीणां पुरस्तात् आवपति ।

---

१–सर्वानुक्रमण्यां कात्यायनः–मा नोऽश्वस्तोमीयं दीर्घतमास्त्रैष्टुभं द्वाविꣳशत्यृचमश्वस्तुतिरिति । ( वा० सं० २५।२४–४५ ) अध्रिगो शमीध्वमिति होतुर्वचनम् ।

२–चतुस्त्रिंशद्वाजिनः । ( वा० सं० २५ । ४१ ) मा नो मित्रो वरुण इत्येतत्सूक्तांतर्गतैवर्क् ।

**व्यवायामेति । न तथा कुर्यात् । सार्द्धमेव सूक्तमावपेत् । " उप प्रागाच्छसनं वाज्यर्वा, उप प्रागात्परमं यत्सधस्थम् "–( वा. सं. २९ । २३ । २४ । ) इति ॥ १८ ॥**

---

" षड्विंशतिरस्य वंक्रयस्ता अनुष्ठ्योच्च्यावयतात् " इत्येतस्य वंक्रीवचनस्य पुरस्ताद्दधाति । वंक्रीभिः अत्र तदर्थं वचनं लक्ष्यते । कुतः ? वंक्रीणां पुरस्ताद्देशे पुरस्तात् काले वा ऋचो धातुमशक्यत्वात्केन पुनरभिप्रायेण तामृचं वंक्रीवचनस्य पुरस्तात् दधाति इत्यत आह–तत्रानायतने अस्थाने प्रणवं दधाम इत्यनेनाभिप्रायेण । यदि किल एषा स्वक्रम एव सूक्तांतर्गता पुरस्तात्कृता । ततः प्रणवः अस्या अंते कृतेन प्रणवेनार्द्धर्चशः संदध्यादिति । तस्य च प्रणवस्यानायतनमस्थानमेषा । कुतः ? प्रैषात्मिका ह्येषा । कथं ह्येवं ह्यत्र शमितारः अनुशिष्यंति हि शमितारः । अश्वस्य चतुःस्त्रिंशद्वंक्रीस्वधिविच्छन्दः संप्राप्नोति । न पश्वंतराणां एष तावत् विशंसति । एतद्विदित्वा अच्छिद्रे अखंडे गात्रे पार्श्वे वयुना प्रज्ञया कुरुत । एकैकं पार्श्वं सप्तदशपर्शुकं पूरणीयमिति परुःपरुः पर्व पर्व पशूनामनुघुष्यात् । " घुषिरविशब्दने "–(धा. पा. चु. प. १९३) अनुपूर्वं विशब्दा गणयित्वा विशस्ति । एवं स्वे यथा अन्यानि प्रैषवचनानि प्रणवस्यानायतनम् । एवमेषामपीत्यभिप्रायः । अथो अपि । नेत् एकवचनेन एकस्याश्वस्य वंक्रीवचनं एकवचनम् । चतुस्त्रिंशद्वाजिन इत्येतत् । नैकवचनेन बहूनां पशूनां वंक्रीवचनं बहुवचनं षड्विंशतिः षड्विंशतिरित्येषा बहवस्ता अनुष्ठ्योच्च्यावयतादिति । एतत् तन्मा एतत्रेता (?) वंक्रीः व्यवायाम व्यवहितं विच्छिन्नं करवाम । वंक्रीयताप्रकाशनमेकदेशमयुक्तम् । तथैकमेकदेशं भवति । यदि एषा ऋक् वंक्रीवचनस्य पुरस्ताद्धीयते । तद्विप्रकृतौ कृतदेशमेषा नु ऋगपूर्वा अकृतस्थाना । तस्यास्तत्तद्देशता युक्ता न विपर्यय इत्यभिप्रायः । न तथा कुर्यात् । चतुस्त्रिंशद्वाजिन इत्येतां न सूक्तात् अपनयेत् । न च वंक्रीणां पुरस्ताद्दध्यादित्यर्थः । कथं कुर्यात् । सार्धमेव सूक्तं सकलमेव सूक्तं सह तया ऋचा आवपेत् । आवापस्थाने प्रसिद्धे धीयन्ते इत्यर्थः । अत्र प्रैषरूपा एषा ऋक् आयतनं प्रणवस्येति । ऋक्त्वादायतनं प्रवोकजात (?) इति वचनादभविष्यत् । यदप्युक्तं वंक्रीप्रकाशनं समानदेशयुक्तमिति तदपि वचनात् भिन्नदेशं भविष्यतीति श्रुतेरभिप्रायः । एतच्च " मा नो मित्रः " इति सूक्तं परिसमाप्य " उप प्रागात् " इत्येवैते च तत्रैवाध्रिगावावपेत् ॥ १८ ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये त्रयोदशे काण्डे
पंचमेऽध्याये प्रथमं ब्राह्मणम् ॥ ( १३ । ५ । १ ) ॥

---

१–षड्विंशतिरस्य वंक्रय इति होतुर्वचनम् ॥ आश्वलायनः–तमवस्थितमुपाकरणाय यदक्रंद इत्येकादशभिः स्तौत्यप्रणुवन्ननुस्वाध्यायमित्येकेऽध्रिगो शमीध्वमिति शिष्ट्वा षड्विंशतिरस्य वंक्रय इति वा मा नो मित्र इत्यावपेतोप प्रागाच्छसनं वाज्यर्वेति चेति । आ. श्रौ. सू. उ. ष. ६ । ४ । ८ ।

एते॒ऽउक्त्वा । यद॒ध्रिगोः परि॒शिष्टम्भ॒वति त॒दाह॒ वासो॒ऽधिवास॒ꣳ हिर॒ण्यमित्य॒श्वायो॒पस्तृणन्ति त॒स्मिन्नेनम॒धि सं॒ज्ञपयन्ति सं॒ज्ञप्तेषु प॒शुषु पत्न्यः पान्नेजनै॒रुदा॒यन्ति चत॒स्रश्च जा॒याः कु॒मारी प॒ञ्चमी च॒त्वारि च॒ शता॒न्यनुचरी॒णाम् ॥ १ ॥

(न्ति) नि॒ष्ठितेषु पा॒न्नेजनेषु । म॒हिषीम॒श्वायो॒पनि॒पाद॒यन्त्य॒थैनाव॒धिवा॒सेन सम्प्रो॒र्णुवन्ति स्व॒र्गे लोके प्रो॒र्णुवाथा॒मित्ये॒ष वै स्व॒र्गो लो॒को य॒त्र प॒शुꣳ सं॒ज्ञप॒यन्ति निरायत्या॒श्वस्य शि॒श्नम्म॒हिष्यु॒पस्थे नि॒धत्ते वृ॒षा वा॒जी रे॒तोधा रे॒तो दधात्वि॒ति मिथु॒नस्यै॒व स॒र्वत्वा॒य ॥ २ ॥

त॒योः श॒यानयोः । ( र ) अ॒श्वं य॒जमानो॒ऽभि॒मेथत्यु॒त्सक्थ्या॒ऽ अ॒व गु॒दन्धेही॒ति तन्न कश्च॒न प्र॒त्यभि॒मेथति ने॒द्यजमानं प्रतिप्र॒तिः कश्चि॒द॒सदिति ॥ ३ ॥

---

एते उक्त्वा यदध्रिगोः परिशिष्टं भवति तदाह । वासोऽधिवासं हिरण्यमित्यश्वायोपस्तृणंति । तस्मिन्नेनमधि संज्ञपयन्ति । संज्ञप्तेषु पशुषु पत्न्यः पान्नेजनैरुदायंति । चतस्रश्च जायाः । कुमारी पंचमी । चत्वारि च शतान्यनुचरीणाम् ॥ १ ॥

निष्ठितेषु पान्नेजनेषु । महिषीमश्वायोपनिपादयंति । अथैनावधिवासेन संप्रोर्णुवंति । " स्वर्गे लोके प्रोर्णुवाथाम् "–( वा० सं० २३ । २० ) इति । एष वै स्वर्गो लोकः । यत्र पशुं संज्ञपयंति । निरायत्याश्वस्य शिश्नं महिष्युपस्थे निधत्ते । " वृषा वाजी रेतोधा रेतो दधातु "–( वा० सं० २३ । २० ) इति । मिथुनस्यैव सर्वत्वाय ॥ २ ॥

तयोः शयानयोः अश्वं यजमानोऽभिमेथति । " उत्सक्थ्या अव गुदं धेहि "–( वा. सं. २३ । २१ ) इति । तं न कश्चन प्रत्यभिमेथति । नेद्यजमानं प्रतिप्रतिः कश्चिदसदिति ॥ ३ ॥

---

एते उक्त्वा । " उप प्रागात् " इत्येते उक्त्वा अध्रिगो शमीध्वमित्येतदाह ॥ १ ॥

निरायत्य बहिरायम्याकृष्य अश्वस्य शिश्नं महिषी[३] आत्मनः उपस्थे स्त्रीप्रजनने प्रदेशे स्थापयति ॥ २ ॥ ३ ॥

---

१–क्वचित् " पशुषु महिषीमश्वायोपरि पातयन्ति " इति पाठो दृश्यते । परं नायं बहुसंमतः पाठः । यतो बहुषु पुस्तकेषु मूले स्थापित एव पाठो वरीवर्ति । यतश्च वैदिकैरपि मूले स्थापित एव पाठोऽधीयते । इति ॥

२–सानुचर्यः शतेन शतेन । २० । १ । १२ ।

३–" प्रक्षालितेषु महिष्यश्वमुपसंविशत्याहमजानीति " । " अधिवासेन प्रच्छादयति स्वर्गे लोक इति " । " अश्वशिश्नमुपस्थे करोति वृषा वाजीति " । "उत्सक्थ्या इत्यश्वं यजमानोऽभिमंत्रयते" । का० श्रौ० सू० २० । १५२–१५५ । अत्र सूत्रत्रय्यां ब्राह्मणम् । श. प. १३ । २ । ८ । ४ । ५ ।

( त्यु ) अथाध्वर्युः कुमारीमभिमेथति । कुमारि हयेहये कुमारि यका-ऽसकौ शकुन्तिकेति तङ्कुमारी प्रत्यभिमेथत्यध्वर्यो हयेहयेऽध्वर्यो यको-ऽसकौ शकुन्तकऽइति ॥ ४ ॥

( त्यु ) अथ ब्रह्मा महिषीमभिमेथति । महिषि हयेहये महिषि माता च ते पिता च तेऽग्रम्वृक्षस्य रोहतऽ इति तस्यै शतꣳ राजपुत्र्योऽनु-चर्यो भवन्ति ता ब्रह्माणम्प्रत्यभिमेथन्ति ब्रह्मन्हयेहये ब्रह्मन्माता च ते पिता च तेऽग्रे वृक्षस्य क्रीडतऽइति ॥ ५ ॥

( त्यु ) अथोद्गाता वावातामभिमेथति । वावाते हयेहये वावातऽ ऊर्ध्वामेनामुच्छ्रापयेति तस्यै शतꣳ राजन्याऽअनुचर्यो भवन्ति ताऽ-उद्गातारम्प्रत्यभिमेथन्त्युद्गातर्हयेहयऽउद्गातरूर्ध्वमेनमुच्छ्रयतादिति ॥ ६ ॥

---

अथाध्वर्युः कुमारीमभिमेथति । कुमारि हयेहये कुमारि ! "यकाऽसकौ शकुंतिका"-( वा. सं. २३ । २२ ) इति । तं कुमारी प्रत्यभिमेथति । अध्वर्यो हयेहयेऽध्वर्यो "यको-ऽसकौ शकुंतकः"-( वा. सं. २३ । २३ ) इति ॥ ४ ॥

अथ ब्रह्मा महिषीमभिमेथति । महिषि हयेहये महिषि ! "माता च ते पिता च तेऽग्रं वृक्षस्य रोहतः"-( वा. सं. २३ । २४ ) इति । तस्यै शतं राजपुत्र्योऽनुचर्यो भवंति । ता ब्रह्माणं प्रत्यभिमेथंति । ब्रह्मन् हयेहये ब्रह्मन् ! "माता च ते पिता च तेऽग्रे वृक्षस्य क्रीडतः"-( वा. सं. २३ । २५ ) इति ॥ ५ ॥

अथोद्गाता वावातामभिमेथति । वावाते हयेहये । वाताते ! "ऊर्ध्वामेनामुच्छ्रापय"-( वा. सं. २३ । २६ ) इति । तस्यै शतं राजन्या अनुचर्यो भवंति । ता उद्गातारं प्रत्यभिमे-थंति । उद्गातर्हयेहय उद्गातः ! "ऊर्ध्वमेनमुच्छ्रयतात्"-( वा. सं. २३ । २७ ) इति ॥ ६ ॥

---

हयेहये इति । हयेशब्दस्य अपूज्यामंत्रणार्थस्य कुत्सायां द्विर्वचनम् । मेथति आक्रोशति । मेथति-राक्रोशकर्मा ॥ ४-१९ ॥

---

१-राजदुहितरः प्रथमायाः । का. श्रौ. सू. २० । १३ ।

२-राजन्या द्वितीयायाः । का. श्रौ. सू. २० । १४ ।

३-अध्वर्युब्रह्मोद्गातृहोतृक्षत्तारः कुमारीपत्नीभिः संवदन्ते यकाऽसकाविति दशर्चस्य द्वाभ्यां द्वाभ्यां२ हयेहयेऽसावित्यामंत्र्या-मंत्र्य । सानुचर्यः प्रत्याहुः । अनुचर्य एकेषाम् । का. श्रौ. सू. २० । १५६--१५८ । अत्र ब्राह्मणम् । ( श० प० १३।२।९।१-८ ) तत्र प्रत्यभिमेथने सानुचर्यः प्रत्याहुरिति पक्षः शाखान्तरीयः । तथाहि-"सा होतारं प्रत्यभिमेथत्यनुचर्यश्च शतं राजपुत्र्यः" इति ( आश्व. श्रौ. सू. उ. ष. ६ । ४ । ८ । ) अनुचर्य एकेषामिति पक्षस्तु स्वश्रुतिसमतः "तस्यै शतꣳ राजपुत्र्योऽनुचर्यो भवंति ता ब्रह्माणं प्रत्यभिमेथन्ति" इत्येवंविधस्यैव अत्रैव ब्राह्मणे तत्र तत्र ( ५-६-७-८ ) कंडिकासु दृष्टत्वादिति देवया-ज्ञिकः । कर्कस्तु विकल्प इत्याह ॥

( त्यु ) अथ होता परिवृक्तामभिमेथति । परिवृक्ते हयेहये परिवृक्ते यदस्याऽअँहुभेद्याऽइति तस्यै शतꣳ सूतग्रामण्यां दुहितरोऽनुचर्य्यो भवन्ति ता होतारम्प्रत्यभिमेथन्ति होतर्हयेहये होतर्य्यद्देवासो ललामगुमिति ॥ ७ ॥

( त्यु ) अथ क्षत्ता पालागलीमभिमेथति । पालागलि हयेहये पालागलि यद्धरिणो यवमत्ति न पुष्टं पशु मन्यतऽइति तस्यै शतं क्षात्त्रसङ्ग्रहीतॄणान्दुहितरोऽनुचर्य्यो भवन्ति ताः क्षत्तारम्प्रत्यभिमेथन्ति क्षत्तर्हयेहये क्षत्तर्य्यद्धरिणो यवमत्ति न पुष्टम्बहु मन्यतऽइति ॥ ८ ॥

सर्व्वाप्तिर्व्वाऽएषा व्वाचः । ( चो ) यदभिमेथिकाः सर्व्वै कामाऽअश्वमेधे सर्व्वया व्वाचा सर्व्वान्कामानाप्रवामेत्युत्थापयन्ति महिषीं ततस्ता यथेतम्प्रतिपरायन्त्यथेतरे सुरभिमतीमृचमन्ततोऽन्वाहुर्दधिक्राव्णोऽअकारिषमिति ॥ ९ ॥ अर्द्धः प्रपाठकः ॥ ६३ ॥

( त्यु ) अप वाऽएतेभ्यऽआयुर्देवताः क्रामन्ति । ये यज्ञेऽपूतां व्वाचं व्वदन्ति व्वाचमेवैतत्पुनते देवयज्यायै देवतानामनपक्रमाय या च गोमृगे

---

अथ होता परिवृक्तामभिमेथति । परिवृक्ते हयेहये परिवृक्ते ! " यदस्या अंहुभेद्याः "–( वा. सं. २३ । २८ ) इति । तस्यै शतं सूतग्रामण्यां[1] दुहितरोऽनुचर्यो भवंति । ता होतारं प्रत्यभिमेथंति । होतर्हयेहये होतः ! "यद्देवासो ललामगुम्"–( वा. सं. २३।२९ ) इति ॥७॥

अथ क्षत्ता पालागलीमभिमेथति । पालागलि हयेहये पालागलि ! " यद्धरिणो यवमत्ति न पुष्टं पशु मन्यते "–( वा. सं. । २३ । ३० ) इति । तस्यै शतं क्षात्रसंग्रहीतॄणां[2] दुहितरोऽनुचर्यो भवंति । ताः क्षत्तारं प्रत्यभिमेथंति । क्षत्तर्हयेहये क्षत्तः ! " यद्धरिणो यवमत्ति न पुष्टं बहु मन्यते "–( वा. सं. २३ । ३१ ) इति ॥ ८ ॥

सर्वाप्तिर्वा एषा वाचः । यदभिमेथिकाः । सर्वे कामा अश्वमेधे । सर्वया वाचा सर्वान्कामानाप्नवामेति । उत्थापयंति महिषीम्[3] । ततस्ता यथेतं प्रतिपरायंति । अथेतरे सुरभिमतीमृचमंततोऽन्वाहुः–" दधिक्राव्णो अकारिषम् "–( वा. सं. २३ । ३२ ) इति ॥ ९ ॥

अप वा एतेभ्य आयुर्देवताः क्रामंति । ये यज्ञेऽपूतां वाचं वदंति । वाचमेवैतत्पुनते । देवय-

---

१–सूतग्रामण्यां तृतीयायाः । का. श्रौ. सू. २० । १५ ।

२–क्षात्त्रसंग्रहीतॄणां चतुर्थ्याः । का. श्रौ. सू. २० । १६ ।

३–" महिषीमुत्थाप्य पुरुषा दधिक्राव्ण इत्याहुः " ( का. श्रौ. सू. २० । १५९ ) ( महिष्युत्थापनं पत्न्यनुचरीकर्तृकं पुरुषाः अध्वर्युब्रह्मोद्गात्रादयः । वा. सं. कं. २३–३२ । अत्र ब्राह्मणम् ( श. प. १३ । २ । ९ । ९ । )

व्वपा भुवति या चाजे तूपरे तेऽ अश्वे प्रत्यवधायाहरन्ति नाश्वस्य व्वपाऽस्तीति व्वदन्तो न तथा कुर्य्यादश्वस्यैव प्रत्यक्षम्मेदऽ आहरेत्प्रज्ञाताऽइतराः ॥ १० ॥

शृतासु व्वपासु । स्वाहाकृतिभिश्चरित्वा प्रत्यञ्चः प्रतिपरेत्य सदसि ब्रह्मोद्यम्वदन्ति पूर्व्वया द्वारा प्रपद्य यथाधिष्ण्यम्व्युपविशन्ति ॥ ११ ॥

स होताऽध्वर्य्युम्पृच्छति । कः स्विदेकाकी चरतीति तम्प्रत्याह सूर्य्यऽ एकाकी चरतीति ॥ १२ ॥

( त्यु ) अथाध्वर्य्युर्होतारम्पृच्छति । किꣳ स्वित्सूर्य्यसमञ्ज्योतीरिति तम्प्रत्याह ब्रह्म सूर्य्यसमञ्ज्योतिरिति ॥ १३ ॥

( त्यु ) अथ ब्रह्मोद्गातारम्पृच्छति । पृच्छामि त्वा चितये देवसखेति तम्प्रत्याहापि तेषु त्रिषु पदेष्वस्मीति ॥ १४ ॥

( त्यु ) अथोद्गाता ब्रह्माणम्पृच्छति । केष्वन्तः पुरुषऽआविवेशेति तम्प्रत्याह पञ्चस्वन्तः पुरुषऽ आविवेशेति ॥ १५ ॥

---

ज्यायै । देवतानामनपक्रमाय । या च गोमृगे वपा भवति । या चाजे । तूपरे । ते अश्वे प्रत्यवधायाहरंति । नाश्वस्य वपाऽस्तीति वदंतः । न तथा कुर्यात् । अश्वस्यैव प्रत्यक्षं मेद आहरेत् । प्रज्ञाता इतराः ॥ १० ॥

शृतासु वपासु स्वाहाकृतिभिश्चरित्वा प्रत्यंचः प्रतिपरेत्य सदसि ब्रह्मोद्यं वदंति । पूर्वया द्वारा प्रपद्य यथाधिष्ण्यं व्युपविशंति ॥ ११ ॥

अथ ब्रह्मोद्यम् ।

स होताऽध्वर्युं पृच्छसि–" कः स्विदेकाकी चरति "–( वा. सं. २३ । ४५ ) इति । तं प्रत्याह–" सूर्य एकाकी चरति "–( वा. सं. २३ । ४६ ) इति ॥ १२ ॥

अथाध्वर्युर्होतारं पृच्छति–" किं स्वित्सूर्यसमं ज्योतिः "–( वा. सं. २३ । ४७ ) इति । तं प्रत्याह–" ब्रह्म सूर्यसमं ज्योतिः "–( वा. सं. २३ । ४८ ) इति ॥ १३ ॥

अथ ब्रह्मोद्गातारं पृच्छति–" पृच्छामि त्वा चितये देवसख "–( वा. सं. २३ । ४९ ) इति । तं प्रत्याह–" अपि तेषु त्रिषु पदेष्वस्मि "-( वा. सं. २३ । ५० ) इति ॥ १४ ॥

अथोद्गाता ब्रह्माणं पृच्छति–" केष्वंतः पुरुष आविवेश "-( वा. सं. २३ । ५१ ) इति । तं प्रत्याह–" पंचस्वंतः पुरुष आविवेश "–( वा. सं. २३ । ५२ ) इति ॥ १५ ॥

---

१–"मेदोऽस्योद्धरंति वपार्थे " का० श्रौ० सू० २० । १६६ । मेदो नाम घनीभूतं घृतसदृशमुदरमध्यवर्ति श्वेतं मांसम् ।

२–प्राग्वपाहोमाद्धोताऽध्वर्यू च सदसि संवदेते चतसृभिः कः स्विदेकाकीति पूर्ववत् । का. श्रौ. सू. २० । १६९ । " कः स्विदेकाकी " इत्यारभ्य " इयं वेदिः परो अंतः " इत्यन्तम् । अष्टादशर्चं ब्रह्मोद्यं उक्तिप्रत्युक्तिरूपः परस्परं संवाद इत्यर्थः ॥

३–ब्रह्मोद्गातारौ पृच्छामि त्वेति । का. श्रौ. सू. २० । १७० ।

( त्ये ) एतस्यामुक्तायामुत्थाय । सदसोऽधि प्राञ्चो यजमानमभ्या- यन्त्यग्रेण हविर्द्धानेऽआसीनमेत्य यथायतनम्पर्य्युपविशन्ति ॥ १६ ॥

स होताऽध्वर्य्युम्पृच्छति । का स्विदासीत्पूर्व्वचित्तिरिति तम्प्रत्याह द्यौरासीत्पूर्व्वचित्तिरिति ॥ १७ ॥

( त्यु ) अथाध्वर्य्युर्होतारम्पृच्छति । कऽ ईमरे पिशङ्गिलेति तम्प्र- त्याहाजाऽरे पिशङ्गिलेति ॥ १८ ॥

( त्यु ) अथ ब्रह्मोद्गातारम्पृच्छति । कत्यस्य विष्ठाः कत्यक्षराणीति तम्प्रत्याह षडस्य विष्ठाः शतमक्षराणीति ॥ १९ ॥

( त्यु ) अथोद्गाता ब्रह्माणम्पृच्छति । कोऽअस्य वेद भुवनस्य नाभि- मिति तम्प्रत्याह वेदाहमस्य भुवनस्य नाभिमिति ॥ २० ॥

( त्यु ) अथाध्वर्य्युं यजमानः पृच्छति । पृच्छामि त्वा परमन्तम्पृ- थिव्या ऽइति तम्प्रत्याहेयम्वेदिः परोऽअन्तः पृथिव्याऽइति ॥ २१ ॥

---

एतस्यामुक्तायां उत्थाय सदसो अधि प्रांचो यजमानमभ्यायंति । अग्रेण हविर्द्धाने आसीन- मेत्य, यथायतनं पर्युपविशंति ॥ १६ ॥

स होताऽध्वर्युं पृच्छति–" का स्विदासीत्पूर्वचित्तिः "–( वा. सं. २३ । ५३ ) इति । तं प्रत्याह–" द्यौरासीत्पूर्वचित्तिः "–( वा. सं. २३ । ५४ ) इति ॥ १७ ॥

अथाध्वर्युर्होतारं पृच्छति–" का ईमरे पिशंगिला "–( वा. सं. २३ । ५५ ) इति । तं प्रत्याह–" अजाऽरे पिशंगिला "–( वा. सं. २३ । ५६ ) इति ॥ १८ ॥

अथ ब्रह्मोद्गातारं पृच्छति–" कत्यस्य विष्ठाः कत्यक्षराणि "–( वा. सं. २३ । ५७ ) इति । तं प्रत्याह–" षडस्य विष्ठाः शतमक्षराणि "–( वा. सं. २३ । ५८ ) इति ॥ १९ ॥

अथोद्गाता ब्रह्माणं पृच्छति–" को अस्य वेद भुवनस्य नाभिम् "–( वा. सं. २३।५९ ) इति । तं प्रत्याह–" वेदाहमस्य भुवनस्य नाभिम् "–( वा. सं. २३ । ६० ) इति ॥२०॥

अथाध्वर्युं यजमानः पृच्छति–" पृच्छामि त्वा परमन्तं पृथिव्याः" ( वा. सं. २३।६१ ) इति । तं प्रत्याह–"इयं वेदिः परो अंतः पृथिव्याः"–( वा. सं. २३।६२ ) इति ॥ २१ ॥

---

एतस्यां वाचि उक्त्यां सदस उत्थाय प्रांचः अग्रेण हविर्द्धाने आसीनं यजमानं अभिश्रयन्ति । एत्य च

---

१–पुनः पूर्वापरेणोत्तरवेदिं का स्विदासीदिति । का. श्रौ. सू. २० । १७१ । ( पूर्वौ होत्रध्वर्यू )
२–उत्तरौ च कत्यस्येति । का. श्रौ. सू. २० । १७२ । ( उत्तरौ पश्चादुक्तौ ब्रह्मोद्गातारौ । )
३–"यजमानोऽध्वर्युं पृच्छामि त्वेति " " इयं वेदिरित्यध्वर्युः " ( प्रत्याहेत्यर्थः । ) का. श्रौ. सू. २० । १७३ । १७४ ।

सर्व्वासिर्व्वाऽ एषा व्वाचः । ( चो ) यद्ब्रह्मोद्यᳫ᳭ सर्व्वे कामाऽ अश्वमेधे सर्व्वया व्वाचा सर्व्वान्कामानाप्नवामेति ॥ २२ ॥

( त्वु ) उदिते ब्रह्मोद्ये । प्रपद्याध्वर्युर्हिरण्मयेन पात्रेण प्राजापत्यम्महिमानङ्ग्रहं गृह्णाति तस्य पुरोरुग्घिरण्यगर्भः समवर्त्तताग्रऽइत्यथास्य पुरोऽनुवाक्या सुभूः स्वयम्भूः प्रथमऽइति होता यक्षत्प्रजापतिमिति प्रैषः प्रजापते न त्वदेतान्यन्यऽइति होता यजति व्वषट्कृते जुहोति यस्तेऽहन्त्सम्वत्सरे महिमा सम्बभूवेति नानुवषट्करोति सर्व्वहुतᳫ᳭ हि जुहोति ॥ २३ ॥

इति तृतीयप्रपाठके चतुर्थं ब्राह्मणम् ॥ १३।३।४॥ ( ९–२ ) ॥

---

सर्वासिर्वा एषा वाचः । यत् ब्रह्मोद्यम् । सर्वे कामा अश्वमेधे । सर्वया वाचा । सर्वान् कामानाप्नवामेति ॥ २२ ॥

अथ पूर्वोमहिमग्रहः ।

उदिते ब्रह्मोद्ये । प्रपद्याध्वर्युः । हिरण्मयेन पात्रेण प्राजापत्यं महिमानं ग्रहं गृह्णाति । तस्य पुरोरुक्–" हिरण्यगर्भः समवर्ततताग्रे "–( वा. सं. २३ । १ ) इति । अथास्य पुरोऽनुवाक्या–" सुभूः स्वयंभूः प्रथमः "–( वा. सं. २३ । ६३ ) इति । " होता यक्षत्प्रजापतिम् "–( वा. सं. २३ । ६४ ) इति प्रैषः । " प्रजापते न त्वदेतान्यन्यः "–( वा. सं. २३ । ६५ ) इति होता यजति । वषट्कृते जुहोति–" यस्तेऽहन्संवत्सरे महिमा संबभूव "–( वा. सं. २३ । २ ) इति । नानुवषट्करोति । सर्वहुतं हि जुहोति ॥ २३ ॥

---

यथायतनं यत् यस्यायतनं स तत्रोपविशति । न चात्र देशे पूर्वकल्पितानि आयतनानि संतीति यथार्थमत एव वचनात् कल्पनीयानि ॥ १६–२३ ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये त्रयोदशे काण्डे पञ्चमेऽध्याये द्वितीयं ब्राह्मणम् ॥ १३ । ५ । २ ॥

---

१–" सर्वहुतेन महिम्ना चरति यस्तेऽहन्निति जुहोति " । " अत्र वा ग्रहणम् " । का. श्रौ. सू. २० । १७५ । १७६ । ( वाशब्दो ऽवधारणे ) " महिमानौ गृह्णाति सौवर्णेन पूर्वं हिरण्यगर्भ इति द्वितीयं राजतेन यः प्राणत इति " । ( का. श्रौ. सू. २० । १७७ । ) " सुभूः स्वयंभूः प्रथमः " इति प्रथमस्य महिम्नो ग्रहस्य पुरोऽनुवाक्या । " होता यक्षत्प्रजापतिमिति " । मैत्रावरुणप्रैषः । " प्रजापते न त्वदेतान्यन्यः " इति प्रथमस्य महिम्नो ग्रहस्य याज्या । आश्वलायनस्तु–"तवेमे लोकाः प्रदिशो दिशश्चेति याज्या " । आ. श्रौ. सू. उ. ष. ६ । ४ । ९ । इत्याह ॥

अथातो व्वपानाᳬं होमः । (मो) नानैव चरेयुरा व्वैश्वदेवस्य व्वपायै व्वैश्वदेवस्य व्वपायाᳬं हुतायां तदन्वितरा जुहुयुरिति ह स्माह सत्यकामो जाबालो व्विश्वे वै सर्व्वे देवास्तदेतान्यथादेवतम्प्रीणातीति ॥ १ ॥

(त्यै) ऐन्द्राग्नस्य व्वपायाᳬं हुतायाम् । (न्त) तदन्वितरा जुहुयुरिति ह स्माहतुः सौमापौ मानुतन्तव्याविन्द्राग्नी वै सर्व्वे देवास्तदेवैनान्यथादेवतम्प्रीणातीति ॥ २ ॥

कायस्य व्वपायाᳬं हुतायाम् । ( न्त ) तदन्वितरा जुहुयुरिति ह स्माह शैलालिः प्रजापतिर्व्वै कः प्रजापतिमु वाऽअनु सर्व्वे देवास्तदेवैनान्यथादेवतम्प्रीणातीति ॥ ३ ॥

---

## अथ वपाप्रचरणम् ।

अथातो वपानां होमः । नानैव चरेयुः आ वैश्वदेवस्य वपायै। वैश्वदेवस्य वपायां हुतायाम् । तदनु इतरा जुहुयुः; इति ह स्माह सत्यकामो जाबालः । विश्वे वै सर्वे देवाः । तदेतान् यथादेवतं प्रीणातीति ॥ १ ॥

ऐन्द्राग्नस्य वपायां हुतायाम् । तदनु इतरा जुहुयुः; इति ह स्माहतुः सौमापौ मानुतंतव्यौ। इन्द्राग्नी वै सर्वे देवाः । तदेवैनान् यथादेवतं प्रीणातीति ॥ २ ॥

कायस्य वपायां हुतायाम् । तदनु इतरा जुहुयुः; इति ह स्माह शैलालिः । प्रजापतिर्वै कः । प्रजापतिं उ वा अनु सर्वे देवाः । तदेवैनान् यथादेवतं प्रीणातीति ॥ ३ ॥

---

अथातो वपानामिति—आ वैश्वदेवस्य वपाया इत्यत्र "बहुरूपा वैश्वदेवाः" इत्येषः (श. प. १३ । २ । ९ । ४ ॥ १३ । ३ । २ । ७) वैश्वदेवोऽवधिः "न शिल्पा वैश्वदेव्यः"—( वा. सं. २४ । ९ ) इति । कुतः? पुंल्लिंगनिर्देशात् कायैन्द्राग्नसाहचर्यात्, अतो हि चातुर्मास्यदेवतापशुसाहचर्यात्, एषोऽपि चातुर्मास्यदेवतापशुरेवेति गम्यते ॥ १ ॥

सौमापौ । सोमापस्य अपत्ये सौमापौ। मनुतंतोरपत्ये मानुतंतव्यौ। इंद्राग्न्योर्विश्वेषां देवानां कस्य च सर्वदेवतात्मकत्वात् तेभ्यो हुता वपा यथादेवतमेव हुता भवतीत्यभिप्रायः । पूर्वम् "एकविंशतिधा कृत्वा

---

१-वपाभिश्चरति । का. श्रौ. सू. २० । १७७ । प्रथमं एकादशिन्योः पशूनां वपाभिः । ततः अश्वतूपरगोमृगानां वपाभिस्तंत्रेण । ततः क्रमेण पृथक् पृथक् "कृष्णग्रीव आग्नेयो रराटे" इत्यादीनां "श्वेताः सौर्याः" इत्यंतानां वपाभिः । तत्रापि समानदेवत्यानां तिसृणां तिसृणां वपानां प्रचारस्तंत्रेण । अयं प्रकारः "नानैव चरेयुरिति" अग्रिमपंचमकंडिकानुसारी बोध्यः। अयमेको वपाप्रचारपक्षः ॥ ऐंद्राग्नवैश्वदेवकायानेके । ( का. श्रौ. सू. २० । १८२ ।) ऐंद्राग्नो वारुणप्रघासिकः । वैश्वदेवो वैश्वदेवपर्वसंबंधी । कायश्च वारुणप्रघासिकः । अयमभिप्रायः–आदित आरभ्य वारुणप्रघासिकैन्द्राग्नपर्यंतं क्रमेण पृथक् पृथक् वपाप्रचारं कृत्वा ऐंद्राग्नस्य वपायां हुतायां अवशिष्टाः सर्वा वपाः अनुहोतव्याः । अयं द्वितीयो वपाप्रचारपक्षः । एवं वैश्वदेवकाययोः। इमौ तृतीयचतुर्थौ वपाप्रचारपक्षौ ॥ एकविंशतिप्रदानानेकेऽन्वक् चातुर्मास्यदेवताः पित्र्यत्रैयंबकपुनरुक्तवर्जम् । का. श्रौ. सू. २० । ८१ । अयं पंचमो वपाप्रचारपक्षः ।

( त्यु ) एकविꣳशतिश्चातुर्मास्यदेवता ऽअनुद्रुत्य । ( त्यै ) एकविꣳशतिधा कृत्वा प्रचरेयुरिति ह स्माह भाल्लवेयऽएतावन्तो वै सर्व्वे देवा यावत्यश्चातुर्म्मास्यदेवतास्तदेवैनान्यथादेवतम्प्रीणातीति ॥ ४ ॥

नानैव चरेयुः । ( रि ) इतीन्द्रोतः शौनकः किमुत त्वरेरंस्तदेवैनान्यथादेवतम्प्रीणातीत्येतदह तेषाम्वचोऽन्या त्वेवात स्थितिः ॥ ५ ॥

( रु ) अथ होवाच याज्ञवल्क्यः । सकृदेव प्राजापत्याभिः प्रचरेयुः सकृद्देवदेवत्याभिस्तदेवैनान्यथादेवतम्प्रीणात्यञ्जसा यज्ञस्य सꣳस्थामुपैति न ह्वलतीति ॥ ६ ॥

---

एकविंशतिं चातुर्मास्यदेवता अनुद्रुत्य, एकविंशतिधा कृत्वा प्रचरेयुः; इति ह स्माह भाल्लवेयः । एतावंतो वै सर्वे देवाः । यावत्यश्चातुर्मास्यदेवताः । तदेवैनान् यथादेवतं प्रीणातीति ॥ ४ ॥

नानैव चरेयुः; इतींद्रोतः शौनकः । किमुत त्वरेरन् । तदेवैनान् यथादेवतं प्रीणातीति । एतदह तेषां वचः । अन्या त्वेवातः स्थितिः ॥ ५ ॥

अथ होवाच याज्ञवल्क्यः । सकृदेव प्राजापत्याभिः प्रचरेयुः । सकृदेवदेवत्याभिः । तदेवैनान्यथादेवतं प्रीणाति । अंजसा यज्ञस्य संस्थामुपैति । न ह्वलतीति ॥ ६ ॥

---

प्रचरेयुः" इति ( ४ कं. ) प्रचरणवचनात् यागत्वं प्रतीयते । इह तु "तदन्वितरा जुहुयुः"—इति (२ कं.) होमत्वमिति भेदः ॥ २ ॥ ३ ॥

एकविंशतिं चातुर्मास्यदेवताः । पित्र्यत्रैयंबकपुनरुक्तवर्जिताः । कुत एतत् ? पितॄणामदेवत्वात् । त्र्यंबकस्याप्रधानदेवतात्वात् । पुनरुक्तानामनन्यदेवतात्वात् । "अनुद्रुत्य" अनुपूर्वमनुदिश्य । एकविंशतिधा कृत्वा एकविंशतिं च वपाराशीः कृत्वा । एकैकं राशिं एकैकां चातुर्मास्यदेवतां संकीर्त्य जुहुयात् । तद्यथा—सर्वमेव वपानामेकविंशतिभागम् अग्निदेवत्याग्नेययाज्याया अंते जुहुयात् । अपरं एकविंशतितमं भागं सोमोद्देशेनेत्येवं सर्वेषां राशीनां ज्ञेयम् ॥ ४ ॥

नाना पृथक्पृथक् यथाप्राप्तमेव चरेयुः । किं कारणम् ? येन त्वरमाणाः संकल्पनमयथा कुर्युः । प्रकृतिवैलक्षण्यं चेति । एवमेव हि अनुप्रचरितया वृत्या यथादेवतं द्रव्यदेवतोच्चारणेन देवताः प्रीणातीति । इतरथा उपचारेणेत्यभिप्रायः ॥ ५ ॥

अथ होवाच याज्ञवल्क्यः । यावत्यः प्राजापत्याः ताभिः । सकृदेव सह प्रचरेयुः । सकृदेव सहाग्न्यादि-

---

१—देवता तंत्रेण तु । ( का. श्रौ. सू. २० । १८३ ) विश्वेभ्यो देवेभ्य इत्येवं सर्वासां देवतानां तंत्रेणोच्चारणं कृत्वा सर्ववपानां सकृदेव प्रचारः सहैव कर्तव्यः । अयं षष्ठः सर्ववपानां सह प्रचारपक्षः । अयं षष्ठः पक्षः पक्षांतरेभ्यो विशिष्टः स्वश्रुतिसंमतश्चेति तुना बोध्यते । अस्मिन्नपि पक्षे एकादशिन्योः पशूनां कृष्णग्रीवादिभिः सह एकतन्त्रेण प्रचारो न भवति । तत्कारणमाह कात्यायनः—न कालभेदात् । ( का. श्रौ. सू. २० । १८४ ) कालभेदश्च अश्वादिदेवतांतरव्यवधानरूपः । अत एकादशिन्योर्वपानां प्रथमं पृथक् पृथक् प्रचारः । तेषामपि मध्ये द्वयोर्द्वयोरेकदेवत्ययोस्तंत्रेण प्रचारः । ततोऽश्वतूपरगोमृगाणां, ततः कृष्णग्रीवादीनां सर्वेषां तन्त्रेण ।

हुतासु व्वपासु । प्रपद्याध्वर्य्यू रजतेन पात्रेण प्राजापत्यम्महिमानमुत्तरङ्ग्रहङ्गृह्णाति तस्य पुरोरुग्यः प्राणतो निमिषतो महित्वेति व्विपर्य्यस्ते याज्याऽनुवाक्येऽअयातयामतायाऽएषऽएव प्रैषो व्वषट्कृते जुहोति यस्ते रात्रौ सम्वत्सरे महिमा सम्बभूवेति नानुवषट्करोति तस्योक्तम्ब्राह्मणम् ॥ ७ ॥

(ब्रा) नान्येषाम्पशूनान्तेदन्याऽअवद्यन्ति । (न्त्य) अवद्यन्त्यश्वस्य दक्षि-

---

हुतासु वपासु प्रपद्याध्वर्युः रजतेन पात्रेण प्राजापत्यं महिमानमुत्तरं ग्रहं गृह्णाति । तस्य पुरोरुक्–"यः प्राणतो निमिषतो महित्वा"–( वा. सं. २३ । ३ ) इति । विपर्यस्ते याज्याऽनुवाक्ये । अयातयामतायै । एष एव प्रैषः । वषट्कृते जुहोति–"यस्ते रात्रौ संवत्सरे महिमा संबभूव"–( वा. सं. २३ । ४ ) इति । नानुवषट्करोति । तस्योक्तं ब्राह्मणम् ॥ ७ ॥

नान्येषां पशूनां तेदन्या अवद्यंति । अवद्यंत्यश्वस्य । दक्षिणतोऽन्येषां पशूनामवद्यंति । उत्तरतोऽश्वस्य । प्लक्षशाखास्वन्येषां पशूनामवद्यंति । वेतसशाखास्वश्वस्य ॥ ८ ॥

---

देवताभिः, तदेव तेनैव एनान् देवान्, यथादेवतं प्रीणाति देवग्रहणेन हि ते सर्वेऽप्यग्न्यादयः, शक्यंते ग्रहीतुमित्यर्थः । अंजसा ऋजुमार्गेण सवनकालमनतिक्रमेण यज्ञस्य समाप्तिं प्राप्नोति । न ह्वलति न चलति, कर्म कालात् । इति ब्रुवन्, हृदयाद्यंगानां प्रचारमपि एवमेव दर्शयति । तथाच प्रागुक्तम्–"प्राजापत्य एवाश्वो देवदेवत्या इतरे" इति ॥ ६ ॥

**अथोत्तरो महिमग्रहः ।**

हुतासु वपासु । रजतेन पात्रेण प्राजापत्यं महिमानमुत्तरं ग्रहं गृह्णाति । एतावत् अनुविधीयते अन्यत्तु लिंगादिभिरपि प्राप्तमनूद्यते । विपर्यस्ते याज्याऽनुवाक्ये । इत्येतदपि विधीयते[1] ॥ ७ ॥

तेदन्या तेदनी लोहितं तस्यास्तेदन्याः एकदेशमवद्यन्ति[2] । अश्वस्येति विधिः इतरे[3] अनुवादाः ॥ ८ ॥

---

१–व्वपांते द्वितीयेन पूर्ववद्यस्ते रात्राविति जुहोति । ( का. श्रौ. सू. २० । १८५ ) द्वितीयेन राजतेन महिम्ना ग्रहेण । पूर्ववदिति सर्वहुतेन अत्र वा ग्रहणमित्याद्यतिदिश्यते । यस्ते रात्राविति राजतेन "यः प्राणतः" इति पुरोरुक् । विपर्यस्ते याज्याऽनुवाक्ये प्रथमस्य महिम्नो या याज्या "प्रजापते न त्वदेतान्यन्यः" इति । सा द्वितीयस्य महिम्नः पुरोऽनुवाक्या । या प्रथमस्य पुरोऽनुवाक्या "सुभूः स्वयंभूः प्रथमम्" इति । सा द्वितीयस्य याज्येत्यर्थः । प्रैषस्तु प्रथममहिम्नः संबंधी "होता यक्षत्प्रजापतिमिति" तस्योक्त ब्राह्मणम् ( श. प. १३।२।११।१–३ ) आश्वलायनस्तु उभयोर्महिम्नोर्याज्याऽनुवाक्ये प्रैषं च समानमाह । महिम्ना पुरस्तादुपरिष्टाच्च वपानां चरंति सुभूः स्वयंभूः प्रथममंतर्महत्यर्णवे ॥ दधे ह गर्भमृत्वियं यतो जातः प्रजापतिः ॥ होता यक्षत्प्रजापतिं महिम्नो जुषतां वेतु पिबतु सोमं होतर्यजेति प्रैषस्तवेमे लोकाः प्रदिशो दिशश्चेति याज्या । आश्व. श्रौ. सू. उ. ष. ६ । ४ । ९ ।

२–"सर्पणप्रभृत्या पश्वासादनात्कृत्वा लोहितमवद्यति गोमृगकंठाश्वशफयोरयस्मये चरौ" ( का. श्रौ. सू. २० । १८८ । ) इति । अश्वस्येति शेषः । गोमृगो गवयः । अयस्मये चरौ आयसे पात्रे । "गोमृगकंठेन प्रथमामाहुतिं जुहोति" "अश्वशफेन द्वितीयामाहुतिं जुहोति" "अयस्मयेन चरुणा तृतीयामाहुतिं जुहोति" ( श. प. । १३ । ३ । ४ । ३ । ४ । ५ ) इति श्रुत्या एभिः पात्रैर्होमविधानात् । एतेषु तेदन्या अवदानग्रहणम् ।

३–"वेतसशाखासु प्राजापत्यानाम्" । "अश्वस्य वा" । ( का. श्रौ. सू. २० । १८९ । १९० ) वाशब्दोऽवधारणे । वेतसशाखा वेतसकटः ॥

णतोऽन्येषाम्पशूनामवद्यन्त्युत्तरतोऽश्वस्य प्लक्षशाखास्वन्येषाम्पशूनाम-वद्यन्ति वेतसशाखास्वश्वस्य ॥ ८ ॥

तदु होवाच सात्ययज्ञिः । ( रि ) इतरथैव कुर्युः पथऽएव नापोदित्य-मिति पूर्वा त्वेव स्थितिरुक्थ्यो यज्ञस्तेनान्तरिक्षलोकमृध्नोति सर्व-स्तोमोऽतिरात्रऽउत्तममहर्भवति सर्वम्वै सर्वस्तोमोऽतिरात्रः सर्व-मश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै ॥ ९ ॥

तस्य त्रिवृद्बहिष्पवमानम् । ( म्प ) पञ्चदशान्याज्यानि सप्तदशो माध्य-न्दिनः पवमानऽएकविंशानि पृष्ठानि त्रिणवस्तृतीयः पवमानस्त्रयस्त्रिंश-मग्निष्टोमसामैकविंशान्युक्थान्येकविंशः षोडशी पञ्चदशी रात्रि-स्त्रिवृत्सन्धिर्यद्द्वितीयस्याह्नः पृष्ठ्यस्य षडहस्य तच्छस्त्रमतिरात्रो यज्ञस्ते-नामुं लोकमृध्नोति ॥ १० ॥

( त्ये ) एकविंशतिः सवनीयाः पशवः । सर्वऽआग्नेयास्तेषाᳪं

---

तदु होवाच सात्ययज्ञिः । इतरथैव कुर्युः । पथ एव नापोदित्यमिति । पूर्वा त्वेव स्थितिः । उक्थ्यो यज्ञः । तेनांतरिक्षलोकमृध्नोति । सर्वस्तोमोऽतिरात्र उत्तममहर्भवति । सर्वं वै सर्वस्तोमोऽति-रात्रः । सर्वमश्वमेधः । सर्वस्याप्त्यै । सर्वस्यावरुद्ध्यै ॥ ९ ॥

तस्य त्रिवृद्बहिष्पवमानम् । पंचदशान्याज्यानि । सप्तदशो माध्यंदिनः पवमानः । एकविंशानि पृष्ठानि । त्रिणवस्तृतीयः पवमानः । त्रयस्त्रिंशमग्निष्टोमसाम । एकविंशान्युक्थानि । एकविंशः षोडशी । पंचदशी रात्रिः । त्रिवृत्संधिः । यत् द्वितीयस्याह्नः पृष्ठ्यस्य षडहस्य तच्छस्त्रम् । अति-रात्रो यज्ञः । तेनामुं लोकमृध्नोति ॥ १० ॥

एकविंशतिः सवनीयाः पशवः । सर्वे आग्नेयाः । तेषां समानं कर्म । इति उ हैक आहुः । चतुर्विं-

---

कल्पान्तरोपन्यासः । तदु होवाच सात्ययज्ञिः । इतरथा यथा अन्येषां पशूनां तथा कुर्युः । पश्चंतरकर्म-मार्गादेव प्रसिद्धात् । ' अपोदित्यमिति ' अप उत् इत्यम् इति । उत्कर्षेण अपक्रमितव्यम् । इण् । " एतिस्तुशा-स्वृदृजुषः क्यप् "–(पा. सू. ३ । १ । १०९ ) " ह्रस्वस्य पिति कृति तुक् "–( पा. सू. ६ । १ । ७१ ) इति इत्यम् । एवं च न एतव्यम् । पूर्वा त्वेव स्थितिः । पूर्वा तु स्थितिरेव सात्ययज्ञिमतम् । ततश्च आदेयमेव लोहितस्येति । उत्तरतश्च वेतसशाखास्विति कुर्युः । उक्थ्यो यज्ञः । इत्येतदेकविंशं मध्यममहरुपन्यस्तम् । तदु-क्थ्यसंस्थं भवतीत्यर्थः । तेन मध्यमेन अह्ना अंतरिक्षलोकमृध्नोति ॥ ९ ॥ १० ॥

चतुर्विंशतिं त्वेवैतान् गव्यानालभेत । एतान् " आग्नेयः कृष्णग्रीवः " इत्यादीन् द्वाविंशतिं च द्वौ च

---

१. प्रातरुक्थ्यः । का. श्रौ. सू. २० । ११६ ।

समानं कर्मेत्यु हैकऽआहुश्चतुर्व्विᳪंशतिन्त्वेवैतान्गव्यानालभेत द्वादशुभ्यो देवताभ्यो द्वादश मासाः संवत्सरः सर्व्वᳪं संवत्सरः सर्व्वमश्वमेधः सर्व्वस्याप्त्यै सर्व्वस्यावरुद्ध्यै ॥ ११ ॥

इति तृतीयप्रपाठके पञ्चमं ब्राह्मणम् ॥ १३।३।५ ॥ (५-३।)

एतेन हेन्द्रोतो दैवापः शौनकः । (को) जनमेजयम्पारिक्षितं याजयाञ्चकार तेनेष्ट्वा सर्व्वाम्पापकृत्याᳪं सर्व्वाम्ब्रह्महत्यामपजघान सर्व्वाᳪं ह वै पापकृत्याᳪं सर्व्वाम्ब्रह्महत्यामपहन्ति योऽश्वमेधेन यजते ॥ १ ॥

तदेतद्गाथयाऽभिगीतम् । (मा) आसन्दीवति धान्यादᳪं रुक्मिणᳪं हरितस्रजम् । आबध्नादश्वᳪं सारङ्गन्देवेभ्यो जनमेजयऽइति ॥ २ ॥

(त्ये) एतेऽएव पूर्व्वेऽअहनी । ज्योतिरतिरात्रस्तेन भीमसेनमेते

---

शतिं त्वेवैतान् गव्यानालभेत द्वादशभ्यो देवताभ्यः। द्वादश मासाः संवत्सरः। सर्वं संवत्सरः। सर्वमश्वमेधः। सर्वस्याप्त्यै। सर्वस्यावरुद्ध्यै॥ ११ ॥

एतेन ह इन्द्रोतो दैवापः शौनको जनमेजयं पारिक्षितं याजयांचकार। तेनेष्ट्वा सर्वां पापकृत्यां सर्वां ब्रह्महत्यामपजघान। सर्वां ह वै पापकृत्यां सर्वां ब्रह्महत्यामपहंति। योऽश्वमेधेन यजते ॥ १ ॥

तदेतत् गाथयाऽभिगीतम्–" आसंदीवति धान्यादं रुक्मिणं हरितस्रजम्। आबध्नादश्वं सारङ्गं देवेभ्यो जनमेजयः "–इति ॥ २ ॥

एते एव पूर्वे अहनी। ज्योतिरतिरात्रः। तेन भीमसेनम् । एते एव पूर्वे अहनी। गौरतिरात्रः।

---

प्राजापत्यौ इति श्रुत्यन्तरात् गव्यान् गोमयात्मकानालभते द्वादशभ्यो देवताभ्यः। एकादशिनी देवता एकादश द्वादशी प्रजापतिः इत्येताभ्यः ॥ ११ ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये त्रयोदशे काण्डे पंचमेऽध्याये तृतीयं ब्राह्मणम् ॥ १३। ५। ३ ॥

एतेन हेन्द्रोतः। इंद्रोतो नाम देवापेरपत्यं दैवापः। शुनकस्य गोत्रापत्यं शौनकः। याजितवान् ॥ १ ॥

तदेतद्गाथयाऽभिगीतम्–आसंदीवति नगरे। धान्यादं धान्याशनम्। बलिनम्। रुक्मिणं रुक्मललाटम्। हरितस्रजं सुवर्णमालिनम्। आबध्नात् बद्धवान्। अश्वं जनमेजयः ॥ २ ॥

एते एव पूर्वे। अत आरभ्य तृतीयदिवसस्य इदानीं कल्पान्तराण्युच्यंते। एते भीमसेनादयः पारिक्षितीयाः

---

१–अतिरात्र उत्तमः। सर्वस्तोमो ज्योतिर्गौरायुरभिजिद्विश्वजिन्महाव्रतमप्तोर्यामो वा। का. श्रौ. सू. २०। १९९। २००। (उत्तमस्तृतीयमहरतिरात्रसंस्थं भवतीत्यर्थः, अतिरात्रसंस्थस्य तृतीयस्याह्न अष्टौ विकल्पा इत्यर्थश्च।)

ऽएव पूर्व्वेऽअहनी गौरतिरात्रस्तेनोग्ग्रसेनमेते ऽएव पूर्व्वेऽअहनी ऽआयुरतिरात्रस्तेन श्रुतसेनमित्येते पारिक्षितीयास्तदेतद्गाथयाऽभिगीतम्पारिक्षिता यजमानाऽअश्वमेधैः परोऽवरम् । अजहुः कर्म्म पापकम्पुण्याः पुण्येन कर्मणेति ॥ ३ ॥

(त्ये)एतेऽएव पूर्व्वेऽअहनी । (नीऽअ) अभिजिदतिरात्रस्तेन ह परऽआह्लारऽईजे कौसल्यो राजा तदेतद्गाथयाऽभिगीतमह्लारस्य परः पुत्रोऽश्वम्मेध्यमबन्धयत् । हैरण्यनाभः कौसल्यो दिशः पूर्णाऽअमँहतेति ॥ ४ ॥

( त्ये ) एतेऽएव पूर्व्वेऽअहनी । विश्वजिदतिरात्रस्तेन ह पुरुकुत्सो दौर्ग्गहेणेजऽऐक्ष्वाको राजा तस्मादेतदृषिणाऽभ्यनूक्तमस्माकमत्र पितरस्तऽआसन्त्सप्तऽऋषयो दौर्ग्गहे बध्यमानऽइति ॥ ५ ॥

---

तेनोग्रसेनम् । एते एव पूर्वे अहनी । आयुरतिरात्रः । तेन श्रुतसेनम् । इत्येते पारिक्षितीयाः । तदेतद्गाथयाऽभिगीतम्-" पारिक्षिता यजमाना अश्वमेधैः परोऽवरम् । अजहुः कर्म पापकं पुण्याः पुण्येन कर्मणा "-इति ॥ ३ ॥

एते एव पूर्वे अहनी । अभिजिदतिरात्रः । तेन ह पर आह्लार ईजे कौसल्यो राजा । तदेतद्गाथयाऽभिगीतम्-" अह्लारस्य परः पुत्रोऽश्वं मेध्यमबंधयत् । हैरण्यनाभः कौसल्यो दिशः पूर्णा अमंहत "-इति ॥ ४ ॥

एते एव पूर्वे अहनी । विश्वजिदतिरात्रः । तेन ह पुरुकुत्सो दौर्ग्रहेणेज ऐक्ष्वाको राजा । तस्मादेतदृषिणाऽभ्यनूक्तम्-" अस्माकमत्र पितरस्त आसन् सप्त ऋषयो दौर्ग्रहे बध्यमाने "-इति ॥ ५ ॥

---

परिक्षितस्येमे भ्रातरः पारिक्षितीयाः । अश्वमेधविशेषा इत्यपरे । परोऽवरम् । परे परे ततः अवरेऽवरे इत्येतस्मिन्नर्थे अव्ययीभावसमासत्वमित्यर्थः । सततं यजमानाः पुण्याः भवंतः कर्म पापकम् अजहुः त्यक्तवंतः ॥ ३ ॥

परो नामतः अह्लारपुत्रः कौसल्यो गोत्रतः । हिरण्यनाभस्यापत्यं अबंधयत् । दिशः पूर्णाः ऋत्विजि योजितवान् । दिशो वित्तस्य पूर्णाः अमंहत मंहतिर्दानकर्मा ऋत्विग्भ्यो दत्तवानित्यर्थः ॥ ४ ॥

तेन क्रतुना । पुरुकुत्सः इक्ष्वाकोरपत्यं ऐक्ष्वाकः दौर्ग्रहो नामतः दौर्ग्रहेणाश्वेन संहतेन क्रतुना ईजे । अश्वमेधेन ईजे इत्यर्थः । तस्मादेतदृषिणा मनुदृशा अभिनययुक्तसुक्तम् । ये अस्माकं पितरः पूर्वजाः गोतमादयः अत्र स्थाने आसन् । दौर्ग्रहे अश्वे बध्यमाने पुरुकुत्सेन ते आयजंत । त्रसदस्युं अस्या इन्द्रं न वृत्रतुरमर्धदेवं ते सप्तर्षय आयजंत आभिमुख्येन याजितवंतः । कं त्रसदस्युं नाम राजानम् । कीदृशं अस्याः पृथिव्या अर्धदेवम् । पूर्वदेवतामागानां देवं ईश्वरं वृत्रस्य पाप्मनः हंतारं इंद्रं न इंद्रमिव वृत्रतुरं अयाजयन् ॥ ५ ॥

---

१-अत्र उत्तरार्धं न दृश्यते । भाष्ये अर्थानैक्यवर्णनं दृश्यते अतश्च विचारणीयमिदम् ।

(त्ये) एतेऽ एव पूर्व्वेऽ अहनी । महाव्रतमतिरात्रस्तेन ह मरुत्तऽ आविक्षितऽ ईजऽआयोगवो राजा तस्य ह ततो मरुतः परिवेष्टारोऽग्निः क्षत्ता विश्वे देवाः सभासदो बभूवुस्तदेतद्गाथयाऽभिगीतम्मरुतः परिवेष्टारो मरुत्तस्यावसन्गृहे । आविक्षितस्याग्निः क्षत्ता विश्वे देवाः सभासदऽ इति मरुतो ह वै तस्य परिवेष्टारोऽग्निः क्षत्ता विश्वे देवाः सभासदो भवन्ति योऽश्वमेधेन यजते ॥ ६ ॥

(तऽए) एतेऽएव पूर्व्वेऽअहनी । (नीऽ अ) अप्तोर्य्यामोऽतिरात्रस्तेन हैतेन क्रैव्यऽईजे पाञ्चालो राजा क्रिवयऽइति ह वै पुरा पञ्चालानाचक्षते तदेतद्गाथयाऽभिगीतमश्वम्मेध्यमालभते क्रिवीणामतिपूरुषः । पाञ्चालः परिवक्रायाᳫं सहस्रशतदक्षिणमिति ॥ ७ ॥

(त्य) अथ द्वितीयया । सहस्रमासन्नयुता शता च पञ्चविᳫंशतिः । दिक्तो दिक्तः पञ्चालानाम्ब्राह्मणा या विभेजिरऽ इति ॥ ८ ॥

---

एते एव पूर्वे अहनी । महाव्रतमतिरात्रः । तेन ह मरुत्त आविक्षित ईज आयोगवो राजा । तस्य ह ततो मरुतः परिवेष्टारोऽग्निः क्षत्ता विश्वे देवाः सभासदो बभूवुः । तदेतद्गाथयाऽभिगीतम्— "मरुतः परिवेष्टारो मरुत्तस्यावसन् गृहे । आविक्षितस्याग्निः क्षत्ता विश्वे देवाः सभासदः"—इति । मरुतो ह वै तस्य परिवेष्टारोऽग्निः क्षत्ता विश्वे देवाः सभासदो भवन्ति । योऽश्वमेधेन यजते ॥ ६ ॥

एते एव पूर्वे अहनी । अप्तोर्यामोऽतिरात्रः । तेन हैतेन क्रैव्य ईजे पांचालो राजा । क्रिवय इति ह वै पुरा पंचालानाचक्षते । तदेतद्गाथयाऽभिगीतम्—"अश्वं मेध्यमालभते क्रिवीणामतिपूरुषः । पांचालः परिवक्रायां सहस्रशतदक्षिणम्"—इति ॥ ७ ॥

अथ द्वितीयया—"सहस्रमासन्नयुता शता च पंचविंशतिः । दिक्तो दिक्तः पंचालानां ब्राह्मणा या विभेजिरे"—इति ॥ ८ ॥

---

मरुत्तः मरुत्तो नाम राजा अविक्षितस्यापत्यं आविक्षितः । आयोगवो भोजयितारः । अग्निः क्षत्ता । सन्निधाता कोशाध्यक्षः । अवसन् उषिताः गृहे ॥ ६ ॥

परिवक्रायां नगर्याम् ॥ ७ ॥

सहस्रमयुतानि गवां कोटीरित्यर्थः । शतानि पंचविंशतिर्गृहाणां एकैकस्याः दिशः आहृता ब्राह्मणा ऋत्विजः । यानि अयुतानि शतानि शतानि विभक्तवंतः स्वैः स्वैः पुरुषैः सह ॥ ८ ॥

त्रिवृदग्निष्टोमुः पञ्चदश ऽउक्थ्यः सप्तदशन्तृतीयमुहः सोक्थकमे-कविᳪंशः षोडशी पञ्चदशी रात्रिस्त्रिवृत्सन्धिरित्येषोऽनुष्टुप्सम्पन्नस्तेन हैतेन ध्वसा द्वैतवन ऽईजे मात्स्यो राजा यत्रैतद्द्वैतवनᳪं सरस्तदेत-द्गाथयाऽभिगीतञ्चतुर्दश द्वैतवनो राजा सङ्ग्रामजिद्धयान् । इन्द्राय वृत्र-घ्नेऽबध्नात्तस्माद्द्वैतवनᳪं सर ऽइति ॥ ९ ॥

चतुर्विᳪंशाः पवमानाः । (त्रि) त्रिवृदभ्यावर्त्तश्चतुश्चत्वारिᳪंशाः पवमानाऽएकविᳪंशमभ्यावर्त्तमष्टाचत्वारिᳪंशाः पवमानास्त्रयस्त्रिᳪंश-मभ्यावर्त्तमाऽग्निष्टोमसामाद्द्वात्रिᳪंशान्युक्थान्येकविᳪंशः षोडशी पञ्च-दशी रात्रिस्त्रिवृत्सन्धिरिति ॥ १० ॥

---

त्रिवृदग्निष्टोमः । पंचदश उक्थ्यः । सप्तदशं तृतीयमहः सोक्थकम् । एकविंशः षोडशी । पंचदशी रात्रिः । त्रिवृत्संधिः । इत्येषोऽनुष्टुप् संपन्नः । तेन हैतेन ध्वसा द्वैतवन ईजे मात्स्यो राजा । यत्रैतत् द्वैतवनं सरः । तत् एतद्गाथयाऽभिगीतम्—" चतुर्दश द्वैतवनो राजा संग्राम-जिद्धयान् । इंद्राय वृत्रघ्नेऽबध्नात् तस्मात् द्वैतवनं सरः "—इति ॥ ९ ॥

चतुर्विंशाः पवमानाः । त्रिवृदभ्यावर्तम् । चतुश्चत्वारिंशाः पवमानाः । एकविंशमभ्यावर्तम् । अष्टाचत्वारिंशाः पवमानाः । त्रयस्त्रिंशमभ्यावर्तम् । आ अग्निष्टोमसामाद् । द्वात्रिंशान्युक्थानि । एकविंशः षोडशी । पंचदशी रात्रिः । त्रिवृत् संधिरिति ॥ १० ॥

---

त्रिवृदग्निष्टोमः । अत्र त्रिष्वपि दिवसेषु स्तोमांतराणि उच्यन्ते । तच्च कल्पांतरमश्वमेधम् । सप्तदशं तृतीय-महः सोक्थकं उत्थानमित्यर्थः । षोडशिस्तोत्रं चैकविंशम् । सन्धिस्तोत्रं त्रिवृदेव । एषः अश्वमेधः स्तोत्रियाणां अनुष्टुब्भिः पंचविंशत्या संपन्नः । कथं ? अत्र हि सर्वा एव स्तोत्रियाः अपि गण्यमानाः सप्त शतानि अष्टान-वत्यधिकानि ( ७९८ ) भवंति । तासां तासां द्वात्रिंशता ( ३२ ) भागे अपहृते पंचविंशतिः अनुष्टुभो लभ्यन्ते । अन्या तु ततः द्वाभ्याम् ऊना अनुष्टुप् भवति । तत्रापि " नाक्षराच्छंदो व्येत्येकस्मान्न द्वाभ्यां "—(श.प.७-१-२ २२)इत्यभिप्रायः । तेन हैतेन । अनुष्टुप्संपन्नेनाश्वमेधेन च ध्वसा प्राप्तध्वंसनः द्वैतवनो राजा ईजे इष्टवान् । यत्र स्थाने प्रसिद्धमेव एतत् सर्वदा द्वैतवनाख्यं सरः । तत् तद्देशे हयान् द्वैतवनः द्वैतवनीयः राजा संग्रामजितः इंद्राय अबध्नात् । प्राजापत्यानेव चाबध्नात् । सोमैस्तर्पयतीति कृत्वा इंद्रायाबध्नादित्याह । तस्मात् द्वैतवनं सरः सर्वनामस्त्ययो विभक्तिव्यत्ययश्च द्रष्टव्यः । यस्मिन् द्वैतवनं सरः तत्राबध्नादित्यर्थः ॥ ९ ॥

चतुर्विंशाः पवमानाः । पंचभिरेताभिः कंडिकाभिः कल्पांतरं प्रपंच्यते । तत्र प्रथमे तावदहनि त्रयोऽपि पवमानाश्चतुर्विंशाः । यत्तु अभ्यावर्तयन्ति अभ्यावर्तं धुर्यैः स्तुवते तत् त्रिवृत् पवमानव्यतिरिक्तानि आवृत्तिस्तो-त्राणि त्रिवृंति भवन्तीत्यर्थः । द्वितीये त्वहनि चतुश्चत्वारिंशाः पवमानाः एकविंशमभ्यावर्तम् । तृतीये त्वहनि अष्टाचत्वारिंशाः पवमानाः त्रयस्त्रिंशमभ्यावर्तम् इत्यादि ॥ १० ॥

( त्ये ) एतद्विष्णोः क्रान्तम् । ( न्तु ) तेन हैतेन भरतो दौःष्यन्तिरीजे तेनेष्ट्वेमां व्यष्टिम्व्यानशे येयम्भरतानान्तदेतद्गाथयाऽभिगीतमष्टास-प्ततिम्भरतो दौःष्यन्तिर्य्यमुनामनु । गङ्गायाम्वृत्रघ्नेऽबध्नात्पञ्चपञ्चा-शतᳬ हयानिति ॥ ११ ॥

( त्य ) अथ द्वितीयया । त्रयस्त्रिᳬशतᳬ शतᳬ राजाऽश्वान्बध्वाय मेध्यान् । सौद्युम्निरत्यष्टादन्यानमायान्मायवत्तरऽ इति ॥ १२ ॥

( त्यु ) अथ तृतीयया । शकुन्तला नाडपित्यप्सरा भरतन्दधे । परः सहस्रानिन्द्रायाश्वान्मेध्यान्यऽआहरद्विजित्य पृथिवीᳬ सर्व्वामिति ॥ १३ ॥

---

एतत् विष्णोः क्रांतम् । तेन हैतेन भरतो दौःष्यंतिरीजे । तेनेष्ट्वा, इमां व्यष्टिं व्यानशे । येयं भरतानाम् । तदेतत् गाथयाऽभिगीतम्–" अष्टासप्ततिं भरतो दौःष्यंतिर्यमुनामनु । गंगायां वृत्रघ्नेऽबध्नात् पंचपंचाशतं हयान् "–इति ॥ ११ ॥

अथ द्वितीयया–" त्रयस्त्रिंशं शतं राजाऽश्वान् बध्वाय मेध्यान् । सौद्युम्निरत्यष्टादन्यानमायान्मायवत्तरः "–इति ॥ १२ ॥

अथ तृतीयया–" शकुंतला नाडपित्यप्सरा भरतं दधे । परः सहस्रानिंद्रायाश्वान् मेध्यान् य आहरत् विजित्य पृथिवीं सर्वाम् "–इति ॥ १३ ॥

---

एतद्विष्णोः क्रांतम् । एतत् स्थानविशेषः । क्रान्तं विक्रमणम् । विप्रकृष्टांतरत्वसामान्यात् । यथा हि विष्णोः क्रममाणस्य महांतराणि पदानि भवंति । एवं महांतराः स्तोमाः । इमां व्यष्टिमानशे । भरत-कालादारभ्य कलियुगं यावत् वशे राज्यानुवृत्तिरित्येषा भरतानामिह आनुषंगिकी व्यष्टिः । या तु द्वात्रिंशतं वै देवरथाः तत्पर्यालोक इत्यादि व्यष्टिः । सा विदुषः क्रतुफलरूपा इति द्रष्टव्यम् । अष्टासप्ततिं हयान् अश्वान् यमुनामनु यमुनातीरे अबध्नात् । भरतः दुःष्यंतपुत्रः । वृत्रघ्ने इंद्राय गंगायां तु गंगातीरे । पंचपंचाशतम् । सः अबध्नात् । स किल हिमवत्तलादारभ्य उभयोर्नद्योस्तीराभ्यां अश्वमेधैः यजमानः " तावंतो यावत्प्रतिष्ठामिति "– तदिदमुच्यते ॥ ११ ॥

अथ द्वितीयया । यमुनातीरे बद्धास्त उभये अपि । ये त्रयस्त्रिंशं शतं भवंति । तान् त्रयस्त्रिंशं शतं अश्वान् बध्वाय । य इत्यनर्थकः । राजा सुद्युम्नस्यापत्यम् । मायवत्तरः प्रज्ञावत्तरः । अत्यष्टान् अतीत्य स्थितः । अन्यानमायान् अप्रज्ञान् राज्ञः ॥ १२ ॥

अथ तृतीयया । शकुंतला नामाप्सराः नाडपिती । सा पडस्थाने कण्वाश्रमे भरतं पुत्रं दृष्ट्वा तं लब्ध्वा दधे धारितवती यश्चक्रवर्ती सन् सकलां पृथिवीं विजित्य मेध्यानश्वान् अष्टवारं सहस्रादधिकान् आहृतवान् यागार्थं तैरिष्टवानित्यर्थः । तत्र च त्रयस्त्रिंशं शतं गंगायमुनयोराबध्य शेषांस्त्वन्यत्रेति विरोधपरिहारः ॥ १३ ॥

---

१–ऐतरेय ब्राह्मणे तु " बध्वाऽयम् " इति पाठः । ऐ. ब्रा. ३९ । ९ । ४ । इत्यत्र ॥ मूलोक्तपाठे तु " क्त्वो यक् " ( पा. सू. ७ । १ । ४७ ) इति यगागमः । " सौभाग्यमस्यै दत्त्वाय " इत्यत्रेव ।

( त्यु ) अथ चतुर्थ्या । महदद्य भरतस्य न पूर्वे नापरे जनाः । दिवम्मर्त्यऽइव बाहुभ्यान्नोदापुः पञ्च मानवाऽइति ॥ १४ ॥

( त्ये ) एकविꣳशस्तोमेन । ( ऽ ) ऋषभो याज्ञतुरऽईजे श्विक्नानाꣳराजा तदेतद्गाथयाऽभिगीतं याज्ञतुरे यजमाने ब्रह्मणऽऋषभे जनाः । अश्वमेधे धनं लब्ध्वा विभजन्ते स्म दक्षिणाऽ इति ॥ १५ ॥

त्रयस्त्रिꣳशस्तोमेन । शोणः सात्रासाहऽ ईजे पाञ्चालो राजा तदेतद्गाथयाऽभिगीतꣳ सात्रासाहे यजमानेऽश्वमेधेन तौर्वशाः । उदीरते त्रयस्त्रिꣳशाः षट्सहस्राणि वर्म्मिणामिति ॥ १६ ॥

( त्यु ) अथ द्वितीयया । षट्षट् षड्ढा सहस्राणि यज्ञे कोकपितुस्तव । उदीरते त्रयस्त्रिꣳशाः षट्सहस्राणि वर्म्मिणामिति ॥ १७ ॥

---

अथ चतुर्थ्या–"महदद्य भरतस्य न पूर्वे नापरे जनाः । दिवं मर्त्य इव बाहुभ्यां नोदापुः पंच मानवाः"–इति ॥ १४ ॥

एकविंशस्तोमेन ऋषभो याज्ञतुर ईजे श्विक्नानां राजा । तदेतत् गाथयाऽभिगीतम्–" याज्ञतुरे यजमाने ब्रह्माण ऋषभे जनाः। अश्वमेधे धनं लब्ध्वा विभजंते स्म दक्षिणाः"–इति१५

त्रयस्त्रिंशस्तोमेन शोणः सात्रासाह ईजे पांचालो राजा। तदेतद्गाथयाऽभिगीतम्–"सात्रासाहे यजमानेऽश्वमेधेन तौर्वशाः। उदीरते त्रयस्त्रिंशाः षट्सहस्राणि वर्मिणाम्"–इति॥१६॥

अथ द्वितीयया–"षट्षट् षड्ढा सहस्राणि यज्ञे कोकपितुस्तव । उदीरते त्रयस्त्रिंशाः षट्सहस्राणि वर्मिणाम् "–इति ॥ १७ ॥

---

अथ चतुर्थ्या । महत्त्वामहत्त्वाभ्यां भरतस्याद्यापि पंच मानवाः उच्चैराहुः । कीदृशाः न पूर्वे तस्मात् भरतात् न वा परे अर्वाचः कथमापुर्दिवं इव बाहुभ्यां मर्त्यः ॥ १४ ॥

एकविंशस्तोमेन । तत्र त्रिष्वपि दिवसेषु एकविंशः स्तोमो यस्य क्रतोस्तेनैकविंशस्तोमेन ऋषभः इष्टवान् । याज्ञतुरे ऋषभे यजमाने ब्रह्माणो ब्राह्मणजनाः अश्वमेधे धनं लब्ध्वा विभक्तवंतो दक्षिणाः ॥ १५ ॥

त्रयस्त्रिंशस्तोमेन । त्रिष्वपि दिवसेषु त्रयस्त्रिंशः स्तोमः अस्येति त्रयस्त्रिंशः स्तोमः तेन सकृत् शोणो नाम सत्रासहस्यापत्यम् । पंचालाभिजन इष्टवान् । सत्रासहीशे अश्वमेधेन यजमाने उत् ईरते उद्गच्छन्ति । के ? तौर्वशाः अश्वाः । ज्येष्ठे तमपिसृज्येरन्निति । त्रयस्त्रिंशाः स्तोमा उद्गच्छंति । स हि शोणः त्रयस्त्रिंशानेव स्तोमान् त्रिष्वपि दिवसेषु प्रयुंक्ते नान्यानिति । उद्गच्छंतीत्याह–षट्क्रतुषु सहस्राणि । वर्मिणां राजपुत्राणां कवचिनां अश्वपालानां उदीरते इति वर्तते । वार्षप्राप्ता एव द्रष्टव्याः । राजपुत्राः कवचिनः शतमित्यतोऽनियतपरिमाणा अन्य एव ॥ १६ ॥

अथ द्वितीयया । कोको नाम्नेत्यर्थः । के ते अश्वा उदीरते इति प्रथमायां गाथायामुक्तम् । तदप्यत्रानु-

( त्यु ) अथ तृतीयया । सात्रासाहे यजमाने पाञ्चाले राज्ञि सुस्रजि । अमाद्यदिन्द्रः सोमेनातृप्यन्ब्राह्मणा धनैरिति ॥ १८ ॥

गोविनतेन शतानीकः । सात्राजितऽ ईजे काश्यस्याश्वमादाय ततो हैतद्दर्वाक्काशयोऽग्नीऽन्नादधत आत्तसोमपीथाः स्मऽइति वदन्तः ॥ १९ ॥

( स्तु ) तस्य विधा । चतुर्विंᳪशाः पवमानास्त्रिवृदभ्यावर्त्तश्चतुश्चत्वारिᳪशाः पवमानाऽ एकविᳪशान्याज्यानि त्रिणवान्युक्थान्येकविᳪशानि पृष्ठानि षट्त्रिᳪशाः पवमानास्त्रयस्त्रिᳪशमभ्यावर्त्तमाग्निष्टोमसामादेकविᳪशान्युक्थान्येकविᳪशः षोडशी पञ्चदशी रात्रिस्त्रिवृत्सन्धिः ॥ २० ॥

---

अथ तृतीयया—"सात्रासाहे यजमाने पांचाले राज्ञि सुस्रजि । अमाद्यदिंद्रः सोमेनातृप्यन् ब्राह्मणा धनैः"-इति ॥ १८ ॥

गोविनतेन शतानीकः सात्राजित ईजे काश्यस्याश्वमादाय । ततो हैतदर्वाक् काशयोऽग्नीन्नादधत । आत्तसोमपीथाः स्मः । इति वदंतः ॥ १९ ॥

तस्य विधा । चतुर्विंशाः पवमानाः । त्रिवृदभ्यावर्तम् । चतुश्चत्वारिंशाः पवमानाः । एकविंशान्याज्यानि । त्रिणवान्युक्थानि । एकविंशानि पृष्ठानि । षट्त्रिंशाः पवमानाः । त्रयस्त्रिंशमभ्यावर्तम् । आ अग्निष्टोमसामात् । एकविंशान्युक्थानि । एकविंशः षोडशी । पंचदशी रात्रिः । त्रिवृत्संधिः ॥ २० ॥

---

वर्तेते, तेषां तत्र परिमाणं नोक्तम् । अत्र षट्त्रिंशदश्वसहस्राणि रक्षिणां अनुचरभूतानि उद्गच्छंतीत्याह—त्रयस्त्रिंशा अश्वा उदीरते षट्सहस्राणि वर्मिणां पदानेतासु गच्छंतीति ॥ १७ ॥ १८ ॥

गोविनतेन । गोविमतो नाम वक्ष्यमाणस्तोमविशेषः अश्वमेधः । तेन शतानीको नाम सत्राजितोऽपत्यम् ईजे । काशेरपत्यं काश्यः काश्यस्य स्वभूतं तेनाश्वमेधार्थं कल्पितमश्वमादाय युद्धे विजित्य ततश्चारभ्य तदद्यापि काशयः काशिवास्या राजानः अग्नीन्नादधते । किम् ? आत्तः अपहृतः सोमपीथो येषां ते आत्तसोमपीथाः आत्तसोमाः स्मः भवामः । किमस्माकं अग्निभिः ये अश्वमेधे एव परतः सोमपीथाद्यः तस्मिन्नपहृते सर्व एव सोमपीथो ऽपहृत इत्यभिप्रायः ॥ १९ ॥

तस्य विधा । तस्य गोविनतस्य विधा विधानं स्तोमप्रकारो वक्ष्यत इति शेषः । चतुर्विंशाः पवमानाः । इत्यादि प्रथमेऽहनि । चतुश्चत्वारिंशा इत्यादि द्वितीयेऽहनि । तृचान्युक्त्वा एकविंशानि पृष्ठानि इति क्रमभेदो ब्राह्मणः । स तावदपर्यनुयोज्यः । षट्त्रिंशाः पवमाना इति तृतीयेऽहनि । तथा इयम् (?) ॥ २० ॥

(त्तु) तुदेतद्गाथयाऽभिगीतम्। (ध्ँ) शतानीकः सुमन्तासु मेध्यध्ँ सात्राजितो हयम्। आदत्त यज्ञङ्काशीनाम्भरतः सत्वतामिवेति ॥ २१ ॥

(त्यु) अथ द्वितीयया। श्वेतध्ँ समन्तासु वशञ्चरन्तध्ँ शतानीको धृतराष्ट्रस्य मेध्यम्। आदाय सह्वा दशमास्यमश्वध्ँ शतानीको गोविनतेन हेजऽ इति ॥ २२ ॥

(त्यु) अथ चतुर्थ्या। महदद्य भरतानान्न पूर्वे नापरे जनाः। दिवं मर्त्यऽ इव पक्षाभ्यान्नोदापुः सप्त मानवाऽइति ॥ २३ ॥

(त्य) अथातो दक्षिणानाम्। (म्मु) मध्यम्प्रतिराष्ट्रस्य यदन्यद्भूमेश्च पुरुषेभ्यश्च ब्राह्मणस्य च वित्तात्प्राची दिग्घोतुर्दक्षिणा ब्रह्मणः प्रतीच्यध्वर्य्योरुदीच्युद्गातुस्तदेव होतृकाऽअन्वाभक्ताः ॥ २४ ॥

---

तदेतद्गाथयाऽभिगीतम्–" शतानीकः समंतासु मेध्यं सात्राजितो हयम्। आदत्त यज्ञं काशीनां भरतः सत्वतामिव "–इति ॥ २१ ॥

अथ द्वितीयया–" श्वेतं समंतासु वशं चरंतं शतानीको धृतराष्ट्रस्य मेध्यम्। आदाय सह्वा दशमास्यमश्वं शतानीको गोविनतेन ह ईजे "–इति ॥ २२ ॥

अथ चतुर्थ्या–" महदद्य भरतानां न पूर्वे नापरे जनाः। दिवं मर्त्य इव पक्षाभ्यां नोदापुः सप्त मानवाः "–इति ॥ २३ ॥

अथातो दक्षिणानाम्। मध्यं प्रति राष्ट्रस्य। यदन्यत् भूमेश्च पुरुषेभ्यश्च ब्राह्मणस्य च वित्तात्। प्राची दिक् होतुः दक्षिणा ब्रह्मणः, प्रतीचीः अध्वर्योः, उदीची उद्गातुः, तदेव। होतृका अन्वाभक्ताः ॥ २४ ॥

---

शतानीको राजा। संगच्छन्तेऽन्ताः " सप्ताहं प्रचरंति " इति वचनात् इति समन्तास्तासु संगतान्तासु अटविषु चरंतं हयं मेध्यं यज्ञं ;यज्ञसाधनं काशीनां स्वभूतं कथं? भरतः सत्वतामिव सत्वतो यथा स्वभूतमश्वं भरतः अपहृतवान्। एवम् शतानीकः काशीनां श्वेतवर्णं समंतासु अटवीषु वशं वशिनं कामिकं कामतश्चरन्तम् आदत्त आहृतवान् ॥ २१ ॥

धृतराष्ट्रस्य स्वभूतं मेध्यं अश्वमादाय शतानीकः। सह्वा " षह मर्षणे " ( धा. पा. भ्वा. आ. ८७७ ) इत्यस्य वनिप्। सह्वा अभिभविता परेषां दशमास्यमश्वं गोविनतेन इष्टवान् ॥ २२ ॥

अथ चतुर्थ्या। तृतीयामपठित्वा चतुर्थी इति अतिद्रष्टव्या तु तृतीया अपि ॥ २३ ॥

अथातो दक्षिणानाम्। प्रति मध्यात् राष्ट्रस्य विजितस्य। ब्राह्मणे वित्तप्रतिष्ठितात् अन्येषां वित्तं दीयते इति

---

१–विजयमध्याद्धोतुः प्राची दिक् दक्षिणा ब्रह्मणः, अध्वर्योः प्रतीची, उद्गातुरुदीची तृतीयं तृतीयमन्वहं ददाति भूमिपुरुषब्राह्मणःस्ववर्ज्यम्। ( का. श्रौ. सू. २०। १०८। १०९। ) ( ब्राह्मणस्वं यद्दंडादुरपन्नं तन्न देयम्। तस्य हि ब्राह्मणेष्वेव विनियोगस्मृतौ विहित इति कर्कः। )

( ऽ ) उदयनीयायाᳬ᳴ सᳬᳬ᳴स्थितायाम् । ( मे ) एकविᳬ᳴शतिम्वशाऽ अनूबन्ध्याऽ आलभते मैत्रावरुणीर्व्वैश्वदेवीर्बार्हस्पत्याऽएतासान्देवताना-माप्त्यै तद्यद्बार्हस्पत्याऽअन्त्या भवन्ति ब्रह्म वै बृहस्पतिस्तद्ब्रह्मण्ये-वान्ततः प्रतितिष्ठति ॥ २५ ॥

( त्य ) अथ यदेकविᳬ᳴शतिर्भवन्ति । ( न्त्ये ) एकविᳬ᳴शो वाऽएष यऽ एष तपति द्वादश मासाः पञ्चर्त्तवस्त्रयऽ इमे लोकाऽअसावादित्यऽ एकविᳬ᳴शऽ एतामभिसम्पदम् ॥ २६ ॥

( मु ) उदवसानीयायाᳬ᳴ सᳬᳬ᳴स्थितायाम् । ( श्रु ) चतस्रश्च जायाः कुमारीम्पञ्चमीञ्चत्वारि च शतान्यनुचरीणां यथासमुदितन्दक्षिणा-न्ददाति ॥ २७ ॥

( त्य ) अथोत्तरᳬ᳴ सम्वत्सरमृतुपशुभिर्य्यजते । षड्भिराग्नेयैर्व्वसन्ते षड्भिरैन्द्रैर्ग्रीष्मे षड्भिः पार्ज्जन्यैर्व्वा मारुतैर्व्वा व्वर्षासु षड्भिर्म्मैत्रा-

---

उदयनीयायां संस्थितायाम्, एकविंशतिं वशा अनूबन्ध्या आलभते । मैत्रावरुणीः, वैश्वदेवीः, बार्हस्पत्याः । एतासां देवतानामाप्त्यै । तद्यत् बार्हस्पत्या अंत्या भवंति । ब्रह्म वै बृहस्पतिः । तद्ब्रह्मण्येवांततः प्रतितिष्ठति ॥ २५ ॥

अथ यदेकविंशतिर्भवंति । एकविंशो वा एषः । य एष तपति । द्वादश मासाः । पंचर्तवः । त्रय इमे लोकाः । असावादित्य एकविंशः । एतामभिसंपदम् ॥ २६ ॥

उदवसानीयायां संस्थितायाम्, चतस्रश्च जायाः, कुमारीं पंचमीम्, चत्वारि च शतान्यनुचरीणां यथासमुदितम् । दक्षिणां ददाति ॥ २७ ॥

अथोत्तरं संवत्सरमृतुपशुभिर्यजते । षड्भिराग्नेयैर्वसंते । षड्भिरैन्द्रैर्ग्रीष्मे । षड्भिः पार्जन्यैर्वा मारु-

---

गम्यते । प्राची दिक् होतुर्दक्षिणा ब्रह्मण इति । संवत्सरे दिग्सिक्षिश्चात्र तत्स्थं वित्तं लक्ष्यते (?) तदेव तत्रैव होतृकाः महर्त्विग्भ्योऽन्ये पुरुषाः अन्वाभक्ताः यथा आसां द्वौ होत्रादीननु मैत्रावरुणादय आभक्ता इत्यर्थः ॥ २४–२६ ॥

जाया महिष्यादिकाः । यथासमुदितम् । येन सह यया अभिमेथिकः कामुकसंवादः कृतः तास्तेभ्य इत्यस्मिन्नर्थे

---

१–एकविंशतिरनूबन्ध्याऽअतः । ( का. श्रौ. सू. २० । २१० । ) सप्त मैत्रावरुण्यः सप्त वैश्वदेव्यः सप्त बार्हस्पत्या एवमेकविंशतिः ॥

२–द्वादशाहमाग्नेयः पुरोडाशः । ब्रह्मौदनो वा । ( का. श्रौ. सू. २० । २१५ । २१६ । ) अत्र श्रुतिः–" द्वादश ब्रह्मौदनानुत्थाय निर्वपति द्वादशभिर्वैष्टिभिर्यजते इति । ( श. प. १३ । ३ । ६ । ६ । ) प्रत्यृतु पशूनालभते षट्षड्वसंतादावाग्नेयानैन्द्रान्पार्जन्यान्मारुतान्वा मैत्रावरुणानैन्द्रावैष्णवानैन्द्राबार्हस्पत्यान् । ( का. श्रौ. सू. २० । २१७ । )

वरुणैः शरदि षड्भिरैन्द्रावैष्णवैर्हेमन्ते षड्भिरैन्द्राबार्हस्पत्यैः शिशिरे षडृतवः सम्वत्सरऽऋतुष्वेव सम्वत्सरे प्प्रतितिष्ठति षट्त्रिꣳशदेते पशवो भवन्ति षट्त्रिꣳशदक्षरा बृहती बृहत्यामधि स्वर्ग्गो लोकः प्प्रतिष्ठितस्तद्यन्ततो बृहत्यैव च्छन्दसा स्वर्ग्गे लोके प्प्रतितिष्ठति ॥ २८ ॥

इति तृतीयप्रपाठके षष्ठं ब्राह्मणम् ॥ १३।३।६ ॥ ( ९-४ ) ॥

इति पञ्चमोऽध्यायः समाप्तः ॥ १३ । ९ ॥

कण्डिकासंख्या ॥ ८० ॥

इति तृतीयः प्रपाठकश्च समाप्तः ॥ १३-३ ॥

कण्डिकासंख्या ॥ १०६ ॥

---

तैर्वा वर्षासु । षड्भिर्मैत्रावरुणैः शरदि । षड्भिरैन्द्रावैष्णवैर्हेमन्ते । षड्भिरैन्द्राबार्हस्पत्यैः शिशिरे । षड् ऋतवः संवत्सरः । ऋतुष्वेव संवत्सरे प्रतितिष्ठति । षट्त्रिंशदेते पशवो भवंति । षट्त्रिंशदक्षरा बृहती । बृहत्यामधि स्वर्गो लोकः प्रतिष्ठितः । तद्यंततो बृहत्यैव च्छंदसा स्वर्गे लोके प्रतितिष्ठति ॥ २८ ॥

---

यथासमुदितमिति अव्ययीभावसमासः । वचनाच्च भार्याणां सानुचरीणां दानम् । पालागली तु क्षत्तुः प्राप्ता, वचनांतरेण अध्वर्यवे दीयते ॥ २७ ॥ २८ ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये त्रयोदशे काण्डे पञ्चमेऽध्याये चतुर्थं ब्राह्मणम् ॥ ( १३ । ९ । ४ ) ॥

नागस्वामिसुतोऽवन्त्यां पाराशर्यो वसन्हरिः ।
श्रुत्यर्थं दर्शयामास शक्तितः पौष्करीयकः ॥ १ ॥
श्रीमतोऽवन्तिनाथस्य विक्रमार्कस्य भूपतेः ।
धर्माध्यक्षो हरिस्वामी व्याख्यच्छातपथीं श्रुतिम् ॥ २ ॥
भूभर्त्रा विक्रमार्केण क्लृप्तां कनकवेदिकाम् ।
दानायाध्यस्य कृतवान् श्रुत्यर्थविवृतिं हरिः ॥ ३ ॥

इति श्रीसर्वविद्यानिधानकवीन्द्राचार्यसरस्वतीनां श्रीहरिस्वामिनां कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये त्रयोदशे काण्डे पञ्चमोऽध्यायः समाप्तः ॥ १३-९ ॥

---

१-उदवसानीयांते भार्या ददाति यथासंवादꣳ सानुचरीः । ( का. श्रौ. सू. २० । २११ । ) ( उदवसानीया त्रैधातवी । ) कुमारीं पालागलीं चाध्वर्यवे । अनुचरीर्वा फलाधिकारादितरासाम् । अनारभ्यत्वाच्च ( का. श्रौ. सू. २० । २१२-११४ । ) अत्र कर्कभाष्यम्-वाशब्दः पक्षव्यावृत्तौ । न भार्या ददाति । अनुचरीरेव दद्यात् । कुत एतत् ? फलाधिकाराद्भार्याणाम् । यजमानतुल्या एवैता इति । माध्यमिकं हि यजमानस्य पत्नीनां च द्रव्यं साधारणत्वाच्चोत्सर्गः सहैव भवति नान्यथेति । तत्कथं तर्हिं वेदवाक्यं नेयम् । चतस्रश्च जाया यजमानश्च चत्वारि च शतान्यनुचरीणां कुमारीं पंचमीं यथासंवादं दक्षिणां ददाति इति । अपि च यथा पत्न्यो यजमानदाने असमर्थाः एवं यजमानोऽपि पत्नीनाम् । तस्मादनारभ्योऽयमर्थ इति कर्कभाष्यम् । देवयाज्ञिकभाष्यमप्येवमेव ।

# अथ षष्ठेऽध्याये प्रथमं ब्राह्मणम् ।
# चतुर्थप्रपाठके च प्रथमं ब्राह्मणम् ।



पुरुषो ह नारायणोऽकामयत । (त्रा) अतितिष्ठेयꣳ सर्वाणि भूतान्यहमेवेदꣳ सर्वꣳ स्यामिति सऽ एतम्पुरुषमेधम्पञ्चरात्रं यज्ञक्रतुमपश्यत्तमाहरत्तेनायजत तेनेष्ट्वाऽत्यतिष्ठत्सर्वाणि भूतानीदꣳ सर्वमभवदतितिष्ठति सर्वाणि भूतानीदꣳ सर्वम्भवति सऽएवं विद्वान्पुरुषमेधेन यजते यो वैतदेवम्वेद ॥ १ ॥

तस्य त्रयोविꣳशतिर्दीक्षाः । (०) द्वादशोपसदः पञ्च सुत्याः सऽएष चत्वारिꣳशद्रात्रः सदीक्षोपसत्कश्चत्वारिꣳशदक्षरा विराडतद्विराजमभिसम्पद्यते ततो विराडजायत विराजोऽअधि पूरुष ऽइत्येषा वै सा विराडेतस्याऽ एवैतद्विराजो यज्ञम्पुरुषञ्जनयति ॥ २ ॥

---

### अथ पुरुषमेधः ।

पुरुषो ह नारायणोऽकामयत । अतितिष्ठेयं सर्वाणि भूतानि । अहमेवेदं सर्वं स्यामिति । स एतं पुरुषमेधं पंचरात्रं यज्ञक्रतुमपश्यत् । तमाहरत् । तेनायजत । तेनेष्ट्वा, अत्यतिष्ठत् सर्वाणि भूतानि । इदं सर्वमभवत् । अतितिष्ठति सर्वाणि भूतानि । इदं सर्वं भवति । य एवं विद्वान् पुरुषमेधेन यजते । यो वा एतदेवं वेद ॥ १ ॥

तस्य त्रयोविंशतिर्दीक्षाः । द्वादशोपसदः । पंच सुत्याः । स एष चत्वारिंशद्रात्रः सदीक्षोपसत्कः । चत्वारिंशदक्षरा विराट् । तद्विराजमभिसंपद्यते । " ततो विराडजायत विराजो अधि पूरुषः "–( वा. सं. ३१ । ५ ) इति । एषा वै सा विराट् । एतस्या एवैतद्विराजो यज्ञं पुरुषं जनयति ॥ २ ॥

---

पुरुषो ह नारायणोऽकामयत । अत्राध्याये पुरुषमेध उच्यते । परत्र सर्वमेधः । अधुना उपन्यस्तसंख्याकः चत्वारिंशतां रात्रीणां समूहः सह दीक्षोपसद्रात्रिभिः चत्वारिंशद्रात्रो भवति । ततस्तत्पूर्वोपन्यस्तपंचरात्रत्वेन विनिहन्यत इत्यभिप्रायः । चत्वारिंशदक्षरा विराट् यतः । तत् विराजमभिसंपद्यत इति । तत् तेन चत्वारिंशद्रात्रं विराजमुपपद्यते । संगच्छते च राजा मंत्रब्राह्मण इति सहस्रपुराणाधिमहाभाग्यः सर्गांतरे शयनावस्थायां कामितवान् । सर्वाणि भूतानि । धर्मज्ञानवैराग्यैश्वर्यप्राप्तिप्राकाम्यादिभिश्च गुणैः अतीत्य तिष्ठेयम् । कृतकर्तव्यः सन्नमेध्यस्वः स्यामित्यर्थः । अहमेव च इदं सर्वं चेतनाचेतनं स्यां भवेयम्, मम चित्तानुविधायि इदं सर्वं स्यादित्यर्थः । स एतं प्रकारं प्रमाणं पुरुषमेधाख्यं यज्ञक्रतुं एतच्छास्त्रानुसारेणैव, नारायणत्वं प्राप्नुयाम् यं अपश्यत्,

ता वा॒ऽ ए॒ताः । ( श्रु ) च॒तस्रो॑ द॒श॒तो भ॑वन्ति त॒द्यदे॒ताश्च॒तस्रो॑ द॒श॒तो भ॒व॒न्त्ये॒षां चै॒व लो॒का॒नामा॒प्त्यै दि॒शाञ्चे॒म॒मे॒व लो॒कम्प्र॑थ॒मया॑ द॒श॒ता॒ऽऽप्नु॒व॒न्न॒न्त॒रि॒क्षन्द्वि॒तीय॑या दि॒वन्तृ॒तीय॑या दि॒शश्च॒तु॒र्थ्या॑ त॒थै॒वै॒तद्य॑जमान॒ऽ इ॒म॒मे॒व लो॒कम्प्र॑थ॒मया॑ द॒श॒ता॒ऽऽप्नोत्य॒न्त॒रि॒क्षन्द्वि॒तीय॑या दि॒वन्तृ॒तीय॑या दि॒शश्च॒तु॒र्थ्यै॒ता॒वद्वा॒ऽ इ॒दꣳ स॒र्व्वं य॒वा॒वदि॒मे च॒ लो॒का दि॒शश्च॒ स॒र्व्वम्पु॑रुषमे॒धः स॒र्व्व॒स्या॒प्त्यै स॒र्व्व॒स्या॒व॒रु॒द्ध्यै ॥ ३ ॥

( ब्रा॒ऽण ) ए॒का॒द॒शा॒ग्नी॒षो॒मी॒याः प॒श॒व॒ऽउ॒प॒व॒स॒थे । ते॒षाꣳ स॒मा॒नं क॒र्मै॒का॒द॒श यू॒पा॒ऽए॒का॒द॒शा॒क्ष॒रा त्रि॒ष्टु॒ब्व॒ज्रस्त्रि॒ष्टु॒ब्वी॒र्य्यं त्रि॒ष्टु॒ब्व॒ज्रे॒णै॒वै॒त॒द्वी॒र्य्ये॒ण य॒ज॒मा॒नः पु॒रस्ता॑त्पा॒प्मा॒न॒म॒प॒ह॒ते ॥ ४ ॥

---

ता वा एताः । चतस्रो दशतो भवंति । तद्यदेताश्चतस्रो दशतो भवंति । एषां चैव लोकानामाप्त्यै । दिशां च । इममेव लोकं प्रथमया दशताऽऽप्नुवन् । अंतरिक्षं द्वितीयया । दिवं तृतीयया । दिशश्चतुर्थ्या । तथैवैतद्यजमान इममेव लोकं प्रथमया दशताऽऽप्नोति । अंतरिक्षं द्वितीयया । दिवं तृतीयया । दिशश्चतुर्थ्या । एतावद्वा इदं सर्वम् । यावदिमे च लोका दिशश्च । सर्वं पुरुषमेधः । सर्वस्याप्त्यै । सर्वस्यावरुद्ध्यै ॥ ३ ॥

एकादशाग्नीषोमीयाः पशव उपवसथे । तेषां समानं कर्म । एकादश यूपाः । एकादशाक्षरा त्रिष्टुप् । वज्रस्त्रिष्टुप् । वीर्यं त्रिष्टुप् । वज्रेणैवैतद्वीर्येण यजमानः पुरस्तात्पाप्मानमपहते ॥ ४ ॥

---

शास्त्रचक्षुषा ददर्शेत्यर्थः । तमाहरत् । तत्साधनानि उपादत्त । तेनायमयजत । तेन समीहितं फलं साधितवानि-त्यर्थः । किं पुनः तत् साधितवान् इत्यत आह—अत्यतिष्ठत् सर्वाणि भूतानीत्यादि । एतदितिहासेन क्रतूत्पत्तिवचनम् । अतितिष्ठति सर्वाणि भूतानीति फलवत् प्रयोगवाक्यम् । यो वा . एतदेवं वेद उपास्ते इत्यु-पासनाफलवचनम् । त्रयोविंशतिदीक्षाणां द्वादशोपसदां संख्या विधीयते । सुत्यानां तु संख्यानुवादः । विराजा समानः पुरुषमेधो भवतीत्यर्थः । विराट्संख्याभिधानेन तु संख्यासामान्यात् अभ्यस्तः पुरुषमेधः सुखमुपास्यते इत्यभिप्रायः । " ततो विराडजायत विराजो अधि पूरुषः "—इति मंत्रेणापि विराडुपासनं पुरुषमेधे दर्शित-मिति मंत्रोपादानम् । एषा वै सा विराडिति या मंत्रे विराडुपात्ता । एषैव सा आधियज्ञिकी विराट् । एतस्या एव च विराजः सकाशात् यज्ञं यज्ञाभिमानिनं पुरुषं नारायणं जनयति यजमान इति ब्रुवन् एतन्मंत्रार्थं दर्शयति । ततश्च पुरुषाणां नारायणात् भाविनः विराट् आधियाज्ञिकी चत्वारिंशद्रात्रात्मिका तस्मिन् यजमानो-ऽजायत विराजस्तस्या आधियाज्ञिक्याः सकाशात् तदपूर्वसंस्कृतात्मा सर्वभावाविशेषु पुरुषो नारायणः अजायतेति । यस्तु पौराणिकस्त्वस्यो मंत्रार्थः । ततो हिरण्यगर्भाद्विराट् त्रैलोक्यशरीरः अजायत । विराजोऽपि सकाशात् तच्छरीरार्द्धयुगलरूपः स्वायंभुवो मनुः सर्वस्य जातिपिंडसर्गस्य प्रथमोऽजायतेति । स तु ज्ञातत्वान्नात्राख्यातः । न प्रतिषिद्धः ॥ १ ॥ २ ॥

ता वा एताश्चतस्रो दशतः । चत्वारोऽत्र दशकवर्गाः इति आध्यात्मिका विराजः अधिदैवोपन्यासः । इममेव

---

१–पुरुषमेधस्त्रयोविंशतिदीक्षोऽतिष्ठाकामस्य । का. श्रौ. सू. २१ । १ । सर्वाण्यतिक्रम्यावस्थानमतिष्ठा ।

(तऽऐ)ऐकादशिनाः सुत्यासु पशवो भवन्ति । एकादशाक्षरा त्रिष्टुब्वज्र- स्त्रिष्टुब्वीर्य्यन्त्रिष्टुब्वज्रेणैवैतद्वीर्य्येण यजमानः पुरस्तात्पाप्मानमपहते ॥ ५॥

यद्द्वेवैकादशिना भवन्ति । ( न्त्ये ) एकादशिनी वा ऽइदꣳ सर्व्वं प्रजा- पतिर्ह्येकादशिनी सर्व्वꣳ हि प्रजापतिः सर्व्वं पुरुषमेधः सर्व्वस्याप्त्यै सर्व्वस्यावरुद्ध्यै ॥ ६ ॥

स वाऽएष पुरुषमेधः । पञ्चरात्रो यज्ञक्रतुर्ब्भवति पाङ्क्तो यज्ञः पाङ्क्तः पशुः पञ्चर्त्तवः सम्वत्सरो यत्किञ्च पञ्चविधमधिदेवतमध्यात्मन्तदेनेन सर्व्वमाप्नोति ॥ ७ ॥

तस्याग्निष्टोमः प्रथममहर्ब्भवति ।(त्य) अथोक्थ्योऽथातिरात्रोऽथोक्थ्यो- ऽथाग्निष्टोमः स वाऽ एषऽ उभयतोज्योतिरुभयतऽउक्थ्यः ॥ ८ ॥

---

ऐकादशिनाः सुत्यासु पशवो भवंति । एकादशाक्षरा त्रिष्टुप् । वज्रस्त्रिष्टुप् । वीर्यं त्रिष्टुप् । वज्रेणैवैतद्वीर्येण । यजमानः * पाप्मानमपहते ॥ ५ ॥

यद्द्वेवैकादशिना भवंति । एकादशिनी वा इदं सर्वम् । प्रजापतिर्ह्येकादशिनी । सर्वं हि प्रजा- पतिः । सर्वं पुरुषमेधः । सर्वस्याप्त्यै । सर्वस्यावरुद्ध्यै ॥ ६ ॥

स वा एष पुरुषमेधः पंचरात्रो यज्ञक्रतुर्भवति । पांक्तो यज्ञः । पांक्तः पशुः । पंचर्तवः संवत्सरः । यत्किंच पंचविधमधिदेवतमध्यात्मम् । तदेनेन सर्वमाप्नोति ॥ ७ ॥

तस्याग्निष्टोमः प्रथममहर्भवति । अथोक्थ्यः । अथातिरात्रः । अथोक्थ्यः । अथाग्निष्टोमः । स वा एष उभयतोज्योतिः । उभयतउक्थ्यः ॥ ८ ॥

---

लोकं प्रथमया दशताऽऽनुवन्निति । ते पूर्वे अपि पुरुषाः । एतयैव यज्ञविराजा इमां दैवीं विराजमाप्नुवंस्ततः तस्यापि यजमानस्य युज्यते तदर्थ उत्साह इत्यभिप्रायः । "तथैवैतद्यजमानः" इत्युपसंहारवचनम् । एतावद्वा इदं सर्वं पुरुषमेध इति सोऽपि दिक्दशकसामान्यात् दिग्लोकात्मक एवेत्यभिप्रायः ॥ ३—५ ॥

प्रथममंत्रवाचनीयं सर्वं भवतीति तस्यैवायमुपसंहारः । न तु फलांतरं इति दर्शयति—**सर्वं पुरुषमेध** इति । सोऽपि दशकक्रतुचतुष्टयसमाप्त्या दिगध्यात्मक एवेत्यभिप्रायः ॥ ६ ॥

स वा एष पुरुषमेधः । अत्र सफलाकांक्षत्वोपासना उच्यते ॥ ७ ॥

तस्याग्निष्टोमः । अत्र कंडिकाद्वये अह्नां संस्था आध्यात्माधिदैवोपासना उच्यंते । **उभयतोज्योतिरिति** । अग्निसंबंधादग्निष्टोमो ज्योतिरित्यभिप्रायः । **उभयतउक्थ्य** इति । मध्यापेक्षया उभयत उक्थ्यौ इत्याशयः ॥ ८ ॥

---

* " यजमानः पाप्मानम् " इत्यनयोः पदयोर्मध्ये " पुरस्तात् " इति पदं जर्मनदेशीयमुद्रितपुस्तकेऽधिकं वर्तते अस्मदुप- लब्धयावल्लिखितादर्शपुस्तकेषु तु नास्ति । अतस्तच्चिन्त्यम् ।

१—अग्निष्टोमावन्तरेणातिरात्र उक्थ्यपक्षः । ( का. श्रौ. सू. २१ । ३ । ) ( एतानि सौत्यान्यहानि । १ अग्निष्टोमः २ उक्थ्यः ३ अतिरात्रः ४ उक्थ्यः ५ अग्निष्टोम इति यावत् । ) यूपैकादशिनी भवति । "तावन्तोऽग्नीषोमीयाः"। ( का. श्रौ. सू. २१।४।५। ) ( प्रत्यहं सुत्यासु भवंतीत्यर्थः । )

( क्थ्यो ) युवमध्यः पञ्चरात्रो भवति । ( ती ) इमे वै लोकाः पुरुषमेधऽउभयतोज्योतिषो वाऽ इमे लोकाऽ अग्निनेतऽआदित्येनामुतस्तस्मादुभयतोज्योतिरन्नमुक्थ्यऽआत्माऽतिरात्रस्तद्यदेताऽउक्थ्याव्तिरात्रमभितो भवतस्तस्मादयमात्माऽन्नेन परिवृढोऽथ यदेष वर्षिष्ठोऽतिरात्रोऽह्नाध्ँ स मध्ये तस्माद्यवमध्यो युते ह वै द्विषन्तम्भ्रातृव्यमयमेवास्ति नास्य द्विषन्भ्रातृव्यऽइत्याहुर्यऽएवम्वेद ॥ ९ ॥

तस्यायमेव लोकः प्रथममहः । ( र ) अयमस्य लोको व्वसन्तऽऋतुर्यदूर्ध्वमस्माल्लोकादर्व्वाचीनमन्तरिक्षात्तद्द्वितीयमहस्तद्वस्य ग्रीष्मऽ ऋतुरन्तरिक्षमेवास्य मध्यममहरन्तरिक्षमस्य व्वर्षाशरदावृतू यदूर्ध्वमन्तरिक्षादर्व्वाचीनन्दिवस्तच्चतुर्थमहस्तद्वस्य हेमन्तऽऋतुर्द्यौरेवास्य पञ्चममहर्द्यौरस्य शिशिरऽऋतुरित्यधिदेवतम् ॥ १० ॥

( मु ) अथाध्यात्मम् । ( म्प्र ) प्प्रतिष्ठैवास्य प्प्रथममहः प्रतिष्ठोऽस्य व्वसन्तऽऋतुर्यदूर्ध्वम्प्रतिष्ठायाऽअर्वाचीनम्मध्यात्तद्द्वितीयमहस्तद्वस्य ग्ग्रीष्मऽऋतुर्म्मध्यमेवास्य मध्यममहर्म्मध्यमस्य व्वर्षाशरदावृतू यदूर्ध्वं

---

यवमध्यः पंचरात्रो भवति । इमे वै लोकाः पुरुषमेधः । उभयतोज्योतिषो वा इमे लोकाः । अग्निनेतः । आदित्येनामुतः । तस्मादुभयतोज्योतिः । अन्नमुक्थ्यः । आत्माऽतिरात्रः । तद्यदेता उक्थ्यावतिरात्रमभितो भवतः । तस्मादयमात्माऽन्नेन परिवृढः । अथ यदेव वर्षिष्ठोऽतिरात्रः । अह्नां स मध्ये । तस्माद्यवमध्यः । युते ह वै द्विषंतं भ्रातृव्यम् । अयमेवास्ति । नास्य द्विषन् भ्रातृव्य इत्याहुः । य एवं वेद ॥ ९ ॥

तस्यायमेव लोकः प्रथममहः । अयमस्य लोको वसंत ऋतुः । यदूर्ध्वमस्माल्लोकादर्वाचीनमंतरिक्षात् । तत् द्वितीयमहः । तद्वस्य ग्रीष्म ऋतुः । अंतरिक्षमेवास्य मध्यममहः । अंतरिक्षमस्य वर्षाशरदावृतू । यदूर्ध्वमन्तरिक्षादर्वाचीनं दिवः । तच्चतुर्थमहः । तद्वस्य हेमंत ऋतुः । द्यौरेवास्य पंचममहः । द्यौरस्य शिशिर ऋतुः । इत्यधिदेवतम् ॥ १० ॥

अथाध्यात्मम् । प्रतिष्ठैवास्य प्रथममहः । प्रतिष्ठो अस्य वसंत ऋतुः । यदूर्ध्वं प्रतिष्ठाया अवाचीनं मध्यात् । तत् द्वितीयमहः । तद्वस्य ग्रीष्म ऋतुः । मध्यमेवास्य मध्यममहः । मध्यमस्य वर्षाशरदावृतू । यदूर्ध्वं मध्यादवाचीनं शीर्ष्णः । तच्चतुर्थमहः । तद्वस्य हेमन्त ऋतुः । शिशिर

---

'यवमध्यः' । यवस्येव गुरुर्मध्योऽस्येतीति, इमे वै लोकाः पुरुषमेध इति विधिमात्र इत्यधिदैववचनम् । अन्नमुक्थ्यः, आत्माऽतिरात्र इत्याध्यात्मवचनम् । अन्नमुक्थ्यः परिबृंहणभूतत्वात् । आत्मा अतिरात्रः मध्यत्वात्

मध्यादवाचीनथ्ँ शीर्ष्णस्तच्चतुर्थमहस्तद्यस्य हेमन्तऽऋतुः शिरऽएवास्य पञ्चममहः शिरोऽस्य शिशिरऽऋतुरेवमिमे च लोकाः सम्वत्सरश्चात्मा च पुरुषमेधमभिसम्पद्यन्ते सर्व्वम्वाऽइमे लोकाः सर्व्वथ्ँ सम्वत्सरः सर्व्वमात्मा सर्व्वम्पुरुषमेधः सर्व्वस्याप्त्यै सर्व्वस्यावरुद्ध्यै ॥ ११ ॥

इति चतुर्थप्रपाठके प्रथमं ब्राह्मणम् ॥ १३।४।१ ॥ ( ६।१ ) ॥

अथ यस्मात्पुरुषमेधो नाम । (मे) इमे वै लोकाः पूरयमेव पुरुषो योऽयम्पवते सोऽस्याम्पुरि शेते तस्मात्पुरुषस्तस्य यदेषु लोकेष्वन्नन्तदस्यान्नम्मेधस्तद्यदस्यैतदन्नम्मेधस्तस्मात्पुरुषमेधोऽथो यदस्मिन्मेध्यान्पुरुषानालभते तस्माद्वेव पुरुषमेधः ॥ १ ॥

( स्ता ) तान्वै मध्यमेऽहन्नालभते । ( तेऽन्तु ) अन्तरिक्षम्वै मध्यममहरन्तरिक्षमु वै सर्व्वेषाम्भूतानामायतनमथोऽअन्नम्वाऽएते पशवऽउदरम्मध्यममहरुदरे तदन्नन्दधाति ॥ २ ॥

---

एवास्य पंचममहः । शिरोऽस्य शिशिर ऋतुः । एवमिमे च लोकाः संवत्सरश्च आत्मा च पुरुषमेधमभिसंपद्यंते । सर्वं वा इमे लोकाः । सर्वं संवत्सरः । सर्वमात्मा । सर्वं पुरुषमेधः । सर्वस्याप्त्यै । सर्वस्यावरुद्ध्यै ॥ ११ ॥

अथ यस्मात् पुरुषमेधो नाम । इमे वै लोकाः पूः । अयमेव पुरुषः । योऽयं पवते । सोऽस्यां पुरि शेते । तस्मात् पुरुषः । तस्य यदेषु लोकेष्वन्नम् । तदस्यान्नं मेधः । तद्यदस्यैतदन्नं मेधः । तस्मात् पुरुषमेधः । अथो यदस्मिन्मेध्यान्पुरुषानालभते । तस्माद्वेव पुरुषमेधः ॥ १ ॥

तान्वै मध्यमेऽहन्नालभते । अंतरिक्षं वै मध्यममहः । अंतरिक्षमु वै सर्वेषां भूतानामायतनम् । अथो अन्नं वा एते पशवः । उदरं मध्यममहः । उदरे तदन्नं दधाति ॥ २ ॥

---

महत्वाच्च अग्रे अन्योऽन्येन । अथ यदेव वर्षिष्ठ इति यवमध्यशब्दनिर्वचनम् । युते ह वै इत्युपासनाफलवचनम् । युतें आत्मना मिश्रयति स्वीयं करोति भ्रातृव्यम् अयमेवोपासकोऽस्ति । त्रिवर्गसंपन्नः । अस्य द्विषन् भ्रातृव्यो नास्ति त्रिवर्गहीनत्वात् । इत्येवमन्ये आहुः ॥ ९–११ ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये त्रयोदशे काण्डे षष्ठेऽध्याये प्रथमं ब्राह्मणम् ॥ १३ । ६ । १ ॥

अथ यस्मात् । अथाधिदैविकं आधियज्ञिकं च निर्वचनं पुरुषमेधशब्दस्य क्रियते ॥ १ ॥ २ ॥

**तान्वै दृशदृशालभते। दृशाक्षरा विराड्विराड्ड कृत्स्नमुन्नङ्कृत्स्नुस्यै-वान्नाद्यस्यावरुद्धचै ॥ ३ ॥**

**( द्वचाऽए ) एुकादश दशुतऽ आलभते । ( तऽए ) एुकादशाक्षरा त्रिष्टु-ब्वुज्जस्त्रिष्टुब्वीर्य्यं त्रिष्टुब्वुज्रेणैवैतुद्वीर्य्येण युजमानो मध्यतुः पाप्मान-मुपहते ॥ ४ ॥**

**( तेऽष्ट्रा ) अष्टाचत्वारिᳬँशतम्मध्यमे यूपऽआलभते। ( तेऽष्ट्रा ) अष्टा-चत्वारिᳬँशदक्षरा जुगती जागताः पशवो जुगत्यैवास्मै पशूनवरुन्द्धे ॥ ५ ॥**

**( न्द्धऽए ) एुकादशैकादशेतरेषु । ( ब्वे ) एुकादशाक्षरा त्रिष्टुब्वुज्र-स्त्रिष्टुब्वीर्य्यं त्रिष्टुब्वुज्रेणैवैतुद्वीर्य्येण युजमानोऽभितः पाप्मानमुपहते ॥ ६ ॥**

---

तान्वै दशदशालभते । दशाक्षरा विराट् । विराड्ढ कृत्स्नमन्नम् । कृत्स्नस्यैवान्नाद्यस्यावरुद्धचै॥ ३॥

एकादश दशत आलभते । एकादशाक्षरा त्रिष्टुप् । वज्रस्त्रिष्टुप् । वीर्यं त्रिष्टुप् । वज्रेणैवैतद्वीर्येण यजमानो मध्यतः पाप्मानमपहते ॥ ४ ॥

अष्टाचत्वारिंशतं मध्यमे यूप आलभते । अष्टाचत्वारिंशदक्षरा जगती । जागताः पशवः । जगत्यैवास्मै पशूनवरुंधे ॥ ५ ॥

एकादशैकादशेतरेषु । एकादशाक्षरा त्रिष्टुप् । वज्रस्त्रिष्टुप् । वीर्यं त्रिष्टुप् । वज्रेणैवैतद्वीर्येण यजमानोऽभितः पाप्मानमपहते ॥ ६ ॥

---

दशदशेति दशार्थानुवादः, ये दशदश, एकैकस्यां कंडिकायां ब्राह्मणादयः पठ्यंते तानालभत इत्यर्थः । न पुनरयमर्थः–दशदश एकस्मिन् यूप 'आलभते इति । कुतः ? " अष्टाचत्वारिंशतं मध्यमे यूप आलभते"– इति । " एकादशैकादशेतरेषु "–इत्यनेन विरोधात् ॥ ३ ॥

एकादश दशत आलभते । " सरोम्यो धैवरम् "–( वा. सं. ३० । १६ ) इत्येतस्याः कंडिकायाः प्राक्, या दशतः तासामयं दर्शनार्थोऽनुवादः । एतस्यां तु ( वा. सं. ३० । १६ ) द्वादश पुरुषाः पठ्यंते पराग्नु (वा.सं.३०।५।२१) पुनर्दशदशा अन्त्यायां तु (वा.सं.३०।२२) अष्टौ पठिताः तेषां चायमनुवादः॥ ४॥

अष्टाचत्वारिंशतम् अतिक्रमणकारणाभावात् यानेव अष्टाचत्वारिंशतं मध्यमे आलभते ॥ ५ ॥

ऐकादश एकादश इतरेषु यूपेषु च " वर्णायानुरुधम् " ( वा. सं. ३० । ९ )–इति । " अविशस्तांस्तु द्वितीयोच्छ्रिते यूपे"–इति श्रुत्यंतरात् ॥ ६ ॥

---

१–नियोजनकालेऽष्टाचत्वारिंशतमाद्यानग्निष्ठे । ( का. श्रौ. सू. २१ । ८ ) " आद्यान् ब्रह्मणे ब्राह्मणम् " इत्यादीन् प्रकामोद्यायोपसदम् " इत्यंतान् ४८ । अतः कात्यायन इतः प्राक् सूत्रयामास–ऐकादशिनानुपाकृत्य ब्राह्मणादींश्चेति ( का. श्रौ. सू. २१ । ७ ) । उपाकरोतीत्यर्थः । ब्रह्मणे ब्राह्मणमित्यादीन् आ अध्यायांतम् ॥

२–इतरेष्वैकादशैकादश । ( का. श्रौ. सू. २१ । ९ ) अग्निष्ठादितरेषु दशसु यूपेषु । तत्रायं विवेकः । मध्यमे अग्निष्ठे यूपे " ब्रह्मणे ब्राह्मणम् " इत्यादयः " प्रकामोद्यायोपसदम् " इत्यंता अष्टाचत्वारिंशत् ४८, द्वितीये " वर्णायानुरुधम् " इत्यादयः

२९५३

(तेऽष्टा) अष्टाऽउत्तमानालभते । (तेऽष्टा) अष्टाक्षरा गायत्री ब्रह्म गायत्री तद्ब्रह्मैवैतदस्य सर्व्वस्योत्तमं करोति तस्माद्ब्रह्मास्य सर्व्वस्योत्तममित्याहुः ॥ ७ ॥

(स्ते) ते वै प्राजापत्या भवन्ति । ब्रह्म वै प्रजापतिर्ब्राह्मो हि प्रजापतिस्तस्मात्प्राजापत्या भवन्ति ॥ ८ ॥

स वै पशूनुपाकरिष्यन् । (न्ने) एतास्तिस्रः सावित्रीराहुतीर्ज्जुहोति देव सवितस्तत्सवितुर्व्वरेण्यम्विश्वानि देव सवितरिति सवितारम्प्रीणाति सोऽस्मै प्रीतऽएतान्पुरुषान्प्रसौति तेन प्रसूतानालभते ॥ ९ ॥

---

अष्टा उत्तमानालभते । अष्टाक्षरा गायत्री । ब्रह्म गायत्री । तत् ब्रह्मैवैतदस्य सर्वस्योत्तमं करोति । तस्मात् ब्रह्मास्य सर्वस्योत्तममित्याहुः ॥ ७ ॥

ते वै प्राजापत्या भवंति । ब्रह्म वै प्रजापतिः । ब्राह्मो हि प्रजापतिः । तस्मात् प्राजापत्या भवंति ॥ ८ ॥

स वै पशूनुपाकरिष्यन् एतास्तिस्रः सावित्रीराहुतीर्जुहोति । "देव सवितः । तत्स-

---

"अष्टौ विरूपानुत्तमानालभते" इति दर्शनार्थः अनुवादः । मागधादयस्तु पूर्वोक्ता एव गुणार्थं पुनः पठिता नापूर्वाः ॥ ७ ॥

"ते प्राजापत्याः" (वा. सं. ३०।२२) इति मंत्रपाठात् प्राप्तानामनुवादो दर्शनार्थः ॥ ८ ॥

स वै पशूनुपाकरिष्यन् एतास्तिस्रः सावित्रीराहुतीर्जुहोतीति । "देव सवितः, तत्सवितुर्वरेण्यं, विश्वानि देव सवितः" इति । ताश्चाज्येन जुहोतीति वक्ष्यति (११ कं.) ॥ ९ ॥

---

एकादश, तृतीये "मर्यादायै प्रश्नविवाकम्" इत्यादय एकादश, चतुर्थे "भायै दार्वाहारम्" इत्यादय एकादश, पंचमे "वैरहत्याय पिशुनम्" इत्यादय एकादश, षष्ठे "योगाय योक्तारम्" इत्यादय एकादश, सप्तमे "परिवत्सरायाविजाताम्" इत्यादय एकादश, अष्टमे "पाराय मार्गारम्" इत्यादय एकादश, नवमे "पश्चादोषाय ग्लाविनम्" इत्यादय एकादश, दशमे "आस्कंदाय सभास्थाणुम्" इत्यादय एकादश, एकादशे "महसे वीणावादम्" इत्यादयो ब्रामण्यं गणकमभिक्रोशकं तान्महसे" इत्यंता एकादश । द्वितीयोच्छ्रिते शेषान् । (का. श्रौ. सू. २१ । १० ।) द्वितीयोच्छ्रिते यूपे अवशिष्टाः "वीणावादं पाणिघ्नं तूणवध्मं तान्नृत्ताय" इत्यादयः "रात्र्यै कृष्णं पिंगाक्षम्" इत्यंताश्चतुर्दश । ततः "अथैतानष्टौ विरूपानालभते" इत्याद्यः अष्टौ एवं द्वाविंशतिः । ततश्च हरिस्वामिमते मागधादिचतुर्णामनुवाददर्शनार्थत्वात् द्वितीयोच्छ्रिते यूपे पूर्वोक्तैरेकादशभिः सह अवशिष्टा द्वाविंशतिः मिलित्वा त्रयस्त्रिंशत् भवंति ॥

१—अत्र याज्ञिकानां सिद्धांतः । याज्ञिकैस्तु—मागधादयोऽपि अपूर्वा एव विधीयन्ते । अतिदीर्घादयोऽष्टौ प्राजापत्याः शूद्रब्राह्मणव्यतिरिक्ताः । मागधादयोऽप्येवंविधाः प्राजापत्या एव चत्वारः । एवं षड्विंशतिः शेषाः । पूर्वोक्तैरेकादशभिः सह सप्तत्रिंशत् द्वितीयोच्छ्रिते भवंति । युक्ततरं चेदम् । प्राजापत्या इति पुनर्देवतासंबंधात् । पूर्वविहितेष्वेव मागधादिगुणविधानेनैवैतच्चोपपद्यते । तेषां देवतासंबंधस्य पूर्वमेव विहितत्वादित्याहुः । मिलित्वा ४८—११०—२६—१८४ ।

२—पशूनुपाकरिष्यन्नतिरात्रे देव सवितरीति प्रत्यृचं तिस्रो जुहोति (का. श्रौ. सू. २१ । ६)

ब्रह्मणे ब्राह्मणमालभते । ब्रह्म वै ब्राह्मणो ब्रह्मैव तद्ब्रह्मणा समर्द्धयति क्षत्त्राय राजन्यं क्षत्त्रम्वै राजन्यः क्षत्त्रमेव तत्क्षत्त्रेण समर्द्धयति मरुद्भ्यो वैश्यम्विशो वै मरुतो विशमेव तद्विशा समर्द्धयति तपसे शूद्र-न्तपो वै शूद्रस्तपऽएव तत्तपसा समर्द्धयत्येवमेता देवता यथारूपम्प-शुभिः समर्द्धयति ताऽ एनथ्ँ समृद्धाः समर्द्धयन्ति सर्व्वैः कामैः ॥ १० ॥

( ग ) आज्येन जुहोति तेजो वाऽआज्यन्तेजसैवास्मिंस्तत्तेजो दधा-त्याज्येन जुहोत्येतद्वै देवानाम्प्रियन्धाम यदाज्यम्प्रियेणैवैनान्धाम्ना सम-र्द्धयति तऽ एनथ्ँ समृद्धाः समर्द्धयन्ति सर्व्वैः कामैः ॥ ११ ॥

( घ ) नियुक्तान्पुरुषान् । ब्रह्मा दक्षिणतः पुरुषेण नारायणेनाभिष्टौति सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपादित्येतेन षोडशर्च्चेन षोडशकल-

---

वितुर्वरेण्यम् । विश्वानि देव सवितः "–( वा. सं. ३० । १–३ ) इति । सवितारं प्रीणाति । सोऽस्मै प्रीत एतान् पुरुषान् प्रसौति । तेन प्रसूतानालभते ॥ ९ ॥

"ब्रह्मणे ब्राह्मणम्"–आलभते । ब्रह्म वै ब्राह्मणः । ब्रह्मैव तद् ब्रह्मणा समर्धयति । "क्षत्त्राय राजन्यम् " । क्षत्त्रं वै राजन्यः । क्षत्त्रमेव तत्क्षत्त्रेण समर्धयति । "मरुद्भ्यो वैश्यम्" । विशो वै मरुतः । विशमेव तत् विशा समर्धयति । " तपसे शूद्रम् " ( वा. सं. ३०।५ ) तपो वै शूद्रः । तप एव तत्तपसा समर्धयति । एवमेता देवता यथारूपं पशुभिः समर्धयति । ता एनं समृद्धाः समर्धयंति सर्वैः कामैः ॥ १० ॥

आज्येन जुहोति । तेजो वा आज्यम् । तेजसैवास्मिन् तत् तेजो दधाति । आज्येन जुहोति । एतद्वै देवानां प्रियं धाम–यदाज्यम् । प्रियेणैवैनान् धाम्ना समर्धयति । त एनं समृद्धाः समर्धयंति सर्वैः कामैः ॥ ११ ॥

नियुक्तान् पुरुषान् ब्रह्मा दक्षिणतः पुरुषेण नारायणेन अभिष्टौति–" **सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात** "–( वा. सं. ३१।१–१६ ) इत्येतेन षोडशर्चेन । षोडशकलं वा

---

' ब्रह्मणे ब्राह्मणम् ' यत् ब्रह्म दैवं ब्राह्मणजात्याधिदैवतात्मकं तदनु देवता ब्राह्मणजात्यनुगतस्तु मानुषपिंड-पशुः । एवं क्षत्त्रादिष्वपि द्रष्टव्यम् । ब्रह्म वै ब्राह्मण इति । ब्रह्मजातीयो ब्राह्मण इत्यर्थः । ब्रह्मैव तत् आधिदैविकं ब्रह्मणा पशुरूपेण तद्येन समर्द्धयति स्वजातीयेन । तपो वै शूद्रः । " तप संतापे " ( धा. पा. भ्वा. प. १०११ ) तपस्वी कर्मत्वात् नित्यं संतप्त इत्यर्थः । एवमेता देवता इति ब्रुवन् ब्राह्मण्यादिशरीरे अभिमानिन्यो देवता इति दर्शयति ॥ १० ॥

आज्येन जुहोति । यास्तिस्रः सावित्रीर्जुहोति ता आज्येन ॥ ११ ॥

नियुक्तान् पुरुषान् । नारायणेन पुरुषाः स्तोतुं शक्यते कथं ? "सहस्रशीर्षा पुरुषः" (वा.सं.३१।१–१६)

---

१–नियुक्तान् ब्रह्माऽभिष्टौति होतृवदनुवाकेन सहस्रशीर्षेति । का. श्रौ. सू. २१ । ११ । ( होतृवत् त्रिः प्रथमां त्रिरुत्तमां ऋगंते प्रणवः इत्यादि शस्त्रधर्मवदित्यर्थः । )

म्वा इदꣳ सर्वꣳ सर्वम्पुरुषमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्याऽ इत्थमसीत्थमसीत्युपस्तौत्येवैनमेतन्महयत्येवाथो यथैष तथैनमेतदाह तत्पर्य्यग्निकृताः पशवो बभूवुरसंज्ञप्ताः ॥ १२ ॥

( ८ ) अथ हैनम्वागभ्युवाद । पुरुष मा सन्तिष्ठिपो यदि सꣳस्थापयिष्यसि पुरुषऽएव पुरुषमत्स्यतीति तान्पर्य्यग्निकृतानेवोदसृजत्तद्देवत्याऽ आहुतीरजुहोत्ताभिस्ता देवताऽअप्रीणात्ताऽएनम्प्रीताऽअप्रीणन्त्सर्वैः कामैः ॥ १३ ॥

---

इदं सर्वम् । सर्वं पुरुषमेधः । सर्वस्याप्त्यै । सर्वस्यावरुद्ध्यै । इत्थमसीत्थमसीत्युपस्तौत्येवैनमेतन्महयत्येव । अथो यथैष तथैनमेतदाह । तत्पर्यग्निकृताः पशवो बभूवुः असंज्ञप्ताः ॥ १२ ॥

अथ हैनं वागभ्युवाद । पुरुष मा सन्तिष्ठिपः । यदि संस्थापयिष्यसि । पुरुष एव पुरुषमत्स्यतीति । तान् पर्यग्निकृतानेवोदसृजत् । तद्देवत्या आहुतीरजुहोत् । ताभिस्ता देवता अप्रीणात् । ता एनं प्रीता अप्रीणन् सर्वैः कामैः ॥ १३ ॥

---

इत्यनेन नारायणेन सूक्तेन पुरुषपशवोऽभिष्टोतुं शक्यंते । उच्यते नारायणः एतेन सूक्तेन साक्षात् स्तूयते सर्वभावायावयवशः । तत्र च पुरुषपशूनां तादात्म्यं गम्यते । " पुरुष एवेदं सर्वं " " पशूंस्तांश्चक्रे " " ब्राह्मणोऽस्य मुखमासीत् " इत्यादिवचनैः । ततश्च अनेन सूक्तेन नारायणाभिष्टवद्वारेणैव तदात्मानः तदभिजना वा पुरुषाः पशवः अभिष्टूयंते इत्युपपन्नमेतत् । पुरुषेण नारायणेनाभिजनान्पुरुषानभिष्टौतीति । अन्ये तु मन्यन्ते नारायणार्थं सूक्तमेवेदं नारायणम् । ततश्चायमर्थः–" सहस्रशीर्षा पुरुषः " इत्यनेन सूक्तेन पुरुषेण नारायणेनाभिष्टौति । तत्र अपि तु दर्शने प्रकृतिभूमिमभित एव पुरुषाणामयमभिष्टव इति वाच्यम् । इत्थमसीत्थमसीत्युपस्तौत्येवैनमेतन्महयत्येव तु प्रथमव्याख्याने समर्थं भवति । इत्थमेव अभिभवसि सहस्रशिराः सहस्राक्षः भवसि भूमिं सर्वतः स्पृत्वा दशांगुलमतितिष्ठसि । इत्यादि कर्म तत्तत् उपन्यस्य स्तौति नारायणं एतत् । एतेन सूक्तेन महयत्येव पूजयति । केनचित् वृत्तिसामान्येन "सिंहो देवदत्त" इत्यादिवत् गौणाः सहस्रशीर्षादिशब्दाः प्रयुज्यंते इत्यर्थः । एतत्तावत् तार्किकदृष्ट्यनुगतं सूक्तस्य संक्षेपेण व्याख्यानम् । अधुना व्युत्पादनदृष्ट्या अनुगतमाह यथैवैषः । परमार्थत एव भगवान्नारायणः "सहस्रशीर्षा" इत्यादि पशुत्वैं बपनं (?) नारायणमेतदाह । यथा च यास्क आह " अपि वा संप्रत्यय एव स्यान्महाभाग्यात् देवतायाः " ( निरु. ) इति । ततश्चेत्थमसीति प्रत्यक्षमिव नारायणं सूक्ते अभिधेयं दर्शयति । " अत्यतिष्ठत् " इत्यादिवचनं परोक्षवदुच्यते । तत्र कथमेतत्सूक्तं सूक्तार्थवचनं स्यात् । उच्यते एतस्मादेवाविरोधात् पुरुषव्यत्यययोऽत्र द्रष्टव्यः । इत्थमसि नारायण इति । तत्पर्यग्निकृताः । यदा नारायणः पुरुषमेधेनायजत तदा पर्यग्निकृतेषु पुरुषपशुषु ॥ १२ ॥

एनं नारायणं अशरीरा वाक् उक्तवती पुरुष ! एतान् पुरुषपशून् मा संतिष्ठिपः उदङ्निनयनादिकान्यंगानि एषां मा कृथा इत्यर्थः । यदि संस्थापयिष्यसि । ततः शेषभक्षानुकारेण लोकेऽपि पुरुषः पुरुषं

( ग़ु ) आज्येन जुहोति । तेजो वाऽआज्यन्तेजसैवास्मिंस्तत्तेजो दधाति ॥ १४ ॥

( त्यै ) ऐकादशिनैः सꣳस्थापयति । (त्ये) एकादशाक्षरा त्रिष्टुब्वज्र-स्त्रिष्टुब्वीर्यन्त्रिष्टुब्वज्रेणैवैतद्वीर्येण यजमानः पाप्मानमपहते ॥ १५ ॥

( तऽउ ) उदयनीयायाꣳ सꣳस्थितायाम् । ( मे ) एकादश वशा-ऽअनूबन्ध्याऽआलभते मैत्रावरुणीर्वैश्वदेवीर्बार्हस्पत्याऽएतासान्देवताना-माप्त्यै तद्यद्बार्हस्पत्याऽअन्त्या भवन्ति ब्रह्म वै बृहस्पतिस्तदु ब्रह्मण्ये-वान्ततः प्रतितिष्ठति ॥ १६ ॥

( त्यु ) अथ यदेकादश भवन्ति । ( न्त्ये ) एकादशाक्षरा त्रिष्टुब्वज्र-स्त्रिष्टुब्वीर्यन्त्रिष्टुब्वज्रेणैवैतद्वीर्येण यजमानोऽन्ततः पाप्मानमपहते त्रैधा-तव्युदवसानीयाऽसावेव बन्धुः ॥ १७ ॥

---

आज्येन जुहोति । तेजो वा आज्यम् । तेजसैवास्मिन् तत्तेजो दधाति ॥ १४ ॥

ऐकादशिनैः संस्थापयति । एकादशाक्षरा त्रिष्टुप् । वज्रस्त्रिष्टुप् । वीर्यं त्रिष्टुप् । वज्रेणैवै-तद्वीर्येण यजमानः पाप्मानमपहते ॥ १५ ॥

उदयनीयायां संस्थितायाम्, एकादश वशा अनूबंध्या आलभते—मैत्रावरुणीः, वैश्व-देवीः, बार्हस्पत्याः । एतासां देवतानामाप्त्यै । तत् यत् बार्हस्पत्या अंत्या भवंति । ब्रह्म वै बृहस्पतिः । तत् उ ब्रह्मण्येवांततः प्रतितिष्ठति ॥ १६ ॥

अथ यदेकादश भवंति । एकादशाक्षरा त्रिष्टुप् । वज्रस्त्रिष्टुप् । वीर्यं त्रिष्टुप् । वज्रेणैवैतद्वी-र्येण यजमानोऽन्ततः पाप्मानमपहते । त्रैधातव्युदवसानीया । असावेव बंधुः ॥ १७ ॥

---

भक्षयिष्यति । तच्चायुक्तमित्यभिप्रायः । तान्पर्यग्निकृतानेवोदसृजदित्यादि एवमुपसंहर्तव्यम् । तानेतान् पर्यग्नि-कृतानेवोत्सृ[1]जति । तद्देवत्या आहुतीर्जुहोति इत्यादि याश्च तद्देवत्या आहुतयः ताः आज्येन जुहोति स्विष्ट-[2]कृद्वनस्पत्यंतरे जुहोतीत्येवं तु वचनांतरात् ॥ १३ ॥ १४ ॥

ऐकादशिनैः पशुभिः यथाप्रकृति पाशुकं कर्म समापयतीत्यनुवादः । तत्र पर्यग्निकरणांतः अयं विध्य-भावात् ॥ १५ ॥

उदयनीयायां संस्थितायां प्रतिदैवतं[3] तिस्रस्तिस्र इति पूर्वयोः समो विभागः । उत्तमायां तु पंच ॥ १६ ॥

एकादशसंख्यापूरणार्थः ॥ १७–१९ ॥

---

१–कपिञ्जलादिवदुत्सृजंति ब्राह्मणादीन् । का. श्रौ. सू. २० । १२ ।

२–स्विष्टकृद्वनस्पत्यंतरे पुरुषदेवताभ्यो जुहोति । का. श्रौ. सू. २० । १३ । आज्येनेति शेषः । "आज्येन जुहोति" इति अत्रैव चतुर्दश्यां कंडिकायां श्रुतेः ।

३–प्रतिदेवतं तिस्रस्तिस्रोऽनूबंध्याः पंचोत्तमायाम् । का. श्रौ. सू. २० । १६ ।

(२) अथातो दक्षिणानाम् । (म्मु) मुध्यम्प्रति राष्ट्रस्य युदुन्यद्भूमेश्च ब्राह्मणस्य च वित्तात्सुपुरुषम्प्राची दिग्घोतुर्दुक्षिणा ब्रह्मणः प्रतीच्यध्व-र्य्योरुदीच्युद्गातुस्तुदेव होतृकाऽअन्वाभक्ताः ॥ १८ ॥

(ऽ) अथ युदि ब्राह्मणो युजेत । सुर्व्ववेदसुन्दद्यात्सुर्व्वम्वै ब्राह्मणः सुर्व्वᳫं सुर्व्ववेदसᳫं सुर्व्वम्पुरुषमेधः सुर्व्वस्याप्त्यै सुर्व्वस्या-वरुद्ध्यै ॥ १९ ॥

(ह्वचाऽअ) अथात्मुन्नग्नी समारोह्य । (ह्यो) उत्तरनारायणेनादित्यु-मुपस्थायानपेक्षमाणोऽरण्यमभिप्रेयात्तदेव मनुष्येभ्यस्तिरोभवति युद्यु ग्रामे व्विवत्सेदुरण्योरग्नी समारोह्योत्तरनारायणेनैवादित्युमुपस्थाय

---

अथातो दक्षिणानाम् । मध्यं प्रति राष्ट्रस्य । यदन्यत् भूमेश्च, ब्राह्मणस्य च वित्तात्, स-पुरुषम् । प्राची दिग् होतुः दक्षिणा ब्रह्मणः । प्रतीच्यध्वर्योः । उदीच्युद्गातुः । तदेव होतृका अन्वाभक्ताः ॥ १८ ॥

अथ यदि ब्राह्मणो यजेत । सर्ववेदसं दद्यात् । सर्वं वै ब्राह्मणः । सर्वं सर्ववेदसम् । सर्वं पुरुषमेधः । सर्वस्याप्त्यै । सर्वस्यावरुद्ध्यै ॥ १९ ॥

अथात्मन्नग्नी समारोह्य, उत्तरनारायणेनादित्यमुपस्थाय, अनपेक्षमाणोऽरण्यमभिप्रेयात् । तदेव मनुष्येभ्यस्तिरोभवति । यद्यु ग्रामे विवत्सेत् । अरण्योरग्नी समारोह्य उत्तरनारायणेनैवादित्यमुप-स्थाय । गृहेषु प्रत्यवस्येत् । अथ तान् यज्ञक्रतूनाहरेत । यानभ्याप्नुयात् । स वा एष न सर्वस्मा

---

अथात्मन्नग्नी समारोह्य आत्मनि शरीरे, अग्नी समारोप्य "अयं ते योनिः"–(वा.सं. ३ । १४) इति मंत्रेण ऊष्माणं आस्ये, कोष्ठे वा आवेश्य । उत्तरनारायणेन नारायणार्थः "अद्भ्यः संभृतः" (वा.सं.३१।१७–२२)

---

१–सपुरुषमश्वमेधवद्दक्षिणा । (का. श्रौ. सू २१ । १४ ।) राज्ञोऽयं दक्षिणादानविधिः । अश्वमेधे भूमिपुरुषब्राह्मणस्व-वर्जम् (का. श्रौ. सू. २० । १०९) इत्युक्तम् । अत्र तु भूमिब्राह्मणस्ववर्जं पुरुषा अपि दीयंते । तथा अश्वमेधे अह्नां त्रिसंख्यत्वात्तृतीयं तृतीयमित्युक्तम् । अत्र तु अह्नां पंचसंख्यत्वात् प्रत्यहं प्राच्यादिदिगुत्पन्नद्रव्यस्य पंचमं पंचममंशं ददातीति विशेषः ।

२–सर्वस्वं ब्राह्मणस्य । (का. श्रौ. सू. २१ । १५ ।) ब्राह्मणस्यायं दक्षिणादानविधिः । अतो हेतोः कात्यायनः–अधिकार-सूत्रं द्वितीयं रचयामास "ब्राह्मणराजन्ययोः" इति । (का. श्रौ. सू. २१ । २ ।)

३–त्रैधातव्यंते समारोह्यात्मन्नग्नी सूर्यमुपस्थायाद्भ्यः संभृत इत्यनुवाकेनानपेक्षमाणोऽरण्यं गत्वा न प्रत्येयात् । (का. श्रौ. सू. २१ । १७ ।) न प्रत्येयात् पुनर्गृहं प्रतीत्यर्थः । किंतु अरण्यमियात् । ततश्चाश्रमांतरप्राप्तिरियमिति कर्कः । अत्र सूत्रे कर्क-भाष्ये स्मृतिविहितप्राजापत्येष्टिनिर्णयः । यच्च स्मृतिषूच्यते-"प्राजापत्यां निरुप्येष्टिं सर्ववेदसदक्षिणाम् । आत्मन्नग्नी समारोप्य ब्राह्मणः प्रव्रजेत् गृहात्" (म. स्मृ. ६ । ३८ ।) इति ॥ सा चेयं पुरुषमेधाख्या सर्वस्वदक्षिणा प्राजापत्येष्टिः । तां निरुप्य पारिव्रज्यं ब्राह्मणस्य । एवं च "यावज्जीवमग्निहोत्रं जुहुयात्" इतिश्रुति रनया श्रुत्या विकल्प्यते । अथ स्मार्तेष्टिः प्राजापत्या स्यात् । तदानीं स्मृत्या श्रुतिर्बाधिता स्यात् । न चैतदिष्यते । पुरुषमेधः कथं प्राजापत्येष्टिरिति चेत् । संति हि अत्र प्राजापत्याः पशवः । तदुपलक्षिता प्राजापत्येत्युक्तेति ॥

गृहेषु प्रत्युवस्येदुथ तान्यज्ञक्रतूनाहरेत यानभ्याप्नुयात्स वाऽ एष न सर्व्व- स्माऽअनुवक्तव्यः सर्व्वॐ हि पुरुषमेधो नेत्सर्व्वस्माऽइव सर्व्वम्ब्रु- वाणीति योऽन्वेव ज्ञातस्तस्मै ब्रूयादथ योऽनूचानोऽथ योऽस्य प्रियः स्यान्नेत्त्वेव सर्व्वस्माऽइव ॥ २० ॥

इति चतुर्थप्रपाठके द्वितीयं ब्राह्मणम् ॥ १३।४।२ ॥ ( ६-२ ) ॥

इति षष्ठोऽध्यायः समाप्तः ॥ १३-६ ॥

कण्डिकासंख्या ॥ ३१ ॥

---

अनुवक्तव्यः । सर्वं हि पुरुषमेधः । नेत् सर्वस्मा इव सर्वं ब्रवाणीति । योऽन्वेव ज्ञातः । तस्मै ब्रूयात् । अथ योऽनूचानः । अथ योऽस्य प्रियः स्यात् । नेत्त्वेव सर्वस्मा इव ॥ २० ॥

इति पुरुषमेधः ।

---

इत्यनुवाको नारायणः । स पूर्वस्मान्नारायणादुत्तर इत्युत्तरनारायणः । तेनादित्यमुपस्थाय अनपेक्षमाणः अरण्यं गच्छेत् । तदेव तत्रैव मनुष्येभ्यस्तिरोभवति अंतर्द्धीयते । ग्रामं न पुनः प्रविशति । वन एव वैखानसवृत्तेन वर्तत इत्यर्थः । स वा एष न सर्वस्मै । ज्ञातप्रियानूचानेभ्य एव पुरुषमेधो ग्रंथतश्चार्थतश्चानुवक्तव्यो हिरण्यगर्भलक्षणः । ततः प्रागवस्थाभ्यः पुरुषार्थः अयं प्रतिषेधः ॥ २० ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये त्रयोदशे काण्डे षष्ठेऽध्याये द्वितीयं ब्राह्मणम् ॥ ( १३ । ६ । २ ) ॥

नागस्वामिसुतोऽवन्त्यां पाराशर्यो वसन्हरिः । श्रुत्यर्थं दर्शयामास शक्तितः पौष्करीयकः ॥ १ ॥
श्रीमतोऽवन्तिनाथस्य विक्रमार्कस्य भूपतेः । धर्माध्यक्षो हरिस्वामी व्याख्यच्छातपथीं श्रुतिम् ॥ २ ॥
भूभर्त्रा विक्रमार्केण क्लृप्तां कनकवेदिकाम् । दानायाध्यस्य कृतवान् श्रुत्यर्थविवृतिं हरिः ॥ ३ ॥

इति श्रीसर्वविद्यानिधानकवीन्द्राचार्यसरस्वतीनां श्रीहरिस्वामिनां कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये त्रयोदशे काण्डे षष्ठोऽध्यायः समाप्तः ॥ ( १३-६ ) ॥

---

१-अत्र देवयाज्ञिकाः-चतुर्थाश्रमे हि भिक्षार्थी ग्रामं प्रविशेदिति विहितत्वात् न प्रत्येयादिति विरुध्यते । अतः पाक्षिक- स्तृतीयाश्रमपरिग्रह एवायम् । न चतुर्थस्येति । ग्रामे वा विषसत्तरण्योः । का. श्रौ. सू. २१ । १८ ।

# अथ सप्तमेऽध्याये प्रथमं ब्राह्मणम् ।

## चतुर्थप्रपाठके च तृतीयं ब्राह्मणम् ।

ब्रह्म वै स्वयंभु तपोऽतप्यत। तदैक्षत न वै तपस्यानन्त्यमस्ति हन्ताहम्भूतेष्वात्मानञ्जुहवानि भूतानि चात्मनीति तत्सर्वेषु भूतेष्वात्मानꣳ हुत्वा भूतानि चात्मनि सर्वेषाम्भूतानाꣳ श्रैष्ठ्यꣳ स्वाराज्यमाधिपत्यम्पर्य्यैत्तथैवैतद्यजमानः सर्व्वमेधे सर्व्वान्मेध्यान्हुत्वा सर्वेषाम्भूतानाꣳ श्रैष्ठ्यꣳ स्वाराज्यमाधिपत्यम्पर्य्येति ॥ १ ॥

स वाऽएष सर्व्वमेधो दशरात्रो यज्ञक्रतुर्भवति । दशाक्षरा विराड्विराडु कृत्स्नमन्नङ्कृत्स्नस्यैवान्नाद्यस्यावरुद्ध्यै तस्मिन्नग्निम्परार्ध्यञ्चिनोति परमो वाऽएष यज्ञक्रतूनां यत्सर्व्वमेधः परमेणैवैनम्परमताङ्गमयति ॥ २ ॥

---

अथ सर्वमेधः ।

ब्रह्म वै स्वयंभु तपोऽतप्यत । तदैक्षत । न वै तपस्यानंत्यमस्ति । हंत । अहं भूतेष्वात्मानं जुहवानि । भूतानि चात्मनीति । तत्सर्वेषु भूतेष्वात्मानं हुत्वा, भूतानि चात्मनि, सर्वेषां भूतानां श्रैष्ठ्यं, स्वाराज्यम्, आधिपत्यं पर्यैत् । तथैवैतत् यजमानः सर्वमेधे सर्वान्मेध्यान् हुत्वा सर्वेषां भूतानां श्रैष्ठ्यं स्वाराज्यम्, आधिपत्यं, पर्येति ॥ १ ॥

स वा एष सर्वमेधो दशरात्रो यज्ञक्रतुर्भवति । दशाक्षरा विराट् । विराड् उ कृत्स्नमन्नम् । कृत्स्नस्यैवान्नाद्यस्यावरुद्ध्यै । तस्मिन्नग्निं परार्ध्यं चिनोति । परमो वा एष यज्ञक्रतूनाम् । यत्सर्वमेधः । परमेणैवैनं परमतां गमयति ॥ २ ॥

---

'ब्रह्म वै स्वयंभु' । यत् एतत् अधुना ब्रह्म सर्वस्वभूतानां कर्तृ स्वयंभु हिरण्यगर्भलक्षणं ततः प्रागवस्थायां तपस्तप्त्वा तपसि निमित्ते आनंत्यं द्वित्वैकलक्षणं नास्तीति अपश्यत् सर्वमेव पूर्विकया सर्वात्मकभावनया सर्वेषां भूतानां श्रैष्ठ्यं, स्वाराज्यम्, अन्यानधीनत्वं आधिपत्यं वृत्तमात्रेण प्रयोक्तृत्वं तथैवेति फलवचनम् । मेध्यान् मेधार्हान् यज्ञियान् स्थावरजंगमात्मकान् अर्थान् यज्ञात्मके आत्मनि हुत्वा तदनुकारेण द्वित्वैकत्वं भावयित्वा सर्वात्मकत्व-भावनया सर्वेषां भूतानां श्रैष्ठ्यादि परिगच्छतीति ॥ १ ॥

स वा एष सर्वमेध इति । स वा एष इति वक्ष्यमाणसमुदायानुवादः । परस्मिन्नर्द्धे भागे भवः परार्ध्यः एकशतविधः अग्निः ॥ २ ॥

---

१–सर्वमेधः सर्वकामस्य । ( का. श्रौ. सू. २१ । १९ । ) सर्वकामस्य मुक्तिमिच्छोः ।
२–दशरात्रः । ( का. श्रौ. सू. २१ । २० ) दश सुत्याहानि भवंतीत्यर्थः ।
३–अग्निरुत्तमः । ( का. श्रौ. सू. २१ । २१ ) उत्तमः एकशतविधोऽग्निरत्रेत्यर्थः ।

तुस्याग्निष्टुदग्निष्टोमुः प्रथममुहर्भवति । ( त्य ) अग्निर्व्वाऽअग्निष्टुदग्नि-ष्टोमोऽग्निमुखाऽउ वै सुर्व्वे देवाः सुर्व्वेषान्देवुानामुाप्त्यै तुस्याग्नेया ग्ग्रुहा भवन्त्याग्नेय्यः पुरोरुचः सुर्व्वमाग्नेयुमसदिति ॥ ३ ॥

( तीं ) इन्द्रस्तुदुक्थ्यो द्वितीयमुहर्भवति । ( ती ) इन्द्रो वै सुर्व्वे देवाः सुर्व्वेषान्देवुानामुाप्त्यै तुस्यैन्द्रा ग्ग्रुहा भवन्त्यैन्द्र्यः पुरोरुचः सुर्व्वमैन्द्रु-मसदिति ॥ ४ ॥

सूर्य्यस्तुदुक्थ्यस्तृतीयमुहर्भवति । सूर्य्यो वै सुर्व्वे देवाः सुर्व्वेषां देवुाना-मुाप्त्यै तुस्य सौर्य्या ग्ग्रुहा भवन्ति सौर्य्यः पुरोरुचः सुर्व्वꣳ सौर्य्यु-मसदिति ॥ ५ ॥

व्वैश्वदेवुश्चतुर्थमुहर्भवति । व्विुश्वे वै सुर्व्वे देवाः सुर्व्वेषान्देवुानामुाप्त्यै तुस्य व्वैश्वदेवा ग्ग्रुहा भवन्ति व्वैश्वदेव्यः पुरोरुचः सुर्व्वम्वैश्वदेवु-मसदिति ॥ ६ ॥

---

तस्याग्निष्टुदग्निष्टोमः प्रथममहर्भवति । अग्निर्वा अग्निष्टुदग्निष्टोमः । अग्निमुखा उ वै सर्वे देवाः । सर्वेषां देवानामाप्त्यै । तस्याग्नेया ग्रहा भवंति । आग्नेय्यः पुरोरुचः । सर्वमाग्नेयमसदिति ॥ ३ ॥

इंद्रस्तुदुक्थ्यो द्वितीयमहर्भवति । इंद्रो वै सर्वे देवाः । सर्वेषां देवानामाप्त्यै । तस्यैन्द्रा ग्रहा भवंति । ऐन्द्र्यः पुरोरुचः । सर्वमैन्द्रमसदिति ॥ ४ ॥

सूर्यस्तुदुक्थ्यस्तृतीयमहर्भवति । सूर्यो वै सर्वे देवाः । सर्वेषां देवानामाप्त्यै । तस्य सौर्य्या ग्रहा भवंति । सौर्य्यः पुरोरुचः । सर्वं सौर्य्यमसदिति ॥ ५ ॥

वैश्वदेवश्चतुर्थमहर्भवति । विश्वे वै सर्वे देवाः । सर्वेषां देवानामाप्त्यै । तस्य वैश्वदेवा ग्रहा भवंति । वैश्वदेव्यः पुरोरुचः । सर्वं वैश्वदेवमसदिति ॥ ६ ॥

---

अग्निष्टुन्नामो एकाहः अग्निष्टोमसंस्थ एषः । ग्रहाः " उपयामगृहीतोऽस्यग्नये त्वा जुष्टं गृह्णाम्येष ते योनिरग्नये त्वा " इत्येवं यजुष्टाः । आग्नेय्यः पुरोरुचः " अस्याजरासो दमामरित्राः "–( वा. सं. ३३ । १–१७ ) इत्यादयः । एवमुत्तरेष्वपि वाच्याः ॥ ३–६ ॥

---

१–अग्निष्टुत् त्रयं उक्थ्या इंद्रस्तुत्सूर्यस्तुद्वैश्वदेवस्तुद्व्रतं वाजपेयोऽप्तोर्यामः सर्वमस्मिन्नालभते । ( का. श्रौ. सू. २१ । २२ ) अग्निष्टुन्नामा एकाहः । इंद्रस्तुत् सूर्यस्तुत् वैश्वदेवस्तुत् इतीमे त्रय उक्थ्या उक्थ्यसंस्थाः । व्रतं महाव्रतं तच्च " महाव्रतमग्निष्टोमः " " प्राजापत्य उपालंभ्यः " ( का. श्रौ. सू. १३ । २९ । ३० ) इत्यादिना " मार्जालीये पूर्णान्निदधाति " इत्यंतं का. श्रौ. सू. १३ । ५९ । गवामयने उक्तम् । वाजपेयः " वाजपेयः शरदि " इत्यादिनोक्तः । का. श्रौ. सू. १४ । १ । अप्तोर्यामः अस्मिंस्तिरोह्नीयेभ्य ऊर्ध्वं रात्रिपर्याय उत्तमो भवति सः अप्तोर्यामः ।

( त्या ) आश्वमेधिकं मध्यमं पञ्चममहर्भवति । तस्मिन्नश्वम्मेध्यमालभतेऽश्वमेधस्यैवाप्त्यै ॥ ७ ॥

पौरुषमेधिकम्मध्यमꣳ षष्ठमहर्भवति । तस्मिन्मेध्यान्पुरुषानालभते पुरुषमेधस्यैवाप्त्यै ॥ ८ ॥

( प्त्याऽअ ) अप्तोर्य्यामः सप्तममहर्भवति । सर्व्वेषां यज्ञक्रतूनामाप्त्यै तस्मिन्त्सर्व्वान्मेध्यानालभते यच्च प्राणि यच्चाप्राणम्वपा व्वपावताञ्जुहोति त्वचऽउत्कर्त्तमवपाकानाꣳ सम्व्रश्चमोषधिवनस्पतीनाम्प्रकिरन्ति शुष्काणाञ्चार्द्राणाञ्चान्नमन्नञ्जुहोत्यन्नस्यान्नस्याप्त्यै सर्व्वञ्जुहोति सर्व्वस्मै जुहोति सर्व्वस्याप्त्यै सर्व्वस्यावरुद्ध्यै प्रातःसवने हुतासु व्वपास्वेवमेव तृतीयसवने हुतेषु हविःषु ॥ ९ ॥

---

आश्वमेधिकं पंचममहर्भवति । तस्मिन्नश्वं मेध्यमालभते । अश्वमेधस्यैवाप्त्यै ॥ ७ ॥

पौरुषमेधिकं मध्यमं षष्ठमहर्भवति । तस्मिन्मेध्यान् पुरुषानालभते । पुरुषमेधस्यैवाप्त्यै ॥ ८ ॥

अप्तोर्यामः सप्तममहर्भवति । सर्वेषां यज्ञक्रतूनामाप्त्यै । तस्मिन् सर्वान्मेध्यानालभते । यच्च प्राणि । यच्चाप्राणम् । वपा वपावतां जुहोति । त्वच उत्कर्तमवपाकानाम् । संव्रश्चमोषधिवनस्पतीनां प्रकिरंति–शुष्काणां चार्द्राणां च । अन्नमन्नं जुहोति । अन्नस्यान्नस्याप्त्यै । सर्वं जुहोति । सर्वस्मै जुहोति । सर्वस्याप्त्यै । सर्वस्यावरुद्ध्यै । प्रातःसवने हुतासु वपासु । एवमेव तृतीयसवने हुतेषु हविःषु ॥ ९ ॥

---

तस्मिन् अश्वं मेध्यमालभत इत्यनुवादः सर्वेषामेव मेधार्हाणां प्राप्तत्वात् । एवमेव तस्मिन्मेध्यानालभत इति ॥ ७ ॥ ८ ॥

'अप्तोर्यामः' । अप्तोर्यामो नाम क्रतुः यस्मिन् तिरोह्नीयेभ्यः उर्ध्वं रात्रिपर्यायः उत्तमो भवति । सर्वेषां यज्ञक्रतूनामिति । सर्वाणि अग्निष्टोमोक्थ्यषोडश्यतिरात्रप्रदानानि स्तोत्रशस्त्राणि चाप्तोर्यामेऽन्तर्भवंतीत्यभिप्रायः । तस्मिन् सर्वान् मेध्यान् यज्ञार्हान् पदार्थान् स्थावरजंगमान् सर्वान् आलभते होमार्थमुपकल्पयति न त्वालभत इति । चोदनासामान्यात् पशुप्रकृतयो यागा एते चोद्यंते नादेवतासंबंधात् तमालभते इत्यादिवत् । ननु सर्वस्मै जुहोतीत्यस्ति देवतासंबंधः। सत्यमस्ति स तु होमे न यागे, तेन तदुक्ता होमा एव एते न यागाः । अत एव "तयैवैतद्यजमानः सर्वमेधे सर्वान्मेध्यान्हुत्वा"(श.प.१३।७।१।१)इति सर्वमेध्यानां होम एवोत्पत्तिवाक्येऽपि श्रुतः । न तु सर्वैर्मेध्यैरिष्ट्वेत्येवं यागः । ततश्च वपावतां सः । उभयोरपि सवनयोर्वपा एव होतव्याः न हृदयादीन्यवदानानि । ताश्च जुहोतिकल्पेनैव न यजतिकल्पेन याज्यानुवाक्यादिनेति । यच्च प्राणि सोच्छ्वासनिश्वासम् ।

---

१–आश्वमेधिकं मध्यमं व्रतस्थाने । का. श्रौ. सू. २१ । २७ ।

२–पौरुषमेधिकं वाजपेयस्य । का. श्रौ. सू. २१ । २८ ।

त्रि॒ण॒वम॑ष्ट॒मम॒हर्भ॑वति । वज्रो॒ वै त्रि॑ण॒वो वज्रे॑ण॒ खलु॒ वै क्ष॒त्रꣳ स्पृ॒त न्तद्वज्रे॑णै॒व क्ष॒त्रꣳ स्पृ॑णोति ॥ १० ॥

त्र॒य॒स्त्रि॒ꣳश॒न्नव॒मम॒हर्भ॑वति । प्र॒ति॒ष्ठा वै त्र॑यस्त्रि॒ꣳशः प्रति॑ष्ठित्यै ॥ ११ ॥

---

त्रिणवमष्टममहर्भवति । वज्रो वै त्रिणवः । वज्रेण खलु वै क्षत्रं स्पृतम् । तत् वज्रेणैव क्षत्रं स्पृणोति ॥ १० ॥

त्रयस्त्रिंशं नवममहर्भवति । प्रतिष्ठा वै त्रयस्त्रिंशः । प्रतिष्ठित्यै ॥ ११ ॥

---

संत्रश्चं ओषधिवनस्पतीनां प्रकिरंति । कीदृशीनां शुष्काणां चार्द्राणां च प्रकिरंति । अन्नमन्नं यवादि जुहोति पृथक् जुहोति न सह तानि सकलान्येव जुहोति न त्वगादीत्यर्थः । सर्वं सर्वजातीयं जुहोति सर्वासां स्थावरजंगमजातीनां एकैकां व्यक्तिं सूक्ष्माणां च धान्यानां अवदानमात्रं जुहोति । न तु सर्वा व्यक्तीः अशक्यत्वात् । धान्येन जात्यात्मना सर्वा एव व्यक्तीर्जुहोति । सर्वस्मै सर्वात्मने प्रधानपुरुषहिरण्यगर्भाय जुहोति ' तदेवाग्निस्तदादित्यः " इत्यनेनाध्यायेन ( वा. सं. ३२ ) कुतः ? सर्वमेध इति समाख्यानात् तदेव सर्वमेधोऽध्याय इति । क्रमलिंगाच्च सर्वस्मै होतव्यं सर्वात्मानं चैषोऽध्यायः अभिदधाति न चान्यत्र क्वचिदपि विनियुक्तः । परतश्च सार्वमेधिक्य एव पुरोरुचः पठ्यंते " अस्याजरासः " इत्यादयः ( वा. सं ३३ ) बैजपायनेन च अत्रैव एषः अध्यायो विनियुक्तः । एतेन च प्रातःसवने होतव्यम् हुतासु वपासु एवमेव तृतीयसवने हुतेषु पाशुकेषु हविःषु जुहोति तत्तु " यज्जाग्रतः " ( वा. सं. ३४ ) इत्यध्यायेन क्रमलिंगाभ्यां तत्र हि वह्निर्देवता अनुक्रम्यते " य इमा विश्वाः " ( वा. सं. १७।१७ ) " विश्वकर्मा " ( वा. सं. १७।२६।१७।३२ ) " यो नः पिता " (वा. सं. १७।२७) " अन्नपतेऽन्नस्य नो देहि " (वा. सं. ११।८३) इति सर्वात्मैव अंते विश्वकर्मा पठितः । न च एषः अन्यत्र श्रुत्या विनियुक्तः । तस्मादेवं होतव्यमिति मन्ये । कात्यायनेन न तत्सूत्रितं कस्यापि हेतोः इति विद्मः ॥ ९ ॥

त्रिणवं सप्तविंशस्तोमकम् ॥ १० ॥

त्रयस्त्रिंशं नवममहर्भवति ॥ ११ ॥

---

१-अवपाकानां त्वचो जुहोति । ओषधिवनस्पतीनाꣳ संव्रश्चम् । अन्नमन्नं जुहोति । वपांते । तृतीयसवने च हुतेषु हविःषु ( कां. श्रौ. सू. २१ । २३–२६ )

२–अस्मिन् विषये " अप्तोर्यामः सर्वमस्मिन्नालभते " ( का. श्रौ. सू. २१ । २२ ) इति सूत्रव्याख्यान कर्कसिद्धांतस्तु–अस्मिन्नप्तोर्यामे सर्वमालभ्यते " तस्मिन् सर्वान्मेध्यानालभते " इति श्रुतेः ( श प. १३ । ७। १ । ९ ) अशक्यार्थोपदेश इति चेत् । न हि निरवग्रहः सर्वालंभः शक्यते कर्तुम् एवं चेत् । येषामेवोपालंभो दृष्टः । तेषां सर्वता उच्यते । ते च–" पुरुषोऽश्वो गौरविरजः " इति प्रकृत्य एतावन्तो वै सर्वे पशवः । तस्मात्सर्वशब्देन पंचपश्वालंभ उच्यते । अतिरात्रविकारत्वाच्चाप्तोर्यामे तत्स्तोमायनदेवताभ्य आलभ्यंते । एकैकस्यै देवतायै पंचपंच पशव आलभ्यंते विभागाभावात् । लिंगाच्च । अवपाकानां त्वचो जुहोतीति ( का. श्रौ. सू. २१ । २३ ) । यदि पंचैते पशव एते स्युः । ततोऽवपाकानां त्वचो जुहोतीति बहुवचनमुपपन्नम् । तस्मात्प्रतिदेवतं पंच पंच पशवः । सर्वे चैते यूपे नियुज्यंते । स्तोमायनं ह्येतदिति सर्वत्र चात्र स्तोमायनम् । नह्येकादशिनी विहृता संभवति । न चैन्द्राग्नः क्वचित्प्रत्यक्षविधानादिति कर्कभाष्यम् । अस्मिन्नेव विषये देवयाज्ञिकाः स्वाशयमाहुः–सर्वस्मिन्नालभत इत्यादिसूत्राणां कर्कादिकृतस्य व्याख्यानस्याभिप्रायं कर्कादय एव विदुः । अस्मत्कृतं व्याख्यानं श्रुत्यनुसारि हरिस्वामिसंमतं चेति सूक्ष्मार्थदर्शिनः स्वयमेव ज्ञास्यंतीति ।

३–" त्रिणवत्रयस्त्रिंशावुक्थ्यौ " । ( का. श्रौ. सू. २१ । २९ )

विश्वजित्सर्वपृष्ठोऽतिरात्रो दशममहर्भवति । सर्वं वै विश्वजित्सर्वपृष्ठोऽतिरात्रः सर्वꣳ सर्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै ॥१२॥

( द्व्याऽअ ) अथातो दक्षिणानाम् । ( म्मु ) मध्यम्प्रति राष्ट्रस्य यद-न्यद्ब्राह्मणस्य वित्तात्सभूमि सपुरुषम्प्राची दिग्घोतुर्दक्षिणा ब्रह्मणः प्रती-च्यध्वर्योरुदीच्युद्गातुस्तदेव होतृकाऽअन्वाभक्ताः ॥ १३ ॥

( स्तु ) तेन हैतेन विश्वकर्मा भौवनऽईजे । तेनेष्ट्वाऽत्यतिष्ठत्सर्वाणि भूतानीदꣳ सर्वमभवदतितिष्ठति सर्वाणि भूतानीदꣳ सर्वम्भवति यऽएवंविद्वान्त्सर्वमेधेन यजते यो वैतदेवम्वेद ॥ १४ ॥

तꣳ ह कश्यपो याजयाञ्चकार । तदपि भूमिः श्लोकं जगौ न मा मर्त्यः

---

विश्वजित् सर्वपृष्ठोऽतिरात्रो दशममहर्भवति । सर्वं वै विश्वजित् सर्वपृष्ठोऽतिरात्रः । सर्वं सर्वमेधः । सर्वस्याप्त्यै । सर्वस्यावरुद्ध्यै ॥ १२ ॥

अथातो दक्षिणानाम् । मध्यं प्रति राष्ट्रस्य । यदन्यत् ब्राह्मणस्य वित्तात् । सभूमि । सपुरुषम् । प्राची दिग् होतुः दक्षिणा ब्रह्मणः । प्रतीच्यध्वर्योः । उदीच्युद्गातुः । तदेव होतृका अन्वाभक्ताः ॥ १३ ॥

तेन हैतेन विश्वकर्मा भौवन ईजे । तेनेष्ट्वा अत्यतिष्ठत् सर्वाणि भूतानि । इदं सर्वमभवत् । अतितिष्ठति सर्वाणि भूतानि । इदं सर्वं भवति । य एवं विद्वान् सर्वमेधेन यजते । यो वा एतदेवं वेद ॥ १४ ॥

तं ह कश्यपो याजयांचकार । तदपि भूमिः श्लोकं जगौ—" न मा मर्त्यः कश्चन दातु-

---

विश्वजिन्नाम एकाहः । सर्वाणि पृष्ठसाधनानि रथंतरादीनि यस्य संति स सर्वपृष्ठः । तेषां तु पवमाने रथंतरं कुर्वन्ति आर्भवे बृहत् मध्ये इतराणि ॥ १२ ॥

सपुरुषमिति । दासाः पुरुषाः । तेषां दानसंभवात् ॥ १३ ॥

तेन हैतेन । विश्वकर्मा नाम्ना राजा । भुवनस्यापत्यम् । हिरण्यगर्भो वा विश्वकर्मा । भुवनेषु भूतेषु सर्वावेशी स प्रागवस्थायाम् एतेन सर्वमेधेन ईजे ॥ १४ ॥

तं ह कश्यप ऋषिः याजितवान् । अस्मै च विश्वकर्मा भूमिं दातुं इयेष । तत्र च काले भूमिरपि इमं

---

१-अतिरात्रो विश्वजित् । ( का. श्रौ. सू. २१ । ३० ) स विश्वजित् सर्वपृष्ठोऽतिरात्रः ।

२-पुरुषमेधवद्दक्षिणा सभूमि । का. श्रौ. सू. २१ । ३१ । पुरुषमेधदक्षिणासूत्रम् । सपुरुषमश्वमेधवद्दक्षिणा । "सर्वस्वं ब्राह्मणस्येति च ।" ( का. श्रौ. सू. २१ । १४ । १५ ) अत्र सर्वमेधे तु ब्राह्मणस्वमेव न देयं, भूमिपुरुषदानं तु भवत्येव यदन्यद्ब्राह्मणस्य वित्तात्सभूमि सपुरुषमिति ( श. प. १३ । ७ । १ । १३ ) श्रुतेरिति सूत्रार्थः ।

कश्चन दातुमर्हति विश्वकर्मन्भौवन मन्द ऽआसिथ । उपमङ्क्ष्यति स्या सलिलस्य मध्ये मृषैष ते सङ्गरः कश्यपायेति ॥ १५ ॥

इति चतुर्थप्रपाठके तृतीयं ब्राह्मणम् ॥ १३-४-३ ॥ ( ७-१ ) ॥

इति सप्तमोऽध्यायः समाप्तः ॥ १३-७ ॥

कंडिकासंख्या ॥ १५ ॥

---

मर्हति विश्वकर्मन् भौवन मंद आसिथ । उपमंक्ष्यति स्या सलिलस्य मध्ये मृषैष ते संगरः कश्यपाय "-इति ॥ १५ ॥

---

श्लोकं गीतवती । न मां मर्त्यो मनुष्यः कश्चिदपि सकलां दातुमर्हति । हे विश्वकर्मन्! भौवन! त्वं तु मंदः मंदमति-र्जनः आसिथ बभूविथ जात इत्यर्थः । अस्तेर्भूरादेशः खलु न कृतः लिटः अनार्द्धधातुकत्वाश्रवणात् । इडाग-मस्तु आर्धधातुकत्वात् छन्दस्युभयथेति । कथं स मंद इत्यत आह-उपमंक्ष्यति स्या । उपशब्दो निशब्दस्यार्थे । " स्या सा त्वया दित्सिताऽहं सलिलस्य मध्ये निमग्ना भवितुमिच्छामि, ततश्च ते एष संगरः प्रतिज्ञा मृषा अशक्य इत्यर्थः । यश्च अशक्यं प्रतिजानीते स कथं न मन्दः इत्यभिप्रायः ॥ १९ ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये त्रयोदशे काण्डे सप्तमेऽध्याये प्रथमं ब्राह्मणम् ॥ १३ ॥ ७ ॥ १ ॥

नागस्वामिसुतोऽवन्त्यां पाराशर्यो वसन्हरिः ।
श्रुत्यर्थं दर्शयामास शक्तितः पौष्करीयकः ॥ १ ॥
श्रीमतोऽवन्तिनाथस्य विक्रमार्कस्य भूपतेः ।
धर्माध्यक्षो हरिस्वामी व्याख्यच्छातपथीं श्रुतिम् ॥ २ ॥
भूभर्त्रा विक्रमार्केण क्लृप्तां कनकवेदिकाम् ।
दानायाध्यस्य कृतवान् श्रुत्यर्थविवृतिं हरिः ॥ ३ ॥

इति श्रीसर्वविद्यानिधानकवीन्द्राचार्यसरस्वतीनां श्रीहरिस्वामिनां कृतौ माध्यन्दिनीयशतपथ-ब्राह्मणभाष्ये त्रयोदशे काण्डे सप्तमोऽध्यायः समाप्तः ॥ १३-७ ॥



# अथाष्टमेऽध्याये प्रथमं ब्राह्मणम् ।

## चतुर्थप्रपाठके च चतुर्थं ब्राह्मणम् ।



अथास्मै श्मशानङ्कुर्व्वन्ति । गृहान्वा प्रज्ञानम्वा यो वै कश्च म्रियते स शवस्तस्माऽएतदन्नङ्करोति तस्माच्छवान्नꣳ शवान्नꣳ ह वै तच्छ्मशानमित्याचक्षते परोक्षꣳ श्मशा ऽउ हैव नाम पितॄणामत्तारस्ते हामुष्मिंल्लोकेऽकृतश्मशानस्य साधुकृत्यामुपदम्भयन्ति तेभ्यऽएतदन्नङ्करोति तस्माच्छ्मशानꣳ श्मशान्नꣳ ह वै तच्छ्मशानमित्याचक्षते परोऽक्षम् ॥ १ ॥

### अथ पितृमेधः ।

अथास्मै श्मशानं कुर्वंति । गृहान्वा प्रज्ञानं वा । यो वै कश्च म्रियते । स शवः । तस्मा एतदन्नं करोति । तस्मात् शवान्नम् । शवान्नं ह वै तत् श्मशानमित्याचक्षते । परो श्मशा उ हैव नाम पितॄणां अत्तारः ते ह अमुष्मिन् लोकेऽकृतश्मशानस्य साधुकृत्यामुपदंभयन्ति । तेभ्य एतदन्नं करोति । तस्मात् श्मशान्नम् । श्मशान्नं ह वै तत् श्मशानमित्याचक्षते परोऽक्षम् ॥१॥

अथास्मै श्मशानमिति । अथशब्दः अधिकारार्थः । नानंतर्यार्थः । कुतः ? सर्वमेधेन सह श्मशानकरणस्यानंतर्यानुपपत्तेः । कथं ? सर्वमेधानंतर्ये हि गृह्यमाणे अस्मै इति सर्वमेधयाजी परामृष्टव्यः । न च सर्वमेधयाजी सर्वमेधानंतरं म्रियते । अथापि कथंचित् म्रियेत । तथापि "यो वै कश्च म्रियते स शवस्तस्मा एतदन्नं करोति" इति अविशेषवचनात् अनग्निचितोऽपि श्मशानदर्शनार्थत् । क्षत्रियस्य च सर्वमेधयाजिन एवैतत् श्मशानकरणं, किं तर्हि अविशेषेण । ततश्च सर्वमेधिना सहानंतर्यं नोपपद्यते । परिशेषात्, अधिकारार्थोऽथशब्दः । वाक्योपन्यासार्थो वा । अस्मै इति मृतः प्रतिनिर्दिश्यते । न सर्वमेधयाजी । यो वैश्यादेरुक्थ्यात्करणात् (?) । श्मशानं प्रसिद्धमेव । अस्थिसंरक्षणाय वाऽस्तु । तत् कुर्वंति । य तस्य प्रेतस्य सक्थ्यतायाः (?) । किमात्मकं तत् कुर्यात् इत्यत आह—गृहान्वा । प्रेतस्य गृहान्वै तत्कुर्वंति, यथैवेह तेनास्थीनि रक्ष्यंते एवममुत्र तदपूर्वेण प्रेतो रक्ष्यते गृहैरिवेत्यभिप्रायः । प्रज्ञानं वा । अमुष्य देवदत्तादेरत्रास्थीनि गुप्तानि इत्येतत् प्रज्ञायते येन तत् प्रज्ञानं च कीर्तिवर्द्धनं करणीयमित्यभिप्रायः । यो वै कश्च म्रियते इति प्रयोजनांतरवचनं च । तस्मै एतदन्नं करोति । अस्मिन् कृते एतद्धेतुकं तस्यान्नं भवतीत्यभिप्रायः । तस्माच्च शवान्नम् । तत् शवान्नं च श्मशानमित्याचक्षते परोऽक्षम् । वर्णलोपागमविचारादिनेत्यर्थः । श्मशा नाम पितॄणां दंडपाशिकस्वरूपा अत्तारस्ते च अकृतश्मशानस्य अमुष्मिन् लोके पुण्यकृत्यां उपहिंसंति ॥ १ ॥

१—अत्र "श्मशानम्" इत्यस्य स्थाने "कल्याणं" इति वत्सगोपाकर्मादौ परिपठंति याज्ञिक गणाः । तत्तेषामज्ञानं यतस्ते गृहे श्मशानशब्दो नो वाच्य इति हेतुनैव "कल्याणं" इति पठंति । परं चेयं भावना श्रुतेः परिवर्तते नालम् अतो मूले स्थापितः "श्मशानम्" इत्येव वैदिकः पाठ साधीयान् । इति मन्तव्यम् ॥

(न्त) तद्वै नु क्षिप्रं कुर्य्यात् । (न्ने) नेन्नवमघङ्करवाणीति चिरऽएव कुर्य्या-दघमेव तत्तिरः करोति यत्र समा नानु चन स्मरेयुरश्रुतिमेव तदघ-ङ्गमयति यद्यनुस्मरेयुः ॥ २ ॥

(रु) अयुङ्गेषु सम्वत्सरेषु कुर्य्यात् । (द) अयुङ्गᳫँ हि पितृणामेकनक्षत्र-ऽएकनक्षत्रᳫँ हि पितृणाममावास्यायाममावास्या वाऽएकनक्षत्रमेको हि यद्वेताᳫँ रात्रिᳫँ सर्व्वाणि भूतानि सम्वसन्ति तेनो तङ्काममाप्नोति यः सर्व्वेषु नक्षत्रेषु ॥ ३ ॥

---

तत् वै न क्षिप्रं कुर्यात् । नेन्नवमघं करवाणीति । चिर एव कुर्यात् । अघमेव तत्तिरः करोति । यत्र समा नानु चन स्मरेयुः । अश्रुतिमेव तदघं गमयति । यद्यनु स्मरेयुः ॥ २ ॥

अयुंगेषु संवत्सरेषु कुर्यात् । अयुंगं हि पितॄणाम् । एकनक्षत्रे । एकनक्षत्रं हि पितॄणाम् । अमावास्यायाम् । अमावास्या वा एकनक्षत्रम् । एको हि । यत् उ एतां रात्रिं सर्वाणि भूतानि संवसंति । तेन उ तं काममाप्नोति । यः सर्वेषु नक्षत्रेषु ॥ ३ ॥

---

तद्वै न क्षिप्रम् । क्षिप्रं अचिरमृते न कुर्यात् । नेन्नवं प्रत्यग्रम् अघं पापं करवाणि, प्रत्यग्रे हि अघे स्मर्यमाणे महत् दुःखं भवतीत्यभिप्रायः । तिरः करोति । कालेनान्तर्वर्तते । तथाच—स्मर्यमाणानामपि महत् दुःखं भवतीति । यत्र काले समाः संवसरान् नानुस्मरेयुरपि । अश्रुतिमेव तदघं गमयति । न श्रुतिः श्रुत्यभावः । तत्तेन चिरकरणेन अघं पापकरणं गमयति । चिरात् श्मशानं कुर्वन् मरणं जनवादो न श्रृणोतीत्यर्थः । **यद्यनुस्मरेयुरिति**—यदि चिरादपि कुर्वतः स्मरेयुरेव समाः । ततः ॥ २ ॥

अयुंगेषु । अयुग्मेषु संवत्सरेषु । अयुंगं हि । सर्वमेवोपकरणं पिंडादि, पितॄणाम् । ते अपि हि पितृ-पितामहप्रपितामहाः अयुग्मा एवेति । एकनक्षत्रे । एकं च नक्षत्रं च एकनक्षत्रं, पुष्यः स्वातिर्हस्त इत्यादि । यत्तु द्विवचनबहुवचनांतशब्दादिवाक्यप्रसिद्धं, पुनर्वसू विशाखे कृत्तिका भरण्योऽनूराधा इत्यादि तदनेकनक्षत्रम् । कथं ? पुनरमावास्या एकनक्षत्रं, इत्यत आह—**एको हीति**। मासे एका अमावास्या भवति । न यथा प्रतिपदौ द्वितीये इत्याद्याः । अथवा एका हि सा, उभयोरपि चंद्रार्कयोरायतनं ग्रहायतनत्वसामान्यादेव नक्षत्रमित्यु-च्यते । ननु च श्रद्धानांतरनिमित्ता अपि कामाः निमित्तेऽत्र कथमापद्येरन् इत्यत आह—**यद्वेतामिति** । कथं पुनरेतां रात्रिं सर्वाणि भूतानि संवसंति, तत्र तत् अग्नीषोमात्मकं सर्वमेवेदं भूतम् । सूर्यश्चाग्नेयः, चन्द्रमाः सौम्यभूतः सूर्याचन्द्रमसोः संवासे सर्वाणि भूतानि संवसंतीत्युपपन्नम् ॥ ३ ॥

---

१—पितृमेधः संवत्सरास्मृतौ । का. श्रौ. सू. २१ । ३२ ।

२—अयुग्मेषु वा । ( का. श्रौ. सू. २१ । ३३ । ) व्यवस्थितविकल्पोऽयमस्मर्यमाणेष्वयुग्मेषु । अस्मर्यमाणेषु यदा कदा चेति देवयाज्ञिकाः ।

३—एकनक्षत्रे । का. श्रौ. सू. २१ । ३४ ।

४—अमावास्यायां वा । का. श्रौ. सू. २१ । ३५ ॥

शरदि कुर्य्यात् । ( स्व ) स्वधा वै शरत्स्वधो वै पितॄणामन्नं तदेनमन्ने स्वधायान्दधाति माघे वा मा नोऽघम्भूदिति निदाघे वा नि नोऽघं धीयाताऽइति ॥ ४ ॥

चतुःस्रक्ति । देवाश्चासुराश्चोभये प्राजापत्या दिक्ष्वस्पर्द्धन्त ते देवाऽअसुरान्त्सपत्नान्भ्रातृव्यान्दिग्भ्योऽनुदन्त तेऽदिक्काः पराभवंस्तस्माद्या दैव्यः प्रजाश्चतुःस्रक्तीनि ताः श्मशानानि कुर्व्वतेऽथ याऽआसुर्य्यः प्राच्यास्त्वद्ये त्वत्परिमण्डलानि तेऽनुदन्त ह्येनान्दिग्भ्यऽउभे दिशावन्तरेण विदधाति प्राचीञ्च दक्षिणाञ्चैतस्याᳬ᳭ हि दिशि पितृलोकस्य द्वारं द्वारैवैनम्पितृलोकम्प्रपादयति स्रक्तिभिर्दिक्षु प्रतितिष्ठतीतरेणात्मनाऽवान्तरदिक्षु तदेनᳬ᳭ सर्व्वासु दिक्षु प्रतिष्ठापयति ॥ ५ ॥

---

शरदि कुर्यात् । स्वधा वै शरत् । स्वधा उ वै पितॄणामन्नम् । तदेनमन्ने स्वधायां दधाति । माघे वा । मा नोऽघं भूदिति । निदाघे वा । नि नोऽघं धीयाता इति ॥ ४ ॥

चतुःस्रक्ति । देवाश्चासुराश्च उभये प्राजापत्या दिक्ष्वस्पर्द्धंत । ते देवा असुरान् सपत्नान् भ्रातृव्यान् दिग्भ्योऽनुदंत । तेऽदिक्काः पराभवन् । तस्मात् या दैव्यः प्रजाः । चतुःस्रक्तीनि ताः श्मशानानि कुर्वते । अथ या आसुर्यः । प्राच्यास्त्वद्ये त्वत्परिमंडलानि । तेऽनुदंत ह्येनान् दिग्भ्यः । उभे दिशावंतरेण विदधाति । प्राचीं च दक्षिणां च । एतस्यां हि दिशि पितृलोकस्य द्वारम् । द्वारैवेनं पितृलोकं प्रपादयति । स्रक्तिभिर्दिक्षु प्रतितिष्ठति । इतरेणात्मनाऽवांतरदिक्षु । तदेनं सर्वासु दिक्षु प्रतिष्ठापयति ॥ ५ ॥

---

शरदि कुर्यात् । स्वधा वै शरत् । स्वधेत्यन्ननाम । स्वधा ऋतुः शरत् । तस्यां हि ग्राम्या आरण्या ओषधयः पच्यंते । स्वधा च पितॄणामन्नम् । ततश्च स्वधान्नसामान्यात् शरदि कुर्वंति । मंत्रे, अलं स्वधा मासमानः ( ? ) । माघे वा मा नोऽघं भूदिति मासशब्दो वैशब्देन सादृश्यमस्तीत्यभिप्रायमेतत् ( ? ) । एवं अस्माकम् अघं वीर्येऽतिजीवे द्वितीये तत् स्थाप्येत मा उद्भवेत् इत्येतत्प्रार्थयमानः ॥ ४ ॥

चतुःस्रक्ति । चतुरस्रं श्मशानं कुर्यादिति वर्तते । दिग्भ्योऽनुदंत दिगाधिपत्यादेव । असुराः अदिक्काः दिगाधिपत्यरहिताः परभूताः । तस्माच्च अद्यापि तदनुकारेण या दैव्यः प्रजा देवा भक्तिर्यासां त्रैविद्यालक्षणाः ताः चतुःस्रक्तीनि कुर्वते । अथशब्दः विशेषणार्थः । आसुर्यः । असुरभक्तयः देववेदयज्ञविप्रविद्वेषिण्यः पाखंडागमहेतुवादकुशलाः । प्राच्याश्च जनपदाः ये चान्ये उदीच्यादयः ते परिमंडलानि स्तूपाख्यानि कुर्वते । यस्मात्ते देवा एनानसुरान्द्रिग्भ्योऽनुदन्त दिक्षु भागरहितानेव चक्रुः ।

---

१–निदाघशरन्माघेषु । का. श्रौ. सू. २१ । ३६ ॥
२–दिक्स्रक्ति पुरुषमात्रं मिमीते । का. श्रौ. सू. २१ । ५९ ॥

( त्थ ) अथातो भूमिजोषणस्य । ( स्यो ) उदीचीनप्रवणे करोत्युदींची वै मनुष्याणान्दिक्तुदेनं मनुष्यलोकऽआभजत्येतद्ध वै पितरो मनुष्यलोकऽआभक्ता भवन्ति यदेषाम्प्रजा भवति प्रजा हास्य श्रेयसी भवति ॥ ६ ॥

दक्षिणाप्रवणे कुर्य्यादित्याहुः । ( ई ) दक्षिणाप्रवणो वै पितृलोकस्तुदेनम्पितृलोकऽआभजतीति न तथा कुर्य्यादामीवद्ध नाम तच्छ्मशानकरणं क्षिप्रे हैषामपरोऽनुप्रैति ॥ ७ ॥

दक्षिणाप्रवणस्य प्रत्यर्षे कुर्य्यादित्यु हैकऽआहुः । ( स्त ) तत्प्रत्युच्छ्रितमघम्भवतीति नोऽएव तथा कुर्य्याद्यद्वाऽउदीचीनप्रवणे करोति तदेव प्रत्युच्छ्रितमघम्भवति ॥ ८ ॥

---

अथातो भूमिजोषणस्य । उदीचीनप्रवणे करोति । उदीची वै मनुष्याणां दिक् । तदेनं मनुष्यलोक आभजति । एतत् ह वै पितरो मनुष्यलोक आभक्ता भवंति । यदेषां प्रजा भवति । प्रजा ह आस्य श्रेयसी भवति ॥ ६ ॥

दक्षिणाप्रवणे कुर्यादित्याहुः । दक्षिणाप्रवणो वै पितृलोकः । तदेनं पितृलोक आभजतीति । न तथा कुर्यात् । आमीवत् ह नाम तत् श्मशानकरणम् । क्षिप्रे ह एषामपरोऽनुप्रैति ॥ ७ ॥

दक्षिणाप्रवणस्य प्रत्यर्षे कुर्यादिति उ ह एक आहुः । तत् प्रत्युच्छ्रितमघं भवतीति । नो एव तथा कुर्यात् । यद्वा उदीचीनप्रवणे करोति । तदेव प्रत्युच्छ्रितमघं भवति ॥ ८ ॥

---

तदनुकारेण च तद्भक्तयः प्रजाः कुर्वंति । उभे दिशावंतरेण । ग्रामाद्दक्षिणपूर्वस्यां दिशीत्यर्थः । स्रक्तिभिर्दिक्षु प्रतितिष्ठति । यथा श्मशानं तथा कार्यम् । एवं कुर्वता तेन प्रेतं सर्वासु दिक्षु प्रतिष्ठापयति ॥ ९ ॥

अथातो भूमिजोषणस्य । प्रजा ह अस्य प्रेतस्य श्रेयसी भवति ॥ ६ ॥

दक्षिणाप्रवणे । आमीवत् । आङ् आभिमुख्ये "मीङ् हिंसायाम्"–( धा. पा. दि. आ. ३१ ) तस्मात् भावे क्विप् । अभिमुखगामि मयनं मरणम् आशीतनं ह्यस्य कार्यतयाऽस्ति तत् आमीवत्, तस्मिन् कृते क्षिप्रमेव एषां कर्तॄणामपि कश्चित् अनुप्रैति परलोकम् ॥ ७ ॥

दक्षिणाप्रवणस्य 'प्रत्यर्षे' प्रतिः समीपे । "ऋषी गतौ"–( धा. पा. तु. प. ७ ) समीपं गतं प्रत्यासन्नमित्यर्थः । तस्मिन् दक्षिणासन्ने कुर्यात् । तत्प्रत्युच्छ्रितम् उच्छ्रितेन प्रतीतं प्रत्युच्छ्रितम् । उच्छ्रितं नष्टे चेत्युभयमघसरणं दिङ्निमित्तं भवति च्छन्नं च । तदयुक्तं अनिष्टचिह्नत्वात् इत्यभिप्रायः । यद्वै उदीचीनप्रवणेन क्रियमाणं दक्षिणेनोच्छ्रितेन देशेन क्रियत एवेत्यभिप्रायः ॥ ८ ॥

---

१–दक्षिणाप्रवण एके । का. श्रौ. सू. २१ । ४८ ।
२–उदक्प्रवणे । का. श्रौ. सू. २१ । ४७ ।

यस्यैव समस्य सतः । ( तो ) दक्षिणतः पुरस्तादाप ऽएत्य सꣳस्थाया-प्रघ्नत्य ऽएतान्दिशमभिनिष्पद्याक्षय्या ऽआपो ऽपिपद्येरंस्तत्कुर्य्यादन्नम्वा ऽआपो ऽन्नाद्यमेवास्मा ऽएतत्पुरस्तात्प्रत्यग्दधात्यमृतमु वा ऽआप ऽएषो ह जीवानां दिगन्तरेण सप्तर्षीणाञ्चोदयनमादित्यस्य चास्तमयनममृतमेव तज्जीवेषु दधाति तद्धैतत्प्रतिमीवन्नाम श्मशानकरणं जीवेभ्यो हितं यद्वाव जीवेभ्यो हितन्तत्पितृभ्यः ॥ ९ ॥

कम्वति कुर्य्यात् । (त्कु) कम्मे ऽसदित्यथो शम्वति शम्मे ऽसदिति नाधि-पथङ्कुर्य्यान्नाकाशे नेदाविरघङ्करवाणीति ॥ १० ॥

---

यस्यैव समस्य सतो दक्षिणतः पुरस्तादाप एत्य । संस्थाय । अप्रघ्नत्यः । एतां दिशमभिनि-ष्पद्य । अक्षय्या आपोऽपिपद्येरन् । तत् कुर्यात् । अन्नं वा आपः । अन्नाद्यमेवास्मै एतत् पुरस्तात् प्रत्यग्दधाति । अमृतम् उ वा आपः । एषा उ ह जीवानां दिगंतरेण । सप्तर्षीणां चोदयनम् । आदि-त्यस्य चास्तमयनम् । अमृतमेव तज्जीवेषु दधाति । तद्धैतत् प्रतिमीवन्नाम श्मशानकरणं जीवेभ्यो हितम् । यद्वाव जीवेभ्यो हितम् तत्पितृभ्यः ॥ ९ ॥

कंवति कुर्यात् । कं मेऽसदिति । अथो शंवति । शंमेऽसदिति । नाधिपथं कुर्यात् । नाकाशे । नेदाविरघं करवाणीति ॥ १० ॥

---

यस्यैव समस्य सतः । यस्य देशस्य दक्षिणपार्श्वादादः पुरस्तादागत्य तत्रैव संस्थाय । अप्रघ्नत्यः । भूमिम् अप्रविशत्यः । शनैः पश्चिमोत्तरां दिशं प्रतिपन्नया दिशा निष्पद्य निर्गम्य अक्षय्याः अनावृष्टावपि या न क्षीयंते आपः ता अपः अपिपद्येरन् प्राप्नुयुः संगच्छेयुः । तत्कुर्यात् । एवं कुर्वन्नन्नाद्यमेवास्मै प्रेताय ताभिः एतत् पुरस्तात् प्रत्यक् प्रति संभोक्तुरभिमुखं दधाति । एषा उ ह । एषा च जीवानां जीवतां हि हिता दिक् पश्चिमा । ( ईश्वरः तस्यां हि प्रायणमयात् कायात् चिरायुषः समृद्धाश्च मनुष्या हूणादयो भवंति ? ) । तद्धैतत् प्रतिमीवन्नाम । प्रतिगतं समीपभागमवपन्नं तथा, आगामि प्रतिमीतं यस्य कार्यतया तत् प्रतिमीवत् । ईदृशं च जीवेभ्यो हि हितं जीवहितं च पितृभ्यो हितम् । जीवोऽपि जीवित्वात् पितॄणाम् ॥ ९ ॥

कंवति । करीषवति । शंवति सुखवति वा । यत्र तिष्ठति सुखं भवति समीवति मनुरागतानां दुःखस्यान्येति(?) नाधिपथम् । षष्ठीविभक्त्यर्थे अधिशब्दः पथिशब्देन च समस्यते । अव्ययीभावश्च समासो भवति । आकाशे वृक्षगुल्मादिभी रहिते । नेत् आविः सर्वलोकप्रकाशं अघं अप्सु चिह्नं करवाणीति ॥ १० ॥

---

१–समे वा । शंवति कंवति वा । का. श्रौ. सू. २१ । ५३ ।

२–अदर्शनाद्ग्रामात् । आरातपथः । का. श्रौ. सू. २१ । ५० ।

गुहा सुदवतापि स्यात् । ( त्त ) तद्यद्गुहा भवत्यघमेव तद्गुहा करोत्युथ युदवताप्यसौ वाऽआदित्यः पाप्मनोऽपहन्ता सऽएवास्मात्पाप्मानमुपहन्त्युथोऽआदित्यज्योतिषमेवैनङ्करोति ॥ ११ ॥

न तुस्मिन्कुर्य्यात् । ( द्यु ) यस्येत्थादनूकाशः स्याद्याचमानᳶ ह नाम तत्क्षिप्रे हैषामुपरोऽनुप्रैति ॥ १२ ॥

चित्रं पश्चात्स्यात् । (त्प्र) प्रजा वै चित्रं चित्रᳶ हास्य प्रजा भवति यदि चित्रन्न स्यादापः पश्चाद्वोत्तरतो वा स्युरापो ह्येव चित्रञ्चित्रᳶ हैवास्य प्रजा भवति ॥ १३ ॥

( त्यू ) ऊषरे करोति । रेतो वाऽऊषाः प्रजननन्तदेनम्प्रजननऽआभजत्येतद्ध वै पितरः प्रजननऽआभक्ता भवन्ति यदेषाम्प्रजा भवति प्रजा हास्य श्रेयसी भवति ॥ १४ ॥

---

गुहा सदवतापि स्यात् । तद्यत् गुहा भवति । अघमेव तत् गुहा करोति । अथ यदवतापि । असौ वा आदित्यः पाप्मनोऽपहंता । स एवास्मात्पाप्मानमपहंति । अथो आदित्यज्योतिषमेवैनं करोति ॥ ११ ॥

न तस्मिन् कुर्यात् । यस्येत्थादनूकाशः स्यात् । याचमानं ह नाम तत् । क्षिप्रे ह ए षामपरोऽनुप्रैति ॥ १२ ॥

चित्रं पश्चात् स्यात् । प्रजा वै चित्रम् । चित्रं ह अस्य प्रजा भवति । यदि चित्रं न स्यात् आपः पश्चाद्वोत्तरतो वा स्युः । आपो ह्येव चित्रम् । चित्रं हैवास्य प्रजा भवति ॥ १३ ॥

ऊषरे करोति । रेतो वा ऊषाः प्रजननम् । तदेनं प्रजनन आभजति । एतत् ह वै पितरः प्रजनन आभक्ता भवंति । यदेषां प्रजा भवति । प्रजा ह अस्य श्रेयसी भवति ॥ १४ ॥

---

गुहा सत् । गुहाग्रं वृक्षगुल्मादिसंवृतं सत् अवतापि स्यात् अधोतापि स्यात् । गहनप्रदेशम पि अतीत्य तताप अतः सः अस्मिन् विद्यत इति अवतापि । तस्मिन् कुर्यात् ॥ ११ ॥

इत्थात्पार्श्वतः यस्य श्मशानस्य अनूकाशः अवकाशः स्यात् । तस्मिन् कुर्यात् ॥ १२ ॥

चित्रं दर्शनीयं वनगिरिदेवगृहादि । प्रजा वै चित्रं दर्शनीयत्वसामान्यात् ॥ १३ ॥

( ततो ) मन्वच्चीयः ऊषरे ऊषाः क्षारमृत्तिकाः संति यत्र तत् ऊषरम् । रेतः रेतसः कारणं वै ऊषाः । ऊषैर्हि पशवः पुष्यंति । पुष्टानां रेतो भवति तच्च प्रजननम् ॥ १४ ॥

---

१–कक्षेऽवतापिनि । का. श्रौ. सू. २१ । ४६ ।
२–चित्रं पश्चात् । तदभाव उदकम् । उत्तरतो वा । का. श्रौ. सू. २१ । ५४–५६ ।
३–ऊषरे । का. श्रौ. सू. २१ । ४७ ।

समूले। समूलᳪं हि पितॄणाम्वीरिणमिश्रऽएतद्धास्याः पित्र्यमनतिरिक्तमथोऽअघमेव तद्बद्धं करोति ॥ १९ ॥

न भूमिपाशमभिविदध्यात् । (न) न शरन्नाश्मगन्धान्नाध्याण्डान्न पृश्निपर्णीन्नाश्वत्थस्यान्तिकङ्कुर्य्यान्न बिभीतकस्य न तिल्वकस्य न स्फूर्ज्जकस्य न हरिद्रोर्न्न न्यग्रोधस्य ये चान्ये पापनामानो मङ्गलेप्सया नाम्नामेव परिहाराय ॥ १६ ॥

(याथा) अथातऽआवृदेव । (वा) अग्निविधयाऽग्निचितः श्मशानङ्करोति यद्वै यजमानोऽग्निञ्चिनुतेऽमुष्मै तल्लोकाय यज्ञेनात्मानᳪं सᳪंस्कुरुतऽएतदु ह यज्ञियङ्कर्म्मासᳪंस्थितमा श्मशानकरणात्तद्यदग्निविधयाऽग्निचितः श्मशानङ्करोत्यग्निचित्यामेव तत्सᳪंस्थापयति ॥ १७ ॥

---

समूले। समूलं हि पितॄणाम् । वीरिणमिश्रे । एतत् ह अस्याः पित्र्यमनतिरिक्तम् । अथो अघमेव तत् बद्धं करोति ॥ १९ ॥

न भूमिपाशमभिविदध्यात् । न शरत् । नाश्मगन्धान् । नाध्यांडान् । न पृश्निपर्णीन् । नाश्वत्थस्यांतिकं कुर्यात् । न बिभीतकस्य । न तिल्वकस्य । न स्फूर्जकस्य । न हरिद्रोः । न न्यग्रोधस्य । ये चान्ये पापनामानः । मंगलेप्सया नाम्नामेव परिहाराय ॥ १६ ॥

अथात आवृदेव । अग्निविधयाऽग्निचितः श्मशानं करोति । यत् वै यजमानोऽग्निं चिनुते । अमुष्मै तल्लोकाय यज्ञेनात्मानं संस्कुरुते । एतत् उ ह यज्ञियं कर्म असंस्थि तम् आ श्मशानकरणात् । तत् यदग्निविधयाऽग्निचितः श्मशानं करोति । अग्निचित्यामेव तत् संस्थापयति ॥ १७॥

---

'समूले' सन्ति यत्रौषधीनां मूलानि तत् समूलम् । (हि योग्यमित्यागः १) । पित्र्यं पितृदेवत्यम् । अनतिरिक्तं अन्यस्यासाधारणं, पितॄणामित्यर्थः । बद्धं साधु । भूमिं वीरिणवत् बध्नातीति बद्धं च्छिद्रमसवारीत्यर्थः (१) ॥ १९ ॥

न भूमिपाशम् । पूर्ववत् भूमौ विशेषः । तमति न विद्यात् । तद्वति देशे न कुर्यात् । आध्यांडाशाने सदृशफलो गुच्छः । पापनामानः । एते श्लेष्मातककोविदारादयः । मंगलानां प्राप्तीच्छया । नामान्यपि अमंगलानि परिहर्तुं एतेषामंतिकं न कुर्यात् ॥ १६ ॥

अथात आवृदेव । अग्निविधयेति । अस्याग्नेर्विधा प्रकारः तया अग्निचितः श्मशानं करोति वक्ष्यमाणं

---

१--कर्षूवीरिणवति । का. श्रौ. सू. २१ । ५७ ।

२--चितिवच्च । (का. श्रौ. सू. २१ । ५२ । ) वितानः साधयित्वा समे बहुलतृणेऽन्तराग्नी चितिं चिनोति । उद्धृत्य क्षीरिणीः पश्चाद्धर्ताः । विशाखशराश्मगंधापृश्निपर्ण्यध्याण्डाश्च । का. श्रौ. सू. २५ । १६५–१६७ ।

३--न्यग्रोधाश्वत्थतिल्वकहरिद्रुस्फूर्जकबिभीतकपापनामभ्यश्च । का. श्रौ. सू. २१ । ५१ ।

तद्वै नु महुत्कुर्य्यात् । ( न्ते ) नेन्महद्दघुङ्करवाणीति यावानपक्षपुच्छोऽग्निस्तावत्कुर्य्यादित्यु हैकऽआहुः समानो ह्यस्यैषऽआत्मा यथैवाग्नेस्तथेति ॥ १८ ॥

पुरुषमात्रं त्वेवु कुर्य्यात् । ( त्त ) तथाऽ परस्माऽअवकाशन्नु करोति पश्चाद्वरीयः प्प्रजा वै पश्चात्प्रजामेव तद्वरीयसीङ्कुरुतऽउत्तरतो व्वर्षीयः प्प्रजा वाऽउत्तरा प्प्रजामेव तद्वर्षीयसीङ्कुरुते तद्विधायापसलवि सृष्टाभि स्पन्द्याभिः पर्य्यातनोत्यपसलवि पित्र्यꣳ हि क्कर्म ॥ १९ ॥

---

तद्वै न महत् कुर्यात् । नेन्महद्दघं करवाणीति । यावानपक्षपुच्छोऽग्निः । तावत् कुर्यादिति उ ह एक आहुः । समानो ह्यस्यैष आत्मा यथैवाग्नेस्तथेति ॥ १८ ॥

पुरुषमात्रं त्वेव कुर्यात् । तथाऽ परस्मा अवकाशं न करोति । पश्चाद्वरीयः । प्रजा वै पश्चात् । प्रजामेव तद्वरीयसीं कुरुते । उत्तरतो वर्षीयः । प्रजा वा उत्तरा । प्रजामेव तद्वर्षीयसीं कुरुते । तद्विधाय, अपसलवि सृष्टाभिः स्पंद्याभिः पर्यातनोत्यपसलवि पित्र्यं हि कर्म ॥ १९ ॥

---

आग्नेयाग्निविधानं कर्षणपरिश्रितपरिश्रयणसर्वौषधवपनेष्टकोधरेधानादीनां अग्निविधानां अग्निचिद्विषयत्ववचनं नान्यस्य अग्निविधाप्रापणार्थं हि एक एवार्थो विधीयत इति तथा अग्निचित इति वा । अग्निविधयेति वा अर्थद्वयं विधीयते । सात्तविध्यादीनां वा । अत्र बहूनामग्निकर्मणामसंभव इति । अग्निचित इति च प्रकृतस्यैव प्रकारस्याग्निचिद्विषयत्वं उपसंहरिष्यति । यज्ञियं यज्ञसंबद्धं कर्म । कर्मसमूहः अपरिसमाप्तः इति ब्रुवन् प्रेतार्थमेवेदमिति दर्शयति । ननु च असंस्थितवचनानीति कर्मांगमेवेदमिति विज्ञायेत । नैतदेवं न हि उत्पत्तिवाक्ये श्मशानकरणे येन वा शेषात्कर्मांगता तस्येति । किंतु "तस्मै एतदन्नं करोति" ( कं. १ ) इत्यवगम्यते प्रयोजनम् । प्रयोगांगेषु च समाप्तेषु कर्मसु यदसंस्थितवचनं यथा "अग्निचित्यामेव तत् संस्थापयति" इति संस्थापनवचनं तत् संस्थासादृश्यात् भाक्तमिति गम्यते ॥ १७ ॥

तद्वै न महत् । अर्थप्राप्तस्य महत्त्वस्य प्रतिषेधानुवादः । उत्तरविध्युपन्यासार्थः ॥ १८ ॥

पश्चाद्वरीयः । उरुतरं पृथुतरं करोतीति । उत्तरतो वर्षीयः । वृद्धतरं दीर्घतरं कुर्यात् । तद्विधाय, पुरुषमात्रं स्थानं दिक्स्रक्ति कल्पयित्वा । अपसलवि सृष्टाभिर्हि ताभिः स्पंद्याभिः रज्जुभिः पर्यातनोति परिवेष्टयति कथं अपसलवि अप्रदक्षिणं पर्यातनोति कस्मात् पित्र्यमिदं कर्म ॥ १९ ॥

---

१--दिक्स्रक्ति पुरुषमात्रं मिमीते । उत्तरतः पृथु पश्चाच्च । ( का. श्रौ. सू. २१ । ५९ । ६० । ) अत्रोत्तरपश्चाच्छब्दौ ईशानवायव्यपार्श्वयोर्लक्षकौ । क्षेत्रस्य दिक्कोणत्वात् प्राणभृदुपधानवत् । यथा अथ पश्चादिति विहिताः प्राणभृतो वायव्यकोण उपधीयन्ते । अथोत्तरत इति विहिताश्चैशानकोणे । एवमत्रापीत्यर्थः । इति देवयाज्ञिकभाष्यम् ।

( र्म्मा ) अथोद्धन्तवाऽआह । स यावत्येव निवप्स्यन्त्स्यात्तावदुद्धन्यात्पुरुषमात्रं त्वेवोद्धन्यात्तथाऽपरस्माऽअवकाशन्न करोत्यथोऽओषधिलोको वै पितरऽओषधीनाᳬ᳭ँ ह मूलान्युपसर्प्पन्त्यथो नेदस्याऽअन्तर्हितोऽसदिति ॥ २० ॥

इति चतुर्थप्रपाठके चतुर्थं ब्राह्मणम् ॥ १३।४।४ ॥ ( ८–१ )

अन्तर्द्धायो हैके निवपन्ति । देवाश्चासुराश्चोभये प्राजापत्याऽअस्मिँल्लोकेऽस्पर्द्धन्त ते देवाऽअसुरान्त्सपत्नान्भ्रातृव्यानस्माल्लोकादनुदन्त तस्माद्या दैव्यः प्रजाऽअनन्तर्हितानि ताः श्मशानानि कुर्व्वतेऽथ याऽआसुर्य्यः प्राच्यास्त्वद्ये त्वदन्तर्हितानि ते चम्वान्त्वद्यस्मिँस्त्वत् ॥ १ ॥

---

अथोद्धंतवा आह । स यावत्येव निवप्स्यन् स्यात् । तावदुद्धन्यात् । पुरुषमात्रं त्वेवोद्धन्यात् । तथाऽपरस्मा अवकाशन्न करोति । अथो ओषधिलोको वै पितरः । ओषधीनां ह मूलान्युपसर्पंति । अथो नेदस्या अंतर्हितोऽसादिति ॥ २० ॥

अंतर्द्धाय उ ह एके निवपंति । देवाश्चासुराश्च उभये प्राजापत्या अस्मिन् लोकेऽस्पर्द्धंत । ते देवा असुरान् सपत्नान् भ्रातृव्यान् अस्माल्लोकादनुदंत । तस्मात् या दैव्यः प्रजाः । अनंत-

---

अथोद्धंतवै । तदूर्ध्वं हंतवै हंतव्यं श्मशानस्थानं आह ब्रूयात् । स यावति एतद्देशे महति वा अपक्षपुच्छकाग्निमात्रे वा अस्थीनि निवप्स्यन् स्यात् तावदुद्धन्यात् । लांगलेन कृषेदिति हेयकल्पोपन्यासः । पुरुषमात्रं त्वेवोद्धन्यात् । यावत्येव हि निवपति तावदेव च करोतीति स्थितकल्पः । तथाऽपरस्मै अपरस्मै प्रेताय अवकाशं न करोति । यदि कुर्यात् । ततः कृतावकाशोऽन्योऽपि प्रेयादित्यभिप्रायः । अथो ओषधिलोको वै पितर इति । उद्धननार्थवादः । ओषधिस्थानाः पितरः । कथं ? ओषधीनां हि लाभे उपगच्छंति पितरः । कथं ? ते हि धूमादिक्रमेण चंद्रं प्राप्य प्रत्यावृत्ता आकाशवायुवृष्टिक्रमेण पृथिवीं प्राप्य स्थावरजंगमरूपेण वर्तमाना ओषधीनां मूलान्युपसर्पंति । तेभ्योऽपि मूलेभ्यस्ताः प्ररोहन्ति अपि तु शीघ्रमेव पुष्यंति । वेवपतः प्ररोहंतीत्यभिप्रायः(?) । ततश्च ओषधिमूले शरीरात्पूर्वावस्थितान् पितॄन् तस्मात् स्थानादधीतीयत्तत्रान्यन्विवेशयतीत्यभिप्रायः (?) । यथोक्तं–" तद्यद्व्युदूहत्यवसितानेव तद्व्युदूहति नेदवसितानध्यवस्यानीति " ( श. प. ७ । १।१।१ ) इति । अथो नेदस्याः । अस्याः पृथिव्याः ओषधीभिः अंतर्हितोऽयं प्रेतः नेत् असदिति । अतो वै द्रववत्या एव विकर्षणार्थोऽर्थवादः । ( अतोऽन्ये वेद किंचिदुब्ददमन्त्रस्य विधानात् ) । अस्य वचनस्यान्यपरत्वात् ॥ २० ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये त्रयोदशे काण्डे अष्टमेऽध्याये प्रथमं ब्राह्मणम् ॥ १३ । ८ । १ ॥

अंतर्द्धायो हैके । पृथिव्यां किंचिद्व्यवहितैरिष्टकान्तर्द्धानमभिधाय तस्मिन्नेकस्था निनिपंति वृतवस्त्रपृथिव्यां वा कस्मिंश्चित्पर्वणि ॥ १ ॥

( ड ) अथैनत्परिश्रिद्भिः परिश्रयति । या एवामूः परिश्रितस्ता एता यजुषा ताः परिश्रयति तूष्णीमिमा दैवञ्चैव तत्पित्र्यञ्च व्याकरोत्यपरिमिताभिरपरिमितो ह्यसौ लोकः ॥ २ ॥

(ओऽथै) अथैनत्पलाशशाखया व्युदूहति । यदेवादो व्युदूहनन्तदेतदपेतो यन्तु पणयोऽसुम्ना देवपीयवऽइति पणीनेवैतदसुम्नान्देवपीयूनसुररक्षसान्यस्माल्लोकादपहन्त्यस्य लोकः सुतावतऽइति सुतवान्हि यऽईजानो द्युभिरहोभिरक्तुभिर्व्यक्तमिति तदेनमृतुभिश्चाहोरात्रैश्च सलोकङ्करोति ॥ ३ ॥

यमो ददात्ववसानमस्माऽइति । यमो ह वाऽअस्यामवसानस्येष्टे तमेवास्माऽअस्यामवसानं याचति तान्दक्षिणोदस्यत्युदगितरान्दैवञ्चैव तत्पित्र्यञ्च व्याकरोति ॥ ४ ॥

(त्यु) अथ दक्षिणतः सीरं युनक्ति । ( त्त्यु ) उत्तरतऽइत्यु हैकऽआहुः स यथा कामयेत तथा कुर्य्याद्युङ्क्तेति सम्प्रेष्याभिमन्त्रयते सविता ते शरीरेभ्यः पृथिव्यां लोकमिच्छत्विति सवितैवास्यैतच्छरीरेभ्यः पृथिव्यां

---

हिंतानि ताः श्मशानानि कुर्वते । अथ आसुर्यः । प्राच्यास्त्वचे त्वदंतर्हितानि । ते चम्वां त्वद् यस्मिंस्त्वत् ॥ १ ॥

अथैनत् परिश्रिद्भिः परिश्रयति । या एवामूः परिश्रितः । ता एताः । यजुषा ताः परिश्रयति । तूष्णीमिमाः । दैवं चैव तत्पित्र्यं च व्याकरोति । अपरिमिताभिः । अपरिमितो ह्यसौ लोकः ॥ २ ॥

अथैनत्पलाशशाखया व्युदूहति । यदेवादो व्युदूहनं–तदेतत्–" अपेतो यंतु पणयोऽसुम्ना देवपीयवः " इति । पणीनेवैतदसुम्नान्देवपीयूनसुररक्षसान्यस्माल्लोकादपहंति–" अस्य लोकः सुतावतः "–( वा. सं. ३५ । १ ) इति । सुतवान् हि य ईजानः । " द्युभिरहोभिरक्तुभिर्व्यक्तम् "–इति । तदेनमृतुभिश्चाहोरात्रैश्च सलोकं करोति ॥ ३ ॥

"यमो ददात्ववसानमस्मै"–( वा. सं. ३५ । १ ) इति । यमो ह वा अस्यामवसानस्येष्टे । तमेवास्मा अस्यामवसानं याचति । तां दक्षिणोदस्यति । उदगितराम् । दैवं चैव तत्पित्र्यं च व्याकरोति ४

अथ दक्षिणतः सीरं युनक्ति । उत्तरत इति उ ह एक आहुः । स यथा कामयेत तथा कुर्यात् । युंक्तेति संप्रेष्य अभिमंत्रयते–" सविता ते शरीरेभ्यः पृथिव्यां लोकमिच्छतु " इति । सवितैवास्यैतच्छरीरेभ्यः पृथिव्यां लोकमिच्छति–" तस्मै युज्यंतामुस्रियाः "–( वा. सं. ३५ । २ ) इति । एतस्मा उ हि कर्मण उस्रिया युज्यंते ॥ ५ ॥

---

अथैनत्परिश्रिद्भिः परिश्रयति । या एवामूः परिश्रितः । यत्प्रयोजना एवामूः आश्रिताः परिश्रितः तत्प्रयोजना एवैताः ॥ २ ॥

अथैनत्पलाशशाखया व्युदूहति । यदेवादः । यत्प्रयोजनमेवामुष्मिन् व्युदूहनं तत्प्रयोजनमेवैतत् । पणयः

लोकमिच्छति तस्मै युज्यन्तामुस्रियाऽइत्येतस्माऽउ हि कर्म्मणऽ उस्रिया युज्यन्ते ॥ ५ ॥

षड्गवम्भवति । षड्ऋतवः सम्वत्सरऽऋतुष्वेवैनमेतत्सम्वत्सरे प्रतिष्ठायाम्प्रतिष्ठापयति तदपसलवि पर्य्याहृत्योत्तरतः प्रतीचीम्प्रथमाꣳ सीताङ्कृषति व्वायुः पुनात्त्विति सविता पुनात्त्विति जघनार्द्धेन दक्षिणाऽ ग्नेर्भ्राजसेति दक्षिणार्द्धेन प्राचीꣳ सूर्य्यस्य व्वर्चसेत्यग्रेणोदीचीम् ॥ ६ ॥ शतम् ६८०० ॥

(अ)चतस्रः सीता यजुषा कृषति । तद्यच्चतसृषु दिक्ष्वन्नन्तस्मिन्नेवैनमेतत्प्रतिष्ठापयति तद्वै यजुषाऽद्धा वै तद्यद्यजुरद्धो तद्यदिमा दिशः ॥ ७ ॥

( शोऽथा ) अथात्मानम्विकृषति । तद्यदेव सम्वत्सरेऽन्नन्तस्मिन्नेवैनमेतत्प्रतिष्ठापयति तूष्णीमपरिमिताभिरपरिमितो ह्यसौ लोकः ॥ ८ ॥

( क्रोऽथै ) अथैनद्विमुञ्चति । कृत्वा तत्कर्म्म यस्मै कर्म्मणऽएनद्युङ्क्ते विमुच्यन्तामुस्रियाऽइत्येतस्माऽउ हि कर्म्मणऽ उस्रिया युज्यन्ते तद्दक्षिणोदस्यत्युदगितरद्दैवञ्चैव तत्पित्र्यञ्च व्याकरोति ॥ ९ ॥

इति चतुर्थप्रपाठके पञ्चमं ब्राह्मणम् ॥ १३।४।५ ॥ (८-२)

---

षड्गवं भवति । षड् ऋतवः संवत्सरः । ऋतुष्वेवैनमेतत् संवत्सरे प्रतिष्ठायां प्रतिष्ठापयति । तदपसलवि पर्याहृत्य उत्तरतः प्रतीचीं प्रथमां सीतां कृषति-"वायुः पुनातु"-इति । "सविता पुनातु"-इति जघनार्द्धेन दक्षिणा । "अग्नेर्भ्राजसा"-इति दक्षिणार्द्धेन प्राचीम् । "सूर्यस्य वर्चसा"-( वा. सं. ३५ । ३ । ) इत्यग्रेणोदीचीम् ॥ ६ ॥

चतस्रः सीता यजुषा कृषति । तत् यत् चतसृषु दिक्ष्वन्नम् । तस्मिन्नेवैनमेतत् प्रतिष्ठापयति । तत् वै यजुषा । अद्धा वै तत् । यत् यजुः । अद्धा उ तत् । यत् इमा दिशः ॥ ७ ॥

अथात्मानं विकृषति । तद्यदेव संवत्सरेऽन्नम् । तस्मिन्नेवैनमेतत् प्रतिष्ठापयति । तूष्णीमपरिमिताभिः । अपरिमितो ह्यसौ लोकः ॥ ८ ॥

अथैनत् विमुञ्चति । कृत्वा तत्कर्म । यस्मै कर्मण एनत् युंक्ते-"विमुच्यंतामुस्रियाः" ( वा. सं. ३५।२ ) इति । एतस्मा उ हि कर्मण उस्रिया युज्यंते । तद्दक्षिणोदस्यति । उदगितरत् । दैवं चैव तत्पित्र्यं च व्याकरोति ॥ ९ ॥

---

"पण व्यवहारे" ( धा.पा.भ्वा.उ. ४४० ) व्यवहारप्रधानाः । देवपीयवः पीयनं पीयुः "पीयतिर्हिंसाकर्मा" देवानां ( निंदादिति । ) हिंसाकर्तॄन् ॥ ३-९ ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये त्रयोदशे काण्डे अष्टमेऽध्याये द्वितीयं ब्राह्मणम् ॥ १३ । ८ । २ ॥

अथ सर्व्वौषधुम्वपति । युदेवाहुः सर्व्वौषधन्तुदेतुद्बह्वीभिस्तद्वपत्येकये-दन्दैवञ्चैव तत्पित्र्यञ्च व्याकरोत्यश्वत्थे वो निषुदनम्पर्णे वो व्वसतिष्कृ-तेति ज्योग्जीवातुमेवैभ्यऽएतदाशास्ते तुथो हैषामेकैकोऽपरो जरसा-ऽनुप्रैति ॥ १ ॥

( त्यु ) अथैनन्निवपति । ( ती ) इयम्वै पृथिवी प्रतिष्ठाऽस्यामेवैनमेतु-त्प्रतिष्ठायाम्प्रतिष्ठापयति पुराऽऽदित्यस्योदयात्तिरऽइव वै पितरस्तिरऽ इव रात्रिस्तिरऽएव तत्करोति यथा कुर्व्वतोऽभ्युदियात्तदेनमुभयोरहो-रात्रयोः प्रतिष्ठापयति ॥ २ ॥

---

अथ सर्वौषधं वपति। यदेवादः सर्वौषधम् । तदेतत् । बह्वीभिस्तद्वपति । एकयेदम् ।दैवं चैव तत् पित्र्यं च व्याकरोति–" अश्वत्थे वो निषदनं पर्णे वो वसतिष्कृता "–( वा. सं. ३५।४ ) इति । ज्योग्जीवातुमेवैभ्य एतदाशास्ते । तथा उ ह एषामेकैकोऽपरो जरसाऽनुप्रैति ॥ १ ॥

अथ ह एनं निवपति । इयं वै पृथिवी प्रतिष्ठा ।अस्यामेवैनमेतत् प्रतिष्ठायां प्रतिष्ठापयति । पुरा-ऽऽदित्यस्योदयात् । तिर इव वै पितरः । तिर इव रात्रिः । तिर एव तत् करोति । यथा कुर्वतो-ऽभ्युदियात् । तदेनमुभयोरहोरात्रयोः प्रतिष्ठापयति ॥ २ ॥

---

अथ सर्वौषधं वपति । यदेवादः आग्निकम् । बह्वीभिर्ऋग्भिः " या ओषधीः " इत्येताभिः ( वा. सं. १२ । ७५–८९ ) यद्वपति तत् । एकया " अश्वत्थे वः " इत्येतया इदं वपति । ज्योक् चिरं जीवातुं जीवनम् एभ्यो जीवेभ्यः । एतत् आशास्ते प्रार्थयते । यददः ओषधीरेवमाह । चंद्रमसि युष्माकं धामानीति । एवं च ( पूर्वकल्पितापुरुषसंतभजनार्थं तु पृथिवी तु पृथिवीभाजो यूयं भूता इति ? ) तथा च कृते एषां जीवानां मध्ये एकैकः अपरः अन्यः जरसा जरया हेतुना जीर्णः सन् अनुक्रमेण प्रैति । न च–बहवो युगपत्, न वा अस्थ-विराः, न वा अक्रमेण इत्यर्थः ॥ १ ॥

अथैनं निवपति । एनं प्रेतमस्थिनिधानं कुम्भान्ते श्मशानक्षेत्रमध्ये नीचैर्वपति क्षिपति, कुतः एतदस्थ्य-वस्थमिति श्मशानस्यास्थिरक्षणार्थत्वात् । चिरप्रेतस्यास्थ्यवस्थैव संभवति नान्या ॥ २ ॥

---

१–अश्वत्थे व इति सर्वौषधं वपति । का. श्रौ. सू. २१ । ७० ।

२–सविता त इति शरीराणि निवपति मध्ये । का. श्रौ. सू. २१ । ७१ । मध्ये कुष्टमध्ये इत्यर्थः । यथा कुर्वतोऽभ्युदियां-त्सूर्यः । का. श्रौ. सू. २१ । ४५ । कुष्टमध्ये सविता त इति शरीरनिवपनं सूर्योदयसमकालं कर्तव्यम् । अर्थाच्चातः पूर्वं कर्म प्राक् सूर्योदयाद्यथा भवेत्तथा यत्नः कर्तव्यः ॥

सविता ते शरीराणि । मातुरुपस्थऽआवपत्विति सवितैवास्यैतच्छरीराण्यस्यै पृथिव्यै मातुरुपस्थऽआवपति तस्मै पृथिवि शम्भवेति यथैवास्माऽइयꣳ शꣳ स्यादेवमेतदाह प्रजापतौ त्वा देवतायामुपोदके लोके निदधाम्यसाविति नाम गृह्णात्ययम्वै लोकऽउपोदकस्तदेनम्प्रजापतौ देवतायामुपोदके लोके निदधाति ॥ ३ ॥

(त्यु)अथ कञ्चिदाह । (है) एतान्दिशमनवानन्त्सृत्वा कुम्भम्प्रक्षीयानपेक्षमाणऽएहीति तत्र जपति परं मृत्योऽअनुपरेहि पन्थां यस्तेऽ अन्यऽइतरो देवयानात् । चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजाꣳ रीरिषो मोत वीरानिति ज्योग्जीवातुमेवैभ्यऽ एतदाशास्ते तथो हैषामेकैकोऽपरो जरसाऽनुप्रैति ॥ ४ ॥

---

" सविता ते शरीराणि मातुरुपस्थ आवपतु "–इति । सवितैवास्यैतच्छरीराण्यस्यै पृथिव्यै मातुरुपस्थ आवपति । " तस्मै पृथिवि शं भव "–( वा. सं. ३५ । ५। ) इति । यथैवास्मा इयं शं स्यात् । एवमेतदाह–" प्रजापतौ त्वा देवतायामुपोदके लोके निदधामि, असौ "–( वा. सं. ३५ । ६ ) इति नाम गृह्णाति । अयं वै लोक उपोदकः । तदेनं प्रजापतौ देवतायामुपोदके लोके निदधाति ॥ ३ ॥

अथ कंचिदाह–एतां दिशमनवानन् सृत्वा, कुंभं प्रक्षीय, अनपेक्षमाण एहीति । तत्र जपति–" परं मृत्यो अनुपरेहि पंथां यस्ते अन्य इतरो देवयानात् । चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजां रीरिषो मोत वीरान् "–( वा.सं.३५।७ ) इति । ज्योग्जीवातुमेवैभ्य एतदाशास्ते । तथा उ ह एषामेकैकोऽपरो जरसाऽनुप्रैति ॥ ४ ॥

---

' सविता ते ' । सविता ते शरीराणि आवपतु । " अथैनं यथाङ्गं कल्पयति " इति ( कं.४ ) वचनात् । यथा एतस्मै प्रेताय इयं पृथिवी शं सुखं सुखहेतुः स्यात् । एवमेतदाह–तस्मै पृथिवि शं भवेति ॥ ३ ॥

अथ कंचिदाह–कंचित् प्रकृतं पुरुषमाह प्रेष्येत् । एतां दक्षिणां दिशम् अनवानन् अनुच्छ्वसन् सृत्वा गत्वा अस्थिकुंभं प्रक्षीय । "क्षि हिंसायाम्" ( धा. पा. स्वा. प. ३१ ) प्रपूर्वः अत्र प्रक्षेपे वर्तते । प्रक्षिप्यानपेक्षमाण एहीति । स वै तद्यथाप्रेषितं करोति । तत्र च प्रत्यागते जपति " परं मृत्यो " इति ॥ ४ ॥

---

१–तूष्णीमन्यः कुंभमाघ्नोति दक्षिणाऽनवानन् सृत्वा । ( का. श्रौ. सू. २१ । ७२ । ) ॥

२–प्रत्यागते परं मृत्यविति जपति ( का. श्रौ. सू. २१ । ७३ । ) ॥

( त्यु ) अथैनं यथाङ्गङ्कल्पयति । शम्वातः शछँ हि ते घृणिः शन्ते भवन्त्विष्टकाः । शन्ते भवन्त्वग्नयः पार्थिवासो मा त्वाऽभिशूशुचन् ॥ कल्पन्तान्ते दिशस्तुभ्यमापः शिवतमास्तुभ्यम्भवन्तु सिन्धवः । अन्तरिक्षछँ शिवन्तुभ्यं कल्पन्तां ते दिशः सर्व्वाऽइत्येतदेवास्मै सर्व्वङ्कल्पयत्येतदस्मै शिवङ्करोति ॥ ५ ॥

( त्यु ) अथ त्रयोदश पादमात्र्यऽ इष्टकाऽअलक्षणाः कृता भवन्ति । याऽएवामूरग्नाविष्टकास्ताऽएता यजुषा ताऽउपदधाति तूष्णीमिमा दैवञ्चैव तत्पित्र्यञ्च व्याकरोति ॥ ६ ॥

त्रयोदश भवन्ति । त्रयोदश मासाः सम्वत्सरऽऋतुष्वेवैनमेतत्सम्वत्सरे प्रतिष्ठायाम्प्रतिष्ठापयति ॥ ७ ॥

पादमात्र्यो भवन्ति । प्रतिष्ठा वै पादः प्रतिष्ठामेवास्मै करोत्यलक्षणा भवन्ति तिरऽइव वै पितरस्तिरऽइव तद्यदलक्षणन्तिर एव तत्तिरः करोति ॥ ८ ॥

---

अथैनं यथाङ्गं कल्पयति–" शं वातः शं हि ते घृणिः शं ते भवंत्विष्टकाः । शं ते भवंत्वग्नयः पार्थिवासो मा त्वाऽभिशूशुचन् " " कल्पयन्तां ते दिशः तुभ्यमापः शिवतमाः तुभ्यं भवंतु सिंधवः । अंतरिक्षं शिवं तुभ्यं कल्पंतां ते दिशः सर्वाः "– इति । एतदेवास्मै सर्वं कल्पयति । एतदस्मै शिवं करोति ॥ ५ ॥

अथ त्रयोदश पादमात्र्य इष्टका अलक्षणाः कृता भवंति । या एवामूरग्नाविष्टकाः । ता एताः । यजुषा ता उपदधाति । तूष्णीमिमाः । दैवं चैव तत्पित्र्यं च व्याकरोति ॥ ६ ॥

त्रयोदश भवंति । त्रयोदश मासाः संवत्सरः । ऋतुष्वेवैनमेतत्संवत्सरे प्रतिष्ठायां प्रतिष्ठापयति ॥ ७ ॥

पादमात्र्यो भवंति । प्रतिष्ठा वै पादः । प्रतिष्ठामेवास्मै करोति । अलक्षणा भवंति । तिर इव वै पितरः । तिर इव तत् । यदलक्षणम् । तिर एव तत् तिरः करोति ॥ ८ ॥

---

अथैनं यथाङ्गं कल्पयति । एनमस्थ्यात्मकं प्रेतं यथांगं येषु अंगेषु यथा अयं बभूव तेषु तथैव इत्यस्मिन्नर्थे अव्ययीभावः समासः । ' एतदेवास्मै ' एतत् अस्मै प्रेताय सर्वं कल्पयति शिवं च करोति ॥ ५ ॥

अथ त्रयोदश । अलक्षणाः तल्लक्षणं लेखाः तद्रहिताः ॥ ६ ॥ ७ ॥ ८ ॥

---

१–शं वात इति यथांगं कल्पयित्वा निदधाति मध्ये तूष्णीम् । ( का. श्रौ. सू. २१ । ७४ । ) ॥

तासामेकाम्मध्ये प्राचीमुपदधाति । स ऽ आत्मा तिस्रः पुरस्तान्मूर्द्धसᳫँहितास्तच्छिरस्तिस्रो दक्षिणतः स दक्षिणः पक्षस्तिस्र ऽ उत्तरतः स ऽ उत्तरः पक्षस्तिस्रः पश्चात्तत्पुच्छᳫँ सोऽस्यैष पक्षपुच्छवानात्मा यथैवाग्नेस्तथा ॥ ९ ॥

( थाऽथ ) अथ प्रदरात्पुरीषमाहर्त्तवाऽ आह । ( है ) एतद्धास्याः पित्र्यमनतिरिक्तमथोऽअघमेव तद्बद्ध करोत्यस्मिन्नु हैकेऽवान्तरदेशे कर्षूं खात्वा ततोऽभ्याहारङ्कुर्व्वन्ति परिकृषन्त्यु हैके दक्षिणतः पश्चादुत्तरतस्ततोऽभ्याहारङ्कुर्व्वन्ति स यथा कामयेत तथा कुर्य्यात् ॥ १० ॥

---

तासामेकां मध्ये प्राचीमुपदधाति, स आत्मा । तिस्रः पुरस्तात् मूर्द्धसंहिताः, तच्छिरः । तिस्रो दक्षिणतः, स दक्षिणः पक्षः । तिस्र उत्तरतः, स उत्तरः पक्षः । तिस्रः पश्चात्, तत्पुच्छम् । सोऽस्यैष पक्षपुच्छवानात्मा । यथैवाग्नेः तथा ॥ ९ ॥

अथ प्रदरात् पुरीषमाहर्तवा आह । एतत् ह अस्याः पित्र्यमनतिरिक्तम् । अथो अघमेव तत् बद्ध करोति । अस्मिन्नु हैके—अवांतरदेशे कर्षूं खात्वा । ततोऽभ्याहारं कुर्वंति । परिकृषंति उ ह एके दक्षिणतः पश्चादुत्तरतः । ततोऽभ्याहारं कुर्वंति । स यथा कामयेत । तथा कुर्यात् ॥ १० ॥

---

तासामेकां मध्ये क्षेत्रस्य । प्राचीं प्राङ्मुखीम् । ननु च अलक्षणा एताः तासां कुतः प्राङ्मुखता स्यादेवं तर्हि प्राचीत्वेनात्रावांतरदिक्सक्तिमुपदधातीत्यर्थः । तिस्रः पुरस्तात् तस्या मध्यमायाः मूर्ध्ना शिरसा प्रेतस्य संहिताः सहिताः ताश्च पूर्वापराः परांचीः उपदधाति । तिस्रो दक्षिणोत्तराः पराचीः । एवं तिस्र उत्तरतः । तिस्रः पश्चात् पूर्वापराः ॥ ९ ॥

अथ प्रदरात् पुरीषमाहर्तवा आहेति । प्रकर्षेण स्वयमेव दीर्णो भूप्रदेशः प्रदरः । तस्मात् पुरीषमाहर्तव्यमिति इत्येवं प्रेष्यते च । तथैतत् प्रेष्यः कुर्यात् । तेन च पुरीषेण श्मशानं कुर्यादिति गम्यते । एतद्ध अस्याः पृथिव्याः पित्र्यं पितृदेवत्यं अनतिरिक्तं असाधारणं स्थानं यः प्रदरः । अघमेव अघचिह्नं बद्ध आत्मनः गर्तमचलमेष करोतीत्यर्थः । अस्मिन् पूर्वदक्षिणमवान्तरदेशश्मशानमिते कर्षूं गर्तं खात्वा ततः 'अभ्याहारं' अभ्याहृत्याभ्याहृत्याभ्याहारं तेनाभ्याहृतेन पुरीषेण, एके श्मशानं कुर्वंति । उपहरणकालतश्चाभ्याहारं श्मशानं कुर्वंति ॥ १० ॥

---

१–इष्टकां मध्ये निदधाति तूष्णीम् । ( का. श्रौ. सू. २१ । ७४ ) ॥

२–प्रतिदिशमन्तेषु पराचीस्तिस्रस्तिस्रोऽलक्षणाः पादमात्रीः । ( का. श्रौ. सू. २१।७५ ) पराची रिति नाभ्यात्ममित्यर्थः ॥

३–प्रदरात्पुरीषमाहृत्य परिकृष्य वा सर्वतोऽपुरस्तात् । का. श्रौ. सू. । २१ । ७६ ।

( त्त ) तद्वै नु मह॒त्कुर्य्यात् । ( न्ने ) नेन्महदघङ्करवाणीति यावानुद्ध्बाहुः पुरुषस्तावत्क्षत्रियस्य कुर्य्यान्मुखदघ्नं ब्राह्मणस्योपस्थदघ्नꣳ स्त्रियाऽऊरुदघ्नं वैश्यस्याष्ठीवदघ्नꣳ शूद्रस्यैवंवीर्य्या ह्येतऽइति ॥ ११ ॥

( त्यु ) अधोजानु त्वेव कुर्य्यात् । ( त्त ) तथाऽपरस्माऽअवकाशन्न करोति तस्य क्रियमाणस्य तेजनीमुत्तरतो धारयन्ति प्रजा ह सा प्रजामेव तदुत्तरतो धारयन्ति तान्न न्यस्येद्धृत्वा वैनामूढ्वा वा गृहेषूच्छ्रयेत्प्रजामेव तद्गृहेषूच्छ्रयति ॥ १२ ॥

---

तद्वै न महत् कुर्यात् । नेन्महदघं करवाणीति । यावानुद्बाहुः पुरुषः । तावत् क्षत्रियस्य कुर्यात् । मुखदघ्नं ब्राह्मणस्य । उपस्थदघ्नं स्त्रियाः । ऊरुदघ्नं वैश्यस्य । अष्ठीवदघ्नं शूद्रस्य । एवंवीर्या ह्येत इति ॥ ११ ॥

अधोजानु त्वेव कुर्यात् । तथाऽपरस्मा अवकाशं न करोति । तस्य क्रियमाणस्य तेजनीमुत्तरतो धारयंति । प्रजा ह सा । प्रजामेव तदुत्तरतो धारयंति । तां न न्यस्येत् । धृत्वा वैनाम् ऊढ्वा वा गृहेषूच्छ्रयेत् । प्रजामेव तत् गृहेषूच्छ्रयति ॥ १२ ॥

---

तद्वै न महत् । उत्सेधवचनमेतत् । अष्ठीवदघ्नं शूद्रस्येति । यद्यपि शूद्रः अग्निचिन्नास्ति अग्निचितश्चायमधिकारः, तथापि परिमाणप्रसंगात् । अतः प्राप्तस्यामंत्रकस्य परिमाणमाह—एवंवीर्या ह्येत इति । उद्बाहुमात्रादिप्रकारं वीर्यं येषां ते एवंवीर्याः । यस्य यादृग्वीर्यं तस्य तस्य तादृगेव श्मशानं युक्तम् इत्यभिप्रायः ॥ ११ ॥

अधोजान्विति । अधोजानु कुर्यात् सर्वेषामेव । तथा अपरस्मै प्राप्यमाणाय अवकाशं न करोति । अत्युच्चैरपि हि जानुमात्रादूर्ध्वमतः तस्यैवावकाशः स्यात् इत्यभिप्रायः । तेजनीं वीरणमूलम् । प्रजा ह सा बहुप्रसवत्वात् बहुमूलत्वात् । प्रजामेव तदुत्तरतो धारयंतीति । उत्तरत एव हि पितृलोकस्य जीवलोक इति । तां तेजनीं समाप्ते कर्मणि नीचैः क्वचिदेव न क्षिपेत् । प्रजैव हि तथा क्षिप्ता स्यादित्याशयः । कथं तर्हि कुर्यात् । धृत्वा वा भूमिगतां तामाकृष्य । ऊढ्वा वा स्कंधेन । गृहेषूच्छ्रयेत् तस्मिन्नेव प्रकृते श्मशाने ॥ १२ ॥

---

१–ऊर्ध्वप्रमाणमास्यं ब्राह्मणस्य । उरः क्षत्रियस्य ऊर्ध्वबाहु वा । ऊरू वैश्यस्य । उपस्थः स्त्रियाः । जानु शूद्रस्य का. श्रौ. सू. ७८–८३ । शूद्रो रथकार इति तु देवयाज्ञिकः । क्षत्रियस्योरुप्रमाण तु शाखांतरात् ।

२–सर्वेषां वाऽधोजानु । का. श्रौ. सू. २१ । ८४ ।

३–प्रामतस्तेजनीमुच्छ्रित्य न न्यस्येयगृहेषूच्छ्रयेत् । का. श्रौ. सू. २१ । ५८ ।

कृत्वा युवान्वपति । (त्य) अघं मे यवयानित्युवकाभिः प्रच्छादयति कुम्मेऽसदिति दर्भैः प्रच्छादयत्यरूक्षुतायै ॥ १३ ॥

इति चतुर्थप्रपाठके षष्ठं ब्राह्मणम् ॥ १३।४।६॥ (८–३) ॥

अथैनच्छङ्कुभिः पुरिणिहन्ति । पालाशं पुरस्ताद्ब्रह्म वै पलाशो ब्रह्म-पुरोगवमेवैनꣳ स्वर्गं लोकङ्गमयति शमीमयमुत्तरतः शं मेऽसदिति वारणम्पश्चादघं मे वारयाताऽइति व्वृत्रशङ्कुन्दक्षिणतोऽघस्यैवानुत्ययाय ॥ १ ॥

---

कृत्वा यवान्वपति । अघं मे यवयानिति । अवकाभिः प्रच्छादयति । कं मेऽसदिति । दर्भैः प्रच्छादयति अरूक्षतायै ॥ १३ ॥

अथैनच्छंकुभिः परिणिहन्ति । पालाशं पुरस्तात् । ब्रह्म वै पलाशः । ब्रह्मपुरोगवमेवैनं स्वर्गं लोकं गमयति । शमीमयमुत्तरतः । शं मेऽसदिति । वारणं पश्चात् । अघं मे वारयाता इति । वृत्रशंकुं दक्षिणतः । अघस्यैवानत्ययाय ॥ १ ॥

---

यवान्वपति अघं मे । ( कर्षनामयप्मायं यूपरिति ? ) । सूत्रकारस्तु–परिकर्षणपक्षे परिकृष्टे एव यवान् वपेदिति मेने । अवकाभिः कुशैश्च प्रच्छादयति प्रकृतं श्मशानम् ॥ १३ ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये त्रयोदशे काण्डे अष्टमेऽध्याये तृतीयं ब्राह्मणम् ॥ १३ । ८ । ३ ॥

'अथैनत्' । एनत् श्मशानम् । शंकुभिः परिणिहंति । हंतिः परिपूर्वो वेष्टने वर्तते । शंकुभिः निखातैः समंतात् वेष्टयति । कथं पुनस्तत् शंकुभिः परिणिहंतीत्यत आह । पालाशं शंकुं पुरस्तान्निहन्ति । 'ब्रह्मपुरोगवम्' ब्रह्म पुरोगवमस्येति ब्रह्मपुरोगवः । पुरोगवं पुरोगामि । गमेर्वप्रत्ययोऽन्त्यलोपश्च द्रष्टव्यः । शं मे असदिति । शं सुखं मे मम असत् स्यात् इति प्रार्थयमानः । अघं मे वारयाता इति प्रार्थयमानः । वृत्रशंकुं "वृत्रो वै सोम आसीत्तस्यैतच्छरीरं यद्गिरयो यदश्मानः" इति वचनात् वृत्रः अश्मा अश्ममयः शंकुः वृत्रशंकुः । अघस्य श्मशानात्मकस्य अनत्ययाय स्थिरो ह्यश्मा तत् प्रतिबध्नातीत्यभिप्रायः ॥ १ ॥

---

१–परिकृष्टं चेद्यवान्वपेत् । का. श्रौ. सू. २१ । ८६ । यदि परिकृष्यात्पुरीषमाहृतं ततश्च तत्र यवानां वापः श्रुतिक्रमेणेति कर्कः अर्थात्प्रदरात्पुरीषाहरणपक्षे नेत्याशयः ।

२–अवकाभिः कुशैश्च प्रच्छाद्य । का. श्रौ. सू. २१ । ८५ ।

३–विहृत्य सक्थिषु शंकूनाहंति । का. श्रौ. सू. २१ । ६१ ।

४–पालाशं पुरस्ताच्छामीलवारणदेहशंकूनन्याङ्ग । का. श्रौ. सू २१ । ६२ ।

( ब्राथ ) अथ दक्षिणतः पुरिवक्के खनन्ति । ते क्षीरेण चोदकेन च पूरयन्ति ते हैनममुष्मिल्लोकेऽक्षिते कुल्येऽउपधावतः सुप्तोत्तरतस्ताऽउदकेन पूरयन्ति न ह वै सप्त स्रवन्तीरघमुत्येतुमर्हत्यघस्यैवान-त्ययाय ॥ २ ॥

( ब्राइम ) अश्मनस्त्रींस्त्रीन्प्रकिरन्ति । ताऽअभ्युत्तरन्त्यश्मन्वती रीयते सुᳪंरभध्वमुत्तिष्ठत प्रतरता सखायः । अत्रा जहीमो ऽशिवा येऽअसन्छि-वान्वयमुत्तरेमाभिवाजानिति यथैव यजुस्तथा बन्धुः ॥ ३ ॥

( र ) अपामार्गैरपमृजते । ( तेऽघ ) अघमेव तदपमृजतेऽपाघमप किल्बिषमप कृत्यामपो रपः । अपामार्ग त्वमस्मदप दुःष्वप्न्यᳪं सुवेति यथैव यजुस्तथा बन्धुः ॥ ४ ॥

---

अथ दक्षिणतः परिवक्रे खनंति । ते क्षीरेण चोदकेन च पूरयन्ति । ते ह एनममुष्मिन् लोके-ऽक्षिते कुल्ये उपधावतः । सप्तोत्तरतः । ता उदकेन पूरयन्ति । न ह वै सप्त स्रवंतीरघमत्येतु-मर्हति । अघस्यैवानत्ययाय ॥ २ ॥

अश्मनस्त्रींस्त्रीन् प्रकिरंति । ता अभ्युत्तरन्ति-" अश्मन्वती रीयते संरभध्वमुत्तिष्ठत प्रतरता सखायः । अत्रा जहीमोऽशिवा ये असन्छिवान्वयमुत्तरेमाभिवाजान् "-( वा. सं. ३५ । १० ) इति । यथैव यजुः । तथा बंधुः ॥ ३ ॥

अपामार्गैरपमृजते । अघमेव तदपमृजते । " अपाघमप किल्बिषमप कृत्यामपो रपः । अपामार्ग त्वमस्मदप दुःष्वप्न्यं सुव "-( वा. सं. ३५ । ११ ) इति । यथैव यजुः । तथा बंधुः ॥ ४ ॥

---

अथ दक्षिणतः । श्मशानस्य परिवक्रे ईषद्वक्रे कर्षू खनंति । ते ह एनं प्रेतं अमुष्मिन्परलोके अन्वागच्छतः । सप्त कर्षूरुत्तरतः श्मशानस्य खनंति ॥ २ ॥

अश्मनस्त्रींस्त्रीन् । अश्मनः पाषाणान् त्रीन् त्रीन् एकैकस्यां कर्ष्वां प्रक्षिपंति । ताः कर्षूः अभि तासामु-परिष्टात् उत्तरन्ति उद्गच्छंति ग्रामं प्रति ॥ ३ ॥

अपामार्गैः । हस्तगृहीतैः । स्वशरीरं अपमृजते । "मृजू शुद्धौ" ( धा. पा. अ. प. ५६ ) विकरण-व्यत्ययः पदव्यत्ययश्चात्र द्रष्टव्यः । आत्मानं शोधयंति । प्रकृताः पुरुषाः ॥ ४-७ ॥

---

१-दक्षिणतः कुटिले कर्षू खात्वा क्षीरोदकाभ्यां पूरयंति सप्तोत्तरतः प्राचीरुदकस्य । का. श्रौ. सू. २१ । ८७ ।

२-त्रींस्त्रीनावपंत्यश्मनः । का. श्रौ. सू. २१ । ८८ । कर्षूष्विति शेषः यजमानामात्या इति च ।

३-अध्यधि गच्छंत्यश्मन्वतीति । का. श्रौ. सू. २१ । ८९ । कर्षूषु यजमानामात्याः ग्रामं प्रति च इति शेषत्रिकम् ।

४-अपाघमित्यपामार्गैरपमृजते ( का. श्रौ. सू. २१।९० ) ॥

( यं॒ ) य॒त्रोद॑कम्भ॒वति त॒त्स्नान्ति । सुमि॒त्रिया॒ न ऽआप॒ऽओष॑धयः सन्त्वि॒त्यञ्जलि॒नाऽप॒ऽउपा॑चति व्वज्रो॒ वा ऽआपो॑ व्वज्रेणैवैत॒न्मित्रधे॒यङ्कुरुते दु॒र्म्मित्रि॒यास्त॒स्मै सन्तु॒ यो॒ऽस्मान्द्वेष्टि॒ यञ्च॑ व्वयन्द्वि॒ष्मऽइ॒ति या॒मस्य॒ दि॒शन्द्वेष्यः॑ स्यात्तान्दि॒शम्पुरा॒सिञ्चेत्तेनैव त॑म्पुराभाव॒यति ॥ ५ ॥

स य॒दि स्थाव॑राऽआपो॑ भ॒वन्ति । स्थाप॒यन्त्येषाम्पाप्मा॒नमथ॒ य॒दि व्व॒हन्ति व्वहन्त्येवैषाम्पाप्मा॒नꣳ स्नात्वाऽहता॑नि व्वासाꣳसि परिधा॒या-नडु॒हः पु॒च्छमन्वा॒रभ्या॒यन्त्याग्ने॒यो वाऽअनड्वा॒नग्निमु॒खाऽएव त॒त्पितृलो॒-काज्जीवलो॒कम॒भ्यायन्त्य॒थोऽअग्निर्व्वै प॒थोऽतिवो॒ढा स॒ऽएनान॒तिवहति ॥ ६ ॥

( त्य॒ ) उ॒द्वयन्तम॒सस्पर॒ीति । ( त्ये ) एतामृच॒ञ्जपन्तो॑ य॒न्ति तत्तम॑सः पितृलो॒कादा॒दित्यञ्ज्यो॒तिरभ्या॒यन्ति ते॒भ्यऽआ॒गतेभ्यऽआ॒ञ्जनाभ्यञ्जने प्र॒य-च्छन्त्येषु ह मानु॒षोऽल॒ङ्कारस्तेनैव त॒म्मृत्यु॒मन्तर्द॑धते ॥ ७ ॥

---

यत्रोदकं भवति। तत् स्नांति। "सुमित्रियां न आप ओषधयः संतु"–इत्यंजलिनाऽपउपाचति। वज्रो वा आपः। वज्रेणैवैतन्मित्रधेयं कुरुते। "दुर्मित्रियास्तस्मै संतु योऽस्मान् द्वेष्टि यं च वयं द्विष्मः"–(वा. सं. ३५।१२) इति। यामस्य दिशं द्वेष्यः स्यात्। तां दिशं परासिंचेत्। तेनैव तं पराभावयति ॥ ५ ॥

स यदि स्थावरा आपो भवंति। स्थापयंत्येषां पाप्मानम्। अथ यदि वहंति। वहंत्येवैषां पाप्मानम्। स्नात्वाऽहतानि वासांसि परिधाय। अनडुहः पुच्छमन्वारभ्यायंति। आग्नेयो वा अनड्वान्। अग्निमुखा एव तत् पितृलोकाज्जीवलोकमभ्यायंति। अथो अग्निर्वै पथोऽतिवोढा। स एनानतिवहति ॥ ६ ॥

उद्वयं तमसस्परीत्येतामृचं जपंतो यंति। तत्तमसः पितृलोकादादित्यं ज्योतिरभ्यायंति। तेभ्य आगतेभ्य आंजनाभ्यंजने प्रयच्छंति। एष ह मानुषोऽलंकारः। तेनैव तं मृत्युमंतर्दधते ॥ ७ ॥

---

१–सुमित्रिया न इति स्नात्वाऽहतवाससोऽनडुत्पुच्छमन्वारभ्यानड्वाहामिति (का. श्रौ. सू. २१।९१)
२–उद्वयमित्यागच्छंति। (ग्रामं प्रतीत्यध्याहारः।) का. श्रौ. सू. २१।९१। आंजनाभ्यंजने कृत्वा। का. श्रौ. सू. २१।९३। अंजनमक्ष्णोरभ्यंजनं च पादयोरिति कर्कः।

( तेऽथ ) अथ गृहेष्वग्निꣳ समाधाय । वारणान्परिधीन्परिधाय वारणेन स्रुवेणाग्नयऽआयुष्मतऽआहुतिञ्जुहोत्यग्निर्वाऽआयुष्मानायुषऽईष्टे तमेवैभ्यऽआयुर्याचत्यग्नऽआयूꣳषि पवसऽइति पुरोऽनुवाक्याभाजनम् ॥ ८ ॥

( मु ) अथ जुहोति । ( त्या ) आयुष्मानग्ने हविषा वृधानो घृतप्रतीको घृतयोनिरेधि । घृतम्पीत्वा मधु चारु गव्यम्पितेव पुत्रमभिरक्षतादिमान्त्स्वाहेति यथैवैनानभिरक्षेद्यथाऽभिगोपायेदेवमेतदाह ॥ ९ ॥

तस्य पुराणोऽनड्वान्दक्षिणा । पुराणा यवाः पुराण्यासन्दी सोपबर्हणैषाऽन्वादिष्टा दक्षिणा कामं यथाश्रद्धम्भूयसीर्दद्यादिति न्वग्निचितः ॥१०॥

---

अथ गृहेष्वग्निं समाधाय, वारणान्परिधीन्परिधाय, वारणेन स्रुवेणाग्नय आयुष्मत आहुतिं जुहोति। अग्निर्वा आयुष्मान् आयुष ईष्टे । तमेवैभ्य आयुर्याचति । "अग्न आयूंषि पवसे"–( वा. सं. ३९ । १६ ) इति पुरोऽनुवाक्याभाजनम् ॥ ८ ॥

अथ जुहोति–" आयुष्मानग्ने हविषा वृधानो घृतप्रतीको घृतयोनिरेधि । घृतं पीत्वा मधु चारु गव्यं पितेव पुत्रमभिरक्षतादिमान्त्स्वाहा "–( वा. सं. ३९ । १७ ) इति । यथैवैनानभिरक्षेत् । यथाऽभिगोपायेत् । एवमेतदाह ॥ ९ ॥

तस्य पुराणोऽनड्वान् दक्षिणा । पुराणा यवाः । पुराण्यासंदी सोपबर्हणा । एषाऽन्वादिष्टा दक्षिणा । कामं यथाश्रद्धं भूयसीर्दद्यात् । इति नु अग्निचितः ॥ १० ॥

---

अथ गृहेष्वग्निम्। अग्निस्तस्यैव प्रेतस्यौपासनः । स हि एवमर्थमेव धारणीयः । अद्वारेण च प्रेतस्यैवोपासनः सकलो निरसनीयः इति श्रुत्यंतरात् ॥ ८ ॥ ९ ॥

तस्य पुराणोऽनड्वान् दक्षिणा । तस्य कर्मणः पुराणो वृद्धः अनड्वान् दक्षिणा । सोपबर्हणा । उपबर्हणं येन उपबृह्यते तदपि पुराणमेव जीर्णं यस्या आसंद्याः सा दक्षिणा इति च । एवं तावदग्निचितः श्मशानकरणमुक्तम् ॥ १० ॥

---

१–भूयसीश्चेच्छन् का. श्रौ. सू. २१ । ९८ ।

२–औपासनं परिस्तीर्य वारणान्परिधीन्परिधाय वारणेन स्रुवेणैकामाहुतिं जुहोत्यग्न आयुं॰ष्यायुष्मानग्न इति । का. श्रौ. २१ । ९३ ।

३–अत्र कर्कस्तु औपासनश्चात्र कर्तृसंबंधी न प्रेतसंबंधी । तेन हि असौ विहितकर्मानुष्ठानसाधनभावायाहित इति ।

४–अद्वारेणौपासनं निरस्यति क्रव्यादमिति । ( का. श्रौ. सू. २१ । ९५ । ) कर्कस्तु–औपासनश्च यस्मिन्नाहुतिर्हुता स एव प्रहीतव्यो न प्रेतौपासनः । तस्यैकदेशं निरस्यतीति ।

५–आसन्दी सोपधाना दक्षिणाऽनड्वान्यवाश्च सर्वं पुराणम् । ( का. श्रौ. सू. २१ । ९७ ) ॥

( तोऽथा ) अथानग्निचितः । ( तुऽए ) एतदेव भूमिजोषणमेतत्समानं कर्म्म यदन्यदग्निकर्म्मणः कुर्य्यादाहिताग्नेः शर्कराऽइत्यु हैकऽआहुर्य्याऽएवामूरग्न्याधेयशर्करास्ताऽएताऽइति न तथा कुर्य्यादित्येकऽईश्वरो हैताऽअनग्निचितꣳ सन्तप्तोरिति स यथा कामयेत तथा कुर्य्यात् ॥ ११ ॥

(न्म) मर्य्यादायाऽ एव लोष्टमाहृत्य । (त्या) अन्तरेण निदधातीमञ्जीवेभ्यः परिधिन्दधामि मैषान्नु गादपरोऽअर्थमेतम् । शतञ्जीवन्तु शरदः पुरूचीरन्तर्मृत्युन्दधतां पर्व्वतेनेति जीवेभ्यश्चैवैताम्पितृभ्यश्च मर्य्यादाङ्करोत्यसम्भेदाय तस्माद्ध हैतज्जीवाश्च पितरश्च न सन्दृश्यन्ते ॥ १२ ॥

इति चतुर्थप्रपाठके सप्तमं ब्राह्मणम् ॥ १३।४।७ ॥ ( ८–४ ) ॥

इति चतुर्थप्रपाठकः समाप्तः ॥ १३–४ ॥ कण्डिकासंख्या ॥ १०० ॥

इत्यष्टमोऽध्यायश्च समाप्तः ॥ १३ । ८ ॥ कण्डिकासंख्या ॥ ९४ ॥

अस्मिन्काण्डे कण्डिकासंख्या ४३१ ॥ ब्राह्मणानि च ॥ ४३ ॥

इत्यश्वमेधसंज्ञकं त्रयोदशं काण्डं समाप्तम् ॥ १३ ॥

---

अथानग्निचितः । एतदेव भूमिजोषणम् । एतत् समानं कर्म । यदन्यदग्निकर्मणः कुर्यात् । आहिताग्नेः शर्करा इत्यु हैक आहुः । या एवामूरग्न्याधेयशर्कराः । ता एता इति । न तथा कुर्यादित्येके । ईश्वरो हैता अनग्निचितं संतप्तोरिति । स यथा कामयेत । तथा कुर्यात् ॥ ११ ॥

मर्यादाया एव लोष्टमाहृत्य अंतरेण निदधाति–" इमं जीवेभ्यः परिधिं दधामि मैषां नु गादपरो अर्थमेतम् । शतं जीवंतु शरदः पुरूचीरंतर्मृत्युं दधतां पर्वतेन "–( वा. सं. ३५ । १५ ) इति । जीवेभ्यश्चैतां पितृभ्यश्च मर्यादां करोति । असंभेदाय । तस्माद्ध एतत् जीवाश्च पितरश्च न संदृश्यंते ॥ १२ ॥

---

अथानग्निचितः । वक्ष्यति शेषं अग्निकरणं परिश्रित्परिधानं सर्वौषधवपनं इष्टकोपधानं च, एतस्मादन्यत् यत् तत् समानं, (ससर्वता आहिताग्नेस्तु ?) । अनग्निचितः श्मशाने शर्करा इष्टकास्थाने उपधेया[२] इत्येके ॥ ११ ॥ १२ ॥

---

१–ग्रामश्मशानान्तरे मर्यादालोष्टं निदधाति–इमं जीवेभ्य इति । अनेन मन्त्रेण । ( का. श्रौ. सू. २१ । ९२ )

२–शर्करा अनग्निचितः । का. श्रौ. सू. २१ । ७७ ।

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये त्रयोदशे काण्डे अष्टमेऽध्याये चतुर्थं ब्राह्मणम् ॥ ( १३ । ८ । ४ ) ॥

नागस्वामिसुतोऽवन्त्यां पाराशर्यो वसन्हरिः ।
श्रुत्यर्थं दर्शयामास शक्तितः पौष्करीयकः ॥ १ ॥
श्रीमतोऽवन्तिनाथस्य विक्रमार्कस्य भूपतेः ।
धर्माध्यक्षो हरिस्वामी व्याख्यच्छातपथीं श्रुतिम् ॥ २ ॥
भूभर्त्रा विक्रमार्केण क्लृप्तां कनकवेदिकाम् ।
दानायाध्यस्य कृतवान् श्रुत्यर्थविवृतिं हरिः ॥ ३ ॥

इति श्रीसर्वविद्यानिधानकवीन्द्राचार्यसरस्वतीनां श्रीहरिस्वामिनां कृतौ माध्यन्दिनीयशतपथ-ब्राह्मणभाष्ये त्रयोदशे काण्डेऽष्टमोऽध्यायः समाप्तः ॥ १३—८ ॥

**इति परिशेषाख्ये भागेऽश्वमेधसंज्ञकं त्रयोदशं काण्डं समाप्तम् ॥ १३ ॥**



१०५५

इति माध्यन्दिनीये शतपथब्राह्मणे परिशेषाख्ये भागे हरिस्वामिभाष्यसमेते अश्वमेधनामकं त्रयोदशं काण्डं समाप्तम् ॥ १३ ॥

ॐ

श्रीमद्वाजसनेयिमाध्यन्दिन-

# शतपथब्राह्मणम् ।

सायणभाष्यसमेतम् ।

तत्र

## चतुर्दशे काण्डे १४-

## आद्यं प्रवर्ग्यकाण्डम् ।

गंगाविष्णु श्रीकृष्णदास,

मालिक-"लक्ष्मीवेङ्कटेश्वर" स्टीम् प्रेस,

कल्याण-बंबई.

संवत् १९९६, शके १८६१.

1939.

# अथोत्तराख्ये भागे बृहदारण्यकाख्यं चतुर्दशं काण्डम् ।

## तत्रावान्तरभूतं प्रथमम् अध्यायत्रयात्मकं द्विप्रपाठकं प्रवर्ग्यनामकं काण्डम् ।

### अथ प्रथमोऽध्यायः प्रारभ्यते ।

### तत्र प्रथमं ब्राह्मणम् ।

### प्रथमप्रपाठके च प्रथमं ब्राह्मणम् ।

देवा ह वै सत्रं निषेदुः । (२) अग्निरिन्द्रः सोमो मखो विष्णुर्विश्वे देवाऽअन्यत्रैवाश्विभ्याम् ॥ १ ॥

(न्तु) तेषाङ्कुरुक्षेत्रन्देवयजनमास । तस्मादाहुः कुरुक्षेत्रन्देवानान्देवयजनमिति तस्माद्यत्र क्व च कुरुक्षेत्रस्य निगच्छति तदेव मन्यतऽइदं देवयजनमिति तद्धि देवानान्देवयजनम् ॥ २ ॥

---

### अथ–प्रवर्ग्यसृष्टिप्रतिपादकं ब्राह्मणम् ।

देवा ह वै सत्रं निषेदुः । अग्निरिन्द्रः सोमो मखो विष्णुर्विश्वे देवाः । अन्यत्रैवाश्विभ्याम् ॥१॥ तेषां कुरुक्षेत्रं देवयजनमास । तस्मादाहुः । कुरुक्षेत्रं देवानां देवयजनमिति । तस्माद्यत्र क्व च

---

### श्रीसायणाचार्यकृतं भाष्यम् ।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

---

१–अस्य चतुर्दशकाण्डस्य "उत्तरकाण्डम्" इति नामान्तरम् । "ततः षष्टिपथं कृत्स्नं सरहस्यं ससंग्रहम् । चक्रे सपरिशेषं च सोत्तरं च प्रहर्षतः" ॥ (म. भा. शां. प. मो. ध. ४३ । १६ ) इत्यत्र प्रतिपादितम् ॥

२–अस्य प्रवर्ग्यकाण्डस्य कर्मशेषत्वेऽपि बृहदारण्यके पाठः, दिवाकीर्त्यमानत्वारण्येऽनूच्यमानत्वादिधर्मविशेषप्राप्त्यर्थमिति विज्ञेयम् ॥

३–चतुर्दशकाण्डे केवलं तदन्तर्गतस्य प्रवर्ग्यकाण्डस्य भाष्यमुपलब्धम् । तदग्रिममधुयाज्ञवल्क्यखिलेतिकाण्डत्रयस्य भाष्यं विद्यत इति "उषा वा अश्वस्य" "नैवेह किञ्चनाग्रे" ( श. प. १० । ६ । ४ । ५ ) इत्येतद्ब्राह्मणद्वयमधिकृत्य "अक्षरार्थस्तु उत्तरत्र बृहदारण्ये" इति सायणाचार्यैरेवमुक्तत्वाज्ज्ञायते । तच्च काण्वपाठानुसारि वा माध्यन्दिनपाठानुसारीति न निश्चेतुं शक्यते । इदानीं तदनुपलब्धेः । यदि पुनर्लभ्येत तदा पुनर्मुद्रणावसरे संयोजयिष्याम इति ॥

४–अस्य ब्राह्मणस्य प्रथमादिद्वादशयन्तानां कण्डिकानां सायणभाष्यं महता प्रयत्नेनान्विष्यापि नाधिगतम् । एतदपि केषांचन महाभागानां सविधेऽस्ति चेत्प्रेषयन्तु ते पुनर्मुद्रणावसरेऽवश्यं संयोजयिष्यामः । इति ॥

( न्तु ) तुऽ आसत । श्रियङ्गच्छेम युशः स्यामान्नादाः स्यामेति तथोऽ-एवेमे सत्रमासते ये सत्रमासते श्रियङ्गच्छेम युशः स्यामान्नादाः स्यामेति॥३॥

ते होचुः । ( ख्यो ) यो नः श्रमेण तपसा श्रद्धया यज्ञेनाहुतिभिर्य्यज्ञस्योदृचम्पूर्व्वोऽवगच्छात्स नः श्रेष्ठोऽसत्तदु नः सर्व्वेषाᳯं सहेति तथेति ॥ ४ ॥

तद्विष्णुः प्रथमः प्राप । स देवानाᳯं श्रेष्ठोऽभवत्तस्मादाहुर्व्विष्णुर्देवानाᳯं श्रेष्ठऽ इति ॥ ५ ॥

स यः स विष्णुर्य्यज्ञः सः । (स) स यः स यज्ञोऽसौ सऽ आदित्यस्तद्धेदं यशो विष्णुर्न्न शशाक संयन्तुं तदिदमप्येतर्हि नैव सर्व्वऽइव यशः शक्नोति संयन्तुम् ॥ ६ ॥

( ᳯं ) स तिसृधन्वमादायापचक्राम । स धनुरात्न्यां शिरऽउपस्तभ्य तस्थौ तन्देवाऽअनभिधृष्णुवन्तः समन्तम्परिण्यविशन्त ॥ ७ ॥

ता ह वम्र्यऽ ऊचुः । ( रि ) इमा वै वम्र्यो यदुपदीका योऽस्य ज्याम-प्यद्यात्किमस्मै प्रयच्छेतेत्यन्नाद्यमस्मै प्रयच्छेमाऽपि धन्वन्नपोऽधि-गच्छेत्तथाऽस्मै सर्व्वमन्नाद्यं प्रयच्छेमेति तथेति ॥ ८ ॥

---

कुरुक्षेत्रस्य निगच्छति । तदेव मन्यते इदं देवयजनमिति । तद्धि देवानां देवयजनम् ॥ २ ॥

त आसत । श्रियं गच्छेम । यशः स्याम । अन्नादाः स्यामेति ॥ ३ ॥

ते होचुः । यो नः श्रमेण तपसा श्रद्धया यज्ञेनाहुतिभिर्यज्ञस्योदृचं पूर्वोऽवगच्छात् । स नः श्रेष्ठोऽसत् । तदु नः सर्वेषां सहेति । तथेति ॥ ४ ॥

तद्विष्णुः प्रथमः प्राप । स देवानां श्रेष्ठोऽभवत् । तस्मादाहुः—विष्णुर्देवानां श्रेष्ठ इति ॥ ५ ॥

स यः स विष्णुः । यज्ञः सः । स यः स यज्ञः । असौ सऽ आदित्यः । तद्धेदं यशो विष्णुर्न शशाक संयंतुम् तदिदमप्येतर्हि नैव सर्व इव यशः शक्नोति संयन्तुम् ॥ ६ ॥

स तिसृधन्वमादायापचक्राम । स धनुरात्न्यां शिर उपस्तभ्य तस्थौ । तं देवा अनभिधृष्णुवंतः समंतं परिण्यविशंत ॥ ७ ॥

ता ह वम्र्य ऊचुः । इमा वै वम्र्यो यदुपदीकाः । योऽस्य ज्यामप्यद्यात् । किमस्मै प्रयच्छेतेति । अन्नाद्यमस्मै प्रयच्छेम । अपि धन्वन्नपोऽधिगच्छेत् । तथाऽस्मै सर्वमन्नाद्यं प्रयच्छेमेति । तथेति ॥ ८ ॥

तुस्योपपरासृत्य । ज्यामुपि जक्षुस्तुस्याश्छिन्नायान्धनुरात्न्यौं विष्फुरुन्त्यौ व्विष्णोः शिरः प्रचिच्छिदतुः ॥ ९ ॥

( स्त ) तद्घृङ्ङिति पपात । तुत्पतित्वाऽसावादित्योऽभवदथेतरः प्राङेव प्रावृज्यत तद्यद्घृङ्ङित्युपतत्तुस्माद्घर्म्मोऽथ यत्प्रावृज्यत तुस्मात्प्रवर्ग्यः ॥ १० ॥

( स्तु ) तु देवाऽअब्रुवन् । ( न्म ) महान्बत नो व्वीरोऽपादीति तुस्मान्महावीरस्तुस्यु यो रुसो व्व्युक्षरत्तम्पणिभिः सुम्ममृजुस्तुस्मात्सम्राट् ॥ ११ ॥

( ह्तं ) तुन्देवाऽ अभ्यसृज्यन्त । युथा व्वित्तिं व्वेत्स्युमानाऽ एवन्तमिन्द्रः प्रथमः प्राप तुमन्वङ्गमनु न्यपद्यत तम्पुर्य्यगृह्णात्तुम्परिगृह्येदं युशोऽभवद्युदिदमिन्द्रो यशो युशो ह भवति युऽएवम्वेद ॥ १२ ॥

सुऽउऽएवु मखः स व्विष्णुः । ( स्तु ) तुतऽइन्द्रो मखवानभवन्मखवान्ह वै तुम्मघवानित्युाचक्षते परोऽक्षम्परोऽक्षकामा हि देवाः ॥ १३ ॥

---

तस्योपपरासृत्य ज्यामपि जक्षुः । तस्यां छिन्नायां धनुरात्न्यौं विष्फुरंत्यौ विष्णोः शिरः प्रचिच्छिदतुः ॥ ९ ॥

तद्घृङ्ङिति पपात । तत्पतित्वाऽसावादित्योऽभवत् । अथेतरः प्राङेव प्रावृज्यत । तद्यद्घृङ्ङित्यपतत् । तस्माद्घर्मः । अथ यत्प्रावृज्यत । तस्मात्प्रवर्ग्यः ॥ १० ॥

ते देवा अब्रुवन् । महान्बत नो वीरोऽपादीति । तस्मान्महावीरः । तस्य यो रसो व्यक्षरत् । तं पाणिभिः संममृजुः । तस्मात्सम्राट् ॥ ११ ॥

तं देवा अभ्यसृज्यंत । यथा विर्त्तिं वेत्स्यमानाः । एवम् तमिन्द्रः प्रथमं प्राप । तमन्वंगमनु न्यपद्यत । तं पर्यगृह्णात् । तं परिगृह्य इदं यशोऽभवत् । यदिदमिन्द्रो यशः । यशो ह भवति । य एवमेतद्वेद ॥ १२ ॥

स उऽ एव मखः । स विष्णुः । तत इन्द्रो मखवानभवत् । मखवान् ह वै । तं मघवानित्याचक्षते परोऽक्षम् परोऽक्षकामा हि देवाः ॥ १३ ॥

---

तमिन्द्रं मघवानिति वर्गद्वितीयस्य स्थाने वर्गचतुर्थमक्षरं प्रक्षिप्य 'परोऽक्षं' पारोक्ष्येण 'आचक्षते' लोकाः कथयन्ति । 'हि' यस्मात् 'देवाः परोऽक्षकामाः' परोऽक्षं कामयमानाः भवंति । तस्मात्परोऽक्षमाचक्षते । लोकेऽपि वयोविद्यादिना महीयांसः प्रत्यक्षं स्वनामग्रहणे कुप्यंति । अतस्तत्प्रतिहाराय औपचारिकं नामांतरं एकं पारिभाषिकं शिष्यादयो व्यवहरंति । तस्माद्देवानामपि मुखतो नामग्रहणे प्रीत्यभावस्य संभाव्यमानत्वात्

( स्तु ) ताभ्यो वम्रीभ्योऽन्नाद्यम्प्रायच्छन् । ( न्ना ) आपो वै सर्व्व-मन्नं ताभिर्हीदमभिक्नूयमिवादन्ति यदिदं किञ्चादन्ति ॥ १४ ॥

( त्यु ) अथेमम्विष्णुं य्यज्ञं त्रेधा व्व्यभजन्त । व्वसवः प्रातःसवनᳪँ रुद्रा माध्यन्दिनᳪँ सवनमादित्यास्तृतीयसवनम् ॥ १५ ॥

( म ) अग्निः प्रातःसवनम् । ( ग्नि ) इन्द्रो माध्यन्दिनᳪँ सवनम्विश्वे देवास्तृतीयसवनम् ॥ १६ ॥

( ङ्गा ) गायत्री प्रातःसवनम् । ( न्त्रि ) त्रिष्टुम्माध्यन्दिनᳪँ सवनञ्जगती तृतीयसवनं तेनापशीर्ष्णा यज्ञेन देवा ऽअर्चन्तः श्राम्यन्तश्चेरुः ॥ १७ ॥

---

ताभ्यो वम्रीभ्योऽन्नाद्यं प्रायच्छन् । आपो वै सर्वमन्नम् । ताभिर्हीदमभिक्नूयमिवादंति । यदिदं किंचादंति ॥ १४ ॥

अथेमं विष्णुं यज्ञं त्रेधा व्यभजंत । वसवः प्रातःसवनम् । रुद्रा माध्यंदिनं सवनम् । आदित्यास्तृतीयसवनम् ॥ १५ ॥

अग्निः प्रातःसवनम् । इन्द्रो माध्यंदिनं सवनम् । विश्वे देवास्तृतीयसवनम् ॥ १६ ॥

गायत्री प्रातःसवनम् । त्रिष्टुप् माध्यंदिनं सवनम् । जगती तृतीयसवनम् । तेनापशीर्ष्णा यज्ञेन देवा अर्चंतः श्राम्यंतश्चेरुः ॥ १७ ॥

---

तदानीं नाम केनचिदक्षरेण व्यत्यस्य प्रयोक्तव्यमित्यर्थः । एवं कृतकार्याणां वम्रीणां देवैः यथाप्रतिज्ञातं वरो दत्त इत्याह ॥ १३ ॥

**ताभ्यो वम्रीभ्योऽन्नाद्यं प्रायच्छन्नापो वै सर्वमन्नं ताभिर्हीदमभिक्नूयमिवादंतीति** । 'ताभ्यः' छ्याच्छिद्भ्यः 'वम्रीभ्यः' वमनशीलाभ्यः उपदीकाभ्यः 'अन्नाद्यं' अत्तुमर्हं अन्नम् पूर्वं प्रतिज्ञातं देवाः 'प्रायच्छन्' दत्तवंतः । किं तत् अन्नाद्यम् इत्युच्यते । 'आपो वै' आपो वै 'सर्वमन्नम्' । सर्वेषामन्नानां अब्विकारत्वात् कारणभूतासु अप्सु सर्वमन्नमवस्थितम् । तथाच अब्रूपमेव अन्नाद्यं दत्तमित्यर्थः । इतरथा व्रीहियवानामेकैकस्य प्रदाने तस्यान्नस्य कार्त्स्न्यं न स्यात् । कथमेतदवगम्यत इत्युच्यते । ताभिरद्भिर्हि 'इदं' सर्वं वस्तुजातं 'अभिक्नूयमिव' "क्नूयी शब्दे उन्दे च" ( धा.पा.भ्वा.आ.४८६ ) आर्द्रीकृत्यैव 'अदंति' भक्षयंति । 'यदिदं किंच' वस्तुजातं इदानीम् उपदीका 'अदंति' । तत्सर्वं उदकैः संसिच्य भक्षयंति । तस्मात् सर्वान्नकारणभूतमुदकं देवैः प्राक् आभ्यो दत्तमिति गम्यते ॥ १४ ॥

एवमुपायेन प्राप्तस्य यज्ञस्य देवैः कृतं विभागं दर्शयति—**अथेमं विष्णुं यज्ञं त्रेधा व्यभजंत । वसवः प्रातःसवनमिति** । अथानंतरं 'इमं' छिन्नशिरस्कं विष्ण्वात्मकं 'यज्ञं' देवास्त्रेधा 'व्यभजंत' । तत्र 'वसवः' 'प्रातःसवनं' स्वभागत्वेन स्वीकृतवंतः । तत्रापि 'अग्निः' प्राधान्येन तत् 'प्रातःसवनं' पर्यगृह्णात् । तथा छंदसां मध्ये 'गायत्री' छंदोऽभिमानिनी देवता तत्प्रातःसवनं स्वभागत्वेन स्वीकृतवती ।

दध्यङ् ह वाऽआथर्वणः । (८) एतᳪं शुक्रमेतं यज्ञम्विदाञ्चकार यथायथैतद्यज्ञस्य शिरः प्रतिधीयते यथैष कृत्स्नो यज्ञो भवति ॥ १८ ॥

स हेन्द्रेणोक्तऽआस । (सै) एतञ्चेदन्यस्माऽअनुब्रूयास्ततऽएव ते शिरश्छिन्द्यामिति ॥ १९ ॥

तदु हाश्विनोरनुश्रुतमास । दध्यङ्ङु ह वाऽआथर्वणऽएतᳪं शुक्र-

---

दध्यङ् ह वा आथर्वण एतं शुक्रमेतं यज्ञं विदाञ्चकार । यथायथैतद्यज्ञस्य शिरः प्रतिधीयते । यथैष कृत्स्नो यज्ञो भवति ॥ १८ ॥

स हेन्द्रेणोक्त आस । एतं चेदन्यस्मा अनुब्रूयाः । तत एव ते शिरश्छिन्द्यामिति ॥ १९ ॥

तदु हाश्विनोरनुश्रुतमास । दध्यङ् उ ह वा आथर्वण एतं शुक्रमेतं यज्ञं वेद । यथायथैतद्यज्ञस्य शिरः प्रतिधीयते । यथैष कृत्स्नो यज्ञो भवतीति ॥ २० ॥

---

एवमेवोत्तरयोरपि सवनयोः गणदेवताप्रधानदेवताछंदसां संबंधः प्रतिपत्तव्यः । स्पष्टमन्यत् । एवं यज्ञं विभज्य देवैः कृतं दर्शयति–तेनापशीर्ष्णा यज्ञेन देवा अर्चंतः श्राम्यंतश्चेरुरिति । 'अपशीर्ष्णा' अपगतशिरस्केन प्रवर्ग्यविरहितेन विभक्तेन सवनेन 'अर्चंतः' पूजयंतः 'देवाः' सत्रासनं कुर्वंतः फलाभावात् केवलं 'श्राम्यंतः' प्रयासमेव प्राप्नुवंतः चेरुश्चरितवंतः । फलप्राप्त्यक्षमं अपगतशिरस्कं तं यज्ञं एवं सवनशो विभज्य अतिष्ठन्नित्यर्थः । तदेतत् स्पष्टीकृतं तैत्तिरीयेण–" तेनापशीर्ष्णा यज्ञेन यजमाना नाशिषोऽवारुंधत । न सुवर्गं लोकमभ्यजयन् " ( तै. आ. ५ । १ । ५ ) इति ॥ १५–१७ ॥

ननु–एवं छिन्नशिरसो यज्ञस्य फलसाधनत्वाभावात् तदनुष्ठानमेव सर्वत्र उत्सीदेत् इत्याशंक्य कश्चित् ऋषिः तत्संधानविद्याकुशल आसीदित्याह–दध्यङ् ह वा इति । 'आथर्वणः' अथर्वणः पुत्रः 'दध्यङ् ह' एतत्संज्ञः खलु पुरा ऋषिः 'शुक्रं' निर्मलं सूर्यात्मना दीप्यमानं 'एतं' प्रवर्ग्याख्यं यज्ञस्य मूर्द्धानं 'एतं' सवनत्रयात्मकं प्रागुक्तं अपगतशिरस्कं यज्ञं 'विदांचकार' सम्यक् अजानात् । 'यथायथा' येनयेन च उपायेन 'एषः' यज्ञः 'कृत्स्नः' संपूर्णावयवः शिरश्छेदात् प्रागिव सम्यक् फलजनको भवति । तथा 'एतत्' उभयं पुरा ज्ञातवान् इत्यर्थः ॥ १८ ॥

स च पुरा आदित्यात्मना यज्ञशिरःसंधानविद्याम् इंद्राय उपदिदेश । स च इंद्रः एवं अजानात् । यदि अयम् इमां विद्यामन्यस्मै अपि उपदिशेत् । सोऽपि मद्विधः स्यादिति । ततस्तमपि इतः परं एषा न कस्यापि उपदेष्टव्या इति आज्ञापितवान् इत्याह–स हेन्द्रेणोक्त आस । एतं चेदन्यस्माऽअनुब्रूयाः । तत एव ते शिरश्छिन्द्यामितीति । 'स' खलु 'दध्यङ्' पुरा इंद्रस्य विद्यामुपदिश्य तेनेन्द्रेणोक्तः 'आस' बभूव । कथमिति तदुच्यते 'एतं' प्रवर्ग्यं 'अन्यस्मै' मद्व्यतिरिक्ताय कस्मैचित् 'अनुब्रूयाश्चेत्' 'तत एव' अनंतरमेव आगत्य ते तव 'शिरश्छिन्द्याम्' छिन्नं कुर्यामिति ॥ १९ ॥

तदु हाश्विनोरनुश्रुतमासेति । तत्तस्मात् इंद्रोपदेशात् पुरैव खलु अश्विनोरश्विदेवयोः तद्विद्यादानं 'अनु-

मेतं यज्ञम्वेद यथायथैतद्यज्ञस्य शिरः प्रतिधीयते यथैष कृत्स्नो यज्ञो भवतीति ॥ २० ॥

तौ हेत्योचतुः । (रु) उप त्वाऽयावेति किमनुवक्ष्यमाणावित्येतᳫँ शुक्रमेतं यज्ञं यथायथैतद्यज्ञस्य शिरः प्रतिधीयते यथैष कृत्स्नो यज्ञो भवतीति ॥ २१ ॥

स होवाच । (चे) इन्द्रेण वाऽउक्तोऽस्म्येतच्चेदन्यस्माऽअनुब्रूयास्तत-

---

तौ हैत्योचतुः । उप त्वाऽयावेति । किमनुवक्ष्यमाणाविति । एतं शुक्रमेतं यज्ञम् । यथायथैतद्यज्ञस्य शिरः प्रतिधीयते । यथैष कृत्स्नो यज्ञो भवतीति ॥ २१ ॥

स होवाच । इंद्रेण वा उक्तोऽस्मि । एतं चेदन्यस्मा अनुब्रूयाः । तत एव ते शिरश्छिन्द्यामिति । तस्माद्वै बिभेमि । यद्वै मे स शिरो न च्छिन्द्यात् न वामुपनेष्य इति ॥ २२ ॥

---

श्रुतं ' प्रतिश्रुतं ' आस ' अश्विनौ हि पुरा बाल्यावस्थायां दधीचः चिकित्सां कृत्वा युवाभ्यां किं दातव्यं इति पृष्टौ एवमन्वब्रूताम् । हे महर्षे ! त्वयि नानाविधा विद्याः संति । तासां मध्ये या सारतः सा आवाभ्यां उपदेष्टव्येति । तर्हि मयि सारतः द्वे मधुविद्ये स्तः । ते युवाभ्यां उपदेक्ष्यामि । इदानीं युवयोरस्ति बाल्यम् । बाल्यात्तदवसरो न भवति । अतः कालांतरे समागंतव्यमिति । एवं विद्यादानं अश्विभ्यां इंद्रोपदेशात् प्राक्कालमेव प्रतिश्रुतं आस प्रतिशुश्रावेत्यर्थः । एवं स्थिते यज्ञानुष्ठानेन फलप्राप्तिरहितेन श्राम्यंतो देवाः अश्विनौ आहूय एवमब्रुवन् । युवां हि अस्माकं भिषजौ । अस्मदीयो यज्ञः छिन्नशिरस्कः सन् फलजननाशक्तः अभवत् । तस्य शिरसा संधानं भवद्भ्यां कार्यमिति । तदेतदुक्तं तित्तिरिणा–" ते देवा अश्विनावब्रुवन् । भिषजौ वै स्थः । इदं यज्ञस्य शिरः प्रतिधत्तमिति " ( तै. आ. ५।१।६ ) इति । एवमुक्तौ अश्विनौ कथमेतस्य संधानं इत्यालोचयंतौ दधीचा पूर्वमुक्तं अस्मरतामित्याह–**दध्यङ् ह वा आथर्वण एतं शुक्रमेतं यज्ञं वेद यथायथैतद्यज्ञस्य शिरः प्रतिधीयते यथैष कृत्स्नो भवतीति** । ' ह ' इति स्मरणे । स खलु अथर्वणः पुत्रः ' दध्यङ् ' नामा ऋषिः, ' एतं शुक्रं ' प्रवर्ग्यं ' एतं यज्ञं ' सवनत्रयात्मकं ' वेद ' जानाति । यथायथेत्यादि पूर्ववत् । इत्यनेन प्रकारेण ऋषिं अश्विनौ सस्मरतुः ॥ २० ॥

एवं स्मृतवतोस्तयोः दधीचश्च उक्तिप्रत्युक्ती दर्शयति–**तौ हैत्योचतुरिति** । ' तौ ' खलु अश्विनौ पुरा विद्यादानं प्रतिश्रुतवंतं दध्यंचं ' एत्य ' प्राप्य ऊचतुरुक्तवंतौ । किमिति ? **उप त्वाऽयावेति** । उपगतवंतौ ' त्वा ' इति । ततः स ऋषिरब्रवीत्–**किमनुवक्ष्यमाणाविति** । किमुद्दिश्य युवां अनुवचनेन मया शिक्षणीयौ । मया युवाभ्यां किमुपदेष्टव्यमित्यर्थः । अथाश्विनौ अब्रूताम् । ' एतं शुक्रम् एतं यज्ञं ' अनुवक्ष्यमाणाविति । यत् भवता विज्ञातं प्रवर्ग्याख्यं यज्ञशिरः यश्च तत्संबंधो यज्ञः एतत् उभयं त्वत्तः अध्येष्यमाणौ आवां आगतावित्यर्थः । अन्यत् पूर्ववत् योज्यम् ॥ २१ ॥

एवं अश्विभ्यां प्रवर्ग्यविद्याया उपदेशे प्रार्थिते सति दधीचा एवमुक्तम् इत्याह–**स होवाच न वामुपनेष्य**

ऽएवं ते शिरश्छिन्द्यामिति तस्माद्वै बिभेमि यद्वै मे स शिरो न छिन्द्यान्न वामुपनेष्यऽइति ॥ २२ ॥

तौ होचतुः । ( रा ) आवान्त्वा तस्मात्त्रास्यावहेऽइति कथम्मा त्रास्येथेऽइति यदा नाऽउपनेष्यसेऽथ ते शिरश्छित्त्वाऽन्यत्रापनिधास्यावोऽथाश्वस्य शिरऽआहृत्य तत्ते प्रतिधास्यावस्तेन नावनुवक्ष्यसि स यदा नावनुवक्ष्यस्यथ ते तदिन्द्रः शिरश्छेत्स्यत्यथ ते स्वᳫँ शिरऽआहृत्य तत्ते प्रतिधास्यावऽइति तथेति ॥ २३ ॥

---

तौ होचतुः । आवां त्वा तस्मात्त्रास्यावहे इति । कथं मा त्रास्येथे इति । यदा ना उपनेष्यसे । अथ ते शिरश्छित्त्वा अन्यत्रापनिधास्यावः । अथाश्वस्य शिर आहृत्य तत्ते प्रतिधास्यावः । तेन नावनुवक्ष्यसि । स यदा नावनुवक्ष्यसि । अथ ते तदिन्द्रः शिरश्छेत्स्यति । अथ ते स्वं शिर आहृत्य तत्ते प्रतिधास्याव इति । तथेति ॥ २३ ॥

---

इतीति । 'सः' खलु दध्यङ् अश्विभ्यां विद्योपदेशम् उद्दिश्य प्रार्थ्यमानः 'उवाच' उक्तवान् । उक्तिप्रकारमाह—इंद्रेणेति । अहं पुरा 'इंद्रेण' खलु एवं 'उक्तोऽस्मि' भवामि । 'एतं' प्रवर्ग्याख्यं यज्ञस्य शिरः 'चेत्' यदि 'अन्यस्मै' मद्व्यतिरिक्ताय 'अनुब्रूयाः' उपदिशेः । 'तत एव' अनंतरमेव आगत्य 'ते' तव 'शिरः छिद्याम्' वज्रेण छिनद्मि इति । यस्मात् मां प्रति एवं इंद्र उक्तवान् । तस्मादेव निमित्तात् 'बिभेमि' भीतोऽस्मि । 'यद्वै' यदि खलु 'सः' इंद्रः 'मे' मदीयं 'शिरः न छिंद्यात्' । तर्हि ततो न बिभेमि । अभीतश्च 'वां' युवां 'उपनेष्ये' । विद्योपदेशाय मत्समीपं प्रापयामीति ॥ २२ ॥

एवं प्रथमं ऋषिणा उक्ते अश्विनोः स्वस्य च परस्परं संजातं संवादमाह—तौ होचतुः० तथेतीति । इंद्रनिमित्ते आत्मीये भये ऋषिणा उक्ते तावश्विनौ 'ऊचतुः' खलु । 'आवां' 'त्वा' त्वां दध्यंचं 'तस्मात्' इंद्रात् 'त्रास्यावहे' रक्षिष्यावः 'इति' । ततः स ऋषिः अब्रवीत् । 'मा' मां युवां 'कथं' 'त्रास्येथे' केनोपायेन तस्मादिन्द्रात् रक्षिष्यथः 'इति' । अथाश्विनोर्वचनं 'यदा' यस्मिन् काले 'नौ' आवां 'उपनेष्यसे' विद्योपदेशाय त्वत्समीपं प्रापयिष्यसि । अथानंतरमेव 'ते' तव मानुषं 'शिरश्छित्त्वा' अन्यत्रान्यस्मिन्देशे 'उपनिधास्यावः' । अथानंतरं अस्मत्पुरतो वर्तमानस्य 'अश्वस्य शिर आहृत्य' छित्त्वा आनीय । 'तत्' आश्वं 'शिरः' 'ते' तव शिरस्त्वेन 'प्रतिधास्यावः' । त्वदीये गले निधाय संधास्यावः । तेन च अश्वसंबंधिना शिरसा 'नौ' आवां 'अनुवक्ष्यसि' आवयोः प्रवर्ग्यविद्यां उपदेक्ष्यसीत्यर्थः । तथाविधस्त्वं 'यदा' यस्मिन् काले 'नौ अनुवक्ष्यसि' । अथानंतरमेव इंद्र आगत्य अनुवचनसाधनं आश्वं 'शिरः' छेत्स्यति । अथानंतरं आवां 'ते' तव 'स्वं' स्वकीयं पूर्वं छित्त्वा अन्यत्र स्थापितं मानुषं 'शिरः' 'आहृत्य' 'ते' तव 'तत्' 'प्रतिधास्यावः इति' । एवं अश्विभ्यां उपाये कथिते तयोः तादृशं सामर्थ्यं अस्त्येवेति संभाव्य स ऋषिः तथेत्यंगीकृतवान् ॥ २३ ॥

तौ ह्रोपनिन्ये । तौ युदोपनिन्येऽथास्य शिरश्छित्त्वाऽन्युत्रापनिदधतु-रथाश्वस्य शिरऽआहृत्य तुद्धास्य प्रतिदधतुस्तेन हाभ्यामनूवाच सु युदा-भ्यामनूवाचाथास्य तदिन्द्रः शिरश्चिच्छेदाथास्य स्वᳪ᳭ शिरऽआहृत्य तुद्धास्य प्रतिदधतुः ॥ २४ ॥

( स्तु ) तुस्मादेतदृषिणाऽभ्युनूक्तम् । ( न्द ) दध्युङ्ह युन्मुध्वाथर्व्वणो वामुश्वस्य शीर्ष्णा प्र युदीमुवाचेत्युयतं तदुवाचेति हैवैतदुक्तम् ॥ २५ ॥

---

तौ होपनिन्ये । तौ यदोपनिन्ये । अथास्य शिरश्छित्त्वाऽन्यत्रापनिदधतुः । अथाश्वस्य शिर आहृत्य तद्धास्य प्रतिदधतुः । तेन हाभ्यामनूवाच । स यदाभ्यामनूवाच । अथास्य तादिन्द्रः शिरश्चिच्छेद । अथास्य स्वं शिर आहृत्य तद्धास्य प्रतिदधतुः ॥ २४ ॥

तस्मादेतदृषिणाऽभ्यनूक्तम् । " दध्यङ् ह यन्मध्वाथर्वणो वामश्वस्य शीर्ष्णा प्र यदी-मुवाच "–इति । अयतं तदुवाच । इति हैवैतदुक्तम् ॥ २५ ॥

---

अंगीकृत्य च तौ अश्विनौ विद्यामुपदिदिक्षुः स्वसमीपं प्रापितवानित्याह–तौ होपनिन्य इति । अथ पूर्वं अश्विभ्यां यथा प्रतिज्ञातं तथैव कृतम् इत्याह–तौ यदोपनिन्ये० निदधतुरिति । तावश्विनौ ' यदा ' यस्मिन् काले ' दध्यङ् ' आथर्वणः स्वसमीपं प्रापितवान् । तदनंतरं तावश्विनौ ' अस्य ' दधीचो मानुषं ' शिर-श्छित्वा ' अन्यत्र स्थापितवंतौ स्थापयित्वा कस्यचिदश्वस्य शिरश्छित्वा ' आहृत्य ' ' अस्य ' ऋषेः शिरस्त्वेन तत् संयोजितवंतौ ऋषिश्च आश्वेन ' तेन ' शिरसा आभ्यामश्विभ्यां प्रवर्ग्याख्यमधुविद्याम् ' अनूवाच ' उप-दिदेश । स च ऋषिः ' यत् ' येन शिरसा आभ्यामश्विभ्यां ' अनूवाच ' अथानंतरं ' अस्य ' ऋषेः तच्छिरः ' इंद्रः ' ' चिच्छेद ' । अथानंतरं आश्वे शिरसि छिन्ने सति अश्विनौ ' अस्य ' दधीचः ' स्वं ' स्वकीयं पूर्वमन्यत्र स्थापितं मानुषं ' शिर आहृत्य ' आनीय ' अस्य ' ऋषेः तदेव ' प्रतिदधतुः ' प्रतिहितं पूर्ववत् अविकलं अव्रणं च यथा भवति तथा संयुक्तं चक्रतुः ॥ २४ ॥

उक्तेऽर्थे कंचिन्मंत्रं संवादयति–तस्मादेतदृषिणाऽभ्यनूक्तं०प्र यदीमुवाचेति । यस्मात् एवं पुरा वृत्तांतो जातः । तस्मादेव कारणात् ' ऋषिणा ' कक्षीवन्नाम्ना अतीन्द्रियदर्शिनाऽपि एतदुक्तमर्थजातं अभिलक्ष्य ' अनूक्तं ' अनुवचनं अध्ययनं कृतम् । यद्वा अलौकिकस्यार्थस्य प्रकाशनात्, ऋषिरिति वेद एवोच्यते । कथ-मनूक्तं तदाह–दध्यङ् हेति । अयमुत्तरः अर्द्धर्चः । अस्य पूर्वार्द्धस्तु–" तद्वान्नरा सनये दंस उग्रमाविष्कृणोमि तन्यतुर्न वृष्टिम् " इति पंचमे मधुब्राह्मणे ( श. प. १४ । ५ । ५ । १६ । ) उदाहरिष्यते । अयमर्थः– हे नरौ नृतारावश्विनौ ! ' वां ' युवयोः, तत् ' उग्रं ' क्रूरं ' दंसः ' कर्म ' सनये ' धनानां लाभार्थं ' आवि-ष्कृणोमि ' प्रकटीकरोमि । ' न ' इत्युपमार्थे । ' तन्यतुर्न ' यथा तन्यतुः स्तनयित्नुर्मेघो न पिहितां वृष्टि-माविष्करोति । सर्वत्र लोके बिंदुशो विस्तारयति । किं तदुग्रमित्युच्यते । ' आथर्वणः ' अथर्वणः पुत्रः ' दध्यङ् ' नाम ऋषिः खलु पुरा ' वां ' युवाभ्यां ' यत् ' प्रवर्ग्याख्यं ' मधु ' लोके प्रसिद्धम् ' अश्वस्य शीर्ष्णा ' शिरसा प्रतिहितेन ' प्रोवाच ' प्रोक्तवान् ' इति ' । यत् कर्म तदिति । अथास्य मंत्रस्य तात्पर्य-

( न्त ) तन्न सुर्व्वस्माऽअनुब्रूयात् । ( दे ) एनुस्यᳬ हि तुदुथो नेन्मऽइन्द्रः शिरश्छिनदुदिति योऽन्वेवु ज्ञातस्तुस्मै ब्रूयादुथ योऽनूचानोऽथु योऽस्य प्रियः स्यान्नु त्वेव सुर्व्वस्माऽइव ॥ २६ ॥

सम्वत्सरवासिनेुऽनुब्रूयात् । ( दे ) एष वै सम्वत्सरो युऽएष तुपत्येषुऽउ प्रवुर्ग्यस्तुदेतुमेवैतत्प्रीणाति तुस्मात्सम्वत्सरवासिनेुऽनुब्रूयात् ॥ २७ ॥

---

तन्न सर्वस्मा अनुब्रूयात् । एनस्यं हि तत् । अथो नेन्म इंद्रः शिरश्छिनददिति । योऽन्वेव ज्ञातः । तस्मै ब्रूयात् । अथ योऽनूचानः । अथ योऽस्य प्रियः स्यात् । न त्वेव सर्वस्मा इव ॥ २६ ॥

संवत्सरवासिनेऽनुब्रूयात् । एप वै संवत्सरः । य एष तपति । एष उ प्रवर्ग्यः । तदेतमेवैतत्प्रीणाति । तस्मात्संवत्सरवासिनेऽनुब्रूयात् ॥ २७ ॥

---

माह—अयतं तद्वुवाचेति । इंद्रेण पुरा मा अन्यस्मै वोचः इति प्रतिषिद्धमपि तन्मधु, ' अयतं ' अनियमितं मन्वानः ' उ ' एव दध्यङ् ताभ्यामश्विभ्यां 'उवाच' उक्तवानिति यत् एतत्तदेव खलु ऋषिणा मंत्रेणोक्तं प्रतिपादितम् । मदीयं मानुषं शिरस्तु अश्विभ्यामन्यत्र निक्षिप्तम् । येन शिरसा ताभ्यां विद्या उपदिश्यते । काममिंद्रस्तच्छिनत्तु । पुनः प्रतिहितेन मदीयेन मानुषशिरसा विद्याया अनुपदिष्टत्वात् तस्य छेदनशंकाऽपि न संभवतीति । एवं विश्रंभेण अश्विभ्यां विद्यामुपदिदेशेति तात्पर्यप्रतिपादकस्य ब्राह्मणस्याभिप्रायः ॥ २५ ॥

इदं प्रवर्ग्याख्यं मधु साधारण्येन सर्वेषां नोपदेष्टव्यम् इत्याह—तन्न सर्वस्मा अनुब्रूयादिति । ' तत् ' पूर्वोक्तं इंद्रेण गोपितं प्रवर्ग्याख्यं मधु ' सर्वस्मै ' ये विशिष्टमातापितृजन्याः आचारवंतश्च । ये च तद्विलक्षणाः तस्मै सर्वस्मै जनाय अविशेषेण ' नानुब्रूयात् ' नोपदिशेत् नाध्यापयेद्वा । कुत इत्येतत् ? आह—एनस्य९ हि तदथो नेन्म इंद्रः शिरश्छिनददिति । यत् अविशेषेण सर्वेषामुपदेशनमध्यापनं तत् ' एनस्यं ' एनसे हितं पापकारि भवति खलु अतो न ब्रूयात् । ' अथो ' अपि च ' मे ' मदीयं विद्योपदेशसाधनं ' शिरः ' ' इंद्रः छिनदत् ' छिंद्यात् । यथा पुरा अश्विभ्यामुपदिष्टवतो दधीचः शिरः चिच्छेद । नेदिति परिभये ( निरु. १ । ११।१ ) यदि अहम् अविशेषेण सर्वस्मै उपदेक्ष्यामि । तर्हि इंद्र आगत्य मदीयं शिरः छिन्द्यात् इति परिभयेनापि यस्मै कस्मैचिदपि अविज्ञातकुलगोत्राय नोपदेष्टव्यमित्यर्थः । यद्वा नेति प्रतिषेधे ( निरु. १ । ४।७ ) । इदित्यवधारणे । नैव मदीयं शिरः इंद्रः छिंद्यादिति । अनेनाभिप्रायेण । " छिदिर्द्वैधीकरणे " ( धा. पा. रु. उ. ३ ) इत्यस्मात् लोटि अडागमः । "इतश्च लोपः" ( पा. सू. ३।४। ९७ ) इतीकारलोपः । रुधादित्वात् श्नम् । तर्हि, कस्मै विद्या उपदेष्टव्या इत्यत आह—योऽन्वेव ज्ञातस्तस्मै० इवेति । ' यः ' खल्वेव, शिष्यः ' ज्ञातः ' विशिष्टमातापितृजन्यत्वेनावगतः ' तस्मै ' प्रवर्ग्याख्यमधुविद्यां ' ब्रूयात् ' उपदिशेत् । अथवा ' यः अनूचानः ' सांगवेदाध्यायी तस्मै ब्रूयात् । अथवा ' यः अस्य प्रियः ' इष्टतमो बंधुः स्यात् । तस्मै ब्रूयात् । एवं एतेषामेव विद्यामुपदिशेत् । ' न तु ' अविशेषेणैव ' सर्वस्मै ' शिष्यजनाय उपदेष्टव्यैव भवेत् । साधारण्येन सर्वेषामुपदेष्टा एनस्वी भवति । तथा न भवेदित्यर्थः ॥ २६ ॥

अथ ये पूर्वोक्ता उपदेशार्हाः शिष्याः तेषामपि झटिति विद्योपदेशो न कार्यः इत्याह—संवत्सरवासिने

( त्ति ) तिस्रो रात्रीर्व्व्रतञ्चरति । त्रयो वाऽऋतवः संवत्सरस्य संवत्सरऽ एष यऽएष तपत्येषुऽउ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मात्तिस्रो रात्रीर्व्व्रतञ्चरति ॥ २८ ॥

---

तिस्रो रात्रीर्व्रतं चरति । त्रयो वा ऋतवः संवत्सरस्य । संवत्सर एषः । य एष तपति । एष उ प्रवर्ग्यः । तदेतमेवैतत्प्रीणाति । तस्मात्तिस्रो रात्रीर्व्रतं चरति ॥ २८ ॥

---

**अनुब्रूयादिति** । संवत्सरपर्यंतं स्वसमीपे निवासेन शिष्यस्य आचारादिकं परीक्ष्य तस्मै संवत्सरं समीपे कृतनिवासाय शिष्याय ततः परं 'अनुब्रूयात्' उपदिशेत् । अथ एतदुपपादयति—**एष वै संवत्सरो य एष तपतीति** । 'य एषः' सूर्यो दिवि वर्तमानस्तपति सर्वं जगत् भासयते । 'एषः' एव संवत्सरात्मकः कालः । तदुत्पत्त्यधीनत्वात् । 'प्रवर्ग्यः' प्रवर्ग्याख्यं यज्ञशिरःसंस्तुतं कर्मापि 'एषः' उद्दिश्यमान आदित्य एव । "तत्पतित्वाऽसावादित्योऽभवत्" (श.प.१४।१।१।१०) इति पूर्वं आम्नातत्वात् । यतः एवं संवत्सरप्रवर्ग्यौ उभावपि सूर्यात्मकौ । 'तत्' तस्मात् । 'एतत्' एतेन संवत्सरमुषिताय प्रवर्ग्यानुवचनेन एतमेवादित्यं 'प्रीणाति' तर्पयति । "प्रीञ् तर्पणे" (धा. पा. भ्वा. उ. १) इति धातुः । उक्तमर्थं निगमयति—**तस्मात्संवत्सरवासिनेऽनुब्रूयादिति** । इत्थं पूर्वोक्तप्रकारेण प्रवर्ग्याख्यस्य यज्ञशिरसः प्रतिपादकं समंत्रकं ब्राह्मणं दधीचा अश्विभ्यामुपदिष्टम् । तच्च शीघ्रं यस्मै कस्मैचित् अन्यस्मै अद्यतनैरपि आचार्यैर्नोपदेष्टव्यम् । अपि तु कुलशीलाचारसंपन्नाय संवत्सरं गुरुशुश्रूषां कृतवते पुरुषायैव उपदेष्टव्यमित्युक्तम् ॥ २७ ॥

अथ तदध्ययनस्य व्रतानि वक्ष्यन् तत्कालमानमाह—**तिस्रो रात्रीर्व्रतं चरतीति** । प्रवर्ग्यकांडाध्ययने प्रारब्धे अध्येता अध्यापकश्च 'तिस्रो रात्रीः' त्रिरात्रपर्यंतं वक्ष्यमाणं 'व्रतं चरति' अनुतिष्ठेत् । अथैतदुपपादयति—**त्रयो वा ऋतवः०चरतीति** । 'त्रयः' संवत्सरस्य खलु 'ऋतवः' । ग्रीष्मो वर्षा हेमंत इति यास्केनोक्ताः । अवशिष्टास्त्रयस्तु तत्रैवांतर्भवंति । वसंतो ग्रीष्मे शरत् वर्षर्तौ शिशिरो हेमंते । तापवृष्टिहिमादिभिः ग्रीष्मादिधर्मैः अल्पतरैः तेषां वसंतादीनामपि योगात् । **संवत्सर एषः** । इत्यादि पूर्ववत् । इयांस्तु विशेषः । तत्तस्मात् 'एतत्' एतेन त्रिरात्रव्रताचरणेन त्रित्वसंख्योपेतऋतुद्वारा 'एतं' संवत्सरं प्रवर्ग्यात्मकं आदित्यमेव 'प्रीणाति' तर्पयतीति । तदेतन्निगमयति—**तस्मात्तिस्रो रात्रीर्व्रतं चरतीति** । अयमभिप्रायः—यद्यपि संवत्सरपर्यंतं एतत् कांडम् अध्यापयीत अधीयीत वा । तथापि संवत्सरस्य ऋतुत्रयात्मकत्वात् त्रित्वसंख्यायोगेन तिसृणां रात्रीणां तत्प्रत्याम्नायत्वात् त्रिरात्रव्रताचरणेन संवत्सरपर्यंतं व्रतं चरितं भवति इत्यर्थः ॥ २८ ॥

---

१–तिस्रो रात्रीर्व्रतं चरेत् १ अमांसाशी २ अमृण्मयपायी ३ स्त्रीशूद्रशवकृष्णशकुनिशूनां चादर्शनमसंभाषा च तैः ४ शवशूद्रसूतकान्नानि च नाद्यात् ५ मूत्रपुरीषे ष्ठीवनं चातपे न कुर्यात् ६ सूर्याच्चात्मानं नांतर्दधीत ७ तप्तेनोदकार्थान् कुर्यात् ८ अवज्योत्य रात्रौ भोजनम् ९ सत्यवदनमेव वा १० दीक्षितोऽप्यातपादीनि कुर्यात् प्रवर्ग्यवांश्चेदिति ११ । पार. गृ. सू. कां. २ ख. ८ स्नातकधर्मप्रकरणे । कृष्णशकुनिः काकः । शवान्नं क्रीत्वा लब्ध्वा वा यदद्यते तत्प्रतिषेधः । शूद्रान्नं भोज्यान्नस्यापि नापितादेः प्रतिषिध्यते । सूतकान्नं अर्वाक् दशाहात्प्रसवे सति । अंतर्द्धानं छत्रादिना । तप्तेनोदकेन । अवज्योतनं प्रदीपोल्कादिनाऽन्यंतरेण । सत्यवदनमेव वा कर्तव्यम् । नाधस्तना नियमाः । यदि प्रवर्ग्यवान् दीक्षितः ततोऽत्र मूत्रपुरीषे ष्ठीवनं चातपे न कुर्यादित्येवमादीनि करोतीति कर्कः ॥

तप्तमाचामति । तपस्व्यनुब्रवाऽइत्यमाᳬंसाश्यनुब्रूते तपस्व्यनुब्रवाऽइति ॥ २९ ॥

( त्यु ) अमृण्मयपायी । ( त्र ) अस्ति वाऽअस्याᳬं सᳬंसृष्टमिव यदस्यामनृतम्वदति तस्मादमृण्मयपायी ॥ ३० ॥

( त्रु ) अशूद्रोच्छिष्टी । ( मृचे ) एष वै घर्मो यऽ एष तपति सैषा श्रीः सत्यं ज्योतिरनृतᳬं स्त्री शूद्रः श्वा कृष्णः शकुनिस्तानि न प्रेक्षेत नेच्छ्रियश्च पाप्मानश्च नेज्ज्योतिश्च तमश्च नेत्सत्यानृते सᳬंसृजानीति ॥ ३१ ॥

---

तप्तमाचामति । तपस्व्यनुब्रवा इति । अमांसाश्यनुब्रूते । तपस्व्यनुब्रवा इति ॥ २९ ॥
अमृण्मयपायी । अस्ति वा अस्यां संसृष्टमिव । यदस्यामनृतं वदति । तस्मादमृण्मयपायी ॥ ३० ॥
अशूद्रोच्छिष्टी । एष वै घर्मः । य एष तपति । सैषा श्रीः । सत्यं ज्योतिः । अनृतं स्त्री शूद्रः श्वा कृष्णः शकुनिः । तानि न प्रेक्षेत । नेच्छ्रियं च पाप्मानं च । नेज्ज्योतिश्च तमश्च । नेत्सत्यानृते संसृजानीति ॥ ३१ ॥

---

किं पुनस्तत् व्रतमिति तदाह—तप्तमाचामतीति । 'तप्तं' उष्णजलं 'आचामति' यद्यत् आचमनादिकं उदककार्यं तत्सर्वं उष्णजलेनैव कुर्यात् इत्यर्थः । किमर्थमिदं तप्ताचमनम् ? 'तपस्वी' संतापयुक्तः अहं 'अनुब्रवै' प्रवर्ग्यब्राह्मणं अनुब्रवाणि इत्येवमर्थम् । सूर्यात्मको हि अयं प्रवर्ग्यः । तस्य शीतोदकस्य स्पर्शने सति औष्ण्यं विहन्येतेति । तत् अध्येतॄणामपि शीतोदकासंस्पर्शाय उष्णजलाचमनविधानम् । तथा 'अमांसाशी' । मांसमश्नातीति मांसाशी तद्विलक्षणः, मांसभक्षणमकुर्वन्, एतत् ब्राह्मणं 'अनुब्रूते' अधीयीत । अस्यापि प्रयोजनं पूर्ववदेवाह—तपस्वीति । मांसभक्षणस्य तपोविरोधित्वं प्रसिद्धम् । अतः तद्वर्जनात् 'तपस्वी' तपसा नियमेन अभोज्यपरित्यागलक्षणेन युक्तः सन् 'अनुब्रवै' अनुब्रवाणीति ॥ २९ ॥

तथा 'अमृण्मयपायी' भवति । मृण्मयेन मृद्विकारेण पात्रेण पानशीलो न भवेत् । मृण्मयपात्रेण उदकादिकं न पिबेदित्यर्थः । तदेतत् उपपादयति—अस्ति वा अस्यां संसृष्टमिव यदस्यामनृतं वदतीति । 'अस्यां' पृथिव्यां संसृष्टमिव दोषसंयुक्तमिव अवयवजातमस्ति वै अस्ति खलु । कुतः ? 'यत्' यस्मात् अस्यामासीनः सर्वो जनः प्रायेण अनृतमसत्यं वदति । 'तस्मात्' हेतुभूतः पापसंसर्गोऽस्यां विद्यते इति गम्यते । तस्मात् पार्थिवेन शरावादिना पानं न कार्यमिति निगमयति—तस्मादमृण्मयपायीति ॥ ३० ॥

तथा 'अशूद्रोच्छिष्टी' । छांदसः सुलोपः । शूद्राय दत्त्वा यद्भांडे अवशिष्टं तत् शूद्रोच्छिष्टं तद्रहितो भवेत् । तद्भुक्तावशेषितं न भुंजीतेत्यर्थः । 'य एषः' सूर्यः 'तपति' सः 'एषः' खलु 'घर्मः' प्रवर्ग्यः । अतस्तत्प्रतिपादकं ब्राह्मणं अधीयानेन ब्राह्मणेन शुद्धेन भवितव्यमित्यर्थः । अपि च—'सैषा श्रीः' । स पूर्वोक्त एष प्रवर्ग्यः यज्ञशिरोरूपत्वात् 'श्रीः' संपत् । विधेयापेक्षया सैषेति स्त्रीलिंगता । तथा अवितथफलहेतुत्वात् 'सत्यं' यथार्थभाषणरूपम्, सूर्यात्मकत्वात् 'ज्योतिः' तेजोरूपम् । 'कृष्णः शकुनिः' कृष्णवर्णः

( त्यु ) अथैष वाव यशः । ( शो ) यऽएष तपति तद्यत्तदादित्यो यशो यज्ञो हैव तद्यशस्तद्यत्तद्यज्ञो यशो यजमानो हैव तद्यशस्तद्यत्तद्यजमानो यशऽऋत्विजो हैव तद्यशस्तद्यत्तदृत्विजो यशो दक्षिणा हैव तद्यशस्तस्माद्यामस्मै दक्षिणामानयेयुर्न्नताँ * सद्योऽन्यस्माऽअतिदिशेन्नेद्यन्मेदं यशऽआगंस्तत्सद्योऽन्यस्माऽअतिदिशानीति श्वो वैव भूते द्व्यहे वा तदात्मन्येवैतद्यशः कृत्वा यदेव तद्भवति तत्सद्ददाति हिरण्यं गाम्वासोऽश्वम्वा ॥ ३२ ॥

अथैष वाव यशः । य एष तपति । तद्यत् तदादित्यो यशः । यज्ञो हैव तद्यशः । तद्यत् तद्यज्ञो यशः । यजमानो हैव तद्यशः । तद्यत् तद्यजमानो यशः । ऋत्विजो हैव तद्यशः । तद्यत् तदृत्विजो यशः । दक्षिणा हैव तद्यशः । तस्माद्यामस्मै दक्षिणामानयेयुः । न तां सद्योऽन्यस्मा अतिदिशेत् । नेद्यन्मेदं यश आगन् । तत्सद्योऽन्यस्मा अतिदिशानीति । श्वो वैव भूते द्व्यहे वा । तदात्मन्येवैतद्यशः कृत्वा यदेव तद्भवति । तत्सद्ददाति । हिरण्यं गां वासोऽश्वं वा ॥ ३२ ॥

पक्षी काक इत्यर्थः । स्त्रीशूद्रादय एते 'अनृतं' अनृतात्मकाः । स्त्रीणां वेदाध्ययनाद्यभावात् कामचारसंभवाच्चानृतत्वम् । शूद्रस्य संस्कारविहीनत्वात् सृष्ट्यादौ प्रजापतेः पादादुत्पन्नत्वात् च अनृतत्वम् । श्वकृष्णशकुन्योः जन्मान्तरकृतमहापापपरिणामरूपत्वात् अनृतत्वम् । एतदनृतप्रतिपादनमुपलक्षणं पापतमसोरिति । स्त्रीशूद्राणां तमोरूपत्वं पापरूपत्वं च एवमेवावगंतव्यम् । पूर्वं प्रवर्ग्यस्य श्रीः, सत्यं, ज्योतिः, इति गुणत्रयप्रतिपादनात् तत्प्रतिपक्षेऽपि तत्प्रतियोगिनः त्रयो गुणाः वक्तव्याः । अतस्तत्रैकप्रतिपादनं इतरयोरपि उपलक्षणमिति । अस्त्वेवं प्रवर्ग्यस्य च स्त्रीशूद्रादीनां च परस्परविरोधिस्वभावता । किं तत इत्यत आह—तानि न प्रेक्षेतेति । 'तानि' स्त्रीशूद्रादीनि पापानृततमोरूपाणि प्रवर्ग्यमधीयानः 'न प्रेक्षेत' नावलोकयेत् । अप्रेक्षितुः कोऽभिप्रायः ? इत्युच्यते—यदि अहं प्रवर्ग्यमधीयानः स्त्र्यादीनि प्रेक्षेय तर्हि श्रियं यशश्च ऐश्वर्यरूपं प्रवर्ग्यं च पाप्मानं च स्त्रीशूद्रात्मकं पापं दारिद्र्यं च, 'संसृजानि' संसृष्टं कुर्याम् । नेदिति परिभये । अहो महदेतत् कष्टम् । तस्मात् विरुद्धस्वभावयोः अनयोः संसर्गाभावाय न प्रेक्षेत इत्यभिप्रायः । अथवा श्रियं च पाप्मानं च दारिद्र्यं पापफलं च नैव संसृजानि संसृष्टं करवाणीत्यनेनाभिप्रायेण । 'नेत् ज्योतिश्च तमश्च' 'नेत्सत्यानृते' इत्यनयोरपि पर्याययोरेवमेव योजनीयम् ॥ ३१ ॥

अथैतत् प्रवर्ग्याख्यं कर्म यशोरूपेण स्तौति—अथैष वाव यशः० अतिदिशानीतीति । 'अथ' प्रवर्ग्यस्य श्रीरूपत्वसत्यात्मकत्वज्योतीरूपत्वप्रतिपादनानंतरं यतः एवम् अयं श्रीसत्याद्यात्मकः अतः कारणात् 'एष वाव' एष एव प्रवर्ग्यः यशोरूपः, 'य एषः' दृश्यमानः 'आदित्यः' भूत्वा दिवि 'तपति' प्रकाशते । एष एव 'यशः' इत्यभिनयः । इत्थं यशोरूपस्य आदित्यात्मकस्य प्रवर्ग्यस्य संबंधात् यज्ञादीनां दक्षिणापर्यंतानां वक्ष्यमाणानां यशस्वित्वमित्याह—तद्यत्तदादित्यो यश इति । तत्तत्र 'यत्' यदा 'तत्' सः 'आदित्यः'

* "न ता इत्सद्यः" इति क्वचित् पाठान्तरम् ।

( वाऽथै ) अथैतद्वै । ( द्वाऽआ ) आयुरेतज्ज्योतिः प्रविशति युऽएत-मनु वा ब्रूते भक्षयति वा तस्य व्रतचर्य्या नातपति प्रच्छादयेत नेदेतस्मा-त्तिरोऽसानीति नातपति निष्ठीवेन्नेदेतमभिनिष्ठीवानीति नातपति प्रस्रा-वयेत नेदेतमभिप्रस्रावयाऽइति यावद्वाऽएषऽआतपति तावानेष नेदेत-

---

अथ एतद्वा आयुः, एतज्ज्योतिः प्रविशति । य एतमनु वा ब्रूते । भक्षयति वा । तस्य व्रतचर्या । नातपति प्रच्छादयेत । नेदेतस्मात्तिरोऽसानीति । नातपति निष्ठीवेत् । नेदेतमभिनिष्ठीवानीति । नातपति प्रस्रावयेत । नेदेतमभिप्रस्रावयै इति । यावद्वा एष आतपति । तावानेषः ।

---

प्रवर्ग्यात्मकः ' यशः ' यशस्वी यशोरूपेण संपन्न इत्यर्थः । तत्तदा ' यज्ञो हैव ' तच्छिरस्कः सवनत्रयात्मकः सोमयाग एव यज्ञरूप एव संपन्नः । तत्तथा च ' यत् ' यदा ' तत् ' सः ' यज्ञः ' ' यशः ' यशस्वी जातः । ' तत् ' तदा ' यजमान ' एव खलु ' यशः ' यशस्वी भवति यशोरूपयज्ञसंबन्धात् । तत्तथा च ' यत् ' यदा ' तत् ' सः ' यजमानः ' ' यशः ' तदा तस्य याजकाः ' ऋत्विजः ' एव यशस्विनो भवंति । तत्तथा च ' यत् ' यदा ' तत् ' ते ऋत्विजः ' यशः ' यशोरूपाः संपद्यंते । ' तत् ' तदा दक्षिणैव खलु यशोरूपऋत्विक्संबंधात् ' यशः ' यशस्विनी भवति । एवं परंपरया आदित्यात्मकस्य प्रवर्ग्यस्य यश एव प्रसृतमित्यर्थः । अथ प्रसंगात् दक्षिणाविषये किंचित् विधत्ते—**तस्माद्यामस्मै० श्वं वेति ।** यस्मात् उक्तप्रकारेण दक्षिणा यशोरूपा । ' तस्मात् ' कारणात् ' अस्मै ' ऋत्विजे ' यां दक्षिणां ' गोहिरण्यादिकां यजमानाः ' आनयेयुः ' परिक्रयार्थमानीय दद्युः । ' तां ' दक्षिणां ' सद्यः ' शीघ्रं, दाना-नंतरमेव ' अन्यस्मै ' पुरुषांतराय ' न अतिदिशेत् ' न प्रदद्यात् । ' नेत् ' नैव तद्दक्षिणारूपं यशः ' सद्यः ' शीघ्रं ' अन्यस्मै ' 'अतिदिशानि' प्रयच्छानि । 'यत् यशः' दक्षिणारूपं 'मा' मामृत्विजमागन् इति अनेनाभि-प्रायेण न कस्मैचित् अन्यस्मै प्रतिग्रहीता तां दक्षिणां सद्यो दद्यादित्यर्थः । आगन्निति गमेर्लेटि छांदसः शपो लुक् इलोपश्च "हल्ङ्याभ्यः" ( पा. सू. ६।१।६८ ) इति तलोपे "मो नो धातोः" ( पा. सू. ८।२।६४ ) इति नत्वम् । नेदित्यस्य परिभयार्थोऽपि पूर्ववत् योज्यः । इतः परं सर्वत्र निषेधार्थ एव व्याख्यायते । तर्हि सर्व-दैव प्रतिग्रहीत्रा दक्षिणा न दातव्येति न इत्याह—**श्वो वैव भूते द्व्यहे वा इति ।** ' श्वोभूते ' प्रतिग्रहदिवसात् परस्मिन् दिवसे एव ' वा ' ' द्व्यहे वा ' । द्वयोरह्नोः समाहारः द्व्यहः । " राजाहःसखिभ्यः " ( पा. सू. ५ । ४ । ९१ ) इति टच् समासांतः । " न संख्यादेः समाहारे " ( पा. सू. ५ । ४ । ८९ ) इति अह्नादेशप्रतिषेधः । एकदिनं द्विदिनं तदेतत् प्रतिगृहीतं दक्षिणारूपं ' यशः ' ' आत्मन्येव कृत्वा ' स्वस्मिन्नेव स्थापयित्वा तदीयं सर्वं यशः स्वीकृत्य ' यदेव ' केवलं दक्षिणाद्रव्यं भवति ' सत् ' विद्यमानं तद्दक्षिणाद्रव्यं इच्छया ' ददाति ' अन्यस्मै प्रयच्छेत् हिरण्यादीनामन्यतमम् ॥ ३२ ॥

अथ एतस्य प्रवर्ग्यस्य अनुष्ठानकाले, क्रतुनियमविशेषं विधित्सुराह—**अथैतद्वै० व्रतचर्येति ।** अथेत्यारंभे यत् प्रागुक्तं प्रवर्ग्याख्यं मधु ' एतद्वै ' एतदेव ' आयुः ' जीवनं तद्धेतुभूतमित्यर्थः । अतः तस्य व्रताचरणेन रक्षा कार्या इति भावः । कुतोऽस्य रक्षणापेक्षा ? इति तदाह—**एतज्ज्योतिरिति ।** ' यः ' खलु पुमान् ' एतं ' प्रवर्ग्यं ' अनुब्रूते ' कर्मकालेऽधीते वा तत्रत्यं हुतशिष्टं ' भक्षयति वा ' सः ' एतत् ज्योतिः ' द्युलोके

नैतैर्हिनसानीत्यवज्योत्य रात्रावश्नीयात्तदेतस्य रूपं क्रियते यऽ एष तपति तदु होवाचासुरिरेकॅं ह वै देवा व्रतञ्चरन्ति यत्सत्यं तस्मादु सत्यमेव वदेत् ॥ ३३ ॥

## इति प्रथमप्रपाठके प्रथमं ब्राह्मणम् ॥ १४।१।१ ॥ (१-१) ॥

---

नेदेतमेतैर्हिनसानीति । अवज्योत्य रात्रावश्नीयात् । तदेतस्य रूपं क्रियते । य एष तपति । तद्धु-वाचासुरिः । एकं ह वै देवा व्रतं चरंति यत्सत्यम् । तस्माद्धु सत्यमेव वदेत् ॥ ३३ ॥

---

दृश्यमानं सौरं तेजः 'प्रविशति' प्रवर्ग्यस्य सूर्यात्मनाऽवस्थानस्य प्रागुक्तत्वात् । अतस्तस्य पुंसः आयुषो रक्षणाय 'व्रतचर्या' व्रतस्याचरणं कार्यमनुष्ठेयम् । किं पुनस्तत् व्रतमिति तदाह—नातपति०वदेदिति । 'आतपति' आसमंतात् तापं कुर्वति सति सूर्ये आत्मानं उष्णकिरणसंपर्कतया 'न प्रच्छादयेत' न वस्त्रादिभिरावृणुयात् 'एतस्मात्' दृश्यमानात् प्रवर्ग्यात्मकात् सूर्यात् नेन्नैव 'तिरोऽसानि' तिरोहितोऽतर्हितो भवानि इति । अनेनाभिप्रायेण प्रवर्ग्यकर्मणि वर्तमानः स्वशरीरस्य आच्छादनं न कुर्यात् । तथा, तस्मिन् आतपकारिणि सति 'न निष्ठीवेत्' आस्यगतमुदकादिकं न बहिस्त्यजेत् । "ष्ठिवु निरसने"–(धा. पा. भ्वा. प. ५६१) इति धातुः । 'एतं' प्रवर्ग्यात्मकं सूर्यं नेन्नैव 'अभिनिष्ठीवानि' अभिलक्ष्य निष्ठीवनं करवाणि इत्यनेनाभिप्रायेण । तथा सूर्ये 'आतपति' सति 'न प्रस्रावयेत' मूत्रविसर्जनमपि न कुर्यात् । 'एतं' प्रवर्ग्यात्मकं सूर्यमभिलक्ष्य 'नेत् प्रस्रावयै' प्रस्रावणं न करवाणि इत्यनेनाभिप्रायेण । सूर्योदयमारभ्य यावदस्तमयं आतपवत्प्रदेशे यजमानेन एतानि आच्छादनादीनि प्रवर्ग्यानुष्ठानदिवसेषु न कार्याणीत्यर्थः । आतपवत्प्रदेशे क्रियमाणैः एतैः प्रवर्ग्यस्य को दोषः आपतेत् ? इत्यत आह—यावद्वा इति । यावत्कालं 'एषः' सूर्यः 'आतपति' आसमंतात्तपं करोति । 'तावान्' तावत्कालव्यापी 'एषः' प्रवर्ग्यः । यद्वा 'यावत्' यावति देशे सूर्यः 'आतपति' । 'तावान्' तावद्देशव्यापी 'एषः' अनुष्ठीयमानः प्रवर्ग्यः । एवं च उदया-स्तमययोर्मध्ये आतपवत्प्रदेशे प्राक् निषिद्धानि आच्छादनादीनि यदि कुर्याम् 'एतं' प्रवर्ग्यं, 'हिनसानि' हिंसितं करवाणि नेन्नैव तत् युक्तमित्यनेनाभिप्रायेण । आच्छादनादिकं न कुर्यात् । अपि च 'रात्रौ' 'अव-ज्योत्य' काष्ठैरग्निं प्रज्वाल्य 'अश्नीयात्' भुंजीत । 'तत्' अवज्योत्याशनं 'एतस्य' प्रवर्ग्यस्य सूर्यात्मनः 'रूपं क्रियते' "अग्निं वावादित्यः सायं प्रविशति" (तै. ब्रा. २।१।२।९) इति श्रुतेः । आदित्यस्य रात्रौ अग्न्यात्मना अवस्थानात् । 'य एषः' आदित्यस्तपति प्रकाशते द्युलोके एतस्येति संबंधः, एवं अनाच्छादनादीनि कानिचित् व्रतानि उक्तानि । आसुरिराचार्यः दुष्करमेकमेव व्रतं कर्तव्यमिति मन्यते—तद्धु हेत्यादिना । 'तत् उ' तत्र खलु 'आसुरिः' एतत्संज्ञ ऋषिः 'उवाच ह' उक्तवान् खलु 'देवाः' पुरा सत्रयागकाले 'एकं ह वै' एकमेव खलु 'व्रतं चरंति' अनुतिष्ठंति । किं तत् ? 'यत् सत्यं' सत्यवदनं यथार्थभाषणम् । यस्मादेवं 'तस्मात्' अवश्यं 'सत्यमेव वदेत्' । अनाच्छादनादिकं तु, यथासंभवं कर्तव्यमिति तस्याभिप्रायः ॥ ३३ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये चतुर्दशे काण्डे तदन्तर्भूते प्रथमे प्रवर्ग्यकाण्डे प्रथमेऽध्याये प्रथमं ब्राह्मणम् ॥ १४ । (१) १ । १ ॥

स वै सम्भारान्त्सुम्भरति । स यद्वाऽएनानित्था चेत्था च सम्भुरति तुत्सम्भाराणाᳬं सम्भारत्वᳬं स वै युत्रयत्र यज्ञुस्यु न्यक्तन्तुत-स्ततः । सुम्भरति ॥ १ ॥

कृष्णाजिने सुम्भराति । यज्ञो वै कृष्णाजिनं यज्ञुऽएवैनमेतत्सुम्भरति लोमतश्छुन्दाᳬंसि वै लोमानि च्छुन्दःस्वेवैनमेतत्सुम्भरत्युत्तरतऽउुदीची हि मनुष्याणान्दिुक्प्राचीनग्रीवे तद्धि देवत्रा ॥ २ ॥

---

महावीरादिप्रवर्ग्यपात्रसंभरणब्राह्मणम् ।

स वै संभारान् संभरति । स यद्वा एनानित्था चेत्था च संभरति । तत्संभाराणां संभारत्वम् । स वै यत्रयत्र यज्ञस्य न्यक्तम् । ततः संभरति ॥ १ ॥

कृष्णाजिने संभरति । यज्ञो वै कृष्णाजिनम् । यज्ञ एवैनमेतत्संभरति । लोमतः । छंदांसि वै लोमानि । छंदःस्वेवैनमेतत्संभरति । उत्तरतः । उदीची हि मनुष्याणां दिक् । प्राचीनग्रीवे । तद्धि देवत्रा ॥ २ ॥

---

इत्थं आख्यायिकया प्रवर्ग्यस्य विधित्सितस्य यज्ञशिरस्त्वम्, तद्रहितस्य च अग्निष्टोमादेः फलजननासामर्थ्य-मपि उक्त्वा । तस्यावश्यानुष्ठेयस्य प्रतिपादककांडाध्यायिनः तदनुष्ठातुश्च व्रतानि दर्शितानि प्रथमब्राह्मणे । अथ द्वितीयेन तत्कर्मनिवर्तकानां मृदारुमयाणां पात्राणां निष्पत्तिः प्रतिपाद्यते । तत्र महावीरादीनि मृण्मयानि पात्राणि निर्मातुं मृद्वल्मीकवपादयः संभाराः अग्रे विधास्यन्ते । प्रथमं तावत् तेषां संभारसंज्ञां निर्वक्ति–**स यद्वा एना-नित्था चेत्था च संभरति तत्संभाराणां संभारत्वमिति** । इतः परं वक्ष्यमाणासु सर्वासु क्रियासु आध्व-र्यवसमाख्यावशेन अध्वर्युरेव सामान्यतः कर्तृतया संबध्यते । वचनात् तद्व्यतिरिक्तानामिति सर्वत्रानुसंधेयम् । सोऽध्वर्युः दीक्षादिवसेषु 'यद्वै' यस्मात् खलु 'एनान्' वक्ष्यमाणान् मृदादिसंभारान् 'इत्था चेत्था च' इत्थं चेत्थं च, इत्थाशब्दद्वयं वक्ष्यमाणसंभाराहरणप्रकारस्य हस्तेन अभिनयप्रदर्शनार्थम् । नानादिगवस्थितान् बहुप्रकारेण 'संभरति' एकत्र आनीय समूहीकरोति । तत्तस्मात् इतस्ततः संभ्रियमाणत्वात् तेषां 'संभा-राणां संभारत्वं' संभारसंज्ञा निष्पन्ना । अनेन च प्रवर्ग्यं चिकीर्षुः अध्वर्युः आदौ वक्ष्यमाणान् मृदादिपंचसंभा-रान् संभरेदिति विधिरुन्नेतव्यः । कुतो देशात् संभारा आहर्तव्याः इति तदाह–**स वै यत्रयत्र यज्ञस्य न्यक्तं ततः संभरतीति** । 'सः' खलु अध्वर्युः 'यत्रयत्र' यस्मिन् यस्मिन् देशे 'यज्ञस्य' शिरः 'न्यक्तं' संसृष्टं 'ततस्ततः' तस्मात्तस्मात् देशात् 'संभरति' । यज्ञशिरःसारान् मृदादिरूपान् संभारान् एकत्र समूही-करोति । अनेन इत्था चेत्था चेति प्रागुक्तं बहुप्रकारत्वमपि उपपादितं भवति ॥ १ ॥

कस्मिन् वा अजिने तत्संभरणमिति तदाह–**कृष्णाजिने संभरतीति** । कृष्णः कृष्णमृगः तस्याजिने चर्मणि वक्ष्यमाणाम् संभारान् 'संभरति' । अथैतत् प्रशंसति–**यज्ञो वै कृष्णाजिनं. यज्ञ एवैनमेतत्संभरतीति** ।

**( त्राऽभ्र्या ) ऽअभ्र्या । व्वज्रो वाऽअभ्रिर्व्वीर्य्यम्वै व्वज्रो व्वीर्य्येणैवैन-मेतत्समर्द्धयति कृत्स्नङ्करोति ॥ ३ ॥**

---

**अभ्र्या । वज्रो वा अभ्रिः । वीर्यं वै वज्रः । वीर्येणैवैनमेतत्समर्द्धयति । कृत्स्नं करोति ॥ ३ ॥**

---

यदेतत् कृष्णाजिनं असौ ' यज्ञो वै ' यज्ञ एव खलु । यज्ञस्य कस्माचिन्निमित्तात् देवेभ्यः पलायमानस्य कृष्ण-मृगरूपेणावस्थानात् तच्चर्मणो यज्ञत्वम् । तथा च तैत्तिरीयकं-" यज्ञो देवेभ्यो निलायत । कृष्णो रूपं कृत्वा । यत् कृष्णाजिने हविरध्यवहंति " इति । तथा सति साक्षात् यज्ञे शिरसा संधित्स्यमान एव 'एनं' प्रवर्ग्यं ' एतत् संभरति ' एतेन संभरणेन संयोजयति । अथ तस्य लोमवद्भागे संभरणं कार्यं इति विधाय स्तौति-**लोमत-श्छंदांसि वै लोमानि छंदःस्वेवैनमेतत्संभरतीति** । कृष्णाजिनस्य यस्मिन्परिपार्श्वे लोमानि भवंति तस्मिन् ' लोमतः ' लोम्नि लोमवत्प्रदेशे संभरतीत्यनुषंगः । कुत एतत् अलोमके विशसनप्रदेशे वा कस्मान्न भवतीति चेत् उच्यते । छंदांसि गायत्र्यादीनि छंदोयुक्ता ऋचः सामानि च खलु कृष्णाजिनस्य लोमानि । तथा च तैत्तिरीय-कम्-" एष वा ऋचो वर्णो यच्छुक्लं कृष्णाजिनस्यैष साम्नो यत् कृष्णम् " ( तै. सं. ६ । १ । ३ ) इति । कृष्णाजिनस्य लोमानि शुक्लानि कृष्णानि च भवंति । तत्र शुक्लानि ऋगात्मकानि कृष्णानि सामात्मिकानीति तस्यार्थः। एवं लोम्नां छंदोरूपत्वात् कृष्णाजिनस्य लोमभागे संभारान् संभरन् 'छंदःस्वेव' गायत्र्यादिच्छंदःस्वेव गायत्र्यादिष्वेव ' एनं ' प्रवर्ग्यमुद्दिश्य एतत् ' संभरति ' । वक्ष्यमाणं एतत्संभरणं कृतवान् भवति । अथ दिङ्नियमं विधाय स्तौति-**उत्तरत उदीची हि मनुष्याणां दिक्** इति । ' उत्तरतः ' उदीच्यां दिशि गत्वा संभारान् संभरति ' हि ' यस्मात् सा 'उदीची दिक् मनुष्याणां' दुःखोपशमनहेतुत्वेन संबंधिनी । तथा च-तैत्तिरीयकम् "उदीच उत्सृजत्येषा वै देवमनुष्याणां शांता दिगिति " ( तै. सं. ५ । २ । ५ ) अथ तस्य कृष्णाजिनस्यास्त-रणप्रकारं विधत्ते-**प्राचीनग्रीवे तद्धि देवत्रेति** । प्राचीना प्राच्यां दिशि अवस्थिता ग्रीवा यस्य तथाविधे कृष्णाजिने आस्तीर्णे संभरति । ' तद्धि ' प्राग्दिक्संबद्धं खलु ' देवत्रा ' देवेषु प्रसिद्धम् । तस्या दिशो देवानां स्वभूतत्वात् । तच्च तैत्तिरीयके स्पष्टमाम्नायते-" देवमनुष्या दिशो व्यभजंत प्राचीं देवा दक्षिणा पितरः " ( तै. सं. ६ । १ । १ ) इति । " देवमनुष्यपुरुषपुरुमर्त्येभ्यः " ( पा. सू. ५ । ४ । ५६ ) इत्यादिना सप्तम्यर्थे त्राप्रत्ययः ॥ २ ॥

अथ तत्र साधनं विधाय स्तौति-**अभ्र्या वज्रो०करोतीति** । अभ्रिः खननसाधनं काष्ठं तया संभारान्

---

१-अत्रैव " अथ कृष्णाजिनमादत्ते यज्ञस्यैव सर्वत्वाय यज्ञो ह देवेभ्योऽपचक्राम स कृष्णो भूत्वा चचार तस्य देवा अनुविद्यं त्वचमेवावच्छायाजह्नुः । " इति । ( श. प. १ । १ । ४ । १ ) ।

२-अत्रैव " तस्य यानि शुक्लानि च कृष्णानि च लोमानि तान्यृचां च साम्नां च रूपं यानि शुक्लानि तानि साम्नाꣳ रूपं यानि कृष्णानि तान्यृचां यदि वेतरथा यान्येव कृष्णानि तानि साम्नाꣳ रूपं यानि शुक्लानि तान्यृचां यान्येव बभ्रूणीव हरीणि तानि यजुषाꣳ रूपम् । " इति । ( श. प. १ । १ । ४ । २ ) ।

३-अत्रैव " सा व प्राक्प्रवणा स्यात्प्राची हि देवानां दिगथोऽ उदक्प्रवणोदीची हि मनुष्याणां दिग्दक्षिणतः पुरीषं प्रत्युदूह-त्येषा वै दिक् पितृणाꣳ सा यद्दक्षिणाप्रवणा स्यात्क्षिप्रे ह यजमानोऽमुं लोकमियात्तथो ह यजमानो ज्योग्जीवाति । " तथा " तस्मादु ह न प्रतीचीनशिराः शयीत नेद्देवानभिप्रसार्य शया इति या दक्षिणा दिक् सा पितॄणां या प्रतीची सा सर्पाणां यतो देवाऽउच्चक्रमुः सैषा हीना योदीची दिक् सा मनुष्याणां तस्मान्मानुषऽउदीचीनवꣳशामेव शालां वा विमितं वा मिन्वंत्यु-

( त्यौ ) औदुम्बरी भवति । ( त्यू ) ऊर्ग्वैरसऽउदुम्बरऽऊर्ज्जैवैनमेतद्र-सेन सुमर्द्धयति कृत्स्नुङ्करोति ॥ ४ ॥

(त्यु) अुथो व्वैकङ्कती । प्रजापतिर्य्यां प्रथमामाहुतिमुजुहोत्स हुत्वा युत्र न्युमृष्ट तुतो व्विकङ्कतः सुमभवद्यज्ञो वाऽआहुतिर्य्यज्ञो व्विकङ्कतो यज्ञे-नुवैनमेतत्सुमर्द्धयति कृत्स्नुङ्करोति ॥ ५ ॥

---

औदुंबरी भवति । ऊर्ग् वै रस उदुंबरः । ऊर्ज्जैवैनमेतद्रसेन समर्द्धयति । कृत्स्नं करोति ॥ ४ ॥

अथौ वैकंकती । प्रजापतिर्यां प्रथमामाहुतिमजुहोत् । स हुत्वा यत्र न्यमृष्ट । ततो विकंकतः समभवत् । यज्ञो वा आहुतिः । यज्ञो विकंकतः । यज्ञेनैवैनमेततसमर्द्धयति । कृत्स्नं करोति ॥ ५ ॥

---

संभरति । सा खलु 'अग्निः' 'वज्रो वै' वज्रवत्तीक्ष्णाग्रत्वात् ताच्छब्द्यम् । वज्रश्च इंद्रायुधत्वात् 'वीर्यं वै' वीर्यरूप एव । तथा च 'एतत्' एतेन आग्नियसंभरणेन 'एनं' प्रवर्ग्यं वीर्येणैव फलजननसामर्थ्येनैव 'समर्द्धयति' समृद्धं करोति । तत्समृद्धौ सत्यां प्रवर्ग्यशिरस्कं यज्ञमपि 'कृत्स्नं' सकलं संपूर्णावयवं 'करोति' ॥ ३ ॥

अथ तस्या अग्नेः वृक्षविशेषं विधाय स्तौति—**औदुंबरी भवति० करोतीति** । सा अग्निः 'औदुंबरी' उदुंबरवृक्षजा 'भवति' । वृक्षांतरेभ्यः तस्य कोऽतिशयः इति चेत् उच्यते—'ऊर्वै' "ऊर्ज्ज बलप्राणनयोः"—( धा. पा. चु. उ. १६ ) इति धातुः । बलकरः खलु यः अन्नरसः स एव 'उदुंबरः' तस्मादुत्पन्नत्वात् । तथा च तैत्तिरीयकम्—" देवा वा ऊर्ज्जं व्यभजंत तत उदुंबर उदतिष्ठत् । उर्ग्वा ऊदुंबरः " इति । तथा च—'ऊर्ज्जा' बलकरेणैव अन्नरसेन 'एनं' प्रवर्ग्यं 'समर्द्धयति' । अन्यत् पूर्ववत् ॥ ४ ॥

अथ विकल्पेनाग्नेर्वृक्षविशेषं विधत्ते—**अथो वैकंकतीति** । 'अथो' अपि च सा अग्निः 'वैकंकती' विकंकतवृक्षजा वा कार्या । अथैतत्प्रशंसति—**प्रजापतिर्यां०करोतीति** । 'प्रजापतिः' प्रजानां पालयिता आदि-

---

–दीची हि मनुष्याणां दिक् दीक्षितस्यैव प्राचीनवंशा नादीक्षितस्य "। इति च ( श. प. १।२।५।१६ । श. प. ३।१।१।७ ) तथा दिक्प्रसंगात् ऐशानीदिक्संस्तवोऽप्यत्र प्रदर्श्यते ।: " उदङ्प्राङ्तिष्ठन्नुदङ्वै प्राङ्तिष्ठन्प्रजापतिः प्रजाऽअसृजत " " यद्वेवोदङ्प्राङ्तिष्ठन्नेषा ह्योभयेषां देवमनुष्याणां दिग्यदुदीची प्राची "॥ "यद्वेवोदङ्प्राङ्तिष्ठन्नेतस्याᳵ हि दिशि स्वर्गस्य लोकस्य द्वारं तस्मादुदङ्प्राङ्तिष्ठन्नाहुतीर्जुहोत्युदङ्प्राङ्तिष्ठन् दक्षिणा नयति द्वारैतत्स्वर्गस्य लोकस्य वित्तं प्रपादयतीति " ( श. प. ६ । १ । २ । २-४ ) इति ।

४—अत्रैव—"अथौदुंबरीमादधाति देवाश्चासुराश्चोभये प्राजापत्या अस्पर्द्धंत ते ह सर्व्वऽएव व्वनस्पतयोऽसुरानभ्युपेयुरुदुंबरो हैव देवान्न जहौ ते देवा असुरान् जित्वा तेषां व्वनस्पतीनवृञ्जत । ते होचुर्हंत यैषु व्वनस्पतिषूर्ग्यो रसऽउदुंबरे तं दधाम ते यद्यपक्रामेयुर्यातयामाऽअपक्रामेयुर्यथा धेनुदुग्धा यथाऽनड्वानूहिवानिति तयैषु व्वनस्पतिषूर्ग्यो रसऽ आसीदुदुंबरे तमदधुस्त-यैतदूर्जा सर्व्वान्वनस्पतीन्प्रतिपच्यते तस्मात्स सर्व्वदाऽऽर्द्रः सर्व्वदा क्षीरी तदेतत्सर्व्वमन्नं यदुदुंबरः सर्व्वे व्वनस्पतयः सर्व्वेणैवैनमेतदन्नेन प्रीणाति सर्व्वैर्व्वनस्पतिभिः समिंद्धे " । इति । तथा " औदुंबरी भवति । ऊर्ग्वै रसऽ उदुंबर ऽऊर्ज्जैवैनमेतद्रसेन बिभर्त्यथो सर्व्वेऽ एते व्वनस्पतयो यदुदुंबरः सर्व्वे वाऽ एतं व्वनस्पतयो यंतुमर्हंति सर्व्वैरेतं व्वनस्पतिभिर्द्देवाऽ अबिभरुः सर्व्वैरेवैनमेतद्वनस्पतिभिर्बिभर्ति " । ( श. प. ६ । ६ । ३ । २-३ । श. प ६ । ७ । १ । १३ । ) इति च ।

( त्य ) अरत्निमात्री भवति । बाहुर्व्वाऽअरत्निर्बाहुना वै व्वीर्य्यङ्क्रियते व्वीर्य्यसंमितैव तद्भवति व्वीर्य्येणैवैनमेतत्समर्द्धयति कृत्स्नङ्करोति ॥६॥

तामादत्ते । देवस्य त्वा सवितुः प्प्रसवेऽश्विनोर्ब्बाहुभ्याम्पूष्णो हस्ताभ्यामाददे नारिरसीत्यसावेव बन्धुः ॥ ७ ॥

( स्तां ) ताᳩं सव्ये पाणौ कृत्वा । दक्षिणेनाभिमृश्य जपति युञ्जते मनऽउत युञ्जते धियो व्विप्रा व्विप्रस्य बृहतो व्विपश्चितः । व्वि होत्रा दधे व्वयुनाविदेकऽइन्मही देवस्य सवितुः परिष्टुतिरित्यसावेव बन्धुः ॥८॥

---

अरत्निमात्री भवति । बाहुर्वा अरत्निः । बाहुना उ वै वीर्यं क्रियते । वीर्यसंमितैव तद्भवति । वीर्येणैवैनमेतत्समर्द्धयति । कृत्स्नं करोति ॥ ६ ॥

तामादत्ते—" देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे नारिरसि " ( वा. सं. ३७।१ ) इति । असावेव बंधुः ॥ ७ ॥

तां सव्ये पाणौ कृत्वा दक्षिणेनाभिमृश्य जपति—" युंजते मन उत युंजते धियो विप्रा विप्रस्य बृहतो विपश्चितः । वि होत्रा दधे वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिः " ( वा. सं. ३७।२ ) इति । असावेव बंधुः ॥ ८ ॥

---

कर्ता श्रेष्ठः जगत्सृष्ट्यर्थं ' यां प्रथमां ' ' आहुतिं अजुहोत् ' हुतवान् । ' हुत्वा ' च ' सः ' प्रजापतिः ' यत्र ' यस्मिन्देशे ' यमृष्ट ' लेपनिर्मार्जनं कृतवान् । ' ततः ' तस्मात् स्थानात् सः ' विकंकतो ' वृक्षः ' समभवत् ' उदपद्यत । एवमाहुतिसकाशाज्जातत्वात् स ' विकंकतो ' वृक्षः ' यज्ञो वै ' यज्ञात्मक एव । अन्यत् पूर्ववत् योज्यम् । क्रियापदात् पूर्वं पठितं ' एतत् ' इति पदं सर्वत्र क्रियाविशेषणत्वेन योज्यम् ॥ ९ ॥

अथ तस्याः परिमाणं विधत्ते—अरत्निमात्री भवतीति । चतुर्विंशत्यंगुलपरिमितः कूर्परादारभ्य कनिष्ठिकाप्रर्यंतः बाह्वोरेकदेशोऽरत्निः । अरत्निमात्रपरिमिता सा अभ्रिः कार्या । तदेतत् स्तौति—बाहुर्वा अरत्नि० कृत्स्नं करोतीति । यः अयमरत्निः स पूर्वोक्तप्रकारेण ' बाहुर्वै ' हस्त एव खलु ' बाहुना उ ' बाहुद्वयाद्धि ' वीर्यं ' लोके ' क्रियते ' । अतस्तत् सा अभ्रिः बाह्वेकदेशारत्निपरिमिता ' वीर्यसंमितैव भवति ' अन्यत् पूर्ववत् योज्यम् ॥ ६ ॥

अथ संभारानाहर्तुं तस्या आहरणं विधत्ते—तामादत्ते देवस्य त्वा० बंधुरिति । ' तां ' तथाविधां उक्तलक्षणां अभ्रिम् देवस्य त्वेत्यादिना नारिरसीत्यंतेन मंत्रेण ' आदत्ते ' दक्षिणहस्तेन गृह्णीयात् । मंत्राः सर्वे संहितायामेव व्याख्याताः इति तन्मंत्रव्याख्यानाय न प्रयते । येषां मंत्राणां ब्राह्मणमेव पदतः तात्पर्यस्य व्याख्यानं करोति । ते अस्माभिरपि व्याकरिष्यंते । ' असावेव ' खलु मंत्रः ' बंधुः ' बंधकः छिन्नस्य यज्ञशिरसः पुनः संधायकः । सवित्रश्विपूष्णां देवानां सम्बन्धात् । यद्वा आदीयमाना सैवाभ्रिः ' बंधुः ' । संभारा ( हर ाः ? ) प्रवर्ग्यस्य यज्ञशिरसः बंधुमैत्री । अतः तां अनेन मंत्रेणाददीतेत्यर्थः ॥ ७ ॥

यदुक्तं कात्यायनेन सूत्रकृता—" देवस्य त्वेत्यभ्रिमादायौदुंबरीं वैकंकतीं वाऽरत्निमात्रीं९ सव्ये कृत्वा दक्षिणे-

( उ ) अथ मृत्पिण्डम्परिगृह्णाति । ( त्यु ) अभ्र्या च दक्षिणतो हस्तेन च हस्तेनैवोत्तरतो देवी द्यावापृथिवी ऽइति यज्ञस्य शीर्षच्छिन्नस्य रसो व्यक्षरत्सऽइमे द्यावापृथिवीऽअगच्छद्यन्मृदियन्तद्यदापोऽसौ तन्मृदश्चापाश्च महावीराः कृता भवन्ति तेनैवैनमेतद्रसेन समर्द्धयति कृत्स्नङ्करोति तस्मादाह देवी द्यावापृथिवीऽइति मखस्य वामद्य शिरो राध्यासमिति यज्ञो वै मखो यज्ञस्य वामद्य शिरो राध्यासमित्येवैतदाह देवयजने हि पृथिव्यै सम्भरति मखाय त्वा मखस्य त्वा शीर्ष्णे ऽइति यज्ञो वै देवयजने पृथिव्या ऽइति मखो यज्ञाय त्वा यज्ञस्य त्वा शीर्ष्ण-ऽइत्येवैतदाह ॥ ९ ॥

---

अथ मृत्पिण्डं परिगृह्णाति । अभ्र्या च दक्षिणतो हस्तेन च । हस्तेनैवोत्तरतः । "देवी द्यावा-पृथिवी इति । यज्ञस्य शीर्षच्छिन्नस्य रसो व्यक्षरत् । स इमे द्यावापृथिवी अगच्छत् । यन्मृत् । इयं तत् । यदापः । असौ तत् । मृदश्चापां च महावीराः कृता भवंति । तेनैवैनमेतद्रसेन समर्द्धयति । कृत्स्नं करोति । तस्मादाह–" देवी द्यावापृथिवी "–इति । " मखस्य वामद्य शिरो राध्यासम् "–इति । यज्ञो वै मखः । यज्ञस्य वामद्य शिरो राध्यासम् । इत्येवैतदाह " देवयजने पृथिव्याः "–इति । देवयजने हि पृथिव्यै संभवति । " मखाय त्वा मखस्य त्वा शीर्ष्णे "–( वा. सं. ३७ । ३ ) इति । यज्ञो वै मखः । यज्ञाय त्वा यज्ञस्य त्वा शीर्ष्ण इत्येवैतदाह ॥ ९ ॥

---

नालभ्य जपति युञ्जत" इति । ( का. श्रौ. सू. २६।१।४) इति तदेतद्विधीयते–ता॰ सव्ये पाणौ कृत्वा॰ बंधुरिति । ' ताम् ' दक्षिणहस्तेन गृहीत्वा ततः ' सव्ये पाणौ कृत्वा सव्यहस्तेनादाय तत्र धृत्वा ' दक्षिण-हस्तेनाभिमृश्य संस्पृश्य ' जपति ' " युंजते मन " इति ऋचम् ' सवितुः परिष्टुतिरिति ' सर्वप्रेरकस्य सवितुः श्रवणात् ' असावेव मंत्रः ' बंधुः ' छिन्नस्य यज्ञशिरसः बंधकः ॥ ८ ॥

अथ तया आभ्र्या खातां जलेनासिक्तां मृदमाहरेदिति विधत्ते–अथ मृत्पिण्ड॰ द्यावापृथिवी इति । ' अथ ' अभ्रिस्पर्शनानंतरं तया चाभ्र्या दक्षिणहस्तेन च दक्षिणतो दक्षिणभागेन गृह्णन् सव्यहस्तेनैव केवलेन ' उत्तरतः ' उत्तरभागे गृह्णन् " देवी द्यावापृथिवी " इति मंत्रेण ' मृत्पिंडं ' जलेन मिश्रीकृतं मृत्तिकाघनं ' गृह्णाति ' महावीराख्यमृण्मयपात्रपर्याप्तं स्वीकुर्यात् । परिगृह्य च तं मृत्पिंडं उत्तरत आस्तीर्णे कृष्णाजिने निदधाति । तथा चाह स्म सूत्रकारः–" मृदमादत्ते पिण्डवद्देवी द्यावापृथिवी इति " " कृष्णाजिने निदधा-त्युत्तरतः "–( का. श्रौ. सू. २६ । १ । ६ ) इति । मंत्रस्य चतुर्द्धा विभक्तस्य प्रथमभागः प्रतीकत्वेन गृहीतः । तं तात्पर्यतो व्याचष्टे–यज्ञस्य शीर्षच्छिन्नस्य॰ कृत्स्नं करोतीति । शीर्षं शिरः छिन्नं यस्य असौ शीर्षच्छिन्नः तथाविधस्य यज्ञस्य छेदनप्रदेशात् यः ' रसः ' लोहितरूपः ' व्यक्षरत् ' विविधं स्नुतः अभूत् । ' सः ' रसः ' इमे ' सर्वप्राणिसन्निहिते ' द्यावापृथिवी ' द्यां च पृथिवीं च ' अगच्छत् प्राप्नोत् । आह्रिय-

(ह्रा) अथ व्वल्मीकवपाम् । (न्दे) देव्व्यो व्वम्र्यऽइत्येता व्वाऽएतद-
कुर्व्वत यथायथैतद्यज्ञस्य शिरोऽच्छिद्यत ताभिरेवैनमेतत्समर्द्धयति
कृत्स्नङ्करोति भूतस्य प्रथमजाऽइतीयम्वै पृथिवी भूतस्य प्रथमजा तद-

---

अथ वल्मीकवपाम् । "देव्यो वम्र्यः"–इति । एता वा एतदकुर्वत । यथायथैतद्यज्ञस्य शिरोऽच्छिद्यत । ताभिरेवैनमेतत्समर्द्धयति । कृत्स्नं करोति । "भूतस्य प्रथमजाः"–इति । इयं

---

माणा मृदिति 'यत्' तदेव 'इयं' यज्ञरसयुक्ता पृथिवी । मृदा संसृष्टा आपः इति 'यत्' तदेव 'असौ' द्युलोकः । द्युलोकजनितया हि वृष्ट्या आपो जायंते इति । यस्मात् एवं महावीराः 'मृदः' मृत्तिकायाश्च 'अपां' उदकानां च संमेलनात् 'कृताः' उत्पादिताः 'भवंति' । तस्मात् 'तेनैव' द्यावापृथिव्यौ प्राप्तेनैव पुरातनेन रसेन 'एनं' प्रवर्ग्यं 'एतत् समर्द्धयति' । तत्समृद्ध्या च यज्ञमपि 'कृत्स्नं' संपूर्णावयवं 'करोति' । प्रादेशमात्रोन्नतानि पर्वत्रयवंति घुंटिकाकाराणि घर्महविःसंतापार्थानि त्रीणि मृण्मयपात्राणि महावीरा इत्युच्यंते । "महान् बत नो वीरोऽपादीति तस्मान्महावीरः" । (श.प. १४।१।१।११) इत्यादिना प्रवर्ग्यस्य तावन्महावीरशब्दाभिधेयत्वमुक्तम् । तत्साधनेषु पात्रेषु तच्छब्दप्रवृत्तिः उपचारात् इति द्रष्टव्यम् । उक्तमर्थं निगमयति–तस्मादाह देवी द्यावापृथिवी इतीति । यस्मात् यज्ञरसः द्यावापृथिव्यौ प्राप्नोत् । मृज्जलात्मको मृत्पिण्डश्च द्यावापृथिव्यात्मकः । 'तस्मात्' "द्यावापृथिवी" इति मंत्रभागं समवेतार्थत्वात् अध्वर्युराह मृत्पिण्डं स्वीकुर्वन् ब्रूयात् । द्वितीयं भागमनूद्य व्याचष्टे–मखस्य वामद्य शिरो० राध्यासमि-त्येवैतदाहेति । मखस्य वामिति द्वितीयो भागः । तत्र यो मखशब्दाभिधेयः स 'यज्ञो वै' यज्ञः खलु । एवं मखशब्दार्थे सति यो वाक्यार्थः संपद्यते तं दर्शयति–यज्ञस्य वामिति । अयमर्थः–हे 'देवी' देव्यौ देवन-शीले हे 'द्यावापृथिवी' द्यावापृथिव्यौ ! 'वां' युवयोः सकाशात् । 'अद्य' अस्मिन् काले 'मखस्य' यज्ञस्य 'शिरः' प्रवर्ग्यं 'राध्यासं' कर्तुं शक्तो भूयासम् । कुत्रेति चेत् कर्तुं शक्तो भूयासमिति इममेवार्थं एतच्च मंत्रवाक्यमाह प्रतिपादयति । अथ तृतीयभागमनूद्य प्रसिद्धत्वैव व्याचष्टे–देवयजने० संभरतीति । 'पृथिव्यै,' षष्ठ्यर्थे चतुर्थी । पृथिव्याः संबंधिनि 'देवयजने' देवा इज्यंते अस्मिन्निति देवयजनं यागाधिकरणभूतो देशः । तत्र हि संभरति, मृदादिसंभारानाहरति । तस्मात् अप्रसिद्धं व्याख्येयं पदं तृतीयभागे नास्तीत्यर्थः । अथ चतुर्थभागमनूद्य, व्याख्यानसापेक्षस्य पदस्यार्थमुक्त्वा निष्पन्नं वाक्यार्थमप्याह–मखाय त्वा० त्येवैतदाहेति । मखाय त्वेत्यस्मिन् चतुर्थभागे मखशब्दस्य पूर्ववत् यज्ञ एवार्थः । तथा च "यज्ञाय त्वा यज्ञस्य त्वा शीर्ष्णे" इति इममेवार्थं एतन्मंत्रवाक्यमाह । अयमर्थः–हे मृत्पिण्ड ! 'त्वां' 'मखाय' यज्ञाय यज्ञार्थं आददे । तथा 'मखस्य' यज्ञस्य 'शीर्ष्णे' शिरसे 'त्वां' परिगृह्णामीति एतमर्थं चतुर्थभागः प्रतिपादयतीत्यर्थः ॥ ९ ॥

अथ संभारांतरस्याहरणं विधत्ते–अथ वल्मीकवपां देव्यो व्वम्र्य इतीति । 'अथ' मृत्संभरणानंतरं "देव्यो वम्र्यः" इति मंत्रेण 'वल्मीकवपां' वल्मीकस्य अंतः वपावत् अवस्थितां मृत्तिकां संभरति मंत्रेणा-

---

१–देव्यो व्वम्र्य इति वल्मीकवपाम् । का. श्रौ. सू. २६ । ७ ।

नयैवैनमेतत्समर्द्धयति कृत्स्नङ्करोति मखस्य वोऽद्य शिरो राद्ध्यासन्देवयजने पृथिव्या मखाय त्वा मखस्य त्वा शीर्ष्णऽइत्यसावेव बन्धुः ॥ १० ॥

( ग ) अथ वराहविहतम् । ( मि ) इयत्यग्रऽआसीदितीयती ह वाऽइयमग्रे पृथिव्यास प्रादेशमात्री तामेमूषऽइति वराहऽउज्जघान सोऽस्याः पतिः प्रजापतिस्तेनैवैनमेतन्मिथुनेन प्रियेण धाम्ना समर्द्धयति कृत्स्नङ्करोति मखस्य तेऽद्य शिरो राद्ध्यासन्देवयजने पृथिव्या मखाय त्वा मखस्य त्वा शीर्ष्णऽइत्यसावेव बन्धुः ॥ ११ ॥

---

वै पृथिवी भूतस्य प्रथमजा । तदनयैवैनमेतत्समर्द्धयति । कृत्स्नं करोति । "मखस्य वोऽद्य शिरो राध्यासं देवयजने पृथिव्याः, मखाय त्वा मखस्य त्वा शीर्ष्णे"–( वा. सं. ३७।४ ) इति । असावेव बंधुः ॥ १० ॥

अथ वराहविहतम् । "इयत्यग्र आसीत्"–इति । इयती ह वा इयमग्रे पृथिव्यास प्रादेशमात्री । ताम् ए मूष इति वराह उज्जघान । सोऽस्याः पतिः प्रजापतिः । तेनैवैनमेतन्मिथुनेनं प्रियेण धाम्ना समर्द्धयति । कृत्स्नं करोति । "मखस्य तेऽद्य शिरो राध्यासं देवयजने पृथिव्याः, मखाय त्वा मखस्य त्वा शीर्ष्णे"–( वा. सं. ३७।५ ) इति । असावेव बंधुः ॥ ११ ॥

---

दाय कृष्णाजिने निदधाति । मंत्रं त्रेधाकृत्य प्रथमभाग उपात्तः । तस्य तावत्तात्पर्यमाह–एता वा एतदकुर्वत यथायथैतद्यज्ञस्य० कृत्स्नं करोतीति । 'देव्यो वम्र्यः' 'इति' याः वमनशीलाः उपदीकाः प्रतिपाद्यंते । 'एताः' खलु पुरा 'एतत्' कर्म 'अकुर्वत' । 'यथायथा' येनयेन प्रकारेण 'यज्ञस्यैतच्छिरः अच्छिद्यत' छिन्नमभवत् । एवमेतत् कर्म ज्याभक्षणरूपं कृतवत्यः इत्यर्थः । अतस्ताभिरेव 'एनं' प्रवर्ग्यं 'एतत् समर्द्धयति' । अन्यत् पूर्ववत् योज्यम् । द्वितीयभागमनूद्य व्याचष्टे–भूतस्य प्रथमजा इति । इयं वै पृथिवी भूतस्य० कृत्स्नं करोतीति । 'इयं' खलु 'पृथिवी' स्वकार्यस्य प्राणिजातस्य 'प्रथमजा' कारणत्वेन प्रथमं पुरस्ताज्जाता । तत्संबंधात् वम्र्योऽपि मंत्रे प्रथमजा इत्युच्यंते । तत्तथा च 'अनयैव' पृथिव्या 'एनं' प्रवर्ग्यमेव समर्द्धयति । व्याख्यातमन्यत् । अथ तृतीयभागमनूद्य पूर्वव्याख्यातत्वेन पुनर्व्याख्याननैरपेक्ष्यात् तात्पर्यलभ्यमर्थमाह–मखस्य वोऽद्य शिरो० इत्यसावेव बंधुरिति । हे 'वम्र्यः' 'वः' युष्माकं संबंधिन्या वल्मीकमृत्तिकया इत्येतावान् तत्र विशेषः । अन्यत् सर्वं पूर्वमंत्रब्राह्मणे व्याख्यातम् । 'मखस्य शीर्ष्णे' इति समवेतार्थप्रकाशत्वात् 'असावेव' मंत्रः 'बंधुः' तस्य छिन्नस्य यज्ञशिरसो बन्धकः ॥ १० ॥

अथ संभारांतरस्याहरणं विधत्ते–अथ वराहविहतमियत्यग्रऽआसीदितीति । 'अथ' वल्मीकवपासंभरणानंतरं 'वराहविहतं' वराहेण खातं मृत्पिंडं "इयत्यग्रऽ आसीत्" इति मंत्रेण आहृत्य उत्तरतः कृष्णाजिने निदध्यात् । अस्मिन् मंत्रभागे इयतीशब्दसूचितमर्थं प्रदर्शयन् अस्य मंत्रभागस्य प्रकृते संगतिमाह–इयती ह वा० कृत्स्नं करोतीति । इयतीति प्रादेशमात्रस्याभिनयेन प्रदर्शनम् । इदं परिमाणं अस्याः इयती ।

---

१-इयत्यग्र इति वराहविहतम् । का. श्रौ. सू. २६ । ८ ।

३००१

३०१

(र) अथादारान् । (त्रि) इन्द्रस्यौज स्थेति यत्र वाऽएनमिन्द्रऽ ओजसा पर्य्यगृह्णात्तदस्य परिगृहीतस्य रसो व्यक्षरत्स पूयन्निवाशेत सोऽब्रवीदादीर्य्येव बत मऽएष रसोऽस्रौषीदिति तस्मादादाराऽअथ यत्पूयन्निवाशेत तस्मात्पूतीकास्तस्मादग्नावाहुतिरिवाभ्याहिता ज्वलन्ति तस्मादु सुरभयो यज्ञस्य हि रसात्संभूताऽअथ यदेनन्तदिन्द्रऽओजसा पर्य्यगृह्णात्तस्मादाहेन्द्रस्यौज स्थेति मखस्य वोऽद्य शिरो राध्यासन्देवयजने पृथिव्या मखाय त्वा मखस्य त्वा शीर्ष्णऽइत्यसावेव बन्धुः ॥ १२ ॥

---

अथादारान्—" इंद्रस्यौजः स्थ "—इति । यत्र वा एनमिंद्र ओजसा पर्यगृह्णात् । तदस्य परिगृहीतस्य रसो व्यक्षरत् । स पूयन्निवाशेत । सोऽब्रवीत् । आदीर्येव बत म एष रसोऽस्रौषीदिति । तस्मादादाराः । अथ यत्पूयन्निवाशेत । तस्मात्पूतीकाः । तस्मादग्नावाहुतिरिवाभ्याहिता ज्वलन्ति । तस्मादु सुरभयः । यज्ञस्य हि रसात्संभूताः । अथ यदेनं तदिन्द्र ओजसा पर्यगृह्णात् । तस्मादाह । " इंद्रस्यौजः स्थ "—इति । "मखस्य वोऽद्य शिरो राध्यासं देवयजने पृथिव्याः, मखाय त्वा मखस्य त्वा शीर्ष्णे "—( वा. सं. ३७।६ ) इति । असावेव बंधुः ॥ १२ ॥

---

तस्य व्याख्यानं—प्रादेशमात्रीति । अयमर्थः—' अग्रे ' सृष्टेः प्राक्काले या उदकमध्ये कृत्स्ना पृथिवी निमग्ना आसीत् ' तां ' प्रजापतिः ' वराहः ' भूत्वा, दंष्ट्राभ्यां उद्धृतवान् । इत्याख्याता । अतः तस्यां अवस्थायां ' इयं ' दृश्यमाना सर्वा पृथिवी तद्दंष्ट्राग्रप्रोता ' इयती ह वै ' इयती खलु प्रादेशमात्रपरिमितैव आसीत् । ' तां ' तथावस्थितां पृथिवीं वराहरूपः प्रजापतिः ' उज्जघान ' उद्धृतां जलमध्यात् समुद्धृतां कृतवान् । किं ब्रुवन् ? एमूष इतीति । ' ए ' अरे पृथिवि ! ' मूषः ' अमुष्याः स्तेयकादिवत् त्वं अदृश्या भवसि इति वदन्, स च, वराहरूपः प्रजापतिः ' अस्याः ' पृथिव्याः ' पतिः ' भर्ता । अतः ' तेन ' महीवराहरूपेण ' मिथुनेनैव ' ' एतत् ' एतर्हि ' एनं ' प्रवर्ग्यं ' प्रियेण धाम्ना ' इष्टतमेन तेजसा ' समर्द्धयति ' । ततश्च यज्ञमपि संपूर्णावयवं कृतवान् भवति । हे ' पृथिवि ! ' त्वं ' अग्रे ' वराहेण उद्धरणसमये ' इयती ' एतत्परिमाणा, प्रादेशमात्रपरिमितैव आसीः । अत एवं विशिष्टार्थस्य प्रतिपादकत्वात् अयं मंत्रभागो वराहविहतसंभरणे संगत इत्यर्थः । मन्त्रशेषं पूर्ववत् अनूद्य तात्पर्यमाह—मखस्य तेऽद्य० बंधुरिति । हे ' पृथिवि ! ' ' ते ' तव सम्बन्धिना वराहविहतेनेति शेषः । शिष्टं सिद्धम् ॥ ११ ॥

अथ पूतीकरससंभाराहरणं विधत्ते—अथादारानिन्द्रस्यौजः स्थेतीति । ' अथ ' वराहविहतसंभरणानंतरं 'आदारान्' आदीर्यावस्थितान् पूतीकशब्दाभिधेयान् सोमप्रतिनिधित्वेन चोदितान् लताविशेषान् "इंद्रस्यौजः स्थ" इति मंत्रेण संभृत्य कृष्णाजिने निदधाति । हे पूतीकाः ! ' इंद्रस्य ' 'ओजः' बलं ' स्थ ' भवथेति । कथं एतेषां

---

१—इंद्रस्यौजः स्थेति पूतीका । का. श्रौ. सू. २६।९ ॥

( उ ) अथाजाक्षीरम् । (रं) यज्ञस्य शीर्षच्छिन्नस्य शुगुदक्रामत्ततोऽजा सम॑भवत्तयै॒वैनमेतच्छुचा सम॑र्द्धयति कृत्स्नङ्करोति म॒खाय त्वा म॒खस्य त्वा शीर्ष्णऽइत्यसावेव बन्धुः ॥ १३ ॥

---

अथाजाक्षीरम् । यज्ञस्य शीर्षच्छिन्नस्य शुगुदक्रामत् । ततोऽजा समभवत् । तयैवैनमेतच्छुचा समर्द्धयति । कृत्स्नं करोति । "मखाय त्वा मखस्य त्वा शीर्ष्णे"–( वा. सं. ३७।६ ) इति । असावेव बंधुः ॥ १३ ॥

---

इंद्रसंबंध्योजोरूपता इत्याशंक्य तत् उपपादयितुमाह–**यत्र वा एनं तादिन्द्र ओजसा० संभूता इति** । 'तत्' तदानीं ' यत्र ' यस्मिन् देशे खलु ' एनं ' पलायमानं विष्ण्वात्मकं यज्ञं ' इंद्रः ओजसा ' बलेन 'पर्यगृह्णात्' परिगृहीतवान् । ' तत् ' तत्र परिगृहीतस्य स्वीकृतस्य ' अस्य ' यज्ञस्य ' रसः ' सारः ' व्यक्षरत् ' विविध-क्षरणेन भूमिं प्राप्नोत् । ' सः ' च रसः तत्र ' पूयन्निव ' रसांतरं प्राप्तं पर्युषितं ओदनादिकमिव विरसो भवन् इव ' अशेत ' अतिष्ठत् । एवं स्थिते ' सः ' इंद्रः ' अब्रवीत् ' । ' बत ' इति खेदे । ' मे ' मदीयः ' एषः ' यज्ञरसः 'आदीर्येव' विभिद्येव ' अस्रौषीत् ' स्रुतोऽभूत् । यथा उदकपूर्णपात्रं विभिन्नं सत् स्रवति एवं एषः यज्ञरसोऽपि स्रुतः इति खेदं प्राप्तवानित्यर्थः । ' इति ' हेतौ । यस्मात् एवमुक्तवान् ' तस्मात् ' एते लताविशेषाः ' आदारा ' इत्युच्यंते । ' अथ ' स्रवणानंतरं ' यत् ' यस्मात् ' पूयन्निव ' ' अशेत ' ' तस्मात् पूतीकाः ' पूतीकशब्दाभिधेयाश्च । यस्मात् एते यज्ञरसात् जाताः । तस्मादेव कारणात् अग्नौ प्रक्षिप्ता-हुतिवत् होमसाधनं आज्यादिद्रव्यमिव ' अभ्याहिताः ' ' अग्नौ ' प्रक्षिप्ताः ' ज्वलंति ' । तस्मादेव कारणात् एताः ' सुरभयः ' सुगंधयुक्ताः । ' हि ' यस्मात् इमे उक्तप्रकारेण ' यज्ञस्य रसात् संभूताः ' उत्पन्नाः । यत एवं पुरावृत्तम्, अतः पूतीकाहरणे अयमेव मंत्रो वक्तव्यः इत्याह–**अथ यदेनं तदिन्द्र ओजसा०स्यौजः स्थेतीति** । ' अथ ' एवं सति यद्यस्मात् ' एनं ' रसात्मना स्रुतं यज्ञं ' इंद्रः ओजसा पर्यगृह्णात् ' तत्तस्मात् तत्परिणामरूपाणां पूतीकानां संभरणे इंद्रस्यौजः स्थेति मन्त्रं अध्वर्युः 'आह' ब्रूयात् । यद्वा "इंद्रस्यौजः स्थेति" अयं मंत्रः अमुमर्थमाह प्रतिपादयति इति योज्यम् । अथ पूर्ववत् मंत्रशेषं पठित्वा छिन्नस्य यज्ञशिरसः संबंध-हेतुत्वमाह–**मखस्य वोऽद्य शिरो०बंधुरिति** । पूर्ववत् व्याख्येयम् ॥ १२ ॥

अथ यदुक्तं कात्यायनेन–" मखायेति पयः " " तूष्णीं गवेधुकाः " ( का. श्रौ. सू. २६।१०।११ ) इति तदेतत् विदधाति–**अथाजाक्षीरमिति** । ' अथ ' पूतीकसंभरणानंतरं ' अजाक्षीरं ' अजश्छागः तस्य स्त्री अजा तस्याः क्षीरं पयः "मखाय त्वा" इत्यादिना मंत्रेण संभृत्य कृष्णाजिनस्थे मृत्पिण्डे अवनयेत् । अथास्य प्रवर्ग्यसंबं-धार्थतामाह–**यज्ञस्य शीर्षच्छिन्नस्य०कृत्स्नं करोतीति** । ' शीर्षच्छिन्नस्य ' छिन्नशिरस्कस्य ' यज्ञस्य, ' शुक् ' शोकः ' उदक्रामत् ' तस्माच्छरीरान्निरगात् । ' ततः ' तस्याः शुचः सकाशात् ' अजा समभवत् ' संभूता । तत्पयसः अवनयने सति ' एतत् ' एतर्हि यथा प्रागुक्तं ' तथैव ' शुचा ' एनं समर्द्धयति ' । ततो यज्ञ-मपि संपूर्णावयवं कृतवान् भवति । अथ पयःसंभरणमंत्रं विधाय तात्पर्यमाह–**मखाय त्वा० बंधुरिति** । मखाय त्वेत्यनेन मंत्रेण अजाक्षीरस्य संभरणं कार्यमित्यर्थः । अन्यत्पूर्ववत् ॥ १३ ॥

( स्ता ) तान्वाऽएतान्पञ्च सम्भारान्त्सम्भरति । पाङ्क्तो यज्ञः पाङ्क्तः पशुः पञ्चर्त्तवः सम्वत्सरस्य सम्वत्सरऽएष यऽएष तपत्येषऽ उ प्रवर्ग्य-स्तदेतमेवैतत्प्रीणाति तान्त्सम्भृतानभिमृशति मखाय त्वा मखस्य त्वा शीर्ष्णऽइत्यसावेव बन्धुः ॥ १४ ॥

(र)अथोत्तरतः परिश्रितम्भवति । तदभिप्रयन्तो जपन्ति प्रैतु ब्रह्मणस्पति-रित्येष वै ब्रह्मणस्पतिर्य्यऽएष तपत्येषऽउ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह प्रैतु ब्रह्मणस्पतिरिति प्र देव्येतु सूनृतेति देवी ह्येषा सूनृता-ऽच्छा वीरन्नर्य्यं पङ्क्तिराधसमित्युपस्तौत्येवैनमेतन्महयत्येव देवा यज्ञन्न-यन्तु नऽइति सर्व्वानेवास्माऽएतद्देवानभिगोप्तॄन्करोति ॥ १५ ॥

---

तान्वा एतान्पंच संभारान्त्संभरति । पाङ्क्तो यज्ञः । पाङ्क्तः पशुः । पंचर्तवः संवत्सरस्य । संवत्सर एषः । य एष तपति । एष उ प्रवर्ग्यः । तदेतमेवैतत्प्रीणाति । तान्संभृतानभिमृशति—"मखाय त्वा मखस्य त्वा शीर्ष्णे"—( वा. सं. ३७ । ६ ) इति । असावेव बंधुः ॥ १४ ॥

अथोत्तरतः परिश्रितं भवति । तदभिप्रयंतो जपंति—"प्रैतु ब्रह्मणस्पतिः"—इति । एष वै ब्रह्मणस्पतिः । य एष तपति । एष उ प्रवर्ग्यः । तदेतमेवैतत्प्रीणाति । तस्मादाह—"प्रैतु ब्रह्मण-

---

अथ एतान् मृदादिसंभारान् विहितान् संहत्य स्तौति—तान्वाऽएतान्पञ्च संभारान्० प्रीणातीति । 'तान्' पूर्वोक्तान् खलु एतान्मृद्वल्मीकवपादीन्पञ्च 'संभारान् संभरति' न तु चतुरः षड् वा । कुतः १ 'यज्ञः पाङ्क्तो वै' पङ्क्तिशब्देन छंदोवाचिना पादगता पंचसंख्या लक्ष्यते । पंचसंख्यासंबद्धः खलु, देवयज्ञः पितृयज्ञो भूत-यज्ञो मनुष्ययज्ञो ब्रह्मयज्ञ इति पांचविध्यदर्शनात् । यद्वा धानाः करंभः परिवापः पुरोडाशः पयस्या चेति पंच-हविर्योगात् यज्ञस्य पांक्तत्वम् । इष्टिपशुदर्वीहोमैकाहाहीनभेदेन वा । तथा गवाद्याः पशवश्च पाङ्क्ताः पंचसंख्यासंबद्धाः, पादचतुष्टयमध्यदेशभेदेन । तस्मात् संभारगता पंचसंख्या यज्ञार्हपशुप्राप्तिहेतुः इत्यर्थः । अपि च संवत्सरस्य द्वादशमासात्मकस्य वसंताद्याः 'पञ्चर्तवः' हेमंतशिशिरयोः समासेन । स च 'संवत्सरः' 'एषः' दृश्यमानः सूर्यः । 'य एषः' दिवि 'तपति' सर्वं जगत्प्रकाशयति । 'एषः' एव प्रवर्ग्यः । प्रवर्ग्या-ख्यस्य छिन्नस्य यज्ञशिरसः सूर्यात्मना परिणामस्य प्राक् दर्शितत्वात् । एवं पारंपर्येण तत्तस्मात् एतमेव प्रवर्ग्यं पंचसंख्यया 'एतत्' एतर्हि 'प्रीणाति' । अथ एकस्मिन् कृष्णाजिने संभृतानां संभाराणां समंत्रकमभिमर्शनं विधत्ते—तान्त्संभृतानभिमृशति० बंधुरिति । 'तान् संभृतान्' कृष्णाजिने समूहीकृत्य स्थापितान् मृदादि-संभारान् 'अभिमृशति' अभितः सर्वतः स्पृशति मखाय त्वेति मंत्रेण । गतमन्यत् ॥ १४ ॥

अथ महावीरादिनिर्माणाय देवयजनस्योत्तरतः परिश्रितं भवतीत्याह—अथोत्तरतः परिश्रितं भवतीति । अथेत्यानंतर्ये । एवं संभाराहरणानंतरं 'उत्तरतः' देवयजनस्योत्तरस्यां दिशि 'परिश्रितं' कटादिभिः सर्वतो

---

१–संभृतानभिमर्शयति मखायेति । का. श्रौ. सू. २६ । १२ ॥

पुरिश्रितम्भवति । ( त्ये ) एतद्वै देवाऽअबिभयुर्य्यद्वै नऽइममिह रक्षाꣳसि नाष्ट्रा नु हन्युरिति तस्माऽएताम्पुरम्पुर्य्यश्रयंस्तथैवास्माऽअयमेताम्पुरम्परिश्रयति ॥ १६ ॥

---

स्पतिः "–इति । " प्र देव्येतु सूनृता "–इति । देवी ह्येषा सूनृता । " अच्छा वीरं नर्यं पंक्तिराधसम् "–इति । उपस्तौत्येवैनमेतत् महयत्येव । " देवा यज्ञं नयंतु नः "–( वा. सं. ३७ । ७ ) इति । सर्वानेवास्मा एतद्देवानभिगोप्तॄन्करोति ॥ १९ ॥

परिश्रितं भवति । एतद्वै देवा अबिभयुः । यद्वै न इममिह रक्षांसि नाष्ट्रा न हन्युरिति । तस्मा एतां पुरं पर्यश्रयन् । तथैवास्मा अयमेतां पुरं परिश्रयति ॥ १६ ॥

---

वेष्टितं स्थानं कुर्यात् । अथ तं देशं प्रति संभाराणां समंत्रकमानयनं विधत्ते–**तदभिप्रयन्तो जपन्ति प्रैतु ब्रह्मणस्पतिरिति** । ' तत् ' परिश्रितं स्थानं संभारैः सह ' अभिप्रयन्तः ' अभिगच्छन्तः प्रवर्ग्यकर्तारः " प्रैतु ब्रह्मणस्पतिः " इति । इमं मन्त्रं ' जपन्ति ' । तदेतत् स्पष्टीकृतं सूत्रकारेण–" कृष्णाजिनं परिगृह्योत्तरतः परिवृतं गच्छन्ति प्रैतु ब्रह्मणस्पतिरिति " ( का. श्रौ. सू. २६।१३ ) । अथ एतस्य मन्त्रभागस्य तात्पर्यमाह–**एष वै ब्रह्मणस्पतिं० तत्प्रीणातीति** । ' एष वै ' दृश्यमान एव सूर्यः मन्त्रप्रतिपाद्यो ब्रह्मणस्पतिः ' ब्रह्मणो वेदस्य पतिः इति तच्छब्दव्युत्पत्तेः । सूर्यस्य च त्रयीमयत्वात् तत्पतित्वं प्रसिद्धम् । अन्यत् पूर्ववत् योज्यम् । एवं समवेतार्थत्वात् अयं मन्त्रः प्रवर्ग्यप्रयोज्यः इति निगमयति–**तस्मादाह प्रैतु ब्रह्मणस्पतिरितीति** । अथ द्वितीयभागमनूद्य प्रसिद्ध्या व्याचष्टे–**प्र देव्येतु सूनृतेति** । ' एषा ' प्रसिद्धा ' सूनृता ' प्रियसत्यात्मिका वाग् ' देवी हि ' खलु अस्मिन्मन्त्रभागे ' देवी सूनृता इति प्रतिपाद्यते । सा च सूनृता ' देवी ' ' प्रैतु ' प्रगच्छतु इति मन्त्रार्थः । अथ तृतीयभागमनूद्य व्याचष्टे–**अच्छा वीरन्नर्यं० तन्महयत्येवेति** । अस्य भागस्यायमर्थः । ' वीरं ' शूरं,' नर्यं ' नरेभ्यो हितं ' पङ्क्तिराधसं ' पंक्तिशो निविष्टधनयुक्तं यज्ञम् । इत्येवं गुणिनिष्ठगुणकीर्तनात् अनेन भागेन ' एनं ' प्रवर्ग्यं ' उपस्तौत्येव ' उपश्लोकयत्येव । ' एतत् ' एतेन च उपस्तवनेन ' तं महयति ' पूजयत्येव । अथ चतुर्थभागमनूद्य व्याचष्टे–**देवा यज्ञं नयंतु न इति । सर्वानेवास्मा एतद्देवानभिगोप्तॄन्करोतीति** । अस्य मन्त्रभागस्यायमर्थः । अविशेषात्, सर्वे ' देवाः ' पूर्वोक्तगुणविशिष्टं यज्ञावयवं प्रवर्ग्यं ' नः ' अस्मान् ' नयंतु ' प्रापयन्तु । इत्यनेन मन्त्रभागेन अस्मै षष्ठ्यर्थे चतुर्थी ( पा. सू. २ । ३ । ६२ । वा. ) इति । अस्य प्रवर्ग्यस्य ' सर्वानेव ' एतान् ' देवान् ' ' अभिगोप्तॄन्' अभितो रक्षकान् ' करोति ' ॥ १९ ॥

अथ पूर्वोक्तं यत् उत्तरतः परिश्रयणं तत् अनूद्य उपपादयति-**परिश्रितं भवति, एतद्वै देवा अबिभयुः० परिश्रयतीति** । देवयजनस्य उत्तरतः ' परिश्रितं ' कटादिभिः परिवेष्टितं स्थानं ' भवति ' । किमर्थं तस्य परिश्रयणं ? इति चेत् उच्यते–' एतद्वै ' एतस्मिन् खलु समये पुरा सत्रमासीना देवाः ' अबिभयुः ' यज्ञविघातकात् रक्षसो निमित्तात् भीतवंतः । ' यद्वै ' यस्मिन् खलु ' इह ' अस्मिन् स्थाने ' नः ' अस्मदीयं ' इमं ' प्रवर्ग्यं ' रक्षांसि ' यज्ञविघातिनो राक्षसाः ' नाष्ट्राः ' नाशकारिण्यः तत्सेनाश्च ' न हन्युः ' न हिंस्युः इति मन्वानाः 'तस्मै' प्रवर्ग्याय, तेभ्यो रक्षणार्थं 'एतां' देवयजनस्य उत्तरदिगवस्थितां ' पुरं ' निवास-

( त्यु ) अथ खरे सादयति । मखाय त्वा मखस्य त्वा शीर्ष्णऽइत्य-सावेव बन्धुरथ प्रयौति मखाय त्वा मखास्य त्वा शीर्ष्णऽइत्यसावेव बन्धुरथ मृत्पिण्डमुपादाय महावीरङ्करोति मखाय त्वा मखस्य त्वा शीर्ष्णऽइत्यसावेव बन्धुः प्रादेशमात्रम्प्रादेशमात्रमिव हि शिरो मध्ये सङ्गृहीतं मध्ये सङ्गृहीतमिव हि शिरोऽथास्योपरिष्टात्त्र्यङ्गुलं मुखमुन्न-यति नासिकामेवास्मिन्नेतद्दधाति तन्निष्ठितमभिमृशति मखस्य शिरोऽ-सीति मखस्य ह्येतत्सौम्यस्य शिरऽएवमितरौ तूष्णीं पिन्वने तूष्णीᳯं रौहिणकपाले ॥ १७ ॥

---

अथ खरे सादयति–" मखाय त्वा मखस्य त्वा शीर्ष्णे "–इति । असावेव बन्धुः । अथ प्रयौति–"मखाय त्वा मखस्य त्वा शीर्ष्णे "–इति । असावेव बन्धुः । अथ मृत्पिण्डमु-पादाय महावीरं करोति–" मखाय त्वा मखस्य त्वा शीर्ष्णे "–( वा. सं. ३७ । ७ ) इति । असावेव बन्धुः । प्रादेशमात्रम् । प्रादेशमात्रमिव हि शिरः । मध्ये संगृहीतम् । मध्ये संगृहीतमिव हि शिरः । अथोपरिष्टात्त्र्यंगुलं मुखमुन्नयति । नासिकामेवास्मिन्नेतद्दधाति । तं निष्ठितमभिमृशति– " मखस्य शिरोऽसि "–( वा. सं. ३७ । ८ ) इति । मखस्य ह्येतत्सौम्यस्य शिरः । एवमि-तरौ । तूष्णीं पिन्वने । तूष्णीं रौहिणकपाले ॥ १७ ॥

---

भूमिं ' पर्यश्रयन् ' पर्यवेष्टयन् रक्षःप्रभृतीनां तिरोधानाय । यथैव देवा अकुर्वन् ' तथैव ' ' अयं ' अद्य-तनोऽपि यजमानः अध्वर्युर्वा 'अस्मै' प्रवर्ग्याय रक्षःप्रभृतिभ्यो रक्षणार्थं 'एतां पुरं परिश्रयति' परिवेष्टयति॥ १६॥

मंत्रेण स्वीकृतं संभारजातं " प्रैतु ब्रह्मणस्पतिः " इति मंत्रेण प्रापितं तस्मिन्परिश्रिते प्रदेशे निदध्यादि-त्याह–अथ खरे सादयति० बंधुरिति । इत्थं परिश्रितदेशं प्राप्य अथानंतरं तन्मध्यगते ' खरे ' धिष्ण्ये, तत् संभारजातं ' सादयति ' निदधाति " मखाय त्वेति " अनेनैव मंत्रेण । तदेतत् स्पष्टीकृतं सूत्रकारेण– " परिवृते निदधाति संभारानुद्धतावोक्षिते सिकतोपकीर्णे प्राग्द्वारे मखाय त्वेति " ( का. श्रौ. सू. २६ । १४ ।) गतमन्यत् । अथ तेषां कृष्णाजिनस्थानां संभाराणां संसर्जनं विधत्ते–अथ प्रयौति मखाय त्वा० बंधुरिति । ' अथ ' निधानानंतरं ' प्रयौति ' मिश्रीकरोति मृद्वल्मीकवपावराहविहतपूतीकाजाक्षीरलक्षणान् आहृतान् संभारान् यथा परस्परसंमेलनेन श्लक्ष्णं भवति तथा " मखाय त्वा " इत्यनेन मंत्रेण संसृजतीत्यर्थः । गतम-न्यत् । अथ तया संसृष्टया मृदा महावीरनिर्माणं विधत्ते–अथ मृत्पिण्डमादाय० बंधुरिति । ' अथ ' संसर्जनानंतरं संसृष्टं ' मृत्पिण्डं ' ' उपादाय ' हस्ताभ्यां स्वीकृत्य " मखाय त्वेति " मंत्रेण ' महावीरं ' घर्मंहविःसंतापसाधनं पात्रं ' करोति ' । गतमन्यत् । अथास्य पात्रस्य लक्षणं दर्शयति–प्रादेशमात्रं प्रादेश-मात्रमिव० तद्दधातीति । तं महावीरं ' प्रादेशमात्रं ' ऊर्ध्वप्रमाणेन प्रादेशपरिमितं कुर्यात् । ' हि ' यस्मात्

---

१–संभारैः सᳯं सृजति मखायेति । का. श्रौ. सू. २६ । १५ ।

२–मृदमादाय मखायेति महावीरं करोति । का. श्रौ. सू. २६ । १६ ।

प्रजापतिर्व्वाऽएष यज्ञो भवति । (त्यु) उभयम्वाऽएतत्प्रजापतिर्न्निरुक्त-श्चानिरुक्तश्च परिमितश्चापरिमितश्च तद्यद्यजुषा करोति यदेवास्य निरुक्तं परिमितᳪं रूपन्तदस्य तेन सᳪंस्करोत्यथ यत्तूष्णीं यदेवास्यानिरुक्त-मपरिमितᳪं *रूपन्तदस्यैतेन सᳪंस्करोति स ह वाऽएतᳪं सर्वं-

प्रजापतिर्वा एष यज्ञो भवति । उभयं वा एतत्प्रजापतिः । निरुक्तश्चानिरुक्तश्च । परिमितश्चा-परिमितश्च । तद्यद्यजुषा करोति । यदेवास्य निरुक्तं परिमितं रूपम् । तदस्य तेन संस्करोति । अथ यत्तूष्णीम् । यदेवास्यानिरुक्तमपरिमितं रूपम् । तदस्यैतेन संस्करोति । स ह वा एतं सर्वं कृत्स्नं

'शिरो' मूर्द्धा लोके 'प्रादेशमात्रमिव' प्रादेशपरिमितमेव दृश्यते । तस्मात् प्रादेशमात्रं महावीरं कुर्यात् । तथा तं 'मध्ये' 'संगृहीतं' सन्नतं कुर्यात् । लोके हि शिरः 'मध्ये संगृहीतमिव हि' सन्नतमिव खलु दृश्यते । 'अथ' अनंतरमेवं कृत्वा अस्य महावीरस्य 'उपरिष्टात्' उपरिभागे 'त्र्यंगुलं' अंगुलत्रयपरिमितं मुख-मास्यं 'उन्नयति' । ऊर्ध्वं प्रापयति । 'एतत्' एतेन मुखोन्नयनेन 'अस्मिन्' महावीरे यज्ञशिरसि 'नासिकामेव दधाति' स्थापितवान् भवति । सूत्रकारेण च एतन्महावीरलक्षणं स्पष्टीकृतम्—"प्रादेशमात्रमूर्ध्वमासेचनवंतं मेख-लावन्तं मध्यसंगृहीतमूर्ध्वं मेखलायास्त्र्यंगुलम् " ( का. श्रौ. सू. २६।१७ ) इति । एवं उक्तलक्षणसंपन्नं महावीरं कृत्वा, अथ तस्य समंत्रकं अभिमर्शनं विधत्ते—तं निष्ठितमभिमृशति० शिरः इति । 'तं' महावीरं 'निष्ठितं' निःशेषेण स्थितं सर्वलक्षणयुक्तत्वेन निष्पन्नं "मखस्य शिरोऽसि" इति मन्त्रेण 'अभिमृशति' । 'सौम्यस्य मखस्य' सोमयागस्य 'एतत्' एषः महावीरः 'शिरो हि' शिरः खलु मूर्द्धा खलु । "महान् बत नो वीरोऽपादि" इति निर्वच-नस्य दर्शितत्वात् ( श. प. १४ । १ । १ । ११ । ) । अतः तदभिमर्शने "मखस्य शिरोऽसि" इति मंत्रः संगतः इत्यर्थः । एवं प्रचरणीयस्य महावीरस्य निर्माणमुक्तम् । अथ अप्रचरणीययोः उपशययोः महावीरयोरपि एतदति-दिशति—एवमितरौ विति । मृत्पिण्डोपादानादिना निष्ठिताभिमर्शनान्तेन येन प्रकारेण प्रथमो महावीरः कृतः । एवमनेनैव प्रकारेण द्वितीयतृतीयावपि महावीरौ कार्यौ । अथ एतयैव मृदा प्रवर्ग्योपयुक्तं अन्यदपि मृण्मयपात्रजातं कर्तव्यमित्याह—तूष्णीं पिन्वने तूष्णीं रौहिणकपाले इति । पिन्वति सिंचति अनयोरिति पिन्वने । गोपयसः अजापयसश्च दोहनपात्रे । "पिवि सेचने"—( धा. पा. भ्वा प. ५८९ ) इत्यस्मात् "करणाधिकरण-योश्च ( पा. सू. ३।३।११७ ) इति ल्युट् । एते 'पिन्वने' 'तूष्णीं' मंत्रवर्ज्यं महावीरावशिष्टया एतयैव मृदा कर्तव्ये । तथा 'रौहिणकपाले' रौहिणौ पुरोडाशौ अग्रे विधास्येते । तयोरधिश्रयणार्थं द्वे कपाले 'तूष्णीं' मन्त्रवर्जं कर्तव्ये । एतयोः पिन्वनयोः कपालयोश्च लक्षणं सूत्रकारेण एवमुक्तम्—"स्रुक्पुष्कराकृती पिन्वने रौहिण-कपाले परिमण्डले "—( का. श्रौ. सू. २६ । २१ ) इति ॥ १७॥

यत् एतत् समन्त्रकं महावीरनिर्माणं अमन्त्रकं पिन्वनादिनिर्माणं च उक्तम् । तदेतत् उभयं संहत्य स्तौति—प्रजापतिर्व्वाऽएष यज्ञो० तदेवं करोतीति । 'एषः' क्रियमाणः 'यज्ञः प्रजापतिर्वै' प्रजापत्यात्मको वा

* 'रुपन्तदस्य तेन' इति मुद्रिते पाठः ।

१—निष्ठितमभिमृशति मखस्य शिर इति । आदानमेके । का. श्रौ. सू. २६ । १८ । १९ ।

२—एवमितरौ प्रतिमन्त्रम् । का. श्रौ. सू. । २६ । २० ।

कृत्स्नम्प्रजापतिꣳ सꣳस्करोति यऽएवम्विद्वानेतदेवङ्करोत्यथोपशयायै पिण्डम्परिशिनष्टि प्रायश्चित्तिभ्यः ॥ १८ ॥

( भ्योऽथ ) अथ गवेधुकाभिर्हिन्वति । यज्ञस्य शीर्षच्छिन्नस्य रसो व्यक्षरत्तत ऽएता ऽओषधयो जज्ञिरे तेनैवैनमेतद्रसेन समर्द्धयति कृत्स्नङ्-

---

प्रजापतिं संस्करोति । य एवं विद्वानेतदेवं करोति । अथोपशयायै मृत्पिण्डं परिशिनष्टि प्रायश्चित्तिभ्यः ॥ १८ ॥

अथ गवेधुकाभिर्हिन्वति । यज्ञस्य शीर्षच्छिन्नस्य रसो व्यक्षरत् । तत एता ओषधयो जज्ञिरे ।

---

'भवति' ओश्रावयेत्यादिसप्तदशाक्षरसमुदायात्मना प्रजापतेः यज्ञं प्रविष्टत्वात् । तथा च आश्रावयेत्यादीनि प्रकृत्य तैत्तिरीयके " एष वै सप्तदशः प्रजापतिर्यज्ञमन्वायत्तः " ( तै. सं. १ । ६ । ११ ) इति । स च प्रजापतिः एतच्च वक्ष्यमाणं 'उभयं वै' उभयात्मकः । तदेव उभयविधत्वं दर्शयति—**निरुक्तश्चानिरुक्तश्चेति** । तस्य जगदात्मनो परिणतो यो भागः सः 'निरुक्तः' आकाशवाय्वादिभूतभौतिकप्रपंचात्मना विशेषेण उक्तः प्रकटीकृतो भवति । यस्तु कार्यात्मकः कारणरूपो भागः सः 'अनिरुक्तः' । अस्मदादिभिः दुरधिगमत्वात् निर्वचनानर्हः । तथा एतावेव भागौ परिच्छिन्नत्वापरिच्छिन्नत्वाभ्यां 'परिमितश्चापरिमितश्च' भवतः । एवं प्रजापतिः उभयात्मकः । किं तत इत्याह—**तद्यदिति** । तत्तथा सति यत्कर्म 'यजुषा' मन्त्रेण 'करोति' । 'यदेवास्य' प्रजापतेर्निरुक्तं परिमितं रूपं प्राक् दर्शितं आकाशवाय्वादिभूतात्मकं जगत् 'अस्य' प्रजापतेः तद्रूपं 'तेन' समन्त्रकेण कर्मणा 'संस्करोति' संस्कृतं सातिशयं करोति । अथेति उक्तवैलक्षण्ये । यत्कर्म तूष्णीममन्त्रकं यज्ञे क्रियते । 'अस्य' प्रजापतेः 'यदेवानिरुक्तं अपरिमितं रूपं' कारणावस्थम् । 'अस्य' प्रजापतेः तद्रूपं 'तेन' तन्मन्त्रकेण कर्मणा 'संस्करोति' । किं अविशेषेण सर्वो यजमानः इत्थं प्रजापतिं संस्करोति नेत्याह—**स हेति** । 'यः' यजमानः 'एवं' उक्तं ब्राह्मणार्थं 'विद्वान्' जानन् 'एतत्' यज्ञकर्म 'एवं' समन्त्रकममन्त्रकं च करोति' । 'स हैव' । स खलु 'एतं' प्रजापतिं कृत्स्नं संपूर्णावयवं 'सर्वं सर्वात्मना निरवशेषं 'संस्करोति ।' अथ शिष्टस्य मृत्पिंडस्य उपयोगाभावात् परित्यागप्रसक्तौ तद्वारयति—**अथोपशयायै० प्रायश्चित्तिभ्यः** इति । उप समीपे शय्यते प्रयोजनाभावेन स्थीयते अनया इत्युपशया । महावीरादिभ्यः अतिरिक्ता मृत् । षष्ठ्यर्थे चतुर्थी ( पा. सू. २ । ३ । ६२ वा. ) । 'अथ' रौहिणकपालनिर्माणानंतरं 'उपशयायै' अविष्टायाः मृदः पिंडं 'परिशिनष्टि' परिशेषयति सुगुप्तं धारयतीत्यर्थः । किमर्थं 'प्रायश्चित्तिभ्यः' प्रायश्चित्तार्थं यदि प्रवर्ग्यप्रचरणसमये महावीरादीनां मृण्मयानां अन्यतमं भिद्येत । तदा तस्य पुनर्निर्माणाय मृत् अपेक्ष्यते । तदर्थं मंत्रसंस्कृतं मृत्पिंडं अवशिष्टं धारयेत् इत्यर्थः ॥ १८ ॥

अथ यदुक्तं सूत्रकारेण—" गवेधुकाभिः श्लक्ष्णयति " ( का. श्रौ. सू. २६ । २३ ) इति । तदेतत्

---

१—"ता वा एताः पंच व्याहृतयो भवंति ओश्रावयास्तु श्रौषड् यज ये यजामहे वौषडिति, पाङ्क्तो यज्ञः, पाङ्क्तः पशुः पंचर्तवः संवत्सरस्य एषैका यज्ञस्य मात्रा एषा संपत्" । इति पंक्तिसंपदमनूच्य तदग्रतः कंडिकायाम्—" तासां सप्तदशाक्षराणि, सप्तदशो वै प्रजापतिः प्रजापतिर्यज्ञः एषैका यज्ञस्य मात्रा एषा संपद् " । ( श. प. ५ । २ । १६–१७ ) इति ॥

२—मृदमुपशयां निदधाति । ( का. श्रौ. सू. २६ । २२ । )

ङ्करोति मखाय त्वा मखस्य त्वा शीर्ष्णऽइत्यसावेव बन्धुरेवमितरौ तूष्णी-म्पिन्वने तूष्णीᳪं रौहिणकपाले ॥ १९ ॥

( ८ ) अथैनान्धूपयति । ( त्यु ) अश्वस्य त्वा वृष्णः शक्ना धूपया-मीति वृषा वाऽअश्वो वीर्य्यम्वै वृषा वीर्य्येणैवैनमेतत्समर्द्धयति कृत्स्न-ङ्करोति देवयजने पृथिव्या मखाय त्वा मखस्य त्वा शीर्ष्णऽइत्यसावेव बन्धुरेवमितरौ तूष्णीम्पिन्वने तूष्णीᳪं रौहिणकपाले ॥ २० ॥

---

तेनैवैनमेतद्रसेन समर्द्धयति । कृत्स्नं करोति । "मखाय त्वा मखस्य त्वा शीर्ष्णे "-( वा. सं. ३७ । ८ ) इति । असावेव बंधुः । एवमितरौ । तूष्णीं पिन्वने । तूष्णीं रौहिणकपाले ॥ १९ ॥

अथैनान् धूपयति-" अश्वस्य त्वा वृष्णः शक्ना धूपयामि "-इति । वृषा वा अश्वः । वीर्यं वै वृषा । वीर्येणैवैनमेतत्समर्द्धयति । कृत्स्नं करोति । " देवयजने पृथिव्या मखाय त्वा मखस्य त्वा शीर्ष्णे "-( वा. सं. ३७ । ९ ) इति । असावेव बन्धुः । एवमितरौ । तूष्णीं पिन्वने । तूष्णीं रौहिणकपाले ॥ २० ॥

---

विधाय स्तौति-अथ गवेधुकाभिः० बंधुरेवमितराविति । 'अथ' निर्माणानंतरं प्रथमकृतं महावीरं 'गवेधु-काभिः' गवेधुका आरण्यगोधूमाख्या ओषधयः ताभिर्हिन्वति श्लक्ष्णयति । पुरा खलु छिन्नशिरस्कस्य 'यज्ञस्य रसः' स्रुतोऽभवत् । ततस्तस्माद्रसात् 'एताः' गवेधुकाख्याः 'ओषधयः जज्ञिरे' जाताः । 'एतत्' एतेन गवेधुकाभिः हिन्वनेन 'तेनैव' प्राक्स्रुतेन 'रसेन एनं' यज्ञं 'समर्द्धयति' । गतमन्यत् । अथ पूर्ववत् पिन्वनयोः रौहिणकपालयोश्च मंत्रवर्जं गवेधुकाभिः श्लक्ष्णीकरणं विधत्ते-तूष्णीं पिन्वने तूष्णीᳪं रौहिणकपाले इति । सिद्धमेतत् ॥ १९ ॥

अथ एतेषां अश्वशकृता धूपनं विधत्ते-अथैनान् धूपयत्यश्वस्य त्वा वृष्णः शक्ना धूपयामीतीति । 'अथ' हिन्वनानन्तरं 'एनान्' महावीरादीन् 'धूपयति' अग्नौ अश्वशकृत्प्रक्षिप्य तद्धूमेन वासयति । तत्र प्रथमकृतं महावीरं " अश्वस्य त्वेति " मन्त्रेण प्रथमं धूपयेत् । अस्य मन्त्रप्रथमभागस्य यज्ञसमृद्धिहेतुमाह-वृषा वा अश्वो वीर्यं० कृत्स्नं करोतीति । 'वृषा वै' सेचनसमर्थः खलु 'अश्वः' । अतः 'वृष्णः' अश्वस्येति विशेष्यते, स च 'वृषा' 'वीर्यं वै' वीर्यात्मकः । निर्वीर्याणां सेचनसामर्थ्याभा-वात् । तथा च 'एतत्' एतेन वर्षणसमर्थाश्वशकृद्धूपनेन 'वीर्येणैव' 'एनं' प्रवर्ग्यं 'समर्द्धयति' । गत-मन्यत् । अवशिष्टं मन्त्रभागमनूद्य तात्पर्यमाह-देवयजने पृथिव्या० बन्धुः इति । व्याख्यातमेतत् । द्वितीयतृतीययोरपि महावीरयोः उक्तं धूपनं अतिदिशति-एवमितराविति । सिद्धमेतत् । तथा च सूत्रितम्-" अश्वशकृता धूपयत्यश्वस्य त्वेति प्रतिमन्त्रम् " ( का. श्रौ. सू. २६ । २४ ) इति । अथ पिन्वनादीनां पूर्ववत् अमन्त्रकं धूपनं विधत्ते-तूष्णीं पिन्वने तूष्णीᳪं रौहिकपाले इति । सिद्धमेतत् ॥ २० ॥

( ८ ) अथैनाञ्छ्रपयति । शृतᳪं हि देवानामिष्टकाभिः श्रपयत्येता वाऽएतदकुर्वत यथायथैतद्यज्ञस्य शिरोऽच्छिद्यत ताभिरेवैनमेतत्समर्द्धयति कृत्स्नङ्करोति तदु येनैव सुशृताः स्युस्तेन श्रपयेदथ पचनमवधाय महावीरमवदधाति मखाय त्वा मखस्य त्वा शीर्ष्णऽइत्यसावेव बन्धुरेवमितरौ तूष्णीम्पिन्वने तूष्णीᳪं रौहिणकपाले तान्दिवैवोपवपेद्दिवोद्वपेदहर्हि देवानाम् ॥ २१ ॥

---

अथैनान् श्रपयति । शृतं हि देवानाम् इष्टकाभिः श्रपयति । एता वा एतदकुर्वत । यथायथैतद्यज्ञस्य शिरोऽच्छिद्यत । ताभिरेवैनमेतत्समर्द्धयति । कृत्स्नं करोति । तदु येनैव सुशृताः स्युः । तेन श्रपयेत् । अथ पचनमवधाय महावीरमवदधाति–" मखाय त्वा मखस्य त्वा शीर्ष्णे "–( वा. सं. ३७ । ९ ) इति । असावेव बन्धुः । एवमितरौ । तूष्णीं पिन्वने तूष्णीं रौहिणकपाले । तान्दिवैवोपवपेत् । दिवोद्वपेत् । अहर्हि देवानाम् ॥ २१ ॥

---

अथ एतेषां महावीरादीनां श्रपणं विधत्ते–अथैनाञ्छ्रपयति शृतᳪं हि देवानाम् इति । 'अथ धूपनानन्तरं ' एनान् ' महावीरादीन् ' श्रपयति ' दक्षिणाग्निसमीपे चतुरस्रं अवटं खात्वा तत्र निधाय आपाकं पक्वान् करोति । ' हि ' यस्मात् । 'शृतं' पक्वं खलु 'देवानां' योग्यम् । "यो विदग्धः स नैर्ऋतः । योऽशृतः स रौद्रो यः शृतः स देवस्तस्मादविदहता शृतंकृत्यः स देवत्वाय " ( तै. सं. २।६।३ ) इति श्रुतेः । अथ एतेषां पचनद्रव्याणि विधाय स्तौति–इष्टकाभिः श्रपयत्येता वा एतदकुर्वत यथायथैत० कृत्स्नं करोतीति । अत्र इष्टकानां पचनसाधनत्वानुपपत्तेः, तद्वाचिना इष्टकाशब्देन तत्पचनसाधकानि इक्षुपर्णकरीषादीनि द्रव्याणि लक्ष्यन्ते । ' इष्टकाभिः ' इष्टकापचनसाधनैर्द्रव्यैः ' एतान् ' महावीरादीन् ' श्रपयति ' पचति । ' एता वै ' एताः खलु इष्टकाः ' एतदकुर्वत ' एवंविधं यज्ञं कृतवत्यः । ' यथायथा ' येनयेन प्रकारेण ' यज्ञस्य एतच्छिरः अच्छिद्यत ' छिन्नमभवत् । इष्टकापचनद्रव्याश्रिताः हि वम्र्यः यज्ञात्मकस्य विष्णोः ज्याभक्षणेन शिरः चिच्छिदुः इति तदभिप्रायमिदम् । यद्वा घर्मोष्टके कुलायिन्याद्या इष्टकाः ताभिः सह एनान् महावीरादीन् श्रपयतीति नियोजना द्रष्टव्या । गतमन्यत् । अन्येनापि येन द्रव्येण सम्यक् पाको भवति तेनापि श्रपणं कार्यमित्याह–तदु येनैव सुशृताः स्युस्तेन श्रपयेत् इति । ' तत् उ ' तत्रापि ' येनैव ' पचनद्रव्येण ' सुशृताः ' सुपक्वाः खंडकृष्णादिदोषरहिताः लोहितवार्णा स्युः महावीरादयो भवेयुः । ' तेन ' द्रव्येण ' श्रपयेत् ' एतान् पचेत् । अथ पचनप्रकारमाह–अथ पचनमवधाय० रौहिणकपाले इति । ' अथ ' धूपनानन्तरं पच्यते अनेनेति ' पचनं ' पाकसाधनं द्रव्यं करीषेक्षुपर्णादिकं तत् ' अवधाय ' अवटे प्रक्षिप्य महावीरं प्रथमकृतं 'अवदधाति' प्रक्षिपति "मखाय त्वा"[2] इति । मन्त्रेण । अवशिष्टं सर्वं पूर्ववत् योज्यम् । अथ एतेषां आवापोद्धरणयोः कालविशेषमाह–तान्दिवैवोपवपेद्दिवोद्वपेदहर्हि देवानाम् इति । ' तान् ' पक्तव्यान् महावीरा-

---

१–उखावदग्निः । का. श्रौ. सू. २६ । २४ । उखावदिति " सप्तभिरश्वशकृद्भिरुखां धूपयति दक्षिणाग्न्यादीसैरेकैकेनेति का. श्रौ. सू. १६ । १०८ ।

२–अदहनं च मखाय त्वेति प्रतिमन्त्रम् । का. श्रौ. सू. २६ । २४ ।

( ५ँ ) सऽउुद्वपति । ( त्पृ ) ऋजुवे त्वेुत्यसौ वैु लोकुऽऋजुः सत्युछँ ह्यृजुः सत्युमेष युऽएष तुपत्येषुऽउ प्रथमुः प्रवुर्ग्यस्तुदेतुमेुवैतुत्प्रीणाति तुस्मादाहर्जुवे त्वेुति ॥ २२ ॥

साधुवे त्वेुति । ( त्य ) अयम्वैु साधुर्य्योऽयम्पुवतऽएषु हीमाँल्लोका-न्त्सुद्धोऽनुपुवतऽएषुऽउ द्वितीयः प्रवुर्ग्यस्तुदेतुमेुवैतुत्प्रीणाति तुस्मादाह साधुवे त्वेुति ॥ २३ ॥

---

स उद्वपति–"ऋजवे त्वा"–इति । असौ वै लोक ऋजुः । सत्यं हि ऋजुः । सत्यमेषः । य एष तपति । एष उ प्रथमः प्रवर्ग्यः । तदेतमेवैतत्प्रीणाति । तस्मादाह–" ऋजवे त्वा "–इति ॥२२॥

" साधवे त्वा " इति । अयं वै साधुः । योऽयं पवते । एष हीमाँल्लोकान्त्सिद्धोऽनुपवते । एष उ द्वितीयः प्रवर्ग्यः । तदेतमेवैतत्प्रीणाति । तस्मादाह–" साधवे त्वा "–इति ॥ २३ ॥

---

दीन् ' दिवेव ' अहन्येव सूर्यप्रकाशयुक्ते एव ' उपवपेत् पाकार्थं अवटे प्रक्षिपेत् । सुपक्कांश्च तान् ' दिवैव उद्वपेत् ' अवटात् उद्धरेत् । ' अहः ' खलु ' देवानां ' स्वभूतः कालः । तथा च तैत्तिरीयके " अहर्देवानामासीद्रात्रिरसुराणाम् " ( तै. सं. १ । ५ । ९ ) इति ॥ २१ ॥

एवमुद्वपनस्य कालमुक्त्वा अनु समंत्रकं तद्विधत्ते–स उद्वपत्यृजवे त्वेतीति । ' सः ' महावीरादीनां पाचकोऽध्वर्युः प्रथमक्वतं महावीरं " ऋजवे त्वेति " मन्त्रेण ' उद्वपति ' अवटात्पाकस्थानादुद्धरति । अथ एतस्य मन्त्रस्य प्रथमेन महावीरेण संगतिमुपपादयति–असौ वै लोकः० प्रीणातीति । ' असौ वै ' दूरे वर्तमानः द्युलोकः खलु ' ऋजुः ' आर्जवयुक्तत्वात् मन्त्रे ऋजुशब्देन वाच्यः । ' ऋजुः ' आर्जवगुणश्च ' सत्यं ' यथार्थभाषणं ' हि ' आर्जवरहितस्य कुटिलस्य अनृतवादित्वदर्शनात् । तच्च सत्यमेव ' एषः ' आदित्यः अबाधितस्वभावत्वात् । ' यः एषः ' आदित्यः दिवि ' तपति ' दीप्यते । ' एषः ' एव ' प्रथमः प्रवर्ग्यः ' महावीरः । ' तत् ' तथा च ' एतत् ' एतेन ऋजुशब्दयुक्तेन मन्त्रेण ' एतमेव ' सूर्यात्मकं प्रथमं प्रवर्ग्यं ' प्रीणाति ' प्रीतं करोति । उक्तमर्थं निगमयति–तस्मादाहर्जवे त्वेति इति ॥ २२ ॥

अथ द्वितीयस्य महावीरस्य उद्वपनं विधत्ते–साधवे त्वेतीति । स उद्वपतीत्यनुषज्यते । " साधवे त्वा " इत्यनेन मन्त्रेण द्वितीयं महावीरं सः अध्वर्युः उद्वपति उद्धरेत् । अथ एतस्य मन्त्रस्य द्वितीयेन महावीरेण संगतिमाह–अयं वै साधुर्यो० साधवे त्वेतीति । ' अयं ' खलु ' साधुः ' मन्त्रे साधुशब्देनाभिधेयः । ' यः ' अयमन्तरिक्षे वायुः ' पवते ' सततं गच्छति । कथमस्य साधुशब्दाभिधेयतेति चेत् उच्यते । ' एषः ' खलु ' सिद्धः ' निष्पन्नस्वरूपः वायुः ' इमान् ' परिदृश्यमानान् पृथिव्यादीन् सर्वान् ' लोकान् ' ' अनुपवते ' अनुप्रविश्य व्याप्य वर्तते । एवं वर्तमानो यः अयं अन्तरिक्षगतो वायुः ' एषः ' एव ' द्वितीयः प्रवर्ग्यः ' महावीरः, अन्यत् पूर्ववत् ॥ २३ ॥

---

१–" अहरेव देवा रात्रिः पितरः " इति । श. प. २ । १ । ३ । १ ।

२–पक्वानुद्धरत्यृजवे त्वेति प्रतिमन्त्रम् । का. श्रौ. सू. २६ । २५ ।

सुक्षित्यै त्वेति । ( त्य ) अयम्वै लोकः सुक्षितिरस्मिन्हि लोके सर्व्वाणि भूतानि क्षियन्त्युथोऽ अग्निर्वै सुक्षितिरग्निर्ह्येवास्मिंल्लोके सर्व्वाणि भूतानि क्षियत्येषऽउ तृतीयः प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह सुक्षित्यै त्वेति तूष्णीम्पिन्वने तूष्णीᳬ रौहिणकपाले ॥ २४ ॥

(ऽ) अथैनानाच्छृणत्ति । ( त्य ) अजायै पयसा मखाय त्वा मखस्य त्वा शीर्ष्णऽइत्यसावेव बन्धुरेवमितरौ तूष्णीम्पिन्वने तूष्णीᳬ रौहिणकपाले २५

(ऽ) अथैतद्वै । ( द्वाऽआ ) आयुरेतज्ज्योतिः प्रविशति यऽएतमनु वा ब्रूते भक्षयति वा तस्य व्रतचर्य्या या सृष्टौ ॥ २६ ॥

## इति प्रथमप्रपाठके द्वितीयं ब्राह्मणम् ॥ १४।१।२ ॥ ( १-२ )

---

"सुक्षित्यै त्वा"-( वा. सं. ३७।१० ) इति । अयं वै लोकः सुक्षितिः । अस्मिन् हि लोके सर्वाणि भूतानि क्षियन्ति । अथो अग्निर्वै सुक्षितिः । अग्निर्ह्येवास्मिंल्लोके सर्वाणि भूतानि क्षियति । एष उ तृतीयः प्रवर्ग्यः । तदेतमेवैतत्प्रीणाति । तस्मादाह-"सुक्षित्यै त्वा"-इति । तूष्णीं पिन्वने । तूष्णीं रौहिणकपाले ॥ २४ ॥

अथैनानाच्छृणत्ति । अजायै पयसा-"मखाय त्वा मखस्य त्वा शीर्ष्णे"-( वा. सं ३७ । १० ) इति । असावेव बंधुः । एवमितरौ । तूष्णीं पिन्वने । तूष्णीं रौहिणकपाले ॥ २५ ॥

अथ एतद्वा आयुः, एतज्ज्योतिः प्रविशति । य एतमनु वा ब्रूते । भक्षयति वा । तस्य व्रतचर्या, या सृष्टौ ॥ २६ ॥

---

अथ तृतीयस्य महावीरस्योद्वपनमाह-**सुक्षित्यै त्वेतीति** । अत्रापि उद्वपतीति पूर्ववत् अनुषज्यते । "सुक्षित्यै त्वेति" मन्त्रेण अध्वर्युः तृतीयं महावीरं उद्वपेत् इत्यर्थः । अथ अस्य मंत्रस्य अनेन तृतीयेन महावीरेण संगतिमाह-**अयं वै लोकः सुक्षितिः० सुक्षित्यै त्वेतीति** । 'अयं' खलु सर्वेषामाधारभूतो भूलोकः 'सुक्षितिः' । तस्य सुक्षितित्वं उपपादयति-**अस्मिन् हीति** । 'अस्मिन्' खलु 'लोके' 'सर्वाणि' भूतजातानि पशुपक्षिमृगादीनि 'क्षियन्ति' निवसन्ति । अतो भूलोकः सुक्षियन्ति अस्मिन्निति व्युत्पत्त्या सुक्षितिः। 'अथा' इति पक्षान्तरे अग्निः खलु सुक्षितिः । कुतः ? अग्निरेव खलु अस्मिन् भूलोके वर्तमानानि सर्वाणि भूतानि क्षियति जाठरादिरूपेणाश्रित्य वर्तते । 'एष उ' एतदात्मक एव 'तृतीयः प्रवर्ग्यः' । अन्यत् पूर्ववत् योज्यम् । एवमेव पिन्वनयोः कपालयोः अमन्त्रकः उद्वापः कार्यः इत्याह-**तूष्णीं पिन्वने तूष्णीᳬ रौहिणकपाले** इति ॥ २४ ॥

अथ तेषां आवापात् उद्धृतानामजाक्षीरेण आसेचनं विधत्ते-**अथैनानाच्छृणत्ति० कपाले** इति । 'अथ' उद्वपनानंतरं 'एनान्' महावीरादीन् संतप्तान् पात्रविशेषान् 'अजायै' षष्ठ्यर्थे चतुर्थी । ( पा.सू. २।३।६२वा.) अजायाः 'पयसा' क्षीरेण "मखायत्वा" इति मन्त्रेण 'आच्छृणत्ति' आसिक्तान् करोति । अन्यत् पूर्ववत् योज्यम् २५

प्रवर्ग्यसृष्टिप्रतिपादकप्रथमब्राह्मणे "नातपति प्रच्छादयेत" ( कं. २३ ) इत्यादिना या व्रतचर्या उपदिष्ट ।

---

१-अजापयसाऽवसिंचति मखायेति प्रतिमन्त्रम् । तूष्णीं पिन्वनादीनां करणाभिमर्शनश्लक्ष्णनधूपनप्रदहनोद्धरणावसेचनानि का. श्रौ. सू. २६ । २७ ॥

स यदैतदातिथ्येन प्रचरति । ( त्यु ) अथ प्रवर्ग्येण चरिष्यन्पुरोपसदो- ऽग्रेण गार्हपत्यम्प्राचः कुशान्त्सꣳस्तीर्य्य द्वन्द्वम्पात्राण्युपसादयत्युपयमनीं महावीरम्परीशासौ पिन्वने रौहिणकपाले रौहिणहवन्यौ स्रुचौ यदु चान्यद्भवति तद्दश दशाक्षरा वै विराड्विराड्वै यज्ञस्तद्विराजमेवैतद्यज्ञमभिसम्पादयत्यथ यद्द्वन्द्वन्द्वन्द्वम्वै वीर्य्यं यदा वै द्वौ सꣳरभेतेऽथ तौ वीर्य्यङ्कुरुतो द्वन्द्वम्वै मिथुनम्प्रजननम्मिथुनेनैवैनमेतत्प्रजननेन समर्द्धयति कृत्स्नङ्करोति ॥ १ ॥

---

### घर्मसन्दीपनं ब्राह्मणम् ।

स यदैतदातिथ्येन प्रचरति । अथ प्रवर्ग्येण चरिष्यन् पुरोपसदोऽग्रेण गार्हपत्यं प्राचः कुशान्त्संस्तीर्य द्वंद्वं पात्राण्युपसादयति । उपयमनीं महावीरं परीशासौ पिन्वने रौहिणपाले रौहिणहवन्यौ स्रुचौ । यदु चान्यद्भवति । तद्दश । दशाक्षरा वै विराट् । विराड् वै यज्ञः । तद्विराजमेवैतद्यज्ञमभिसंपादयति । अथ यद्द्वंद्वम् । द्वंद्वं वै वीर्यम् । यदा वै द्वौ संरभेते । अथ तौ वीर्यं कुरुतः । द्वंद्वं वै मिथुनं प्रजननम् । मिथुनेनैवैनमेतत्प्रजननेन समर्द्धयति । कृत्स्नं करोति ॥ १ ॥

---

सा न केवलं तद्ब्राह्मणार्थस्यैव शेषभूता । किंतु अध्यायद्वयप्रतिपाद्यस्य प्रवर्ग्यस्य तदनुवचनस्य च शेषभूतेति वक्तुं तत्तद्ब्राह्मणावसाने पुनः पुनः अतिदिश्यते—अथैतद्वै० सृष्टाविति । 'सृष्टौ' सृष्टिप्रतिपादके प्रवर्ग्यस्वरूपोत्पत्तिप्रतिपादके प्रथमब्राह्मणे 'या' व्रतचर्या प्रतिपादिता । सैव एतद्ब्राह्मणाध्यायिनः तत्प्रतिपाद्यार्थानुष्ठायिनश्च द्रष्टव्या । अन्यत् प्रथमब्राह्मणवत् योज्यम् ॥ २६ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये चतुर्दशे काण्डे तदन्तर्भूते प्रथमे प्रवर्ग्यकाण्डे प्रथमेऽध्याये द्वितीयं ब्राह्मणम् ॥ १४ ( १ ) । १ । २ ॥

इत्थं द्वितीयेन ब्राह्मणेन प्रवर्ग्यपात्राणां महावीरादीनां संभरणमुक्तम् । अथ तृतीयादिभिः सेतिकर्तव्यताकः प्रवर्ग्यः प्रतिपाद्यते । तत्र तावत् घर्मसंदीपनं तृतीयेन ब्राह्मणेन प्रतिपाद्यम् । अस्य च प्रवर्ग्यस्य अनारभ्याधीतत्वेन स्वातंत्र्यमाशंक्य वाक्यात् क्रतुप्रवेशमाह—स यदैतदातिथ्येन० पुरोपसद इति । 'सः' अध्वर्युः 'यदा' यस्मिन्काले 'एतत्' एतेन 'आतिथ्येन' अतिथिभूतस्य सोमराजस्य प्रीत्यर्थं क्रियमाणेन नवकपालेन पुरोडाशेन 'चरति' यजति । तदा 'उपसदः पुरा' उपसद्यागस्य पुरस्तात् एतेन उत्तरावधिनिर्देशेन आतिथ्येष्ट्यनंतरं तानूनप्त्रस्पर्शनादिकमपि कृत्वा 'प्रवर्ग्येण' वक्ष्यमाणेन प्रवर्ग्यप्रयोगेण 'चरिष्यन्' आचरिष्यन् अनुष्ठास्यन् भवेत् इत्युक्तं भवति । उपसदां पुरस्तात् प्रवर्ग्यः कर्तव्य[1] इति विधिः अर्थात्सिद्धो भवति । तत्र तावत् असंस्कृतानां पात्राणां यागानर्हत्वात् तत्संस्कारार्य पात्रा[2]सादनमाह—अग्रेण गार्हपत्यं० तद्दशेति ।

---

१–उपसदा चरिष्यंश्चरिष्यन्प्रवर्ग्येण चरति सप्रवर्ग्यं । का. श्रौ. सू. २६ । २८ ।
२–पूर्वेण गार्हपत्यं प्राचः कुशानास्तीर्य पात्रासादनं द्वन्द्वम् । का. श्रौ. सू. २६ । ३६ ।

( त्यु ) अथाध्वर्युः । प्रोक्षणीरादायोपोत्तिष्ठन्नाह ब्रह्मन्प्रचरिष्यामो होत-रभिष्टुहीति ब्रह्मा वै यज्ञस्य दक्षिणतऽआस्तेऽभिगोप्ता तमेवैतदाहाप्र-

अथाध्वर्युः प्रोक्षणीरादायोपोत्तिष्ठन्नाह । ब्रह्मन्प्रचरिष्यामः, होतरभिष्टुहीति । ब्रह्मा वै यज्ञस्य

' गार्हपत्यमग्रेण ' गार्हपत्यस्यादूरेण पुरस्तात् ' प्राचः ' प्रागग्रान् ' कुशान् ' संस्तीर्य तेषु पात्राणि ' द्वंद्वं ' द्विशो द्विशः उपसादयति । उपयमनम् अधस्ताद्धारणं तत्तस्य महावीरस्य अधः धारणार्था औदुंबरी द्राघीयसी स्रुक् उपयमनी ताम् । प्रथमकृतं महावीरं एकं द्वंद्वमासादयेत् । अथ ' परीशासौ ' अप्रचरणीयौ महावीरौ द्वितीयं द्वंद्वम् । ' पिन्वने रौहिणकपाले ' । रौहिणौ पुरोडाशौ हूयेते आभ्यामिति ' रौहिणहवन्यौ ' औदुंबर्यौ अबिले ' स्रुचौ ' च । एतानि त्रीणि द्वंद्वानि आसादनीयानि । ' यदु च ' यच्चान्यत् उक्तव्यतिरिक्तं पात्रजातं अपेक्षितं भवति । तदन्यदपि सर्वमासादनीयमित्यर्थः । तच्चावशिष्टं पात्रजातं सूत्रकारेण प्रदर्शितम्—" स्थूणा-मयूखं, धृष्टी, शतमाने, मुंजप्रलवान् विकंकतशकलान् विंशतिं प्रादेशमात्रान् स्रुवं मुञ्जवेदं धवित्राणि परिधींश्च, रज्जुसंदानं आसंदीं कृष्णाजिनं अभ्रिं सिकताः खरार्थाः अर्थवच्च "–( का. श्रौ. सू. २६ । ३७ ) इति । अथ ब्राह्मणोपात्तानां उपयमन्यादीनां दशसंख्यां विधाय स्तौति–**तद्दश दशाक्षरा वै० संपादयतीति** । उपय-मन्यादीनि यानि आसादनीयानि प्रत्यक्षाम्नातानि पात्राणि तानि ' दश ' भवंति । विराट्छंदश्च ' दशाक्षरा ' त्रिंशदक्षरायाः विराजः त्रिपात्त्वेन प्रतिपादं दशाक्षरत्वात् । सैव ' विराट् यज्ञः ' अग्निष्टोमः । तस्य द्वादशस्तो-त्रस्य स्तोत्रियापरिगणनायां नवतिशतं स्तोत्रियाः संपद्यन्ते । तत्र दशसंख्यया विभागे सति विराट्संपत्तेः यज्ञस्य विराडात्मकत्वम् । तत्तथा सति ' एतत् ' एतेन पात्रदशकासादनेन ' इमं ' यज्ञं प्रवर्ग्यानुष्ठानकाल एव विराजं ' अभिसंपादयति ' प्रापयति । अथ तेषां द्वंद्वश आसादनं प्रशंसति–**अथ यद्द्वंद्वं० करोतीति** । ' अथ ' अपि च ' यत् द्वंद्वं ' पात्राणां द्वंद्वश आसादनं तेन प्रवर्ग्यं वीर्यवंतं करोति । कुत एतत् ? ' द्वंद्वं वै ' सर्व-भावानां मध्ये यः द्वंद्वलक्षणो धर्मः तदेव ' वीर्यं ' वीर्यात्मकम् । अथैतदुपपाद्यते–' यदा ' खलु ' द्वौ ' पुरुषौ ' सरंभेते ' संरब्धौ संयुक्तौ भवतः । ' अथ ' अनंतरं ' तौ ' संरब्धौ पुरुषौ ' वीर्यं ' सामर्थ्यं ' कुरुतः ' न तु असहायः कश्चित् वीर्यं कर्तुं शक्नोति । तस्मात् द्वंद्वं वीर्यात्मकम् । तेन च पात्रमपि तेन प्रवर्ग्योऽपि वीर्यवान् भवतीत्युपपन्नम् । अपि च ' द्वंद्वं वै ' द्वंद्वमेव खलु ' मिथुनं ' स्त्रीपुंसात्मकं ' प्रजननं ' ' प्रजननेन ' स्त्रीपुंसात्मरूपेणैव प्रजासाधनेन ' एनं ' प्रवर्ग्यं ' समर्द्धयति ' ' कृत्स्नं ' संपूर्णावयवं च यज्ञं कृतवान् भवति ॥ १ ॥

अथ यदुक्तं कात्यायनेन–" प्रोक्षणीः संस्कृत्योद्यम्योत्थायाह ब्रह्मन्प्रचरिष्यामो होतरभिष्टुहि प्रस्तोतः सामानि

१–उपयमनीम्महावीरम् । का. श्रौ. सू. २६ । ३७ । २–परीशासौ । का. श्रौ. सू. २६ । ३७ । ३–पिन्वने । का. श्रौ. सू. २६ । ३७ । ४–रौहिणकपाले । का. श्रौ. सू. २६ । ३७ । ५–रौहिणहवन्यौ च स्रुचावनुत्कीर्णे । का. श्रौ. सू. २६ । ३७ । ६–स्थूणा च, मयूखश्च, इत्येकवद्भावी द्वंद्वः । गोबंधनार्था स्थूणा, स्तंभः । भाषायां खंटुवा खुंटा इति । मयूखः अजाबंध-नार्थः स्तंभः । भाषायामर्थ उक्त एव । ७–धृष्टी उपवेषौ । ८–शतमाने राजतं सौवर्णं च इति द्वे । ९–धवित्राणि कृष्णाजिनखंड-निर्मिताः त्रयो व्यजनाः । परिधयश्च । १०–रज्जू च संदानं चेति इत्येकवद्भावी द्वंद्वः । रज्जू गोबंधनार्था अजाबंधनार्था चेति द्वे । संदानं दोहनकाले गोः पादबंधनार्था रज्जुः । ११–अर्थवच्च स्य एक एव आसाद्यते । प्रकृतौ तस्य दशगणे पाठात् । पवित्रच्छेदनानि । पवित्रे । अग्निहोत्रहवणी । आज्यस्थाली । बहुलमाज्यं शूर्पम् । पात्री पिष्टम् । उपसर्जनीपात्रं उपशया । इतरौ महावीरौ होतृषदनम् । मौंजः कूर्चः, औदुंबरी समित् । इत्यर्थवत्पात्रासादनम् । १२–तत्र दशैकादशद्वादशाक्षराणां वैराजत्रैष्टुभ-जागता इति संज्ञाः । इति सर्वानुक्रमः । ५ । १ । दशकाक्षयौ विराट् । इति च । ५ । ४ । पादा इति शेषः ।

मत्तऽआस्स्व यज्ञस्य शिरः प्रतिधास्यामऽइति होतरभिष्टुहीति यज्ञो वै होता तमेवैतदाह यज्ञस्य शिरः प्रतिधेहीति प्रतिपद्यते होता ॥ २ ॥

ब्रह्म जज्ञानम्प्रथमम्पुरस्तादिति । ( त्य ) असौ वाऽआदित्यो ब्रह्मा-हरहः पुरस्ताज्जायतऽएषुऽउ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह ब्रह्मजज्ञानम्प्रथमम्पुरस्तादित्यथ प्रोक्षत्यसावेव बन्धुः ॥ ३ ॥

---

दक्षिणत आस्तेऽभिगोप्ता । तमेवैतदाह । अप्रमत्त आस्स्व । यज्ञस्य शिरः प्रतिधास्याम इति । होतरभिष्टुहीति । यज्ञो वै होता । तमेवैतदाह । यज्ञस्य शिरः प्रतिधेहीति । प्रतिपद्यते होता ॥ २ ॥

"ब्रह्म जज्ञानं प्रथमं पुरस्तात"–( वा. सं. १३ । ३ ) इति । असौ वा आदित्यो ब्रह्माहरहः पुरस्ताज्जायते । एष उ प्रवर्ग्यः । तदेतमेवैतत्प्रीणाति । तस्मादाह–"ब्रह्म जज्ञानं प्रथमं पुरस्तात"–इति । अथ प्रोक्षति । असावेव बन्धुः ॥ ३ ॥

---

गायेति" ( का. श्रौ. सू. २६ । ३८ ) इति । तत् विदधाति–अथाध्वर्युः प्रोक्षणी० रभिष्टुहीति । प्रोक्ष्यते आभिरिति प्रोक्षण्यः उत्पवनादिसंस्कृताः प्रोक्षणार्थाः आपः । ताः संस्कृत्य 'आदाय' हस्ते धारयित्वा 'उपोत्तिष्ठन्नध्वर्युः' 'ब्रह्मन्प्रचरिष्यामः' इति प्रैषमाह ब्रूयात् । तस्य प्रैषस्यायमर्थः । हे ब्रह्मन् ! वयं प्रवर्ग्येण 'प्रचरिष्यामः' अस्मभ्यमनुज्ञां देहि । त्वं च सावधानो भव । 'हे होतः !' त्वं घर्मं 'अभिष्टुहि' अभि उद्दिश्य स्तोत्रं कुरु । "ब्रह्म जज्ञानम्" इत्यादिकं अभिष्टवं ब्रूहीत्यर्थः । हे प्रस्तोतः ! त्वं घर्मलिंगकानि सामानि गायेति । तत्र ब्रह्मन्प्रचरिष्यामः होतरभिष्टुहि इत्यनयोः तात्पर्यलभ्यं अर्थमाह–ब्रह्म वै यज्ञ० धास्यामः इति । 'ब्रह्मा' खलु ऋत्विजां मध्ये यज्ञस्याभिगोप्ता सर्वतो रक्षिता सन् 'दक्षिणतः' दक्षिणभागे 'आस्ते' । यत एवं अतस्तमेव ब्रह्माणमुद्दिश्य एतद्वक्ष्यमाणं 'आह' प्रैषमन्त्रं ब्रूयात् 'हे ब्रह्मन् !' त्वं 'अप्रमत्तः' प्रमादोऽनवधानता तद्रहितः सन् प्रयोगं सम्यग् अनुसंदधानः 'आस्स्व' उपविश । वयं 'यज्ञस्य' छिन्नं 'शिरः' 'प्रतिधास्यामः' संदधाम इति 'ब्रह्मन्प्रचरिष्यामः' इति प्रैषभागस्यार्थः । होतरभिष्टुहीति पुनरुपादानं व्याख्यानार्थम् । यः अयं होता असौ साक्षात् यज्ञः । वषट्कर्तृत्वेन अत्यन्तं अंतरंगत्वात् । 'तमेव' यज्ञात्मकं होतारं एतद्वक्ष्यमाणं 'आह' होतरभिष्टुहीतीति अनेन ब्रूते । एतदित्युक्तं किमित्याह–हे होतः ! त्वं 'यज्ञस्य' छिन्नं 'शिरः' 'प्रतिधेहि' संधत्स्व इति । एवं अध्वर्युणा प्रार्थितस्य होतुः अभिष्टवं प्रतिपदं विदधाति–प्रतिपद्यते होता । ब्रह्म जज्ञानं प्रथमं पुरस्तादिति । अध्वर्युप्रैषानंतरं होता ब्रह्म जज्ञानमित्यभिष्टववाक्यं ऋक्संघं वक्तुं प्रतिपद्यते । अथ अस्य होतुः अभिष्टवेन यज्ञशिरःसंधाने सामर्थ्यं अस्तीति दर्शयितुं अस्याः प्रतिपदं तात्पर्यगम्यं अर्थं आह–असौ वा० दितीति । 'असौ' द्युलोकस्थः खलु 'आदित्यः' 'ब्रह्म' अस्यां ऋचि ब्रह्मशब्देन प्रतिपाद्यते । स आदित्यः 'अहरहः' प्रतिदिनं प्रत्यहं 'पुरस्तात्' पूर्वस्यां दिशि 'जायते' उदेति । 'एषः' उद्यन्नादित्यः 'प्रवर्ग्यः' "तत्पतित्वाऽसावादित्योऽभवत्" ( श. प. १४ । १ । १।१० ) इति प्राक् आम्नातत्वात् । भक्त्या च 'एतमेव' सूर्यात्मकं प्रवर्ग्यं 'एतत्' "ब्रह्म जज्ञानं प्रथमं पुरस्तात्"

स प्रोक्षति । यमाय त्वेत्येष वै यमो य॒ऽएष त॒पत्येष॒ हीद॑ꣳ स॒र्वं यम॒-यत्ये॒तेने॒दꣳ स॒र्वं य॒तमे॒ष॒ऽ उ प्रवर्ग्य॑स्त॒दे॒तमे॒वैत॒त्प्रीणाति त॒स्मादाह यमाय त्वेति ॥ ४ ॥

मखाय त्वेति । ( त्ये ) एष वै मखो य॒ऽएष त॒पत्येष॒ऽउ प्रव॒र्ग्य॑स्त॒दे॒तमे॒वै॒-त॒त्प्रीणाति त॒स्मादाह मखाय त्वेति ॥ ५ ॥

---

स प्रोक्षति । " यमाय त्वा "-( वा. सं. ३७ । ११ ) इति । एष वै यमः । य एष तपति । एष हीदं सर्वं यमयति । एतेनेदं सर्वं यतम् । एष उ प्रवर्ग्यः । तदेतमेवैतत्प्रीणाति । तस्मादाह- " यमाय त्वा "-इति ॥ ४ ॥

" मखाय त्वा " इति । एष वै मखः । य एष तपति । एष उ प्रवर्ग्यः । तदेतमेवैतत्प्रीणाति । तस्मादाह-" मखाय त्वा "-इति ॥ ५ ॥

---

इत्येतेन ' प्रीणाति ' तर्पयति । यस्मादित्थं समवेतार्थप्रकाशिका एषा । तस्मात् " ब्रह्म जज्ञानं प्रथमं पुरस्तात् " इत्येतामृचमाह-अनया प्रवर्ग्यमभिष्टोतुं प्रवर्तते इत्यर्थः । अथ आसादितानां पात्राणां प्रोक्षणं विधत्ते-अथ प्रोक्षत्यसावेव बंधुरिति । एवं ब्रह्मणे विज्ञाप्य ' अथ ' तस्यानुज्ञानंतरं प्रागासादितानि उपयमनीमहावीरादीनि घर्मपात्राणि ' प्रोक्षति ' प्रोक्षणेन संस्कुर्यात् । ' असावेव ' खलु प्रोक्षणसंस्कारः बंधुर्बंधकः प्रोक्षितानां यागार्हत्वसंपादनेन छिन्नस्य यज्ञशिरसः संधानहेतुः इत्यर्थः ॥ २ ॥ ३ ॥

अथ एतत् प्रोक्षणं अनूद्य मंत्रं विधत्ते-स प्रोक्षति यमाय त्वेतीति । अयमर्थः । " यमाय त्वा १ मखाय त्वा २ सूर्यस्य त्वा तपसे ३ " इति वाक्यत्रयात्मकेन मन्त्रेण ' सः ' अध्वर्युः प्रत्येकं महावीरान् ' प्रोक्षति ' यद्वा त्रिभिर्वाक्यैः त्रीन् महावीरान् यथासंख्यं ' प्रोक्षति ' । तथा च सूत्रितं कात्यायनेन " ब्रह्मणाऽनुज्ञातो यमाय त्वेति महावीरं प्रोक्षति । प्रतिमंत्रं वा वाक्यभेदात् " ( का. श्रौ. सू. २६ । ३९ । ४० ) इति । तत्र प्रथममन्त्रस्य प्रवर्ग्येण संगतिं दर्शयति-एष वै० प्रीणातीति । ' य एषः ' सूर्यः ' तपति ' । ' एष ' खलु ' यमः ' । कुतः अस्य यमशब्दाभिधेयता ? इति चेत् । ' हि ' यस्मात् ' इदं सर्वं ' भूतजातं ' एषः ' ' यमयति ' स्वव्यापारेषु नियमयति । यस्माच्च ' एतेन ' सूर्येण ' इदं सर्वं ' जगत् ' यतं ' सृष्ट्वा आदावपि परस्परसांकर्याभावेन व्यवस्थितं इदं कृतम् । तस्मात् असौ मन्त्रे यमशब्देन उच्यते । 'एष उ' एष एव ' प्रवर्ग्यः ' । गतमन्यत् । यस्मादेव असौ मन्त्रः समवेतार्थः । तत् अनेन मन्त्रेण प्रोक्षेत् इति निगमयति-तस्मादाह यमाय त्वेतीति ॥ ४ ॥

अथ द्वितीयमहावीरस्य प्रोक्षणमन्त्रमनूद्य व्याचष्टे-मखाय त्वेति० मखाय त्वेतीति । 'एष वै' एष खलु सूर्यः ' मखः ' मखशब्दाभिधेयस्य यज्ञात्मकस्य शिरस एव सूर्यत्वात् । अन्यद्गतम् ॥ ५ ॥

---

१-अत्र कर्कः ब्रह्मानुज्ञातग्रहणं प्राक् अनुज्ञायाः सर्वप्रैषोच्चारणप्रज्ञप्त्यर्थमिति ।

२-अत्र कर्कः प्रतिमंत्रमेवं वा प्रोक्षणम् । कुत एतत् । वाक्यभेदात, भिन्नानि हि वाक्यानि । यमाय त्वा १ मखाय त्वा २ सूर्यस्य त्वा तपसे ३ इति । न च समुच्चयो न्याय्यः । न च विकल्पः दृष्टार्थत्वात् । तस्मात् प्रतिवाक्यमेव प्रोक्षणम् । इति । ततश्च वा अवधारणे इति राद्धान्तः ॥

सूर्य्यस्य त्वा तपसऽइति । ( त्ये ) एष वै सूर्य्यो यऽएष तपत्येषऽउ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह सूर्य्यस्य त्वा तपसऽइति ॥ ६ ॥

पूर्व्वया द्वारा स्थूणान्निर्हृत्य । दक्षिणतो निमिन्वन्ति यथैनाᳬं होताऽभिष्टुवन्परापश्येद्यज्ञो वै होता सऽएवास्यामेतद्यज्ञम्प्रतिदधाति तथैषा घर्मम्पिन्वते ॥ ७ ॥ अर्द्धः प्रपाठकः ॥ कण्डिकाः ॥ ६६ ॥

( तेऽग्रे ) अग्रेणाहवनीयम् । ( वᳬं ) सम्म्राडासन्दीम्पर्य्याहृत्य दक्षिणतः प्राचीमासादयत्युत्तराᳬं राजासन्द्यै ॥ ८ ॥

---

" सूर्यस्य त्वा तपसे "–( वा. सं. ३७।११ ) इति । एष वै सूर्यः । य एष तपति । एष उ प्रवर्ग्यः । तदेतमेवैतत्प्रीणाति । तस्मादाह–सूर्यस्य त्वा तपसे इति ॥ ६ ॥

पूर्वया द्वारा स्थूणां निर्हृत्य दक्षिणतो निमिन्वंति । यथैनां होताऽभिष्टुवन्परापश्येत् । यज्ञो वै होता । स एवास्यामेतद्यज्ञं प्रतिदधाति । तथैषा घर्मं पिन्वते ॥ ७ ॥

अग्रेणाहवनीयम् । सम्म्राडासंदीं पर्याहृत्य दक्षिणतः प्राचीमासादयति । उत्तरां राजासंद्यै ॥ ८ ॥

---

अथ तृतीयमहावीरप्रोक्षणमन्त्रमनूद्य व्याचष्टे–सूर्यस्य त्वा०तपस इतीति । सिद्धप्रायमेतत्[1] ॥ ६ ॥

अथ घर्मदुहो धेनोर्बंधनाय स्थूणा[2]निखननं विधत्ते–पूर्व्वया द्वारा०परापश्येदिति । प्राग्वंशस्य पूर्वद्वारेण 'स्थूणां' घर्मदुहो गोः बंधनार्थं स्तंभं 'निर्हृत्य' निर्गमय्य 'दक्षिणतः' प्राचीनवंशस्य दक्षिणदिग्भागे 'निमिन्वंति' अवटं खात्वा तस्मिन्निक्षिपंति । 'एनां' स्थूणां 'अभिष्टुवन्' अभिष्टवं पठन् 'होता' 'यथा' येन प्रकारेण 'परापश्येत्' समीक्षेत । तथा स्थूणा निखातव्येत्यर्थः । अथ एतत् होतुः दर्शनमुपपादयति–यज्ञो वै होता०घर्मं पिन्वत इति । वषट्कर्तृत्वेन यागे अंतरंगत्वात् 'होता यज्ञो वै' यज्ञ एव । 'सः' तथाविधः निखातां स्थूणां पश्यन्नेव 'अस्यां' स्थूणायां 'एतत्' एतेन ईक्षणेन 'यज्ञं प्रतिदधाति' संदधाति । तया सति 'एषा' वर्मदुघा धेनुः 'घर्मं पिन्वते' घर्मं हवीरूपं पयः सिंचति स्रवति । "पिवि सेचने"–( धा. पा. भ्वा. आ. ५८९ ) इति धातुः ॥ ७ ॥

अथ आसादितायाः संम्राड[3]संद्याः देशविशेषे स्थापनं विधत्ते–अग्रेणाहवनीयं०राजासंद्यै इति । सम्म्राट् प्रवर्ग्यः महावीरः इति पर्यायाः । तस्यासंदी आसनभूता मंचिका 'संम्राडासंदी' तां 'आहवनीयमग्रेण' आहवनीयस्य अदूरेण प्राग्भागेन 'पर्याहृत्य' परित आनीय आहवनीयस्य 'दक्षिणतः' 'प्राचीं'

---

१–परिघर्म्यं च तूष्णीम् । का. श्रौ. सू २६ । ४१ । घर्मसंबंधि यत् आसादितं पात्रजातं तच्च तूष्णीं प्रोक्षतीत्यर्थः ।

२–पूर्वया द्वारा स्थूणामयूखं निर्हृत्य दक्षिणतो निखनाति होतुः संदर्शने । का. श्रौ. सू. २६ । ४२ ।

३–पूर्व्वेणाहवनीयꣳ सम्म्राडासंदीं पर्याहृत्य दक्षिणतः प्राचीमासादयति राजासंद्या उत्तरतः । का. श्रौ. सू. २६ । ४४ ।

(न्या॒ऽऔ) औदु॑म्बरी भवति । (त्यू) ऊर्ग्वै र॑सऽउदु॒म्बर॒ऽऊर्ज्जै॒वैन॑मे॒तद्र॒सेन॒ सम॑र्द्धयति कृ॒त्स्नङ्क॑रोति ॥ ९ ॥

(त्यपॅ) अ॑षॅसदघ्ना भवति । (त्यु) अ॒षॅसयो॒र्व्वाऽइ॒दॅ शिरः॒ प्रति॑ष्ठितं॒ तद॑षॅसयो॒रे॒वैतच्छिरः॒ प्रति॑ष्ठापयति ॥ १० ॥

बाल्वजीभी रज्जुभिर्व्युता भवति । य॒ज्ञस्य॒ शीर्षच्छि॒न्नस्य॒ र॒सो व्य॑क्षर॒त्त॒ऽए॒ताऽओ॒षध॑यो जज्ञिरे॒ तेनै॒वैन॑मे॒तद्र॒सेन॒ सम॑र्द्धयति कृ॒त्स्नुङ्क॑रोति ॥ ११ ॥

---

औदुंबरी भवति । ऊर्ग्वै रस उदुंबरः । ऊर्जैवैनमेतद्रसेन समर्द्धयति । कृत्स्नं करोति ॥ ९ ॥

अंसदघ्ना भवति । अंसयोर्वा इदं शिरः प्रतिष्ठितम् । तदंसयोरेवैतच्छिरः प्रतिष्ठापयति ॥ १० ॥

बाल्वजीभी रज्जुभिर्व्युता भवति । यज्ञस्य शीर्षच्छिन्नस्य रसो व्यक्षरत् । तत एता ओषधयो जज्ञिरे । तेनैवैनमेतद्रसेन समर्द्धयति । कृत्स्नं करोति ॥ ११ ॥

---

प्रागायताम् । राजासंद्याः क्रीतः सोमो यस्यामासंद्यां आस्ते सा राजासंदी । तस्याः सकाशात् 'उत्तरां' उन्नततरां वर्षीयसीम् । यद्वा उत्तरभागावस्थितां 'आसादयति' स्थापयति ॥ ८ ॥

अथ एतस्याः वृक्षविशेषं विधाय स्तौति—**औदुंबरी भवति०कृत्स्नं करोति** इति । सा च संम्राडासंदी 'औदुंबरी' उदुंबरविकारा उदुंबरवृक्षजैः फलकैः निर्मिता 'भवति' । उदुंबरवृक्षस्य ऊर्ग्रसरूपत्वं अस्याः औदुंबरत्वविधायके वाक्ये (श.प.१४।.१।२।४) पूर्वमेव दर्शितम् । अतः तद्वदेव सर्वं व्याख्येयम् ॥९॥

अथ एतस्याः संम्राडासंद्याः उच्छ्रायपरिमाणं आह—**अंसदघ्ना भवतीति** । सा संम्राडासंदी 'अंसदघ्ना' ऊर्ध्वपरिमाणेन अंसमात्री 'भवति' । अथ एतत् अंसदघ्नत्वं स्तौति—**अंसयोर्वा० प्रतिष्ठापयतीति** । 'इदं' अस्मदादीनां 'शिरः' 'अंसयोर्वै' अंसयोरुपरि खलु 'प्रतिष्ठितं' संबद्धम् । तत्तस्मात् 'एतत्' एतेन राजासंद्याः अंसदघ्नत्वकरणेन यज्ञस्य अंसयोरेव एतत् महावीरशिरः प्रतिष्ठापयति ॥ १० ॥

अथ एतस्या आर्वेयनं विदधाति—**बाल्वजीभिः० भवतीति** । बल्वजाः तृणविशेषाः । तन्निर्मिताभिः

---

१—पूर्वेणाहवनीयम् का. श्रौ. सू. २६।२।२९ । इति सूत्रे सूत्रकारेण "उत्तराः राजासंद्यै" इतीमां श्रुतिमनुसृत्य उत्तरत इति दिङ्निर्देशात् उत्तरभागावस्थितां आसादयतीति राद्धांतिकं भाष्यं प्रागुपन्यस्तं "तस्याः सकाशात् 'उन्नताम्' उन्नततरां वर्षीयसीं" इति तु अनैकांतिकं बोध्यम् "अथ यदुत्तरत आसादयति यज्ञो वै सोमः शिरः प्रवर्ग्यः उत्तरं वै शिरः तस्मादुत्तरत आसादयति अथो राजा वै सोमः संम्राट् प्रवर्ग्यः उत्तरं वै राज्यात्सांम्राज्यं तस्मादुत्तरत आसादयति उत्तरो वै प्रजापतिः तस्मादुत्तरत आसादयति" इति अस्मिन् ब्राह्मणे द्वादश्यां कंडिकायां वाक्यशेषात् ।

२—परिघर्म्यमौदुंबरम् । का. श्रौ. सू. २६ । ४१ ।

३—"बाल्वजं विवानमासंद्यौदुंबर्याः स्कंधमात्र्याः" इति । का. श्रौ. सू. २६ । ३५ ।

४—"बाल्वजं विवानम्" इत्युक्तं सूत्रम् । अस्मिन्नेव सूत्रे कर्कः "परिघर्म्यमौदुंबरम्" का. श्रौ. सू. २६ । ३३ । इत्युक्तेऽपि पुनरुच्यते । अरत्निमात्राङ्गोपलक्षणार्थम् । तथा शाखांतरात् दृष्टा हि औदुंबरी ज्योतिष्टोमे अरत्निमात्रांगी (आप. श्रौ. सू. १० । २९ । ७) इति । तथा सूत्रकारोऽपि ज्योतिष्टोमे सूत्रयामास—"औदुंबरीमासंदीं नाभिदघ्नामरत्निमात्रांगीमूतामाहरंति चत्वारः" । का. श्रौ. सू. ७।९।२४। अन्यत्परिघर्म्यं तु "मौंजं त्रिवृद्रज्जव्यम् । का. श्रौ. सू. २६ । ३४ । इत्याह कात्यायनः ।

( त्यु ) अथ यदुत्तरतऽआसादयति । यज्ञो वै सोमः शिरः प्रवर्ग्यऽ उत्तरम्वै शिरस्तस्मादुत्तरतऽआसादयत्यथो राजा वै सोमः सम्राट् प्रवर्ग्यऽ उत्तरम्वै राज्यात्साम्राज्यन्तस्मादुत्तरतऽआसादयत्युत्तरो वै प्रजापति-स्तस्मादुत्तरतऽआसादयति ॥ १२ ॥

स यत्रैताᳪं होताऽन्वाह । ( हा ) अञ्जन्ति यम्प्रथयन्तो न विप्राऽइति

---

अथ यदुत्तरत आसादयति । यज्ञो वै सोमः । शिरः प्रवर्ग्यः । उत्तरं वै शिरः । तस्मादुत्तरत आसादयति । अथो राजा वै सोमः । संम्राट् प्रवर्ग्यः । उत्तरं वै राज्यात्सांम्राज्यम् । तस्मादुत्तरत आसादयति । उत्तरो वै प्रजापतिः । तस्मादुत्तरत आसादयति ॥ १२ ॥

स यत्रैतां होताऽन्वाह । " अंजंति यं प्रथयंतो न विप्राः "–इति । तदेतं प्रचरणीयं महा-

---

रज्जुभिः पाशैः ' व्युता ' अनेन संतता संस्यूता भवति । अथ एतत् स्तौति–**यज्ञस्य० करोतीति** । छिन्नात् यज्ञशिरसः यः ' रसः ' क्षरणेन भूमिं प्राप्नोत् । ' ततः ' सकाशात् बल्वजाख्याः ' ओषधयः ' ' जज्ञिरे ' जाता बभूवुः । सिद्धमन्यत् ॥ ११ ॥

" उत्तरां राजासंद्यै " इति ( श. प. १४ । १ । ३ । ९ ) यत्पूर्वमुक्तं संम्राडासन्द्याः । तत् अनूद्य स्तौति–**अथ यदुत्तरत आसादयतीति** । ' अथ ' अपि च ' उत्तरतः ' सोमस्य उपरिभागे उत्तरस्यां दिशि वा ' आसादयति ' महावीरायैव आसनार्थां आसंदीं स्थापयति इति यत् तत्किमर्थं ? इति चेत्; उच्यते–योऽयं राजासंद्यां निविष्टः सोमः । असौ ' यज्ञो वै ' यज्ञः खलु, तत्साधनत्वात् । प्रवर्ग्यश्च तस्य यज्ञस्य ' शिरः ' । यस्माच्छिरः इतरस्मादवयवजातात् 'उत्तरं वै' उपरिभागे स्थितम् । यस्मादेवं ' तस्मादुत्तरत आसा-दयति ' । अथ प्रकारांतरेण उत्तरतः आसादनं स्तौति–**अथो राजा वै० आसादयतीति** । 'अथो' अपि च ' राजा वै ' राजा खलु ' सोमः ' राजासंद्यां अवस्थितः । " सोमोऽस्माकं ब्राह्मणानां राजा "–( श. प. ९ । ३ । ३ । १२ ) इति श्रुतेः । ' प्रवर्ग्यः संम्राट् ' " तं पाणिभिः संममृज्जुस्तस्मात्संम्राट् "–( श. प. १४ । १ । १ । ११ । ) इति प्राक् निर्वचनस्य दर्शितत्वात् । किं तत इत्याह--**उत्तरं वा** इति । लोके हि राजशब्देन प्रणताशेषसामंतः सार्वभौमो नृप उच्यते । संम्राट्शब्देन तु उक्तलक्षणः सन् यो राजसूयेन ईजे सः अभिधेयः । अतः ' राज्यात् ' राजत्वात् ' सांम्राज्यं ' संम्राट्त्वं ' उत्तरं वै ' उत्तरं उपर्यवस्थितं श्रेष्ठं खलु । तस्मात्संम्राजः प्रवर्ग्यस्य तां आसनभूतां आसंदीं ' आसादयति ' । यद्वा[2] राजा सोमः तदंगत्वात् प्रवर्ग्यः प्रजास्थानीयः, प्रजा च पितृस्थानीयात् राज्ञः उत्तरतः । पितृस्थानीयो राजा तु ' उत्तरो वै ' उपरिभावी खलु । गतमन्यत् ॥ १२ ॥

अथ प्रचरणीयस्य महावीरस्य घृतेन समंजनं विधत्ते[3]–**स यत्रैतां०मध्वा नक्त्विति** । " अञ्जंति " इत्येतां

---

१–एतदन्तैवेयं कण्डिका क्वचित्पुस्तके ।

२–इतः प्राक्तनौ वाक्यशेषौ " श्रेष्ठं खलु " इति भाष्यकृदुक्त्यैव श्रेष्ठताप्रतिपादकावर्थवादौ बोध्यौ । यद्वा इति तृतीयवाक्य-शेषस्तु " राजासंद्या उत्तरतः " इति उत्तरदिग्विष्यर्थः, इत्यवगंतव्यमिति ॥

३–" अन्यो वा परिघर्म्ययोजनमध्वर्योः कालसंपत्तेः " । का. श्रौ. सू. २६ । ४५ । इति । परिघर्म्ययोजनं स्थूणामयूखनि-र्हरणादि अन्यः प्रतिप्रस्थाता करोति नाध्वर्युः । स यत्रैता ᳪं होताऽन्वाहेति कालसंपत्तिवचनात् । परिघर्म्ययोजने अध्वर्योः कर्तृत्वे तु स यत्रैतां होताऽन्वाहेति कालस्यासंभव इति सूत्रार्थः ।

तुदेतुम्प्रचरण्रीयम्महावीरमाज्येन सुमनक्ति देवुस्त्वा सविता मुध्वाऽनक्त्वुति सविता वै देवानाम्प्रसविता सुर्वम्वाऽइदम्मधु यदिदं किञ्च तुदेनमनेन सुर्व्वेण सुमनक्ति तुदस्मै सविता प्रसविता प्रसौति तुस्मादाह देवुस्त्वा सविता मुध्वाऽनक्त्वति ॥ १३ ॥

( त्यु ) अथोत्तरतः सिकताऽउपकीर्ण्णा भवन्ति । तुद्रजतᳯ हिरण्यमधुस्तादुपास्यति पृथिव्युाः सᳯस्पृशस्पाहीत्येतद्वै देवुाऽअबिभयुर्य्यद्वै नऽइमुमधस्ताद्रक्षाᳯसि नाष्ट्रा नु हन्युरित्यग्नेर्व्वाऽएतद्रेतो यद्धिरण्यन्नाष्ट्राणाᳯ रुक्षसामुपहत्याऽअुथो पृथिव्यु ह वाऽएतुस्माद्बिभयाञ्चकार यद्वैमाऽयुन्तप्तः शुशुचानो नु हिᳯस्यादिति तुद्वेवास्याऽएतुदन्तुर्द्दधाति रजतुं भवति रजुतेव हीयुम्पृथिवी ॥ १४ ॥

---

वीरमाज्येन समनक्ति—" देवस्त्वा सविता मध्वाऽनक्तु "–( वा. सं. ३७ । ११ ) इति । सविता वै देवानां प्रसविता । सर्वं वा इदं मधु । यदिदं किंच । तदेनमनेन सर्वेण समनक्ति । तदस्मै सविता प्रसविता प्रसौति । तस्मादाह–"देवस्त्वा सविता मध्वाऽनक्तु" इति ॥ १३ ॥

अथोत्तरतः सिकता उपकीर्णा भवंति । तद्रजतं हिरण्यमधस्तादुपास्यति–" पृथिव्याः संस्पृशस्पाहि "–( वा. सं. ३७।११ ) इति । एतद्वै देवा अबिभयुः । यद्वै न इममधस्ताद्रक्षांसि नाष्ट्रा न हन्युरिति । अग्नेर्वा एतद्रेतः–यद्धिरण्यम् । नाष्ट्राणां रक्षसामपहत्यै । अथो पृथिव्यु ह वा एतस्माद्बिभयाञ्चकार । यद्वै माऽयं तप्तः शुशुचानो न हिंस्यादिति । तदेवास्या एतदंतर्दधाति । रजतं भवति । रजतेव हीयं पृथिवी ॥ १४ ॥

---

ऋचं ' सः ' अभिष्टुद्धोता ' यत्र ' यस्मिन् काले ' आह ' ब्रूयात् । तत्र तस्मिन् काले ' एनं ' प्रथमं कृतं प्रचरणीयं ' प्रचरणसाधनं ' महावीरं आज्येन ' स्रुवपूरितेन ' समनक्ति ' सम्यक् अक्तं करोति । " देवस्त्वा सविता " इति मन्त्रेण । अथ अस्मिन्मन्त्रे मधुसवितृशब्दयोः तात्पर्यगम्यमर्थं दर्शयन् अनेनैव मन्त्रेण समंजनं कार्यमिति निगमयति–सविता वा इति । मन्त्रे समंजनकर्तृत्वेन यः ' सविता ' उपात्तः । स खलु ' देवानां ' मध्ये ' प्रसविता ' यजमानानां कर्मसु प्रेरयिता । तथा ' यदिदं किंच ' यत् किमपि लोके दृश्यमानं मधु अस्ति । ' इदं ' मन्त्रे समंजनकरत्वेन उच्यमानमाज्यलक्षणं 'मधु' 'सर्वं तत्' लोके विद्यमानं सर्वं मध्वात्मकम् । तत्तस्मात् "देवस्त्वा सविता मध्वाऽनक्तु " इति ' अनेन ' मन्त्रवर्णेन ' एनं ' महावीरं ' सर्वेण ' निरवशेषेण अनेन कृत्स्नजगद्वर्तिना मधुना ' समनक्ति ' समक्तवान् भवति । यस्मिन्मन्त्रे सविता प्रतिपाद्यते । तत्तस्मात् ' अस्मै ' महावीराय सः ' सविता ' ' प्रसविता ' प्रेरकः सन् ' प्रसौति ' अनुष्ठाने प्रेरयति । ' तस्मात् ' इत्यादि निगमनम् ॥ १३ ॥

अथ प्रवृंजनार्थे खरे रजतशतमानरुक्मस्य प्रक्षेपं विधत्ते–अथोत्तरतः०संस्पृशस्पाहीतीति । ' अथ ' समंजनानंतरं गार्हपत्यस्योत्तरतः उत्तरस्यां दिशि ' सिकताः उपकीर्णाः ' उपक्षिप्ताः ' भवंति ' । सिकताभिः

स यत्रैताᳪं होताऽन्वाह । सᳫँसीदस्व महाँ३ असीति तदुभयतऽआदीप्ता मौञ्जाः प्रलवा भवन्ति तानुपास्य तेषु प्रवृणक्ति यज्ञस्य शीर्षच्छिन्नस्य रसो व्यक्षरत्तत ऽएता ऽओषधयो जज्ञिरे तेनैवैनमेतद्रसेन समर्द्धयति कृत्स्नं करोति ॥ १९ ॥

---

स यत्रैतां होताऽन्वाह—"संसीदस्व महाँ ३ असि"—( वा. सं. ३८ । १७ ) इति । तदुभयत आदीप्ता मौंजाः प्रलवा भवन्ति । तानुपास्य तेषु प्रवृणक्ति । यज्ञस्य शीर्षच्छिन्नस्य रसो व्यक्षरत् । तत एता ओषधयो जज्ञिरे । तेनैवैनमेतद्रसेन समर्द्धयति । कृत्स्नं करोति ॥ १९ ॥

---

चतुरस्रं खरं कुर्यात् इत्यर्थः । तत्तत्र सिकतोपकीर्णे देशे 'रजतं हिरण्यं' हिरण्यशब्दस्य रूप्यसुवर्णयोः साधारणत्वात् तद्व्यावृत्त्यर्थं रजतमिति विशेषणम् । 'रजतं हिरण्यं' रजतशतमाननिर्मितं रुक्मं स्थाप्यमानस्य महावीरस्य 'अधस्तात्' अधोभागे 'उपास्यति' उपक्षिपति । "पृथिव्याः" इति मन्त्रेण । तथा च कात्यायनः "अञ्जन्तीत्युच्यमाने देवस्त्वेत्यनक्ति महावीरमाज्यᳪं संस्कृत्य रजतशतमानं खरऽउपगूहति पृथिव्याः सᳪं स्पृशः इति" ( का.श्रौ.सू.२६।४६।४७ ) । अथ एतस्य अधस्तात् हिरण्योपासनस्य प्रयोजनमाह—**एतद्वै०मपहत्या** इति । 'एतद्वै' एतस्मिन्काले खलु 'देवाः' पुरा 'अबिभयुः' भीतवंतः । किं कारणमिति तदुच्यते—'यद्वै' यदि खलु 'नः' अस्माकं 'इमं' महावीरं अधस्तादधोभागे 'रक्षांसि' यज्ञनिहंतॄणि 'नाष्ट्राः' नाशकारिण्यः तत्सेनाः 'न हन्युः' हननं माऽकार्षुः तर्हि यज्ञः संपूर्यते । ते च राक्षसादयः अवश्यम् इमं हनिष्यंति इत्यनेन कारणेन भीतवंत इत्यर्थः। भीताश्च ते रजतशतमानं तद्रक्षणाय महावीरस्य अधस्तात् निहितवंत इत्यर्थः। तदेतत् उपपादयति—**अग्नेरिति** । 'हिरण्यमिति' यदग्नेः खलु 'एतत् रेतो' वीर्यम् । "आपो वरुणस्य पत्न्य आसन् ता अग्निरभ्यध्यायत्ताः समभवत् तस्य रेतः परापतत्तद्धिरण्यमभवत्" इति श्रुतेः । तस्मात् रजतलक्षणं हिरण्यं अग्नेर्वीर्यत्वात् 'नाष्ट्राणां रक्षसां' अपहननाय विनाशाय समर्थम् । तस्मादधस्तात् तस्योपासनं कार्यमित्यर्थः । प्रयोजनांतरमाह—**अथो पृथिव्यु ह वा०न्तर्दधातीति** । 'अथो' अपि च एतस्मात्तप्तात्प्रवर्ग्यात् 'पृथिवी' खलु 'बिभयांचकार' भीता बभूव । 'यद्वै' यदि खलु 'मा' मां 'अयं' प्रवर्ग्यः 'तप्तः' संतप्तः 'शुशुचानः' दीप्यमानः 'न हिंस्यात्' । तदा मया धारयितुं सह्यते । अयं तु सर्वथा मां हिंस्यात् इति भीता बभूवेत्यर्थः। तत्तस्मादेव कारणात् 'अस्याः' पृथिव्याः हिंसाऽभावार्थं एतद्धिरण्यं 'अंतर्दधाति' अंतर्हितं करोति । अत एव मन्त्रे "पृथिव्याः संस्पृशस्पाहि" इति पृथिवीसंस्पर्शाभावाय रक्षणं प्रार्थ्यते । तदेतत् तैत्तिरीयके स्पष्टमाम्नातम्—"पृथिवीं तपसस्त्रायस्वेति हिरण्यमुपास्यति अस्या अनतिदाहाय" । अथास्य रजतत्वमनूद्य स्तौति—**रजतं भवति०पृथिवीति** । तच्च हिरण्यं 'रजतं' रजतात्मकं 'भवति' ( तै. आ. ५।४।५ ) इति । 'इयं पृथिवी' 'रजतेव हि' रजतवच्छुक्लभास्वरा हि । तस्मात्तदंतर्द्धाने रजतमेव योग्यमित्यर्थः ॥ १४॥

यदुक्तं सूत्रकारेण—"सᳪंसीदस्वेत्युच्यमाने मुंजप्रलवान्द्विगुणानादीप्य प्रतिदिशं खरे करोति" ( का. श्रौ. सू. २६ । ५० ) इति । तद्विधत्ते—**स यत्रैतां० प्रवृणक्तीति** । 'यत्र' यस्मिन् काले 'होता' "सᳪं

---

१—गार्हपत्याहवनीया उत्तरेण खरौ निवपति दक्षिणतोऽसुमित्युच्छिष्टखरम् । का. श्रौ. सू. २६ । ४३ ।

( त्यु ) अथ यदुभयतऽआदीप्ता भवन्ति । सर्व्वाभ्यऽएवैतद्दिग्भ्यो रक्षाᳬंसि नाष्ट्राऽअपहन्ति तस्मिन्प्रवृज्यमाने पत्नी शिरः प्रोर्णुते तप्तो वाऽएष शुशुचानो भवति नेन्मेऽयन्तप्तः शुशुचानश्चक्षुः प्रमुष्णादिति ॥ १६ ॥

स प्प्रवृणक्ति । ( कत्य ) अर्च्चिरसि शोचिरसि तपोऽसीत्येष वै घर्म्मो यऽएष तपति सर्व्वम्वाऽएतदेष तदेतमेवैतत्प्रीणाति तस्मादाहार्च्चिरसि शोचिरसि तपोऽसीति ॥ १७ ॥

---

अथ यदुभयत आदीप्ता भवन्ति। सर्वाभ्य एवैतद्दिग्भ्यो रक्षांसि नाष्ट्रा अपहंति । तस्मिन्प्रवृज्यमाने पत्नी शिरः प्रोर्णुते। तप्तो वा एष शुशुचानो भवति। नेन्मेऽयं तप्तः शुशुचानश्चक्षुः प्रमुष्णादिति ॥ १६ ॥

स प्रवृणक्ति–" अर्चिरसि शोचिरसि तपोऽसि "–( वा. सं. ३७ । ११ ) इति । एष वै

---

सीदस्व " इत्येतामृचं अनुब्रूयात् । तत्तदा ' उभयतः ' आद्यंतयोः ' आदीप्ताः ' प्रज्वलिताः ' मौंजाः ' मुञ्जविकाराः ' प्रलवाः ' प्रकर्षेण लूनाः तृणविशेषाः ' भवन्ति ' । ' तान् ' खरे ' उपास्य ' प्रक्षिप्य ' तेषु ' महावीरमासाद्य ' प्रवृणक्ति ' प्रवृंजनं करोति । मुञ्जतृणानां मुष्टिद्वयमानीय अग्रमूलयोः आदीप्य चतुर्दिक्षु यथा ज्वाला भवति तथा व्यत्यस्य खरस्थे रजतशतमाने विधाय तत्र महावीरं स्थापयेदित्यर्थः । अथ एतदादीपने मुञ्जप्रलवानाम् उपादानं समर्थयते–**यज्ञस्य शीर्ष॰ करोतीति** । ' एताः ' मुञ्जाख्याः ' ओषधयः ' । सिद्धमन्यत् ॥ १५ ॥

अथ उभयत आदीपनं स्तौति–**अथ यदुभयत॰ अपहन्तीति** । ' अथ ' अपि च ' यत् ' यस्मात् एते मुञ्जप्रलवाः ' उभयत आदीप्ताः ' अग्रमूलयोः अग्निसंबद्धाः ' भवन्ति ' । तत्तेन ' सर्वाभ्यः ' प्राच्यादिभ्यः ' दिग्भ्यः ' सकाशादेव ' रक्षांसि ' नाष्ट्राश्च ' अपहन्ति ' चतुर्दिगवस्थितया ज्वालया विनाशयति । आदीपनप्रभृतिप्रवृंजनसमये पत्नीमुखस्य वेष्टनं विधत्ते–**तस्मिन्प्रवृ॰ प्रोर्णुते** इति । ' तस्मिन् ' महावीरे संतप्ते ' प्रवृज्यमाने ' पयआसेचनेन विक्रियमाणे ' पत्नी ' स्वकीयं ' शिरः ' मुखं ' प्रोर्णुते ' वस्त्रादिना आच्छादयेत् । " ऊर्णुञ् आच्छादने " ( धा. पा. अ. उ. २९ ) इति धातुः । किमर्थमेतत् ? इत्यत आह–**तप्तो वा॰ प्रमुष्णादितीति** । ' एषः ' महावीरः ' तप्तो वै ' तप्तः खलु ' शुशुचानः ' अत्यर्थं दीप्यमानः ' भवति ' । ' अयं तप्तः शुशुचानः ' ' मे ' मदीयं ' चक्षुः ' ' नेत् प्रमुष्णात् ' नैव प्रमृज्यात् । इत्यनेनाभिप्रायेण स्वकीयमुखं वेष्टयेदित्यर्थः ॥ १६ ॥

अथ मुञ्जप्रलवेषु विहितं प्रवृंजनार्थं महावीरासादनं अनूद्य तत्र मंत्रं विधत्ते–**स प्रवृणक्ति॰ तपोऽसीतीति** ।

---

१–पत्न्यदर्शनम् । अननूक्तिभिश्च । का. श्रौ. सू. २६ । ३० । ३१ । न अनूक्तिरनुवचनं वेदाध्ययनं येषां तैरननूक्तिभिः अवैदिकैरपीत्यर्थः । पत्नी शिरः प्रोर्णुते । का. श्रौ. सू. २६ । ४९ ।

२–तेषु महावीरमाज्यवन्तमर्चिरसीति । का. श्रौ. सू. २६ । ५१ ।

( त्यु ) अथास्यामाशिषऽआशास्ते । ( स्तऽइ ) इयम्वै यज्ञोऽस्यामेवै-तदाशिषऽआशास्ते ताऽअस्माऽइयᳪ सर्वाः समर्द्धयति ॥ १८ ॥

( त्यु ) अनाधृष्टा पुरस्तादिति । ( त्यु ) अनाधृष्टा ह्येषा पुरस्ताद्रक्षो-भिर्नाष्ट्राभिरग्नेराधिपत्यऽइत्यग्निमेवास्याऽअधिपतिङ्करोति नाष्ट्राणाᳪ रक्षसामपहत्याऽआयुर्म्मे दाऽइत्यायुरेवात्मन्धत्ते तथो ह सर्व्वमा-युरेति ॥ १९ ॥

---

घर्मः। य एष तपति। सर्वं वा एतदेषः। तदेतमेवैतत्प्रीणाति। तस्मादाह—"अर्चिरसि शोचिरसि तपोऽसि ॥ १७ ॥

अथास्यामाशिष आशास्ते । इयं वै यज्ञः । अस्यामेवैतदाशिष आशास्ते । ता अस्मा इयं सर्वाः समर्द्धयति " इति ॥ १८ ॥

" अनाधृष्टा पुरस्तात् "–इति । अनाधृष्टा ह्येषा पुरस्ताद्रक्षोभिर्नाष्ट्राभिः । " अग्ने-राधिपत्ये "–इति । अग्निमेवास्या अधिपतिं करोति–नाष्ट्राणां रक्षसामपहत्यै । " आयुर्मे दाः "– इति । आयुरेवात्मन्धत्ते । तथो ह सर्वमायुरेति ॥ १९ ॥

---

' सः ' अध्वर्युः ' प्रवृणक्ति ' प्रवृंजनाय महावीरं आज्यपूर्णम् उभयत आदीप्तेषु मुञ्जप्रलवेषु खरे निहितेषु " अर्चिरसि शोचिरसि तपोऽसि " इति मन्त्रेण स्थापयति । अथ तत्प्रशंसति–एष वै घर्मो० तपोऽसीतीति । ' य एषः ' दिवि ' तपति ' सूर्यः । ' एषः ' खलु ' घर्मः ' प्रवर्ग्यः । ' एषः ' च सूर्यः ' सर्वमेतद्धि ' दृश्यमानसर्वजगदात्मकः । तस्मात् घर्मरूपिणं जगदात्मकं ' एतं ' सूर्यमेव एतदेतेन अर्चिरसीत्यादिनानारूपत्व-प्रतिपादनेन ' प्रीणाति ' तर्पयति । ' तस्मात् ' इत्यादि निगमनम् ॥ १७ ॥

" अनाधृष्टा पुरस्तात् " इत्यादीनि पृथिवीदेवत्यानि यजमानवाचनार्थानि आशिषः प्रतिपादकानि यजूंषि तानि व्याख्यातुकामः पृथिविसंबंधि यदाशीःप्रतिपादनं तत्सर्वं यज्ञस्यैव इत्याह–अथास्यामाशिष० समर्द्ध-यतीति । ' अथ ' शब्द आनंतर्यार्थः । अर्चिरसीति महावीरस्थापनानंतरं ' अस्यां ' महावीरलक्षणायां पृथिव्यां ' आशिषः आशास्ते ' यजमानः फलानि आशंसति । ' इयं ' पृथिव्येव खलु ' यज्ञः ' । तस्मात् यज्ञात्मिकायां ' अस्यां ' पृथिव्यामेव ' एतत् ' एतेन " अनाधृष्टा पुरस्तात् " इत्यादिवक्ष्यमाणाः जन्मा-शिषः यजमानः ' आशास्ते ' । सा ' इयं ' आशीर्भिर्युक्ता पृथिवी ' अस्मै ' यजमानाय ' ताः सर्वाः ' आशिषः ' समर्द्धयति ' समृद्धाः करोति ॥ १८ ॥

यदुक्तं कात्यायनेन–" अनाधृष्टेति वाचयति प्रादेशमभ्यधि धारयंतम्" । " प्रतिदिशमेके "–( का. श्रौ. सू. २६ । ९२–९३ ) इति । अयमर्थः–महावीरस्य उपरिष्टात् समीपे प्रादेशं धारयंतं यजमानं अना-

---

१–वाचनं च शाखांतरात् इति कर्कः ॥

पुत्रवती दक्षिणतऽइति । नात्र तिरोहितमिवास्तीन्द्रस्याधिपत्यऽइतीन्द्रमेवास्याऽअधिपतिङ्करोति नाष्ट्राणाᳬं रक्षसामुपहत्यै प्रजाम्मे दाऽइति प्रजामेव पशूनात्मन्धत्ते तथो ह पुत्री पशुमान्भवति ॥ २० ॥

सुषदा पश्चादिति । नात्र तिरोहितमिवास्ति देवस्य सवितुराधिपत्यऽ

---

" पुत्रवती दक्षिणतः "–इति । नात्र तिरोहितमिवास्ति । " इंद्रस्याधिपत्ये "–इति । इंद्रमेवास्या अधिपतिं करोति–नाष्ट्राणां रक्षसामपहत्यै । " प्रजां मे दाः "–इति । प्रजामेव पशूनात्मन्धत्ते । तथो ह पुत्री पशुमान् भवति ॥ २० ॥

" सुषदा पश्चात "–इति । नात्र तिरोहितमिवास्ति । " देवस्य सवितुराधिपत्ये "

---

धृष्टेत्यादीनि यजूंषि अध्वर्युर्वाचयति । एके शाखिनस्तु मंत्रलिंगानुसारेण प्रतिदिशं प्रादेशं धारयंतं वाचयीत इत्याहुः । इति सर्वं क्रमेण [1] प्रतिपिपादयिषुः तत्र प्राचीदिक्संबद्धं मंत्रं त्रेधाकृत्य प्रथमभागं प्रदर्श्य व्याचष्टे–अनाधृष्टा० नाष्ट्राभिरिति । यजमानं वाचयति । 'एषा' पृथिवी 'पुरस्तात्' महावीरस्य प्राच्यां दिशि 'रक्षोभिः' राक्षसैः 'नाष्ट्राभिः' नाशकारिणीभिः तत्सेनाभिश्च 'अनाधृष्टा' अबाधिता 'हि'। यस्मादेवं तस्मात् " अनाधृष्टा पुरस्तात् " इति मंत्रभागः संगत इत्यर्थः । अथ द्वितीयभागमनूद्य व्याचष्टे–अग्नेराधिपत्य इति । " अग्नेराधिपत्ये " इत्यनेन मंत्रभागेन 'अस्याः' पृथिव्याः 'अग्निमेव अधिपतिं करोति' । किमर्थं 'नाष्ट्राणां रक्षसां' च अपहननार्थम् । " अग्निर्हि रक्षसामपहंता " ( श. प. १ । १ । ६–९ । ) इति श्रुतेः । अथ तृतीयभागमनूद्य व्याचष्टे–आयुर्म्मे दाः० मायुरेतीति । " आयुर्मे दाः " इत्यनेन मंत्रभागेन 'आत्मन्' आत्मनि स्वस्मिन् आयुर्जीवनमेव 'धत्ते' धारयति । 'तथो ह' तथा च खलु स यजमानः 'सर्वं' संपूर्णं 'आयुः' 'एति' प्राप्नोति ॥ १९ ॥

अथ दक्षिणदिक्संबद्धस्य मंत्रस्य प्रथमभागम् अनूद्य स्पष्टोऽर्थ इत्याह–पुत्रवती द० वास्तीति । " पुत्रवती दक्षिणतः " इति महावीरदक्षिणभागे यजमानवाचनमंत्रस्य योऽयं प्रथमभागः 'अत्र' अस्मिन् 'तिरोहितं' अस्पष्टं व्याख्यानसापेक्षं नैवास्ति । 'दक्षिणतः' महावीरदक्षिणदिग्भागे एषा पृथिवी 'पुत्रवती' पुत्रैर्युक्ता इत्यस्य अर्थस्य स्पष्टत्वात् । अथ द्वितीयतृतीयभागावनूद्य व्याचष्टे–इन्द्रस्याधिपत्य इति० पशुमान्भवतीति । " इन्द्रस्याधिपत्ये " इति द्वितीयभागेन 'अस्याः' पृथिव्याः 'इन्द्रं' स्वामिनं 'करोति' । " प्रजां मे दाः " इति तृतीयभागेन 'प्रजां' पुत्रादिरूपामेव 'पशूंश्च' गवादिलक्षणान् स्वस्मिन् धारयति । तथा च स यजमानः 'पुत्री' पुत्रवान् 'पशुमांश्च भवति' ॥ २० ॥

अथ महावीरपश्चिमभागे यजमानवाचनमंत्रं पूर्ववत्त्रेधाकृत्य अनूद्य व्याचष्टे–सुषदा० स्तीति । पश्चात्

---

१–" प्रतिदिशमेके " । मंत्रलिंगात् अनाधृष्टा पुरस्तात् पुत्रवती दक्षिणतः इत्येवमादि । यद्येवं तदा वचने सति लिंगात् विभागो न अवगम्यते । अथ तु वचनं इदं तदा विकल्प इति कर्कः ॥

इति देवमेवास्यै सवितारमधिपतिङ्करोति नाष्ट्राणाᳬं रक्षसामपहत्यै चक्षुर्मे दाऽइति चक्षुरेवात्मन्धत्ते तथो ह चक्षुष्मान्भवति ॥ २१ ॥

( त्वा ) आश्रुतिरुत्तरतऽइति । ( त्वा ) आश्रावयन्नुत्तरतऽइत्येवैतदाह धातुराधिपत्यऽइति धातारमेवास्याऽअधिपतिङ्करोति नाष्ट्राणाᳬं रक्षसामपहत्यै रायस्पोषम्मे दाऽइति रयिमेव पुष्टिमात्मन्धत्ते तथो ह रयिमान्पुष्टिमान्भवति ॥ २२ ॥

विधृतिरुपरिष्टादिति । विधारयन्नुपरिष्टादित्येवैतदाह बृहस्पतेराधिपत्यऽइति बृहस्पतिमेवास्याऽअधिपतिङ्करोति नाष्ट्राणाᳬं रक्षसामपहत्याऽओजो मे दाऽइत्योजऽएवात्मन्धत्ते तथौजस्वी बलवान्भवति ॥ २३ ॥

---

इति । देवमेवास्यै सवितारमधिपतिं करोति । नाष्ट्राणां रक्षसामपहत्यै । "चक्षुर्मे दाः"—इति । चक्षुरेवात्मन्धत्ते । तथा उ ह चक्षुष्मान्भवति ॥ २१ ॥

"आश्रुतिरुत्तरतः"—इति । आश्रावयन्नुत्तरत इत्येवैतदाह । "धातुराधिपत्ये"—इति । धातारमेवास्या अधिपतिं करोति । नाष्ट्राणां रक्षसामपहत्यै । "रायस्पोषं मे दाः"—इति । रयिमेव पुष्टिमात्मन्धत्ते । तथा उ ह रयिमान्पुष्टिमान्भवति ॥ २२ ॥

"विधृतिरुपरिष्टात्"—इति । विधारयन्नुपरिष्टादित्येवैतदाह—"बृहस्पतेराधिपत्ये" इति । बृहस्पतिमेवास्या अधिपतिं करोति । नाष्ट्राणां रक्षसामपहत्यै । "ओजो मे दाः"—इति । ओज एवात्मन्धत्ते । तथौजस्वी बलवान् भवति ॥ २३ ॥

---

प्रतीच्यां दिशि पृथिवी 'सुषदा' सुखेनासाद्येति अस्यार्थस्य सुगमत्वात् न व्याख्यांतरमपेक्षते इत्युक्तं—नात्रेति । अवशिष्टयोर्भागयोस्तु पूर्ववद्योज्यम् । इन्द्रस्य स्थाने "देवं सवितारं" इत्यस्य प्रक्षेपः । "अस्यै" इति षष्ठ्यर्थे चतुर्थी ( पा. सू. २ । ३ । ६२ वा. ) । "प्रजां मे दाः" इत्यस्य स्थाने 'चक्षुः' इत्यस्य प्रक्षेपः । अन्यत् सर्वं पूर्ववदेव ॥ २१ ॥

अथ महावीरस्य उत्तरदिग्भागे यजमानवाचनमन्त्रस्य प्रथमभागमनूद्य तात्पर्यमाह—आश्रुतिरुत्तर० तदाहेति । "आश्रुतिरुत्तरतः" इति यत् मन्त्रवाक्यं 'एतत्' 'उत्तरतः' वेद्याः उत्तरदिग्भागे स्थित्वा अध्वर्युः प्रवरार्थं 'आश्रावयन्' आश्रावणं कुर्वन् भवतीति अमुमेवार्थमाह प्रतिपादयति । अथ द्वितीयतृतीयभागौ पूर्ववत् अनूद्य व्याचष्टे-धातुराधि० भवतीति । "धातुराधिपत्ये" इति ब्रुवन् 'धातारं' सर्वस्य धारयितारं प्रजापतिमेव 'अस्याः' पृथिव्याः स्वामिनं 'करोति' । "रायस्पोषं मे दाः" इति ब्रुवन् पदद्वयसूचितम् 'रयिं' धनमेव 'पुष्टिं' तत्कृतां विभूतिं च स्वस्मिन् 'धत्ते' । तथा च असौ 'रयिमान्' धनवान् 'पुष्टिमान्' धनसाध्या या गवादिपशूनाम् अभिवृद्धिः तद्वांश्च 'भवति' ॥ २२ ॥

अथ ऊर्ध्वदिशि यजमानमंत्रं त्रेधाकृत्य अनूद्य व्याचष्टे—विधृतिरुप० भवतीति । हे पृथिवि ! त्वं 'उपरिष्टात्' ऊर्ध्वदिशि 'विधृतिः' परमेश्वरेण विधार्यमाणा असि इति प्रथमभागार्थः । तथा च

(त्यु) अथ दक्षिणत॒ऽउत्तानेन पाणिना निह्नुते । विश्वाभ्यो मा नाष्ट्राभ्य-स्पाहीति सर्वाभ्यो मा॒ऽऽर्त्तिभ्यो गोपायेत्येवैतदाह यज्ञस्य शीर्षच्छिन्नस्य रसो व्यक्षरत्स पितॄनगच्छत्त्रया वै पितरस्तैरेवैनमेतत्समर्द्धयति कृत्स्नं करोति ॥ २४ ॥

(त्यु) अथेमामभिमृश्य जपति । मनोरश्वाऽसीत्यश्वा ह वाऽइयम्भूत्वा मनुमुवाह सोऽस्याः पतिः प्रजापतिस्तेनैवैनमेतन्मिथुनेन प्रियेण धाम्ना समर्द्धयति कृत्स्नं करोति ॥ २५ ॥

---

अथ दक्षिणत उत्तानेन पाणिना निह्नुते–" विश्वाभ्यो मा नाष्ट्राभ्यस्पाहि "–इति । सर्वाभ्यो माऽऽर्तिभ्यो गोपाय इत्येवैतदाह । यज्ञस्य शीर्षच्छिन्नस्य रसो व्यक्षरत् स पितॄनगच्छत् त्रया वै पितरः । तैरेवैनमेतत्समर्द्धयति । कृत्स्नं करोति ॥ २४ ॥

अथेमामभिमृश्य जपति–" मनोरश्वाऽसि "–( वा. सं. ३७ । १२ ) इति । अश्वा ह वा इयं

---

एतन्मंत्रवाक्यं ' उपरिष्टात् ' ऊर्ध्वदिशि इमां पृथिवीं ' विधारयन् ' भवति इममर्थमाह । ' ओजः ' बलम् ' ओजस्वी ' इत्यस्य व्याख्यानं ' बलवान् ' इति । शिष्टं पूर्ववत् योज्यम् ॥ २३ ॥

अथ यदुक्तं कात्यायनेन–"विश्वाभ्यो मेति दक्षिणत उत्तानं पाणिं निदधाति" (का. श्रौ. सू. २६।१४) इति । तत् विधत्ते–अथ दक्षिणत०स्पाहीतीति । एवं पंचसु दिक्षु प्रादेशकरणानंतरं ' दक्षिणतः ' महावीरस्य दक्षिणदेशे ' उत्तानेन पाणिना ' दक्षिणहस्तेन " विश्वाभ्यः " इति मन्त्रेण ' निह्नुते ' इत्युक्तं महावीररक्षण-प्रार्थनं अपलपति । अस्य भागस्य तात्पर्यगम्यमर्थमाह–सर्वाभ्यो मा० तदाहेति । हे पृथिवि ! ' सर्वाभ्य आर्तिभ्यः ' हिंसाभ्यः ' मा ' मां 'गोपाय' रक्ष इति अमुमेवार्थं "विश्वाभ्यो मा" इत्येतन्मंत्रवाक्यं ' आह ' प्रतिपादयति । न तु पूर्ववत् नाष्ट्राशब्देन नाशकारिण्यो राक्षस्यः सेनाः उच्यंते इत्यर्थः । दक्षिणस्याः दिशः पितॄणां संबंधित्वात् दक्षिणतः हस्तनिधानेन पितृभिरपि ' एनं ' समृद्धं कृतवान्, भवतीत्याह–यज्ञस्य० करोतीति । छिन्नशिरस्कस्य ' यज्ञस्य ' रसः पुरा ' पितॄन् अगच्छत् ' पितृदेवताः प्राप्नोत् । ते पितरः ' त्रया वै ' पितृपितामहप्रपितामहभेदेन त्रिविधाः खलु । तत् त्रैविध्यं सवनत्रयात्मकयज्ञरससंबंधात् जात-मित्यवगंतव्यम् । अतः ' एतत् ' एतेन " विश्वाभ्यः " इति मंत्रेण दक्षिणतः क्रियमाणेन उत्तानपाणिनिधा-नेन दक्षिणदिक्संबद्धैः ' तैरेव ' पितृभिः ' एनं ' प्रवर्ग्यं ' समर्द्धयति ' समृद्धं करोति । तथा च यज्ञं ' कृत्स्नं ' संपूर्णावयवं कृतवान् भवति ॥ २४ ॥

अथ अन्यत् कर्म विधत्ते–अथेमामभि० रश्वाऽसीति । ' अथ ' निह्नवानंतरं महावीरस्योत्तरतः ' इमां ' भूमिं प्रादेशेनाभिमृश्योपस्पृश्य " मनोरश्वाऽसि " इति मंत्रं ' जपति ' । हे पृथिवि ! त्वं ' मनोः ' प्रजा-

---

१–मनोरश्वेति प्रादेशमुत्तरतः । का. श्रौ. सू. २६ । ५५ ।

( त्यु ) अ॒थ वै॒कङ्क॑तौ श॒कलौ॒ परि॑श्रयति प्रा॒ञ्चौ । स्वाहा॑ म॒रुद्भिः॒ परि॑श्रीयस्वे॒त्यव॑रꣳ स्वाहाका॒रङ्क॑रोति प॒रां दे॒वता॑मे॒ष वै स्वा॑हाका॒रो य॒ऽए॒ष तप॑त्ये॒षऽउ॑ प्रव॒र्ग्य॑स्त॒दे॒तमे॒वैतत्प्री॑णाति त॒स्माद॑व॒रꣳ स्वाहाका॒रङ्क॑रोति प॒रां दे॒वता॑म् ॥ २६ ॥

( म्म ) म॒रुद्भिः॒ परि॑श्रीयस्वे॒ति । वि॒शो॒ वै म॒रुतो॑ वि॒शै॒वैत॒त्क्ष॒त्त्रं परि॑बृꣳहति त॒दि॒दं॒ क्ष॒त्त्रमु॑भ॒यतो॑ वि॒शा परि॑बृढ॒न्तूष्णी॑मु॒दञ्चौ॒ तूष्णी॑म्प्रा॒ञ्चौ तूष्णी॑मु॒दञ्चौ॒ तूष्णी॑म्प्रा॒ञ्चौ ॥ २७ ॥

---

भूत्वा मनुमुवाह । सोऽस्याः पतिः प्रजापतिः । तेनैवैनमेतन्मिथुनेन प्रियेण धाम्ना समर्द्धयति । कृत्स्नं करोति ॥ २५ ॥

अथ वैकंकतौ शकलौ परिश्रयति प्राञ्चौ-"स्वाहा मरुद्भिः परिश्रीयस्व"-इति । अवरं स्वाहाकारं करोति । परां देवताम् । एष वै स्वाहाकारः । य एष तपति । एष उ प्रवर्ग्यः । तदेतमेवैतत्प्रीणाति । तस्मादवरं स्वाहाकारं करोति परां देवताम् ॥ २६ ॥

"मरुद्भिः परिश्रीयस्व"-इति । विशो वै मरुतः । विशैवैतत्क्षत्त्रं परिबृंहति । तदिदं क्षत्त्रमुभयतो विशा परिबृढम् । तूष्णीमुदंचौ । तूष्णीं प्रांचौ । तूष्णीमुदञ्चौ । तूष्णीं प्राञ्चौ॥२७॥

---

पतेः 'अश्वा' भवसि इति मंत्रार्थः । इममर्थं आख्यायिकया उपपादयन् मंत्रस्य संमृद्धिहेतुत्वं आह-अश्वा ह वा० करोतीति । पुरा खलु 'इयं' पृथिवी 'अश्वा' वडवा 'भूत्वा' 'मनुं' प्रजापतिं 'उवाह' ऊढवती । 'सः प्रजापतिः' 'अस्याः' पृथिव्याः पतिर्भर्ता संबद्धः 'एतत्' एतेन "मनोरश्वाऽसि" इति पृथिव्यभिमर्शनेन 'तेनैव' मिथुनेन' स्त्रीपुंसात्मकेन 'प्रियेण धाम्ना' धारकेण तेजसा 'एनं' प्रवर्ग्यं 'समर्द्धयति' । गतमन्यत् ॥ २५ ॥

अथ त्रयोदशभिर्वैकंकतसमिद्भिः महावीरस्य परिश्रयणं विधित्सुः तासु द्वाभ्यां समिद्भ्यां समंत्रकाभ्यां प्रथमं परिश्रयणं कार्यमित्याह-अथ वैकंकतौ० करोतीति । 'अथ' अभिमर्शनानंतरं 'वैकंकतौ' विकंकतवृक्षसंबंधिनौ द्वौ 'शकलौ प्राञ्चौ' प्रागग्रौ महावीरस्य दक्षिणतः उत्तरतश्च 'परिश्रयति' निदधातीत्यर्थः । "स्वाहा मरुद्भिः" इति अस्य मंत्रः । अथ तस्मिन् स्वाहाशब्दस्य अर्थं दर्शयन् तत्कृतं प्रवर्ग्यस्य अतिशयं दर्शयति-अवरं० देवतामिति । 'अवरं' अधस्ताद्वर्तमानं 'स्वाहाकारं' स्वाहेत्युच्चारणं 'करोति' । 'परां' परस्ताद्वर्तमानां अस्माभिः दुरधिगमां 'देवतां' स्मर्तुमिति शेषः । तस्मात् उत्कृष्टं देवतात्मकं स्वाहाकारं करोतीति योजना । कथं स्वाहाकारस्य परदेवतात्मकता ? इति तत्राह-एष वा इति । 'य एषः' सूर्यस्तपति 'एषः' खलु 'स्वाहाकारः' स्वाहाशब्दप्रतिपाद्यः स्वाहाकारात्मको वा । अन्यद्गतम् । 'तस्मादवरम्' इत्यादिपूर्वोक्तस्य निगमनम् । यद्वा 'अवरं' अवस्तात् अधोभागे 'स्वाहाकारं' 'करोति' । तत्संबंधिनीं 'देवतां' 'परां' परस्तात् निर्दिशति । यथा "अग्नये स्वाहा" इत्यादौ प्रथमं देवतापदं पश्चात् स्वाहाकारः । तद्वैपरीत्येन अत्र प्रथमं स्वाहाकारः पश्चात् देवतापदं इति योजना ॥ २६ ॥

अथ द्वितीयभागमनूद्य व्याचष्टे-मरुद्भिः परि० परिबृढमिति । मरुद्भिरिति पठ्यमानाः ये मरुतः ते

त्रयोदश सम्पादयति । त्रयोदश वै मासाः सम्वत्सरस्य सम्वत्सरऽएष युऽएष तपत्येषुऽउ प्रवर्ग्यस्तुदेतमेवैतत्प्रीणाति तस्मात्त्रयोदश सम्पादयति ॥ २८ ॥

( त्यु ) अथ सुवर्णꣳ हिरण्यमुपरिष्टान्निदधाति । दिवः सꣳस्पृशस्पाहीत्येतद्वै देवाऽअबिभयुर्यद्वै नऽइममुपरिष्टाद्रक्षाꣳसि नाष्ट्रा न हन्युरित्यग्नेर्वाऽएतद्रेतो यद्धिरण्यं नाष्ट्राणाꣳ रक्षसामपहत्याऽअथो द्यौर्वाऽएतस्माद्बिभयाञ्चकार यद्वै माऽयन्तप्तः शुशुचानो न हिꣳस्यादिति तदेवास्याऽएतदन्तर्दधाति हरितम्भवति हरिणीव हि द्यौः ॥ २९ ॥

---

त्रयोदश संपादयति । त्रयोदश वै मासाः संवत्सरस्य । संवत्सर एषः । य एष तपति । एष उ प्रवर्ग्यः । तदेतमेवैतत्प्रीणाति । तस्मात्त्रयोदश संपादयति ॥ २८ ॥

अथ सुवर्णं हिरण्यमुपरिष्टान्निदधाति–" दिवः संस्पृशस्पाहि "–( वा. सं. ३७ । १३ ) इति । एतद्वै देवा अबिभयुः । यद्वै न इम मुपरिष्टाद्रक्षांसि नाष्ट्रा न हन्युरिति । अग्नेर्वा एतद्रेतः,

---

' विशः ' देवानां मध्ये वैश्याः " मरुतो वै देवानां विशः " ( तै. सं. २।२।५ ) इति श्रुत्यन्तरात् । महावीरश्च सम्राट्शब्दाभिधेयत्वात् क्षत्रियजातिस्थानीयः । अतः ' एतत् ' एतेन "मरुद्भिः परिश्रीयस्व" इत्यनेन ' विशैव क्षत्रं परिबृंहति ' वर्द्धयति । " बृहि वृद्धौ ( धा. पा.भ्वा.प. ७३७ ) इति धातुः । तत्तस्मात् ' इदं ' लौकिकं ' क्षत्त्रं ' क्षत्रियजातिः ' विशा ' वैश्यजात्या ' परिबृढं ' प्रवर्द्धितम् । तथा अवशिष्टैः शकलैः परिश्रयणं विधत्ते–तूष्णीमुदञ्चौ० तूष्णीं प्राञ्चाविति । पूर्वं मन्त्रेण द्वौ वैकंकतशकलौ महावीरस्य दक्षिणोत्तरभागयोः प्रागग्रौ निहितौ । अथ तस्य पश्चात् पुरस्ताच्च द्वौ शकलौ ' उदंचौ ' उदगग्रौ ' तूष्णीं ' निधातव्यौ । ततः ' तूष्णीमेव ' द्वौ ' प्रांचौ ' पूर्ववत् निधेयौ । एवं व्यत्यासेन ' त्रयोदश ' शकलान् ' संपादयति ' । प्रागग्राः षट् उदगग्राः षट् । अवशिष्टं दक्षिणतः प्रागग्रं निदध्यात् । तथा चोक्तं कात्यायनेन–" धृष्टिभ्यां भस्मना परिकीर्याङ्गारैश्च विकंकतशकलैः परिश्रयति त्रयोदशभिः प्रागुदग्भिः स्वाहा मरुद्भिरिति । अधिकं दक्षिणतो द्वौ मन्त्रेणेति " ( का. श्रौ. सू. २६ । ५६ । ५७ ) ॥ २७ ॥

तदेतत् त्रयोदशसंपादनं प्रशस्य निगमयति–त्रयोदश० संपादयतीति । ' त्रयोदश वै ' त्रयोदशसंख्याकाः खलु ' मासाः ' संवत्सरस्य भवंति । द्वादश चैत्राद्या मलिम्लुचाख्य एकः । संवत्सरश्च एष सूर्यात्मकः, तद्गत्यवसाननिष्पत्तिमत्त्वात् । सिद्धमन्यत् । ' तस्मात्त्रयोदश ' इति निगमनम् ॥ २८ ॥

अथ महावीरस्य उपरि सुवर्णशतमानस्य रुक्मस्य स्थापनं विधत्ते–अथ सुवर्णं० स्पाहीति । ' अथ ' विकंकतशकलैः परिश्रयणानंतरं ' सुवर्णं ' सुवर्णमयं हिरण्यं हिरण्यशब्दस्य रजतेऽपि प्रसिद्धत्वात् तद्व्यावृत्त्यर्थं

---

१ " सुवर्णशतमानेनापिदधाति दिवः सꣳस्पृश इति " ( का. श्रौ. सू. २६।५७ ) ।

(१) अथ धवित्रैराधूनोति । मधु मध्विति त्रिः प्राणो वै मधु प्राणमेवास्मिन्नेतद्दधाति त्रीणि भवन्ति त्रयो वै प्राणाः प्राणऽउदानो व्यानस्तानेवास्मिन्नेतद्दधाति ॥ ३० ॥

(त्यु) अथापसलवित्त्रिर्धून्वन्ति । यज्ञस्य शीर्षच्छिन्नस्य रसो व्यक्षरत्स पितॄनगच्छत्त्रया वै पितरस्तैरेवैनमेतत्समीरयति ॥ ३१ ॥

---

यद्धिरण्यम् । नाष्ट्राणां रक्षसामपहत्यै । अथो द्यौर्ह वा एतस्माद्बिभयांचकार । यद्वै माऽयं तप्तः शुशुचानो न हिंस्यादिति । तदेवास्या एतदन्तर्दधाति । हरितं भवति । हरिणीव हि द्यौः ॥ २९ ॥

अथ धवित्रैराधूनोति । " मधु मधु "–( वा. सं. ३७ । १३ ) इति त्रिः । प्राणो वै मधु । प्राणमेवास्मिन्नेतद्दधाति । त्रीणि भवंति । त्रयो वै प्राणाः । प्राण उदानो व्यानः । तानेवास्मिन्नेतद्दधाति ॥ ३० ॥

अथापसलवित् त्रिर्धून्वंति । यज्ञस्य शीर्षच्छिन्नस्य रसो व्यक्षरत्–स पितॄनगच्छत् । त्रया वै पितरः । तैरेवैनमेतत्समीरयति ॥ ३१ ॥

---

विशेषणम् । शोभनवर्णयुक्तं हिरण्यनिर्मितं कांचनमयं रुक्मं " दिवः सश्स्पृशः " इति मन्त्रेण महावीरस्य ' उपरिष्टात् निदधाति ' । अथ एतत् उपरिष्टाद्धिरण्यनिधानं रक्षोभिः अबाधनार्थं द्युलोकस्य तप्तेन घर्मेण तापाभावार्थं च इत्याह–एतद्धै देवा० द्यौरिति । " अथोत्तरतः सिकता० " इति खंडे ( श. प. १४।१।३।१४ ) रजतशतमाननिधानवाक्यशेषवत् एतत्सर्वं व्याख्येयम् । पृथिवीस्थाने द्यौरित्येतावान् विशेषः । तच्च शतमानं ' हरितं ' हरिद्वर्णं स्वर्णमयं ' भवति ' हरितवर्णेव खलु द्यौरिति अंतिमवाक्यस्यार्थः ॥ २९ ॥

अथ यदुक्तं कात्यायनेन–" कृष्णाजिनावकृत्तैर्धवित्रैरुपवाजयति त्रिभिर्दण्डवद्भिर्मधु मध्विति " ( का. श्रौ. सू. २६ । ९९) इति, तद्विधत्ते–अथ धवित्रै० त्रिरिति । कृष्णाजिननिर्मितानि व्यजनानि दंडवंति धवत्राणि उच्यंते । 'अथ' सुवर्णशतमाननिधानानंतरं अध्वर्युः तैः ' धवित्रैः ' " मधु मध्विति " मंत्रेण ' त्रिः आधूनोति ' । महावीरस्याधूननं वीजनं करोति । यथा अग्नेः ज्वाला भवति तथा समिंधीत इत्यर्थः । अथ एतन्मंत्रं प्रशंसति–प्राणो वै० दधातीति । ' प्राणो वै ' प्राणापानादिपंचवृत्त्यात्मकः प्राणवायुः हि मधुमंत्रे मधुशब्दाभिधेयः । मधुवत्तस्य प्रियतमत्वात् तथा च ' एतत् ' एतेन मधु मध्वित्यनेन अस्मिन् प्रवर्ग्ये ' प्राणमेव दधाति ' स्थापयति । अथ धवित्राणां त्रित्वसंख्यामनूद्य स्तौति–त्रीणि भवंति० दधातीति । तानि धवित्राणि ' त्रीणि भवंति ' प्राण उदानो व्यान इति ' त्रयः ' एव ' प्राणाः ' अपानस्य प्राणावान्तरव्यापारत्वेन प्राणांतर्भावात्, समानस्य च व्यानेऽन्तर्भावात् तेषां त्रित्वम् । गतमन्यत् ॥ ३० ॥

यदुक्तं सूत्रकारेण–" एकं प्रयच्छति प्रतिप्रस्थात्रेऽपरमग्नीधे धुन्वंतस्त्रिस्त्रिः परिक्रमंति पितृवद्देववच्च " इति ( का. श्रौ. सू. २६ । ६० ) तत् विधाय स्तौति–अथापसलवि त्रिर्धून्वंतीति । अध्वर्युः त्रिभिर्धवित्रैः " मधु मधु " इति मंत्रेण त्रिराधूय, अथानंतरमेकं धवित्रं प्रतिप्रस्थात्रे प्रयच्छति एकमाग्नीध्राय । ततः ते अध्वर्युप्रभृतयस्त्रयः गृहीतधवित्राः ' अपसलवित् ' अपसलवेदनं अपसव्यं अप्रदक्षिणं त्रिः परिक्रामंतः

( त्यु ) अ॒प वा॒ऽएते॒भ्यः प्रा॒णाः क्रा॑मन्ति । ये य॒ज्ञे धु॑वनं त॒न्व॒ते पुनः प्रस॒लवि॑ त्रिर्धू॒न्वन्ति॒ षट्सम्प॑द्यन्ते ष॒ड्वाऽइ॒मे शी॒र्षन्प्रा॒णास्तानेवास्मि॑न्ने॒तद्द॑धाति श्र॒पय॑न्ति रौहि॒णौ स य॒दाऽर्चि॒र्जाय॑ते॒ऽथ हि॒रण्य॒माद॑त्ते ॥ ३२ ॥

स य॒त्रैता॑ꣳ होता॒ऽन्वाह॑ । ( ह्वा ) अ॒प्नस्व॑तीमश्विना वा॒चम॒स्मेऽइति॒ तद॑ध्व॒र्युरु॒पोत्ति॒ष्ठन्ना॑ह रु॒चि॒तो घ॒र्मऽइ॒ति स य॒दि रु॒चि॒तः स्या॒च्छ्रेया॒-

---

अप वा एतेभ्यः प्राणाः क्रामंति । ये यज्ञे धुवनं तन्वते । पुनः प्रसलवित् त्रिर्धून्वंति । षट् संपद्यंते । षड्वा इमे शीर्षन्प्राणाः । तानेवास्मिन्नेतद्दधाति । श्रपयंति रौहिणौ । स यदाऽर्चिर्जायते । अथ हिरण्यमादत्ते ॥ ३२ ॥

स यत्रैतां होताऽन्वाह—" अप्नस्वतीमश्विना वाचमस्मे "—( वा. सं. ३४ । २९ ) इति । तदध्वर्युरुपोत्तिष्ठन्नाह—"रुचितो घर्मः" इति । स यदि रुचितः स्यात् । श्रेयान् यजमानो भवि-

---

' धून्वंति ' उपवाजयंति । अथ अप्रादक्षिण्येन परिक्रमणं स्तौति—यज्ञस्य शीर्षच्छिन्नस्येत्यादिना । अप्रदक्षिणकरणं हि पैतृको धर्मः । अतः ' एतत् ' एतेन अप्रदक्षिणपरिक्रमणेन ' तैरेव ' पितृभिः ' एनं ' महावीरं ' समीरयति ' संगमयति । अन्यद्गतम् ॥ ३१ ॥

पुनस्त्रिः प्रदक्षिणं परिक्रामद्भिः धूननं कार्यमति विधित्सुराह—अप वा एतेभ्य इत्यादि । ' ये ' खलु ' यज्ञे ' अध्वर्युप्रभृतयः ' धुवनं ' कंपनं उक्तं वीजनं ' तन्वते ' कुर्वंति । ' एतेभ्यः ' सकाशात्, ' प्राणाः ' ' अपक्रामंति वै ' वेगेन आधूनने क्रियमाणे शरीरान्तर्वर्तमानाः प्राणा अपि श्रमातिशयेन निर्गच्छन्तीत्यर्थः । अतस्तत्परिहाराय ' पुनः ' तत् ' प्रसलवित् ' प्रसलवेदनं प्रदक्षिणं ' त्रिः ' परिक्रामंतः ' धून्वंति ' चालयंति । कथं अनेन उक्तदोषपरिहारः ? इति तत्राह—षट् संपद्यंत इति । एवं अपसव्यप्रदक्षिणकृताभ्यां पर्यायाभ्यां ' षट् ' परिक्रमाः ' संपद्यंते ' निष्पद्यंते । ' शीर्षन् ' शीर्ष्णि शिरसि ' षट् वा इमे प्राणाः ' ' इमे ' इति इदंशब्दः अभिनयप्रदर्शनार्थः । द्वे चक्षुषी, द्वे नासिके, द्वे श्रोत्रे, इति । एवं षट् प्राणाः इंद्रियाधिष्ठानानि शिरसि समवेतानि । तानेवात्मनि प्रथमं धारयित्वा, ' अस्मिन् ' प्रवर्ग्ये अपि ' एतद्दधाति ' । अथ रौहिणपुरोडाशयोः श्रपणं विधत्ते—श्रपयंति रौहिणाविति । लौकिकपिष्टमानीय रौहिणाख्यौ पुरोडाशौ तूष्णीं ' श्रपयंति ' पचंति अध्वर्युपुरुषाः । तदुक्तं सूत्रकारेण—" रौहिणावधिश्रपयति तूष्णीं ग्रामपिष्टानाम् " ( का. श्रौ. सू. २६ । ६३) इति । अथ उपरि निहितस्य सुवर्णशतमानस्य आदानं विधत्ते—स यदाऽर्चि० मादत्ते इति । ' यदा ' यस्मिन्काले अर्चिर्ज्वाला महावीरस्य परितः ' जायते ' । अथानंतरं ' सः ' अध्वर्युः उपरि निहितं ' हिरण्यं ' ' आदत्ते स्वीकरोति ॥ ३२ ॥

अथ धवित्रैः आधूननेन संतापितस्य घर्मस्य वेदनार्थं कालविशेषे कश्चित् प्रैषमन्त्रं ब्रूयात् इति विधित्सु-

---

१–अर्चिषि प्राप्ते सुवर्णशतमानं निधायाज्येन महावीरं परिषिंचति स्रुवेण प्रतिप्रणवम् । का श्रौ. सू. २६ । ६२ । निधाय अपनीय इति कर्कः ॥

२–" अप्नस्वतीमित्युच्यमाने रुचितो घर्म इत्याहोपोत्तिष्ठन् " । इति का. श्रौ. सू. २६ । ६७ ।

न्युजमानो भविष्यतीति विद्यादथ यद्यरुचितः पापीयान्भविष्यतीति विद्यादथ यदि नैव रुचितो नारुचितो नैव श्रेयान्न पापीयान्भविष्यतीति विद्याद्यथा त्वेव रुचितः स्यात्तथा धवितव्यम् ॥ ३३ ॥

( स ) अथैतद्वै । ( द्वा॒ऽआ॒ ) आयुरेतज्ज्योतिः प्रविशति यऽएतमनु वा ब्रूते भक्षयति वा तस्य व्रतचर्य्या या सृष्टौ ॥ ३४ ॥

इति प्रथमप्रपाठके तृतीयं ब्राह्मणम् ॥ १४।१।३॥ ( १–२ ) ॥

---

ष्यतीति विद्यात् । अथ यद्यरुचितः । पापीयान् भविष्यतीति विद्यात् । अथ यदि नैव रुचितो नारुचितः । नैव श्रेयान्न पापीयान् भविष्यतीति विद्यात् । यथा त्वेव रुचितः स्यात् । तथा धवितव्यम् ॥ ३३ ॥

अथ एतद्वा आयुः, एतज्ज्योतिः प्रविशति । य एतमनु वा ब्रूते । भक्षयाति वा । तस्य व्रत-चर्या–या सृष्टौ ॥ ३४ ॥

---

राह–स यत्रैतां० घर्मं इति । " अभूस्वतीमश्विना " इत्येतामृचं ' स होता ' यस्मिन् काले अनुब्रूयात् । तत्तस्मिन् काले ' उपोत्तिष्ठन् ' आसनादुद्गच्छन्, " रुचितो घर्मः " इति प्रैषं प्रस्तोत्रभिमुखः ' आह ' ब्रूयात् । ' रुचितः ' संदीप्तः महावीरः इति तस्यार्थः । अथ एतस्य रुचितारुचितयोः यजमानस्य गुण-दोषान् उक्त्वा सर्वथा रुचितकरणमेव श्रेयः इत्याह–स यदि रुचितः स्या० त्तथा धवितव्यमिति । ' सः ' घर्मः ' यदि रुचितः ' सम्यक् ततः ' स्यात् ' । तर्हि ' यजमानः ' ' श्रेयान् ' प्रशस्यतमः अतिशयेन सुकृती ' भविष्यतीति ' विद्याज्जानीयात् । ' अथ ' तु ' यदि ' ' अरुचितः ' अतप्तः । तर्हि ' पापीयान् ' अतिशयेन पापग्रस्तः ' भविष्यति इति ' जानीयात् । ' अथ यदि ' यदि तु रुचितोऽपि नैव भवति अरुचितोऽपि नैव भवति । अपि तु रुचितारुचितमध्यस्थो भवेत् । तर्हि यजमानोऽपि श्रेयानपि नैव भवति । पापीयानपि नैव भवति । अपि तु मध्यावस्थः ' भविष्यतीति ' जानीयात् । यस्मादेवं तस्मात् ' यथा त्वेव ' येनैव खलु प्रकारेण घर्मः ' रुचितः ' सम्यग् दीप्तः ' स्यात् ' ' तथा ' धवित्रैर्धवितव्यम् । सर्वप्रयत्नेन अवश्यं घर्मस्य सम्यक् संदीपनं कार्यमित्यर्थः ॥ ३३ ॥

अथ प्रथमब्राह्मणावसाने दर्शिता या व्रतचर्या तस्याः सर्वप्रवर्ग्यशेषत्वं दर्शयितुं अस्य तृतीयब्राह्मणस्य तदर्थस्य वा अध्ययनानुष्ठानयोः तां अतिदिशति–अथैतद्वै० सृष्टाविति । सिद्धमेतत् ॥ ३४ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये चतुर्दशे काण्डे तदन्तर्भूते प्रथमे प्रवर्ग्यकाण्डे प्रथमेऽध्याये तृतीयं ब्राह्मणम् ॥ १४ । ( १ ) १ । ३ ॥

स युदैतदध्वर्युः । ( रु ) उपोत्तिष्ठन्नाह रुचितो घर्मऽइति तदुपोत्थाया-वकाशैरुपतिष्ठन्ते प्राणा वाऽअवकाशाः प्राणानेवास्मिन्नेतद्दधाति षड्डुप-तिष्ठन्ते षड्वाऽइमे शीर्षन्प्राणास्तानेवास्मिन्नेतद्दधाति ॥ १ ॥

गर्भो देवानामिति । ( त्ये ) एष वै गर्भो देवानां यऽएष तपत्येषु हीदᳫँ सर्व्वङ्गृभ्णात्येतेनेदᳫँ सर्वङ्गृभीतमेषऽउ प्रवर्ग्यस्तदेतमेवैतत्प्री-णाति तस्मादाह गर्भो देवानामिति ॥ २ ॥

---

अथ प्रवर्ग्येऽवकाशोपस्थानं ब्राह्मणम् ।

स यदैतदध्वर्युरुपोत्तिष्ठन्नाह—" रुचितो घर्मः " इति । तदुपोत्थाय अवकाशैरुपतिष्ठते । प्राणा वा अवकाशाः । प्राणानेवास्मिन्नेतद्दधाति । षड्डुपतिष्ठंते । षड् वा इमे शीर्षन्प्राणाः । तानेवास्मि-न्नेतद्दधाति ॥ १ ॥

" गर्भो देवानाम् "—इति । एष वै गर्भो देवानाम् । य एष तपति । एष हीदं सर्वं गृभ्णाति । एतेनेदं सर्वं गृभीतम् । एष उ प्रवर्ग्यः । तदेतमेवैतत्प्रीणाति । तस्मादाह—गर्भो देवानाम् इति ॥२॥

---

इत्थं तृतीये ब्राह्मणे घर्मसंदीपनमुक्तम् । अथ चतुर्थे प्रवर्ग्यकर्तॄणां अवकाशाख्यैः मंत्रैरुपस्थानं विधत्ते—स यदै०दधातीति । उपस्थानस्य कालविधानाय रुचितो घर्मः इत्यन्तं वृत्तानुवादः । ' सः ' अध्वर्युर्यदा ' उपोत्तिष्ठन् ' " रुचितो घर्मः " इत्याह । तत् तदानीं सर्वे घर्मोपयुक्ताः ऋत्विजः ' उपोत्थाय ' स्वकी-यात् आसनात् उत्थाय तत्र तत्र स्थित्वा अवकाशाख्यैर्मंत्रैः " गर्भो देवानाम् " इत्यादिभिः घर्मं ' उपतिष्ठंते ' एते अवकाशाख्या मन्त्राः प्राणात्मकाः । तैरुपस्थानेन ' अस्मिन् ' घर्मे ' प्राणानेव दधाति ' धारयति । अथोपस्थातॄणां संख्याम् उपजीव्य स्तौति—षड्डुपति०दधातीति । होता अध्वर्युः ब्रह्मा प्रतिप्रस्थता अग्नीत् इति पंच ऋत्विजो यजमानषष्ठाः षट्पुरुषाः एतैरवकाशैः ' उपतिष्ठंते, । गतमन्यत् ॥ १ ॥

अथ तानवकाशान् वाक्यशः अनूद्य व्याचष्टे—गर्भो देवानामितीति । गर्भो देवानामिति आख्यानार्थमुपा-दानम् । ' य एषः ' सूर्यस्तपति ' एषः ' खलु ' देवानाम् ' मध्ये ' गर्भः ' । कुत इत्यत आह—एष हीदमिति । ' हि ' यस्मात् । ' इदं ' ' सर्वं ' जगत् ' एष सूर्यः गृभ्णाति ' " हृग्रहोर्भश्छंदसि " ( पा. सू. ३।१।८४ वा. ) इति भत्वम् । जगति विद्यमानं सर्वं रसं स्वकिरणैरुपादत्ते सर्वमनुगृह्णाति वा । यत एवं अतः ' एतेन ' सूर्येण ' इदं सर्वं जगत् ' गृभीतं गृहीतं अनुगृहीतम् तस्मादेष गर्भः । अन्यद्गतम् । तस्मा-दाहेति निगमनम् ॥ २ ॥

---

१—" परिक्रम्योपतिष्ठंतेऽकृतं चेद्गर्भो देवानामिति " । का. श्रौ. सू. २६ । ६८ । अकृतं चेदिति उत्तरं देववत्परिक्रमणं पितृवत्परिक्रमणानंतरं अकृतं चेत् तदुत्तरं परिक्रमणं, इह रुचिते घर्मे अवसरे कृत्वा अवकाशैरुपस्थेयम् तथा च सूत्रकारेण उत्तरपरिक्रमणस्य कालविकल्पः प्रावादि । " रुचिते वोत्तरम् । " का. श्रौ. सू. २६।६९। रुचिते घर्मे सतीत्यर्थः । अवकाशाख्या मंत्रास्तु सप्त । गर्भो देवानां इत्यारभ्य वा. सं. ३७–१४ त्वष्टृमंतः इत्यतः प्राक् ( वा. सं. ३७–२० ) मा मा हिंसीदित्यंताः।

पि॒ता म॑ती॒नामि॑ति । पि॒ता ह्ये॑ष म॑ती॒नाम्पति॑: प्र॒जाना॒मिति॒ पति॒र्ह्ये॑ष प्र॒जाना॑म् ॥ ३ ॥

( ९५ ) सन्दे॒वो दे॒वेन॑ सवि॒त्रा ग॑ते॒ति । सᳬं᳚ हि दे॒वो दे॒वेन॑ सवि॒त्रा ग॑त सᳬं᳚ सूर्ये॑ण रोचत॒ऽइति॒ सᳬं᳚ हि सूर्ये॑ण रोचते ॥ ४ ॥

सम॒ग्निर॒ग्निना॑ गते॒ति । सᳬं᳚ ह्य॒ग्निर॒ग्निना॑ गत॒ सन्दैवे॑न सवि॒त्रेति॒ सᳬं᳚ हि दैवे॑न सवि॒त्रा ग॑त सᳬं᳚ सूर्ये॑णारोचिष्टे॒ति सᳬं᳚ हि सूर्ये॑णारोचिष्ट ॥५॥

---

" पिता मतीनाम् "–इति । पिता ह्येष मतीनाम् । " पतिः प्रजानाम् "–इति । पतिर्ह्येष प्रजानाम् ॥ ३ ॥

" सं देवो देवेन सवित्रा गत "–इति । सं हि देवो देवेन सवित्रा गत । " सं सूर्येण रोचते "–( वा. सं. ३७।१४ ) इति । सं हि सूर्येण रोचते ॥ ४ ॥

" समग्निरग्निना गत "–इति । सं ह्यग्निरग्निना गत । " सं दैवेन सवित्रा "–इति । सं हि दैवेन सवित्रा गत ।-" सं सूर्येणारोचिष्ट "–इति । सं हि सूर्येणारोचिष्ट ॥ ५ ॥

---

अथ वाक्यांतरमुपादाय प्रसिद्ध्या व्याचष्टे–पिता मतीनामितीति । 'हि' यस्मात् 'एषः' सूर्यः 'मतीनां' बुद्धीनां ' पिता ' उत्पादयिता । सूर्योदये सति हि सुप्तानां सर्वेषां प्राणिनां प्रबोधेन सर्वाणि ज्ञानान्युत्पद्यंते । अतः सूर्यस्य तत्पितृत्वम् । " एष उ प्रवर्ग्यस्तदेतमेवैतत् " इति प्रकृतो वाक्यशेषः अतः प्रभृति सर्वत्र अनुषंजनीयः । अथ अन्यवाक्यमुपादाय व्याचष्टे–पतिः प्रजानामिति । ' एषः ' सूर्यः ' प्रजानां ' प्रजायमानानां प्राणिनां वृष्ट्यादिप्रदानेन पालयिता हि । अन्यत् पूर्ववत् ॥ ३ ॥

वाक्यांतरमुपादाय व्याचष्टे–सं देवो०गतेति । ' हि ' यस्मात् देवनशीलो घर्मः देवयजनेन वर्तमानः देवेन देवनशीलेन ' सवित्रा ' सर्वस्य प्रेरकेण दिवि वर्तमानेन सूर्येण ' संगत ' समगच्छत । संपूर्वात् गमेः " समो गम्यृच्छिभ्याम् "- ( पा. सू. १।३।२९ ) इत्यात्मनेपदम् । छांदसः शपो लुक् । "अनुदात्तोपदेश०" (पा. सू. ६।४।३७) इत्यादिना अनुनासिकलोपः । तस्मात् " सं देवो देवेन " इति मन्त्रवाक्यं संगतमित्यर्थः। अथ अन्यद्वाक्यमनूद्य व्याचष्टे–सᳬं सूर्येण रोचत इति । अयं संततो घर्मः ' सूर्येण ' द्युस्थेन ' संरोचते ' संगतो दीप्यते । ' हि ' यस्मात् " सं सूर्येण " इति वाक्यं समवेतार्थमित्यर्थः ॥ ४ ॥

एवं वर्तमानकाले घर्मस्य सूर्येण संरोचनं उक्त्वा, अथ भूतकालेऽपि " समग्निरग्निना गत " इति द्वितीयेन अवकाशमन्त्रेण तदाह–समग्निरग्निना गतेति । ' अग्निः ' अग्निवर्णः संततो घर्मः ' अग्निना ' आहवनीयलक्षणेन ' संगत ' समगच्छत यागार्थम् । ' हि ' यस्मात् एवं " समग्निरग्निना " इति मन्त्रवाक्यं संगतमित्यर्थः । अथ अन्यद्वाक्यमनूद्य व्याचष्टे–सं दैवेन० गतेति । ' दैवेन ' देवेषु प्रसिद्धेन सर्वत्र हि अयं प्रवर्ग्यः समगच्छत । तस्मात् ' सं दैवेन ' इत्याम्नातम् । अथ मन्त्रप्रतिपादितां रोचनस्य भूतकालसत्ताम् उपपादयितुं वाक्यांतरमनूद्य व्याचष्टे–सᳬं सूर्येणारोचिष्टेति । " रुचितो घर्मः " इति प्रैषमन्त्रोच्चारणेन

स्वाहा समग्निस्तपसा गतेति । सꣳ ह्ययग्निस्तपसा गतोऽवरꣳ स्वाहाकारङ्करोति परान्देवतामसावेव बन्धुः सन्दैव्येन सवित्रेति सꣳ हि दैव्येन सवित्रा गत सꣳ सूर्य्येणारूरुचतेति सꣳ हि सूर्य्येणारूरुचत ॥ ६ ॥

ते वाऽएते त्रयोऽवकाशा भवन्ति । त्रयो वै प्राणाः प्राणऽउदानो व्यानस्तानेवास्मिन्नेतद्दधाति ॥ ७ ॥

धर्त्ता दिवो विभाति तपसस्पृथिव्यामिति । धर्त्ता ह्येष दिवो विभाति तपसस्पृथिव्यान्धर्त्ता देवो देवानाममर्त्यस्तपोजाऽइति धर्त्ता

---

" स्वाहा समग्निस्तपसा गत "–इति । सं ह्यग्निस्तपसा गत । अवरं स्वाहाकारं करोति । परां देवताम् । असावेव बंधुः । " सं दैव्येन सवित्रा "–इति । सं हि दैव्येन सवित्रा गत । " सं सूर्येणारूरुचत "–( वा॰ सं. ३७ । १९ ) इति । सं हि सूर्येणारूरुचत ॥ ६ ॥

ते वा एते त्रयोऽवकाशा भवंति । त्रयो वै प्राणाः–प्राण उदानो व्यानः । तानेवास्मिन्नेतद्दधाति ॥ ७ ॥

" धर्ता दिवो विभाति तपसस्पृथिव्याम् "–इति । धर्ता ह्येष दिवो विभाति तपसस्पृथिव्याम् । " धर्ता देवो देवानाममर्त्यस्तपोजाः "–इति । धर्ता ह्येष देवो देवाना-

---

घर्मरोचनस्य निष्पन्नत्वात् तादृशो घर्मः सूर्येण ' समरोचिष्ट हि ' संगत्य दीप्तः अभूत् । तस्मात् " सꣳ सूर्येणारोचिष्ट " इति रोचनस्य भूतकालसत्ताप्रतिपादनं युक्तम् । " रुच दीप्तौ " ( धा. पा. भ्वा. आ. ७४६ ) इति धातुः ॥ ९ ॥

अथ तृतीयमवकाशमंत्रं वाक्यशः अनूद्य व्याचष्टे–स्वाहा समग्नि॰ रूरुचतेति । ' हि ' यस्मात् अयमग्निरग्निवर्णः प्रवर्ग्यः ' तपसा ' तापेन ' संगत ' समगच्छत । तस्मात् " समग्निस्तपसा गत " इत्ययमंशः संगतः । अवरमधस्तात् आदौ वर्तमानं ' स्वाहाकारं ' स्वाहेति शब्दस्य करणं उच्चारणं ' करोति ' । ' परां ' सूर्यरूपां ' देवतां ' । स्वाहाशब्दप्रतिपाद्यं संस्मर्तुं ' असावेव ' खलु देवता बंधुः छिन्नस्य यज्ञशिरसः बंधनहेतुः । तथा ' दैव्येन ' देवतासंबंधिना ' सवित्रा ' प्रेरकेण सूर्येण दिवि प्रकाशमानेन सार्द्धम् अयं ततो घर्मः ज्वालाद्वारेण ' समरूरुचत ' सम्यगदीप्यत । तस्मात् " सꣳ सूर्येणारूरुचत " इति मन्त्रभागः समवेतार्थः ॥ ६ ॥

एवं " गर्भो देवानां " १ " समग्निरग्निना गत " २ " स्वाहा समग्निः " ३ इति ' त्रयः अवकाशाः ' उक्ताः । अथैतान् संहत्य स्तौति–ते वा एते॰ दधातीति । ' ते ' खलु ' एते ' अवकाशाख्याः " गर्भो देवानां " इत्याद्याः त्रयो मन्त्रा भवन्ति । अन्यत् त्रित्वविधिशेष ( श. प. १४ । १ । ३ । ३० । ) व्याख्याने व्याख्यातम् ॥ ७ ॥

अथ चतुर्थमवकाशमन्त्रं वाक्यशः अनूद्य व्याचष्टे–धर्ता दिवो॰ तदाहेति । ' एषः ' खलु सूर्यः ' दिवः '

ह्येषु देवो देवानामुमर्त्यस्तपोजा व्वाचमस्मे नियच्छ देवायुवमिति यज्ञो वै व्वाग्यज्ञमस्मुभ्यम्प्रयच्छ येन देवान्प्रीणामेत्येवैतदाह ॥ ८ ॥

( ह्रा ) अपश्यङ्गोपामुनिपद्यमानमिति । ( त्ये ) एष वै गोपा युऽएष तपत्येषु हीदᳪं सुर्वङ्गोपायत्युथो न निपद्यते तुस्मादाहापश्यङ्गोपामु-निपद्यमानमिति ॥ ९ ॥

(त्या) आ च पुरा च पथिभिश्चरन्तमिति । (त्या)आ चु ह्येष पुरा च देवैः पथिभिश्चरति सु सध्रीचीः स व्विषूचीर्व्वसानऽइति सध्रीचीश्च ह्येष व्विषूचीश्च दिशो व्वस्तेऽथो रश्मीनावरीवर्त्ति भुवनेष्वन्तरिति पुनः पुनर्ह्येषु-ऽएषु लोकेषु व्वरीवर्त्यमानश्चरति ॥ १० ॥

---

ममर्त्यस्तपोजाः । " वाचमस्मे नियच्छ देवायुवम् "–( वा. सं. ३७ । १६ ) इति । यज्ञो वै वाग् । यज्ञमस्मभ्यं प्रयच्छ । येन देवान्प्रीणाम इत्येवैतदाह ॥ ८ ॥

" अपश्यं गोपामनिपद्यमानम् "–इति । एष वै गोपाः । य एष तपति । एष हीदं सर्वं गोपायति । अथो न निपद्यते । तस्मादाह–" अपश्यं गोपामनिपद्यमानम् "–इति ॥ ९ ॥

" आ च परा च पथिभिश्चरंतम् "–इति । आ च ह्येष परा च देवैः पथिभिश्चराति । " स सध्रिचीः स विषूचीर्वसानः "–इति । सध्रीचीश्च ह्येष विषूचीश्च दिशो वस्ते । अथो

---

द्युलोकस्य 'धर्ता' । तथा तपसस्तापकस्य रश्मिजालस्य च धर्ता सन् 'पृथिव्यां' भूम्यां 'विभाति' विशेषेण दीप्यते । अतः तदात्मके प्रवर्ग्ये "धर्ता दिवः" इति मन्त्रः समवेतार्थ इत्यर्थः । तथा 'एषः' सूर्यो देवनशीलः 'देवानां' स्वव्यतिरिक्तानामिन्द्रादीनां 'धर्ता' धारयिता सूर्यगत्यधीनत्वाद्धविर्दानस्य इति सूर्यस्य हविर्भुजां धारकत्वं द्रष्टव्यम् । तथा 'अमर्त्यः' मरणरहितः 'तपोजाः' तपसः तप्यमानात् ब्रह्मणो जातः । 'हि' यस्मादेवं तस्मात् तदात्मकं प्रवर्ग्यं "धर्ता दिवः" इति मन्त्रभागेन स्तौतीत्यर्थः । तथा "वाचमस्मे नियच्छ" इति समनन्तरो मन्त्रभागः । तत्र वाक्शब्देन यज्ञ एव उच्यते । स्तुतशस्त्ररूपया वाचा निर्वर्त्यत्वात् । एवं च निष्पन्नं वाक्यार्थमाह–'वाचं' यज्ञं 'अस्मे' अस्मभ्यं हे घर्म । 'नियच्छ' प्रयच्छ देहि 'येन' यज्ञेन 'देवान्' 'प्रीणाम' तर्पयामेति अमुमेवार्थमेतन्मन्त्रवाक्यमाह प्रतिपादयति ॥ ८ ॥

अथान्यमवकाशमन्त्रं वाक्यशः अनूद्य व्याचष्टे–अपश्यं गोपा० चरतीति । 'एषः' सूर्यः 'देवानां' मध्ये 'गोपाः' गोपायिता । 'हि' यस्मात् 'एषः' 'सर्वमिदं' जगत् 'गोपायति' प्रकर्षेण प्रकाश-नादिना रक्षति । 'अथो' अपि च 'न निपद्यते' न निपतति । किंतु उच्चैः सर्वदा दिवि वर्तते । 'तस्मात्' 'अनिपद्यमानं' 'गोपां' सूर्यं 'अपश्यं' अदर्शम् इति ऋषिः कृतसाक्षात्कारः आह । अथवा तदात्मकं प्रवर्ग्यं स्तोतुं–अपश्यं गोपामिति अध्वर्युराह ॥ ९ ॥

अपि च 'एष हि' सूर्यः 'देवैः' देवसंबंधिभिः 'पथिभिः' मार्गैः मध्याह्नात् पूर्वं 'आचरति' अभि-मुखेन गच्छति च । ततः परस्तात् 'पराचरति' पराङ्मुखः संचरति । तस्मात् "आ च परा च" इति

व्विश्वासाम्भुवाम्पते। व्विश्वस्य मनसस्पते व्विश्वस्य व्वचसस्पते सुर्वस्य व्वचसस्पतऽ इत्येतुस्य सुर्व्वस्य पतऽइत्येतुद्देवश्रुत्त्वन्देव घुर्म्म देवो देवान्पाहीति नात्र तिरोहितमिवास्ति॥ ११॥

( रत्यु ) अुत्र प्प्रावीरनु वान्देवुवीतयऽइति। ( त्य ) अश्विनावेवैतुदाहाश्विनौ वाऽएतद्यज्ञस्य शिरः प्रुत्यधत्तान्तावेवैतुत्प्रीणाति तुस्मादाहात्र प्प्रावीरनु वान्देवुवीतयऽ इति॥ १२॥

---

रश्मीन्। "आवरीवर्ति भुवनेष्वंतः"–( वा. सं. ३७। १७ ) इति। पुनः पुनर्ह्येष एषु लोकेषु वरीवर्त्यमानश्चरति ॥ १० ॥

"विश्वासां भुवां पते विश्वस्य मनसस्पते। विश्वस्य वचसस्पते सर्वस्य वचसस्पते"–इति। एतस्य सर्वस्य पत इत्येतत्। "देवश्रुत्त्वं देव घर्म देवो देवान्पाहि"–इति। नात्र तिरोहितमिवास्ति ॥ ११ ॥

"अत्र प्रावीरनु वां देववीतये"–इति। अश्विनावेवैतदाह–अश्विनौ वा एतद्यज्ञस्य शिरः प्रत्यधत्ताम्। तावेवैतत्प्रीणाति। तस्मादाह–"अत्र प्रावीरनु वां देववीतये"–इति॥ १२॥

---

मन्त्रवाक्यं संगतमित्यर्थः। अपि च 'सध्रीचीः' सहाञ्चतीः 'विषूचीः' विष्वगञ्चतीः सर्वाः 'दिशः' प्राच्याद्याः 'एषः' सूर्यः स्वतेजसा 'वस्ते' आच्छादयति। 'अथो' अपि च 'रश्मीन्' स्वकिरणान् 'वस्ते' सर्वत्र प्रसारयति। तस्मात् 'स सध्रीचीः" इति मन्त्रः सूर्ये संगतः। तदात्मकत्वात् प्रवर्ग्येऽपि संगत इत्यर्थः। अपि च 'एषः' खलु सूर्यः 'एषु लोकेषु' पृथिव्यादिषु सर्वेषु लोकेषु 'वरीवर्त्यमानः' अत्यर्थं वर्तमानः पुनःपुनश्चरति। तस्मादाह–"आ वरीवर्ति भुवनेष्वन्तः" इति ॥ १० ॥

अथान्यमवकाशमंत्रभागं संहत्यानूद्य, तात्पर्यमाह–विश्वासां भुवां॰ इत्येतदिति। "विश्वासां भुवां" इत्यादिषष्ठ्यन्तैः प्रतिपाद्यस्य 'एतस्य सर्वस्य' कृत्स्नस्य जगतः 'पते' स्वामिन्! 'इति' इममर्थम् एतन्मंत्रवाक्यमाह। अथ अन्यं मंत्रभागमनूद्य स्पष्टार्थत्वात् व्याख्यानं नापेक्षते इत्याह–देवश्रुत्त्वं॰ मिवास्तीति। अत्रास्मिन् "देवश्रुत्त्वं" इति मंत्रभागे 'तिरोहितमिव' अंतर्हितमिव व्याख्यानसापेक्षं किमपि नास्तीत्यर्थः ॥ ११ ॥

अथान्यद्वाक्यमनूद्य व्याचष्टे–अत्र प्रावीरनु वां देववीतय इति। "अत्र प्रावीः" इत्यस्मिन्मंत्रभागे 'वामिति' युष्मदादेशे तद्द्विवचनेन 'अश्विनौ' अश्विनावेव एतन्मंत्रवाक्यं 'आह' आचष्टे। अश्विनोः प्रतिपादने का अत्र प्रसक्तिः, इति तां दर्शयति–अश्विनाविति। 'अश्विनौ' खलु पुरा 'यज्ञस्य' एतत्प्रवर्ग्याख्यं 'शिरः प्रत्यधत्ताम्' प्रतिहितवन्तौ छिन्नस्य पुनः सन्धानं कृतवन्तौ। तस्मात् 'एतत्' एतेन मन्त्रभागेन तावेवाश्विनौ 'प्रीणाति' तर्पयति। 'तस्मात्' इत्यादि निगमनम् ॥ १२ ॥

मधु माध्वीभ्याम्मधु माधूचीभ्यामिति । दध्यङ् ह वाऽ आभ्यामाथर्वणो मधु नाम ब्राह्मणमुवाच तदेनयोः प्रियन्धाम तदेवैनयोरेतेनोपगच्छति तस्मादाह मधु माध्वीभ्याम्मधु माधूचीभ्यामिति ॥ १३ ॥

हृदे त्वा मनसे त्वा दिवे त्वा सूर्य्याय त्वा । ऊर्ध्वोऽ अध्वरन्दिवि देवेषु धेहीति नात्र तिरोहितमिवास्ति ॥ १४ ॥

पिता नोऽसि पिता नो बोधीति । ( त्ये ) एष वै पिता यऽएष तपत्येषऽ उ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह पिता नोऽसि पिता नो बोधीति नमस्तेऽअस्तु मा मा हिꣳसीरित्याशिषमेवैतदाशास्ते ॥ १५ ॥

( स्तेऽथ ) अथ पत्न्यै शिरोऽपावृत्य । महावीरमीक्षमाणाम्वाचयति

---

" मधु माध्वीभ्यां मधु माधूचीभ्याम् "-( वा. सं. ३७ । १८ ) इति । दध्यङ् ह वा आभ्यामाथर्वणो मधु नाम ब्राह्मणमुवाच । तदेनयोः प्रियं धाम । तदेवैनयोरेतेनोपगच्छति । तस्मादाह-" मधु माध्वीभ्यां मधु माधूचीभ्याम् "-इति ॥ १३ ॥

" हृदे त्वा मनसे त्वा दिवे त्वा सूर्याय त्वा । ऊर्ध्वो अध्वरं दिवि देवेषु धेहि "-( वा. सं. ३७ । १९ ) इति । नात्र तिरोहितमिवास्ति ॥ १४ ॥

" पिता नोऽसि पिता नो बोधि "-इति । एष वै पिता । य एष तपति । एष उ प्रवर्ग्यः । तदेतमेवैतत्प्रीणाति । तस्मादाह । "पिता नोऽसि पिता नो बोधि"-इति । "नमस्ते अस्तु मा मा हिंसीः "-इति । आशिषमेवैतदाशास्ते ॥ १५ ॥

अथ पत्न्यै शिरोऽपावृत्य । महावीरमीक्षमाणां वाचयति-" त्वष्टृमंतस्त्वा सपेम "-( वा. सं. ३७।२० ) इति । वृषा वै प्रवर्ग्यः । योषा पत्नी । मिथुनमेवैतत्प्रजननं क्रियते ॥ १६ ॥

---

अथान्यद्वाक्यमनूद्य व्याचष्टे-मधु मा०चीभ्यामिति इति । 'आथर्वणः' अथर्वणः पुत्रः 'दध्यङ्' नाम ऋषिः पुरा, आभ्यामश्विभ्यां 'मधु नाम ब्राह्मणं' मधुविद्याप्रतिपादकं ब्राह्मणं 'उवाच' उपदिदेश । तच 'एनयोः' 'प्रियं' प्रेमास्पदं 'धाम' धारकं स्थानं 'एतेन' "मधु माध्वीभ्याम्" इत्यनेन 'एनयोः' अश्विनोः 'तदेव' प्रियं धाम 'उपगच्छति' प्राप्नोति । 'तस्मात्' इत्यादि निगमनम् ॥ १३ ॥

अथ मन्त्रांतरमनूद्य स्पष्टार्थत्वात् न व्याख्यानसापेक्षमित्याह-हृदे त्वा मनसे० मिवास्तीति । हृदयाद्यर्थं त्वां स्तुमः । अत एव त्वं 'दिवि' द्युलोके 'देवेषु' मध्ये उत्कृष्टः सन् 'अध्वरं' असमदीयं यज्ञं 'धेहि' स्थापयेति अस्यार्थस्य स्पष्टत्वात् 'तिरोहितं' किमपि नास्तीत्यर्थः ॥ १४ ॥

अथान्यद्वाक्यमनूद्य व्याचष्टे-पिता नोऽसि०बोधीतीति । 'य एषः' सूर्यः 'तपति' 'एष वै पिता' सर्वेषां पालयिता । अन्यद्गतम् । अथान्यं मन्त्रभागमनूद्य व्याचष्टे-नमस्ते० शास्ते इति । 'एतत्' एतेन मन्त्रवाक्येन हिंसाभावलक्षणां 'आशिषमेव आशास्ते' प्रार्थयते ॥ १५ ॥

अथ यदुक्तं कात्यायनेन-"अपोर्णौति पत्नीशिरः । त्वष्टृमंतऽइत्येनां वाचयति महावीरमीक्षमाणाम्"

---

१-" अथ पत्न्यै शिरोऽपावृत्य " ( श. प. १४ । १ । ४ । १६ ) इति श्रुतिवाक्यात् 'पत्नीशिरः' इति समासोऽवगंतव्यः । 'न वाक्यं' इति कर्काशयः ॥

त्वष्टृमन्तस्त्वा सपेमेति व्वृषा वै प्रवर्ग्यो योषा पत्नी मिथुनमेवैतत्प्रजननङ्क्रियते ॥ १६ ॥

( तेऽथै ) अथैतद्वै । ( द्वाऽआ ) आयुरेतज्ज्योतिः प्रविशति यऽएतमनु वा ब्रूते भक्षयति वा तस्य व्रतचर्य्या या सृष्टौ ॥ १७ ॥

इति प्रथमप्रपाठके चतुर्थं ब्राह्मणम् ॥ १४।१।४ ॥ ( १-४ ) ॥

इति प्रथमोऽध्यायः समाप्तः ॥ १४-१ ॥ कण्डिकासंख्या ॥ ११० ॥

---

अथ एतद्वा आयुः, एतज्ज्योतिः प्रविशति । य एतमनु वा ब्रूते । भक्षयाति वा । तस्य व्रतचर्या-या सृष्टौ ॥ १७ ॥

---

( का. श्रौ. सू. २६।६९।७० ) इति । तदेतद्विधत्ते-अथ पत्न्यै शिरो०सपेमेतीति । अथावकाशोपस्थानानंतरं पत्न्याः शिरःप्रावरणं 'अपावृत्य' विसृज्य 'महावीरमीक्षमाणां' पश्यन्तीं "त्वष्टृमन्तः" इति मन्त्रं 'वाचयति'। अथैतत् स्तौति-व्वृषा वै प्रवर्ग्यो योषा पत्नी मिथुनमेवैतत्प्रजननं क्रियते इति । 'वृषा' वर्षणसमर्थः पुमान् प्रवर्ग्यः । 'पत्नी योषा' स्त्री । तथा च 'एतत्' एतेन मिथुनेन 'प्रजननं' प्रजोत्पत्तिसाधनं 'क्रियते'। प्रजोत्पत्तिसाधनेन 'एनं' प्रवर्ग्यं समर्द्धयति । ततो यज्ञमपि कृत्स्नं संपूर्णं करोति ॥ १६॥

ब्राह्मणांतरावसानवत् अत्रापि पूर्वोक्तां व्रतचर्यामतिदिशति-अथैतद्वै०सृष्टाविति । एतत्प्रथमब्राह्मणावसाने व्याख्यातम् । 'या' सृष्टिप्रतिपादके तस्मिन् ब्राह्मणे 'व्रतचर्या' आम्नाता सैव एतत् ब्राह्मणं अधीयानस्य अनुतिष्ठतश्च व्रतचर्या ॥ १७ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये
चतुर्दशकाण्डे तदन्तर्भूते प्रथमे प्रवर्ग्यकाण्डे प्रथमेऽध्याये
चतुर्थं ब्राह्मणम् ॥ १४ । ( १ ) १ । ४ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं,
सप्ताब्धीन्पञ्चसीरीस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटं च ॥
धान्याद्रिं धन्यजन्मा तिलभवमतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान्गुडकृतमजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणजमनृणः शार्करं चार्कतेजा,
रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये चतुर्दशकाण्डे तदन्तर्भूते प्रथमे प्रवर्ग्यकाण्डे प्रथमोऽध्यायः समाप्तः ॥ ( १४ ( १ )-१ ) ॥

# अथ द्वितीयेऽध्याये प्रथमं ब्राह्मणम् ।

## प्रथमप्रपाठके च पञ्चमं ब्राह्मणम् ।

अथातो रौहिणौ जुहोति । (त्य) अहः केतुना जुषताᳬं सुज्योतिर्ज्योतिषा स्वाहेत्युभावेतेन यजुषा प्रातः रात्रिः केतुना जुषताᳬं सुज्योतिर्ज्योतिषा स्वाहेत्युभावेतेन यजुषा सायम् ॥ १ ॥

(न्त) तद्यद्रौहिणौ जुहोति । (त्य) अग्निश्च ह वाऽआदित्यश्च रौहिणावेताभ्याᳬं हि देवताभ्यां यजमानाः स्वर्गं लोकᳬं रोहन्ति ॥ २ ॥

---

### अथ गवाजपयोऽवसेचनं ब्राह्मणम् ।

अथातो रौहिणौ जुहोति । "अहः केतुना जुषतां सुज्योतिर्ज्योतिषा स्वाहा"–इति । उभावेतेन यजुषा प्रातः । "रात्रिः केतुना जुषतां सुज्योतिर्ज्योतिषा स्वाहा"–(वा. सं. ३७।२१) इति । उभावेतेन यजुषा सायम् ॥ १ ॥

तद्यद्रौहिणौ जुहोति । अग्निश्च ह वा आदित्यश्च रौहिणौ । एताभ्यां हि देवताभ्यां यजमानाः स्वर्गं लोकं रोहन्ति ॥ २ ॥

---

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

घर्मस्य सृष्टिसंभारौ तथा घर्मसमिंधनम् । अवकाशोपस्थितिश्च प्रथमेऽध्याय ईरिताः ॥ २ ॥

अथ द्वितीयाध्यायस्य प्रथमब्राह्मणेन आज्यपूर्णे महावीरे गवाजयोः पयसोः आसेचनं विधत्ते तत्र तयोर्दोहनात्पूर्वं तदासेचनोत्तरकालं च होतव्ययोः रौहिणपुरोडाशयोः होमं विधत्ते–**अथातो रौहिणौ जुहोतीति** । 'अथ' पत्नीवाचनानंतरं यतः एतौ रौहिणहोमौ प्रवर्ग्यस्य आज्यभागवत् चक्षुष्ट्वेन वक्ष्यमाणप्रकारेण संस्तुतौ । 'अतः' अस्मात्कारणात् प्रवृंजनात् पूर्वं 'रौहिणौ' पुरोडाशौ 'जुहोति' । तत्र प्रातःकालीने प्रवर्ग्ये "अहः केतुना" इत्येतेन 'यजुषा' 'उभौ' पुरोडाशौ जुहोति । सायंकालीने तु प्रवर्ग्ये "रात्रिः केतुना" इत्येतेन 'यजुषा' 'उभौ' रौहिणौ जुहोति ॥ १ ॥

अथ एतौ पुरोडाशौ अग्न्यादित्यात्मना स्तौति–**तद्यद्रौहिणौ जुहोतीति** । तत्तत्र 'यत्' यस्मात् 'रौहिणौ' पुरोडाशौ 'जुहोति' । तस्मात् 'एताभ्यां' साधनाभ्यां यजमानः 'स्वर्गं लोकं आरोहति' इति वाक्य

---

१–अहः केतुनेति दक्षिणः रौहिणं जुहोति । का. श्रौ. सू २६ । ७ । १ ।
२–रात्रिरिति सायम् । का. श्रौ. सू. २६ । ७ । १ ।

( न्त्यु ) अथोऽअहोरात्रे वै रौहिणौ । (णावा) आदित्यः प्रवर्ग्योऽमुन्तदादित्यमहोरात्राभ्याम्परिगृह्णाति तस्मादेषोऽहोरात्राभ्याम्परिगृहीतः ॥३॥

( तोऽथो ) अथोऽइमौ वै लोकौ रौहिणौ । (णावा) आदित्यः प्रवर्ग्योऽमुं तदादित्यमाभ्यां लोकाभ्याम्परिगृह्णाति तस्मादेषऽआभ्यां लोकाभ्याम्परिगृहीतः ॥ ४ ॥

( तोऽथो ) अथो चक्षुषी वै रौहिणौ । शिरः प्रवर्ग्यः शीर्षंस्तच्चक्षुर्दधाति ॥ ५ ॥

---

अथो अहोरात्रे वै रौहिणौ । आदित्यः प्रवर्ग्यः । अमुं तदादित्यमहोरात्राभ्यां परिगृह्णाति । तस्मादेषोऽहोरात्राभ्यां परिगृहीतः ॥ ३ ॥

अथो इमौ वै लोकौ रौहिणौ । आदित्यः प्रवर्ग्यः । अमुं तदादित्यमाभ्यां लोकाभ्यां परिगृह्णाति । तस्मादेष आभ्यां लोकाभ्यां परिगृहीतः ॥ ४ ॥

अथो चक्षुषी वै रौहिणौ । शिरः प्रवर्ग्यः । शीर्षंस्तच्चक्षुर्दधाति ॥ ५ ॥

---

शेषोऽध्याहर्तव्यः । अथैतदुपपाद्यते—यौ एतौ 'रौहिणौ' तौ क्रमेण 'अग्निश्चादित्यश्च' खलु देवताद्वयात्मकौ । 'एताभ्यां हि' सायंप्रातःकालीनाग्निहोत्रदेवताभ्यां अग्निहोत्रानुष्ठायिनो 'यजमानाः' तत्फलभूतं 'स्वर्गं लोकं रोहंति' आरोहन्ति । तस्मात् रोहणसाधनत्वात् अग्न्यादित्यावेव रौहिणौ । अतः तदात्मकरौहिणहोमात् यजमानोऽपि स्वर्गं लोकं प्राप्नोतीत्यर्थः ॥ २ ॥

अथ अहोरात्रात्मना रौहिणौ स्तौति—अथो अहोरात्रे वै रौहिणाविति । 'अथो' अपि च 'अहोरात्रे वै' अहोरात्रात्मकौ खलु रौहिणपुरोडाशौ । तयोर्मध्ये वर्तमानः उद्यन् अस्तं गच्छन् 'आदित्यः प्रवर्ग्यः' । तत्ततः 'अमुं' आदित्यात्मकं प्रवर्ग्यम् अहोरात्राभ्यामेव 'परिगृह्णाति' । यस्मादेवं 'तस्मात्' 'एषः' दिवि वर्तमान आदित्यः 'अहोरात्राभ्यां परिगृहीतः' पुरतः पृष्ठतश्च परिवृतः ॥ ३ ॥

अथ द्यावापृथिव्यात्मना रौहिणौ स्तौति—अथोऽ इमौ वै लोकौ रौहिणाविति । 'अथो' अपि च 'इमौ' द्यावापृथिव्यात्मकौ 'लोकौ' खलु 'रौहिणौ' रौहिणपुरोडाशौ । प्रवर्ग्यस्तु तयोर्मध्ये वर्तमानः 'आदित्यः' । 'तत्' ततः 'अमुमादित्यं' आदित्यात्मकं प्रवर्ग्यम् आभ्यामेव 'लोकाभ्यां परिगृह्णाति' परितः उभयतः गृह्णाति । यस्मात् एवं प्रवर्ग्यः पुरोडाशाभ्यां परिगृहीतः, तस्मादेव कारणात् 'एषः' आदित्यः आभ्यामेव लोकाभ्यां 'परिगृहीतः' अधस्तात् उपरिष्टाच्च संवृतो वर्तते ॥ ४ ॥

अथ एतौ चक्षुष्ट्वेन स्तौति—अथो चक्षुषी वै रौहिणाविति । 'अथो' अपि च एतौ रौहिणपुरोडाशौ यज्ञस्य चक्षुःस्थानीयौ । तस्य 'शिरः प्रवर्ग्यः' । तत्तथा च 'शीर्षन्' शिरसि 'चक्षुर्दधाति' धारितवान् स्थापितवान् भवति ॥ ५ ॥

**( त्यु ) अथ रज्जुमादत्ते । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददेऽदित्यै रास्नाऽसीत्यसावेव बन्धुः ॥ ६ ॥**

**( रु ) अथ गामाह्वयति । जघनेन गार्हपत्यं यन्निड एह्यदित एहि सरस्वत्येहीतीडा हि गौरदितिर्हि गौः सरस्वती हि गौरथोच्चैराह्वयति नाम्नाऽसावेह्यसावेह्यसावेहीति ❀ त्रिः ॥ ७ ॥**

---

अथ रज्जुमादत्ते–“ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददेंऽदित्यै रास्नाऽसि । ”–( वा. सं. ३८ । १ ) इति । असावेव बंधुः ॥ ६ ॥

अथ गामाह्वयति जघनेन गार्हपत्यं यन्–“इड एहि, अदित एहि, सरस्वत्येहि”–इति । इडा हि गौः । अदितिर्हि गौः । सरस्वती हि गौः । अथोच्चैराह्वयति नाम्ना–“ असावेहि, असावेहि * ”–( वा० सं० ३८ । २ ) इति त्रिः ॥ ७ ॥

---

अथ दोहनार्थं समन्त्रकं रज्ज्वादानं विधत्ते–अथ रज्जुमादत्ते० बन्धुरिति । ‘ अथ ’ रौहिणहोमानन्तरं “ देवस्य त्वेति ” मन्त्रेण गोर्बंधनार्थं रज्जुमादत्ते । सवित्रश्व्यादिबहुदेवताप्रकाशकत्वात् ‘ असावेव ’ मन्त्रः ‘ बन्धुः ’ । छिन्नस्य यज्ञशिरसः बन्धकः ॥ ६ ॥

अथ दैवीभिः संज्ञाभिः घर्मदुहो गोराह्वानं विधत्ते–अथ गामाह्वयति० सरस्वत्येहीतीति । ‘ अथ ’ रज्ज्वादानानन्तरं ‘ जघनेन गार्हपत्यं यन् ’ गार्हपत्यस्यादूरेण पश्चिमदेशेन गच्छन् अध्वर्युः “ इड एहि ” इत्यादिभिः त्रिभिर्वाक्यैरुपांशु गामाह्वयति । इडाऽदितिसरस्वतीशब्दाः गोर्वैदिकाः संज्ञाः । तथा च तैत्तिरीयके गर्गत्रिरात्रे सहस्रतमीं गां प्रस्तुत्य एवमाम्नायते–“ इडे रंतेऽदिते सरस्वति प्रिये प्रेयसि महि विश्रुति एतानि ते अघ्निये नामानि” ( तै.सं. ७।१।६। ) ” इति । इमां प्रसिद्धिं हिशब्देन द्योतयन् इडादिशब्दाः गोर्नामानीति व्याचष्टे–इडा हि० हि गौरिति । अथ लौकिकेन नाम्ना तस्या आह्वानं विधत्ते–अथोच्चैराह्वयति० त्रिरिति । ‘अथ’ देवनामभिराह्वानानन्तरं ‘ असावेहि ’ इति लौकिकेन नाम्ना त्रिरुच्चैराह्वयति । “ असौ ” इति अदस्शब्दः संबुद्ध्यन्तनामसामान्यनिर्देशार्थः । त्रिराह्वानस्याभिनयार्थमसावेहीति त्रिर्वचनम् । अयमर्थः–यत् गोः नाम व्यावहारिकं गंगादिकं नाम तत्संबुद्ध्यन्तमुक्त्वा तेन एहीति पदं संयोज्य “ गंगे एहि ” इत्येवंप्रकारेण त्रिराह्वानं कार्यमिति । एवं द्विविधैर्नामभिर्घर्मदुहोगोराह्वानं तित्तिरिणा स्पष्टमाम्नातम्–“ इड एह्यदित एहि सरस्व-

---

* असावेहि इत्यस्य त्रिवारमुच्चारणं मंत्रपाठानुसारेण “ नाम्ना च त्रिरुच्चैः ” इति कातीयसूत्रीयप्रयोगप्रदर्शनार्थं भाष्यकारैर्भाष्ये प्रदर्शितम् । मूले ब्राह्मणे तु द्विवारमेव पाठः आदर्शपुस्तकेषु सर्वेष्वपि द्विवारमेव पाठोऽस्ति ।

१–देवस्य त्वेति रज्जुसंदानमादाय । का. श्रौ. सू. २६ । ७२ । रज्जुसंदानं घर्मधुग्बन्धनार्था या पाशवती रज्जुः तस्या एव पश्चात्पादबंधनार्थं संदानं तदादायेति कर्कः ।

२–इड एहीति गामाह्वयति । अपरेण गार्हपत्यं गच्छन् का. श्रौ. सू. २६ । ७२ ।

३–शतपथेऽपि गर्गत्रिरात्रे “ तद्यत्रैतत्त्रिरात्रे सहस्रं ददाति ” इत्युपक्रम्य “ अथ दक्षिणे कर्ण आजपति इडे रन्ते हव्ये काम्ये चन्द्रे ज्योतेऽदिति सरस्वति महि विश्रुति । एता ते अघ्न्ये नामानि देवेभ्यो मा सुकृतम्ब्रूतादिति वोचेरिति वैतानि ह वा अस्यै देवत्रा नामानि सा यानि ते देवत्रा नामानि तैर्मा देवेभ्यः सुकृतं ब्रूतादित्येवैतदाह ” श. प. ४।५। ८। १०। इति । “ इडे रंते० ” । वा. सं. ८ । ४३ ।

४–नाम्ना च त्रिरुच्चैः । अपरेण गार्हपत्यं गच्छन् । का. श्रौ. सू. २६ । ७२ ।

( स्ता ) तामागतामभिदधाति । ( त्यु ) अदित्यै रास्नाऽसीन्द्राण्याऽ उष्णीषऽ इतीन्द्राणी ह वाऽइन्द्रस्य प्रिया पत्नी तस्याऽ उष्णीषो विश्वरूपतमः सोऽसीति तदाह तमेवैनमेतत्करोति ॥ ८ ॥

( त्यु ) अथ वत्समुपार्जति । पूषाऽसीत्ययम्वै पूषा योऽयम्पवतऽएष हीदꣳ सर्वम्पुष्यत्येषऽ उ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह पूषाऽसीति ॥ ९ ॥

---

तामागतामभिदधाति–" अदित्यै रास्नाऽसीन्द्राण्या उष्णीषः "–इति । इन्द्राणी ह वा इन्द्रस्य प्रिया पत्नी । तस्या उष्णीषो विश्वरूपतमः । सोऽसीति तदाह । तमेवैनमेतत्करोति ॥८॥

अथ वत्समुपार्जति–"पूषाऽसि"–इति । अयं वै पूषा । योऽयं पवते । एष हीदं सर्वं पुष्यति । एष उ प्रवर्ग्यः । तदेतमेवैतत्प्रीणाति । तस्मादाह–" पूषाऽसि "–इति ॥ ९ ॥

---

त्येहीत्याह । एतानि वा अस्यै देवनामानि । देवनामैरेवैनामाह्वयति । असावेह्यसावेह्यसावेहीत्याह । एतानि वा अस्यै मनुष्यनामानि । मनुष्यनामैरेवैनामाह्वयति " तै. आ. ५।७।१ ) इति ॥ ७ ॥

एवं उभयविधैर्नामभिराहूताया आगतायास्तस्याः बन्धनं विधत्ते–**तामागतामभिदधाति० उष्णीष इतीति** । 'तां' घर्मदुघां धेनुं 'आगतां' देवयजनदेशं प्राप्तां " अदित्यै रास्नाऽसि " इति मन्त्रेण पूर्वमुपात्तया रज्ज्वा 'अभिदधाति' बध्नाति । " इन्द्राण्या उष्णीषः " इति मन्त्रभागस्य तात्पर्यमाह–**इन्द्राणी ह वा० तत्करोतीति** । 'इन्द्राणी' नाम इन्द्रस्य प्रियतमा 'पत्नी' जाया । 'तस्याः' 'उष्णीषः' शिरोवेष्टनं 'विश्वरूपतमः' अतिशयेन सर्वरूपयुक्तः शुक्लकृष्णपीतादिनानावर्णयुक्तत्वेन चित्रभूत इत्यर्थः । तत्तेन मन्त्रभागेन हे रज्जो ! 'सः' उक्तलक्षणः उष्णीषः 'असि' भवसि इत्याह प्रतिपादयति । अध्वर्युश्च 'एतत्' एतेन मन्त्रेण अस्या धेनोः 'तमेव' उष्णीषं 'करोति' मन्त्रपाठेन निर्वर्तयति ॥ ८ ॥

अथ दोहनाय वत्सविसर्जनं विधत्ते–**अथ वत्स० पूषाऽसीतीति** । 'अथ' रज्ज्वा बन्धनानन्तरं 'वत्सं उपार्जति' उपसृजति " पूषाऽसि " इत्यनेन मन्त्रेण । एतन्मन्त्रप्रयोगमुपपाद्य उपसंहरति–**अयं वै० पूषाऽसीतीति** । 'यः अयमंतरिक्षे' वायुः 'पवते' 'अयं' खलु 'पूषा' । कुत एतदिति चेदुच्यते । 'एषः' खलु वायुः 'इदं सर्वं' जगत् 'पुष्यति' पोषयति । यदिदं किंच जगद्वर्षति मेघैश्च आत्मना प्रेरितैः वृष्टिं उत्पाद्य सिंचति । तस्मात्पोषकत्वात् वायुरेव पूषा इत्युच्यते । अपि च एष एव वायुः एतासां गवां पोषयिता वर्द्धयिता । तथा च तैत्तिरीयके वत्सापाकरणमन्त्रव्याख्यानरूपे ब्राह्मणे पशूनां वाय्वधीनत्वं स्पष्टमवगम्यते–"वायव स्थेत्याह । वायुर्वाऽअंतरिक्षस्याध्यक्षः । अंतरिक्षदेवत्याः खलु वै पशवः । वायव एवैनान् परिददाति " इति । यस्मादेवं तस्माद्वत्समुपसृजन् अध्वर्युः " पूषाऽसि " इति मन्त्रं ब्रूयात् ॥ ९ ॥

---

१–अदित्यै रास्नेति गां पाशेन प्रतिमुच्य स्थूणायां बद्ध्वा का. श्रौ. सू. २६ । ७४ ।
२–पूषाऽसीति वत्समुत्सृजति । का. श्रौ. सू. २६ । ७४ । वत्सं तदीयम् इति कर्कः ।

( त्य ) अथोन्नयति । घर्माय दीष्वेत्येष वाऽअत्र घर्मो रसो भवति यमेषा पिन्वते तस्मै दयस्वेत्येवैतदाह ॥ १० ॥

( ह्रा ) अथ पिन्वने पिन्वयति । ( त्यु ) अश्विभ्याम्पिन्वस्वेत्यश्विना-वेवैतदाहाश्विनौ वाऽ एतद्यज्ञस्य शिरः प्रत्यधत्तान्तावेवैतत्प्रीणाति तस्मादाहाश्विभ्याम्पिन्वस्वेति ॥ ११ ॥

सरस्वत्यै पिन्वस्वेति । वाग्वै सरस्वती वाचा वाऽएतदश्विनौ यज्ञस्य शिरः प्रत्यधत्तान्तावेवैतत्प्रीणाति तस्मादाह सरस्वत्यै पिन्वस्वेति ॥ १२ ॥

---

अथोन्नयति–" घर्माय दीष्व "–( वा. सं. ३८।३ ) इति । एष वा अत्र घर्मो रसो भवति । यमेषा पिन्वते । तस्मै दयस्वेत्येवैतदाह ॥ १० ॥

अथ पिन्वने पिन्वयति–" अश्विभ्यां पिन्वस्व "–इति । अश्विनावेवैतदाह । अश्विनौ वा एतद्यज्ञस्य शिरः प्रत्यधत्ताम् । तावेवैतत्प्रीणाति । तस्मादाह–"अश्विभ्यां पिन्वस्व"–इति॥ ११॥

" सरस्वत्यै पिन्वस्व "–इति । वाग्वै सरस्वती । वाचा वा एतदश्विनौ यज्ञस्य शिरः प्रत्यधत्ताम् । तावेवैतत्प्रीणाति । तस्मादाह–" सरस्वत्यै पिन्वस्व " इति ॥ १२ ॥

---

अथ वत्सस्य पुनर्बन्धनं विधत्ते–अथोन्नयति घर्म्माय दीष्वेतीति । वत्समुपसृज्य प्रस्तुतायां गवि ' अथ ' अनंतरं " घर्म्माय दीष्व " इति मन्त्रेण तं वत्सं ' उन्नयति ' उत्कृष्य ऊधःप्रदेशात् अन्यत्र नयति पुरतो बध्नातीत्यर्थः । अथ एतत् व्याचष्टे–एष वा अत्र घर्मो रसो भवति०तदाहेति । 'यं' पयआत्मकं रसं ' एषा ' गौः ' पिन्वते ' सिंचति दुग्धे 'एष एव रसोऽत्र' अस्मिन्मन्त्रे ' घर्मः ' घर्मशब्दाभिधेयः ' भवति ' ' तस्मै ' रसाय, तादर्थ्ये चतुर्थी, रसात्मकं घर्मोपयुक्तं पयः ' दयस्व ' देहीति इममेवार्थं एतन्मन्त्रवाक्यमाह । " दय दानगतिरक्षणहिंसाऽऽदानेषु " ( धा. पा. भ्वा. आ. ४८२ ) इति धातुः । एवं " घर्माय दीष्व " इति मन्त्रावयवयोः पदयोः समवेतार्थत्वं भवतीत्यर्थः ॥ १० ॥

अथ दोहनं विधत्ते-अथ पिन्वने पिन्वयत्याश्विभ्यां पिन्वस्वेतीति । ' अथ ' वत्सोन्नयनानंतरं 'पिन्वने' दोहनपात्रे ' पिन्वयति ' सेचयति गां दोग्धि " अश्विभ्याम् " इति मन्त्रेण । अस्य मन्त्रप्रथमभागस्य तात्पर्यमाह–अश्विनावेवै० पिन्वस्वेति । ' यज्ञस्य ' एतत् ' छिन्नं ' शिरः ' ' अश्विनौ ' खलु देवौ पुरा ' प्रत्यधत्तां ' संधानं कृतवन्तौ 'एतत्' एतेन मन्त्रवाक्येन 'तावेव प्रीणाति' तर्पयति । यस्मादेवं तस्मात्कारणात् " अश्विभ्यां " इति वाक्यं ब्रूयात् ॥ ११ ॥

अथ द्वितीयं भागमनूद्य व्याचष्टे–सरस्वत्यै पिन्वस्वेतीति । अत्र ' सरस्वत्यै ' इति सरस्वतीशब्देन वागेव

---

१–संदाय घर्माय दीष्वेति वत्समुन्नयति । का. श्रौ. सू. २६ । ७५ । संदानं घर्मदुहो गोः पश्चात् पादयोर्नियुज्येति संदायेत्यस्यार्थः । २–अश्विभ्यां पिन्वस्वेति पिन्वने दोग्धि । का. श्रौ. सू. २६ । ७६ । घर्मदुहं गामिति शेषः ।

३०५१

( त्री ) इन्द्राय पिन्वस्वेति । ( त्री ) इन्द्रो वै यज्ञस्य देवता सा यैव यज्ञस्य देवता तयैवैतदश्विनौ यज्ञस्य शिरः प्रत्यधत्तान्तावेवैतत्प्रीणाति तस्मादाहेन्द्राय पिन्वस्वेति ॥ १३ ॥

( त्यु ) अथ विप्रुषोऽभिमन्त्रयते । स्वाहेन्द्रवत्स्वाहेन्द्रवदितीन्द्रो वै यज्ञस्य देवता सा यैव यज्ञस्य देवता तामेवैतत्प्रीणाति तस्मादाह स्वाहेन्द्रवत्स्वाहेन्द्रवदिति त्रिष्कृत्वऽआह त्रिवृद्धि यज्ञोऽवरᳪ स्वाहाकारङ्करोति परान्देवतामसावेव बन्धुः ॥ १४ ॥

---

"इन्द्राय पिन्वस्व"–इति । इन्द्रो वै यज्ञस्य देवता । सा यैव यज्ञस्य देवता । तयैवैतदश्विनौ यज्ञस्य शिरः प्रत्यधत्ताम् । तावेवैतत्प्रीणाति । तस्मादाह–" इन्द्राय पिन्वस्व "–इति ॥ १३ ॥

अथ विप्रुषोऽभिमन्त्रयते–" स्वाहेन्द्रवत्स्वाहेन्द्रवत् "–( वा. सं. ३८ । ४ ) इति । इन्द्रो वै यज्ञस्य देवता । सा यैव यज्ञस्य देवता । तामेवैतत्प्रीणाति । तस्मादाह–" स्वाहेन्द्रवत् स्वाहेन्द्रवत् "–इति । त्रिष्कृत्व आह । त्रिवृद्धि यज्ञः । अवरं स्वाहाकारं करोति । परां देवताम् । असावेव बंधुः ॥ १४ ॥

---

उच्यते । 'अश्विनौ' हि 'वाचा' मन्त्ररूपया खलु पुरा 'यज्ञस्य' 'एतच्छिरः' 'प्रत्यधत्ताम्' । अतः यज्ञशिरःसंधानसाधनभूतां तामेव वाचं 'एतत्' एतेन " सरस्वत्यै पिन्वस्व " इति मन्त्रभागेन 'प्रीणाति' तर्पयति । " तस्मात् " इत्यादि पूर्ववन्निगमनम् ॥ १२ ॥

अथ तृतीयभागमनूद्य व्याचष्टे–इन्द्राय पिन्वस्वेतीति । 'इन्द्रः' एव खलु 'यज्ञस्य' सोमयागस्य प्रधानभूता 'देवता' । कार्त्स्न्येन माध्यंदिनसवनभाक्त्वात् । तद्धि यज्ञस्य शरीरम् । गृहस्य पृष्ठवंशस्थानीयैः पृष्ठस्तोत्रैः उपेतत्वात् । तस्मात् 'सा' तादृशी 'या एव' यज्ञस्य'देवता' 'तयैव' देवतया साधनभूतया 'अश्विनौ' एतद् 'यज्ञस्य शिरः प्रत्यधत्ताम्' । अतस्तामेव देवतां एतदेतेन मन्त्रभागेन 'प्रीणाति' तर्पयति । यस्मादेवं 'तस्मात्' देवताप्रतिपादकं " इन्द्राय पिन्वस्व " इति मन्त्रवाक्यं ब्रूयात् ॥ १३ ॥

अथ दोहनसमये सर्वतः प्रसृतानां विप्रुषामभिमन्त्रणं विधत्ते–अथ विप्रुषो० वदितीति । " स्वाहेन्द्रवत् " इति मंत्रं त्रिर्ब्रुवन् 'विप्रुषः' दोहनसमयोत्पन्नान् बिंदून् 'अभिमन्त्रयते' । तत्रेन्द्रशब्दस्य तात्पर्यमाह–इन्द्रो वै यज्ञस्य देवता० तामेवैतत्प्रीणातीति । व्याख्यातमेतत् । उक्तमर्थं हेतूकृत्य निगमयति–तस्मादाह० न्द्रवदितीति । अथैतत्पाठप्राप्तं त्रिर्वचनमनूद्य स्तौति–त्रिष्कृत्व आह त्रिवृद्धि यज्ञ इति । त्रिष्कृत्वस्त्रिवारं 'स्वाहेन्द्रवदिति' मंत्रं ब्रूयात् । 'हि' यस्मात् यज्ञस्त्रिवृत् त्रिगुणितः गार्हपत्याहवनीयदक्षिणाग्निरूपेण प्रातःसवनादिभेदेन वा । अथ मन्त्रादौ वर्तमानं स्वाहाकारं प्रशंसति–अवरᳪ स्वाहाकारं० वंधुरिति । सिद्धमेतत् ॥ १४ ॥

---

१–स्वाहेन्द्रवदिति विप्रुषोऽभिमंत्रयते । का. श्रौ. सू. २६ । ७७ ।

(उ) अथास्यै स्तनमभिपद्यते । यस्ते स्तनः शशयो यो मयोभूरिति यस्ते स्तनो निहितो गुहायामित्येवैतदाह यो रत्नधा वसुविद्यः सुदत्र इति यो धनानान्दाता वसुवित्पणाय्य इत्येवैतदाह येन विश्वा पुष्यसि वार्य्याणीति येन सर्वान्देवान्त्सर्व्वाणि भूतानि बिभर्षीत्येवैतदाह सरस्वति तमिह धातवेऽकरिति वाग्वै सरस्वती सैषा घर्मदुघा यज्ञो वै वाग्यज्ञमस्मभ्यम्प्रयच्छ येन देवान्प्रीणामेत्येवैतदाहाथ गार्हपत्यस्यार्द्धमैत्युर्व्वन्तरिक्षमन्वेमीत्यसावेव बन्धुः ॥ १९ ॥

---

अथास्यै स्तनमभिपद्यते–" यस्ते स्तनः शशयो यो मयोभूः "–इति । यस्ते स्तनो निहितो गुहायाम् इत्येवैतदाह । " यो रत्नधा वसुविद्यः सुदत्रः "–इति । यो धनानां दाता वसुवित्पणाय्यः । इत्येवैतदाह । "येन विश्वा पुष्यसि वार्याणि"–इति । येन सर्वान्देवान्त्सर्वाणि भूतानि बिभर्षि । इत्येवैतदाह । " सरस्वति तमिह धातवेऽकः "–इति । वाग्वै सरस्वती । सैषा घर्मदुघा । यज्ञो वै वाक् । यज्ञमस्मभ्यं प्रयच्छ । येन देवान्प्रीणाम । इत्येवैतदाह । अथ गार्हपत्यस्यार्द्धमैति । " उर्वन्तरिक्षमन्वेमि "–(वा. सं. ३८ । ९) इति । असावेव बंधुः॥ १९॥

---

यदुक्तं सूत्रकारेण–"यस्ते स्तन इति स्तनमालभते" (का. श्रौ. सू. २६ । ७८) इति, तद्विधत्ते–**अथास्यै स्तन० मयोभूरितीति** । ' अथ ' विप्रुडभिमन्त्रणानंतरं ' अस्यै ' अस्याः धेनोः ' स्तनं अभिपद्यते ' आलमेत । " यस्ते स्तनः " इति मन्त्रेणाभिमृशेदित्यर्थः । अथ अस्य उपात्तस्य मन्त्रप्रथमभागस्य तात्पर्यं व्याचष्टे–**यस्ते स्तनो० तदाहेति** । हे घर्मधुक् धेनो ' ते ' तव ' स्तनः गुहायां ' अस्माभिरदृश्ये दिव्येऽवस्थाने ' निहितः ' निक्षिप्तो बभूवेति । योऽयमर्थः, इममेवार्थं एतन्मंत्रवाक्यमाह । अथ द्वितीयभागमनूद्य व्याचष्टे–**यो रत्नधा० तदाहेति** ' यः ' स्तनः ' रत्नधा ' रत्नानां रमणीयानां धनानां धाता दाता । ' वसुवित् ' वसूनां कनकरजतादीनां वेदिता लंभयिता । ' यः सुदत्रः ' शोभनदाता । अत एव ' पणाय्यः ' स्तुत्यः एवं गुणविशिष्टो हि पुरुषो लोके स्तूयते इति एवंरूपमेवार्थमेतन्मंत्रवाक्यमाह । अथ तृतीयभागमनूद्य व्याचष्टे–**येन विश्वा० तदाहेति** । ' येन ' खलु स्तनेन ' सर्वान्देवान् ' हविर्भागार्हान् ' सर्वाणि च भूतानि ' पशुपक्षिमृगमनुष्यादीनि ' बिभर्षि ' पोषयसि इति इममेवार्थमेतन्मंत्रवाक्यमाह । अथ चतुर्थपादमनूद्य व्याचष्टे–**सरस्वति तमिह० तदाहेति** । अत्र प्रतिपाद्यमाना ' सरस्वती ' ' वाग्वै ' वागात्मिकैव न तु नदीरूपा । सैव सरस्वती ' एषा घर्मदुघा ' घर्मस्य घर्मार्थस्य पयसः दोग्ध्री धेनुः । " सरस्वत्येहि " इत्याह्वानमन्त्रे तस्यास्तादात्म्यप्रतिपादनात् साऽत्र वाक् ' यज्ञो वै ' यज्ञ एव । स्तुतशस्त्रादिरूपया तयैव तस्य निष्पाद्यत्वात् । अतः ' यज्ञं अस्मभ्यं प्रयच्छ ' । ' येन ' खलु यज्ञेन वयं ' देवान् ' हविर्भुजः ' प्रीणाम '

---

१–अत्र कर्कः–काण्वपाठे स्तनानालभते इति । तथा च सर्वेषामालंभः युगपत्, सन्नयत्वात् । इति । एवं प्रतिप्रस्थाताऽञ्जां मयूखे तूष्णीम् । का. श्रौ. सू. २६ । ७९ । दोग्धीति शेषः । कर्मपरिपाटी चैवम् । पाशप्रतिमोकः मयूखे बंधनं बर्करोऽर्थः पयस्तनयोः संदानं बर्करोन्नयनं पिन्वने दोहनं विप्रुडभिमंत्रणं सर्वस्तनालंभो युगपत् : इति ।

**( ७ ) अथ शफावादत्ते । गायत्रमसि छन्दोऽसि त्रैष्टुभमसि छन्दोऽसीति गायत्रेण चैवैनावेतत्त्रैष्टुभेन च छन्दसाऽऽदत्ते द्यावापृथिवीभ्यां त्वा परिगृह्णामीतीमे वै द्यावापृथिवी परीशासावादित्यः प्रवर्ग्योऽमुन्तदादित्यमाभ्यां द्यावापृथिवीभ्याम्परिगृह्णात्यथ मौञ्जेन वेदेनोपमार्ष्ट्यसावेव बन्धुः ॥ १६ ॥**

---

अथ शफावादत्ते–" गायत्रं छंदोऽसि त्रैष्टुभं छंदोऽसि "–इति । गायत्रेण चैवैनावेतत्त्रैष्टुभेन च च्छंदसाऽऽदत्ते–"द्यावापृथिवीभ्यां त्वा परिगृह्णामि" इति । इमे वै द्यावापृथिवी परीशासौ । आदित्यः प्रवर्ग्यः । अमुं तदादित्यमाभ्यां द्यावापृथिवीभ्यां परिगृह्णाति । अथ मौञ्जेन वेदेनोपमार्ष्टि । असावेव बंधुः ॥ १६ ॥

---

तर्पयाम इति अमुमेवार्थमेतन्मन्त्रवाक्यं सरस्वतिशब्देन प्रतिपादयति । यद्यपि इह " हे सरस्वति ! तथाविधम् उक्तलक्षणं त्वदीयं स्तनं इहास्मिल्लोके ' धातवे ' धातुं पातुं ' अकः ' कुरु " इति मन्त्रार्थः प्रतीयते । तथापि सरस्वतिशब्दसूचितः अर्थः ब्राह्मणे व्याख्यायते इति द्रष्टव्यम् । एवं दुग्ध्वा उत्थाय होत्रा " उपद्रव पयसा " इत्युच्यमाने गार्हपत्यसमीपं गच्छेत् इत्याह–**अथ गार्हपत्यस्या० बंधुरिति** । ' अथ ' दोहनानंतरं ' गार्हपत्यं ' " उर्वंतरिक्षं " इति मन्त्रेण गच्छेत् । 'असावेव' खलु अग्निः बंधुर्बंधकः । तथा च कात्यायनेनोक्तम्– " उपद्रव पयसेत्युच्यमाने गच्छेत्युर्व्वन्तरिक्षमिति " ( का. श्रौ. सू. २६ । ८२ ) इति ॥ १९ ॥

अथैतस्य महावीरस्य ग्रहणसाधनयोः शफयोरादानं विधत्ते–**अथ शफा० छन्दसाऽऽदत्ते** इति । ' एतत् ' एवं च ' गायत्रेण ' छंदसा चतुर्विंशत्यक्षरेण । ' त्रैष्टुभेन ' ' छंदसा ' चतुश्चत्वारिंशदक्षरेण । आभ्यां छन्दोभ्यामेव ' आदत्ते ' आदानं कृतवान् भवति । अथ यदुक्तं कात्यायनेन–" ताभ्यां महावीरं परिगृह्णाति द्यावापृथिवीभ्यां त्वा परिगृह्णामीति " ( का. श्रौ. सू. २६।८९ ) इति, तद्विधत्ते–**द्यावापृथिवी० परिगृह्णातीति** । यौ

---

१–उत्तिष्ठ ब्रह्मणस्पत इत्युच्यमान उपोत्तिष्ठति । का. श्रौ. सू. २६ । ८१ । गोसमीपात् इति शेषः ।

२–विमितं प्रति गच्छतीति कर्कः ।

३–परीशासावादत्ते गायत्रं छंदोऽसीति प्रतिमन्त्रम् । का. श्रौ. सू. २६ । ८३ ॥

४–गायत्र्युष्णिगनुष्टुब्बृहतीपंक्तित्रिष्टुब्जगत्यतिजगतीशक्वर्यतिशक्वर्यष्ट्यत्यष्टिधृत्यतिधृतयः, कृतिप्रकृत्याकृतिविकृतिसंकृत्यभिकृत्युत्कृतयः । चतुर्विंशत्यक्षरादीनि चतुरुत्तराणि इति च सर्वानुक्रमे ५ । १ । ३ । सूत्रार्थस्तु गायत्र्यादीनि उत्कृत्यंतानि एकविंशतिच्छंदांसि चतुर्विंशत्यक्षरादीनि चतुर्विंशत्यक्षरं गायत्रीसंज्ञं छंद उपक्रम्य चतुरुत्तराणि पूर्वपूर्वच्छन्दोऽपेक्षया उत्तरमुत्तरं छंदः चतुर्भिश्चतुर्भिरक्षरैः अधिकं भवतीत्यर्थः ॥

| | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | २४ | अक्षरा | गायत्री | ८ | ५२ | अक्षरा | अतिजगती | १५ | ८० | अक्षरा | कृति |
| २ | २८ | " | उष्णिक् | ९ | ५६ | " | शक्वरी | १६ | ८४ | " | प्रकृति |
| ३ | ३२ | " | अनुष्टुप् | १० | ६० | " | अतिशक्वरी | १७ | ८८ | " | आकृति |
| ४ | ३६ | " | बृहती | ११ | ६४ | " | अष्टि | १८ | ९२ | " | विकृति |
| ५ | ४० | " | पंक्ति | १२ | ६८ | " | अत्यष्टि | १९ | ९६ | " | संकृति |
| ६ | ४४ | " | त्रिष्टुप् | १३ | ७२ | " | धृति | २० | १०० | " | अभिकृति |
| ७ | ४८ | " | जगती | १४ | ७६ | " | अतिधृति | २१ | १४४ | " | उत्कृति |

( ३ ) अथोपयमन्योपगृह्णाति । ( त्य ) अन्तरिक्षेणोपयच्छामीत्यन्तरिक्षम्वाऽउपयमन्यन्तरिक्षेण हीदꣳ सर्व्वमुपयतमथोऽउदरम्वाऽउपयमन्युदरेण हीदꣳ सर्व्वमन्नाद्यमुपयतन्तस्मादाहान्तरिक्षेणोपयच्छामीति ॥ १७॥

( त्यु ) अथाजाक्षीरमानयति । तप्तो वाऽएष शुशुचानो भवति तमेवैतच्छमयति तस्मिञ्छान्ते गोक्षीरमानयति ॥ १८ ॥

---

अथोपयमन्योपगृह्णाति-" अंतरिक्षेणोपयच्छामि "-इति । अंतरिक्षं वा उपयमनी । अंतरिक्षेण हीदं सर्वमुपयतम् । अथो उदरं वा उपयमनी । उदरेण हीदं सर्वमन्नाद्यमुपयतम् । तस्मादाह-" अंतरिक्षेणोपयच्छामि " इति ॥ १७ ॥

अथाजाक्षीरमानयति । तप्तो वा एष शुशुचानो भवति । तमेवैतच्छमयति । तस्मिन् शांते गोक्षीरमानयति ॥ १८ ॥

---

' परीशासौ ' परितः शासकौ शफौ ' इमे वै ' इमे खलु ' द्यावापृथिवी ' द्यावापृथिव्यौ । शफौ द्यावापृथिव्यात्मकावित्यर्थः । ' प्रवर्ग्यः आदित्यः ' । तत्तेन शफाभ्यां महावीरस्य परिग्रहणेन ' अमुं ' आदित्यमेव ' आभ्यां द्यावापृथिवीभ्यां परिगृह्णाति ' । तस्मात् अनेन मन्त्रेण शफाभ्यां महावीरं परिगृह्णीयात् इति विधिरुन्नेतव्यः । अथ वेदेनोपमार्जनं विधत्ते-अथ मौंजेन० बंधुरिति । ' अथ ' परिग्रहणानंतरं ' मौंजेन ' मुंजतृणनिर्मितेन ' वेदेन ' महावीरस्य अधोभागे ' उपमार्ष्टि ' उपमार्जनेन तस्माद्व्यपनयति । ' असावेव ' खलु वेदः ' बन्धुः ' छिन्नस्य यज्ञशिरसो बन्धकः । तथा च तैत्तिरीयकम् " ऊर्ङ्मुंञ्जाः । यन्मौञ्जो वेदो भवति । ऊर्जैव यज्ञस्य शिरः समर्द्धयति " इति ॥ १६ ॥

अथोपयमन्या स्रुचा महावीराधोभागस्य परिग्रहणं विधत्ते-अथोपयमन्योप० यच्छामीतीति । अथोपमार्जनानंतरं 'उपयमन्या' उपयमनसाधनभूतया औदुंबर्या स्रुचा उपगृह्णाति अधस्ताद्धारयति । " अंतरिक्षेण " इति मन्त्रेण । अथैतदुपपादयति-अंतरिक्षं० पयच्छामीतीति । ' अंतरिक्षं ' द्यावापृथिव्योर्मध्यवर्ती लोकः । तद्रूपा खलु एषा ' उपयमनी ' । ' इदं सर्वं ' जगत् अंतरिक्षेणाकाशेनैव ' उपयतं ' सर्वतो धृतम् । ' हि ' यस्मादेवं उपयमनसाधनमन्तरिक्षं तस्मात् अंतरिक्षोपयमन्योः परस्परात्मकता । ' अथो ' अपि च ' उदरं वै उदरात्मिका खलु ' उपयमनी ' । ' हि ' यस्मात् ' उदरेण इदं ' भुक्तं ' सर्वमन्नाद्यं ' अन्नपानादिकम् ' उपयतं ' धृतम् । तस्मादेव कारणात् " अंतरिक्षेणोपयच्छामि " इत्यनेन मन्त्रेण उपयमन्या महावीरं अधस्ताद्धारयेदित्यर्थः ॥ १७ ॥

अथ, एवंस्थिते महावीरे अजापयस औसेचनं विधत्ते-अथाजाक्षीर० भवतीति । अथोपयमनानंतरं

---

१-उद्यम्य मुंजवेदेनोपमृज्य । ( का. श्रौ. सू. २६ । ८६ । उद्यम्य महावीरं परीशासाभ्यामुत्क्षिप्येत्यर्थः ॥

२-बंधुः मुंजब्राह्मणं, अत्र तु शतपथे १४ । १ । ३ । १६ कंडिकायां प्रवर्ग्यप्रकरणे उक्त एव । " तदुभयतऽआदीप्ता मौञ्जाः प्रलवा भवंति " इत्यादि ॥

३-उपयमन्योपगृह्णात्यंतरिक्षेणोपयच्छामीति । ( का. श्रौ. सू. २६।८६ ) ॥

४-अजापयसाऽवसिच्य । का. श्रौ. सू. २६ । ८७ ।

( त्री ) इन्द्राश्विनेति । ( त्री ) इन्द्रो वै यज्ञस्य देवता सा यैव यज्ञस्य देवता तामेवैतत्प्रीणात्यश्विनेत्यश्विनावेवैतदाहाश्विनौ वाऽएतद्यज्ञस्य शिरः प्रत्यधत्तान्तावेवैतत्प्रीणाति तस्मादाहेन्द्राश्विनेति ॥ १९ ॥

मधुनः सारघस्येति । ( त्ये ) एतद्वै मधु सारघं घर्म्मम्पातेति रसम्पातेत्येवैतदाह व्वसवऽइत्येते वै व्वसवऽएते हीदꣳ सर्व्वं वासयन्ते यजत व्वाडिति तद्यथा व्वषट्कृतꣳ हुतमेवमस्यैतद्भवति ॥ २० ॥

---

"इन्द्राश्विना"–इति । इन्द्रो वै यज्ञस्य देवता । सा यैव यज्ञस्य देवता । तामेवैतत्प्रीणाति । अश्विनेति । अश्विनावेवैतदाह । अश्विनौ वा एतद्यज्ञस्य शिरः प्रत्यधत्ताम् । तावेवैतत्प्रीणाति । तस्मादाह–"इन्द्राश्विना"–इति ॥ १९ ॥

"मधुनः सारघस्य"–इति । एतद्वै मधु सारघम् । "घर्मं पात"–इति । रसं पातेत्येवैतदाह । "वसवः"–इति । एते वै वसवः । एते हीदं सर्वं वासयन्ते । "यजत वाट्"–(वा. सं. ३८ । ६) इति । तद्यथा वषट्कृतं हुतम् । एवमस्यैतद्भवति ॥ २० ॥

---

'अजाक्षीरं' अजायाः क्षीरं तूष्णीं दोहनकाले दुग्धं तत् तस्मिन् तप्ते महावीरे तूष्णीमानयति प्रतिप्रस्थाता आसिंचति । एतत् किमर्थम् ? इति चेत् एष महावीरः अग्निना संततः 'शुशुचानः' अत्यर्थं दीप्यमानः दुरासदः 'भवति' । अतस्तमेव दीप्यमानम् 'एतत्' एतेनाजापयसा 'शमयति' शांतमुपशांतं करोति । एवंमप्रसाधनस्यापि अजापयसः प्रयोजनवशेन प्रथमं आसेचनं कार्यमित्युक्तं भवति । अथ गोपयसः समंत्रकमासेचनं विधत्ते–तस्मिन् शान्ते० नयतीति । 'तस्मिन्' महावीरे संतप्ते 'शांते' अजापयसा उपशांते, प्रशमिते औष्ण्ये सति "इन्द्राश्विना" इति मंत्रेण गोक्षीरमानयति अवनयति आसिञ्चतीत्यर्थः ॥ १८ ॥

अथास्मिन्मंत्रे 'इंद्राश्विनेति' संबुद्ध्यंतं पदद्वयम् । तत्र इंद्रशब्देन पूर्वपदेन प्रतिपाद्यां देवतां स्तौति–इंद्रो वै० त्प्रीणातीति । व्याख्यातमेतत्पूर्वम् । अथोत्तरपदमनूद्य व्याचष्टे–अश्विनेत्य० त्प्रीणातीति । 'एतत्' अश्विनेत्येतेनोत्तरपदेन । गतमन्यत् । यस्मादेवं 'तस्मात्' देवताद्वयप्रतिपादकं पदं प्रथमतो वक्तव्यं इति निगमयति–तस्मादाहेन्द्राश्विनेति इति ॥ १९ ॥

अथ समनंतरभावि पदद्वयं उपादाय व्याचष्टे–मधुनः सार० सारघमिति । 'एतद्वै' एतदेव खलु महावीरस्य रुचिः 'सारघं' सरघा मधुमक्षिका तत्संबंधि 'मधु' । अतो मधुनः सारघस्येति विशेष्यत इत्यर्थः । अथान्यत् पदद्वयमुपादाय व्याचष्टे–घर्म्मं पाते० तदाहेति । घर्म्मशब्दाभिधेयस्य हविषः षष्ठ्यंतेन "मधुनः सारघस्य" इत्यनेन उक्तत्वात् अयं द्वितीयांतो घर्मशब्दः "घृ क्षरणदीप्त्योः" ( धा. पा.

---

१–"अश्विभ्यां पिन्वस्वेति पिन्वने दोग्धि ।" का. श्रौ. सू. २६ । ७६ ।) इत्युपक्रम्य "एवं प्रतिप्रस्थाताऽजां मयूखे तूष्णीम्" इति । का. श्रौ. सू. २६ । ७९ । प्रपंचितं चैतत्सूत्रं पंचदशीकण्डिकायां भाष्यटिप्पण्याम् ॥
२–शांते गोः पयोऽवनयतीन्द्राश्विनेति । का. श्रौ. सू. २६ । ८७ ॥

स्वाहा सूर्य्यस्य रश्मये व्वृष्टिवनयऽइति । सूर्य्यस्य ह वाऽएको रश्मिर्व्वृष्टिवनिर्न्नाम येनेमाः सर्व्वाः प्प्रजा बिभर्त्ति तमेवैतत्प्रीणाति तस्मादाह स्वाहा सूर्य्यस्य रश्मये व्वृष्टिवनयऽइत्यवरथ्ँ स्वाहाकारङ्करोति परान्देवतामसावेव बन्धुः ॥ २१ ॥

( ३ ) अथैतद्वै । ( द्वाऽआ ) आयुरेतज्ज्योतिः प्रविशति यऽएतमनु वा ब्रूते भक्षयति वा तस्य व्व्रतचर्य्या या सृष्टौ ॥ २२ ॥

इति प्रथमप्रपाठके पञ्चमं ब्राह्मणम् ॥ १४-१-५ ॥ ( २-१ ) ॥

इति प्रथमः प्रपाठकः समाप्तः ॥ १४-१ ॥

कंडिकासंख्या ॥ १२२ ॥

---

" स्वाहा सूर्यस्य रश्मये वृष्टिवनये "-( वा. सं. ३८ । ६ ) इति । सूर्यस्य ह वा एको रश्मिर्वृष्टिवनिर्नाम । येनेमाः सर्वाः प्रजाः बिभर्ति । तमेवैतत्प्रीणाति । तस्मादाह-" स्वाहा सूर्यस्य रश्मये वृष्टिवनये "-इति । अवरं स्वाहाकारं करोति । परां देवताम् । असावेव बंधुः ॥ २१ ॥

अथ एतद्वा आयुः, एतज्ज्योतिः प्रविशति । य एतमनु वा ब्रूते । भक्षयति वा । तस्य व्रतचर्या-या सृष्टौ ॥ २२ ॥

---

शु. प. १४ ) इत्यवयवप्रसिद्धया रसपरः । अतः "घर्मं पात" इत्यस्य "रसं पात" इत्येवात्र व्याख्यानम् । अथ 'वसवः' इति पदमुपादाय व्याचष्टे-वसवऽइत्येते० वासयन्त इति । 'हि' यस्मात् 'इदं सर्वं' जगत् इन्द्रश्च अश्विनौ च 'एते' देवाः 'वासयंते' प्रवर्षणप्रकारादिना स्वे स्वे कर्मणि निवेशयंति । तस्मादेते खलु 'वसवः' । अतो वसव इति तेषां संबन्धनम् । यद्वा वसवो नाम गणशो वर्तमानाः अन्ये देवाः तत्परत्वेनापि व्याख्येयः । यजत वाडिति । वाट्शब्दस्याप्रसिद्धत्वात् विवक्षितमर्थमाह-यजत वाडि०द्भवतीति । ऋत्विजो यूयं देवान् 'यजत' । तत्तत्र साक्षात् वषट्कारेण दत्तं हविः यथा 'हुतं' भवति । एवं वाडिति परोऽक्षवषट्कारेणापि दत्तं हविः हुतमेव भवतीत्यर्थः । ततो वाट्शब्देन पारोक्ष्येण वषट्कारो निर्दिश्यते इत्यर्थः । तथा च तैत्तिरीयके अस्य मन्त्रस्य याख्यानावसरे "यदि वषट्कुर्याद्यातयामाऽस्य" इत्यादिना प्रत्यक्षवषट्कारं पूर्वपक्षीकृत्य "वाडित्याह परोक्षमेव वषट्करोति" ( तै. आ. ५ । ६ ) इति सिद्धांतितम् ॥ २० ॥

अथान्यं मन्त्रभागमुपादाय व्याचष्टे-स्वाहा सूर्यस्य० बंधुरिति । 'सूर्यस्य' खलु रश्मीनां मध्ये एको रश्मिः 'वृष्टिवनिः' वृष्टेर्वर्षस्य वनिता संभक्ता दाता । नामशब्दः प्रसिद्धयर्थः । तामेव प्रसिद्धिमाह-येनेति । 'येन' खलु रश्मिना वृष्टिप्रदानसमर्थेन 'इमाः सर्वाः प्रजाः बिभर्ति' पोषयति । 'तमेव' रश्मिं 'एतत्' एतेन "स्वाहा सूर्यस्य" इति मन्त्रशेषेण 'प्रीणाति' तर्पयति । "तस्मात्" इत्यादि निगमनम् । सिद्धमन्यत् ॥ २१ ॥

पूर्वाध्यायप्रथमब्राह्मणावसानोक्तां व्रतचर्यां अतीतेषु ब्राह्मणेष्विव एतद्ब्राह्मणाध्ययनतदर्थानुष्ठानयोरंगत्वेनाति-

# अथ द्वितीयप्रपाठके प्रथमं ब्राह्मणम् ।

# द्वितीयेऽध्याये च द्वितीयं ब्राह्मणम् ।

स युत्रैताᳪं होताऽन्वाह । प्रैतु ब्रह्मणस्पतिः प्र देव्येतु सूनृतेति तुद॑ध्वर्युः प्राङुदायुन्वातनामानि जुहोत्येतद्धै देवाऽअबिभयुर्यद्धै नऽइमु॑मन्तरा रक्षाᳪंसि नाष्ट्रा नु हन्युरिति तुमेतत्पुरैवाहवनीयात्स्वाहाकारेणा॑जुहवुस्तᳪं हुतमेव सुन्तमग्नावजुहवुस्तथोऽएवैनमेषऽएतत्पुरैवाहवनीया॑त्स्वाहाकारेण जुहोति तᳪं हुतमेवसन्तमग्नौ जुहोति ॥ १ ॥

## अथ घर्मप्रचरणम् ।

स यत्रैतां होताऽन्वाह–"प्रैतु ब्रह्मणस्पतिः प्र देव्येतु सूनृता"–(वा. सं. ३७।७) इति । तदध्वर्युः प्राङुदायन् वातनामानि जुहोति । एतद्धै देवा अबिभयुः । यद्धै न इममन्तरा रक्षांसि नाष्ट्रा न हन्युरिति । तमेवैतत्पुरैवाहवनीयात्स्वाहाकारेणाजुहवुः । तं हुतमेव संतमग्नावजुहवुः । तथा उ एवैनमेष एतत्पुरैवाहवनीयात्स्वाहाकारेण जुहोति । तं हुतमेव संतमग्नौ जुहोति ॥ १ ॥

---

दिशति–अथैतद्वा० सृष्टाविति । 'या' सृष्टिब्राह्मणे उक्ता 'व्रतचर्या' "नातपति प्रच्छादयेत" (श. प. १४।१।१।३३) इत्यादिका । सैव एतद्ब्राह्मणं अधीयानस्य तदर्थानुष्ठायिनश्च कर्तव्येत्यर्थः ॥ २२ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये चतुर्दशे काण्डे तदन्तर्भूते प्रथमे प्रवर्ग्यकाण्डे द्वितीयेऽध्याये प्रथमं ब्राह्मणम् ॥ १४ (१) । २ । १ ॥

एवं तप्ते साज्ये महावीरे पयोऽवनयनेन प्रवृंजनमुक्तम् । अथ द्वितीयब्राह्मणे तेन हविषा प्रचार उच्यते । तत्रादौ वातनामसंज्ञकानां मन्त्राणां जपं विधत्ते–स यत्रैतां० जुहोतीति । 'यत्र' यस्मिन् काले 'सः' होता "प्रैतु ब्रह्मणस्पतिः" इत्येतामृचमनुब्रूयात् । 'तत्' तत्र तस्मिन् समये अध्वर्युः शफाभ्यां महावीरं धृत्वा 'प्राङुदायन्' आहवनीयं प्रति प्राङ्मुखो गच्छन् "समुद्राय त्वा" इत्यादीनि 'वातनामानि' यजूंषि 'जुहोति'। मन्त्रगतैः स्वाहाकारैः मनसा घर्मं जुह्वत् वातनामानि जपतीत्यर्थः । तथा च सूत्रकृतोक्तम्–"प्रैतु ब्रह्मणस्पति-रित्युच्यमाने समुद्राय त्वेति वातनामानि जपति गच्छन्नाहवनीयम् (का. श्रौ. सू. २६ । ८८) इति । तदेतत् आख्यायिकया उपपादयति–एतद्धै० जुहोतीति । "एतद्वा०" इत्यादि "न हन्युः" इत्यंतं पूर्वं व्याख्यातम् । एवं नाष्ट्रासुरेभ्यो भीता देवाः तं घर्माख्यं आहवनीयप्राप्तेः पुरस्तादेव गार्हपत्याहवनीययोर्मध्यदेशे गच्छन्त एव "समुद्राय त्वा वाताय स्वाह" इत्यादिना 'स्वाहाकारेण' 'अजुहवुः' हुतवन्तः देवतामुद्दिश्य मनसा त्यक्तवन्त इत्यर्थः । एवं सकृद्धुतमेव 'संतं' आहवनीयेऽग्नौ पश्चाद्वषट्कारेणाजुहवुः । यत एवं 'पुरा' देवा अकुर्वन् । तथैव खलु 'एषः' अध्वर्युः 'एनं' घर्मं 'एतत्' एतर्हि आहवनीयप्राप्तेः पूर्वमेव स्वाहाकारेण 'जुहोति' मनसा देवतार्थं हुतमिति भावयति । स्पष्टमन्यत् ॥ १ ॥

समुद्राय त्वा वाताय स्वाहेति । ( त्य ) अयम्वै समुद्रो योऽयम्पवतऽएतस्माद्वै समुद्रात्सर्व्वे देवाः सर्व्वाणि भूतानि समुद्रवन्ति तस्माऽएवैनञ्जुहोति तस्मादाह समुद्राय त्वा वाताय स्वाहा ॥ २ ॥

सरिराय त्वा वाताय स्वाहेति । ( त्य ) अयम्वै सरिरो योऽयम्पवतऽएतस्माद्वै सरिरात्सर्व्वे देवाः सर्व्वाणि भूतानि सहेरते तस्माऽएवैनञ्जुहोति तस्मादाह सरिराय त्वा वाताय स्वाहा ॥ ३ ॥

---

" समुद्राय त्वा वाताय स्वाहा "–( वा. सं. ३८ । ७ ) इति । अयं वै समुद्रः । योऽयं पवते । एतस्माद्वै समुद्रात् सर्वे देवाः सर्वाणि भूतानि समुद्रवन्ति ।तस्मा एवैनं जुहोति । तस्मादाह–" समुद्राय त्वा वाताय स्वाहा " ॥ २ ॥

" सरिराय त्वा वाताय स्वाहा "–इति । अयं वै सरिरः । योऽयं पवते । एतस्माद्वै सरिरात् सर्वे देवाः सर्वाणि भूतानि सहेरते । तस्मा एवैनं जुहोति । तस्मादाह–" सरिराय त्वा वाताय स्वाहा ॥ ३ ॥

---

ननु कथं एतेषां वातनामत्वं समुद्रादिशब्दानां रूढ्या अर्थांतराभिधायकत्वात् ? इत्याशंक्य सर्वेषां वातपरत्वं विवक्षुः तावत् प्रथममन्त्रमनूद्य तस्य वातनामत्वं उपपादयति–समुद्राय त्वा० स्वाहेतीति । ' यः अयं ' वायुः ' पवते ' सततं गच्छति ' अयं वै ' अयमेव खलु 'समुद्रः' । कस्मादसौ समुद्रः इति चेत् ? उच्यते । एतस्मात्खलु समुद्रात्समुद्रशब्दाभिधेयात् वायोः सकाशात् ' सर्वे देवाः ' ' सर्वाणि ' इमानि च भूतजातानि ' समुद्रवन्ति ' सम्यगुद्गच्छंति उत्पद्यन्ते । लिंगशरीरभूतप्राणवाय्वधीनत्वात् सर्वदेवानाम् । " वायुर्वै गौतम तत्सूत्रं वायुना वै गौतम सूत्रेणायञ्च लोकः परश्च लोकः सर्वाणि च भूतानि सन्दब्धानि भवंति " । ( श. प. १४ । ६ । ७ । ६ ) इति श्रुतेः । सूत्रात्मनि तस्मिन्वायौ कृत्स्नजगतः अवस्थानात् । अतः समुद्रवंत्यस्मादिति व्युत्पत्त्या समुद्रवत्सर्वाश्रयत्वेन वा समुद्रशब्देन वायुरेवोच्यते । अतस्तस्मै एव वायवे ' एनं ' घर्मं " समुद्राय त्वा " इति मन्त्रेण ' जुहोति ' । " तस्मात् " इत्यादि निगमनम् ॥ २ ॥

अथ द्वितीयस्य यजुषः वातनामत्वमुपपादयन् तस्य तात्पर्यमाह–सरिराय० स्वाहेतीति । आद्यंतयोरुपादानोपसंहारार्थं द्विर्मन्त्रपाठः । ' यः अयं ' वायुः ' पवते ' । अयमेव खलु ' सरिरः ' सरणशीलः मन्त्रे सरिरशब्दवाच्यः । श्रुतिस्तु " सहेरणात् " सरिर इति वातस्य सरिरसंज्ञां निर्वक्ति । एतस्मात्खलु ' सरिरात् ' सरिरशब्दाभिधेयाद्वायोः सकाशात्सर्वे ' देवाः ' अग्न्यादयः ' सर्वाणि ' च भूतजातानि ' सहेरते ' सहिताश्चेष्टन्ते । अतः अयं सहेरणत्वात्सरिरः । अन्यद्गतम् ॥ ३ ॥[1]

---

१–उवटमहीधरादिभाष्येषु " सहेरते " इति श्रुतिमनुसृत्य सरिरशब्दार्थो भाषितः । सरिराय एतस्मात्सरिरात् सर्वाणि भूतानि लब्धकार्याणि संति सह ईरते गच्छंति इति उवटः । सरिराय सह ईरते गच्छंति सर्वभूतानि सिद्धार्थानि यस्मात् स सरिरः तस्मै वातायेति महीधरः ॥

( ह्राऽना ) अनाधृष्याय त्वा वाताय स्वाहाऽप्रतिधृष्याय त्वा वाताय स्वाहेति । ( त्य ) अयम्वाऽअनाधृष्योऽप्रतिधृष्यो योऽयम्पवते तस्माऽएवैनञ्जुहोति तस्मादाहानाधृष्याय त्वा वाताय स्वाहाऽप्रतिधृष्याय त्वा वाताय स्वाहेति ॥ ४ ॥

( त्य ) अवस्युवे त्वा वाताय स्वाहाऽशिमिदाय त्वा वाताय स्वाहेति । ( त्य ) अयम्वाऽअवस्युरशिमिदो योऽयम्पवते तस्माऽएवैनञ्जुहोति तस्मादाहावस्युवे त्वा वाताय स्वाहाऽशिमिदाय त्वा वाताय स्वाहेति ॥ ५ ॥
( त्री ) इन्द्राय त्वा वसुमते रुद्रवते स्वाहेति । ( त्य ) अयम्वाऽ इन्द्रो योऽयम्पवते तस्माऽएवैनञ्जुहोति तस्मादाहेन्द्राय त्वेति वसुमते

---

" अनाधृष्याय त्वा वाताय स्वाहाऽप्रतिधृष्याय त्वा वाताय स्वाहा "–इति । अयं वा अनाधृष्योऽप्रतिधृष्यः । योऽयं पवते । तस्मा एवैनं जुहोति । तस्मादाह–" अनाधृष्याय त्वा वाताय स्वाहाऽप्रतिधृष्याय त्वा वाताय स्वाहा " इति ॥ ४ ॥
"अवस्यवे त्वा वाताय स्वाहाऽशिमिदाय त्वा वाताय स्वाहा"–( वा.सं. ३८।७ ) इति । अयं वा अवस्युरशिमिदः । योऽयं पवते । तस्मा एवैनं जुहोति । तस्मादाह–" अवस्यवे वाताय स्वाहाऽशिमिदाय त्वा वाताय स्वाहा " इति ॥ ५ ॥
" इन्द्राय त्वा वसुमते रुद्रवते स्वाहा "–इति । अयं वा इन्द्रः । योऽयं पवते । तस्मा-

---

अथान्ययोर्यजुषोर्वातनामत्वं निर्ब्रुवन् पूर्ववत् वाक्यतात्पर्यमाह–अनाधृष्याय०स्वाहेतीति । पूर्ववत् उपक्रमोपसंहारयोर्द्विर्मन्त्रपाठः । ' यः अयं ' वायुः ' पवते ' । अयमेव खलु ' अनाधृष्यः ' आधर्षितुमशक्यः स्प्रष्टुमशक्य इत्यर्थः । ' अप्रतिधृष्यः ' प्रतिधर्षणं प्रतिकूलाचरणं तद्विषयोऽपि न भवति । न हि कश्चित् वायुं आधर्षितुं प्रतिधर्षितुं वा शक्नोति । गतमन्यत् ॥ ४ ॥

अथ अन्यस्य नामद्वयस्य वायुपरत्वं सिद्धवत् अनूद्य तात्पर्यमाह–अवस्यवे त्वा० स्वाहेतीति । ' यः अयं ' वायुः ' पवते ' । अयं खलु ' अवस्युः ' अवनेच्छुः । यद्वा अवति तृप्यति अनेनेति अवनं तदिच्छुः । प्राणभावमापन्नस्य वायोः तदिच्छोः अन्नं तत्राम्नास्यते । " अथात्मने ऽन्नाद्यमागायत् " ( श.प. १४।४।१।१८ ) इत्यादिना । तथा अयमेव वायुः ' अशिमिदः ' अशनं न प्राप्तः सर्वदा संचरणशील इत्यर्थः । यद्वा शिमीति कर्मनाम । शिमि कर्म[1] ददातीति शिमिदः नास्ति अस्मादन्यः शिमिदः इत्यशिमिदः । तस्मादेतौ शब्दौ उक्तव्युत्पत्त्या वायोर्नामनी । गतमन्यत् ॥ ५ ॥

अथान्यद्यजुरनूद्य तस्य वातपरत्वं दर्शयन् पूर्ववद्वाक्यार्थमाह–इन्द्राय त्वा वसु० हेन्द्राय त्वेतीति ।

---

१–तच्च कर्म क्लेशात्मकं बोध्यम् । शिमीति कर्मनाम क्लेशात्मकं चैतत् अक्लेशदाय इति उवटभाष्यात् क्लेशात्मकं कर्म शिमि तन्न ददातीति अशिमिदः तस्मै क्लेशनिवर्तकाय वाताय इति महीधरभाष्याच्च ॥

रुद्रवतऽइति तदिन्द्रमेवानु व्वसूंश्च रुद्रांश्चाभजत्यथो प्रातःसवनस्य चैवै-
तन्माध्यन्दिनस्य च सवनस्य रूपङ्क्रियते ॥ ६ ॥

(तऽइ) इन्द्राय त्वाऽऽदित्यवते स्वाहेति । (त्य) अयम्वाऽइन्द्रो योऽय-
म्पवते तस्माऽएवैनञ्जुहोति तस्मादाहेन्द्राय त्वेत्यादित्यवतऽइति तदिन्द्र-
मेवान्वादित्यानाभजत्यथो तृतीयसवनस्यैवैतद्रूपङ्क्रियते ॥ ७ ॥

---

एवैनं जुहोति । तस्मादाह—" इन्द्राय त्वा "—इति । " वसुमते रुद्रवते "—इति । तदिन्द्रमेवानु वसूंश्च रुद्रांश्चाभजति । अथो प्रातःसवनस्य चैवैतन्माध्यंदिनस्य च सवनस्य रूपं क्रियते ॥ ६ ॥

" इन्द्राय त्वाऽऽदित्यवते स्वाहा "—इति । अयं वा इन्द्रः । योऽयं पवते । तस्मा एवैनं जुहोति । तस्मादाह—" इन्द्राय त्वा "—इति । " आदित्यवते "—इति । तदिन्द्रमेवान्वादित्यानाभजति । अथो तृतीयसवनस्यैवैतद्रूपं क्रियते ॥ ७ ॥

---

अयमेव वायुः ' इन्द्रः ' परमैश्वर्ययोगादिन्द्रशब्दाभिधेयः । यः अयमंतरिक्षे ' पवते ' ज्योतिश्चक्रप्रवहण-रूपेण वर्तते ' तस्मै ' एव वायवे ' एनं ' घर्मं ' जुहोति ' स्वाहाकारेण हुतवान् भवति । तस्मात् " इन्द्राय त्वा " इत्यमुं मंत्रभागं ब्रूयात् । अथ इंद्रविशेषणयोः तात्पर्यं प्रयोजनं चाह—**वसुमते रुद्रवते० क्रियते**—इति । यत् एतत् ' वसुमते, रुद्रवते ' इति विशेषणद्वयं, तत्तेन इंद्रमेव वस्वाख्यान्देवान् रुद्राख्यान् देवांश्च ' अन्वाभजति ' प्रापयति । यथेन्द्रशब्दाभिधेयस्य मघवतः वस्वाख्याः सेवकाः । एवं इंद्रशब्दाभिधेयस्य अस्य वायोरपिताननुचरान् करोतीत्यर्थः । यद्वा इंद्रमनु इंद्रस्य घर्मप्राप्तेः पश्चात् वस्वादीनपि घर्मं ' आभजति ' भागयुक्तान् करोति । ' अथो ' अपि च यदेतत् देवगणद्वयकीर्तनं तत् ' प्रातःसवनस्य माध्यंदिनसवनस्य च ' ' रूपं ' स्वरूपं अस्मिन् प्रवर्ग्ये ' क्रियते ' । " वसवः प्रातःसवनꣳ रुद्रा माध्यंदिनꣳ सवनम् "—( श. प. १४ । १ । १ । १९ ) इति द्वयोः सवनयोः तद्भागत्वस्य प्रागाम्नातत्वात् । अतः वसुसंबंधः रुद्रसंबंधश्च सवनद्वयलिंगम् । तस्मादेव सौत्येऽहनि आवाहननिगदे " इंद्रं वसुमंतमावह, इंद्रं रुद्रवंतमावह "—इति वसुरुद्रविशिष्टेन्द्रस्यावाहनं च श्रूयते । एवं चात्रापि " वसुमते रुद्रवते " इति विशेषणद्वयेन भाविसवनद्वयस्य रूपं कृतं भवति इत्यर्थः ॥ ६ ॥

अथ मंत्रांतरस्य वायुपरत्वं दर्शयन् तत्रत्यविशेषणेन तृतीयसवनस्यापि प्रवर्ग्ये रूपं क्रियते इत्याह—**इन्द्राय त्वाऽऽदित्यव० दित्यवत इतीति** । " अयं वा इंद्रः " इत्यादि " इंद्राय त्वा " इत्यंतं पूर्ववत् । आदित्य-वत इति यत् इंद्रविशेषणं तत्तेन ' इंद्रमनु ' इंद्रस्य पश्चात् देवानादित्यान् ' आभजति ' घर्मे भागयुक्तान् करोति । ' अथो ' अपि च ' तृतीयसवनस्यैव एतत् ' रूपं ' स्वरूपं ' क्रियते ' " आदित्यास्तृतीय-सवनम् "—( श. प. १४ । १ । १ । १९ ) इति श्रुतिः । तृतीयसवनस्य आदित्यसंबंधं लिंगम् । अतः ' आदित्यवते ' इति विशेषणेन तृतीयसवनस्यैव लिंगं प्रवर्ग्ये कृतं भवति ॥ ७ ॥

---

१—व्यक्तार्था अपराऽपि श्रुतिः । त्रया वै देवाः व्वसवो रुद्राऽ आदित्याः तेषां विभक्तानि सवनानि वसूनामेव प्रातःसवनꣳ रुद्राणाम्माध्यंदिनꣳ सवनमादित्यानां तृतीयसवनं तद्वा अमिश्रमेव वसूनाम्प्रातःसवनमामिश्रꣳ रुद्राणाम्माध्यंदिनꣳ सवनमामिश्र-मादित्यानां तृतीयसवनम् "—इति । श. प. ४ । ३ । ५ । १ ॥

( तऽइ ) इन्द्राय त्वाऽभिमातिघ्ने स्वाहेति । ( त्य ) अयम्वाऽइन्द्रो योऽयम्पवते तस्माऽएवैनञ्जुहोति तस्मादाहेन्द्राय त्वेत्यभिमातिघ्नऽइति सपत्नो वाऽअभिमातिरिन्द्राय त्वा सपत्नघ्नऽइत्येवैतदाह सोऽस्योद्धारो यथा श्रेष्ठस्योद्धारऽएवमस्यैषऽऋते देवेभ्यः ॥ ८ ॥

सवित्रे त्वऽऋभुमते विभुमते वाजवते स्वाहेति । ( त्य ) अयम्वै सविता योऽयम्पवते तस्माऽ एवैनञ्जुहोति तस्मादाह सवित्रे त्वेत्यृभुमते विभुमते वाजवत ऽइति तदस्मिन्विश्वान्देवानन्वाभजति ॥ ९ ॥

---

" इन्द्राय त्वाऽभिमातिघ्ने स्वाहा "-इति । अयं वा इन्द्रः । योऽयं पवते । तस्मा एवैनं जुहोति । तस्मादाह-"इन्द्राय त्वा"-इति । "अभिमातिघ्ने"-इति । सपत्नो वा अभिमातिः । इन्द्राय त्वा सपत्नघ्न इत्येवैतदाह । सोऽस्योद्धारः । यथा श्रेष्ठस्योद्धारः । एवमस्यैषः । ऋते देवेभ्यः ॥ ८ ॥

" सवित्रे त्वा-ऋभुमते विभुमते वाजवते स्वाहा "-इति । अयं वै सविता । योऽयं पवते । तस्मा एवैनं जुहोति । तस्मादाह-" सवित्रे त्वा "-इति । " ऋभुमते विभुमते वाजवते " -इति । तदस्मिन् विश्वान्देवानन्वाभजति ॥ ९ ॥

---

अथ उत्तरस्मिन् मंत्रे अभिमातिघ्न इति विशेषणस्य तात्पर्यं व्याचक्षाणो मंत्रस्य वातनामत्वं उपपादयति-**इन्द्राय त्वाऽभिमातिघ्ने० तदाहेति** । इंद्राय त्वेत्यादि इंद्राय त्वेत्यंतं पूर्ववत् । " अभिमातिघ्ने " इति व्याख्यानार्थमुपादानम् । तत्र पदार्थमाह-**सपत्नो वाऽअभिमातिरिति** । ' यः अयं ' सपत्नः शत्रुः । असावत्र अभिमातिशब्दार्थः । तथा च यः अर्थः संपद्यते तं दर्शयति-**इंद्राय त्वेति** । " इंद्राय त्वाऽभिमातिघ्ने " इति यदेतत् वाक्यमेतत् । " इंद्राय त्वा सपत्नघ्ने " इत्यमुमेवार्थमाह प्रतिपादयति । अन्यान् देवान् परित्यज्य समुद्रादिसर्वेशब्दैः वायुरेव प्रतिपाद्यते । तस्यैव घर्मभाक्त्वे च कारणमाह-**सोऽस्योद्धारो० देवेभ्य इति** । ' सोऽस्य ' घर्म्मस्य वायोरुद्धारः । उद्धृत्य स्थापितः उत्कृष्टो भागः, ' यथा ' शौर्यादिगुणैः ' श्रेष्ठस्य ' राजपुरुषादेः उद्धार उत्कृष्टो धनभागः शस्यते, एवं ' अस्य ' वायोः ' देवेभ्य ऋते ' अन्यान् देवान् वर्जयित्वा, ' एषः ' घर्मः ' उद्धारः ' उद्धृत्य भागत्वेन क्रियते । देवांतरात् अस्य को विशेषः ? इति तत्रोक्तम् " अभिमातिघ्ने " इति । यतः अयम् अभिमातिहा अतः अयम् उत्कृष्टः धर्मतः कृपया लोके शत्रुं हतवान् उत्कृष्टं वस्त्रधनादिकं लभते तथेत्यर्थः ॥ ८ ॥

अथान्यमंत्रस्य वातनामत्वं दर्शयति-**सवित्रे त्वऽऋभुमते० सवित्रे त्वेति** इति । यः अयं वायुः ' पवते ' अयमेव खलु प्रेरयितृत्वात्सविता । अन्यत्पूर्ववत् । ऋभुमत इत्यादिविशेषणत्रयेण लभ्यमर्थमाह-**ऋभुमते विभुमते० भजतीति** । ऋभुर्विभुर्वाज इति सुधन्वन आंगिरसस्य पुत्राः तपसा देवत्वं प्राप्ताः तृतीयसवनभाजो देवाः । तैर्योगस्य सवितुः प्रतिपादकं यत् एतत् विशेषणत्रयम् । ' तत् ' तेन ' अस्मिन् ' घर्मे ' विश्वान् ' सर्वान् ' देवान् ' ऋभुप्रभृतीन् " अन्वाभजति " सवितुः पश्चात् भागयुक्तान् करोति ॥ ९ ॥

बृहस्पतये त्वा विश्वदेव्यावते स्वाहेति । ( त्य ) अयम्वै बृहस्पतिर्योऽयम्पवते तस्माऽएवैनञ्जुहोति तस्मादाह बृहस्पतये त्वेति विश्वदेव्यावतऽइति तदस्मिन्विश्वान्त्सर्वान्देवानन्वाभजति ॥ १० ॥

यमाय त्वाऽङ्गिरस्वते पितृमते स्वाहेति । ( त्य ) अयम्वै यमो योऽयम्पवते तस्माऽएवैनञ्जुहोति तस्मादाह यमाय त्वेत्यङ्गिरस्वते पितृमतऽइति यज्ञस्य शीर्षच्छिन्नस्य रसो व्यक्षरत्स पितॄनगच्छत्त्रया वै पितरस्तानेवैतदन्वाभजति ॥ ११ ॥

द्वादशैतानि नामानि भवन्ति । द्वादश वै मासाः सम्वत्सरस्य सम्वत्सरऽ-

---

" बृहस्पतये त्वा विश्वदेव्यावते स्वाहा "—( वा. सं. ३८ । ८ ) इति । अयं वै बृहस्पतिः । योऽयं पवते । तस्मा एवैनं जुहोति । तस्मादाह—" बृहस्पतये त्वा "—इति । " विश्वदेव्यावते "—इति । तदस्मिन् विश्वान्देवानन्वाभजति ॥ १० ॥

" यमाय त्वाऽङ्गिरस्वते पितृमते स्वाहा "—इति । अयं वै यमः । योऽयं पवते । तस्मा एवैनं जुहोति । तस्मादाह—" यमाय त्वा "—इति । " अंगिरस्वते पितृमते " इति । यज्ञस्य शीर्षच्छिन्नस्य रसो व्यक्षरत् स पितॄनगच्छत् । त्रया वै पितरः । तानेवैतदन्वाभजति ॥ ११ ॥

द्वादशैतानि नामानि भवन्ति । द्वादश वै मासाः संवत्सरस्य । संवत्सर एषः । य एष तपति । एष उ प्रवर्ग्यः । तदेतमेवैतत्प्रीणाति । तस्माद्द्वादश भवन्ति ॥ १२ ॥

---

अथ मंत्रांतरस्य देवतांतररूढत्वात् वातनामत्वं न संभवति इत्याशंक्य तत् उपपादयति—बृहस्पतये त्वा० नन्वाभजतीति । 'यः अयं' वायुः 'पवते' । अयमेव बृहस्पतिः बृहतां महतां सर्वेषां भूतजातानां पतिरधिपतिः । गतमन्यत् । अथ विशेषणलभ्यमर्थमाह—विश्वदेव्यावत० भजतीति । ' ऋभुमते, विभुमते ' इत्यादिपूर्वोक्तविशेषणवाक्यशेषवत् व्याख्येयम् । इयांस्तु विशेषः " विश्वदेव्यावते " इति विश्वे देवाः गणशो वर्तमाना देवाः तद्योगात् बृहस्पतेर्विशेषेण मान्यता इति ॥ १० ॥

अथ अंतिमस्य यजुषः वातनामत्वं उपपादयति—यमाय त्वा० यमाय त्वेतीति । नियमनात् अयमेव वायुर्यमः । गतमन्यत् । विशेषणयोस्तात्पर्यमाह—अंगिरस्वते पि०नन्वाभजतीति । यमस्य अंगिरोभिः पितृभिश्च योगः अनेन विशेषणद्वयेन प्रतिपाद्यते । छिन्नशिरस्कस्य ' यज्ञस्य ' रसः पुरा ' पितॄन् ' प्राप्नोत् । ते च ' पितरः ' ' त्रयाः ' त्रिविधाः अंगिरस्वद्बर्हिषदग्निष्वात्तभेदेन पितृपितामहादिभेदेन वा । ' एतत् ' एतेन विशेषणद्वयेन ' तानेव ' पितॄन् अस्मिन् घर्मे ' अन्वाभजति ' । यमस्यानंतरं भागयुक्तान् करोति । एवं द्वादशसु मन्त्रेषु अर्थांतरे प्रसिद्धा अपि शब्दा योगवृत्त्या वायुपरत्वेन ब्राह्मणेन व्याख्याताः । अतः एतानि वातनामानि यजूंषि जपन् तत्तच्छब्दाभिधेये वायौ तेन तेन स्वाहाकारेण घर्मं जुहोमीति गार्हपत्याहवनीययोरंतराले गच्छन् अध्वर्युश्चिंतयेत् इति तात्पर्यार्थः ॥ ११ ॥

अथ एतानि संहत्य अनूद्य स्तौति—द्वादशैतानि नामानि भवन्ति० प्रीणातीति । ' द्वादश एतानि '

एष स्ऽएष तपत्येषऽउ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्माद्द्वादश भवन्ति ॥ १२ ॥

( न्तु ) अथोपयमन्या महावीरऽआनयति । स्वाहा घर्मायेत्येष वै घर्मो यऽएष तपत्येषऽउ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह स्वाहा घर्मायेत्यवरꣳ स्वाहाकारङ्करोति परान्देवतामसावेव बन्धुः ॥ १३ ॥

( ग्र ) आनीते जपति । स्वाहा घर्मः पित्रऽइति यज्ञस्य शीर्षच्छिन्नस्य रसो व्यक्षरत्स पितॄनगच्छत्त्रया वै पितरस्तानेवैतत्प्रीणात्यवरꣳ स्वाहाकारङ्करोति परान्देवतामसावेव बन्धुः ॥ १४ ॥

---

अथोपयमन्या महावीर आनयति—" स्वाहा घर्माय "—इति । एष वै घर्मः । य एष तपति । एष उ प्रवर्ग्यः । तदेतमेवैतत्प्रीणाति । तस्मादाह—" स्वाहा घर्माय "—इति । अवरं स्वाहाकारं करोति । परां देवताम् । असावेव बंधुः ॥ १३ ॥

आनीते जपति—" स्वाहा घर्मः पित्रे "—( वा. सं. ३८।९ ) इति । यज्ञस्य शीर्षच्छिन्नस्य रसो व्यक्षरत् । स पितॄनगच्छत् । त्रया वै पितरः । तानेवैतत्प्रीणाति । अवरं स्वाहाकारं करोति । परां देवताम् । असावेव बंधुः ॥ १४ ॥

---

" समुद्राय त्वा " इत्यादीनि वातनामानि ' भवंति ' । ' संवत्सरस्य ' अवयवभूताः मासाश्चैत्राद्या द्वादशसंख्याकाः खलु । अतो द्वादशभिर्मासस्थानीयैः संवत्सरः संपद्यते । स च ' संवत्सरः एषः ' सूर्यात्मकः । सिद्धमन्यत् । " तस्मात् " इत्यादि निगमनम् ॥ १२ ॥

यदुक्तं सूत्रकारेण " स्वाहा घर्म्मायेत्युपयमन्या सिञ्चति घर्म्मे " ( का. श्रौ. सू. २६ । ८९ ) इति । तद्विधत्ते—अथोपयमन्या महावीरे॰ घर्म्मायेति । ' अथ ' वातनामजपानंतरं ' उपयमन्या ' स्रुचा ' महावीरे ' प्रत्यानयति पुनरासिञ्चति । पयआसेचनसमये महावीरात् विष्यन्दनेन निर्गतं यत् हविर्घृतं आसीत् तदिदानीं " स्वाहा घर्म्माय " इति मन्त्रेण महावीरे पुनरासिंचेदित्यर्थः । अथैतत् स्तौति—एष वै घर्म्मो॰ वेव बंधुरिति । घर्म्मशब्दस्य दीप्यमानसूर्यवाचकत्वात् प्रवर्ग्यस्य च तदात्मकत्वात्, " घर्म्माय " इत्यनेन प्रवर्ग्यमेव तर्प्पयति । " तस्मादाह " इति निगमनम् । " अवरꣳ स्वाहाकारम् " इत्यादि मन्त्रादिगतस्वाहाकारप्रशंसा । एतत्सर्वं व्याख्यातम् ॥ १३ ॥

इत्थं प्रत्यानयनानंतरं आम्नातस्य मन्त्रस्य विनियोगमाह—आनीते जपति स्वाहा घर्म्मः पित्र इति । उपयमन्या महावीरे प्रत्यानीते सति " स्वाहा घर्म्मः पित्रे " इति मंत्रं ' जपति ' । अस्य मन्त्रस्य पितृसंबंधं पुरस्तात् स्वाहाकारं च प्रशंसति—यज्ञस्य शीर्ष॰वेव बंधुरिति । व्याख्यातमेतत् ॥ १४ ॥

---

१—" स्वाहा घर्म्मः पित्रे " इति जपित्वा । का. श्रौ. सू. २६ । ९० ।

(ब्रां) नानुवाक्यामन्वाह । सकृदु ह्येव पराञ्चः पितरस्तस्मान्नानुवाक्यामन्वाहातिक्रम्याश्राव्याह घर्म्मस्य यजेति व्वषट्कृते जुहोति ॥ १९ ॥

व्विश्वाऽआशा दक्षिणसदिति । सर्व्वाऽआशा दक्षिणसदित्येवैतदाह व्विश्वान्देवानयाडिहेति सर्व्वान्देवानयाक्षीदिहेत्येवैतदाह स्वाहाकृतस्य घर्म्मस्य मधोः पिबतमश्विनेत्यश्विनावेवैतदाहाश्विनौ ह्येतद्यज्ञस्य शिरः प्रत्यधत्तां तावेवैतत्प्रीणात्यवरꣳ स्वाहाकारङ्करोति परान्देवतामसावेव बन्धुः ॥ १६ ॥

---

नानुवाक्यामन्वाह । सकृत उ ह्येव परांचः पितरः । तस्मान्नानुवाक्यामन्वाह । अतिक्रम्याश्राव्याह । घर्मस्य यजेति । वषट्कृते जुहोति ॥ १९ ॥

" विश्वा आशा दक्षिणसत् "–इति । सर्वा आशा दक्षिणसत् इत्येवैतदाह । " विश्वान्देवानयाडिह "–इति । सर्वान्देवानयाक्षीदिह इत्येवैतदाह । " स्वाहाकृतस्य घर्मस्य मधोः पिबतमश्विना "–( वा. सं. ३८।१० ) इति । अश्विनावेवैतदाह । अश्विनौ ह्येतद्यज्ञस्य शिरः प्रत्यधत्ताम् । तावेवैतत्प्रीणाति। अवरं स्वाहाकारं करोति । परां देवताम् । असावेव बंधुः ॥ १६ ॥

---

अथ अस्य घर्मयागस्य वषट्कारप्रदानत्वात् प्रसक्तामनुवाक्यां निषेधति–नानुवाक्यामन्वाहेति । 'पराञ्चः' पराङ्मुखाः ' पितरः ' ' सकृत् उ ' सकृत् खलु सकृत्करणप्रियाः एकवारानुष्ठानेनैव तृप्यंति । अत्र च याज्ययैव तत्स्मरणसिद्धौ पुनरनुवाक्यायामनूच्यमानायां सकृत्त्वनियमो भज्येत । ' तस्मात् ' ' अनुवाक्यां न ब्रूयात् । अथ महावीरस्थेन हविषा होमं विधत्ते–अतिक्रम्याश्राव्या० जुहोतीति ।"व्विश्वा आशा दक्षिणसत्" इति । अपरेणाहवनीयं दक्षिणा 'अतिक्रम्य आश्राव्य' आश्रावणं कृत्वा ' घर्म्मस्य यजेति ' होतारमुद्दिश्याह । तेन च याज्यांते ' वषट्कृते ' वषट्कारे उक्ते सति " विश्वाऽआशाः " इति मन्त्रेण घर्मं जुहोति ॥ १९ ॥

विश्वा आशा दक्षिणसदिति । अथोपात्तस्यास्य मन्त्रस्य प्रथमभागस्य तात्पर्यमाह–सर्वा आशा० तदाहेति । ' दक्षिणसत् ' आहवनीयस्य दक्षिणदेशे सीदन् ब्रह्मा अध्वर्युर्वा ' विश्वाः ' सर्वाः ' आशाः ' प्रीणाति इममेवार्थमेतदाह । विश्वशब्दः सर्वशब्दपर्याय इति ब्राह्मणाभिप्रायः । अथ द्वितीयपादमनूद्य व्याचष्टे–विश्वान्देवानयाडि० तदाहेति । अयाडिति पदस्य ' अयाक्षीत् ' इष्टवानस्मीत्यर्थः इति श्रुतेरभिप्रायः । स्पष्टमन्यत् । अथोत्तरार्द्धमनूद्य व्याचष्टे–स्वाहाकृतस्य घर्मस्य तदाहेति । हे ' अश्विनौ ' युवां ' स्वाहाकृतस्य ' स्वाहाकारेण हुतस्य घर्मलक्षणस्य ' मधोः ' मधुनः रसं पिबतमिति अश्विनावेव हविर्भोक्तारौ एतन्मन्त्रवाक्यं ' आह ' ब्रूते सत्स्वपि अन्येषु देवेषु । तस्मात् इमावश्विनौ अत्र प्रतिपाद्येते । अस्यार्द्धर्चस्यादौ किमर्थः स्वाहाशब्दप्रयोगः ? इति तत्राह–अश्विनौ ह्येत० वेव बंधुरिति । सिद्धमेतत् ॥ १६ ॥

---

१–अतिक्रम्याश्राव्याह घर्म्मस्य यजेति । व्वषट्कृते जुहोति व्विश्वा आशा इति । का. श्रौ. सू. २६ । ९० । ९१ ।



३०८

( उ ) अथ हुत्वोर्ध्वमुत्कम्पयति । दिवि धाऽइमं यज्ञमिमं यज्ञन्दिवि धाऽइत्यसौ वाऽआदित्यो घर्मो यज्ञो दिवि वाऽएष हितो दिवि प्रतिष्ठितस्तमेवैतत्प्रीणाति तस्मादाह दिवि धाऽइमं यज्ञमिमं यज्ञन्दिवि धाऽ इत्यनुवषट्कृते जुहोति ॥ १७ ॥

स्वाहाऽग्नये यज्ञियायेति । तत्स्विष्टकृद्भाजनमग्निर्हि स्विष्टकृच्छं यजुर्भ्यऽ इति यजुर्भिर्ह्येषोऽस्मिँल्लोके प्रतिष्ठितस्तान्येवैतत्प्रीणात्यवरं स्वाहाकारङ्करोति परान्देवतामसावेव बन्धुः ॥ १८ ॥

---

अथ हुत्वोर्ध्वमुत्कंपयति–" दिवि धा इमं यज्ञमिमं यज्ञं दिवि धाः "–इति । असौ वा आदित्यो घर्मो यज्ञः दिवि वा एष हितः दिवि प्रतिष्ठितः । तमेवैतत्प्रीणाति । तस्मादाह–" दिवि धा इमं यज्ञमिमं यज्ञं दिवि धाः "–इति । अनुवषट्कृते जुहोति ॥ १७ ॥

" स्वाहाऽग्नये यज्ञियाय "–इति । तत्स्विष्टकृद्भाजनम् । अग्निर्हि स्विष्टकृत् । " शं यजुर्भ्यः "–( वा. सं. ३८ । ११ ) इति । यजुर्भिर्ह्येषोऽस्मिँल्लोके प्रतिष्ठितः । तान्येवैतत्प्रीणाति । अवरं स्वाहाकारं करोति । परां देवताम् । असावेव बंधुः ॥ १८ ॥

---

अथोत्कंपनं विधत्ते–अथ हुत्वोर्ध्वं० दिवि धा इतीति । ' अथ हुत्वा ' होमानंतरं " दिवि धा इमम् "–इति ' मंत्रेण ऊर्ध्वं ' ऊर्ध्वाभिमुखं अग्निं त्रिः ' उत्कम्पयति ' उज्ज्वालयति । तथा च कात्यायनः–" दिवि धा इति त्रिरुत्कम्पयति " ( का. श्रौ. सू. २६ । ९२ )। अथ मन्त्रं व्याचष्टे–असौ वा आदित्यो घर्म्मो० दिवि धा इतीति । असावादित्यः खलु घर्मात्मको यज्ञः । ' दिवि ' अंतरिक्षे खलु ' एषः ' आदित्यः ' हितः ' निहितः तस्मिन्नेव द्युलोके प्रतिष्ठितश्च । अतः ' इमं ' प्रवर्ग्यात्मकं ' यज्ञं, दिवि, धाः ' धेहि स्थापय इति । द्युस्थं तमेवादित्यं एतेन ' प्रीणाति ' । " तस्मात् " इत्यादि निगमनम् । अथानुवषट्कारे होमं विधत्ते–अनुवषट्कृते जुहोति स्वाहाऽग्नये यज्ञियायेतीति । ' अनुवषट्कृते ' " घर्म्मस्याग्ने व्वीहि ३ वौ ३ षट् " इति होत्रा अनुवषट्कारे कृते " स्वाहाऽग्नये " इति मंत्रेण जुहोति ॥ अयमनुवषट्कारे यो होमः स स्विष्टकृत्स्थानीयः, इति वदन् अत्र तात्पर्यमाचष्टे–तत्स्विष्टकृद्भाजन० वेव बंधुरिति । ' तत् ' अनुवषट्कारेण हवनं ' स्विष्टकृद्भाजनं ' स्विष्टकृद्यागस्थानीयम् । ' अग्निः ' खलु ' स्विष्टकृत् ' स्विष्टकृद्याग-देवता स चाग्निः अस्मिन्मंत्रे दृश्यते इति यागमन्त्रयोः संगतिः । " शं यजुर्भ्यः " व्याख्यानार्थमुपादानम् । ' शं ' सुखं यजुर्मंत्रेभ्यः अस्त्विति तदर्थः । ' एषः ' प्रवर्ग्यः यजुर्मंत्रैः ' हि ' ' अस्मिन् लोके प्रतिष्ठितः ' यजमानेषु लब्धास्पदो वर्तते । अतः तत्प्रतिष्ठाहेतून् ' तानि ' यजूंषि एव अनेन मन्त्रभागेन ' प्रीणाति ' । गतमन्यत् ॥ १७ ॥ १८ ॥

---

१–दिवि धा इति त्रिरुत्कंपयति । का. श्रौ. सू. २६ । ९२ । इति सूत्रव्याख्याने महावीरं इति कर्कदेवयाज्ञिकमहीधराभ्यां भाष्यकृतः ।

२–स्वाहाऽग्नय इत्यनुवषट्कृते । का. श्रौ. सू. २६ । ९३ । जुहोतीत्यर्थः ।

( ३ ) अथ ब्रह्माऽनुमन्त्रयते । ब्रह्मा वाऽऋत्विजाम्भिषक्तमस्तद्यऽएवर्त्विजाम्भिषक्तमस्तेनैवैनमेतद्यज्ञम्भिषज्यति ॥ १९ ॥

( त्यु ) अश्विना घर्म्मम्पातमिति । ( त्य ) अश्विनावेवैतदाहाश्विनौ ह्येतद्यज्ञस्य शिरः प्रत्यधत्तान्तावेवैतत्प्रीणाति ॥ २० ॥

हार्द्दानमहर्दिवाभिरूतिभिरिति । ( त्यु ) अनिरुक्तमनिरुक्तो वै प्रजापतिः प्रजापतिर्य्यज्ञस्तत्प्रजापतिमेवैतद्यज्ञम्भिषज्यति ॥ २१ ॥

तन्त्रायिणऽइति । ( त्ये ) एष वै तन्त्रायी यऽएष तपत्येष हीमाँल्लोकाँस्तन्त्रमिवानुसञ्चरत्येषुऽउ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह तन्त्रायिणऽइति ॥ २२ ॥

---

अथ ब्रह्माऽनुमंत्रयते । ब्रह्मा वा ऋत्विजां भिषक्तमः । तद्य एवर्त्विजां भिषक्तमः । तेनैवैनमेतद्यज्ञं भिषज्यति ॥ १९ ॥

"अश्विना घर्मं पातम्"-इति । अश्विनावेवैतदाह । अश्विनौ ह्येतद्यज्ञस्य शिरः प्रत्यधत्ताम् । तावेवैतत्प्रीणाति ॥ २० ॥

"हार्द्दानमहर्दिवाभिरूतिभिः"-इति । अनिरुक्तम् अनिरुक्तो वै प्रजापतिः । प्रजापतिर्यज्ञः । तत्प्रजापतिमेवैतद्यज्ञं भिषज्यति ॥ २१ ॥

" तंत्रायिणे "-इति । एष वै तंत्रायी । य एष तपति । एष हीमांल्लोकांस्तंत्रमिवानुसंचरति । एष उ प्रवर्ग्यः । तदेतमेवैतत्प्रीणाति । तस्मादाह-" तंत्रायिणे "-इति ॥ २२ ॥

---

अथ यदुक्तं सूत्रकारेण-"अश्विना घर्म्ममिति ब्रह्माऽनुमंत्रयते" (का.श्रौ.सू.२६।९४) इति, तद्विधत्ते-**अथ ब्रह्माऽनुमंत्रयते** इति । अथानुवषट्कारमन्त्रानंतरं 'ब्रह्मा' वक्ष्यमाणेन मन्त्रेण घर्म्ममनुमन्त्रयते । ननु सन्ति अन्ये बहव ऋत्विजः, किमिति स एवानुमन्त्रणे विधीयते ? इत्यत आह-**ब्रह्मा वा० भिषज्यतीति** । 'ऋत्विजां' अध्वर्युप्रभृतीनां मध्ये 'ब्रह्मा' खलु 'भिषक्तमः' अतिशयेन भैषज्यकरः । छेदनभेदनविस्मरणादिना यज्ञस्य यदंगं दूषितं तस्य सर्वस्य तत्प्रायश्चित्तकरणेन समाधातृत्वात् । 'तत्' तथा च 'ऋत्विजां' मध्ये 'यः एव' 'भिषक्तमः' । 'तेनैव' 'यज्ञं' छिन्नशिरस्कं एतेनानुमन्त्रणेन 'भिषज्यति' चिकित्सति । पुनः समादधातीत्यर्थः । " भिषज् चिकित्सायाम् " ( धा. पा. कण्ड्वा. २२ ) इति धातुः ॥ १९ ॥

अथ मंत्रस्य प्रथमभागमनूद्य व्याचष्टे-**अश्विना घर्म्मं० त्प्रीणातीति** । 'अश्विना घर्म्ममिति अश्विशब्दयोगात् अनेनाश्विनावेव 'प्रीणाति' । सिद्धमन्यत् ॥ २० ॥

अथ द्वितीयभागमनूद्य व्याचष्टे-**हार्द्दानमह० भिषज्यतीति** । "हार्द्दानम्"-इति मंत्रभागे देवतावाचकशब्दाभावात् "अनिरुक्तं" निःशेषेणोक्तं निरुक्तं तद्विलक्षणं एतन्मंत्रवाक्यम् । प्रजापतिश्च सर्वात्मकत्वात् केनचित् आकारविशेषेण 'अनिरुक्तः' निरुक्तिरहितः । स एव प्रजापतिर्यज्ञः । तत्तस्मात् अनिरुक्तेन अनिरुक्तं प्राजापत्यात्मकं इमं यज्ञमेव 'भिषज्यति' चिकित्सति ॥ २१ ॥

अथ तृतीयभागमनूद्य व्याचष्टे-**तंत्रायिण० तंत्रायिण इतीति** । 'य एषः' सूर्यस्तपति 'एषः' खलु

नमो द्यावापृथिवीभ्यामिति । तदाभ्यान्द्यावापृथिवीभ्यान्निह्नुते ययो-रिदꣳ सर्वमधि ॥ २३ ॥

( द्वचु ) अथ यजमानः । ( नो ) यज्ञो वै यजमानो यज्ञेनैवैतद्यज्ञम्भिषज्यति ॥ २४ ॥

( त्यु ) अपातामश्विना घर्म्ममिति । ( त्य ) अश्विनावेवैतदाहाश्विनौ ह्येतद्यज्ञस्य शिरः प्रत्यधत्तान्तावेवैतत्प्रीणाति ॥ २५ ॥

---

"नमो द्यावापृथिवीभ्याम्"–( वा. सं. ३८ । १२ ) इति । तदाभ्यां द्यावापृथिवीभ्यां निह्नुते । ययोरिदं सर्वमधि ॥ २३ ॥

अथ यजमानः । यज्ञो वै यजमानः । यज्ञेनैवैतद्यज्ञं भिषज्यति ॥ २४ ॥

"अपातामश्विना घर्मम्"–इति । अश्विनावेवैतदाह । अश्विनौ ह्येतद्यज्ञस्य शिरः प्रत्यधत्ताम् । तावेवैतत्प्रीणाति ॥ २५ ॥

---

'तंत्रायी' तन्यते अनेनेति व्युत्पत्त्या तंत्रमिति तंतुपूर्णा तुरी अभिधीयते । सा यथा वस्त्रवानसमये प्रतिसूत्रं दक्षिणोत्तरभागौ अभिलक्ष्य पुनः पुनरावर्तते । एवमयते सर्वान् लोकान् गच्छतीति तंत्रायी सूर्यः । इममेवार्थं स्वयमेव व्याचष्टे–एष हीति । 'एषः' खलु 'इमान्' पृथिव्यादीन् 'लोकान्' 'तंत्रमिव' तंतुसाधनभूता तुरीव 'अनुसंचरति' क्रमेण पर्यावर्तते । गतमन्यत् ॥ २२ ॥

अथ चतुर्थभागमनूद्य व्याचष्टे–नमो द्यावापृथिवी० सर्वमधीति । "नमो द्यावापृथिवीभ्याम्" इति यद्वाक्यं तत्तेन 'आभ्यां' द्यावापृथिवीभ्यां' नमस्करोति । सुखावस्थानार्थं ययोर्द्यावापृथिव्योः 'अधि' उपरि 'सर्वमिदं' भूतजातं वर्तते ॥ २३ ॥

अथ यजमानकर्तृकमनुमंत्रणं विधत्ते–अथ यजमान इति । 'अनुमंत्रयते' इत्यनुषंगः । 'अथ' अनुवषट्कारहोमानंतरं, 'यजमानः' "अपातामश्विना" इति मंत्रेण अनुमंत्रयते । तदुक्तं कात्यायनेन–"अश्विना घर्ममिति ब्रह्माऽनुमंत्रयते अपातामिति यजमानः" ( का. श्रौ. सू. २६ । ९४ । ९९ ) इति । अथैतदनुमंत्रणमुपपादयति–यज्ञो वै यज० भिषज्यतीति । 'यज्ञः' एव खलु 'यजमानः' तत्स्वामित्वात् । तत्तस्मात्-यजमानेनानुमंत्रणे 'यज्ञेनैव' यजमानलक्षणेन 'यज्ञं भिषज्यति' चिकित्सति ॥ २४ ॥

अथ मन्त्रस्य प्रथमभागमनूद्य व्याचष्टे–अपातामश्विना० त्प्रीणातीति । "अपातामश्विना घर्म्मम्" इति एतद्वाक्यं अश्विनावेव 'आह' प्रतिपादयति । गतमन्यत् ॥ २५ ॥

---

१–वानशब्दार्थः सीवनम् । "वानं शुष्कफले शुष्के सीवने गमने कटे । जलसंप्लुतवातोर्मिसुरंगासौरभीषु च ।" इति हैमात् । सीवनं नाम स्यूतिः । "सेवनं सीवनं स्यूतिः" इत्यमरात् ॥

२–हुतं घर्ममेवानुमंत्रयत इत्यर्थः ।

( त्यु ) अनु द्यावापृथिवीऽअमꣳसातामिति । तदिमे द्यावापृथिवीऽआह यथोरिदꣳ सर्व्वमधीहैव रातयः सन्त्वितीहैव नो धनानि सन्त्वित्येवैतदाह ॥ २६ ॥

( द्वा ) अथ पिन्वमानमनुमन्त्रयते । ( तऽइ ) इषे पिन्वस्वेति व्वृष्ट्यै तदाह यदाहेषे पिन्वस्वेत्यूर्ज्जे पिन्वस्वेति यो व्वृष्टादूर्ग्रसो जायते तस्मै तदाह ब्रह्मणे पिन्वस्वेति तद्ब्रह्मणऽआह क्षत्त्राय पिन्वस्वेति तत्क्षत्त्रायाह द्यावापृथिवीभ्याम्पिन्वस्वेति तदाभ्यान्द्यावापृथिवीभ्यामाह यथोरिदꣳ सर्व्वमधि ॥ २७ ॥

---

"अनु द्यावापृथिवी अमंसाताम्"–इति । तदिमे द्यावापृथिवी आह । ययोरिदं सर्वमधि । "इहैव रातयः सन्तु" ( वा. सं. ३८ । १३ ) इति । इहैव नो धनानि सन्तु इत्येवैतदाह ॥ २६ ॥

अथ पिन्वमानमनुमन्त्रयते । "इषे पिन्वस्व"–इति । वृष्ट्यै तदाह । यदाह । "इषे पिन्वस्व"–इति । "ऊर्जे पिन्वस्व"- इति । यो वृष्टादूर्ग्रसो जायते । तस्मै तदाह । "ब्रह्मणे पिन्वस्व"- इति । तत् ब्रह्मण आह । "क्षत्राय पिन्वस्व"–इति । तत् क्षत्रायाह । "द्यावापृथिवीभ्यां पिन्वस्व"-( वा. सं. ३८ । १४ ) इति । तदाभ्यां द्यावापृथिवीभ्यामाह । ययोरिदं सर्वमधि ॥ २७ ॥

---

अथ द्वितीयभागमनूद्य व्याचष्टे–अनु द्यावापृथिवी० सर्व्वमधीति । "अनु द्यावापृथिवी" इत्येतद्वाक्यं 'तत् इमे' दृश्यमाने 'द्यावापृथिवी' द्यावापृथिव्यौ 'आह' प्रतिपादयति । अन्यद्गतम् । अथ तृतीयभागमनूद्य तात्पर्यमाह–इहैव रातयः सं० तदाहेति । "रा दाने" ( धा. पा. अ. प. ४७ ) इति धातुः । रायन्ते दीयन्ते इति रातयो धनानि । तथा च "इहैव" इत्येतद्वाक्यम् इहैवास्मिन्नेव लोके 'नः' अस्माकं 'धनानि सन्तु' भवन्तु इति इममेवार्थम् 'आह' प्रतिपादयति ॥ २६ ॥

एवं वषट्कारानुवषट्कारयोः महावीरस्थं हविः हुत्वा यत् तत्र अवशिष्टं तेन प्रतिदिशं पिन्वनं कार्यम् । तस्मिन् समये यजमानस्य पिन्वमानानुमंत्रणं विधत्ते–अथ पिन्वमानमनुमन्त्रयते इति । 'अथ' होमानंतरं पिन्वमानं "पिवि सेचने" ( धा. पा. भ्वा. आ. ९८९ ) आहवनीये सिच्यमानं घर्म्मं "इषे पिन्वस्व" इति मन्त्रेण अनुमन्त्रयते । अथ तस्य प्रथमभागमनूद्य व्याचष्टे–इषे पिन्वस्वेति । "इषे पिन्वस्व" इति अनुमन्त्रणमन्त्रप्रतीकग्रहणम् । तत्र इषे पिन्वस्वेति यदाह । इष्यते सर्वप्राणिभिः इति इट् । तथा च 'वृष्ट्यै' वर्षणार्थं 'पिन्वस्व' सिञ्चस्व इत्येवार्थमेतत् वाक्यमाह । अथ द्वितीयभागमनूद्य व्याचष्टे–ऊर्जे पिन्वस्व०

---

१–इषे पिन्वस्वेति पिन्वमानमनुमन्त्रयते । का. श्रौ. सू. २६ । ९२ । हुतं घर्मसेव ।

स युदूर्द्धः पिन्वते। तद्युजमानाय पिन्वते यत्प्राङ्तुद्देवेभ्यो युद्दक्षिणा तुत्पितृभ्यो युत्प्रत्यङ्तुत्पशुभ्यो यदुदङ्तुत्प्रजायाऽअनपराद्धन्न्वेव युजमानस्योद्ध्वों ह्येषु पिन्वित्वाऽथ युान्दिशम्पिन्वते ताम्पिन्वते युदा शाम्यन्ति विप्रुषः॥ २८॥

---

स यदूर्ध्वः पिन्वते। तद्यजमानाय पिन्वते। यत्प्राङ् तद्देवेभ्यः। यद्दक्षिणा तत्पितृभ्यः। यत्प्रत्यङ् तत्पशुभ्यः। यदुदङ् तत्प्रजायै। अनपराद्धं न्वेव यजमानस्योर्ध्वो ह्येषः। पिन्वित्वाऽथ यां दिशं पिन्वते। तां पिन्वते। यदा शाम्यंति विप्रुषः॥ २८॥

---

तदाहेति। मेघैः 'वृष्टात्' भूम्यां सिक्तात् उदकात् यः 'ऊर्क् रसः' अन्नरसः 'जायते' उत्पद्यते। तत् अस्मिन्मंत्रे ऊर्क्शब्देनोच्यते। अतः 'तस्मै' तथाविधाय 'ऊर्जे' रसाय 'पिन्वस्व' इति तद्वाक्यमाह। तृतीयभागमनूद्य व्याचष्टे—**ब्रह्मणे पिन्वस्वेति**। "ब्रह्मणे पिन्वस्व" इति यद्वाक्यं तत् 'ब्रह्मणे' ब्राह्मणजातये तं ऊर्ग्रसं पिन्वस्व इति अमुमर्थमाह। अथ चतुर्थभागमनूद्य व्याचष्टे—**क्षत्राय पिन्वस्वेति तत् क्षत्रायाहेति**। "क्षत्राय पिन्वस्व" इति यत् तत् 'क्षत्राय' क्षत्रियजातये 'पिन्वस्व' इत्याह। अथ पंचमभागमनूद्य व्याचष्टे—**द्यावापृथिवीभ्यां पिन्वस्वेति० सर्वमधीति**। "द्यावापृथिवीभ्यां पिन्वस्व" इति यद्वाक्यं तत् 'आभ्यां' दृश्यमानाभ्यां 'द्यावापृथिवीभ्यां द्यावापृथिव्योः अर्थं लोकद्वयप्रीणनार्थं पिन्वस्वेति अमुमर्थमाह॥ २७॥

अथ प्रागादिदिक्षु मध्ये च पिन्वनं अर्थवादेन उन्नयति—**स यदूर्ध्वः पिन्वते इति**। यद्यदि 'सः' घर्मः 'ऊर्ध्वः' ऊर्ध्वाभिमुखः मध्ये 'पिन्वते'। तत्तदा 'यजमानाय' यजमानस्य श्रेयोऽर्थमेव 'पिन्वते'। यद्यदि 'प्राङ्' प्राङ्मुखः प्राग्दिगवस्थितः पिन्वते, तत्तदा 'देवेभ्यः' हविर्भोक्तृभ्यः एष घर्मः पिन्वते इति विद्यात्। यद्यदि 'दक्षिणा' दक्षिणतः दक्षिणदिग्भागे पिन्वते, तत्तदा 'पितृभ्यः' पितृप्रीत्यर्थं पिन्वते इति विद्यात्। यद्यदि 'प्रत्यङ्' प्रत्यङ्मुखः पश्चिमदिग्भागे पिन्वते तत्तदा 'पशुभ्यः' गवादिपशुतृप्त्यर्थं पिन्वते इति विद्यात्। यद्यदि 'उदङ्' उदङ्मुख उत्तरदिग्भागे घर्मः पिन्वते, तत्तदा 'प्रजायै' पुत्रपौत्रादिरूपायै तद्वर्द्धनार्थम् पिन्वते इति विद्यात्। एवं अनेन क्रमेण पिन्वने सति यजमानस्य "अनपराद्धं न्वेव" अपराधरहितमेव तु कर्म कृतं भवति। कुतः? यतः 'एषः' यजमानः 'ऊर्ध्वः' ऊर्ध्वदेशावस्थितः स्वर्गाभिमुखः। तस्मात् यजमानार्थम् ऊर्ध्वं पिन्वते इत्येव युक्तम्। अन्यथाकरणे अपराधः स्यादिति भावः। यस्मादेवं तस्मादेव कारणात्, एतत् ऊर्ध्वाभिमुखं प्रथमं 'पिन्वित्वा' पिन्वनं कृत्वा अथानंतरमेव 'यां दिशं पिन्वते'। प्राच्यादिषु यस्यां दिशि पिन्वनं करोति 'तां पिन्वते' तस्यां दिशि घर्मं सिंचेत्। यजमानफलार्थं प्रथमम् ऊर्ध्वं पिन्वनं कृत्वा पश्चात्प्रागादिदिक्षु देवादितृप्त्यर्थं पिन्वनं कुर्यात्। इति विधिरुन्नीतो भवति। एवं कुर्वतो दक्षिणतोऽवस्थितस्याध्वर्योः प्रत्याक्रमणं विधत्ते—**यदा शाम्यन्ति विप्रुषः इति**। 'यदा' यस्मिन् काले 'विप्रुषः' महावीरस्था बिंदवः कथिताः 'शाम्यन्ति' शांताः उपरताः भवंति॥ २८॥

(घु॒ऽथ) अथ॒ प्राङि॑वोद॑ङु॒त्क्राम॑ति। ध॒र्म्मा॑ऽसि सु॒धर्म्मे॒॑त्ये॒ष वै ध॑र्म्मो य॒ऽए॒ष त॒प॑त्ये॒ष ही॒दᳪ स॒र्व्वं धा॒रय॑त्ये॒तेने॒दᳪ स॒र्व्वन्धृ॒त॑मे॒षऽउ॑ प्रवु॒र्ग्य॑स्त॒दे॑त॒मे॒वै॒त॒त्प्री॑णाति त॒स्मा॑दाह॒ ध॒र्म्मा॑ऽसि सु॒धर्म्मे॒॑ति ॥ २९ ॥

(त्यु) अ॒थ खु॒रे सा॒दय॑ति। (त्य) अमे॒न्य॑स्मे॒ नृ॒म्णा॑नि धा॒रये॑त्य॒क्रु॑ध्य॒न्नो ध॒ना॑नि धा॒रये॒त्ये॑वै॒तदा॑ह ब्र॒ह्म धा॑रय क्ष॒त्त्रं॑न्धारय॒ विश॒न्धा॑रये॒त्ये॑तत्स॒र्व्व॑न्धारये॒त्ये॑वै॒तदा॑ह ॥ ३० ॥

---

अथ प्राङिवोदङ्ङुक्रामति—" धर्मोऽसि सुधर्मा "—इति। एष वै धर्मः। य एष तपति। एष हीदं सर्वं धारयति। एतेनेदं सर्वं धृतम्। एष उ प्रवर्ग्यः। तदेतमेवैतत्प्रीणाति। तस्मादाह—" धर्मोऽसि सुधर्मा "—इति ॥ २९ ॥

अथ खरे सादयति—" अमेन्यस्मे नृम्णानि धारय "—इति। अक्रुध्यन्नो धनानि धारय। इत्येवैतदाह। " ब्रह्म धारय क्षत्रं धारय विशन्धारय "—( वा. सं. ३८। १४ ) इति। एतत्सर्वं धारयेत्येवैतदाह ॥ ३० ॥

---

अथ प्राङिवोदङ्ङुत्क्रामति धर्म्मोऽसि सुधर्म्मेतीति 'अथ प्राङिवोदङ्' प्राङ्मुख इव भूत्वा उदङ्मुखः 'उत्क्रामति' आहवनीयदक्षिणदेशात् वेदिमतिक्रम्य वेदेरुत्तरतो गच्छेत् " धर्मोऽसि " इति मन्त्रेण। अथ अस्योपात्तस्य मन्त्रभागस्य तात्पर्यगम्यमर्थं दर्शयन् प्रवर्ग्ये संगतिमाह—एष वै धर्म्मो० सुधर्म्मेतीति। 'यः एषः' सूर्यस्तपति 'एषः' खलु धर्मः धर्मशब्दाभिधेयः। कुत इति चेत्? उच्यते—'हि' यस्मात् 'इदं सर्वं' जगत् 'एष धारयति' प्रवर्षणप्रकाशादिना पोषयति। 'इदं सर्वं' च जगत् 'एतेनैव' सूर्येण 'धृतं' पोषितं दृश्यते। तस्मात् एष एव धारकत्वात् धर्म्मः। गतमन्यत् ॥ २९ ॥

एवमुत्तरत अतिक्रम्य आहवनीयस्योत्तरस्यां दिशि सिकतया उप्ते स्थले महावीरस्य सादनं विधत्ते—अथ खरे सादयति० तदाहेति। 'अथ' अनंतरं 'खरे' आहवनीयमुत्तरेण सिकताभिः कृते धिष्ण्ये 'सादयति' महावीरं निदधाति " अमेन्यस्मे " इति मन्त्रेण। " अक्रुध्यन् " इत्याद्यस्य व्याख्यानम्—" अमेनि " शब्दस्य कोऽर्थः तमाह—'अमेनि' अक्रुध्यन् " मीञ् हिंसायाम् " ( धा. पा. क्र्या. उ. ४ ) मीनाति हिनस्तीति मेनिः न मेनिरमेनिः " सुपां सुलुक् " ( पा. सू. ७। १। ३९ ) इति सुलोपः। 'अमेनि' अहिंसन् अक्रुध्यन् सन्। 'अस्मे' इति चतुर्थीबहुवचनस्य शे आदेशे रूपम्। 'नः' अस्मभ्यं 'नृम्णानि' धनानि 'धारय' दातुं हस्ते गृहाण इति इममेवार्थम् एतन्मन्त्रवाक्यं 'आह'। अथावशिष्टं मन्त्रभागमनूद्य व्याचष्टे—ब्रह्म धारय० तदाहेति। 'ब्रह्म' ब्राह्मणजातिः। 'क्षत्रं' क्षत्रियजातिः 'विट्' वैश्यजातिः। 'एतत्' वर्णत्रयोपलक्षितं 'सर्वं' जगत् हे घर्म्म! धारय इति एतमेवार्थमेतन्मंत्रवाक्यमाह ॥ ३० ॥

---

१—धर्म्मोऽसीत्युत्क्रामत्युत्तरपूर्वार्द्धम्। का. श्रौ. सू. २६। ९७।
२—अमेन्यस्मे इति खरे करोति। का. श्रौ. सू. २६। ९८। महावीरं करोति आसादयतीत्यर्थः।

( ह्ना॰ऽथ ) अथ शाकलैर्ज्जुहोति । प्राणा वै शाकलाः प्राणानेवास्मिन्नेतद्दधाति ॥ ३१ ॥

स्वाहा पूष्णे शरसऽ इति । (त्य) अयम्वै पूषा योऽयम्पवतऽएष हीदᳬं सर्व्वम्पुष्यत्येषुऽउ प्राणः प्राणमेवास्मिन्नेतद्दधाति तस्मादाह स्वाहा पूष्णे शरसऽइत्यवरᳬं स्वाहाकारङ्करोति परान्देवतामसावेव बन्धुर्हुत्वा मध्यमे परिधाऽउपश्रयति ॥ ३२ ॥

स्वाहा ग्घ्रावभ्यऽइति । प्राणा वै ग्घ्रावाणः प्राणानेवास्मिन्नेतद्दधाति हुत्वा मध्यमे परिधाऽउपश्रयति ॥ ३३ ॥

---

अथ शाकलैर्जुहोति । प्राणा वै शाकलाः । प्राणानेवास्मिन्नेतद्दधाति ॥ ३१ ॥

" स्वाहा पूष्णे शरसे "–इति । अयं वै पूषा । योऽयं पवते । एष हीदं सर्वं पुष्यति । एष उ प्राणः । प्राणमेवास्मिन्नेतद्दधाति । तस्मादाह–" स्वाहा पूष्णे शरसे "–इति । अवरं स्वाहाकारं करोति परां देवताम् । असावेव बंधुः । हुत्वा मध्यमे परिधा उपश्रयति ॥ ३२ ॥

" स्वाहा ग्रावभ्यः "–इति । प्राणा वै ग्रावाणः । प्राणानेवास्मिन्नेतद्दधाति । हुत्वा मध्यमे परिधा उपश्रयति ॥ ३३ ॥

---

अथ कात्यायनेन यदुक्तं–" विकङ्कतशकलैर्जुहोति घर्म्मे न्यज्य न्यज्य स्वाहा पूष्णे शरस इति प्रतिमंत्रम् । हुत्वा हुत्वा प्रथमपरिधाऽउपश्रयति " ( का. श्रौ. सू. २६।९९।१०० ) इति च । तदाह–अथ शाकलैर्जुहोतीति । ' अथ ' खरे सादनानंतरं ' शाकलैः ' शाकलहोमसाधनैर्मंत्रैः "स्वाहा पूष्णे शरसे" इत्यादिभिः सप्तभिः शकलैर्जुहोति । तदेतत्स्तौति–प्राणा वै शाकलाः॰ तद्दधातीति । ' शाकलाः ' शकलहोमार्था मंत्राः ' प्राणा वै ' प्राणप्रतिपादकत्वात् तदात्मकाः खलु । तस्मात् हुतेऽस्मिन् घर्म्मे ' एतत् ' एतेन शाकलहोमेन ' प्राणान् ' शीर्षण्यान् सप्त प्राणान् चक्षुःश्रोत्रप्रमुखानेव ' दधाति ' स्थापयति ॥ ३१ ॥

तदेतत्प्रतिमंत्रं दर्शयितुकामः तावत् प्रथममंत्रं दर्शयति–स्वाहा पूष्णे शरसे॰ तद्दधातीति । ' योऽयं ' वायुः पवते ' ' अयं ' खलु वृष्ट्यादिना जगत्पोषकत्वात् ' पूषा ' ' एष उ ' एष एव ' प्राणः ' । " यो वायुः स प्राणः " इति श्रुतेः । अतः ' एतत् ' एतेन पूषदेवताकेन मंत्रेण 'अस्मिन्' घर्म्मे ' प्राणमेव ' ' दधाति ' स्थापयति । उक्तमर्थं हेतूकृत्य मंत्रपाठं निगमयंस्तस्य पुरस्तात्स्वाहाकारत्वं पूर्ववत्स्तौति–तस्मादाह स्वाहा पूष्णे शरसे॰ मसावेव बंधुरिति । गतमेतत् । अथ पूर्वोक्तं लेपनिमार्जनं विधत्ते–हुत्वा मध्यमे परिधा उपश्रयतीति । " स्वाहा पूष्णे " इति मंत्रेण घर्म्मरसे अभ्यक्तं शकलं हुत्वा अग्नौ प्रक्षिप्य हस्तगतं लेपं ' परिधौ उपश्रयति ' निर्मार्ष्टि ॥ ३२ ॥

अथ द्वितीयमन्त्रस्य प्राणपरत्वं दर्शयन् तत्रापि लेपनिर्माजनं विधत्ते–स्वाहा ग्रावभ्य॰ उपश्रयतीति । " स्वाहा ग्रावभ्यः " इति द्वितीयः शकलहोममन्त्रः । शरणस्वभावत्वात् ' प्राणाः ' एव खलु ' ग्रावाणः ' अस्मिन्मंत्रे ग्रावशब्दाभिधेयाः । शिष्टं पूर्वेण समानम् ॥ ३३ ॥

स्वाहा प्रतिरवेभ्यऽइति । प्राणा वै प्रतिरवाः प्राणान्हीदꣳ सर्वं प्रतिरतं प्राणानेवास्मिन्नेतद्दधाति हुत्वा मध्यमे परिधाऽउपश्रयति ॥ ३४ ॥

स्वाहा पितृभ्यऽऊर्ध्वबर्हिर्भ्यो घर्म्मपावभ्यऽइति । ( त्यु ) अहुत्वैवोदङ्ङीक्षमाणो दक्षिणार्द्धे बर्हिषऽउपगूहति यज्ञस्य शीर्षच्छिन्नस्य रसो व्यक्षरत्स पितॄनगच्छत्त्रया वै पितरस्तानेवैतत्प्रीणात्यथ यन्न प्रेक्षते सकृदु ह्येव पराञ्चः पितरः ॥ ३५ ॥

स्वाहा द्यावापृथिवीभ्यामिति । प्राणोदानौ वै द्यावापृथिवी प्राणोदानावेवास्मिन्नेतद्दधाति हुत्वा मध्यमे परिधाऽउपश्रयति ॥ ३६ ॥

---

"स्वाहा प्रतिरवेभ्यः"—इति । प्राणा वै प्रतिरवाः । प्राणान् हीदं सर्वं प्रति रतम् । प्राणानेवास्मिन्नेतद्दधाति । हुत्वा मध्यमे परिधा उपश्रयति ॥ ३४ ॥

"स्वाहा पितृभ्य ऊर्ध्वबर्हिर्भ्यो घर्मपावभ्यः"—इति । अहुत्वैव उदङ्ङीक्षमाणो दक्षिणार्द्धे बर्हिष उपगूहति । यज्ञस्य शीर्षच्छिन्नस्य रसो व्यक्षरत् । स पितॄनगच्छत् । त्रया वै पितरः । तानेवैतत्प्रीणाति । अथ यन्न प्रेक्षते । सकृत् उ ह्येव परांचः पितरः ॥ ३५ ॥

"स्वाहा द्यावापृथिवीभ्याम्"—इति । प्राणोदानौ वै द्यावापृथिवी । प्राणोदानावेवास्मिन्नेतद्दधाति । हुत्वा मध्यमे परिधा उपश्रयति ॥ ३६ ॥

---

अथ तृतीयस्य शकलहोममन्त्रस्य प्राणपरत्वं होमानंतरं लेपनिर्मार्गं च दर्शयति—**स्वाहा प्रतिरवेभ्य इति० उपश्रयतीति** । "स्वाहा प्रतिरवेभ्यः" इति तृतीयः शकलहोममंत्रः । तत्र देवतात्वेन निर्दिष्टाः 'प्रतिरवाः' 'प्राणा वै' प्रतिरवशब्देन प्राणा एवोच्यंते इत्यर्थः । 'हि' यस्मात् 'इदं सर्वं' जगत् 'प्राणान् प्रति रतं' प्राणेषु रममाणं सत् दृश्यते । तस्मात् प्रतिरवशब्देन प्राणा अभिधेयाः । अन्यत्पूर्ववत् ॥ ३४ ॥

अथ यदुक्तं कात्यायनेन—"चतुर्थमहुतमुदङ्ङीक्षमाणो दक्षिणतो बर्हिष्युपगूहति" ( का. श्रौ. सू. २६ । १०१ ) इति । अयमर्थः—चतुर्थशकलं घर्मे अभ्यज्य अग्नावहुतं संतं वेद्यामास्तीर्णे बर्हिषि दक्षिणभागे स्वयं उदीचीं दिशमीक्षमाणः 'उपगूहति' संवृणोति । यथा शकलो न दृश्यते तथा बर्हिषः अधस्तात् निदध्यादित्यर्थः । तदेतत् विधित्सुराह—**स्वाहा पितृभ्य० प्रीणातीति** । "स्वाहा पितृभ्यः" इत्यनेन मन्त्रेण चतुर्थशकलं अग्नौ 'अहुत्वा' अप्रक्षिप्यैव स्वयमुदङ्मुखः 'ईक्षमाणः' शकलमपश्यन् 'बर्हिषः' वेद्यामास्तीर्णस्य दर्भमुष्टेः 'दक्षिणाऽर्द्धे उपगूहति' अदृश्यं करोति । गतमन्यत् । अथ शकलस्य प्रोक्षणमनूद्य स्तौति—**अथ यन्न प्रेक्षते० पितर इति** । 'अथ' च 'न प्रेक्षते' शकलस्य प्रेक्षणं न कुर्यादिति 'यत्' यदुक्तं तत्रहेतुः—'पराञ्चः' स्वतः पराङ्मुखलोकाः अभिमुखं पितरः "सकृदु हि" सकृद्भूताः खलु । एकवारकरणमेव तेषां प्रियं तच्छकलस्य पुनः पुनः प्रेक्षणे क्रियमाणे तत् व्याहन्येतेति । तस्मादादानसमये शकलं प्रेक्षित्वा पश्चात् उदूहनसमये पुनर्न प्रेक्षेतेत्यर्थः ॥ ३५ ॥

अथ पंचमशकलहोममन्त्रमनूद्य व्याचष्टे—**स्वाहा द्यावापृथिवी० दधातीति** । "स्वाहा द्यावापृथिवीभ्यां"

स्वाहा विश्वेभ्यो देवेभ्यऽइति । प्राणा वै विश्वे देवाः प्राणानेवास्मिन्नेतद्दधाति हुत्वा मध्यमे परिधाऽउपश्रयति ॥ ३७ ॥

स्वाहा रुद्राय रुद्रहूतयऽइति । ( त्य ) अहुत्वैव दक्षिणेक्षमाणः प्रतिप्रस्थात्रे प्रयच्छति तꣳ सऽउत्तरतः शालायाऽउदङ्ङ्निरस्यत्येषा ह्येतस्य देवस्य दिक्स्वायामेवैनमेतद्दिशि प्रीणात्यथ यन्न प्रेक्षते नेन्मा रुद्रो हिनसदिति ॥ ३८ ॥

---

"स्वाहा विश्वेभ्यो देवेभ्यः"–( वा. सं. ३८।१९ ) इति । प्राणा वै विश्वे देवाः । प्राणानेवास्मिन्नेतद्दधाति । हुत्वा मध्यमे परिधा उपश्रयति ॥ ३७ ॥

"स्वाहा रुद्राय रुद्रहूतये"–इति । अहुत्वैव दक्षिणेक्षमाणः प्रतिप्रस्थात्रे प्रयच्छति । तं स उत्तरतः शालाया उदंचं निरस्यति । एषा ह्येतस्य देवस्य दिक् । स्वायामेवैनमेतद्दिशि प्रीणाति । अथ यन्न प्रेक्षते । नेन्मा रुद्रो हिनसदिति ॥ ३८ ॥

---

इत्यस्मिन्मन्त्रे द्यावापृथिवीशब्देन शरीरस्थौ प्राणोदानवायू उच्येते । हृदि वर्तमानः प्राणवायुरेव पृथिवी । कंठे वर्तमान उदानवायुरेव द्यौः । उभयोरधऊर्ध्वसाम्यात् द्यावापृथिव्यात्मकत्वम् । तथैव च अनयोः अधरोत्तरस्थभावेन अवस्थानमुक्तमभिज्ञैः । "हृदि प्राणो गुदेऽपानः समानो नाभिमंडले । उदानः कंठदेशस्थो व्यानः सर्वशरीरगः" इति । तथा च अनेन मन्त्रेण 'अस्मिन्' घर्मे 'प्राणोदानावेव' वायू 'दधाति' स्थापयति । अथ पूर्ववल्लेपस्य निर्माजनं विधत्ते–हुत्वा मध्यमे परिधाऽउपश्रयतीति ॥ ३६ ॥

अथ षष्ठमन्त्रस्य शकलहोमार्थस्य प्राणपरत्वं दर्शयन् पूर्ववल्लेपनिमार्जनं विधत्ते–स्वाहा विश्वेभ्यो देवेभ्य इति०उपश्रयतीति । अत्र 'विश्वे देवाः' 'प्राणा वै' देवनशीलत्वात् विषयाभिद्योतीनि चक्षुरादीनीन्द्रियाणि विश्वदेवशब्दवाच्यानि । तथा च "प्राणानेव" इत्यादि पूर्ववत् ॥ ३७ ॥

अथ सप्तमस्य शकलस्य होमं निषिध्य निरसनं विधित्सुराह–स्वाहा रुद्राय रुद्र०निरस्यतीति । "स्वाहा रुद्राय" इति मन्त्रं पठन् सर्वेषु लेपेषु अक्तं सप्तमं शकलं अग्नौ 'अहुत्वैव' दक्षिणां दिशमीक्षमाणः स्वयं शकलमपश्यन् अध्वर्युः 'प्रतिप्रस्थात्रे' 'प्रयच्छति' । स च प्रतिप्रस्थाता 'तं' शकलं शालायाः 'उत्तरतः' प्राग्वंशगृहस्योत्तरभागे 'उदञ्चं' उदगग्रं 'निरस्यति' क्षिपेत् । कुतः उदीच्यामेव दिशि निरसनं, कस्माच्च शकलस्य न प्रेक्षणम् ? इति तदुभयमुपपादयति–एषा ह्येतस्य देव० हिनसदितीति । 'एषा' खलु उदीची 'एतस्य' रुद्रस्य 'देवस्य दिक्' । उत्तरपूर्वार्द्धाया दिशो रुद्रेण पाल्यमानत्वाच्च उत्तराऽपि दिक् तत्संबंधिनी इत्यभिप्रायः । 'अथ' रुद्रार्थं निरस्यमानं शकलमध्वर्युः 'न प्रेक्षते' इति 'यत्' तत् 'मा' मां अध्वर्युं 'रुद्रः' रोदनकारी उग्रो देवः 'नेत्' नैव 'हिनसत्' हिंस्यात् इत्यनेनाभिप्रायेण ॥ ३८ ॥

---

१–सप्तमं सर्वलेपाक्तं दक्षिणेक्षमाणः प्रतिप्रस्थात्रे प्रयच्छति । का. श्रौ. सू. २६ । १०२ ।
२–तꣳ सऽ उत्तरतः शालायाऽ उदङ्ङ्निरस्यति । का. श्रौ. सू. २६ । १०३ ।

सुप्तैताऽआहुतयो भवन्ति । सप्त वाऽइमे शीर्षन्प्राणास्तानेवास्मिन्नेतद्दधाति ॥ ३९ ॥

( त्यु ) अथ महावीरादुपयमन्याम्प्रत्यानयति । स्वाहा सं ज्योतिषा ज्योतिरिति ज्योतिर्व्वाऽ इतरस्मिन्पयो भवति ज्योतिरितरस्यां ते ह्येतदुभे ज्योतिषी संगच्छेते ऽअवरᳩं स्वाहाकारङ्करोति परान्देवतामसावेव बन्धुः ॥ ४० ॥

( रु ) अथ रौहिणौ जुहोति । ( त्यु ) अहः केतुना जुषताᳩं सुज्योतिर्ज्योतिषा स्वाहेत्यसावेव बन्धू रात्रिः केतुना जुषताᳩं सुज्योतिर्ज्योतिषा स्वाहेत्यसावेव बन्धुः ॥ ४१ ॥

---

सप्तैता आहुतयो भवन्ति । सप्त वा इमे शीर्षन्प्राणाः । तानेवास्मिन्नेतद्दधाति ॥ ३९ ॥

अथ महावीरादुपयमन्यां प्रत्यानयति–" स्वाहा सं ज्योतिषा ज्योतिः "–( वा. सं. ३८ । १६ ) इति । ज्योतिर्वा इतरस्मिन्पयो भवति । ज्योतिरितरस्याम् । ते ह्येतदुभे संगच्छेते । अवरं स्वाहाकारं करोति । परां देवताम् । असावेव बन्धुः ॥ ४० ॥

अथ रौहिणौ जुहोति–" अहः केतुना जुषतां सुज्योतिर्ज्योतिषा स्वाहा "–इति । असावेव बंधुः । " रात्रिः केतुना जुषतां सुज्योतिर्ज्योतिषा स्वाहा "–( वा. सं. ३८।१६ ) इति । असावेव बंधुः ॥ ४१ ॥

---

अथैतान् संहत्य स्तौति–सप्तैताऽ आहुतयो० दधातीति । ' एताः ' " स्वाहा पूष्णे शरसे " इत्यादिमन्त्रसाध्याः शकलद्रव्यकाः ' आहुतयः ' सप्तसंख्याः खलु भवन्ति । 'इमे शीर्षन्' शीर्ष्णि चक्षुरादिषु शकलगणेषु सप्तसु अवच्छेदकेषु वर्तमानाः प्राणाः । गतमन्यत् ॥ ३९ ॥

अथ महावीरे वर्तमानस्य शिष्टस्य हविषः उपयमन्यामासेचनं विधत्ते–अथ महावीरादुपयमन्यां० ज्योतिरितीति । " स्वाहा सञ्ज्योतिषा " इत्यनेन मन्त्रेण महावीरसकाशाद्धुतशिष्टं घर्मरसं ' उपयमन्यां ' स्रुचि ' प्रत्यानयति आसिञ्चति । अथैतत् मन्त्राभिप्रायकथनेन स्तौति- ज्योतिर्वाऽ इतर० बन्धुरिति । ' इतरस्मिन् ' अन्यतरस्मिन्महावीरे ज्योतिस्तेजोरूपं खलु ' पयो भवति ' । ' इतरस्याम् ' उपयमन्याम् आज्यलक्षणं ज्योतिर्भवति । ' एतत् ' एतेनासेचनेन ' ते ' एव ' ज्योतिषी ' ' संगच्छेते ' परस्परं संयुज्येते । तथा च ' ज्योतिषा ' उक्तलक्षणेन महावीरस्थेन ज्योतिरुपयमनीस्थं संगच्छते इति मन्त्रो व्याख्यातो भवति । अन्यत् पूर्ववत् ॥ ४० ॥

अथ सायंप्रातःकालयोः प्रवृंजनोपरिष्टात्काले होतव्यत्वेन विहितौ रौहिणपुरोडाशौ, तौ अस्मिन् काले होतव्यौ

---

१–स्वाहा सं ज्योतिषेत्युपयमन्यामासिञ्चति घर्मम् । का. श्रौ. सू. २६ । १०४ ।

( २ ) अथ यजमानाय घर्म्मोच्छिष्टम्प्रयच्छति । सऽउपहवमिष्ट्वा भक्षयति मधु हुतमिन्द्रतमेऽअग्नाविति मधु हुतमिन्द्रियवत्तमेऽग्नावित्येवै-तदाहाश्याम ते देव घर्म्म नमस्तेऽअस्तु मा मा हिꣳसीरित्याशिषमे-वैतदाशास्ते ॥ ४२ ॥

( स्तेऽथ ) अथ दक्षिणतः सिकताऽउपकीर्णा भवन्ति । तन्मार्ज्जयन्ते यऽ एव मार्ज्जालीये बन्धुः सोऽत्रानुप्रहरति शाकलानुथोपसदा चरन्त्ये-तद्व यज्ञस्य शिरः सꣳस्कृतं यथायथैनत्तदश्विनौ प्रत्यधत्ताम् ॥ ४३ ॥

---

अथ यजमानाय घर्मोच्छिष्टं प्रयच्छति । स उपहवमिष्ट्वा भक्षयति–" मधु हुतमिन्द्रतमे अग्नौ "–इति । मधु हुतमिन्द्रियवत्तमेऽग्नौ, इत्येवैतदाह । "अश्याम ते देव घर्म नमस्ते अस्तु मा मा हिंसीः "–( वा. सं. ३८ । १६ ) इति, आशिषमेवैतदाशास्ते ॥ ४२ ॥

अथ दक्षिणतः सिकता उपकीर्णा भवंति, तन्मार्जयन्ते । य एव मार्जालीये बंधुः । सोऽत्र ।

---

इत्यभिप्रेत्य आह–अथ रौहिणा जुहोति० बंधुरिति । 'अथ' प्रत्यानयनानंतरं सायंप्रातःकालीनयोः प्रवर्ग्ययोः उत्तरौ रौहिणपुरोडाशौ तयोरेकः घर्मदुहो दोहनात्प्राक्काले हुतः । अपरस्त्वस्मिन् काले होतव्य इति तयोः सायंप्रातःकालभेदेन यौ मंत्रौ विहितौ । तावेवात्रानूद्य पुनः स्तूयते–यः अयं "अहः केतुना" इति मंत्रः 'असावेव' खलु 'बंधुः' छिन्नस्य यज्ञशिरसो बंधकः । एवमुत्तरमंत्रस्यापि तात्पर्यं प्रतिपादनीयम् ॥ ४१ ॥

अथोपयमन्यामानीतस्यावशिष्टस्य घर्म्मस्य यजमानेन सह भक्षणं विधत्ते–अथ यजमानाय घर्म्मोच्छिष्टं० अग्नावितीति । अथोत्तररौहिणहोमानंतरं 'यजमानाय' यजमानार्थं 'घर्म्मोच्छिष्टं' होमातिरिक्तं घर्म्मं 'प्रयच्छति' अध्वर्युः प्रदद्यात् । 'सः' यजमानः 'उपहवमिष्ट्वा' "अध्वर्य उपह्वयस्व" इत्यादिना उपहवयाचनं कृत्वा "मधु हुतम्" इति मंत्रेण तं 'भक्षयति' । अथास्य मंत्रस्य विवक्षितमर्थमाह–मधु हुत० तदाहेति । "इंद्रतमे अग्नौ" इति कोऽर्थः । 'इंद्रतमे' इंद्रियवत्तमे 'अग्नौ' तदीये जाठरे तेजसि 'मधु' मधुरं 'हुतं' शिष्टं हविर्हुतमस्तु इत्येवार्थं एतन्मंत्रवाक्यमाह । अवशिष्टं मंत्रमनूद्य तस्य आशीराशासनपरत्वं आह–अश्याम ते० तदाशास्ते इति । 'हे घर्म्म !' 'ते' तुभ्यं 'नमः अस्तु' 'मा' मां मा 'हिंसीः' इति अहिंसाप्रतिपादनपरेण एतद्वाक्येन आशिषं अभीप्सितफलमेव आशास्ते ॥ ४२ ॥

अथ प्राग्वंशस्य दक्षिणदिग्भागे प्रवर्ग्यकर्तॄणां मार्जनं विधत्ते–अथ दक्षिणतः सिकता० बंधुः सोऽत्रेति ।

---

१–रौहिणं जुहोति । का. श्रौ. सू. २६ । १०५ । मन्त्रक्रमेणोत्तरः रात्रिरिति सायम् । का. श्रौ. सू. २६ । ७१ । इति यत्प्रागुक्तं तस्यायं मन्त्रपाठक्रमप्राप्तो होमकालः । अतः "अहः केतुना" इति द्वितीयं रौहिणं प्रातर्जुहोति । "रात्रिः केतुना" इति सायं जुहोतीति सूत्रार्थः ।

२–"अग्निहोत्रावृता हुत्वा व्वाजिनवद्भक्षयन्ति मधु हुतमिति । का. श्रौ. सू. २६ । १०७ । बहुवचनोपदेशात् घर्मर्त्विजः । वाजिनवदिति च समुपहावं भक्षणमिति कर्कः ।

३–"मार्ज्जालीये पात्रप्रक्षालनम्" का. श्रौ. स. ९ । १९ ।

( न्त ) तन्न प्रथमयज्ञे प्रवृञ्ज्यात् । ( दे ) एनस्यँ हि तदथो नेन्मऽ इन्द्रः शिरश्छिनददिति द्वितीये वैव तृतीये वाऽपशीर्ष्णा ह्येवाग्रे यज्ञेन

अनुप्रहरति शाकलान् । अथोपसदा चरंति । एतत् उ यज्ञस्य शिरः संस्कृतम् । यथायथैनत्तदश्विनौ प्रत्यधत्ताम् ॥ ४३ ॥

तं न प्रथमयज्ञे प्रवृंज्यात् । एनस्यं हि तत् । अथो नेन्म इन्द्रः शिरश्छिनददिति । द्वितीये

'अथ' यजमानस्य घर्मभक्षणानंतरं 'दक्षिणतः' दक्षिणभागे 'सिकताः' वालुकाः 'उपकीर्णाः' धिष्ण्याकारेण क्षिप्ताः 'भवंति' 'तत्' तत्र सिकताभिर्निर्मिते धिष्ण्ये सर्वे प्रवर्ग्यकर्तारः 'मार्जयंते'। सौत्ये अहनि 'मार्जालीये' एतत्संज्ञे भक्षितानां सोमपात्राणां प्रक्षालनस्थाने 'य एव बंधुः' बंधनसामर्थ्यं, 'सः अत्र' अस्मिन् सिकतोपकीर्णे स्थाने द्रष्टव्यः । यथा सोमलिप्तानि ग्रहचमसादीनि पात्राणि मार्जालीये प्रक्षाल्यन्ते, एवं उपयमन्यादि घर्मलिप्तं पात्रं अत्र प्रक्षालनीयं इत्यभिप्रायः । अथावशिष्टानां वैकंकतशकलानां प्रहरणं विधत्ते—अनुप्रहरति शाकलानिति । पूर्वं "स्वाहा पूष्णे" इत्यादिमंत्रैर्हुताः शकलाः तत्संबंधिनः अन्ये 'शाकलाः' परिश्रयणादयः । तानग्नौ प्रक्षिपेदित्यर्थः । इत्थं सोमयागे प्रवर्ग्याख्यं कर्म निर्वर्त्य तदनंतरं उपसदाख्यं कर्म कर्तव्यं इत्याह—अथोपसदा चरंतीति । 'अथ' प्रवर्ग्यानुष्ठानानंतरमेव 'उपसदा' उपसदाख्येन कर्मणा 'चरंति' अध्वर्युप्रभृतयश्चरेयुः । एवं प्रवर्ग्ये अनुष्ठिते सति छिन्नं यज्ञस्य शिरः पुनः संहितं भवतीति अमुमर्थं उपसंहरति—एतदु यज्ञस्य० प्रत्यधत्तामिति । तदेनद्यज्ञस्य 'शिरः' 'यथायथा' येन येन प्रकारेण पुराऽश्विनौ 'प्रत्यधत्तां' प्रतिहितवंतौ संयोजितवंतौ । तेनैव प्रकारेणानुष्ठितं कर्म 'यज्ञस्य शिरः संस्कृतं' संस्कारेण संयोजितं भवति ॥ ४३ ॥

इत्थं प्रवर्ग्याख्यं कर्म सांगमुक्तम् । तच्च "पुरस्तादुपसदां प्रवर्ग्यं प्रवृणक्ति" इति वाक्यात् सर्वेषु सोमयागेषु उपसद्यागात्पूर्वं अनुष्ठेयमिति चोक्तम् । अथ तस्य क करणं कचित् विषयविशेषे निषेधति—तन्न प्रथमयज्ञे प्रवृंज्यादिति । "चतुःसंस्थस्य ज्योतिष्टोमस्य प्रथमकर्तव्यो योऽतिरात्रसंस्थो यज्ञः तस्मिन् 'तं'

१—"उपश्रितानि च प्रहरति" । का. श्रौ. सू. २६ । १०६ ।

२—उपसदन्ते प्रवर्ग्योत्सादनम् । का. श्रौ. सू. २६ । ११५ ।

३—शतपथे अस्मिन्नेव कांडे "स यदैतदातिथ्येन प्रचरति । अथ प्रवर्ग्येण चरिष्यन्पुरोपसदः" ( श. प. १४ । १ । ३ । १ ) इति । "स प्रवृणक्त्यर्चिरसि" इति च । ( श. प. १४ । १ । ३ । १७ )

४—"चतुःसंस्थस्य" तथा च सूत्रयामास कात्यायनः—"एष प्रथमः सोमः" । "षडुत्तरेऽत्यग्निष्टोम उक्थ्यः षोडशी व्वाजपेयोऽतिरात्रोऽप्तोर्यामः" इति च । १० । ९ । २५ । २७ ॥ "एष वाव प्रथमो यज्ञानां यज्ज्योतिष्टोमः" ( तां. ब्रा. १६ । १ । २ ) इति तांड्यब्राह्मणश्रुतेरयं सर्वविकाराणां प्रथमः सोम इति । २५ । षडुत्तरे षट्संस्था विकारा इति । तत्रोक्थ्यषोडश्यतिरात्राणां अग्निष्टोमविकारत्वम् । अत्यग्निष्टोमस्यापि अग्निष्टोमसंशब्दनात् अग्निष्टोमविकारत्वम् । ४ । षोडशिविकारो वाजपेयः । अतिरात्रविकारोऽप्तोर्यामः । ७ । अत एव च सूत्रकारेण अत्यग्निष्टोमः अग्निष्टोमानंतरं पठितः । षोडश्यनंतरं वाजपेयः । अतिरात्रसमनंतरमप्तोर्यामः । इति स्वप्रकृत्यपेक्षया क्रतुकरणं यथा स्यादिति पाठप्रयोजनम् । तेन न क्रमार्थमिदं सूत्रम् । किंतु केषुचित्साक्षात् केषुचिच्च परंपरया अग्निष्टोमविकारप्रज्ञप्त्यर्थकमिति कर्कः ।

५—"प्रथमकर्तव्यः" इति । अप्तोर्यामप्रकृतिभूतो यः प्रथमकर्तव्यः अतिरात्रसंस्थो ज्योतिष्टोमः क्रतुः ।

देवाऽअर्च्चन्तः श्राम्यन्तश्चेरुस्तस्माद्द्वितीये वैव तृतीये वाऽथो तप्तो वाऽ एष शुशुचानो भवति ॥ ४४ ॥

तं यत्प्रथमयज्ञे प्रवृञ्ज्यात् । ( दे ) एषोऽस्य तप्तः शुशुचानः प्रजाश्च पशूँश्च प्रदहेदथोऽआहुः प्रमायुको यजमानः स्यात्तस्माद्द्वितीये वैव तृतीये वा ॥ ४५ ॥

---

वैव तृतीये वा । अपशीर्ष्णा ह्येवाग्रे यज्ञेन देवा अर्चंतः श्राम्यंतश्चेरुः । तस्मात् द्वितीये वैव तृतीये वा । अथो तप्तो वा एष शुशुचानो भवति ॥ ४४ ॥

तं यत्प्रथमयज्ञे प्रवृंज्यात् । एषोऽस्य तप्तः शुशुचानः प्रजां च पशूंश्च प्रदहेत् । अथो आहुः । प्रमायुको यजमानः स्यात् । तस्मात् द्वितीये वैव तृतीये वा ॥ ४५ ॥

---

प्रवर्ग्यं ' न प्रवृंज्यात् ' प्रवृंजनं न कुर्यात् । अग्निष्टोमसंस्थे तु प्रथमयज्ञे अयं प्रतिषेधो न भवति । " अग्निष्टोमे प्रवृणक्ति " इति वाक्यान्तरेण प्रवृंजनस्य कठोक्तत्वात् इति मीमांसकानां मतम्[1] । प्रथमयज्ञे प्रवृंजने को दोषः इत्यत आह—एनस्य॰ हि तद्॰छिनदिति । तत्प्रवर्ग्यानुष्ठानं ' एनस्यं हि ' पापार्हं पापावहं खलु आथर्वणेन दधीचा अत्यंतं सुगुप्तत्वात् इतः पूर्वं केनचिदपि यज्ञेन असंस्कृतस्य यजमानस्य प्रथममनुष्ठीयमाने यज्ञे प्रवर्ग्यानर्हकृतौ तस्य करणं पापहेतुर्भवतीत्यर्थः । 'अथो' अपि च ' मे ' मम अध्वर्योः 'नेत्' नैव ' शिरः छिनदत् ' छिन्द्यात् इति भयेनापि ' प्रथमयज्ञे न प्रवृंज्यात् ' । आथर्वणं दध्यञ्चं प्रति पुरा एवं खलु इंद्रेणोक्तं यदि इमां प्रवर्ग्यविद्यां अन्यस्मै उपदिशसि अथवा तत्प्रतिपाद्यं प्रवर्ग्याख्यं कर्म अन्यस्य यजमानस्य करोषि । तर्हि अहमागत्य तव शिरः छिन्द्यामिति । एवं सुगुप्तकर्म यदि अध्वर्युः अन्यदीये प्रथमयज्ञे प्रकटयति । तदा हि इन्द्र आगत्य तच्छिरः छिन्द्यात् । तस्मात् एतद्भयेनापि प्रथमयज्ञे न कुर्यादित्यर्थः । नन्वेवं सर्वत्रैव प्रवर्ग्यं न कार्यं ? नेत्याह—द्वितीये वैव तृतीये वा इति । द्वितीय एव वा तृतीय एव वा यज्ञे प्रवृंज्यात् । प्रथमं सोमयागमनुष्ठाय पुनः क्रियमाणे संस्थांतरे द्वितीये सोमयागे तृतीये वा प्रवृंजनं कार्यमित्यर्थः । अथैतदुपपाद्यते— ' अग्रे ' पुरा खलु ' देवाः ' ' अपशीर्ष्णा ' अपगतशिरस्केन खलु ' यज्ञेन ' 'अर्चन्तः' पूजयंतः ' श्राम्यंतः ' श्रांताश्च संतः प्रथमं चेरुश्चरितवंतः । पश्चात्प्रवर्ग्यलक्षणशिरसा युक्तेनायजन् । तत्साम्यात् अस्मिन् कालेऽपि प्रथमयज्ञमप्रवर्ग्यं कृत्वा द्वितीय एव वा तृतीय एव वा यज्ञे प्रवर्ग्यं कुर्यात् । अथ विपक्षे बाधमुक्त्वा एतदेवोपसंहरति—तस्माद्द्वितीये वैव तृतीये वा इति । ' एष ' घर्मस्तप्तः अग्निज्वालया संतप्तः ' शुशुचानः ' शोचनशीलः भवति ॥ ४४ ॥

यद्यदि ' तं ' तथाविधं घर्मं ' प्रथमयज्ञे ' प्रवृंज्यात् ' एष तप्तः ' शोचनशीलो घर्मः तर्हि अस्य यजमा-

---

१· इति मीमांसकानां मतमिति । तथा चात्र शास्त्रदीपिका ( अ. ३ पा. ३ अ. १२ सू. ३२ । ३३ । ) " तस्मात्प्रयोगांगं प्रथमयज्ञप्रयोगे न प्रवृंज्यादिति । यत्तु " अग्निष्टोमे प्रवृणक्ति " इति वाक्यांतरं तत् अनन्यार्थत्वात प्रतिषिद्धप्रथमप्रयोगविषयमेव प्रतिप्रसवार्थम् । तेनाग्निष्टोमप्रथमप्रयोगे विकल्पः । स च व्यवस्थितः । वचनांतरवशात् । तथाहि श्रूयते—कामं तु योऽनूचानः स्यात्तस्य प्रवृंज्यात् इति । तेनाग्निष्टोमप्रथमप्रयोगे अनूचानस्य नित्यं प्रयोगः । अन्येषां नित्यमप्रयोगः । अतिरात्रे प्रथमाहारे तु-

तन्न सुर्व्वस्माऽइव प्प्रुव्वृञ्ज्यात् । ( त्सु ) सुर्व्वम्वै प्प्रवुर्ग्यो नेत्सुर्व्व-स्माऽइव सुर्व्वङ्करवाणीति य्योऽन्वेवु ज्ञातस्तुस्मै प्प्रुव्वृञ्ज्याद्यो वाऽस्य प्प्रियः स्याद्यो वाऽनूचानोऽनूक्तेनैनम्प्राप्नुयात् ॥ ४६ ॥

( त्स ) सहुस्रे प्प्रुव्वृञ्ज्यात् । ( त्सु ) सुर्व्वम्वै सहुस्रꣳ सुर्व्वमेषु सर्व्व-

---

तं न सर्वस्मा इव प्रवृंज्यात् । सर्वं वै प्रवर्ग्यः । नेत्सर्वस्मा इव सर्वं करवाणीति । योऽन्वेव ज्ञातः । तस्मै प्रवृंज्यात् । यो वाऽस्य प्रियः स्यात् । यो वाऽनूचानः अनूक्तेनैनं प्राप्नुयात् ॥ ४६ ॥

सहस्रे प्रवृंज्यात् । सर्वं वै सहस्रम् । सर्वमेषः । सर्ववेदसे प्रवृंज्यात् । सर्वं वै सर्ववेदसम् ।

---

नस्य पुत्रादिरूपां ' प्रजां च ' गवाश्वादिरूपान्पशूंश्च ' प्रदहेत् ' प्रदग्धुं शक्नुयात् । ' अथो ' अपि च अभिज्ञाः ब्रह्मवादिनः ' आहुः ' कथयन्ति । ' यजमानः ' सः ' प्रमायुकः ' मरणशीलः ' स्यात् ' इति । यस्मात् प्रथमयज्ञे प्रवृंजनस्य एवं दोषजातमस्ति । तस्मात् द्वितीय एव वा तृतीय एव वा सोमयागे प्रवर्ग्यं कुर्यात् ॥ ४५ ॥

द्वितीयतृतीयादिष्वपि किं सर्वेषां यजमानानां अविशेषेण एतत्कर्तव्यं नेत्याह—तन्न सर्वस्माऽइव प्रवृंज्याऽदिति । ' तं ' प्रवर्ग्यं ' सर्वस्मै ' यजमानजनाय ' न प्रवृंज्यात् ' । दीक्षणीयाद्यंगकलापवत् अविशेषेण यजमानजनानां प्रवृञ्जनं न कार्यमित्यर्थः । कुतोऽसौ नियमः ? इत्यत आह—सर्वम्वै० करवाणीति । ' प्रवर्ग्यः ' खलु सूर्यात्मकत्वात् ' सर्वं वै ' सर्वजगदात्मकः खलु । तादृशोऽसौ यदि अविशेषेण सर्वयजमानजने प्रयुज्येत । तदा सर्वमेव सर्वस्य सर्वाकांक्षाया अभावात् असंगतं स्यात् । एकदेशं हि तस्य सार्वात्म्यमन्विच्छति । तस्मात् नेन्नैव सर्वस्यैव यजमानजनस्य ' सर्वं ' सर्वात्मकं प्रवर्ग्यं ' करवाणि ' कुर्याम् । इतिशब्दो हेतौ । अस्माद्धेतोः ' सर्वस्मै ' एव न प्रवृंज्यादित्यर्थः । तर्हि कीदृशाय यजमानजनाय प्रवृंजनं कार्यमिति तदाह—योऽन्वेव ज्ञात० नूक्तेनैनं प्राप्नुयादिति ॥ ४६ ॥

सहस्रे प्रवृञ्ज्यात्०नान्यत्रेति । 'सहस्रे' गोसहस्रदक्षिणे क्रतौ प्रवृंजनं कुर्यात् । ' सहस्रं सहस्रदक्षिणाकं

---

—तत्प्रथममाह्रीयते क्रियते यः स प्रथमाहारः तस्मिन् प्रथमकर्तव्ये इत्यर्थः । सर्वेषामेवाप्रयोगः प्रतिप्रसवाभावात् " इति । इत्थं मीमांसकमतं काठकादिशाखांतरपरं व्यक्तीकृत्य वाजसनेयिपरं शातपथिकं मतं व्यनक्ति—" प्रथमयज्ञे प्रवृंजने को दोष इत्यत आहेत्यादिना ।

१—" तस्माद्द्वितीय एव वा तृतीय एव वा " इत्यत्र अग्निष्टोमसंस्थे इत्यर्थोऽवसीयताम् ।

२—"कीदृशाय यजमानजनाय प्रवृंजनम्" इत्यत्रापि अग्निष्टोमसंस्थे इति न विस्मर्तव्यमिति । तथाऽऽह कात्यायनोऽपि—"अवकाश्यस्य प्रवृंज्यात् ' । न प्रवृंज्यात् । का. श्रौ. सू. २६ । ७ । ५२ । ५३ इति च । अवकाश एवावकाश्यः । तस्य यज्ञे प्रवर्ग्यं कुर्यात् । न सर्वस्य । तथा च श्रुतिः—" तन्न सर्वस्माऽ इव प्रवृंज्यात् " ( श. प. १४ । २ । २ । ४६ ) इति । ५२ । अवकाश्यस्येति पूर्वसूत्रादनुवर्तते । अवकाश्यस्यापि प्रथमप्रयोगे न प्रवृंज्यात् । तथाच श्रुतिः—' तं न प्रथमयज्ञे प्रवृंज्यात् ' ( श. प. १४ । २ । २ । ४४ ) इति कर्कः । अवकाश्यस्यापीत्यपिना अनवकाश्यस्यापि प्रथमप्रयोगे प्रवृंजननिषेधो व्यक्तीकृतः । शतपथमनुसृत्य मीमांसकमते अपि मीमांसासारसंग्रहकृच्छंकरभट्टाः । " नाद्ये प्रयोगे प्रवृञ्ज्यात्" । अ. ३ । पा. ३ । श्लो.४३। इति शातपथिकं सिद्धांतमाहुः । अवकाश्योऽनवकाश्यश्चेत्युभयविधः कर्ता इति शेषः । आद्ये अग्निष्टोमसंस्थे इत्यर्थः ॥

३—" त्र्यहाः पंच गर्गबैदच्छंदोमान्तर्वसुपराकाः " का. श्रौ. सू. २३ । २ । ८ । इति त्रिरात्राः पंच क्रतवो गोसहस्रदक्षिणाकाः । तथाह कात्यायनः—" सहस्रदक्षिणे त्रिरात्रे प्रतिविभज्य नयन् " । का. श्रौ. सू. १३ । ४ । १४ । इत्युपक्रम्य " दश दशाऽभेदेन दक्षिणा दद्यात् " । का. श्रौ. सू. १३ । ४ । २२ । इति ।

वेदसे प्प्रव्वृञ्ज्यात्सर्व्वम्वै सर्व्ववेदसꣳ सर्व्वमेषु विश्वजिति सर्व्वपृष्ठे प्प्रव्वृञ्ज्यात्सर्व्वम्वै विश्वजित्सर्व्वपृष्ठः सर्व्वमेषु व्वाजपेये राजसूये प्प्रव्वृञ्ज्यात्सर्व्वꣳ हि तत्सत्रे प्प्रव्वृञ्ज्यात्सर्व्वम्वै सत्रꣳ सर्व्वमेषुऽ एतान्यस्य प्प्रवर्ज्जनान्यतो नान्यत्र ॥ ४७ ॥

सर्वमेषः । विश्वजिति सर्वपृष्ठे प्रवृंज्यात् । सर्वं वै विश्वजित्सर्वपृष्ठः । सर्वमेषः । वाजपेये राजसूये प्रवृंज्यात् । सर्वं हि तत् । सत्रे प्रवृंज्यात् । सर्वं वै सत्रम् । सर्वमेषः । एतान्यस्य प्रवर्जनानि । अतो नान्यत्र ॥ ४७ ॥

कर्म 'सर्वं वै' सर्वात्मकं बहुदक्षिणाकत्वात्, 'सर्वं' सर्वजगदात्मकः । अत उभयोः साम्येन संबंधयोग्यत्वात् सहस्रे प्रवृंजनं युक्तमित्यर्थः । एवमुत्तरेष्वपि वाक्यविशेषेषु योजना । वेदः इति धननाम । सर्वं यजमानधनं यस्मिन् क्रतौ दक्षिणात्वेन विधीयते तस्मिन् सर्ववेदसे[1] क्रतावपि प्रवृंजनं कार्यम् । सर्ववेदसं सर्वस्वदक्षिणं कर्म 'सर्वं वै' सर्वात्मकं खलु । अपरिमितधनयुक्तत्वात् । तथा 'सर्वपृष्ठे' रथंतर-बृहत्[2]-वैरूप-वैराज-शाक्वर-रैवतानि पृष्ठसामानि यस्मिन् संहन्यंते तादृशे 'विश्वजिति' एतत्संज्ञके एकाहे प्रवृंजनं कुर्यात् । सर्वपृष्ठो विश्वजित् पृष्ठसामबाहुल्यात् 'सर्वं' सर्वात्मकं खलु । तथा वाजपेयराजसूययोः क्रत्वोः प्रवृंजनं कुर्यात् । 'क्रतुद्वयं' 'सर्वं' सर्वात्मकं खलु । आग्नेयाद्यग्निष्टोमादिसवनीयपशुभिः सर्वात्मकप्रजापतिदैवत्यैः पशुभिश्च[3] यागात् वाजपेयस्य सर्वत्वम् । राजसूयस्य[4] च इष्टिपशुदर्वीहोमसोमसमुदायरूपत्वात् सर्वेषां कर्मभेदानामंतर्भावात् सर्वत्वम् । तथा 'सत्रे' बहुयजमानकर्तृके सत्रयागे प्रवृंजनं कुर्यात् । 'सत्रं' सत्रयोगः बहुकर्तृकत्वात् 'सर्वं'[5] सर्वात्मकं खलु । 'एतानि' सहस्रादीनि स्थानानि 'अस्य' प्रवर्ग्यस्य नित्यप्रवृंजनस्थानानि । 'अतः' एभ्यः 'अन्यत्र' न नित्यं प्रवृंजनमित्यर्थः ॥ ४७ ॥

१–एकः सर्ववेदसः क्रतुर्ब्राह्मणकर्तृकः पुरुषमेधः । "पुरुषमेधस्त्रयोविंशतिदीक्षोऽतिष्ठाकामस्य" । "ब्राह्मणराजन्ययोः" । "सर्वस्वं ब्राह्मणस्य" । का. श्रौ. सू. २१ । १ । १, २ । १५ इति ब्राह्मणकर्तृके पुरुषमेधे सर्वस्वं दक्षिणात्वेन देयमिति विधिः । तथा अपरः सर्ववेदसः क्रतुः सर्वमेधः । "सर्वमेधः सर्वकामस्य" । "पुरुषमेधवद्दक्षिणा सभूमि" इति च । का. श्रौ. सू. २१ । २ । १–१३ ॥

२–बृहत् रथंतरं वैरूपं वैराजं शाक्वरं रैवतं इति षट्सामानि पृष्ठशब्दानूच्यमानानि । तांड्यब्राह्म. । ७ । ६ । ७ । तै. ब्रा. । १ । २ । २ । ३ । छंदोगानां निदानसूत्रं च–"बृहद्रथन्तरवैराजशाक्वरवैरूपरैवतानि वैश्वजितानि पृष्ठानीति ।

३–"अतिरात्रपशूनुपाकृत्य वशां पृश्निं मरुद्भ्य उन्नेप्भ्यः" । का. श्रौ. सू. १४ । २ । ११ । "तदभावेऽपृश्नि" का. श्रौ. सू. १४ । २ । १२ । "प्राजापत्यांश्च सप्तदश श्यामतूपरान् वत्सान्" । का. श्रौ. सू. १४ । २ । १३ । अतिरात्रपशवः कात्यायनेनोक्ताः । ते च "आग्नेयोऽग्निष्टोमे सवनीयः पशुः" । "ऐन्द्राग्नश्चोक्थ्ये द्वितीयः" । "ऐन्द्रो वृष्णिः षोडशिनि तृतीयः" । "सरस्वत्यै चतुर्थोऽतिरात्रे मेषी वा" । का. श्रौ. सू. ९ । ८ । २ । ३ । ४ । ५ ।

४–"इष्टिसोमपशवो भिन्नतन्त्राः कालभेदात्" । का. श्रौ. सू. १५ । १ । २ । "चातुर्मास्यप्रयोगः फाल्गुन्याम्" का. श्रौ. सू. । १५ । १ । १५ । एतत्सूत्रोल्लेखस्तु चातुर्मास्यानपूर्णदर्वीहोमपरत्वेनो ज्ञेयः ।

५–"यजमानाः सर्वे सत्रेषु" का. श्रौ. सू. १२ । १ । ७ ॥

तदाहुः । ( ४४ ) यदुपशिराऽअप्रवर्ग्योऽथ केनास्याग्निहोत्रꣳ शीर्षण्वुद्भवतीत्याहवनीयेनेति ब्रूयात्कथं दर्शपूर्णमासावित्याज्येन च पुरोडाशेन चेति ब्रूयात्कथञ्चातुर्म्मास्यानीति पयस्ययेति ब्रूयात्कथम्पशुबन्धऽइति पशुना च पुरोडाशेन चेति ब्रूयात्कथꣳ सौम्योऽध्वरऽइति हविर्द्धानेनेति ब्रूयात् ॥ ४८ ॥

---

तदाहुः—यदपशिरा अप्रवर्ग्यः । अथ केनास्याग्निहोत्रं शीर्षण्वद्भवतीति ?; आहवनीयेनेति ब्रूयात् । कथं दर्शपूर्णमासाविति ?; आज्येन च पुरोडाशेन चेति ब्रूयात् । कथं चातुर्मास्यानीति ?; पयस्ययेति ब्रूयात् । कथं पशुबंध, इति ?; पशुना च पुरोडाशेन चेति ब्रूयात् । कथं सौम्योऽध्वर इति ?; हविर्द्धानेनेति ब्रूयात् ॥ ४८ ॥

---

नन्वेवं अप्रवर्ग्यस्य यज्ञस्याशिरस्कत्वे कथमग्निहोत्रस्य सशिरस्त्वम् इत्याशंक्य तदुपपादयति—तदाहु० हवनीयेनेति ब्रूयादिति । तत्तत्र आहुश्चोदयंति ब्रह्मवादिनः । 'अप्रवर्ग्यः' प्रवर्ग्यरहितः क्रतुः यद्यदि 'अपशिराः' अपगतशिरस्कः स्यात् । 'अथ' तर्हि 'अग्निहोत्रं' सायंप्रातःकालयोरनुष्ठीयमानं हविर्यज्ञानामादिभूतं कर्म 'अस्य' यजमानस्य 'केन' किंलक्षणेन शिरसा 'शीर्षण्वत्' शिरसा युक्तं भवतीति । एवं ब्रुवतां तेषां आहवनीयेनाग्निना अग्निहोत्रं सशिरस्कं इत्युत्तरं ब्रूयात् । अथ दर्शपूर्णमासयोरपि अग्निहोत्रवत् सशिरस्कत्वमाह—कथं दर्शपूर्ण० ब्रूयादिति । 'दर्शपूर्णमासौ' अप्रवर्ग्यत्वात् 'कथं' सशिरस्काविति ब्रह्मवादिनां प्रश्नः । तस्य 'आज्येन च पुरोडाशेन च' इत्युत्तरं 'ब्रूयात्' । तथा च पुरोडाशस्य[1] यज्ञशिरस्त्वं तैत्तिरीयके स्पष्टमाम्नायते—"मखस्य शिरोऽसीत्याह । यज्ञो वै मखः । तस्यैतच्छिरः । यत्पुरोडाशः । तस्मादेवमाह" इति । तथा आघारानंतरं तच्छेषेणाज्येन ध्रुवासमंजने विनियुक्ते मंत्रे—"मखस्य शिरोऽसि सञ्ज्योतिषा ज्योतिरङ्क्ताम्" इति श्रवणात् आज्यस्यापि तच्छिरस्त्वमवगंतव्यम् । अथ चातुर्म्मास्यानामपि सशिरस्कत्वमाह—कथञ्चातुर्मास्यानीति पयस्ययेति ब्रूयादिति । चतुर्षु चतुर्षु मासेषु क्रियंत इति 'चातुर्मास्यानि' वैश्वदेवादीनि चत्वारि पर्वाणि । तानि कथमप्रवर्ग्यत्वात्सशिरस्कानीति प्रश्नस्योत्तरं 'पयस्ययेति ब्रूयात्' । तत्र या वैश्वदेवी आमिक्षा सैव पयस्या इत्युच्यते । तया चातुर्मास्यानि सशिरस्कानीत्यर्थः । पशुबंधस्यापि प्रवर्ग्यराहित्यादशिरस्कत्वमाशंक्याह—कथं पशुबंध इति पशुना च पुरोडाशेन चेति ब्रूयादिति । पशुः पशुपुरोडाशश्च पशुयागस्य शिरःस्थानीय इत्यर्थः । स्पष्टमन्यत् । अप्रवर्ग्यो यः सोमयागः स किं अशिरस्क एव ? नेत्याह—कथꣳ सौम्योऽध्वरऽ इति हविर्द्धानेनेति ब्रूयादिति । 'सौम्योऽध्वरः' प्रवर्ग्यरहितः सोमयागः 'कथं' केन खलु शिरसा सशिरस्क इति प्रश्नः । हविर्द्धानेनेति तस्योत्तरम् । ग्रहचमसादीनां सोमपूर्णानां आसादनस्थानं हविर्द्धानम् । तेन अप्रवर्ग्योऽपि सोमयागः सशिरस्कः इत्यर्थः । हविर्द्धानस्य[2] यज्ञशिरस्त्वं तैत्तिरीये स्पष्टमाम्नातम्—"शिरो वाऽएतद्यज्ञस्य यद्धविर्द्धानम्" (तै. सं. ६ । २ । ११) इति ॥ ४८ ॥

---

१—"शिरो ह वा एतद्यज्ञस्य यत्पुरोडाशः । स यान्येवेमानि शीर्ष्णः कपालानि । एतान्येवास्य कपालानि । मस्तिष्क एव पिष्टानि ।" श. प. १ । २ । १ । २ । इति शतपथेऽपि मस्तिष्कश्रुतौ पुरोडाशस्य यज्ञशिरस्त्वं स्पष्टमेवास्तीति बोध्यम् ।

२—"शिरो वै यज्ञस्य हविर्द्धानं तत्" श. प. ३ । ६ । १ । १ इति शतपथेऽपि हविर्द्धानस्य यज्ञशिरस्त्वं व्यक्तमेव ।

( ङ ) अथोऽआहुः । ( ख्यं ) यज्ञस्य शीर्षच्छिन्नस्य शिरऽएतद्देवाः प्रत्यदधुर्य्यदातिथ्यन्न ह वाऽअस्यापशीर्ष्णा केनचन यज्ञेनेष्टम्भवति यऽएवमेतद्वेद ॥ ४९ ॥

तदाहुः । (ख्यं) यत्प्रणीताः प्प्रणयन्ति यज्ञेऽथ कस्मादत्र न प्प्रणयतीति शिरो वाऽ एतद्यज्ञस्य यत्प्रणीताः शिरः प्प्रवर्ग्यो नेच्छिरसा शिरोऽभ्यारोहयाणीति ॥ ५० ॥

---

अथो आहुः । यज्ञस्य शीर्षच्छिन्नस्य शिर एतद्देवाः प्रत्यदधुः; यदातिथ्यम् । न ह वा अस्यापशीर्ष्णा केनचन यज्ञेनेष्टं भवति । य एवमेतद्वेद ॥ ४९ ॥

तदाहुः–यत्प्रणीताः प्रणयन्ति यज्ञे । अथ कस्मादत्र न प्रणयतीति । शिरो वा एतद्यज्ञस्य । यत्प्रणीताः । शिरः प्रवर्ग्यः । नेच्छिरसा शिरोऽभ्यारोहयाणीति ॥ ५० ॥

---

अथ प्रकारांतरेण सशिरस्कत्वमाह–अथो आहुर्यज्ञस्य० यदातिथ्यमिति । अथोशब्दः पक्षांतरपरिग्रहे । 'आहुः' अभिज्ञा ब्रह्मवादिनः कथयन्ति । किमिति चेत्; उच्यते–'शीर्षच्छिन्नस्य' छिन्नशिरस्कस्य 'यज्ञस्य' एतदेव 'शिरः' पुरा 'देवाः' 'प्रत्यदधुः' संदधुः । 'यत्' आतिथ्याख्यं हविः क्रियते, एतदेव यज्ञस्य शिरः । तेन देवैः पुरा प्रतिहितमित्यर्थः । अत एव तैत्तिरीयकं–"शिरो वा एतद्यज्ञस्य यदातिथ्यं नवकपालः पुरोडाशो भवति तस्मान्नवधा शिरो विष्यूतम् ( तै. सं. ६।२।१ )" इति । अथ एतद्वेदनफलमाह–न ह वाऽ अस्या० मेतद्वेदेति । 'यः' यजमानः 'एवं' उक्तप्रकारेण 'एतत्' अग्निहोत्रादीनां सशिरस्त्वं 'वेद' जानाति । 'अस्य' यजमानस्य 'अपशीर्ष्णा' अपगतशिरस्केन 'केनचन' केनापि 'यज्ञेन' 'इष्टं' यजनं 'न ह वै' खलु 'भवति' अग्निहोत्रादिकम् एवं यज्ञं सशिरस्कमेव कृतवान् भवतीत्यर्थः ॥ ४९ ॥

सोमयागांगभूतेषु दीक्षणीयादिषु कर्मसु प्रणीता आपः प्रणीयन्ते । तथा च तदंगभूते प्रवर्ग्येऽपि तासामपि प्रणयनेन भवितव्यमित्याशंक्याह–तदाहुर्यत्प्रणीता० रोहयाणीतीति । तत्तत्र प्रवर्ग्ये 'आहुः' कथयन्ति ब्रह्मवादिनः । 'यज्ञे' दर्शपूर्णमासादौ दीक्षणीयादौ च यद्यस्मात् 'प्रणीताः' अपः 'प्रणयन्ति' यज्ञरक्षार्थम् । तस्मात्प्रवर्ग्याख्ये यज्ञेऽपि प्रणीताप्रणयनं कार्यम् । 'अथ' च कस्मादेव कारणात् 'अत्र' प्रवर्ग्ये कर्मणि अध्वर्युस्ताः 'न प्रणयतीति' प्रश्नः । तस्योत्तरमेतत् "शिरो वा[3]" इत्यादिकम् । प्रणीता आप इति यत् 'एतद्यज्ञस्य' 'शिरो वै' प्रवर्ग्यश्च यज्ञस्य शिरः । न खलु शिरस उपरि अन्यच्छिरो भवति । एवं च

---

१–"शिरो वै यज्ञस्यातिथ्यम् । बाहू प्रायणीयोदयनीयौ । अभितो वै शिरो बाहू भवतः । तस्मादभितऽ आतिथ्यम् । एते हविषी भवतः । प्रायणीयश्चोदयनीयश्च" । श. प. ३ । २ । ३ । २० । इति शतपथेऽपि आतिथ्यस्य यज्ञशिरस्त्वं व्यक्तमेव ।

२–"यद्वेवापः प्रणयति । देवान् ह वै यज्ञेन यजमानांस्तानसुररक्षसानि ररक्षुः । न यक्ष्यध्व इति" । (श. प. १।१।१।१६) इति शतपथे प्रणीताप्रणयनब्राह्मणे प्रणीतानां यज्ञरक्षार्थत्वं स्फुटम् ।

३–शिरो ह वाऽ एतद्यज्ञस्य यत्प्रणीताः । स यत्प्रणीताः प्रणयति । शिर एवैतद्यज्ञस्य संस्करोति । स विद्याच्छिरऽ एव मऽ एतत्संस्क्रियत इति" । (श, प. ११ । २ । ६ । १ ) इति शतपथे प्रणीतानां यज्ञशिरस्त्वं व्यक्तमस्ति ।

तदाहुः । ( र्ब्बु ) यत्प्रयाजानुयाजाऽ अन्यत्र भवन्त्यथ कस्मादत्र न भवन्तीति प्प्राणा वै प्प्रयाजानुयाजाः प्प्राणाऽअवकाशाः प्प्राणाः शाकला नेत्प्राणैः प्प्राणानभ्यारोहयाणीति ॥ ५१ ॥

तदाहुः । ( र्ब्बु ) यदाज्यभागावन्यत्र जुह्वत्यथ कस्मादत्र न जुहोतीति चक्षुषी वाऽ एते यज्ञस्य यदाज्यभागौ चक्षुषी रौहिणौ नेच्चक्षुषा चक्षुरभ्यारोहयाणीति ॥ ५२ ॥

---

तदाहुः—यत्प्रयाजानुयाजा अन्यत्र भवन्ति । अथ कस्मादत्र न भवन्तीति । प्राणा वै प्रयाजानुयाजाः । प्राणा अवकाशाः । प्राणाः शाकलाः । नेत्प्राणैः प्राणानभ्यारोहयाणीति ॥ ५१ ॥

तदाहुः—यदाज्यभागावन्यत्र जुह्वति । अथ कस्मादत्र न जुहोतीति । चक्षुषी वा एते यज्ञस्य—यदाज्यभागौ । चक्षुषी रौहिणौ । नेच्चक्षुषा चक्षुरभ्यारोहयाणीति ॥ ५२ ॥

---

'नेत्' नैव 'शिरसा' अन्यच्छिरः 'अभ्यारोहयाणि' अधिरोहणं करवाणि इत्यनेनाभिप्रायेण प्रवर्ग्ये प्रणीतानां अप्रणयनम् ॥ ५० ॥

अथ प्रयाजानुयाजानां अभावकृतं यज्ञान्तरवैषम्यम् आशंक्य परिहरति—तदाहुर्यत्प्रयाजानुयाजा० भ्यारोहयाणीतीति । 'अन्यत्र' दीक्षणीयादौ यद्यस्मात् 'प्रयाजानुयाजा भवन्ति' तस्मात्प्रवर्ग्येऽपि तैर्भवितव्यम् । तथापि कस्मादेव कारणात् 'अत्र' प्रवर्ग्ये प्रयाजा अनुयाजाश्च 'न भवंति' नानुष्ठीयंते इति ब्रह्मवादिनामाक्षेपः । तस्यायं परिहारः । प्राणात्मकाः खलु प्रयाजानुयाजाः[१] । तथा ".गर्भो देवानाम्"—इत्याद्याः अत्र क्रियमाणाः अवकाशाख्या मंत्राश्च प्राणात्मकाः । तथा 'शाकलाः' शकलहोममंत्राश्च "स्वाहा पूष्णे" इत्याद्याः प्राणात्मकाः । न हि प्राणेषूपरि प्राणा भवंति । अतः नेन्नैव 'प्राणैः' अन्यैः प्राणांतरैः अन्यान् 'प्राणान्' 'अभ्यारोहयाणि' अध्यारूढान् करवाणि इत्यनेनाभिप्रायेण प्राणसंस्तुतावकाशादियुक्ते प्रवर्ग्यकर्मणि प्राणसंस्तुताः प्रयाजानुयाजाः न क्रियंत इत्यर्थः ॥ ५१ ॥

अथ यज्ञान्तरवत् कस्मात् अत्राज्यभागौ न भवतः इत्याशंक्याह—तदाहुर्यदाज्यभागा० भ्यारोहयाणीतीति । तत्र प्रवर्ग्ये पुनरन्यत् चोदयंति ब्रह्मवादिनः । यद्यस्मात्, 'अन्यत्र' स्थलांतरे दीक्षणीयादौ आग्नेयश्च सौम्यश्च इति द्वावाज्यभागौ 'जुह्वति' । अग्निं सोमं चोद्दिश्य आज्यभागाख्यं यागद्वयं कुर्वंति । एवं सति 'कस्मात्' कारणात् 'अत्र' प्रवर्ग्ये तौ न जुहोतीति । अस्योत्तरं 'यत्' यावेतौ 'आज्यभागौ' 'एते' यज्ञस्य 'चक्षुषी वै'[२] तथा प्रवर्ग्ये क्रियमाणे रौहिणहोमौ च यज्ञस्य 'चक्षुषी' । न खलु चक्षुर्युक्तस्य

---

१–"पंच प्रयाजाः । इमऽ एवास्य ते शीर्षण्याः पंच प्राणाः । मुखमेवास्य प्रथमः प्रयाजः । दक्षिणा नासिका द्वितीयः । सव्या नासिका तृतीयः । दक्षिणः कर्णश्चतुर्थः । सव्यः कर्णः पंचमः" ( श. प. । ११ । २ । ६ । ४ ) इति । तथा "त्रयोऽनुयाजाः । इमऽ एवास्य तेऽवाञ्चस्त्रयः प्राणाः" ( श. प. ११ । २ । ६ । ९ ) इति शतपथे प्रयाजानुयाजानां प्राणात्मकत्वं व्यक्तमेव ।

२–"चक्षुषी आज्यभागौ । स विद्याच्चक्षुषीऽ एव मऽ एताविति" ( श. प. ११ । २ । ६ । ४ ) इति शतपथे आज्यभागयोश्चक्षुष्ट्वं व्यक्तम् ।

तदाहुः । ( ख्युं ) यद्वानस्पत्यैर्देवेभ्यो जुह्वत्यथ कस्मादेतन्मृण्मयेनैव जुहोतीति यज्ञस्य शीर्षच्छिन्नस्य रसो व्यक्षरत्सऽइमे द्यावापृथिवीऽ अगच्छद्यन्मृदियन्तद्यदापोऽसौ तन्मृदश्चापाश्च महावीराः कृता भवन्ति तेनैवैनमेतद्रसेन समर्द्धयति कृत्स्नङ्करोति ॥ ९३ ॥

स यद्वानस्पत्यः स्यात् । ( त्प्र ) प्रदह्येत यद्धिरण्मयः स्यात्प्रलीयेत यल्लोहमयः स्यात्प्रसिच्येत यदयस्मयः स्यात्प्रदहेत्परीशासावथैषऽएवै-तस्माऽअतिष्ठत तस्मादेतन्मृण्मयेनैव जुहोति ॥ ९४ ॥

---

तदाहुः–यद्वानस्पत्यैर्देवेभ्यो जुह्वति । अथ कस्मादेतन्मृण्मयेनैव जुहोतीति । यज्ञस्य शीर्षच्छि-न्नस्य रसो व्यक्षरत् । स इमे द्यावापृथिवी अगच्छत् । यन्मृत् । इयं तत् । यदापः । असौ तत् । मृदश्चापां च महावीराः कृता भवंति । तेनैवैनमेतद्रसेन समर्द्धयति । कृत्स्नं करोति ॥ ९३ ॥

स यद्वानस्पत्यः स्यात्; प्रदह्येत । यद्धिरण्मयः स्यात्; प्रलीयेत । यल्लोहमयः स्यात्; प्रसि-च्येत । यदयस्मयः स्यात्; प्रदहेत् परीशासौ । अथैष एवैतस्मा अतिष्ठत । तस्मादेतन्मृण्मयेनैव जुहोति ॥ ९४ ॥

---

पुनश्चक्षुरंतरमपेक्षितम् । अतो नेनैव 'चक्षुषा' चक्षुरंतरं 'अभ्यारोहयाणि' अध्यारूढं करवाणि इत्यनेनाभि-प्रायेण आज्यभागयागावपि प्रवर्ग्ये न क्रियेते इत्यर्थः ॥ ९२ ॥

अथ मृण्मयपात्रस्य होमानर्हतामाशंक्य घर्महोमे तदेव योग्यमित्युपपादयति–तदाहुर्यद्वानस्पत्यै० कृत्स्नं करोतीति । 'तत्' तत्र प्रवर्ग्यविषये 'आहुः' पुनरन्यचोदयंति । यद्यस्मात् 'देवेभ्यः' देवानामर्थं 'वानस्पत्यैः' वनस्पतिविकारैः दारुमयैः पात्रैः 'जुह्वति' । 'अथ कस्मात्' कारणात् अत्र 'एतत्' घर्म-लक्षणं हविः 'मृण्मयेन' मृद्विकारेणैव महावीरादिना पात्रेण 'जुहोति' । न च एतत् युक्तम् । "न हि मृन्मयमाहु-तिमानशे" (तै. सं. २।९।४) इति श्रुत्यंतरे मृण्मयस्य आहुत्यनर्हतायाः प्रतिपादितत्वादिति शंका । तस्योत्तरं– 'यज्ञस्य शीर्षच्छिन्नस्य' इत्यादिकम् । एतच्च प्रथमाध्यायस्य द्वितीयब्राह्मणे मृदाहरणप्रस्तावे व्याख्यातम् ॥ ९३ ॥

अथ विपक्षे बाधमुक्त्वा मृण्मयेनैव होतव्यमित्युपसंहरति–स यद्वानस्पत्य० जुहोतीति । 'सः' होम-साधनभूतो महावीरः यद्यदि 'वानस्पत्यः' वनस्पतिविकारो दारुमयः 'स्यात्' तदा तस्य तपने सति 'प्रदह्येत' प्रदग्धो भवेत् । यद्यदि 'हिरण्मयः' सुवर्णनिर्मितो महावीरः 'स्यात्' तदा तापात् 'प्रलीयेत' घृतवत् विलीनो भवेत् । यद्यदि 'लोहमयः' कांस्यादिनिर्मितः 'स्यात्' तदा 'प्रसिच्येत' प्रकर्षेण सिक्तो द्रुतो भवेत् । यद्यदि च 'अयस्मयः' अयसा निर्मितः 'स्यात्' तदा 'परीशासौ' महावीरपरिग्रहार्थौ संदंशौ 'प्रदहेत्' प्रदग्धौ कुर्यात् । 'अथ' यस्मात् कारणात् 'एषः' मृण्मय एव महावीरः 'एतस्मै' घर्माय 'अतिष्ठत' तापादिक्षमत्वेन स्थितः अभूत् । 'तस्मात्' कारणात् 'एतत्' घर्माख्यं हविः 'मृण्मयेन' मृद्वि-कारेण पात्रेण महावीराख्येनैव 'जुहोति' ॥ ९४ ॥

( त्यु ) अथैतद्वै । ( द्वाऽआ ) आयुरेतज्ज्योतिः प्रविशति यऽएतमनु वा ब्रूते भक्षयति वा तस्य व्रतचर्य्या या सृष्टौ ॥ ९९ ॥

इति द्वितीयप्रपाठके प्रथमं ब्राह्मणम् ॥ १४।२।१ ॥ ( २-२ ) ॥

इति द्वितीयोऽध्यायः समाप्तः ॥ १४-२ ॥

कण्डिकासंख्या ॥ ७७ ॥

---

अथ एतद्वा आयुः, एतज्ज्योतिः प्रविशति । य एतमनु वा ब्रूते, भक्षयति वा । तस्य व्रतचर्या-या सृष्टौ ॥ ९९ ॥

---

अथ पूर्वब्राह्मणावसानेष्विव एतद्ब्राह्मणाध्येतुः तदर्थानुष्ठातुश्च प्रागुक्तां व्रतचर्यामादिशति—**अथैतद्वै० सृष्टा-विति** । सिद्धमेतत् ॥ ९९ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये
चतुर्दशकाण्डे तदन्तर्भूते प्रथमे प्रवर्ग्यकाण्डे द्वितीयेऽध्याये
द्वितीयं ब्राह्मणम् ॥ १४ । ( १ ) २ । २ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं,
सप्ताब्धीन्पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटं च ॥
धान्याद्रिं धन्यजन्मा तिलभवमतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान्गुडकृतमजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणजमनृणः शार्करं चार्कतेजा,
रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये चतुर्दशकाण्डे तदन्तर्भूते प्रथमे प्रवर्ग्यकाण्डे द्वितीयोऽध्यायः समाप्तः ॥ ( १४ ( १ )-२ ) ॥

# अथ तृतीयेऽध्याये प्रथमं ब्राह्मणम् ।
# द्वितीयप्रपाठके च द्वितीयं ब्राह्मणम् ।

स वै तृतीये॒ऽहन् । ( न्ष ) षष्ठे वा द्वादशे वा प्रवर्ग्योपसदौ समस्य प्रवर्ग्यमुत्सादयत्युत्सन्नमिव हीदᳫं शिरस्तद्यदेतमभितो भवति तत्सर्वᳫं समादायाग्रेण शालामन्तर्वेद्युपसमायन्ति ॥ १ ॥

---

## अथ घर्मोद्वासनम् ।

स वै तृतीयेऽहन् षष्ठे वा द्वादशे वा प्रवर्ग्योपसदौ समस्य प्रवर्ग्यमुत्सादयति । उत्सन्नमिव हीदं शिरः । तद्यदेतमभितो भवति । तत्सर्वं समादाय । अग्रेण शालामन्तर्वेद्युपसमायन्ति ॥ १ ॥

---

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

इत्थं द्वितीयाध्याये घर्मस्य प्रवृञ्जनमुक्तम् । अथ तृतीये तदुद्वासनमुच्यते । अत्र तावत् कस्मिन् काले तत् कर्तव्यमिति तदाह—स वै तृतीयेऽहन्० हीदᳫं शिर इति । एकाहानां त्र्युपसत्कत्वात् त्रिरात्रं सायंप्रातःकालयोः प्रवर्ग्यानुष्ठानम् । साँग्निचित्यानां च तेषां षडुपसत्कत्वेन तत्र षट्सु अहःसु कालद्वये प्रवर्ग्यानुष्ठानम् । अहीनानां द्वादशोपसत्कत्वात् द्वादशरात्रे सायंप्रातःकालयोः प्रवर्ग्यः कर्तव्यः । तथा चायमर्थः—'स वै' स खलु अध्वर्युः तृतीयेऽहनि षष्ठेऽहनि वा द्वादशेऽहनि वा पौर्वाह्णिकाभ्यां प्रवर्ग्योपसद्भ्यां चरित्वा तदानीमेव आपराह्णिकौ 'प्रवर्ग्योपसदौ समस्य' एकीकृत्य अनुष्ठाय 'प्रवर्ग्यमुत्सादयति' उत्सन्नं उद्वासितं करोति । ननु—यज्ञांतरस्य उद्वासनादर्शनात् कुत उद्वासनम् ? इति चेत् उच्यते—'इदं' यज्ञशिरः प्रवर्ग्याख्यं 'उत्सन्नमिव हि' तिरोहितमिव हि । तस्मात् अस्य तिरोधानापेक्षणात् तदर्थमुद्वासनं कार्यमित्यर्थः । तत्र प्रवर्ग्यं उद्वासयितुं घर्मोपयुक्तानां द्रव्याणां एकीकरणं विधत्ते—तद्यदेतमभितो भवति० द्युपसमायंतीति । 'एतं' प्राग्वंशं 'अभितः' परितः सर्वासु दिक्षु 'तत् यत्' यत् किमपि घर्मोपयुक्तं वस्तुजातं भवति 'तत्सर्वं समादाय' एकीकृत्य 'शालामग्रेण' प्राचीनवंशगृहस्य पुरस्तादंतर्वेदि सौमिकवेद्यां मध्ये 'उपसमायन्ति' सर्वे प्रवर्ग्यकर्तारः उपागच्छेयुः ॥ १ ॥

---

१–अत्र "प्रवृञ्जनं प्रवर्ग्यस्य तथागोद्वासने तथा । तत्स्तुतिश्चेत्यमी अर्थास्तृतीयेऽध्याय ईरिताः" ॥ १ ॥ अयं श्लोकः क्वचिदुपलभ्यते स च काण्वपाठाभिप्रायिको न तु माध्यन्दिनपाठाभिप्रायिकः । इति बोध्यम् ॥

२–एकाहस्त्र्युपसत्कः । का. श्रौ. सू. ८ । ५४ ।

३–सपुरीषा षट्स्वेकैका । का. श्रौ. सू. १७ । १४३ ।

४–द्वादश वा । का. श्रौ. सू. ८ । ५४ । "तिस्र एव साह्नस्योपसदो द्वादशाहीनस्य" इति ( तै. सं. ६ । २ । ५ ) शाखांतरीयवाक्यात् ॥

५–उभाभ्यां चरिते प्रवर्ग्यमुत्सादयति यथोक्तं कुर्याच्चेत् । का. श्रौ. सू. ८ । ७२ । "उपसदन्ते प्रवर्ग्योत्सादनम् ।

६–अंतःपात्ये परिघर्म्यं निधाय दक्षिणेन निर्हृत्योच्छिष्टखरम् । का. श्रौ. सू. २६ । ११५ । ११६ । इति ॥

( न्त्यु ) अथाग्नीध्रः । ( ऽ ) आहवनीये त्रीञ्छालाकानुपकल्पयते तेषा-मेकमुज्ज्वलय्य मुखदघ्ने धारयमाणो जुहोति यज्ञस्य शीर्षच्छिन्नस्य शुगु-दक्रामत्सेमाँल्लोकानाविशत्तयैवैनमेतच्छुचा समर्द्धयति कृत्स्नङ्करोति ॥ २ ॥

( त्यु ) अथ यन्मुखदघ्ने । ( घ्रऽउ ) उपरीव वै तद्यन्मुखदघ्नमुपरीव तद्य-दसौ लोकस्तद्याऽमुं लोकꣳ शुगाविशत्तयैवैनमेतच्छुचा समर्द्धयति कृत्स्नङ्करोति ॥ ३ ॥

या ते घर्म दिव्या शुगिति । यैव दिव्या शुग्या गायत्र्याꣳ हविर्द्धानऽ

---

अथाग्नीध्रः आहवनीये त्रीञ्छालाकानुपकल्पयते । तेषामेकमुज्ज्वलय्य मुखदघ्ने धारयमाणो जुहोति । यज्ञस्य शीर्षच्छिन्नस्य शुगुदक्रामत् । सेमांल्लोकानाविशत् । तयैवैनमेतच्छुचा समर्द्धयति । कृत्स्नं करोति ॥ २ ॥

अथ यन्मुखदघ्ने । उपरीव वै तत् । यन्मुखदघ्नम् । उपरीव तत् । यदसौ लोकः । तद्याऽमुं लोकं शुगाविशत् । तयैवैनमेतच्छुचा समर्द्धयति । कृत्स्नं करोति ॥ ३ ॥

" या ते घर्म दिव्या शुक् "—इति । यैव दिव्या शुक् । " या गायत्र्यां हविर्द्धाने "—

---

अथ घर्मोद्वासनांगत्वेनाहुतित्रयं विधित्सुः तदर्थं दर्भमुष्टित्रयोपकल्पनमाह—अथाग्नीध्रऽआहवनीये०कल्पयते इति । ' अथ ' सर्वेषां समागमनानंतरं ' आग्नीध्रः ' आहवनीयदेशे गत्वा तत्र ' त्रीन् शालाकान् ' दर्भ-शलाकामुष्टीन् ' उपकल्पयते ' संपाद्य धारयेदित्यर्थः । अथ तेषां एकं प्रज्वाल्य तद्गतेऽग्नौ प्रथमाहुतिर्होतव्येति विधत्ते—तेषामेकमुज्ज्वलय्य० जुहोतीति । ' तेषां ' शलाकामुष्टीनां मध्ये ' एकं ' मुष्टिमुज्ज्वलय्य आहवनीये आदीप्य तं ' मुखदघ्ने ' मुखप्रमाणे उन्नतदेशे मुखसमं ' धारयमाणः ' तद्गतेऽग्नौ "या ते घर्म दिव्या शुक्" इति मन्त्रेण प्रथमाहुतिं ' जुहोति ' । अस्य होमस्य किं प्रयोजनमित्यत आह—यज्ञस्य शीर्ष०करोतीति । छिन्न-शिरस्कस्य ' यज्ञस्य ' सकाशात् ' शुक् ' शोकः उदक्रामदुदगच्छत् । ' सा ' उत्क्रांता सती ' इमान् ' पृथिव्यंतरिक्षद्युलोकान् ' आविशत् ' आविष्टवती । ' एतत् ' एतैर्होमैः ' तयैव ' लोकत्रयगतया ' शुचा ' ' एनं ' यज्ञं ' समर्द्धयति ' । अनेन होमेन लोकत्रयसकाशात् शुचमाकृष्य पुनः यज्ञे एव स्थापितवान् भवति । तथा च तं यज्ञं ' कृत्स्नं ' संपूर्णं ' करोति ' ॥ २ ॥

ननु—प्रथमया आहुत्या कुतः सकाशात् शुक् अपनीयते इत्यत आह—अथ यन्मुखदघ्न०करोतीति । 'अथ' इत्यारंभे । ' मुखदघ्ने ' मुखप्रमाणं आस्यसम्मितं धारणमिति यत् तत् उपपाद्यत इति शेषः । ' यन्मुखदघ्नं ' मुखप्रमाणं तत् ' उपरीव वै ' उन्नतमिव खलु । ' असौ ' द्युलोकः इति यत् ' तत् ' ' उपरीव ' उपरिष्टात् स्थितः खलु । तत्तथा च मुखदघ्नधारणविशिष्टस्य प्रथमहोमस्य द्युलोकस्य च उपरिष्टाद्देशत्वसाम्ये सति पुरा या शुक् यज्ञसकाशात् अपगता अमुं स्वर्गं लोकं ' आविशत् ' आविष्टवती । सिद्धमन्यत् ॥ ३ ॥

अथ मन्त्रस्य प्रथमभागमनूद्य व्याचष्टे—या ते घर्म० शुगिति । " या ते घर्म्म " इत्यनेन मंत्रावयवेन

इति यैव गायत्र्याᳬं हविर्द्धाने सा तऽआप्यायतान्निष्ट्यायतान्तस्यै ते स्वाहेति नात्र तिरोहितमिवास्ति ॥ ४ ॥

( स्त्य ) अथ द्वितीयमुज्ज्वलय्य । नाभिदघ्ने धारयमाणो जुहोति मध्यमिव वै तद्यन्नाभिदघ्नम्मध्यमिवान्तरिक्षलोकस्तद्याऽन्तरिक्षलोकᳬं शुगाविशत्तयैवैनमेतच्छुचा समर्द्धयति कृत्स्नङ्करोति ॥ ५ ॥

या ते घर्मान्तरिक्षे शुगिति । यैवान्तरिक्षे शुग्या त्रिष्टुभ्याग्नीध्रऽइति यैव त्रिष्टुभ्याग्नीध्रे सा तऽआप्यायतान्निष्ट्यायतान्तस्यै ते स्वाहेति नात्र तिरोहितमिवास्ति ॥ ६ ॥

---

इति । यैव गायत्र्यां हविर्द्धाने । " सा त आप्यायतां निष्ट्यायतां तस्यै ते स्वाहा "-इति । नात्र तिरोहितमिवास्ति ॥ ४ ॥

अथ द्वितीयमुज्ज्वलय्य नाभिदघ्ने धारयमाणो जुहोति । मध्यमिव वै तत् । यन्नाभिदघ्नम् । मध्यमिवान्तरिक्षलोकः । तद्याऽन्तरिक्षलोकं शुगाविशत् । तयैवैनमेतच्छुचा समर्द्धयति । कृत्स्नं करोति ॥ ५ ॥

" या ते घर्मान्तरिक्षे शुक् "-इति । यैवान्तरिक्षे शुक् । "या त्रिष्टुभ्याग्नीध्रे"-इति । यैव त्रिष्टुभ्याऽग्नीध्रे । " सा त आप्यायतां निष्ट्यायतां तस्यै ते स्वाहा "-इति । नात्र तिरोहितमिवास्ति ॥ ६ ॥

---

' दिव्या ' दिवि भवा घर्म्मस्वभूता ' यैव ' शुगिति अयमर्थः प्रतिपाद्यते । अथ द्वितीयभागमनूद्य व्याचष्टे—या गायत्र्या० र्द्धाने इति । पूर्ववाक्यवद्योज्यम् । अथ तृतीयभागमनूद्य स्पष्टार्थत्वात् न व्याख्यानांतरमपेक्षते इत्याह—सा त'आप्यायतां० तिरोहितमिवास्तीति । अयमर्थः—हे घर्म्म ! ' ते ' त्वदीया द्युप्रभृतिषु आश्रिता या शुक् ' सा ' ' आप्यायतां ' शाम्यतु । तथा ' निष्ट्यायतां ' " स्त्यै ष्ट्यै शब्दसंघातयोः "-( धा. पा. भ्वा. प. ९३५ । ९३६ ) इति धातुः । नितरांस्त्यायतां संघीभवतु । ' तस्यै ' शुचे तद्वते ' ते ' तुभ्यं ' स्वाहा ' इत्यस्यार्थस्य प्रसिद्धत्वात् तिरोहितमप्रसिद्धमत्रास्मिन्मंत्रभागे नास्तीत्यर्थः ॥ ४ ॥

अथ द्वितीयामाहुतिं विधत्ते—अथ द्वितीयमुज्ज्वलय्य नाभि० जुहोतीति । ' अथ ' प्रथमाहुत्यनंतरं ' द्वितीयं ' दर्भशलाकामुष्टिं उज्ज्वलय्यादीप्य ' नाभिदघ्ने ' नाभिप्रमाणे ' धारयमाणः ' तद्वते अग्नौ " या ते घर्म्मांतरिक्षे " इति मंत्रेण जुहोति । अनेन मंत्रहोमेन अंतरिक्षस्थायाः शुचः अपनयनमाह—मध्यमिव० करोतीति । ' यत् नाभिदघ्नं ' नाभिप्रमाणं तत् ' मध्यमिव वै ' देहस्य मध्यदेशः खलु । अंतरिक्षलोकोऽपि ' मध्यमिव ' भूलोकस्वर्लोकयोर्मध्ये वर्तमानत्वात् । ' तत् ' तथा च द्वितीयाहुत्या अंतरिक्षलोकस्य च मध्यत्वसाम्यात्, या शुक् अंतरिक्षलोकं पूर्वं प्राप्नोत् । गतमन्यत् ॥ ५ ॥

अथ होममंत्रं पूर्वमंत्रवत्त्रेधाकृत्य व्याचष्टे—या ते घर्म्मांतरिक्षे० तिरोहितमिवास्तीति । " या ते घर्म्म दिव्या शुक् " इति मंत्रव्याख्यानेन ब्राह्मणेन एसदपि व्याख्यातप्रायम् ॥ ६ ॥

( स्त्यु ) अथ तृतीयमभ्याधाय । तस्मिन्नासीनो जुहोत्यधऽइव वै तद्यदासीनोऽधऽइव तद्यदयं लोकस्तद्येमं लोकᳪं शुगाविशत्तयैवैनमेतच्छुचा समर्द्धयति कृत्स्नङ्करोति ॥ ७ ॥

या ते घर्म्म पृथिव्याᳪं शुगिति । यैव पृथिव्याᳪं शुग्या जगत्याᳪं सदस्येति यैव जगत्याᳪं सदस्या सा तऽआप्यायतान्निष्ट्यायतान्तस्यै ते स्वाहेति नात्र तिरोहितमिवास्ति ॥ ८ ॥

( स्त्यु ) अथोपनिष्क्रामति । क्षत्त्रस्य त्वा परस्पायेत्येतद्वै दैवं क्षत्त्रं यऽएष तपत्यस्य त्वा मानुषस्य क्षत्त्रस्य परस्पायत्वायेत्येवैतदाह ब्रह्मणस्तन्वम्पाहीति ब्रह्मणऽआत्मानङ्गोपायेत्येवैतदाह विशस्त्वा

---

अथ तृतीयमभ्याधाय तस्मिन्नासीनो जुहोति । अध इव वै तत् । यदासीनः । अध इव तत् । यदयं लोकः । तद्येमं लोकं शुगाविशत् । तयैवैनमेतच्छुचा समर्द्धयति । कृत्स्नं करोति ॥ ७ ॥

"या ते घर्म पृथिव्यां शुक्"–इति । यैव पृथिव्यां शुक् । "या जगत्यां सदस्या"–इति । यैव जगत्यां सदस्या । "सा त आप्यायतां निष्ट्यायतां तस्यै ते स्वाहा"–(वा. सं. ३८ । १८) इति । नात्र तिरोहितमिवास्ति ॥ ८ ॥

अथोपनिष्क्रामति । "क्षत्त्रस्य त्वा परस्पाय"–इति । एतद्वै दैवं क्षत्त्रम् । य एष तपति । अस्य त्वा मानुषस्य क्षत्त्रस्य परस्पायत्वाय इत्येवैतदाह । "ब्रह्मणस्तन्वं पाहि"–

---

तृतीयामाहुतिं विधत्ते–अथ तृतीयम० जुहोतीति । अथानंतरं 'तृतीयं' दर्भशलाकामुष्टिं 'अभ्याधाय' अग्नौ प्रक्षिप्य स्वयमासीनः तस्मिन्नग्नौ "या ते घर्म्म पृथिव्याम्"–इति मंत्रेण तृतीयामाहुतिं 'जुहोति' । अनेन मंत्रहोमेन भूलोक्यायाः घर्म्मस्य शुचः अपनयनं क्रियते इत्याह–अध इव वै० करोतीति । 'आसीनः' इति यत् तत् 'अध इव वै' अधस्तादिव खलु । तथा 'अयं लोकः' इति यत् तदपि 'अध इव' अधस्तादेव खलु । 'तत्' तस्मात् उभयोः साम्यात् । अन्यत्पूर्ववत् ॥ ७ ॥

अथ पूर्ववन्मंत्रं त्रेधाकृत्य व्याचष्टे–या ते घर्म्म पृथिव्याᳪं शुगिति० मिवास्तीति । 'हे घर्म्म!' 'पृथिव्यां' वर्तमाना त्वदीया 'यैवं' शुक् इति द्वितीयभागस्यार्थः । गतमन्यत् । एतत् विहितं आहुतित्रयं कात्यायनेन स्पष्टीकृतम्–"आहवनीये त्रीञ्छालाकान्प्रदीप्याग्नीध्रो धारयति शतरुद्रियवत्प्रतिलोमं प्रमाणेषु । "चतुर्गृहीतेनाभिजुहोति या ते घर्म्म दिव्या शुगिति प्रतिमंत्रम्" । "प्रास्य तृतीयमुपविश्य" (का. श्रौ. सू. २६ । ११७–११८) इति ॥ ८ ॥

अथ घर्म्मोद्वासनदेशं प्रति गमनं विधत्ते–अथोपनिष्क्रामति० परस्पायेति । एवमंतर्वेदि सर्वं परि-

---

१–क्षत्त्रस्य त्वेति निष्क्रमणं पुरस्तात्पत्नीमन्तर्धाय । का. श्रौ. सू. २६ । ११९ । पत्नीमन्तर्धाय अग्रतः कृत्वेति कर्कः ।

धुर्म्मणा व्वयमिति यज्ञो वै व्विड्यज्ञस्य त्वाऽरिष्ट्याऽइत्येवैतदाहानुक्रामाम सुवितायु नुव्यसऽइति यज्ञस्य त्वाऽरिष्ट्याऽअह्वलायाऽइत्येवैतदाह ॥ ९ ॥

(ब्रा) अथाह सुाम गायेति । सुाम ब्रूहीति वा गायेति त्वेवु ब्रूयाद्गायन्ति हि सुाम तद्यत्सुाम गायति नेदिमान्बहिर्द्धा यज्ञाच्छरीरान्नाष्ट्रा रक्षाᳬसि हिनुसन्निति सुाम हि नाष्ट्राणाᳬ रक्षसामपहन्ता ॥ १० ॥

---

इति । ब्रह्मण आत्मानं गोपाय इत्येवैतदाह । "विशस्त्वा धर्मणा वयम्"–इति । यज्ञो वै विट् । यज्ञस्य त्वाऽरिष्टचै इत्येवैतदाह । "अनुक्रामाम सुविताय नव्यसे"( वा. सं. ३८–१९ )–इति । यज्ञस्य त्वाऽरिष्ट्या अह्वलायै इत्येवैतदाह ॥ ९ ॥

अथाह साम गायेति । साम ब्रूहीति वा । गायेति त्वेव ब्रूयात् । गायंति हि साम । तद्यत्साम गायति । नेदिमान्बहिर्द्धा यज्ञाच्छरीरान्नाष्ट्रा रक्षा१सि हिनसन्निति । साम हि नाष्ट्राणां रक्षसामपहंता ॥ १० ॥

---

घर्म्यमेकीकृत्य निधाय आहवनीये आहुतित्रयं हुत्वा, अथानंतरं "क्षत्रस्य त्वा" इति मंत्रेण 'उपनिष्क्रामति' प्राङ्मुखो गच्छति । उपात्तस्य मंत्रभागस्य तात्पर्यं व्याचष्टे–एतद्वै दैवं० तदाहेति । 'य एषः' सूर्यस्तपति 'एतद्वै' एतत् खलु 'दैवं' देवसंबंधि देवानां मध्ये वर्तमानं 'क्षत्रं' क्षत्रियजातिः । स एव सूर्यो घर्मः । तथा च घर्म्मस्य क्षत्रियजात्यभिमानित्वात् 'अस्य मानुषस्य' मनुष्यसंबंधिनः 'क्षत्रस्य' क्षत्रियजातेः, 'परस्पायत्वाय' अतिशयेन रक्षणाय हे घर्म ! त्वां 'अनुक्रामाम' इति अमुमेवार्थं एतन्मंत्रवाक्यमाह । अथ द्वितीयं भागमनूद्य व्याचष्टे–ब्रह्मणस्तन्वं० तदाहेति । 'ब्रह्मणः' ब्राह्मणजातेः 'आत्मानं' शरीरं 'गोपाय' रक्ष इति अमुमेवार्थं "ब्रह्मणस्तन्वं पाहि" इति एतद्वाक्यमाह । अथ तृतीयभागमनूद्य व्याचष्टे–विशस्त्वा धर्म्मणा० तदाहेति । 'विट्' वैश्यजातिः 'यज्ञो वै' यज्ञात्मिका खलु तत्साधनाज्यक्षीरहविःसंपादकत्वात् । तथा च "व्विशस्त्वा धर्म्मणा" इत्यस्यायमर्थ इत्याह–यज्ञस्य त्वेति । यज्ञात्मिकायाः वैश्यजातेः 'अरिष्टचै' अहिंसायै त्वां वयमनुक्रामामेति । गतमन्यत् । अथ चतुर्थभागमनूद्य व्याचष्टे–अनुक्रामाम सुविताय० तदाहेति । 'सुविताय' शोभनप्राप्तये 'यज्ञस्यारिष्ट्यै' अहिंसायै 'नव्यसे' नवीयसे यज्ञस्य 'अह्वलायै' "ह्वल ह्वल चलने"–( धा. पा. भ्वा. प. ८०७ । ८०८ ) इति धातुः । चलनाभावाय स्थैर्यार्थं त्वां अनुक्रामामेति इममेवार्थमेतदाह ॥ ९ ॥

एवमनेन मन्त्रेण सर्वं प्रवर्ग्यसंभारमादाय उपनिष्क्रम्य प्रस्तोतारं प्रेष्येदिति विधत्ते–अथाह साम गायेतीति । 'अथ' उपनिष्क्रमणानंतरं 'साम' रक्षोहननक्षमं साम हे प्रस्तोतः ! 'गायेति' एतं प्रैषमन्त्रमाह इति ब्रूयात् । अथ पक्षांतरमुपन्यस्य इममेव पक्षं निगमयति–साम ब्रूहीति० हि सामेति । "साम ब्रूहि" इत्येवं

---

१–"साम प्रेष्यति गाय ब्रू ३ हीति वा" । का. श्रौ. सू. १०।१७०। साम प्रेष्यत्यवभृथवद्देशः । का. श्रौ. सू. २६।१२०। प्रतिपत्तव्या इति शेषः । देशानाह कात्यायनः । "व्यध्वोदकांतयोश्च" । का. श्रौ. सू. १० । १७१ । ततश्चादौ अंतःपात्यदेशे तत अर्द्धमार्गे तत बत्सादनदेशे इति यावत् ।

( न्ताऽऽग्ने ) आग्नेय्युाङ्गायति । ( त्य ) अग्निर्हि रुक्षसामपहन्ताऽतिच्छन्दसि गायत्येषा वै सर्व्वाणि च्छन्दाᳬंसि यदतिच्छन्दास्तस्मादतिच्छन्दसि गायति ॥ ११ ॥

स गायति । ( त्य ) अग्निष्टपति प्रतिदहत्यहावोऽहावऽइति तन्नाष्ट्राऽएवैतद्रक्षाᳬंस्यतोऽपहन्ति ॥ १२ ॥

---

आग्नेय्यां गायति । अग्निर्हि रक्षसामपहंता । अतिच्छन्दसि गायति । एषा वै सर्वाणि च्छन्दांसि । यदतिच्छन्दाः । तस्मादतिच्छन्दसि गायति ॥ ११ ॥

स गायति—"अग्निष्टपति प्रतिदहत्यहावोऽहावः"—इति । तन्नाष्ट्रा एवैतद्रक्षांस्यतोऽपहंति ॥ १२ ॥

---

वा प्रैषं ब्रूयात् । तुशब्दः पक्षव्यावृत्त्यर्थः । साम गायेत्येव ब्रूयात् । न ब्रूहीति । कुतः 'हि' यस्मात् 'साम गायन्ति' गानेनोच्चरंति । न तु केवलं ऋगादिवत्पठंति । तस्मात् साम्नो गीत्यात्मकत्वात् 'साम गाय' इत्येव प्रेष्येदित्यर्थः । अथ सामगानस्य प्रयोजनमाह—तद्यत्साम गायति॰ रक्षसामपहंतेति । 'तत्' तत्र गमनकाले 'यत्साम गायति' । तत् किमर्थमिति चेत्; उच्यते—'शरीरात्' शरीरभूतात् यज्ञात् 'बहिर्द्धा' बाह्यदेशे 'नाष्ट्राः' नाशकारिण्यः राक्षस्यः प्रजाः अन्यानि च 'रक्षांसि' 'न हिनसन्' न हिंस्युः इत्येवमर्थम् । ननु—अन्येष्वपि मन्त्रेषु सत्सु किमिति साम्नो गानमिति चेत् उच्यते-'साम' खलु तेजोरूपत्वात् 'नाष्ट्राणां रक्षसामपहंता' विनाशकम् । तस्य च तेजोरूपत्वं तैत्तिरीयके स्पष्टमाम्नायते—"सर्वं तेजः सामरूप्यᳬ ह शश्वत्" ( तै. का. प्र. ३ अनु. अन्त्य. ) इति । अयमर्थः—सूर्यस्य यत्तेजोमंडलं तत्सर्वं सामात्मकमेवेति ॥ १० ॥

अथ विहितस्य साम्नः आधारभूतमन्त्रलिंगद्वारेणापि रक्षोनिबर्हकत्वमाह—आग्नेय्यां गायति॰मपहंतेति । आग्नेय्यामग्निदेवतायां "अग्निᳬ होतारं मन्ये" इत्यस्यामृचि तत्साम गायति । 'अग्निः' खलु 'रक्षसां' राक्षसानां 'अपहंता' विनाशकः । अथ तस्या अतिच्छंदस्त्वं स्तौति—अतिच्छन्द॰गायतीति । 'अतिच्छन्दसि' छंदःपरिमाणमतीत्य वर्तमानं छन्दो यस्याः सा अतिच्छन्दाः तथाविधायामृचि एतत्साम 'गायति' । 'एषा वै' एषा खलु अतिच्छन्दस्का ऋक् 'सर्वाणि छन्दांसि' सर्वच्छन्दोरूपा गायत्र्यादीनामन्येषां तत्रान्तर्भावात् । 'यत्' या अतिच्छन्दस्का । अन्यच्छन्दस्कायामृचि गाने तु अस्मात् अधिकाक्षराणामनंतर्भावात् सर्वेषां छन्दसां परिग्रहो न सिध्येत् । यस्मादेवं 'तस्मात्' 'अतिच्छन्दसि' "अग्निᳬ होतारं" इत्यस्यामेव अतिच्छन्दस्कायामृचि तत्साम गायेत् ॥ ११ ॥

तत्साम्नः आद्यं स्तोभपदं[2] उदाहृत्य रक्षोविनाशहेतुत्वमाह—स गायत्यग्निष्ट॰स्यतोऽपहंतीति । 'सः'

---

१—शतपथेऽपि स्पष्टम् । मंडलब्राह्मणे—"अथ यदेतदर्चिर्दीप्यते तन्महाव्रतं तानि सामानि स साम्नां लोकः" । ( श. प. १० । ५ । २ । १ । )

२—"ऋचो यदधिकं किंचित् द्विरुक्तं वाऽपि दृश्यते । स्तोभत्वं तस्य मन्यन्ते क्रमशः शास्त्रचिंतकाः" । १ । १६ । इति स्तोभानुसंहारशिष्टम् । स च स्तोभस्त्रिप्रकारः । वर्णस्तोभः १ पदस्तोभः २ वाक्यस्तोभः ३ इति ; वर्णस्तोभः इकारादिः १ ।-

तऽउदञ्चो निष्क्रामन्ति । जघनेन चात्वालमग्रेणाग्नीध्रमेषा हि यज्ञस्य द्वाः स यस्यान्ततो दिश्यापो भवन्ति तद्यन्ति ॥ १३ ॥

तम्वै परिष्यन्दऽउत्सादयेत् । ( त ) ततो वाऽएष शुशुचानो भवति तं यदस्यामुत्सादयेदिमामस्य शुगृच्छेद्यदप्सूत्सादयेदपोऽस्य शुगृच्छेदथ यत्परिष्यन्दऽउत्सादयति तथो ह नैवापो हिनस्ति नेमां यदु हाप्सु न प्रास्यति तेनापो न हिनस्त्यथ यत्समन्तमापः परियन्ति शान्तिर्वाऽआपस्तेनोऽइमान्न हिनस्ति तस्मात्परिष्यन्दऽउत्सादयेत् ॥ १४ ॥

---

त उदंचो निष्क्रामन्ति । जघनेन चात्वालम् । अग्रेणाग्नीध्रम् । एषा हि यज्ञस्य द्वाः । स यस्यां ततो दिश्यापो भवंति । तद्यंति ॥ १३ ॥

तं वै परिष्यन्द उत्सादयेत् । ततो वा एष शुशुचानो भवति । तं यदस्यामुत्सादयेत् । इमा-

---

प्रेषितः प्रस्तोता गायति " अग्निष्टपति " इत्यादि स्तोममारभ्य । तत्र च ' अग्निष्टपति प्रतिदहति ' इत्यग्निकर्तृकस्य तापस्य दाहस्य च श्रवणात् ' तत् ' साम ' नाष्ट्रा एव ' ' रक्षांसि ' च एतेनापहंति तापेन दाहेन च नाशयति ॥ १२ ॥

अथ प्रवर्ग्यमुद्वासयिष्यतामध्वर्युप्रभृतीनां गमनमार्गं विधत्ते—**त उदञ्चो०यज्ञस्य द्वारिति** । 'ते' अध्वर्युप्रभृतयः प्रथमं " क्षत्रस्य त्वा " इति मन्त्रेण त्रिचतुराणि पदानि प्रांचो गत्वा पश्चात् ' उदंचः ' उदङ्मुखाः संतः ' निष्क्रामन्ति ' वेदीसकाशात् निर्गच्छेयुः । केन मार्गेण इति चेत् उच्यते ' चात्वालं जघनेन ' चात्वालस्य पश्चात् ' आग्नीध्रमग्रेण ' आग्नीध्रीयचात्वालीययोर्मध्यदेशेनेत्यर्थः । ' एष हि ' एष खलु देशः ' यज्ञस्य द्वाः । यज्ञगृहस्य द्वारं यो य ऋत्विक् देवयजनं प्रविशति निर्गच्छति वा स सर्वोऽपि अनेनैव प्रवेशनिर्गमने करोति ' तस्मात् अनेनैव पथा उदंचो बहिः प्रवर्ग्यकर्तारो निर्गच्छेयुरित्यर्थः । अथोदकसमीपगमनं विधत्ते—**स यस्यां० तद्यंतीति** । ' सः ' व्यत्ययेनैकवचनम् । वेदेर्निष्क्रांतास्ते सर्वे प्रवर्ग्यकर्तारः । ' ततः ' अनंतरं ' यस्यां ' दिशि ' आपो भवन्ति ' नदीतडागाद्या वर्तंते तत्तत्र ' यन्ति ' गच्छेयुः ॥ १३ ॥

परितो जलयुक्ते द्वीपे घर्मोद्वासनं विधाय विपक्षे बाधोपन्यासपुरःसरं तदुपपाद्य निगमयति—**तं वै परिष्यंद उत्सादयेदिति** । ' परिष्यंदः ' परितः स्यंदते प्रभूतं जलमस्मिन्निति परिष्यंदः

---

—पदस्तोमः हाई-हाउ-आदिः २ । वाक्यस्तोमो नवविधः । अशास्तिः १ स्तुतिः २ संख्यानं ३ प्रलयः ४ परिदेवनं ५ प्रैषः ६ अन्वेषणं ७ सृष्टिः ८ आख्यानं ९ इति । ततश्चायं द्वितीयः स्तुतिर्वाक्यस्तोमः ॥

१-विकारः १ विश्लेषः २ विकर्षणं ३ विरामः ४ अभ्यासः ५ लोपः ६ आगमः ७ स्तोभः ८ इति गानसमये मन्त्राणां स्वरूपपरिवर्तने अष्टौ कारणानि । एभिः कारणैः परिवर्तितो मन्त्रसमुदायो गानम् । तच्च गानं चतुर्द्धा । वेयं १ ऊहः २ ऊह्यं ३ आरण्यकं ४ चेति । विद्यमानस्य वर्णस्य स्थाने वर्णांतरोच्चारणं विकारः १ संधिविच्छेदो विश्लेषः २ ह्रस्वस्थाने दीर्घस्योच्चारणं दीर्घस्थाने प्लुतस्योच्चारणं विकर्षणं ३ विश्रामो विरामः ४ त्रिस्त्रिरुच्चारणं अभ्यासः ५ वर्णस्यानुच्चारणं लोपः ६ अधिकवर्णस्योच्चारणं आगमः ७ स्तोभस्तूक्तः ८ ( १०३ पृष्ठे द्वितीयटिप्पण्याम् । ) ॥

( द्व ) उत्तरवेदौ त्वेवोत्सादयेत् । ( द्य ) यज्ञो वाऽउत्तरवेदिः शिरः प्रवर्ग्यो यज्ञऽएवैतच्छिरः प्रतिदधाति ॥ १५ ॥

( त्यु ) उत्तरनाभ्या सुँस्पृष्टम्प्रथमं प्रवर्ग्यमुत्सादयति । वाग्वाऽउत्तरनाभिः शिरः प्रवर्ग्यः शीर्षंस्तद्वाचन्दधाति ॥ १६ ॥

---

मस्य शुगृच्छेत् । यदप्सूत्सादयेत् । अपोऽस्य शुगृच्छेत् । अथ यत्परिष्यंद उत्सादयति । तथा उ ह नैवापो हिनस्ति, नेमाम् । यदहाप्सु न प्रास्यति । तेनापो न हिनस्ति । अथ यत्समन्तमापः परियन्ति । शांतिर्वा आपः । तेन उ न इमान् हिनस्ति । तस्मात्परिष्यंद उत्सादयेत् ॥ १४ ॥

उत्तरवेदौ त्वेवोत्सादयेत् । यज्ञो वा उत्तरवेदिः । शिरः प्रवर्ग्यः । यज्ञ एवैतच्छिरः प्रतिदधाति ॥ १५ ॥

उत्तरनाभ्या संस्पृष्टं प्रथमं प्रवर्ग्यमुत्सादयति । वाग्वा उत्तरनाभिः । शिरः प्रवर्ग्यः । शीर्षंस्तद्वाचं दधाति ॥ १६ ॥

---

द्वीपः । तस्मिन् 'तं' प्रवर्ग्यं 'उत्सादयेत्' उत्सादनं उद्वासनं कुर्यात् । अथ परिष्यंदव्यतिरिक्तभूभाग एव कस्मादसौ नोद्वास्यते, कस्माच्च उदकेषु च नोद्वासनम् ? इति चेत् अत्र उच्यते—अग्निना संतप्तः 'एषः' घर्मः 'शुशुचानः' शोचनशीलः दाहशीलः दग्धुं समर्थो भवति । 'तं' तथाविधं प्रवर्ग्यं यद्यदि 'अस्यां' पृथिव्यां 'उत्सादयेत्' तर्हि 'इमां' पृथिवीं 'अस्य' घर्मस्य 'शुक्' शोको दाहः ऋच्छेत्प्राप्नुयात् । तथा यद्यदि 'अप्सु' उदकेषु 'उत्सादयेत्' तदा 'अस्य शुक्' शोकः 'अपः' उदकानि 'ऋच्छेत्' गच्छेत् । यद्वा अयमाङुपसर्गरहितोऽपि ऋच्छतिरत्र हिंसार्थः । आर्तिं प्राप्नुयात् । 'अथ' एवं सति यद्यस्मात् 'परिष्यंदे' परिष्यंदनयुक्ते द्वीपे 'उत्सादयति' तं प्रवर्ग्यं उद्वासयति । 'तथा उ ह' तस्मादेव अपोऽपि 'नैव हिनस्ति' 'इमां' पृथिवीमपि 'नैव हिनस्ति' । एतदेव विव्रियते—'यदह' यस्मादेव अप्सूदकेषु प्रवर्ग्यं 'न प्रास्यति' न प्रक्षिपति । 'तेन' कारणेन 'अपः' उदकानि 'न हिनस्ति' अपां प्रवर्ग्यसंबन्धाभावात् । 'अथ' यद्यपि पृथिव्यां प्रास्यति तथापि 'समन्तम्' अभितः 'आपः' 'परियन्ति' परिवेष्ट्य गच्छन्तीति यत् 'तेन' तेनैव कारणेन 'इमां' पृथिवीं 'न हिनस्ति' न बाधते । कुतः ? 'शांतिर्वा आपः' यतः तापस्य शमनहेतुत्वेन आपः प्रसिद्धाः । तस्मात् पृथिव्या घर्मसंस्पर्शकृतस्तापः अभितो वर्तमानैरुदकैः परिह्रियते इत्यर्थः । यस्मादेवं तस्मादेव कारणात् 'परिष्यन्दे' परिष्यंद एव 'उत्सादयेत्' ॥ १४ ॥

इत्थं नदीद्वीपे उत्सादनमुक्त्वा पक्षांतरमाह—उत्तरवेदौ त्वेवोत्सादयेदिति । तुशब्दः पक्षव्यावृत्त्यर्थः । उत्तरवेद्यामेवोत्सादयेत् । न तु परिष्यंदे इत्यर्थः । अथैतदुपपादयति—यज्ञो वा उत्तरवेदि० दधातीति । या इयमुत्तरवेदिः महावेदेः पूर्वभागे वर्तते । एषा यज्ञः खलु सर्वाहुत्याधारत्वात् यज्ञात्मकत्वम् । 'प्रवर्ग्यः' अस्य यज्ञस्य 'शिरः' तथा च उत्तरवेद्यां उद्वासनेन 'यज्ञ एव' एतत्प्रवर्ग्याख्यं 'शिरः' 'प्रतिदधाति' संदधाति ॥ १५ ॥

अथ प्रथमस्य महावीरस्य उद्वासनप्रकारमाह—उत्तरनाभ्या संस्पृष्टं० मुत्सादयतीति । महावीरादिभिः

---

१–उत्सादनदेशं गच्छंत्यनग्नाऽउत्तरवेदिम् । का. श्रौ. सू. २६ । १२२ ।

२–नाभिस्पृष्टं प्रवृंजनीयं निदधाति चतुःस्रक्तिरिति । का. श्रौ. सू. २६ । १२५ ।

चुतुःस्रक्तिरिति । ( त्ये ) एष वै चुतुःस्रक्तिर्युऽएष तुपति दिशो ह्येतुस्य स्रक्तुयस्तुस्मादाह चुतुःस्रक्तिरिति ॥ १७ ॥

नाभिर्ऋतुस्य सप्रथाऽइति । सत्यम्वाऽऋतꣳ सत्युस्य नाभिः सप्रथाऽ इत्युवैतुदाह स नो विश्वायुः सप्रथाऽइति स नः सर्व्वायुः सप्रथाऽइत्ये-वैतुदाह ॥ १८ ॥

---

" चतुःस्रक्तिः "–इति । एष वै चतुःस्रक्तिः । य एष तपति । दिशो ह्येतस्य स्रक्तयः । तस्मादाह–" चतुःस्रक्तिः "–इति ॥ १७ ॥

" नाभिर्ऋतस्य सप्रथाः "–इति । सत्यं वा ऋतम् । सत्यस्य नाभिः सप्रथाः इत्येवै-तदाह । " स नो विश्वायुः सप्रथाः "–इति । स नः सर्वायुः सप्रथाः इत्येवैतदाह ॥ १८ ॥

---

घर्मसाधनैः सार्द्धं उत्तरवेदिं प्राप्य तदुद्वासनं कार्यं इत्युक्तम् । तत्र ' प्रथमं ' प्रवर्ग्यप्रवृंजनसाधनं महा-वीरं ' उत्तरनाभ्या ' उत्तरवेद्या मध्ये प्रादेशमात्रेण कृता चतुरस्रभूमिः उत्तरनाभिरित्युच्यते । तया ' संस्पृष्टं ' संबद्धं ' उत्सादयति ' उद्वासयति निदधातीत्यर्थः । तदेतत् स्तौति–वाग्वा उत्तर० दधातीति । या ' वाक् उत्तरनाभिः ' सा चाग्नेः पुरुषावयवस्य नाभिस्थानस्य शब्दोत्पत्तिस्थानत्वात् तत्सामान्येन उत्तरनाभेरपि तदुत्पत्ति-स्थानत्वेन वागात्मकत्वम् । प्रवर्ग्यश्च यज्ञशिरः । तत् तथा च उत्तरवेद्यां प्रवर्ग्यसंस्पर्शने सति ' शीर्षन् ' यज्ञस्य शीर्ष्णि शिरस्येव ' वाचं दधाति ' वागिन्द्रियं तद्व्यवहार्यं शब्दं वा, तया च धारित-वान् भवति ॥ १६ ॥

अथैतन्महावीरोत्सादनमन्त्रं पंचधा कृत्वा व्याचष्टे–चतुःस्रक्तिरित्येष इति । " चतुःस्रक्तिर्नाभिः " इत्यनेन मन्त्रेण प्रथमस्य महावीरस्य उत्सादनं कुर्यात् । तत्र चतुःस्रक्तिरिति कोऽर्थः इत्याशंक्य व्याचष्टे–एष वा इति । ' य एषः ' सूर्यस्तपति ' एषः ' खलु ' चतुःस्रक्तिः ' । चतस्रः स्रक्तयः अस्राणि यस्य स तथोक्तः । काः पुनरस्य स्रक्तयः इति तदुच्यते–' एतस्य ' सूर्यस्य प्राच्याद्याश्चतस्रो महादिशः खलु स्रक्तयः एव । सूर्ये समवेतार्थत्वेन तदात्मके महावीरे संबन्धो योग्यः । यस्मादेवं ' तस्मात् ' " चतुःस्रक्तिः " इति मन्त्रभागं ' आह ' अध्वर्युर्ब्रूयात् । अथवा मन्त्र एव चतुःस्रक्तिरिति अनेन पदेन इममर्थं ' आह ' प्रतिपादयति ॥ १७ ॥

" नाभिर्ऋतस्य " इति द्वितीयभागे ऋतशब्दस्य तावत्पदार्थमाह–सत्यं वा इति । सत्यमनश्वरं सूर्यस्य रूपं खलु अत्र ' ऋतं ' ऋतशब्दवाच्यम् । अथ वाक्यार्थमाह–' सत्यस्य ' ' नाभिः ' बंधकः ' सप्रथाः ' सर्वतः पृथुः ' इति ' इममेवार्थं एतन्मंत्रवाक्यमाह । अथ " स नो विश्वायुः " इति तृतीयभागे विश्वायुरिति शब्दस्य पदार्थं ब्रुवन् वाक्यार्थमाह–स नः सर्वायुरिति । अयमर्थः–' सः ' सूर्यात्मको घर्मः ' सर्वायुः ' ' नः ' अस्मदर्थं सर्वायुः संपूर्णायुष्ट्वयुक्तः । ' सप्रथाः ' सर्वतः प्रख्यातः भवतु इत्येवार्थं एतन्मंत्रवाक्यमाहेति ॥ १८ ॥

(द्वा) अप द्वेषोऽअप ह्वरऽइति । नात्र तिरोहितमिवास्त्यन्युव्रतस्य सश्चिमेत्यन्यद्वाऽएतुस्य व्रतमुन्यन्मनुष्याणान्तुस्मादाहान्युव्रतस्य सश्चिमेत्येवमितरौ प्राञ्चौ तत्त्रिवृत्त्रिवृद्धीदर्ठं शिरः ॥ १९ ॥

पुरुस्तादुपशयाम्मृदम् । (म्माᳬ) मार्ठंसमेवास्मिन्नेतद्दधाति तदभितः परीशासौ बाहूऽएवास्मिन्नेतद्दधात्यभितः पुरे रौहिणहवन्यौ स्रुचौ हस्तावेवास्मिन्नेतद्दधाति ॥ २० ॥

---

"अप द्वेषो अप ह्वरः"-इति । नात्र तिरोहितमिवास्ति । "अन्यव्रतस्य सश्चिम"-(वा. सं. ३८ । २०) इति । अन्यद्वा एतस्य व्रतम् । अन्यन्मनुष्याणाम् । तस्मादाह-"अन्यव्रतस्य सश्चिम"-इति । एवमितरौ प्रांचौ । तत्त्रिवृत् । त्रिवृद्धीदं शिरः ॥ १९ ॥

पुरस्तादुपशयां मृदम् । मांसमेवास्मिन्नेतद्दधाति । तदभितः परीशासौ । बाहू एवास्मिन्नेतद्दधाति । अभितः परे रौहिणहवन्यौ स्रुचौ । हस्तावेवास्मिन्नेतद्दधाति ॥ २० ॥

---

चतुर्थभागं अनूद्य स्पष्टार्थतामाह-'द्वेषः' द्वेष्टॄन् 'ह्वरः' कुटिलान् 'अपजहि' इत्यस्यार्थस्य स्पष्टत्वात् । अत्रास्मिन्मंत्रभागे तिरोहितमंतर्हितमिव किमपि व्याख्यानापेक्षं नास्तीत्यर्थः । "अन्यव्रतस्य" इति मंत्रभागस्य कोऽर्थः इति चेत्; उच्यते-'एतस्य' सूर्यात्मकस्य घर्म्मस्य 'व्रतं' कर्म अतोऽन्यत् । अन्यत् व्रतं यस्य असावन्यव्रतः इति पदार्थः । कर्मणि षष्ठी । अन्यव्रतं सूर्यात्मकं घर्म्मं वयं 'सश्चिम' संभजेमहि इत्ययमर्थः सिद्धो भवति । यस्मादेवं 'तस्मात्' "अन्यव्रतस्य" इति मंत्रभागमाह । एवमुत्तरयोरपि महावीरयोरुत्सादनं कार्यं इति विधाय संहत्य स्तौति-एवमितरौ० दर्ठ शिर इति । एवमनेनैव प्रकारेण 'इतरौ' द्वितीयतृतीयावपि महावीरौ 'प्राञ्चौ' प्राङ्मुखौ 'उद्वासयति' । तन्महावीरत्रितयं मिलित्वा 'त्रिवृत्' त्रिगुणितं भवति । 'हि' यस्मात् 'इदं' मनुष्यादिसंबंधि 'शिरः' 'त्रिवृत्' त्रिगुणितं लोमास्थित्वचां समुदायात्मकम् । तथा च तैत्तिरीयके श्रूयते-"त्रैधाविहितर्ठ हि शिरः । लोम च्छविरस्थि" इति । तस्मादनेन महावीरत्रितयेनोद्वासितेन त्रिवृच्छिर एव यज्ञस्य संपादितं भवति ॥ १९ ॥

या पूर्वं महावीरादिनिर्म्माणकाले अवशिष्टा मृत् निहिता तस्याः अपि अत्र निधानं विधाय स्तौति-**पुरस्तादुपशयां मृदं मार्ठसमेवास्मिन्नेतद्दधातीति** । प्रयोजनाभावेन उपशेते इत्युपशया । महावीरादिनिर्माणावशिष्टामेतामुपशयां 'मृदं' महावीराणां पुरस्तात्पूर्वभागे उत्सादयतीति वर्तते स्थापयतीत्यर्थः । 'एतत्' एतेन अस्मिन्महावीरलक्षणे यज्ञशिरसि 'मांसमेव' 'दधाति' स्थापितवान् भवति । सा मृत् शिरसोऽन्तर्वर्तमानमांसस्थानीयेत्यर्थः । अथान्यैरपि प्रवर्ग्यसाधनैः शिरोव्यतिरिक्तं सर्वमवयवजातं रूपकत्वेन संपादयन् एकैकस्योद्वासनं विधाय तन्निष्पाद्यमवयवमपि दर्शयति-तदभितः परीशासौ० दधातीति । तन्महावीरलक्षणशिरोऽभितः तस्याधस्तात् पार्श्वयोः 'परीशासौ' स वै 'निदधाति' अस्मिन्प्रवर्ग्ये 'बाहू' बाहुदंडावेव एतेन 'दधाति' धारितवान् भवति । अथ रौहिर्णपुरोडाशहोमार्थयोः स्रुचोरुद्वासनं ताभ्यां संपादितं अवयवं च दर्शयति-

---

१-प्रांचावितरौ । २-उपशयां च तूष्णीम् । ३-परीशासावभितः । ४-रौहिणहवन्यौ चावकष्टे बाह्ये । (का. श्रौ. सू. २६ । १२६-१२९) ।

(स्यु) उत्तरतोऽभ्रिम् । (न्त) तद्धि तस्याऽआयतनं दक्षिणतः सम्म्राडासन्दीन्तद्धि तस्याऽआयतनमुत्तरतः कृष्णाजिनन्तद्धि तस्यायतनᳬं सर्व्वतो धवित्राणि प्प्राणा वै धवित्राणि प्प्राणानेवास्मिन्नेतद्दधाति त्रीणि भवन्ति त्रयो वै प्प्राणाः प्प्राणऽउदानो व्यानस्तानेवास्मिन्नेतद्दधाति॥२१॥

( त्यु ) अथैतद्रज्जुसन्दानम् । ( सु ) उपयमन्यामाधाय पश्चात्प्राचीमासादयत्युदरमेवास्मिन्नेतद्दधाति तदभितः पिन्वनेऽआण्डावेवास्मिन्ने-

---

उत्तरतोऽभ्रिम् । तद्धि तस्या आयतनम् । दक्षिणतः संम्राडासंदीम् । तद्धि तस्या आयतनम् । उत्तरतः कृष्णाजिनम् । तद्धि तस्या यतनम् । सर्वतो धवित्राणि । प्राणा वै धवित्राणि । प्राणानेवास्मिन्नेतद्दधाति । त्रीणि भवंति । त्रयो वै प्राणाः । प्राण उदानो व्यानः । तानेवास्मिन्नेतद्दधाति ॥ २१ ॥

अथैतद्रज्जुसंदानम् उपयमन्यामाधाय पश्चात्प्राचीमासादयति । उदरमेवास्मिन्नेतद्दधाति । तदभितः पिन्वने । आण्डावेवास्मिन्नेतद्दधाति। आण्डाभ्यां हि वृषा पिन्वते । पश्चात्स्थूणामयूखम् ।

---

अभितः परे रौहिणहव० तद्दधातीति । ' अभितः ' पार्श्वद्वये ' रौहिणहवन्यौ ' रौहिणपुरोडाशहोमार्थौ ' स्रुचौ ' ' परे ' शफयोः पाश्चात्ये ' निदधाति ' । अस्मिन् प्रवर्ग्ये ' हस्तावेव दधाति ' । अंगुलिभिर्युक्तः अरत्निर्हस्तः । तत ऊर्ध्वभागो बाहुरिति तयोर्विवेकः ॥ २० ॥

अथाभ्रेरुद्वासनं विधत्ते—उत्तरतोऽभ्रि० आयतनमिति । ' उत्तरतः ' महावीरस्योत्तरमागे ' अभ्रिं ' मृत्खननार्थमानीतां काष्ठमयीं ' निदधाति ' । ' तद्धि ' तत् खलु ' तस्या ' अभ्रेः ' आयतनं ' स्थानम् । खाताया मृदः उत्तरस्यां दिशि अवस्थानात् तत्साधनभूताया अपि अभ्रेः तदायतनत्वम् । अथ संम्राडासंद्याः उद्वासनं विधत्ते—दक्षिणतः संम्राडा० आयतनमिति । 'दक्षिणतः' महावीरस्य दक्षिणभागे ' संम्राडासंदीं ' निदधाति । ' तद्धि ' तत्खलु ' तस्याः ' संम्राडासंद्याः 'आयतनं' स्थानम् । आहवनीयस्य दक्षिणतः दक्षिणभागे हि पूर्वं स्थापिता । अतः दक्षिणा दिक् तस्याः स्थानमित्यर्थः । अथ कृष्णाजिनस्योद्वासनं विधत्ते—उत्तरतः कृष्णाजिनं० स्यायतनमिति ' उत्तरतः ' उत्तरभागे, ' कृष्णाजिनं ' संम्राडासंद्या उपरिष्टात्पूर्वमास्तीर्णं कृष्णमृगस्याजिनं निदधाति ! ' तद्धि ' तत्खलु ' तस्य ' कृष्णाजिनस्य ' आयतनं ' स्थानम् । हविरवहननादिषु उत्तरतः कृष्णाजिनस्य स्तीर्यमाणत्वात् उत्तरदिशस्तदायतनत्वम् । अथ धवित्राणामुद्वासनं विधत्ते—सर्वतो धवित्राणि० तद्दधातीति । ' धवित्राणि ' घर्मसमिंधनार्थानि व्यजनानि कृष्णाजिननिर्मितानि ' सर्वतः ' सर्वमहावीरादिपात्रसमुदायस्य उपरि निदध्यात् । तानि ' धवित्राणि ' ' प्राणा वै ' वायुजनकत्वात् प्राणवाय्वात्मकानि । तथा च अस्मिन्प्रवर्ग्ये सर्वत्र प्राणानेव धारितवान् भवति ॥ २१ ॥

अथ उपयमन्या सार्द्धं गवादिबंधनार्थाया रज्जोरुद्वासनं विधत्ते—अथैतद्रज्जुसंदानं० तद्दधातीति ।

---

१–अभ्रिमुत्तरतः । २–आसंदीं दक्षिणतः । ३–कृष्णाजिनमुत्तरतः । ४–सर्वतो धवित्राणि । परैर्वांश्च ॥ का. श्रौ. सू. २६ । १३० ॥ ५–रज्जुसंदानं वेदमुपयमन्यामाधाय पश्चात् । का. श्रौ. सू. २६ । १३० ।

तद्दधात्याण्डाभ्याᳬं हि वृषा पिन्वते पश्चात्स्थूणामयूखमूरूऽएवास्मिन्नेतद्दधाति पश्चाद्रौहिणकपाले जानुनीऽएवास्मिन्नेतद्दधाति ते यदेककपाले भवतऽएककपालेऽइव हीमे जानुनी पश्चाद्धृष्टी पादावेवास्मिन्नेतद्दधाति पादाभ्याᳬं हि धृष्टम्प्रहरत्युत्तरतः खरौ प्रचरणीयौ तद्धि तयोरायतनन्दक्षिणतो मार्जालीयन्तद्धि तस्यायतनम् ॥ २२ ॥

---

ऊरू एवास्मिन्नेतद्दधाति । पश्चाद्रौहिणकपाले । जानुनी एवास्मिन्नेतद्दधाति । ते यदेककपाले भवतः । एककपाले इव हीमे जानुनी । पश्चाद्धृष्टी । पादावेवास्मिन्नेतद्दधाति । पादाभ्यां हि धृष्टं प्रहराति । उत्तरतः खरौ प्रचरणीयौ । तद्धि तयोरायतनम् । दक्षिणतो मार्जालीयम् । तद्धि तस्यायतनम् ॥ २२ ॥

---

अथानंतरं रज्जुश्च संदानानि च रज्जुसंदानं एतत्सर्वं घर्मोपयुक्तं गृहीत्वा 'उपयमन्यां' स्रुचि ' आधाय ' प्रक्षिप्य ' पश्चात् ' महावीरस्य पश्चाद्भागे ' प्राचीं ' प्रागग्रां तां ' आसादयति ' निदधाति । ' एतत् ' एतेन आंत्रैर्युक्तमुदरमेव अस्मिन्प्रवर्ग्ये धारितवान् भवति । अथ दोहनार्थयोः पात्रयोरुद्वासनं विधत्ते—तद्भितः पिन्वने० वृषा पिन्वते इति । ' तदभितः ' तस्योदरस्य पार्श्वयोः ' पिन्वने ' दोहनसाधने मृण्मयपात्रे ' निदधाति ' स्थापयति । ताभ्यां पात्राभ्यां ' अस्मिन् ' प्रवर्ग्ये पुंसि ' आंडौ ' मुष्कावेव धारितवान् भवति । कुतः ? ' हि ' यस्मात् ' वृषा ' सेचनसमर्थो युवा ' आंडाभ्यां ' ' पिन्वते ' रेतः सिंचति । तस्मात्पिन्वनसाधनत्वसाम्यात्पिन्वने पात्रे आंडस्थानीये इत्यर्थः । अथ गवादिबंधनार्थानां स्थूणादीनामुद्वासनं विधाय तन्निर्वर्त्यावयवसंपादनमाह—पश्चात्स्थूणामयूख० तद्दधातीति । पिन्वनयोः पश्चात्पश्चिमभागे गोबंधनार्थाः स्थूणा वत्सादिबंधनार्था मयूखशब्दाभिधेयाः शंकवः तत् ' स्थूणामयूखं ' तन्निदधाति । तथा च ' ऊरू एव ' ' अस्मिन् ' प्रवर्ग्ये धारितवान् भवति । अथ रौहिणपुरोडाशयोरुद्वासनं विधाय अवयवोक्तिमाह पश्चाद्रौहिणकपाले० दधातीति । स्थूणामयूखानां ' पश्चात् ' पश्चिमभागे रौहिणपुरोडाशाधिश्रपणार्थे ' कपाले ' ' निदधाति ' । तेनास्मिन्प्रवर्ग्ये ' जानुनी एव ' स्थापितवान् भवति । रौहिणकपालयोर्जान्वोश्च साम्यं ब्रुवन् उक्तमर्थं उपपादयति—ते यदेककपाले० जानुनी इति । 'ते' रौहिणकपाले यद्यस्मात् 'एककपाले' एकैककपालात्मके भवतः । तस्मादेव खलु ' इमे जानुनी ' ' एककपाले इव ' दृश्येते । अथ धृष्ट्योरुद्वासनं विधत्ते—पश्चाद्धृष्टी पादावे० प्रहरतीति । ' पश्चात् ' रौहिणकपालयोः पश्चिमभागे अंगारविहरणार्थे ' धृष्टी ' निदधाति । ' एतत् ' एतेन 'अस्मिन्' प्रवर्ग्ये जान्वोरधस्तनौ 'पादावेव' स्थापितवान् भवति । धृष्ट्योः पादयोश्च कथं साम्यं इति चेदुच्यते—' धृष्टं ' प्रगल्भं ' पादाभ्यां ' खलु ' प्रहरति ' । अतः धृष्ट्योः पादयोश्च कर्षणसाधनत्वसाम्यात् धृष्टी पादस्थानीये

---

१–पश्चात्पिन्वने चाभितो दंडम् । दंडं दीक्षादंडम् । का. श्रौ. सू २६ । १३१ ।
२–स्थूणामयूखम् । का. श्रौ. सू. २६ । १३२ ।
३–पश्चात् रौहिणकपाले । का. श्रौ. सू. २६ । १३३ ।
४–धृष्टी च । मध्येऽन्यत् । का. श्रौ. सू. २६ । १३४ । १३५ ।

( मु ) अथास्मिन्पयऽआनयति। घर्म्मैतत्ते पुरीषमित्यन्नम्वै पुरीषमन्नमे-वास्मिन्नेतद्दधाति तेन व्वर्द्धस्व चा च प्यायस्वेति नात्र तिरोहितमिवास्ति व्वर्द्धिषीमहि च व्वयमा च प्यासिषीमहीत्याशिषमेवैतदाशास्ते ॥ २३ ॥

स वै न सर्व्वमिवानयेत्। (न्ने) नेद्यजमानात्पराग्न्नमसदित्यर्द्धम्वा भूयो वा परिशिनष्टि तस्मिन्नपराह्णे यजमानाय व्रतमभ्युत्सिच्य प्रयच्छति तद्यजमानऽएवैतदन्नाद्यन्दधाति तथो ह यजमानान्न पराग्न्नम्भवति ॥२४॥

---

अथास्मिन्पय आनयति -" घर्मैतत्ते पुरीषम् "-इति । अन्नं वै पुरीषम् । अन्नमेवास्मिन्ने-तद्दधाति । " तेन वर्धस्व चा च प्यायस्व "-इति । नात्र तिरोहितमिवास्ति । " वर्द्धिषी-महि च वयमा च प्यासिषीमहि "-( वा. सं. ३८।२१ ) इति । आशिषमेवैतदाशास्ते॥२३॥

स वै न सर्वमिवानयेत् । नेद्यजमानात्परागन्नमसदिति । अर्द्धं वा भूयो वा परिशिनष्टि ।

---

इत्यर्थः । अथ खरत्रयस्यापि उद्वासनं विधत्ते-उत्तरतः खरौ प्र० यतनमिति । 'उत्तरतः' महावीर-स्योत्तरदेशे 'प्रचरणीयौ' प्रवर्ग्यप्रचरणोपयुक्तौ 'खरौ' निदधाति । यौ पूर्वं गार्हपत्याहवनीययोरुत्तरतः सिकताभिः निर्मितौ तावपि उद्धृत्य आनीय महावीरोत्तरभागे निदध्यादित्यर्थः । 'तत्' खलु 'तयोः' खरयोः 'आयतनं' स्थानं प्रवर्ग्यप्रचरणसमये गार्हपत्याहवनीययोः उत्तरतः तयोर्निर्मितत्वात् । योऽयं उच्छिष्टखराख्यो धिष्ण्यं 'मार्जालीयं' तद्दक्षिणतः मार्जालीयस्य दक्षिणभागे निदध्यात् । तत्खलु तस्यो-च्छिष्टखरस्यायतनम् । प्राग्वंशस्य दक्षिणभागे । तस्य पुराऽवस्थितत्वात् । इत्थं घर्मोपयुक्तानां पात्राणामुद्वा-सनं तैश्च पुरुषाकृतिनिर्माणं च प्रतिपादितम् ॥ २२ ॥

अथ प्रचरणीये महावीरे पयसँ आसेचनं विधत्ते-अथास्मिन् पय आनयति० तद्दधातीति । 'अथ' एवं सर्वपात्रोद्वासनानंतरं अस्मिन्प्रचरणीये प्रथमे महावीरे " घर्मैतत्ते " इति मंत्रेण 'पयः' क्षीरं 'आनयति' आसिंचति । अथास्मिन्मंत्रभागे पुरीषशब्दस्यार्थं ब्रुवन् स्तौति-अन्नं वै पुरीष० तद्दधातीति । 'अन्नं' अदनीयं वस्तु हि कृत्स्नदेहपूरकत्वात् पुरीषमित्युच्यते । अतः एतेन मंत्रभागेन अस्मिन्महावीरे अन्नमेव निदधाति । अथ द्वितीयभागमनूद्य स्पष्टार्थमाह-तेन वर्द्धस्व० मिवास्तीति । गतमेतत् । अथ तृतीय-भागमनूद्याशीःप्रतिपादनमनेन क्रियते इत्याह-वर्द्धिषीमहि० तदाशास्ते इति । 'वर्द्धिषीमहि' एवं वृद्धाः भूयास्मेति एतादृशीमाशिषमेव 'एतत्' एतेन मंत्रभागेन 'आशास्ते'॥ २३ ॥

अथानेतव्यस्य पयसः परिमाणमाह-स वै न सर्व्वं० परिशिनष्टीति । 'स वै' स खलु अध्वर्युः ।

---

१-खरा उत्तरतः । का. श्रौ. सू. २६ । १३६ । खरौ प्रचरणीयौ खरौ ।

२-दक्षिणतो मार्जालीयदेशं बहिर्वेद्युच्छिष्टखरम् । का. श्रौ. सू. २६ । १३६ । शांतिकरणमाद्यंतयोः । स्वाध्यायदर्शनात्स्वा-ध्यायदर्शनात् । का. श्रौ. सू. २६ । १५५ । १५६ । तच्च शांतिकरणं द्वारापिधानोत्तरकाले आदिमं अंत्यं च । पात्राणामासंधा-मासादनानंतरं " ऋचं वाचम् " इत्यध्यायेन ॥

३-आसेचनवन्ति पयसः पूरयति घर्म्मैतत्त इति । का. श्रौ. सू. २६ । १३७ । आसेचनवन्ति गर्तवन्ति तानि च पात्राणि सप्त त्रयो महावीराः द्वे पिन्वने उपयमनी स्रुक् स्रुवः चेति सप्त । पयस इति तृतीयार्थे षष्ठी पयसेत्यर्थः ॥

( त्यु ) अथैनमद्भिः परिषिञ्चति शान्तिर्व्वाऽआपः शमयत्त्येवैनमेतत्तत्स-र्व्वतः परिषिञ्चति सर्व्वतऽएवैनमेतच्छमयति त्रिष्कृत्वः परिषिञ्चति त्रिवृद्धि यज्ञः ॥ २९ ॥

( ग्रोऽथा ) अथाह व्वार्षाहरꣳ साम गायेति । ( त्ये ) एष वै व्वृषा

---

तस्मिन्नपराह्णे यजमानाय व्रतमभ्युत्सिच्य प्रयच्छति । तद्यजमान एवैतदन्नाद्यं दधाति । तथा उ ह यजमानान्न परागन्नं भवति ॥ २४ ॥

अथैनमाद्भिः परिषिंचाति । शांतिर्वा आपः । शमयत्त्येवैनमेतत् । सर्वतः परिषिंचाति । सर्वत एवैनमेतच्छमयति । त्रिष्कृत्वः परिषिंचति । त्रिवृद्धि यज्ञः ॥ २९ ॥

अथाह वार्षाहरं साम गायेति । एष वै वृषा हरिः । य एष तपति । एष उ प्रवर्ग्यः । तदेतमे-वैतत्प्रीणाति । तस्मादाह–वार्षाहरं साम गायेति ॥ २६ ॥

---

'सर्वमिव' सकलमेव पयो महावीरे 'नानयेत्' नासिञ्चेत् । 'नेत्' नैव 'यजमानात्' 'अन्नं पराक्' परागतं वियुक्तं असद्भवेत् इति अनेनाभिप्रायेण । तर्हि कियत् आनेतव्यमिति चेत् उच्यते–'अर्द्धं वा' पयसोऽर्द्धभागं वा 'भूयो वा' ततोऽप्यधिकं वा 'परिशिनष्टि' अवशेषयति । घर्म्मदुघायाः धेनोः पयसः अर्द्धभागं ततोऽपि किंचिन्न्यूनं वा महावीरे अवनयेदित्यर्थः । अथ परिशेषितस्य पयसः कदोपयोगः ? इत्यत आह–तस्मिन्नपराह्णे० भवतीति । तस्मिन्नवशिष्टे पयसि अपराह्णकाले दातव्यं सायंकालीयं 'व्रतं' व्रतार्थं पयः 'अभ्युत्सिच्य' उपर्यासिच्य 'यजमानाय' प्रयच्छेत् । तथा च सति तत्तेन घर्मावशेषितस्य पयसः व्रतपयसा मिश्रणेन 'एतदन्नाद्यं' घर्म्मदुघायाः पयोलक्षणं 'यजमान एव दधाति' स्थापयति । तथैव च सति यजमानसकाशात् 'अन्नं पराक्' पराग्भूतं परागतं वियुक्तं 'न भवति' ॥ २४ ॥

अथोद्वासितस्य घर्मस्य परिषेचनं विधत्ते–अथैनमद्भिः परिषिञ्चतीति । 'अथ' एवमुद्वासनानंतरं 'एनं' प्रवर्ग्यं अद्भिरुदकैः 'परिषिंचति' । तदुक्तं सूत्रकृता-"उत्तरवेदिं त्रिः परिषिच्याचिक्रंददिति" ( का. श्रौ. सू. २६ । १२३ ) इति । अथ एतस्य परिषेचनस्य शमनहेतुत्वमाह–शांतिर्वा आप० त्येवैनमे-तदिति । 'शांतिर्वै' शांतिहेतवः शांता आपः । किं तत इति चेत्; उच्यते–'एतत्' एतेन अद्भिः परिषेचनेन 'एनं' तप्तं घर्म्मं 'शमयत्येव' उपशांतं करोत्येव । अथास्य परिषेचनस्य सर्वदिक्संबंधमनूद्य स्तौति–सर्वतः परि० च्छमयतीति । 'सर्वतः' सर्वासु दिक्षु उत्तरवेदिं 'परिषिंचति' । 'एतत्' 'सर्वतः' सर्वाभ्य एव दिग्भ्यः 'एनं' घर्म्मं 'शमयति' शांतं करोति । अथ तस्य परिषेचनस्यावृत्तिं विधाय स्तौति–त्रिष्कृत्वः परिषिञ्चति त्रिवृद्धि यज्ञ इति । त्रिष्कृत्वस्त्रिवारं 'परिषिंचति' 'त्रिवृद्धि' त्रिगुणितः खलु 'यज्ञः' सवनत्रयादिभिन्नत्वात् ॥ २९ ॥

अथ परिषेचने क्रियमाणे प्रस्तोतारं प्रति सामगानार्थं प्रेष्येत् इत्याह–अथाह वा० साम-

---

१–शेषं व्रतमिश्रं दीक्षिताय प्रयच्छति । प्रत्तं चेत्केवलम् । का. श्रौ. सू. २६ । १३८ । १३९ ।
२–अत्र वा परिषेचनम् । का. श्रौ. सू. २६ । १४० ।
३–वार्षाहरेष्वाहोत्रीये सामनी गायेति प्रेष्यति । का. श्रौ. सू. २६ । १४१ ।

हरिर्ष्वँऽएष तपत्येषुऽ उ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह व्वार्षाहरथ्ँ साम गायेति ॥ २६ ॥

( त्यु ) अथ चात्वाले मार्जयन्ते । सुमित्रिया नऽआपऽओषधयः सन्त्वित्यञ्जलिनाऽपऽउपाचति व्वज्रो वा आपो व्वज्रेणैवैतन्मित्रधेयङ्कुरुते दुर्म्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यञ्च व्वयन्द्विष्मऽइति यामस्य दिशन्द्वेष्यः स्यात्तान्दिशम्परासिञ्चेत्तेनैव तम्पराभावयति ॥ २७ ॥

(त्यु)अथ प्राङिवोदङ्ङुत्क्रामति । (त्यु)उद्वयन्तमसस्परीति पाप्मा वै तमः पाप्मानमेव तमोऽपहते स्वः पश्यन्तऽउत्तरमित्ययम्वै लोकोऽस्याऽउत्तरो-

---

अथ चात्वाले मार्जयंते–" सुमित्रिया न आप ओषधयः संतु "–इति अंजलिनाऽप उपाचति । वज्रो वा आपः । वज्रेणैवैतन्मित्रधेयं कुरुते । " दुर्मित्रियास्तस्मै संतु योऽस्मान् द्वेष्टि यं च वयं द्विष्मः "–( वा. सं. ३८ । २३ ) इति । यामस्य दिशं द्वेष्यः स्यात् । तां दिशं परासिंचेत् । तेनैव तं पराभावयति ॥ २७ ॥

अथ प्राङिवोदङ्ङुत्क्रामति–" उद्वयं तमसस्परि "–इति । पाप्मा वै तमः । पाप्मानमेव

---

गायेतीति । वार्षाहराख्यं 'साम' हे प्रस्तोतः 'गाय' इति अध्वर्युर्ब्रूयात् । तच्च "अचिक्रदद्वृषा हरिः" इत्यस्यां गीयते, तदेतत् स्तौति–एष वै वृषा० गायेतीति । 'एष वै' एष खलु सूर्यः मंत्रे वृषा हरिरित्युच्यते । वर्षणात्, रसहरणाच्च 'एषः' एव सूर्यः प्रवर्ग्यः । गतमन्यत् । यस्मादेवं " अचिक्रदद्वृषा हरिः " इति मंत्रः समवेतार्थः । 'तस्मात्' " वार्षाहरं साम गाय " इति अध्वर्युर्ब्रूयात् ॥ २६ ॥

अथ चात्वाले प्रवर्ग्यकर्तॄणां मार्जनं विधत्ते–अथ चात्वाले मार्ज्जयन्ते०सन्त्वितीति । अथानंतरं चात्वालनामके अवटे अपः उपस्पृशंति अद्भिर्मार्जयन्ते इत्यर्थः । " सुमित्रिया नः " इति तत्र मन्त्रः । ( तदेतत्स्तौति–'यावत्' यावंतं कालं 'एतेन' प्रवर्ग्येण प्रचरंति तावत्पर्यंतं अस्मात् स्थानात् आपश्च ओषधयश्च अपक्रम्य निर्गम्येव तिष्ठंति । 'तदु' तेनापामुपस्पर्शनेन अपक्रांताभिस्ताभिः 'मित्रधेयं' मैत्रीं 'कुरुते' कृतवान् भवति । ) अथ मार्जनशेषस्योदकस्य सेचनं विधत्ते–दुर्म्मित्रिया०तं पराभावयतीति । 'अस्य' यजमानस्य 'द्वेष्यः' शत्रुः 'यां दिशं' प्राप्तः 'स्यात्' । 'तां दिशं परासिंचेत्' तस्यां दिशि मार्जनशिष्टमुदकं " दुर्म्मित्रियाः " इत्यनेन मन्त्रेण पराचीनं निनयेत् । 'तेन' परासेचनेन तमेव शत्रुं 'पराभावयति' पराभूतं कृतवान् भवति ॥ २७ ॥

अथ मार्जनदेशान्निर्गमनं विधत्ते–अथ प्राङिवोदङ्ङुत्क्रामतीति । 'प्राङिव' प्राङ्मुख इव 'उदङ्' उदङ्

---

१–चात्वाले मार्जयन्ते सपत्नीकाः सुमित्रिया न इति । का. श्रौ. सू. २६ । १४२ ।

२–तदेतत्स्तौतीत्यारभ्य कृतवान्भवतीत्यंतं काण्वश्रुतिमनुसृत्य भाष्यं ज्ञेयम् । काण्वपाठश्च–" यावद्वाऽ एतेन प्रचरन्त्यापश्च ह वा अस्मात्तावदोषधयश्चापक्रम्येव तिष्ठंति तदु ताभिर्मित्रधेयं कुरुते " इति ।

ऽस्मिन्नेव लोके प्प्रतितिष्ठति देवन्देवत्रा सूर्य्यमगन्म ज्योतिरुत्तममिति स्वर्गो वै लोकः सूर्य्यो ज्योतिरुत्तमᳫँ स्वर्गऽएव लोकेऽन्ततः प्प्रतितिष्ठ-त्यनपेक्षमेत्याहवनीये समिधमभ्यादधाति समिदसि तेजोऽसि तेजो मयि धेहीत्याशिषमेवैतदाशास्ते ॥ २८ ॥

( स्तुतेऽथ ) अथ प्रसुते दधिघर्म्मेण प्प्रचरन्ति । यज्ञो वै सोमः शिरः प्प्रवर्ग्यो यज्ञऽएवैतच्छिरः प्प्रतिदधाति माध्यन्दिने सवनऽएतद्वाऽइन्द्रस्य

---

तमोऽपहते । " स्वः पश्यंत उत्तरम् "—इति । अयं वै लोकोऽद्भ्य उत्तरः । अस्मिन्नेव लोके प्रतितिष्ठति । "देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् "—( वा. सं. ३८।२४ ) इति । स्वर्गो वै लोकः सूर्यो ज्योतिरुत्तमम् । स्वर्ग एव लोकेऽन्ततः प्रतितिष्ठति । अनपेक्षमेत्य आहवनीये समिधमभ्यादधाति—" समिदसि तेजोऽसि तेजो मयि धेहि "—( वा. सं. ३८।२५ ) इति । आशिषमेवैतदाशास्ते ॥ २८ ॥

**अथ प्रवर्ग्यशेषो दधिघर्मः ।**

अथ प्रसुते दधिघर्मेण प्रचरंति । यज्ञो वै सोमः । शिरः प्रवर्ग्यः । यज्ञ एवैतच्छिरः प्रतिदधाति ।

---

मुखः उत्तरपूर्वदिगभिमुखः "उद्वयमिति" मन्त्रेण 'उत्क्रामति' उत्प्लुत्य गच्छति । सर्वे प्रवर्ग्यकर्तारोऽनेन मन्त्रेणोत्क्रामेयुरित्यर्थः । अथास्य मन्त्रभागस्य तात्पर्यमाह—पाप्मा वै तमः पाप्मानमेव तमोऽपहते इति । मालिन्यहेतुत्वात् पाप्मैवात्र तमःशब्देनोच्यते । ' वयं तमसः ' उपरि उत्क्रांताः अभूमेति तद्वाक्यस्यार्थः । अतः ' पाप्मानं ' पापरूपमेव ' तमः अपहते ' विवासयति । अथ द्वितीयपादमनूद्य व्याचष्टे—स्वः पश्यंतऽ उत्तर०प्रतितिष्ठतीति । ' अयं वै ' अयं खलु भूलोकः ' अद्भ्यः ' सामुद्रीभ्यः सकाशात् ' उत्तरः ' उपरिदेशस्थः । तस्मादत्रोत्तरशब्देनायमेव लोकः प्रतिपाद्यत इति यौः ' अस्मिन्नेव लोके प्रतितिष्ठति ' प्रतिष्ठिता भवति । अथोत्तरार्द्धमनूद्य व्याचष्टे—देवन्देवत्रा०प्रतितिष्ठतीति । अस्मिन् घर्मे प्राप्यत्वेन निर्दिष्टं यत्सूर्यात्मकमुत्तमं ' ज्योतिः ' असावेव स्वर्गो लोकः । तथा च अंततोऽवसाने यागफलभूते स्वर्गलोक एव ' प्रतितिष्ठति ' प्रतिष्ठितो भवति । अनेन मन्त्रेण चात्वालदेशादुत्क्रांतानां समिदाधानं विधत्ते—अनपेक्षमेत्याहव० समिधमिति । ' अनपेक्षं ' अपेक्षां पृष्ठभागस्यावेक्षणमकृत्वा एत्याहवनीयदेशं प्राप्य तस्मिन्नाहवनीये एकां ' समिधं ' " समिदसि " इत्यनेन मन्त्रेणाभ्यादधाति । एतया समिधा अग्निमेव समिंधे संदीपयति । स च समिद्धोऽग्निः एनं यजमानं तेजसा दीप्त्या समिंद्धे प्रकाशयति, यजमानस्तेजस्वी भवतीत्यर्थः ॥ २८ ॥

इत्थं प्रवर्ग्यतदुद्वासने उक्ते, अथ सौत्ये अहनि कर्तव्यं दधिघर्म्माख्यं यागं विधत्ते—अथ प्रसुते दधिघर्म्मेण

---

१–२–३–" सर्वे प्रवर्ग्यकर्तारोऽनेन मन्त्रेणोत्क्रामेयुरित्यर्थ इति, वयं तमस उपरि उत्क्रांता अभूमेति, अनेन मन्त्रेण चात्वालदेशादुत्क्रांतानाम् " इमास्तिस्रः पंक्तयः श्रुतिसूत्रपरिपठितेन " उत्क्रामति अभ्यादधाति " इत्येकवचनेनानन्वितार्थाः । तथा च कात्यायनसूत्रं–" उद्वयमित्युत्क्रामत्युत्तरपूर्वार्द्धम् । अनपेक्षमेत्यैधोऽसीति समिधमादायाहवनीयेऽभ्यादधाति समिदसीति । पत्नी च गार्हपत्ये तूष्णीम् " इति । का. श्रौ. सू. २६ । १४२ । परं उद्वयमिति मन्त्रगतं वयं उदगन्म इति बहुवचनेनान्वितार्थाः । तथापि मन्त्रलिंगाच्छ्रुतेर्बलीयस्त्वेनात्र यजमानस्यैकस्यैव सर्वेषां उत्क्रमणं समिदाधानं चेति विभिः न दोषाय । इति ॥

निष्केवल्यꣳ सुवनं यन्माध्यन्दिनꣳ सुवनꣳ स्वुऽएवैनमेतुद्भागे प्प्रीणाति स्तुते माध्यन्दिने पुवमाने प्प्राणो वै माध्यन्दिनः पुवमानः प्प्राणमेवास्मिन्नेतद्दधात्यग्निहोत्रहवण्या मुखम्वाऽएतुद्यज्ञानां युदग्निहोत्रꣳ शीर्षंस्तन्मुखन्दधाति ॥ २९ ॥

---

माध्यंदिने सवने । एतद्वा इन्द्रस्य निष्केवल्यं सवनम् । यन्माध्यंदिनं सवनम् । स्व एवैनमेतद्भागे प्रीणाति । स्तुते माध्यंदिने पवमाने । प्राणो वै माध्यंदिनः पवमानः । प्राणमेवास्मिन्नेतद्दधाति । अग्निहोत्रहवण्या । मुखं वा एतद्यज्ञानाम् । यदग्निहोत्रम् । शीर्षंस्तन्मुखं दधाति ॥ २९ ॥

---

प्रचरन्तीति । 'प्रसुते' अभिषुते सोमे सुत्यादिवसे 'दधिघर्म्मेण' तत्तदधिद्रव्यकेण दधिघर्म्माख्येन यागेन अध्वर्युप्रभृतयः 'प्रचरंति' चरेयुः । सुत्यादिवसानुष्ठेयस्याप्यत्रानुविधानं दधिघर्म्मस्य प्रवर्ग्यशेषत्वद्योतनार्थम् । तेन प्रवर्ग्यप्रवृत्तौ अस्यापि प्रवृत्तिः । अत एवापस्तंबेन दधिघर्म्मं प्रस्तुत्योक्तं–"निः प्रवर्ग्योऽस्यादित्यपरम्"–इति तदेतत् सोमयागानां मध्ये घर्म्मानुष्ठानं स्तौति–यज्ञो वै सोमः शि॰ प्रतिदधातीति । यज्ञात्मक एव सोमः प्राधान्येन यज्ञनिष्पादकत्वात् । प्रवर्ग्यश्च यज्ञस्य शिरः इत्युक्तम् । तथा च–दधिघर्म्मोऽपि प्रवर्ग्यशिर एवेति सोमयाग एव एतच्छिरः प्रतिहितं भवति । तत्रापि माध्यंदिनसवने एव दधिघर्मः कार्यः इत्याह–माध्यंदिने सवन इति । दधिघर्म्मेण प्रचरंतीत्यनुवर्तते । तदेतत् स्तौति–एतद्वाऽइन्द्रस्य॰ प्रीणातीति । 'एतत्' खलु सवनं 'इन्द्रस्य निष्केवल्यं' केवलमिंद्रस्यैव निष्कृष्य स्वभूतं माध्यंदिनं 'सवनं' इति यत् । अतस्तेन दधिघर्म्मेण हविषा 'स्वे' स्वकीये 'एव भागे' भागभूते एव सवने 'एनं' इंद्रं 'प्रीणाति' तर्पयति । तत्रापि पवमानस्यानंतरं दधिघर्म्मः कार्य इत्याह–स्तुते माध्यंदिने पवमाने इति । माध्यंदिनाख्ये पवमान-स्तोत्रे 'स्तुते' सति दधिघर्म्मेण चरितव्यं, तदेतत्स्तौति–प्राणो वै माध्यंदि॰ तद्दधातीति । प्राणात्मकः खलु 'माध्यंदिनः पवमानः,' गायत्रामहीयवरौरवयौधाजयौशनसाख्यैः पंचभिः सामभिः प्राणापानादिपंचवृत्त्यात्मकैः उपेतत्वात् । अतः पंचवृत्त्यात्मकं मुख्यं 'प्राणमेव' 'अस्मिन्' घर्म्मे स्थापितवान् भवति । अथ तस्मिन् दधिघर्म्मे साधनत्वेन पात्रविशेषं विधाय स्तौति–अग्निहोत्रहवण्या॰ तन्मुखं दधातीति । अग्निहोत्र-होमो यया स्रुचा हूयते सा अग्निहोत्रहवणी तया दधिघर्माख्यं हविर्जुहोति । अग्निहोत्रमिति यत्कर्म 'एतद्यज्ञानां मुखं वै' वक्त्रस्थानीयं तत्संबंधात्स्रुगपि मुखस्थानीया । अतः तत्तया 'अग्निहोत्रहवण्या' स्रुचा होमेन 'शीर्षन्' शीर्ष्णि यज्ञस्य शिरसि मुखमेव 'दधाति' स्थापितवान् भवति ॥ २९ ॥

---

१–सप्रवर्ग्यें दधिघर्मः । का. श्रौ. सू. १० । १८ ।

२-सदसि पवमानोपाकरणम् । अहर्गणे च सर्वत्र प्रायणीयोदयनीयवर्जम् । का. श्रौ. सू. १० । १५–१७ । पशुनेहीत्यपकृष्य दधिघर्म्मार्थ दध्याहर दक्षिणा उपावर्तयेति प्रैषोपचयः ।

३–उच्चा त इत्येततृचं गायत्रम् । पुनरुच्चा त इत्येतत् तृचमामहीयवम् । पुनानः सोमेति रौरवम् । पुनानः सोमेति यौधाजयम् । प्र तु द्रवेत्यौशनसम् । एतानि पंच सामानि तृचात्मकानि स्तुवन्ति यत्र स माध्यन्दिनः पवमानः इत्युच्यते ।

४–उपविश्य सदसः पुरस्तात्सपवित्रायामग्निहोत्रहवण्यां ग्रहणं यथोक्तम् । का. श्रौ. सू. २६ । १९ । यावती द्यावापृथिवीऽ इति दधिघर्मग्रहणम् । का. श्रौ. सू. २६ । १५२ ।

सऽआनीयमानऽआह । होतर्व्वदस्व यत्ते व्वाद्यमिति व्वदते ह्यत्र होताऽथोपोत्तिष्ठन्नाह श्रातᳪ हविरिति श्रातᳪ हि भवत्यतिक्रम्याश्राव्याह दधिघर्म्मस्य यजेति व्वषट्कृते जुहोत्यनुवषट्कृतऽआहरति भक्षं तं यजमानाय प्प्रयच्छति ॥ ३० ॥

सऽउपहवमिष्ट्वा भक्षयति । मयि त्यदिन्द्रियम्बृहदित्येतद्वाऽइन्द्रियं-

---

स आनीयमान आह–" होतर्वदस्व यत्ते वाद्यम् "–इति । वदते ह्यत्र होता । अथोपोत्तिष्ठन्नाह–" श्रातं हविः "–इति । श्रातं हि भवति । अतिक्रम्याश्राव्याह । दधिघर्मस्य यजेति । वषट्कृते जुहोति । अनुवषट्कृते आहरति भक्षम् । तं यजमानाय प्रयच्छति ॥ ३० ॥

स उपहवमिष्ट्वा भक्षयति–" मयि त्यदिंद्रियं बृहत् "–इति । एतद्वा इंद्रियं बृहत् । य एष

---

इत्थं दधिघर्म्मयागस्य कालः साधनं चोक्तम् । अथ तस्य यागभक्षणे विधित्सुराह–सऽ आनीयमान० यजमानाय प्रयच्छतीति । सोऽध्वर्युः 'आनीयमाने' दधिघर्मे स्रुच्यासिच्यमाने "होतर्वदस्व यत्ते वाद्यम्" इति ब्रूयात् । अस्यायमर्थः–हे होतः ! तद्वदस्व ब्रूहि । 'ते' तव दधिघर्म्मग्रहणसमये 'यत्' 'वाद्यं' वक्तव्यं अस्तीति । प्रैषांतरवत् ब्रूहीति चोदनां परित्यज्य किं कारणं वदस्वेति चोद्यते ? इत्याशंक्याह–अत्रास्मिन् समये 'होता वदते हि' केवलं वृत्तमर्थं कथयति हि । न तु अनुवक्ति यजति वा । तथाहि–" होतर्वदस्व " इत्युक्ते होता " उत्तिष्ठतावपश्यत " इत्येतामृचं ब्रूते । तस्याश्चायमर्थः–हे अध्वर्युप्रभृतयः 'उत्तिष्ठत' उत्थिता भवत । ततश्च 'अवपश्यत' अधिश्रितं दधिघर्म्ममवाङ्मुखं आलोकयत । यदि असौ श्रातः पक्वः तर्हि जुहुत । यदि अश्रातः अपक्वः । तदा सुखेन तूष्णीमुपविशतेति । तथा चाभिवदनमात्रस्य होत्रा क्रियमाणत्वात् " होतर्वदस्व " इत्येव प्रैषं ब्रूयात् । अथानंतरं अध्वर्युः 'उपोत्तिष्ठन्' आसनादूर्ध्वं तिष्ठन् " श्रातᳪ हविः " इति होतारं प्रत्याह । हे होतः ! श्रातं पक्वं हविरिति हि तस्यार्थः । 'हि' यस्मात्, दधिघर्म्माख्यं हविः 'श्रातं' परिपक्वं 'भवति' । 'तस्मात्' श्रातं हविरिति होत्रे निवेदयेदित्यर्थः । एवमुक्त्वा दक्षिणा 'अतिक्रम्य' आश्राव्याश्रावणं कृत्वा प्रत्याश्राविते सति " दधिघर्म्मस्य यज " इति इमं प्रैषमाह ब्रूयात् । ततो याज्यांते 'वषट्कृते' सति अग्निहोत्रहवण्या तद्धविः 'जुहोति' । एवं वषट्कारानुवषट्कारयोः किंचित्किंचिद्धुत्वा शिष्टं 'भक्षं' भक्षणार्थमाहरति । यजमानसमीपं गमयति । आहृत्य च 'तं' भक्षं 'यजमानाय' 'प्रयच्छति' ददाति ॥ ३० ॥

'सः' यजमानः अध्वर्योरुपहवमिष्ट्वा " अध्वर्य उपह्वयस्व " इत्येवमुपहवं याच्ञां कृत्वा " मयि त्यदि-

---

१–होतर्वदस्व यत्ते वाद्यमित्याह वाद्यांते श्रातᳪ हविरित्युत्तिष्ठन्नाह । दधिघर्म्मस्य यजेति । का. श्रौ. सू. १० । २० ।

२–शेषं व्रतमिश्रं दीक्षिताय प्रयच्छति । प्रत्तं चेत्केवलम् । का. श्रौ. सू. २६ । १३८ । १३९ ।

३–हुतशेषं घर्ममृत्विजः सयजमानाः समुपहावं भक्षयन्ति यथोक्तम् । का. श्रौ. सू. १० । २२ । मयि त्यदिति भक्षणम् । त्रिभिः संवृगिति महाव्रतीये । का. श्रौ. सू. २६ । १५२ । १५३ । प्राणभक्षं वाऽदीक्षिताः । का. श्रौ. सू. १० । २३ । अदीक्षितानां प्रत्यक्षभक्षः प्राणभक्षो वेति विकल्पः । दीक्षितानां तु प्रत्यक्षभक्ष एव न प्राणभक्ष इत्यर्थः ।

म्बृहद्यऽएष तपति मयि दक्षो मयि क्रतुरिति क्रतूदक्षावेवात्मन्धत्ते घर्म्मस्त्रिशुग्विराजतीति घर्म्मो ह्येष त्रिशुग्विराजति विराजा ज्योतिषा सहेति विराजा ह्येष ज्योतिषा सह ब्रह्मणा तेजसा सहेति ब्रह्मणा ह्येष तेजसा सह पयसो रेतऽआभृतमिति पयसो ह्येतद्रेतऽआभृतन्तस्य दोहमशीमह्युत्तरामुत्तराᳬं समामित्याशिषमेवैतदाशास्तेऽथ चात्वाले मार्ज्जयन्तेऽसावेव बन्धुः ॥ ३१ ॥

---

तपति । "मयि दक्षो मयि क्रतुः"–इति । क्रतूदक्षावेवात्मन्धत्ते । "घर्मस्त्रिशुग्विराजति"–इति । घर्मो ह्येष त्रिशुग्विराजति । " विराजा ज्योतिषा सह "–इति । विराजा ह्येष ज्योतिषा सह । " ब्रह्मणा तेजसा सह "–( वा. सं. ३८ । २७ ) इति । ब्रह्मणा ह्येष तेजसा सह । " पयसो रेत आभृतम् "–इति । पयसो ह्येतद्रेत आभृतम् । " तस्य दोहमशीमह्युत्तरामुत्तरां समाम् "–( वा. सं. ३८ । २८ ) इति । आशिषमेवैतदाशास्ते । अथ चात्वाले मार्जयन्ते । असावेव बंधुः ॥ ३१ ॥

---

न्द्रियं " इति मन्त्रेण ' भक्षयति ' । अथैतन्मन्त्रवाक्यं समुपादाय व्याचष्टे–एतद्वाऽइन्द्रियं०तदाशास्ते इति । ' य एषः ' सूर्यस्तपति एतत्खलु 'बृहत्' परिवृढं 'इन्द्रियं' वीर्यात्मकम् । अतः ईदृग्विधमिन्द्रियं ' मयि ' भवतु इति प्रथमवाक्यस्यार्थः । "प्राणो वै यज्ञोऽपानः क्रतुः" इति (तै सं.२।५।२) तैत्तिरीयश्रुतेः 'क्रतूदक्षौ' प्राणापानौ । अतः "मयि दक्षो मयि क्रतुः" इति मन्त्रभागेन तावेवात्मनि स्वस्मिन् यजमानः 'धत्ते' धारयति । 'एषः' खलु घर्म्मः 'त्रिशुक्' त्रिविधं शोचमानः वैद्युतपार्थिवाग्निसूर्यात्मना त्रेधा दीप्यमानो 'विराजति' । अतस्त्रिशुग्विराजतीति वाक्यं समवेतार्थमित्यर्थः । छंदसां मध्ये विराट् खलु ज्योतिः तेजोरूपा । "अग्निर्देवानांज्योतिर्विराट् छन्दसाञ्ज्योतिः" ( तै.सं.७।१।१ ) इति तैत्तिरीयश्रुतेः । अतः 'विराजा' विराडात्मकेन 'ज्योतिषा' यस्मादेष घर्म्मो विराजति । तस्मात् "विराजा ज्योतिषा सह" इति वाक्यमपि समवेतार्थम् । यद्वा 'विराजा' विराजमानेन ' ज्योतिषा ' सूर्यात्मनेति योज्यम् । तथा ' ब्रह्मणा ' ब्रह्मजात्या त्रयीरूपेण वा ' तेजसा सह ' एष सूर्यात्मको घर्म्मो विराजति । सूर्यस्य च त्रयीसाहित्यं तैत्तिरीयके स्पष्टमाम्नायते–" ऋग्भिः पूर्वाह्णे दिवि देव ईयते, यजुर्वेदे तिष्ठति मध्येऽह्नः, सामवेदेनास्तमये महीयते " ( तै.का.प्र. ३ अनु. अन्त्य. ) इत्यादि । तथा ' पयसः ' क्षीरसकाशात् खलु 'एतद्रेतः' वीर्यहेतुभूतं दधिघर्माख्यं हविः 'आभृतं' संपादितम् । अतः "पयसो रेत आभृतम्" इति एतमर्थं प्रतिपादयति । 'तस्य' तथाविधस्योक्तलक्षणस्य दधिघर्म्मस्य ' दोहं ' दोहनीयं भागं ' अशीमहि ' प्राप्नुयाम । ' उत्तरामुत्तरां समाम् ' एतस्मिन् संवत्सरे इव आगामिन्यपि सर्वस्मिन् संवत्सरे तत्प्राप्नुयामेति

---

१–" सा वाऽ एषा वाक् त्रेधाविहिता ऋचो यजूंषि सामानि मण्डलमेवर्चोऽर्चिः सामानि पुरुषो यजूंषीति " । ( श. प. । १० । ५ । १ । ५ । ) तथा " यदेतन्मंडलं तपति तन्महदुक्थं ताऽ ऋचः सऽ ऋचां लोकोऽथ यदेतदर्चिर्दीप्यते तन्महाव्रतं तानि सामानि स साम्नां लोकोऽथ यऽ एषऽ एतस्मिन्मंडले पुरुषः सोऽग्निस्तानि यजूंषि स यजुषां लोकः सैषा त्रय्येव विद्या तपति तद्धैतदप्यविद्वांस आहुस्त्रयी वाऽ एषा विद्या तपतीति " । ( श. प. । १० । २ । २ । १ । २ )

( र ) अथातो द्दक्षिणानाम् । ( नाथ्ँ ) सुवुर्ण्णथ्ँ हिरण्यथ्ँ शतुमानम्ब्रह्मुणे ददात्यासीनो वै ब्रह्मा युशः शुयानथ्ँ हिरण्यन्तुस्मात्सुवुर्ण्णथ्ँ हिरण्यथ्ँ शतुमानम्ब्रह्मुणे ददाति ॥ ३२ ॥

( त्यु ) अथु यैषा घर्म्मदुघा । ताुमध्वर्य्यवे ददाति तप्तुऽइव वै घर्म्मुस्तप्तुमिवाध्वर्य्युर्निष्क्रामति तुस्मात्ताुमध्वर्य्यवे ददाति ॥ ३३ ॥

अथ प्रवर्ग्याङ्गभूतं दक्षिणाद्रव्यदानम् ।

अथातो दक्षिणानाम् । सुवर्णं हिरण्यं शतमानं ब्रह्मणे ददाति । आसीनो वै ब्रह्मा । यशः शयानं हिरण्यम् । तस्मात्सुवर्णं हिरण्यं शतमानं ब्रह्मणे ददाति ॥ ३२ ॥

अथ यैषा घर्मदुघा । तामध्वर्यवे ददाति । तप्त इव वै घर्मः । तप्तमिवाध्वर्युर्निष्क्रामति । तस्मात्तामध्वर्यवे ददाति ॥ ३३ ॥

एतादृशीं 'आशिषमेव' 'एतत्' एतेन मन्त्रभागेन यजमानः 'आशास्ते' आशंसते । अथ सर्वेषामृत्विजां चात्वाले मार्जनं विधत्ते–अथ चात्वाले मा० बंधुरिति । स्पष्टोऽर्थः ॥ ३१ ॥

अथ प्रवर्ग्यकर्तॄणां ऋत्विजां प्रवर्ग्याङ्गभूतदक्षिणानां दानमाह–अथातो दक्षिणानामिति । 'अथ' दधिघर्म्मयागानंतरं यतो दक्षिणारहितो यज्ञो निर्वीर्यः अतः कारणात् 'दक्षिणानां' द्रव्याणां दानम् इतः परं प्रस्तूयते इति शेषः । तत्र तावद्ब्रह्मणो यज्ञभिषक्त्वेन मुख्यत्वात् तस्मै दातव्यदक्षिणामाह–सुवर्णं हिर० ददातीति । 'सुवर्णं' सुवर्णविकारं हेममयं 'शतमानं' रुक्मं 'हिरण्यं' रजतं 'शतमानं' च 'ब्रह्मणे ददाति' । तदेतदुपपाद्य निगमयति–आसीनो वै० ददातीति । ब्रह्मा सर्वर्त्विजां मध्ये सर्वेषु कर्मसु दक्षिणतः आस्ते । अतः प्राचुर्येण 'ब्रह्मा आसीनः' सर्वत्रोपविष्ट एव भवति । तथा सौवर्णं राजतं च शयनशालीनं भवति चोरादिभयात् सौवर्णराजतादीनि सर्वदा गृहेषु गूढं स्थाप्यत एव । न तत् द्रव्यांतरवत् प्रकटं व्यवह्रियते । 'तस्मात्' प्रतिग्राह्यप्रतिग्रहीत्रोः साधर्म्येण संबंधार्थत्वात् । गतमन्यत् ॥ ३२ ॥

अथाध्वर्यवे दातव्यां दक्षिणां विधाय तदुपपाद्य निगमयति–अथ यैषा घर्म्म० ददातीति । 'अथ' सौवर्णराजतशतमानयोर्दानामंतरं 'या एषा' गौः 'घर्म्मदुघा' प्रवर्ग्यार्थस्य पयसो दोग्ध्री 'तामध्वर्यवे' दद्यात् । किमनयोः साधर्म्यमिति चेत्; उच्यते–घर्म्मस्तावत् 'तप्त इव वै' अंगारैः संतप्तोऽग्निवर्ण इव भवति । अध्वर्युश्च घर्मसंदीपनादौ तप्तं तं घर्म्मं 'निष्क्रामति' नितरां प्राप्य स्वयमपि तदौष्ण्येन तप्त इव भूत्वा उत्क्रामति । तत्कृतं तापम् अतिक्रामति । तस्मादुभयोः तप्तत्वसाधर्म्यात् तप्यमानघर्मसंबंधिनीं 'तां' गामध्वर्यवे दद्यात् ॥ ३३ ॥

१–चात्वाले मार्जनम् । का. श्रौ. सू. २६ । १५४ ।
२–प्रब्रुंजनीयौ शतमानौ ब्रह्मणे ददाति । का. श्रौ. सू. २६ । १४२ ।
३–घर्मदुघामध्वर्यवे । का. श्रौ. सू. २६ । १४३ । गामिति शेषः ।

( त्यु ) अथ यैषा यजमानस्य व्रतदुघा । ताꣳ होत्रे ददाति यज्ञो वै होता यज्ञो यजमानस्तस्मात्ताꣳ होत्रे ददाति ॥ ३४ ॥

( त्यु ) अथ यैषा पत्न्यै व्रतदुघा । तामुद्गातृभ्यो ददाति पत्नीकर्मैव वाऽएतेऽत्र कुर्वन्ति यदुद्गातारस्तस्मात्तामुद्गातृभ्यो ददाति ॥ ३५ ॥

( त्यु ) अथैतद्वै । ( द्वाऽआ ) आयुरेतज्ज्योतिः प्रविशति यऽएतमनु वा ब्रूते भक्षयति वा तस्य व्रतचर्या या सृष्टौ ॥ ३६ ॥

इति द्वितीयप्रपाठके द्वितीयं ब्राह्मणम् ॥ १४।२।२ ॥ ( ३-१ ) ॥

---

अथ यैषा यजमानस्य व्रतदुघा । तां होत्रे ददाति । यज्ञो वै होता । यज्ञो यजमानः । तस्मात्तां होत्रे ददाति ॥ ३४ ॥

अथ यैषा पत्न्यै व्रतदुघा । तामुद्गातृभ्यो ददाति । पत्नीकर्मैव वा एतेऽत्र कुर्वंति—यदुद्गातारः । तस्मात्तामुद्गातृभ्यो ददाति ॥ ३५ ॥

अथैतद्वा आयुः, एतज्ज्योतिः प्रविशति । य एतमनु वा ब्रूते । भक्षयति वा । तस्य व्रतचर्या—या सृष्टौ ॥ ३६ ॥

---

अथ होत्रे देयां दक्षिणामाह—अथ यैषा यजमान० होत्रे ददातीति । 'अथ' अध्वर्यवे दानानंतरं 'या एषा यजमानस्य व्रतदुघा' व्रतार्थस्य पयसो दोग्ध्री धेनुः 'तां होत्रे' दद्यात् । अथैतयोः साधर्म्यमभिधाय, उक्तमर्थं निगमयति—यज्ञो वै होता० होत्रे ददातीति । वषट्कारेण हि सर्वाणि हवींषि हूयंते । अतस्तस्य प्राधान्येन तत्कर्तुरपि प्राधान्यात् 'होता यज्ञो वै' यज्ञात्मक एव । यजमानोऽपि फलस्य स्वामित्वात् यज्ञात्मकः । अतो यजमानार्था गौरपि यज्ञात्मिका । तस्याः उभयोर्यज्ञात्मकत्वसाम्यात् । गतमन्यत् ॥ ३४ ॥

अथोद्गातॄणां दक्षिणादानं विधाय तदुपपाद्य निगमयति—अथ यैषा पत्न्यै व्रतदुघा० ददातीति । 'अथ' होत्रे दानानंतरं 'पत्न्यै' पत्न्यर्थं 'व्रतदुघा' व्रतार्थस्य पयसः दोग्ध्री 'या एषा' गौः 'तामुद्गातृभ्यः' प्रस्तोतृप्रमुखेभ्यः सामगेभ्यो दद्यात् । 'यत्' ये 'उद्गातारः' अत्रास्मिन्प्रवर्ग्ये 'पत्नीकर्मैव' खलु स्वकीयं कर्माचरंति । यद्वा मुखवेष्टनादिकं पत्नीसंबद्धं कर्म 'एते कुर्वंति' अतः पत्नीसंबंधात् गौः तेषां योग्या । 'तस्मात्' प्रतिग्राह्यप्रतिग्रहीत्रोः पत्नीसंबंधसाम्यात् 'तां' गां 'उद्गातृभ्यः' दद्यात् ॥ ३५ ॥

ब्राह्मणान्तरवत् एतद्ब्राह्मणाध्ययनतदर्थानुष्ठानयोरंगत्वेन पूर्वोक्तां व्रतचर्यामत्राप्यतिदिशति—अथैतद्वाऽ आ० व्रतचर्या या सृष्टाविति । सिद्धमेतत् ॥ ३६ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये चतुर्दशे काण्डे तदन्तर्भूते प्रथमे प्रवर्ग्यकाण्डे तृतीयेऽध्याये प्रथमं ब्राह्मणम् ॥ १४ ( १ ) । ३ । १ ॥

---

१–यजमानव्रतदुघाᳪ होत्रे । का. श्रौ. सू. २६ । १४३ । गामिति शेषः ।

२–पत्न्याऽ उद्गात्रे । का. श्रौ. सू. २६ । १४३ । व्रतदुघां गामित्यर्थः । " अग्नीधेऽजाम् । का. श्रौ. सू. २६ । १४३ ।

**स॒र्व्वे॑षाम्वा॒ऽए॒ष भू॒ता॒नाम् । ( ५ँ ) स॒र्व्वे॑षान्दे॒वा॒नामा॒त्मा य॒द्यज्ञ॒स्तस्य॑ स॒म्मृद्धि॒मनु॒ य॒ज॒मा॒नः प्र॒ज॒या प॒शु॒भि॒र्ऋ॑ध्यते॒ वि वा॒ऽए॒ष प्र॒ज॒या प॒शु॒भि॒र्ऋ॑ध्यते॒ य॒स्य घ॒र्म्मो॑ वि॒दीर्य्य॑ते॒ त॒त्र प्रा॒य॒श्चि॒त्तिः ॥ १ ॥**

---

## अथ घर्मभेदे प्रायश्चित्तम् ।

**सर्वेषां वा एष भूतानां सर्वेषां देवानामात्मा—यद्यज्ञः । तस्य समृद्धिमनु यजमानः प्रजया पशुभिर्ऋध्यते । वि वा एष प्रजया पशुभिर्ऋध्यते- यस्य घर्मो विदीर्यते । तत्र प्रायश्चित्तिः ॥ १ ॥**

---

इत्थं तृतीये[1] घर्म्मोत्पादनमुक्तम् । अथ चतुर्थे[2] तत्प्रायश्चित्तमुच्यते । तत्र तावत् प्रायश्चित्तं कर्तव्यमिति विधित्सुः, उपोद्धातत्वेन तदुपपादयति—**सर्वेषां वाऽएष भूतानां० तत्र प्रायश्चित्तिरिति** । 'यत्' यः अयं 'यज्ञः' 'एषः सर्वेषां' खलु भूतानां भूतजातानां मनुष्यपश्वादीनां प्राणिनां 'सर्वेषां देवानां' इंद्रादीनां च 'आत्मा' स्वरूपं यज्ञक्रियापरिणामरूपत्वात्तेषाम् । तथा च स्मर्यते—"अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः "—( म. स्मृ. ३ । ७६ ) इति । 'तस्य' तथाविधस्य यज्ञस्य 'समृद्धिं' संपूर्तिं 'अनु' पश्चात् 'यजमानः' यज्ञफलभूतया 'प्रजया' पुत्राद्यात्मिकया गवादिभिः 'पशुभिश्च' 'ऋध्यते' समृद्धो भवति । 'यस्य' खलु यजमानस्य यज्ञे 'घर्म्मः' महावीरः 'विदीर्यते' भिद्यते । 'एषः' यजमानः यज्ञांगवैकल्येन समृद्ध्यभावात् स्वयमपि प्रजापश्वादिभिः 'व्यृध्यते' ऋद्धेर्विहीनो भवति । तस्मात् महावीरे विदीर्णे सति 'प्रायश्चित्तिः' विकलस्य समाधानलक्षणं प्रायश्चित्ताख्यं कर्म वक्ष्यमाणं कुर्यात् । तदुक्तं कात्यायनेन सूत्रकृता—"घर्मभेदे यथोक्तम्[3] । उखावचान्यं कुर्यात् । अभिन्नेन चरेत् । स्वाहा प्राणेभ्यः साधिपतिकेभ्य इति पूर्णाहुतिमाद्यामुत्तमां च मनसः काममाकूतिमिति "—( का. श्रौ. सू. २६ । १४४—१४७ ) इति । अस्यायमर्थः—प्रचरणीयस्य महावीरस्य भेदे सति तं संपिष्य अन्यया मृदा संसृज्य अन्यं महावीरं पूर्ववत् कुर्यात् । अभिन्नेन द्वितीयेन तृतीयेन वा महावीरेण तु प्रवृंजनं कुर्यात् ।

---

१–तृतीये इति काण्वपाठमनुसृत्य बोध्यम् ।

२–चतुर्थे इत्यपि काण्वपाठमनुसृत्यैवेति ज्ञेयम् ।

३–घर्मभेदे यथोक्तम् । का. श्रौ. सू. २६ । १४४ । यथोक्तमित्यप्याह कात्यायनः—"य ऋते चिदभिश्रिषः पुरा जत्रुभ्य आतृदः । संधाता संधिं मघवा पुरूवसुरिष्कर्ता विन्हुतं पुनरिति च घर्म्यम् " । का. श्रौ. सू. २५।१३६। चकारात् भूमिर्भूमिमिति च । तदपि आह कात्यायनः—" भूमिर्भूमिमवागान्माता मातरमप्यगात् । भूयाम पुत्रैः पशुभिर्यो नो द्वेष्टि स भिद्यतामिति मृण्मयं भिन्नमभिमृशेत् " । का. श्रौ. सू. २५ । १३५ । " परमेष्ठ्यादींश्च चतुस्त्रिंशतं जुहोति " । का. श्रौ. सू. २५ । १३७ । चकारादभिमर्शनानंतरं चतुस्त्रिंशद्धोम इत्यर्थः । तांश्च ( ३४ मा. सं. अ. ८ कं. ५४ ) " परमेष्ठ्यभिधीतः " इत्यारभ्य " सलिलः प्रप्लुतः " ( ५९ । ) इत्यंताः । चतुस्त्रिंशद्धोमस्तु आदेश एवेत्यध्वर्युकर्तृकः । आदेशो नाम यत्र नामनिमित्तादेशपूर्वकं नैमित्तिकमादिश्यते । यथा " पृषदाज्यस्कंदने जुहुयादया विष्ठा जनयन्निति " । का. श्रौ. सू. २५ । १४६ । पृषदाज्यस्कन्दनेऽभिमृशेदिति च । का. श्रौ. सू. २५ । १४२ । स आदेशः इति " सोमेज्योपपाते " का. श्रौ. सू. २५ । १४३ । इति सूत्रभाष्ये कर्कः । " प्रजापतिः संभ्रियमाण इति च यथाकालम् " । "सविता प्रथमेऽहन्निति च प्रत्यहम् " । का. श्रौ. सू. २६ । १४८ । १४९ । " सोमेज्योपपाते चैकैकां यथाकालꣳ हुत्वा यज्ञस्य दोह इति वाचयति । आग्नीध्रीये सुत्यासु " का. श्रौ. सू. २५ । १४३।१४४ । सोमेज्यायामुपपातः सोमेज्योपपातः । न सोमयागोपपातः । इति कर्कः । सुत्यासु वर्तमानासु कालाहुतिराग्नीध्रीये । आहवनीयापवादोऽयमिति कर्कः ।

पूर्णाहुतिञ्जुहोति । सर्व्वम्वै पूर्ण७ँ सर्व्वेणैवैतद्भिषज्यति यत्किञ्च विव्वृढं यज्ञस्य ॥ २ ॥

स्वाहा प्प्राणेभ्यः साधिपतिकेभ्यऽइति । मनो वै प्प्राणानामधिपति-र्म्मनसि हि सर्व्वे प्प्राणाः प्प्रतिष्ठितास्तन्मनसैवैतद्भिषज्यति यत्किञ्च विव्वृढं यज्ञस्य ॥ ३ ॥

प्पृथिव्यै स्वाहेति । प्पृथिवी वै सर्व्वेषान्देवानामायतनन्तत्सर्व्वाभिरेवै-तद्देवताभिर्भिषज्यति यत्किञ्च विव्वृढं यज्ञस्य ॥ ४ ॥

---

पूर्णाहुतिं जुहोति । सर्वं वै पूर्णम् । सर्वेणैवैतद्भिषज्याति । यत्किंच विवृढं यज्ञस्य ॥ २ ॥

" स्वाहा प्राणेभ्यः साधिपतिकेभ्यः "–इति । मनो वै प्राणानामधिपतिः । मनसि हि सर्वे प्राणाः प्रतिष्ठिताः । तन्मनसैवैतत् भिषज्यति । यत्किंच विवृढं यज्ञस्य ॥ ३ ॥

" पृथिव्यै स्वाहा "–इति । पृथिवी वै सर्वेषां देवानामायतनम् । तत् सर्वाभिरेवैतद्देवताभि-र्भिषज्यति । यत्किंच विवृढं यज्ञस्य ॥ ४ ॥

---

भेदनप्रायश्चित्त्यर्थं " स्वाहा प्राणेभ्यः " इत्यादिभिः द्वादशसंख्याका आहुतीः जुहोति । तासामाद्यामुत्तमां च " मनसः काममाकूतिम् " इति मंत्राभ्यां, आज्यपूर्णया स्रुचा पूर्णाहुतिं जुहोतीति ॥ १ ॥

तत्राद्यां पूर्णाहुतिं विधाय स्तौति–**पूर्णाहुतिञ्जुहोति० यज्ञस्येति** । अस्याः पूर्णाहुतेः अयं मंत्रः दर्शयिष्यते । तेन मंत्रेण आज्यपूर्णया स्रुचा ' पूर्णाहुतिं ' जुहोति । ' पूर्णं ' परिपूर्णं यत्तत्त्वं तत्सर्वं वै सर्व-जगदात्मकम् । अतः पूर्णत्वगुणविशिष्टया आहुत्या प्रायश्चित्तं कुर्वन्; यज्ञसंबंधि यत् किंचित् अंगजातं ' विवृढं ' विकलं भग्नं आसीत् । ' एतत् सर्वेणैव ' वस्तुजातेन ' भिषज्यति ' चिकित्सति । " भिषज् चिकित्सायां "–( धा. पा. कण्ड्वा० २४ ) इति धातुः ॥ २ ॥

अस्याः पूर्णाहुत्या अनंतरं " त्रयोदशैता आहुतीर्जुहोति "–इति काण्वपाठः ( अ. २ । ४ । १९ ) इति वाक्येन त्रयोदशाहुतयो होतव्या इति विधास्यति । तासामाद्या पूर्णाहुतिश्चतुर्दशी । प्रथमं तावन्मंत्राणां महावीरभेदलक्षणवैकल्यसमाधानक्षमं सामर्थ्यमस्तीति दर्शयितुं तान् क्रमेणानूद्य व्याचष्टे–तत्र प्रथमं मंत्रं पूर्णा-हुतौ करणभूतं अनूद्य तेन भैषज्यप्रकारमाह–**स्वाहा प्राणेभ्यः साधिपतिके० यज्ञस्येति** । अधिपति-सहितेभ्यः ' प्राणेभ्यः ' इदं हविः त्यजामि इति मंत्रार्थः । तत्र कोऽसौ प्राणानामधिपतिरिति चेत् उच्यते– ' मनो वै ' सुखाद्यपरोक्षसाधनं आंतरं इंद्रियं खलु ' प्राणानां ' चक्षुरादीनामधिपतिः ईशिता । तेषामन्वय-व्यतिरेकाभ्यां मनःसाहित्येनैव विषयप्रकाशनसामर्थ्यदर्शनात् । तत्तस्मात् मंत्रे अधिपतिशब्देन मनसो निर्दिष्ट-त्वात् ' मनसैव ' साधनेन । शिष्टं पूर्वेण समानम् ॥ ३ ॥

अथ द्वितीयमंत्रभागमनूद्य व्याचष्टे–**पृथिव्यै स्वाहेति० यज्ञस्येति** । " पृथिव्यै स्वाहा " इति द्वितीयो मंत्रः । तत्प्रतिपाद्या ' पृथिवी ' । सा तु ' सर्वेषां देवानामायतनं ' निवासस्थानं हविःस्वीकरणाय तैस्तत्र सर्वदा अवस्थानात् पृथिव्यास्तदायतनत्वम् । तत्तस्मात् पृथिव्यै स्वाहा इति मंत्रेण सर्वाभिरेव देवताभि-रित्यादि गतम् ॥ ४ ॥

( स्या ) अग्नये स्वाहेति । ( त्य ) अग्निर्वै सर्वेषान्देवानामात्मा तत्सर्वाभिरेवैतद्देवताभिर्भिषज्यति यत्किञ्च विवृढं यज्ञस्य ॥ ५ ॥

( स्या ) अन्तरिक्षाय स्वाहेति । ( त्य ) अन्तरिक्षम्वै सर्वेषान्देवानामायतनन्तत्सर्वाभिरेवैतद्देवताभिर्भिषज्यति यत्किञ्च विवृढं यज्ञस्य ॥ ६ ॥

वायवे स्वाहेति । वायुर्वै सर्वेषान्देवानामात्मा तत्सर्वाभिरेवैतद्देवताभिर्भिषज्यति यत्किञ्च विवृढं यज्ञस्य ॥ ७ ॥

दिवे स्वाहेति । द्यौर्वै सर्वेषान्देवानामायतनन्तत्सर्वाभिरेवैतद्देवताभिर्भिषज्यति यत्किञ्च विवृढं यज्ञस्य ॥ ८ ॥

सूर्याय स्वाहेति । सूर्यो वै सर्वेषान्देवानामात्मा तत्सर्वाभिरेवैतद्देवताभिर्भिषज्यति यत्किञ्च विवृढं यज्ञस्य ॥ ९ ॥

---

" **अग्नये स्वाहा** "–इति । अग्निर्वै सर्वेषां देवानामात्मा । तत् सर्वाभिरेवैतद्देवताभिर्भिषज्यति । यत्किंच विवृढं यज्ञस्य ॥ ५ ॥

" **अंतरिक्षाय स्वाहा** "–इति । अंतरिक्षं वै सर्वेषां देवानामायतनम् । तत्सर्वाभिरेवैतद्देवताभिर्भिषज्यति । यत्किंच विवृढं यज्ञस्य ॥ ६ ॥

" **वायवे स्वाहा** "–इति । वायुर्वै सर्वेषां देवानामात्मा । तत् सर्वाभिरेवैतद्देवताभिर्भिषज्यति । यत्किंच विवृढं यज्ञस्य ॥ ७ ॥

" **दिवे स्वाहा** "–इति । द्यौर्वै सर्वेषां देवानामायतनम् । तत् सर्वाभिरेवैतत् देवताभिर्भिषज्यति । यत्किंच विवृढं यज्ञस्य ॥ ८ ॥

" **सूर्याय स्वाहा** "–( वा. सं. ३९।१ ) इति । सूर्यो वै सर्वेषां देवानामात्मा । तत् सर्वाभिरेवैतत् देवताभिर्भिषज्यति । यत्किंच विवृढं यज्ञस्य ॥ ९ ॥

---

अथ तृतीयं मंत्रमनूद्य व्याचष्टे–**अग्नये स्वाहेति० यज्ञस्येति** । 'अग्निः' खलु 'सर्वेषां देवानामात्मा' स्वरूपभूतः । तथा च तैत्तिरीयके–" ते देवा बिभ्यतोऽग्निं प्राविशन् तस्मादाहुरग्निः सर्वा देवता इति । ( तै. सं. ६ । २ । २ ) तत्तथा च " अग्नये स्वाहा " इति मंत्रेण सर्वाभिरेव देवताभिरित्यादि गतम् ॥ ५ ॥

अथ चतुर्थं मंत्रमनूद्य व्याचष्टे–**अंतरिक्षाय स्वा० यज्ञस्येति** ॥ ६ ॥

अथ पंचमं मंत्रमनूद्य व्याचष्टे–**वायवे स्वा० यज्ञस्येति** । 'वायुः' खलु 'सर्वेषां' देवानामात्मा स्वरूपम् । तस्य सर्वदा तदावासहेतुत्वात् ॥ ७ ॥

अथ षष्ठं मंत्रमनूद्य व्याचष्टे–**दिवे स्वाहे० यज्ञस्येति** । तत्तथा च " दिवे स्वाहा " इति मंत्रेणेत्यादि पूर्ववत् ॥ ८ ॥

अथ सप्तमं मंत्रमनूद्य व्याचष्टे–**सूर्याय स्वाहे० यज्ञस्येति** । 'सूर्यो वै' प्रेरक आदित्यः खलु 'सर्वेषां

दिग्भ्यः स्वाहेति । दिशो वै सर्व्वेषान्देवानामायतनन्तत्सर्व्वाभिरेवैतद्-देवताभिर्भिषज्यति यत्किञ्च विवृढं यज्ञस्य ॥ १० ॥

चन्द्राय स्वाहेति । चन्द्रो वै सर्व्वेषान्देवानामात्मा तत्सर्व्वाभिरेवैतद्दे-वताभिर्भिषज्यति यत्किञ्च विवृढं यज्ञस्य ॥ ११ ॥

नक्षत्रेभ्यः स्वाहेति । नक्षत्राणि वै सर्व्वेषान्देवानामायतनन्तत्सर्व्वाभि-रेवैतद्देवताभिर्भिषज्यति यत्किञ्च विवृढं यज्ञस्य ॥ १२ ॥

( स्या ) अद्भ्यः स्वाहेति । ( त्या ) आपो वै सर्व्वेषान्देवानामायतन-न्तत्सर्व्वाभिरेवैतद्देवताभिर्भिषज्यति यत्किञ्च विवृढं यज्ञस्य ॥ १३ ॥

---

" दिग्भ्यः स्वाहा "–इति । दिशो वै सर्वेषां देवानामायतनम् । तत् सर्वाभिरेवैतत् देवताभि-भिषज्यति । यत् किंच विवृढं यज्ञस्य ॥ १० ॥

" चंद्राय स्वाहा "–इति । चंद्रो वै सर्वेषां देवानामात्मा । तत् सर्वाभिरेवैतत् देवताभि-भिषज्यति । यत्किञ्च विवृढं यज्ञस्य ॥ ११ ॥

" नक्षत्रेभ्यः स्वाहा "–इति । नक्षत्राणि वै सर्वेषां देवानामायतनम् । तत् सर्वाभिरेवैतत् देवताभिर्भिषज्यति । यत्किंच विवृढं यज्ञस्य ॥ १२ ॥

" अद्भ्यः स्वाहा "–इति । आपो वै सर्वेषां देवानामायतनम् । तत् सर्वाभिरेवैतत् देवताभि-भिषज्यति । यत् किंच विवृढं यज्ञस्य ॥ १३ ॥

---

देवानामात्मा ' स्वरूपभूतः । तथा च मंत्रांतरं " सूर्यऽआत्मा जगतस्तस्थुषश्च " ( मां. सं. । १३।४६ ) इति । गतमन्यत् ॥ ९ ॥

इत्थं पृथिव्यादयस्त्रयो लोकाः तदधिष्ठायकाः अग्निर्वायुः सूर्यश्चेत्येते त्रयो देवाः गतैर्मंत्रैः प्रतिपादिताः । अथ तेषु लोकेषु व्याप्य वर्तमानानां दिगादीनां चेति संपादनमुत्तरैर्मंत्रैः क्रियते। तत्र "दिग्भ्यः स्वाहा" इति मंत्रस्य तात्पर्यं व्याचष्टे–**दिग्भ्यः स्वाहेति० यज्ञस्येति**। प्राच्याद्याः ' दिशः ' खलु ' सर्वेषां देवानामायतनं ' स्थानम् । प्राक्पश्चिमादिव्यवहारार्थमपेक्षितत्वात् । अथवा इंद्रादीनां प्रागादिदिगीशत्वात् दिशां देवायतनत्वम् । गतमन्यत् ॥ १० ॥

**चंद्राय स्वाहेति यज्ञस्येति** । 'चंद्रः' सोमराजः खलु 'सर्वेषां देवानां' 'आत्मा' स्वरूपभूतः अमृतमयत्वेन तैरुपभोज्यत्वात् । तथा च मंत्रान्तरं " यमादित्याऽ अंशुमाप्याययंति यमक्षितमक्षितयः पिबंति " इति ॥११॥

अथान्यं मंत्रमनूद्य व्याचष्टे–**नक्षत्रेभ्यः स्वाहेति० यज्ञस्येति** । ' नक्षत्राणि ' तारकाः खलु ' सर्वेषां देवानामात्मा ' स्वरूपभूताः तेषां तद्गृहात्मकत्वात् । तथा च श्रूयते " देवगृहा वै नक्षत्राणि " इति । अन्ये तु सुकृतवशेन देवत्वं प्राप्तानां जनानां ज्योतींषि नक्षत्राणि इति वर्णयंति । तत्र श्रुतिमप्युदाहरंति–" सुकृतां वा एतानि ज्योतींषि यन्नक्षत्राणि " ( तै. सं. ५ । ४ । १ । ३ ) इति वर्णयंति । तदानीं तज्ज्योतीरूपत्वात् नक्षत्राणां तदात्मत्वम् । गतमन्यत् ॥ १२ ॥

अथ समनंतरं मंत्रमनूद्य व्याचष्टे–**अद्भ्यः स्वाहेत्यापो० यज्ञस्येति** । ' आपः ' उदकं खलु ' सर्वेषां देवानामायतनं ' निवासस्थानं तेषाममृतमयशरीरत्वात् । अमृतस्य चाब्विकारित्वात् । गतमन्यत् ॥ १३ ॥

व्वुरुणाय स्वाहेति । व्वुरुणो वै सुर्व्वेषान्देवानामात्मा तत्सुर्व्वाभिरेवै-तद्देवताभिर्भिषज्यति यत्किञ्च विवृढं यज्ञस्य ॥ १४ ॥

नाभ्यै स्वाहा पूताय स्वाहेति । (त्यु) अनिरुक्तमनिरुक्तो वै प्रजापतिः प्रजापतिर्य्यज्ञस्तत्प्रजापतिमेवैतद्यज्ञम्भिषज्यति ॥ १५ ॥

त्रयोदशैताऽ आहुतयो भवन्ति । त्रयोदशवै मासाः सम्वत्सरस्य सम्वत्सरः प्रजापतिः प्रजापतिर्य्यज्ञस्तत्प्रजापतिमेवैतद्यज्ञम्भिषज्यति ॥१६॥

---

" वरुणाय स्वाहा "-इति । वरुणो वै सर्वेषां देवानामात्मा । तत् सर्वाभिरेवैतत् देवताभिर्भिषज्यति । यत्किंच विवृढं यज्ञस्य ॥ १४ ॥

" नाभ्यै स्वाहा पूताय स्वाहा "-( वा. सं. ३९ । २ ) इत्यनिरुक्तम् । अनिरुक्तो वै प्रजापतिः । प्रजापतिर्यज्ञः । तत् प्रजापतिमेवैतद्यज्ञं भिषज्यति ॥ १५ ॥

त्रयोदशैता आहुतयो भवंति । त्रयोदश वै मासाः संवत्सरस्य । संवत्सरः प्रजापतिः । प्रजापतिर्यज्ञः । तत् प्रजापतिमेवैतत् यज्ञं भिषज्यति ॥ १६ ॥

---

अथान्यं मंत्रमनूद्य व्याचष्टे-वरुणाय स्वाहेति० यज्ञस्येति । वरुणः ' खलु देवः दुष्टनिग्राहकत्वात् ' सर्वेषां देवानामात्मा ' स्वरूपभूतः । गतमन्यत् । यद्वा " पृथिव्यै स्वाहा " इत्यादयो मंत्राः एवं व्याख्येयाः । पृथिव्यंतरिक्षद्युदिगपां " पृथिव्यै स्वाहा " इत्यादिमंत्रव्याख्याने सर्वदेवायतनत्वं प्रतिज्ञातं तदुपपादनं " अग्नये स्वाहा " इत्यादिमंत्रव्याख्यानेन क्रियते अग्निवायुसूर्यचंद्रनक्षत्रवरुणानां पृथिव्याद्यधिष्ठातृत्वात् उक्तप्रकारेण इतरेषां सर्वेषां देवानां तत्तादात्म्यात् । अग्न्याद्यायतनानि पृथिव्यादीनि सर्वेषां देवानामायतनानि भवंतीति । एवं च तैः सर्वैर्मंत्रैः सर्वदेवतासंबद्धैः होमं कुर्वन् ' सर्वाभिरेव देवताभिः ' विकलस्यांगस्य भैषज्यं कृतवान् भवतीत्यर्थः ॥ १४ ॥

अथान्यमंत्रद्वयमनूद्य व्याचष्टे-नाभ्यै स्वाहा पूताय स्वाहेति० भिषज्यतीति । " नाभ्यै स्वाहा " " पूताय स्वाहा " इति मंत्रयोः पूर्वमंत्रेष्विव कश्चित्प्रसिद्धतरः अर्थो न प्रतीयते । अतः एतन्मंत्रद्वयं अनिरुक्तं अविस्पष्टार्थम् । प्रजापतिश्च ' अनिरुक्तो वै ' सर्वजगदात्मकत्वात्, एकरूपत्वेन निर्वक्तुमशक्यः । अतः अनिरुक्तेन अनेन मंत्रद्वयेन ' अनिरुक्तः ' प्रजापतिरुच्यते । स एव प्रजापतिर्यज्ञः ओश्रावयादिसप्तदशाक्षर रूपेण यज्ञे अवस्थानात् । तत्तथा च ' एतत् ' एतेन मंत्रद्वयेन प्राजपत्यात्मकमेव ' यज्ञं भिषज्यति ' चिकित्सति ॥ १५ ॥

इत्थं "पृथिव्यै स्वाहा" इति त्रयोदशमन्त्राणां भैषज्यहेतुत्वव्याख्यानेन प्रायश्चित्तविनियोगमात्रत्वमुक्तम् । अथ तन्मंत्रसाध्यहोमं विधाय स्तौति-त्रयोदशैताऽ आहुतयो भवंति० भिषज्यतीति । ' एताः ' " पृथिव्यै स्वाहा " इत्यादिमन्त्रसाध्यास्त्रयोदशाज्याहुतीर्जुहोति । महावीरभेदनप्रायश्चित्तार्थं कुर्यादित्यर्थः । ' संवत्सरस्य

---

१-अयं माध्यंदिनीयः पाठः ।
२-अयं तु काण्वीयः पाठः । " त्रयोदशैताऽ आहुतीर्जुहोति " इति ।

वाचे स्वाहेति । मुखमेवास्मिन्नेतद्दधाति प्राणाय स्वाहा प्राणाय स्वाहेति नासिकेऽएवास्मिन्नेतद्दधाति चक्षुषे स्वाहा चक्षुषे स्वाहेत्यक्षिणीऽएवास्मिन्नेतद्दधाति श्रोत्राय स्वाहा श्रोत्राय स्वाहेति कर्णावेवास्मिन्नेतद्दधाति ॥ १७ ॥

सप्तैता आहुतयो भवन्ति । सप्त वा ऽइमे शीर्षन्प्राणास्तानेवास्मिन्नेतद्दधाति पूर्णाहुतिमुत्तमाञ्जुहोति सर्वम्वै पूर्णꣳ सर्वेणैवैतद्भिषज्यति यत्किञ्च विवृढं यज्ञस्य ॥ १८ ॥

"वाचे स्वाहा"–इति । मुखमेवास्मिन्नेतद्दधाति । "प्राणाय स्वाहा प्राणाय स्वाहा"–इति । नासिके एवास्मिन्नेतद्दधाति । "चक्षुषे स्वाहा चक्षुषे स्वाहा"–इति । अक्षिणी एवास्मिन्नेतद्दधाति । "श्रोत्राय स्वाहा श्रोत्राय स्वाहा"–( वा. सं. ३९ । २ ) इति । कर्णावेवास्मिन्नेतत् दधाति ॥ १७ ॥

सप्तैता आहुतयो भवंति । सप्त वा इमे शीर्षन्प्राणाः । तानेवास्मिन्नेतद्दधाति । पूर्णाहुतिमुत्तमां जुहोति । सर्वं वै पूर्णम् । सर्वेणैवैतद्भिषज्यति । यत् किंच विवृढं यज्ञस्य ॥ १८ ॥

त्रयोदश वै मासाः' चैत्राद्या द्वादश, त्रयोदशोऽधिकमासः । अत आहुतीनां त्रयोदशसंख्यासाम्येन त्रयोदशमासात्मकः संवत्सर एव संपादितो भवति । स एव 'संवत्सरः प्रजापतिः' अंडकटाहमध्ये संवत्सरपर्यंतं गर्भरूपेण तस्यावस्थानात् । एतच्चोत्तरस्मिन्नध्याये स्पष्टयिष्यते । स एव 'प्रजापतिर्यज्ञः' इत्युक्तम् । तत्तस्मात् प्रजापत्यात्मकमेव 'यज्ञं' 'एतत्' एतया त्रयोदशसंख्यया उक्तेन पारंपर्येण 'भिषज्यति' ॥ १६ ॥

अथान्याः सप्ताहुतीराधास्यन् तन्मंत्रान् क्रमेण व्याचष्टे–तत्र प्रथमं मन्त्रमनूद्य, तल्लभ्यं प्रयोजनं दर्शयति–**वाचे स्वाहेति मुखमेवास्मिन्नेतद्दधातीति** । मंत्रे वाक्शब्देन मुखे अवस्थितस्य वागिंद्रियस्याभिधानात् अस्मिन्महावीरे तदिन्द्रियविशिष्टं मुखमास्यमेव एतेन मंत्रेण 'दधाति' स्थापयति । अथ द्वितीयतृतीयमंत्रौ अनूद्य व्याचष्टे–**प्राणाय स्वाहा प्राणाय स्वाहेति नासिके एवास्मिन्नेतद्दधाति इति** । प्राणः प्राणनव्यापारेण सह वर्तमानं प्राणेंद्रियं तत्र नासिकयोर्वर्तते । अधिष्ठानद्वयविशिष्टप्राणस्य मंत्राभ्यां प्रतिपादनात् प्राणेंद्रियाधिष्ठिते 'नासिके' एवास्मिन् महावीरे स्थापितवान् भवति । अथ चतुर्थपंचमौ मंत्रौ अनूद्य व्याचष्टे–**चक्षुषे स्वाहा चक्षुषे स्वाहेत्यक्षिणी एवास्मिन्नेतद्दधाति इति** । अनेन मंत्रद्वयेन क्रमेण गोलकद्वयवर्तिचक्षुरिन्द्रियप्रतिपादकेन अस्मिन्महावीरे 'अक्षिणी' चक्षुरिन्द्रियविशिष्टे अक्षिमंडले एव स्थापयति । अथ षष्ठसप्तमौ मंत्रौ अनूद्य व्याचष्टे–**श्रोत्राय स्वाहा श्रोत्राय स्वाहेति कर्णावेवास्मिन्नेतद्दधाति इति** । अनेन मंत्रद्वयेन कर्णशष्कुलीद्वयविशिष्टश्रोत्रेन्द्रियप्रतिपादकेन श्रोत्रेन्द्रियविशिष्टौ 'कर्णौ एव' अस्मिन्महावीरे स्थापयति ॥ १७ ॥

अथ एतन्मंत्रसामर्थ्यहोमं विधाय सप्तसंख्याद्वारेण स्तौति–**सप्तैता आहुत० दधाति इति** । 'एताः' "वाचे

१–काण्वीयपाठमनुसृत्य बृहदारण्यकप्रथमाध्यायस्य द्वितीयब्राह्मणे चतुर्थकंडिकायाम् । ( का. श, प. १४ । १ । २ । ४ । ) "सोऽकामयत द्वितीयो मऽ आत्मा जायेतेति स मनसा वाचं मिथुनꣳ समभवदशनाया मृत्युस्तद्यद्रेतऽ आसीत्स संवत्सरोऽभवन्न ह पुरा ततः संवत्सरऽ आस तमेतावंतं कालमबिभर्यावान् संवत्सरस्तमेतावतः कालस्य परस्तादसृजत" इति । ३ । एतावतः कालस्य संवत्सरमात्रस्य परस्तादूर्ध्वं तं वैराजं असृजत सृष्टवान् अण्डमभिनत् इति यावत् ॥

मनसः काममाकूतिमिति । मनसा वाऽइदꣳ सर्वमाप्तन्तन्मनसैवै-तद्भिषज्यति यत्किञ्च विवृढं यज्ञस्य ॥ १९ ॥

वाचः सत्यमशीयेति । वाचा वाऽ इदꣳ सर्वमाप्तन्तद्वाचैवैतद्भिष-ज्यति यत्किञ्च विवृढं यज्ञस्य पशूनाꣳ रूपमन्नस्य रसो यशः श्रीः श्रयतां मयि स्वाहेत्याशिषमेवैतदाशास्ते ॥ २० ॥

( स्तुऽथ ) अथ तञ्चोपशयाञ्च पिष्ट्वा । मात्स्नर्या मृदा सꣳसृज्या-

---

" मनसः काममाकूतिम् "–इति । मनसा वा इदं सर्वमाप्तम् । तन्मनसैवैतद्भिषज्यति । यत्किंच विवृढं यज्ञस्य ॥ १९ ॥

" वाचः सत्यमशीय "–इति । वाचा वा इदं सर्वमाप्तम् । तद्वाचैवैतत् भिषज्यति । यत्किंच विवृढं यज्ञस्य । " पशूनां रूपमन्नस्य रसो यशः श्रीः श्रयतां मयि स्वाहा "–( वा. सं. ३९ । ४ ) इति । आशिषमेवैतदाशास्ते ॥ २० ॥

अथ तं चोपशयां च पिष्ट्वा, मात्स्नर्या मृदा संसृज्य, आवृता करोति । आवृता पचति । उत्सादनार्थम् । अथ य उपशययोर्दृढः स्यात् । तेन प्रचरेत् ॥ २१ ॥

---

स्वाहा " इत्यादिमंत्रसाध्याः सप्तसंख्याः आहुतीर्जुहोति । 'सप्त' खलु 'इमे, शीर्षन्' शीर्ष्णि 'प्राणाः' इंद्रियाणि । मुखं, नासिके, चक्षुषी, श्रोत्रे चेति गोलकभेदात् तेषां सप्तत्वम् । अतः एतैर्होमैः 'तानेव' प्राणान् अस्मिन्महावीरे स्थापयति । पूर्णाहुतिमुत्तमां जुहोतीति । आज्यपूर्णया स्रुचा " मनसः काम-माकूतिम् " इति पूर्णाहुतिं जुहुयादित्यर्थः । तदेतत् स्तौति–सर्वं वै पूर्ण० विवृढं यज्ञस्येति । एतत् प्रथमपूर्णाहुतिवाक्यशेषवत् व्याख्येयम् ॥ १८ ॥

अथ पूर्णाहुतिमंत्रस्यास्य प्रथमं पादमनूद्य व्याचष्टे–मनसः कामम० विवृढं यज्ञस्येति । अस्मिन्पादे 'मनसः' इति मनः प्रतिपाद्यते । तेन च 'मनसा' 'इदं सर्वं' जगद् व्याप्तम् । न हि अविषयं मनसः किंचिदस्ति । तत्तथा च सर्वव्यापकेन 'मनसैव' एतद्विकलं 'भिषज्यति'। 'यत्किंच' यत्किमपि अंग-जातं यज्ञसंबंधि विकलमासीदित्यर्थः ॥ १९ ॥

अथ द्वितीयं पादमनूद्य व्याचष्टे–वाचः सत्यमशीयेति० विवृढं यज्ञस्येति । " वचः सत्यमशीय " इत्यस्मिन्पादे वाक् प्रतिपाद्यते । तया च 'वाचा' वागिन्द्रियेण, अभिवदनव्यवहारद्वारा 'इदं सर्वं' जगत् 'आप्तं' व्याप्तम् । न हि शब्दस्याविषयं किंचिद्वस्तु लोके दृश्यते । गतमन्यत् । अथोत्तरार्द्धमनूद्य तात्पर्यमाह–पशूनाꣳ रूप० तदाशास्ते इति । गवादिपशूनां संबंधि यद्रूपं 'अन्नस्य' च यः 'रसः' यच्च 'यशः' कीर्तिः या च 'श्रीः' संपत् तत्सर्वं 'मयि श्रयतां' सेवताम् इत्यस्यार्थस्य प्रतिपादक-त्वात् अनेनार्थेन एतादृशीमाशिषमेव 'आशास्ते' आशंसते ॥ २० ॥

एवं महावीरस्य भेदननिमित्तप्रायश्चित्तं कृत्वा पुनस्तस्य निर्माणमनुष्ठानप्रकारं च दर्शयति–अथ

---

१–उखावच्चान्यं कुर्यात् ' का. श्रौ. सू. २६ । १४५ । उखावदित्यप्याह कात्यायनः–उखोपशये पिष्ट्वा मृदा सहोखां करो-त्यावृतेति । का. श्रौ. सू. १६।२०८ । आवृता अमंत्रकं तूष्णीमिति यावत् ।

व्वृता करोत्याव्वृता पचत्युत्सादनार्थमथ यऽ उपशययोर्दृढः स्यात्तेन प्प्रचरेत् ॥ २१ ॥

( त्स ) सम्वत्सरो वै प्रवृर्ग्यः सुर्व्वम्वै सम्वत्सरः सुर्व्वम्प्रवुर्ग्यः स यत्प्र-व्वृक्तस्तद्वसन्तो युद्रुचितस्तुद्ग्रीष्मो युत्पिन्वितस्तद्वर्षा यदा वै व्वर्षाः पिन्वन्तेऽथैनाः सुर्व्वे देवाः सुर्व्वाणि भूतान्युपजीवन्ति पिन्वन्ते ह वाऽ अस्मै व्वर्षा युऽ एवुमेतद्वेद ॥ २२ ॥

---

## अथ प्रवर्ग्यस्तुतिः ।

संवत्सरो वै प्रवर्ग्यः । सर्वं वै संवत्सरः । सर्वं प्रवर्ग्यः । स यत् प्रवृक्तः, तद्वसंतः । यत् रुचितः, तत् ग्रीष्मः । यत् पिन्वितः, तद्वर्षाः । यदा वै वर्षाः पिन्वन्ते । अथैनाः सर्वे देवाः सर्वाणि भूतान्यु-पजीवंति । पिन्वन्ते ह वा अस्मै वर्षाः । य एवमेतद्वेद ॥ २२ ॥

---

तं चोपशयां च पिष्ट्वा० तेन प्रचरेदिति । 'अथ' एवं प्रायश्चित्तकरणानंतरं 'तं च' भिन्नं महावीरं 'उपशयां च' पुरा महावीरनिर्माणकाले या मृत् तदर्थकत्वेन स्थापिता तां च 'पिष्ट्वा' चूर्णीकृत्य 'मात्स्नेया मृदा' घटशरावाद्युपादानभूता लौकिकी मृत् मृत्स्ना तत्संबंधिन्या 'मृदा' चूर्णीकृतं 'संसृज्य' मिश्रीकृत्य 'आवृता' क्रियया 'करोति' । येन प्रकारेण पूर्वं महावीरः कृतः तेनैव प्रकारेण तं भिन्नं महावीरं पुनः कुर्यादित्यर्थः । "आवृता पचति" इत्येतदप्येवं योज्यम् । तत्किमर्थं पुनः तस्य करण-मिति चेदुच्यते—'उत्सादनार्थं' उद्वासनार्थम् । एवं महावीरं पुनः कृत्वा अथानंतरं 'यः' महावीरः उप-शयासमीपे शयानः यः प्रचरणीयः द्वितीयस्तृतीयो वा महावीरः 'दृढः' प्रचरणसमर्थो दृढावयवः स्यात् तेनो-पशयेन महावीरेण भेदनात् ऊर्ध्वभाविना प्रवर्ग्येण 'प्रचरेत्' [१] ॥ २१ ॥

अथैतं प्रवर्ग्यं संवत्सरात्मना स्तौति—संवत्सरो वै प्रवर्ग्यः० न्युपजीवंतीति । संवत्सरात्मकः खलु अयं 'प्रवर्ग्यः' । स च संवत्सरः 'सर्वं वै' सर्ववस्त्वात्मकः । कृत्स्नस्य जगतः कालनिवर्त्यत्वात् । अथवा कलामुहूर्तादिसर्वकालावयवसमुदायात्मकः खलु स संवत्सरः । तदात्मकोऽयं 'प्रवर्ग्यः' । कुत इत्यत आह—स यत्प्रवृक्त इत्यादि । 'सः' प्रवर्ग्यः यद्यदा 'प्रवृक्तः' पयस आसेचनेन प्रवृज्यते तत्तदा 'वसंतः' संवत्सरावयवभूतवसंतर्त्वात्मको भवति । यद्यदा 'रुचितः' समिंधनेन संदीपितः तत्तदा असौ प्रवर्ग्यः 'ग्रीष्मः' ग्रीष्मर्त्वात्मको भवति । यद्यदा स घर्म्मः 'पिन्वितः' आहवनीये पिन्वनेन हुतो भवति । तत्तदा 'वर्षाः' वर्षर्त्वा-त्मको भवति । "अप्सु मनस्समासिकतावर्षाणां बहुत्वं च" (पा. लि. अ. २९) इति स्वविकारे वचनात् एक-स्मिन्नपि ऋतौ वर्षा इति बहुवचनम् । 'यदा वै' यस्मिन् काले खलु 'वर्षाः' 'पिन्वंते' वर्षर्तुः सिंचति वृष्टिम् । अथानन्तरमेव 'एनाः' वर्षोद्भवा अपः 'सर्वे देवाः' 'सर्वाणि' चान्यानि पशुपक्षिमृगादीनि भूतजातानि 'उपजीवन्ति' । पिबन्ति एवमेव पिन्वितं घर्मं सर्वे देवा उपजीवन्तीत्यर्थः । अथैतद्वेदितुः फलमाह—

---

१–अग्निमेन चरेत् । का. श्रौ. सू. २६ । १४६ ।

( द्दे ) इमे वै लोकाः प्प्रवर्ग्यः । सुर्व्वम्वाऽ इमे लोकाः सुर्व्वम्प्रवुर्ग्यः स यत्प्रुव्वृक्तस्तुदयं लोको युद्रुचितस्तुदन्तरिक्षलोको युत्पिन्वितस्तुदसौ लोको युदा वुाऽ असौ लोकः पिन्वतेऽथैनᳪं सुर्व्वे देवाः सुर्व्वाणि भूतान्युपजीवन्ति पिन्वते ह वाऽ अस्माऽ असौ लोको युऽ एवमेतद्वेद॥२३॥

(द्दे) एता वै देवताः प्प्रवर्ग्यः।(र्ग्योऽग्नि) अग्निर्व्वायुरादित्यः सुर्व्वम्वाऽएता देवताः सुर्व्वम्प्रवुर्ग्यः स यत्प्रुव्वृक्तस्तुदग्निर्य्युद्रुचितस्तुद्वायुर्य्युत्पिन्वितस्तुदसावादित्यो युदा वुाऽ असावादित्यः पिन्वतेऽथैनᳪं सुर्व्वे देवाः सुर्व्वाणि भूतान्युपजीवन्ति पिन्वते ह वाऽ अस्माऽ असावादित्यो युऽ एवमेतद्वेद ॥ २४ ॥

---

इमे वै लोकाः प्रवर्ग्यः । सर्वं वा इमे लोकाः । सर्वं प्रवर्ग्यः । स यत् प्रवृक्तः, तदयं लोकः । यद्रुचितः, तदन्तरिक्षलोकः । यत् पिन्वितः, तदसौ लोकः । यदा वा असौ लोकः पिन्वते । अथैनं सर्वे देवाः सर्वाणि भूतान्युपजीवंति । पिन्वते ह वा अस्मा असौ लोकः । य एवमेतद्वेद ॥ २३ ॥

एता वै देवताः प्रवर्ग्यः । अग्निर्वायुरादित्यः । सर्वं वा एता देवताः । सर्वं प्रवर्ग्यः । स यत् प्रवृक्तः, तदग्निः । यद्रुचितः, तद्वायुः । यत् पिन्वितः, तदसावादित्यः । यदा वा असावादित्यः पिन्वते । अथैनं सर्वे देवाः सर्वाणि भूतान्युपजीवंति । पिन्वते ह वा अस्मा असावादित्यः । य एवमेतद्वेद ॥ २४ ॥

---

पिन्वन्ते ह वा० मेतद्वेदेति । ' अस्मै ' वेदित्रे ' वर्षाः पिन्वन्ते ' वर्षर्तुः वृष्ट्युदकं सिंचति खलु । ' यः ' एवमुक्तप्रकारेण घर्म्मस्य ' एतत् ' वर्षर्त्वात्मकत्वं ' वेद ' ॥ २२ ॥

अथैतं प्रवर्ग्यं लोकत्रयात्मना स्तौति—इमे वै लोकाः प्रवर्ग्यः सर्वं वा० जीवन्तीति । ' इमे ' पृथिव्यादयः ' लोकाः ' खलु ' प्रवर्ग्यः ' । कथं लोकत्रयस्य प्रवर्ग्यस्य च तादात्म्यमुच्यते ? इति ब्रूमः । ' इमे ' पृथिव्यादयः ' लोकाः ' ' सर्वं वै ' संपूर्णं सर्ववस्त्वाश्रयभूता इत्यर्थः । प्रवर्ग्यश्च ' सर्वं ' सर्वजगदात्मकः । अतः सर्वात्मकत्वसाम्यात् उभयोस्तादात्म्यमेव । अपि च—यद्यदा ' प्रवृक्तः ' तत्तदा ' अयं लोकः ' पृथिव्यात्मको भवति । यद्यदा ' रुचितः ' तदा अंतरिक्षलोकात्मको भवति । यद्यदा ' पिन्वितः ' तदा ' असौ ' द्युलोकात्मको भवति । प्रवृक्तरुचितपिन्वितशब्दानामर्थाः पूर्वमेवोक्ताः । ' यदा ' खलु ' असौ ' द्युलोकः ' पिन्वते ' स्वसंबंधिफलमुत्पादयति । अथानंतरं 'एनं' द्युलोकात्मकं प्रवर्ग्यं ' सर्वे देवाः ' ' सर्वाणि ' च ' भूतान्युपजीवन्ति ' । अथैतद्वेदितुः फलमाह—पिन्वते ह वा० तद्वेदेति । पूर्ववत् योज्यम् ॥ २३ ॥

अथेमं प्रवर्ग्यं अग्निवाय्वादित्यात्मना स्तौति—एता वै देवताः प्रव० जीवन्तीति । अग्निर्वायुरादित्य इति पूर्वोक्तलोकत्रयाभिमानिन्यो या देवताः । ' एताः ' खलु ' देवताः ' ' प्रवर्ग्यः ' । एतद्देवतात्रयात्मक इत्यर्थः । कुतः ? ' एताः ' अग्न्यादिदेवताः ' सर्वं वै ' स्वमहिम्ना सर्वजगदात्मिकाः । प्रवर्ग्यश्च सर्वम् । अतः सार्वा-

यजमानो वै प्रवर्ग्यः । ( स्तु ) तस्यात्मा प्रजा पशवः सर्व्वम्वै यज-
मानः सर्व्वम्प्रवर्ग्यः स यत्प्रवृक्तस्तदात्मा यद्रुचितस्तत्प्रजा यत्पिन्वित-
स्तत्पशवो यदा वै पशवः पिन्वन्तेऽथैनान्त्सर्व्वे देवाः सर्व्वाणि भूतान्युप-
जीवन्ति पिन्वन्ते ह वाऽअस्मै पशवो यऽएवमेतद्वेद ॥ २५ ॥

( दा ) अग्निहोत्रम्वै प्रवर्ग्यः । सर्व्वम्वाऽअग्निहोत्रꣳ सर्व्वम्प्रवर्ग्यः स
यदधिश्रितन्तत्प्रवृक्तो यदुन्नीतन्तद्रुचितो यद्धुतन्तत्पिन्वितो यदा वाऽ
अग्निहोत्रम्पिन्वतेऽथैनत्सर्व्वे देवाः सर्व्वाणि भूतान्युपजीवन्ति पिन्वते ह
वाऽअस्माऽअग्निहोत्रं यऽएवमेतद्वेद ॥ २६ ॥

---

यजमानो वै प्रवर्ग्यः । तस्यात्मा प्रजा पशवः । सर्वं वै यजमानः । सर्वं प्रवर्ग्यः । स यत् प्रवृक्तः, तदात्मा । यद्रुचितः, तत् प्रजा । यत्पिन्वितः, तत्पशवः । यदा वै पशवः पिन्वंते । अथैनान् सर्वे देवाः सर्वाणि भूतान्युपजीवंति । पिन्वंते ह वा अस्मै पशवः । य एवमेतद्वेद ॥ २५ ॥

अग्निहोत्रं वै प्रवर्ग्यः । सर्वं वा अग्निहोत्रम् । सर्वं प्रवर्ग्यः । स यदधिश्रितं, तत् प्रवृक्तः । यदुन्नीतं, तद्रुचितः । यद्धुतं, तत्पिन्वितः । यदा वा अग्निहोत्रं पिन्वते । अथैनत् सर्वे देवाः सर्वाणि भूतान्युपजीवंति । पिन्वते ह वा अस्मा अग्निहोत्रम् । य एवमेतद्वेद ॥ २६ ॥

---

त्म्येन तादात्म्यम् । अपि च–' सः ' घर्म्मो यद्यदा ' प्रवृक्तः ' तत्तदा ' अग्निः ' अग्न्यात्मको भवति । यद्यदा ' रुचितः ' तत्तदा वाय्वात्मकः । यद्यदा ' पिन्वितः ' तत्तदा असावादित्यात्मकः द्युलोकस्थः सूर्य एव भवति । ' यदा ' खलु ' असौ ' आदित्यात्मकः प्रवर्ग्यः ' पिन्वते ' । अथानन्तरमेवेत्यादि पूर्ववत् । अथैतद्वेदनफलमाह–पिन्वते ह वा० तद्वेदेति । गतमेतत् ॥ २४ ॥

अथैतं प्रवर्ग्यं यजमानात्मना स्तौति–यजमानो वै प्रवर्ग्य० न्युपजीवन्तीति । यजमानात्मकः खलु अयं ' प्रवर्ग्यः ' । ' तस्य ' च यजमानस्य ' आत्मा प्रजा पशवः ' इति वस्तुत्रयमस्ति । तद्वस्तुत्रयात्मको ' यजमानः ' ' सर्वं वै ' संपूर्णः खलु । प्रवर्ग्यश्च सर्वम् । अनयोः सर्वत्वसाम्यात् तादात्म्यम् । अपि च–यद्यदा ' सः ' प्रवर्ग्यः ' प्रवृक्तः ' तत्तदा यजमानस्यात्मा भवति । यदा असौ ' रुचितः ' तदा यजमानस्य प्रजात्मको भवति । यदा ' पिन्वितः ' तदा प्रवर्ग्यो यजमानस्य पश्वात्मको भवति । ' यदा ' खलु प्रवर्ग्य-तादात्म्यमापन्नाः ' पशवः पिन्वन्ते ' पयो दुहन्ति । अथानन्तरमेव ' एनान्पशून् ' क्षीराद्युपभोगद्वारेण ' सर्वे देवाः ' इत्यादि गतम् । अथैतद्वेदनफलमाह–पिन्वन्ते ह वा० तद्वेद इति । पूर्ववत् योज्यम् ॥ २५ ॥

अथेमं अग्निहोत्रात्मना स्तौति–अग्निहोत्रं वै प्रवर्ग्य० न्युपजीवन्तीति । अग्निहोत्रात्मकं यत् कर्म सायं-प्रातःकालयोरनुष्ठेयम्, तदात्मकः खलु असौ प्रवर्ग्यः । सर्वदेवताप्रीतिकरत्वात् ' अग्निहोत्रं सर्वं ' सर्वात्मकम् । प्रवर्ग्यश्च यज्ञसाकल्यार्थत्वात् ' सर्वं ' सर्वावस्थात्मकः । अत उभयोः सर्वत्वसाम्यात् तादात्म्यव्यपदेशः । अपि च–यद्यदा तु अग्निहोत्रार्थं पयः पाकार्थं अग्नावधिश्रितं भवति । तत्तदा 'सः' घर्मः ' प्रवृक्तः ' । यद्यदा

दर्शपूर्णमासौ वै प्रवर्ग्यः । सर्व्वंम्वै दर्शपूर्णमासौ सर्व्वम्प्रवर्ग्यः स यदधिश्रितन्तत्प्रवृक्तो यदासन्नं तद्रुचितो यद्धुतं तत्पिन्वितो यदा वै दर्शपूर्णमासौ पिन्वेतेऽअथैनौ सर्व्वे देवाः सर्व्वाणि भूतान्युपजीवन्ति पिन्वेते ह वाऽअस्मै दर्शपूर्णमासौ यऽएवमेतद्वेद ॥ २७ ॥

चातुर्म्मास्यानि वै प्रवर्ग्यः । सर्व्वंम्वै चातुर्म्मास्यानि सर्व्वम्प्रवर्ग्यः स यदधिश्रितन्तत्प्रवृक्तो यदासन्नन्तद्रुचितो यद्धुतन्तत्पिन्वितो यदा वै चातुर्म्मास्यानि पिन्वन्तेऽथैनानि सर्व्वे देवाः सर्व्वाणि भूतान्युपजीवन्ति पिन्वन्ते ह वाऽअस्मै चातुर्म्मास्यानि यऽएवमेतद्वेद ॥ २८ ॥

---

दर्शपूर्णमासौ वै प्रवर्ग्यः । सर्वं वै दर्शपूर्णमासौ । सर्वं प्रवर्ग्यः । स यदधिश्रितं, तत् प्रवृक्तः । यदासन्नं, तत् रुचितः । यद्धुतं, तत्पिन्वितः । यदा वै दर्शपूर्णमासौ पिन्वेते । अथैनौ सर्वे देवाः सर्वाणि भूतान्युपजीवंति । पिन्वेते ह वा अस्मै दर्शपूर्णमासौ । य एवमेतद्वेद ॥ २७ ॥

चातुर्मास्यानि वै प्रवर्ग्यः । सर्वं वै चातुर्मास्यानि । सर्वं प्रवर्ग्यः । स यदधिश्रितं, तत् प्रवृक्तः ।

---

स्रुचि 'उन्नीतं' उन्नयनेन गृहीतं भवति । तत्तदा असौ 'रुचितः' भवति । यद्यदा तदग्निहोत्रार्थं पयः 'हुतं' भवति । तत्तदा असौ घर्मः 'पिन्वितः' सिक्तो भवति । अधिश्रयणोन्नयनहोमरूपेणाग्निहोत्रकर्मणोऽनुष्ठानेन सायंप्रातःकालयोः प्रवृञ्जनरोचनपिन्वनात्मकः प्रवर्ग्य एवानुष्ठितो भवतीत्यर्थः । एवमग्निहोत्रस्य प्रवर्ग्यात्मना स्तुतौ सत्यां प्रवर्ग्यस्यापि अग्निहोत्रतादात्म्येन स्तुतिः सिद्धा भवति । सायंप्रातःकालयोः यदग्निहोत्रमनुष्ठीयते असावेव घर्म इति । 'यदा' खलु एतदग्निहोत्रात्मकं प्रवर्ग्यहविः 'पिन्वते' सिच्यते । अथानन्तरमेव 'एनत्' हविः 'सर्वे देवाः' इत्यादि समानं पूर्वेण । अथैतद्वेदितुः फलमाह—पिन्वते ह वा० तद्वेदेति । 'यः' खलु 'एवं' उक्तप्रकारेण 'एतत्' प्रवर्ग्यस्याग्निहोत्रात्मकत्वं 'वेद' जानाति 'अस्मै' तदग्निहोत्रं 'पिन्वते' फलं सिंचति प्रयच्छतीत्यर्थः ॥ २६ ॥

अथ दर्शपूर्णमासात्मना प्रवर्ग्यं स्तौति—दर्शपूर्णमासौ वै प्रव०न्युपजीवंतीति । दर्शपूर्णमासाख्यौ यौ यागौ तदात्मकः खलु अयं 'प्रवर्ग्यः' । तौ दर्शपूर्णमासयागौ 'सर्वं वै' सर्ववस्त्वात्मकौ । प्रवर्ग्यश्च 'सर्वं' सर्ववस्त्वात्मकः । ततः उभयोः साम्यात् परस्परतादात्म्यम् । यद्यदा तद्दर्शपूर्णमाससंबंधि हविरग्नावधिश्रितं भवति तत्तदा स घर्मः 'प्रवृक्तः' भवति । अधिश्रयणं प्रवृंजनस्थानीयमित्यर्थः । यद्यदा 'आसन्नं' तद्धविर्वेद्यामासादितं भवतिः तत्तदानीं प्रवर्ग्यः 'रुचितः' भवति । यद्यदा तद्धविर्हुतमग्नौ प्रक्षिप्तं भवति तदानीमसौ 'पिन्वितः' भवति । एतौ 'दर्शपूर्णमासौ' प्रवर्ग्यात्मकौ यतो भवतः । अत एव प्रवर्ग्योऽपि दर्शपूर्णमासात्मक इत्येवमर्थोऽर्थादुपपादितो भवति । यदा च 'दर्शपूर्णमासौ' प्रवर्ग्यात्मकौ 'पिन्वेते' । यदा स्वफलसंप्रदानाय संपद्येते । अथानंतरं 'एनौ' दर्शपूर्णमासौ । अन्यद्गतम् । अथैतद्वेदितुः फलमाह—पिन्वेते ह वा०तद्वेदेति' पूर्ववद्योज्यम् ॥ २७ ॥

अथैतं चातुर्मास्यात्मना स्तौति—चातुर्मास्यानि वै प्रव०न्युपजीवंतीति । चतुर्षु मासेषु क्रियंत इति

पशुबन्धो वै प्रवर्ग्यः सर्व्वम्वै पशुबन्धः सर्व्वम्प्रवर्ग्यः स यदधिश्रितस्त-त्प्रवृक्तो यदासन्नस्तद्रुचितो यद्धुतस्तत्पिन्वितो यदा वै पशुबन्धः पिन्वतेऽथैनꣳ सर्व्वे देवाः सर्व्वाणि भूतान्युपजीवन्ति पिन्वते ह वाऽ अस्मै पशुबन्धो यऽएवमेतद्वेद ॥ २९ ॥

सोमो वै प्रवर्ग्यः । सर्व्वम्वै सोमः सर्व्वम्प्रवर्ग्यः स यदभिषुतस्तत्प्र-वृक्तो यदुन्नीतस्तद्रुचितो यद्धुतस्तत्पिन्वितो यदा वै सोमः पिन्वते-ऽथैनꣳ सर्व्वे देवाः सर्व्वाणि भूतान्युपजीवन्ति पिन्वते ह वाऽ अस्मै सोमो यऽएवमेतद्वेद न ह वाऽ अस्याप्रवर्ग्येण केनचन यज्ञेनेष्टम्भवति यऽएवमेतद्वेद ॥ ३० ॥

---

यदासन्नं, तत् रुचितः । यद्धुतं, तत् पिन्वितः । यदा वै चातुर्मास्यानि पिन्वन्ते । अथैनानि सर्वे देवाः सर्वाणि भूतान्युपजीवंति । पिन्वंते ह वा अस्मै चातुर्मास्यानि । य एवमेतद्वेद ॥ २८ ॥

पशुबंधो वै प्रवर्ग्यः । सर्वं वै पशुबंधः । सर्वं प्रवर्ग्यः । स यदधिश्रितः, तत्प्रवृक्तः । यदासन्नः, तत् रुचितः । यत हुतः, तत् पिन्वितः । यदा वै पशुबंधः पिन्वते । अथैनं सर्वे देवाः सर्वाणि भूता-न्युपजीवंति । पिन्वते ह वा अस्मै पशुबंधः । य एवमेतत् वेद ॥ २९ ॥

सोमो वै प्रवर्ग्यः । सर्वं वै सोमः । सर्वं प्रवर्ग्यः । स यदभिषुतः, तत्प्रवृक्तः । यदुन्नीतः, तद् रुचितः । यद्धुतः, तत् पिन्वितः । यदा वै सोमः पिन्वते । अथैनं सर्वे देवाः सर्वाणि भूतान्युप-

---

वैश्वदेववरुणप्रघाससाकमेधशुनासीरीयाख्यानि चातुर्म्मास्यानि तदात्मकः खलु अयं 'प्रवर्ग्यः' । तानि च प्रवर्ग्या-त्मकानि इति परस्परतादात्म्येन स्तुतिः । तानि च 'चातुर्मास्यानि' ' सर्वं वै ' बहुप्रदानकत्वात् सर्वात्मकानि । अन्यत्सर्वं पूर्ववद्योज्यम् । अथैतद्वेदितुः फलमाह—पिन्वंते ह वा० तद्वेदेति । ' अस्मै ' वेदित्रे ' चातुर्मा-स्यानि ' कर्माणि वैश्वदेवादीनि ' पिन्वंते ह वै ' स्वफलं प्रयच्छंति । गतमन्यत् ॥ २८ ॥

अथैनं पशुबंधात्मना स्तौति—पशुबंधो वै प्रव०न्युपजीवंतीति । पशुर्बध्यते यज्ञार्थे यस्मिन् कर्मविशेषे । असौ पशुबंधाख्यः । तदात्मकः खलु अयं ' प्रवर्ग्यः ' । प्रवर्ग्यश्च सः । इति परस्परतादात्म्येन स्तुतिः । स च ' पशुबन्धः ' 'सर्वं वै' संपूर्णावयवत्वात् सर्वात्मकः । अतः सर्वत्वसाम्यात् उभयोस्तादात्म्यव्यपदेशः । तत्र यदा हविर्भूतपशुरधिश्रितः पाकार्थमग्नौ तदा स घर्म्मः ' प्रवृक्तः ' । यद्यदा ' आसन्नः ' पाकानंतरं वेद्यामासादितः पशुः तदा असौ घर्मः ' रुचितः ' भवति । यद्यदा ' हुतः ' तदा असौ घर्मः ' पिन्वितः ' पिन्वनेन सिक्तो भवति । अन्यत्सर्वं पूर्ववद्योज्यम् । अथैतद्वेदनफलमाह—पिन्वते ह वा० तद्वेदेति । गतमेतत् ॥ २९ ॥

अथेमं प्रवर्ग्यं सोमात्मना स्तौति—सोमो वै प्रव०न्युपजीवंतीति । यः अयं लताभूतो यागसाधनभूतः ' सोमः ' तदात्मकः खलु अयं ' प्रवर्ग्यः ' । कुतः इति चेत् उच्यते—सर्वं वै सर्वमेव खलु वस्तु सोमः सकल-

( द्रा ) अ॒थै॒तद्वै । ( द्वाऽअ॒ ) आ॒यु॒रे॒तज्ज्योतिः प्र॒वि॑शति य॒ऽए॒तम॒नु वा ब्रू॒ते भक्ष॒यति वा त॒स्य व्रत॒चर्या या सृ॒ष्टौ ॥ ३१ ॥

इति द्वितीयप्रपाठके तृतीयं ब्राह्मणम् ॥ १४-२-३ ॥ ( ३-२ ) ॥

इति द्वितीयप्रपाठकः समाप्तः ॥ १४-२ ॥

कंडिकासंख्या ॥ १२२ ॥

इति तृतीयोऽध्यायः समाप्तश्च ॥१४-३॥ कण्डिकासंख्या ॥ ६७ ॥

इति प्रथमं प्रवर्ग्यकाण्डं समाप्तम् ॥ १४-१ ॥

---

जीवंति । पिन्वते ह वा अस्मै सोमः । य एवमेतद्वेद । न ह वा अस्याप्रवर्ग्येण केनचन यज्ञेनेष्टं भवति । य एवमेतद्वेद ॥ ३० ॥

अथ एतद्वै आयुः, एतज्ज्योतिः प्रविशति । य एतमनु वा ब्रूते भक्षयति वा । तस्य व्रतचर्या- या सृष्टौ ॥ ३१ ॥

इति सोमादिकर्मशेषाभिधायकं प्रवर्ग्यकाण्डं समाप्तम् ॥

---

यागसाधनत्वात् । यद्वा आहुतिद्वारा सर्वस्य जगतः तत्परिणामत्वात् तस्य सर्वात्मकत्वम् । अत एव प्रवर्ग्योऽपि 'सर्वम्' तस्मादुभयोः सर्वत्वसाम्यात् तादात्म्येन स्तुतिः । अपि च—यद्यदा 'सः' सोमः 'अभिषुतः' अभिषवसंस्कारेण द्रवीकृतः भवति तदा असौ 'प्रवृक्तः' भवति । यदा तूनीतः अभिषवानंतरं चमसेषु गृहीतो भवति तदा असौ प्रवर्ग्यः 'रुचितः' भवति । यदा तु अग्नौ स सोमः 'हुतः' भवति तदा अयं 'पिन्वितः' सिक्तो भवति । एतदुक्तं भवति । सोमस्याभिषवोन्नयनहोमाः प्रवृंजनरोचनपिन्वनात्मकाः । अत एव एतानि प्रवृंजना- दीनि तदात्मकानि । अन्यत् पूर्ववद्योज्यम् । अथैतद्वेदनफलमाह—पिन्वते ह वा० तद्वेदेति । एवमुक्तप्रकारेण 'यः' खलु 'एतत्' प्रवर्ग्यस्य सोमात्मकत्वं 'वेद' जानाति । 'अस्मै' जानते सः 'सोमः' 'पिन्वते' फलप्रदो भवति । इत्थं प्रवर्ग्यस्याग्निहोत्राद्यात्मकत्वमुक्त्वा तद्वेदितुः फलमुक्तम् । अथ तेषामग्निहोत्रादीनामपि यत्प्र- वर्ग्यात्मकत्वमुक्तम् । तद्वेदनफलमाह—न ह वा अस्या० तद्वेदेति । 'यः' एवमुक्तप्रकारेण अग्निहोत्रादिकर्मसु अधिश्रयणादौ प्रवृंजनादिसंपादनेन यत्प्रवर्ग्यात्मकत्वमुक्तम् । तद्वेद जानीयात् । 'अस्य' वेदितुः 'केनचन' केनापि अग्निहोत्रादिना 'यज्ञेन' 'अप्रवर्ग्येण' प्रवर्ग्यरहितेन खलु 'न इष्टं' भवति । सर्वेष्वपि यज्ञेषु उक्त- प्रकारेण प्रवर्ग्यस्य संपादनात् सप्रवर्ग्येणैव सर्वेण यज्ञजातेन इष्टवान् भवतीत्यर्थः ॥ ३० ॥

एतद्ब्राह्मणाध्ययनतदर्थानुष्ठानयोः कर्तुः प्रागुक्तां व्रतचर्यां पूर्ववदतिदिशति—अथैतद्वा आ० सृष्टाविति । अथेत्यारंभे । यतः प्रागुक्तं प्रवर्ग्याख्यं तथैतच्च ब्राह्मणे स्तूयते । एतदुभयं आयुर्जीवनं तद्वेदभूतमित्यर्थः । अतस्तस्य व्रताचरणेन रक्षा कार्या इति भावः । कुतोऽस्य रक्षणापेक्षेति तत्राह—एतज्ज्योतिरिति । 'यः' खलु पुमान् 'एतं' प्रवर्ग्यं 'अनुब्रूते' कर्मकाले अधीते वा । तत्रत्यं हुतशिष्टं हविर्भक्षयति वा । स एतज्ज्योतिः द्युलोके

दृश्यमानं सौरं तेजः प्रविशति । प्रवर्ग्यस्य सूर्यात्मना अवस्थानस्य प्रागुक्तत्वात् । अतस्तस्य पुंसः व्रतचर्या कार्या । सा कीदृशीति चेदुच्यते 'या व्रतचर्या सृष्टौ' प्रवर्ग्यसृष्टिप्रतिपादके पूर्वाध्यायस्य प्रथमब्राह्मणे " नातपति प्रच्छादयेत " इत्यादिना प्रतिपादिता । सैवात्रादि द्रष्टव्या ॥ ३१ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये
चतुर्दशकाण्डे तदन्तर्भूते प्रथमे प्रवर्ग्यकाण्डे तृतीयेऽध्याये
द्वितीयं ब्राह्मणम् ॥ १४ । ( १ ) ३ । २ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं,
सप्ताब्धीन्पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटं च ॥
धान्याद्रिं धन्यजन्मा तिलभवमतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान्गुडकृतमजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणजमनृणः शार्करं चार्कतेजा,
रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये चतुर्दशकाण्डे तदन्तर्भूते प्रथमे प्रवर्ग्यकाण्डे तृतीयोऽध्यायः समाप्तः ॥ ( १४ ( १ )—३ ) ॥

इति माध्यदिनीयशतपथब्राह्मणे उत्तराख्ये भागे प्रथमं कर्मशेषं प्रवर्ग्यकाण्डं समाप्तिमगात्

